| पृष्ठ | पंक्ति | |
|---|---|---|
| ११२ | १३ | आश्विनशुक्लद्वादश्यां पद्मनाभद्वादशीव्र· |
| ११२ | २४ | विष्णुमंदिरे दीपदानं दीपदान माहात्म्यं |
| | | पुत्रप्राप्तिव्रतं (त्रिरात्राशोकव्र· |
| ११३ | ११ | अस्यामेव विशोकद्वादशीव्रतं त्रयोदश्यां |
| ११४ | २७ | आश्विनशुक्लचतुर्दश्यां धर्मराजप्रतिमा |
| ११४ | ३० | आश्विनपूर्णिमायां कांस्यपात्रदानं (दानं |
| ११४ | ३३ | अत्र योगविशेषेण महाश्विनी पौर्णि |
| ११५ | १ | आश्वयुज्यां आग्रयणविधानं (मास्युक्ता |
| | | नवान्नेष्टिकार्य्या |
| ११५ | २८ | अस्यां निकुंभपूजोत्सवः गृहशोभाका |
| | | र्य्या रुद्रपूजा (कार्य्या |
| ११५ | ३४ | सुरभीपूजा वरुणपूजा मंगलालंभनादि |
| ११५ | ३५ | ततःप्रभृति षण्मासांतं गृहे घृतरत्नावं |
| ११६ | १० | अस्यामेव कोजागरव्रतं तत्र (डाकार्य्या |
| | | लक्ष्मीपूजा |
| ११६ | १८ | रात्रौ जागरणं कोजागरव्रतकथा |
| ११७ | १३ | अथास्योद्यापनप्रयोगः (र्य्यं |
| ११७ | २२ | अस्यां गजनीराजनं वाजिनीराजनं च का |
| ११७ | २२ | अस्यां नारदीयपुराणदानं सप्तधेनुदानं |
| ११७ | २४ | तुलसंक्रांतौ वामनपुराणदानं |
| ११७ | २६ | घृतधेनुदानम् |

इत्याश्विनमासकृत्यरत्नसमुच्चयः

| | | |
|---|---|---|
| १ | १ | कार्त्तिकमासकृत्यनिर्णयः |
| १ | १ | तुलासंक्रमे पूर्वाः पराश्च घटिकाः पुण्यां |
| १ | ३ | तत्र धान्यादिबीजदानं अत्र विष्णुव्रतप्रशं |
| १ | ५ | कार्त्तिकस्नानं आश्विनशुक्लैकादशीमारभ्य (सा |
| १ | १० | दाक्षिणात्यमते अन्यमतेषु आश्विनी |
| | | मारभ्योक्तं (माघान्तं |
| १ | १० | तुलामकरमेषेषु इति वचनात्सौर मास |
| १ | १४ | कार्त्तिकस्नानं कुरुक्षेत्रगंगादिषु कोटि |
| १ | २० | मथुरायामतिदुर्लभं काशीस्थावि (गुणं |
| | | दुतीर्थे मोक्षदं |
| १ | २३ | स्नानमंत्रः काशीखंडे अर्घ्यमंत्रोपि |
| १ | ३० | मालाधारणं तुलस्याः धात्र्याश्च पुष्पानि |
| | | वेदनं चातिपुण्यकरम् |

| पृष्ठ | पं· | | |
|---|---|---|---|
| २ | ८ | धात्रीतरुच्छायायां देवपूजनं रसधेनुदानं | |
| २ | ३ | द्विदलादिवर्जनव्रतानि मासवर्जनव्रतं | |
| ३ | १ | गंगायमुनसंगमे ग्रहफले दीपदानं | |
| | | देवालयादौ (व्रतं | |
| ३ | १४ | आकाशदीपदानं एकभक्तव्रतं कार्त्तिक | |
| ४ | १३ | जयावाप्तिव्रतं कृच्छ्रव्रतं देवीव्रतं | |
| ४ | २५ | कार्त्तिककृष्णप्रतिपदायां कार्त्तिकनिय | |
| | | मधारणं वह्निपूजा | |
| ४ | ३१ | द्वितीयायां यमपूजा तृतीयायां गौरीव्रतं | |
| ४ | ३२ | कार्त्तिकचतुर्थ्यां दशरथराज्ञः पूजा दुर्गा | पू: |
| ४ | ३४ | अस्यामेव करकचतुर्थीव्रतं तत्र स्त्रीणामे | |
| ५ | ६ | करकचतुर्थीकथा अस्योद्यापनं (वाधिकार | : |
| ६ | १४ | का·कृ·पंच·नागपूजाव्रतं षष्ठ्यां स्कंदपू· | |
| ६ | १७ | का·कृ·सप्त·वैकुंठकल्पादि तत्र सूर्यपूजा | व्रतं |
| ६ | १९ | का·कृष्णाष्टम्यां पुत्रकामव्रतं हरिगौर्यो | |
| | | र्दर्भमये रूपे पूजनं | |
| ६ | २१ | इयमपि कारकाख्या चतुर्थीवदत्रापि कृ | त्यं |
| ६ | २२ | अस्यामेव अहोई देवीपूजाव्रतं तत्र कथा | विधि |
| ७ | २१ | का·कृ·नवम्यां दुर्गापूजाव्रतम् | |
| ७ | २२ | का·कृ·दशम्यां धर्मराजपूजा दिशांपूजा | |
| ७ | २५ | का·कृष्णैकादशी रमा तस्याः कथा | |
| ९ | १० | का·कृ·द्वादश्यां गोवत्सपूजाकथा | |
| ११ | १९ | इयं नीराजनद्वादशी अत्र गवां पूजनं नीरा | जनं |
| ११ | २२ | का·कृ·त्रयोदश्यां यमदीपदानव्रतं पंचाह | मा |
| ११ | २५ | अस्यामेव गोत्रिरात्रव्रतं सस्त्रीककृष्णपूजनं | |
| ११ | ३० | गोवर्धनपूजनं गवां गोपीनां च पूजनं | |
| १२ | २६ | का·कृ·चतुर्दश्यां अनर्कचतुर्दशीकृत्यं | |
| १३ | ३ | तत्राभ्यंगस्नानं चतुर्दश्यादिद्वितीयांतं | |
| | | स्वातियोगे स्वर्ग्यं | |
| १३ | १८ | अत्र स्नानविधिः यमतर्पणं | |
| १३ | २८ | यमाय दीपदानं प्रदोषसमये कार्य्यं | |
| १३ | ३३ | प्रेतेभ्यो दीपदानं तत्र मंत्रः | |
| १४ | ५ | इयं भौमवारे चित्रायां च महाफला | |
| १४ | ८ | अस्यां हनुमतो जन्मदिनकृत्यं | |
| १४ | १० | का·अमावास्यायां दीपावलिकृत्यं | |
| १४ | १३ | अत्रापि स्वातियोगे अभ्यंगस्नानं | |

## श्रीरणवीरसिंहव्रतरत्नाकरेसूचीपत्रम्

धिदेवतास्थापन

हाणि

| पृष्ठ | पंक्ति | |
|---|---|---|
| ११२ | १३ | आश्विनशुक्लद्वादश्यां पद्मनाभद्वादशीव्र- |
| ११२ | २४ | विष्णुमंदिरे दीपदानं दीपदानमाहात्म्य पुत्रप्राप्तिव्रतं (त्रिरात्राशोकव्र॰ |
| ११३ | ११ | अस्यामेव विशोकद्वादशीव्रतं त्रयोदश्यां |
| ११४ | २७ | आश्विनशुक्लचतुर्दश्यां धर्मराजप्रतिमा |
| ११४ | ३० | आश्विनपूर्णिमायां कांस्यपात्रदानं (दानं |
| ११४ | ३३ | अत्रयोगविशेषेण महाश्विनी पौर्णि (मासुका |
| ११५ | १ | आश्वयुज्यां आग्रयणविधानं नवान्नेष्टिकार्य्या |
| ११५ | २८ | अस्यां निकुंभपूजोत्सवः गृहशोभाकार्य्या रुद्रपूजा (कार्य्या |
| ११५ | ३४ | सुरभीपूजा वरुणपूजा मंगलालंभनादि |
| ११५ | ३५ | ततः प्रभृति षण्मासांतं गृहे षड्गिरस्त्राव |
| ११६ | १० | अस्यामेव कोजागरव्रतं तत्र (ड़ाकार्य्या लक्ष्मीपूजा |
| ११६ | १८ | रात्रौ जागरणं कोजागरव्रतकथा |
| ११७ | १३ | अथास्योद्यापनप्रयोगः (र्य्यं |
| ११७ | २२ | अस्यां गजनीराजनं वाजिनीराजनं चका |
| ११७ | २२ | अस्यां नारदीयपुराणदानं सप्तधेनुदानं |
| ११७ | २४ | तुलसंक्रांतौ वामनपुराणदानं |
| ११७ | २६ | सूनधेनुदानम् |

## अथाश्विनमासकृत्यरत्नसमुच्चयः

| पृष्ठ | पंक्ति | |
|---|---|---|
| १ | १ | कार्त्तिकमासकृत्यनिर्णयः |
| १ | १ | तुलासंक्रमे पूर्वाः पराश्च घटिकाः पुण्याः |
| १ | ३ | तत्र धान्यादिबीजदानं अत्र विष्णुव्रतप्रशं |
| १ | ४ | कार्त्तिकस्नानं आश्विनशुक्लैकादशी (सा मारभ्य |
| १ | १० | दाक्षिणात्यमते अन्यमतेषु आश्विनी मारभ्योक्तं (प्राधान्यं |
| १ | १० | तुलामकरमेषेष्विति वचनात्सौरमास |
| १ | १६ | कार्त्तिकस्नानं कुरुक्षेत्रगंगादिषु कोटि (गुणं |
| १ | २० | मथुरायामतिदुर्लभं काशीस्थविन्दुतीर्थे मोक्षदं |
| १ | २३ | स्नानमंत्रः काशीखंडे अर्घ्यमंत्रोपि |
| १ | ३० | मालाधारणं तुलस्याः धात्र्याश्च पुष्पाणि वेदनं चातिपुण्यकरम् |

| पृष्ठ | पं॰ | |
|---|---|---|
| २ | ८ | धात्रीतरुच्छायायां देवपूजनं रसधेनुदानं |
| २ | ३ | द्विदलादिवर्जनव्रतानि मासवर्जनव्रतं |
| ३ | १ | गंगायमुनसंगमे गृहफले दीपदानं देवालयादौ (व्रतं |
| ३ | १४ | आकाशदीपदानं एकभक्तव्रतं कार्त्तिक |
| ४ | १३ | जयावाप्तिव्रतं कृच्छ्रव्रतं देवीव्रतं |
| ४ | २५ | कार्त्तिककृष्णप्रतिपदायां कार्त्तिकनियमधारणं वह्निपूजा |
| ४ | ३१ | द्वितीयायां यमपूजा तृतीयायां गौरीव्रतं |
| ४ | ३२ | कार्त्तिकचतुर्थ्यां दशरथराज्ञः पूजा दुर्गा |
| ४ | ३४ | अस्यामेव करकचतुर्थीव्रतं तत्र स्त्रीणामे |
| ५ | ६ | करकचतुर्थीकथा अस्योद्यापनं (वाधिकारः |
| ६ | १४ | का॰ कृ॰ पंच॰ नागपूजाव्रतं षष्ठ्यां स्कंदपू- |
| ६ | १७ | का॰ कृ॰ सप्त॰ वैकुंठकल्पादि तत्र सूर्यपूजा |
| ६ | १९ | का॰ कृष्णाष्टम्यां पुत्रकामव्रतं हरिगौर्यो र्दर्भमये रूपे पूजनं |
| ६ | २१ | इयमपि कारकाख्या चतुर्थीवदत्रापि कृ |
| ६ | २२ | अस्यामेव अहोई देवीपूजाव्रतं तत्रकथा |
| ७ | २१ | का॰ कृ॰ नवम्यां दुर्गापूजाव्रतम् |
| ७ | २२ | का॰ कृ॰ दशम्यां धर्मराजपूजा दिशांपूजा |
| ७ | २५ | का॰ कृष्णैकादशी रमा तस्याः कथा |
| ९ | १० | का॰ कृ॰ द्वादश्यां गोवत्सपूजाकथा |
| ११ | १९ | इयं नीराजनद्वादशी अत्र गवां पूजनं नीरा |
| ११ | २२ | का॰ कृ॰ त्रयोदश्यां यमदीपदानव्रतं पंचाह |
| ११ | २५ | अस्यामेव गोत्रिरात्रव्रतं सस्त्रीककृष्णपूजनं |
| ११ | ३० | गोवर्धनपूजनं गवां गोपीनां च पूजनं |
| १२ | २६ | का॰ कृ॰ चतुर्दश्यां अनर्कचतुर्दशीकृत्यं |
| १३ | ३ | तत्राभ्यंगस्नानं चतुर्दश्यादिद्वितीयांतं स्वातियोगेष्वर्थं |
| १३ | १८ | अत्र स्नानविधिः यमतर्पणं |
| १३ | २८ | यमाय दीपदानं प्रदोषसमये कार्य्यं |
| १३ | ३३ | प्रेतेभ्यो दीपदानं तत्र मंत्रः |
| १४ | ५ | इयं भौमवारे चित्रायां च महाफला |
| १४ | ८ | अस्यां हनुमतो जन्मदिनकृत्यं |
| १४ | १० | का॰ अमावास्यायां दीपावलिकृत्यं |
| १४ | १३ | अत्रापि स्वातियोगे अभ्यंगस्नानं |

शुभमस्तुलेखकपाठकयोः ॥

श्रीरघुनाथोजयति

श्रीगणेशायनमः

श्रीशंगणेशंसशिवांशिवांच वाग्देवतामर्कसुखांशुखेटान् श्रुतिस्मृतीनामपिसंप्रणे
तॄन् वंदामहेदेवमुनीश्वरांश्च १ विश्वसर्गविसर्गादि तरंगादिपयांबुधौ वितन्वाते
यथायस्मिं स्तौवंदेप्रकृतीश्वरौ २ सकलदेवगणार्चितपंकजौ निजजनेप्सितदान
सुरद्रुमौ कथमपिस्मरतांदुरितापहौ हरिहरौनिजचेतसिसंश्रये ३ त्वमेषांलोका
नांसकलसुखहेतोर्हृदयसे निहंस्येवध्वांतंप्रतिवसतिनैषांयतमसे रवेर्यावद्भूमीत
लकमलजालांतरभवं तमोनिघ्नन्नेकं हृदयकमलंमेपि कलय ४ प्रसन्नतांयानग
ताभिषेकतस्तथानमम्लेवनवासदुःखतः मुखांबुजश्रीरघुनायकस्यसा सदास्तुमे
मंजुलमंगलप्रदा ५ श्रीलावण्यप्लुताकृतरुचेरप्रमेयप्रभूते लीलालोकप्रथित
रभितःसप्तसर्वात्मशक्तेः यस्मिन्कल्पेप्रथममभवच्छ्वेतवाराहसंज्ञे विष्णोःशेषश
यितहृद्यौनाभिपद्माद्विधाता ६ तन्मानसान्मुनिरभूत्प्रथमंमरीचिर्मन्त्रादिसा
र्वनिगमार्थविचारदक्षः योवेदबोधितविधानविदाविधात्रा कर्माद्दितंमुनिभिराक
लयांचकार ८ तेपेतिदुष्करमसंस्कृतमानसानां सृष्टिंविवर्द्धयिषुरुग्रतमंतपोयः
येनोच्यतेसकृदियंखलुकाश्यपीसा तस्माद्बभूवभगवानथकश्यपर्षिः ९ आ
शाविभागजनकोऽखिललोकसाक्षी वर्षर्तुमासादिविधेरदित्यां हेतुस्ततोधिकत
रःसमभूद्विवस्वान् दक्षप्रजापतितनूभुविभासमानः १० तस्माज्जातःसूर्यवंशो
तिपुण्यो यस्मिन्भूपाःपुण्यपुंजाबभूवुः सर्वान्वक्तुंतान्सुकर्माणितेषां कोस्मिंस्तु
कस्तान्प्रधानान्ब्रुवेहम् ११ तत्रप्रसिद्धाःखलुयेनरेंद्रा महेंद्रदुस्साध्यतरार्थसिद्धेः
संसाधकाधर्मभृतांवरिष्ठा तेषांतुकांश्चित्कृतजान्ब्रवीमि १२ रामायणेभारता
दौश्रीमद्भागवतेपिच महाकविनिबंधेषुज्ञेयोवंशस्यविस्तरः १३ विवस्वतो
भूरियशामनस्वी वैवस्वतोनाममनुर्बभूव आद्योनृपाणांमुनिमाननीयो यथा
श्रुतीनांप्रणवःपुरस्तात् १४ इक्ष्वाकुरभवत्तस्मात्पुत्रस्तस्यपुरंजयः इंद्रवाहःककु

न्यथ ख्यातोयः कर्मभिस्त्रिभिः १५ महेंद्रमास्थायमहोक्षरूपं यःसंयतिप्राप्तपिनाकि
लीलः चकारबाणैरसुरांगनानां गंडस्थलीःप्रोषितपत्रलेखाः १६ उत्तंकस्यमुनेर्मदेकुव
लयाश्वोपिच्छिन्नीद्रस्ततः ख्यातस्तत्रचधुंधुमारइतितंधुंधुंनिहत्यासुरं यःसाध्योनस
रैरणेनृपसुतायद्दक्षजानाग्निना दग्धास्तत्क्षणमेकविंशतिसहस्राण्येवशिष्टास्त्रयः
१७ सप्तद्वीपवतीमशासतिमहीयस्मिन्नृपेदस्यवो भीतास्तेयमपास्यपर्वतगुहावा
सादशास्पादयः यस्यदेवत्रमभ्युदेतिनशौर्यावच्चसंतिष्ठते मांधातासमहीपतिःक्षि
तितलेलंकारभूतोभवत् १८ वदान्योभूद्धरिश्चंद्रःसगरःसागरोपमः येनगंगासमा
नीतासबभूवभगीरथः १९ एवमन्येपिभूपालाःकृतेभूवन्महाबलाः अथैवमेवा
भूपालांस्त्रेताजातान्ब्रवीम्यहम् २० सबभूवनदन्वयेपिजेताजितमेतन्नविचार्ययो
ऽतिष्ठत् अजयत्परलोकमप्युदारं भुविखट्वांगनृपोमुहूर्त्तमात्रे २१ जातःकुलेतस्य
किलोरुकीर्त्तिः कुलप्रदीपोनृपतिर्दिलीपः अतिष्ठदेकोनशतक्रतुत्वे शक्राभ्य
सूयाविनिवृत्तयेयः २२ यस्मिन्महींशासतिनर्त्तकीनां निद्रांविहारार्द्धपथेगतानां
वातोपिनास्त्रंसयदंशुकानि कोलंबयेदाहरणायहस्तम् २३ सनंदिनींसमाराध्य
गांत्रिरात्रव्रतेनच पुत्रंविश्वस्यजेतारंरघुनामानमाप्तवान् २४ ख्यातोरघुस्तस्यप
दंप्रशास्यमहाक्रतोर्विश्वजितःप्रयोक्ता चतुर्दिगावर्जितसंभृतांयो मृत्पात्रशेषाम
करोद्विभूतिम् २५ आरूढमद्रीनुदधीन्वितीर्णं भुजंगमानांवसतिंप्रविष्टम् ऊ
र्ध्वंगतंयस्यनचानुबंधि यशःपरिच्छेत्तुमियत्तयालम् २६ रघुवंशतयावनीप्रसिद्धो
ऽविवंशोप्यधुनापियेनभूयः कुलिशव्रणवान्सविश्वजेता रघुनामासतदात्मजोनृ
पोजः २७ अजोपीदुमतींलब्ध्वाजित्वाशत्रुगणान्रणे पुत्रेराज्यधुरंन्यस्यपरंनिर्वा
णमीयिवान् २८ अजसुतोवनिमेकरथेनयो दशदिगंतपयोध्युपलक्षिताम् अज
यदप्रतिषिद्धरथागमो दशरथोविरथोज्झितवैरियः २९ सईजेपुत्रकामेष्ट्याचतुरात्मा
नमीश्वरम् तस्याविरासीत्पुत्रत्वेरमेशोमहिषीत्रये ३० हत्वाबाल्येवयसिविकटां
ताडकांकारयित्वा गाधेःपूज्याध्वरमृषिवधूंशापतोमोचयित्वा भंक्त्वाशंभोर्धनुरव
निजांप्राप्यहत्वाखरादीन् कृत्वासेतुंदशकमवधीत्सानुजोरामचंद्रः ३१ सोपिकृत्वा
श्वमेधांस्त्रीन्पुत्रान्न्यस्यपृथक्पुरो साकेतेस्वपुरंनिन्येस्वपदंचापुनर्भवम् ३२ कुशेतदे
समरघुप्रवीरा ज्येष्ठंपुरोजन्मतयागुणैश्च चक्रुःकुशंरत्नविशेषभाजं सौभ्रात्रमे
षांहिकुलानुसारि ३३ परितापवतींवीक्ष्यनिशयेयोध्यापुरेश्वरीं त्यक्त्वाकुशाव
तीमद्यो भेजेयोध्यापुरींकुशः ३४ एवमन्येपिभूपालाद्वापरेकीर्त्तयोद्भवाः बभूवुस्ति
ष्ययुगजानानादेशानरेश्वराः ३५ विख्यातश्रीर्निजभुजबलोत्साहितारातिवर्गो युद्धा

कान्तीप्रतिदिशमगाद्यःप्रतिद्वंद्व्यभावात् चक्रेभूभृद्गुरुतरशिलास्थापणंतोलनंच सोऽस्मि
न्वंशेनिखिलजगतीपालकोमालदेवः ३६ तस्यान्ववायेप्रथितप्रभावः कर्ण्णदेवोऽज
नियर्मनिष्ठः राज्ञीषुसप्तस्वपितस्यतासु द्वाविंशतिस्तत्तनयाबभूवुः ३७ तद्वंशेप्रिय
संग्रामोनीतिज्ञोपिनृपोभवत् संग्रामदेवइतियःसंज्ञामान्वर्थिकीमधात् ३८ अपिय
त्रविहद्वयर्म्मिणीद्वे यत्प्रतापाशिअर्थितत्त्वप्रशांतिशौर्य्ये अधुनाप्यवनीतलेध्रुवश्रीर्ध्रुवदेवो
धरणीश्वरोबभूव ३९ तस्याःपत्यचतुष्टयीस्वमहसाजाज्वल्यमानासभा वेद्यांवि
धाहितायसाधुविहितास्वर्लोकपानामिव लोकेष्वागमपंक्तिरेवरुरुचेसद्वर्णमालो
ल्लसत् सत्मंत्रादिविधानबोधकुशलाप्रज्ञाहितार्थप्रदा ४० तत्राद्योरणजीतदेवधरा
णीभृद्येननीतावशी कुलूभोटबुसेहराधिपतयोजालंधरेशास्त्रये येत्रैगर्त्तसखेनभूमि
पतयोमेंडीकहूरेश्वराः प्रत्यब्दंप्रददुःप्रियायनियतंयद्वार्षिकोपायनम् ४१ तस्य
श्रीघनसारदेवइतिचश्रीसूर्त्रसिंहाभिधः पश्चात्योवलवंतसिंहइतियःसोदर्य्यवर्य्यो
ऽश्रमी जेनारोरणदुःसहारिष्टतनावीराग्रणीसंहते सत्सूनुर्ब्रजराजदेवइतियःका
श्मीरमत्याच्छिनत् ४२ योऽभूत्सुरतसिंहवर्मविदितोवीराग्रगण्योवली तस्यपौत्र
मतेर्बभूवततयोगीविप्रसंरक्षकः श्रीजोरावरसिंहइत्यभिधयाख्यातोभवत्तत्सुतो भू
भाग्यायकिशोरसिंहधरणीपालोबलीयान्सुधीः ४३ पुत्रास्त्रयोधिकरुचोबलिनोब
भूवु स्तस्यप्रतापनिधयोरिपुतापदक्षाः ज्येष्ठोजिगायधरणींसगुलाबसिंहः श्रीध्या
नसिंहनृपतिश्चसुचेतसिंहः ४४ एषाभूपवरत्रयीगुणमयीसर्वात्ममूर्तित्रयी देवा
नांत्रितयीवधात्ममहसापर्य्याप्तलोकत्रयी शक्तीनांत्रितयीवसाधुसकलासौराज्य
धर्मत्रयी साधूनामवनायपुण्यनिचयैःस्वैरात्तव्यक्तित्रयी ४५ आसीद्यस्तुगुला
बसिंहनृपतिर्भूमंडलाखंडलो भूयोयेनचनिर्जितानिजपराधीशावनिर्यावती नाम्ना
साद्यपदातिदुर्गममपिक्ष्माभृत्पथंवाजिगं रम्यीकृत्यलदाखभोटविषयाधीशाञ्जि
गायोद्धतान् ४६ देशान्त्रसवनायुपास्समहाचीनार्वचीनादिका गोधारादितुरुष्क
पूर्वविषयायेयावनीयाःपरे तूमाद्याअपिशोरकाबलमुखायेयारकंदादयो यस्मि
न्मंत्रमुपाश्रितेसपनयोविभुर्न्निदेशाश्रिताः ४७ येसन्नद्धमभीकमद्यतमहाखड्ग
विलोकाग्रतो दत्वापृष्ठमपाद्रवन्मद्दपिम्लेच्छाधिपानांबलं उक्रांयेनपिशोरखेह
ररणेमत्वेतियत्काबलं मत्वेतेननदादितत्पुरमपिख्यातंहितौकाबलं मद्दोभद्रत
रोबभूवसुचिरंयेनाशनद्दोरलं लावण्योपचितश्रियाजनपदंसंस्पर्द्धिजातंदिवः
यद्दावोग्रतपीलनंसुमनसांसर्वागमद्योतकं यन्मंत्रंननिजोपिवेदविधिवत्कोन्यो
निगूढंजनः ४८ आदित्यवोलवपुरंसबलांगरेजानीतावशेमतिमतापधियेनतेभ्यः

साम्राज्यशासनमवाप्य दुरापमन्यैस्त्यक्तं हितञ्च सिकतालवतां प्रयेदे ५० कृतोनीतिविदाये नपुरारिरपिनामतः शंकरोदेविकातीर्थपुरमंडलमंडनः ५१ गंडक्यानर्मदायाञ्चगया याश्चापिसच्छिलाः आनाय्यदेविकादेवी सर्वदेवमयीकृता ५२ काशीब्रह्मसरःप्रयाग मथुरागंगावनेगह्वरे वृंदाद्यं गजवाजिगोभिरधिकं वासोगृहैर्भूसुरान् रत्नाढ्यैर्वल यांगुलीयमुकुटैः केयूरसत्कुंडलैः सन्मान्योन्नमरांकवैः सयुवतीन्रुच्याभिरानोषय न् ५३ शौर्य्यं यस्य नरेन्द्रराजसुभटैर्व्याप्यजेगीयते धैर्य्यं धीश्वचनैः समुद्रधरणीपालै स्तस्तूयते औदार्य्यं द्विजराजराजिभिरलं संश्लाघ्यते प्रत्यहं प्रायोयत्सुकृतिः परैरपिनि जैरन्यैरभिज्ञैरपि ५४ यस्संभाव्ययशोधुरं निजधियावोढुं समर्थं निजे पुत्रं श्रीरणवी रसिंहमखिलप्रेमास्पदं सद्गुणैः तस्मिन्नौरसिके निधाय सकलां राज्यश्रियं सन्मना ध्यायं श्रीरघुनाथमप्रकटयल्लोके निजान्मज्ञनाम् ५५ सोयं श्रीरणवीरसिंहधरणी पालोगुणीयोधुना शास्तिक्ष्मां सततः स्वधर्मविधिना वर्णाश्रमस्थापकः वीरश्री विलसज्जयार्जितमहाराजेतिशब्दावली ज्ञातोधर्मइवात्म कर्मकलनासंसिद्धये मूर्तिमान् ५६ येनात्मीयकुलप्रधानधरणीपालाप्तराज्याधिका राज्यश्रीः समुपा र्जिता प्रतिदिनं वृद्धिं गतास्ताः श्रियः आपूर्वापरदक्षिणोत्तरपयोराशेः समुद्भाविनाः सर्वत्रक्षितिपेषु कुंदधवलाः श्लाघ्याः सतां कीर्तयः ५७ योसाविंगिलिजाधिपैरिपु कुलक्ष्माजिद्भिरभ्यर्थितो दिल्लीहस्तनमैर्निजैरपिबलैरालोक्यहृष्टां परैः साहाय्ये स्व लोबलंप्रहितवांस्तन्नीतयेसोऽधिकं तैरप्याप्तमनोरथैरनुसदः संश्लाघ्यते दीर्घदृक् ५८ प्रातः प्रत्यहमीश्वरार्चनविधिं दानं विधायादरा दामध्याह्नविधेयराज्यरचना॥ भिज्ञाप्रगोष्ठ्युत्सवः मध्याह्नोत्तरमप्युदारधिषणः कृत्वा समाजे पुनः सायंधरप तियोन्वहं स्वपृतनाव्यूहं च सांग्रामिकं ५९ आहूतान्कलिनाशंखासुरेणैव विभात्य मी उद्धर्तुकामः सन्नद्धो हयग्रीववदागमान् ६० उद्धृतः केवलो वेदो हयग्रीवेण ना परं उद्धारयति विद्वद्भिः सोपवेदागमानयम् ६१ येनाहूय निबंधकृत्सुविशदग्रामोर्व रागा ग्रामभूभूषाभिः परितोषिताः सुविदुषः सर्वागमज्ञा द्विजाः सौराष्ट्रद्रविडांध्रगुर्ज नाः संस्कृतः कोपिमदीयराष्ट्रभवेद्विवर्णोक्षितिभृद्दत्वा ६२। काशीपुरी येन सतोपहृताः ६३ यस्त्वैवर्णिकविधिं विधिवत्समस्तविले राज्येनिजेनैगमं। प्रत्याहूयत उद्भवाय च नरो विप्रांश्चतुर्वेदिनः प्रत्येकं शतमद्विकारजततां सेषां वि॥ धायान्हिकं तेभ्योन्नांबरसंश्रयादिरहितान्संपाठयत्यर्भकान् ६४ यः संध्याः समु॥ पास्यनाम पदिशान्यं द्विजैरार्घ्यं वत्तोधीनाय दिपद्मानां च कृपालावेदे विधेया स्तुताः॥

एभाःपुंसवनादिकाश्चनितमवासंपाद्यतांसंस्कृतिर्यःकुर्य्यादधिकंप्रियोस्तिसहिमेनोचेदयो
ऽत्रो हिसः ६५ नवेद्योपिमूर्खोविषयेमदीयेभवेत्कृतोयेनविदानिदेशाः विधायशास्त्राप
तिशालमेकःसपंडितोध्यापितसपाठनाय ६६ नानाशास्त्रप्रोतशैलीसरित्सुनिष्णाता
येसंस्कृतप्राकृतवाक्यगोष्ठीनेषांयोर्थसिद्ध्यैविपन्नेप्रांतःप्रेमाणमत्यहंपंडितानाम् ६७
तर्कार्कतार्किककुलैस्सकर्मयुक्तैर्विज्ञैर्भिषग्वरजनैरथशाब्दिकैश्च वैशेषिकैर्बहुविशे
षविचारदक्षैःसांख्यैःसयोगनिपुणैर्नयनीतिविद्भिः ६८ सद्वैदिकैःपरिलसच्छ्रुतराग
मज्ञैर्मीमांसकैर्मिथुनकर्मकलापदक्षैः वेदांतिभिश्चविधिवद्विदितात्मतत्त्वैःकाव्यामृ
ताद्भुतकथाकुशलैःकवीशैः ६९ पौराणिकैःप्रणयवद्भिरुदारगाथासंकीर्त्तनैर्गणित
शास्त्रविशारदैश्च अन्यैरुदस्यासितरीतिमदन्यविद्यापारंगतैरमलकेरलिशाकुनैश्च
७० मंत्रप्रयोगनिपुणैरुभयस्वरज्ञैःस्वीयैःस्ववर्णवलयांगदकुंडलाद्यैः आनंदितैरनु
विशद्भिरुषोनिशायत्प्राजागृहंविलसदत्रप्रतिभासतेलम् ७१ आलोक्यतेनविदुषावि
दुषांसमाजंवर्णान्स्ववर्णविधितःकलिनावधूतान् संचिन्त्यचोक्तमखिलाकृतिधिव्रता
नांधर्मोदयायजगतांक्रियतांप्रबंधः ७२ तस्याज्ञयावीक्ष्यमहानिबंधान्विदद्भिरन्यै
रनुमोदितेन विलिख्यतेश्रीरणवीरसिंहरत्नाकरोयंशिवशंकरेण ७३ दास्यंत्यत्र
करावलंबमभितोरत्नाकरेयेबुधा येसंतःसततोपकारनिरताद्दृष्टापदंमेस्खलत् ये
तब्रह्मकुलावमानपटवोहास्यविधासंगिनैवै तेकुर्वंतुनकुर्वतेकिमहितंदृष्ट्वाविवेको
ज्झिताः ७४ सद्वेलोविधिसेतुरुत्सवमहोल्लासःप्रकारोद्गमो दानोर्मिव्रतविभ्रमो
व्रतकथाकल्लोलकोनंतरः पूर्णोद्यापनतोःसपर्वणिमहादानादिकल्पद्रुमो भूया
दुर्मजलांचितोरघुपतेरत्नाकरोयंमुदे ७५ ॥

अथोच्यतेनिबंधस्यसंक्षिप्तोविषयानुक्रमः अत्रादौधर्मनिरूपणस्यप्रथमोरत्नसंग्रहः द्वितीयःकालनिरू
पणस्तृतीयस्तिथिद्वैधप्रयुक्त यावदेकादशीनिर्णयः सामान्यतिथिनिर्णयः पंचमेपौर्णमास्य
न्तःषष्ठेमासपर्वनिर्णयः सप्तमोपितृपक्षेष्टिपर्वकालादिनिर्णयः त्रैवर्णिकस्यस्नानादेश्चाध्या
पनमत्राष्टमे नवमोवत्सरारंभप्रभृतिचैत्रकृत्यवान् ततोवैशाखकृत्यानांदशमोरत्नसं
ग्रहः ज्येष्ठमासव्रतादीनांविधानमेकादशसंख्यके ततआषाढकृत्यानांद्वादशेव्रतसंग्रहः
त्रयोदशेश्रावणस्यव्रतादेश्चाप्यनुक्रमः ततःप्रोष्ठपदस्यापिविधानंमनुसम्मिते आश्विन
स्यव्रतादेश्चविधानंतिथिसंख्यके षोडशेतूर्जमासीयव्रतादेर्विधिसंग्रहः मार्गमासव्रतादी
नांविधिःसप्तदशोदितः ततश्चाष्टादशेपौषमासस्यविधिसंचयः ऊनविंशेतुमाघस्यसम
स्तविधिरुत्तमः विंशेतपस्यकृत्यानांव्रतादीनांविधिःस्फुटः एकविंशेमलकृत्याख्येऽधिमा॰
सादिसंकीर्णतिथिकृत्यता अधिमासादिसंकीर्णतिथिकृत्यंततोधिके द्वाविंशेसर्वसंक्रां
तिपंचांगव्रतसंचयः त्रयोविंशेलक्षपूजाहृत्तोद्यापननिर्णयः चतुर्विंशेतुहस्तनक्षत्रनारा
यणार्चनं पंचविंशेतुगंगायाधराधारस्थितिनिर्णयः एवमेतेत्रसंक्षेपान्नृपरत्नसमुच्चयाः
× धर्माज्जन्मकुलेशरीरपटुतासौभाग्यमायुर्धनं धर्मेणैवभवंतिनिर्मलयशोविद्यामहीसंप
दः कांतारेषुमहाभयेषुसततंधर्मःपरित्रायते धर्मःसम्यगुपासितोभवतिहिस्वर्गापवर्गप्र
दः १ यन्नागामदभिन्नगंडकतटास्तिष्ठंतिनिद्रालवो द्वारेहेमविभूषिताश्चतुरगाह्रेषं
तियद्दर्पिताः वीणावेणुमृदंगशंखपणवैःसुप्तस्तयोबोध्यते तत्सर्वंसुरराजलोकसदृशं
धर्मस्यविस्फूर्जितम् २ यावद्वेदाश्चगंगाचहरिनामजगत्त्रये तावत्सइमसंबद्धाकीर्त्ति
× स्तिष्ठतुश्रीमताम् ३ ×

श्री × अथात्रवक्ष्यमाणव्रताद्यनुष्ठाननिबंधेधर्मार्थकामस्यमोक्षस्यभरतर्षभेति स्वर्गापव
र्गादिपरमपुरुषार्थजनकत्वेनाभ्यर्हितत्वाद्व्रतादीनांतत्प्रमुखत्वमागतत्वाच्चादौ धर्मोनिरूप्य
ते तत्रचोदनालक्षणोर्थोधर्मइत्याद्यभियुक्तस्मृतेः यद्यप्यपूर्वविशेषएवधर्मस्तथापित
ज्जनिकासुक्रियास्वपिशिष्टानांप्रयोगइतितावदेवनिरूप्यते तत्रतत्स्वरूपमनुः विद्वद्भिःसेवि
तःसद्भिर्नित्यमद्वेषरागिभिः हृदयेनाभ्यनुज्ञातोयोधर्मस्तन्निबोधत एवंरूपःसधर्मइत्ये॰
कोयोगस्तन्निबोधतेति विश्वामित्रः यमार्याःक्रियमाणंहिशंसंत्यागमवेदिनः सधर्मोयं
विगर्हंतितमधर्मंप्रचक्षते आर्याःशिष्टाःफलतोधर्मंनिरूपयतितैत्तिरीयश्रुतिः धर्मोविश्व
स्यजगतःप्रतिष्ठालोकेधर्मिष्ठंप्रजाउपसर्पंतिधर्मेणपापमपनुदति धर्मेसर्वंप्रतिष्ठितं
तस्माद्धर्मंपरमंवदंति गौतमः वर्णाश्रमाश्चस्वधर्मनिष्ठाःप्रेत्यकर्मफलमनुभूयत॰
तःशेषेणविशिष्टदेशजातिकुलरूपाद्याः श्रुतवित्तसमेधसोजन्मप्रतिपद्यंते विष्वंचोवि
परीतानश्यंति शेषेणधर्मशेषेणमेधावीर्यदेशोभारतवर्षादिः जातिर्ब्राह्मणत्वादिः कु
लंकठादिरूपं सौदर्यंतदाद्यमौदार्यादि एतदंतः विष्वंचःसर्वतोगामिनोनिषिद्धाचा
राः अतएवपूर्वोक्तविपरीतानश्यंति उक्तविपरीतफलभाजोभवंतीत्यर्थः धर्मप्रमाणेम
नुः वेदोखिलोधर्ममूलंस्मृतिशीलेचतद्विदां आचारश्चैवसाधूनामात्मनस्तुष्टिरेवच स्मृ
तिविभागेशंखलिखितौ स्मृतयोधर्मशास्त्राणितेषांप्रणेतारोमनुविष्णुयमदक्षांगिरोत्रि॰
बृहस्पत्युशनआपस्तंबवसिष्ठकात्यायनपराशरव्यासशंखलिखितसंवर्तगौतमशातात
पहारीतप्रचेतसादयः आदिपदग्राह्याःदेवललोमशजमदग्निप्रजापतिविश्वामित्रपैठीन॰

शिपितामहबौधायनछागलेयजाबालच्यवनमरीचिकश्यपनारददक्षाः एतेषामेवषट्त्रिंशन्मत
मभ्यर्हितम् स्मृत्यंतराणिपुराणेषु तत्रविष्णुपुराणे अष्टादशपुराणानिपुराणज्ञाःप्रचक्षते ब्रा
ह्मंपाद्मंवैष्णवंचशैवंभागवतंतथा तथान्यन्नारदीयंचमार्कंडेयंचसप्तमं आग्नेयमष्टमंचैवभवि
ष्यंनवमंतथा दशमंब्रह्मवैवर्त्तंलैंगमेकादशंतथा वाराहंद्वादशंचैवस्कांदंचात्रत्रयोदशं चतुर्दशं
वामनंचकौर्म्मंपंचदशंस्मृतं मात्स्यंचगारुडंचैवब्रह्मांडंचततःपरं कूर्मपुराणे ब्राह्मपुराणंप्रथ
मंपाद्मंचैवमनंतरं शैवंभागवतंचैवभविष्यंनारदीयकं मार्कंडेयमथाग्नेयंगारुडंचततःपरं लैंगंत
थैववाराहंस्कांदंवामनमेवच कौर्म्ममात्स्यंचवैवर्त्तंवायवीयमतःपरं अष्टादशंसमुद्दिष्टंब्रह्मांड
मितिसंज्ञितं अत्रविष्णुपुराणवायुपुराणयोःपुराणत्वेविकल्पः नरसिंहपुराणादीनितदंतर्गता
न्येव तदुक्तंमत्स्यपुराणे पाद्मेपुराणेयत्प्रोक्तंनारसिंहोपवर्णितं तदष्टादशसाहस्रंनारसिंहमि
होच्यते नंदायायत्रमाहात्म्यंकार्त्तिकेयेनवर्णितं नंदापुराणंतल्लोकेनंदाख्यमितिकीर्त्तितं यत्रसां
बंपुरस्कृत्यभविष्येपिकथानकं प्रोच्यतेतत्पुनर्लोकेसांबमेवमुनिव्रताः एवमादित्यसंज्ञोपित
त्रैवपरिपठ्यते कालिकापुराणादीनि तत्रउक्तत्वात्तत्तद्रूपेण गृहीतानि तथाचमत्स्यपुराणे
अष्टादशभ्यस्तुपृथक्पुराणंयत्तुदृश्यते विजानीध्वंतदेतेभ्यःपुराणेभ्योविनिर्गतमिति चतुर्लक्षैतत्तं
व्यापकमित्यर्थः उपपुराणानितुकूर्मपुराणे अन्यान्युपपुराणानिमुनिभिःकथितानितु अष्टा
दशपुराणानिश्रुत्वासंक्षेपतोद्विजाः पुराणफलमाप्नोतिव्यासस्यवचनंयथा आद्यंसनत्कुमा
रोक्तंनारसिंहमतंतरं तृतीयंपाद्ममुद्दिष्टंकुमारेणप्रभाषितं चतुर्थंशिवधर्माख्यंसाक्षान्नंदिप्रभा
षितं दुर्वाससोक्तमाश्चर्यंनारदोक्तमतःपरं कापिलंवामनंचैवतथैवोशनसोदितं तथैवविष्णु
धर्माख्यंकालिकाह्वयमेवच माहेश्वरंतथासांबंसौरधर्मार्थसंचयं पराशरोक्तमपरंमारीचंभा
र्गवाह्वयं इदंतुतत्पंचदशपुराणंकौर्म्ममुच्यते एतानितुतथान्यानि स्मृतिकारेणशिष्टपरि
गृहीतानि धर्मशास्त्राणि अथशीलंभारते अद्रोहःसर्वभूतानांकर्मणामनसागिरा अनुग्र
हश्चदानंचशीलमेतद्विदुर्बुधाः आचारोलौकिकावगीतः आत्मतुष्टिः नानापक्षसंभवेएकपक्षे
परितोषः अत्रैवभट्टाः तेनवैवैदिकानेकधर्मधीसंस्कृतात्मनां आत्मतुष्टेःप्रमाणत्वंसिद्धंधर्म
प्रसिद्धये अथसकलानुष्ठानोपकारकत्वादत्रपरिभाषानिरूप्यते तत्रजाबालः श्रुतिस्मृति
विरोधेतुश्रुतिरेवगरीयसी अविरोधेसदाकार्यंस्मार्त्तंवैदिकवत्सदा पंडितेनेत्यर्थः भविष्य
पुराणे स्मृत्यर्थयोर्विरोधेतुह्यर्थशास्त्रस्यबाधनं परस्परविरोधेतुन्याययुक्तंप्रमाणवत्
स्मृतिर्धर्मशास्त्रं अर्थोऽर्थशास्त्रं तेनधर्मशास्त्रस्यमन्वादेरर्थशास्त्रस्यदंडनीत्यादेर्विरोधेदंडनीत्यादि
र्बाध्यते तस्यधर्मेऽनभियोगात् तदुक्तंजैमिनिनापि तत्रतत्त्वमभियोगविशेषात्स्यादिति अ
र्थशास्त्रयोर्विरोधेनिर्युक्तिकंबाध्यते स्मृतिशास्त्रविकल्पस्तुव्यवस्थासंभवेसति अदृष्टधर्म
शास्त्रेभिन्नविषयेव्यवस्थासंभवेसतिविकल्पःशास्त्रार्थः यथा अग्नौकरणहोमस्तुकर्त्तव्य
उपवीतिना प्राङ्मुखेनैवदेवेभ्योजुहोतीतिश्रुतिःश्रुतेः अपसव्येनवाकार्योदक्षिणाभिमु
खेनतु निरुप्यहविरन्यस्मात्अन्यस्मैनहिहूयते इतिकात्यायनवचनेनाग्नौकरणहोमेस
व्यापसव्यविकल्पउक्तः सचशाखाभेदान्नियतः स्मृतिशास्त्रविकल्पस्तु आकांक्षापूरणे
सति यथासूत्रंतुकर्त्तव्यंतथाकर्मानुष्ठानेइतिकर्त्तव्यांतरेण तदर्थकसूत्रस्यतत्समुच्चयः
अधिकस्यतुतदर्थस्यसमुच्चयएव सर्वशाखाप्रत्ययमेकंकर्मेतिन्यायात् मनुः आर्षंधर्मो
पदेशंचवेदशास्त्राविरोधिना यस्तर्केणानुसंधत्तेसधर्मंवेदनेतरः इतितात्पर्यम् भविष्यपु

णेन सम्यक्संसाधनं कर्मकर्त्तव्यमधिकारिणा निष्कामेन सदा धैर्येण काम्यं कामान्वितेन च आचार
युक्तः श्रद्धावान्दृढज्ञो ध्यानचिंतकः कर्मणां फलमाप्नोति न्यायार्जितधनस्तु यः अधिकारीति श्रुति
विहितकालजीवितेत्यर्थः आर्येन सामर्थ्येन विदुषेत्यर्थः निष्कामेनेति फलं तु नित्यपरं मुमुक्षुपरं
वा न्यायेति तत्क्रियानुष्ठानोपयुक्तधनपरं सामर्थ्यं च विहिते काले स्याज्जीवितो निषिद्धदेशस्था
नुष्ठानत्वमस्य तत्र देशो याज्ञवल्क्यः मिथिलास्थः स योगीन्द्रः क्षणं ध्यात्वाब्रवीन्मुनीन् यस्मिन्
देशे मृगः कृष्णस्तत्र धर्मान्निबोधत मनुः कृष्णसारस्तु चरति मृगो यत्र स्वभावतः स ज्ञेयो याज्ञि-
को देशो म्लेच्छदेशस्ततः परः कालस्तु पर्वादिः स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि पवित्रा
णां तथा जप्ये दाने च विधिदर्शिते पवित्राणां मंत्राणां पवित्रं मंत्रमिति निरुक्तात् भविष्यपुराणे
स्नानानामिह सर्वेषां वारुणो नैव मानवः कर्त्तुमर्हति कर्माणि विधिवत्सर्वदा द्विजः असामर्थ्याच्छरीर-
स्य कालदेशाद्यपेक्षया मंत्रस्नानादयः पंच केचिदिच्छंति सूरयः असामर्थ्यं वारुणस्नानसंबंधि श-
रीरापाटवं तत्र च अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणां आर्द्रेण वाससा वापि दैहिकं
मार्जनं विदुः मनुः प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तयेत् न सांपरायिकं तस्य जायते दुर्मतेः फ-
लं सांपरायिकं मार्कंडेयपुराणे सूर्योदयं विना नैव स्नानदानादयः क्रियाः अग्नौ विकरणं चै-
व तत्तु भावमलक्ष्यते अत्र सूर्योदयेन उषःकालो लक्ष्यते तथा च तद्द्वारात्रौ न स्नानं प्रातः-
स्नायादरुणग्रस्तां प्राचीमवलोक्य स्नायादिति विष्णुवचनात् इदमनुदितहोमांतरपरं तथा च
सदोपवीतिना भाव्यं सदा बद्धशिखेन च विशिखो व्युपवीतश्च यत्करोति न तत्कृतं सदेत्यनेन शि-
खाबंधनोपवीतधारणयोः पुरुषार्थतोक्ता तत्त्वधारणे प्रत्यवायकल्पनात् सदाधारणेः कर्म-
कालेपि धारणोपपत्तिः तत्कर्मांगतानास्त्येव तदुक्तं विशिख इति न तत्कृतं विगुणेन फलाप्रा-
प्तेः स्यामित्यर्थः केवलपुरुषार्थत्वे हि अधारणे हि कर्म सांगमेव तत्स्यात् पुरुषः परं प्रत्यवायी स्यात्
तच्चेष्टमिति कर्मांगत्वोपदेशप्रयोजनं क्रतुपुरुषार्थत्वमुभयथाप्युक्तं अतएव पवित्रोमेहृतश्चैव
मंजतोऽनुब्रवीति तः प्राणायामत्रिषट्कं तु तत्के त्रिक पुनः क्रमादिति प्रायश्चित्तमुक्तम् यज्ञोपवी-
ते गोभिलः यज्ञोपवीतं कुरुते सूत्रं वस्त्रं कुशरज्जुमेव वा अग्रेनैव कारेण कुशरज्ज्वोर्यज्ञोपवी-
तानुकल्पो विशिरभित्यादि व्यवच्छेदः सूत्रं सूत्रविशेषः कात्यायनः ऊर्ध्वं तु त्रिवृतं कार्यं
तंतुत्रयमधोवृतं त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रंथिरिष्यते ऊर्ध्वमित्यादि वामावर्त्तवलितं त्रि-
गुणं कृत्वा तदेव त्रिगुणं सदक्षिणावर्त्तं कार्यं तदेव त्रिवृतं कार्यं तदेव त्रिवृतं त्रिशरं सदेकमुप-
वीतं तस्यैको ग्रंथिः एकमेक कौटिल्यं भ्रमी प्रवरानुसारेणेत्यर्थः मनुः कार्पासमुपवीतं स्या-
द्विप्रस्योर्ध्ववृतं त्रिवृत् शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रकं त्रिवृत् नवगुणं नववै त्रि-
वृदिति श्रुतिः पैठीनसिः कार्पासमुपवीतं स्यात्तत्षट्तंतुकृतं त्रिवृत् ब्राह्मणस्य च क्षौमं
राजन्यस्य शाणं वैश्यस्य षडिति तत्तंतुभवे त्कौशं क्षौमेयं तु मा अतसी तदीयशणकृतं
निगमपरिशिष्टे वाससा यज्ञोपवीतं कुरुते तदभावे त्रिवृताभावे कुशमुंजवालपरिसरज्जु-
भिर्वा तदभावे यद्वा सूत्राभावे सूत्रविधानं तद्वेतंतुकमात्रपर मतो न गोभिलविरोधः बाल
मत्र गोभिलः याज्ञवल्क्यः कार्पासक्षौमबालतृणोद्भवम् सदासंभवतो धार्य्यमुपवीतं द्विजाति-
भिरिति तृणमुञ्जपादिपरिसरोप्युपमेव संभवतत् इत्यभिधानात् पूर्वपूर्वाभावे उत्तरोत्तर
विधिः बौधायनः कौशं सौत्रं त्रिवृतं यज्ञोपवीतमानाभेः कौशं कृमिकोशोद्भवं पट्टमयमि-
त्यर्थः आनाभिरिति तैत्तिरीयपरं तस्य तत्सूत्रकारत्वात् वाजसनेयिनस्त्वन्यथैव ॥ ८

तदुक्तंकात्यायनेन पृष्ठवंशेचनाभ्यांचधृतंयद्विंदतेकटिं तद्धार्य्यमुपवीतंस्यान्नातिलंबंनचोच्छ्रितमिति इदंचवा
मस्कंधेधृत्वापरिधेयं वस्त्रेगौतमः वासांसिक्षौमचीरकुतपाः सर्वेषांकार्पासंवाविकृतंधार्य्यं विकृतमप्येकेर
क्तं ब्राह्मणस्यमांजिष्ठहारिद्रेतरयोः शाणंशणमयं क्षौममतसीतन्तुकृतं चीरंत्वगादिनिष्पन्नं कुतपःपार्व
तीयच्छागरोमनिर्मितः अविकृतंरंजनद्रव्यासक्तं रंजनपक्षेतु ब्राह्मणवृत्तकाषायरक्तं क्षत्रियस्यमांजिष्ठं
वैश्यस्यहारिद्रं वसिष्ठः शुक्लमहतंवासोब्राह्मणस्यहारिद्रं क्षत्रियस्यपीतं कौशेयं वैश्यस्यसर्वेषांवातां
तवमरक्तं तांतवंकार्पासं शंखःक्षौमदुकूलसौवाणिवासांसित्रयाणांवर्णानां दुकूलंपट्टवस्त्रं यमः क्षौम
कार्पासकुतपाश्चर्मकंबलवल्कलाः सर्वेषांतुभवेच्छुक्लंवासस्तत्परिधानिकं मार्कंडेयपुराणे नचापि
रक्तवासाःस्याच्चित्रांबरधरोपिवा नचकुर्य्याद्विपर्य्यासंवाससोनचभूषणे विपर्य्यासमुत्तरीयादेरधरीयत्वे
वर्ज्यंचविदशंवस्त्रमत्यंतोपहतंचयत् अत्यंतोपहतंस्त्र्यादिदिग्धं नरसिंहपुराणे नरक्तमुल्बणंवासोननी
लंचप्रशस्यते मलाक्तंचदशाहीनंवर्जयेदंबरंबुधः महाभारते अन्यदेवभवेद्वासःशयनीयेसदैवहि अन्य
द्रथ्यासुदेवानांपूजायामन्यदेवहि बौधायनः यत्किंचिद्दिज्यासंयुक्तंस्यात्तदरक्तेनैववाससाकुर्य्यात्
आपस्तंबः नीलरक्तंयदावासोब्राह्मणोंगेविधारयेत् अहोरात्रोषितोभूत्वापंचगव्येनशुद्ध्यति उषितउपो
षितः भृगुः स्त्रीधृताशयनेनीलीब्राह्मणस्यनदुष्यति नृपस्यवृद्धौवैश्यस्यापर्वण्यपिविधारणं कंबलेपट्ट
वस्त्रेचनीलीरागोनदुष्यति नृपःक्षत्रियः बौधायनः काषायवासाःकुरुतेजपहोमप्रतिग्रहान् नतद्देवं
संभवति हव्यकव्येषुयद्धविः काषायवासाहृद्वात्वगादिनारक्तवासाइतिकल्पतरुः व्यासः आर्द्रवासास्तु
यःकुर्य्याज्जपहोमप्रतिग्रहं सर्वंतद्राक्षसंविद्याद्बहिर्जानुचयत्कृतं बहिर्जानुजान्वोर्बहिःस्थितहस्तोयथानस्यात्
बौधायनः होमदेवार्चनाद्यासुक्रियास्वाचमनेतथा नैकवासाःप्रवर्त्तेतद्विजवाचनिकेजपे द्विजवाचनिकेस्व
स्त्ययनादौ द्विवस्त्रत्वेप्येकवस्त्रत्वमाह शातातपः सव्यादंशात्परिभ्रष्टंकटिदेशेधृतांबरं एकवस्त्रंविजा
नीयाद्दैवेपित्र्येचवर्जयेदिति स्कंधात्पतितेउत्तरीये एकवस्त्रताभवतीत्यर्थः योगियाज्ञवल्क्यः परि
धानाद्बहिःकक्षानिबद्धाह्यासुरीभवेत् धर्म्येकर्मणिविद्वद्भिर्वर्जनीयाप्रयत्नतः बहिःकक्षाअसंवृतपरि
धानोभयांतः असंवृतंपश्चादंचलमित्यन्ये वसिष्ठः जपहोमोपवासेषुधौतवस्त्रधरोभवेत् असंवृतःशुचि
र्मौनीश्राद्धादौविजितेंद्रियः शातातपः दानमाचमनंहोमोभोजनंदेवतार्चनं प्रौढपादोनकुर्वीतस्वा
ध्यायंपितृतर्पणं आसनारूढपादस्तुजान्वोर्जंघयोरपि कृतावसक्थिकोयस्तुप्रौढपादःसउच्यते
कृतावसक्थिकः कृतपर्य्यंकबंधः कात्यायनः आसीनऊर्ध्वःप्रह्वोवानियमोयत्रयादृशः सदासीनेन
कर्त्तव्यंनप्रह्वेननतिष्ठता प्रह्वोऽवनतकायः तथाच यत्रदिङ्नियमोनास्तिजपहोमादिकर्मसु तिस्रस्त
त्रदिशोज्ञेयाऐंद्रीसौम्यापराजिता सौम्याउत्तरा अपराजिता ऐशानी कर्मोपदिश्यतेयत्रकर्तुरंगंनचो
च्यते दक्षिणस्तत्रकर्त्तव्यःकर्मणांपारगःकरः लघुहारीतः जपेहोमेतथादानेस्वाध्यायेपितृतर्प
णे अशून्यंतुकरंकुर्यात्सुवर्णरजतैःकुशैः बहुवचनमेकस्यसुवर्णस्यरजतस्यवैकस्यधारणेप्युपपद्य
ते सुवर्णादिनानेरवयवावयविवृत्तत्वात् बहुवचनं कपिंजलन्यायात् त्रित्वपरं अशून्यमित्यादिना
सुवर्णरजतकुशत्रयाणांधारणविधानादर्थात्समुच्चयः तत्रदक्षिणकरानामिकायांसुवर्णधारणं
अनामिकायांतद्धार्य्यंदक्षिणस्यकरस्यचेति हेमधारणप्रकरणस्थदेवीपुराणवचनात् रजतधारण
मपितत्रैवतत्समभित्यध्याहारादितिकल्पतरुः रजतधारणमपितत्रैव तर्ज्जन्यांरजतंधार्य्यमितिपठं
तिकेचित्तर्ज्जन्यांरजतधारणमाहुः तत्रनिर्मूलं कुशेषुकात्यायनः हरितायज्ञियादर्भाःपीतकाःपंच
यज्ञियाः समूलाःपितृदैवत्याःकल्माषावैश्वदेविकाः ह्रस्वाःप्रचरणीयाःस्युःकुशादीर्घास्तुबर्हिषः
दर्भाःपवित्रमित्युक्तमतःसंध्यादिकर्मसु सव्यःसोपग्रहःकार्य्योदक्षिणःसपवित्रकः यज्ञियादर्शादि
यज्ञार्हाःपीतकाःपीतवर्णाः पंचयज्ञार्हाः समूलाःसाग्राः पितृकर्मदेवकर्मसुसाग्राः समूलकाइ
तिब्रह्मवैवर्त्तपुराणवचनात् कल्माषाश्चित्रवर्णास्तेच वैश्वदेवश्राद्धार्हाः ह्रस्वाअरत्निन्यूनपरि
माणाः गोकर्णपरिमाणादीर्घाहरिताःश्राद्धेसाग्राःसमूलका इतिवायुपुराणात् तेचप्रचरणी
याःप्रचरणमनुष्ठानं तत्साधनभूतादीर्घाअरत्न्यधिकप्रमाणादर्भाइति यज्ञादौहरितादयो
विशेषविहिताः अतःसंध्यादिषुदर्भमात्रंपवित्रंश्रुति तत्पवित्रलक्षणमेतत् अतदन्यस्यान्वयात्
नचात्रापीतिपदान्वयः इत्यतदन्यन्वयविवक्षितत्वात् अतएवपवित्रलक्षणमाहुस्सएव अनंतर्गा

भिणस्ताग्रेकोशां द्विदलमेव च प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् तदेव वैपिंजलिकालत्तलाः समुदाह
तं आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु अनंतर्गर्भिणमिति गर्भः स्यास्तीति गर्भी अनंतर्गर्भी च एतत्त्र
यस्य त्वाचतुर्थं ग्राह्यं द्विदलमितिपत्रद्वयमित्यर्थः तेनैतादृशंपत्रद्वयमेकंपवित्रं भवति एवं पिंजल्याः
एवं सर्वत्रवैधेकर्मणि वामपाणौकुशत्रयं दक्षिणेन च कुशपत्रद्वयं धार्य्यं जपहोमदानस्वाध्यायपितृ
तर्पणेषु दक्षिणकरेकुशत्रयधारणमपि पूर्वंलिखितं हारीतवचनादिति याज्ञवल्क्यः कनिष्ठात
र्जन्यंगुष्ठमूलान्यग्रं करस्य तु पितृप्रजापतिब्रह्मदेवतीर्थान्यनुक्रमात् मनुः ब्राह्मेण विप्रस्तीर्थेन नि
त्यकालमुपस्पृशेत् कायत्रैदेशिकाभ्यां वा न पित्र्येण कदाचन उपस्पृशेत् आचामेत् हारीतः
मार्जनार्चनबलिकर्मदैवेन पित्र्यार्थं नैत्रेण प्रतिग्रहमाग्नेयेन गृह्णीयात् आग्नेयं करतलमध्यं
मध्यमाग्नेयमितिवचनात् कात्यायनः अक्रियात्रिविधा प्रोक्ता विद्वद्भिः कर्मकारिणां अक्रिया च
परोक्ता च द्वितीया च यथाक्रिया अक्रियेति यथोक्तक्रियाविरहः सततैव क्रियाविरहात्
परोक्ताचरणात् स्वोक्तकर्मपरित्यागात् तत्राद्ये सएवाह प्रधानास्याक्रिया यत्र नांगं तत्क्रियते पु
नः तदंगस्याक्रियायां तु नावृत्तिर्नापि तत्क्रिया तत्क्रियातदंगमात्रस्य क्रिया सापि नास्ति किं तु तत्र यो
गियाज्ञवल्क्योक्तं विष्णुस्मरणमात्रं द्वितीये त्वाह सएव स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः क
र्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितं इदं तु तत्कर्मणः स्वशाखीयत्वे सति द्रष्टव्यं अन्यथा पारशाखिकम
पि ग्राह्यमाह सएव यन्नाम्नातं स्वशाखायां पारक्यमविरोधियत् विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मव
त् यत्र तु स्वशाखायां लोकाभिधानं तदंगाकांक्षापूरकं पारक्यमपि ग्राह्यं तदाह स्मृतिसारेविकल्पस्तु आ
कांक्षापूरणे सति यत्र कर्मैव सूत्रेण न वा सामान्यविधिनाप्तं किं तु परोक्तेन कार्यमित्याह सएव बह्वल्प
वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितं तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेदिति तृतीये त्वाह सएव
प्रवृत्तमन्यथा कुर्य्याद्यदि मोहात्कथंचन यतस्तदन्यथाभूतं तत एव समापयेत् प्रारब्धं कर्मयतः प
दार्थादन्यथाकृतमिति मध्ये स्मर्यते पुनस्तत एवारभ्य शेषं कुर्यादित्यर्थः अन्यथाकरणं यदि कर्म
समाप्तौ ज्ञातं तदा त्वाह सएव समाप्ते यदि जानीयान्मयैतदन्यथाकृतं तावदेव ततः कुर्यान्ना
वृत्तिः सर्वकर्मण इति तावदेवेति अयथाकृतं यत्तन्मात्रमेव करणीयं न तु तदुत्तरपदार्था अपीत्यर्थः
इदमपि तदनुष्ठानस्य करत्वे सति द्रष्टव्यं दुष्करत्वे तु विष्णुस्मरणमिति तट्टीका प्रमादात्कुर्वतां कर्म
प्रच्यवेताध्वरेषु यत् स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः याज्ञवल्क्यस्तु विधिदृष्टं तु यत्क
र्मकरोत्यविधिना नरः फलं न किंचिदाप्नोति क्लेशमात्रं तु तस्य तत् अत्रेयं व्यवस्था अकृतस्य पुनः
करणाद्विष्णुस्मरणाच्च फलाभावः प्रत्यवायाभावश्च संपद्यते अपि च आसीनः प्राङ्मुखो दर्भपा
णिः पत्नीतदुत्तरा मंत्राचांतो बद्धशिखी सर्वकर्मस्वयं विधिः वायुपुराणे क्रियामाचरते मोहाद्द
नावम्येह नास्तिकः भवंति हि वृथा तस्य क्रियाः सर्वा न संशयः तथा दानं प्रतिग्रहो होमो भोजनं बलि
रेव च सांगुष्ठेन तदा कार्यामसुरेभ्योन्यथा भवेत् एतान्येव तु कर्माणि दानादीनि विशेषतः अंत
र्जानु विशेषेण तद्वदाचमनं नृप अंतर्जानु जानुमध्ये यथा हस्तौ भवेतां तथा कर्तव्या नी
त्यर्थः बौधायनः कर्मयुक्तो नरो नाभेरधः स्पर्शं च वर्जयेत् कात्यायनः यथोक्तवस्त्वसंपत्तौ ग्रा
ह्यं तदनुकारियत् यवानामिव गोधूमा व्रीहीनामिव शालयः ॥ स्वस्ति श्रीरणवीरसिंहपर
णीपालो वदान्याग्रणीर्नानाशास्त्रविचारसाररसवित्सद्वृंदसंरत्नकः धर्माधर्मविभागकृद्रघु
पतेः पादांबुजार्चीरतो जीयात्पुत्रकलत्रमित्रसहितः संपालयन्क्ष्मां चिरम् ॥ ॥ १ ॥
रणवीरसिंहभूपेण कारिते कृत्यसागरे आद्यः संपूर्णतामाप धर्मरत्नसमुद्भकः ॥ ॥
अत्रैवं सकलपुरुषार्थनिदानभूतं सांगं धर्मं निरूप्य तस्य च कालनिय तत्वादादौ कालस्वरूपं
निर्णयश्चोच्यते कालस्वरूपं च हेमाद्रौ कूर्मपुराणे अनादिरेष भगवान् कालोनंतोऽजरोऽमर
इत्यादि कालेनैव हि सृज्यंते स एव ग्रसते पुनः तस्मात्कालात्मकं विश्वं स एव परमेश्वरः विष्णुध
र्मोत्तरे अनादिनिधनः कालो रुद्रः संकर्षणः स्मृतः कलनात्सर्वभूतानां स कालः परिकीर्तितः
सर्वभूतशमित्वाच्च स रुद्रः परिकीर्तितः कर्षणात्सर्वभूतानां स तु संकर्षणः स्मृतः अनादिनि
धनत्वेन स महान्परमेश्वरः तस्य सूक्ष्मातिसूक्ष्मस्येत्यादि यद्यप्यपरिच्छिन्नस्तज्ज्ञानत्वेनास्य दुर्विज्ञा

तस्य क्रियानंगत्वेन तन्निर्णेयत्वं तथापि सूर्य्यादिगत्युपाधिपरिछिन्नस्य क्रियांगत्वान्निर्णेयत्वमुप।
पद्यते तस्य सूर्य्यादिगतिपरिच्छेद्यत्वं विस्णुधर्मोत्तरेभिहितं तस्य सूक्ष्मातिसूक्ष्मस्य तथातिमह।
तो द्विज मानसंख्या बुधैर्ज्ञेया ग्रहगत्यनुसारत इति प्रत्यक्षोपलभ्यमाननिमेषक्रियापरिच्छेद।
श्च तत्रैव दर्शितः लघ्वक्षरसमामात्रा निमेषः परिकीर्तितः अतः सूक्ष्मतरः कालो नोपलभ्यो भृ
गूत्तम नोपलभ्यं यथा द्रव्यं सूक्ष्मत्वं परमाणुतः द्वौ निमेषौ त्रुटिः प्रोक्ता प्राणो दशत्रुटिः स्मृतः
विनाडिका तु षट्प्राणास्तत्षष्ट्या नाडिका स्मृता अहोरात्रं च तत्षष्ट्या नित्यमेवं प्रकीर्तितम्
ज्योतिःशास्त्रविपश्चिद्वृद्धैः खेंदुमितैरसुभिः षड्भिः पलं तैर्घटिका खषड्भिरित्यादि विस्णुधर्मोत्तरे त्रिंश
न्मुहूर्ताश्च तथा अहोरात्रेण कीर्तिताः तत्र पंचदश प्रोक्ता राम नित्यं दिवाचराः नक्तंचरास्तथैवं हि
मुहूर्ता दश पंच च उत्तरां तु यदा काष्ठां क्रमात्संक्रमते रविः तथा तथा भवेद्वृद्धिर्दिवसस्य महाभुज
दिवसस्य यदा राम वृद्धिं समधिगच्छति तदाश्रितमुहूर्तानां तथा वृद्धिः प्रकीर्तिता दिनवृद्धिर्यथा राम
दोषाहानिस्तथा तथा तदाश्रितमुहूर्तानां हानिर्ज्ञेया तथा तथा दक्षिणां च यदा राम क्रमात्क्रम
ते रविः दिवसस्य तथा ह्रासो निशिवृद्धिस्तथैव तु क्षीयंते तस्य हानौ तु तन्मुहूर्तास्तथैव च रात्र्याश्रिता।
श्च वर्द्धन्ते रात्रिवृद्धिस्तथा तथा यदा मेषं सदृक्संप्राप्तस्तुलां चैव प्रवर्तते समरात्रिंदिवः कालो विषुवद्वृ
यवाचक इति ननु कालो न विधातुं शक्यः विधानोपादानयोरभेदात् कालस्य चानुपादेयत्वात्
उच्यते उपादानस्यानुष्ठानरूपत्वेन पुंव्यापारत्वाद्विधानस्य वाप्रवृत्तप्रवर्तमानात्मकत्वेन शाब्दधर्म।
त्वान्न विधानोपादानयोरैक्यं अतो विधेयप्राप्तविषयत्वात्प्राप्तकर्मानुवादेनाऽप्राप्तकालसंबंधं
विदधदयं विधिः स्वरूपतोऽनुपादेयं कालं तद्विशेषणतया स्पृशतीति भवति कालस्य विधेयत्वं
नन्वस्तु कालस्य विधेयत्वं कर्मांगत्वनिर्णयस्तु कथं उच्यते प्रतिपदाद्यधिकरणन्यायेन तावदेक।
स्मादपूर्वमिति निश्चितेन तत्कर्मणस्तावदेकफलत्वात्फलभावनाकरणत्वे निर्णीते यदेकस्मादपूर्वं त
देतत्तदर्थमिति न्यायेन कालस्य कर्मांगत्वनिर्णयः अतएव गार्ग्येणोक्तं तिथिनक्षत्रवारादि साध
नं पुण्यपापयोः प्रधानगुणभावेन न स्वातंत्र्येण ते क्षमाः प्रधानगुणभावेन प्रधानकर्मांगत्वेन
तस्मात्कालः कर्मांगत्वेन निर्णेय इति सिद्धं सच कालः संवत्सरायनर्तुमासपक्षदिवसादिभेदा
दनेकविधोपि तावत्संक्षेपतः षोढा संवत्सरायनर्तुमासपक्षदिवसश्चेति तत्र संवत्सरायना
द्यवयवित्वादादौ तन्निर्णयः क्रियते सच संवत्सरः सम्यग्वसंत्यस्मिन्मासादय इति संवत्सरश
ब्देन योगरूढ्याभिधीयमानो द्वादशमासात्मकः कालविशेषः द्वादशमासाः संवत्सर इति।
श्रुतेः सच मासस्त्रैविध्येन चांद्रः सावनः सौर इति त्रिविधः तदुक्तं ब्रह्मसिद्धांते चांद्रसावनसौ
राणां मासानां तु प्रभेदतः चांद्रसावनसौरास्तु त्रयः संवत्सरा अपीति ननु चांद्रः संवत्सरः
कदाचिदधिमासे सति त्रयोदशमासात्मको भवति तत्कथं संवत्सरस्य द्वादशमासात्मकत्वमिति चेन्न
अधिकमासस्य षष्टिदिनात्मकमासैकदेशत्वेन माससंख्याधिक्यानापादकत्वात्षष्टिदिनात्मकं च त
स्योक्तं स्मृत्यंतरे षष्ट्या तु दिवसैर्मासः कथितो बादरायणेति अतो द्वादशमासत्वमविरुद्धं अस्ति।
त्रयोदशो मास इत्यादि श्रुतिस्तु त्रिंशद्दिनात्मकमासाभिप्रायेण क्वचित्तु ज्योतिःशास्त्रे पंचविधत्वं त
त्परिमाणं चोक्तं सौरबृहस्पतिसावनशशधरनाक्षत्रिकाः क्रमेण स्युरिति माधवमतेप्युक्तं पंचधा।
अब्दः पंचविधस्तांद्रो व्रतादौ तिलकादिके सुजन्मादौ व्रते सौरो गोसत्रादिषु सावनः त्रयोप्याचार्यसेवा
दौ विकल्पेनेति नेच्छया आयुर्दाये तु नाक्षत्रो बार्हस्पत्योपि वत्सर इति तेनोक्तत्वात् गुरोर्मध्यमराशि
भोगेन बार्हस्पत्यः हेमाद्रिस्त्वनयोर्धर्मशास्त्रेऽनुपयोगात्त्रिविधमाह तत्र चांद्रसंवत्सरस्य ति
लकव्रतादावुपयोगो द्रष्टव्यः सौरस्य तु सुजन्मादौ व्रतादावुपयोगः तद्विधिस्तु हेमाद्रौ द्रष्टव्यः
सावनस्य तु सत्रादावुपयोगः नाक्षत्रसंवत्सरस्य तु पुष्यस्नानादौ निमित्तत्वेनोपयोगः बार्हस्पत्यसंवत्
सरस्योपयोगः स्कांदे द्वारिकामाहात्म्ये सिंहस्थे गुरौ गोदावरीयात्रा कर्तव्या कन्यास्थे द्वारिकाया।
त्रा कुंभस्थे गंगाद्वारयात्रा लोकप्रसिद्धा तत्र चांद्रोब्दः षष्टिभेदः तत्राह गार्गिः प्रभवो विभवः शुक्लः
प्रमोदोथ प्रजापतिः अंगिराः श्रीमुखो भावो युवा धातेश्वरस्तथा चित्रभानुः सुभानुश्च तारणः २
पार्थिवो व्ययः विंशतिर्ब्रह्मविंशत्याब्दाः परिकीर्तिताः २ सर्वजित्सर्वधारी च विरोधी विकृतिः
खरः नंदनो विजयश्चैव जयमन्मथदुर्मुखाः हेमलंबो विलंबश्च विकारी शार्वरी प्लवः शुभकृच्छोभनः

क्रोधी विश्वावसुः पराभवौ वत्सरा विष्णुविंशत्या मुनिभिः परिकीर्तिताः ४ प्लवंगः कीलकः सौम्यस्तथा साधा
रणो मतः विरोधकृत्तमः प्रोक्तः परिधावी प्रमाथिनौ आनंदो राक्षसश्चैव नलपिंगलसंज्ञकाः कालयुक्ता
श्च सिद्धार्थी रौद्रो दुर्मतिदुंदुभी रुधिरोद्गारिरक्ताक्षौ क्रोधनः क्षयकृत्स्मृतः वत्सरा रुद्रविंशत्या नामतुल्य
फलप्रदाः तदानयनं रत्नमालायां श्रीपतिराह शकेंद्रकालः पृथगाकृतिघ्नः शशांकनंदाश्वियुगैः समेत
शराद्रिवस्विंदुहृतः सलब्धः षष्ट्याप्तशेषे प्रभवादयोऽब्दाः एषां फलानि ज्योतिःशास्त्रे ज्ञेयानि एतत्प्रारंभ
क्रममाह श्रीपतिः तपसि खलु यदासौ गुरुर्भं याति मासि प्रथमलवगतः सन् वासवे वा सवेज्यः नि
खिलजनहितार्थं वर्षवृंदे विशिष्टः प्रभव इति तदानीं जायतेऽब्दस्तदानीं यद्यपि ज्योतिषे गुरोर्मध्यम
राशिभोगेन प्रभवादीनां माघादौ प्रवृत्तिरुक्ता तथापि प्रभवादीनां चांद्रत्वमप्यस्ति चांद्राणां प्रभवा
दीनां पंचके युगमिति माधवोक्तेः तानि च युगं भवेद्वत्सरपंचकेन युगान्यतो द्वादश वर्षषष्ट्यामेषां देवता अ
क्रमेणावक्ष्यामि मुनिप्रणीताः विष्णुर्जीवः शक्रो दहनः त्वष्टाहिर्बुध्न्यः पितरः विश्वे सोमश्चेंद्रज्वलनौ
नासत्यावथ भगः इति द्वादशयुगदैवतानि युगस्य पंचवर्षाणां नामान्याह यथाक्रमं प्रथम संवत्
सरश्च प्रथमो द्वितीयः परिवत्सरः तस्मादिडावत्सरश्च चतुर्थश्चानुवत्सरः इद्वत्सरः पंचमश्च फलमेषां य
थाक्रममिति तेन चांद्रो बार्हस्पत्यसिते प्रवर्तते बार्हस्पत्यस्तु माघादौ तयोर्नियोगो ज्योतिर्निबंधे ब्रह्म
सिद्धांते व्यावहारिकसंज्ञोऽयं कालः स्मृत्यादिकर्मसु योज्यः सर्वत्र तत्रापि जैवो वा नर्मदोत्तरे आर्षिषे
णः स्मरेत्सर्वत्र कर्मादौ चांद्रं संवत्सरं सदा नान्यं यस्माद्वत्सरादौ प्रवृत्तिस्तस्य कीर्तितेति इति संव
त्सरनिर्णयः ❀ अथायनं तत्र सौरमृतुत्रयं सौरवृत्तिनयं प्रदिष्टमयनमिति दीपिकोक्तेः सौर॰
मानमपि हृत्वा विष्णुधर्मोत्तरेऽपि ऋतुत्रयं चायनं स्यादिति अयननिरुक्तिस्तु माधवीये अयनेयात्या॰
नेन ऋतुत्रयेण सूर्यो दक्षिणामुत्तरां चेत्यृतुत्रयमयनं तथा च वाजसनेयिनः पंचाग्निविद्या
यां दक्षिणोत्तरमार्गयोः समामनंति यान्षण्मासान्दक्षिणादित्य एति यान्षण्मासानुत्तरादित्य एती॰
ति केचित्तु चांद्रमानेनायनद्वयमभ्युपगच्छंति मार्गशिरमासादिकैस्त्रिभिर्ऋतुभिः कल्पितः कालः ष
ण्मासात्मकमुत्तरायणं ज्येष्ठमासादिके दक्षिणायनमिति तत्र प्रमाणं ज्योतिःशास्त्रादौ मृग्यं तच्चाद्वि
विधं दक्षिणमुत्तरं चेति कर्कसंक्रांतिमारभ्य दक्षिणं मकरसंक्रांतिमारभ्योत्तरं अनयोर्विनियोगो मद
नरत्ने सत्यव्रतेनोक्तः देवतारामवाप्यादि प्रतिष्ठोदङ्मुखे रवौ दक्षिणाशामुखे कुर्वन्न तत्फलमवाप्नु
यादिति वैखानसः मातृभैरववाराहनारसिंहत्रिविक्रमाः महिषासुरहंत्र्यश्च स्थाप्या वै दक्षिणायने
अत्र वै प्राह्नः पूर्वनिषेधप्रतिप्रसवोऽयं देवविशेषे रत्नमालायां गृहप्रवेशत्रिदशप्रतिष्ठाविवाह॰
चौलव्रतबंधपूर्वसौम्यायने कर्म शुभं विधेयं यद्गर्हितं तत्खलु दक्षिणे चेति इत्ययनं निर्णीतम् ❀
अथर्तुः हेमाद्रौ ऋतवश्च षट् हेमंतशिशिरयोः समासेन पंच यद्वा ऋतवः पंचर्तवः हेमंतशिशिर
योः समासेनेति श्रुतेः प्रयाजानुमंत्रणे प्रयोगितया च हेमंतशिशिरयोरेकीकरणं वसंतऋतूनां॰
ग्रीष्मऋतूनां वर्षाऋतूनां शरदृतूनामिति चतुर्णामनुमंत्रणमभिधाय हेमंतशिशिरावृतूनामि
ति पंचमस्यानुमंत्रणे द्वयोर्द्वंद्वोपादानात् ऋतुशब्दार्थो माधवीये ऋतुशब्दो ऋगतावित्यस्माद्धातो॰
र्निष्पन्न इति अशोकपुष्पविकासादि असाधारणलिंगमिति वसंतादिकालविशेष ऋतुः ते च वसं
तोपक्रमाः मुखं वा एतदृतूनां यद्वसंत इति श्रुतेः निरूपिताश्चानेकक्रमेण श्रुतौ मधुश्च माधवश्च वा॰
संतिकावृतू शुक्रश्च शुचिश्च ग्रैष्मावृतू नभश्च नभस्यश्च वार्षिकावृतू इषश्चोर्जश्च शारदावृतू सहश्च सहस्य
श्च हैमंतिकावृतू तपश्च तपस्यश्च शैशिरावृतू अत्र ऋतू इति द्विवचनं ऋत्ववयवमासद्वित्वाभिप्रायेण म
ध्वादिशब्दाश्चैत्रादिवचनाः तथा चाहुः चैत्रो मासो मधुः प्रोक्तो वैशाखो माधवो भवेत् ज्येष्ठमासस्तु शुक्रः
स्यादाषाढः शुचिरुच्यते नभो मासः श्रावणः स्यान्नभस्यो भाद्र उच्यते इषश्चाश्वयुजो मासः कार्तिकश्चो
र्जसंज्ञकः सहो मासो मार्गशिरः सहस्यः पौषनामकः माघमासस्तपः प्रोक्तस्तपस्यः फाल्गुनः स्मृतः इ॰
ति सौरवसंतादयस्तु मीनादिसौरद्वयात्मका वा बौधायनेन मीनमेषयोर्मेषवृषयोर्वा वसंत इत्यभि
धानात् तदनुसारेणेतरेषामपि द्वैविध्यकल्पना एतेषां च तत्संज्ञा वसंते ब्राह्मणोऽग्नीनादधीतेत्यादिवाक्ये
भ्योऽवगंतव्यः श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चांद्रमसर्तुषु तदभावेन सौरर्तुष्विति ज्योतिर्विदां मतमिति
त्रिकांडमंडनः हेमाद्रौ यदा त्वधिकमासो भवति तदा चांद्रमानेन मासत्रयात्मकोऽपि कश्चिदृतुः
संपद्यते तथा च त्रिकांडमंडनेनोक्तं चांद्रमाने यदा चैत्रमासादिर्मलिनस्तदा शुद्धेऽपि मलिने चैत्रे वैशा
खेऽपि वसंतता न तु सैवेयमायाता मासत्रयवसंतता सत्यं गत्यंतराभावात्तु सैवात्राभ्युपगम्यते ❀

मासास्त्वयोर्वसंतःस्यात्तत्काद्यमथर्वातिमं अत्रोच्यतेविकल्पादिसौरमासेषुयुज्यते नतुचांद्रेषुयुक्तोसौ
मलमासानुवर्तित्वादित्याद्यपरोक्ता षडृतवःस्युरित्याद्यापरोक्तिः सम्प्रमचारिका तस्मादधिकमासःस्यात्ते-
षुवर्षेषुकुत्रचित् यत्रैवोयमभवेन्मासःसऋतुःसत्रिमासिकः यद्वाषष्टिदिनैर्मासयुक्तएवोभयात्म
कः अतोत्रापिवसंतत्वंस्यात्तयोरेवमासयोः ॥ इतिवसंतादिषड्ऋतुनिर्णयः ॥ अथमल
मासनिर्णयोमदनरत्ने सचमासोमस्यतेपरिमीयतेचंद्रवृद्धिक्षयादिनेतिव्युत्पत्त्वेन मासशब्देन
योगरूढ्याभिधेयः माधवीयेतु तत्रसकारांतेमासितिप्रातिपदिकंचंद्रवाचितस्यायंकालइतिमा
सः मासश्चतुर्धा सावनःसौरश्चांद्रोनाक्षत्रश्चेति त्रिंशद्दिनःसावनः अर्कसंक्रांत्यवधिःसौरः पक्ष
द्वययुक्चांद्रः चंद्रस्यसर्वनक्षत्रभोगेननाक्षत्रः विष्णुधर्मोत्तरे सर्वर्क्षपरिवर्तैस्तुनाक्षत्रोमासउच्य
ते एतदुपयोगोनाक्षत्रसत्रेद्रष्टव्यः चांद्रस्तुचित्राद्यन्वितपौर्णमासीयोगाच्चैत्रादिसंज्ञांलभते
पंकजादिशब्दवत् चैत्रादिशब्दायोगरूढाः नक्षत्रेणयुक्तःकालःसास्मिन्पौर्णमासीतिसूत्राभ्यां
पाणिनारूढिबोधकसंज्ञायामित्यभिधानपूर्वकं कात्यायनेनचास्मिन्नेवार्थेचैत्रादिशब्दानांव्यु
त्पादनात् ननुचैत्रादीनांचित्रादियोगव्यभिचारित्वात्कथंचित्रादियुक्तचांद्रमासवचनत्वंचै-
त्रादिशब्दानामितिचेन्न चित्रादिपदेनयथायथंचित्रासान्निध्यादिनक्षत्रद्विकत्रिकोपलक्षणात्तद्यो
गस्यच सकलचैत्राद्यनुगतत्वेनचैत्रादीनांतदव्यभिचारात् चांद्रोमासोद्वेधा शुक्लादिदर्शांतः
कृष्णादिःपूर्णिमांतश्चानयोश्च चांद्रोपिशुक्लपक्षादिःकृष्णादिश्चेतिसद्विधेत्युक्त्वादेशभेदेनव्यवस्थामा
ह त्रिकांडमंडनः कृष्णपक्षादिकंमासंनांगीकुर्वंतिकेचन येपीच्छंतितेषामपीष्टोविंध्यस्य
दक्षिणइतिविंध्यस्यदक्षिणेकृष्णादिनिषेधादुत्तरतोद्वयोरप्यनुगमः तत्रापिशुक्लादिर्मुख्यःकृ-
ष्णादिर्गौणः ज्योतिर्निबंधेगर्गः पौर्णमास्यवसानःस्यान्मासोदेवऋतुस्तथा दर्शांतोमानुषो
हेनोविंध्यादुत्तरयाम्ययो आर्ष्टिषेणः दर्शांतोवैदिकोमासोराकांतःस्मार्तउच्यते शास्त्रेचैत्रशु
क्लप्रतिपद्येवचांद्रसंवत्सरारंभोक्तेः तथाचदीपिकायां चांद्रोद्वोमधुशुक्लगप्रतिपदारंभइति
नहियेकृष्णादिंमन्यंतेतेषांसंवत्सरारंभोभिद्यते अतःशुक्लादिर्मुख्यः कृष्णादिनामलमाससंभवाच्च चांद्रादी
नांव्यवस्थोक्ता हेमाद्रौब्रह्मसिद्धांते अमावास्यापरिच्छिन्नोमासःस्याद्ब्राह्मणस्यतु संक्रांतिपौर्णमासी
भ्यां तथैवनृपवैश्ययोः अत्रब्राह्मणादीनांयत्रकर्मविशेषेवचनंतत्रैवसंतेब्राह्मणोग्नीनादधीते-
त्यादिवन्मासउक्तस्तत्रदर्शांतत्वमात्रंनियम्यते नतुसर्वकर्मसुदर्शांतएवेति वृषाचार्यसोमरेण
हीषादिनिपतननियमवद्विधिलाघवाच्चैवर्णिकानांसर्वकर्मसुमासविशेषविधेः सावनादीन्वृ
द्धान्लोमादिपरत्वापत्तेश्च ज्योतिर्गर्गः सौरोमासोविवाहादौयज्ञादौसावनःस्मृतः आब्दिकेपि
तृकार्यादौचांद्रोमासःप्रशस्यते ऋष्यशृंगः विवाहव्रतयज्ञेषुसौरंमानंप्रशस्यते पार्वणेत्व
ष्टकाश्राद्धेचांद्रमिष्टंतथाब्दिके स्मृत्यंतरे एकोद्दिष्टविवाहादावृणादौसौरसावनौ ज्योतिर्गर्गः
आयुर्दायविभागश्चप्रायश्चित्तक्रियातथा सावनेनैवकर्तव्याशूद्राणांचाप्युपासना विष्णुधर्मे
नत्तत्रसत्राण्ययनानिचांद्रोमासेनकुर्याद्गणनात्मकेनेति ब्राह्मे तिथिकृत्येचकृष्णादिंवनेशु
क्लादिमेवच विवाहादौतुसौरादिंमासंकृत्येविनिर्दिशेदिति ॥ इतिशुद्धमासनिर्णयः ॥
अथमलमासनिर्णयः ॥ तत्रैके संक्रांतिरहितश्चांद्रोमासोमलमासः संक्रांतिद्वयवतः
क्षयमासस्यसंग्रहायेकेइति सचद्विविधः अधिमासःक्षयमासश्च तदुक्तंमदनरत्नेकाठकगृह्ये
यस्मिन्मासेनसंक्रांतिःसंक्रांतिद्वयमेववा मलमासःसविज्ञेयोमासःस्यात्तुत्रयोदशइति नसंक्रां
तिरित्यनेनअधिमासग्रहणं संक्रांतिद्वयमेववेतिक्षयमासस्य सत्यब्देपि राशिद्वयंयत्रमासि

संक्रमेनदिवाकरः नाधिमासोभवेदेषोमलमासस्तुकेवलमिति अयंचमासद्वन्द्वएव अतश्चयत्राऽमा
वास्याद्वयमध्येसंक्रांतिर्नस्यात्संक्रांतिद्वयंवाभवेत्समलमासइत्यर्थः तदाहगार्ग्यः अमावास्याद्वयंय
त्ररविसंक्रांतिवर्जितं मलमासःसविज्ञेयोमासःशुद्धाख्यउत्तरइति अस्यैवमलिम्लुचइत्यपिसंज्ञा
तदुक्तंज्योतिःशास्त्रे रविणालंघितोमासश्चांद्रःख्यातोमलिम्लुचइति चांद्रोपिशुक्लादिरेवविवक्षितः
तदुक्तंलघुहारीतेन इंद्राग्नीयत्रहूयेतेमासादिःसप्रकीर्तितः अग्नीषोमौस्मृतौमध्येसमाप्तौपितृसो
मकौ तमतिक्रम्यतुयदारविर्गच्छेत्कदाचन आद्योमलिम्लुचोज्ञेयोद्वितीयःप्राकृतःस्मृतः अधि
मासस्यमलत्वंचाधिकमासत्वात् तदुक्तंगृह्यपरिशिष्टे मलंवदंतिकालस्यमासंकालविदोधिकमिति का
लाधिक्यंचविष्णुधर्मोत्तरेदर्शितं सौरेणाब्दस्तुमानेनयदाभवतिभार्गव सावनेहितदामानेदिनषट्केन
पूर्य्यते दिनरात्र्यस्तुताराम प्रोक्ताःसंवत्सरेणषट् सौरसंवत्सरस्यांतेमानेनप्राप्तिजेनतु एकादशा
तिरिच्यंतेदिनानिभृगुनंदन समाद्वयेसाष्टमासेतस्मान्मासोतिरिच्यते सचाधिमासकःप्रोक्तःप्रोक्त
कर्मसुगर्हितइति अत्राधिकमासस्यज्योतिःशास्त्रेसंभवकालउक्तः दिवसस्यहरत्यर्कःषष्टिभाग
मृतौगतः करोत्येकमहश्छेदंतथैवैकंचचंद्रमाः एवमर्द्धतृतीयानामब्दानामधिमासकं अस्या
र्थः दिवसस्याहोरात्रस्यतिथेर्वाषष्टिभागंदंडात्मकं अर्कःप्रतिदिनंहरतिलंघयति अतस्त्र
तौषष्ट्याहोरात्रैःषष्टिनाड्याकर्षणात्तिथिरेकासूर्येणाकृष्टाभवति एवमिंदुनापि चंद्रार्काभ्यामृ
तुप्रतिदिनद्वयापकर्षणाद्वर्षेणद्वादशदिनानिलभ्यंते एवंसार्धमब्दद्वयपर्ययेनाधिमासोल^
भ्यते अयंनपुंसकइत्यप्युक्तं ज्योतिःशास्त्रे असंक्रांतोहियोमासःकदाचित्तिथिवृद्धितः कालांत
रात्समायातिसनपुंसकउच्यते नपुंसकत्वंचमासपुंस्त्वप्रयोजकसूर्यस्याभावात् तदपितत्रैवो
क्तं वरुणःसूर्योभानुस्तपनश्चंद्रोरविर्गभस्तिश्च अर्य्यमहिरण्यरेतोदिवाकरामित्रविष्णुश्च एते
द्वादशसूर्यामाघाद्येषूदयंतिमासेषु निःसूर्योधिकमासोमलिम्लुचाख्यस्ततःपापः मासेषुद्वादशादित्या
स्तपंतेहियथाक्रमं नपुंसकेधिकेमासिमंडलंतपतेरवेरिति मलिम्लुचत्वंतस्यकर्मफलचौरैराक्षसादि
भिराक्रांतत्वात् तदुक्तंशातातपेन वत्सरांतर्गतःपापोयज्ञानांफलनाशकृत् नैर्ऋतैर्यातुधानाद्यैःसमा
क्रांतोविनाशकैः मलिम्लुचैःसमाक्रांतंसूर्यसंक्रांतिवर्जितं मलिम्लुचंविजानीयाद्गर्हितंसर्वकर्मसुइति
अत्रस्फुटमानागतासंक्रांतिरेवाधिमासत्वेनग्राह्या नतुमध्यममा नेनशुक्लप्रतिपदादिदर्शांतादसं
क्रांतमासस्यविधिनिषेधोपयोग्यधिमासत्वमधिगम्यते नचमध्यममानागतसंक्रांतिनियमेनशुक्लप्रति
पदादिदर्शांतः अस्यहिनियतोभवनकालोवसिष्ठसिद्धांतेदर्शितः द्वात्रिंशद्भिर्गतैर्मासैर्दिनैःषोडश^
भिस्तथा घटिकानांचतुष्केणपतत्यधिमासकइति एतत्तुसंभवार्थंनतुनियमार्थं अन्यथाषो
डशादिनाधिकद्वात्रिंशन्मासानंतरंकृष्णपक्षनियमेनशुक्लादित्वभंगापत्तेः तेनन्यूनाधिककालेम
लमासपातेपिनैवदोषः यान्यधिमासेत्रिंशत्तमेभवेदित्यादीनिवचनानि तान्यपिसंभवाभिप्रायेणैव
नतुनियमाभिप्रायेण व्यभिचारस्यस्फुटत्वात् निर्णयामृतेद्विसंक्रांतिमासस्तुमलमासएवनत्वधि
मासः तदाहसत्यव्रतः राशिद्वयंयत्रमासेसंक्रमेतदिवाकरः नाधिमासोभवेदेषमलमासस्तुकेवलं
अयंद्विसंक्रांतिमासः क्षयाख्योपि तदुक्तंज्योतिःशास्त्रे असंक्रांतिमासोधिमासःस्फुटःस्याद्विसंक्रांतिमा
सःक्षयाख्यःकदाचित् क्षयःकार्त्तिकादित्रयेनान्यतःस्यात्तदावर्षमध्येधिमासद्वयंचेति स्फुटःस्फुटमान
लभ्यः द्विसंक्रांतिमासोयदाभवति तत्रवर्षमध्येमासद्वयमधिकंभवति तत्रपरोदुष्टः आद्यःशुद्धः त
दुक्तंतत्रैव एकत्रमासद्वितयंयदिस्याद्वर्षाधिकंतत्रपरोधिमासः त्रयोदशोत्रश्रुतिराहवेदे चतुर्दशःक्वापि
नचास्तिरवेरिति जाबालिरपि मासद्वयेह्यमध्येतुसंक्रांतिर्नयदाभवेत् प्राकृतस्तत्रपूर्वःस्यादधिमासस्तथोत्तरः

प्राकृतः शुद्धकर्मार्ह इत्यर्थः उत्तर इति उत्तर एवाधिमासः कर्मार्ह इत्यर्थः तथा स एव एकस्मिन्नपि वर्षे चन्द्रो-
मासावधिमासकौ पूर्वो मासः प्रशस्तः स्यादपरस्तु मलिम्लुच इति अयं च त्रयोदशो मासश्चान्द्र एव न सौरः
तदुक्तं अस्ति त्रयोदशो मास एवं श्रुत्या निगद्यते असौ चान्द्रो न सौरः स्यान्नाल्पसौ हि चतुर्दश इति यत्तु ब्रह्म
सिद्धान्ते चैत्रादर्वाङ्नाधिमासः परतस्त्वधिको भवेत् यत्तु ज्योतिःसिद्धान्ते घटकन्यागते सूर्ये वृश्चिके वाप्यध
न्विनि मकरे वाथ कुंभे वा नाधिमासो विधीयत इति तद्वृश्चिकादिचतुष्टये मलमासे सति पूर्वं तुलाकन्या
गते सूर्ये क्षयात्पूर्वभाव्यधिमासस्य कालाधिक्यमात्रनिषेधार्थं न त्वधिकमात्रस्य दृष्टानां फाल्गुनादीनां
प्रायो माघस्य च क्वचित् नपुंसकत्वं भवतीत्येष शास्त्रस्य निश्चय इति हेमाद्रौ विष्णुधर्मविरोधात् मलमासे
ष्टकादिनिषेधानुपपत्तेश्च मकरे यवा कुंभे चेति दृष्टार्थप्राप्त्यभावात् अस्यागमनकाल उक्तः सिद्धान्तशिरो
मणौ गतोब्ध्यद्रिनन्दैर्मिते शाककाले तिथीशैर्भविष्यत्यथांगाक्षसूर्यैः गजाद्र्यग्निभूभिस्तथा प्रायशो
ऽयं कुवेदेन्दुवर्षैः क्वचिद्गोकुभिश्च १ अस्यार्थः चतुःसप्तत्यधिकनवशत ९७४ वर्षशाककाले क्षयमा
सो गतः तथा पंचदशाधिकैकादशशत १११५ वर्षमिते शाके क्षयमासो भविष्यति तथा षट्पंचाशद-
धिकद्वादशशतवर्षमिते १२५६ शाके भविष्यति अष्टसप्तत्यधिकत्रयोदशशतवर्षमिते १३७८ शा-
ककाले भविष्यति अस्य संभव एकचत्वारिंशदधिकशतवर्षमितकाले १४१ नियतः क्वचिद्गोकुभिश्च
एकोनविंशतिवर्षैरपि संभाव्यनियत एवेति बोध्यम् एतावद्भिर्वर्षैः क्वचित् पूर्वोत्तरक्षयमासयोर्व्यवधा-
ने भवतीति ननु नियमेन सोयं क्षयमासो माससंज्ञाप्रयोजकसंक्रान्तिद्वययुक्तत्वान्मासद्वयात्मकः स ए-
वायं चांहस्पतिसंज्ञकः अस्मात्पूर्वभाव्यसंक्रान्तिमासः संसर्पः उत्तरभाव्यसंक्रान्तिमासोधिमासः एतदेवा
भिप्रेत्योक्तं वार्हस्पत्ये ज्योतिर्ग्रंथे यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा संसर्पांहस्पती मासावधि
मासश्च निंदित इति अत्र पूर्वासंक्रान्तद्विसंक्रान्तयोः संसर्पांहस्पतिमाससंज्ञकत्वमुत्तरासंक्रान्तमासस्या
धिमासत्वं क्रमेणाभिधानादवगम्यते संसर्पोसंक्रान्तोपि न मलमासः किन्तु शुद्ध एव तस्य उत्तर एवा
संक्रान्तो मलमास इत्युक्तं प्राक् इति मलमासस्वरूपनिर्णयः ॥ अथ ससंक्रान्तमासे कश्चिद्विशेषनि
र्णयः प्रस्तूयते तत्रादौ तदुपयोगि चैत्रादिलक्षणं तत्र कमलाकरोक्तमेषादिसंक्रान्तिपरिसमाप्त्यमा
वास्याकत्वमित्यादि तथा च माधवमते ज्योतिषवचनं मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः
चैत्राद्यः स ज्ञेयः पूर्तिद्वित्वेधिमासोन्त्य इति न चैतत्तत्तत्पूर्वासंक्रान्तेवाप्तमिति वाच्यं षष्टिभिर्दिवसै
रित्याद्युक्तत्वात् पृथगेवलक्षणत्वात् अत एव मेषादीनां शुद्धमाससंज्ञा मन्येव प्रयोजकत्वं मलमासस्यो
त्तरमासशेषत्वश्रवणादिति माधववचः संगच्छते यदा भाद्रपदोत्तरमधिकं ततआश्विनः ततः का
र्तिकः ततो मार्गशीर्षो द्विसंक्रान्तः ततः पौषः ततो माघः ततः फाल्गुणोऽसंक्रान्तस्ततश्चैत्र इति क्रमः
तदा मेषसंक्रान्तिपरिसमाप्त्यमावास्याकत्वं चैत्रत्वमित्येवरीत्या धनुःसंक्रान्तिपरिसमाप्त्यमावास्याकत्वं
मार्गशीर्षकत्वमन्यथा मार्गशीर्षप्रसिद्धं तस्यात्र द्विसंक्रान्तेरभावात् मार्गशीर्षो लुप्तः अत एव क्षय इति व्यव
ह्रियते एवं सति मासपक्षतिथिस्पृष्ट इत्यादिना तत्तन्मासविशेषणपुरस्कारेण विहितपत्न्या वृश्चिकादीनां
मध्यस्कालायाभ्यायत्तायरमतामिन्नादेर्विलोपप्रसंगः तत्रस्तानामागामिवर्षसंबंधितत्तन्मासेलोपप्र
संगश्च यदि च मकरसंक्रान्तिपरिसमाप्त्यमावास्यकत्वं पौषत्वं तदा विधिरविसंक्रमहीने यो वर्ज्यो वर्ज्य
विधिः स्मृतः स एव तु द्विसंक्रान्ते मलमासेप्युदीरित इति काठकगृह्येण पौषप्रयुक्तानामपि लोपप्रसंगः
यदि च पूर्वोक्तं तत्तन्मलमासलक्षणं तदुत्तरसंक्रान्तेः तिव्याप्तमित्युच्यते तदानीं तस्याद्यतिथिकत्वं चै
त्रत्वं आद्या तिथिः शुक्ला प्रतिपत् तत्त्वं च प्रतिपदाद्यवच्छेदेनैवेत्येवं परिपाट्या वृश्चिकस्याद्य-
तिथिकत्वं मार्गशीर्षकत्वे यत्तु स्याद्यतिथिकत्वमिति विभाव्यते तदा पौषोलुप्त इति तत्पुरस्कृतपूर्वोक्तका-

ष्ठीविलोपः अतिदेशेन तु मार्गशीर्षपुरस्कृतकार्य्याप्रसंगः नचेष्टापत्तिः प्रत्यवायश्रवणादिति अत्रोच्यते
तिथ्यर्द्धे प्रथमे पूर्वो द्वितीयेऽर्द्धे तदुत्तरः मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगाविति ज्योतिषवचनात्
क्षयमासे द्वयत्वोक्त्या तत्तन्मासप्रयुक्तदोषस्य परिहृतत्वात् तत्र लक्षणाभेदेनान्यतरो मासविशेषो गौ
णः मुख्यासंभवे गौणपरिग्रहस्यावश्यकेषु अन्यत्र प्रसिद्धे अतिदेशप्रयुक्तलोपोद्धारस्त्वित्थं तत्रा
ह्निकस्य मलेपि विहितत्वादेव न लोपः द्वितीयादेस्तु मलेनन्यगतिः कुर्यान्नित्यानि नैमित्तिकीं क्रि
यामिति काठकगृह्ये पोषविधानात् मलत्वंचास्य अंहस्पतित्वात् एवं वार्द्धापनाष्टकादावपि यो
ज्यं तत्र तत्तत्तिथि पूर्वोत्तरार्धयोस्तत्तत्कर्मकालाव्याप्तौ व्याप्तौच एकदेशव्याप्तौ वा कर्मकालाव्याप्ति^
व्याप्तिशासनमनुसर्तव्यं तत्राह्निकविषये दर्शंच पौर्णमासंच पितुः सांवत्सरं दिनं पूर्वविद्धमकुर्वाणो
नरकं प्रतिपद्यते इति नारदीयवचनं तद्द्व्यह्नव्यापिनी चेत्स्यान्मृताहस्य च सा तिथिः पूर्वविद्धैव कर्त^
व्या त्रिमुहूर्तैव या भवेदिति वृद्धमानवीयं ह्यपराह्णव्यापिनी चेदाह्निकस्य यदा तिथिः मुहूर्तीयत्रतो
विद्धां प्रशंसंति मनीषिणः इति मारीचंवचः द्व्यहेपि व्यापिनी चेत्स्यान्मृताहस्य यदा तिथिः पूर्वविद्धा
प्रकर्तव्या त्रिमुहूर्त्ता च या भवेदिति सुमंतुवचः कमलाकरैरप्युक्तं अत्र मृताहस्येत्यनेन कांक्षितमा
सपक्षादिति मृताहत्वलक्षणबोधकवाक्यैकवाक्यतया तत्तन्मासविशिष्टत्वविधिविशेषाभावस्य
अपराह्णद्वयेनबाधनात् विशेष्याभावप्रयुक्तविशिष्टाभावमादाय तिथ्यंतरे कर्तव्यताबोधनवत् विशे
षणाभावप्रयुक्तविशिष्टाभावमादाय मासांतरेपि तद्बाधनात् इदंचावधेयं अन्यथा यदा अमाच
तुर्विंशतिघटिका प्रतिपत् अष्टादशघटिका तदा प्रतिपच्छ्राद्धं मासांतरतिथ्यंतरसंबंधपराहतं^
स्यात् नचेष्टापत्तिः शिष्टैरनुष्ठीयमानत्वात् अस्य च प्रकृते उदाहरणं यदा प्रतिपच्चतुर्विंशतिघटिका द्वि
तीयाष्टादश तदा मार्गद्वितीयाश्राद्धं पौषप्रतिपदि कर्तव्यं यदा तु द्वितीयासमाने प्रवृत्ता तदा त्रिमुहूर्त्ता
भावात् पूर्ववाक्याभावात् मार्गद्वितीयाश्राद्धं पौषद्वितीयायां त्रिमुहूर्त्तानचग्राह्या परत्रकुतपे द्विमेति^
वचनात् कर्तव्यमित्येवं सर्वत्र संयोज्यं वार्द्धापने आदित्योदयकालिकी तदभावे युग्मादिनानिर्णय
इति नचेदं व्यर्थं त्रिंशत्तिथिसमूहात्मकमासस्यावयवीभूतयावत्तिथीनां मार्गशीर्षत्व पौषत्वस्य च सत्त्वे निर्वह^
ति तत्रोक्तप्रकारेणान्यतरस्यारोपितत्वात् आरोपितानारोपितयोर्विरोधाभावात् विभागस्वीकारं विनैव
सर्वतिथीनां प्रत्येकं तदुभयात्मकत्वोपपादनाच्यकर्तुमशक्यत्वादिति वाच्यं अत्र मृतस्य जातस्य चाग्रिम
वर्षीयतन्मासद्वयेपि आह्निकश्राद्धवार्द्धापनानुष्ठापनापत्तेः तच्चानिष्टं अत एव तिथ्यर्द्धे प्रथमे पू^
र्वो द्वितीयेर्धे तदुत्तर इत्युक्तं अयंभावः मासावित्येकविशेषेण मासद्वयविधिर्यद्यप्यविशेषेण प्रतीयते
तथापि यदग्नये च प्रजापतये च सायं जुहोतीत्यनेन मंत्रवर्णप्राप्तविध्यनुवादेन प्रजापतिदेवताविधा
नवन्मुख्यमासानुवादेन पूर्वार्धाद्यवच्छेदकपुरस्कारेण मासांतरतादात्म्यातिदेशो विधीयते मुख्यमा
सत्वानुवादावच्छेदकविधानार्थी समानांतरस्यावच्छेदकत्वं तत्त्वत्तिविशिष्टमिति अवयवांतरे तन्मासत्वा
भावः मुख्यमासत्वं यद्यप्यवयवांतरे संभवति तथापि तदकिंचित्करं अतिदिश्यमानधर्मविरुद्धस्याश्र
यप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात् यद्यपि अवच्छेदकभेदेन मासद्वयकल्पकवचनजा
तस्य कमलाकरेण द्वयंजातपुरस्कारेणाभिधानं कृतं तथापि माघवेनापि विशेषणेन तदुपन्यस्य हाद^
शमासः संवत्सर इत्यादिश्रुतिविरोधपरिहारस्य कृतत्वात्तदुपलक्षणं अन्यथा तिथिपूर्वार्द्धे प्रसूता
याः पौषप्रयुक्तशान्त्याद्यापत्तेः मलेमतिप्रसूतकणीवेयस्य तिथिपूर्वार्द्धे अनुष्ठानेपि पौषप्रयुक्त^
प्राशस्त्यापत्तेश्च किंच एकएव यदा मास इत्यादिना निरस्कृतमासद्वयात्मकत्वस्य तिथ्यर्धे प्रथमे पूर्व
मित्यादिवचनमंतरेण मासद्वयात्मकविधायकवचनानुपलंभात् अनेन तु अवच्छेदकभेदेनैव तत्

द्वियत्यते उपलंभेवाप्यूर्वोक्तवैचित्र्यसिद्ध्यर्थमनेकवाक्यानामन्यायत्वाच्च एतच्चाग्रेविस्तरेणवक्ष्यते अतःसर्वत्रा वच्छेदकभेदेनैवमासद्वयात्मकस्यग्रहीतुमुचितत्वात्संकोचोयुक्तः एतेनमार्गशीर्षगतंचाब्दिकमेकस्मिन्ने वमासेतिथिपूर्वार्द्धादिविभागंविनैवकार्यमित्याचार्य्योक्तं यथाश्रुतकमलाकरादायवर्णनमात्रंबोध्यं विभागविभागाभावपक्षयोः क्वचित्फलैक्येपिक्वचित्फलभेदात् तथाहि यदापूर्वदिनेप्रतिपद्घटी ष्टादश १८ द्वितीयाउत्तरदिनेत्रयोविंशतिर्दंडा २३ तदाविभागाभावपक्षे मार्गशीर्षद्वितीयाश्राद्धं पौषद्वितीयाश्राद्धंचपूर्वदिने कुतपापराह्णव्याप्तेः विभागपक्षेतुगतेष्ययोगेनसर्वास्तिथिघटयः ६५ तत्रसार्द्धद्वात्रिंशद्घटिकापर्यंतंमार्गशीर्षः तदुत्तरंपौषः मार्गशीर्षद्वितीयाश्राद्धंपूर्वदिनेपौष द्वितीयाश्राद्धंतूत्तरदिने एवंबहुषःस्थलेषुबोध्यं अत्रजातानांमृतानांचतत्तत्तिथिपूर्वोत्तरार्द्धभेदे नाग्रिमवर्षेसंबंधि तत्तन्मासनिर्णयः वर्षेवर्षेतुयच्छ्राद्धंमातापित्रोर्मृतेहनि मासद्वयेपितत्कु र्यात्व्यासस्यवचनंयथेतिगालवीयवचनं एकएवयदामासःसंक्रांतिद्वयसंयुतः मासद्वयग तेश्राद्धंमलमासेपिशस्यते इतिशातातपीयं तत्प्राक्संज्ञत्यधिमासकोयदिभवेत्तत्राब्दसांवत्सरं तः स्मिन्नुद्भवतयाद्वयेपिवचनात्कुर्य्याद्द्वयोःकोविद इतिदीपिकावचनं चैकमूलकत्वकल्पनानु रोधात् क्षयव्यवहितपरं परंतुवक्ष्यमाणप्राकृतत्वविषयं तस्मिन्नुद्भवतयेत्युक्तेःवटेश्वरीयचाल नप्रकारोपिनात्र तथाहि मासःसंक्रांतिहीनोधिक इतिकथितः शीघ्रवक्रप्रचारैःसंसर्पोहस्पतिः स्यात्समविषमतयाचालनेनत्क्षयस्य पूर्वैश्चंद्रार्कयोगैर्विरहितरविसंक्रांतितश्चालनंस्याद्वक्र स्थार्कोधिमासेयदिनचलतितदामासयुग्मंविचिंत्य मितितद्वचनंमाधवाचार्य्यैर्लिखितं अस्या र्थः संक्रांतिशून्यः अधिकः अध्यारूढशब्दात्त्वनुत्तरपदलोपश्चेति अधिकमितिसूत्रेणनिपातः शीघ्रवक्रप्रचारैः शीघ्रप्रचारैर्वक्रप्रचारैरित्यर्थः शीघ्रप्रचाराधिकदिनोल्लंघनं वक्रप्रचारान् न्यूनदिनोल्लंघनं तत्रपूर्वेणसंसर्पः द्वितीयेनअंहस्पतिः तद्विभक्तिप्रतिरूपकमव्ययं तयोर्मध्ये इत्यर्थः क्षयस्यैवचालनंकर्तव्यमितिशेषः तत्रसमविषमतारूपंविशेषणंतृतीया तत्रसमत्वं कृतेपिचा लनेपूर्वमासापरित्यागः विषमत्वं तत्त्यागःकैःकर्त्तव्यमित्याशंकायां पूर्वैरित्यादि क्षयात्पूर्वभाविभिरित्य र्थः चांद्रदिवसैरर्कदिवसैरस्य अध्याहृतकर्तव्यमित्यनेनान्वयः क्वकर्त्तव्यमित्याशंकायामाह विरहितेति विरहितारविसंक्रांतिर्यत्रास्मिन्नर्थे सप्तम्यंतात्तसिः यच्चालनमुक्तं तत्तत्रतत्पर्यंतंवास्यादित्यनेनान्वयः सच क्वचिदव्यवहितः क्वचिदेकेनव्यवहितः क्वचिद्द्वाभ्यांतच्चसाक्षात्परंपरयावा यदिवक्रःअर्कः पूर्वोक्तविषा मचालनेवैषम्यसिद्ध्यर्थमाह अर्कमासेइतिससंक्रांतेइत्यर्थः तत्रद्विसंक्रांतेएकसंक्रांतेर्वानचलतितं चैवस्थिरोभवतीत्यर्थः मासयुग्मंतदाक्षयतदेत्यादि शेषः तिथिपूर्वार्धेएकः अपरार्द्धे एकइतिमासद्वयं बोध्यं सक्रमेण्तनयारीत्या धनुस्थोऽर्कः यद्यपिपूर्वत्रचलति तथापिवृश्चिकस्थोर्कोनचलतीतिसाक्षा त्परंपरयावा असंक्रांतपर्यंतंचालनेनसंभवतीति क्षयाद्व्यवहितासंक्रांतोधिमाघवाद्वेमाद्रेश्चसंभाव्य ते क्षयादेकेनद्वाभ्यांवाव्यवहितस्तत्पर्मशास्त्रेचोदाहृतएव नत्रक्षयमासान्यलक्षणंतु द्विसंक्रांतित्वमा त्रं तदुक्तंज्योतिःसिद्धांते असंक्रांतिमासोधिमासःस्फुटःस्याद्द्विसंक्रांतिमासःक्षयाख्यःकदाचित् क्षयः कार्त्तिकादित्रयेनान्यतःस्यात्तदावर्षमध्येधिमासद्वयंचेति तान्नियतसहचारिरूपंतु तत्पूर्वमासत्रयान्य तमासंक्रांतित्वेसतिउत्तरमासत्रयान्यतमासंक्रांतित्वं अत्रवर्षमध्येधिमासद्वयं चेतितुवैश्वानराधिकर णन्यायेनानुवृत्त्यानुवादः अन्यथा द्व्यगेंद्रशाकेक्षयमासआसीत्तन्निश्चितश्चाष्टी १९०१ प्रमितेतुभावि वेदा णिवात्यष्टि १७४४ युतेश्वगोन्वोभविष्यति खाष्टधृतिप्रमेन्य इतिज्योतिःशास्त्रप्रसिद्धप्रकृतक्षयेव्याप्त्याप तेः मासद्वयेहमध्येतुसंक्रांतिर्नयदाभवेत् प्राकृतस्तत्रपूर्वस्यादधिमासस्तथोत्तरइति जाबाल्याद्युक्तमा

कृतत्वमपि प्रकृतेनास्ति अहृमध्ये इत्युक्तेः नचेदमपि पूर्ववदवयुत्यानुवादः यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्व
यमेव वा संसर्पाहस्पतीमासा वधिमासश्च निंदित इतिवचनविहितस्य त्रयाणां निंदितत्वस्य वैयर्थ्यापत्तेः न
वैवं संसर्पइतिसमाख्याबलादत्र निंदितत्वानन्वय इति वाच्यं तस्याः सर्वतो दुर्बलत्वाद्वाक्यादिप्रमाणापेक्षया तद
न्वयस्य बाधायोगात् नचसाद्गुविनाश्यर्थी पूर्वोक्तप्राकृतत्वेन बाधिततन्वयस्थले चरितार्थ्यादिति प्रकृतमलप्रयु
क्तदानादितन्निषेधपिमासेषु अनुष्ठेयं अत्राश्विनपूर्वासंक्रांतस्य मलत्वं यद्यपि नकालाधिकप्रयुक्तं अन्या
संक्रांतवत्तथापि वत्सरांतर्गतः पादो यज्ञानांफलनाशकृत् नैर्ऋतैर्यातुधानाद्यैः समाक्रांतो विनाशकैः मलि
म्लुचैः समाक्रांते रविसंक्रांतिवर्जिते मलिम्लुचं विजानीयात्सर्वकर्मसु गर्हितं इतिमाधवकृतेशातातपोक्तेर्द्रष्टव्यं
तयस्याऽऽग्रहस्पतित्वात् एकएव यदामासः संक्रांतिद्वयसंयुतः मासद्वयगतं श्राद्धं मलमासेपि शस्यत इत्यत्र मल
इत्यस्य तयमासइतिहेमाद्रिणाव्याख्यातत्वाच्चेति प्रकृते आद्याह्निकमसंक्रांते द्वितीयाद्याह्निकं तच्छुद्ध एव
एवं दौहित्रप्रतिपच्छ्राद्धं नवरात्रदुर्गोत्सवादिषु शुद्धे एवेति नचेदं सर्वग्रंथकारैर्नोक्तमिति वाच्यं तत्र किमे
वमानुपूर्व्यानोक्तमुत तात्पर्येनोनोक्तं नाद्यः अनुपूर्वभेदस्याऽकिंचित्करत्वात् नद्वितीयं माधवादितात्
पर्यपर्यवसितत्वादितिदिक् ॥ अथप्रसंगादेकाद्वत्यसंक्रांतद्वये पूर्वस्य प्राकृतत्वं तत्र कर्तव्याकर्त
व्यनिर्णयः तत्र प्राकृते तदुत्तरस्मिन्मासे चाह्निकं नवरात्रादिकं चावृत्यानुष्ठेयं ननु सकृत्कृतेन शास्त्रस्य
कृतार्थत्वमितिन्यायस्यवसंते ब्राह्मणोग्नीनादधीतेत्यादौ वीप्साश्रवणात् अस्यहि मासपक्षतिथि॰
स्पृष्टेत्यनेनैकवाक्यता तथाच तस्मिन्तस्मिन्वर्षे असतिप्रतिबंधके प्रतियोगिव्यधिकरणतदनुष्ठा
नाभावस्य प्रत्यवायप्रयोजकत्ववत् तदंतर्गततत्तन्मासे तत्तत्पक्षे तत्तत्तिथिव्यक्तौ च तादृशाभावस्य प्रत्यवा
यप्रयोजकत्वमन्यत्रप्रसिद्धं तस्याश्चापि सत्वेनाहरहः संध्यामुपासीतेत्यादिवदावृत्तेर्न्याय्यत्वात् नचाश्विन
त्वपुरस्कारेण विहितानामुत्तरत्र काम्यतुलादीनां तु प्राकृते इति वैविध्यं जातिदैशिकोपदेशिककृतं वक्तु
शक्यं षष्टिभिर्दिवसैरित्यादिना एकमासत्वपक्षे मुख्यतमैकमाश्विनत्वं तदंशे उक्तन्यायस्य संचारएव ना
स्ति किंतु शुद्धत्वांशे सवक्तव्यः तत्र तुलादीनामपि काम्यकर्म न किंचनेति निषेधात् शुद्धत्वापेक्षायां
उक्तन्यायसंचारेणोत्तरत्रैवानुष्ठाने प्राकृतत्वस्य वैयर्थ्यापत्या विनिगमनाविरहस्योभयत्र तुल्यत्वात् षष्टिभिर्दिव
सैरित्यस्याभावेन तत्पूर्वस्यासंक्रांतस्याश्विनत्वादिकंतु आश्विनत्वपुरस्कारेण विहितानां दुर्गास्थापनादीनां
मलमासप्रकरणे निषेधोज्ञापकात्सिद्ध्यति नच यदाप्राकृतत्वं तदा तत्र प्राकृते तेषामनुष्ठानं विनानोपकार॰
कवदिति तत्रोत्तरत्रचानुष्ठानावृत्तिः काम्यतुलादानादेस्तु सकृदनुष्ठानेन कामनासिद्धेः उक्तन्यायसंचा
रे उत्तरत्रैवानुष्ठानं युक्तं प्राकृतत्वंतु ज्ञापकसिद्धाश्विनत्वपुरस्कारेण विहितकार्य्यसंपादनेन कृतार्थमिति
भाति यदातु द्विसंक्रांतादव्यवहितपूर्वोऽसंक्रांतः संभाव्यते उत्तरस्त्वसंक्रांतः एतदुभयसमानवत्स
रांतर्गतस्तदा तस्य प्राकृतत्वे निर्विवादं उत्तरशेषत्वंच तथा तत्रोत्तरस्य तिथ्यर्द्धे प्रथमे इत्यनेन विभागेन
मासद्वयात्मकत्वं वाकांतरेण विभागेनोभयात्मकत्वं वा तत्रान्यतरो मासो गौणः अन्यतरो मुख्यः
तत्र मुख्यशेषत्वे मुख्यप्रयुक्तकार्य्याकार्य्ये स्तः उभयशेषत्वे उभयप्रयुक्तकार्य्याकार्य्ये स्तः प्राकृतत्वंच
स्वोत्तरवृत्तिधर्मवत्त्वमुपदिश्यते अथवा स्वोत्तरवृत्तिशुद्धत्वं अथवा द्वयानधिकरणवत्सरांतर्गतस्वस्या
नापन्नमासवृत्तिशुद्धत्वं वा आद्ये स्वस्वोत्तरयोरुभयोरपि मलेनन्यगतिः कुर्यादिति उभयत्र श्राद्धादि प्रा
मौनदीपिकावचनमवकाशमर्हति द्वितीयेपि सोत्तरत्र शुद्धत्वाभावात्पूर्ववदेव नावकाशमासादयेत्
तृतीयेतु शुद्धत्वात्तत्रैवोभयशेषत्वपक्षे मासद्वयप्रयुक्तं श्राद्धादि ननु ह्यये नत्यागतेरभावात् द्वयव
चनादित्यस्यानवसरः एकएवेत्यत्र हेमाद्रिव्याख्यानंतु मलेनन्यगतिमित्यनल्ललकमिति नात्र संचरा॰
ति यदि स्वोत्तरमासंक्रांतो भिन्नवत्सरांतर्गतस्तदा प्राकृतत्वमेव नास्तीति मलेनन्यगतिः कुर्यादित्येतन्मा

त्वविषयः एवं च मलमासे शोधनत्वपदे तृतीयं प्राकृतत्वं गृहीतत्वात् व्यवहितदीपिकावचनस्यावकाशो वाच्यः तथा-
चाल्पविषयतातदपेक्षया व्यवहिताव्यवहितसाधारण्यं युक्तं किंच यत्रोत्तरो मुख्यः तत्र तच्छेषत्वात् अस्य
तत्त्वयुक्तमत्र स्यात् एवं प्रयुक्तं त्वये स्यात् इतिवत् न च रूपे विरुद्धं आपद्येत ततो दीपिकावचने व्यवहितविष-
यमिति युक्तं किंच तत्प्रागित्यस्य यद्यव्यवहित एव प्रवृत्तिः स्यात्तर्हि संगीतस्य वैयर्थ्यं स्यात् कृते तु तस्मिन्न-
स्याचः संगीतिषष्ठीतत्पुरुषेणैकव्यवहितमेव गृह्णीयादिति व्यवहितमेव प्राक्संगीग्रहणं तस्य ह्या-
र्थं अनुष्ठानयेति प्राकृतत्वमूलकं न त्वनन्यगतिमूलं तथा सति तस्मिन्नयेव वचनादित्येव वदेत्
न तु अनुष्ठानयेति एतेन प्राकृतत्वमपि अनन्यगतिमूलकमित्यपास्तं किंच तस्य तन्मूलकत्वे तत्र त्वदु-
मयेदूर्ध्वं दैवं यथोक्तं माधवप्रभृतिभिरनन्यगतिकं त्वयेव्यवहितमेव उदाहरणद्वयमुक्तं प्राकृतत्वोक्तेश्च
त्वयादव्यवहितस्तु संभावितः प्रकृते प्राकृतत्वाभावस्तु द्वितीयासंक्रान्तस्य भिन्नाहप्रवृत्तित्वात् स्फुट एव
सिद्ध इति तदर्थमेवायं प्रयासो महतो वंशस्तम्भादिति न्यायमनुसरतीति दिक् उभयात्मकत्वं तु तिथिपू-
र्वार्द्धादिविभागेनैव सर्वत्र बोध्यं तत्त्वविभागेन तथाहि न तावत् प्रकृते मुख्यमार्गशीर्षपौषातिदेशः आ-
रोपितानारोपितयोर्विरोधाभावेनोभयसमावेशेऽपि अतिदिश्यमानधर्मविरुद्ध इति न्यायेन मार्गशीर्षका-
र्यासिद्धेः नचोभयत्वेनातिदेशः उभयत्वावच्छिन्नोद्देश्यकहेमन्तशिशिरयोरित्यादि विहितमासद्वयात्म-
कं अनुद्देश्यकादिकमेवातिदिश्यते ननु मार्गशीर्षावच्छिन्नोद्देश्यकप्रत्याह्निकं न च मार्गशीर्षत्व
पौषत्व एतदुभयवदतिदेशः तथा सत्यपि उभयत्वावच्छिन्नावच्छेदकताकोद्देश्यताकार्यैरेवाति-
देशो न सिद्धिः स्यात् ननु निरवच्छिन्नपौषत्वादिनिष्ठावच्छेदकताकोद्देश्यताकप्रत्याह्निकादेरिति तिथ्यर्द्धप्रथ-
मे इत्यनेन यो यत्र नास्ति स चेत्पूर्वः तस्य तिथिपूर्वार्द्धे अतिदेशः यो यत्र नास्ति स चेदुत्तरः तस्य तिथ्युत्तरार्द्धे-
तिदेशः मासावितित्वल्पभेदाभिप्रायकं अतिप्रसंगस्तु अतिदिश्यमानेतिन्यायेन वारणीयः रात्रौ श्रा-
द्धप्रसंगस्तु पूर्ववारित एव कार्तिकादिषु मासेषु यदि स्यान्नाममलिम्लुचौ सर्वकर्महरः प्रोक्तः पूर्वस्तत्र म-
लिम्लुच इतिवचनं तु यथाश्रुतमेव प्रकृतानुपयोगि यदि च कार्तिकादिमासेषु द्वयेसति मलिम्लुचौ-
स्यातामित्यर्थः तदा प्रकृतोपयोगेऽपि कार्तिकादिष्वित्यव्यावर्त्तकं किंच पूर्व एव सर्वकर्महर इत्येव निय-
माकारे उत्तरस्य सर्वकर्महरत्वाभावः सिद्ध्यति पूर्वः सर्वकर्महर एवेत्येतस्यापि नियमस्य संभवात् एतत्फ-
लं तु पूर्वस्मिन्दिनाधिकप्रयुक्तमलत्वस्योत्तरत्र यथासद्भावस्तद्वदभावेनाऽस्य कर्मार्हत्वे प्राप्ते तेन पूर्वोक्त-
मलिम्लुचाधिष्ठितत्वरूपमलत्वव्यवस्थापनं तस्यापि यत्र प्राकृतत्वं तत्र तेनापहार इति वचनान्तरविरो-
ध इत्यलं अथास्य कालदोषवत्त्वान्मलमासमात्रे वर्ज्यावर्ज्यनिर्णयः तत्र सत्यव्रतः मलिम्लुचस्तु यो
मासः समासः पापसंज्ञितः वर्जितः पितृदेवाभ्यां सर्वकर्मसु वर्जयेदिति वा पाठः साधुः मनुः एक-
राशिस्थिते सूर्ये यदा दर्शद्वयं भवेत् हव्यकव्यक्रियाहन्ता तदा ज्ञेयोऽधिमासकः शातातपः वत्सरान्त-
र्गतः पापो यज्ञानां फलनाशकृत् नैर्ऋतैर्यातुधानाद्यैः समाक्रान्तोऽधिमासकः मलिम्लुचैः समाक्रान्तं
सूर्यसंक्रान्तिवर्जितं मलिम्लुचं विजानीयाद्गर्हितं सर्वकर्मसु गृह्यपरिशिष्टे मलिम्लुचस्तु मासो वै मलिनः
पापसंभवः गर्हितः पितृदेवेभ्यः सर्वकर्मसु तं त्यजेत् ब्रह्मसिद्धान्ते यदा शशी याति गभस्तिमंडलं दिवाक-
रः संक्रमणं करोत्यन्त तदाधिमासः कथितो विरिंचिना विवाहयात्रोत्सवयज्ञदोषकृत् सिनीवाली-
मतिक्रम्य यदा संक्रमते रविः भानुनालंघितो मासो ह्यनर्हः सर्वकर्मसु ज्योतिःशास्त्रान्तरे सवितृमंड-
लमेति यदा शशी न तदनु संक्रमणं कुरुते रविः स खलु महोत्सवनाशकरस्तदा मुनिवरैः कथितोऽधिकमा-
सकः पैठीनसिः श्रौतस्मार्तक्रियाः सर्वाः द्वादशस्वेव कीर्तिताः त्रयोदशे तु ताः सर्वा निष्फलाः इति कीर्ति-
ताः तस्मात्त्रयोदशे मासि न कुर्यात्ताः कथंचन कुर्वन्न तर्हि मे वास्तु कुर्यादात्मविनाशनमिति त्रयोदशत्वं च स-

क्रांतिपुरुषद्वादशमासायेतयाग्रन्थनिष्फलाइत्यभिधानात्फलकामनयाप्रवृत्तंकर्मनिषिध्यते इतिग
म्यते तथाचस्मृत्यंतरम् इष्ट्यादिसर्वकाम्यंतुमलमासेविवर्जयेदिति यद्यपिपूर्ववचनेषुसर्वकर्मकर्तव्यतानिषे
धोमलमासेप्रतीयते तथापि नकुर्यादधिकेमासिकाम्यंकर्मकदाचन मलंवदंतिकालस्यमासंकालविदो॰
धिकं नकुर्यादधिकेमासिकर्माकर्मकथंचन मुक्तानैमित्तिकंकर्म तद्धितत्रैवकीर्तितमित्यादिपूर्वस्
मृतवचनेभ्यो नित्यनैमित्तिकेकुर्यात्प्रयतःसन्मलिम्लुचे इत्यादिपश्चात्समस्तवचनेभ्यश्चकाम्यानामेवास्तः तत्रश
स्तवचने कर्माकर्मशब्देनकाम्यकर्मोच्यते तद्धिफलकामैःक्रियमाणत्वात्कर्म तदकामैरक्रियमाणत्वादक
र्म कर्मचतदकर्मचेतिकर्मधारयः नित्यनैमित्तिकानांतुकरणमेव नित्यनैमित्तिकेकुर्याच्छ्राद्धंकुर्यान्म
लिम्लुचे तिथिनक्षत्रवारोक्तंकाम्यंनैवकदाचनेति जाबालिवचनात् तदप्यगतिकानामेव अनन्यगतिकं
नित्यंकुर्यान्नैमित्तिकं तथेतिस्मरणात् मलेनन्यगतिंनित्यंकुर्यान्नैमित्तिकींक्रियामिति काठकवचना
त् अनन्यगतिकंच यस्यनित्यस्यमुख्यकालातिक्रमेजघन्यस्यकालांतरस्याननुज्ञातत्वादत्यंतलोपेप्रा
यश्चित्तंप्रसज्येत तत्मलमासेकाम्यनिषेधोप्यारंभसमाप्तिविषयएव असूर्यानामयेमासानैतेषुममसं
मतः व्रतानांचैवयज्ञानामारंभश्चसमापनमिति ब्रह्मसिद्धांतवचनात् प्रारब्धासमाप्तंतुकाम्यक
र्ममलमासेपिभवत्येव प्रारब्धंकर्मयत्किंचित्तत्कार्यंमलिम्लुचे इतितत्रैवोक्तत्वात् चातुर्मास्यव्र
तारंभानंतरंतत्समाप्तिकालादर्वाङ्अप्युपतितेधिमासे अधिमासनिपातेपिएषएवविधिक्रम इतिव
चनेनतद्व्रतस्याभ्यनुज्ञातदर्शनेनकाम्यकर्मांतरेष्वित्यपितथाकल्पयितुमुचितत्वात् आवश्यकंतुका
म्यकर्ममलमासेप्यारभ्यकर्तव्यं यथातीव्रज्वराद्यभिभवेतच्छांत्यर्थंश्रीरुद्रजपाद्यनुष्ठानंमलमा
ससमाप्तिंप्रतीक्षायामनर्थप्रसंगात् तदाहमरीचिः रोगेचालभ्ययोगेचसीमंतेपुंसवेपिच यद्दानादि
समुद्दिष्टंपूर्वत्रापिनदुष्यतीति पूर्वत्रापिमलमासेपीत्यर्थः तथाभिचरतःप्रतिचरतश्चेष्ट्यादिकमप्याग्ना
वैष्णवमेकादशकपालंनिर्वपेदभिचरन्निति प्रतिवैपरस्तादभिचरंतमभिचरंति इत्यादिवाक्यविहितंतद
प्यावश्यकत्वात्तत्रकार्यमेव तथाराजद्रोहादिनायमृत्योःप्रसक्तस्तत्रयोमृत्योर्बिभियात्तस्माएतां
प्राजापत्यांशतकृष्णलांनिर्वपेदित्यादिनाविहितेष्टिरपिकर्तव्यैवकृष्णलाःसुवर्णशकलानियवत्रयप॰
रिमितानियस्यांनिर्वपणीयानिसेष्टिः शतकृष्णलातथायदावृष्ट्यभावात्सस्यानिशुष्यंति मलमासश्चा
गतस्तदाकारीर्यावृष्टिकामोयजेतेतिविहितेष्टिरपिनकालविलंबंसहते एवंस्मार्त्तान्यप्यावश्यकान्यु
दाहरणीयानि अनन्यगतिकानितुनित्यानिगृह्यपरिशिष्टउदाहृतानि अवषट्कारहोमश्चपर्वचाग्रय
णंतथा मलमासेपिकर्तव्यंकाम्याइष्टीर्विवर्जयेदिति अवषट्कारहोमाअग्निहोत्रवैश्वदेवादयः पर्व
दर्शपौर्णमासौपार्वणस्थालीपाकश्च आग्रयणकर्तव्यताचपुराणालाभेनलाभेत्वकर्तव्यतैव अनेनै
वाभिप्रायेण पैठीनसिनापि संक्रांतिरहितेमासिकुर्यादाग्रयणंनवेतिविकल्पउक्तः नैमित्तिकान्यपिकानि
चिदावश्यकानिनियमेनदर्शितानि चंद्रसूर्यग्रहेस्नानंश्राद्धदानजपादिकं कार्याणिमलमासेपिनित्यंनै
मित्तिकंतथेति स्मृत्यंतरे चंद्रसूर्यग्रहेचैवमरणेपुत्रजन्मनि मलमासेपिदेयंस्याद्दत्तमक्षयतांव्रजेदि
ति चंद्रसूर्यग्रहणंचकपिलषष्ठ्याद्यलभ्ययोगानामप्युपलक्षणं गत्यंतरयुतानितुनित्यनैमित्तिकान्य
पितत्रनकार्याणि तान्यपिकानिचित्काठकगृह्यपरिशिष्टेदर्शितानि सोमयागादिकर्माणिनित्या
न्यपिमलिम्लुचे षष्ठीजपाग्रयणाधानचातुर्मास्यादिकान्यपि महालयाष्टकाश्राद्धोपाकर्माद्यपिक
र्मयत् स्पष्टमासविशेषाख्याविहितंवर्जयेन्मलेइति सोमयागोवसंतेविहितस्तस्यमलमासेवर्जनेपि
शुद्धेमासे [illegible] संभवात्सगतिकत्वं षष्ठीष्टिःकाठकशाखादौप्रसिद्धा पुत्रेष्टिरित्यन्य
त्रपाठः तत्रपुत्रगतस्तन्त्यादिकलार्थारिष्टिरेवतस्यानैमित्तिकत्वात् निमित्तानंतरंकरणेप्रसक्तेपि॰

शेषविरोधान्निमित्तानंतर्यबाधेन शौचकालरूपांगोपसंग्रहव्यवस्थापनेनाशौचापगमेनानुष्ठानमिव मलमा
सेप्यतीतेप्यनुष्ठानं तस्य न्याय्यत्वादुपपद्यत इति सगतिकाजातेष्टिर्मलमासे न क्रियते हेमाद्रौ पुत्रेष्टीतिपा
ठः तत्रापि पुत्रपुत्रार्थित्वात्पुत्रेष्टिरेव अन्यस्याः ईदृश्या इष्टेरदर्शनात् महालयो भाद्रपदस्यापरपक्षः
अनपवादादावश्यकनिषेधो गृह्यपरिशिष्टे मलंवदंतिकालस्य मासंकालविदोधिकं नेहतात्रविशेषेण्या
मन्यत्रावश्यकाद्धियेरिति यत्तु प्रवृत्तं मलमासात्प्राग्यत् काम्यमसमापितं आगते मलमासेपि तत्स
माप्यमसंशयमिति मलमासेपि काम्यकर्मणः समाप्तिप्रतिपादकं काठकगृह्यं तत्सावनमानोपजी
वीकृच्छ्रचांद्रायणादिविषयं इतिकेचित् हेमाद्रिस्तु प्रवृत्तं मलमासात्प्रागिति समाप्यभ्यनुज्ञानं मल-
मासात्प्रागारब्धस्यानियतकालस्यापि असूर्यादिति समाप्तिनिषेधस्तु मोहात्तत्रैव प्रक्रांतस्य काम्यस्य
मलमासे समापने दोषातिशयद्योतनार्थ इत्याह तदयुक्तं प्राक्प्रवृत्तस्याप्यनियतकालस्य समाप्तेः
सगतित्वेन मलमासेनुचितत्वात् प्रतिप्रसवस्याप्यगतिकविषयत्वात् मलमासेप्यनुवर्तनेन च प्रयो
गप्राशस्त्यभावभंगाभावात् प्रवृत्तेतिवचनस्यानियतकालकर्मरूपविषयांतरसत्वादिति तदेतदपान
रमणीयं प्रवृत्तवचने नियतकालानियतकालसाधारणशब्देनाभिधानात् असूर्यादितिवचनव्यवस्थाग्रंथे
मलमासप्रारब्धस्यैव समाप्तिस्तत्र निषिध्यत इत्यत्राप्येवकारस्याप्यनर्थकत्वेन तच्छब्दस्य चानुवृत्तिद्योतकत्वेन
सर्वसंमतार्थक्लृप्तेनैव व्याख्यातुं शक्यत्वाच्चेति तस्मादावश्यकमेव काम्यं अनन्यगतिकानि नित्यनै-
मित्तिकानि च कर्माणि मलमासे आरंभणीयानि समापनीयानि च सावनमाससाध्यानि च काम्यान्य
पि प्रारब्धानि समापनीयानि तदितरेषां त्वारंभः समाप्तिश्च न कर्तव्यौ अनुवर्तनमात्रं तु कर्तव्यमिति
एवं सामान्यतो वर्ज्यावर्ज्यविवेकसिद्धे विशेषतो वर्ज्यावर्ज्याणि संगृह्य प्रदर्श्यंते तत्र पुंसवनसीमंतो
न्नयनजातकर्मान्नप्राशनानि कर्माण्यपि तत्सर्वनिमित्तिकाभ्युदयिकश्राद्धं चंद्रसूर्यग्रहप्रयुक्तस्नान
श्राद्धदानजपादिकं रोगशांत्यर्थकर्मार्धोदयाद्यलभ्ययोगनिमित्तश्राद्धदानव्रतादिकमंत्येष्टि दहनोदक
दानपिंडदानास्थिसंचयननवश्राद्धैकादशाहिकवृषोत्सर्गषोडशश्राद्धसपिंडीकरणानि मघात्रयो-
दशीश्राद्धसंध्यावंदनाग्निहोत्रातिपातगोवधादिनिमित्तप्रायश्चित्तमग्निनाशादिनिमित्तकं पुनराधान
प्रतिमादिसंस्कारनाशहेतुकाः पुनःप्रतिष्ठापूर्वदृष्टतीर्थश्राद्धगजच्छायाश्राद्धादीनि निमित्तवशा
न्मलमासेपि कर्तव्यानि तथा च स्मृतिसंग्रहे जातकर्म च पुंसूतिः सीमंतोन्नयने व्रतं मलिम्लुचेपि कुर्वीत
निमित्तं यदि जायते पुंसूतिः पुंसवनं व्रतशब्देन अलभ्ययोगादिनिमित्तकव्रतानामावश्यकप्रायश्चित्त
रूपकृच्छ्रचांद्रायणादीनां च ग्रहणं यमः गर्भे वार्धुषिके भृत्ये श्राद्धकर्मणि मासिके सपिंडीकर-
णे नित्ये नाधिमासं विवर्जयेत् तीर्थस्नानं जपो होमो यवव्रीहितिलादिभिः जातकर्मांत्यकर्माणि नव
श्राद्धं तथैव च मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश चंद्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकं का
र्याणि मलमासेपि नित्यनैमित्तिकं तथेति गर्भे गर्भसंस्कारे पुंसवनादौ वार्धुषिके तत्कृत्ये वृद्धिग्रहणे
भृत्ये तत्कृत्ये भृतिग्रहणे मासिकं श्राद्धकर्मामावास्याश्राद्धं षोडशश्राद्धानां पृथगुपादानात् नित्यं-
नित्यदानं होमोत्रौपासनहोमः यवव्रीहितिलादिभिरित्यग्निहोत्रहोमो विहितकरणद्रव्योपादानत्वा अं
त्यकर्माणि दहनोदकपिंडदानास्थिसंचयनादीनि कालादर्शकारोपि द्वादशाहः सपिंडांतकर्मग्रह-
णजन्मनोः सीमंतपुंसवे श्राद्धं द्वावेतौ जातकर्म च योगे पुण्ये निरलभ्ये च योगे श्राद्धं व्रतानि च प्रायश्चि
त्तेनिमित्तस्य वशात्पूर्वपरत्र वा अर्धोदकुंभमन्वादिमहालययुगादिषु श्राद्धं दर्शेप्यहरहः श्राद्धमूना
ब्दमासिकं मलिम्लुचान्यमासेषु मृतानां श्राद्धमाब्दिकं श्राद्धं तथपूर्वदृष्टेषु तीर्थेष्वेवं युगादिषु मन्वा
दिषु तथद्वानं दानं दैनंदिनं च यत् तिलगोभूहिरण्यानां संध्योपासनयोः क्रियाः पर्वहोमश्चाग्रयणं

साग्नेरिष्टिश्च पर्वणोः नित्याग्निहोमश्च बलिर्देवतातिथिपूजनं स्नानंच स्नानविधिनाअभक्ष्यापेयवर्जनं त
र्पणंच निमित्तस्यानित्यत्वादुभयत्रच अपिनित्यमनित्यंच दानंच महदादिकं अग्न्याधानाध्वरापूर्वतीर्थया
त्रामरेक्षणं देवारामतडागादिप्रतिष्ठामौंजिबंधनं आश्रम स्वीकृतिः काम्यवृषोत्सर्गश्च निष्क्रमः राजा
भिषेकः प्रथमश्चूडाकर्मव्रतानिच अन्नप्राशनमारंभो गृहाणांच निवेशनं स्नानं विवाहो नामातिपन्ने
देवमहोत्सवं व्रतारंभसमाप्ती च कर्मकाम्यंच पाप्मनः प्रायश्चित्तं तु सर्वस्य मलमासे विवर्जयेत् उपा
कर्मोत्सर्जनंच पवित्रदमनार्पणं अवरोहश्च हेमंतः सर्पाणांबलिरिष्टिकाः ईशानस्य बलिर्विष्णोः श
यनंपरिवर्तनं दुर्गेंद्रस्थापनोत्थानं ध्वजोत्थानंच वभ्रिणः पूर्वंत्वप्रतिषिद्धानि परत्वान्यच्च दैविकमिति
अत्राह्लादशाहइत्यारभ्य नित्यत्वादुभयत्रचेत्यंतेन ग्रंथेन कर्तव्यसंग्रहः अनित्यमनिमित्तंचेत्यारभ्य
वर्जयेदित्यंतेन वर्ज्यसंग्रहः उपाकर्मेत्यारभ्यान्यच्च दैविकमित्यंतेन मलमासे वर्जितानां शुद्धमासे वश्य
कर्तव्यत्वेन संग्रहः अत्र गर्भेत्यादीनि साह्लिवचनान्युदाहृतानि द्वावेतौ जातकर्मचेत्यत्र पतौ पुंसवन
सीमंतोपनयनगर्भाधानाद्यन्नप्राशनांतसंस्कारोपलक्षणं तदुक्तं दीपिकायां गर्भाधानमखंच चौल
विधितः प्रागजातपागं विनाकृच्छ्रेषाग्रयणं गजेंद्रपुरतश्छायामघानंगयोः तीर्थेंद्वक्षययोश्चापि अ
मधिकेमासेप्येवमाचरेदिति स्मृतिसंग्रहेपि योगादिकं मासिकंच श्राद्धंचापरपक्षिकं मन्वादिकं
तैर्थिकंच कुर्यान्मासद्वयेपिचेति अपरपक्षिकं प्रतिकृष्णपक्षविहितं श्राद्धं न तु महालयापरपक्ष
श्राद्धं तन्निषेधस्याग्रे वक्ष्यमाणत्वात् मत्स्यपुराणे दर्शश्चाहरहःश्राद्धं दानंच प्रतिवासरं गोभूतिलहिरण्या
नां मासेपि स्यान्मलिम्लुच इति व्यासः जातकर्मणि यच्छ्राद्धं दर्शश्राद्धं तथैवच मलमासेपि तत्कार्यं व्यास
स्यवचनं यथेति यत्तु संवत्सरातिरेकेण मासो यः स्यान्मलिम्लुचः तस्मिंस्त्रयोदशेश्राद्धं नकुर्यादिंदुसंक्ष
य इत्यृष्यशृंगवचनं गौडग्रंथेषु लिखितं तत्कार्तिकादिमासविशेषसंबद्धामावास्याविहितफलविशेषा
र्थश्राद्धपरं स्पष्टमासविशेषाख्यं विहितं वर्जयेन्मले इत्येतदेकवाक्यत्वात्सर्वकामार्थविहितकाम्यश्रा
द्धविषयंच नकुर्यादधिकेमासि काम्यं कर्म कदाचनेति सामान्यवचनेन तस्यापि निषेधात् केचित्तु
नकुर्यादिंदुसंक्षयइति प्रमादपाठः नकुर्यात्तत्रोपतिष्ठतइति बहुग्रंथपाठो दृष्टः पाठोऽन्यायानित्या
द्युः स्मृत्यंतरे श्राद्धजातकनामानि संस्काराश्चैव सव्रताः मलिम्लुचेपि कर्तव्याः इष्टीः काम्याश्च वर्जयेदि
ति संस्कारा अन्नप्राशननिष्क्रमणादयः जनार्दनशयनादारभ्योत्थापनं यावद्दुत्वाग्निं धारणापार
णादिकं करिष्यामीति संकल्पसहिताः सव्रताः काम्याश्चापि इष्टिग्रहणं काम्यपशुबंधादिकर्मोपलक्ष
णं सर्वेषामपि काम्यानामावश्यकत्वेन वर्जनीयत्वात् हारीतोपि अधिमासेन कर्तव्यं श्राद्धमाभ्युदयं
तथा तथैव काम्यं यत्कर्मेति यत्काम्यं कर्मेष्ट्यादिकं तत् मलमासे न कर्तव्यमित्यर्थः गभस्तिः एको
द्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते तत्कार्यं पूर्वमासे च कालातिक्रमेपि धर्मत इति गौतमेपि जातकर्म
णि यच्छ्राद्धं नवश्राद्धं तथैवच ग्रहणे पुंसवादौ च तत्पूर्वत्र परत्र चेति निमित्तवशादिति वाक्यशेषः आ
दिशब्दात्सीमंतादिसंस्काराणामलभ्ययोगादीनां चोपसंग्रहः मरीचिः रोगे चालभ्ययोगे च सीमंते पुंस
वेपिच यद्दानादि समुद्दिष्टं पूर्वत्रापि न दुष्यतीति ज्योतिःशास्त्रे तत्र दत्तमदत्तंच हुतंचाहुतमेवच सज
ममप्यनर्हंस्यात्तत्रोपवासः कृतो भवेत् नयात्रां न विवाहं तु नववास्तुनिवेशनं नप्रतिष्ठांच देवानां प्रासा
दग्रामसरूहामिति प्रजापतिरपि उपाकर्मच हव्यंच कव्यं पर्वोत्सवं तथा उत्तरे नियतं कुर्यात्पूर्वे त
न्निष्फलं भवेत् अन्यत्रापि अवरोहश्च हेमंतः सर्पाणां बलिरष्टकाः ईशानस्य बलिर्विष्णोः शयनंप
रिवर्तनं प्रायश्चित्तं तु सर्वस्य मलमासे विवर्जयेत् गार्ग्यः अपूर्वदेवतादृष्टाश्च चः सुर्नष्टभार्गवे मल
मासे त्वनाहृत्तसौधीयायां विवर्जयेत् शातातपोपि असंगते गुरौ शुक्रे वृद्धे बाले मलिम्लुचे व्रतारंभा

एवंगेचनकुर्य्यान्मौंजिबंधनमिति गार्ग्योपि नामान्नप्राशनंचौलंविवाहंमौंजिबंधनं निष्क्रमंजातकर्मा-
दिकाम्यवृषविसर्जनं अस्तंगतेगुरौशुक्रेबालेवृद्धेमलिम्लुचे उद्यापनमुपारंभंव्रतानांनैवकारयेदिति
नामेतिस्वकालेऽकृतनामविषयं तदाहगार्ग्यः नामकर्मचजातेष्टिंयथाकालंसमाचरेत् अतिपाते
नकर्त्तव्यंप्रशस्तेमासिपुण्यभइति वसिष्ठोपि वापीकूपतडागादिप्रतिष्ठायज्ञकर्मच नकुर्य्यान्मल
मासेपिमहादानव्रतानिचेति मरीचिरपि गृहप्रवेशगोदानस्थानाश्रममहोत्सवान् नकुर्य्यान्म
लमासेपिगुरौशुक्रेतथास्तगे मात्स्येपि आधानयज्ञकर्मादिप्रायश्चित्तव्रतानिच नकुर्य्यान्मलमा
सेपिशुक्रगुर्वोरुपप्लवइति पराशरः अग्न्याधेयप्रतिष्ठांचयज्ञदानव्रतानिच वेदव्रतवृषोत्सर्गचूडाक
रणमेखलाः मांगल्यमभिषेकंचमलमासेविवर्जयेत् अस्यापवादः चंद्रसूर्यग्रहेचैवमरणेपुत्रजन्म
नि मलमासेपिदेयंस्याद्दत्तमक्षय्यकारकमिति अग्न्याधेयप्रतिष्ठांचेत्यत्रानावश्यकत्वेसतीतिशेषोद्र
ष्टव्यः तेनमलमासेपिप्रायश्चित्तभूतमग्न्याधेयमनन्यगत्यनंतरकर्त्तव्यंनप्रतिषिध्यते एवंप्रतिमासंस्का
रनाशेपुनःप्रतिष्ठानप्रतिषिध्यते कौथुमिः अहन्यंबुघटंदद्यादन्नंचापिससंस्कृतं संवत्सरेविवृद्धेपि
प्रतिमासंचमासिकमिति तथाच त्रिंशत्सोदकुंभाश्चअन्नदानानि एकंमासिकंचतदाधिकंभवतीत्यर्थः
अतएववसिष्ठः संवत्सरस्यमध्येयद्यधिमासोभवेन्मासिकार्थंदिनमेकंवर्द्धयेदिति यत्तु ज्योतिःपराश
रेणोक्तं उपाकर्मतथोत्सर्गप्रसवाहोत्सवाष्टकाः मासवृद्धौपराःकार्य्यावर्जयित्वातुपैतृकं पराःका
र्य्या उत्तरेमासिकार्य्याइत्यर्थः तत्रप्रसवाहोत्सवशब्देनजातेष्टिरेवगृह्यते नपुनराभ्युदयिकंजातकर्म
चतयोरपिग्रहणे श्राद्धजातकनाम्ना नीत्यादिस्मृतिविरोधापत्तेः पैतृकग्रहणमावश्यकविषयंन
तुकेवलसांवत्सरिकविषयं अमावास्यादिश्राद्धस्यापिमलमासेविधानात् काठकगृह्येपि प्रेतमा
स्यादिमासस्यश्राद्धंनैमित्तिकाद्यत्ते मघात्रयोदशीश्राद्धंप्रत्युपस्थितिहेतुकं अनन्यगतिकत्वेनकर्त्तव्यं
स्यान्मलिम्लुच इति प्रत्युपस्थितिहेतुकमित्यनेनसंध्यावंदनाद्यतिपातनिमित्तप्रायश्चित्ताग्निनाशा
दिनिमित्तपुनराधानादिरुपसंग्रहः बृहस्पतिः नित्यनैमित्तिकेकुर्य्यात्प्रयतःसन्मलिम्लुचे तीर्थश्राद्धं
गजच्छायाप्रेतश्राद्धंतथैवच यत्रगजस्ययापूर्वस्यांदिशिच्छायासागजच्छाया परमान्नंतुयोदद्यात्पितृ-
णांमधुनासह छायायांतुगजेंद्रस्यपूर्वस्यांदक्षिणामुख इति विश्वामित्रोक्तामुख्याग्राह्या ननुयदेंदुः
पितृदैवत्येहंसश्चैवकरेस्थितः याम्यातिथिर्भवेत्सापिगजच्छायाप्रकीर्त्तितेतितेनैवोक्तापारिभाषिकी
मलमासेतदसंभवात् मघायुक्तत्रयोदश्यांकरेहस्तेचसूर्यस्यावस्थानेसतिभाद्रमासेकन्यासंक्रांतेरव-
श्यंभावेनतस्यमलमासत्वाऽसंभवात् नागरखंडे नभोवाथनभस्योवामलमासोयदाभवेत् सप्तमः
पितृपक्षःस्यादन्यत्रैवतुपंचमइतितत्रआषाढीमवधिंकृत्वासप्तमपंचमौद्रष्टव्यौ आषाढ्याःपंचमे
पक्षइतिवचनात् आषाढमासांतर्गतभागे कर्कसंक्रांतौनभसोधिकमासत्वं श्रावणमासस्यांशभा
गेसिंहसंक्रांतौनभस्यस्याधिकमासत्वं तयोरुभयोरपिपक्षयोः कन्यायांवर्तमानेसवितरियःकृष्णपक्ष
ससप्तमोभवति असतिद्विविधेप्यधिमासेतुपंचमः देवलः अर्केनभस्यकन्यास्थेश्राद्धपक्षःप्रकीर्ति
तः सिनीवालीमतिक्रम्ययदाकन्यांव्रजेद्रविः तदाकालस्यवृद्धत्वादतीतेचपितृक्रियेति अतीतेपंचमा-
पक्षमतिक्रांता एवंचयत्केश्चिदुक्तं कन्यासंक्रांतिनिमित्तानांश्राद्धानांषोडशदिवसेषुनैमित्तिकस्यच
श्राद्धस्यमलमासेनिषेधाभावात्तानिकार्य्याणि तदुक्तंप्रजापतिना मक्तानैमित्तिकंश्राद्धमितिब्रह्म-
सिद्धांते सूर्यगोलेचितोमासोनकर्मण्यःस्मृतोबुधैः तस्मात्तत्रनकुर्वीतश्राद्धंनैमित्तिकादृतेनिमि
त्तंश्राद्धप्रतिकन्यासंक्रांतेः पुराणोक्तं कन्यागतेसवितरियान्यहानितुषोडश क्रतुभिस्तानितुल्या
निपितॄणांदत्तमक्षयमितितन्निरस्तं कार्ष्णाजिनिः नभस्यस्यापरेपक्षेतिथिषोडशकस्तुयः कन्या

गतान्वितश्चेत्स्यात्सबलः श्राद्धकर्मणि प्रशस्तइति शेषः यत्तु जातूकर्ण्यवचनम् आषाढीमवधिंकृत्वा
यः स्यात्पक्षस्तुपंचमः श्राद्धंतत्रप्रकुर्वीतकन्यांगच्छतुवानवा तत्पूर्वदर्शितवाक्यनिचयपर्यालोचनया
पक्षोपक्रमाभिप्रायं तथाचकार्ष्णाजिनिः अंतेवायदिवामध्येयत्रकन्यांरविर्व्रजेत् पक्षस्तुपंचमःकृष्णः
श्राद्धषोडशकंप्रति तेनकन्यांगतेसवितरीत्यादिषुपुराणवचनेषुपक्षमध्येयस्मिन्नहनिकन्यासं
क्रमणेसतिप्रतिपदादिषोडशाप्यहानि उपादेयानीत्येवंव्याख्येयं नतुसंक्रमणात्पूर्वाणिहेया
नीत्येवंशुद्धमासमृतस्यप्रथमाब्दिकं मलमासमृतानांप्रत्याब्दिकश्राद्धंच तत्संबंधिमासेमृतस्यप्रथ
माब्दिकश्राद्धंच तत्संबंधिमासस्यमलमासत्वे मलमासएवकार्य्यं तदाहवृद्धवसिष्ठः असंक्रांतेपि
कर्तव्यमाब्दिकंप्रथमंसुतैः तथैवमासिकंश्राद्धंसपिंडीकरणंतथेति यमः आब्दिकंप्रथमंयत्स्यात्त
त्कुर्वीतमलिम्लुचे त्रयोदशेतुसंप्राप्तेकुर्वीतपुनराब्दिकं द्वितीयादिवार्षिकंत्रयोदशेमासेसमाप्ते
सतिचतुर्दशप्रवेशादिनेकुर्वीतेत्यर्थः लघुहारीतोपि प्रत्यब्दंद्वादशेमासिकार्य्यापिंडक्रियासुतैः
क्वचित्त्रयोदशेपिस्यादाद्यंमुक्त्वातुवत्सरमिति द्वादशेमास्यतीतेनंतरदिनेक्वचिन्मृतेमासेमलिने
त्रयोदशेतीतेनंतरदिनेपिस्यात् किंत्वाद्यंवत्सरंमुक्त्वा आद्यवत्सरानंतरमृतिमासएवमलिनेतुद्वाद
शेतीतेनंतरदिन एवेत्यर्थः अत्रयमः संवत्सरस्यमध्येतुयदिस्यादधिमासकः तदात्रयोदशेमासिक्रि
याप्रेतस्यवार्षिकी इतिविष्णुधर्मोत्तरात् त्रयोदशेतीतेवार्षिकंन्यूनाब्दिकसपिंडीकरणरूपा मासपक्ष
तिथिस्पृष्टेयोयस्मिन्म्रियतेहनि प्रत्यब्दंतुतथाभूतंक्षयाहंतस्यतंविदुरिति व्यासवचनाच्च अन्यथा
कार्त्तिकमृतस्याश्विनेप्रथममाब्दिकप्रसंगः प्रथमवर्षेधिमासपातेधिकमासिकविधानाच्च यद्वाषष्ट्यातुदि
वसैर्मासइतिवचनाच्छुद्धाशुद्धमासयोरेकमासत्वमभिप्रेत्यतत्रापिद्वादशेतीतएवाब्दिकं एतादृशव्यव
हारोपपादनार्थमेकमासत्वाभिधानात् तेनमलमासमृतानांकालक्रमेणयदाकदाचिन्मृतिमासएवम
लमासस्तदानीतनमाब्दिकं यदाचमृतिमासात्त्रयोदशएवमलमासस्तदा प्रथमाब्दिकंचमलमासएव
मलमासेमृतानांतुयच्छ्राद्धंप्रतिवत्सरं मलमासेतुकर्तव्यंनान्येषांतुकदाचनेति भृगुवचनेन आब्दि
कंप्रथमंयत्स्यात्तत्कुर्वीतमलिम्लुच इतिस्मरणेनचमलमासएवकर्तव्यं शुद्धमासमृतानांद्वितीयाद्या
ब्दिकंतुतन्मासेधिकेसतिशुद्धमास एवकर्तव्यमिति पैठीनसिरपि मलमासेपिकर्तव्यंश्राद्धंयत्प्रतिवत्स
रं सांवत्सरंनवर्द्धेतश्राद्धंतत्रमृतेहनि अत्रपूर्वार्द्धंमलमासमृतविषयं मलमासेशुद्धमासमृतप्रत्याब्दिक
श्राद्धनिषेधात् मलमासेपीत्यपिरवधारणे उत्तरार्द्धंशुद्धमासमृतप्रथमाब्दिकविषयं सांवत्सरंप्रथमा
ब्दिकंनवर्द्धेततेनोभयत्रकरणीयं किंतु तत्रमलमासेकर्तव्यमित्यनुषज्यते यत्तुसत्यव्रतः वर्षेवर्षेतुयच्छ्रा
मातापित्रोर्मृतेहनि मलमासेनतत्कार्य्यंव्याघ्रस्यवचनंयथेति तद्द्वितीयाद्याब्दादिवार्षिकविषयं आब्दिकं
प्रथमंयत्स्यात्तत्कुर्वीतमलिम्लुचइतिपूर्वोक्तवचनात् तेनद्वितीयादिशुद्धमासएव पृथ्वीचंद्रोदये दि
वोदासीये मदनपारिजातेचैव अत्रकेचित् मलमाससांवत्सरिकंश्राद्धंकृत्वापुनस्तदुत्तरमासेतदे
वावर्तनीयं आब्दिकंप्रथमंयत्स्यादितिपूर्वोक्तयमवचनात् अत्रच त्रयोदशेतुसतिचतुर्दशमासप्रवे
शादिनेपुनराब्दिकंकुर्वीतेत्यर्थः सांवत्सरंनवर्द्धेतेत्यस्यायमर्थः नवर्धेतनविच्छिद्येतेति तेनैतदेवमा
सद्वयेपिश्राद्धमनुष्ठेयमिति प्रतिपादयन्तीतितदसत् उभयत्रश्राद्धानुष्ठानेप्रमाणाभावात् यमवचन
स्यतु प्रथमाब्दिकद्वितीयाद्याब्दिकविषयत्वेनव्यवस्थापितत्वात् नवर्द्धेतेत्यस्यनविच्छिद्येतेत्यर्थक
त्वेक्लिष्टत्वापत्तेश्च यत्तुवृद्धवसिष्ठः श्राद्धीयाहनिसंप्राप्तेह्यधिमासोभवेद्यदि मासद्वयेपिकुर्वीत
श्राद्धमेवंनमुह्यति यत्तुव्यासः उत्तरेदेवकार्य्याणिपितृकार्य्याणिचोभयोरिति तन्मासिकादिविषयं
योगादिकंमासिकंचश्राद्धंचापरपाक्षिकं मन्वादिकंतैर्थिकंचकुर्यान्मासद्वयेपिचेतिचंद्रिकोक्तेः ॥

नैर्थिकं तीर्थश्राद्धं च मासद्वयेपि तत्कार्यमिति त्रिस्थलीसेतौ भट्टाः केचित्तु प्रतिमासं मृताहे च श्राद्धं यत्त्वनिव-
त्सरे मन्वादौ च युगादौ च तन्मासोभयोरपि इति मरीचिवचनात् वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेहनि
मासद्वयेपि तत्कुर्याद्व्याघ्रस्य वचनं यथेति गालवोक्तेश्च प्रत्याब्दिकं मासद्वयेपि कार्यमित्याहुः तन्नचुक्तं
प्रतिमासं मृताहे क्रियमाणं मासिकं प्रतिसंवत्सरं क्रियमाणं कल्पादिश्राद्धमिति मरीचिवचसो मदन
रत्ने व्याख्यानात् गालवीयस्य च मासद्वयात्मके क्षयमास इति माधवेन व्याख्यानात् अत एव कौथुमिः
अधिमासे न कर्तव्यं श्राद्धं सांवत्सरादिकं वर्षवृद्ध्यभिषेकादि कर्तव्यमधिके न तु इति यदपि निर्णया
मृते पूर्वोक्तकालादर्शवचनान्मलमासे श्राद्धदिनस्य वैयर्थ्यनिरासार्थं पितृदेशेन ब्राह्मणान्भोजयि
त्वा शुद्धमासे सपिंडकं श्राद्धं कुर्यात् पिंडवर्जमसंक्रांते संक्रांते पिंडसंयुतं प्रतिसंवत्सरं श्राद्धमेवं मास
द्वयेपि चेति वृद्धपराशरोक्तेरिति तदपि चिंत्यं पूर्वोक्तवचनस्य क्षयपूर्वभाव्यधिकमासविषयत्वात्
तत्र हि मासद्वये श्राद्धमुक्तम् तथा च सत्यतपाः एक एव यदा मासः संक्रांतिद्वयसंयुतः मासद्वयग-
तं श्राद्धं मलमासेपि शस्यते मासद्वयगतं पूर्वापरसंक्रांतिगतं क्षयमासगतं च मलमासे क्षयमासे अ
पि शस्यते पूर्वाधिमासे चेति हेमाद्रिदीपिकायामपि तथा क्षयाधिकमासो यदि भवेत्तत्र संवत्सरे त
स्मिन् शुद्धतया क्षये च वचनात्कुर्यात्तद्द्वयोः कोविद इति कालादर्शेपि कथंचिदेतद्विषयतयैव-
व्याख्येयमित्याह एवं मलमासे वर्ज्यावर्ज्यनिर्णये कृते क्षयमासेपि मलमासत्वान्मलमासनिषेधप्रा
प्तौ रविसंक्रमहीनो यो वर्ज्यावर्ज्यविधिः स्मृतः स एव तद्द्विसंक्रांतौ मलमासे प्रदीरित इति काठक
गृह्यवचनादधिमासप्रयुक्तनिषेधप्राप्तौ च विशेषोभिधीयते अत्र काम्यव्रतादिकर्मणां प्रथमारंभ
मेव न कुर्यात् द्वितीयाद्यारंभसमाप्तिं च कुर्यादेव अन्यथा पौषमार्गशीर्षयोः क्षयमासांतःपाते चातु
र्मास्यव्रतानामसमाप्तिः प्रसज्येत प्रारब्धकर्मणामसमाप्तौ पुनरनारंभे च संकल्पविरोधः आरंभानि
यमे दोषश्चासमाप्तौ स्यादिति कात्यायनवचनविरोधश्च अधिमासे शुद्धमासांतरसद्भावादारंभ
समाप्त्योरत्रोपपत्ते रधिमासे तयोः प्रतिषेधेन कश्चिद्विरोधः प्रथमारंभोपि क्षयशुद्धमासांतरा-
भावात्कस्मान्न स्यादिति चेत् न कुर्यान्मलमासे तु महादानव्रतादिकं चेति वचनविरोधात् अस्य
च प्रथमारंभव्यतिरिक्तारंभसमाप्त्यादिनिषेधपरत्वे संकल्पविरोधस्योक्तत्वात् काम्यव्रतादीनां क्षयमा
से प्रथमारंभनिषेधपरत्वे ऽविरोधाच्चेति नन्वेवं सति यदि कार्तिकेधिमासो भवति तदा कार्तिकव्रता-
नां शुद्धाश्विन एवारंभः शुद्धकार्तिके च समाप्तिर्मासोपवासव्रतस्यापि मासद्वयव्याप्तत्वात्तत्प्राप्नोति न
चाशक्यं उच्यते यदीह मासोपवासव्रतस्याश्विने प्रारंभविधानं शुद्धकार्तिके च समाप्तिविधानं स्यात्तदा
देवं न त्वेवमस्ति किंत्वस्याश्विनशुक्लद्वादश्यामारंभमभिधायोपरितनशुक्लद्वादश्यां समाप्तिर्विष्णु
रहस्येभिहिता आश्विनस्यामले पक्षे एकादश्यामुपोषितः व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनानि तु
अन्यूनाधिकमेवं तु व्रतं त्रिंशद्दिनैः कृतं कृत्वा मासोपवासं तु संयतात्मा जितेंद्रियः ततोर्चयेत्तु वै पूर्णं
द्वादश्यां गरुडध्वजं पूजयेत्पुष्पमालाभिर्गंधपुष्पविलेपनैः वस्त्रदानादिभिश्चैव भोजयेच्च द्विजोत्तमा
न् दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य विसर्जयेत् अतः शुद्धाश्विनशुक्लद्वादश्यामेव तद्व्रतमारभ्योपरि
तनकार्तिकशुद्धद्वादश्यां समापनीयं मासद्वयमनुष्ठेयं मासोपवासव्रतस्य च काम्यत्वात्काम्यस्य च
मलमासात्प्रागारब्धस्य मलमासेपि समाप्तिविधानान्न कश्चिद्दोषः मासद्वयसंबंधीनि त्वाब्दिकादिश्रा
द्धान्यपि क्षयमास एव कर्तव्यानि तदाह सत्यव्रतः एक एव यदा मासः संक्रांतिद्वयसंयुतः मासद्व
यगतं श्राद्धं मलमासेपि शस्यत इति एवं मासद्वयसंबंधीन्यन्यान्यपि कर्माणि तत्रैवानुष्ठेयान्यगति
कत्वात् मासद्वयगतं कर्म न तु कुर्याद्विनिर्णयः एकस्मिन्नपि मासे द्वौ यदा स्यातां तदा द्वयोस्तावेव

पक्षौ तावद्व्रतनिषेधस्त्रिंशद्दिवसीतिस्मृत्यंतरवचनाच्च क्षयमासस्य मासद्वयात्मकेन क्षयमासे यावत्यो या ति
थिमासाः पूर्वार्धे मृतस्य जातस्य च क्रमेण वर्षांतरे तत्तयाहश्राद्धं वार्षीपनोत्सवं च क्षयमासांतर्गत पूर्वमास
संज्ञके कुर्यात् तदुक्तम् तिथ्यर्द्धे प्रथमे पूर्वो द्वितीयेर्धे तथोत्तरः मासाविति बुधैश्चिंत्यौ क्षयमासस्य म
ध्यगाविति इदं च क्षयमासतिथिपूर्वोत्तरार्द्धयोः क्रमेण पूर्वोत्तरमाससंबंधीत्यस्य व्यवस्थापकं वचनं
क्षयमासकर्तव्यमासद्वयसंबंधिश्राद्धव्रतादिविषयं अपराह्णादिकालविधायकानेकवचनबाधप्र
संगात् तस्मात्कार्तिकमार्गशीर्षयोः क्षयमासांतःपाते कार्तिकसंबंधीनि मार्गशीर्षसंबंधीनि यानि श्रा
द्धव्रतादीनि यस्मिन्पक्षे यस्यां तिथौ यस्मिन्नपराह्णादिकाले विहितानि तानि क्षयमासे तत्रैव कर्तव्या
नि एवं च क्षयमासांतरेऽपि द्रष्टव्यं तत्र कार्तिकशुक्लप्रतिपद्युक्तं पितृक्षयाहैकोद्दिष्टं मार्गशुक्लप्र
तिपद्युक्तं मातृक्षयाहैकोद्दिष्टं च क्षयमासशुक्लप्रतिपदि मध्याह्न एव कर्तव्यं एवमन्यान्यपीति दिक्
अत्र सौरमानेन तुलावृश्चिकधनुषां मध्ये एकतरराशिसंक्रांतिवशेन तत्पूर्वोत्तरसौरमासयोः शुक्लकृष्ण
पक्षौ द्वावेव शिष्येते द्वौ च क्षीयेते एवं क्षयमासव्यवस्था पूर्वाचार्यैः कृता दृश्यते अथात्र यानि मल
मासे वर्ज्यानि तानि सर्वाण्यपि शुक्रास्तादावपि प्रसंगाद्वर्ज्यान्युच्यंते तथा चोक्तं बाले वा यदि वा वृद्धे शुक्रे
चास्तमुपागते मलमास इवैतानि वर्जयेद्देवदर्शनमिति अत्र केचित् मलमास इवेति सिद्धवद्दृष्टांती
करणान्यथानुपपत्त्या मलमासे प्रथमदेवदर्शननिषेधः सिद्धः अपरे तु मलमास इवेत्युत्तरवचनोक्ता
नामग्न्याधेयादिष्वेव योजयंति यथा मलमासे चंद्रसूर्यग्रहणादिकालव्यतिरेकेण तेषां निषेधस्तथै
व शुक्रबाल्यादिष्वपि यथा स्यादिति तस्मिन्पक्षे मलमासे देवतादर्शनस्य न प्रतिषेधः वस्तुतस्तु अपूर्व
देवतां दृष्ट्वा श्वः स्युर्नष्टभार्गव इत्यत्रोत्तरार्धगतमलमासेपीत्यन्वयेन मलमासेऽपूर्वदेवतादर्शननिषे
धो युक्त एवेति लल्लोपि नीचस्थे वक्रसंस्थेप्यतिचरणगते बालवृद्धास्तगे वा संन्यासो देवयात्राव
तनियमविधिः कर्णवेधस्तु दीक्षा मौंजीबंधो च चूडापरिणयनविधिर्वास्तुदेवप्रतिष्ठा वर्ज्याः सद्भिः प्र
यत्नात्त्रिदशपतिगुरौ सिंहराशिस्थिते चेति नीचस्थो मकरस्थः दीक्षा यागदीक्षा आगमदीक्षा च तथा
उद्यानचूडाव्रतबंधदीक्षाविवाहयात्राश्च वधूप्रवेशः तडागकूपत्रिदशप्रतिष्ठा बृहस्पतौ सिंहगते न
कुर्यात् दिवोदासीये गुर्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलिम्लुचे गृहकर्म व्रतं यात्रां मनसापि न चिंतये
त् अस्यापवादस्तत्रैव श्राद्धे मुंडनं चोपवासं च गौतम्यां सिंहगे गुरौ कन्यागते तु कुर्यात् तत्तीरवा
सिनां तथा आद्या सा गौतमी गंगा द्वितीया जाह्नवी स्मृता सर्वतीर्थफलं स्नानाद्गौतम्यां सिंहगे गुरौ
शुक्रादीनामस्तोक्तो ब्रह्मसिद्धांते रविसंयुतिरन्येषां ग्रहाणामस्त उच्यते ततो वाग्वार्द्धकं मौढ्यमाहुर्बाल्यं प्रकीर्तित
मिति वार्धकबाल्ययोर्मानमपि तत्रैव पक्षं प्राक्शिशुर्वृद्धस्त्वपश्चात्पंचदिनं कवेः शैशवं प्राक्पंचाहं पश्चाद्दशाहि
नं स्मृतं शैशवं वार्द्धकं पक्षं प्राक्पश्चाच्च बृहस्पतेरिति कविः शुक्रः संहिताप्रदीपे स्यात्समरात्रं गुरुशुक्रयो
र्बालत्वमस्तोदयात्प्राक् च वार्धं वृद्धो सितेऽन्यावशुभौ शिशुत्वे प्राक्सोयतस्तावुपचीयमानौ हत्तथाने बालः शु
क्रो दिवसदशकं पंचकं चैव वृद्धः पश्चादस्तांतितपमुदितः पक्षमैंद्र्यां क्रमेण जीवो वृद्धः शिशुरपि तथा पक्षम
न्यैः शिशुत्वे वृद्धो प्रोक्तो दिवसदशकं प्राग्दिनान्यष्टबालः पश्चात्प्रत्यस्ते पंचदिनानि वृद्धः पूर्वतोदये दिनत्रयं
बालः पश्चादुदये दिनत्रयं बालः पूर्वास्ते दशदिनानि वृद्ध इत्यर्थः जीवो गुरुस्तु पंचदशदिनान्युभयत्रैवेति अन्यत्रा
प्युक्तं प्राक्पश्चादुदितः शुक्रः पंचसप्तदिनं शिशुः विपरीतं तु वृद्धत्वं तद्वद्देवगुरोरपीति रत्नमालायामपि प्रा
गुदितः शिशुरह्नां त्रितयं सितः स्यात्पश्चाद्दशाहमथ पंचदिनानि वृद्धः प्राच्यां तु पक्षममरेंद्रगुरोस्तु पक्षं प्रागप्य
वाग्गपि वर्दति वसिष्ठमुख्याः अत्र विशेषः पक्षं वृद्धो महास्ते तु बालश्चात्र दशाहिकः पादास्ते तु दशाहानि
वृद्धो बालो दिनत्रयं महाल्पपादास्तलक्षणं तु द्वात्रिंशद्दिवसाश्चास्तं स महान्परिकीर्तितः न्यूनाः पादास्त ^

अत्रव्यवस्थामाह मिहिरः बहवोदर्शिताः पक्षायेबाल्येवार्धकेपिवा ग्राह्यास्तत्राधिकाःशेषादेशभेदाद्धु न
पदीतिदेशभेदश्च गार्ग्येणदर्शितः शुक्रोगुरुःप्राक्पराक्रबालोविंध्येदशावंतिषुसप्तरात्रं वंगेषुहूणेषु
वपंचषट्चशेषेषुदेशेषुत्रिदिनंवदंतीति वृद्धत्वमप्येतत्प्रमाणंद्रष्टव्यं सिंहस्थेगुरौविशेषमाह मांडव्यः
कर्णवेधजातकान्नप्राशनचूडादिकंसर्वं रविभवनस्थेजीवेकार्य्यंचर्जोविवाहस्त्विति तथा रविक्षेत्र-
गतेजीवेरविक्षेत्रगतेरवौ वर्जयेत्सर्वकर्माणिव्रतस्नानोपनयनानिच तथा गुर्वादित्येगुरौसिंहेशुक्रेवा
स्तमुपागते त्यजेद्यानंमहादानंव्रतंदेवविलोकनं लल्लः गुरुक्षेत्रगतोभानुर्भानुक्षेत्रगतोगुरुः गुर्वा
दित्यःसविज्ञेयःसर्वकर्मसुगर्हितः शौनकः एकराशिगतौभानुजीवौस्यातांयदापुनः व्रतबंधविवा
हादिशुभंकर्मविलंघयेत् राजमार्तंडे यात्राचूडांविवाहंश्रुतिविवरविधिंशांतिपुण्यप्रवेशं प्रासादोद्या
नहर्म्यंसुरनरभवनारंभविद्याविधानं मौंजीबंधप्रतिष्ठामणिकनकरदाधारणंकुर्वतेये मृत्युःसिंह-
स्थितेज्येगुरुदिनकरयोरेकराशिस्थितौवा तथा गुर्वादित्येगुरौसिंहेनष्टेशुक्रेमलिम्लुचे याम्यायने
हरौसुप्तेसर्वकर्माणिवर्जयेत् सिंहस्थेगुरौविशेषमाह शातातपः माघोयदिमघानास्ति सिंहेगुरु
रकारणं अन्यत्रापि मघाऋक्षंयदित्यक्त्वायदासिंहेगुरुर्भवेत् तदाचेत्कन्यकोद्वाहःशुभगासुप्रिया
भवेत् तथामाघीमघायुक्तामघायांचगुरुर्भवेत् महामाघस्तदाप्रोक्तोव्रतोद्वाहौपरित्यजेत्
वृद्धगार्ग्यः मीनेधनुषिसिंहेचस्थितेसमतुरंगमे क्षौरकर्मनकुर्वीतविवाहंगृहकर्मच तथा वापीकू
पतडागयागगमनंक्षौरप्रतिष्ठाव्रतं विद्यामंदिरकर्णवेधनमहादानंवनासेवनं तीर्थस्नानविवाह
देवभवनंमंत्रादिदेवेक्षणं दूरेणैवजिजीविषुःपरिहरेदस्तंगतेभार्गवइति लल्लोत्रपुनर्विशेषमाह उपप्लवे
प्रतीतेभानुभान्वोरर्द्धोदयेवाकपिलाख्यषष्ठ्यां सदासरेव्यासमयेचतीर्थयात्राविधिःसंक्रमणेचशस्तः
गुरुशुक्रास्तमयादिनिषिद्धकालेग्रहणादौनदोषइत्यर्थः वसिष्ठः अतिचारगतोजीवस्तंराशिंनैतिचे
त्पुनः लुप्तसंवत्सरोज्ञेयःसर्वधर्मबहिष्कृतः अस्यापवादः वृषेमेषेझषेकुंभेयद्यतीचारगोगुरुः न
तत्रकाललोपःस्यादित्याहगालवोमुनिरिति राजमार्तंडेत्वन्येषांवार्धकांतर्भूतत्वेनाभिमतः संध्या
कालोपिदृष्टयगक्रः भवेत्संध्यागतःपश्चादस्तमेष्यद्दिनत्रयं दिनानिपंचपूर्वेणतत्कृतेकर्मवर्जयेत्
बालेवृद्धेचसंध्यांशेचतुःपंचत्रिवासरान् जीवेचभार्गवेचैवविवाहादिषुवर्जयेत् बालेवृद्धेचसंध्यायांन
ष्टेचभृगुनंदने दुर्गताचासतीवंध्यामृत्युयुक्ताफलंक्रमात् बाल्येचदुर्भगानारीवृद्धेनष्टप्रजाभवेत्
नष्टेचमृत्युमाप्नोतिसर्वमेतद्गुरावपीति अत्रचतुःपंचाद्यल्पकालकथनमापद्विषयं यत्तुदक्षि-
णायनेचान्तर्मासेचकर्मनिषेधः समयेषूदगयननियमस्तद्विषयः काम्ययज्ञादिविषयश्च यथावि
ष्णुधर्मोत्तरे शेतेचचतुरोमासान्यावद्भवतिकार्तिकः विशिष्टानप्रवर्तंतेतदायज्ञादिकाःक्रियाः ना-
भिषेकोन्नदक्षेत्रेयावद्भवतिकार्तिकः भविष्योत्तरेपि सुप्तेवापिजगन्नाथेकेशवेगरुडध्वजे निव-
र्तंतेक्रियाःसर्वाश्चातुर्वर्ण्यस्यभारत ताश्चविवाहव्रतबंधादिचूडासंस्कारदीक्षणं गृहयज्ञप्रवेशादि
दानार्चनप्रतिष्ठितिः पुण्यानियानिकर्माणिवर्जयेद्दक्षिणायनइति सर्वाण्यत्रतत्रपरिपठिताः
भोजराजीये सुप्तेहरौप्रकटशेषफणोपधानेलक्ष्मीकराब्जपरिभाजितपादपद्मे मीनेरवौधनुषिचा-
स्तमितेचशुक्रे बालक्रियाविधिरसौमुनिभिर्निषिद्धइति एवंगुर्वतिचारसिंहस्थमकरस्थगुरुकेन्द्रा-
प्युक्तेनस्यमाहात्विसर्वेषांशुभानामावश्यककर्मणां अकालहृष्ट्याच्छतैकाहादिषुचपरिगणिताना-
नामिवयात्रादीनांनिषेधस्तत्रज्योतिःशास्त्रवचनेभ्योज्ञेयः दृष्टफलमन्यथाप्रसक्तानुप्रसक्तचिंतयाप्रकृ-
तमनुसरामः यदुक्तमनाहृतंतीर्थस्नानमनादिदेवतादर्शनंमलमासादौनकर्तव्यमिति तत्प्रयागया-
त्रांप्रतिप्रसवोवायुपुराणे गयायांसर्वकालेषुपिंडंदद्याद्विचक्षणः अधिमासेजन्मदिनेशालेचगुरुशुक्र

योः नन्वेवं गयाश्राद्धं सिंहस्थेपि बृहस्पतौ इति अत्र श्राद्धस्य यात्रापूर्वकत्वाद् गयां प्रति यात्राया एव निषिद्धत्वमर्थः तथा गोदावर्य्यां गयायां च श्रीशैले ग्रहणद्वये सुरासुरगुरूणां च मौढ्यदोषो न विद्यते ग्रहणद्वये तन्निमित्त कक्रुरुक्षेत्रकयात्रादावित्यर्थः अस्तादेरपवादः काशीखंडे न ग्रहास्तोदयकृतो दोषो विश्वेश्वरालये सदा सौम्यायनं तत्र सदा तत्र महोदय इति एतानि काशीस्तुतिपराणीति मयूखे तत्र एतेषां काशीस्तुतिपरत्वेपि उपविहितं देवेभ्यो धारयतीति यावत् बलवत्तर बाधकाभावे विधिकल्पकत्वस्य युक्तत्वात् इत्यलं बहु पल्लवितेन इति श्रीमन्महाराजाधिराजरघुवंशतिलकश्रीरणवीरसिंहमहाराजकारितेकृत्यरत्ना

कराभिधेये धर्मोदयनिबंधे ऽधिमासक्षयमासभेदद्वयात्मकमलमासनिर्णयः

अथ संक्रांतिमासनिर्णयप्रसंगात् संक्रांतिनिर्णयश्चोच्यते ॥

तत्र मेषादिद्वादशराशिषु क्रमेण संचरतः सूर्यस्य पूर्वस्माद्राशेरुत्तरराशौ संक्रमणं प्रवेशः संक्रांतिशब्देनोच्यते तास्तु राशिसंख्यानक्रमेण द्वादश प्रसिद्धाः तासां संज्ञा अपि द्वादशैव तदाह वसिष्ठः अयने द्वे विषुवती चतस्रः षडशीतयः चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः कृषककर्कटसंक्रांती द्वे तूदग्दक्षिणायने तुलामेषौ विषुवती तयोर्मध्ये ततोपराः वृषवृश्चिककुंभेषु सिंहे चैव यदा रविः एतद्विष्णुपदं नाम विषुवादधिकं फलमिति कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः षडशीतिमुखा प्रोक्ताः षडशीतिगुणाः फलैः दीपिकायामपि हर्य्यग्निर्गोघसिंहवृश्चिकघटे घर्कस्यायः संक्रमः कन्यामीनधनुर्नृयुक्षु षडशीत्याख्यस्तुलामेषयोः प्रोक्तं तद्विषुवं द्वयेयनमदः क्रांकीटकेदक्षिणमिति हर्य्यग्निर्विष्णुपदं न्युक् मिथुनं आसामेव संक्रांतीनां वारभेदेन नामभेदो रत्नमालायां घोराध्वांक्षी महोदरी च मंदाकिनी तथा च मिश्रा राक्षसी चार्कपुत्रे इति नत्वेवं घोराध्वांक्षीमहोदरीश्च संक्रांतिरारे च महोदरी स्यात् मंदाकिनी ज्ञे च गुरौ च मंदा मिश्रा भृगौ राक्षसिकार्कपुत्रे इति नत्फलान्यपि तत्रैव आसु च पुण्यकाल उक्तः त्रिवत्सरमष्टमासं नवद्वादशपक्षं क्रमेण घटिकाचिंता स्तत्पुण्य पारमार्थिकमिति आसु च स्नानादिकमुक्तं नागरखंडे रवेः संक्रमणं राशौ संक्रांतिरिति कथ्यते स्नानदानजपश्राद्धहोमादिषु महाफला हेमाद्रौ विष्णुधर्मे आद्यं संक्रमणे भानोः प्रशस्तं पृथिवीपते संवर्तः अमावास्या द्वादशी च संक्रांतिषु विशेषतः एताः प्रशस्तास्तिथयो भानुवारस्तथैव च अत्र स्नानं जपो होमो देवतानां च पूजनं उपवासस्तथा दानमेकैकं पावनं स्मृतमिति देवीपुराणे विषुवे षु च यद्दत्तं पुण्यं दत्तं भवति चाक्षयं एवं विष्णुपदे चैव षडशीतिमुखेषु च भारद्वाजः षडशीत्यां तु यद्दत्तं यद्दत्तं विषुवद्द्वये दृश्यते सागरस्यांतस्तस्यांतो नैव दृश्यते वसिष्ठः अयने कोटिपुण्यं च लक्षं विष्णुपदे फलं षडशीतिसहस्रं तु षडशीत्यां स्मृतं बुधैः शतमिंदुक्षये दानं सहस्रं तु दिनक्षये विषुवे शतसाहस्रं व्यतीपाते त्वनंतकमिति स्कांदे नागरखंडे य एते ते मया प्रोक्ताः कालाः संक्रांतिपूर्वकाः नैतेषु विद्यते विप्रा यत्नेन तु संस्थिताः श्राद्धं पापि यद्दत्तं कुपात्रेभ्योपि मानवैः अकालेपि च तत्सर्वं मन्यमक्षयतां व्रजेत् अत्र स्नानाकरणे दोषमप्याह हेमाद्रौ शातातपः रविसंक्रमणे प्राप्ते न स्नायाद्यस्तु मानवः सप्तजन्मानि रोगी स्यान्निर्धनश्चैव जायते संक्रांतौ यानि दत्तानि हव्यकव्यानि दातृभिः तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनीति पापक्षयकामस्य संक्रांतिनिमित्ताहोरात्रोपवासः अयनविषुवयोस्त्रिरात्रोपवासश्च विहितो वसिष्ठेन उपोष्यैवं तु संक्रांतौ स्नातो योभ्यर्चयेद्धरिं प्रातः पंचोपचारेण सकाम्यं फलमश्नुते इति हारीतः अयनद्वये च वसिष्ठः अयने विषुवे चैव त्रिरात्रोपोषितो नरः स्नात्वा संपूज्ये द्भानुं सर्वकामफलं लभेत् अयाक्रावाहापस्तंबः अयने विषुवे चैव ग्रहणे चंद्रसूर्ययोः अहोरात्रोपोषितः स्नातः सर्वपापैः प्रमुच्यते इति एतच्च पुत्रवद्गृहस्थव्यतिरिक्तविषयं पुत्रवता गृहस्थेन सकामेनापि संक्रांतिनिमित्तोपवासो न कार्य्यः आदित्येहनि संक्रांतौ ग्रहणे चंद्रसूर्ययोः उपवासो न कर्तव्यो गृहिणा पुत्रिणा तथेति वचनात् संक्रांत्यामुपवासं च कृष्णैकादशिवासरे चंद्रसूर्यग्रहे चैव न कुर्य्यात्पुत्रवान् गृहीतिना

विंदुकोयथेति इदंचवाक्यमुपवासस्यद्रूषकमितिनिषेधेमिधानात् अतएवबौधायनेनाप्युपवासतिथेरुदयका
लीनत्वनियमउक्तः उदयेतूपवासस्यनक्तस्यास्तमयेतिथिरिति भविष्योत्तरपुराणे व्रतोपवासनियमेघटि
केकायदाभवेत् सातिथिःसकलाज्ञेयापित्र्येचापराह्णिकीति पाद्मस्कंदयोरप्येवं यदातूत्तरदिने उपवा
सतिथिःस्वल्पापिनलभ्यते तदा निषिद्धापूर्वतिथिविद्धाप्युपोष्या तथाचऋष्यशृंगः अविद्धानिनिषि
द्धैश्चेत्तुलभ्यंतेदिनानितु मुहूर्तैःपंचभिर्विद्धाग्राह्यैवैकादशीतिथिः तदार्थविद्धान्यन्यानिदिनान्युपवसेन्न
रइति अरुणोदयमारभ्यपंचमुहूर्त्तकोवेधः सूर्योदयमारभ्यसार्द्धमुहूर्त्तद्वयवेधोपिज्ञातव्यः अवि
द्धानामलाभेतुपयोदधिफलानिवा सकृदेवाल्पमश्नीयान्नोपवासस्ततोभवेदिति अथसिद्धविरुद्धादिकं
लिख्यते इयंशुक्रवारेणसिद्धोच्यते तदुक्तम् शुक्रेणप्रतिपत्षष्ठ्येकादशीचत्रयोदशी सिद्धाभगोत्तराषा
ढाहस्तश्रवणरेवती अत्रसर्वाणिशुभकर्माणिसिद्ध्यंतीति भौमवारेणेयंविरुद्धा तदुक्तम् कुजेतुवैश्वदे
वार्द्राप्रतिपत्पूर्वभाद्रित्यादि बुधवारयुक्ताचेत्संवर्त्तकयोगोभवति बुधेधनिष्ठाभरणीप्रतिपच्चविवर्जयेत्
अत्रतिथिपत्वेनवह्निःपूज्यः अस्यांयोगिनीसंमुख्यान्नपूर्वस्यांयात्रान्याय्या इतिप्रतिपत्सामान्यनिर्णयः
अथद्वितीयानिर्णीयते तत्रादौशुक्लकृष्णद्वितीयाध्यानं हेमाद्रौ द्वितीयाहंसमारूढापात्रपुस्तकपाणि
णी कृष्णाचक्रगदाभासाद्वतस्यासात्तकुंडिकेति अथद्वितीयासामान्यनिर्णयः तत्रकृष्णापूर्वा
शुक्लोत्तरेतिहेमाद्रिः कृष्णाद्वितीयादिमा पूर्वाह्णेयदिसासितानुपरतः सर्वैर्निदीपिकोक्तेः साद्विती
यापरोपोष्या पूर्वविद्धानतोन्यथेतिस्मृत्यंतरं एकादश्यष्टमीषष्ठीद्वितीयाचचतुर्दशी त्रयोदशीअमा
वास्याउपोष्याःस्युःपरान्विता इतिविष्णुधर्मोत्तराच्च मदनरत्नेपि शुक्लाद्वितीयापराग्राह्या युग्माग्नीतिवच
नात् कृष्णद्वितीयातुपूर्वविद्धैवग्राह्या द्वितीयाप्रतिपद्युक्तेत्यापस्तंबवचनात् प्रतिपत्संमुखीका
र्यिद्वितीयाहिनसत्तमेति ब्रह्मवैवर्त्तवचनाच्च प्रतिपत्संमुखीप्रतिपदग्रगतानद्वितीयेत्यर्थः इत्युक्तं तत्ते
षुवचनेषुद्वितीयामात्रश्रवणात्कथंद्वितीयाविशेषविषयत्वमेषामितिचेदुच्यते युग्मवाक्येप्रति
पदोऽमावास्यायुक्तत्वासंभवाच्छुक्लप्रतिपदोऽमावास्यायुक्तायायुग्मवाक्यप्राप्तत्वमुक्तं तथाच शुक्लप्र
तिपद्द्वितीयायुग्ममेतच्छस्तमितिदोषानभिधानेननिषिद्धत्वाभावान्निगमवाक्यस्यविषयः एवंचप्र
तिपत्सद्वितीयेत्यादिवाक्यस्यशुक्लप्रतिपद्द्वितीयातृतीयायुग्मविषयत्वेनिगमवाक्यविरोधः निगमवा
क्यस्यचद्वितीयाविषयत्वेनिरवकाशादापस्तंबवचनविरोधइतियथोक्तविषयत्वमेवांगीकर्त्तव्यं इतिद्विती
यासामान्यनिर्णयः हस्पतिवारयुक्ताद्वितीयासुविधिपूजनमुक्तं ब्रह्मपुराणे वृहस्पतेर्द्वितीयायांविधि
वद्विधिपूजनं कृत्वानक्तंसमश्नीयाल्लभतेभूतिमुत्तमामिति विधिर्ब्रह्मातत्पूजनंचगायत्र्यापौराणमंत्रे
णवा यस्यानक्तव्रतविशेषेतुतत्कालव्यापिन्येवद्वितीयाग्राह्येतिसिद्धांतः अत्रसिद्धविरुद्धादिकं द्वि
तीयाबुधवारेणसिद्धाज्योतिषे बुधवारेद्वितीयाचद्वादशीसप्तमीपुनः मृगोत्तराषाढहस्तश्रुतिकानिकासिद्धि
दायिकेति अत्रकार्यारंभःसिद्धोभवति इयंशुक्रवारेणविरुद्धा अत्रशुभकार्यंनकार्यम् भार्गवेरोहिणीज्ये
ष्ठाद्वितीयासप्तमीपुनः पुष्योमघातथाश्लेषासर्वकार्येषुवर्जिता इति अथात्रद्वितीयायांवैवाहिकंक
र्मभूषणकर्मरथ्यादीनांकर्ममार्गगमनंव्रतारंभपौष्टिकंकर्मचकुर्वीत तदुक्तंभास्करेण व्रतपौष्टिके
द्वितीयाद्वादश्योःसप्तमीषुकुर्वीत पत्नुहरनगृहासनशयनशकटयानाद्यकर्माणीति द्वितीया
यांविट्क्षत्रियश्चद्वैर्मलापहंस्नानंनकर्त्तव्यं तदुक्तंभास्करेण त्रयोदश्यांद्वितीयायांदशम्यांचविशेषतः
शूद्रविड्क्षत्रियाःस्नानंनाचरेयुःकथंचनेति स्नानंतुत्रीन्दशमीत्रयोदशीतिद्वितीयाह्निनयेनिहंति
अत्रमलापहस्नाननिषेधएवनतुनित्यनैमित्तिककाम्यबाधः अत्रोत्तरस्यांदिशियात्रानकार्यायतस्मि
न्नस्यांरवेर्द्वितीयादग्धाभवति इतिद्वितीयानिर्णयः॥ अथतृतीयानिर्णयः तत्रादौशुक्लकृष्णाभेदेन

तृतीयाध्यानम् तृतीयारुणगागौरीशूलपात्रधरासिता तृतीयातार्क्ष्यगानीलाशंखपात्रधराद्विदोः द्विभुजा
इत्यर्थः तृतीयारंभाव्यतिरिक्ताचतुर्थीयुतैवोपोष्या एकादश्यष्टमीषष्ठीपौर्णमासीचतुर्दशी अमावास्या
तृतीयाचताउपोष्याःपरान्विता इतिविष्णुधर्मोत्तरवचनं युग्मवाक्यं रंभाव्रतविषयं रंभाख्यांवर्जयित्वातत्तृ
तीयांद्विजसत्तम अन्येषुसर्वकार्येषुगणयुक्ताप्रशस्यत इतिब्रह्मवैवर्तात् गणयुक्ताचतुर्थीयुक्ता अ
परस्वापि चतुर्थीसंयुतायाचसातृतीयाफलप्रदा अवैधव्यकरीस्त्रीणांपुत्रसौभाग्यदायिनीतिअस्यांद्वि
तीयावेधनिषेधोब्रह्मवैवर्ते द्वितीयाशेषसंयुक्तांयाकरोतिविमोहिता सावैधव्यमवाप्नोतिप्रवदंतिमनी
षिणः दीपिकायामपि रंभांविहायोत्तरतस्तृतीयामित्यादि अयंचद्वितीयावेधःस्वल्पोपिगौरीव्रतेषुत्याज्यो
नसूक्ष्मोन्तरयपरिमितएव अतएवमदनरत्नेस्कंदपुराणे कलाकाष्ठापिवाचैवद्वितीयासंप्रदृश्यते सातृती
यानकर्तव्याकर्तव्यागणसंयुतेतितेनैतेषुगौरीव्रतेषूत्तरदिनेस्वल्पापितृतीयाग्राह्या नत्रिमुहूर्तत्वक
र्मकालव्यापित्वाद्यादरः मुहूर्तमात्रसत्वेपिदिनेगौरीव्रतंनरः शुद्धाधिकायामप्येवंगणयोगप्रशंसनादिति
माधववचनात् यदातूत्तरदिनेस्वल्पापिनलभ्यते तदाद्वितीयाविद्धापिग्राह्या तदाहवृद्धवसिष्ठः एकाद
शीतृतीयाचषष्ठीचैवत्रयोदशी पूर्वविद्धापिकर्तव्यायदिनस्यात्परेहनीति रंभाव्रतविषयेतुपूर्वैवग्राह्या
कृष्णाष्टमीबृहत्तपासावित्रीवटपैतृकी अनंगत्रयोदशीरंभाउपोष्याःपूर्वसंयुता इतिनिगमवचनात्
एवंचसर्वाणितृतीयाव्रतानिचतुर्थीयुतायामेवकार्याणीतिसिद्धांतः पक्षद्वयगतास्वपि तृतीयासुति
थीशत्वेनगौरीपूज्या तदुक्तं चतुर्थीगणनाथस्यगौर्यास्तत्पूर्ववासरइति अत्रसिद्धविरुद्धादिकंलिख्यते
तृतीयाभौमवारेणसिद्धा तदुक्तं भौमेषष्ठीतृतीयास्यादष्टमीचत्रयोदशी मूलाश्विनीमृगोश्लेषासिद्धाउ
त्तरभाद्रपात्तृतीयाबुधवारेणविरुद्धा बुधेधनिष्ठाभरणीदास्त्रमूलसमन्विता तृतीयानवमीप्रतिपद्रेव
तीभिर्विवर्जितेति विरुद्धयोगेषुशुभंकर्मनकार्यं अत्रकृत्यानि तयास्तुसंग्रामहलोपयोगिकार्याणि
सिद्धानिविनिर्मितानीति तृतीयायामाग्नेय्यांयोगिन्योवसंत्यतस्तत्संमुखीयात्रानकार्या इतितृती
याप्रकरणं ॥ अथचतुर्थीनिर्णीयते तत्रादौशुक्लकृष्णभेदेनचतुर्थीध्यानम् नीलोत्पलदलश्यामा
चतुर्थीमूषकस्थिता परशुंबिभ्रतीपात्रंपीतवस्त्रादिसंयुता १ चतुर्थीकज्जलाभासामहिषस्थाचतुर्भु
जा धत्तेदामालिकांदंडंचतुर्थीयाचदंष्ट्रिणीति २ साचतुर्थीतिथिर्गणेशकुंडचतुर्थीबहुलाव्रतव्यति
रिक्तेषुपंचमीयुतैवग्राह्या तथाच गणेशकुंडबहुलाव्यतिरिक्ताःप्रकीर्तिताः चतुर्थीपंचमीविद्धादैवतं
त्रयोगतः मदनइतिमदनरत्ने ब्रह्मवैवर्तवचनात् युग्मभूतानीतियुग्मवाक्यात् एकादशीतथाषष्ठी
अमावास्याचतुर्थिका उपोष्याःपरसंयुक्ताःपराःपूर्वेणसंयुता इतिवृद्धवसिष्ठोक्तेश्च गणेशव्रतेचतु
र्थीतृतीयायुतैवोपोष्या चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यत इतिबृहस्पत्युक्तेः हेमाद्रौब्रह्मवैवर्ते
चतुर्थीसहितायातुसातृतीयाफलप्रदा चतुर्थीचतृतीयायांमहापुण्यफलप्रदा कर्तव्याव्रतिभिर्वत्स
गणनाथसुतोषिणीति गणनाथंसुतरांतोषयतीत्यर्थः तथाच स्कंदपुराणे कृष्णाष्टमीचतुर्थीचसा
वित्रीवटपैतृकी शुक्लत्रयोदशीरंभानोपोष्याःपरसंयुताः अत्रापिचतुर्थीगणेशचतुर्थ्येववेदितव्या
अन्यथायुग्मभूतानीतिनिगमवाक्यविरोधःस्यात् नागचतुर्थीतुमध्याह्नव्यापिनीग्राह्येतिनिर्णयामृ
तेमाधवीये चतुर्थीगणनाथस्यमातृविद्धाप्रशस्यते मध्याह्नव्यापिनीचेत्स्यात्परतश्चेत्परेहनीति बृहस्प
तिवचनात् प्रातःशुक्लतिलैःस्नात्वामध्याह्नेपूजयेन्नृपेति तत्कालाभिधानाच्च तेनपरदिनेतथात्वेपरा
अन्यथापूर्वैवमुक्तं तथाचयदिसंपूर्णाचतुर्थीसंयुतेयदि सत्ययाचैवकर्तव्या नागविद्धानकारयेदितिव
चनात् एवंभाद्रशुक्लचतुर्थ्यपिमध्याह्नव्यापिनीग्राह्या दिनद्वयेतथात्वेमातृयोगस्यसत्वात्पूर्वैवेतिके
चित् अन्येतुपूर्वदिनेमुहूर्तत्रयादिरूपस्यतृतीयायोगस्याभावात् परदिनेमाधवोक्तमध्याह्नव्यापित्व

सत्वात्संपूर्णत्वाच्चपरेत्याचष्टे दिनद्वयेतदभावेतु गौरीव्रतेपूर्वैवेतिनिर्णयसिंधौ अयमेवपक्षोज्याया
न् योयस्यविहितःकालःकर्मणस्तदुपक्रमे तिथिर्याभिमतासातुकार्य्यानोपक्रमान्वितेति बोधाय
नवचनात् कर्मोपक्रमकालगतत्वतिथिर्ग्राह्येत्यनयुग्मादर इतिनिर्णयदीपे उपक्रमस्तु तैला
भ्यंगपकुर्वीतदंतोष्ठजांसमाचरेदित्यनेनोक्तः विशेषस्तत्तत्प्रकृतनिर्णयेवक्ष्यते अथसिद्धविरुद्धादि
कं चतुर्थीशनिवारेणसिद्धा जीवेनविरुद्धा शनौचतुर्थीनवमीचतुर्दश्यथरोहिणी शततारास्वा
तिमघाभाग्यंचैवतुसिद्धयइति जीवेष्टमीचतुर्थीचत्वाष्ट्रीचोत्तरफाल्गुनी रोहिणीवारुणंचैवविरुद्धं
मृगशीर्षकमिति अत्रकल्पमुच्यते शत्रुवधाग्निविषयप्रयोगाद्यनिष्टंकर्मचतुर्थ्यादिरिक्तातिथिषुकार्यं
तदुक्तंभास्करेण चतुर्थ्यांचचतुर्दश्यांनवम्यांच्यामर्दनं दमनंबंधनंभेदमभियोगाभिचारकं विषाग्निसंप्र
योगंचकुर्वीतकपटानिचेति चतुर्थ्यानेऋतेयोमिन्यः प्रतिघसंति अतस्तत्संमुखीयात्रातत्रनकर्तव्या
क्रमात्पूर्वोत्तरसंज्ञेयानैऋत्यइत्युक्तत्वात् रविभौमशनीनामन्यतमेक्रूरग्रहेकर्कटस्थेसतिचतुर्थीशुभ^
कार्येषुवर्जिता आद्यास्ततस्वइत्युक्तत्वात् सूर्येहृषकुंभस्थितेसतिचतुर्थीदग्धाभवतीति ॥ इतिश्री
रणवीरसिंहमहाराजकारितेकृत्यरत्नाकरेचतुर्थीनिर्णयप्रकरणम् ॥ ॥

अथपंचमीनिर्णीयते ॥ तत्रादौशुक्लाकृष्णापंचमीप्रमाणम् ग्राह्यस्याचंद्रगौरासापंचमीसाद्यकुंडिके
ति १ पंकजस्याप्रवालाभाफणामलकभूषणा शार्ङ्गमुद्रांतथापाशंबिभ्राणापंचमीमता पंचम्योमाध
वमतेसर्वाश्चतुर्थीयुताःकार्याः चतुर्थीसंयुताकार्य्यापंचमीपरयानतु दैवेकर्मणिपित्र्येचशुक्लपक्षेतथा^
घासितइतिहारीतोक्तेः स्कंदपुराणेपि पंचमीचतुर्थीसहिताविभो इति तथापद्मपुराणभविष्योत्तरपुरा
णयोः पूर्वोत्तरविद्धाविषयोविधिनिषेधौस्मर्येते पंचमीचचतुर्थ्यातुषष्ठ्यायुक्तानकारयेदिति मदन
रत्ने पूर्वविद्धाग्राह्येत्युक्तं युग्मभूतानामितियुग्मवचनात् पंचमीसप्तमीचैवदशमीचत्रयोदशी प्रतिप
न्नवमीचैवकर्तव्यासंमुखीतिथिरितिपैठीनसिवचनाच्च स्कंदोपवासव्रतेतु माधवमतेपरात्राकार्य्या
स्कंदोपवासेस्वीकार्यापंचमीपरसंयुतेतिजाबालिवचनात् बलदेवव्रतीन् मदनरत्नेनिर्णयामृतेचस्कं
दोपवासपंचमीव्यतिरिक्तासर्वापिपंचम्युपवासेपूर्वविद्धैवग्राह्या प्रतिपत्पंचमीचैवउपोष्यापूर्वसं
युतेतिजाबालिवचनात् नागव्रतेतुपंचमीपरविद्धाग्राह्या तदुक्तंस्मृत्यंतरे श्रावणेपंचमीशुक्लासा
प्रोक्तानागपंचमी तांपरित्यज्यपंचम्यश्चतुर्थीसहिताहिता इतिहेमाद्रिमतेतु कृष्णापूर्वापरासि^
ताइति दीपिकायामपि कृष्णापूर्वयुतासितापरयुतास्यात्पंचमीति यत्तु पंचमीतुप्रकर्तव्याषष्ठ्या
युक्तातुनारदेत्यापस्तंबीये तत्रनागपूजाविषयमित्यनंतभट्टनिर्णयामृतादयः चमत्कारचिंताम
णौच पंचमीनागपूजायांकार्य्याषष्ठीसमन्विता तस्यांतुतोषितानागाइतरासचतुर्थिकेति नागपू
जायांपरैवेति अथपंचम्यांसिद्धविरुद्धादिकं पंचमीगुरुवारेणसिद्धा गुरोदशमिपंचम्योपोष्णमासी
विशाखिका भाग्यानुराधासिद्धाःस्युस्तथापुष्यपुनर्वसूइति भार्गवपूर्वाफाल्गुनी पंचमीशनिवारेण
निषिद्धा सौरेहस्तोत्तराषाढारेवतीचित्रयासह पंचमीचैवषष्ठीचआर्यम्णासहवर्जितेति पंचम्या^
दिपूर्णिमातिथिषुमांगल्यविवाहयात्रापौष्टिकादिशांतिककर्माणि तथाश्रीपतिः पूर्णासुमांगल्य
विवाहयात्रासपौष्टिकंशांतिककर्मकार्य्यं सदैवदर्शेपित्र्यकर्ममुक्त्वानान्यद्विदध्याच्छुभमंगलादि पौ
ष्टिकंनामायुर्वृद्ध्यर्थंक्रियमाणंहोमादिकंकर्म शांतिकंग्रहोत्पातादिशांतयेक्रियमाणं शुभमंगला
दीनि शुभंशांतिकादिमंगलंविवाहादि इयंपंचमीरविभौमशनिनामन्यतमेक्रूरग्रहे मेषादिराशि
चतुष्टयस्थितेदग्धाभवति अत्रचदक्षिणस्यांयोगिनीसंमुख्यात्यात्रानकार्या एतद्वयगतास्तस
तासपंचमीयुतिथिष्वन्येननागाःशेषादयःपूज्याः उक्तंच शेषादीनांफणीनांचपंचम्यांपूजनंभवेदिति

श्रीमन्महाराजरणवीरसिंहकारितेकृत्यरत्नाकरेपंचमीसामान्यनिर्णयप्रकरणम् ॥

अथषष्ठीसामान्यनिर्णयः तत्रादौशुक्लाकृष्णभेदेनषष्ठीध्यानम् हेमाद्रौ मयूरगारूढाषष्ठीपात्रकुक्कु
टधारिणी १ कृष्णपक्षे चाद्वामयूरगारक्ताशक्तिकुक्कुटधारिणी एकास्याद्विभुजाषष्ठीरक्तवस्त्रासुभू
षणा नीलकुंडलकंठासाजटाखड्गडमरूषणाइति शुक्लपक्षेषष्ठीतिथिरुपवासव्रतादिषुस्कंदव्रताति
रिक्तेषुसप्तमीयुतैवग्राह्या षण्मुख्यपारितियुग्मवाक्यात् बृहस्पतिनाप्युक्तं एकादश्यष्टमीषष्ठीद्विती
याचचतुर्दशी अमावास्यातृतीयाचताउपोष्याःपरान्विताइति एतत्समुच्चयविषयमेतत्रयोश्चे
वमेव स्कांदेपि नागविद्धानकर्तव्याषष्ठीचैवकदाचन सप्तमीसंयुताकार्य्याषष्ठीधर्मार्थचिंतकैरिति
नागविद्धात्पयाषष्ठीशिवविद्धात्सप्तमी दशम्येकादशीविद्धानोपोष्याःस्युःकथंचनेति शिवरहस्य
सौरपुराणवचनेनपूर्वविद्धायानिषेधाच्च अत्रपंचमीवेधः षण्मुहूर्त्तात्मकोज्ञेयः तथाचमाधवीये
स्कंदपुराणे नागोद्वादशनाडीभिर्दिक्चदशभिस्तथा भूतोष्टादशनाडीभिर्दूषयत्युत्तरांतिथिमि
ति तेनषण्मुहूर्त्तन्यूनपंचमीयोगे वैवोपोष्या तदुक्तंस्कंदपुराणे कृष्णाष्टमीस्कंदषष्ठीशिवरात्रि
चतुर्दशी एताःपूर्वयुताःकार्यास्तिथ्यंतेपारणंभवेदिति अस्यांसप्तमीभानुयोगेपद्मकाख्योयोगउ
क्तो निर्णयामृते षष्ठीचसप्तमीयोगोवारेचेदंशुमालिनः योगोयंपद्मकोनामसूर्यकोटिग्रहैःसमइति
अत्रस्नानदानादिकृतमक्षयफलदंभवतीति सर्वेष्वपिमासेषुविशेषादयंयोगोबोद्धव्यइतिनिर्णय
सिंधौ अचलासप्तम्यामित्यन्ये अस्यामेवरविवासरयोगेलोलार्कयात्रोक्ताकाशीखंडे कृतानियानिपापानि
तैःसंवत्सरादपि नश्यंतितत्क्षणात्सर्वाणिषष्ठ्यांलोलार्कदर्शनादिति वार्षिकयात्राप्युक्ता तत्रैव मार्गशीर्ष
स्यसप्तम्यांषष्ठ्यांवारविवासरे विधायवार्षिकींयात्रांनरःपापात्प्रमुच्यतइति षष्ठीव्रतानांविशेषकृ
त्यं चैत्रादितोवक्ष्यते अथात्रषष्ठ्यांसिद्धविरुद्धादिकमुच्यते शुक्रेणप्रतिपत्षष्ठीतिप्रतिपन्निर्णयेप्रोक्तंप्रा
क् भौमेनापिसिद्धा भौमेषष्ठीतृतीयास्यादितिचोक्तमेव षष्ठीशनिवारेणविरुद्धा तदुक्तंसौरे हस्तोत्तरा
षाढरेवतीविद्यासह पंचमीरेवषष्ठीचअर्यमाणसहवर्जितेति षष्ठ्यांशनिवारेणक्रकचाभिधोयो
गः तदुक्तंरत्नमालायां तिथेश्चवारस्यचयत्रसंख्यात्रयोदशस्युर्मिलनेकृतेसति एतत्सयोगः क्र
कचाभिधानकोविवर्जनीयः शुभकर्मसुध्रुवमिति अत्रदंतकाष्ठतैलाभ्यंगस्नानेचनिषिद्धं यथा दंत
काष्ठेकुलद्रव्यहानिनाशोयथाक्रमं जायते षष्ठ्यमावास्याप्रतिपत्सुकृतेसति तथाचरत्नमालायां
षष्ठीयुतैलंपलमष्टमीषुक्षौरक्रियांचैवचतुर्दशीषु स्त्रीसेवनंनष्टकलासुपुंसामायुःक्षयार्थमनयोव
दंतीति अत्रदंतकाष्ठादिनिषेधस्तात्कालिकतिथ्यामेव तदुक्तं स्नानेचाभ्यंजनेचैवदंतधावनमैथुने
तिथिस्तात्कालिकीग्राह्यानवामरणजन्मनोरिति अत्रषष्ठीयुतैलंतितत्तैलमेवनिषिद्धं ननुसर्वतै
लं तदुक्तंस्मृतिसमुच्चये यत्रतैलंनिषिद्धंस्यात्तिलतैलंनिषिध्यते अभ्यंगाद्यनिषेधेनसार्षपादेरपीष्य
तइति पुष्पयुक्तैःसर्वदासर्वथाप्यऽनिषेधः सार्षपंगंधतैलंचयत्तैलंपुष्पवासितं अन्यद्रव्ययुतंतैलंन
दुष्यतिकदाचनेतिप्रचेतोवचनात् रविभौमशनीनामेकतमेक्रूरग्रहेसिंहस्थितेषष्ठीदुष्टाभवति पराः
परेषामित्युक्तत्वात् तथाकर्कमेषस्थसूर्येषष्ठीदग्धाभवति तत्रशुभकर्मनकार्यं षष्ठ्यांपश्चिमेयो
गिनीसांमुख्याद्यात्रानकार्य्येतिसर्वषष्ठीनिर्णयः इतिश्रीरघुवंशतिलकश्रीमहाराजरणवी
रसिंहकारितेकृत्यरत्नाकरेषष्ठीसामान्यनिर्णयः

अथसप्तमीसामान्यनिर्णयः ॥ तत्रादौशुक्लाकृष्णभेदेनसप्तमीध्यानं ताम्रवर्णाजपाभासाहयस्यासप्त
मीमतेति कृष्णपक्षे नीलकुंतलकंठासाजटाखड्गडमरूधिता इयस्यासप्तमीगौरीद्विभुजाबलपात्रि
णी हेमाद्रौ शुक्लपक्षेसप्तमीतिथिरुपवासादिषुषष्ठीयुतैवग्राह्या युग्मवाक्यात् षष्ठीयुतासप्त

मीचेत्कर्त्तव्यासाचसर्वदा षष्ठीचसप्तमीयत्रतत्रसन्निहितोदरिरिति मदनरत्नादयःस्कंदवचनात् षष्ठेकादश्य
मावास्यापूर्वविद्धातथाष्टमी सप्तमीपरविद्धाचनोपोष्यंतिथिपंचकमिति स्कंदपुराणवचनेपरविद्धायाःस
प्तम्याउपवासेनिषेधाच्च अत्रमाधवः यदापूर्वेद्युरस्तमयपर्यंतंषष्ठी परेद्युस्तिथिक्षयेणास्तमयादर्वाग
ष्टमी त्रिमुहूर्त्तातदापूर्वविद्धायाअलाभाउत्तरविद्धायाश्च प्रतिषिद्धत्वात्कुत्रानुष्ठानमितिचेत् निषेधस्तूदं
च्याघुत्तरविद्धायामितिब्रूमः यद्यप्यस्मिन्नर्थेवचनंनोपलभ्यते तथापिशेषिलोपस्यान्याय्यत्वादुत्तरविद्धा
गौणकालत्वेनस्वीकार्य्येति इतिसप्तमीसामान्यनिर्णयः ॥ अथसप्तम्यांसिद्धादिकमुच्यते सप्तमी
बुधवारेणसिद्धा तदुक्तम् बुधवारेद्वितीयाचद्वादशीसप्तमीपुनरिति सप्तम्यांरविवारेणसंवर्त्ताख्योयो
गोविरुद्धोभवति सप्तम्यांदिनकरवासरेयदिस्याद्दारिद्र्यत्यतिपद्येचेंदुनंदनस्य संवर्त्तोमुनिभिरुदीरितःस
योगःसंत्याज्यःशुभसुखकांक्षिभिःप्रयत्नादिति सप्तमीरवियोगादिविरुद्धयोगेषुकश्चिद्विशेषोलिख्यते
यथाविरुद्धयोगास्तिथिवारजातानक्षत्रवारप्रभवाश्चयेच हूणेषुवंगेषुखशेषुवर्ज्याअन्येषुदेशेषुनते
विरुद्धा इति सप्तम्यांचद्वितीयायांव्रतपोष्टिकादिकर्मकार्य्यं व्रतपौष्टिकेद्वितीया सप्तमी द्वादशीसप्त
मीषुकुर्वीतेत्युक्तत्वात् सप्तम्यामामलकस्नानंलक्ष्मीनाशनकरम् तदुक्तं सप्तम्यानिंदुनवमीषुचसंप
दिच्छुःस्नायात्कदाचिदपिनामलकैर्मनुष्यः रविभौमशनीनामन्यतमेक्रूरग्रहेकन्याराशिस्थितेसप्तमी
शुभकर्मसुनिषिद्धा तदुक्तं परःपरेषामित्यादि सप्तम्यांवायव्यांयोगिनीसंमुखात्वाद्यात्रानकार्य्या वायव्ये
यानयोरित्युक्तत्वात् इतिश्रीमन्महाराजरघुवंशतिलकश्रीरणवीरसिंहकारितेकृत्यरत्नाकरेसप्त

मीसामान्यनिर्णयप्रकरणम् ॥ अथाष्टमीनिर्णीयते

तत्रशुक्लाष्टमीध्यानम् चंडापात्रधरागौरस्यागोद्रीरथवलाष्टमी अथकृष्णाष्टमीध्यानं प्रेतगाचाष्टमी
रक्ताकृष्णग्रीवासितांशुका अर्द्धखेटंतथाखड्गंपात्रंपत्रेचतर्भुजेति अष्टमीतिथिः सर्वमतेपूर्वा सिता
परा व्रतमात्रेष्टमीकृष्णापूर्वाशुक्लाष्टमीपरेतिमाधवोक्तेः परयुक्शुक्लाष्टमी पूर्वयुक्कृष्णेतिदीपि
कोक्तेश्च शुक्लपक्षेष्टमीचैवशुक्लपक्षेचतुर्दशी पूर्वविद्धानकर्त्तव्याकर्त्तव्यापरसंयुतेति कृष्णपक्षेष्ट
मीचैवकृष्णपक्षेचतुर्दशी पूर्वविद्धैवकर्त्तव्यापरविद्धानकुत्रचित् उपवासेषुराजेंद्रएषधर्मःसनातन
इति नैगमाच्च हेमाद्रिमाधवनिर्णयसिंधुकालविवेचनप्रभृतिसर्वमनेकृष्णाष्टम्युपवासादिषुपूर्व
विद्धैवेतिसिद्धांतः मदनरत्ने तूपवासेषुपक्षद्वयेप्यष्टमीपरयुतैवग्राह्या उपवासस्तमीतवेथाद्यंत्युत्त
रेदिने पक्षयोरुभयोरेषउपवासविधिःस्मृतइतिनारदीयवचनेनपक्षद्वयेपिसप्तमीविद्धायानिषेधात्
एकादश्यष्टमीषष्ठीतिपूर्वोदाहृतमृगवचनाच्चेति निगमवचनमुपवासग्रहणोरुद्धोपवासविषयं रुद्र
व्रतेषुसर्वेषुकर्त्तव्यासंमुखीतिथिः अन्येषुव्रतकल्पेषुयथोद्दिष्टामुपावसेदितिस्कंदवचनान्नतेना
स्यविरोधः शक्तिपूजायांत्वष्टमीरात्रिव्यापिनीग्राह्या तदुक्तंदेवीपुराणे निशायांपूजितादेवीवेसद्वीपा
पनाशिनी तस्मात्सर्वप्रयत्नेनअष्टम्यांनिशिपूजयेदिति अतएवदुर्गाभक्तितरंगिण्यामपि रात्रिपूजा
यामष्टमीरात्रिव्यापिनीपूर्वैवग्राह्येत्युक्तं कालव्यापिशास्त्रात् शुक्लपक्षेपूर्वविद्धादरेण कृष्णपक्षेवि
चाराभावाच्चदिनद्वयेरात्रिव्याप्त्यावयिकरात्रिव्यापिनीग्राह्या तुल्यव्याप्तावुत्तरैवप्रातरारम्भकालपर्य
तंसद्भावात् शिवार्चनचंद्रिकायांकुलार्णवे नित्यार्चनंदिवाकुर्याद्रात्रौनैमित्तिकार्चनमित्यभिधाना
च्चेति इत्यष्टमीसामान्यनिर्णयः ॥ अथाष्टमीकृत्यानि तत्रसर्वास्वष्टमीषुभैरवयात्रोक्ताकाशीखंडे
अष्टम्यांचचतुर्दश्यांरविभूमिजवासरे यात्रांचभैरवीकृत्वानरःपापैःप्रमुच्यते इतितत्रैव अष्टम्यांचच
तुर्दश्यांभौमवारेविशेषतः संपूज्यसततंकाश्यांदुर्गामार्त्तिविनाशिनीमिति इत्यष्टमीमात्रसामान्यकृ
त्यम् ॥ अथसिद्धविरुद्धादिकमुच्यते अष्टमीभौमेनसिद्धा भौमेषष्ठीतृतीयास्यादष्टमीचत्रयोदशीति

ऽयंगुरुवारेणविरुद्धा यथाजीवेऽष्टमीचतुर्थीचेति अत्रसंध्यामवलोपयोगीनिकार्य्याणिकुर्य्यात् यथा
जयास्तुविदधीतास्त्रबलकार्य्याणिनिश्चितइति अत्रतैलस्नानंमांसभक्षणंनारिकेलभक्षणंचनिषिद्धं यथा
नार्कारवारेनचसंक्रमेचनवैधृतौनव्यतिपातयोगे नपक्षमध्येपिनविशिष्टभोग्यंगहष्टोनचपर्वसूक्तः
पक्षमध्येऽष्टम्यांपलमष्टमीषुच अष्टम्यादिषुनाद्यादिष्टगतीच्छुः कदाचिदपिविद्वान् शीर्षकपालां
त्राणिनावचर्मतिलानिचक्रमशइति अयमर्थः अष्टम्यांशीर्षंनारिकेलंनाद्यात् नवम्यांकपालंअला
बुफलं दशम्यांआंत्रंनालीशाकमितिनिर्णयामृते पटोलमितिहेमाद्रिः एकादश्यांनखान्सणपुष्पा
णीतिनिर्णयामृते निष्पावानितिहेमाद्रिः निष्पावशब्देनवल्लाःभाषायांबाल्लाइतिप्रसिद्धाःशिंबीफलानि
वा द्वादश्यांचर्मबिल्वफलं पोतीन्यपिपत्रशाकविशेषसंज्ञा त्रयोदश्यांतिलंहेतोकमित्यर्थः एतेषां
भक्षणंप्राणिपगशीर्षादिभक्षणतुल्यमितिभावः तथाष्टम्यांदिवानभोक्तव्यं तदुक्तं भूताष्टम्योर्दिवाभुक्ता
रात्रौभुक्त्वातुपर्वणि एकादश्यांदिवारात्रौभुक्त्वाचांद्रायणंचरेत् तत्रपर्वाणि चतुर्दश्यष्टमीचैवअमा
वास्याचपूर्णिमा पर्वाण्येतानिराजेंद्ररविसंक्रांतिरेवच अत्रअष्टमीद्वयमष्टमीत्वेनचतुर्दशीद्वयंचतुर्द-
शीत्वेनैकीकृत्य अमावास्यापूर्णिमासंक्रांतिभिश्चेति एवंपंचपर्वाणि अत्रसर्वेषांपर्वत्वेनोक्तत्वाद्भूताष्ट-
म्योरपिपर्वत्वेतयोः पूर्ववाक्येपृथगुपादानं गोवलीवर्दन्यायेन यद्वाशुक्लाष्टमीकृष्णचतुर्दशीचदर्शोथ
राकारविसंक्रमश्चेतिग्रंथांतरे शुक्लकृष्णचतुर्दश्योरेवपर्वत्वाभिधानात् कृष्णाष्टमीशुक्लचतुर्दश्योरपि
दिवाभोजननिषेधप्राप्त्यर्थं पर्वणीत्युक्त्वाभूताष्टम्योःपुनर्वचनं अथपर्वसुनिषिद्धानि स्त्रीसंभोगतै
लाभ्यंगमांसभक्षणक्षौरदंतकाष्ठवीरुत्तरुच्छेदनकुशच्छेदनानिवर्ज्याणीतिहेमाद्रिः पक्षद्वयगतासु
सर्वास्वष्टमीषुतिथिपत्याच्छिवःपूज्यः अष्टम्यांचचतुर्दश्यामित्याद्युक्तमेव अष्टमीदशमीक्रूरग्रहेतु-
लास्थितेसतिशुभकार्येषुवर्ज्यामिथुनकन्यागतेरवावष्टमीदग्धाभवति अष्टम्यामीशान्यांयात्राविशे
षतोनकार्य्या इत्यष्टमीसामान्यनिर्णयः ॥ इतिश्रीरघुवंशतिलकश्रीमहाराजरणवीरसिंह-
कारितेकृत्यरत्नाकरेअष्टमीसामान्यनिर्णयप्रकरणम् ॥ ❦

अथनवमीनिर्णयः तत्रादौशुक्लकृष्णनवमीध्यानम् नवमीसिंहगाशुभ्रापाशपात्रधराशुभा इतिकृ
ष्णा अक्षत्वक्कृत्तथाखेटपात्रेपत्रेचतुर्भुजा सर्पगानवमीनीलादंष्ट्रिणीपात्रतर्जनी इयंसर्वमतेउपवासा
दिष्वष्टमीयुतैवग्राह्या वसुरंध्रयोरितियुग्मवाक्यात् अष्टम्यानवमीविद्धाकर्तव्याफलकांक्षिभिः नकु
र्यान्नवमींतातदशम्यांतुकदाचनेति ब्रह्मवैवर्तवचनाच्च नवम्येकादशीचैवदशाविद्धायदाभवेत् तदावर्ज्या
विशेषेणगंगांभःसुरयायथेतियमपुराणाच्च इतिनवमीसामान्यनिर्णयः ॥ अथात्रसिद्धविरुद्धादिकं
नवमीशनिवारेणसोमवारेणचसिद्धा तदुक्तं शनौचतुर्दशीनवमीति सोमेतुनवमीपुष्यःश्रवणोरो
हिणीमृगः एतानिसर्वदावत्ससिद्धिदानिस्वकर्मस्विति बुधवारेणचविरुद्धा तृतीयानवमीत्याद्युक्तमेव
नवम्यांशत्रुवधबंधनाद्युग्रकर्मकार्य्यं चतुर्थ्यांचचतुर्दश्यांनवम्यांचारिमर्दनमित्यादि अत्रामलकस्ना
नंनकार्य्यमित्याद्युक्तमेव सप्तम्यांनिंडुनवमीषुचेत्यादि अत्रदंतकाष्ठमपिवर्ज्यमुक्तंव्यासेन प्रतिपत्प
र्वषष्ठीषुनवम्यांहरिवासरे दंतानांकाष्ठसंयोगोदहत्यासप्तमंकुलमिति अत्रयोगिनीनांसांमुख्यात्पू
र्वदिशियात्रानकार्य्या वृश्चिकस्थेक्रूरग्रहे नवमीदशमीचाशुभाभवतिपराःपरेषामित्यादि नवम्यांतुं
बीफलमपिनभक्ष्यमिति इतिश्रीमन्महाराजरणवीरसिंहकारितेरणवीरसिंहरत्नाकरेनवमी
सामान्यनिर्णयप्रकरणम् ॥ अथदशमीनिर्णयस्त
त्रक्रमेणशुक्लकृष्णदशमीध्यानं हेमाद्रौ वीरमित्रोदयेच सिंहासनस्थिताशुभ्रादशमीपीनकुंतला
ज्ञानमुद्राभयावेयंपीतवस्त्राब्जमालिनी १ कृष्णवर्णात्तुलायस्याद्दशमीदंडपात्रिणीति सापूर्वविद्धे

व्याख्या तथा च स्कंदपुराणे दशमी च प्रकर्तव्या सदुर्गा द्विजसत्तमेति यदा दिनद्वये कर्मकालव्यापिनी
तदा पूर्वा परा वेति हेमाद्रिः संपूर्णा दशमी कार्या पूर्वया परयाथवा युक्ता न दूषिता यस्मादतः सार्वतोमु
खीत्यंगिरोवचनात् कृत्स्ना पूर्वोत्तराभ्यां युक्ता दशम्येवं व्यवस्थितेति माधवः मदनरत्ननिर्णयामृतनिर्ण
यसिंधुषु तूपवासादिषु नवमीविद्धैव ग्राह्या तदुक्तं पैठीनसिना पंचमी सप्तमी चैव दशमी च त्रयोद
शी प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिरिति आपस्तंबोपि दशमी तु प्रकर्तव्या सदुर्गा द्विजसत्तमे
ति यत्तु संपूर्णा दशमी कार्येत्यंगिरोवचनं तत् नवमीयुक्ताया अलाभे उदयकालव्यापिनी ग्राह्येत्येव
परं अथवा एकादशीव्रतांगत्वेन क्रियमाणं दशम्यामेकभक्तादिपरं यत्तु नंदाविद्धेति कूर्मपुराणव
चनं तत्तु रविद्धानिषेधकं तत् कृष्णपक्षविषयमिति कालतत्त्वविवेचने अत्र केचित् यत्तु हेमाद्रिः दिनद्वये
कर्मकालव्याप्त्यभावे पैत्रिको विकल्प इत्याह तत्राशास्त्रतो व्यवस्थासंभवे पैत्रिकत्वायोगादित्युक्तं तन्न यतः
दिनद्वये हेमाद्रिणा कर्मकालव्याप्त्यभावे पैत्रिकविकल्पाभिधानेनानुक्तोपलंभप्रसंगात् इति दश
मीसामान्यनिर्णयः ॥ अथ दशमीकृत्यानि तानि चैत्रशुक्लादिनो वक्ष्यंते अथात्र सिद्धविरुद्धादिकं
लिख्यते दशमी गुरुवारेण सिद्धा यथा गुरौ दशमी पंचम्या विति दशम्यां भौमवारेण क्रकचयोगः द
शम्यां पंचम्यां यन्मंगलं विवाहयात्रादिकार्यमेव हस्तिकस्य सूर्ये दशमी दग्धा भवति दशम्यां तृति
यादित्रयोदशी अभ्यंगस्नानं न कुर्युः उक्तं च त्रयोदश्यां द्वितीयायां दशम्यामित्यादि प्रागुक्तं अत्र
नालीशाकं नाद्यात् उक्तं च शीर्षकपालांत्राणि इति दशम्यामुत्तरदिशि गमनं योगिनीसांमुख्यान्न
कुर्यादिति दशमीसामान्यनिर्णयः इति श्रीमहाराजरणवीरसिंहकारिते कृत्यरत्नाकरे दशमीसा

मान्यनिर्णयः ॥ अथैकादशीनिर्णीयते

तत्र शुक्लकृष्णैकादशीध्यानं एकादशी तु हस्त्यास्या नीलसुभ्रा त्रिशूलिनी ताम्रवर्णा वृषारूढा पत्रेविटासि
पंकजा १ एकादशी महाशुक्ला तु लाकर्तरिकायुता सिंहानना हरिणगला तु दिनीलासिनी परे ॥ अथैका
दशीमहिमा हेमाद्रौ तत्त्वसागरे मानेव सर्ववालानामो पथं रोगिणामिव रक्षार्थं सर्वलोकानां निर्मि
तैकादशी तिथिः तथा एकादश्युपवासी यः स धन्यः स च बुद्धिमान् तथा एकादशीं परित्यज्य योऽन्यद्व
तमुपासते सकरस्थं महारत्नं त्यक्त्वा लोष्टं हि याचते तथा एकामेकादशीं चापि समुपोष्य जनार्दनं
कामेनापि समभ्यर्च्य संसारान्मोक्षमाप्नुयात् तोयेनापि समभ्यर्च्येति वा पाठः प्रसंगादथवा दंभाल्लोभा
द्वा विदशापि वा एकादश्यां न भुक्त्वा स संसाराद्धि प्रमुच्यते संसाराख्यान्महाव्याधेर्दुःखिनां सर्वदेहिनां ए
कादश्युपवासोयं निर्मितः परमौषधं संसारोरगदष्टानां नराणां पापकर्मणां एकादश्युपवासेन सद्य
एव सुखं भवेत् नारदीयपुराणे वसिष्ठः एकादश्याः समुत्थेन वह्निना पातकेंधनं भस्मतां याति राजेंद्र
अपि जन्मशतोद्भवं तावत्पापानि देहेस्मिंस्तिष्ठंति मनुजाधिप यावन्नोपवसेज्जंतुः पद्मनाभदिने शुभे
अश्वमेधसहस्राणि वाजपेयशतानि च एकादश्युपवासस्य कलां नार्हंति षोडशीं एकादशेंद्रियैः पा
पं कृतं यद्भवनाम्भो एकादश्युपवासेन तत्सर्वं विलयं व्रजेदित्यादि हेमाद्रौ द्रष्टव्यं ब्रह्मवैवर्ते सर्वपाप
श्चित्तमिदं संसारोत्तारकारकं एकादशीव्रतं विप्र कुर्वन्मुक्तिमवाप्नुयात् नरो दिनैर्यद्दशभिस्त्वत्र भिक्ष
करोत्यघं उपोष्यैवं दशमं दिनं विशोर्द्धि मुच्यते कलावस्मिन्निमग्नानां महिंसापाविनात्मनां एकाद
शीं विना विप्र न संसाराद्धि मोक्षणं पद्मपुराणे एकतः पृथ्वीदानमेकतो हरिवासरः न समः कविभिः
प्रोक्तो वासरो ह्यधिको मतः भविष्यत्पुराणे एकाविंशसु महीशक्तिरनंता ह्युदयास्थिता सवेनान्यापद
ष्टव्यामग्रेया वैकादशी सती तिसनत्कुमारप्रोक्तम् कृत्वा पापसहस्राणि ब्रह्महत्याशतानि वै एकादशीं
नरो भक्त्या समुपोष्य शुचिर्भवेत् देवीरहस्यस्कंदपुराणयोः पापं च त्रिविधं प्रोक्तं पातकं चोपपातकं लघुपा

नकोटिजं च महापातकमेव च प्रकीर्णकं च तत्सर्वमेकादश्यामुपोषणाद्विलयं याति तेनायस्य यथाम्र
णमेव भोजनं सौरधर्मेषु एकतश्चाग्निहोत्रादिद्वादशीमेकतः प्रभुः तुलयातोलयत्तत्र द्वादशी च विशिष्यते दे
वीरहस्ये गायत्रीहृदयाख्या सर्वपापपंजरभेदिनी एकादशी तथा सर्वपापपंजरभेदिनी स्कन्दपुराणेऽपि अभोज्य
भोजनाज्ज्ञानमगम्यागमनाच्च यत् अयाज्ययाजनाच्चैव अभक्ष्याणां च भक्षणात् अस्पृश्यस्पर्शनाच्चा
प्यपरवित्तापहारतः ज्ञानाज्ञानकृतं यच्च पातकं चोपपातकं तत्सर्वं विलयं याति एकादश्यामुपोषणात्
वैष्णवतंत्रे एकादशी महापुण्या विष्णोरीशस्य वल्लभा तस्यामुपोषितो यस्तु द्वादश्यां पूजयेद्धरिं तस्य पापा
नि नश्यन्तीत्यादि स्कन्दभविष्यत्पुराणयोः ये द्वादशीमुपवसन्ति नित्यां बुभक्षायेवाङ्मयस्सक्तास्तेमेहहरिमर्च
यन्ति तेयान्तपाण्डुरपयोनिधिराजहंसाः संसारसागरजलस्य तरंति पारं रुद्रपुराणे यः करोति नरोमत्याए
कादश्यामुपोषणं स याति विष्णुसालोक्यं याति विष्णोः सरूपतां विष्णुपुराणे ओंकारः सर्वदेवानां यथैवा
द्यः प्रकीर्तितः तथा सर्वव्रतानां तु द्वादशीव्रतमुत्तमम् इत्येकादशीमहिमा तत्रैकादश्युपवासोऽद्वेधा
निषेधपरिपालनात्मको व्रतरूपश्च तत्राद्यः नशंखेन पिबेत्तोयं न खादेत्कूर्मसूकरौ एकादश्यां न भुंजीत
पक्षयोरुभयोरपीति कूर्मदेवलाद्युक्तः अग्निपुराणेऽपि गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव च
एकादश्यां न भुंजीत पक्षयोरुभयोरपीत्यादि व्रतरूपस्तु ब्रह्मवैवर्ते प्राप्ते हरिदिने सम्यग्विधाय नियमं नि
शि दशम्यामुपवासस्य प्रकुर्याद्वैष्णवं व्रतमिति शिवधर्मेऽपि वैष्णवो वाथ शैवो वा कुर्यादेकादशीव्रतं
इदं शिवभक्तादिभिरपि कार्यमित्युक्तं सौरपुराणेऽपि वैष्णवो वाथ शैवो वा सौरो वाप्येतत्समाचरेदिति सो
ऽपि द्वेधा नित्यः काम्यश्च उपोष्यैकादशी नित्यं पक्षयोरुभयोरपीति पक्षेपक्षे प्रकर्तव्यमेकादश्यामु
पोषणमिति नारदोक्तेश्च नित्यता यदीच्छेद्विष्णुसायुज्यं श्रियं संततिमात्मनः एकादश्यां न भुंजीत पक्ष
योरुभयोरपीति कौर्मादिषु फलश्रुतेश्च काम्यता उपोष्यमेकादशीव्रतं च गृहस्थातिरिक्तानामेव नि
त्यं गृहस्थस्य तु शुक्लायामेव व्रतं नित्यं न कृष्णायां एकादश्यां न भोक्तव्यं पक्षयोरुभयोरपि वनस्थय
तिधर्मोऽयं शुक्लामेव सदा गृहीति देवलोक्तेः न चानेन निषेधकलनमेव वनस्थयतिविषये उपसंह्रियते
न तु व्रतमिति वाच्यं अस्य पक्षद्वयविधिपरत्वात् अन्यथा पूर्वोक्तपुराणवचने निषेधपालने गृहस्था
धिकारोक्तिविरोधः स्यात् निषेधो निवृत्तिमात्रफलकत्वेन न विशेषानपेक्षणात् उपसंहारायोगात् अभा
वस्य धर्मत्वाभावाच्च तस्मादनेन सर्वेषामेवैकादशीव्रतविधायिनां सामान्यवाक्यानां वनस्थयतिविष
ये उपसंहारात् गृहस्थस्य कृष्णायां नित्यव्रतसमाप्तिः कथं तर्हि संक्रान्त्यामुपवासं च कृष्णैकादशीवास
रे चंद्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान् गृहीति नारदादिवचनेषु कृष्णानिषेधः प्राप्त्यभावादिति चेच्छ्रूय
तां शयिनीबोधिनीमध्ये या कृष्णैकादशी भवेत् सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचनेति पाद्मे गृह
स्थस्याषाढीकार्तिकीमध्यस्थाया कृष्णा विहिता पुत्रवतो न निषिध्यते अन्यकृष्णायां तु न विधिः सर्व
विधीनां वनस्थयतिषूपसंहारात् न निषेधः प्राप्त्यभावात् शयन्यादिवाक्यं तु पुत्रिगृहस्थगोचरमित्य
नेन महहेमाद्र्यादिग्रंथाः दीपिकायामपि असितान्वशयनीबोधोर्द्धीनस्याप्यर्थीनस्यात्तन्नाङ्गिनोनीति
मदनरत्ने भविष्येऽपि यथा शुक्ला तथा कृष्णा द्वादशी मम सदा प्रिया शुक्ला गृहस्थैः कर्तव्या भोगसंतानवर्द्धिनी
समुक्तभिक्षया कृष्णा सा सा काम्या गृहिणां भवेत् पुत्रवांश्च सभार्यश्च बंधुयुक्तस्तथैव च उभयोः पक्षयोः
काम्यं व्रतं कुर्यान्नु वैष्णवमिति नारदोक्तेः एतत्सर्वं कालादर्शे उक्तं विधवाया वनस्थस्य यतेश्चैकादशीद्वये
उपवासो गृहस्थस्य शुक्लायामेव पुत्रिणः भुक्तेर्निषेधः कृष्णायां सिद्धस्तस्मात्तनो व्रतमिति प्राच्यास्तु वैष्णवगृ
हस्थानां कृष्णापि नित्या नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः पक्षेपक्षे च कर्तव्यमेकादश्यामुपोष
णं सपुत्रश्च सभार्यश्च स्वजनो भक्तिसंयुतः एकादश्यामुपवसेत्पक्षयोरुभयोरपीति नारदोक्तेरित्याहुः ॥

अत्र पुत्रशब्दस्यापत्यमात्रवचनः नारायणोहन्नो पुमांसमपत्यमेपुत्राजायेरन्नित्यत्रापत्यमात्रस्यवाचित्वोक्तेः जनये
द्बहुपुत्रानितिलिंगात् पौत्रोमातामहस्तेनेति मनूक्तेः पुत्रा अपत्यमित्यर्थेनस्त्रीभ्योठकि पौत्रेयइत्यापत्तेः पुमा
न्पुत्रोजायतइतिच उपवासनिषेधेविशेषोवायवीयेउक्तः उपवासनिषेधेनभक्तं किंचित्प्रकल्पयेत् नदुष्यत्युप
वासस्य उपवासफलंलभेत् भक्तंचनक्तंचोक्तं नक्तंहविष्यान्नमनोदनंवाफलंतिलाः क्षीरमथाम्बुचाज्यं यत्पं
चगव्यंयदिवापिवायुःप्रशस्तमत्रोत्तरमुत्तरंचेत्युक्तं अत्रोपवासनिषेधव्यवस्थांपुनराह मत्स्यपुराणे ए
कादश्यांतुकृष्णायामुपोष्यविधिमान्नरः पुत्रानायुःसमृद्धिंचसायुज्यंचैवगच्छति दिनद्वयेपिपुत्रवतोग
हस्थस्योपवासोनिषिद्धः मदनरत्नेव्यासः एकादशीषुनष्टासुखोसंक्रमणेतथा पारणेचोपवासंचन
कुर्यात्पुत्रवान्गृही दिनत्रयेनसंप्राप्तेनोपोष्यादशमीयुता यदीच्छेत्पुत्रपौत्राणामृद्धिंसंपदमात्मनः म
त्स्यपुराणेपि दिनद्वयेर्कसंक्रान्तौग्रहणेचंद्रसूर्ययोः उपवासंनकुर्वीतपुत्रपौत्रसमन्वितः इतिदिनत्रयल
क्षणम् पद्मपुराणे द्वौतिथ्यन्तावेकवारेयस्मिन्स्यात्दिनत्रयइति वसिष्ठोपि एकस्मिन्सावनेत्वह्नितिथी
नांत्रितयंभवेत् तदाहिनत्रयःप्रोक्तस्तत्रसाहस्रिकंफलमिति फलमत्रपुत्रवतउपवासव्यतिरिक्तविष
यमितिद्रष्टव्यं अत्रत्रिस्पृग्व्रतीनेविष्णुधर्मोत्तरे प्रथमकांडेपौष्करगीतास्तुशंकरवाक्यम् दिवागतानुद
शमीव्यतीतास्यात्तिथिर्द्विज रात्रिशेषेणतथान्याचभविष्यास्पृशतेतिथिं तिथित्रयस्यसंस्पर्शादहोरात्रेभृगू
त्तम अहस्त्र्यहस्पृक्सा विनिर्दिष्टापुण्यासात्तिथयस्मृतात्रोपोष्यशिरस्नानैःकर्तव्यंदेवतार्चनं जपंहोमंतथादानं
कामयद्भिर्महत्फलं कर्मणांपरिशेषाणामकर्माणंचतद्दिनं श्रीविष्णुप्रीतयेरामब्राह्मणांस्तत्रभोजये
दितिवाक्यात्तुवैष्णवैर्गृहस्थैर्विष्णुप्रीतयेपूर्वैवकार्येति नत्रोपवासनिषेधः उपवासनिषेधेपिभक्तंकिंचि
त्प्रागुक्तमेव भक्तंचविद्धाविषयेवक्ष्यमाणं अविद्धानामलाभेनपयोदधिघृतानिच सकृदेवाल्पमश्नीया
दुपवासफलंभवेत् भक्तंचनक्तंहविष्यान्नमित्यादि अथैकादशीनिर्णीयते साचद्विविधा शुद्धाविद्धा
च यासंपूर्णासाशुद्धा अथोपवासानुष्ठानसिद्ध्यर्थंशुद्धाविद्धादिभेदेनैकादश्याअष्टादशभेदाउच्यंते षष्टिघ
टाः ६० समता १ षष्टितोन्यूनाचेत्तदातदान्यूनता २ षष्टितोअधिकाचेत्तदाऽधिकताज्ञेया ३ अत्रशुद्धैका
दशीसमन्यूनताऽधिक्ययोगात्त्रिविधाभवति साद्विविधापिद्वादशीसाम्यन्यूनताधिक्ययोगात्प्रत्येकंत्रिविधाभ
वति एवंनवभेदाभवंति तेयथा शुद्धसमैकादशी ६० द्वादशी ६० समा १ शुद्धसमैकादशी ६० द्वादशी ५९
।५८।५७ न्यूना २ शुद्धसमैकादशी ६० द्वादश्य ६१।६२।६३ धिका ३॥ शुद्धन्यूनैकादशी ५९।५८।५७ द्वाद
शी ६० समा ४॥ शुद्धन्यूनैकादशी ५९।५८।५७ द्वादशी ५९।५८।५७ न्यूना ५॥ शुद्धन्यूनैकादशी ५९
५८।५७ द्वादश्य ६१।६२।६३ धिका ६॥ शुद्धाधिकैकादशी ६१।६२।६३ द्वादशी ६० समा ७॥ शुद्धा
धिकैकादशी ६१।६२।६३ द्वादशी ५९।५८।५७ न्यूना ८॥ शुद्धाधिकैकादशी ६१।६२।६३ द्वादश्य ६१।
६२।६३ धिका ९॥ एवंदशम्याविद्धापिसाम्यन्यूनताधिक्ययोगात्त्रिधाभवति साविद्धापिद्वादश्याःसम
न्यूनाधिक्ययोगात्प्रत्येकंत्रिधाभवति एवंनवभेदाः तेपियथा दशम्याविद्धैकादशीसमा ६० द्वादशी ६०
समा १ दशम्याविद्धैकादशीसमा ६० द्वादशी ५९।५८।५७ न्यूना २॥ दशम्याविद्धैकादशीसमा ६० द्वाद
श्य ६१।६२।६३ धिका ३॥ दशम्याविद्धैकादशीन्यूना ५९।५८।५७ द्वादशी ६० समा ४॥ दशम्याविद्धै
कादशीन्यूना ५९।५८।५७ न्यूना ५॥ दशम्याविद्धैकादशीन्यूना ५९।५८।५७ द्वादश्य ६१।६२।६३
[द्वादशी ५९। ५८।५७]
धिका ६॥ दशम्याविद्धैकादश्यधिका ६१।६२।६३ द्वादशी ६० समा ७॥ दशम्याविद्धैकादश्यधिका ६१।
६२।६३ द्वादशी ५९।५८।५७ न्यूना ८॥ दशम्याविद्धैकादश्यधिका ६१।६२।६३ द्वादश्य ६१।६२।६३
धिकाचेति ९॥ एवंमिलित्वाष्टादशभेदाभवंति तत्रतावद्दशमीविद्धायावैष्णवैस्त्याज्यास्तद्दशमीवेधःप्र
पंच्यते दशमीवेधस्त्रिविधः अरुणोदयवेधः सूर्योदयवेधः पंचदशनाडीवेधश्चेति तत्रारुणोदयवेधो

भविष्यपुराणे अरुणोदयवेलायां दशमीयोगो भवेद्यदि दुष्टं तत्प्रयत्नेन वर्जनीयं नराधिपेति दिशागंधः दशमी
संबंधः गारुडेपि दशमीशेषसंयुक्तो यदि स्यादरुणोदयः नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतमिति वैष्ण
वलक्षणं च स्कांदे परमापदमापन्नो हर्षे वा समुपस्थिते नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी समात्मा
सर्वभूतेषु निजाचारादविप्लुतः विष्ण्वर्पिताखिलाचारः स हि वैष्णव उच्यते इति वचनोक्तपदवैष्णव इति सिद्धं स्व
त्वेनरोपि वैखानसाद्यागमोक्तदीक्षायुक्तोपि वैष्णव इति तन्न यद्यपि पित्रादेरागमदीक्षायां तन्मात्रस्यैव वै
ष्णवत्वं तत्पुत्रादेस्तु यथापि पारंपर्यप्रसिद्धमेव वैष्णवत्वं स्मार्तत्वं च मन्यन्ते बुधाः तत्त्वसागरे भविष्ये यथाख्या
तं तथा हरस्याय थाहरस्यान्तथेतरा तल्पेते मन्यते यस्तु स वै वैष्णव उच्यत इति अरुणोदयप्रमाणं तु स्कंद
नारदाभ्यामुक्तं उदयात्प्राक् चतस्रस्तु घटिका अरुणोदय इति हेमाद्रौ चतस्रो घटिकाः प्रातररुणोद
य उच्यते यतीनां स्नानकालस्तु गंगांभःसदृशाः स्मृता इति तथा निशांते तु यामार्द्धे देववादित्रवादने सा
रस्वते तथा पने चारुणोदय उच्यते तथा अरुणोदयवेधस्तु सार्धं तु घटिकात्रयमिति एतेषां सर्वेषां व
चनानां रात्रिमानह्रासवृद्धिभ्यां मुहूर्तद्वयपरत्वेन उदयात्प्राक् यदा विप्र मुहूर्तद्वयसंयुता इति आदित्योद
यवेलायाः प्राक् मुहूर्तद्वयान्विता संपूर्णैकादशी नाम तत्रैवोपवसेद्गृहीति गारुडे सौरधर्मादि वचनम्
यच्च भविष्ये आदित्योदयवेलायाः प्राङ्मुहूर्तद्वयान्विता एकादशी तु संपूर्णा विद्धान्या परिकीर्तितेति
तदप्युपसंहारन्यायेन दंडचतुष्टयपरमेव हेमाद्रावप्येवं यत्तु ब्रह्मवैवर्ते चतस्रो घटिकाः प्रातररुणोदय
निश्चयः चतुष्टयविभागोत्र वेधादीनां किलोदितः अरुणोदयवेधः स्यात्सार्द्धं तु घटिकात्रयं अतिवेधो
द्विघटिकाः प्रभातेर्दर्शनाद्रवेः महावेधोपि तत्रैव दृश्यतेर्को न दृश्यते तुरीयस्तत्र विहितो योगः सूर्योद
ये बुधैरिति तदप्यवयवद्वारारुणोदयवेधविशेषपरमेवेति माधवीये मदनरत्ने च अन्यस्तूदयवेधः
तथान्येपि वेधा हेमाद्रौ माधवीये गारुडे च उदयात्प्राक् त्रिघटिकाव्यापिन्येकादशी यदा संदिग्धैकाद
शी नाम वर्ज्येयं धर्मकांक्षिभिः उदयात्प्राङ्मुहूर्तेन व्यापिन्येकादशी तथा संयुक्तैकादशी नाम वर्ज्येयं ध
र्मकांक्षिभिः हेमाद्रौ रात्रेरन्त्याष्टमभागेप्यरुणोदय उक्तः निशाप्रांते तु यामार्द्ध इत्यादि अत्रैके एतेषां सर्व
पदानां मुहूर्तद्वयेन कोडीकारात्त्रिंशः प्रांत इति वचनाच्च रात्रिमानवशात्सार्द्धत्रिदंडादयो नैकेऽरुणो
दयाः हेमाद्रिः सार्द्धत्रिघटिकात्वोक्तिरष्टाविंशतिघटीमानरात्रिविषया मदनरत्नरायमुकुटौ रात्रेरंते चतस्रो घ
टिका इत्युक्तमाहुः अनेनारुणोदयशब्दस्यानेकार्थत्वापत्तेः न च मुहूर्तद्वयमर्द्धदंडद्वयैकमुहूर्तादिवेधा
नां तथाप्यनुपपत्तेः तद्दिने घोयामार्द्धत्वमरुणोदयत्वे वास्ति मुहूर्तद्वयस्य यामार्द्धस्य च चतस्रो घटिका
इत्यनेनैवोपसंहाराच्च न तदर्थः न च सार्द्धघटिकात्रयमित्यनेनापि तदापत्तिः शक्या तेन चतुर्दंडवेधसं
बंधत्वर्थं दंडे घटिकादशमीसत्त्वे हि वेधस्तदर्थः द्विघटिकादौ तद्योगाच्च यच्च मते कियताऽरुणोदय इ
त्यपेक्षायां सार्द्धघटिकातो न्यूनदशमीसत्त्वेन दोष इति यत्तु तुच्छं द्विदंडादावपि तदापत्तेः दशमीशे
षसंयुक्तो यदि स्यादरुणोदयः नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतमिति गारुडभविष्ये च योगमात्र
निषेधात् नारदीयेपि लववेधेपि विप्रेंद्र दशम्येकादशीं त्यजेत् सुराया बिंदुना स्पृष्टं गंगांभ इव निर्मलं
स्कांदेपि कलाकाष्ठादिगत्यैव दृश्यते दशमी विभो एकादश्यां न कर्तव्यं व्रतं राजन् कथंचनेति माधवोप्याह
सोयं कलादिवेधोऽरुणोदयवेधे सूर्योदयवेधे च समान इति निगममपि सर्वप्रकारवेधोयमुपवासस्य बाध
क इति अतएव माधवेनारुणोदयार्द्धदंडोऽल्पदशमीस्पर्शसंपृक्ता ह्रान्त्यघटिकायोगे संदिग्धा मुहू
र्तव्याप्तौ संयुक्ता उदये संकीर्णाप्युक्ता अरुणोदयवेलायां दशमी यदि संयुता संपृक्तैकादशीं तां तु मो
हिन्यै दत्तवान् प्रभुरिति गोभिलाद्युक्तेः पूर्वोक्तगारुडादेश्च सामान्यतो विशेषतश्चारुणोदयवेधोऽनि
षिद्धः यत्तु षष्ठभागोऽरुणोदय इति हेमाद्रिणोक्तं यच्च महत्तरारात्रिरिति तत्पारंपर्यमेव वहुपिनं अंते सुतं

वेधतारतम्यं च दोषतारतम्यादुपपद्यत इति दोषतारतम्यं च प्रायश्चित्ततारतम्यादवगम्यते तच्चोक्तं हेमाद्रौ
स्मृत्यन्तरे अज्ञानाद्यदि वा मोहात्कुर्वन्नेकादशीं नरः दशमीशेषसंयुक्तां प्रायश्चित्तमिदं चरेत् कृच्छ्रपा
दं नरः क्षीर्त्वा गां च दद्यात्सवत्सकां सुवर्णस्याढकं देयं तिलहोमसमन्वितं विधानान्तरं तत्रैव ब्राह्मण
भोजनं त्रिंशच्च गां च दद्यात्सवत्सकां धरण्यामाढकं देयं तिलहोममथापि वेति अत्र वेधतारतम्याद्व्यव
स्थेति हेमाद्रिः वैष्णवैः शंकरस्वामिना जितैस्तर्जितैस्तत्काले पुराणवाक्याभावादेव भ्रष्टमतप्रवृत्तैरेकैकिनैः पु
राणान्तरेषु तत्रतत्रस्थलेषु स्वस्वोपयोगीनि वाक्यानि प्रकल्प्य स्वेच्छाचारीयं मतं क्षिप्तं तत्रत्यान्येव वाक्यानीति
ज्ञायन्ते सुवर्णाढकदानस्यैकादश्यर्थं राज्ञोऽप्यसमर्थत्वात् एतत्कृत्यभीत्युत्पादकत्वाच्चासत् निशाप्रा
न्तेऽपि दोषाधिक्यार्थमेव तस्माच्चतुर्घटिकात्मक एवारुणोदय इति सिद्धं तेन षट्पंचाशद्दण्डानन्तरं दश
मीप्रवेशेऽरुणोदयवेध उक्तो भवति अन्योऽपि तत्रैव कण्वेनोक्तः उदयोपरिविद्धा तु दशम्येकादशी यदि दान
वेभ्यः प्रीणनार्थं दत्तवान्पाकशासन इति स्मृत्यन्तरेऽपि दशम्याः प्रान्तमादाय यदोदेति दिवाकरः तेन ए
ष्टं हरिदिनं दत्तं जंभासुराय विति तत्रारुणोदयवेधो वैष्णवविषयः तद्वाक्येषु वैष्णवग्रहणात् तत्स्वरूपं त
माधवीये स्कान्दे वैष्णवलक्षणमुक्तं प्राक् केचित्तु दशम्यां नवमीवेधमपि त्यजन्ति तत्र मूलं मृग्यं उदयवेधस्तु
परिशेषाद्वैष्णवगोचरः अरुणोदयवेधस्तु वेधः सूर्योदये तथा उक्तो ह्येष दशमीवेधो वैष्णवस्मार्तयोः क्रमात्
इत्यादिवाक्यैः स्मार्तस्य विधिरेव स्मृत्यन्तरवाक्यानां पूर्वोक्तानां पूर्वानुमितिसिद्धिरिति हेमाद्रिस्तु केषांचिदर्
धरात्रेऽपि दशमीवेधमाह अर्धरात्रे तु केषांचिद्दशम्या वेध इष्यते कपालवेध इत्याहुराचार्या ये हरिप्रियाः
तन्न मम मते यस्मात्त्रियामा रात्रिरिष्यते इति ब्रह्मवैवर्तात् अस्यार्थः अनद्यतनेऽतीते लङ् इ॰ तत्रानीता
याः रात्रेः पश्चिमयामद्वयमागामिन्याः रात्रेः पूर्वयामद्वयं दिवसश्च सकलः एषोऽद्यतनः इत्युक्तं महाभा
ष्ये वर्तमानः कालः एकादश्यहोरात्रे उपोष्यः तन्मध्ये दशमीप्रवेशे विद्धा सा त्याज्या अत एव हेमाद्रौ
दशम्याः संगदोषेण अर्धरात्रात्परेण तु वर्जयेच्च तुरीयामान् दिवसस्य उपोषणे इति स्वमते तु रात्रेस्त्रियाम
त्वात् प्रहरत्रयपूर्वशेषः तेन चतुर्थप्रहर एव वेधो युक्तः सोऽप्यरुणोदय एव सूर्योदयं विनानैव स्नानदाना
दिकक्रम इति मार्कण्डेयपुराणवचनात् प्रत्यूषोऽहर्मुखं कल्य इति कोशादरुणोदयमारभ्य सूर्यांशुप्रवृत्ते
स्तत्रैव निषेधः तेन मतभेदाद्व्यवस्थेति केचित् कैमुत्यन्यायेनारुणोदयवेधस्यैव स्थितिरिति तु माधवः
यत्तु दिक्पंचदशभिस्तथेति वेधः स उपवासातिरिक्तविषय इति माधवः सर्वप्रकारवेधोऽयमुपवासस्य दूषकः
सार्धसप्तमुहूर्तैस्तु योगोऽयं बाधते व्रतमिति निगमादित्यलं माधवमते वैष्णवैररुणोदयविद्धा त्याज्या यदा
त्वेकादश्येव शुद्धा द्वादशी वोभयं वा तदा परोपोष्या एकादशी द्वादशी वाधिका चेत्त्याज्यं तद्दिनं पूर्वग्राह्यं
तदुत्तरं स्यादिति वैष्णवनिर्णय इति माधवोक्तेः स्मार्तैस्तु सूर्योदयविद्धा त्याज्या यदा त्वेकादशी शुद्धा सती वर्ध
ते द्वादशी च समा न्यूना वा तदा गृहस्थैः पूर्वा यतिभिरुत्तरा कार्या प्रथमेऽहनि संपूर्णा व्याप्याहोरात्रसंयु
ता द्वादश्यां च तथा नास्ति त्रयोदश्यां पुनरेव च पूर्वा कार्या गृहस्थैश्च यतिभिश्चोत्तरा विभो इति स्कान्दोक्तेः
वर्धमानेऽप्याह उभयवृद्धौ तु शुद्धायां वा सर्वेषां परैव संपूर्णैकादशी यत्र प्रभाते पुनरेव सा सर्वैरेवोत्तरा
कार्या परतो द्वादशी यदीति नारदोक्तेः द्वादशीमात्रवृद्धौ शुद्धायां परैव न चेदेकादशीविद्धो द्वादशी पर
तः स्थिता उपोष्यैकादशी तत्र यदीच्छेत्परमं पदमिति नारदोक्तेः द्वादशीमात्रवृद्धौ तु शुद्धा विद्धैव वा स्थिते
शुद्धा पूर्वोत्तरा विद्धा स्मार्तैर्निर्णय ईदृश इति माधवोक्तेः मदनरत्ने त्वेवं यत्र विद्धाप्यविद्धा विज्ञेया परतो द्वाद
शी न चेत् अविद्धापि च विद्धा स्यात्परतो द्वादशी यदीति हेमाद्रौ पद्मवचनं तदेकादश्या वृद्धौ ज्ञेयं तदुक्तं मा
धवेन एकादशी द्वादशी चेत्तूभये वर्धते यदा तदा पूर्वदिनं त्याज्यं स्मार्तैर्ग्राह्यं परं दिनमिति विद्धैकादश्यां
द्वादशीमात्रवृद्धौ च सर्वेषां परैव तत्र चैकादशीमात्रवृद्धौ गृहिणः पूर्वा यतेरुत्तरेति पूर्वोक्तमाधवोक्तेः एका

दशीविद्धा चेत्तु लोकस्य विशेषतः उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृहीति प्रचेतसोक्तेः एतच्च शुद्धा
विशुद्धा तत्समिति माधवः त्रयोदश्यां नोपलभ्येत द्वादशी यदि किंचन उपोष्यैकादशी तत्र दशमीमिश्रि
तापि चेति स्कांदात् अविद्धानि निषिद्धेस्मिन्नलभ्यंते दिनानि तु मुहूर्तैः पंचभिर्विद्धा ग्राह्या चैकादशी ति
थिरिति ऋष्यशृंगोक्तेः मुहूर्त्तपंचकमरुणोदयमारभ्यात्रेयं अन्यथोत्तरेह्नि एकादश्यभावासंभवात्
तथा च स एव सर्वत्रैकादशी कार्या द्वादशीमिश्रिता नरैः प्रातर्भवतु वा मा भूद्यस्मान्नित्यमुपोषणमि
ति यद्यपि हेमाद्रिणा शुद्धसमा शुद्धन्यूनाधिकद्वादशिका चेत् सर्वेषां परैवेत्युक्तं तदपि वैष्णवविषयं
स्मार्त्तानां पूर्वैवेत्यविरोधः हेमाद्रिमते तूच्यते तत्र शुद्धावि द्धाद्वयानंदात्रेधा न्यूनसमाधिकैः षट्प्रका
रा पुनस्त्रेधा द्वादश्यूनसमाधिकैरित्यष्टादशैकादशीभेदाः तत्र शुद्धाधिका न्यूनद्वादशिका शुद्धाधिका समद्वा
दशिका च सकामैः पूर्वा निष्कामैरुत्तरा कार्या प्रथमेह्नि संपूर्णेति पूर्वा इति स्कांदात् ऊनद्वादशिकायां तु
विष्णुप्रीतिकामैरुपवासद्वयं कार्यं संपूर्णैकादशी यत्र प्रभाते पुनरेव सा लुप्यते द्वादशी यस्मिन्नुपवासः
कथं भवेत् उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैरिति वृद्धवसिष्ठोक्तेः शुद्धन्यूना शुद्धसमा विद्धसमा वा
धिकद्वादशिका चेत् सर्वेषां परैवेति हेमाद्रिः मदनरत्ने तु शुद्धाधिका परा संपूर्णैकादशी यत्रेति पूर्वोक्तेः
अन्या पूर्वा शुद्धा यदा समा हीना एकादशीमुपवसेत्तु शुद्धां वै सर्वामपीति स्कांदात् शुद्धा एकादशी उत्त
रा द्वादशी न चैवैकादशी वि— विति नारदोक्तेश्च यत्र अविद्धापि च विद्धा स्यादिति पाद्मे तच्छुद्धाधिकपरं
यत्तु संपूर्णैकादशी त्याज्या परतो द्वादशी यदि उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणमित्यादि तद्वैष्ण
वपरं स्मार्त्तानां तु पूर्वैवेत्युक्तं विद्धन्यूनासमद्वादशिका तु समस्तैर्गृहीणां परा अन्येषां पूर्वा पुत्रवतोपि पू
र्वेति मदनरत्ने विद्धसमा समद्वादशिका न द्वादशिका तु मुमुक्षुभिः परा अन्यैः पूर्वा कार्या दशमीमिश्रि
ता पूर्वा द्वादशी यदि लुप्यते शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकांक्षिभिरिति व्यासोक्तेः मोक्षकांक्षिग्र
हणादन्येषां पूर्वैव तत्रैकादशी कार्या द्वादशीमिश्रिता नरैः प्रातर्भवतु वा मा वा यतो नित्यमुपोष
णमिति पाद्मोक्तेः विद्धाधिका समद्वादशिका सर्वेषां परैव पारणाहे न लभ्येत द्वादशी कलयापि चेत्
तदानीं दशमीविद्धाप्युपोष्यैकादशी तिथिरिति ऋष्यशृंगोक्तेश्च माधवमते तु अत्र गृहिणां पूर्वा य
तेरुत्तरा विद्धाधिका न्यूनद्वादशिका मोक्षपापक्षयविष्णुप्रीतिकामैः परा कार्या गृहस्थेन तु नक्तं का
र्यं एकादशी द्वादशी च रात्रिशेषे त्रयोदशी उपवासं न कुर्वीत पुत्रपौत्रसमन्वित इति कौर्म्ये दिनक्षये
उपवासनिषेधात्तु दशम्येकादशीविद्धा द्वादशी च क्षयं गता क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र गृहिणः
स्मृतमिति वृद्धशातातपोक्तेश्च गृहिणः पूर्वत्रोपवासः एकादश्याः शुद्धन्यूनत्वे शुद्धसमत्वे वा द्वादश्या न्यू
नसमत्वयोरेकादश्यामुपवासः यानि तु दशम्यनुगताहंति द्वादशा द्वादशीफलं धर्मापत्यधनायूंषि त्रयो
दश्यां तु पारणमिति कौर्म्यादीनां दशमीवेधे त्रयोदशीपारणयोर्निषेधकानि विहितभिन्नपराणि अत्र
मूलवचनानि तद्व्यवस्था चाकरे ज्ञेया यत्तु कालहेमाद्रौ बहुवाक्यविरोधेन संदेहो जायते यदा द्वाद
शी तु तदा ग्राह्या त्रयोदश्यां च पारणं इति मार्कंडेयोक्तेः संदिग्धेषु च वाक्येषु द्वादशीं समुपोषयेत् तथा
विवादेषु च सर्वेषु द्वादश्यां समुपोषणं पारणं तु त्रयोदश्यामाज्ञेयं मामकी मने रिति पाद्मोक्तेश्च वैष्णवसं
देहे ज्ञाति विदां विप्रतिपत्तौ चापरा कार्येत्युक्तं तद्वैष्णवविषयमित्यलं बहुप्रपंचितेन अत्रोपयुक्तं किंचिदु
च्यते तत्र दशम्येकादशीयोगे दशमीमध्य एव भोजनं कार्यमेकादश्यां न भुंजीतेति तस्याप्येव निषिद्ध
त्वात् निषेधस्तु निवृत्त्यात्मककालमात्रमपेक्षते इति देवलोक्तेश्च केचित्तु एकादशीव्रतांगत्वेन पूर्वे
द्युरेकभक्तविधानाद्दिवापि स्पष्टैव निषेधानवकाशान्नैकाम्यव्रतांगभोजननिषेधः प्रवर्तते तेनैकादशीम
ध्य एव दिनमित्याहुः अत्राधिकारी माधवीये कात्यायनेनोक्तः अष्टवर्षाधिको मर्त्यो ह्यशीतिन्यूनवत्सरः

एकादश्यामुपवसेत्पक्षयोरुभयोरपीतिभविष्ये ब्रह्मचारीचनारीचशुक्लामेवसदागृहीति यत्तुविष्णुः पत्यौजीव
तियानारीउपोष्यव्रतमाचरेत् आयुष्यंहरतेभर्तुर्नरकंचैवगच्छति इतिभर्त्रनुज्ञाविषयमितिप्रागुक्तं उपवा
सासामर्थ्येतु मार्कंडेयकौर्मयोः एकभक्तेननक्तेनतथैवायाचितेनच उपवासेनदानेननानिर्द्वादशिकोभवेत्
अन्नैकभक्तयोर्मध्यउपवासव्रतंचरेदिति एकभक्तादिषु उपवासशब्दस्तद्धर्मातिदेशार्थः तेनतत्प्रयुक्ताःसर्वे
धर्माः तत्स्थानापन्नेनक्तादावपिभवंति संकल्पेनेत्रचैकभक्तादिपदेनोहःकार्यइतिमदनरत्ने तथाऽसाम
र्थ्येप्रतिनिधिनाकारयेदितिप्रागुक्तं व्रताकरणेप्रायश्चित्तमाह माधवीयेकात्यायनः अर्कपर्वद्वयेरात्रौ
चतुर्दश्यष्टमीषुवा एकादश्यामहोरात्रेभुक्त्वाचांद्रायणंचरेदिति अथकाम्यव्रतविधिःलघुनारदीये दश
म्यादिदिनेयत्तुत्रिदिनेपरिवर्जयेत् गंधताम्बूलपुष्पादिस्त्रीसंभोगंमहायशाः तत्र दशम्याविधिः कौर्मे
कांस्यंमांसंमसूरांश्चचणकान्कोरदूषकान् शाकंमधुपरान्नंचत्यजेदुपवसन्स्त्रियम् तथा शाकंमांसं
मसूरांश्चपुनर्भोजनमैथुनं द्यूतमत्यंबुपानंचदशम्यांवैष्णवस्त्यजेत् मदनरत्नेनारदीये अक्षारलवणाः
सर्वेहविष्यान्ननिषेविणः अवनीतल्पशयनाःप्रियासंगमवर्जिताः अथव्रतघ्नान्याह हेमाद्रौदेवलः
असकृज्जलपानाच्चसकृत्तांबूलभक्षणात् उपवासःप्रणश्येतदिवास्वापाच्चमैथुनात् अत्रापवादोमदनरत्नेदे
वलः अत्ययेचांबुपानेननोपवासःप्रणश्यति अत्ययेप्राणात्ययकष्टे वह्निपुराणेविष्णुः गात्राभ्यंगंशि
रोभ्यंगंतांबूलंचानुलेपनं व्रतस्थोवर्जयेत्सर्वंयच्चान्यन्नविराहृतं प्रायश्चित्तमुक्तंनिर्णयामृतसंग्रहे स्ते
नहिंसकयोःसख्यंकृत्वास्तेयंचहिंसनं प्रायश्चित्तंव्रतेकुर्याज्जपेन्नामशतत्रयं मिथ्यावादेदिवास्वापेबहु
शोंबुनिषेवणे अष्टाक्षरंव्रतीजप्त्वाशतमष्टोत्तरंशुचिः ॐनमोनारायणायेतिमंत्रोष्टाक्षरईरितः त
त्रैवपैठीनसिः तांबूलचर्वणेस्त्रीसंभोगेमांसनिषेवणे व्रतभंगोनचेत्कुर्यात्स्वल्पावह्नवर्जनमिति संभोगे
ऋतुकालादन्यत्ररेतःसेकात्मसंभोगःस्मृतेनात्रदोषःस्मृतइति दंतकाष्ठवर्जनंहेमाद्रौवसिष्ठः उपवासे
तथाश्राद्धेनकुर्याद्दंतधावनं दंतानांकाष्ठसंयोगोदहत्यासप्तमंकुलमिति काष्ठग्रहणात्तृणादिकाद्य
निषेधइतिहेमाद्रिः विष्णुरहस्ये श्राद्धोपवासदिवसेखादित्वादंतधावनं गायत्र्याशतसंपूतमंबुप्राश्यवि
शुद्ध्यतीति निर्णयामृतेव्यासः वर्जयेत्पारणेमांसंव्रताहेप्यौषधंसदेति एकादश्यांश्राद्धप्राप्तौकात्याय
नः उपवासोयदानित्यःश्राद्धंनैमित्तिकंभवेत् उपवासंतदाकुर्यादाघ्रायपितृसेवितं मातापित्रोःक्षयेप्रा
प्ते भवेदेकादशीयदि अभ्यर्च्यपितृदेवांश्चआजिघ्रेत्पितृसेवितमिति हेमाद्र्यादिसर्वनिबंधेष्वेवम्
एतेनैकादशीनिमित्तकंश्राद्धंद्वादश्यांकार्यमितिवदंतः परास्ताः किंचमहालये सपक्षःसकलःप्रोक्तः
श्राद्धषोडशकंपतीतिश्रुतं षोडशकत्वंचैकादश्यांचमन्वादिश्राद्धंच क्षयाहात्परिज्ञानेचतत्पक्षेकाद
श्यांविहितंश्राद्धंबाधितमेवस्यात् यदपिस्मृतिचंद्रिकायांपठंति अन्नाश्रितानिपापानितद्भोक्तुर्दातुरेववा
मज्जंतिपितरस्तस्यनरकेशाश्वतीःसमाः इतितस्यापिरागप्राप्तभुजिगोचरत्वं वैधेश्राद्धेकृतवतांमदनरत्नादिसंमत
त्वात् एकादश्यांनयोपित्र्योदिनेचश्राद्धनिश्चयात् जलपिंडविनादानंकृत्वानरकमाव्रजेदिति लघुनारदीयेएका
दश्यांश्राद्धनिषेधः समानाधिविभिन्नविषयः पूर्ववाक्येतदग्रहणात् यद्वाश्राद्धनिश्चयःश्राद्धप्रतिग्रहः अथ
व्रतघ्नान्याह मदनरत्नेदेवलः सर्वभूतभयंव्याधिःप्रमादोगुरुशासनं हविर्ब्राह्मणकाम्याचगुरोर्वचनमौष
धं नारदीये अनुकल्पोनृणांप्रोक्तःक्षीणानांवरवर्णिनि फलंमूलंपयस्तोयमुपभोज्यंभवेच्छुभे नत्वेवभो
जनंकेचिदेकादश्यांबुधैःस्मृतं अस्यापवादः शयनेचमदुत्थानेमत्पार्श्वपरिवर्त्तने नक्तोमूलफलाहारी
हृदिशल्यंममार्पयेत् इदंचातिसंकष्टविषयं व्रतेत्वविरोधिनोनिर्णयामृतेसर्वव्रतेषुज्ञेयाः तत्रैकादश्यां
संकल्पः गृहीत्वौदुंबरंपात्रंवारिपूर्णमुदङ्मुखः उपवासंतुगृह्णीयाद्यद्वावाचाभिधारयेत् इति माधवीये
वराहोक्तेः मंत्रस्तुविष्णुक्तः एकादश्यांनिराहारःस्थित्वाहमपरेऽहनि भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत

तेति शैवादीनां तु सौरागमे सावित्र्याप्यथवा नाम्ना संकल्पं तु समाचरेत् शिवादीनां गायत्र्या यजुर्वेदेष्व
सिद्धाः वाराहे इत्युच्चार्य्य ततो विद्वान् पुष्पांजलिमथार्पयेत् ततस्तु जलं पिबेत् अष्टाक्षरेण मंत्रेण त्रिर्जपे
दभिमंत्रितं उपवासफलप्रेप्सुः पिबेत्पात्रगतं जलमिति कात्यायनेनोक्तेः मध्यरात्रे उदये वा दशमीवेधेन
तौ संकल्प इति माधवः दशम्यासंगदोषेण अर्धरात्रपरेण तु वर्जयेच्चतुरो यामान् संकल्पार्चनयोः सदा वि
द्धोपवासेन त्वं तर्हि नित्यकामसमाहितः रात्रौ संपूजयेद्विष्णुं संकल्पं च तदा भवेत् इति नारदीयोक्तेः तत्रैव पू
जामभिधाय देवस्य पुरतः कुर्य्याज्जागरं नियतो व्रती द्वादश्यां निवेदनसंकल्प उक्तः कात्यायनेन अज्ञानति
मिरांधस्य व्रतेनानेन केशव प्रसादसुमुखो देव ज्ञानदृष्टिप्रदो भवेति नारदीये ब्राह्मणान्भोजयेच्छक्त्या
दद्याद्वै दक्षिणां ततः स्कांदे कृत्वा चैवोपवासं तु यो श्नाति द्वादशीदिने नैवेद्यं तुलसीमिश्रं हत्याकोटिविना
शनं द्वादश्यां च वर्ज्यान्याह बृहस्पतिः दिवास्वापं परान्नं च पुनर्भोजनमैथुनं क्षौद्रं कांस्यामिषं तैलं द्वाद
श्यामष्ट वर्जयेत् हेमाद्रौ ब्रह्मांडपुराणे पुनर्भोजनमध्वानं भारमायासमैथुने उपवासफलं हन्युर्दिवा
निद्रा च पंचमी स्कांदे परान्नं कांस्यतांबूलं लोभं वितथभाषणं वर्जयेदिति शेषः विष्णुधर्मेषु असंभाष्या
न्हि संभाष्य तुलस्यास्तसिकादलं आमलक्याः फलं वापि पारणे प्राश्य शुद्ध्यति बृहन्नारदीये रजस्वलां च चं
डालं महापातकिनं तथा सूतिकां पतितं चैव उच्छिष्टं रजकादिकं व्रतादिमध्ये शृणुयाद्येषां ध्वनि
मुत्तमः अष्टोत्तरसहस्रं तु जपेद्वा वेदमातरं एतद्व्रतं सूतकेपि कार्य्यम् सूतके मृतके वापि न त्याज्यं द्वाद
शीव्रतमिति तत्रत्योक्तेः दानादि सूतकांते कार्य्यं सूतकांते नरः स्नात्वा पूजयित्वा जनार्दनं दानं दत्वा वि
धानेन व्रतस्य फलमश्नुत इति मात्स्योक्तेः एतद्रजोदर्शनेपि कार्य्यं एकादश्यां न भुंजीत नारी दृष्टे रजस्यपी
ति पुलस्त्योक्तेः अथ यदा द्वादश्यां श्रवणर्क्षं तदा शुद्धामप्येकादशीं त्यक्त्वा तत्रैवोपवासः कार्य्यः शुक्ला वाप्य
दि वा कृष्णा द्वादशी श्रवणान्विता तयोरेवोपवासश्च त्रयोदश्यां च पारणमिति नारदीयोक्तेः एते च नियमाः
काम्यव्रते नियताः नित्यव्रते यथासंभवं कार्य्याः शक्तिमांस्तु पुनः कुर्य्यान्नियमं सविशेषणमिति कात्या
यनोक्तेः अशक्तौ तु माधवीये ब्रह्मवैवर्ते इति विज्ञाय कुर्वीतावश्यमेकादशीव्रतं विशेषनियमाशक्तो द्व
[illegible]पि तेन भवेत् अथ प्रसंगादष्टौ महाद्वादश्यः तत्र शुद्धाधिकैकादशीयुता द्वादशी उन्मीलनी तस्याः १ द्वाद
श्येव शुद्धाधिका वर्द्धते चेत् सा वंजुली २ वासरत्रयस्पर्शिनी त्रिस्पृशा ३ अग्रे पर्वणः संपूर्णाधिकत्वे पक्षवर्द्धिनी ४
पुष्यर्क्षयुता जया ५ श्रवणयुता विजया ६ पुनर्वसुयुता पापनाशिनी ७ फाल्गुनशुक्ला आमलकी ८ सेवा
आमर्दिकी अथ द्वादश द्वादश्यो जयंतीसंज्ञकाः १२ तास्तु सर्वा द्वादशमासेषु क्रमशो भवंति तासामनुष्ठान
विशेषोपि तत्रैवोच्यते एताभ्यश्चान्योपि द्वादशीभेदविशेषास्तेपि ग्रंथविस्तारभयान्न लिख्यंते एताः सर्वा अपि या
वच्छक्तिकामो यथासंभवमुपवसेत् अत्र मूलं हेमाद्रौ ज्ञेयं एकादशीद्वादश्योरेकत्वे चोपवासः पार्थक्ये
शक्तस्योपवासद्वयं तथा एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् इति विष्णुरहस्यात् अशक्तौ तु द्वादश्या
मेव एकामेकादशीं त्यक्त्वा विष्णुं च समुपोषयेत् पूर्ववासरजं पुण्यं सर्वं प्राप्नोत्यसंशयमिति तत्रैवोक्तेः यदा
स्वल्पा द्वादशी तदोक्तं मात्स्ये यदा भवति स्वल्पापि द्वादशी पारणादिने उषःकाले द्वयं कुर्य्यात्प्रातर्मध्याह्नि
कं तदा नारदीये अल्पायामपि राजेंद्र द्वादश्यामरुणोदये स्नानार्चनक्रिया कार्य्या दानहोमादिसंयुता
इति संकटे तु माधवीये देवलः संकटे विषमे प्राप्ते द्वादश्यां पारयेत्कथं अद्भिस्तु पारणं कुर्य्यात्पुनर्भुक्तं न दो
षकृदिति संकटं त्रयोदशी श्राद्धप्रदोषादौ अत्र केचिदाहुः अपकर्षवाक्यानि न्यूनाधिकादिताग्निविषयाणि
अग्निहोत्रादीनां श्रौतत्वेनापकर्षायोगादिति द्वादश्यां च प्रथमपादमतिक्रम्य पारणं कार्य्यं द्वादश्याः प्रथ
मः पादो हरिवासरसंज्ञितः तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः इति निर्णयामृते मदनरत्ने च विष्णुध
क्तेः अत्र केचित्संगदंते यदा भूयसी द्वादशी तदापि मुहूर्तत्रये पारणं कार्य्यम् सर्वेषामुपवासानां प्रातरेव

द्विपारणमितिवचनादितिनिर्णयसिंधौ तत्रैवोक्तं वस्तुतस्तुबहूनांकर्मकालानामपिनाकारणेबाधापत्तेःप्रागुक्त
वचनैश्चाल्पद्वादश्यामेवापकर्षविधानादपराह्ण एवकार्यमिति प्रातःशब्दस्तु सायंप्रातर्द्विजातीनामशनं
श्रुतिचोदितमितिवचनादपराह्णवाच्यप्युपपन्नः नचवाक्यवैयर्थ्यंपुनर्भोजनात् सायंपारणनिवृत्त्यर्थत्वात्त
स्येत्याहुः प्रमादेन एकादश्युपवासातिक्रमेऽपराह्णेवाराहे एकादशीविद्धताचेत्परतोद्वादशीस्थिता उपोष्या
द्वादशीतत्रयदीच्छेत्परमंपदमिति अत्राविरोधिनोनियमाः सर्वव्रतेषुबोद्धव्याः अन्येचनवरात्रेवक्ष्यंते इ
तिदिक् अथैकादश्यांसिद्धविरुद्धादिकंलिख्यते एकादशीशुक्रवारेणसिद्धा यदुक्तं शुक्रेणभानुपत्न्यष्टीए
कादश्यपिसिद्धिदाइति चंद्रेचित्रोत्तराषाढपूर्वाषाढाविशाखिका एकादशीत्रयोदश्योनष्टयोगाःप्रकी
र्तिताइति एकादश्यांनर्त्तनादिकार्यं तदाहनर्त्तनंदेवममिष्टक्रमेव एकादश्यांपाषाणपुष्पाणिनखादेत्
तत्रोक्तमेव नखचर्मतिलानिति सर्वास्वेकादशीषुतिथिषुपत्येनशिवःपूज्यः तदुक्तं एकादश्यांशिवस्य चे
चेति स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्नानाशास्त्रविचारसारसवितासद्वंदसंरक्षकः
धर्माधर्मविभागकृद्रघुपतेःपादांबुजार्चारतो जीयात्पुत्रकलत्रमित्रसहितःसंपालयन्क्ष्मांचिरम् १
रणवीरसिंहभूपेशाकारितेकृत्यसागरे एकादश्यामभूदत्रपंचमोरत्नसंग्रहः २ अथद्वादशी
सामान्यनिर्णयः तत्रादौकृष्णशुक्लद्वादशीध्यानम् द्वादशीगरुडारूढाभेचवर्णाचपात्रिणी द्वादशी
शुक्लवस्त्रेयंनीलकंठतलभूषितेति द्वादशीतूपवासादिषुपक्षद्वयेप्येकादशीयुतैवग्राह्या रुद्रेणद्वादशी
युक्तेतियुग्मप्राधान्यात् द्वादशीतुप्रकर्त्तव्याएकादश्यायुताप्रभो सदाकार्यान्तुविद्वद्भिर्विष्णुभक्तैश्चमान
वैरिति स्कांदवचनाच्च दानार्चनादिविशेषकृत्येष्वत्रेशति इतिद्वादशीसामान्यनिर्णयः अथसिद्धविरुद्धा
दिकंलिख्यते द्वादशीबुधवारेणयुक्तासिद्धा तत्रोक्तं बुधवारेद्वितीयाचसप्तमीद्वादशीतिच रविवारेणाक
कचाख्योयोगोविरुद्धोभवति तदुक्तम् सूर्येविशाखाभरणीद्वादशीचचतुर्दशी मघानुराधाज्येष्ठाचवर्ज
नीयाप्रयत्नतइति द्वादश्यांव्रतपौष्टिकादिकार्यं तत्रोक्तं व्रतपौष्टिकेद्वितीयाद्वादश्योरिति अत्रबिल्वफलं
नभक्षयेत् नखचर्मतिलानिचेत्यादि पूर्वमेवोक्तत्वात् तुलामकरस्थेसूर्येद्वादशीदग्धाभवति द्वादश्यांयो
गिनीसंमुखान्नैर्ऋत्यांदिशियात्रानकार्या सर्वास्वपिद्वादशीषुतिथिषुत्वेनविष्णुरर्चनीयः इतिद्वादशी
सामान्यनिर्णयप्रकरणम् अथत्रयोदशीसामान्यनिर्णयः तत्रशुक्लकृष्णत्रयोदशीध्यानं चापबाणधरा
गौरीमकरस्थात्रयोदशीति अशोककलिकाबाणचापपात्रात्रयोदशी मंचासनस्थिताश्यामाहरिद्रा
मदालसा गदापात्रधरागौरीनिधिस्थास्यात्त्रयोदशीति शुक्लात्रयोदशी सर्वमतेपूर्वाग्राह्या त्रयोदशीप्र
कर्त्तव्याद्वादशीसहितामुने भूतविद्धानकर्त्तव्यादर्शःपूर्णाकथंचन वर्जनीयाप्रयत्नेनएकादशीव्रतंयथा
इतिब्रह्मवैवर्त्ते पूर्वविद्धाविधानादुत्तरविद्धानिषेधाच्च त्रयोदशीप्रकर्त्तव्यायाभवेदापराह्णिकी स्कांदाच्च आप
राह्णिकीपूर्वविद्धेत्यर्थः पंचमीसप्तमीचैवदशमीचत्रयोदशी प्रतिपन्नवमीचैवकर्त्तव्यासंमुखीतिथिरिति पै
ठीनसिवचनाच्च एतानिशुक्लत्रयोदशीविषयाणि यद्यप्यत्रशुक्लपक्षद्वैधानास्ति तथापिकृष्णत्रयोदश्याः
परविद्धतायावाचनिकत्वात् विद्धतायाःशुक्लपक्षविषयत्वंपरिशिष्यते कृष्णत्रयोदश्याःपरविद्धत्वमुक्तं
निगमे षष्ठ्यष्टमीअमावास्याकृष्णपक्षेत्रयोदशी एताःपरयुताःपूज्याःपराःपूर्वयुतास्तथेति तस्माच्छु
क्लत्रयोदशीपूर्वयुता कृष्णात्रयोदशीपरयुतेतिसिद्धं शुक्लत्रयोदशीपूर्वापराकृष्णात्रयोदशीति माधवोक्ते
श्च त्रयोदशीतिथिःपूर्वासितेपश्चादितिदीपिकोक्तेश्च यदातुकृष्णपक्षेपरविद्धानलभ्यते तदापूर्वविद्धा
ग्राह्या तदाहवसिष्ठः एकादशीतृतीयाचषष्ठीचैवत्रयोदशी पूर्वविद्धातुकर्त्तव्यायदिनस्यात्परेहनीति
उपवासेष्वयमेवनिर्णयः एकादश्यष्टमीषष्ठीद्वितीयाचचतुर्दशी त्रयोदशीअमावास्याउपोष्याःस्युःपरा
न्विताः द्वितीयापंचमीवेधाद्दशमीचत्रयोदशी चतुर्दशीचोपवासेहन्युःपूर्वोत्तरेतिथी इतिहवसिष्ठवच

दर्शंशान्विदुः अन्त्यावशेषं यच्चदर्शाणि प्रतिपत्संधेविना वृत्त्येजेत् अन्त्यमंशं यच्चदर्शायाः व्रतकर्मणियागेचप्रतिपद
श्चतुर्थमंशं अयंचप्रतिपत्पर्वीत्यचतुर्थांशाभिन्नांशीश्चतुरंशेतिपर्युदासविषयापूर्वशेषएवनतुस्वतंत्रस्याग
विधिः पर्वणोयश्चतुर्थांशइत्यादिवाक्यांतरवशाद्वाक्यभेदापत्तेश्च अन्वाधानेपर्वचतुर्थांशवर्जनंचसद्यस्का
लव्यतिरिक्तविषयं सद्यस्कालतायांतत्रैवतदनुष्ठानात् कथंतर्हियागेचतुरइत्यपेक्षणीयस्तथार्षे पंचद-
श्याःपरःपादःपक्षादेःप्रथमास्त्रयः कालःपर्वणियागेस्यादन्यथानुनविद्यते कात्यायनः नयष्टव्यंचतुर्थां
शेयागेःप्रतिपदःक्वचित् रक्षांसितद्विलुंपंतिश्रुतिरेषासनातनी तत्राप्यहनियागःकर्तव्यः पूर्वेद्युरग्नि
गृह्णातिउत्तरमहर्देवतायजेतेत्यहर्विधानात् तत्रापिपूर्वाह्णएवपूर्वाह्णोवैदेवानामितिश्रुतेः तत्रापिप्रात
रेव पर्वणोयश्चतुर्थांशःआद्याःप्रतिपदस्त्रयः यागकालःसविज्ञेयःप्रातरुक्तोमनीषिभिरिति बह्वृचशा
नान्तरवचनात् प्रातर्यजध्वमश्विनेतिमंत्रलिंगाच्च प्रातःकालश्चपंचधाविभक्तदिनस्याद्यस्त्रिमुहूर्तोभाग
लेखाप्रभृत्यथादित्येत्रिमुहूर्तेस्थितेतुवै जातकालइतिप्रोक्तोभागश्चाह्नः सपंचमःसमुहूर्तत्रितयंप्रात
रित्यादिवचनाच्च यस्तुचतुर्धाविभागपक्षेसार्धप्रहरात्मके आद्यभागे संगवाख्यईसंयुक्तःप्रातरित्यभि
धीयते इतीदानींतनानांप्रातःशब्दप्रयोगः सलक्षणयाअनेकार्थत्वस्यान्याय्यत्वात् पूर्वाह्णप्रहरंसार्द्धमि
तिगोभिलेन तस्यपूर्वाह्णत्वोक्तेश्चऋग्भिःप्रातर्दिविदेवईयतइतित्रेधाविभक्तदिनाद्यविभागविषयोपिप्र
योगस्तथा एवंचगोभिलीयादौपूर्वाह्णग्रहणंयोगेनदर्शप्रातःपरमेव पर्वण्यन्वाधानादिकंप्रतिपदिष्टि
रितिसंधिपार्श्वयोः आरंभसमाप्तीव्यवस्थितेएवंयागान्वाधानकालेस्थितेयदापौर्णमास्यमावास्ययो-
स्तदुत्तरप्रतिपदोश्चसूर्योदयास्तमयस्पर्शित्वंतदानकोपिसंदेहः तयोःखंडत्वेतुनिर्णयोभिधीयते तत्रगो
भिलः आवर्तनेयदासंधिःपर्वप्रतिपदोर्भवेत् तदहर्यागइष्येतपरतश्चेत्परेहनि पर्वप्रतिपदोःसंधिरर्वागावर्तना
द्यदि तस्मिन्नहनियष्टव्यंपूर्वेद्युस्तदुपक्रमः आवर्तनात्परःसंधिर्यदितस्मिन्नुपक्रमः परेद्युरिष्टिरित्येषपा-
र्वद्वयविनिश्चयइति मदनरत्नेपि यदारात्रावपराह्णेवासंधिर्दिनेन्वाधायपरेद्युर्यष्टव्यं तदाहलौगाक्षिः
अपराह्णेथवारात्रौयदिपर्वसमाप्यते उपोष्यतस्मिन्नहनिश्वोभूतेयागइष्यतइति यदातुपूर्वाह्णमध्याह्नेवा
संधिस्तदासंधिदिनेयागः पूर्वदिनेन्वाधानम् तदाहसएव पूर्वाह्णेवाथमध्याह्नेयदिपर्वसमाप्यते उपोष्यत
त्रपूर्वेद्युस्तदहर्यागइष्यते इतिमाधवीयेषुवचनेषुमध्याह्नादिशब्दायौगिकाः नतुपंचधाविभागमाश्रित्य
वृत्तास्तथासत्यह्नोमध्योमध्याह्नइतिव्युत्पत्तेः संवर्तनेमध्याह्नशब्देनाभिधीयते अतएवगोभिलेनावर्तन
शब्दःप्रयुक्तः शातातपेनमध्यमशब्दःप्रयुक्तः पूर्वाह्णेमध्यमेवापियदिपर्वसमाप्यते तदोपवासःपूर्वेद्युस्तदह
र्यागइष्यतइति अह्नःपूर्वभागःपूर्वाह्णः अह्नोपरोभागोपराह्णः अतस्ताभ्यांशब्दाभ्यामावर्तनात्पूर्वोत्तरभाग
वाचकौ आवर्तनात्तुपूर्वाह्णोह्यपराह्णस्ततःपरं मध्याह्नस्तुतयोःसंधिर्यदावर्तनमुच्यते इत्येतत्प्रकरणप
ठितवचनात् आवर्तनादिति,, आवर्तनात् आङ्मर्यादायांतेनसूर्योदयमारभ्यावर्तनंमर्यादीकृत्यपूर्वाह्ण
इत्यर्थः अस्मादेववचनादेतत्प्रकरणेमध्याह्नशब्दःआवर्तनरूपदिनमध्यभागमात्रवचनइति निर्णयसिं
धावपि अत्रद्वेधाविभागः आवर्तनात्तुपूर्वोक्तवचनादितिमाधवीये वाजसनेयिनांतुविशेषमाहभाष्यार्थ
संग्रहकारः मध्यंदिनात्प्रागहनीहयस्मिन्प्राक्पर्वणःसंधिरियंतृतीयासार्वविका वाजसनेयि सत्यान
प्यनुपोष्याथपरेद्युरिष्टिरिति आवर्तनाहर्धमस्तमयादर्वाग्यदासंधिर्भवति तदहःसंधिमतीतितिथिःप्रथ
मारात्रौसंधिश्चेत्सातिथिर्द्वितीया उभेअपेक्ष्यपूर्वाह्णेसंधिमतीपर्वतिथिस्तृतीयाभवतितस्यांतिथौपर्व
कालस्याल्पत्वात्सार्वविकेत्युच्यते शाखांतराध्यायिनामीदृशेविषयेपूर्वेद्युरन्वाधानादिकंसंधितिथा
विष्टिः वाजसनेयिनांतुसंधितिथावन्वाधानंउत्तरतिथाविष्टिः एवंसतिवाजसनेयिनोनक्वापिसंधिदिना
त् पूर्वेद्युरन्वाधानादिकमस्ति सोयंविशेषइति एतद्वचनंपौर्णमासीपरमितिमदनरत्ने अपराह्णेएति।

मासंधावृत्तरेच्चः प्रातः प्रतिपच्चतुर्थ्योरसंभवेन तत्र यागकरणेपि न दोषः यदाह वृद्धशातातपः संधिर्यद्यपरा
ह्णे स्याद्यागं प्रातः परेऽहनि कुर्वाणः प्रतिपद्यागे चतुर्थ्यपि न दुष्यतीति न पष्टव्ये चतुर्थ्यंशा इति कात्यायनवचनं
तु पूर्वाह्णे पर्वसंधौ वेदितव्यं यदाह संगवादूर्ध्वमध्याह्नात्प्राक् चेदावर्तनाद्रवेः सा पौर्णमासी विज्ञेया सद्य-
स्कालविधौ तिथिरिति आपस्तंबोपि पौर्णमास्यामन्वाधानपरिस्तरणेपवामासयोवा सद्यस्कालायां
सर्वं क्रियत इति संगवावर्तनयोर्मध्ये पौर्णमासीप्रतिपदोः संधौ सति पूर्वाह्णे तैर्वचनैः संधिदिनात्पूर्वेद्यु
रन्वाधानादिकं प्राप्तं तत्र सद्यस्कालवाक्यैः संधिदिन उत्कृष्यते ननु तथापि पर्वप्रतिपदोः संधिरर्वागाव
र्तनाद्यदि तस्मिन्नहनि पष्टव्यं पूर्वेद्युः स्यादुपक्रम इति गोभिलवचनेन विरोधो भविष्यतीति चेन्न संगवा-
त्पूर्वमपि संधेरर्वाचीनत्वात्तद्विषयत्वं गोभिलवाक्यस्य कात्यायनवाक्यं तु संगवोर्ध्वमाविमध्याह्नादर्वाची
नसंधिविषयत्वं यद्वा गोभिलवचनं पर्वद्वयसामान्यविषयं कात्यायनमिति विशेषवचनेन सामान्यवचन
बाध इत्यविरोधः यदा चावर्तनतत्पूर्वसंध्योः पर्वचतुर्थांशे यागानुष्ठानं तदा न यागप्रयोगः पर्वमध्ये समापनी
यः किंतु प्रतिपदि प्रविष्टायां समापनीयः प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते पुनः प्रणीय कृत्स्नेष्टिः
कर्तव्या यागविन्नैमेरिति गार्ग्यवचनेन प्रत्यवायस्मरणात् प्रणीयाग्निमिति शेषः अत्र च प्रातरारभ्य सर्व-
कर्म निर्वर्त्य विसृक्रमादिकः समाप्तिपदार्थः प्रतिपदं शेषकर्तव्य इति मदनरत्ने प्रतिपदि प्रविष्टायां ब्राह्मण
भोजनमन्त्यपदार्थः समाप्तिः कर्तव्येति हेमाद्रौ परिशिष्टे तु पक्षादिचरोरुपक्रमोपि पक्षे प्रतिपदं प्रतीक्षै
व कर्तव्य इत्युक्तं पक्षादावेव कुर्वीत सदा पक्षादिकं चरुं पूर्वाह्ण एव कुर्वीत विद्धेप्यन्ये मनीषिण इति विद्धे
पूर्वविद्धे अमावास्यायां विशेषमाह वृद्धशातातपः द्वितीया त्रिमुहूर्ता चेत्प्रतिपद्यापराह्णिकी अन्वाधा
नं चतुर्दश्यां परतः सोमदर्शनादिति बौधायनोप्येवं वृद्धवसिष्ठोपि इंदौ निरूप्ते पयसि पुरस्ताद्बुदिते विधौ
यद्वैगुण्यं हुते तस्मिन्पश्चाददपि दिनद्वयेदिति अयमर्थः संपूर्णचतुर्दश्याममावास्याभ्रांत्या अन्वाधानं कृत्वा
हविषि निरुप्ते उषसि पूर्वस्यां दिशि चंद्रोदये सति यद्दर्शयागस्य वैगुण्यं तद्यागदिने पश्चिमायां दिशि चंद्रोदये स
ति यद्दर्शयागस्य वैगुण्यं तद्यागदिनेपि भवतीति श्रुतिरप्यममेवार्थं बोधयति यस्मिन्नहनि पुरस्तात् पश्चा
च्च सोमो न दृश्यते तदहर्यजेतेति अयमर्थः सिनीवाल्यां पुरस्ताच्चंद्रो दृश्यते द्वितीयायुक्तायां प्रतिपदि पश्चा
च्चंद्रो दृश्यते अनयोरुभयोरपि यागो न कर्तव्यः किंतु चंद्रदर्शनरहितायाममावास्यायां प्रतिपदि च यागः
कर्तव्यः चंद्रदर्शनोपेतायां शुक्लप्रतिपदि यागानुष्ठाने प्रायश्चित्तमाह कात्यायनः यजनीये ह्नि सोमश्चेद्वा
रुण्यां दिशि दृश्यते तत्र व्याहृतिभिर्हुत्वा दंडं दद्याद्द्विजातये इति दंडं दक्षिणां ब्रह्मदंडमिति मदनरत्ने अत्र चेच्छ
ब्दो यजतिनिमित्तत्वप्रतीतेर्विशेषणोसंक्रमादेवं निमित्तवाक्याभिव्यक्तिः वारुणीसोमदर्शनवद्दर्शयजनीयं
यागसंबंधित्वान्मोहाच्चेत्तमत्र यजेत तदा व्याहृतिभिर्हुत्वा दंडं दद्यादिति हविरार्त्तिमादित्यस्य हविश्चेदार्त्तिप्रा
न्निविशिष्टस्य स्यादिति वचनेन यजनीयत्वोक्तिरप्युपपन्नाऽस्मत्पतरे अर्वागस्तमयाच्चेद्द्वितीयायान्न दृश्यते
तत्र यागं न कुर्वीत विश्वेदेवाः पराङ्मुखा यंत इत्यर्थः अत्र द्वितीया त्रिमुहूर्तेति द्रष्टव्यं त्रिमुहूर्ता द्वितीया चेदि
ति वाक्यांतरात् अत्रायं च पर्युदासः चंद्रदर्शनार्हः प्रतिपद्भिन्नायां प्रतिपदीति सामान्यप्राप्तमुपजीव निषे
धो वा न यष्टव्यमितिवत् ननु यथा चंद्रदर्शनवतो दिनस्य यागे पर्युदासः कृतस्तथान्वाधानेपि तस्माच्चंदे
वैनं पुरस्तात्परस्तात्पश्येत्तर्ह्यवीपरमेदित्यादि सत्यं द्वयोरपि चंद्रदर्शनरहितकालः स संपूर्णायाममावास्या
यां प्रतिपदि च दिनद्वयेपि चंद्रदर्शनाभावादुभयत्राप्यनुगम्यते यदा त्वेकस्मिन्नेव दिने चंद्रदर्शनं तदोत्तरयोः
स्वकालत्वासंभवे अंगगुणविरोधो भवतीति न्यायेन चंद्रादर्शनदिने यागस्य पूर्वस्मिंश्चंद्रदर्शनवत्यप्यन्वाधा
नस्यानुष्ठानं युक्तं अत एव श्रुतिरपि तद्वेके दृष्ट्वोपवसंतीति गोभिलोप्याह दृश्यमानेप्येके देति तैत्तिरीयब्रा
ह्मणे तु चंद्रदर्शनदिनेपि याग उक्तः एषा वै सुमना नामेष्टिर्यजद्येजानं पश्चाच्चंद्रमा अभ्युदेत्यस्मिन्नेवास्मै

लोकेदं कं भवति अयमर्थः येयमिष्टिश्चंद्रदर्शनदिने पश्चाच्चंद्रमसि उदितेतस्मै यजमानायास्मिल्लोके समृद्धिर्भ
वतीति श्रुत्यंतरेऽपि यदहः पश्चाच्चंद्रमा अभ्युदेति तदहर्यजन्निमांलोकानभ्युदेति आपस्तंबसूत्रभाष्यार्थसंग्र
हकारेणापि तत्रैव यागइत्युक्तम् अपराह्णेथवा रात्रौ यदि पर्वसमाप्यते उपोष्यात्तत्रशाकाप्यास्तापूर्णीत्यपिलक्ष
णं पूर्वाह्णे वाथमध्याह्ने यदि पर्वसमाप्यते उपोष्यानुमतिस्तत्र साघ्नश्चेति लक्षणं अपराह्णे त्रियामायां वा यदि
पर्वसमाप्यते उपोष्यात्कुहूस्तत्र यदहर्नेतिलक्षणं पूर्वाह्णे वाथमध्याह्ने पर्वसंधिर्यदाभवेत् तत्रोपोष्यासि
नीवालीशीनदृष्टारलक्षणेति अत्रयदृष्टयेस्वस्वसूत्रानुसारेण व्यवस्थाज्ञातव्येति मदनरत्ने माधवीयेपि सो
यंविशेषो नाश्वलायनापस्तंबविषय इति हेमाद्रिस्त्वपराह्णसंधावपि परदिनेपि यत्र तुर्थांशे चंद्रोदयेचसति
द्वितीयादियष्टव्यं नक्षयेसति पूर्वेद्युर्यागः कर्तव्यः नचंद्रदर्शनइत्याह पर्वणोयोंशस्तुर्यस्तु यष्टव्यस्तु द्विजाति
भिः द्वितीयासहितेयस्मात् ह्रस्वयत्याश्वलायन इतिवचनात् कितीयेवितिपाठो मदनरत्नेसोपिकोन्यति
न्यायेनचतुर्थांशापरएव भूतेयंचदर्शापूर्णाद्वितीयाक्षयगामिनी चरुरिष्टिरमायांस्याद्भूतेकवादकीत्यिये
त्युक्तेश्च इत्यमेवनिर्णयामृतकालतत्त्वविवेचनयोः सिद्धांतितं बौधायनमतानुसारिणामन्वाधानवद्दर्श
श्राद्धमपिस्वल्पामावास्योपेतायांचतुर्दश्यां कर्तव्यं यदाचतुर्दशीयाममित्यादिबौधायनवचनात् एवंते
षांपितृयज्ञस्यापितत्रैवानुष्ठानं चंद्रक्षयवत्यपराह्णे तस्यापिविधानात् अपराह्णे ददातीति तस्मिन्क्षीणे
ददातीति कर्मप्रदीपेतु पक्षांतेकर्मनिर्वर्त्यवैश्वदेवंचसाग्निकः पिंडयज्ञंततः कुर्यात्ततोन्वाहार्यकंबुध
इत्यादिवचनैरन्वाधानेपिंडपितृयज्ञश्राद्धानामेकदिनसाध्यत्वात्पितृयज्ञश्राद्धयोश्चाहन्यचंद्रक्षयेविधान
दन्वाधानकालव्याप्यागतमपिचंद्रादर्शनचंद्रक्षयोपलक्षणमित्युक्तं यदुक्तेयदहारेवदर्शनेनेतिचंद्रमाः
तन्न यापेक्षयातियंदीर्घोरात्रेनिचेत्यपीति एतच्चयज्ञास्वायान्नपायामेकदिनेतुष्टेयत्वमुक्तंनहिपयंद्र
ष्टव्यं संधिनिर्णयश्चतिथिसाम्येयथास्थितयवहद्धित्वययोस्तत्रविशेषमाहलौगाक्षिः तिथेःपरस्याश्च
ततश्चयदाचत्रिंशन्नाडीरूपपरमदिनसमयेपौर्णमासीषोडशघटिकासप्तदशघटिकारूपपरमक्षीण
दिनसमयेचद्वादशघटिकात्रयोदशघटिकाएवं विषुवदाद्युदाहरणम् परमदिनेचप्रतिपत्त्रिमुहूर्तेर्वृद्धा
तदायथास्थितसंध्यालोचने आवर्तनतत्पूर्वसंधेःपर्वचतुर्थांशरूपयागकालत्वाभावात्संधिदिनेयागः
प्राप्नोति अर्थवृद्धिप्रक्षेपेणतुसंधिनिर्णयेपरदिने एवमन्यदप्युदाहरणम् परदिनेप्रतिपत्त्रिमुहूर्तेन्यूनात्
दापराह्णसंधौ संधिर्यद्यपराह्णे स्यादितिवचनात्प्रतिपच्चतुर्थांशस्याधिकेषांचिन्मतेयागकालत्वात्परदि
नेयागःप्राप्नोतियथास्थितसंध्यालोचने अर्थक्षयप्रक्षेपेणतुसंधिदिनएवेतिविशेषः अत्रकेचित् यदि
चतुर्दशीदशदंडापर्वचपंचदशदंडमितंप्रतिपत्तु एकोनविंशतिदंडातदाप्रतिपद्वृद्धेरर्धदंडद्वयंपर्वणिप्र
क्षिपेत् एवंचतुर्दशीयदिपंचविंशतिदंडापर्वैकोनविंशतिदंडं प्रतिपच्चतुर्दशदंडातदाप्रतिपद्ध्रासार्धघटि
काद्वयंपर्वणेप्रक्षिपेदितितदुक्तं ईदृशेविषयेपर्वापेक्षयाप्रतिपदोह्रासस्यवृद्धेर्वाभावात् प्रत्युतवृद्ध्युदा
हरणे ह्रासएवास्ति ह्रासोदाहरणेचवृद्धिरिति घटिकान्यूनाधिक्यभावेह्रासवृद्धीभवतः किंतुचतुर्दश्युत्त
रमपावस्याःपर्वघटिकाल्पत्वात् आधिक्येन्यूनत्वेप्रतिपदोह्रासवृद्धिरिति एवमालोच्यसंधिनिर्णयः मय
वियदाप्रतिपद्दिनेपंचधाविभक्तदिनचतुर्थभागरूपापराह्णव्यापिद्वितीयाप्रवेशेनचंद्रदर्शनं तदाचतुर्दश्य
मन्वाधानंसंधिदिनेचयागः तथाचवृद्धवसिष्ठः आदित्येस्तमितेचंद्रइत्यादिकात्यायनः पूजनीयेद्विसोमश्चे
दितिवृद्धशातातपः त्रिमुहूर्ताद्वितीयाचेदिति यच्चतत्रोक्तं एतानिवचनान्यपराह्णेऽमाप्रतिपत्संधिपरा
णीतिहेमाद्रिःतन्न रात्रिसंधावपितथात्वेनेतिनचिंत्यं तदाकैमुतिकन्यायेनतत्रसंधौतथात्वेतिविरहात
नवापराह्णप्राह्णेन योगहत्यावत्यावर्तनोत्तरभागाभिधानेरात्रिसंधौकैमुतिकन्यायाप्रवृत्तेरितिवाच्यम्

दिनचतुर्थभागरूपापराह्णकाले संधौ यदि उत्तरदिने यागः स्यात् हि राकोर्वप्रतिपदोः संधौ उत्तरदिने याग इति किमु वक्तव्य
मित्येवं रूपकैमुतिकन्यायः प्रवृत्तो बाधकाभावात् तस्माद्दिनिगमनाविरहादेतानि वचनान्यावर्त्तेते ततः पूर्व
मुत्तरं वामाप्रतिपत्संधौ प्रवर्त्तनापराह्णसंधावेवेति युक्तमिति यदुक्तं तदेवायुक्तं यदपि मयूखे यत्तु केचिच्चंद्रदर्शन
मेव यागनिषेधकं न त्रिमुहूर्तद्वितीयाप्रवेशादिति तन्न त्रिमुहूर्ताद्वितीया चेदित्यादिवाक्यपादिकानुवादतापत्ते
रिति तदप्युपेक्ष्यं परतः सोमदर्शनादिति हेतूक्तेरेव त्रिमुहूर्तेत्यस्योपलक्षणप्रतीतेः ननु प्रकृतेर्यथोक्तकाला
त्कालांतरं क्वचिन्मर्षयते षोडशेहन्यभीष्टेष्टिर्मध्यायं चदृशेहनि चतुर्दशे जघन्येष्टिः पापा समदशेहनीति अ
यमर्थः पूर्वप्रतिपद्दिनमारभ्य गणनाया मागामिप्रतिपद्दिनं षोडशं भवति तत्रेष्टिरभीष्टोत्तमा ततः पूर्वस्मिन्ने
व दिने मध्यमा ततः पूर्वस्मिंश्चतुर्दशेहनि जघन्या तदेव कालत्रये विहिता उत्तमकालात्षोडशादिनाहूर्ध्वं वर्त्तिनि
समदशादिने प्रतिषिद्धा वाढं तत्रोत्तममध्यमपक्षौ शास्त्रीयौ तिथीनां वृद्धिद्वयाभावे सत्युत्तमः पक्षः प्राप्नोति
एकस्मिन् दिने क्षीणे सति मध्यमः प्राप्नोति जघन्यपक्षस्तु न शास्त्रीयः दिनद्वयक्षयाभावात् अतो जघन्य शब्दो
निषेधविवक्षया प्रयुक्तः ननु पक्षांतरविवक्षया यदा षोडशादिने मावास्या दशघटिका समदशादिने प्रतिपद्व
र्द्धते तदा श्रोत्या प्रतिपच्चतुर्थांशेनुष्ठानं प्रसक्तं पापा समदशे चेति वचनेन निवार्यते तच्चन्याय्यं पूर्वाह्णसं
ध्युपेतदिने इष्टेः कर्त्तव्यत्वेन निर्णीतत्वात् यदा तु मध्याह्ने श्रोत्या षोडशादिने प्रतिपद्वर्द्धते तदा न प्रतिषिध्यते
एवं सर्वकर्मयजनीयात्त्रयोदशभवेत्समदशेपि तत् प्रयत्नेन वर्जयेदिति तत्र त्रयोदशी सप्तदशी निषेधो नि
त्यानुवादो वेदिनद्वयवृद्धेर्दिनद्वयक्षयस्य वाभावात् हेमाद्रिकालतत्त्वविवेचनयोस्तु षोडशेहन्यभीष्टेष्टि
रिति वचनं प्रधानयागविषयतयाव भासमानमपि दृष्ट्युपक्रमान्वाधानपरतया व्याख्याते अस्य वचनस्य पूर्वा
र्द्धममावास्या विषयमुत्तरार्द्धं पौर्णमासी विषयमित्यपि पक्षांतरं हेमाद्रौ स्थितं यत्तु वचनांतरं ऊनेपंचदशी
यान्यास मेधान्यान षोडशी ऊनेवाप्यधिके वापि नेज्या समदशी क्वचिदिति सप्तमी निषेधपरत्वाधानयागवि
षयतया कथंचिद्व्याख्येयमिति दिक् निर्णयसिंधौ यत्तु माधवः यस्तु वाजसनेयी स्यात्तस्य संधिदिनात्पुरा न
काप्यन्वाहुतिः किंतु सदा संधिदिने हि सेत्याह यच्च कालादर्शेप्युक्तं आवर्त्तनादयः संधिर्यद्यन्वाधायतद्दिने
परेद्युरिष्टिरित्याहुर्विप्रा वाजसनेयिन इति यच्च मदनरत्ने मध्यंदिनात्प्रादहनी हयस्मिन्नित्यादि तत्कर्कभाष्य
देवजानी श्रीमंतभाष्यादि सकलतच्छास्त्रीयग्रंथविरोधाद्वृद्धानादराच्चोपेक्ष्यमित्युक्तं तदेतत्तत्तद्ग्रंथपर्यालो
चनयावधातव्यं योयमिष्टिकालनिर्णयः स एवान्नस्थालीपाकेप्यवगंतव्यः तत्रेष्टिस्थालीपाकाधानगृ
हप्रवेशनीयहोमानंतरं भाविन्यां पौर्णमास्यामारंभणीयो ततदर्शाद्यारंभकाले मलिमासपौषशुक्रास्तादि
भवति तदेष्टारंभ कार्य्यः यानि तु उपरागो धिमासश्च यदि प्रथमपर्वणि तथा मलिम्लुचे पौषे नान्वारंभण
मिष्यते गुरुभार्गवमौढ्ये च चंद्रसूर्यग्रहेन थेत्यादिसंग्रहवचनानि तान्यालस्यादिनातिक्रांतशुद्धकालप्रारं
भविषयाणि नामकर्मचदर्शेष्टिर्यथाकालं समाचरेत् अतियाने सति तयोः प्रशस्ते मासि पुण्यभे इत्यप
र्कगार्ग्यवचनादिति प्रयोगपारिजाते मयूखे तु आधानानंतरा पौर्णमासी चेन्मलमासजा तस्यामारंभणीयां तु न
कुर्वीत कदाचनेति मंडनवचनादन्वारंभणीयामलमासोत्तरं शुद्धे काले कार्या तत्र कालातिक्रमनिमित्ता भ्रष्टे
ष्टिरप्यादौ कार्येति केचित् तत्र पुरुषापराधकालातिक्रमरूप विभ्राष्टेष्टिनिमित्ताभावादिति याज्ञिकास्तु पूर्वो
क्तत्रिकांडमंडनवचनाच्छुद्धकाल एव विभ्रष्टेष्टिं कृत्वान्वारंभणीयां कुर्वंति कालादर्शसंग्रहेपि आरंभं दर्शपू
र्णेष्ट्योरग्निहोत्रस्य चादिमं प्रतिष्ठाः पंचकर्माण्यामलमासे विवर्जयेदिति एवं प्रकृतिकालो निर्णीतः अथ वि
कृतिकालो निर्णीयते स च श्रुत्यैवाभिहितः यदीष्ट्या यदि पशुना यदि सोमेन यजेत सोमावास्यायां पौर्णमा
स्यां वेति पौर्णमासीकालीनोपांशुयाजाग्नीषोमीयादिविकाराणां पौर्णमास्यामेवामावास्याकालीनसान्ना
य्यादिविकाराणां चामावास्यायामेवेति व्यवस्थाप्रमादव्यवस्थार्थमिदं वचनं पौर्णमास्याममावास्यायामिति

विधेयकालगतैकवचनस्याविवक्षितत्वेनैकस्यां पौर्णमास्याममावास्यायां सांगप्रयोगोपादानात्तच्चयस्याकालीनत्वा
र्थं चेति निर्णीतं तत्त्वरत्ने न चेष्टिपशुसोमानामनेकेषामदृष्टफलत्वान्निमित्तोमावास्यापौर्णमास्योर्द्वयोर्निमित्त
त्वाच्च वाक्यभेदः स्यादिति वाच्यं इष्टिपशुसोमेष्वनुगतस्य यागत्वस्यैकस्योद्देश्यतावच्छेदकस्यामावास्या
पौर्णमास्यनुगतस्य च पर्वत्वस्य विधेयतावच्छेदकस्य सद्भावात्तस्य परिहर्तुमशक्यत्वात् अत्र पौर्णमास्यामा-
वास्याशब्दाभ्यां तदंत्यक्षणो गृह्यते तेन तद्वत्पदो रात्रैरित्यर्थमाह रामांडार इति निर्णयसिंधौ सोमस्यैव रात्रौ
ई मासस्य रात्रयः यत्तेषु आसन्नासाममावास्यां च पौर्णमासीं च नोपेयादित्याद्यर्थवादगतवैदिकप्रसिद्धेश्च तयो
स्तिथिवाचित्वमेवेति कालतत्त्वविवेचनेतत्र संपूर्णपर्वण्यपराह्णसंयोगे तदा प्रकृतिप्रधानानुष्ठानाभावाद्विकृ
तिं कृत्वा प्रकृतिरुपक्रमितव्या यदीष्टौ वाक्यविहितकालत्वाभावादिति मीमांसकानां याज्ञिकानां च विप्रतिपत्ति
मेव पूर्वाह्णसंयोगे त्वौदयिकपर्वणः प्रकृत्यावरुद्धत्वात् पर्वण्येवोपदिष्टपर्वकालत्वानुरोधेनातिदेशप्राप्तं प्रातः
कालेह्यह्नकालत्वद्बाधित्वा विकृत्यनुष्ठानं युक्तमिति मीमांसकाः तदुक्तं तत्त्वरत्ने एवं च यदुर्गस्वाम्यादिभिरुक्त
ते प्रागावर्त्तनात्प्रतिपत्त्यंचदर्शीसंधौ सति कृत्वा प्रकृतिं प्रतिपदि विकृतिः कर्त्तव्येति तदन्याय्यमनभिमतं भ
गवतो भाष्यकारस्येति न च पूर्वाह्णसंधि दिन एव विकृतिमनुष्ठाय प्रकृतिरनुष्ठीयतां तस्याः प्रतिपद्यपि वि
रोधादिति वाक्यं प्रकृतावुपदिष्टस्य प्रातःकालस्य बाधितुमशक्यत्वात् पूर्वेद्युरनुष्ठानेनोपदिष्टपर्वकालत्वा
नुरोधेन विकृतावतिदिष्टतद्बाधस्य न्याय्यत्वात् निशीथ्यादिवदनन्यगतिकवचनाभावे पूर्वेद्युरन्वाधाने
नोपक्रांतस्य प्रकृतिप्रयोगस्य मध्ये कर्मांतरानुष्ठानस्यानुचितत्वाच्च अत एव संपूर्णपर्वण्येवापराह्णसंयोगे च
विकृत्यनुष्ठानानंतरमेव प्रकृत्यन्वाधानं युक्तं अतिदिष्टविकृतिप्रधानांगप्रातःकालानुरोधाच्च प्रकृत्यन्वा-
धानस्योपदिष्टोपि प्रातःकालो यागकालत्वाद्बाध्य एवेति याज्ञिकमतानुसारेणान्येन पदासंपूर्णपर्व
तदा पर्वणि विकृतियागं कृत्वा तत्रैव पश्चादन्वाधाय प्रतिपदि प्रकृतीष्टिः कर्त्तव्या खंडपर्वणि त्वावर्त्तनत
त्पूर्वं साध्या प्रकृत्यनुष्ठानं कर्त्तव्यं तदुक्तं कात्यायनत्रिकांडमंडनाभ्यां आवर्तनात्प्रागपदि पर्वसंधिः कृत्वा तत-
स्मिन्प्रकृतिं विकृत्याः तदैव यागः परतो यदि स्यात्तस्मिन्विकृत्याः प्रकृतेः परेद्युरिति आवर्त्तनात्प्राक्पर्वसं
धौ प्रकृतिं कृत्वा पश्चाद्विकृतिः कर्त्तव्येति आपस्तंबेनाप्युक्तं प्रकृतेः पूर्वीकृतत्वादपूर्वमते स्यादिति अपूर्ववि
कृतिप्रकृत्योरंते प्रकृतेः समाप्तौ मन्यौ आत्स्यात् प्रकृतेः पूर्वीकृतत्वाद्धेदे प्रथमतः संकल्पगोचरत्वेनोपदिष्टत्वा
दित्यर्थ इति एतच्च हेत्ववादेन श्रुतिमूलत्वाभावादंगवासमभिव्याहारादिवदप्रमाणमिति निर्णयसिंधौ
कालतत्त्वविवेचने तु श्रुतिमूलकं वचनमेवैतदित्यंगीकृत्य याज्ञिकमते श्रद्धातव्यमित्युक्तं मयूखे तु अ
नपदृष्टोत्पादिश्रुत्या सांगाया विकृतेः पर्वणि विधानादावर्त्तनपूर्वं तथावधिपर्वणोधिकरणत्वश्रुतेः क
र्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिरिति तस्मिन्नेव प्रकृतिविकृतिपर्यासमपवासत्वे तद्दिन एवोभयोः कार्त्ती
व्यत्वे प्राप्ते क्रमः पूर्वोद्दिष्टविधिपत्ने प्रकृतेः पूर्वीकृतत्वादपूर्वं मं ते स्यादिति वचनमप्येतत्परमेव न च संधिमभितो य
जेनेति वचनात्प्रकृतिसमाप्तेः प्रतिपदि कर्त्तव्यत्वेन न कर्मणि कर्मारंभ इति निषेधेन च तन्मध्ये विकृत्यनुष्ठानम
नुचितमिति वाच्यं न कर्मणि कर्मारंभ इत्यस्य प्रयोगप्राग्भावभंगप्रसंगमूलकत्वेन श्रुतिमूलकत्वान्नाव
न् प्रयोगप्राग्भावाभंगस्य वात्र प्रतिपत्त्यतीत्यापि विकृत्यनुष्ठानेप्यावश्यकत्वादित्युक्तं अन्वारंभणीया
ते च न तु श्रणां कार्येति हिरण्यकेशिबह्वृचौ मात्स्यदत्तीये अन्येषां पर्वण्येव कालांतरमप्याह बौधायनः आमा
वास्येन वाह्न विषष्ठानन्तत्रे वेति शुक्लपक्षे कृतिकादिविशाखांतेषु देवनक्षत्रेष्विति केशवस्वामी व्याचख्यौ च त
:श्रीस्येषापिडादशाहयथा प्रयोगपक्षयोर्नक्षत्रे च वाऽऽरंभः यावज्जीवमांवत्सरप्रयोगयोस्तु फाल्गुण्यां चै-
वारंभः आग्रयणकालानाहाश्वलः वर्षासु श्यामाकैर्यजेत शरदि व्रीहिभिर्वसंते यवैः पर्वणि चैवेति श्रु
ति:रपि गरदमे धीव्रीहियवाभ्यां शरद्वसंतयोर्यजेत श्यामाकैर्नीवारैर्वर्षासु पक्काले चान्येन पुराणेर्वेति चास्ति क

कालेपि यजेत्पूर्वपूर्णमाहश्चेद्दर्शेन्नेवेज्याग्राग्रयणेष्टिः दीपिकायांदर्शेष्ट्याः परस्तुक्तमाग्रयणयकं प्रा
क्पौर्णमासाच्चतदिति श्रुतिरपिसायातस्मिन्कालेमावास्यायांसंपद्येत तयेष्ट्वाप्येतयायजेतेति
पौर्णमासेनयजेतेति अमावास्यादर्शेष्टिः तयाअमावास्ययाएतयाग्रयणेष्ट्याअनयावाचोतंग्याचेदं
पर्यवसन्नंपौर्णमास्यमावास्येष्ट्योरंतराग्रयणानुष्ठानपतत्त्वव्रीहिभिरिष्ट्वाव्रीहिभिरेवयजेताय
वेप्ययवैरिष्ट्वायवैरेवयजेताव्रीहित्यइतिश्रुतिबलाद्व्रीहियवाग्रयणारूपपूर्वोत्तरावधिव्यवस्थितं प्र
कृतौयेषांव्रीहियवानुष्ठानंतद्विषयंपौर्णमासेकहविष्कत्वनियमाद्दर्शस्यतथावाध्ययदहस्त्वेंद्रमा
नदृश्येत ताममावास्यामितिगोभिलगम्यंतद्भाष्यम् अथप्राहुः पूर्वप्रकृतापेक्षः नतुपौर्णमास्यां
यागार्थहविरुपलक्षणंतदमावास्यायामप्युपलक्षणीयमित्यर्थः दर्शातंपौर्णमासाद्येकंकर्मेति
वचनात् येनहविषाप्रक्रांतंतेनैवसमापनीयमितिन्यायाच्च हेमाद्रिस्तु पौर्णमास्यांपूर्वमाग्र
यणानुष्ठानंसद्यस्कालप्रकृत्यनुष्ठानविषयमिति पशौकालनिर्णयमाह गोविंदार्णवे कात्यायनः
अर्द्धोदद्धोभवतिनियतः पर्वसंधिः यस्मात्कृत्वातस्मिन्प्रकृतमयनत्स्यात्पशुः सद्यएव अधिकारपक्षे
स्त्वग्नीषोमीयेणसवनीयेनवासमानतंत्रः कार्यइतित्रिकांडमंडनः सोमेन्वारंभाश्वलः अमावास्यायां
दीक्षाजनीयेवास्तुत्यमहः पौर्णमास्यांदीक्षाजनीयेवापौर्णमास्यांजनीयेवास्तुत्यमहरिति लाघापभ
स्त्रेपि पूर्वपक्षस्यप्रथमेहनिदीक्षेतनक्षत्रयोगेवेति पूर्वपक्षः शुक्लपक्षयोगेवेत्ययमर्थः चैत्रादि
पूर्णिमायामश्विन्यादिनक्षत्रयोगेदीक्षेतेतिकालतत्त्वविवेचने खंडपर्वणितुपशौसोमेपिमीमांसकम
तेनतिथेरेवांगत्वेनोपदेशात्तस्याश्चनिकृष्टयोरावर्तनेतत् पूर्वसंध्योः पूर्वेद्युर्भूयः प्रयोगैकदेशव्या
प्तिलाभात् विकृतीष्ट्यादिवत् तयोस्तत्रेवानुष्ठानं याज्ञिकमतेतुपौर्णमास्यमावास्याशब्दयोस्ति
थिवचनबलादेवेष्ट्यादिवदेवपशुसोमयोरपिपरेद्युरनुष्ठानं तयोः संध्योः तद्विषयमपिक्वचित्प्रा
माणिकयाज्ञिकग्रंथेखंडपर्वणिसोमेश्चनातिपन्निश्चपर्वणि सोमस्तत्प्रयोक्तेत्याहकौषी
तकीश्रुतिरितित्रिकांडवचनं एतेनसोमकालेप्याख्यातइतिदर्शपूर्णमासविकृतिकालनिर्णयप्र
कारातिदेशकंसंकर्षकांडसूत्रवचनंलिखितं संधिवचनत्ववादिनांतयाज्ञिकानांतद्वद्दोराचल
क्षणयाआवश्यकत्वात्पायोप्येतद्वचनानुग्रहकोलभ्यतइति सुतरांतथानुष्ठानंयुक्तंयाज्ञिकाचा
रोप्येवमेवेति आधानंतुपर्वणिनक्षत्रेषुचोक्तं तत्रपर्वनक्तंगार्हपत्यमादधाति इत्यादिकर्मकाल
व्यापिग्राह्यं दिनद्वयेतत्वेपरंग्राह्यंसंकल्पपर्वणिलाभात् पूर्वनक्षत्रयोगेतदेवग्राह्यं यत्रत्रीणिस
न्नियतितान्यस्तेनक्षत्रंपर्वतत्समर्द्धविप्रतिषेधेनक्षत्रवलीयइतिहिरण्यकेशिसूत्राजनस्तुवसंतेब्रा
ह्मणोग्नीनादधीतेत्यादिः रेणुकारिकायांतु माघादिपंचमासेषुश्रावणेचाश्विनेतथा मार्गशीर्षेशु
क्लपक्षेआधानमथकारयेदित्युक्तं अत्रमूलंमृग्यं आधाननक्षत्राणित्वापस्तंबसूत्रे कृत्तिकारोहिणी
मृगशीर्षपुनर्वसुपूर्वोत्तराहस्तचित्राविशाखानुराधाश्रवणोत्तराभाद्रपदाइतिज्योतिः शास्त्रेतुपुष्य
रेवत्यावप्युक्ते सोमपूर्वाधानेविशेषमाहापस्तंबः सोमेनयक्ष्यमाणोनर्तुन्नक्षत्रंसर्वेनक्षत्रमितिनर्तुइष
च्छेदित्याश्वलायनसूत्रे अत्रप्रकरणादाधानकालबाधः तेनसोमस्यवसंतकालतानबाध्यतइति
रुद्रदत्तवृत्तौनारायणवृत्तौचोक्तं पूर्तवीमीतसोमस्यापिनर्तुन्नक्षत्रंवैदितिलिखनादुभयकालबाधम
न्याने श्रीरामांडारस्तुकालांतरविधानंवासर्वकालानादरोवेतिपक्षद्वयमुक्तवान् तत्राद्योक्तकृत्तिका
दिकालांतरस्यप्रधानेवसंतानाद्यबाधेनविधानेतथासोमेप्युदगयनपूर्वपक्षपुण्याहसन्निपातेय
शोकालोनादेशइतिछंदोगसूत्रोक्तोदगयनाबाधेनसोमाभिसंधिरूपकालांतरविधानादुदगयनंत्व
पेक्ष्यतइत्युक्तं द्वितीयपक्षेतुयदेवैनंश्रद्धोपनमेदितिसर्वकालानादरउक्तइतिभारद्वाजसूत्रात् ।

सर्वप्राह्णस्य च विश्वजित्सर्वकालव्याप इतितेन दक्षिणायनेपि भवतीत्युक्तम् षडशीतिभाष्ये देवज्ञानभाष्ये
तत्रस्त्रीचयद्बृहपित्रान्तु शुभभवतीत्युक्तमितिदिक् पिंडपितृयज्ञस्तु कात्यायनैर्यागदिनात्पूर्वेद्युः कार्यः
पूर्वांगत्वात् पिंडपितृयज्ञइति सूत्रात् माख्यातं चैतत्कार्काचार्यैः पूर्वएवदर्शात्पिंडपितृयज्ञो नपश्चा
त् कुतः अंगत्वात् तथाचस्मृतिः तस्मात्पूर्वेद्युः पितृभ्यः क्रियते उत्तरमहर्देवान्यजंते इति तेन कर्कमतेचतु
र्दशीयुक्तदर्शेपिंडपितृयज्ञ इति श्रीअनंतभाष्येतु परेत्वित्युक्तं तत्रहेमाद्र्याचार्यैरप्रणीते इत्थं कात्या
यनानां पिंडपितृयज्ञकालो निर्णीयते आपस्तंबादिभिस्त्वमावास्यायामपराह्णे पिंडपितृयज्ञेन चरं
तीति श्रुतेः संधिमदहोरात्रापराह्णे पिंडपितृयज्ञोनुष्ठेयः अत्रयः परमो विप्रकर्षः सूर्याचंद्रमसोः सपौ
र्णमासीयः परमः सन्निकर्षः सामावास्येति गोभिलोक्तेरमावास्यापदं यद्यपि सूर्याचंद्रमसोः परमसं
निकर्षवत्यन्यक्षणे शक्तं तथापि तत्र कर्मानुष्ठानाशक्तेस्तद्वदहोरात्रं लक्षयति अतएव यदहश्चंद्रम
सं न पश्यंति तदहः पिंडपितृयज्ञं कुर्वीत इत्यापस्तंबसूत्रं अस्यैवं रुद्रदत्तीया व्याख्या पिंडैर्युक्तः पितृयज्ञः
पिंडपितृयज्ञः सचकर्मान्तरं नतु दर्शाङ्गम् यथावदुपतिपितृयज्ञस्य कालविधानाद नांगस्यादिति नेच
यदहश्चंद्रमसं न पश्यंति पंचदश्यां प्रतिपदि वा तदहः कुर्वीत यदहस्तयोः संधिस्तदहरित्यर्थः इति श्री
रामांडारोप्याह पिंडपितृयज्ञस्तु पर्वसंधिमदहोरात्रापराह्ण इति अतएव यदेवैव न पुनस्तादृशेनप
श्चाद् यापितृभ्यो निर्वपतीति शतपथश्रुतिरपि पर्वसंधिदिने हि पूर्वतः पश्चाच्चंद्रो न दृश्यत एव अ
तोमावास्यातिथेरपराह्णव्याप्त्यभावेपि अन्यतरक्षणावच्छिन्नाहोरात्रएव पितृयज्ञः पूर्वदिनापराह्ण
व्याप्तेस्तु नारददत्ताश्वलायनापस्तंबसूत्रवृत्तिभाष्याकाराः अतएवमुहूर्तस्पृगमावास्या प्रतिपद्य
पि चेद्भवेत् तदुक्तमत्वयंतेयं पर्वशेषं तयर्ववदिति हेमाद्रौ वचनं पिंडपितृयज्ञपरमुक्तं प्रयोगपारि
जाते मयूखेतु अमावास्याश्राद्धस्य प्रयोगत्वावत्तिथिविशेषे सार्वजानीनो निर्विवादः तत्रचैकदेशवर्ति
नोपि परमसन्निकर्षास्य संभवति प्रवृत्तिनिमित्तं त्वंच क्रियदइव विश्वेषां देवानां यद्यपि तिथिविशेष
लक्षणं तथापि निरूढत्वात्सैव युक्ता नाहोरात्रे आधुनिकी चंद्रदर्शनं तु अमायुक्तापराह्णपत्यहोरात्रे
प्यविशिष्टं इह गहोरात्रे प्यविशिष्टं इह गहोरात्र पूर्वाभावयुवः कालीनेन चंद्रदर्शनं पूर्वाहोरात्रवर्तिन्या
त्वविरुद्धं अथपुरस्तात्पदसार्थक्याय तदेव विरुद्धं तदापरस्तात्पदसार्थक्यायसंप्युत्तराहोरात्रगतमपि
तत्रयास्यात् अतोपराह्णयुक्तैवामाग्राह्या ननु संधेरायहर्द्व्यपराह्णस्त्वत्र पंचधाविभक्तदिनोपान्त्यो भा
ग इति हृतिकारोक्तएव दिनद्वयेपराह्णे स्पर्शाभावेतु पूर्वदिनाएव तत्रस्मृत्यापाद्यापादिन चंद्रक्षयस्योत्तर
दिने च नात्र पश्चांशुद्धेः सत्वात् यथाह हारीतः चतुर्दश्यष्टमे भागे क्षीणो भवति चंद्रमाः अमावा
स्याष्टमे भागे पुनः किल भवेदणुः पूर्वाह्णो वै देवानां मध्यंदिनो मनुष्याणामपराह्णः पितृणामित्यस्य
पितृयज्ञप्रकरणपाठान्नैधाविभक्तदिनान्त्यभागस्त्युक्तः हारीतवचनस्तु एवास्तपरंपदहरैवैषनपु
रस्तात् श्राद्धदर्शेन दहरुपवसेदिति श्रुतेः यायजकास्तुवृत्तिभाष्याद्युक्तं संधिमदहोरात्रे प्रायः पंचधा
विभागं चारुध्याचरंतीत्युक्तं अयंच स्मार्ताग्निमतां सर्वाधानिदर्शश्राद्धव्यतिषंगेणकार्यः व्यतिषंगो
नामोभयोः सहानुष्ठानं एतच्च स्थालीपाकेन सहपिंडार्थमुद्धृतेनेति सहत्वेनेति कृतोक्तं खंडपर्वणितुपूर्व
दिने केवलं श्राद्धं परदिने तु केवलपितृयज्ञः कालभेदेन तंत्रन्यायाप्रवृत्तेः अतएवोक्तं वृत्तिकृता नात्रा
पूर्वस्थालीपाकश्चोच्यते सर्वश्राद्धेषु प्रसंगादिति पिंडपितृयज्ञाकरणे प्रायश्चित्तमाह यथाशाखमाथ
र्वीये कात्यायनः पितृयज्ञान्ययेचैव वैश्वदेवान्ययेपि च भोजने पतितान्नस्य चरुर्वैश्वानरो भवेदित्य
लम् इतिश्रीमन्महाराजाधिराजश्रीरणवीरसिंहकारितेकृत्य
रत्नाकरेपर्वसंधिनिर्णयः

अथेष्टिनिर्णयफलाधितमग्निचर्य्याफलम्

हलायुधीयब्राह्मणसर्वस्वे तत्रपद्मपुराणम् त्रीनग्नीनथवाचैकं चार्य्याहन्यहनिसेवते सर्वभूतदयायत्तो ना
प्ज्ञोजायतेनरः तथाच दर्शंचपौर्णमासंचयेयजंतिद्विजातयः नतेषांपुनरावृत्तिर्ब्रह्मलोकात्कदाचन
यमः नाग्निहोत्रात्परोधर्मोनाग्निहोत्रात्परंतपः नाग्निहोत्रात्परंदानंनाग्निहोत्रात्परंदमः तथा स्वर्गताग्न्य
ग्निहोत्राणिनयंतिपरमांगतिं अत्रस्वर्गमोक्षत्रयीयथ्यागंतुमिच्छति जाबालि संतोषामृतमासाद्यत
तन्मनाधर्मवित्तयः अकामेनाग्निहोत्रस्यहोतास्वर्गतिमाप्नुयात् देवलः नाग्निहोत्रंसमादायजीविकार्थं
परित्यजेत् सर्ववेदास्तदर्थाहिलोकाब्राह्मणजन्मच अस्याकरणेदोषः कूर्मपुराणे त्रयाणामिहवर्णा
नांगृहस्थाश्रमवासिनां नास्तिक्यादथवालस्याद्योऽग्नीनाधातुमिच्छति यजेतवानयज्ञेन सयातिनरकान्
बहून् तामिस्रमंधतामिस्रंमहारौरवरौरवे कुंभीपाकंवैतरणीमसिपत्रवनंतथा अन्यांश्चनरकान्
घोरान्संप्राप्यंतेसुदुर्गतिं अंतिजानांकुलेविप्रःशूद्रयोनौचजायते तस्मात्सर्वप्रयत्नेनब्राह्मणेनैवविशे-
षतः स्वाध्यायाग्निविशुद्धात्मायजेतपरमेश्वरं भविष्ये वेदेह्यकैर्यथाचीरस्वराज्यंसमुपेत्यवै अस्मात्येब्रा
ह्मणाभूमावभ्यस्यतिह्यनग्निकाः क्लिश्यंतितेसदासर्वेमद्धावैफलकांक्षया अनुष्ठानविहीनानाम
स्मानभ्यस्यतांभुवि क्लेशोहिकेवलोदेवनास्मदभ्यसनेफलम् तथा अनुष्ठानपरंदेवमस्मास्व-
भ्यसनात्सदा इत्येवंराजशार्दूलवेदाऊचुर्हिवेधसं व्यासशातातपौ योगृहीत्वाविवाहाग्निंगृहस्था
इतिमन्यते अन्नंतस्यनभोक्तव्यंवृथापाकोहिसोभवेत् अथयज्ञादिकालः छंदोगपरिशिष्टेका-
त्यायनः यज्ञादावेवकुर्वीतसदायज्ञादिकंचरुं पूर्वाह्णएवकुर्वंतिविडेऽप्यन्येमनीषिणः लघुहा
रीतः पर्वणोंशेतुरीयेतुकार्य्याइष्टिर्द्विजातिभिः द्वितीयासहितंयस्माद्द्वययत्पाश्वलायनः अथय
ज्ञादिकर्म तत्रपारस्करः यज्ञादिषुस्थालीपाकंश्रपयित्वा दर्शपौर्णमासदेवताभ्योहुत्वाजुहो-
ति ब्रह्मणेप्रजापतये विश्वेभ्योदेवेभ्यो द्यावापृथिवीभ्यामिति विश्वेभ्योदेवेभ्योबलिहरणं भूतगृ-
ह्येभ्यःस्वाहा आकाशायवैश्वदेवस्याग्नौजुहोति अग्नयेस्वाहा प्रजापतयेस्वाहा विश्वेभ्योदेवेभ्यः-
स्वाहा अग्नयेस्विष्टकृतयेस्वाहा इतिवाद्यतः स्त्रीबलिंहरति पुंश्चलसेवधेनमः शुक्लायकृष्णाय
दंतायपापीनांपतयेनमो येमेप्रजामुपलोभयंतिग्राममवसंत उतारण्येतेभ्योनमोस्तुवमेभ्योहरा
म्यस्तिमेस्तु प्रजांमेददाचेतिशेषमद्भिःप्रप्लाव्य ततोब्राह्मणभोजनम् अत्रदर्शानंतरंप्रतिपदि
दर्शदेवताभ्यःस्थालीपाकंहुत्वा पौर्णमास्यनंतरंप्रतिपदिपौर्णमासदेवताभ्यःस्थालीपाकंहुत्वा
ब्राह्मणादीनांस्थालीपाकेनहोमोविधेयः तत्रदर्शदेवताः अग्निर्विष्णुरिंद्राग्नीचपौर्णमासेचदेव
ताः अग्नीषोमौच छंदोगपरिशिष्टे कात्यायनः यामतादौमनिर्दिष्टांस्त्रिर्भवेद्धायत्रकीर्तिता शेषंचैव
भवेत्किंचित्तावतुनिर्वपेच्चरुं अथस्रुवादिपात्रनिर्माणानंतरं सामान्यधर्मकात्यायनः तेषांप्रा
क्शःकुशैः कार्यंसंमार्ज्जनमोजहुयात्प्रतापंचलिप्तानांप्रक्षाल्योस्नेनवारिणा पात्रासादनेकात्या
यनः अपरेणस्यपश्चादुत्तरतोवेत्यत्रच प्रागुदंचिकर्मणीतिसामान्यपरिभाषावचनात्आग्नारोयव
यजुर्वेदिनापात्राण्यासादीनि यज्ञपार्श्वः केडंनंसेचनंचैवतथैवोल्लेखनक्रिया सकृद्देवपितॄणां
स्यात्दैवेत्रित्वंविधीयते गोभिलः दक्षिणोत्तराभ्यांपाणिभ्यांत्रिवलीकृतांस्तंडुलानिर्दैवेभ्यःप्रक्षाल
येदित्याहुः हिर्मनुष्येभ्यः सकृत्पितृभ्यः इतिपवित्राहितास्तंडुलानावपेत् कुशलश्रितमिवस्था
लीपाकंश्रपयेत् प्रदक्षिणमुदायुवनप्रदक्षिणमुदन्तश्शृत्रिति दक्षिणावर्त्तेनस्थालीपाकेनसम
न्तविलोडयन्नित्यर्थः श्रितमभिघार्य्योद्वास्यप्रत्यभिघारयेत् इतियज्ञादिकर्मप्रयोगः ॥ ❀

❀ इतिश्रीमहाराजकारितेकृत्यरत्नाकरेपर्वसंधिनिर्णयानंतरंयज्ञादिकर्मविधिः ॥ ❀

अथामापितृपक्षमृतानां क्षयाहे स्मृतिस्थाकरोक्ताव्यवस्था तत्र पूर्वं सामान्येकोद्दिष्टस्वरूपं
एकोद्दिष्टश्राद्धं तु एकपिंडकमकार्वकमेकपवित्रकमेकपात्रकमेकब्राह्मणकमग्नौकरणावाहनवि
श्वेदेवरहितं कर्तव्यमिति तत्रैकोद्दिष्टपदं योगप्राप्तेनैवैकोद्दिष्टवाचकमित्याह एकमुद्दिश्य यच्छ्रा
द्धं तदेकोद्दिष्टमुच्यते त्रीन्समुद्दिश्य यच्छ्राद्धं पार्वणं मनवो विदुः इतिवचनादिति पिंडादीनामेकत्वे
आवाहनादिराहित्ये च कात्यायनसूत्रं प्रमाणयति अथैकोद्दिष्टमेकोब्राह्मण एकोऽर्घ एकं पवित्रं एकपिं
डो नाग्नौकरणं नावाहनं न विश्वेदेवा इति कात्यायनसूत्रादिति सूत्रबलादेव कतिपयः यदेषणीयत्रिपुरु-
षक्षयाहश्राद्धसंप्रदायं दूषयति एतेनैकोद्दिष्टक्षयाहे त्रिपिंडाचरणं सर्वथा निर्मूलमिति सर्वत्रैव
त्रिपिंडीनिषेधे हेत्वंतरमाह क्षयाहे पार्वणं कुर्वन्नधोधो याति मानव इति वचनात् वस्तुतस्त्विदमसं
गतमेव तथाहि कात्यायनसूत्रे हि यत्र एवोद्दिश्यते तत्रेति कर्तव्यतामाह न तु त्रिपिंडी न कर्तव्येति नि
षेधः अतएव पतिव्रताधर्मपत्नीपितृपूजनतत्परा मध्यमं च ततः पिंडमद्यात्सम्यक् सुतार्थिनीति मनुस्म
रणात् मत्प्रसादादसंदिग्धं श्रुणु चेदं भुजंगम श्राद्धावसाने भुंजीरन्मध्यमं पिंडमात्मजाः तथा च कृत
वान् श्राद्धं स नागः कंबलानुजः पिंडं च मध्यमं तद्वद्यथावदुपभुक्तवानिति मार्कंडेयपुराणेऽश्वतरोप
तिशिववचश्च संगच्छते न ह्येकोद्दिष्टादौ मध्यमत्वमेकस्य पिंडस्य संभवति लेपभाजश्चतुर्थाद्याः पित्रा
द्याः पिंडभागिनः इति श्राद्धविवेकनिबंधमपि वचनं त्रयाणामेव पिंडाधिकारमाह किंचैकमुद्दिश्यए-
त्रिपिंडीमाचरति कश्चिद्येन सूत्रविरोधः स्यात् किंतु त्रिपुरुषीमुद्दिश्येति न दोषः अपि च सर्वथा त्रिपिं
डाचरणनिषेधे सपिंडीकरणादूर्ध्वं यत्र यत्र प्रदीयते तत्र तत्र त्रयं कुर्यादिति शातातपवचनं व्याकु
प्येत यत्तु त्रिपिंडीनिषेधे क्षयाहे पार्वणं कुर्वन्निति वचनं हेतुत्वेनोपन्यस्तं तदत्यसंगतं यतस्तद्विश्वे
देवपूर्वकषट्पुरुषकश्राद्धं निषेधयति तत्रैव पार्वणपदस्वरसतः सर्वसंमतत्वात् तस्य क्षयाहस्था-
नीयं षट्पिंडकपार्वणमेव पार्वणेन विधानेन देयमग्निमता सदेत्यादि वदता स्वयमपि तथैव स्वीका
रात् अन्यथा पूर्वापरविरोधात् तस्मादमावास्यातिरिक्तक्षयाहे त्रिपिंडी निषिद्धा वर्जयित्वा मृताह
नीति वचनस्य पर्वातिरिक्तक्षयाहपरत्वात् अमायां च क्षयो यस्येत्यादि प्रतिप्रसवविषयातिरिक्त
स्थल एव निषेधप्रवृत्तेः उत्सर्गस्य निषेधविषयमिव निषेधस्य प्रतिप्रसवविषयं परित्यज्यैव प्रवृत्ते
रिति ध्येयं प्रसंगात्साग्निक्षयाहनिर्णयमाह साग्निस्तु इत्यादि इदानीं प्रेतपक्षादिक्षयाहे विश्वेदे
वपूर्वकमेकोद्दिष्टसंप्रदायं दूषयति अमावास्यामाश्विनापरपक्षे वेत्यादिना तदुन्नेयं तेन हेतुमा
ह निर्मूलत्वादिति तत्रापि हेतुः प्राक्तिलक्षणयोरभावादिति शंकते नन्वेति तत्वास्यनेशक्तिक-
स्यनं समाधत्ते क्षयपक्ष इत्यादि अयमर्थः प्रेतानां पक्षः प्रेतपक्ष इति व्युत्पत्त्यादिकल्पनात् सा च
क्षयपक्षेपि समाना शुक्लो देवानां कृष्णः पितृणामिति प्रसिद्धेः दूषणांतरमाह अशेषेति तत्प्रक
तिकत्वात्पार्वणप्रकृतिकत्वादित्यर्थः वृत्त्याभावादेव महालयपदमपि नाश्विनापरपक्षवाचकमि-
त्याह महालय इत्यादि येयं दीपान्वितेत्यादौ तीर्थवाचकत्वेनाप्युपपत्तेरिति भावः तदेतदपि विचार
पदवीं नारोहति तत्रानेकनिबंधग्रंथप्रसिद्धस्य शातातपवचनस्य निर्मूलत्वोक्तिरेव निर्मूला
अथ वाक्यस्य पार्वणविधानांशे निर्मूलता एकोद्दिष्टस्य योग्यत्वादिति चेन्न दर्शादिक्षयाहे पार्वण
स्यैव सर्वसम्मतत्वात् औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुताद
यः इति शंखलिखितौ क्षयाहमात्रे पार्वणं स्मरतः किंतु दर्शपितृपक्षयोः क्षयाहे पार्वणमिति वा
क्यं दर्शाद्यतिरिक्तपरं पर्वणि पार्वणस्य वाक्यांतरेण सिद्धेर्वचनद्वयस्य नियमपरत्वेन त्रिपिंडीपर
त्वेनैवाप्युपयुक्तं यच्चोक्तं शक्तिलक्षणयोरभावादिति तदेवोदाहृतं पंकजादिपदवत्प्रेतपक्षस्यापि

गतत्वात् कन्यागते सवितरि यान्यहानि तु षोडश क्रतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयमित्या
दिवचनबलादाश्विनापरपक्षस्यैवाभ्यर्हितत्वे सामान्यकल्पनाया असंगतत्वात् किंच वाक्येः मासास्
पृथङ्निर्दिष्टा न हि सामान्यकृष्णपक्षपरत्वे पृथङ्निर्देशार्हता इति सैवाश्विनापरपक्षत्वे साक्षी यच्चा
ह महालयपदस्य तीर्थवाचकत्वेनापरपक्षवाचकतानुपपत्तिरिति तदप्यसंबद्धं न ह्येकवाचक
त्वेपरवाचकता हीयते अनेकार्थशब्दलोपापत्तेः प्रस्तुतकालप्रकरणे तीर्थवाचकत्वेनासंगतताप्र
करणविरोधात् तस्मादमावास्यान्तपक्षस्य निषिद्धानन्तवचनादौ रसदिनेषु द्वौ विधिना पार्वणे
न तु इति पैठीनसिवचनात् पर्वणि पार्वणन्यायप्राप्तत्वाच्च क्षयाहे पार्वणमिति वचनस्य पर्वतिथिक्ष
क्षयाहपरत्वे पार्वणं कर्तव्यं पतिव्रताधर्मपत्नीति मनुस्मरणात् मत्प्रसादादसंदिग्धमित्यादिमा
र्कंडेयपुराणवचनाच्च उद्धृतासि वराहेण पृथिवी भयविह्वला तत्र स्थित्वा प्रकुर्वीत श्राद्धं पिंडत्र
यं तथेति वराहपुराणात् पर्वणि पार्वणस्यान्यवाक्यैरेव सिद्धेः पुनर्विधानस्य त्रिपिंडपरत्वात् क्षयाहे
पार्वणस्य हि निषेधानुरोधाच्च त्रिपुरुषकं वा कर्तव्यमिति निष्कंटकः पंथाः अथ स्मृतिसुधाकरो
क्तमूलपाठो लिख्यते एकोद्दिष्टश्राद्धं त्वेकमेवार्घमेकपात्रमेकब्राह्मणमग्नौकरणावाहनविश्वेदेव
रहितं कर्तव्यम् एकमुद्दिश्य यच्छ्राद्धं तदेकोद्दिष्टमुच्यते इति वचनात् अथैकोद्दिष्टमेकोब्राह्म
ण एकोऽर्घपात्रं एकं पवित्रमेकः पिंडो नाग्नौकरणं नावाहनं नात्र विश्वेदेवा इति कात्यायनसूत्रात्
एतेनैकोद्दिष्टे क्षयाहे त्रिपिंडाचरणं सर्वथा निर्मूलमिति मन्तव्यम् क्षयाहे पार्वणं कुर्वन्नधो या
ति मानव इति वचनात् मासे तु क्षयाहनि श्राद्धं नास्त्येव न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मन
इति वचनात् अत एव तस्य क्षयाहस्थानीयं षट्पिंडकं पार्वणमेव पार्वणेन विधानेन देयमा
ग्निमता सदेति अमावास्यायामाश्विनापरपक्षे च मृतस्यैकोद्दिष्टमपि सदैवं कर्तव्यं अमायां च
क्षयो यस्य प्रेतपक्षेऽथवा पुनः सपिंडीकरणादूर्ध्वं तस्योक्तः पार्वणो विधिरिति वाक्यात् विश्वेदेवाति
देशात् विध्यंतरस्य प्रकृतित्वेनैव प्राप्तेरिति यच्चोनिबंधनकल्पनं कृष्णपक्षेष्वेव कल्पनापत्तेः
अशेषपार्वणधर्मप्राप्त्यापत्तेश्च तत्प्रकृतिकत्वादिति महालयपदस्यापि तीर्थविशेषवाचकत्वे
नाश्विनापरपक्षवाचकत्वाभावादिति वक्ष्यमाणवचनाच्च पार्वणश्राद्धे च नित्ये अपराह्णो मुख्यः
कालः तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते इति मनुवचनात् एतत्समस्तं सविस्तरं प्रागे
व प्रपंचितमित्यलं बहुपल्लवितेन ॥ इति क्षयाहश्राद्धे पार्वणैकोद्दिष्टत्वादिकर्तव्यतानिर्णयः

॥ अथ ग्रहणकालनिर्णयः कल्पद्रुमे ॥

तत्र ग्रहणं नाम प्रतिपत्संधौ राहुणा सूर्याचंद्रमसोर्ग्रसनं तदाह वृद्धगार्ग्यः पूर्णिमाप्रतिपत्सं
धौ राहुः संपूर्णमंडलं ग्रसते चंद्रमर्कं च दर्शप्रतिपदंतरे इति तत्र पर्वणोंतभागः स्पर्शकालः प्रति
पदाद्यभागो मोक्षकालः तदुक्तं ब्रह्मसिद्धांते यावान्कालः पर्वणोंते तावत्प्रतिपदादिमः रवी
दुग्रहणे ज्ञेयः राहुग्रहणकालः तत्र कर्तव्यमुक्तं हेमाद्रौ माधवाचार्योदाहृतायां स्मृतौ ग्रस्यमाने भ
वेत्स्नानं ग्रस्ते होमो विधीयते मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयत इति तथा च ब्रह्मवैवर्ते
स्नानं स्यादुपरागादौ मध्ये होमः सुरार्चनं अन्यदपि कृत्यं महाभारते गंगास्नानं तु कुर्वीत ग्रहणे
चंद्रसूर्ययोः महानदीषु चान्यासु स्नानं कुर्याद्यथाविधीति अत्र च ग्रहणे यद्यपि वापीकूपतडा
गेषु गिरिप्रस्रवणेषु च नद्यां नदे देवखाते सरसीषूद्धृतांबुना इति उष्णोदकेन वा स्नायाद्ग्रहणे चं
द्रसूर्ययोरिति शंखवचनेन सर्वत्रोक्तं साम्यं च सर्वजलानां सर्वं भूमिसमं दानं सर्वे ब्रह्मसमा द्विजाः
सर्वं गंगासमं तोयं राहुग्रस्ते दिवाकरे स्वर्धुन्यंतः समानि स्युः सर्वाण्यंभांसि भूतले कूपस्थान्यपि सो

मार्कग्रहणेनात्रसंशयइतिव्यासेनोक्तं तथापितत्प्रशंसामात्रं तारतम्यत्वावश्यकं अतएवमार्कंडेयेनोक्तं
भूमिष्ठमुद्धृतात्पुण्यंततःप्रस्रवणोदकं ततोपिसारसंपुण्यंततःपुण्यंनदीजलं तीर्थतोयंततःपुण्यंम
हानद्यंबुपावनं ततस्ततोपिगंगांबुपुण्यंस्याच्चततोंबुधिः शीतमुष्णोदकात्पुण्यंमपारक्यंपरोदका
दिति तत्रापिगंगाकुरुक्षेत्रेचसर्वदाग्रहणस्नानादौश्रेष्ठं तदाहवृद्धवसिष्ठः इंदोर्लक्षगुणंपुण्यंरवे
र्दशगुणंततः गंगातोयेतुसंप्राप्तेइंदोःकोटीरवेर्दश गवांकोटिसहस्रस्यसम्यग्दत्तस्ययत्फलं तत्फ
लंजाह्नवीस्नानेराहुग्रस्तेदिवाकरे पुनस्तत्रकुरुक्षेत्रेदशसंख्यमुदाहृतं तथाच चंद्रसूर्यग्रहेचैवयो
वगाहेतजाह्नवीं सस्नातःसर्वतीर्थेषुकिमर्थमटतेमहीमिति अन्यकालीनेतत्रतीर्थस्नानेयत्पुण्यं
तदिंदोर्ग्रहणेतत्रस्नानेलक्षगुणंरवेर्ग्रहणेदशलक्षंएवंकोटिदशकोटयः स्कंदपुराणे उपरागे
कुरुक्षेत्रंपवित्रंमुनयोविदुरिति मत्स्यपुराणे दशजन्मकृतंपापंगंगासागरसंगमे जन्मांतरस
हस्रेषुयत्पापंसमुपार्जितं तत्तन्नश्येत्सन्निहत्यांराहुग्रस्तेदिवाकरे सन्निहत्यांकुरुक्षेत्रे अत्रगंगाश
ब्देनकृष्णावेणीगोदावरीजाह्नव्यउच्यंते तेनतदुक्तं ब्रह्मपुराणे तिस्रोनद्योमहापुण्यागोदावेणीचजा
ह्नवी गांहरीशांघ्रिकप्राप्तागंगाइतिहकीर्त्तिता हरिश्चब्रह्माचहरीशौतयोरंघ्रिःपादःकंपुरः अंघ्रिश्च
कंचअंघ्रिकं हरेःपादादीशस्यशिरसोगांभूमिंप्राप्तागंगायद्यपिजाह्नव्येवतादृशी नतुवेणीगोदेत
थापिछत्रिन्यायेनजाह्नव्यासहनिर्द्दिष्टयोरपिगंगात्वमविरुद्धं गंगायाअसंनिधाने अन्यनदीषु
स्नानंकुर्यात् ताश्चब्रह्मपुराणेदर्शिताः गोदावरीभीमरथीतुंगभद्राचवेणिका तापीपयोष्णीविंध्यस्य
दक्षिणेतुप्रकीर्त्तिताः भागीरथीनर्मदाचयमुनाचसरस्वती विशोकाचवितस्ताचविंध्यस्योत्तरतस्तथेति
उष्णोदकस्नानविषयत्वं व्याघ्रआह आदित्यकिरणैःपूतंपुनःपूतंचवह्निना अतोव्याध्यातुरःस्नाया
द्ग्रहणेप्युष्णवारिणेति अतएवपूर्वंगंगातोयमारभ्योष्णोदकांतेषूत्तरोत्तरानुकल्पत्वमुक्तं अतएवा
नातुराभिप्रायेणैव तन्निषेधोभिहितः मृतेजन्मनिसंक्रांतौग्रहणेचंद्रसूर्ययोः अस्पृश्यस्पर्शनेचैव
नस्नायादुष्णवारिणेत्यादियमादिवचनेषु पृथ्वीचंद्रोदयेप्रभासखंडे गावोनागास्तिलायानं रत्नानि
कनकंमही संप्रदायकुरुक्षेत्रेयत्फलंलभतेनरः तदिंदुग्रहणेभोयोस्नानाद्भवतिषड्गुणं तत्रैवसौर
पुराणे अंबुधिस्नानमुपक्रम्य दानानीमानिलोकेषुविख्यातानिमनीषिभिः तेषांफलमवाप्नोतिग्र
हणेचंद्रसूर्ययोः ग्रहणविशेषेनदीविशेषस्तत्रैवाभिहितः गोदावरीमहापुण्याचंद्रेराहुसमन्वि
ते सूर्येचराहुणाग्रस्तेतमोभूतेमहामुने नर्मदातोयसंस्पर्शात्कृतकृत्याभवंतिते येसूर्येसैंहिके
येनग्रस्तेरेवाजलंनराः स्पृशंतिचावगाहंतेनसाप्रकृतिमानवीतिदेवीपुराणे गंगाकनखलेपुण्यं
प्रयागंपुष्करंतथा कुरुक्षेत्रंमहापुण्यंराहुग्रस्तेदिवाकरेइति मासविशेषेग्रहणे तन्निमित्तस्नानादे
स्तीर्थविशेषसंबंधेफलातिशयउक्तस्तत्रैव कार्त्तिकेग्रहणंश्रेष्ठंगंगायमुनसंगमे मार्गेतुग्रहणंपु
ण्यंदेविकायांमहामुने पौषेतुनर्मदापुण्यामाघेसन्निहिताशुभा फाल्गुनेवरुणापुण्याचैत्रेपुण्या
सरस्वती वैशाखेतुमहापुण्याचंद्रभागासरिद्वरा ज्येष्ठेतुकौशिकीपुण्याआषाढेतापिकानदी श्राव
णेसिंधुनामातुतथाभाद्रेचगंडिका आश्विनेसरयूश्रेष्ठाभूयःपुण्यातुनर्मदेति ब्रह्मवैवर्त्ते मकरे
वर्त्तमानेतुग्रहणंचंद्रसूर्ययोः दुर्लभंत्रिषुलोकेषुगंगायांपिंडपातनमिति स्नानवत्स्मरणादिष्व
पिपुण्यमाह मार्कंडेयः स्मृत्वाशतक्रतुफलंदृष्ट्वासर्वाघनाशनं स्पृष्ट्वागोमेधजंपुण्यंपीत्वासौ
त्रामणींलभेत् स्नात्वावाजिमखंपुण्यंप्राप्नुयादविचारतः रविचंद्रोपरागेचअयनेचोत्तरेतथा
एवंगंगापिद्रष्टव्यातद्वदेवसरस्वतीति वारविशेषयोगेनचग्रहणेफलविशेषोव्यासेनोक्तः सूर्य
वारेरवेर्ग्रासःसोमेसोमग्रहस्तथा चूडामणिरितिख्यातस्तत्रानंतफलंलभेत् वारेष्वन्येषुयत्पुण्यं

ग्रहणे चंद्रसूर्ययोः तत्पुण्यं कोटिगुणितं ग्रासे चूडामणौ स्मृतमिति अत्र स्नानमावश्यकमेव ग्रहणे संक्रमे चैव न स्नायाद्यदि मानवः तस्याशौचं भवेत्तावद्यावदपरो ग्रह इति संक्रांतिप्रकरणोदाहृतवृद्धवसिष्ठवचनेन तदकरणे प्रत्यवायस्मरणात् काम्यमपि फलश्रवणात् तथावदता उपस्तुवसिष्ठन् स्नानं संध्यायामहनि रवौ चंद्रसूर्योपरागे तु प्राजापत्येन तत्सममिति नच स्नानमाद्यंतयोः कार्य्यं ग्रस्यमान इति वचनात् विमुक्ते यदि न स्नायाच्चंद्रसूर्यग्रहे तथा तस्य स्यात्तावदाशौचं यावदन्यः परो ग्रह इति तत्रैवमुक्तस्नाने दोषश्रवणाच्च उभयत्रापि सचैलं ग्रहणे शावमाशौचं विमुक्तौ सौतिकं स्मृतं तयोः संपत्तिमात्रेण उपस्पर्शक्रियाक्रम इति ब्रह्मांडपुराणे शावाशौचनिमित्तत्वोक्त्या विमुक्तेश्च प्रसववत्त्वातोक्त्या यथा जननमरणयोः सचैलस्नानादेव निवृत्तिस्तदुत्तरमेव च कर्माधिकारस्तथात्रापीत्यर्थस्य प्रतिपादनात् सर्वेषामेव वर्णानां सूतकं राहुदर्शने सचैलं तु भवेत्स्नानं सूतकान्नं च वर्जयेदिति वृद्धवसिष्ठोक्तेश्च सचैलमिति मुक्तिस्नानोत्तरमिति मदनरत्ने उक्तं इदं च स्नानममंत्रकं कार्यमिति स्मृतिरत्नावल्यां अत्र च वृद्धवसिष्ठवचने सूतकं माशौचं बहुसूतके इति पाठे पूर्वसूतकशब्देनास्पृश्यत्वमुच्यते सूतकान्नं ग्रहणाशौचान्नमिति पूर्वमुक्तं अतएव षड्विंशन्मते सर्वस्यैव पूर्वाह्नस्योत्तरार्द्धस्य स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेदिति शृतं तदंतरितस्योपलक्षणम् नव श्राद्धेषु यच्छिष्टं ग्रहपर्युषितं च यदिति मिताक्षरावचनात् केषुचित्प्रतिप्रसवः आरनालं तथा क्षीरं किलाटं घृतसक्तवः स्नेहपक्वं च तैलं च न कदाचित्प्रदुष्यतीति तत्र विशेषो वचनांतरे आरनालं च तक्रं च स्यादेवं घृतपाचितं उदकं च कुशाछन्नं न दुष्येद्राहुदर्शने इति मणिकस्योदकं चैवेति पाठांतरं मंत्रमुक्तावल्यां अन्नं पक्वमिह त्याज्यं स्नानं सवसनं ग्रहे वारितक्रारनालादि तिलदर्भैर्न दुष्यतीति जलेन्न दोषो गंगाविषयः ग्रहोषितजलं पीत्वा पादकृच्छ्रं समाचरेत् इति तत्रैव चतुर्विंशतिमते जलस्यापि दोषोक्तेः अन्नपानवत् श्राद्धमपि नित्यं कार्यं सर्वस्वेनापि कुर्वीत श्राद्धं वै राहुदर्शने अकुर्वाणस्तु नास्तिक्यात्पंके गौरिव मज्जतीति महाभारते नैमित्तिकं तु कर्तव्यं ग्रहणे चंद्रसूर्ययोः बांधवानां च मरणे नारकी स्यादतोन्यथेति कूर्मपुराणोक्तप्रत्यवायश्रवणात् यत्तु मार्कंडेयवचनं विशिष्टब्राह्मणप्राप्ते सूर्येंदुग्रहणायने जन्मर्क्षग्रहपीडासु श्राद्धं कुर्वीत चेच्छयेति तदपि इच्छया चेत्तच्च येन श्राद्धं प्रतिरुचिश्चैवेत्येतत्समानार्थतया व्याख्यातं काम्यमपीह श्राद्धं तथा विष्णुः राहुदर्शनदत्तं हि श्राद्धमाचंद्रतारकं गुणवत्सर्वकामीयं पितॄणामुपतिष्ठतीति ऋष्यशृंगोपि चंद्रसूर्यग्रहे यस्तु श्राद्धं विधिवदाचरेत् तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे इति शातातपोप्याह सैंहिकेयो यदा सूर्यं ग्रसते पर्वसंधिषु गजच्छाया तु सा ज्ञेया पितॄणां दत्तमक्षयमिति तथा लिंगपुराणे व्यतीपाते त्वयने यावद्यावच्चंद्रग्रहे रवेः गजच्छाया तु सा प्रोक्ता पितॄणां दत्तमक्षयमिति चंद्रग्रहणनिमित्तं स्नानश्राद्धादि रात्रावपि भवेदिति तदाह शातातपः स्नानं दानं ततः श्राद्धमनंतं राहुदर्शने आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेदिति देवलोपि यथा स्नानं दानं च सूर्यस्य ग्रहणे च यथा दिवा सोमस्यापि तथा रात्रौ स्नानं दानं विधीयत इति विष्णुरपि संध्यां रात्रौ न कुर्वीत श्राद्धं चैव विशेषतः द्वयोरपि च कर्तव्यं यदि स्याद्राहुदर्शनमिति अपरार्के व्यासोपि ग्रहणोद्वाहसंक्रांतियात्रार्त्तिप्रसवेषु च दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यत इति इदं च श्राद्धमामेन हेम्ना वा कार्य्यं तदुक्तं पुराणांतरे आपद्यनग्नौ तीर्थे च चंद्रसूर्यग्रहे तथा आमश्राद्धं प्रकुर्वीत हेमश्राद्धमथापि वेति बोधायनोपि अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि हेमश्राद्धं संग्रहे च कुर्यात् शूद्रः सदैव हीति इत्थमेव निर्णीतवंतो हेमाद्रिमाधवमदनरत्नादयो निखिलनिबंधकाराः निर्णयसिंधौ तु अपरार्कसंमतग्र

कारांतरमपि लिखितं ग्रहणे द्विजातीनामामश्राद्धं पाकासंभवे द्रष्टव्यं तीर्थश्राद्धवत् पाकाभावे द्वि
जातीनामामश्राद्धं विधीयत इति सुमंतूक्तेः सैंहिकेयो यदा सूर्यमित्युपक्रम्य यत्कृते न भोजयेद्विप्रान्
कृते भूमौ समुत्सृजेत् इति वायवीयोक्तेश्च विज्ञानेश्वरोप्याह ग्रहणे श्राद्धभोक्तुर्दोषो दातुस्त्वभ्युदयः
इति सूतके मृतके भुंक्ते गृहीते शशिभास्करे छायायां हस्तिनश्चैव न भूयो पुरुषो भवेदित्यापस्तंबेन भो
क्तृनिषेधाच्च अयं च भोजननिषेधः श्राद्धभोक्तृविषय इति छायासाहचर्यात् ननु ग्रहणे श्राद्धं सपिंडक
मपिंडकं वा कर्तव्यमिति संशयः निर्णयसिंधौ स्मृतिरत्नावल्यां पुत्रे जाते व्यतीपाते ग्रहणे चंद्रसूर्ययोः
श्राद्धं कुर्यात्प्रयत्नेन पिंडनिर्वपणादृते इति श्राद्धकाशिकायां तु मत्स्यपुराणे ततः प्रभृति संक्रां
तावुपरागादिपर्वसु त्रिपिंडमाचरेच्छ्राद्धमेकोद्दिष्टं मृताहनीति प्रजापतिरपि संक्रांतावुपरागे च
पर्वोत्सवमहालये निर्वपेद्त्रीन्पिंडानेतानिति प्राह प्रजापतिरिति अत्र ग्रहणनिमित्तकश्राद्धे ये सामा
संक्रांत्यादिनिमित्तकानां सिद्धिः दर्शकालात्ययोरपीति कालादर्शोक्तेरिति किंचिद्दाने चात्रैतिस्म्र
यनादौ सदा देयमिति शातातपीये सदा शब्दश्रवणात् नित्यत्वादेव च मलमासेपि तद्भवतीत्युक्तं
मात्स्ये चंद्रसूर्यग्रहे चैव मरणे पुत्रजन्मनि मलमासेपि देयं स्याद्दत्तमक्षयकारकमिति काम्यमपीदं
भूमिर्गावः सुवर्णं धान्यं वा यदभीप्सितं तत्सर्वं ग्रहणे देयमात्मनः श्रेय इच्छतेति भारतवचनात्
ग्रहणे यच्च दानं तत्पात्रेव नैवं तदुक्तं तत्रैव अयने विषुवे चैव ग्रहणे चंद्रसूर्ययोः पात्रभूताय विप्रा
य भूमिं दद्यात्सदक्षिणां पात्रलक्षणं तत्रैव याज्ञवल्क्येन न विद्यया केवलया तपसा वापि पात्रता य
त्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितमिति अत्रानुकल्पमाह बौधायनः अश्रोत्रियः श्रोत्रियो वा
पात्रं वा पात्रमेव वा विप्रब्रुवोपि वा विप्रो ग्रहणे दानमर्हतीति यद्यपि पूर्वं सर्वं व्यासममाद्विजाद्यु
क्तं तथापि तद्ब्राह्मणातिरिक्तदानस्यावश्यकत्वार्थं च ननु पात्रत्यागे न यस्मै कस्मैचिद्दानप्रतिपा
दनार्थं अत एव पात्रतारतम्येन फलतारतम्यमुक्तं दक्षस्मृतौ सममब्राह्मणे दानं द्विगुणं ब्राह्म
णब्रुवे श्रोत्रिये शतसाहस्रं पात्रे त्वानंत्यमश्नुते इति अब्राह्मणो जातिमात्रब्राह्मणः संस्कारादिर
हितः ब्राह्मणब्रुवस्तु उक्तं व्यासविंशतिमते गर्भाधानादिसंस्कारैर्वेदोपनयनैर्युतः नाध्यापयति
नाधीते स भवेद्ब्राह्मणब्रुव इति श्रोत्रियः सर्वसंस्कारपूर्वकवेदाध्ययनवान् तुलापुरुषदानादिका
लप्रक्रमे यच्चंद्रसूर्यग्रहणे तत्र न तेषां तन्निमित्तकत्वाय किंतु तत्कालकत्वाय कालसंदर्शनात्
आदिमध्यावसानेषु यद्यद्धि दिने तस्य तस्य फलातिशय उक्तो ब्रह्मपुराणे उपमर्दे तदर्धगुणं ग्रह
णे चंद्रसूर्ययोः पुण्यं कोटिगुणं मध्ये मुक्तिकाले त्वनंतकमिति ग्रहणकाले जननमरणाशौचे च
सत्यपि स्नानादि भवत्येव तदुक्तं लिंगपुराणे चंद्रसूर्यग्रहे स्नायात्सूतके मृतकेपि च अस्नायी
मृत्युमाप्नोति स्नायी पापं न विंदति वृद्धवसिष्ठेनापि सूतके मृतके चैव न दोषो राहुदर्शने तावदे
व भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यत इति राहुलक्षितचंद्रसूर्योपरागनिमित्ते स्नानादौ हेमाद्रौ दाने श्रा
द्धादिविषयमेतत् न तु स्नानमात्रविषयं ग्रहणे शावमाशौचं विमुक्ते सूतकं स्मृतं तयोः संपात
मात्रेयः उपस्पृश्य क्रियाश्चाम इति ब्रह्मांडपुराणवचनविरोधात् स्नानहोमदेवपूजादानक्रियानुष्ठा
ने हि क्रम उपपद्यते स्नानमात्रानुष्ठाने स्नानस्य पूर्ववाक्येनैव सिद्धौ द्वितीयवाक्यवैयर्थ्यप्रसंगा
भवत्वेतद्द्वितीयवाक्येनैव स्नानसिद्धेः पूर्ववाक्यवैयर्थ्यप्रसंग इति चेन्न अस्नानस्यानिष्टविशेषबो
धं प्रतिपादनार्थत्वात् यावत्तावच्छब्दानुपपत्तिप्रसंगाच्च तावत्कालव्यापिकर्मसमूहाभिधाने
ध्यायां द्वितीयो सार्थको स्नानमात्रेण तत्तादृशं अत एवाविशेषेण जननमरणनिमित्ताशौचप्रयुक्ता
पिकाशौभावो ग्रहणनिमित्तकर्मसु स्मर्यते सूतके मृतके चैव यदि स्याद्राहुसूतकं तावत्सूतकं

लियावद्राहुर्नेमं चलीति स्कंदपुराणे मृतके सूतके नैव सूतके वा राहुदर्शने तावदेव भवेत्शुद्धिर्यावन्मुक्तिर्न
दृश्यते कालादर्शेऽगिराः सर्वे वर्णा विशुद्धाः स्युः सूतके राहुदर्शने स्नात्वा श्राद्धं प्रकुर्वीरन् विनान्नाद्य
विवर्जितमिति षट्त्रिंशन्मतेपि स्मार्त्तकर्मपरित्यागो राहोरन्यत्र सूतके श्रौते कर्मणि तत्काले स्नानः शु
द्धिमवाप्नुयादिति मृतके आशौचे राहोस्तदुपलक्षितोपरागादन्यनिमित्तकानां स्मार्त्तकर्मणां परित्यागो
न तन्निमित्तकानामित्यर्थः इति हेमाद्रिः सूतके यः स्मार्त्तकर्मपरित्यागः स राहुसूतकान्तत्कालप्राप्तानां
तेषांत्यागइत्यनेन तेन श्राद्धं किंचिद्दानं चोपरागनिमित्तकमाशौचेपि भवति न स्नानमात्रं संवत्सरप्रदीपा
दिषु चेदं स्मृतिवचनं लिखितं सूतके मृतके चैव न दोषो राहुदर्शने स्नानमात्रं तु कर्तव्यं दानं श्राद्धविवर्जितं
एतच्च पूर्वोदाहृतबहुश्रुतिविरोधान्निर्मूलम् मदनरत्नपारिजातेप्येवं निर्णीयस्तिथावपि इयं च शुद्धिर्विशे
षात्तद्दीक्षापुरश्चरणादिसर्वस्मार्त्तकर्मविषयेति मदनरत्नेप्येवं रजस्वलायास्तु विशेषो भार्गवार्चनदी
पिकायां सूर्योदयनिबंधे सूतकादिषु दोषोस्ति ग्रहे होमजपादिषु ग्रस्ते स्नायादुदक्यादि तीर्थादुद्धृत्य वारि
णेति अत्र च स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला पात्रांतरिततोयेन स्नानं कृत्वा व्रतं चरेदिति मिता
क्षरोक्तो विधिर्द्रष्टव्यः यत्तु ग्रहणनिमित्तमाशौचं तत्स्नानेन निवर्तते तदुक्तं ब्रह्मांडपुराणे आशौचं जा
यते नृणां ग्रहणे चंद्रसूर्ययोः राहुस्पर्शनयोः स्नात्वा दानादौ कल्पते नर इति निर्णयामृते ग्रहणकाल
स्य सर्वस्यापि पुण्यत्वे स्पर्शकालः स्नानादिकर्मसु श्रेष्ठः मध्यकालो मध्यमः मोक्षकालस्त्वधमः तदाह
व्यासः त्रिदशाः स्पर्शसमये तृप्यंति पितरस्तथा मनुष्या मध्यमे काले मोक्षकाले तु राक्षसा इति एतच्च
वचनमविशेषात्सर्वदेवपितृदेवत्यकर्मपरमिति केचित् स्नानं स्यादुपरागादौ मध्ये होमः सुरार्चनमि
त्यादिभिर्वचनैर्होमदेवार्चनयोर्मध्ये विधानात् ग्रस्यमाने भवेत्स्नानमिति पूर्वोदाहृतवचनाच्च नैतद्यु
क्तं किं तु होमदेवपूजाव्यतिरिक्तविषयमेतदिति हेमाद्रिः एतानि च ग्रहणनिमित्तकानि कर्माणि
संक्रांतिष्विव ततः पूर्वमनंतरं वा भवंति उत्तरग्रहणकालइत्यपेक्षायां जाबालिः संक्रांतौ पुण्यकालस्तु षोड
शोभयतः कलाः चंद्रसूर्योपरागे तु यावद्दर्शनगोचर इति अत्र तत्पतरुकारभूतयः दर्शनशब्दश्चा
क्षुषज्ञानपरः न शास्त्रार्थज्ञानवचनः निमित्तस्य ज्ञातस्यैव नैमित्तिकप्रयोजकत्वेन निमित्तत्वबोधक
श्रुत्यैव तल्लाभेन दर्शनशब्दप्रयोगस्य वैयर्थ्यप्रसंग तच्च दर्शनं स्वकीयमेव निमित्तं परकीयदर्श
नस्य परकीयस्नानादिप्रयोजकत्वाभावात् एवं च स्वयं ग्रहणे दृष्टे स्नानादिकर्तव्यं न मेघावृते इति पर्य
वसन्नं अत्र केचित् गोचरशब्दोऽत्र तत्फलोपधानपरः तत्कालेपि कस्यापि कर्मणः कर्तुमशक्यत्वात्
किमुत बहूनां किंतु योग्यतापरः सा च प्रयत्नापनेयचाक्षुषज्ञानप्रतिबंधराहित्यं तथा च योग्य
त्वाभावादपि न मेघाच्छन्ने स्नानादीत्याहुः निर्णयामृतेप्येवं तदेतत्तुच्छं चाक्षुषज्ञानविषयत्ववि
वक्षायां नेक्षेतोद्यंतमादित्यं नास्तं यांतं कदाचन नोपसृष्टं न वारिस्थं न मध्यं नभसो गतमिति स्नान
प्रकरणपठितमनुवाक्येन स्नातकानां ग्रस्तादित्यदर्शननिषेधात् स्नानाद्यभावप्रसंगात् अंधादीनां
तदभावप्रसंगाच्च न चेष्टापत्तिः सूर्यग्रहो यदा रात्रौ दिवा चेंद्रग्रहस्तथा तत्र स्नानं न कुर्वीत दद्याद्दा
नं न च क्वचिदिति निगमवचनस्य स्नानादिनिषेधस्य वैयर्थ्यप्रसंगात् चाक्षुषज्ञानाभावेन तत्प्राप्त्यभा
वात् निषेधस्य प्राप्तिपूर्वकत्वात् यदप्येतद्वचनस्य ग्रस्तास्तपरत्वेन व्याख्यानं रविचंद्रयोरस्नानं तु
रात्रिदिवाग्रहत्वादिति तदपि तुच्छं यावद्दर्शनगोचर इत्यनेनैव अस्तोत्तरभागयोर्निमित्तत्वपर्युदासे
न वैयर्थ्यपरिहारात् राहुदर्शनदत्तं हि श्राद्धमाचंद्रतारकं स्नानं दानं जपः श्राद्धमनंतं राहुदर्शने इ
त्यादिषु कर्मविशेषवचनेष्वपि दर्शनपदोपादाने ग्रस्तास्तोत्तरभागस्य दर्शनागोचरत्वेन निमित्तत्वा
प्रसक्तेश्च किं च दर्शननिमित्तानंतर्भावे तदाहृतौ स्नानाद्यावृत्तिप्रसंगः प्रतिनिमित्तं नैमित्तिकावृत्ति

दितिन्यायात् इतिशिरस्त्रिनेषु बहुवचनेषु तत्पदाध्याहारप्रसंगश्च किंच निमित्तेषु निमित्तवत एवाधिक
राद्धिकारिणश्च तदकरणे प्रत्यवायदर्शने सति स्नानाद्यकरणे प्रत्यवायप्रसंगात् तदभावेन तदभा
वात् प्रत्यवायकश्च कर्मानुष्ठानान्यतरप्रयोजकं दर्शनं बुद्धिपूर्वकारी कोपि न कुर्यात् दैवेनित
न्नियोज्यकः स्नानादिविधिरीश्वरत्वात् नन्वेवमाधानाध्ययनाभ्यामग्निविसर्जनमपि कोपि न कुर्या
त् तस्मिन्सत्यग्निहोत्रादिकर्माकरणे प्रत्यवायस्य तत्परिहार्यकष्टाकर्मकरणस्यापत्तेः आधानाध्य
यनयोः कर्मविधिप्रयुक्तत्वेन सिद्धाग्निविद्यावत्वस्य कर्माधिकाराभ्युपगमात् सत्यं व्रात्यतानाहिता
ग्नितयोरुपपातकगणनयाद्योतकं किंचिदस्ति अथैतद्दोषपरिहाराय दर्शनस्य स्नानाद्यंगत्वेन
विधेयत्वेव स्वीक्रियते विधेयत्वं च तस्य संवत्सरप्रदीपोदाहृत मार्कंडेयवचन उपवाससाहचर्या
त्स्पष्टं प्रतीयते एकरात्रमुपोष्यैव राहुं दृष्ट्वा तु यो नरः पुण्यमाप्नोति कृत्वा च स्नानं श्राद्धं विधानत
इति निमित्तस्नानत्वेन तस्याधिकारसंपादनेनोपयोगिता अध्ययनाधानवत्प्रमाणाभावात् तयोर्नांग
त्वं किंतु प्रकारकतामात्रे दर्शनस्य तत्प्रमाणावगततयाने नैवोपकारेण अत्र च यद्यप्युपवास
दर्शनयोः स्नानश्राद्धयोश्चादृष्टपुण्यमाप्नोतीत्यनेन सर्वेषां तत्पत्त्वं भासते तथापि बहुषु वचनेषु
स्नानश्राद्धयोरेव फलसंबंधश्रवणात् तत्राप्युपवासदर्शनपूर्वकस्नानश्राद्धे विधायाद्यत्ययं पुण्यमा
प्नोतीति योजनयोपवासदर्शनयोरंगत्वं द्रष्टव्यं विशेषविधिना चाग्निषोमीयादिहिंसाविधिनैव न
हिंस्यादिति निषेधस्येवोपक्रमित्यादिनिषेधस्य बाधेन रागप्राप्तेक्षणविषयत्वकरणात् सर्वनैमि
त्तिकार्थं तंत्रेण सकृद्दर्शनं कृत्वा सर्वं कर्तव्यं एवं जन्मादिराशिस्थेऽपि न द्विषयत्वस्यापि दर्शननि
षेधस्य रागप्राप्तविषयत्वात् तस्माद्दर्शनविधिविषयत्वेन जन्मादिराशिस्थोपरागवतामितरवत्स
कृद्दर्शनेन स्नानादि भवत्येव अंधादीनामेव तदशक्तेरनधिकारात्तन्न भवतीति चेत् अत्र वदामः अ
स्तु दर्शनविधिः तद्बलादेव च पूर्वोक्तप्रकारेण तस्यांगत्वमपि तथापि सोऽपूर्वविधिस्तावत्संभ
ति निमित्तस्नानतया दर्शनस्याप्राप्तत्वात् किं तर्हि निमित्तस्नानस्याधिकारसंपादकत्वानेकरूपस्य
संभवात् यद्वे [illegible] स्य दर्शनस्य नियमविधिरयं अवघातादिवत् ततश्च नैमित्तिकेषु पक्षकांगहा
नेनाप्यधिकारस्य न्यायसिद्धत्वादंधादीनामेवाद्यावरणे वा कस्य दर्शननियमतूपासंभवेऽपि स्नाना
दियुक्तमेवेति नेष्टसिद्धिः अधिकारसंपादकत्वेनाङ्गस्य अग्निविद्यादिवत् न यथाशक्ति।
न्यायाविषयत्वमिति चेत् वैषम्यात् अग्निविद्यादिषु हि कर्मप्रयोगविध्यप्रयोज्यत्वान्न यथाश
क्तिन्यायवत्त्वं नाधिकारसंपादकत्वात् उपरागदर्शननियमस्तु प्रयोगविधिप्रयोज्य एवेति भ
वति यथाप्राप्त्यर्थं बंधस्य विषयः अस्तु तर्हि निमित्तत्वमेवेति चेत् न दतोऽन्तरत्वात् किंच यदि द
ष्टग्रहणं स्नानादेर्निमित्तं तथा सत्युद्देश्यस्य ग्रहणस्य विशेषणं दर्शनमविवक्षितं स्यात् यस्यो
भयं हविरार्तिमार्छादित्यत्रेव हविष उभयत्वं अतः केवलं ग्रहणमेव निमित्तमिति वक्तव्यम्
न तु ज्ञानमेव निमित्तं सर्वनिमित्तानां ज्ञातानामेव नैमित्तिकप्रयोजकत्वमिति
भिन्नवतन्त्रनिरूपितत्वात् न च ज्ञानं शास्त्रीयमेव न लौकिकं विज्ञाने श्वशादि
र्शांतरग्रहणेऽपि स्नानादिप्रसंग इति वाच्यं सूर्यग्रहो यदा राज्ञाविति पूर्वोक्तनिगमवचनेन त
त्स्नानादिविधानात् ननु तर्हि बहुषु वाक्येषु प्रयुक्तस्य दर्शनपदस्य का गतिरिति चेत् अत्र दा
क्षिणात्याः इत्योरुद्देश्यविषयत्वेन ग्रहैकत्ववद्विवक्षया अदित्यज्ञानानुपादकात्वमेव प्रयु
क्तश्च दर्शितं ज्ञानसामान्ये अष्टमी रोहिणीयुक्तानिशार्द्धे दृश्यते यदि त्यादिषु मनसापश्यतीत्या
दौ लौकिकप्रयोगे च पश्यार्थे ज्ञानालोचन इति व्याकरणस्मरणात् दर्शेर्ज्ञानसामान्यवाचित्वम्

नुमन्यंते भवतवाचाद्दृश्यत्वानमेवतस्यवाच्यमितरत्रलाक्षणिकत्वं तथाप्यत्रतदाश्रयणेपिनदोषः चं
द्रसूर्य्यग्रहेनाद्यात्तस्मिन्नहनिपूर्वतः राहोर्विमुक्तिंविज्ञायस्नात्वाकुर्वीतभोजनमिति गोन्नमवचसस्त
त्पर्य्याग्राहकस्यसत्वात् विधित्वाच्चवार्थमनुवादत्वापेक्षणात् तस्याप्रदोषत्वाच्च ऋत्वाप्रुत्रस्यज
चेत्यादिवत् अन्यथा रजसोदर्शनेनारीत्रिरात्रमशुचिर्भवे दित्यादावप्यंपस्त्रीणामशौचाभावप्रसंगः
यद्वा यावद्दर्शनगोचर इत्यादौगोचरशब्दोयोग्यतापरएव तेनयश्चंद्रसूर्य्योपरागोयस्मिन्देशे यावत्
कर्मपर्य्याप्तश्चाक्षुषज्ञानयोग्यः सतत्रदेशेतावत्सुकर्मसुनिमित्तमित्यर्थःपर्यवस्यति तादृशस्यच
शास्त्रतोज्ञानंतदनुष्ठानंप्रयोजकं नत्वतत्कालएवनतुसंक्रांताविवतत्पूर्वोत्तरकालयोः अतश्चाक्षु
षज्ञानयोग्येप्यकालीयेग्रहणेस्नानपूर्वकंदानादिस्नानमात्रंवायावदेवतत्प्रकर्तुंशक्यम् तावदेव
कर्तव्यंवर्त्तमानमेव ग्रहणंतादृशमाशौचवत्निमित्तम् नत्वतीतंनचभावीचेतिपर्य्यवसितोर्थः
देशविशेषणंच सूर्यग्रहेयदाराज्ञाविनिवचनेन द्वीपांतरस्यनिमित्तत्वपर्य्युदासावगम्यते अप
वचाक्षुषज्ञानयोग्यतायानिमित्तांतर्गतत्वे रात्रिरविग्रहस्य दिवाचंद्रग्रहस्यातथात्वेनानिमित्त
त्वादप्रसक्तस्यस्नानादेस्तत्रनिषेधः पर्य्युदासोवाननर्थकइत्यपास्तं द्वीपांतरस्यात्यंततयोरपिद
र्शनयोग्यत्वस्यचनिषेधबलादेवलाभात् अतिसूक्ष्मतरकालतयाअनादेश्यानांतुकस्यापिदर्श
नयोग्यानाम् तच्चोक्ततविशेषणादेवनिमित्तत्वपर्य्युदासः यदपि मुक्तिंदृष्ट्वातुभोक्तव्यंस्नानं
कृत्वाततःपर मित्यादिषुदृष्ट्वेतिपदं तदपिशास्त्रीयज्ञानपरं अत्रगौडनिबंधेस्मृतिवचनम्
मेघमालादिदोषेणयदिमुक्तिर्नदृश्यते आकलय्यततःकालंस्नात्वाभुंजीतवाग्यतइति नच
ग्रस्तास्तमयेचंद्रसूर्योदयात्प्रागपिशास्त्रतोमुक्तिंविज्ञायस्नानभोजनादिप्रसंगः ग्रस्तावेवास्त
मानंत्वितिवक्ष्यमाणभृगुवचनेनदिनांतरेस्नानभोजनविधानात् अहोरात्रंनभोक्तव्यमितिवक्ष्य
माणविष्णुधर्मोत्तरवचनेनग्रस्तास्तमयेचंद्रसूर्योदयात्प्रागभोजननिषेधाच्च तस्माच्छास्त्रावगतं
देशविशेषावच्छेदेनचाक्षुषज्ञानयोग्यमेववाग्रस्तास्तग्रहणंस्नानादिनैमित्तिकानुष्ठानप्रयोज
कमित्याहुः योग्यताचस्वरूपेणैवतत्कालएवस्नानादिनतुसंक्रांतिवत्पूर्वापरयोर्भोजनंतुतत्का
लेतत्पूर्वकालेचनिषिद्धम् तथाचब्रह्मपुराणे नाश्नीयादद्यतत्कालेग्रस्तयोश्चंद्रसूर्य्ययोः मु
क्तयोश्चकृतस्नानःपश्चाद्भुंज्यात्स्ववेश्मनीति अत्रस्ववेश्मनीतिवाक्यभेदेन तद्दिनेपरान्नभोजननि
षेधः विष्णुधर्मोत्तरे चंद्रस्ययदिवाभानोर्यस्मिन्नहनिभार्गव ग्रहणंतुभवेत्तत्रनपूर्वंभोजनक्रिया
शंखलिखितौ तस्मिन्नहनिनाश्नीयाच्चंद्रसूर्यग्रहोयदि मुक्तिंदृष्ट्वातुभुंजीतस्नात्वाचैवयथाविधी
ति पूर्वकालभोजननिषेधेविशेषमाह वृसिष्ठः ग्रहणंतुभवेदिंदोःप्रथमादपियामतः भुंजीतावर्त्त
नात्पूर्वंपश्चिमेप्रथमादधः रवेस्त्वावर्त्तनादूर्ध्वमर्वागेवनिशीथतः चतुर्थेप्रहरेचेत्स्याच्चतुर्थप्रहरादध इ
तिरात्रौप्रथमयामोत्तरंचंद्रग्रहणं चेन्मध्यान्हात्पूर्वंभुंजीत रात्र्यंतयामेचेद्रात्रिप्रथमयामात्पूर्वंभुंजी
त दिनस्यतृतीयप्रहरेचेद्रविग्रहस्तदापूर्वदिनस्यार्धरात्रात्प्राक्भुंजीत अन्हश्चतुर्थप्रहरेचेद्रवि
ग्रहणंतदारात्रेश्चतुर्थप्रहरादधोभुंजीत इदंचनरात्रिभोजनपरं किंतुसूर्यग्रहेपूर्वयामचतुष्टयं
त्याज्यम् चंद्रग्रहेयामत्रयमित्येवंपरमितिमाधवः तदुक्तंवृद्धगौतमेन सूर्यग्रहेतुनाश्नीयात्पूर्वं
यामचतुष्टयं चंद्रग्रहेतुयामांस्त्रीन्बालवृद्धातुरैर्विना अर्धरात्रादधश्चोर्ध्वंयदिचंद्रग्रहोभवेत् पूर्वेपूर्व
त्रभोक्तव्यमुत्तरेचोत्तरेपिचेति अधोद्वितीयेप्रहरे ऊर्ध्वंतृतीये पूर्वत्रपूर्वाह्णेदिनप्रथमद्वितीयप्रह
रयोः उत्तरेपि एवंसतिसूर्यग्रहनिमित्तभोजन निषेधविषययामचतुष्टयस्याप्यवध्यपेक्षत्वस्यग्र
हणयामएवावधिः चंद्रस्यग्रस्तोदयेविशेषमाहवृद्धवसिष्ठः ग्रस्तोदयेविधोःपूर्वंनाहर्भोजनमाह

रेत् ग्रस्तास्तमये विशेषमाह भृगुः ग्रस्तावेवास्तमानेतु रवीन्दू प्राप्नुतो यदि परेद्युरुदये स्नात्वा शुद्धोभ्यव
हरेच्च इति वृद्धगार्ग्योपि संध्याकाले यदा राहुर्ग्रसते चंद्रभास्करौ तदहर्नैव भुंजीत रात्रावपि कदाचनेति
यदा सूर्यस्य ग्रहणं सायंसंध्यायां चंद्रग्रहणं प्रातःसंध्यायां तदा सूर्यस्य ग्रस्तास्तमये पूर्वस्मिन्नहनि त
स्यां रात्रौ न च भोक्तव्यं चंद्रग्रस्तास्तमये पूर्वरात्रौ तदुत्तरस्मिंश्चाह्नि न भोक्तव्यमित्यर्थः विष्णुधर्मोत्तरेपि
अहोरात्रं न भोक्तव्यं चंद्रसूर्यग्रहो यदा मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परमिति तदपि ग्रस्तास्तम
यपरं पूर्ववचनैकवाक्यत्वात् तत्र सूर्यग्रस्तास्तमये सम्यगेव चंद्रग्रस्तास्ते तु सायाह्ने दर्शनोत्तरमित्या
हरित्यहोरात्रं द्रष्टव्यं अमुक्तयोरस्तगयोर्दृष्ट्वा स्नात्वा परेहनीति वचनात् शातातपः नाद्यात्सूर्यग्र
हात्पूर्वमह्नि सायं शशिग्रहात् ग्रहकाले च नाश्नीयात् स्नात्वाश्नीयात्तु मुक्तयोः मुक्ते शशिनि भुंजी
त यदि न स्यान्महानिशा स्नात्वा दृष्ट्वा परेह्न्यद्याद्ग्रस्तास्तमितयोरिति महानिशा च मार्कंडेयेनोक्ता
महानिशा द्वे घटिके रात्रिमध्यमयामयोः नैमित्तिकं तदा कार्यं काम्यं तु न मनागपीति प्रतियामं घटि
काद्वयमेकैका वा घटिका तेन मुहूर्तद्वयमेको वा मुहूर्तः सार्धप्रहरानंतरं मुहूर्तचतुष्टयं महानि
शेति कल्पतरुः शिवरहस्येपि नाचरेत्तु ग्रहे चैव तथैवास्तमुपागते यावत्स्यान्नोदयस्तस्य नाश्नीया
त्तावदेव तु मुक्तिं दृष्ट्वा तु भुंजीत स्नानं कृत्वा यथाविधीति सग्रहे ग्रहणसहिते तद्वर्तमानकाले तथैव
स्मृत्यंतरेपि संध्याकाले यदा राहुर्ग्रसते चंद्रभास्करौ तदा दिवा न भोक्तव्यमातुरस्त्रीशिशून्विनेति
दिवेत्यहोरात्रोपलक्षणं बालादीनामसमर्थानां तु मुहूर्तत्रयात्मकसायाह्नादिग्रहणकालात्
प्राचीने एकैकस्मिन्नेव तादृशे पराह्णादौ भोजननिषेधः तथा च मात्स्यमार्कंडेययोः सायाह्ने ग्रहणं
चेत्स्यादपराह्ने न भोजनं अपराह्णे न मध्याह्ने मध्याह्ने न तु संगवे भुंजीत संगवे चेत्स्यान्न पूर्वं भोजनक्रि
येति सायाह्नादौ ग्रहणे क्रमेणापराह्णादौ बालवृद्धातुरैर्न भोक्तव्यं अपराह्णादिपूर्वकाले तु भोजने नै
षां न दोष इत्यर्थः विशेषनिषेधस्य शेषांशे न दोष इत्यर्थः विशेषनिषेधस्य शेषांशेभ्यनुज्ञाफलकत्वात्
कालतत्त्वविवेचने तु सूर्योपरागविषयमेवेदं बालादीनां भोजननिषेधप्रतिपादकं चंद्रग्रहणे
रात्रितृतीयचतुर्थप्रहरगते बालादिभिर्यामत्रयमपि निषेधपरिपालनसंभवात् तेषामपि उत्सर्गि
तः सर्वस्यामपि रात्रौ भोजनं विनैवावस्थानात् यदा तु तेषां रात्रिप्रथमद्वितीययामगते चंद्रग्रहे या
मद्वयव्यापिनिषेधपरिपालनासंभवस्तदा रात्रेरपि पंचभागान्कृत्वा ग्रहणकालस्मृतभागावधिकत्रि
मुहूर्तात्मकैकभागात्मक एव रविग्रहवद्भोजननिषेधकालो द्रष्टव्यः यत्तु ग्रहणकालावधिकभागद्वये
भोजननिषेधप्रतिपादकं स्मृत्यंतरवचनं सायाह्ने संगवेश्नीयादपराह्ने संगवादधः मध्याह्ने परतोश्नीया
न्नोपवासो रविग्रहे इति प्राग्वदपराह्ने इत्यर्थः यदपराह्णोयपराह्णादिति श्रुतेः रविग्रहः शशिग्रहस्या
प्युपलक्षणं एतच्च पुत्रवद्गृहस्थविषयं आदित्येहनि संक्रांतौ ग्रहणे चंद्रसूर्ययोः उपवासो न कर्त
व्यो गृहिणा पुत्रिणा तथेति स्मृत्यंतरवचनाच्च कालतत्त्वविवेचने तु वचनमिदं बालादिविषयमेव ग्रस्ता
स्तसूर्यास्तमयविषयं नोपवासो रविग्रह इति वाक्यशेषात् तत्रैव चाहोरात्रव्यापिनिषेधात्मकोपवा
सप्रसक्तेः अपराह्णगतोपरागे ग्रस्तास्तमयः संभवत्येव मध्याह्ने परतोश्नीयादित्युक्ते तत्रोपरागे ग्र
स्तास्तमयसंभवात् यद्यपि च तत्र पूर्ववाक्यादुपरागात्पूर्वं संभवमात्रं वर्जयित्वा प्रातर्भोजनं संभवति
तथापि भागद्वयवर्जनस्यात्र वाक्येन प्रतिपादनादन्यत्रापि भागद्वयवर्जनं मुख्यः कल्पः पाकभागव
र्जनं त्वनुकल्प इति ह्युच्यते इत्युक्तं ग्रहणे वेधकालो हेमाद्रौ त्रयोदशपादितो वर्ज्यं दिनानां नवकं ध्रुवं
मांगल्येषु च सर्वेषु ग्रहणे चंद्रसूर्ययोरिति अन्यत्रापि द्वादशपादिततीयांतो वेधः दंडग्रहे स्मृतः एकाद
शपादिकः सौरे चतुर्थांतः प्रकीर्तितः इदं संपूर्णग्रहे खंडग्रहे त्वनियतं दिनत्रयं आद्यंतखंडग्रहे नयोरिति।

वचनात् इदंच ग्रस्तास्तेत्रिदिनेपूर्वमितिनारदवचनेनग्रस्तास्तभिन्नग्रहणपरं ज्योतिर्निबंधेच्यवनः ग्रह
णोत्पातभेत्याज्यंमांगल्येषुऋतुत्रयं यावद्रविणाभुक्ताभुक्तोभेदंतकाष्टवत् अन्यद्ग्रहणविकारादि
तत्फलंचदैवज्ञेभ्योज्ञेयं अत्रकाम्योपवासमाहदक्षः अयनेविषुवेचैवग्रहणेचंद्रसूर्ययोः अहोरात्रो
षितःस्नात्वासर्वपापैःप्रमुच्यतइति आदिकर्मणिक्तः केचित्तु क्तमभिप्रेत्यग्रहणपूर्वदिनेप्युपवा
समाहुः अतएवग्रहणादौ आदित्येहनिसंक्रांतावितिवचनेनपारणानिषेधउपयुज्यते ब्रह्मपुरा
णे नित्यंद्वयोरयनयोस्तथाविषुवतोर्द्वयोः चंद्रार्कयोर्ग्रहणयोर्व्यतीपातेषुकर्मसु अहोरात्रोषि
तःस्नानेश्राद्धदानेतथाजपं यःकरोतिप्रसन्नात्मातस्यस्यादक्षयंततः इतिकालतत्वविवेचने अ
यंचोपवासः सत्यामपिनिष्ठायामयनग्रहणादिसत्यहोरात्रएवनतुपूर्वस्मिन् अयनादिसमभि
व्याहारात् तद्वदहोरात्रस्यैवप्रतीतेस्तुग्रहणस्यैवयुक्तत्वात् तथैवशिष्टसमाचाराच्चउक्तःपूर्ववत् ए
करात्रमुपोष्यैवस्नायाद्दद्याच्चशक्तितः कंचुकादिवसर्पस्यनिवृत्तिःपापकोशात इतिलिंगपुराणगत
त्वगप्रत्ययोपिसमानकर्तृत्वमात्रे मुखंव्यादायस्वपितीतिवत् तत्रैवत्रिरात्रोपवासोयुक्तः त्रिरा
त्रंसमुपोष्यैवंग्रहणेचंद्रसूर्ययोः स्नात्वादत्वाचविधिवन्मोदतेब्रह्मणासहेति अत्रापित्रितयमुप
वासस्यदिनमेवतद्घटितस्यैवत्रिरात्रस्योपरागाद्विनोपलक्षणात् पुत्रवद्गृहस्थस्तुपापक्षयकामो
पिग्रहणनिमित्तोपवासंनकुर्यात् तदुक्तंनारदेन संक्रांत्यामुपवासंचकृष्णैकादशिवासरे चंद्रसू
र्यग्रहेचैवनकुर्यात्पुत्रवान्गृही यदातुरविग्रस्तास्तदापुत्रिणाप्रहरद्वयंदिवाबाल्यादिवद्भोजनं
कार्यंनतूपवासः सायाह्नेग्रहणंचेत्स्यादिति मार्कंडेयवचनात्सायाह्नेसंगवेश्नीयादितिस्कंदेस्मृति
हेमाद्रिः माधवमतेतुपुत्रिणोपितत्रोपवासएव अहोरात्रंनभोक्तव्यमिति पूर्वोक्तनिषेधस्यतेः
नापिपालनीयत्वात् उपवासनिषेधस्तुव्रतरूपोपवासपरः कृष्णैकादशीवदितिमदनरत्नेप्येव
मुक्तंचैतत् यतःतत्प्रयुक्तोपवासस्यनिषेधोयमुदाहृतइतिवाक्यशेषेणविहितकाम्योपवासनिषे
धोनानुषंगप्राप्तस्यनानुषंगप्राप्तोयतोनित्यमुपोषणमितिवाक्यात् किंच उपवासप्राह्नःसंक
ल्पात्मकव्रतरूपोपवासपरएव शक्तोनतभोजननिवृत्तौतस्यलाक्षणिकत्वात् अन्यथोपवासव्र
तंचरेदितिव्रतशब्दसमभिव्याहारात्संकल्पसिद्धावपिकेवलोपवासशब्दघटितवाक्येषुसंकल्पा
द्यप्रसंगात् तथाचोपवासनिषेधेषुगौणमुख्ययोर्मुख्येकार्यसंप्रत्ययइतिन्यायेन मुख्यस्यैवग्र
हणेचिंत्यमिति यदाचैवंकारणांतरप्रयुक्तभोजनाभावमात्रेणव्रतरूपोपवासप्रसक्तिस्तदाग्रह
णनिमित्तश्राद्धाधिकारिणा प्राश्नीयाच्चाभोजनमासमापनादितिविहितश्राद्धांगभोजननिषेधपरि
पालनेपिनक्षतिः ग्रहणनिमित्तेपिचश्राद्धेपूर्वेद्युःपरेद्युर्वाप्राथमिकेब्राह्मणनिवेदने श्राद्धप्रा
रंभत्वेनव्याख्यातेसंभवत्येव नभुंजीतेचप्राच्याः श्राद्धाधिकारिणोग्रहणदिनेततः पूर्वंतस्मात्कृत्स्त
सर्वोतेपुत्रवद्भिर्दिवाण्यहोरात्रेभोजननिषेधः परिपालनीयएव व्रतरूपःकाम्यउपवासःपरेणः
कार्यः चंद्रग्रस्तास्तेतत्रापरदिनेसंध्याहोमादौनदोषः तदाहोशनाः ग्रस्तेचास्तंगतेत्विंदौ स्नात्वास्म
नपवधारणं स्नानहोमादिकंकार्यंभुंजीतेंदूदयेपुनः एतदनाहिताग्निविषयं अपराह्नेव्रतोपापि
नीयमश्नीत इतिकात्यायनोक्तेर्व्रतस्यप्रातर्विहितत्वेनचप्राबल्यात् अग्निर्व्रतंकुर्यादितिनि
र्णयदीपः रागप्राप्तभोजनेकालनियमोयं तेनज्वरादाविहभोजनमितिकर्कानुसारिणः ग्रहणा
तरितस्यपूर्वसंकल्पितस्यद्रव्यस्यादानस्यदेहेगुणंभवतीतिशिष्टाःपठंति तत्रब्रह्मवैवर्ते दातव्य
मितिनोकाम्यंवक्तव्यंकुत्रचित्क्वचित् दृशोत्तरंपर्वसुस्यात्तच्छन्नंचेद्ग्रहेभवेत् सूर्यग्रहेसहस्रंतत्
मरणेनंतकंस्मृतमिति अत्रमूलंचिंत्यमितिनिर्णयसिंधौ ग्रहणात्पूर्वकालभोजनेप्रायश्चित्तं

षट्त्रिंशन्मतेभिहिते चंद्रसूर्यग्रहे भुक्त्वा प्राजापत्यं समाचरेत् तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुद्ध्य
तीति त्रिरात्रेण त्रिरात्रोपवासेन तेन प्राजापत्याद्युक्तं भवति प्राजापत्यस्य षडुपवासतुल्यत्वात्
ग्रस्तास्तोत्तरं निषिद्धं कालभोजनेपि त्रिरात्रमेव तस्मिन्दिन इत्य विशेषाभिधानात् स्त्रीबालवृद्धादी
नां तदर्थं ग्रहणप्रसंगात्कुरुक्षेत्रप्रतिग्रहे प्रायश्चित्तमुच्यते अरुणास्मृतौ प्रतिग्राही कुरुक्षेत्रे न भू
यः पुरुषो भवेत् तथापि मनसः शुद्ध्यै प्रायश्चित्तं समाचरेत् तप्तकृच्छ्रत्रयं कुर्याद्वेदवेन समन्वितं
सत्रेणावायजेतार्थ जपेद्वालक्षसप्तकं वापीकूपतडागादिखनने विंशहनेद्धनमिति एतच्चयग्रहं हि ने
नार्जयंति ब्राह्मणाः कर्मणायनं तस्योत्सर्गेन शुद्ध्यंति दानेन तपसापि चेति मनूक्तैरुत्सर्गोन्नरं
ज्ञेयमिति दिक् अथ ग्रहणे सामान्यतो वर्ज्यानि न स्वपेन्न च भुंजीत न कुर्यान्मूत्रमेहने न मै
थुनं न चाभ्यंगभोजनं न च बंधनं पत्रपुष्पतृणोर्नां गच्छिंद्यात्केशान्न शोधयेत् न मिथ्याभाषणं कुर्यान्न के
शं वरयात्मनाम् एतेषां फलानि स्मृतिसंग्रहे विष्टायां जायते व्याधिर्मूत्रे दुःखमाप्नुयात् १ शीर्षे
कृमियोनिः स्यान्मैथुने ग्रामसूकरः अभ्यंगेन भवेत्कुष्टी भोजने स्याद्योगतिः बंधने च भवेत्स
र्पो वधे च नरकं व्रजेदिति कालमाधवे ग्रहणदिने निषिद्धमाह गार्ग्यः न मंगलं न प्रतिष्ठा न प्र
पारामसत्क्रियाः नाग्निहोत्रं प्रगृह्णीत न यज्ञारंभमाचरेत् न जातकादिसंस्कारं न क्रयं न च
विक्रयं ग्रहणादानरूपं तु व्यवहारं तु लौकिकं दिवाकरे निशानाथे राहुणा संस्थिते सति कुर्या
त्तद्दिने किंचिन्न क्षौराभ्यंगमज्जनं ग्रहणं जन्मराश्यादौ निषिद्धं तदुक्तं ज्योतिषे त्रिषड्दशायो
पगतेन राशीनां शुभप्रदं स्याद्ग्रहणं रवींद्वोः द्विसप्तनंदेषु च मध्यमं स्याच्छेषेष्वनिष्टं कथितं मुनींद्रैः ॥
ति आयपकादशनंदनव इषुपंचमं मदनरत्ने गर्गः जन्मसप्ताष्टरिफांकदशमस्थे निशाकरे दृष्टो
रिष्टप्रदो राहुर्जन्मर्क्षे निधनेपि च रिफोद्वादश अंकोनव निधने सप्तमतारा पृथ्वीचंद्रोदये विसिष्ठधर्मो
त्तरे यन्नक्षत्रगतो राहुर्ग्रसते चंद्रभास्करौ तज्जातानां भवेत्पीडा ये नराः शांतिवर्जिताः अभिभवतिसैं
हिकेयश्चंद्रार्कौ यस्य जन्मनक्षत्रे तस्यांतकादिव भयं विंद्याद्दुःखं मनस्तापम् हेमाद्रौ येषां तु
भास्करस्थाने राहुश्चंद्रमुपक्रमेत् कर्मक्षयपरिक्लेशान्प्राप्नुवंति च ते जनाः पितृपक्षविनाशा
य सूर्यस्थाने भवेद्ग्रहः मातृपक्षविनाशाय चंद्रस्थाने भवेद्ग्रहः होरायां ग्रसते यस्य नक्षत्रे वा निशा
करं प्राणसंदेहमाप्नोति स वा मरणमृच्छति पृथ्वीचंद्रोदये पुराणांतरे सूर्यस्य संक्रमो वापि ग्रहणं
चंद्रसूर्ययोः यस्य त्रिजन्मनक्षत्रे तस्य रोगोथवा मृतिः तस्य दानं च होमं च देवार्चनं जपोथवा उपरागे
भिषेकं च कुर्याच्छांतिर्भविष्यति स्वर्णेन वाथ पिष्टेन कृत्वा सर्पस्य चाकृतिं ब्राह्मणाय ददेत्तस्य
नरोगादिश्च तत्कृतः जन्मनक्षत्रे तत्पूर्वोत्तरे च त्रिजन्मनक्षत्रमित्युच्यते जन्मदशमैकोनविंशतारा
इति केचित् सर्पस्य तदाकारस्य राहोरित्यर्थः अद्भुतसागरे भार्गवः यस्य राज्यस्य नक्षत्रे स्वर्भानु
रुपरज्यते राज्यभंगः सुहृन्नाशो मरणं वा विनिर्दिशेत् राज्यस्य नक्षत्रमभिषेकनक्षत्रमिति तत्रैव व्या
ख्याते मंडलाधिपदैवत्यैर्मंत्रमृत्युंजयादिभिः होमं कुर्यात्प्रयत्नेन तत्तन्मंत्रान् जपेत्सुधीरिति
मंडलाधिपानि तत्तन्नक्षत्रगणात्मकान्याग्नेयवारुणवायव्यैशाख्यानि तदधिपा अग्न्यादयस्ता
र्थं तत्तन्मंडलेषु तत्तच्छांतयो अथर्ववेदोक्ताः करणीयाः आग्नेयीं कारयेच्छांतिं शांतिं कुर्याच्च वारु
णीं वायव्यां कारयेच्छांतिं मैशानीं कारयेत्तथा त्रिंशत्पलैस्तदर्धाद्वा अर्धं कृत्वा नागपतिं नरः त्रिंष
न्माषमितेनागं हैमं तत्र च कारयेत् वस्त्रयुग्मेन संवेष्ट्य कांस्यपात्रे निधापयेत् तत्पात्रं ताम्रपात्रे च
त्रिंशत्पलमिते न्यसेत् घृतकुंभोपरि न्यस्य दद्याच्चंद्रं समौक्तिकं रूपं च वस्त्रसहितं ब्राह्मणाय कुटुंबिने

सवर्णां दक्षिणां दद्यात्ततः शांतिमवाप्नुयात् इति सारसंग्रहे च तथा कुर्य्यान्माहेंद्रीं नत्र कारयेदिति कात्यायन
वचनात् ग्रंथांतरे प्रकारांतरमुक्तं ग्रहणे ग्रहपीडितनाडीनक्षत्रदोषप्रशमनाय सहस्रशतपुष्पैः स्नाया
त्कलिनीफलचंदनोशीरैः ताम्रपात्रे तिलैः पूर्णे पूर्णे वा गव्यसर्पिषा भास्करग्रहणे दद्यान्नाडीदोषो
पपीडितः घृतकुंभोपरिनिहितं शंखं नवनीतपूरितं दद्यात् नाड्यादिदोषशांत्यै द्विजाय दोषाकरग्र
हणे नाडीनक्षत्राण्याह दशमषोडशाष्टादशत्रयोविंशपंचविंशति भार्गवार्चनदीपिकायां ज्यो।
तिःसागरे सौवर्णीं कारयेन्नागं पलेनार्धपलार्धतः तदर्धेन तदर्धेन फणायां मौक्तिकं न्यसेत् ताम्र
पात्रे निधायाथ घृतपूर्णे विशेषतः कांस्ये वा कांतिलोहे वा न्यस्य दद्यात्सदक्षिणं चंद्रग्रहे तु रूप्यस्य बिं
बं दद्यात्सदक्षिणं नागं कृष्णमयं सूर्यग्रहे बिंबं च हेमजं तुरंगरथगोभूमितिलसर्पिश्च कांचनं का
लतत्वविवेकेपि सुवर्णनिर्मितं नागं सतिलं कांस्यभाजनं सदक्षिणं सवस्त्रं च ब्राह्मणाय निवेदये
त् सौवर्णं राजतं वापि बिंबं कृत्वा स्वशक्तितः उपरागभवक्लेशच्छिदे विप्राय कल्पयेत् मंत्रस्तु नमो
मयमहाभीम सोमसूर्यविमर्दन हेमनागप्रदानेन मम शांतिप्रदो भव विधुंतुद नमस्तुभ्यं सिंहि
कानंदनाच्युत दानेनानेन नागस्य रक्ष मां वेधजाद्भयादिति अत्र शांतिरप्युक्ता मात्स्ये यस्य राशिं
समासाद्य भवेद्ग्रहणसंभवः स्नानं तस्य च वक्ष्यामि सर्वौषधिसमन्वितं चंद्रोपरागं संप्राप्य कृत्वा।
ब्राह्मणवाचनं संपूज्य चतुरो विप्रान् रक्तमाल्यानुलेपनैः पूर्वमेवोपरागस्य समानीयौषधादिकं
स्थापयेच्चतुरः कुंभानग्रतः सागरान्विधीन् गजाश्वरथवल्मीकसंगमाद्ध्रदगोकुलात् राजद्वारप्रवे
शाच्च मृदमानीय निक्षिपेत् पंचगव्यं पंचरत्नं पंचत्वक्पंचपल्लवान् रोचनं पद्मकं शंखं कुंकुमं रक्तचं
दनं शुक्तिस्फटिकतीर्थांबुसितसर्षपगुग्गुलून् मधुकं देवदारुं च विष्णुक्रांतां शतावरीं बलां च स
हदेवीं च निशायुगं हितयमेव च एतत्सर्वं विनिक्षिप्य कुंभेष्वावाहयेत्सुरान् पूर्वं समुद्राः सरितस्तीर्था
नि जलदा नदाः आयांतु यजमानस्य दुरितक्षयकारकाः योसौ वज्रधरो देव आदित्यानां प्रभुर्मतः
सहस्रनयनश्चंद्रग्रहपीडां व्यपोहतु मुखं यः सर्वदेवानां सप्तार्चिरमितद्युतिः चंद्रोपरागसंभूतां
ग्रहपीडां व्यपोहतु यः कर्मसाक्षी लोकानां यमो महिषवाहनः यमश्चंद्रोपरागोत्थां ग्रहपीडां व्यपो
हतु रक्षोगणाधिपः साक्षान्नीलांजनसमप्रभः खड्गहस्तोतिभीमश्च ग्रहपीडां व्यपोहतु नागपा।
शधरो देवः सदा मकरवाहनः स जलाधिपतिर्देवो ग्रहपीडां व्यपोहतु प्राणरूपो हि लोकानां सदा कृ
ष्णमृगप्रियः वायुश्चंद्रोपरागोत्थां ग्रहपीडां व्यपोहतु योसौ निधिपतिर्देवः खड्गशूलगदाधरः चंद्रो
परागकलुषं धनदोत्र व्यपोहतु योसाविंदुधरो देवः पिनाकी वृषवाहनः चंद्रोपरागपापानि स नाशा
यतु शंकरः त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ब्रह्मविष्ण्वर्करुद्राश्च दहंतु मम पातकं एव
मावाहयेद्देवान्मंत्रैरेभिश्च वारुणैः एतानेव तथा मंत्रान्स्वर्णपट्टे विलेखयेत् ताम्रपट्टेथवालिख्य न
ववस्त्रेण तथैव च मस्तके यजमानस्य निदध्युस्ते द्विजोत्तमाः कलशान्द्रव्यसंयुक्तान्जाततूपसमन्वि
तान् गृहीत्वा स्नापयेद्रूपं भद्रपीठोपरिस्थितं पूर्वैरेव तु मंत्रैश्च यजमानं द्विजोत्तमाः अभिषेकं ततः
कुर्युर्मंत्रैर्वारुणात्मकैः आचार्य्यं वरयेत्पश्चात्स्वर्णपट्टं निवेदयेत् आचार्यदक्षिणां दद्याद्गोदानेष
स्वशक्तितः होमं चापि प्रकुर्वीत सप्तव्याहृतिभिस्तथा दानं च शक्तितो दद्याद्यदीच्छेदात्मनो हितं सू
र्यग्रहे सूर्यनामयुक्तान्मंत्रान्प्रकीर्तयेत् अनेन विधिना यस्तु ग्रहणस्नानमाचरेत् न तस्य ग्रहजो दो
षः कदाचिदपि जायते ग्रहणादर्शनं तु गृहे कार्य्यमिति शिष्टाः प्रत्यक्षदर्शनं यथा न भवति तथा
वस्त्रादिनाच्छादनव्यवधानमित्यर्थः इति मात्स्योक्ता ग्रहशांतिः ग्रंथांतरे तु दूर्वाकुशाश्वत्थशमीपि
लाजित्सर्वार्थसर्वौषधिपंचमृद्भिः स्नानं विदध्याद्ग्रहणे रवींद्वोः पीडाहरं शांतिवहं हितस्य भार्गी।

वार्चनचंद्रिकायां ब्रह्मसिद्धांते सर्वैःपद्मस्थितैर्वीक्ष्य स्वच्छतैलांबुदर्पणैः ग्रहणं गुर्विणीयात्तु नपश्येद्ब पटं विना अत्र ग्रहणादिसम्पादनपर्य्यन्तं रामगोपालाद्यागमदीक्षाप्राशिवार्चनचंद्रिकायाम् ज्ञानार्णवे मंत्राद्यारंभणं कुर्य्याद्ग्रहणे चंद्रसूर्य्ययोः ग्रहणाद्यपि देवेशि कालः सम्पादनावधीति रत्नसागरे सतीर्थकी विधुग्रासे तथा दमनपर्वणि मंत्रदीक्षां प्रकुर्वाणो मासर्क्षादीन्नशोधयेत् तत्र सूर्यग्रहणकाले तु नान्यदन्वेषितं भवेत् सूर्यग्रहणकालेन समो नान्यः कदाचन मासर्क्षतिथिवारादिशोधनम सूर्यपर्वणीति तत्रैव कालोत्तरवचनात् चंद्रग्रहे तु या दीक्षा या दीक्षा व्रतचारिणां व्रतस्यस्य च या दीक्षा दारिद्र्यं सप्तजन्मस्विति तत्रैव योगिनीतंत्रे निषेधाच्च अथ पुरश्चरणचंद्रिकायुक्तो ग्रहस्य पुरश्चरणविधिः अथवान्यप्रकारेण पुरश्चरणमिष्यते ग्रहणेऽर्कस्य चेंदोर्वा शुचिः पूर्वमुपोषितः नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः यद्वा पुण्यपादके स्नात्वा शुचिः पूर्वमुपोषितः ग्रहणादिविमोक्षांत जपेन्मंत्रं समाहितः अनंतरं दशांशेन क्रमाद्धोमादिकं चरेत् तदंते महतीं पूजां कुर्य्याद्ब्राह्मणतर्पणम् ततो मंत्रप्रसिद्ध्यर्थं गुरुं संपूज्य तोषयेत् एवं च मंत्रसिद्धिः स्याद्देवता च प्रसीदति अथवान्यः प्रकारो यं योरश्चरतिको विधिः चंद्रसूर्योपरागे च स्नात्वा प्रयतमानसः स्पर्शादिमोक्षपर्य्यन्तं जपेन्मंत्रं समाहितः जपाद्दशांशतो होमं तथा होमाच्च तर्पणं एवं कृत्वा तु मंत्रस्य जायते सिद्धिरुत्तमा होमाशक्तो जपं कुर्य्याद्धोमसंख्याचतुर्गुणं षड्गुणं चाष्टगुणितं यथासंख्यं द्विजातयः तेषां स्त्रीणां तु विज्ञेयस्तेषामेव समो जपः यं वर्णमाश्रितः शूद्रस्तज्जपस्तस्य कीर्त्तितः मूलमंत्रं समुच्चार्य तदंते देवताभिधां द्वितीयांतां तर्पयामि नमोंतकः तर्पणस्य दशांशेन मार्जनं परिकीर्त्तितं तत्रैव चंद्रदेवतारूपं ध्यात्वात्मानं प्रपूज्य च नमोंतमंत्रमुच्चार्य्य तदंते देवताभिधां तोयैरेभि[illegible] तन्मूर्धनि मार्जनस्य दशांशेन ब्राह्मणानपि भोजयेत् विप्राराधनमात्रेण सर्वं सांगं भवेद्यतः जपो वा पूर्वको होमस्तर्पणं चाभिषेचनं भूदेवभोजनं पंचप्रकारैः पुरश्क्रियेत्यादिः तत्र ग्रहस्य पुरश्चरणं ग्रस्तास्ते ग्रस्तोदये च भवति स्पर्शादिमुक्तिपर्यंतं इत्यभिधानात् तयोश्च यावद्दर्शनगोचरत्वं तु न्यादर्शनयोग्यत्वापेक्षणादित्यलम् इति ग्रहणकाले कार्याकार्यनिर्णयः ✣

स्वस्तिश्रीरणवीरसिंहधरणीपालो ० १ रणवीरसिंहभूपेशकारिते कृत्यसागरे पितृयज्ञोपरागदेद्योनकोऽभ्रसंग्रहः २ इति श्रीरघुवंशतिलकमहाराजरणवीरसिंहकारिते कृत्यरत्नाकरे समस्तपर्वनिर्णायकः सप्तमोरत्नसंग्रहः

श्रीगणेशाय नमः

श्रीदं गणेशं शिवयोस्तनूजं सुरासुरैरर्चितपादपीठं स्वर्गापवर्गादिफलप्रदं तं वंदामहे नित्यमुदारसत्वं एतावता ग्रंथेन व्रतानुष्ठानोपयोगिभूतं कालं सामान्यतो निरूप्येदानीं प्राधान्येन प्रतिज्ञाविषयीभूतं व्रतस्वरूपं तदुपयोगि चान्यदपि निरूप्यते तत्र व्रतनामाभियुक्तप्रसिद्धविषयः संकल्पविषयः अभियुक्तः प्रसिद्धिविषयमेव तत्त्वकर्तव्यविषयो नियतः संकल्पो व्रतमिति श्रीदत्तादयः तत्वग्निहोत्रसंध्यावंदनादिविषये संकल्पेतिप्रसक्तं नच संकल्पस्य व्रतत्वे व्रतं संकल्पयेदित्यन्वयः पाकं पचति राजानं दद्यादितिवत्प्रयोगानुग्रहार्थप्रयोगोपपत्तेः तत्र कर्तव्यतया यत्संकल्पितं तन्न हुतम संकल्पश्चात्रांगं अन्येत्त तादृशार्थविषयः संकल्प एव व्रतं नागृहीतविशेषणान्यायात् उभयथापि संकल्पं विना कर्मानुष्ठानदर्शितफलानन्वये विशिष्टकर्मासिद्धेः सच संकल्पः कामाद्यभिलाषपूर्वः संकल्पः कर्ममानसमिति निरुक्तेश्च सच संकल्पः मानसकायिकोभयनियमरूपतया कुशतिलजलत्यागादिरूपः संकल्पप्रशस्त्यार्थः एतेन मानसस्य कामाद्यभिलाषपूर्वो जपहोमा

नदानोपवासादिशास्त्रविहितदेशकालनियतोधर्मोव्रतसामान्यलक्षणम् उभयविधेःसंकल्पएवास्यमु
ख्यमंगमिति अथव्रताप्रातराहारंव्रतंसंकल्पयेद्बुधइतिवक्ष्यमाणविधानाच्च व्रतजिज्ञासानागरखंडे क
लिकालकृतेकिंचिद्व्रतंसन्मुखे स्वल्पायासंमहापुण्यंसर्वपापप्रणाशनं बह्वायुषःसदामर्त्याब्रह्मन्कृत
युगेतथा त्रेतायांद्वापरेचैवनतुकलियुगेतथा तस्मादीदृग्व्रतंत्यक्त्वाकिंचिदेकाहिकंवद स्वःकार्य्यम
द्यकुर्वीतपूर्वाह्णेचापराह्णिकं नहिमृत्युःप्रतीक्षेतकृतमस्यनवाकृतं भर्तृयज्ञउवाच अस्तिराजन्व्रतं
पुण्यंशिवरात्रीतिसंज्ञितं एकाहिकंमहाराजसर्वपापप्रणाशकं तत्रयद्दीयतेदानंहुतंजप्तंतथैवच
सर्वमक्षयतांयातिशिवव्रतप्रभावतः शिवरात्रीत्युपलक्षणंएवंसर्वव्रतेषुज्ञेयं अथव्रतप्रशंसा
विष्णुधर्मोत्तरे व्रतोपवासैर्यैर्विष्णुनान्यजन्मनितोषितः तेनरामुनिशार्दूलग्रहरोगादिबाधिताः त
थाचस्कंदपुराणे नपूजितोभूतपतिःपुरायैर्व्रतंनचीर्णंनचसत्यमुक्तं दारिद्र्यशोकामयदुःखदग्धाः
प्रायोत्रशोचंतितएवमर्त्याः राज्यंश्रियंजगतिसायुजनोपभोगंप्राप्नोतिचापिशिवलोकमथाप्ततत्वम्
नवाप्यमस्तिभुवनेषुदृढव्रतानांतस्मात्सदाव्रतपरेणनरेणभाव्यं पद्मपुराणे नाग्निचिन्नरकंया
तिनसत्पत्नीनसद्व्रती नाश्वमेधादियाजीचगोसहस्रप्रदोनच स्कांदे नियमानांचदृश्यंतेसमृद्धाः
फलसिद्धयः यथाविनियमानांचयोराव्याप्तयोनच तथागौरीप्रतिशिववाक्यं देवत्वंदेवताःप्राप्ता
नियमान्नियमान्विते नारानूपाज्वलंत्येतेनियमाद्दे तपोधने वायुपुराणे किंचिद्व्रतंवाक्रियतेप्रयत्न
नेवात्रिलोचनः विशिष्योदीयतेसर्वमेतज्जन्मतरोःफलं किंचिद्व्रतंवाक्रियतेनत्रवायुपुराणे नक्तंहवि
ष्यान्नमनोदनंवाहविस्तिलाःक्षीरमथाम्बुचाज्यं यत्पंचगव्यंयदिवापिवायुःप्रशस्तमत्रोत्तरमुत्तरंच
एतत्सर्वंशास्त्रानुसारेणकिंचिद्व्रतकरणविषयं अथव्रताधिकारिणः स्कंदपुराणे निजवर्णाश्रमाचा
रानरतःशुद्धमानसः अलुब्धःसत्यवादीचसर्वभूतहितेरतः व्रतेष्वधिकृतोराजन्नन्यथाविफलश्रमः
श्रद्धावान्पापभीरुश्चमददंभविवर्जितः पूर्वंनियममाश्रित्ययथावत्कर्मकारकः अवेदनिंदको
धीमानधिकारीव्रतादिषु निश्चयोनिष्टयस्यनिजवर्णाश्रमाचारेत्यनेनचतुर्णामपिवर्णानांव्रते
ष्वधिकारः संकोचेमानाभावात् व्रतोपवासनियमैःशरीरोत्तापनंतप इतिदेवलेनव्रतादेस्तपो
रूपत्वाभिधानात् तपश्च श्राद्धकर्मतपश्चैवसत्यमक्रोधएवच स्वेषुदारेषुसंतोषःशौचंनित्यानसू
यता आत्मज्ञानंतितिक्षाचधर्मःसाधारणोनृपेति महाभारतेसाधारणधर्मत्वश्रवणात् शूद्रोव
र्णश्चतुर्थोपिवर्णत्वाद्धर्ममर्हति वेदमंत्रस्वधास्वाहावषट्कारादिभिर्विनेतिव्यासोक्तेः शूद्र
स्त्रीजपेन्मौनमास्तेभोगविवर्जित इतिविशेषविधानाच्च ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चैवहि
तोत्तम अर्चयंतिमहादेवंयज्ञदानशमादिभिः व्रतोपवासनियमैर्होमस्वाध्यायतर्पणैः तेषांवै
रुद्रसायुज्यसामीप्यंचातिदुर्लभं सालोक्यताचसारूप्यंजायतेतत्प्रसादत इतिकूर्मपुराणाच्च वै
श्याःशूद्राश्चयेमोहादुपवासंप्रकुर्वते त्रिरात्रंपंचरात्रंवातयोर्व्युष्टिर्नविद्यते इतिमहाभारतेविशेष
निषेधाच्च कश्चिन्म्लेच्छादीनामप्यधिकारः वैश्यैःशूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्चमानवैरिति नवरात्रप्र
करणेभिधानात् स्वर्गकामादाविवाधिकारिविशेषणस्यलिंगस्याविवक्षितत्वात्स्त्रीणामप्यधि
कारः अतएव नरोवायदिवानारीत्यादितत्राभिधानं यत्तु अनग्नयस्तुयेविप्रास्तेषांश्रेयोभिजायते व्र
तोपवासनियमैर्नानादानैस्तथानृपेति भविष्यवचनं तदनग्नीनामिष्ट्याद्यनधिकाराद्व्रतादिभिरेवते
षांश्रेयइतिप्रतिपादनार्थं नतुसाग्न्यधिकारार्थं दानेप्यनधिकारापत्तेः निर्णयसिंधौ अत्रानग्निग्रह
णमुपवासविषयं अतएवदेवलः आहिताग्निरनड्वांश्चब्रह्मचारीचतेत्रयः अश्नंतएवसिध्यंतिनैषां
सिद्धिरनश्नतामिति एकादश्यांतुविशेषवचनेनतेषामपि उपवासेऽधिकारोवक्ष्यते समर्हि।

कः स्त्रीणां तु भर्त्रनुज्ञां विना व्रतेष्वनधिकारः नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणमिति मनुवचना
त् भर्त्तुः समानव्रतचारित्वमिति विष्णुवचनात् पत्यनुज्ञया तु पृथगप्यधिकारः यथाह व्यासः पत्नीप
त्यनुज्ञाता व्रतादिष्वधिकारिणीति शंखलिखितावपि कामं भर्त्रनुज्ञाता या व्रतोपवासनियमेज्यादीना
मभ्यासः स्त्रीधर्म इति अभ्यासः पुनःपुनरनुष्ठानं तथा आदित्यपुराणे पत्युरभ्यधिकं नारी नोपवासव्र
तं चरेत् अनायुष्यं द्विजश्रेष्ठ पत्युस्तस्यास्तदुच्यते देवताराधनं कुर्य्यात्कामं वा ब्राह्मणोत्तम नारी यद्य
नुज्ञाता भर्त्रा पित्रा सुतेन वा विफलं तद्भवेत्तस्या यत्करोत्यौर्ध्वदैहिकमिति और्ध्वदैहिकं लोकान्तरोप
योगि व्रतादिकं कात्यायनोपि भार्य्या भर्त्तृमतेनैव व्रतादीनाचरेदिति यत्तु स्कांदे नास्ति स्त्रीणां पृथ
ग्यज्ञो न व्रतं नाप्युपोषणं भर्त्तुः शुश्रूषयैवैता लोकानिष्टान्व्रजन्ति हि धर्मार्थकामसंसिद्धौ नारी भर्त्तुः स
हायिनी यद्देवेभ्यो यच्च पित्रादिकेभ्यः कुर्य्याद्भर्त्ताभ्यर्चनं सत्क्रियां च तस्यार्द्धं वै सा फलं नान्यचित्ता
नारी भुङ्क्ते भर्त्तृशुश्रूषयैवेति तद्भर्त्रनुज्ञाविषयं एवं च पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत् आयुः
सा हरते भर्त्तुर्नरकं चैव गच्छतीति विष्णूक्तेः सामान्यत उपवासनिषेधोप्यननुज्ञाताः या पृथगुपवास
विषयः अथ व्रतभेदाः अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यमकल्मषं एतानि मानसान्याहुर्व्रतानि व्रत
धारिणां एकभक्तं तथा नक्तमुपवासादिकं च यत् तत्सर्वं कायिकं पुंसां व्रतं भवति नान्यथा क्वचित्त्रि
विधमप्युक्तं कायिकं वाचिकं चैव मानसं त्रिविधं स्मृतं यत्तो दानं तपश्चैव वदन्ति च शृणुष्व मे अहिं
सा ब्रह्मचर्यं च तपः कायिकमुच्यते वाचिकं सत्यवचनं भूतद्रोहविसर्जनं मानसं मनसः शान्तिः सर्वप्रा
ण्यलक्षणमिति अथाधिकारिधर्माः भविष्यपुराणे क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः दे
वपूजाग्निहवनं संतोषः स्तेयवर्जनं सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्थितः शौचं पाषण्डादिसंस
र्गविसर्जनं मृदादिना स्नानमाचमनादि च इन्द्रियनिग्रहोवलोकनादिवर्ज्जनं देवलः ब्रह्मचर्यमहिं
सा च सत्यमामिषवर्ज्जनं व्रतेष्वेतानि चत्वारि चरितव्यानि नित्यशः ब्रह्मचर्य्यं स्मरणं कीर्त्तनं केलि
प्रेक्षणं गुह्यभाषणं संकल्पोध्यवसायश्च क्रियानिर्वृत्तिरेव च एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषि
णः इति दक्षोक्ताष्टविधमैथुनत्यागः देवलः स्त्रीणां तु प्रेक्षणात्स्पर्शात्ताभिः संकथनादपि विप
द्यते ब्रह्मचर्य्यं न दारेष्वृतुसंगमादिति परदारेष्विति पाठो निर्णयामृते ऋतुशब्देनात्र षोडश षोडशानि
शाया अर्वाचीनः सावनः सावकाशः कालो विवक्षित इति तत्रव्याख्यानं परस्त्रीणामपि मात्रादि
स्पर्शनेन न दोषः निषेधस्तु सरागविषयः षोडशदिवसात्मकः ऋतुकालः तत्र सर्वथा असंभवे
व्रतदिनेपि ऋतुर्देयः निर्णयामृते कात्यायनः रेतःसेकात्मकं भोगमृतेन्यत्र तु यः स्मृत इति
अतः स्वदाराणां स्पर्शनादिभिरपि ब्रह्मचर्यभङ्गो नास्तीति तत्सिद्धान्तः आमिषं मांसं तथा आमिषं
दृतिपानीयं गोवर्ज्जं क्षीरमामिषं मसूरमामिषं मत्स्यफले जंबीरमामिषं आमिषं शुक्तिकाचूर्णमार
नालं तथामिषमिति पृथ्वीचन्द्रोदये अग्निपुराणे नित्यस्नायी मिताहारो गुरुदेवद्विजार्चकः क्षारं क्षौ
द्रं लवणं मांसानि परिवर्जयेत् क्षारास्तत्रैवोक्तानि तिलमुद्गादृते शिम्ब्यं सस्यं गोधूमकोद्रवौ धान्य
कं देवधान्यं च शमीधान्यं तथैव च सिद्धधान्यं तथा पण्यं मूलं क्षारगणः स्मृतः गोधूमानां तथैव प्र
तिप्रसवः मदनरत्ने अग्निपुराणे व्रीहिषष्टिकमुद्गाश्च कलायाः सतिलाः पयः श्यामाकाश्चैव नीवा
रा गोधूमाद्या व्रते हिताः कूष्माण्डालाबुवार्त्ताकपालिकीज्योत्स्निकास्त्यजेत् चरुभैक्ष्यं शक्तुकणाः शा
कं दधि घृतं पयः श्यामाकाः शालिनीवारा यावकं मूलतंडुलं हविष्यव्रतनक्तादावग्निकार्यादिके
हितं मधुमांसं विहायान्यद्व्रते वा हितमीरितमिति शमीधान्यं माषादि वार्त्ताकः शाकबिल्वक इति
भसः पालकी मध्यदेशे योद्वा इति प्रसिद्धा ज्योत्स्निका कोशातकी मिताक्षरायां गोत्तमः चरुभैक्ष्य

सक्तुकणायावकशाकपयोदधि घृतमूलफलोदानिहवींष्युत्तरोत्तरप्रशस्तानि पयोदधिघृतं गव्यमिति मदन
रत्ने छांदोग्यपरिशिष्टे हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः माषकोद्रवगौरादि सर्वाभावेऽपि वर्जयेत्
भविष्योत्तरे हैमंतिकं सिता स्विन्नं धान्यं मुद्गा यवास्तिलाः कलायकंगुनीवारा वास्तूकं हिलमोचिका
षष्टिकाः कालशाकं च मूलकं केमकेतरत् कंदं सैंधवसामुद्रे गव्ये च दधिसर्पिषी पयोऽनुद्धृतसारं च
पनसाम्रहरीतकी पिप्पलीजीरकं चैव नागरं चैव तिंतिणी कदलीलवलीधात्रीफलान्यगुडमैक्षवं
अतैलपक्वं मुनयो हविष्याणि प्रचक्षते इत्यगस्त्यसंहितायां हैमंतिकायुक्ता नारिकेलफलं चैव
कदलीलवलीतथा आम्रमामलकं चैव पनसं च हरीतकी व्रतांतरप्रशस्तं च हविष्यं मन्वते बुधाः
सितं च असितं चेति ग्रहः कलायो द्विविधः असितो वर्तुलश्च लोके बाटाणा इति महाराष्ट्रभाषायां प्रसि
द्धः कुलत्थ इति स्मृतिकौस्तुभे अग्रहितं गौडेषु हिलमोचिकेति प्रसिद्धः केमुकं गौडेषु केंबुप्रसिद्धः मू
लकं लवली राजामलकीति केचित् लवलीस्थाने दाडिमीति क्वचित्पाठः अतैलपक्वमित्युक्तं हविष्या
णां विशेषणं सर्वभूतभयं व्याघ्रादिसत्वेभ्यो भूतेभ्योऽप्यं व्याधिः प्रतिबंधस्तमः प्रमादो विस्मरणं
गुरुशासनं गुरोराज्ञा मत्याभिधानेष्वपि निमित्तेषु पुनः पुनः कृतागदोष एव ब्रह्मपुराणे व्रतस्थः प्राण
रक्षार्थं कदाचिदुदकं पिबेत् फलमूले यवाः क्षीरं यच्चापिष्टं तथा हविः व्रतमध्ये च रोगार्त्तो वैद्यप्रो
क्तमदोषदं करोति च गुरोर्वाक्यं व्रतस्य स्मरणादपि ब्राह्मणस्याभिलषितं साधयेदविचारयन्
एतान्यष्टौ व्रतस्थानां न व्रतघ्नानि कुत्रचित् पद्मपुराणेऽपि अष्टौ तान्यव्रतघ्नानि आपो मूलं पयो दधि
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधं पयःस्नानादीनामव्रतघ्नत्वं स्त्रीबालाद्यंतनपीडितविषयं
अन्येऽपि धर्मा हरिवंशे प्रदर्शिताः अशास्त्रविहितं शायनमासनं चैव तथाविधं स्वयं प्रक्षालितं चापि
पादयोरनुशासितं अनुशासितं व्रतोपयोगितया कथितं अक्षप्रमातो रोषश्च कलहस्य कृतिस्त
या उपवासाद्भुताद्वापि स्वयोर्ध्वशायनं स्थितिर्यं स्त्रियमित्युपलक्षणं शुक्लमेव सदा वासः प्रशस्तं चेद
संभवे अंतर्वासोऽपरं चैव उपवासे व्रते तथा वशिष्ठः जपहोमोपवासेषु धौतवस्त्रधरो भवेत् अलं
कृतः शुचिर्मौनी श्रद्धावान्विजितेंद्रियः बौधायनः काषायवासाः कुरुते जपहोमपरिग्रहं सर्वं त
द्राक्षसं विद्धि दैवे पित्र्ये च वर्जयेत् याज्ञवल्क्यः परिधाद्बहिः कक्षा निबद्धा ह्यासुरी भवेत् धर्मकर्म
णि विद्वद्भिर्वर्जनीया प्रयत्नतः बहिः कक्षा बहिर्विगतेत्यर्थः गोयानमश्वयानं च कथंचिदपि ना
रुहेत् खरयानं च सततं व्रते चाप्युपसंकरमिति उपसंकरो अस्पृश्यस्पर्शः विष्णुधर्मोत्तरे व्रतेषु
तूपवासेषु पुमान्चाथ सुवासिनी धारयेद्रक्तवस्त्राणि कुसुमानि सितानि च एतच्च मंगलादिव्रत
विषयं पादुकार्थस्तरणैः कार्यः सर्वदा व्रतके सति उपवासेऽपि च विधिरेष एव प्रकीर्त्तितः अंजनं
रोचनं चापि गंधान्सुमनसस्तथा व्रतके चोपवासे च नित्यमेव विवर्जयेत् रोचनं कुंकुमादिना मु
खोज्वलीकरणं दंतकाष्ठं शिरःस्नानमुद्वर्तनमथापि वा विवर्जितं मृदा सर्वं शौचार्थं तु विधीयते
तिलामलफलैर्नित्यं श्रीफलैश्च विधीयते प्रक्षालनं तु शिरसः सदाम्भोभिर्मिश्रितैर्जलैः शिरसो
ऽभ्यंजनं सौम्ये नैव मंत्रप्रशस्यते न पादयोर्न गात्रस्य स्नेहेनेति स्थितिः स्मृतेः इति अत्र गंधादिवर्जना
भिधानं पुण्यपक्षव्रतविषयं व्रतांतरे तु सभर्तृकाया न दोषः दंतधावनपुष्पादि व्रते चास्या न दुष्यती
ति व्यासवचनात् अंजनं च सतांबूलं सिंदूरं रक्तवाससी बिभृयात्सोपवासापि अवैधव्यकरं परमि
ति भविष्यपुराणाच्च गंधालंकारवस्त्राणि पुष्पमाल्यानुलेपनं उपवासे न दुष्यंति दंतधावन
वर्जनमिति वृद्धशातातपवचनाच्च गंधः सौरभं अनुलेपनस्य पृथगुपादानात् उपवासे न तथा
श्राद्धेनखादेदंतधावनं दंतानां काष्ठसंयोगे दहत्यासप्तमं कुलं अनेन काष्ठेन दंतधावनं निषिद्धं

नतुम्लोष्टपत्रादिना पैठीनसिः अलाभेवानिषिद्धेवाकाष्ठानांदंतधावने पर्णादिनाविशुद्धेनजिह्वो
ल्लेखः सदैवचेति अलाभेदंतकाष्ठानांनिषिद्धायांतिथावपि अपांद्वादशगंडूषैर्विदध्याद्दंतधावनं
स्मृत्यर्थसारेपि पर्णोदकेनांगुल्यावादंतान्धावयेत् प्रदेशिनीवर्जमध्यमानामिकांगुष्ठैर्दंतधावनं
भवत्यपि दंतधावनेप्रायश्चित्तमुक्तं विष्णुधर्मोत्तरे श्राद्धोपवासदिवसेखादित्वादंतधावनं गाय-
त्र्याशतशःपूतमंबुप्राश्यविशुद्ध्यतीति कौर्मे बहिर्ग्रामात्यजान्सूतिंपतितंचरजस्वलां नस्पृशेन्नाभि
भाषेतनेक्षेतव्रतवासरे उपवासस्वरूपंविष्णुधर्मोत्तरे उपावृत्तस्यपापेभ्योयस्तुवासोगुणैः सह
उपवासःसविज्ञेयःसर्वभोगविवर्जितः निषिद्धानिवृत्तमंतराद विहितस्यानुष्ठानमिंद्रियाणा
मनुग्रहः निषिद्धसेवनंजैह्म्यंवर्ज्जनीयंप्रयत्नतः हारीतः पतितपाखंडिनास्तिकादिसंभाषणा
नृतालीलादिकमुपवासदिनेवर्जयेदिति विष्णुपुराणेपि तस्मात्पाखंडिभिःपापैरालापस्पर्शनंत्य
जेत् विशेषतःक्रियाकालेयज्ञादौचापिदीक्षितइति पाखंडादिस्पर्शनविषयेपिप्रायश्चित्तं विष्णु
पुराणएवोक्तं स्पर्शनेचनरःस्नात्वाशुचिरादित्यदर्शनात् संभाष्यतान्शुचिपदंतर्पयेदच्युतंबुधः
तेषामालोकनात्सम्यक्पश्येतमतिमान्नृपइतिशुचिषदं शुद्धिपदं विष्णुधर्मोत्तरे असंभाष्यसमाभा-
ष्यतुलस्यनामिकादलं आमलक्याःफलंचापिपारणंप्राश्यशुद्ध्यतीति गुणैःसहवासइत्युक्तं तत्रगु
णाविष्णुधर्मोत्तरेउक्ताः यथाज्ञजपजपनंध्यानंतत्कथाश्रवणादिकं तदर्चनंचतन्नामकीर्तनश्रव
णादयः उपवासकृतामेतेगुणाःप्रोक्तामहर्षिभिरिति तच्छब्देनात्राव्यवहितपूर्वोक्तत्वाद्विष्णुरेवो
च्यते उपवासकृतांनियमाउच्यते उपवासव्रतीदंतधावनंहिंसामनृतंद्यूतंचौर्यमसकृज्जलपानंस
तांबूलभक्षणं स्त्रीसंयोगंदिवास्वापंमांसंचपरिवर्जयेत् विष्णुधर्मोत्तरे असकृज्जलपानंचदिवा
स्वापंचमैथुनं तांबूलचर्वणंमांसंवर्जयेद्व्रतवासरइति यत्तुकैश्चिदुक्तंमांसनिषेधःपारणान्तेपा
रणांतंव्रतंज्ञेयमित्युक्तेः नतुप्रधानदिनेप्रसक्त्यभावात् इतितन्न तांबूलचर्वणमांसभक्षणनिषे
धस्यैकवाक्योपात्तत्वाद्व्रतदिनएवन्याय्यत्वात् रागप्रसक्तेःसत्वात् वर्जयेत्पारणेमांसमितिपा
रणादिनेदृष्टयाग्निषेधस्यवैयर्थ्यापत्तेश्च तांबूलभक्षणेस्त्रीसंभोगेमांसनिषेवणे व्रतलोपोभवेत्
कृच्छ्रवद्वर्जितवर्जनमिति निर्णयामृतधृतव्रतलोपप्रायश्चित्तप्रकरणपठितपैठीनसिवाक्यात्तां
बूलभक्षणादावेकप्रायश्चित्ताम्नानाच्च अशक्तौतु अत्ययेचांबुपानेचनोपवासःप्रणश्यतीति
अत्ययेप्राणात्यये हेमाद्रौ प्रवृत्तमन्यथाकुर्याद्यदिमोहात्कथंचन यतस्तदन्यथाभूतंततएव
समापयेदिति भवंतिद्विष्टयातस्यक्रियाःसर्वाह्यसंशय इत्यधर्मरत्नसमुद्रकेभिहितमत्राप्यु-
क्तं आचमननिमित्तान्याह यमः उत्तीर्योदकमाचामेदवतीर्यतथैवचेति बृहस्पतिः अधोवा
युसमुत्सर्गेआक्रंदेक्रोधसंभवे मार्जारमूषकस्पर्शेप्रहासेनृतभाषणे निमित्तेष्वेषुसर्वेषुक
र्मकुर्वन्नपःस्पृशेदिति अथद्विराचमननिमित्तानि याज्ञवल्क्यः स्नात्वापीत्वाक्षुतेसुप्ते भु-
क्त्वारथ्योपसर्पणे आचांतःपुनराचामेद्वासोविपरिधायचेति आचमनासंभवेतु कुर्वीता
लंभनंवापिदक्षिणश्रवणस्यत्विति मार्कंडेयोक्तदक्षिणकर्णालंभनंबोध्यम् अथहस्तती
र्थानिहेमाद्रौहारीतः अंगुष्ठस्योत्तरतोरेखाब्राह्मंतीर्थंकनिष्ठायाः पश्चात्प्राजापत्यमग्रेसर्वां
गुलीनांदैवमंगुष्ठप्रदेशिन्योरंतरापित्र्यंमध्यआग्नेयं प्रतिग्रहमाग्नेयेनगृह्णीयादित्यभिहितं
प्राक् छागलेयः हस्तमध्येवह्नितीर्थंदक्षिणग्रहणेतुतत् ब्रह्मपुराणे मूलेरेखास्त्वंगुष्ठ
मणिबंधेषुमध्यमं प्राजापत्यंमहातीर्थंविप्रस्तेनाचमेत्सदा यनायुर्दारवेवातुसोमतीर्थंत
मध्यमं लाजादिहवनंतेनकर्तव्यंवपनंतथा वपनंब्रीह्यादिनिर्वापः दधिप्राशनेसोमतीर्थं

नकर्त्तव्यं अस्नातोधिकारीभवति दैवेपित्र्येचकर्मणि पवित्राणांतथाजप्ये दानेचविधिनोदिते
शाकटायनः दानमाचमनंहोमंभोजनंदेवतार्चनं प्रौढपादोनकुर्वीतस्वाध्यायंपितृतर्पणम्
आसनेरूढपादस्तुजान्वोर्वाजंघयोस्तथा कृतावसक्थिकोयस्तुप्रौढपादःसउच्यते आपस्तंबः
तस्मादोमित्युदाहृत्ययज्ञदानतपःक्रियाः प्रवर्त्तन्तेविधानोक्ताःसततंब्रह्मवादिनां त्रिमात्रस्तुप्र
योक्तव्यःकर्मारंभेषुसर्वशः तिस्रःसार्द्धास्तुकर्त्तव्यामात्रास्तत्त्वार्थचिंतकैः यमः पुण्याहवाचनं
दैवब्राह्मणस्यविधीयते एतदेवनिरोंकारंकुर्य्यात्क्षत्रियवैश्ययोः मार्कंडेयपुराणे सूर्योदयंवि
नानैवस्नानदानादिकाक्रियाः अग्निविहरणंचैवकृत्स्नाभावश्चलक्ष्यते सूर्योदयशब्देनउषःकालो
लक्ष्यते तेनरात्रौनकुर्य्यादितितात्पर्य्यं दक्षः दैवकार्य्याणिपूर्वाह्णेमनुष्याणांतुमध्यमे पितॄणा
मपराह्णेतुकार्य्याणीतिविनिश्चयः अंगिराः संध्ययोरुभयोर्जप्येभोजनेदंतधावने पितृकार्य्येच
दैवेचतथामूत्रपुरीषयोः गुरूणांसन्निधौदानेयोगेचैवविशेषतः एषुमौनंसमातिष्ठन्स्वर्गंप्राप्नो
तिमानवः व्रतांगलोपप्रायश्चित्तानित्वेकादशीप्रकरणेवक्ष्यंते गृहीतव्रतत्यागेदोषउक्तोमदनर
त्नेछागलेन पूर्वंव्रतंगृहीत्वायोनाचरेत्काममोहितः जीवन्भवतिचंडालोमृतःश्वाचाभिजायते
इतिव्रतत्यागेप्रायश्चित्तमप्युक्तं षष्ठीचंद्रोदयेगरुडे क्रोधात्प्रमादाल्लोभाद्वाव्रतभंगोभवेद्यदि
दिनत्रयंनभुंजीतमुंडनंशिरसोथवेति प्रायश्चित्तानंतरमुपक्रांतानुष्ठानंकार्य्यं प्रायश्चित्तमिदं
कृत्वापुनरेवव्रतीभवेत् इतिवायुपुराणोक्तेः अन्योपिविशेषस्तत्रैव दानंप्रतिग्रहोहोमोभो
जनंबलिरेवच सांगुष्ठेनसदाकार्य्यमसुरेभ्योऽन्यथाभवेत् एतान्येवतुकर्माणिदानादीनिवि
शेषतः अंतर्जानुविधेयानितद्वदाचमनंनृप याज्ञवल्क्यः शौचेपित्र्यासुरान्मंत्रांस्तथाद्येवा
भिचारकान् व्याहृत्यालभ्यचात्मानमुपस्पृश्यान्यदाचरेत् स्त्रीव्रतेविशेषोहरिवंशे स्नात्वा
स्त्रीप्रातरुत्थायपतिंविज्ञापयेत्सती तथा गृहीत्वोडुंबरंपात्रंसक्षुणंसाक्षतंतथा गोशृंगंदक्षि
णंसिंच्यप्रगृह्णीयाच्चतज्जलं औदुंबरंताम्रमयंसक्षुणंसाक्षतंचयत् ततोभर्तुःसतीदद्यात्स्ना
तस्यप्रयतस्यच आत्मनश्चाभिषेक्तव्यंभर्तुःशिरसितज्जलं त्रैलोक्येसर्वतीर्थेषुस्नानमेतदुदाहृ
तं उपवासेषुकर्त्तव्यमेतद्धिव्रतकस्यचेति अथसर्वव्रतानामारंभेसंकल्पविधिश्चोक्तोमहाभा
रते गृहीत्वौडुंबरंपात्रंवारिपूर्णमुदङ्मुखः उपवासंतुगृह्णीयाद्यद्यासंकल्पयेद्बुधः देवलः
अभुक्ताप्रातराहारंस्नात्वाचम्यसमाहितः सूर्य्यायदेवताभ्यश्चनिवेद्यव्रतमाचरेत् अत्रप्रात
र्व्रतमाचरेदितिसंबंधः प्रधानक्रियान्वयस्याभ्यवहितत्वादितिवीरमित्रोदयः व्रतेनिशामुखे
ग्राह्यंवहिस्तारकदर्शनादितिविस्तरेणोक्तम् प्रकरणात्प्रायश्चित्तविषयं अन्यव्रतेष्वपिपूर्व
दिनेव्रतग्रहणंश्रूयते तत्रपूर्वदिनएवव्रतग्रहणं अथव्रतारंभकालःमदनरत्नेगार्ग्यः अस्त
गेदगुरौशुक्रेबालेवृद्धेमलिम्लुचे उद्यापनमुपारंभंव्रतानांनैवकारयेत् रत्नमालायां सौमसौ
म्यगुरुशुक्रवासराःसर्वकर्मसु भवंतिसिद्धिदाःभानुभौमयोर्निवासरेषुच प्रोक्तमेवखलुकर्मसि
द्ध्यति तथा विष्कुंभसंज्ञादहृयेचयोगास्तेषामनिष्टःखलुचाद्यपादः सवैधृतिस्तुव्यतीपातना
मासर्वोप्यनिष्टःपरिघस्यचार्धं तिस्रस्तुयोगेप्रथमेसवज्रेव्याघातसंज्ञेनवपंचशूले गंडेतिगंडे
चषडेवनाड्यःशुभेषुकार्य्येषुविवर्जनीयाः संग्रहे कृष्णेत्र्यादिदशायोरूर्ध्वंसप्तमीभूतयोरथः शु
क्लेवेदशयोःरूर्ध्वंमदाप्राग्वसुपूर्णयोः श्रीपतिः नसिद्धिमायातिकृतंचविष्ट्यांविषाशिघातादि
कमत्रसिद्धं व्यवहारसमुच्चये दशम्यामष्टम्यांप्रथमघटिकापंचकपरंहरिद्धेःसप्तम्यांद्विद
शघटिकांतेत्रिघटिकं तृतीयाराकायांस्वयमघटिकाभ्यःपरभवं शुभंविष्टेःपुच्छंप्रथितिथिचत

र्थ्यास्तु विरमे तत्रैव सर्पिणीन्तु सितेपक्षे हस्ते चैव तु वृश्चिके सर्पिण्यास्तु मुखं त्याज्यं वृश्चिकायाः पुच्छ
मेव च माधवीये वृष्टिर्यदाह निनिथेस्यपरार्धजाता पूर्वार्धजा निशि तथाशुभदा च पुच्छे ब्रह्मयामले
दिनभद्रा यदा रात्रौ रात्रिभद्रा यदा दिवा न त्याज्या शुभकार्येषु प्राहुरेवं पुरातनाः टोडरानन्दे देवीपुरा
णे व्रते च तीर्थेऽध्ययने श्राद्धेऽपि च विशेषतः परान्नभोजनाद्देवि यस्यान्नं तस्य तत्फलं प्रतिमास्वरूपं
मदनरत्ने भविष्ये अनुक्तद्रव्या तत्संख्या देवताप्रतिमां नृप सौवर्णी राजती ताम्री वृक्षजा मार्त्ति
की तथा चित्रजापि स्थले खोत्या निजवित्तानुसारतः आमाषात्पलपर्य्यन्तं कर्त्तव्या शाठ्यवर्जिता
निजवित्तानुसारत इत्यपि पाठः अथ कुशपवित्रं कात्यायनः अनन्तर्गर्भकं साग्रं कौशं द्विदलमेव
च प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् अथ समिधः पालाशाश्वत्थखदिररोहितोडुम्बरोद्भवाः
तदभावे कंटकवर्जं सर्ववनस्पतीनां समिधो ग्राह्याः तस्याः मानं कर्मप्रदीपे नांगुलादधिका का
र्या समित्स्थूलतया क्वचित् न वियुक्तात्वचा चैव न सकीटा न पाटिता प्रादेशान्नाधिका न्यूना न त
था स्याद्विशाखिका न सपर्ण्णा समित्कार्य्या होमकर्म्मणि जानता इति कात्यायनः योनार्चिषि
जुहोत्यग्नौ व्यंगारिणि च पावके मंदाग्निरामयावी च दरिद्रश्चोपजायते तस्मात्समिद्धे होतव्यं नास
मिद्धे कथंचन न कुर्यादग्निधमनं कदाचिद्व्यजनादिना मुखेनैव धमेदग्निं मुखादग्निरजायत त
नैव ब्राह्मे आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते मंत्रस्य देवतायाश्च प्रजापतिरिति स्थितिः हो
माहुतिसंख्यामानं मात्स्ये अनुक्तसंख्या यत्र स्याच्छतमष्टोत्तरं स्मृतं अष्टाविंशतिरष्टौ वा यथा
शक्ति विधीयत इति मदनरत्ने ब्राह्मे यथोक्तवस्त्वसंपत्तौ ग्राह्यं तदनुकारियत् यवानामिव गो
धूमा व्रीहीणामिव शालय इति हेमाद्रौ दध्यभावे पयः कार्य्यं मध्वभावे तथा गुडः घृतं होमे ग
व्यमुक्तं तदभावे माहिषमाजं वा तैलं सार्षपं कौसुंभं वा मंत्रस्य देवताया अविधाने प्रजापतिर्देव
ता समस्तव्याहृतिमंत्रः स्मृतं तेऽपि न व्याहृत्या समं हुतमिति गारुडे प्रणवादि नमोऽन्तं च चतुर्थ्यन्तं च
सप्तम देवतायाः स्वकं नाम मूलमंत्रः प्रकीर्त्तितः व्रतोद्यापनानुक्तौ तु पृथ्वीचंद्रोदये नंदिपुराणे कु
र्यादुद्यापनं तस्य समाप्तौ यदुदीरितं उद्यापनं विना यत्तु तद्व्रतं निष्फलं भवेत् यदि चोद्यापनं नोक्तं
व्रतानुगुणतश्चरेत् वित्तानुसारतो दद्यादनुक्तोद्यापने व्रते गाश्चैव कांचनं दद्याद्व्रतस्य परिपूर्त्तये
अशक्तौ तु नारदीये सर्वेषामप्यलाभे तु यथोक्तकरणं विना विप्रवाक्यस्मृतं शुद्धं व्रतस्य परिपूर्त्त
ये तृष्या विप्रवचो यस्तु गृह्णाति मनुजः शुभं अदत्वा दक्षिणां पापः स याति नरकं ध्रुवं अथ दा
नविभागनिर्णयः हेमाद्रौ अंगिराः बहुभ्यो न प्रदेयानि गोगृहं शयनं स्त्रियः विभक्तदक्षिणा हि
ता दातारं पातयंति हि एकाऽपकस्य दातव्या न बहुभ्यः कथंचन सा तु विक्रयमापन्ना दहत्यासप्त
मं कुलं विक्रेतुरेवैतद्दोषप्रदर्शनं न दातुरिति कात्यायनेनापि कन्या शय्या गृहं चैकं देयं यदा
स्त्रियादिकं तदेकस्मै प्रदातव्यं न बहुभ्यः कथंचनेति वैजवापः पावनेत्रोद्भवं यस्माद्जनेपि त्व
लभं अमंगलं तच्चात्तेन देवकार्येषु वर्जयेत् कलशलक्षणं तद्देवताश्चोक्ता देवीपुराणे पंचा
शांगुलवैपुल्यमुत्सेधः षोडशांगुलः कलशानां प्रमाणं तु मुखमष्टांगुलं भवेदिति विष्णुधर्मो
त्तरे च हेमराजतताम्राश्च मृण्मया लक्षणान्विताः यात्रोद्वाहप्रतिष्ठादौ कुंभाः स्युरभिषेचने त
था च शान्तिः घृतेन तोयेन सिताक्षकाननोज्ज्वलाः सरित्सरःखातजेन तडागेन जलेन वा वापी
कूपोत्पदिव्येन सामुद्रेण स्रावावहाः कलशाः सर्वमंगल्याः सर्वकिल्बिषनाशनाः अभिषेके
सदा ग्राह्या कलशाः सुदृढाः शुभाः यात्राविवाहादिकाले प्रतिष्ठायज्ञकर्मणि योजनीया विशे
षेण सर्वकामप्रसाधकाः तथा कलशस्य मुखे ब्रह्मा ग्रीवायां च महेश्वरः मूले च संस्थितो विष्णुः

मध्ये मातृगणाः स्मृताः शेषास्तु देवताः सर्वा वेष्टयंति चतुर्दिशम् पृथिव्यां यानि तीर्थानि कलशे तानि व
संति हि ब्रह्मा देवाश्च शांतिश्च पुष्टिश्च मतिरेव च ऋग्वेदश्च यजुर्वेदः सामवेदस्तथैव च अथर्ववेदस
हिताः सर्वे कलशमाश्रिता इति अथ पंचपल्लवाः ब्रह्मांडपुराणे अश्वत्थोदुंबरप्लक्षचूतन्यग्रोध
पल्लवाः अथ पंचरत्नानि कालिकापुराणे कनकं कुलिशं नीलं पद्मरागं च मौक्तिकं एतानि पंच
रत्नानि शास्त्रे दृष्टानि सूरिभिः कुलिशं हीरः आदित्यपुराणे सुवर्णं रजतं मुक्ता राजावर्तः प्रवा
लकं रत्नपंचकमाख्यातमिति अभावे सर्वरत्नानां हेमं सर्वत्र योजयेत् तथा मुक्ताफलं हिरण्यं
च वैदूर्यं पद्मरागकं पुष्परागं च गोमेदं नीलं गारुत्मतं तथा प्रवालयुक्तान्युक्तानि महारत्नानि
वै नव मदनरत्ने तु हिरण्यस्थाने हीरकमिति पाठांतरं अथ सौभाग्याष्टकं मत्स्यपुराणे इ
क्षवस्तरुराजं च निष्पावा जीरधान्यकं विकारवच्च गोक्षीरं कुसुंभं कुसुमं तथा लवणं चाष्टमं तत्र सौ
भाग्याष्टकमुच्यते मिताक्षरायां पराशरः गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकं पंचगव्य
मिति प्रोक्तं पवित्रं कायशोधनं गोमूत्रं ताम्रवर्णायाः श्वेतायास्त्वथ गोमयं पयः कांचनवर्णाया
नीलायास्तु यवेद्दधि घृतं वै कृष्णवर्णायाः सर्वं कापिलमेव वा अलाभे सर्ववर्णायाः पंचगव्येष्वयं
विधिः गोमूत्रं माषकास्त्वष्टौ गोमयस्य तु षोडश क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्त्तिताः गो
मूत्रवद्घृतस्यापि तदर्थं तु कुशोदकं इति नृसिंहपुराणात् गोशकृद्द्विगुणं मूत्रं सर्पिर्दद्याच्चतुर्गु
णं क्षीरमष्टगुणं प्रोक्तं पंचगव्ये तथा दधि वीरमित्रोदये स्कांदे ताम्राकृष्णाश्वेतकृष्णनीलानाम
होरकवो गोमूत्रं गोमयं क्षीरं दधि सर्पिश्च क्रमात् विष्णुवह्नीदुवाय्वर्कदेवत्यानि यथाक्रमं वि
ध्येतानि कुशोदं च पितृराजाधिदेवतान् प्रोक्ताभावे ह्यथैतानि कपिलायाः प्रकल्पयेत् गोमूत्र
भागस्तस्यार्द्धं शकृत् क्षीरस्य च त्रयं द्वयं दध्नो घृतस्यैकमेकश्च कुशवारिणः गायत्र्या चैव गोमूत्रं गंध
द्वारेति गोमयं आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि तेजोसि शुक्रमित्याज्यं देवस्य त्वा कुशो
दकं एभिस्तु पंचभिर्मंत्रैः पंचगव्यं प्रचक्षते एतदेव महापुण्यं ब्रह्मकूर्चमिति स्मृतं इति पंचगव्य
विधिः पंचामृतं शिवधर्मे पंचामृतं दधि क्षीरं सिता मधु घृतं तथेति अथ सप्तधान्यानि ग्रंथांतरे
व्रीहयो यवगोधूमा मुद्गा माषाः प्रियंगवः तिलाश्च सप्तमाः प्रोक्ता धान्यसप्तकमुच्यते तथा च यव
गोधूमधान्यानि तिलाः कंगुस्तथैव च श्यामाकं देवधान्यं च सप्तधान्यमुदाहृतं अष्टादश धान्या
नि मार्कंडेयपुराणे वीरमित्रोदये व्रीहियवगोधूमकंगुसर्षपप्रियंगूदारकोरदूषसतीनकमाष
मुद्गमसूरनिष्पावकुलत्थाढकीचीणकषणा ह्येतानि व्रीहयः षष्टिकाः उदारो देवधान्यं को
रदूषः कोद्रवः सतीनको वर्त्तुलकलायः निष्पावो वल्लः मदनरत्ने स्कंदपुराणेन यवगोधूमधान्या
नि तिलाः कंगुकुलत्थकाः माषमुद्गमसूराश्च निष्पावाः श्यामसर्षपाः गवेधुकाश्च नीवाराः आ
ढक्योऽथ सतीनकाः चणकाश्चीणकाश्चैव धान्यान्यष्टादशैव तु श्यामः श्यामाकः सप्तधान्यं वः
भविष्यपुराणे सुवर्णं रजतं ताम्रमारकूटं तथैव च लोहं त्रपु तथा सीसं धातवः सप्त कीर्त्तिताः अ
थ सुवर्णादिमानं पंचगुंजात्मको माषः ते सुवर्णस्तु षोडश पलं सुवर्णाश्चत्वारः पंच वापि प्रकी
र्त्तितम् धान्यमाने च पले चकुडवप्रस्थआढकोद्रोणाश्च पवच धान्यमानेषु बोद्धव्याः क्रमशो मी।
चतुर्गुणाः षोडशद्रोणा खारी भवतीति दिक् सर्वधातुगणो मत्स्यपुराणे तालकं च शिला वज्र
मंजनं श्याममेव च काशीकांसीसमाक्षीकं गैरिकं चादितः क्रमात् तालकं हरिताल शिला म
नःशिला वज्रं वज्राभ्रकं अप्रस्तारं कठोरांगं गुरुकं तूलसन्निभं पत्रशः क्षायते वह्नौ नैवोच्छूनं भवे
दपि सदाकरसमुद्भूतं वज्रं निप्रथितं च कात् श्याममंजनं काशीसोगाष्ट्रमृत्तिका कासीकांस्यमा।

त्रिकं माक्षीकं तत्रैव आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा यवाः सिद्धार्थकाश्चेति ह्यर्घोऽष्टां-
गः प्रकीर्त्तितः पंचरात्रे रजांसि पंचवर्णानि मंडलार्थं तु कारयेत् शालितंडुलजं शुक्लं रक्तं कौसुंभसौंद-
रं हरितालोद्भवं पीतं कृष्णं दग्धयवोद्भवं रजांसि पंचवर्णानि हरितं पीतकृष्णयुगिति कौतुकाख्यानि
भविष्ये दूर्वायवांकुराश्चैव चूतनाम्रतपल्लवाः हरिद्राद्वयसिद्धार्थाशिखिपत्रोरगत्वचः कंकणौष-
धयश्चैव कौतुकाख्योद्भवाः स्मृताः इति मत्स्यपुराणे गजाश्वरथ्यवल्मीकसंगमाद्ध्रदगोकुलात् राज-
द्वारप्रदेशाच्च मृदमानीय निक्षिपेत् चत्वरेतिपाठः इति सप्तमृत्तिकाः छंदोगपरिशिष्टे कुष्ठं मांसी
हरिद्रे द्वे मुराशैलेयचंदनं वचाचंपकमुस्ता च सर्वौषध्यो दश स्मृताः इति सर्वौषध्यः सर्वबीजानि
देवीपुराणे यवगोधूममुद्गाश्च शालिषाष्टकमाढकं तिलामाषाः प्रशातीच श्यामाकाः शावबाल-
काः आढकं आढकीफलं दाक्षिणात्यभाषायां तूरीति प्रसिद्धं प्रसातीनीवारः आशवं आश्रुधा-
न्यफलं वालकः कंगुः मधुरत्रयं कात्यायनः आज्यं क्षीरं मधु तथा मधुरत्रयमुच्यते अथ यक्षकर्दमः
गरुडपुराणे कर्पूरमगुरुश्चैव कस्तूरी चंदनं तथा कंकोलं च भवेदेभिः पंचभिर्यक्षकर्दमः सर्वगंधं
यथा ब्रह्मपरिशिष्टे कर्पूरं चंदनं दर्पः कुंकुमं च चतुःसमं सर्वगंधमिति ख्यातं समस्तसुरवल्लभम्
अथ गंधाष्टकं शक्तेर्यथा चंदनागुरुकर्पूरचोरकुंकुमरोचनाः जटामांसीकपियुता शक्तेर्गंधाष्ट-
कं विदुः चोरः कुशटी कपिगठियाना गौतमीये चंदनागुरुह्रीवेरकुष्ठकुंकुमरोचनाः जटामां-
सीमुरमिति विष्णोर्गंधाष्टकं विदुः विष्णोर्गंधाष्टकं ह्रीवेरं वाला शैवं गंधाष्टकं शारदायां चंदना-
गुरुकर्पूरतमालजलकुंकुमं कुसीतकुष्ठसंयुक्तं शैवं गंधाष्टकं विदुः तमालं तमालपत्रं जलं वा-
ला कुसीतं रक्तचंदनं गणेशस्य संहितायां स्वरूपं चंदनं चोरं रोचनागुरुमेव च मदं मृगद्वयोद्भूतं क-
स्तूरीचंद्रसंयुतं गंधाष्टकं विनिर्दिष्टं गणेशस्य महात्मनः भविष्यपुराणे अगुरुः शिल्हकं मुस्ता चंदनं
तृणं तथा समभागं च कर्त्तव्यं धूपोयममृताह्वयः यथा कर्पूरं चंदनं मांसी त्वक्पत्रैलालवंगकं अगु-
रु शिल्हकं धूपं प्राजापत्यं प्रचक्षते शिल्हकं शिलारस इति निर्घंटः दशांगधूपः षड्भागकुष्ठं द्विगु-
णं गुडस्य लाक्षा त्रयं पंचनखस्य भागाः हरीतकी सर्जरसः समांसी भागैकमेकं त्रिलवं शिलाजं घन-
स्य चत्वारि पुरस्य चैको धूपो दशांगो गदितो मुनींद्रैः अथ व्रते सूतकादिनिर्णयः तत्र शावसूत्याशौ-
चयोः सर्वस्मार्त्तकर्मनिवृत्तिः सूतके च समुत्पन्ने त्वरकर्मणि मैथुने धूमोद्गारे तथा जातौ नित्यकर्म-
णि संत्यजेत् द्रव्यभक्ते त्वजीर्णे च नैव भुक्त्वापि किंचन कर्म कुर्यान्नरो नित्यं सूतके मृतके तथेति
कालिकापुराणात् गौडास्तु तत्राशौचादावपि नामाहुः पठंति च जातर्द्धे सूतके जाते नित्यकर्म न चा-
चरेत् नैमित्तिकं च तदयः स्ववरक्तो न चाचरेदिति हेमाद्रौ पाद्मे गर्भिणी सूतिकादिश्च कुमारी वाथ्य
रोगिणी यदाशुद्धा तदान्येन कारयेत् प्रयता स्वयमिति पुंसोऽप्येवं विधिः लिंगस्याविवक्षितत्वात् नै-
यमिनव्रते यत्पूजादिकं तदन्येन कारयेत् शारीरनियमान् स्वयं कुर्यादिति शुद्धितत्वे विष्णुः बहुका-
लिकसंकल्पो गृहीतश्च पुरा यदि सूतके मृतके चैव व्रतं तन्नैव दुष्यति यत्तु काम्यपरं नित्यं त्वनारब्ध-
मपि कार्यमिति गौडाः मदनरत्ने पूर्वसंकल्पितं यच्च व्रतं सुनियतव्रतैः तत्कर्तव्यं नरैः श्राद्धदानार्चन-
विवर्जितं माधवीये कौर्मे काम्योपवासे प्रक्रांते त्वंतरा मृतसूतके तत्र काम्यव्रतं कुर्याद्दानार्चन-
विवर्जितमिति मत्स्यव्रतः रजस्वलाया व्रतविधिमाह प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् न त-
त्रापि व्रतस्य स्यादुपरोधः कदाचन नैनत्यातिनिधिना कारयेदित्येतदपरं तदुक्तं मदनरत्ने मात्स्ये अंतरा
तु रजोयोगे पूजामन्येन कारयेत् इति प्रतिनिधयश्च निर्णयामृते पैठीनसिनोक्ताः भार्या पत्युर्व्रतं
कुर्याद्भार्यायाश्च पतिर्व्रतं असामर्थ्ये परस्ताभ्यां व्रतभंगो न जायते कालतत्वविवेचने ब्रह्मवैवर्त्ते

उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत् तावद्धनादिकं दद्याद्यद्भक्ताद्द्विगुणं भवेत् सहस्रसंमितां देवीं
जपेद्वा प्राणसंयमान् कुर्याद्द्वादशसंख्याकान्यथाशक्ति व्रते नरः इति राजन्यस्य क्षत्रियाद्यर्थमेकादश्या
मुपोषितः पुरोधाः क्षत्रियस्यार्द्धफलं प्राप्नोति निश्चितं पितामहादीनुद्दिश्यैकादश्यामुपोषिते सुते
न तत्फलं विप्राः समग्रं समवाप्नुयुः कर्त्ता दशगुणं पुण्यं प्राप्नोत्यत्र न संशयः यमुद्दिश्य कृतं सोपि संपूर्ण
फलभाग्भवेत् स्कांदेपि पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा एषामभाव एवान्यं ब्राह्मणं विनियो
जयेत् तथा भ्रातरं भगिनीं शिष्यं कारयेद्ब्राह्मणादिभिरिति हेमाद्रौ वाराहपुराणे असामर्थ्ये शरी
रस्य व्रते तु समुपस्थिते कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितं भगिनीं भ्रातरं वापि व्रतमस्य न लुप्यते
माधवीये स्मृत्यंतरेपि पितृमातृभ्रातृशिष्यश्वश्रूगुर्वादिभूभुजां अदृष्टार्थमुपोषित्वा स्वयं तत्फल
भाग्भवेत् नारी च पतिमुद्दिश्यैकादश्यामुपोषिता पुण्यं कृतशतं प्राहुर्मुनयः पारदर्शिनः का
त्यायनः पितृमातृभ्रातृपतिगुर्वर्थे च विशेषतः उपवासं प्रकुर्वाणः पुण्यं शतगुणं लभेत् दक्षिणा
नात्र दातव्या शुश्रूषा विहिता हि सा मदनरत्ने प्रभासखंडे भर्त्ता पुत्रः पुरोधाश्च भ्राता पत्नी सखापि च
यात्रायां धर्मकार्येषु कर्त्तव्याः प्रतिहस्तकाः एभिः कृतं महादेवि स्वयमेव कृतं भवेत् स्वयं कर्त्तुमशक्त
श्चेत्कारयेत पुरोधसा दत्तस्तेनो स्वयं होमे फलं यत्स्यात्तदन्येन जायते ऋत्विक्पुत्रो गुरुर्भ्राता भा
गिनेयोथ विट्पतिः एभिरेव कृतं यत्तु तत्कृतं स्वयमेव तु शूद्रस्य ब्राह्मणः प्रतिनिधिरुक्तः जपस्तपस्ती
र्थसेवा प्रव्रज्या मंत्रसाधनं विप्रैः संपादितं यस्य संपन्नं तस्य तत्फलमिति मरीचिवचनात् यत्तु निर्णय
सिंधावुक्तं प्रव्रज्यादीनां शूद्रे संभावान्नेदं वचनं ब्राह्मणस्य शूद्रप्रतिनिधित्वपरं किंतु संपूर्णतावा
चनपरमिति तन्न प्रव्रज्यामात्रस्य शूद्रे संभवेपि जपादीनां संभवेन तद्विषये संकोचायोगात् एत
द्वचनस्य प्रतिनिधिप्रकरणे पाठेन संपूर्णतावाचनपरत्वायोगाच्च हेमाद्रौ कात्यायनः पुरोधास्तु
क्षत्रियो वा द्वयोः सममितीरितं उपवासफले ताभ्यां समग्रं समवाप्यते वायुपुराणे उपवासे त्वसक्त
स्त्वाहिताग्निरथापि वा पुत्रान्वा कारयेदाद्यं ब्राह्मणानपि कारयेत् अथवा विप्रमुख्येभ्यो दानं दद्या
त्स्वशक्तितः उपवासफलेनैनं समग्रं समवाप्यते तत्र भोजनदोषोपि तत्क्षणादेव नश्यति इत्यदानो
पवासस्य फलं प्राप्नोत्यसंशयं कर्त्ता न तदाप्नोति नात्र कार्या विचारणा तृणया वान्यमुद्दिश्यैकाद
श्यामुपोषितः यमुद्दिश्य कृतं विप्रास्तस्य पूर्णं कृतं भवेत् अत्र विशेषमाह त्रिकांडमंडनः काम्ये
प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः काम्येप्युपक्रमादूर्ध्वं केचित्प्रतिनिधिं विदुः तस्मात्प्रतिनिधि
मंत्रस्वामिदेवाग्निकर्मसु स्वदेशकालयोर्नास्ति नारणेरग्निरेव सा नापि प्रतिनियातव्यं निषिद्धं वा
स्तु क्वचित् हरिकेशसूत्रेपि न स्वामित्वस्याः भार्यायाः पुत्रस्य देशस्य कालस्याग्नेर्देवतायाः कर्मणः
शब्दस्य च प्रतिनिधिर्विद्यत इति स्वस्ति श्रीरणवीरसिंहधरणीपालो वदान्याग्रणी नानाशास्त्रविचारसा
रसविन्सद्वृंदसंरक्षकः धर्माधर्मविभागकृद्रघुपतेः पादांबुजार्चीरतो जीयात्पुत्रकलत्रमित्रसहितः संपा
लयन्क्ष्मां चिरम् १ रणवीरसिंहभूपेशकारितेकृत्यसागरे परिभाषाभिधो जातस्त्वाष्टमो रत्नसंग्रहः
२ इति श्रीरघुवंशतिलकश्रीमहाराजरणवीरसिंहकारिते कृत्यरत्नाकरे धर्मनिबंधे परिभाषाप्रक

णम्

अथ सर्वव्रतेषु तत्तेनाधिष्ठातृदेवतापूजोपयोगी सर्वदेवतासामान्यपूजाक्रमो लिख्यते तत्रादौ पूजोप
चाराः पदार्थादर्शे ज्ञानमालायां अष्टत्रिंशत्षोडशवा दशपंचोपकारकाः तान्विभज्य प्रवक्ष्यामि केते
तेष्वत्र कैस्तेष्वत्र किं अर्घ्यं च पाद्यमाचमनं मधुपर्कमुपस्पर्शं स्नानं नीराजनं वस्त्रमाचमनं चोपवीतक पुन
राचमनं भूषा च दर्पणालोकनं तथा गंधपुष्पे धूपदीपौ नैवेद्यं च ततः क्रमात् पानीयं तोयमाचामं हस्त

वासस्ततः परं करोद्वर्तनमित्यर्थः तांबूलमनुलेपं च पुष्पदानं पुनः पुनः पुष्पांजलिदानं छत्रपुष्प
व्रतादिविधिनेतियावत् गीतं वाद्यं तथा नृत्यं स्तुतिं चैव प्रदक्षिणं पुष्पांजलिनमस्कारा अष्टात्रिंश
त्समीरिताः इत्यष्टात्रिंशत् ३८ आसनं स्वागतं चार्घ्यं पाद्यमाचमनीयकं मधुपर्कं चमस्नानव
सनाभरणानि च सुगंधः सुमनो धूपदीपमन्नेन तर्पणं माल्यानुलेपनं चैव नमस्कारविसर्जने
इति षोडश १६ अर्घ्यपाद्याचमान्येवं मधुपर्काचमान्यपि गंधादयो निवेद्यान्ता उपचारा दशक्रमा
त् इति दशोपचाराः १० गंधपुष्पे धूपदीपौ नैवेद्यं पंचमं स्मृतं इति पंचोपचाराः महानिबंधेषु व
तः षष्ट्युपचारा अप्युक्तास्ते विस्तरभयान्नोक्ताः शारदातिलके षोडश प्रोक्ताः ते यथा आसनस्ना
नवस्त्रभूषणानि परित्यज्य द्वादशाप्युक्ताः अथैषां चिह्नि चार्घ्यं कपिलपंचरात्रे गंधतैलमथो दद्या
द्देवस्य प्रतिमं ततः दूर्वा च विष्णुक्रांता च श्यामाकं पद्ममेव च पाद्यांगानि च चत्वारि कथितानि समा
सतः पाद्यं कर्पूरमगुरुं पुष्पद्रव्याण्याचमनीयकं सिद्धार्थमक्षतं चैव दूर्वापत्तिलमेव च यवांग
यफलं पुष्पमष्टांगं त्वर्घ्यमुच्यते स्नाने वस्त्रे तथा भोज्ये दद्यादाचमनीयकं उद्वर्तनमपि तत्रैव रज
नी सहदेवी च शिरीषं लक्ष्मणापि च सहा भद्रा कुशाग्राणि उद्वर्तनमिहोच्यते मंत्रतंत्रप्रकाशि
कायां अक्षता गंधपुष्पाणि स्नानपात्रे तथा त्रयं तत्रैव द्रव्याभावे प्रदातव्याः क्षालितास्तंडुलाः शु
भाः अगस्त्यसंहितायां तथाचमनपात्रे च दद्याज्जातीफलं मुने लवंगमपि काकोलं शस्तमा
चमनीयके तत्रांतरे तंडुलान्प्रक्षिपेत्तेषु द्रव्याभावेषु तत्स्मरन् प्रयोगपारिजाते व्यासः प्रति
मां पटयंत्राणां नित्यस्नानं न कारयेत् कारयेत्पर्वदिवसे यदा चामलधारणं ज्ञानमालायाम्
नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणाधिपं न दूर्वया यजेद्देवीं बिल्वपत्रैर्दिवाकरं उन्मत्तमर्कपुष्पं
च विष्णोर्वर्ज्यं सदा बुधैः अक्षतास्तु यवाः प्रोक्ता इति पदार्थादर्शे उक्तत्वाद्यवानामेवायं निषेधो न तंडुला
दीनाम् तत्रांतरे महाभिषेके सर्वत्र शंखेनैव प्रकल्पयेत् सर्वत्रैव प्रशस्तोब्जः शिवसूर्यार्चनं विने
ति अन्यत्रापि कुंदं शिरीषं तुलसीं गणेशे प्रायो धत्तूरबिल्वं तगरं तथार्के धत्तूरमर्काक्षतमब्जपाणौ वर्ज्यं
शिवे केतकशंखवारि इति अथावाहनादिमुद्राः देवता नेन संतुष्टाः सर्वदा सम्मुखी भवेत् अंगुष्ठे
निक्षिपेत्पाणौ मुद्रा त्वावाहनी स्मृता संनिधाप्य निक्षिपेत्सेयं मुद्रा त्वासनसंज्ञिता अधोमुखी त्वियं
चैव स्थापिता मुद्रिका मता अंगुष्ठावुच्छ्रितौ कुर्यात्संमुखीकरणी भवेत् प्रसृतांगुलिकौ हस्तौ
मिथः श्लिष्टौ तु संमुखौ कुर्यात्स्वहृदये चेयं मुद्रा प्रार्थनसंज्ञका इत्येवं सर्वदेवानां पूजने षट्प्रद
र्शयेत् शिवपूजायां लिंगमुद्रा उच्छ्रितं दक्षिणांगुष्ठं वामांगुष्ठेन बंधयेत् वामांगुलीर्दक्षि
णाभिरंगुलीभिश्च वेष्टयेत् लिंगमुद्रेयमाख्याता शिवसान्निध्यकारिणीति श्रीकामशीर्षि
कुर्वीत राज्यकामस्तु नेत्रयोः सुखवन्नाद्यकामस्तु पादयोः सुखकामकृत् हृदये सर्वकामी चा
ज्ञानार्थी नाभिमंडले राज्यकामस्तु गुह्ये वै ग्रीवायां रोगशांतिकृत् हेमाद्रौ सन्मुखीकृत्य हस्तौ
हौ किंचित्संकुचितांगुलीति समाख्याता पंकजं समाख्याता पंकजं प्रसृतैव सा पूर्वोक्ता मुकु
लीया च प्रदेशिनीः सृतांगुलिः व्याकोशमुद्रा मुकुलापद्ममुद्रा प्रदर्शयेत् अंगुष्ठौ वा वितानौ
तुम्बकीयांगुलिवेष्टितौ उच्चौ चाभिमुखौ हस्तौ योजयित्वा तु निष्ठुरा तर्जन्याकुंचितं कृत्वात
चैव च कनीयसी अधोमुखीदृष्टनावास्थिता मध्यैकरसस्तु चतस्रश्चोत्थिताः पृष्ठे अंगुलानैकतः
कै. नालं व्यावस्थितौ द्वौ तु व्योममुद्रा प्रकीर्तिता रामपूजने सप्तदशमुद्राः रामार्चनचंद्रिका
याम् आवाहनी स्थापनी च सन्निधीकरणी तथा सन्निरोधिनी मुद्रा सम्मुखीकरणीति
या सकलीकरणी चैव महामुद्रा तथैव च आसां लक्षणानि प्रागेवाभिहितानि पंचवक्रगदा

पद्मयेनुकौस्तुभगारुडाः श्रीवत्सवनमालेचयोनिमुद्रांप्रदर्शयेत् एताभिःसप्तदशभिर्मुद्राभिस्तुविचक्षणः
योगममर्चयेन्नित्यंमोहयेत्सस्तेश्वरं द्रावयेदपिविप्रेंद्रततःप्रार्थितमाप्नुयात् मूलाधाराद्द्वादशांतमानीत
कुसुमांजलिः त्रिस्थानगततेजोभिर्विनीताःप्रतिमादिषु आवाहनीयंमुद्रास्याद्देवार्चनविधौमुने एषै
वाधोमुखीमुद्रास्थापनेशस्यतेपुनः उन्नतांगुष्ठयोगेनमुष्टीकृतकरद्वयं सन्निधीकरणीमुद्रादेवार्च
नविधौमुने अंगुष्ठगर्भिणीसैवमुद्रास्यात्सन्निरोधिनी उत्तानमुष्टियुगलासंमुखीकरणीमता
अंगैरेवांगविन्यासःसकलीकरणीभवेत् अन्योन्यकरसंलग्नाविस्तारितकरद्वयी महामुद्रेयमाख्याता
न्यूनाधिकसमापत्ती कनिष्ठानामिकामध्यांतस्यांगुष्ठात्तदग्रतः गोपितांगुष्ठमूलेनसन्नद्धामुकुली
कृता करद्वयेनमुद्रास्याच्छंखाख्येयंसुरार्चने अन्योन्याभिमुखस्पर्शव्यत्ययेनतुवेष्टयेत् अंगु-
लीभिःप्रयत्नेनमंडलीकरणंमुने चक्रमुद्रेयमाख्यातागदामुद्राततःपरं अन्योन्याभिमुखाश्लिष्ट
ततःकौस्तुभसंज्ञिता कनिष्ठेन्योन्यसंश्लिष्टेभिमुखेद्विपरस्परं वामस्यतर्जनीमध्येमध्यानामिकयोर
पि वामानामिकसंस्पृष्टातर्जनीमध्यपर्वाभिना पर्यायेणानतांगुष्ठद्वयीकौस्तुभलक्षणा कनिष्ठा-
न्योन्यसंलग्नाविपरीतातुयोजिता अथस्तात्प्रपितांगुष्ठामुद्रागारुडसंज्ञकाः तर्जन्यंगुष्ठमध्यस्था
मध्यमानामिकाद्वयी कनिष्ठानामिकामध्यतर्जन्यग्रकरद्वयी श्रीवत्ससंज्ञामुद्रेयंवनमालाभवेत्त
तः कनिष्ठानामिकामध्यामुष्टिरुन्नततर्जनी परिधांताशिरस्युच्चैस्तर्जनीभ्यांदिवौकसः योनिमु
द्रासमाख्याताद्योतत्करद्वयाश्रिता तर्जन्याकृष्टमध्यांतेस्थितानामिकयुग्मिका मध्यस्थलस्थि-
तांगुष्ठायेयंशस्तामुनेर्चने इतिमुद्रालक्षणं अथसर्वव्रतेषुसामान्यतःपूजाविधिस्तत्रादौवि-
ष्णुव्रतेषुसामान्यतोविष्णुपूजाक्रमोलिख्यते व्रतदिवसेकर्ताकृतनित्यक्रियःसंभृतपूजोपचारः
व्रतपूजासंकल्पंकुर्यात् ॐमद्येत्यादियंचांगस्मरणपूर्वकं स्वगोत्रनामस्मरणंकृत्वात्मनःसर्वपा
पक्षयादिकामोविष्णुप्रीत्यर्थमेकादश्यादिव्रतांगभूतविष्णुपूजनमहंकरिष्ये ततःकलशपूजां
कुर्यात् कलशजले गंगेचयमुनेचैवगोदावरिसरस्वती नर्मदेसिंधुकावेरीजलेस्मिन्सन्निधिंकुरु
ब्रह्मांडोदरतीर्थानिकरैस्पृष्टानितेरवे तेनसत्येनमेदेवतीर्थंदेहिदिवाकर गायत्र्यामूलमंत्रेणच दे
ववुद्ध्यातज्जलंसंपूज्य स्ववामेषट्कोणमंडलेशंखस्थापनंकुर्यात् त्रिपादिकायांवह्निमंडलायन-
मः इतिसंपूज्य तत्रशंखंस्थापयित्वा अर्कमंडलायनमइतिसंपूज्य त्वंपुरासागरोत्पन्नोविष्णुना-
विधृतःकरे नमितःसर्वदेवैश्चपांचजन्यनमोस्तुते इतिसंप्रार्थ्य तत्रकलशजलंदत्वा चंद्रमंडला
यनमः इतिसंपूज्य ततोघंटापूजनंकुर्यात् आगमार्थंतुदेवानांगमनार्थंतुरक्षसां कुर्वेघंटारवं-
तस्माद्देवताह्वानलक्षणं सर्ववाद्यमयीघंटाविष्णोश्चात्यंतवल्लभा यस्यावाद्यप्रभावेनजायतेमं-
गलंभुवि इतिघंटापूजनम् ततःस्वदेहेपुरुषसूक्तन्यासान्कुर्यात् ॐसहस्रशीर्षेत्यादिषोड-
शर्चो नारायणऋषि आद्यानांपंचदशानां अनुष्टुप्छंदः अंत्यायास्त्रिष्टुप्छंदः सर्वासांता
सांमहापुरुषोदेवता जगद्बीजं न्यासेपूजायांचविनियोगः ॐसहस्रशीर्षःपुरुषःसहस्राक्षःसह
स्रपात् सभूमिंसर्वतःस्पृत्वात्यतिष्ठद्दशांगुलम् वामकरायनमः १ पुरुषएवेदंसर्वंयद्भूतंयच्च
भाव्यम् उतामृतत्वस्येशानोयदन्नेनातिरोहति दक्षिणकरायनमः २ एतावानस्यमहिमातोज्याः-
यांश्चपुरुषः पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि वामपादायनमः ३ त्रिपादूर्ध्वउदैत्पुरुषः
पादोस्येहाभवत्पुनः ततोविश्वंव्यक्रामत्साशनानशनेअभि दक्षिणपादायनमः ४ ततोविराड
जायतविराजोअधिपूरुषः सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः वामजानवेनमः ५ तस्मा-
द्यज्ञात्सर्वहुतःसंभृतंपृषदाज्यं पशूंस्तांश्चक्रेवायव्यानारण्याग्राम्याश्चये दक्षिणजानवेनमः ६ त

स्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे छंदांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत वामकरायनमः ७ त
स्मादश्वा अजायंत ये के चोभयादतः गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः दक्षिणकरायनमः ८ तं
यज्ञं बर्हिषि प्रोक्षन्पुरुषं जातमग्रतः तेनदेवा अयजंत साध्या ऋषयश्च ये नाभ्यैनमः ९ यत्पुरुषं व्यदधुः
कतिधा व्यकल्पयन् मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्येते हृदयायनमः १० ब्राह्मणोऽस्य मुख
मासीद्बाहू राजन्यः कृतः ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत कंठायनमः ११ चंद्रमा मनसो जात
श्चक्षोः सूर्यो अजायत श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत मुखायनमः १२ नाभ्या आसीदंतरि
क्षं शीर्ष्णो द्यौः समवर्त्तत पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकां अकल्पयन् शिरसेनमः १३ यत्पुरु
षेण हविषा देवा यज्ञमतन्वत वसंतो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः शिखायैनमः १४ सप्तास्या
सन्परिधयस्त्रिः सप्त समिधः कृताः देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुं कवचायनमः १५ यज्ञेन
यज्ञमयजंत देवास्तानि धर्माणि प्रथमान्यासन् ते ह नाकं महिमानः सचंत यत्र पूर्वे साध्याः संति देवाः
अस्त्रायनमः १६ अथ ध्यानम् शांताकारं भुजगशयनं पद्मनाभं सुरेशम् विश्वाधारं गगनसदृशं मे
घवर्णं शुभांगं लक्ष्मीकांतं कमलनयनं योगिभिर्ध्यानगम्यं वंदे विष्णुं भवभयहरं सर्वलोकैकनाथं
ध्येयः सदा सवितृमंडलमध्यवर्त्ती नारायणः सरसिजासनसन्निविष्टः केयूरवान्मकरकुंडलवान्किरी
टी हारी हिरण्मयवपुर्धृतशंखचक्रः इति ध्यात्वा पूजामारभेत् आगच्छ देवदेवेश तेजोराशे जगत्प
ते क्रियमाणां मया पूजां गृहाण सुरसत्तम सहस्रशीर्षेत्यावाहनं १ नानारत्नसमायुक्तं कार्त्तस्व
रविभूषितं आसनं देवदेवेश प्रीत्यर्थं प्रतिगृह्यतां पुरुष एवेदमासनं २ पाद्यं गृहाण देवेश सर्व
क्षेमकरं विभो भक्त्या मयार्पितं देव लोकनाथ जगत्पते एतावानस्येति पाद्यम् ३ नमस्ते देवदेवेश
नमस्ते धरणीधर नमस्ते जगदाधार अर्घ्यं नः प्रतिगृह्यतां त्रिपादूर्ध्वेति अर्घ्यं ४ कर्पूरवासितं तो
यं मंदाकिन्याः समाहृतं आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः ततो विराडिति आचमनीयम् ५
अथ पंचामृतस्नानम् ओं पयः पृथिव्यां पय ओषधीषु पयो दिव्यंतरिक्षे पयो धाः पयस्वतीः प्रदिशः
सन्तु मह्यम् १ इति पयःस्नानं ओं दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः सुरभि नो मुखा कर
त्प्रण आयूंषि तारिषत् २ इति दधिस्नानं ओं घृतं घृतपावानः पिबत वसां वसापावानः पिबतांत
रिक्षस्य हविरसि स्वाहा दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा ३ इति घृतस्नानम् ओं म
धुवाता ऋतायते मधु क्षरंति सिंधवः माध्वीर्नः संत्वोषधीः मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः
मधु द्यौरस्तु नः पिता २ मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्यः माध्वीर्गावो भवन्तु नः इति मधुस्नानं
४ स्वादुः पवस्व दिव्याय जन्मने स्वादुरिंद्राय सुहवीतु नाम्ने स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमां
अदाभ्यः इति शर्करास्नानम् अथ शुद्धस्नानम् ओं देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां
आददे नारिरसि इति शुद्धस्नानम् ततः पंचामृतद्रव्यमेकीकृत्य शर्करारससंयुक्तं पयोदधिघृतं मधु
पंचामृतं समानीतं स्नानार्थं परमेश्वर इति पंचामृतस्नानम् तत आपो हि ष्ठेति ऋचा कल्पेन पुनः
शुद्धोदकस्नानम् पंचोपचारैः संपूज्य महाभिषेकं कुर्यात् गंगा च यमुना चैव नर्मदा च सरस्वती ता
पी पयोष्णी कृष्णावेणा ताभ्यः स्नानार्थमाहृतं तोयमेतत्सुखस्पर्शं स्नानीयं प्रतिगृह्यताम् तस्माद्यज्ञा
त्सर्वहुतः संभृतं पृषदाज्यं इति स्नानम् सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे मयोपपादिते तु
भ्यं वाससी प्रतिगृह्यताम् तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे इति वस्त्रं ७ सर्वदेव नमस्ते स्तु
त्राहि मां भवसागरात् ब्रह्मसूत्रं सोत्तरीयं गृहाण परमेश्वर तस्मादश्वा अजायंत इति यज्ञोपवीतम्
८ श्रीखंडं चंदनं दिव्यं गंधाढ्यं सुमनोहरं विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यतां तं यज्ञं बर्हिषि प्रोक्ष

न् इतिगंधम् माल्यादीनिसुगंधीनिमालत्यादीनिवैप्रभो मयाहृतानिपूजार्थंप्रीत्यर्थंप्रतिगृह्यताम् यत्पु
रुषंव्यदधुः इतिपुष्पाणि १० वनस्पतिरसोदिव्योगंधाढ्योगंधउत्तमम् आघ्रेयःसर्वदेवानांधूपोयंप्रति
गृह्यताम् ब्राह्मणोस्येतिधूपम् ११ साज्यंत्रिवर्तिसंयुक्तंवह्निनायोजितंमया दीपंगृहाणदेवेश
त्रैलोक्यतिमिरापहं भक्त्यादीपंप्रयच्छामिदेवायपरमात्मने त्राहिमांनरकाद्घोराद्दीपज्योतिर्नमो
स्तुते चंद्रमामनसोजातइतिदीपम् १२ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं भक्ष्यभोज्यसमायु
क्तंनैवेद्यंप्रतिगृह्यताम् नाभ्याआसीदितिनैवेद्यम् १३ इदंफलंमयादेवस्थापितंपुरतस्तव तेनमे
सफलावाप्तिर्भवेज्जन्मनिजन्मनि यत्पुरुषेणहविषेतिफलम् १४ पूगीफलंमहद्दिव्यंनागवल्लीदलै
र्युतं कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यतां इतितांबूलम् हिरण्यगर्भगर्भस्थंहेमबीजंविभावसो
अनंतपुण्यफलदमतःशांतिंप्रयच्छमे सप्तास्यासन्नितिदक्षिणाद्रव्यम् १५ चंद्रादित्यौचधरणी
विद्युदग्निस्तथैवच त्वमेवज्योतिषांज्योतिरार्तिक्यंप्रतिगृह्यताम् नीराजनं नमस्तेपुंडरीकाक्षनम
स्तेस्वमरप्रिय नमस्तेजगदाधारदेवदेवनमोस्तुते यज्ञेनयज्ञमितिमंत्रपुष्पांजलिः १६ अतोऽन्या
पिदेवसूक्तानिपठित्वा सहस्रनामस्तवादिभिरपिपुष्पांजलिसमर्पणंकुर्य्यात् यानिकानिचपा
पानिब्रह्महत्यादिकानिच तानितानिविनश्यंतुप्रदक्षिणपदेपदे इतिप्रदक्षिणा नमःसर्वहिता
र्थायजगदाधारहेतवे साष्टांगोयंप्रणामस्तेप्रयत्नेनमयाकृतः इतिनमस्कारः यन्मयाभिसं
युक्तंपत्रंपुष्पंफलंजलं प्रकल्पितंचनैवेद्यंतद्गृहाणमहेश्वर इतिसर्वपदार्थसमर्पणम् आवाह
नंनजानामिनैवजानामिपूजनं विसर्जनंनजानामित्वंगतिःपरमेश्वर पूर्वपूजांसमाप्य व्रतांते
दक्षिणान्नदानादिभिर्ब्राह्मणान्परितोष्यतैरनुज्ञातोव्रतपारणंकुर्य्यात् इतिविस्तरव्रतेषुसामा
न्यपूजाविधिः अथशिवव्रतेषुसामान्यपूजाविधिः तत्रापिकृतनित्यक्रियोव्रतकर्त्ता पूजोपचा
रसंचयंकृत्वासंकल्पंकुर्य्यात् ॐमद्यसर्वपापक्षयोत्तरधर्मार्थकाममोक्षार्थंसांबसदाशिवप्रीत्यर्थं
शिवपूजाव्रतमहंकरिष्ये कलशस्थापनं अर्घ्यपात्रस्थापनंचविधाय पंचब्रह्ममंत्रन्यासंकुर्या
त् स्त्रीशूद्राभ्यांपंचाक्षरन्यासोविधेयः ॐअस्यश्रीशिवपंचाक्षरमंत्रस्य वामदेवऋषिरनुष्टुप्छंदः
श्रीसदाशिवोदेवतान्यासपूजादौविनियोगः ॐवामदेवऋषयेनमःशिरसि अनुष्टुप्छंदसेनमोमु
खे श्रीसदाशिवोदेवतायैनमःहृदये सदाशिवप्रीतयेन्यासपूजादौविनियोगइतिसर्वांगेषु १
ॐनंतत्पुरुषायनमोहृदये मंअघोरायनमःपादयोः शिंसद्योजातायनमोगुह्ये वांवामदेवायन
मोमूर्ध्नि यंईशानायनमोमुखे ॐअंगुष्ठाभ्यांनमः नंतर्जनीभ्यांस्वाहा मंमध्यमाभ्यांवषट् शिं
अनामिकाभ्यांहुं वांकनिष्ठिकाभ्यांवौषट् यंकरतलकरपृष्ठाभ्यांफट् एवंहृदयादिन्यासोपि ध्यानं
सूर्यकोटिप्रतीकाशंत्रिनेत्रंचंद्रशेखरं त्रिशूलवज्रसंचक्रपाशांकुशधरंविभुं वरदाभयपाणिंचसर्वाभरण
भूषितं उमालिंगितवामांगंगणांतंध्यायेत्सदाशिवं आगच्छत्वंमहादेवउमयासहशंकर ममपूजांगृ
हाणेमांप्रसन्नोभवसर्वदा सद्योजातंप्रपद्यामिइतिआवाहनम् भद्रपीठमिदंदेवनानाभरणभूषि
तं मयानिवेदितंभक्त्यातंगृहाणनमोस्तुते सद्योजातायवैनमः आसनम् २ पाद्यंगृहाणदेवेशा
गंधपुष्पाक्षतैसह कूपोदकंसमानीतंप्रीत्यर्थंप्रतिगृह्यतां भवेभवेनातिभवेभवस्वमांपाद्यंसमर्पया
मि ३ सदाशिवनमस्तेस्तुभक्तानामभयप्रद गंधपुष्पाक्षतैर्युक्तमर्घ्यंगृह्णनमोस्तुते भवोद्भवायनमः
अर्घ्यंसमर्पयामि ४ गंगाजलंसमानीतंसुवर्णकलशेस्थितं गृहाणाचमनंदेवपार्वत्यासहितप्रभो
नमःशिवाय आचमनंसमर्पयामि ५ मधुपर्कंगृहाणेमंदधिमध्वाज्यसंयुतं गृह्योक्तेनविधाने
नजगदानंदकारक वामदेवायनमः मधुपर्कंसमर्पयामिनमः ७ आप्यायस्वेतिक्षीरस्नानम्

दधिक्राव्णइतिदधिस्नानम् २ घृतेघृतपावानइतिघृतस्नानं ३ मधुवाताऋतायतेमधुस्नानम् ४ स्वादुः
पवस्वेतिशार्करास्नानम् ५ देवस्यत्वा आपोहिष्ठेतिशुद्धस्नानं ६ सर्वभूषाधिकेसौम्येलोकलज्जानि
वारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां ज्येष्ठायनमःवस्त्रं ७ कार्पाससनिर्मितंसूत्रंनवतंतु
विराजितं भक्त्यादत्तंमयाशंभोगृहाणशशिशेखर श्रेष्ठायनमःयज्ञोपवीतम् ८ सुगंधंचंदनादि
यंकस्तूरीकुंकुमान्वितम् मयानिवेदितंस्वामिन्गृहाणगिरिजापते कालायनमःगंधम् ९ अ
क्षताःपरमाःशुभ्रारजनीचूर्णमिश्रिताः मयार्पितागृहाणेशसृष्टिस्थित्यंतकारक कलविक
रणायनमः अक्षतान्समर्पयामिनमः माल्यादीनिसुगंधीनिपारिजातोद्भवानिच मयाहृतानि
पूजार्थंपुष्पाणिप्रतिगृह्यतां कलविकरणायनमः पुष्पाणिसमर्पयामिनमः ११ अथांगपूजा
सद्योजातायनमःपादौपूजयामि वामदेवायनमःगुल्फौपूजयामि अघोरायनमःजंघेपूजया
मि तत्पुरुषायनमः जानुनीपूजयामि ईशानायनमःगुह्यंपूजयामि महादेवायनमःनाभिंपू
जयामि विश्वकर्त्रेनमःउदरंपूजयामि सर्वतोमुखायनमःपार्श्वेपूजयामि स्थाणवेनमःस्तनौ
पूजयामि नीलकंठायनमःकंठंपूजयामि देवायनमःमुखंपूजयामि महेश्वरायनमःनासि
कांपूजयामि शंभवेनमःनेत्रत्रयंपूजयामि शूलपाणयेनमःश्रोत्रेपूजयामि पिनाकिनेनमःल
लाटंपूजयामि शिवायनमःशिरःपूजयामि पशुपतयेनमःशिखांपूजयामि महादेवायन
मःसर्वांगंपूजयामि ततअष्टोत्तरशतनामभिर्बिल्वपत्राणिसमर्पयेत् ततोरुद्रसूक्तादिभि
र्महाभिषेकंकुर्यात् वनस्पत्युद्भवोधूपोगंधाढ्योगंधउत्तमः प्रीत्यर्थंदेवदेवस्यधूपोयंप्रतिगृ
ह्यतां बलायनमःधूपम् समर्पयामि १२ आज्यंसद्वर्त्तिसंयुक्तंवह्निनायोजितंमया दीपंगृहा
णदेवेशत्रैलोक्यतिमिरापहं बलप्रमथनायदीपंसमर्पयामि १३ अन्नंचतुर्विधंस्वादुरसैःष
ड्भिःसमन्वितं भक्त्यानिवेदितंचाहंनैवेद्यंप्रतिगृह्यतां सर्वभूतदमनायनैवेद्यंसमर्पयामि १४
उत्तरापोशानंहस्तप्रक्षालनं उदकुंभप्रदास्यामिशीतलोदकपूरितं कर्पूरचंदनाढ्यंचमुशीरमृगसंयु
तं मनोन्मनायनमः आचमनीयंसमर्पयामि १५ नानाविधफलश्रेष्ठंपुत्रपौत्रफलप्रदं सर्वैश्व
र्यप्रदंनित्यंगृहाणेष्टफलप्रदं इतिफलम् १६ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसो अनंतपुण्य
फलदमतःशांतिंप्रयच्छमे इतिदक्षिणाद्रव्यम् १७ चक्षुर्दंसर्वलोकानांतिमिरस्यनिवारणं आ
र्तिक्यंकल्पितंभक्त्यागृहाणपरमेश्वर शिवायनमःनीराजनंसमर्पयामि १८ विश्वेश्वरविरूपाक्ष
विश्वरूपसदाशिव शरणंभवभूतेशकरुणाकरशंकर इतिमंत्रेणपुष्पंसमर्पयामि १९ हरशंभो
महादेवसमस्तसुरवल्लभ शिवशंकरसर्वात्मन्नीलकंठनमोस्तुते इतिनमस्कारः २० यानिका
निचपापानिब्रह्महत्यादिकानिच तानिसर्वाणिनश्यंतुप्रदक्षिणपदेपदे इतिप्रदक्षिणा अ
नमस्तेपार्वतीनाथनमस्तेभक्तवत्सल ईप्सितंमेफलंदेहिभवान्यानंदवर्धन इतिप्रार्थना ए
कादशफलैर्युक्तंवेणुपात्रसमन्वितं वायनंदेवदेवस्यददामिगिरिजापते: पार्वत्यानिर्मितंश्रेष्ठं
स्त्रीणांसौभाग्यदायकं वायनंद्विजवर्यायअतःशांतिंप्रयच्छमे इतिवायनम् यस्यस्मृत्याचना
मोक्त्यातपोयज्ञव्रतादिषु न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं अनेनषोडशोपचारपूजनेन
श्रीभगवान्भवानीशंकरःप्रीयतामित्युक्त्वापूजनंसमर्पयेत् गच्छगच्छसुरश्रेष्ठभवानीसहितःप्र
भो कैलासवासिन्देवेशपुनरागमनायच इतिविसर्जनम् इतिशिवव्रतेषुसर्वसाधारणपूजा
इतिः अष्टोत्तरशतनामभिःशिवपूजनम् ॐशिवायनमः महेश्वरायनमः २ शंभवेनमः ३ पिनाकि
नेनमः ४ शशिशेखरायनमः ५ वामदेवायनमः ६ विरूपाक्षायनमः ७ कपर्दिनेनमः ८ नीललोहि

तायनमः ९ शंकरायनमः १० शूलपाणयेनमः ११ खट्वांगिनेनमः १२ विष्णुवल्लभायनमः १३ शिपिविष्टा
यनमः १४ अंबिकानाथायनमः १५ श्रीकंठायनमः १६ भक्तवत्सलायनमः १७ भवायनमः १८ शर्वा
यनमः १९ त्रिलोकीशायनमः २० शितिकंठायनमः २१ कपालभृतेनमः २२ उग्रायनमः २३ का
पालिनेनमः २४ कामारयेनमः २५ अंधकासुरसूदनायनमः २६ गंगाधरायनमः २७ ललाटा
क्षायनमः २८ कालायनमः २९ कृपानिधयेनमः ३० भीमायनमः ३१ परशुहस्तायनमः ३२ मृ
गपाणयेनमः ३३ जटाधरायनमः ३४ कैलासवासिनेनमः ३५ कवचिनेनमः ३६ कठोरायनमः
३७ त्रिपुरांतकायनमः ३८ वृषांकायनमः ३९ वृषभारूढायनमः ४० भस्मोद्धूलितविग्रहायनमः
४१ सामप्रियायनमः ४२ स्वरमयायनमः ४३ त्रिमूर्त्तयेनमः ४४ अवनीश्वरायनमः ४५ सर्व
ज्ञायनमः ४६ परमात्मनेनमः ४७ सोमसूर्याग्निलोचनायनमः ४८ हविषेनमः ४९ यज्ञमयाय
नमः ५० सोमायनमः ५१ पंचवक्त्रायनमः ५२ सदाशिवायनमः ५३ विश्वेश्वरायनमः ५४ वीरभ
द्रायनमः ५५ गणनाथायनमः ५६ प्रजापतयेनमः ५७ हिरण्यरेतसेनमः ५८ दुर्धर्षायनमः ५९
गिरीशायनमः ६० गिरिशायनमः ६१ अनघायनमः ६२ भुजंगभूषणायनमः ६३ भर्गायनमः ६४
गिरिधन्वनेनमः ६५ गिरिप्रियायनमः ६६ अष्टमूर्त्तयेनमः ६७ अनेकात्मनेनमः ६८ सात्वि
कायनमः ६९ शुद्धविग्रहायनमः ७० शाश्वतायनमः ७१ खंडपरशवेनमः ७२ अजायनमः
७३ पाशविमोचकायनमः ७४ कृत्तिवाससेनमः ७५ पुरारातयेनमः ७६ भगवतेनमः ७७ प्र
मथाधिपायनमः ७८ मृत्युंजयायनमः ७९ सूक्ष्मतनवेनमः ८० जगद्व्यापिनेनमः ८१ ज
गद्गुरवेनमः ८२ व्योमकेशायनमः ८३ महासेनजनकायनमः ८४ चारुविक्रमायनमः ८५
रुद्रायनमः ८६ भूतपतयेनमः ८७ स्थाणवेनमः ८८ अहिर्बुध्न्यायनमः ८९ दिगंबरायनमः ९० मृडा
यनमः ९१ पशुपतयेनमः ९२ देवायनमः ९३ महादेवायनमः ९४ अव्ययायनमः ९५ हरयेनमः
९६ पूष्णदंतभिदेनमः ९७ अव्ययायनमः ९८ दक्षाध्वरहरायनमः ९९ हरायनमः १०० भगने
त्रभिदेनमः १ अव्ययायनमः २ सहस्राक्षायनमः ३ सहस्रपदेनमः ४ अपवर्गप्रदायनमः ५ अ
नंतायनमः ६ तारकायनमः ७ परमेश्वरायनमः १०८ इत्यष्टोत्तरशतनामपूजनम् बिल्वपत्रैःप्र
शस्तैर्वापुष्पैश्चतुलसीदलैः तिलाक्षतैर्यजेद्देवंजीवन्मुक्तोनसंशयः इतिफलस्तुतावुक्तत्वात्
अथव्रतभंगेसंपूर्णताविधिः हेमाद्रौभविष्ये युधिष्ठिरउवाच संपूर्णतामनुष्ठानंव्रतानांव
दकेशव कुरुप्रसादंगुह्यार्थमेतन्मेवक्तुमर्हसि श्रीकृष्णउवाच साधुसाधुमहाबाहोशृणुराज
न्युधिष्ठिर रहस्यानांरहस्यंतेकथयामिव्रतेनव संपूर्णताकृतायत्रतस्यात्सम्यक्फलप्रदं
यच्चीर्णंनरनारीभिर्भवेत्संपूर्णकारकं अवश्यंतत्प्रकर्त्तव्यंसंपूर्णफलकांक्षिभिः किंचिद्गतं
प्रमादेनयद्व्रतंव्रतिनास्थितं तत्संपूर्णंभवेत्सर्वंव्रतेनानेनपांडव उपद्रवेबहुविधेमहामोहादि
संभवे यत्रग्रंकिंचिदेवस्याद्व्रतंविघ्नविनाशकं तत्संपूर्णंभवेत्पार्थसत्यंसत्यंनसंशयः कांचनंतूष्य
कंरूपंशिल्पिनातुघटापयेत् भग्नव्रतस्ययोदेवस्तस्यरूपंविनिर्मितं व्रतेस्त्रीपुंसयोश्चैवप्रारब्धंय
द्व्रतंकिल नचनिष्पादितंकिंचिद्दैवात्सर्वंतथास्थितं द्विभुजंपंकजारूढंसौम्यंप्रहसिताननं नि
ष्पादितंशिल्पिनाचतस्मिन्नेवदिनेपुनः व्रतदिनेइत्यर्थः तन्मानेतपुनःप्रातर्ब्राह्मणोविधि
नागृहे स्नापयेत्पयसादध्नाचघृतक्षौद्रसांबुभिः गंधचंदनपुष्पैश्चपूजांकुर्य्यात्समाहितः तोय
पूर्णस्यकुंभस्यमूर्ध्निविन्यस्यदेवतां धूपदीपाक्षतैर्वस्त्रैरत्नैर्बहुप्रकारकैः अर्घ्यंप्रदद्यात्तत्रात्मा
मंत्रेणानेनपांडव उपासनस्यदानस्यप्रायश्चित्तंकृतंजले शरणंवैप्रपन्नास्मःकुरुष्वाद्यरयाद्य

नः प्रसन्नोऽभवभीतस्य भिन्नाचार्य्यव्रतस्य च कृत्प्रमादं संपूर्णं व्रतं संजायतां मम यत्तच्छिद्रं तपश्छि
द्रं यच्छिद्रं व्रतकर्मणि तत्सर्वं त्वत्प्रसादेन संपूर्णं जायतां पुनः पूर्वदक्षिणपश्चाच्च उत्तरेषु बलिं हरे
त् उपर्य्यधस्तात्सर्वेभ्यो दिक्पालेभ्यो नमो नमः इदमर्घ्यमिदं पाद्यं तेभ्यस्तेभ्यो नमो नमः पादौ च
जानुनी चैव कटिशीर्षकवक्षसी कुक्षिं तु हृदयं पृष्ठं बाहू स्कंधः सशिरोरुहान् पूजयित्वास्य देवस्य
ततः पश्चात्क्षमापयेत् पूजितस्त्वं यथाशक्त्या नमस्तेस्तु सुरोत्तम ऐहिकामुष्मिकां देव कार्य्यसि
द्धिं ददस्व मे एवं क्षमापयित्वा तं देवरूपं विधानतः तन्मूर्तिं स्थद्विजातिभ्यो विधिवत्प्रतिपादयेत्
स्थित्वा पूर्वमुखो विप्रो गृह्णीयाद्दर्भपाणिना विप्रहस्ते प्रयच्छेत दाता चैवोत्तरामुखः मंत्रेणानेन
कौंतेय सोपवासः प्रयत्नतः इदं व्रतं मया खंडं कृतमासीत्पुरा द्विज तत्सर्वं पूर्णमेवास्तु तव मूर्ति
प्रदानतः ब्राह्मणोऽपि प्रयच्छेत मंत्रेणानेन तद्व्रतं वाक्यपूर्णमतः पूजा व्रतेनानेन ते पुरा संपूर्णं स्यात्
प्रसादेन तव पूर्णमनोरथाः ब्राह्मणा यत्प्रभाषंते तन्मन्यंते दिवौकसः सर्वदेवमया विप्रा न तद्व
चनमन्यथा जलधिः क्षारतां नीतः पावकः सर्वभक्षतां सहस्रनेत्रः शक्रोपि कृतो विप्रैर्महात्मभिः
ब्राह्मणानां तु वचसा ब्रह्महत्या विनश्यति अश्वमेधफलं साग्रं लभते नात्र संशयः व्यासवाल्मी
किवृन्दात्पराशरवसिष्ठयोः नारदस्य भृगोः कृत्वा पूर्णं भवतु ते व्रतं यद्ब्राह्मणास्तुष्टतमा वदंति
तद्देवताः कर्मभिराचरंति तुष्टेषु तुष्टास्तु न यो वदंति प्रत्यक्षदेवेषु परोक्षदेवान् एवंविधविधानेन
गृहीत्वा ब्राह्मणो व्रजेत् दाता तत्प्रेषयेत्सर्वं ब्राह्मणस्य गृहं स्वयं ततः पंचमहायज्ञान्निर्वर्त्य
भोजनादिकं एवं यः कुरुते भक्त्या व्रतमेतन्नृपोत्तम तस्य संपूर्णतां याति तद्व्रतं यत्पुरा कृतं खंडं
संपूर्णतां याति प्रसन्ने व्रतदेवते भग्नानि यानि मदमोहवशाद्गृहीत्वा जन्मांतरेष्वपि नरेण ततः
स्मरेण संपूर्णपूजनपरस्य पुरो भवंति सर्वव्रतानि परिपूर्णफलप्रदानि इति श्रीभविष्योत्तरपुराणे
खंडव्रतस्य संपूर्णताविधानम् स्वस्ति श्रीरणवीरसिंहधरणीपालो वदान्याग्रणीर्नानाशास्त्रवि
चारसारसवित्सहृद्दसंरक्षकः धर्माधर्मविभागकृद्रघुपतेः पादांबुजाश्रितो जीयात्पुत्रकलत्रमित्र
सहितः संपालयन्क्ष्मां सदा १ रणवीरसिंहभूपेशकारिते कृत्यसागरे व्रतसामान्यपूजाख्यो
नवमो रत्नसंग्रहः २ इति श्रीरणवीरसिंहरत्नाकरे नवमो रत्नसंग्रहः

## अथ सर्वव्रतेषु सामान्य उद्यापनविधिः

दृष्टी चंद्रोदये नंदिपुराणे कुर्य्यादुद्यापनं तस्य समाप्तौ यदुदीरितं उद्यापनं विना यत्तु तद्व्रतं नि
ष्फलं भवेत् यत्र चोद्यापनं नोक्तं व्रतानुगुणतश्चरेत् वित्तानुसारतो दद्यादनुक्तोद्यापने व्रते गां
चैव कांचनं दद्याद्व्रतस्य परिपूर्त्तये समासाद्व्युत्पादनमनुक्तोद्यापनविषयं उक्तोद्यापने तु आदौ म
ध्येऽथवांते व्रतस्योद्यापनं भवेदिति वचनात् वितयत्रापि व्रतानामुद्यापनं यथासंभवं कार्य्यम्
उद्यापनं विना यत्तु तद्व्रतं निष्फलं भवेत् इति वचनादुद्यापनस्यावश्यकताभिहिता तत्रादौ मंड
पप्रमाणं पंचरात्रे कनीयान्दशहस्तः स्यान्मध्यमो द्वादशो मतः तथा षोडशभिर्हस्तैर्मंडपः स्या
दिहोत्तमः प्रतिष्ठासारसंग्रहे तु मंडपः स्यात्कलाहस्तः सर्वलक्षणसंयुतः दशद्वादशहस्तो वाद्वि
द्विवृद्ध्या ततः क्रमादिति मंडपनिर्माणप्रकारः पंचरात्रे कुर्य्याद्वैष्णवयागेषु चतुर्द्वारांश्च मंडपान्
सारदारुमयांस्तंभान्दृढान्कुर्य्याद्दृढान्समान् मंडपार्द्धोच्छ्रितान्वेदसंख्यान्चूडान्वितांस्तथा
पंच सप्तान्यमेवं वा वैष्णवसाधारणो विधिः वलिकास्तूर्द्ध्वतस्तेषां स्तंभद्वादशके पुनः वाह्यपीठ
प्रमाणेन तत्र सूत्रविधानतः कल्पयेद्विकरं दारु चतुरंगुलवर्द्धितः मध्यमोत्तमयोर्वेदी मंडपस्य त्रि
भागतः चतुर्थांशेन निम्नस्याद्विः सप्तपंचमोपि वा नवैकादशहीनां वा इष्टिकाभिः प्रकल्पयेत् इ

द्वारदेहल्यावद्धिर्हस्तमात्रेण द्वारशाखानिवेद्याः द्वारेषु कार्य्याणि च तोरणानि चत्वार्य्यपि क्षीरवनस्प
तीनां हस्तं विहायेत्यादि मात्स्ये व्रतखंडे तद्विहस्तं वहिस्त्यक्त्वा तोरणानि निवेशयेदित्युक्तम् म
त्स्ये पताकास्तूक्ताः लोकेशवर्णैः परितः पताकामध्ये ध्वजः किंकिणीकायुतः स्यादिति लोकपा
लवर्णास्तु इंद्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः कुवेरस्तु सुवर्णाभो ह्यग्निश्चापि सुवर्णभः
तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ईशानस्तु भवेद्रक्त एवं ध्यायेदिमान्क्रमान् सप्तहस्ताः
पताकाः स्युः सप्तमांशेन विस्तृताः लोकपालानुवर्णेन नवमी तु हिमप्रभाः पीतरक्तादिवर्णाश्च
पंचहस्ता ध्वजास्ततः द्विपंचहस्तैर्दंडैश्च वंशजैः संयुतास्तथा ध्वजेषु पूर्वादिक्रमेणाष्टदिक्षु लो
केशवाहनानि लिखेत् तदुक्तं क्रियासागरे मातंगतस्तमहिषसिंहमत्स्यैणवाजिनः वृषभं
च यथान्यायं ध्वजमध्ये क्रमाल्लिखेदिति अथवा दिग्गजानष्टौ दैरावणपुरस्सरान् ध्वजेषु विलिखे
दुक्तधातुभिश्च सलक्षणामिति पताकासु च लोकेशानामस्त्राणि लिखेत् तानि च वज्रशक्तिदं
डखड्गपाशांकुशगदात्रिशूलाख्यैरायुधैरुपेताः पताकाः क्रमेण कार्य्याः अथ कुंडानि भविष्ये
वेदिपादांतरे त्यक्त्वा कुंडानि नव पंच वा वेदास्राण्येव तानि स्युर्वर्तुलान्यथवा क्वचित् कुंडकरणाश
क्तौ स्थंडिलमेव कार्य्यम् तदुक्तं विश्वकर्मशास्त्रे खाताधिके भवेद्रोगी हीने धेनुधनक्षयः भार्य्या
विनाशनं कुंडं प्रोक्तं योन्या विवर्जिते अपत्यध्वंसनं प्रोक्तं कुंडं यत्कंठवर्जितं सिद्धांतशेखरे मान
हीने भवेद्व्याधिरधिके शत्रुवर्धनम् योनिहीने त्वपस्मारो वाग्घीनः कंठवर्जिते तत्रैव स्थंडिलं वा
पि कुर्वंति स्नुसिद्धैः सिकतैः शुभैः हस्तमात्रं प्रविस्तारं समं त्र्यंगुलोच्छ्रितं प्रागुदायाम् निमि
त्तं नैमित्तिकं होमं स्थंडिले वा समाचरेत् हस्तमात्रेण तत्कार्य्यं वालुकाभिः सुशोभनं अथ समि
धः ब्राह्मे शमीपलाशन्यग्रोधप्लक्षवैकंकतोद्भवाः अश्वत्थोडुंबरौ [illegible]
वदारुश्च खदिरश्चेति यज्ञियाः तदभावे कंटकिवर्जं सर्ववनस्पतीनां समि[illegible]कार्य्याः कनिष्ठा[illegible]
लादधिकाः कार्य्याः समित्स्थूलतया क्वचित् न वियुक्ता त्वचा चैव न संकोचेन पाटिता प्रादेशान्नाधिका
नोना न तथा स्याद्विशाखिका न सपर्णाः समित्कार्य्या होमकर्मविजानता भविष्यपुराणे भूमौ स्थि
तेन पात्रेण विहस्तेन च पाणिना वामेन कुरुशार्दूल नांतरिक्षे तु हूयते यतायुर्दा[illegible]सुसोमतीर्थे
न मध्यमं हवनं तेन कर्तव्यं कर्त्तव्यं पावनं तथा कात्यायनः यवाहुतिर्द्वादशपर्वपूरिका रसादिना चे
त्तकपर्वपूरिता दैवेन तीर्थेन च हूयते हविः स्वंगारिणि स्वर्चिषि समिद्धपावके योनर्चिषि जुहोत्यग्नौ
व्यंगारिणि च पावके मंदाग्निरामयावी च दरिद्रश्चोपजायते तस्मात्समिद्धे होतव्यं नासमिद्धे कदाच
दाचन आरोग्यमिच्छतायुश्च श्रियमात्यंतिकीं तथा जुहुयाच्च हविर्द्रव्यं पाणिना स्रुग्स्रुवादिभिः न
कुर्य्यादग्निधमनं कदाचित् व्यजनादिना मुखेनैव धमेदग्निं मुखादग्निरजायत बह्वृचपरिशिष्टे अ
थो धूयः सधूमे तु जुहुयाच्च हुताशने यजमानो भवेदंधः सपुत्र इति शुश्रुम इति ग्रंथांतरे होममुद्रा
त्रयं प्रोक्तं मृगी हंसी च शूकरी शूकरी करसंकोची हंसी मुक्तकनिष्ठिका मृगी कनिष्ठातर्जन्यौ मु
द्रास्तिस्र इतीरिताः शांतिपौष्टिककर्माख्यो मृगीहंस्यौ प्रकीर्तिते इति अथादित्यादिग्रहस्थाप
ने वर्णरूपगुरोर्युक्तान्याहृत्यावाहयेत्तु तान् मात्स्ये देवानां तत्र संस्थाप्य विंशतिर्द्वादशाधिका
आदित्याभिमुखाः सर्वे साधिप्रत्यधिदेवताः ग्रहाणां दक्षिणे पार्श्वे स्थापयेदधिदेवताः तेषामेवो
त्तरे भागे न्यसेत्प्रत्यधिदेवताः विनायकादिस्थापनं ग्रहांतरे इति संप्रदायः दक्षिणपश्चिमवा
यव्योत्तरपूर्वेषु यथाक्रममित्यन्ये राहुमंदद्दिनेशानामुत्तरस्यां यथाक्रमं गणेशदुर्गेवायुं च राहु
केत्वोश्च दक्षिणे आकाशमश्विनौ चेति पंचैतान्स्थापयेद्बुध इति स्कंदपुराणे जन्मभूर्गोत्रमेते

बांजन्मस्थानमुखादिव यो ऽज्ञात्वाकुरुते शांतिं ग्रहास्तेनावमानिताः तत्रैव उत्पन्नो ऽर्कः कलिं
गेषु यमुनायां च चंद्रमाः अंगारकस्तरेवत्यां मगधायां हिमांशुजः सैंधवेषु गुरुर्जातः शुक्रो भो
जकटे तथा शनैश्चरस्तु सौराष्ट्रे राहुर्वै राडिकापुरे अंतर्वेद्यां तथा केतुरित्येता ग्रहभूमयः अथ गो
त्राणि आदित्यः काश्यपो गोत्र आत्रेयश्चंद्रमा भवेत् भारद्वाजो भवेद्भौमस्तथात्रेयश्च सोमजः शक्र
पूज्योंगिरागोत्रः शुक्रो वै भार्गवस्तथा शनिः काश्यपगोत्रीयो राहुः पैठीनसिस्तथा केतवो जैमि-
नीयाश्च ग्रहा लोकहितावहाः भान्वंगारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ सोमपुत्रो गुरुश्चैव तावुभौ
पीतवर्णकौ कृष्णं शनैश्चरं विंद्यात्तथा चित्राश्च केतवः वर्णानुरूपगुणैर्युक्तान् ग्रहानावाहयेन्नतान्
भास्करं मंडलाकारमर्धचंद्राकृतिं विधुं अंगारकं त्रिकोणं तु बुधं बाणाकृतिं तथा पद्माकारं गुरुं
विंद्याच्चतुःकोणं तु भार्गवं दंडाकृतिं शनिं राहुं मकराकारमेव च खड्गाकारस्तथा केतुः स्थापयेदनु
पूर्वशः अथ स्थानानि मध्ये तु भास्करं विंद्यात्सोमं पूर्वोत्तरेण तु दक्षिणे तु धरापुत्रं बुधं पूर्वोत्तरेण
तु उत्तरेण गुरुं विंद्यात्पूर्वेणैव तु भार्गवं शनैश्चरं पश्चिमायां राहुं दक्षिणपश्चिमे पश्चिमोत्तरतः के
तुं स्थापयेदनुपूर्वशः आदित्याभिमुखाः सर्वे साधिप्रत्यधिदेवताः शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौ
म्यावुदङ्मुखौ प्रत्यङ्मुखः शनिः प्रोक्तः शेषा दक्षिणतोमुखाः इति अथाधिदेवताः प्रत्यधिदेवता
श्च मात्स्ये भास्करस्येश्वरं विंद्यादुमां च शशिनस्तथा स्कंदमंगारकस्यापि बुधस्यापि हरिं तथा ब्रह्म
णं च गुरोर्विद्याच्छुक्रस्यापि शचीपतिं शनैश्चरस्यापि यमं राहोः कालं तथैव च केतूनां चित्रगुप्तं च
सर्वेषामधिदेवताः प्रत्यधिदेवताश्च तत्रैव अग्निरापः क्षितिर्विष्णुरिंद्र ऐंद्री च देवताः प्रजापतिः स
र्पा ब्रह्मा प्रोक्ताः प्रत्यधिदेवताः अथैषां समिधः अर्कः पलाशः खदिरो ह्यपामार्गोथ पिप्पलः उदुंब
रः शमी दूर्वा ग्रहाणां समिधः क्रमात् अथ होमद्रव्यमानं सिद्धांतशेखरे होमद्रव्यप्रमाणानि कथ्यंते
च यथाक्रमं कर्षप्रमाणमाज्यं स्यान्मधुक्षीरं च तत्समं तंदुलानां शुक्तिमात्रं पायसं प्रसृतेः समं कर्षप्र
माणं भक्ष्याणि लाजा मुष्टिमिता मता अन्नं ग्राससमं ग्राह्यं शाकं ग्रासार्धमात्रकं मूलानां तु त्रिभागः स्या
त्कंदानामष्टमांशकः इक्षुः पर्वप्रमाणः स्यादंगुलद्वितयं मता प्रादेशमात्राः समिधो व्रीहीणां मंज
लीसमाः तिलसक्तुकणादीनां मृगीमुद्राप्रमाणतः पत्रपुष्पफलादीनां प्रमाणाहुतिरिष्यते
चंदनश्रीखंडकस्तूरीकुंकुमागुरुकर्दमाः हरिमंथसमाः प्रोक्ता गुग्गुलुर्बदरोपमः हरिमंथश्चण
कः आहुतीनामिदं मानं कथितं वेदवादिभिः स्यात्त्रिमूर्धा मृगीमुद्रा होमे सर्वफलप्रदेति मा
नांतरमत्र शारदातिलकटीकायां पदार्थादर्शे कर्षमात्रमितं होमे शुक्तीमात्रं पयः स्मृतं उक्ता
नि पंचगव्यानि शुक्तिमात्राणि साधुभिः तत्समे दधिदुग्धे च ग्राससमात्रमुदाहृतं दधिप्रसृतिमात्रं
स्याल्लाजाः सुमुष्टिसंमिताः पृथुकास्तत्प्रमाणास्तु सक्तवोपि तथाविधाः पलार्धं गुडमानं च शर्क
रापि तथाविधाः ग्रासार्धमात्रमन्नानामिक्षुः पर्वप्रमाणकः एवं स्यात्पत्रपुष्पं च तथा धूपादिक
ल्पयेत् मातुलिंगं चतुःखंडं पनसं दशधाकृतं अष्टधा नारिकेलं च चतुर्धा कदलीदलं द्विधाढ
तफलं बैल्वं कपित्थं खंडितं द्विधा व्रीहयो मुष्टिमात्राः स्युर्मुद्गा माषा यवास्तथा तंडुलास्तु स्तद
ढीशाः कोद्रवा मुष्टिसंमिताः लवणं शुक्तिमात्रं स्यान्मरिचान्येकविंशतिः हुतस्य कार्षिको हो
मः क्षीरसमपुनस्तथा शुक्तिमात्राहुतिर्दध्नः प्रसृतिः पायसस्य तु खंडत्रयं तु मूलानां फलानां
स्वप्रमाणतः ग्राससमात्रं तु होतव्याइतरेषां च तंडुलाः अक्षतास्तु यवाः प्रोक्ता अभावे व्रीहयः स्मृ
ताः तदभावे तु गोधूमा नतु खंडिततंडुलाः येषां केषांचिदन्येषां द्रव्याणामप्यसंभवे सर्वत्राज्य
मुपादेयं भारद्वाजमुनेर्मतात् सर्वप्रमाणमाहुत्याः पंचांगुलगृहीतयेति तथा इक्षूणां पर्व

कंमानंतलतानामंगुलिद्वयं चंद्रचंदनकाश्मीरकस्तूरीयक्षकर्दममान् कलापसम्मिता नेतांगु
गुलंतुवदरास्थिवत् द्रव्यंस्रुवेणहोतव्यंपाणिनाकठिनंहविः स्रुवपूर्णाःद्रवाःप्रोक्ताःकठिना।
ग्रासमात्रकाः व्रीहयोयवगोधूमप्रियंगुतिलशालयः स्वरूपेणैवहोतव्याःइतरेषांचतंडुलाः
अथऋत्विग्वरणम् हेमाद्रौमात्स्ये वालाग्निहोत्रिणंविप्रंस्तुपंचगुणान्वितम् सपत्नीकं
चसंपूज्यभूषयित्वाचभूषणैः पुरोहितंमुख्यकर्मकृत्वान्यांश्चतथर्त्विजः चतुर्विप्राङ्गुणोपे
तान्सपत्नीकान्निमंत्रितान् हेमतावरसंछन्नान्स्रग्विणःशुचिभूषितान् अंगुलीयका।
नितथाकर्णवेष्टान्प्रदापयेत् तत्रैवलैंगे वस्त्रयुग्मंतथोष्णीकंकुंडलेकंठभूषणम्
अंगुलीभूषणंचैवमणिवंधस्यभूषणं एतानिचैवसर्वाणिप्रारंभेसर्वकर्मणां पुरोहिता
यदत्वाथऋत्विग्भ्यःसंप्रदापयेत् पूर्वोक्तभूषणंसर्वंसोष्णीकंवस्त्रसंयुतं दद्यादेतत्प्रयो
क्तृभ्यआच्छादनपटंतथा व्रतानामधुपर्कमाह तत्रैवविश्वामित्रः संपूज्यमधुपर्केणऋ
त्विग्भ्यःकर्मकारयेत् अपूज्यकारयन्कर्मकिल्विषेनैवयुज्यते ऋत्विक्संख्यामाहमात्स्ये
हेमाद्रौकारिणःकार्याःपंचविंशतिऋत्विजः दीक्षयेच्चसमंसर्वान्नाचार्यंद्विगुणंभवेदिति
दक्षिणयाद्विगुणयाचार्यंतोषयेदित्यर्थः अत्रकार्यानुसारेणपंचविंशतिषोडशाष्टौवा
चत्वारोवाऋत्विजोभवंति नवग्रहमखेतुचत्वारोऋत्विजः स्कांदे नवग्रहमखेकुर्या
दृत्विजश्चतुरःशुभान् अथवाचैकमभ्यर्च्यविधिनाब्राह्मणंसह अत्राचार्यब्रह्मणोर्वर
णादिकमावश्यकमितिनिष्कृष्टोर्थः अथसर्वतोभद्रंहेमाद्रौस्कांदे प्रागुदीच्यागता:
रेखाःकुर्यादेकोनविंशतिः एवंकुस्त्रिपदःकोणःशृंखलाःपंचभिःपदैः एकादशपदा
वल्लीभद्रंतुनवभिःपदैः चतुर्विंशत्पदावापिपरिधिर्विंशतिःपदा मध्येषोडशभिःकोष्ठैः
पद्ममष्टदलंस्मृतं श्वेतेंदुःशृंखलाकृष्णावल्लीनीलेनपूरयेत् भद्रारुणासितावापिपरिधिः
पीतवर्णिका वाह्यांतर्दलाःश्वेताःकर्णिकापीतवर्णिकाः परिध्यावेष्टितंपद्मंवाह्यसत्वर
जस्तमः तन्मध्येस्थापयेद्देवान्ब्राह्मणाश्चसुरासुरान् इतिसर्वतोभद्रं अथचतुर्लिंगतोभ
द्रं रेखास्त्वष्टादशप्रोक्ताश्चतुर्लिंगसमुद्भवे कोणेंदुस्त्रिपदःश्वेतःस्त्रिपदैःकृष्णशृंखलाः
वल्लीसप्तपदानीलाभद्रंरक्तंचतुष्पदं भद्रपार्श्वेमहारुद्रंकृष्णमेकादशाःपदैः शिवस्यपा
र्श्वतोवापिकुर्यात्पंचपदांशुभां पदमेकंतथापीतंभद्रवाप्योस्तुमध्यतः शिरसिशृंखला
याश्चकुर्यात्पीतंपदत्रयं लिंगानांस्कंधतःकोष्ठाविंशतीरक्तवर्णकाः परिधिःपीतव
र्णस्तुपदैःषोडशभिस्स्मृतः पदैस्तुनवभिःपश्चाद्रक्तंपद्मंसकर्णिकं अथाष्टलिंगतो
भद्रं आग्नेये चतुर्विंशतिरालेख्यारेखाःप्रागुदक्षिणायताः कोणेषुशृंखलाःपंचपदा
वल्यस्तुपार्श्वतः पदैर्नवभिरालेख्यास्त्वतुर्भिर्लघुशृंखलाः लघुवल्यःपदैःषड्भिस्ततो
ष्टादशभिःपदैः कृत्वालिंगानिवाप्यास्तुत्रयोदशभिरंतरा ततोवीथीद्वयेनैवपीठं
कुर्याद्विचक्षणः तस्यापदाःपंचपदाद्वाराण्यपितथैवच एकाशीतिपदंमध्येपद्मंस्व
स्तिकमुच्यते कोणेषुशृंखलाःकार्याःपदैस्त्रिभिरितःपरं पदैश्चतुर्भिर्दिक्षुभद्रा।
णिपंचसमंततः एकादशपदावल्यामध्येष्टदलमालिखेत् पद्मंनवपदस्येवंलिंगतोभ
द्रमुच्यते शृंखलाःकृष्णवर्णेनवल्लीनीलेनपूरयेत् "लिंगानिकृष्णवर्णानिश्वेतेनवा
प्यथवापिका: पीठंसंपाद्यश्वेतेनपीतेनद्वारपूरणं मध्येनशृंखलारक्तावल्लीनीले
नपूरयेत् भद्राणिपीतवर्णानिपीतापंकजकर्णिका दलानिश्वेतवर्णानियद्वाचित्रा।

रक्तेन शृंखलां लघ्वीं वल्लीं पीतेन पूरयेत्

णिकारयेत् तिस्रो रेखा बहिः कार्य्याः सितरक्ताः सिताः क्रमात् इत्यष्टलिंगतोभद्रम् अथ
द्वादशलिंगतोभद्रम् तत्रैव प्रागुदीच्यायता रेखाः षड्विंशत्परिकल्पयेत् पदानि द्वादशाग्रा
नि पंचविंशतिरेव च खेंडेंदुस्त्रिपदः कोणे शृंखलाः षट्पदैः स्मृताः त्रयोदशपदा वल्ली भद्रं
तु नवभिः पदैः त्रयोदशपदा वापि लिंगमष्टादशैः स्मृतं लिंगत्रयस्य पंक्तौ तु शोभा कोष्ठा
श्चतुर्दश तेषामुपरि पंक्तौ तु कोष्ठाः सप्तदशैव तु पूजापंक्तिस्तु विज्ञेया यदितः परिकल्पि
ताः पूजापंक्त्यन्तरा पंक्तौ कोष्ठाश्चाशीतिसंख्यया परिधिः स तु विज्ञेयो मध्यमंडलयो
र्द्वयोः परिध्यंतरकोष्ठेषु सर्वतोभद्रमालिखेत् विशेषश्चात्र विज्ञेयः शृंखला षट्पदा
भवेत् त्रयोदशपदा वल्ली भद्रं तु नवभिः पदैः पंचविंशत्पदा वापी परिधिः षोडशात्म
कः भद्रवाप्यंतराले तु त्रिपदं चित्रवर्णकं मध्ये नवपदं पद्मं कर्णिकाकेसरान्वितं
सत्वरजस्तमोवर्णपरितो मंडलस्य तु त्रयः परिधयः कार्य्यास्तत्र द्वाराणि कारयेत् सि
तेंदुः शृंखलाः कृष्णा वल्ली नीला प्रकीर्तिता भद्रं चैवारुणं ज्ञेयं वापी स्यात् श्वेतवर्णिका
लिंगानि कृष्णवर्णानि पार्श्वतो द्वादशैव तु परिधिः पीतवर्णः स्यात्क्रम[illegible]वर्णकं
इति द्वादशलिंगतोभद्रं अथैकलिंगतोभद्रम् गौरीतिलके तिर्यगूर्ध्वगता रेखाः कार्याः
[illegible]स्त्रयोदश कोणेंदुस्त्रिपदः कार्य्यः शृंखला त्रिपदा स्मृता वल्ली तु षट्पदा नीला भ
द्रकं प्रकल्पयेत् पदैर्द्वादशभिस्पष्टमुत्तरे पूर्वदक्षिणे पश्चिमायां महारुद्र श्रेष्ठ लिंगानि को
ष्ठकैः लिंगपार्श्वे तथा भूयः अष्टौ कोष्ठाः सपीतकाः लिंगमेकं तथा गौर्य्या क्षिप्त्वा तत्र रक्तमं
डलं पूजयेत्तंदुलैः श्वेतैस्तस्य गौरी प्रसीदति इदं च गौरीव्रतेषु पूजनीयम् अथ सर्वतो
भद्रमंडले देवतापूजाक्रमः तत्रायं संग्रहः कल्पद्रुमे आसनोपरि संविश्य न्यासजालं वि
धाय च शंखं प्रपूजयेदग्रे गंधपुष्पाक्षतादिभिः कलशं वामभागस्थं पूजाद्रव्याणि चाद
रात् विलिखेत्सर्वतोभद्रं वेदिकोपरि सुंदरं सर्वव्रतेषु समुदितं सर्वतोभद्रमंडले तत्र देवताः
मध्ये ब्रह्मा तथा दिक्षु सोमाद्याश्चाष्टदेवताः वायुसोमद्वयोर्मध्ये वसूनष्टौ समर्चयेत् सोम
ईशानयोर्मध्ये रुद्रानेकादशैव तु इंद्रईशानयोर्मध्ये आदित्यान्द्वादशैव तु इंद्राग्निमध्ये त
थाश्विनौ द्वौ प्रपूजयेत् आग्नेययमयोर्मध्ये विश्वेदेवान्सपैतृकान् याम्यनैर्ऋतयोर्म
ध्ये समयक्षांश्च पूजयेत् नैर्ऋत्यजलयोर्मध्ये नागान्भूतांश्च पूजयेत् आप्यवायव्ययोर्मध्ये
गंधर्वाप्सरसो यजेत् ब्रह्मसोमद्वयोर्मध्ये महादेवगणान्यजेत् स्कंदं नंदीं वृषं शूलं महादेवं
तथांबिकां ब्रह्मेशानद्वयोर्मध्ये दक्षादीन्सम्प्रपूजयेत् ब्रह्मेंद्रयोस्तथा मध्ये दुर्गां विष्णुं तथै
व च ब्रह्माग्निमध्ये च तथा स्वधां तत्र प्रपूजयेत् ब्रह्मणो निर्ऋतेर्मध्ये गणेशं तु प्रपूजयेत्
वरुणब्रह्मणोर्मध्ये आपः संपूजयेत्ततः मध्ये वायोर्ब्रह्मणश्च मरुतः संप्रपूजयेत् ब्रह्मणः
पादमूले तु मेदिनीं परिपूजयेत् कावेरी नर्मदा चैव यमुना च सरस्वती गंगा कृष्णा तथा गो
दाः सप्त सागराः क्षारक्षीरमधुसर्पिर्मेदधिक्षुदधिसंभवाः ब्रह्मजज्ञानमित्याद्यैर्मं
त्रैः स्थाप्यास्तु देवताः गंधपुष्पादिभिः पूज्या दीपान्दद्याच्च सर्वतः सर्वत्र भद्रं यस्मात्तत्सर्वतो
भद्रमुच्यते मंडलाद्बहिः स्थाप्यास्तु देवैरिंद्रादिभिः सह वज्रं शूलं तथा शक्तिं दंडं खड्गं तथैव
च पाशं ध्वजं चांकुशं वा गदां च परिपूजयेत् गौतमं च भरद्वाजं विश्वामित्रं च कश्यपं जमद
ग्निं वसिष्ठात्रीन् अरुंधतीयुतान्यजेत् सूर्यादिकान्ग्रहान्सर्वान्मेषादिराशिसंयुतान् माहे
न्द्रीमथ कौमारीं ब्राह्मीं वाराहरूपिणीं चामुंडां वैष्णवीं देवीं माहेशीं च विनायिकीं वेदमं

दैः प्रतिष्ठाप्य प्रत्येकं सह पूजयेत् स्थापनं प्रत्येकं कुर्य्यात् पूजनं च सह मिलितोपचारैः कार्य्यमि
ति स्मृतिकारः पंथाः अथाग्निकार्य्यकुण्डिकाक्रमो नारदीये कुशाः परिसमूह्याय समशाखाः प्रकी
र्त्तिताः गोमयेनोपलिप्यं यन्तदर्थमिति नारद वेष्याडुष्टा च हीनांगी मृतवत्सा च या भवेत् यज्ञा
र्थं गोमयं तस्या नाहरेदिति भाषितं येऽग्रमंति सदा काशेपतेगाद्याभयंकराः तेषां प्रहरणार्थाय
स्मृतं प्रोद्धरणं द्विज स्रुवेण च कुशेनापि कुर्यादुल्लेखनं स्रुवः अस्थिकंटकशुद्ध्यर्थं ब्रह्मणा परि-
भाषितं आपो देवगणाः सर्वे तथा पितृगणा द्विज तेनाद्भिः प्रोक्षणं प्रोक्तं मुनिभिर्विधिको-
विदैः अग्नेरानयनं प्रोक्तं सौभाग्यस्त्रीभिरेव च शुभदं मृण्मये पात्रे प्रोद्धृत्याग्निं स्त निधापयेत्
अमृतस्रवणं दृष्ट्वा ब्रह्माद्यैः सर्वदेवतैः वेद्यां निधापितस्तस्मात्समिद्भिर्मां हुताशनः दक्षिण
स्यां दानवाद्याः स्थिता यज्ञस्य नारद तेभ्यः संरक्षणार्थाय ब्रह्माणं तद्दिशि न्यसेत् उत्तरे सर्व
पात्राणि प्रणीताद्यानि पश्चिमे यजमानान्पूर्वतः सुद्विजाः सर्वेपि नारद द्यूते च व्यवहारे च
यज्ञकर्मणि चेद्भवेत् कर्त्रौदासीनचित्तस्तत्कर्मनस्यादितिस्थितिः ब्रह्माचार्य्यौ स्वशाखौद्विक
र्त्तव्यौ यज्ञकर्मणि ऋत्विजां नियमो नास्ति यथालाभं समर्चयेत् द्वे पवित्रे द्व्यंगुले स्तः प्रोक्ष
णी चतुरंगुला आज्यस्थाली त्र्यंगुला च चरुस्थाली षडंगुला द्व्यंगुलं तूपयमनमेकं संमार्जना
कुशं स्रुवं षडंगुलं प्रोक्तं स्रुचं सार्धत्र्यंगुलं प्रादेशमात्राः समिधः पूर्णपात्रं षडंगुलं अत्र प्रो
क्षणपादीनां चतुरंगुलादिमानं मुखविस्तारे देयं तात्स्थूलत्वादिमानं यथासंभवं वाच्यं पूर्ण
पात्रषडंगुलमितिमुखविस्तारेत्तेयं तत्र तंडुलमानं यथा अष्टमुष्टिर्भवेत्कुंचिः कुंचाः अष्टौ
तु पुष्कलं पुष्कलानि च चत्वारि पूर्णपात्रं विदुर्बुधाः प्रोक्षण्या उत्तरे भागे प्रणीतापात्रमंग-
भिः यानि कानि तीर्थानि समुद्राः सरितस्तथा प्रणीतायां समासीनास्तस्मात्तोयं शरये-
त्तैः वेदिका वस्त्रहीना च न ग्रासंशोच्यते द्विज परिस्तीर्य्य ततो दर्भैः पवित्रद्वयादिमां बुधः
इंद्रवज्रं विष्णुचक्रं यस्त्वदंडत्रिशूलकं दर्भत्रयं तथा त्रीणि पवित्रच्छेदनानि च प्रोक्षणीं च प्रक
र्त्तव्या प्रणीतोदकसंयुता तेनाति पुण्यदं कर्म पवित्रमिति कीर्त्तितं आज्यस्थाली प्रकर्त्तव्या
पलमात्रप्रमाणिका कुलालचक्रघटितमासुरं मृण्मयं स्मृतं तदेव हस्तघटितं स्थाल्यादि दै
विकं भवेत् स्रुव एव सर्वकर्माणि शुभान्यशुभानि च तस्यैव पावनार्थं तु वह्नौ तापनमीरितम्
अग्रे हुतेन वै यस्मान्मध्ये चैव प्रजाक्षयः मूले च म्रियते होता तेन तापनमीरितं अग्रेण तस्माद्धि
शुद्ध्यर्थं तद्द्विचार्यं प्रयत्नतः अग्निः सूर्यश्च सोमश्च विरंचिरनिलो यमः स्रुवे षडेते देवास्तु प्र-
त्यंगुलमुपाश्रिताः अग्निर्भोगार्थनाशाय सूर्यो व्याधिकरो भवेत् निष्फलस्तु स्मृतः सोमो
विरिंचिः सर्वकामदः अनिलो वृद्धिदः प्रोक्तो यमो मृत्युप्रदो मतः संमार्जनोपयमनके तु व्य
चकुशद्वयं सर्वतः सर्वशाखस्यान्यच्च शाखेन तथापरं श्रीपर्णी च शमी तद्वत् खदिरश्च विकंक
तः पलाश एव विज्ञेया स्रुवे चैव तथा स्रुवे हस्तोन्मितं स्रुवं शस्तं त्रिदशांगुलकं स्रुवं विप्रा
णां चैतदाख्यातमन्येषामंगुलोनकं शूद्राणां पतितानां च खरादीनां च नारद दृष्टिदोषविना
शार्थं पात्राणां प्रोक्षणं स्मृतं अकृतं पूर्णपात्रं तु यज्ञच्छिद्रं समुद्भवेत् तस्मिन्पूर्णाहुते विप्र
यज्ञसंपूर्णता भवेत् अष्टमुष्टिर्भवेत्किंचित्पुष्कलं तच्चतुष्टयं पुष्कलानि च चत्वारि पूर्णपात्रं
तु विदुर्बुधाः होमकाले च संप्राप्ते न दद्यादासनं क्वचित् दत्ते तु मोघं भवेद्वह्निः शापं दद्याच्च दा
रुणं आघारौ नासिके प्रोक्ते आज्यभागौ च चक्षुषी प्राजापत्यं मुखं प्रोक्तं कटिर्व्याहृतिभिः
स्मृता शीर्षहस्तौ च पादौ च पंचवारुणमीरितं तथा स्विष्टचं तं विप्र श्रोत्रे पूर्णाहुतिः स्मृता

द्विमुखं चैकहृदयं चतुःश्रोत्रं द्विनासिकं द्विशीर्षकं च षट्नेत्रं पिंगलं सप्तजिह्वकं सव्यभागे त्रि
हस्तं च चतुर्हस्तं च दक्षिणे स्रुक्स्रुवौ चाक्षमाला च शक्तिर्दक्षिणके करे त्रिमेखलं त्रिपादं च
घृतपात्रं द्विचामरं मेषारूढं चतुःशृंगं बालादित्यसमप्रभं उपवीतसमायुक्तं जटाकुंडलमंडितं
ज्ञात्वैवमग्निदेहं तु होमकर्म समाचरेत् पयो दधि घृतं चैव स्नेहरूपं क्रमात्तथैव च जुहुयाद्यस्तु रु
द्रेण स विप्रो ब्रह्महा भवेत् यदन्नं पुरुषोश्नाति तदन्नं तस्य देवताः सर्वकामसमृद्ध्यर्थं तिला
धिकं हविर्मतं होमे मुद्रात्रयं प्रोक्तं मृगी हंसी च सूकरी अभिचारे सूकरी स्यान्मृगी हंसी शु
भात्मिके सर्वांगुलीभिः क्रोडी स्याद्धंसी मुक्तकनिष्ठिका मध्यमानामिकांगुष्ठैर्मृगीमुद्रा
प्रकीर्तिता पर्वप्रमाणया हुत्वा पंचांगुलिगृहीतया दधिमध्वाज्यसंयुक्तै रत्निभिर्जुहु
यात्तिलैः कुशास्त्वनामिकासक्ताः कार्याः स्युः पुण्यकर्मणि विनायकः कर्मविघ्नसिद्ध्यर्थं
विनियोजितः गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा इत्यादिनाग्रे विनायकशांत्यादिक्र
मोभिहित अप्रकृतत्वान्नेह लिखितः अथानंतरं कृत्यं भविष्योत्तरे रामनामोद्यापने
ततोग्निं प्रतिष्ठाप्य स्वशाखोक्तविधानतः विष्णुसूक्तेन होतव्यं मूलमंत्रेण वा पुनः नवग्रह
स्य दिक्पालानां मंत्रानुक्त्वा तु होमयेत् पुरुषसूक्तेन होतव्यं समिदाज्यचरुस्तिलाः पूजयित्वा
ततो वह्निं बलिं पूर्णाहुतिं तथा श्रेयः संपाद्य दानं च अभिषेकं समाचरेत् आचार्यं पूजयेत्प
श्चात्स्वर्णयुतधेनुभिः प्रतिमां दानमंत्रेण आचार्याय निवेदयेत् प्रतिमादानसिद्ध्यर्थं शक्त्या
स्वर्णं तु दापयेत् दानं यद्दक्षिणाहीनं तत्सर्वं निष्फलं भवेत् ब्राह्मणान् शतसाहस्रं भोज
येन्मधुसर्पिषा पक्वान्नैः पायसैः खाद्यैः कदलीशर्करान्वितैः ऋत्विग्भ्यो दक्षिणां दत्वा भू
यसीं दक्षिणां ददेत् तदंते घृतपात्रं च तिलपात्रं च कांचनं शय्या च वस्त्रदानादि दश दानानि
शक्तितः अशक्तश्चेत्स्वर्णमेव दत्वा विप्रान्क्षमेत् पुनः तिलकं कारयेत्पश्चादभिषिंचेत्सपल्लवैः
पूर्वमाचार्यकृतोभिषेकः अत्र च विप्रकृत इति विवेकः द्विजैस्तथाशिषो देया नत्वा स्तुत्वा
विसर्जयेत् इति श्रीमन्महाराजकारिते श्रीरणवीरसिंहरत्नाकरे धर्मकर्मनिबंधे सर्व
व्रतोपयुक्ता सामान्योद्यापनकृत्यपरिभाषा

अथोद्यापनसामान्यप्रयोगः तत्रादौ स्वस्तिवाचनं पुण्याहवाचनं वृद्धिश्राद्धं च गणपतिमा
तृकापूजनं च कार्यं त्रिकांडमंडनः गर्भाधानादिसंस्कारेष्विष्टापूर्तादिकर्मसु वृद्धिश्राद्धं प्र
कार्यं कर्मादौ स्वस्तिवाचनं उपनयनादिमहत्सु कर्मसु एकविंशत्यहो यज्ञे विवाहे दश वासरा
न् त्रिषट् चौलोपनयने नांदीश्राद्धं विधीयते इति वचनात्पूर्वं च कार्यं अल्पकार्येषु तदह्न्येव
संक्षिप्तविधिना कार्यं अत्र व्रतकर्ता एकादश्यादिव्रतोद्यापनादिचिकीर्षुः पूर्वेद्युः कृतह
विष्यादिनियमो व्रतदिने प्रातः समुत्थाय कृतनित्यक्रियः सन् अहतशुक्लांबरधरः प्रक्षा
लितचरणपाणिर्मंडपपश्चिमद्वारसमीपे प्राङ्मुखो वोदङ्मुखो महतां ब्राह्मणानामाज्ञा
मादाय तेभ्यो नमस्कृत्य देवेभ्यश्च तिलकं विधाय आचम्य तूर्यमृदंगादिमंगलस्वस्तिवाचन
ध्वनौ प्रवर्तमाने सति पत्न्या सह ग्रंथिबंधनं कृत्वा कुशत्रयतिलयवजलान्यादाय प्रतिज्ञासं
कल्पं कुर्यात् ॐ मद्यामुकमासेऽमुकपक्षेऽमुकतिथावमुकवासरादौ मम सकलपापक्षयपूर्वक
श्रीपरमेश्वरप्रीत्यर्थं स्मृतिपुराणोक्तफलप्राप्त्यर्थं चैकादश्याद्यमुकव्रतोद्यापनकर्माहं
करिष्ये इति संकल्प्य ततः कंकणबंधनं कुर्यात् ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं प
श्येमाक्षभिर्यजत्राः स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः इति मंत्रेण ग्रंथि

बंधनम् ततोब्राह्मणान्संपूज्य स्वस्तिवाचनंकारयेत् व्यासः संपूज्यगंधमाल्याभिर्ब्राह्मणान्स्वस्ति
वाचयेत् आश्वलायनः वैदिकेतांत्रिकेचादौ ततःपुण्याहमिष्यते श्रीनयिकान्ब्राह्मणान्तांबूला
दिनापरितोष्योदङ्मुखानुपवेश्य पुण्याहंभवंतोब्रुवंत्विति ब्राह्मणान्यजमानस्त्रिःश्रावयेत् त
तोब्राह्मणाः पुण्याहंपुण्याहंपुण्याहं तत्रवाक्यं ब्राह्मंपुण्यमहोयच्चसृष्ट्युत्पादनकारकं
वेदवृक्षोद्भवंनित्यंतत्पुण्याहंब्रुवंत्विति पुनंतुमांदेवजनाःपुनंतुमनसाधियः विश्वेदेवापु
नीहिजातवेदःपुनीहिमां १ भोब्राह्मणाअस्ययजमानस्यगृहेकल्याणंभवंतोब्रुवंत्विति त्रिः
श्रावयेत् कल्याणंकल्याणंकल्याणं वाक्यंच पृथिव्यामुद्धृतायांतुयत्कल्याणंपुराकृतं
ऋषिभिःसिद्धगंधर्वैःतत्कल्याणंब्रुवंतुनः यथेमांवाचंकल्याणीमावदानिजनेभ्यः ब्रह्म
राजन्याभ्यांशूद्रायशर्वायचरणायच प्रियोदेवानांदक्षिणायैदातुरिहभूयासमयंमेकामः
समृद्ध्यतां २ भोब्राह्मणाअस्ययजमानस्यगृहे ऋद्धिंभवंतोब्रुवंतु ऋद्धिःऋद्धिःऋद्धिः साग
रस्ययाऋद्धिर्महालक्ष्म्यादिभिःकृता संपूर्णासुप्रभावाचतामृद्धिं संब्रुवंतुनः मंत्रः सत्रा
स्यऋद्धिरगमन्ज्योतिरमृताअभूत दिवंपृथिव्याअध्यारुहामाविदामदेवानांस्वर्ज्योतिः दात्रि
यऋद्धिः ३ भोब्राह्मणाअस्ययजमानस्यगृहेस्वस्तिभवंतोब्रुवंतु ॐस्वस्तिस्वस्तिस्वस्ति ३
मंत्रः स्वस्तिर्याअविनाशाख्यापुण्यकल्याणवृद्धिदा विनायकप्रियानित्यंतांस्वस्तिंसंब्रुवंतु
नः स्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनो
बृहस्पतिर्दधातु एतच्चब्राह्मणानन्नेनपरितोष्यपुण्याहंस्वस्तिऋद्धिरित्योंकारपूर्वकंत्रि
स्त्रिरेकैकामाशिषोवाचयित्वेत्यादिनाबोधायनेनोक्तं यमः पुण्याहवाचनंदैवंब्राह्मणस्य
विधीयते एतदेवनिरोंकारंकुर्यात्क्षत्रियवैश्ययोः इतिबह्वृचपरिशिष्टेतु अवनिकृतजा
नुमंडलः कमलमुकुलसदृशमंजलिंशिरस्याधायदक्षिणेनपाणिनासुवर्णपूर्णकलशं
धारयित्वा दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिच तेनायुःप्रमाणेनपुण्याहंदीर्घमायुर
स्तु शिवाआपःसंतु सौमनस्यमस्तु अक्षतंचारिष्टमस्तु गंधाःपांतु सुमंगल्यंचास्तु
अक्षताःपांतु आयुष्यमस्तु पुष्पाणिपांतु सौश्रियमस्तु तांबूलाःपांतु ऐश्वर्यमस्तु दक्षिणाः
पांतु आरोग्यमस्तु दीर्घमायुः शांतिःपुष्टिस्तुष्टिःश्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंचायुष्यं
मेस्त्वयंकृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारंभाःशुभाःशोभनाः प्रवर्तंते तमहमोंकारमादि
कृत्वाऋग्यजुःसामाशीर्वचनंबहुऋषिमतंसमनुज्ञातंभवद्भिरनुज्ञातः पुण्याहंवाचयिष्ये
वाच्यतां भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः स्थिरैरंगैस्तुष्टुवांसस्त
नूभिर्व्यशेमदेवहितंयदायुः १ द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनरस्यप्रयंसत्
द्रविणोदावीरवतीमिषंनोद्रविणोदारासतेदीर्घमायुः २ सवितापश्चात्तात्सवितापुरस्तात्सवि
तोत्तरात्तात्सविताधरात्तात् सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः ३ नवोन
वोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रे भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतेदीर्घ
मायुः ४ उच्चादिविदक्षिणावंतोअस्थुर्येअश्वदाःसहतेसूर्येण हिरण्यदाअमृतत्वंभजंते
वासोदाःप्रतिरंतआयुः ५ पुण्याहंब्रूयात् व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टा
नांसर्वेषांब्राह्मणानांमनःसमाधीयताम् समाहितमनसःस्मः प्रसीदंतुभवंतः प्रसन्नाः
स्मः शांतिरस्तु पुष्टिरस्तु तुष्टिरस्तु वृद्धिरस्तु अविघ्नमस्तु आरोग्यमस्तु आयुष्यमस्तु शिवंक
र्मास्तु कर्मसमृद्धिरस्तु पुत्रसमृद्धिरस्तु धनधान्यसमृद्धिरस्तु इष्टसमृद्धिरस्तु अरिष्टनिरस

नमस्तु यत्पापं तत्प्रतिहतमस्तु यच्छ्रेयस्तदस्तु उत्तरोत्तरमहरहरभिवृद्धिरस्तु उत्तरोत्तराः क्रि
याः शुभाः शोभनाः प्रवर्तन्तां तिथिकरणमुहूर्तनक्षत्रसंपदस्तु तिथिकरणमुहूर्तनक्षत्रग्रह
लग्नाधिदेवताः प्रीयन्ताम् तिथिकरणे मुहूर्ते नक्षत्रे सग्रहे सदैवते प्रीयेताम् अग्निपुरोगा वि
श्वेदेवाः प्रीयन्तां इन्द्रपुरोगाः मरुद्गणाः प्रीयन्तां वसिष्ठपुरोगाः ऋषिगणाः प्रीयन्ताम् माहेश्व
रीपुरोगा उमामातरः प्रीयन्तां अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्तां विष्णुपुरोगाः सर्वे देवाः प्रीय
न्तां ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्तां ब्रह्मा च ब्राह्मणाश्च प्रीयन्तां श्रीसरस्वत्यौ प्रीयेतां भग
(श्रद्धामेधे प्रीयेतां)
वती कात्यायनी प्रीयतां भगवती माहेश्वरी प्रीयतां भगवती ऋद्धिकरी प्रीयतां भगवती वृ
द्धिकरी प्रीयतां भगवन्तौ विघ्नविनायकौ प्रीयेतां सर्वाः कुलदेवताः प्रीयन्तां हता ब्रह्मद्वि
षः हताः परिपन्थिनः हताश्च विघ्नकर्तारः शत्रवः पराभवं यान्तु शाम्यन्तु घोराणि शाम्यन्तु पापा
नि शाम्यन्त्वीतयः शुभानि वर्धन्तां शिवा आपः सन्तु शिवा अग्नयः सन्तु शिवा आहुतयः सन्तु
शिवा वनस्पतयः सन्तु शिवा अतिथयः सन्तु अहोरात्रे शिवे स्यातां निकामे निकामे नः पर्ज
न्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पतां शुक्राङ्गारकबुधबृहस्प
तिशनिराहुकेतुसोमसहिता आदित्यपुरोगमाः सर्वे ग्रहाः प्रीयन्तां भगवान्नारायणः प्रीय
तां भगवान्पर्जन्यः प्रीयतां भगवान्स्वामी महासेनः प्रीयतां पुण्याहकालं वाचयिष्ये वा
च्यतां उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि वृषेव वाजी शिशुमतीर
पीत्या सर्वतो नः शकुने भद्रमावद विश्वतो नः शकुने पुण्यमावद याज्यया यजति प्रतिवैया
ज्या पुण्येव लक्ष्मीः पुण्यामेव तल्लक्ष्मीं संभावयति पुण्यां लक्ष्मीं संस्कुरुते यत्पुण्यं नक्ष
त्रं तद्वत्कुर्वीतोपव्युषं यदा वै सूर्य उदेति अथ नक्षत्र उदेति यावति तत्र सूर्यो गच्छेत् यत्र
जघन्यं पश्येत तावत्कुर्वीत यत्कारी स्यात् पुण्याह एव कुरुते पुण्याहं भवन्तो ब्रुवन्तु ओं पु
ण्याहं स्वस्तये वायुमुपब्रुवामहे सोमं स्वस्ति भुवनस्य यस्पतिः बृहस्पतिं सर्वगणं स्वस्तये
स्वस्तय आदित्यासो भवन्तु नः आदित्य उदयनीयः पथ्यायै वै तत्स्वस्त्या प्रयन्ति पथ्यां स्व
स्तिमभ्युद्यन्ति स्वस्त्यैवेनः प्रयन्ति स्वस्त्युद्यन्ति स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु अष्टौ देवा वसवः सोम्यासः चत
स्रो देवीरजराः श्रविष्ठाः ते यज्ञं पान्तु रजसः परस्तात् संवत्सरीणममृतꣳ स्वस्ति स्वस्ति
भवन्तो ब्रुवन्तु आयुष्मते स्वस्ति ऋध्याम स्तोमं सनुयाम वाजमा नो मन्त्रं सरथेहोपयातम्
यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः सर्वामृद्धिमृध्नुयामिति तं वै तेजसैव
पुरस्तात्पर्यछन्दोभिर्मध्यतो त्रैरूपरिष्टाद्गायत्र्या सर्वतो द्वादशाहं परिभूय सर्वामृद्धि
माप्नोत्सर्वामृद्धिमाप्नोति य एवं वेद ऋध्यास्म हव्यैर्नमसोपसद्य मित्रं देवं मित्रधेयं नो अस्तु
अनूराधान्हविषा वर्धयन्तः शतं जीवेम शरदः सवीराः त्रीणि त्रीणि वै देवानामृद्धानि त्रीणि
छन्दांसि त्रीणि सवनानि त्रय इमे लोकाः ऋध्यामेव तद्वीर्यमेषु लोकेषु प्रतितिष्ठति ऋद्धिं
भवन्तो ब्रुवन्तु ऋध्यतां श्रिये जातः श्रिय आनिरियाय श्रियं वयो जरितृभ्यो दधाति श्रियं वसा
ना अमृतत्वमायन्भवन्ति सत्या समिधा मितद्रौ श्रिय एवैनं तच्छ्रियामादधाति संततमृ
चा वषट्कृत्यं संतत्यै संधीयते प्रजया पशुभिर्य एवं वेद यस्मिन्ब्रह्माभ्यजयत्सर्वमेतत् अ
मुं च लोकमिदमूतसर्वं तन्नो नक्षत्रमभिजिद्विजित्य श्रियं दधात्वहृणीयमाना अहेवा
श्रियमत्रं मे गोपाय यमृषयस्त्रैविदा विदुः ऋचः सामानि यजूंषि सा हि श्रीरमृता सताम्

श्रीरस्त्विति भवंतो ब्रुवंतु अस्तु श्रीः पुण्याहवाचनसमृद्धिरस्तु भगवान्प्रजापतिः प्रीयतां इति पु
ण्याहवाचनं ततो नीराजनमभिषेकं च यथाशास्त्रं कारयेदिति पुण्याहवाचनं आदावंते च मध्ये च
कुर्याद्ब्राह्मणवाचनं अथ पुनः संकल्पं कुर्यात् ॐ मद्येत्यादि देशकालौ संकीर्त्य मम कर्त्त
व्यैकादश्यादिव्रतोद्यापनकर्मणो निर्विघ्नसमाप्तिकामोऽहं गणपतिदुर्गाश्रीसहितगौर्या
दिषोडशमातृकापूजनाभ्युदयिककलशस्थापनसूर्यादिनवग्रहेंद्रादिलोकपालानहं पू
जयिष्ये तत्रादौ गणपत्यादीनां स्थापनक्रमः ॐ गणानां त्वा गणपतिं हवामहे प्रिया
णां त्वा प्रियपतिं हवामहे निधीनां त्वा निधिपतिं हवामहे वसो मम आहमजानि ग
र्भधमा त्वमजासि गर्भधं ॐ गणपतिरसि गणपते इहागच्छ ॐ गजास्य गणनाथ त्वं सर्ववि
घ्नविनाशन लंबोदर स्वनेत्रात्र समागच्छ गणाधिप १ गौरि देवि समागच्छ वरदाभयशूल
धृक् कुलांबिके वृषारूढे शांतिं कुरु ममाध्वरे हिमाद्रितनयां देवीं वरदां भैरवप्रियां लंबो
दरस्य जननीं गौरीमावाहयाम्यहं एह्येहि नीलोत्पलतुल्यवर्णे श्वेतांबरे प्रोज्वलशूलहस्ते नगेंद्र
कन्ये भुवनेश्वरि त्वं पूजां गृहाण त्वमवमस्मदीयं ॐ भूर्भुवः स्वः गौरि इति भगवति इहागच्छ इत्य
नेनावाह्य पूजयेत् ॐ पद्मे त्वं पद्महस्तासि पद्मनाभसमोपमे पद्मनाभस्य दयिते एहि सौम्ये शु
भं कुरु पद्माभां पद्महस्तां च पद्मनाभोरसि स्थितां जगत्प्रियां पद्मवासां पद्मामावाहयाम्यहं
एह्येहि पद्मे शशितुल्यवक्त्रे पंकेरुहस्थे शुभचक्रहस्ते सुरासुरेंद्रैरभिवंदितांघ्रे पूजां गृहाण त्वमम
यज्ञभूमिं ३ ॐ भूर्भुवः पद्मे इहागच्छ इत्यावाह्य पूजयेत् ॐ पराशरस्य दुहिते वज्रहस्ते भग
मिनि शचि देवि हि नो याग इष्टा रिमथनि कले दिव्यरूपां विशालाक्षीं शचीं कुंडलधारि
णीं रत्नमुक्ताद्यलंकारां शचीमावाहयाम्यहं १ प्रतप्तकार्तस्वरतुल्यवर्णे गजाधिरूढे
नलिनाभनेत्रे शक्रप्रिये प्रोज्वलवज्रहस्ते पूजां गृहाण त्वं शचि देवि शीघ्रं ३ ॐ भूर्भुवः शचि दे
वि इहागच्छ इत्यावाह्य पूजयेत् ३ मेधेहं भगवंतास्मि त्वं चित्स्वरूपा हृदि स्थिता आचारादौ नमस्तुभ्य
मेहि देवि जगत्प्रिये १ विश्वेश्वरीं विशालाक्षीं महाबलप्रदायिनीं बुद्धिप्रबोधिनीं सौम्यां मे
धामावाहयाम्यहं एह्येहि मेधे शुभभूरिवक्त्रे पीतांबरे पुस्तकपाशहस्ते बुद्धिप्रदे हंससमाधि
रूढे पूजां गृहाण त्वमवमस्मदीयं ३ ॐ भूर्भुवः मेधे देवि इहागच्छ इत्यावाह्य पूजयेत् ४
सावित्रि सर्वदेवानां ब्रह्मादीनां विशेषतः पूजनीयासि देवि त्वमेहि यज्ञे शुभं कुरु १ जगत्स
ष्टिकरीं धात्रीं देवीं प्रणवमातृकां वेदगर्भां ज्ञानमयीं सावित्रीं पूजयाम्यहं एह्येहि सावित्रि
जगद्विधात्रि ब्रह्मप्रिये स्रुक्स्रुवपाशहस्ते प्रतप्तजांबूनदतुल्यवर्णे पूजां गृहाण त्वमवमस्म
दीयं ॐ भूर्भुवः स्वः सावित्रि देवि इहागच्छ इत्यावाह्य पूजयेत् ५ विजये विश्वरूपा त्वं विश्वा
त्मा विश्वतोमुखि महादंष्ट्रे महाकाये समागच्छ महेश्वरि १ सर्वास्त्रधारिणीं देवीं सर्वाभ
रणभूषितां सर्वदेवैः स्तुतां रम्यां तां विजयां स्थापयाम्यहं २ एह्येहि सर्वास्त्रधरे कुमारि सुरास
रासुराणां विजयप्रदात्रि त्रैलोक्यवंद्ये शुभरत्नभूषे गृहाण पूजां विजये नमस्ते ३ ॐ भूर्भुवः
स्वः विजये इहागच्छ इत्यावाह्य पूजयेत् ६ जये देवि समागच्छ जयदे सिंहवाहिनि वज्रा
सिचक्रगदया रिपुनाशय मेध्वरे सुरारिमथनीं देवीं देवानामभयप्रदां त्रैलोक्यवंदितां
देवीं जयामावाहयाम्यहं २ एह्येहि पंकेरुहलोचने त्वं जयप्रदे चंचलशक्तिहस्ते ब्रह्मादि
देवैरभिवंद्यमाने जयेत्र सिद्धिं कुरु सर्वदा मे ३ ॐ भूर्भुवः स्वः जये देवि इहागच्छ इत्यावाह्य पूज
येत् ७ देवसेने समागच्छ देवतानां पुरोगमे देवाधिदेवी त्वं प्रोक्ता निहंसि रिपुमध्वरे १

मयूरवाहिनीं देवीं खड्गशक्तिधनुर्धराम् आवाहयेद्देवसेनां तारकासुरमर्दिनीम् २ एह्येहि वाप
सियरे नवेत्त्वमयूरवाहे कमलायताक्षि इंद्रादिदेवस्थितिहेतुभूते गृहाण पूजां मम देवसे
ने ३ ॐ भूर्भुवः स्वर्देवसेने देवि इहागच्छ इत्यावाह्य पूजयेत् ८ स्वधे पितृमनुष्याणामेका
त्वं त्रिगुणात्मिके कारणं हि सर्वेषां मे हि देवि ममाध्वरे १ अग्निकाता पितृभ्यो हि कव्यार्थं
या प्रयच्छति पितृणां हि प्रिया देवी स्वधामावाहयाम्यहं २ एह्येहि वैश्वानरवल्लभे त्वं कव्यापि
भ्यः सततं ददासि स्वर्गादिवासं शुभशक्तिहस्ते स्वधे त्रनः पाहि मखं नमस्ते ३ ॐ भूर्भुवः स्वः
स्वधे देवि इहागच्छ इत्यावाह्य पूजयेत् ९ स्वाहे त्वं लक्षणैर्युक्ता देहि यज्ञाभिवांछितं
त्वमागच्छाध्वरे देवि समस्तविहितक्रिये १ हविर्गृहीत्वा सततं देवेभ्यो या प्रयच्छति
तां दिव्यरूपां परमां स्वाहामावाहयाम्यहं २ एह्येहि वैश्वानरपत्नि देवि तडित्प्रभे शक्ति
धरे कुमारि हस्ते गृहीत्वा स्रुवहस्तमिदं तो स्वाहे प्रसीद मखमस्मदीयं ३ ॐ भूर्भुवः स्वः स्वाहे दे
वि इहागच्छ इत्यावाह्य पूजयेत् १० ॐ भूर्भुवः स्वर्मातरोत्र समागच्छत लोकमातरोत्र समा
गच्छत आवाहयाम्यहं मातृः सर्वदा लोकपूजिताः सर्वकल्याणरूपिण्यो वरदा नेकभू
षणाः १ आगच्छतागच्छत मातरोत्र ब्राह्मीमुखाः सर्वजनैः प्रपूजिताः वरप्रदा दिव्यवि
भूषणाढ्याः पूजां गृहीतं मम यज्ञभूमिं ॐ भूर्भुवः स्वर्मातरोत्र समागच्छत ११ ॐ भूर्भुवः
स्वर्लोकमातर इहागच्छत इत्यावाह्य पूजयेत् हृष्टिः संतोषयुक्तासि सौम्या चंद्रमसोदिताः
संसेव्या फलदासि त्वं विपरीता भयावहा १२ सर्वहर्षकरी देवी भक्तानामभयंकरीं हर्षो
त्फुल्लास्यकमलां हृष्टिमावाहयाम्यहं १ एह्येहि सर्वाभयदे कुमारि समस्तलोकप्रियदे
नमस्ते प्रोत्फुल्लपंकेरुहतुल्यनेत्रे हृष्टे मखं पाहि शिवस्वरूपे ॐ भूर्भुवः स्वः हृष्टिदेवि इ
हागच्छ इत्यावाह्य पूजयेत् पुष्टे गर्भविशुद्ध्यर्थं पुष्टिं पोषय मे नृणां रक्ष देवि समागच्छ
ममांगं कमलेक्षणे १ पोषयंती जगत्सर्वं स्वदेहप्रभवैर्नवैः शाखामूलैः फलैः रत्नैः पुष्टिमा
वाहयाम्यहं २ एह्येहि पुष्टि शुभरत्नभूषे रक्तांबरे रक्तविशालनेत्रे भक्तिप्रिये पुष्टिकरी त्रि
लोक्याः पूजां गृहीत्वा मखमस्मदीयं ३ ॐ भूर्भुवः स्वः पुष्टिदेवि इहागच्छ इत्यावाह्य पूजयेत्
१३ आनंदगणसंयुक्ते रूपभाग्यसमन्विते तुष्टिदेवि समागच्छ मंगलं कुरु मे सदा भावे
नराधितां देवीं सदा संतोषशालिनीं प्रसादसुमुखीं देवीं तुष्टिमावाहयाम्यहं २ एह्येहि
तुष्टे विलसल्लोकवंद्ये त्रैलोक्यसंतानविधानदक्षे पीतांबरे शक्तिगदाब्जहस्ते शिवाय नः पा
हि मखं नमस्ते ॐ भूर्भुवः स्वः तुष्टिदेवि इहागच्छ इत्यावाह्य पूजयेत् १४ आत्मदेवि समा
गच्छ चित्तरूपे मयि स्थिते वरादिगुणसंयुक्ता शांतिं कुरु ममाध्वरे १ यतनेन नरे ग्रामे वि
पिने वर्त्मनि गृहे नानाजातिकुलेशानीं देवीमावाहयाम्यहं २ एह्येहि चास्मत्कुलदेवते
त्वं शोभाप्रदे शोभितपादपद्मे कल्याणदे सर्वकुलस्य मातः पूजां गृहीत्वा मखमस्मदीयं ३
ॐ भूर्भुवः स्वरात्मकुलदेवते इहागच्छ इत्यावाह्य पूजयेत् १५ इत्येवं गणपतिसहिताः
षोडशमातृः प्रत्येकमंत्रैः प्रतिष्ठाप्यादौ गणपतिं षोडशोपचारैः पूजयेत् तद्यथा गणे
शं प्रथमं संपूज्य ततो मातृः प्रपूजयेत् नश्यंति सर्वदुःखानि कल्याणानि भवंति हि कृतेन
मार्चनं सर्वदेवानां बल्लभोतिके मंगलेषु च यज्ञेषु भक्तिर्यत्र विनायके भूमिहृल्लोद्धता
स्न्यावी नदी नाव यथा भवेत् गणयागविहीनस्तु न तथा यज्ञो भविष्यति अथ प्रतिमासगण
पतिपूजाक्रमः मार्गमासि गणपतिः पौषे पूज्यो विनायकः गजवक्त्रस्तथा माघे भालचंद्र

स्पफाल्गुने उपेंद्रश्चैत्रमासेतु वैशाखेविघ्ननाशनः ज्येष्ठेशिवसुतःपूज्यः आषाढेहरनंदनः
हेरंबःश्रावणेपूज्योभाद्रेलंबोदरस्तथा आश्विनेचैकदंतश्चमहावीरश्चकार्त्तिके विघ्नहावा
र्षिकेमासि एवंपूज्योगणेश्वरः अथपूजा आवाहयाम्यहंदेवंगणेशंशिवनंदनं व्याघ्रचर्मा
म्बरधरंव्यालयज्ञोपवीतिनं गजवक्त्रगणाध्यक्षसर्वविघ्नविनाशन अस्मिन्यज्ञेसमागच्छ
लंबोदरनमोस्तुते गणानांत्वागणपतिं ॐ हवामहे इतिमंत्रेण अत्रागच्छजगद्वंद्यसुररा
जार्चितेश्वर अनाथनाथसर्वज्ञलोकेशगणनायक इत्यावाहनं मौक्तिकैःपद्मरागैश्चना
नारत्नैर्विराजितं रत्नसिंहासनंतत्रस्वीयतांसुरसत्तम इत्यासनं अथध्यानं ध्यायेद्गजा
ननंदेवंतप्तकांचनसन्निभं चतुर्भुजंमहाकायंसर्वाभरणभूषितं दंतमाद्यकरेदद्याद्द्विती
येकुलिशंतथा पाशंतृतीयकेदद्याच्चतुर्थेमोदकंन्यसेत् कनकसदृशवर्णंसर्वलक्ष्मी
प्रदंतं गजमुखमरुणांगंचंचलत्कर्णयुग्मं दशनकुलिशपाशंमोदकंधारयंतं सुभगच
तुरहस्तंनौमिसर्वार्थसिद्ध्यै इतिध्यानम् देवदेवसुपूजार्थंपात्रंगंधाक्षतैर्युतं गृहाणार्घ्यं
मयादत्तंसर्वसिद्धिप्रदेहिमे इत्यर्घ्यं गौरीसुतनमस्तुभ्यंगंधपुष्पाक्षतैर्युतं तवपाद्यंमया
दत्तंगृहाणप्रणतप्रिय इतिपाद्यं गंगाजलंसमानीतंसुवर्णकलशस्थितं सुगंधेनसमा
युक्तंसम्यगाचमनंकुरु इत्याचमनम् विघ्नेश्वरविशालाक्षसर्वागमविशारद मधुपर्कं
गृहाणत्वंमयासंपादितंविभो इतिमधुपर्कम् स्नानंपंचामृतंदिव्यंपयोदधिघृतंमधु
शर्कराचगृहाणत्वंसिद्धार्थैःसुरपूजित इतिपंचामृतम् गंगाजलंसमानीतंसुवर्णक
लशस्थितं तोयमेतत्सुखस्पर्शंस्नानार्थंप्रतिगृह्यताम् इतिशुद्धोदकस्नानम् रक्तवस्त्र
युगंदेवदेवांगसदृशंनवं मयादत्तंगृहाणेदंसर्वदनमोस्तुते इतिवस्त्रं सुजातब्रह्म
सूत्रंचकांचनंचोत्तरीयकं उपवीतंगृहाणेदंभक्तानामार्त्तिनाशन इतियज्ञोपवीतं अनेकर
त्नखचितंसर्वाभरणसंयुतं गृहाणभूषणंदेवइष्टांसिद्धिंप्रयच्छमे इत्याभरणं गंधकर्पूरक
स्तूरीनानागंधैश्चसंयुतं विलेपनंगृहाणेदंगणाध्यक्षायतेनमः इतिगंधं अक्षतान्हरणा
न्देवसिद्धगंधर्वपूजित मयाहृतानिमान्देवगृहाणसुरसत्तम इत्यक्षताः सुगंधीनिचपु
ष्पाणिरक्तपत्राणियानिच एकविंशतिपत्राणिगृहाणत्वंविनायक इतिपुष्पाणि पत्रा
णिच दशांगंगुग्गुलंधूपंसुगंधंचमनोहरं उमासुतनमस्तुभ्यंगृहाणवरदोभव इतिधूपं
सर्वज्ञसर्ववरदसर्वेषांविदुषांवर गृहाणदीपकंदेवरुद्रप्रियनमोस्तुते इतिदीपं सघृतंसफ
लंदेवमोदकंघृतपाचितं नैवेद्यंगृह्यभोदेवनमस्तेविघ्ननाशन इतिनैवेद्यं सपूगचूर्णक
पूरनागवल्लीदलैर्युतं भोगप्रदंश्रीकरंचताम्बूलंप्रतिगृह्यतां इतिताम्बूलं नीराजनंगृहा
णेदंबहुदीपप्रकाशितं अज्ञानतिमिरघ्नंनमस्तेविघ्नवारक इतिनीराजनं इदंफलंमयादेव
स्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि इतिफलं हिरण्यगर्भगर्भस्थं
हेमबीजंविभावसोः अनंतपुण्यफलदमतःशांतिंप्रयच्छमे इतिदक्षिणा आखुवाहनदे
वेशविश्वव्यगजानन प्रदक्षिणीकरोमित्वांममत्वंसन्निधोभव इतिप्रदक्षिणा नमस्तेदे
वदेवेशनमस्तेविघ्ननाशन साष्टांगोयंप्रणामस्तेमयासम्यक्प्रयोजितः इतिनमस्कारः
न्यूनातिरिक्तानिपरिस्फुटानियानीहकर्माणिमयाकृतानि क्षम्याणिसर्वाणित्वयागणे
शप्रयाहितुष्टःपुनरागमाय इतिविसर्जनम् एवंगणेशंसंपूज्य ॐगौर्यैनमः पद्मायैनमः
शच्यैनमः मेधायैनमः सावित्र्यैनमः विजयायैनमः जयायैनमः देवसेनायैनमः स्वधायैनमः

स्वाहायैनमः मातृभ्योनमः लोकमातृभ्योनमः हृष्टैनमः पुष्टैनमः आत्मकुलदेवतायैनमः
इतिदेवमातृकाः सर्वोपचारैः संपूज्य ॐभूर्भुवःस्वः गणपतिसहिताः षोडशमातृकाः पूजिताः
स्थः इत्युक्त्वा श्रीर्मयिरमतां ॐरूपंदेहिजयंदेहिभाग्यंभगवतिदेहिमे पुत्रान्देहिधनंदेहिसर्वा
न्कामान्प्रदेहिमे इतिततोभित्तौ उत्तरोत्तरक्रमेणपंचवासप्तवारेखाःकुर्यात् अनेनक्रमेण ॐ
वसोःपवित्रमसिशतधारं वसोःपवित्रमसिसहस्रधारंदेवस्त्वासवितापुनातु वसोःपवित्रेण
शतधारेणसुप्वाकामधुक्ष इतिप्रतिष्ठांकृत्वा एकैकत्रवसुसहितंपंचोपचारैःसंपूज्य प्रार्थ
येत् ॐलक्ष्मीःश्रीश्चधृतिर्मेधापुष्टिःस्वाहासरस्वती सर्वेषुवृद्धिकार्येषुसमेताःसन्तुमातरः इ
ति अथवा ललिताचउमागौरीअंबिकासलिलाअथा भगाद्वीचभगाद्वीचसमेतासन्तुमात
मातरः यद्वा ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा वाराहीचतथेंद्राणीचामुंडाःसप्त
मातरः इतिमातृपूजाभ्युदयिकप्रयोगः अथाभ्युदयिकश्राद्धं तच्चसपिंडकमपिंडकंवाका
र्य्यं तत्रस्त्रीकार्य्यंयाअपिंडकमेवकार्य्यं तत्स्वरूपनारायणीयेविशेषः असौकरणमर्घ्यंचा
वाहनंचावनेजनं पिंडश्राद्धेप्रकुर्वीतपिंडहीनेनिवर्तते यथाच पिंडनिर्वापरहितंयत्रश्राद्धंवि
धीयते स्वधावाचनलोपोस्तिविकरस्तुनलुप्यते अक्षय्येदक्षिणास्वस्तिसौमनस्यंयथास्थि
तीति अथास्यसंक्षिप्तप्रयोगः ॐमद्येकादशपादिग्नोत्पादनभूर्य्यीगत्वमागतासिद्ध्यर्थेयाभ्यु
दयिकश्राद्धमहंकरिष्ये ॐसत्यवसुसंज्ञकाविश्वेदेवा ॐभूर्भुवःस्वःइदंवःपाद्यं मातृपिता
महीप्रपितामह्यःनांदीमुख्यः ॐभूर्भुवःस्वःइदंवःपाद्यं ॐपितृपितामहप्रपितामहाःनांदी
मुखाः ॐभूर्भुवःस्वइदंवःपाद्यं मातामहप्रमातामहवृद्धप्रमातामहानांदीमुख्या ॐभूर्भु
वःस्वःइदंवःपाद्यं इदंसर्वंसव्येनैवकार्य्यं अत्रतिलार्थस्तुयवैरेवकार्य्यः इतिशास्त्रसंप्रदायः
सत्यवसुसंज्ञकानांविश्वेषांदेवानां ॐभूर्भुवःस्व इदमासनंसुखासनं नांदीश्राद्धेक्षणौक्रि
तौ तथाप्राप्नुतांभवंतौप्राप्नुवाव मातृपितामहीप्रपितामहीनांनांदीमुखीनां ॐभूर्भुवःस्वः
इदमासनंसुखासनं नांदीश्राद्धेक्षणौक्रियेतां पितृपितामहप्रपितामहानां नांदीमुखानां
ॐभूर्भुवःस्वइदमासनंसुखासनं नांदीश्राद्धेक्षणौक्रियेतां तथाप्राप्नुतांभवंतौ प्राप्नुवाव
ॐमातामहप्रमातामहवृद्धप्रमातामहानांनांदीमुखानां ॐभूर्भुवःस्वइदमासनंसुखास
नंनांदीश्राद्धेक्षणौक्रियेतां तथाप्राप्नुवतांभवंतौ प्राप्नुवाव ततोगंधादिदानं अत्रसर्वत्र
युग्मब्राह्मणपूजनमतोद्विवचनोल्लेखःकार्यः सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्य ॐभूर्भु
वःस्वइदंगंधाद्यर्चनं स्वाहासंपद्यतांवृद्धिः मातृपितामहीप्रपितामहीभ्यो ॐभूर्भुवःस्वः
इदंगंधाद्यर्चनंस्वाहासंपद्यतांवृद्धिः ॐपितृपितामहप्रपितामहेभ्योनांदीमुखेभ्यः ॐभू
र्भुवःस्वःइदंगंधार्चनंस्वाहासंपद्यतांवृद्धिः मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नी
केभ्योनांदीमुखेभ्य ॐभूर्भुवःस्वइदंगंधार्चनंस्वाहासंपद्यतांवृद्धिः ततःपरिवेषणंकृत्वा गायत्र्या
प्रोक्ष्य ॐपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेअमृतेजुहोमिस्वाहा इतिपात्रमालभ्य इदं
विष्णुर्विचक्रमेत्रेधानिदधेपदं समूढमस्यपांसुरे सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्यः इदंयु
ग्मब्राह्मणभोजनपर्य्याप्तमन्नममृतरूपेणस्वाहासंपद्यतांवृद्धिः मातृपितामहीप्रपिताम
हीभ्योनांदीमुखीभ्यइदंयुग्मब्राह्मणभोजनपर्य्याप्तमन्नममृतरूपेणस्वाहासंपद्यतांवृद्धिः
पितृपितामहप्रपितामहेभ्योनांदीमुखेभ्यः इदंयुग्मब्राह्मणभोजनपर्य्याप्तमन्नममृतरू
पेणस्वाहासंपद्यतांवृद्धिः मातामहप्रमातामहवृद्धप्रमातामहेभ्योनांदीमुखेभ्यः

युग्मब्राह्मणभोजनपर्याप्तमन्नममृतरूपेण स्वाहा संपद्यतां वृद्धिः ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्व
स्ति नः पूषा विश्ववेदाः स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु अनेन नांदीश्रा
द्धेन कर्मांगदेवताः प्रीयन्तां प्रीयन्तां वृद्धिः अत्र पुरुषसूक्तादिजपः कार्यः नांदीश्राद्धं संपादितं
मस्तु शिवा आपः सन्तु सौमनस्यमस्तु अक्षतं चारिष्टमस्तु नांदीमुख्यो मातरः प्रीयन्तां नांदी
मुखाः पितरः पितामहाः प्रपितामहाः प्रीयन्तां नांदीमुखाः मातामहाः प्रमातामहाः वृद्धप्रमा
तामहाः सपत्नीकाः नांदीमुखाः प्रीयन्तां ततः आशीःप्रार्थनम् गोत्रं नो वर्धतां दातारो नोऽभिव
र्धन्तां वेदाः संततिरेव च श्रद्धा च नो मा व्यगमत् बहुदेयं च नोऽस्तु अन्नं च नो बहु भवेदतिथींश्च
लभेमहि याचितारश्च नः सन्तु मा च याचिष्म कंचनेति संप्रार्थ्य ततो विप्रैः गोत्रं वो वर्धतां
दातारो वोऽभिवर्धन्तां वेदाः संततिरेव च श्रद्धा च वो मा व्यगमत् बहुदेयं च वोऽस्तु अन्नं च
वो बहु भवेदतिथींश्च लभध्वं याचितारश्च वः सन्तु मा च याचत कंचनेति प्रत्युक्ते द्राक्षामलकादि
निष्क्रयत्वेन दक्षिणां दद्यात् ॐ मद्यैकादश्यादिव्रतोद्यापनांगभूतविश्वेदेवानामाभ्युदयि
कश्राद्धप्रतिष्ठार्थं द्राक्षामलकादि वन्यफलमिदं वनस्पतिदैवतं तन्निष्क्रयभूतामिमां दक्षिणां यथानामगोत्रा
य ब्राह्मणाय दातुमहमुत्सृजे ॐ मद्य करिष्यमाणैकादश्यादिव्रतोद्यापनांगभूतं कृतैतन्मा
तृपितामहीप्रपितामहीनां नांदीमुखीनां पितृपितामहप्रपितामहानां नांदीमुखानां माता
महप्रमातामहवृद्धप्रमातामहानां नांदीमुखानां सपत्नीकानामाभ्युदयिकश्राद्धप्रतिष्ठा
र्थमिदं द्राक्षामलकादिनिष्क्रयरूपं द्रव्यं यथानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे वाजे
वाजेवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः स
दा मे विश्वेदेवाः प्रीयन्तामिति विसर्जयेत् इति नांदीश्राद्धप्रयोगः ॥ अथोद्यापनप्रयो
गः तत्रादावाचार्यादिवरणं कुर्यात् ॐ मद्येत्यादिदेशकालौ संकीर्त्यामुकगोत्रोऽमुकशर्माहं
सर्वपापक्षयार्थं च त्रिवर्गफलसिद्ध्यर्थं यथाकालसमाचरितैकादश्यादिव्रतोद्यापनकर्मणि
अमुकगोत्रममुकशर्माणं ब्राह्मणमाचार्यत्वेन त्वामहं वृणे वृतोऽस्मीति प्रतिवचनं यथाविहितं
कर्म कुरु करवाणीति आचार्येणोक्ते ततः प्रार्थना आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्प
तिः तथा त्वं मम यज्ञेऽस्मिन् भवाचार्यो द्विजोत्तम मंत्रमूर्तिर्भवान्नाथ संसारोच्छेदकारक दे
वपूजाविनिर्दिष्टां कुरु धर्म्यां गतिं च मे संसारभयभीतेन मया यत्नः प्रवर्तितः प्रारब्धस्तव माहात्म्या
न्निर्विघ्नो मे भवेदिह अथाप्येवं देवब्राह्मणांगंधादिभिरभ्यर्च्य ब्रह्मत्वेन वृणुयात् ॐ मद
द्यैकादश्यादिव्रतोद्यापनयागकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म कर्तुममुकगोत्रममु
कशर्माणं त्वां ब्रह्मत्वेनाहं वृणे यथा चतुर्मुखो ब्रह्मा सर्वलोकपितामहः तथा त्वं मम यज्ञे
ऽस्मिन् ब्रह्मा भव द्विजोत्तम त्वं नो गुरुः पिता माता त्वं प्रभुस्त्वं परायणं त्वत्प्रसादाद्ब्रूदेवा[illegible]
[illegible]मे स्यात्सुशोभनं आपद्भिमोक्षणार्थाय कुरु यज्ञमतंद्रितः ऋत्विग्भिः सहितः सर्वैः संयतैः
सुसमाहितैः आचार्येण च संयुक्तः कुरु कर्म यथोदितं इति प्रार्थ्य पूर्वादिदिग्द्वाररक्षापकान्
वृणुयात् तत्र मंडपस्य पूर्वद्वारे भूमिदेवाय नमः इत्यर्घं दत्वा गंधादिभिः संपूज्य वृत्वा बृहस्पतिका
लादिकं हस्तेन गृहीत्वा ॐ मद्यास्मिन्नुद्यापनकर्मणि पूर्वद्वारे शांतिपाठार्थं द्वारपालत्वेन त्वाम
हं वृणे वृतोऽस्मीति प्रतिवचनानंतरं प्रार्थयेत् यजमानः ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैव
तः अत्रिगोत्रस्य विप्रेन्द्रः ऋत्विक्त्वं मे मखे भव शांतिपाठं मखे कुरु एवमन्यं विप्रं पूर्वद्वारे जा
पकत्वेन त्वामहं वृणे प्रार्थनं पूर्ववत् २ ततो मंडपदक्षिणद्वारे शांतिपाठार्थमेकं १ जापकत्वे

नापरं विप्रं वृत्वा प्रार्थयेत् २ कातराभ्यो यजुर्वेदमेष्टुभो विष्णुदेवतः वैशंपायन विप्रेंद्र शांतिपा ठमत्रकुरु ततोमं उपमंडपपश्चिमद्वारे सामवेदिनौ द्वौ विप्रौ गंधादिभिः संपूज्य एकं द्वारपालनाय शांतिपाठार्थमेकं जापकत्वेन चापरं २ वृत्वा प्रार्थयेत् सामवेदस्त्वं विंगाक्षो जागतः शाक्र दैवतः भारद्वाजस्त्वं विप्रेंद्र शांतिपाठमत्रैकुरु २ ऋत्विक् त्वं मे मखे भव २ ततो मंडपस्यो त्तरद्वारे द्वावथर्ववेदिनौ विप्रौ गंधादिभिः संपूज्य एकं द्वारपालत्वेन १ अपरं शांतिकाध्याय पाठार्थं वृत्वा प्रार्थयेत् बृहन्नेत्रोथर्ववेदोनुष्टुभो रुद्रदैवतः सुमंतस्त्वमपि विप्रेंद्र शांतिपाठं मत्रैकुरु १ ऋत्विक् त्वं मे मखे भव २ एवं सर्वत्र द्वौ द्वौ ब्राह्मणौ तत्वा संप्रार्थ्य ततश्चान्यां विद्वांसं विप्रं पूज्योपदेष्टृत्वेन वृत्वा सदस्यत्वेनैकमपरमपि वृत्वा ज्ञाननिष्ठान् कुलीनान न्यानपि वृत्वा सर्वानेव कृतांजलिः प्रार्थयेत् अस्य यागस्य निष्पत्तौ भवंतोभ्यर्थिता मया सुप्रसन्नैस्तु कर्तव्यमेतत्कर्म यथोदितं १ अस्मिन् कर्मणि ये येतु वृता गुरुमुखा द्विजाः सा वधानाः प्रकुर्वंतु स्वं स्वं कर्म यथोदितं ततो वरणक्रमेण मधुपर्केण सर्वेषां विप्राणां यथा शास्त्रं पूजनं कुर्यात् आचार्यब्राह्मणौ स्वगृह्योक्तविधानेनावश्यमेव मधुपर्केण पूजनी यौ मधुपर्कविधानं च तत्तद्वेदविधानेन पृथक् लिखितं यथासंभवमत्र योजनीयं ततो यज मानः सप्तधान्योपरि कलशं आजिघ्र कलशं मह्यात्वेति वक्ष्यमाणमंत्रैः कलशस्थापन विधिना संस्थाप्य तदुपरि पूर्णादर्वीति वक्ष्यमाणमंत्रेण धान्यपूर्णपात्रं न्यस्य तत्र ग्रहा न्व्याहृतिप्रणवपूर्वकैर्नाममंत्रैरावाह्य ॐ भूर्भुवः स्वः सूर्यादीन्नवग्रहान् ब्रह्मवरुणसहि तान्सदैवतकान्सपरिवारानहमत्र संस्थापयामीति संस्थाप्य संपूज्य पुष्पांजलिं दद्यात् त तश्चाचार्यः रक्तवस्त्रखंडे दूर्वाक्षतसर्वपदाधि सुवर्णान्वितां पोटलिकां रक्षाविधिमंत्रे णयजमानहस्ते आथर्वणवेदपिवत्त्रा मध्यतो दैव्यो भिषक् अहीश्च सर्वाञ्जंभयन् सर्वाश्च यातुधान्योधराचीः परासुव इति मंत्रेण बध्नीयात् ततो यजमानो यथाविहितं कर्म कुरुध्वमि ति सर्वान्साचार्यान्ब्राह्मणान्ब्रूयात् ते च स्वं स्वं कर्म करवाम इति ब्रूयुः पुनर्यजमानः चार्यं संप्रार्थ्य आचारादवलंब्य पत्न्या सह विधाय शंखादिरवे जायमाने सपरिच्छदो जलपूर्णकलशपुरःसरः साचार्यर्त्विग्महामंडपं प्रदक्षिणीकृत्य तं प्रविशेत् ॐ भद्रं कर्णे भिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेम देव हितं यदायुरिति मंत्रेण तत्र यजमानार्त्विजां पश्चिमद्वारेण प्रवेशः यजमानपत्न्या दक्षिणद्वारेण पूर्वद्वारेण मंडपमध्ये द्रव्यानयनं दानीयद्रव्यस्य दक्षिणद्वारेण एवं यजमानो मंडपं प्रविश्य महावेद्याः प्राङ्मुखो भद्रासने सपत्नी क उपविशेत् ततश्चाचार्यः पूर्वसंपादितपंचगव्येनापोहिष्ठामयोभुव इत्यृचा कुशेन मंडपं प्रोक्ष्य अपक्रामंतु भूतानि पिशाचाः सर्वतो दिशं सर्वेषामविरोधेन ब्रह्मकर्म समा रभेत् यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु इति मं त्रेण श्वेतसर्षपविकिरणेन भूतोत्सारणं विधाय देवा आयांतु यातुधाना अपयांतु विष्णो देवय जनं रक्षस्वेति रक्षां कृत्वा पंचपल्लवांबुपेन निरूक्ष्य शृणुवपाजइत्यादि रक्षोघ्नसूक्तमंत्रेण मं डपं संवेष्ट्य ब्राह्मणैर्गंधादिकं ग्राहयित्वा मंडपमनुमंत्रयेत वितानेफलपुष्पाक्षतद्रव्याणि क्षिप्त्वा पूर्वादारभ्य मध्यगतांश्चतस्रः स्थूणाः पूजयेत् ॐ वसुदायैनमः १ ॐ भद्रायैनमः २

अदित्यैनमः ३ नंदायैनमः ४ ॐभूर्भुवःवसुदामावाहयामीत्यावाह्य ॐवसुदायैनमः इतिपंचोप
चारैःसर्वाएवपूजयेत् ततोमंडपाग्नेयकोणादारभ्य ॐभूमिमावाहयामि भूम्यैनमः ६ पूर्वसं
ध्यायैनमः ७ मध्यसंध्यायैनमः ८ पश्चिमसंध्यायैनमः ९ गायत्र्यैनमः १० बृहत्यैनमः ११
अदित्यैनमः १२ विलग्नायैनमः १३ पौर्णमास्यैनमः १४ सिनीवाल्यैनमः १५ नंदायैनमः १६
मंडपस्यईशानकोणे प्रमथनाथायैनमः १ देवहूत्यैनमः २ शिवायैनमः ३ लक्ष्म्यैनमः ४
इतिमध्यस्तंभसहिताःकोणस्थूणाःपूजयेत् ततःसर्वेभ्योवंधनेभ्योनमः इतिशाखावंधना
न्यभिमंत्र्यसंपूज्य पश्चिमद्वारेणनिर्गत्य पूर्वादितोरणपूजामारभेत् इतिमंडपान्तर्मंत्रणं
अथपूर्वे आयाहिवज्रसंकाशपूर्वद्वारेकृताधिप ऋग्वेदाधिपतेनाम्नासुशोभननमोस्तु
ते इतिद्वारदेवतामालभ्य आश्वत्थतोरणायनमः ॐअग्निमीळेपुरोहितं यज्ञस्यदेवमृ
त्विजंहोतारंरत्नधातमम् मित्यालभ्य ऋग्वेदंपूजयेत् प्राचीदिशंसमारभ्यसुदृढंनामतोरणं
महावीर्यंमहाकायमिंद्रायुधसमप्रभं अस्मिन्महोत्सवेयत्तेकृतंनाप्रवरंशुभं १ एह्येहि
आश्वत्थतोरण माल्यवत्पर्वतसहित ऋग्वेदाधिष्ठित इंद्रदेवत्य एनंयज्ञंरक्षसर्वविघ्ना
न्निवारय ऋग्वेदाधिष्ठिताय आश्वत्थतोरणायनमइतिगंधादिभिःसंपूज्य तस्यत्रिशूलशृ
गेषु प्रादक्षिण्येनत्रीन आदित्यान्पूजयेत् इंद्रायनमः १ धात्रेनमः २ भगायनमः इत्यादि
त्रयंनाममंत्रैःसंपूज्य द्वारशाखयोर्वसुद्वयंपूजयेत् ध्रुवायवसवेनमः अध्वरायवसवेनमः
तत्रशृंगेषुशाखयोश्चवस्त्राणिबध्वा शाखामूलयोर्धान्यपुंजोपरि वारिपूर्णौरत्नगर्भौवस्त्रयु
गाच्छन्नौ प्रशांतशिशिरनामानौकलशौ जातबीजांकुरशरावपिहितौ आजिघ्रकलश
मितिप्रतिष्ठाप्य प्रशांतकलशायनमः शिशिरकलशायनमः २ इतिगंधादिनासंपूज्य
स्रक्चंदनादिनाऽलंकृत्य तत्रराहुबृहस्पती आवाह्य राहवेनमः बृहस्पतयेनमः २ एवं
गंधादिनासंपूज्य दक्षिणतोरणपूजामारभेत् इतिपूर्वतोरणपूजा अथदक्षिणतोरण
पूजा नमस्तेधर्मराजाय त्रेतायुगाधिपायच यजुर्वेदाधि देवायसुभद्रद्वारदक्षि
णे इतिद्वारदेवतामावाह्य औदुंबरंविकटंनामतोरणंपूजयेत् ॐइषेत्वोर्जेत्वावायवस्थ
देवोवःसवितापार्पयतुश्रेष्ठतमायकर्मणे आप्यायध्वमघ्न्यादेवभागमूर्जस्वतीप्रजाव
तीरनमीवा अयक्ष्मामावस्तेनईशतमाघशंसोरुद्रस्यहेतिःपरिवोवृणक्तु ध्रुवाअस्मि
न्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि इत्यालभ्य यजुर्वेदंसंपूज्य दक्षिणांदिशमा
श्रित्यविकटंनामतोरणं महावीर्यंमहाकायंभिन्नांजनसमप्रभं अस्मिन्महोत्सवेयत्ते
कृतंनाप्रवरंशुभं एह्येहिऔदुंबरमहातोरण गंधमादनपर्वतसहितयजुर्वेदाधिष्ठित य
मदैवत्य एनंयज्ञंरक्षसर्वविघ्नान्निवारय यजुर्वेदाधिष्ठितायविकटनाम्ने औदुंबरतोरणा
यनमइतिगंधादिनापूजयित्वा शूलशृंगेषुत्रीन् आदित्यायनमः१ मित्रायनमः २ वरु
णायनमः ३ द्वारशाखयोः सोमायवसवेनमः आपायवसवेनमः २ इतिनाममंत्रैर्गंधा
दिनासंपूज्य शृंगेषुशाखयोश्चवस्त्राणिबध्वा शाखामूलयोर्धान्यपुंजोपरिवारिपूर्णौ
पर्जन्याशोकनामानौकलशौ जातबीजांकुरशरावपिहिताननौ आजिघ्रकलशमि
त्यादिनाप्रतिष्ठाप्य पर्जन्यायनमः एवंगंधादिनाभ्यर्च्य स्रक्चंदनादिभिरलंकृत्य तो
रणेसूर्यायनमः १ अंगारकायनमइतिगंधादिभिरर्चयेत् इतिदक्षिणतोरणपूजा
अथपश्चिमतोरणपूजा ॐनमस्तेकामदेवायपश्चिमद्वाराधिप सामवेदाधिपत्वेहिनाम्ना

कल्याणकारक इति द्वारदेवतामावाह्य प्राच्यांस्तंभमेनामतोरणं ॐ अग्न आयाहि वीतये गृणा
नो हव्यदातये निहोता सत्सि बर्हिषीत्यालभ्य सामवेदं पूजयेत् प्रतीचीं दिशमाश्रित्य स्तंभमे
नामतोरणं महावीर्यं महाकायं सुवर्णसदृशप्रभं अस्मिन्महोत्सवे यज्ञे कृतनां प्रवरे शुभे
ॐ भो हि प्राच्य तोरण विघ्नपर्वतसहितसामवेदाधिष्ठितवरुणदेवतेन यज्ञं रक्ष सर्वविघ्नान्निवारय
सामवेदाधिष्ठिताय प्राच्यतोरणाय नम इति गंधादिभिः संपूज्य त्रिशूलशृंगेषु त्रीन् आदित्यान् संपू
जयेत् अर्यम्णे आदित्याय नमः १ अंशवे नमः २ विवस्वते नमः ३ गंधादिभिरभ्यर्च्य द्वारशाखयोः
वसुद्वयं पूजयेत् अनिलाय नमः अनलाय नमः २ गंधादिभिः संपूज्य शृंगेषु शाखयोश्च वस्त्रा
णि बध्वा शाखामूलयोः धान्यपुंजोपरि मृतसंजीवनअमृतनामानौ कलशौ जातबीजांकु
रशरावपिहिताननौ आजिघ्रकलशमित्यादिना प्रतिष्ठाप्य मृतसंजीवनाय कलशाय नमः
अमृतनाम्ने कलशाय नमः २ इत्येवं गंधादिभिरभ्यर्च्य स्रक्चंदनाद्यलंकृते तोरणे बुधाय नमः १
शुक्राय नमः इत्यावाह्य पूजयेत् इति याम्यतोरणपूजा अथोत्तरतोरणपूजा नमस्ते दिव्यरू
पाय अथर्वाधिपते प्रभो कलेश्वरपते नाम्ना मंगले चोत्तरासन इति द्वारदेवतामावाह्य उत्तरां
दिशमाश्रित्य स्तंभं नामतोरणं महावीर्यं महाकायं शुद्धस्फटिकसन्निभं अस्मिन्महोत्सवे
यज्ञे कृतनां प्रवरे शुभे वटवृक्षोद्भवं वाटं तोरणं ॐ शन्नो देवीरभिष्टय आपो भवंतु पीतये शंय्यो
रभिस्रवंतु नः इत्यालभ्य अथर्ववेदं संपूज्य ॐ भो हि अथर्वाधिपते नैयग्रोध तोरण हिमवत्प
र्वतसहित सोमदेवतेन यज्ञं रक्ष सर्वविघ्नान्निवारय अथर्वाधिष्ठिताय न्यग्रोधतोरणाय नमः
इति गंधादिभिः संपूज्य शृंगेषु त्रीन् आदित्यान् त्वष्ट्रे आदित्याय नमः १ सवित्रे नमः २ विष्णवे न
मः इति गंधादिभिरभ्यर्च्य द्वारशाखयोः प्रत्यूषाय वसवे नमः १ प्रभासाय वसवे नमः २ इति
वसुद्वयं गंधादिनाभ्यर्च्य शृंगेषु शाखयोश्च वस्त्राणि बध्वा शाखामूलयोः धान्यपुंजोपरि वा
रिपूर्णौ रत्नगर्भौ वस्त्रयुग्माच्छन्नौ जातबीजांकुरशरावद्वयपिहितमुखौ धनप्रद श्रीप्रदना
मानौ कलशौ आजिघ्रकलशमित्यादिना संस्थाप्य धनप्रदाय कलशाय नमः १ श्रीप्रदायक
लशाय नमः २ इति गंधादिनाभ्यर्च्य स्रक्चंदनादिनाऽलंकृत्य सोमं शनिं केतुं चावाह्य पूजये
त् सोमाय नमः शनये नमः केतवे नमः ३ एवं गंधादिभिः पूजयेत् इत्युत्तरतोरणपूजा सर्व
तोरणेषु स्वजातीयकाष्ठनिर्मितशूलनिधानं सर्वद्वारकलशानामुपरि घृतपूरितदीपस्था
पनं पूजनं च इति तोरणपूजा अथ द्वारपूजा तत्र प्रथमं पूर्वद्वारमागत्य आजिघ्रमिति
स्थापितकलशद्वये इंद्रमावाहयेत् एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेश संवी
ज्यमानो प्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते इत्यावाह्य ॐ त्रातारमिंद्रमवितारमिंद्रꣳ
हवे हवे सुहवꣳ शूरमिंद्रमाह्वयामि शक्रं पुरुहूतमिंद्रꣳ स्वस्ति नो मघवा धात्विंद्रः इति मंत्रे
ण गंधादिभिः संपूज्य इंद्रः सुरपतिश्चैव वज्रहस्तो महाबलः शतयागाधिपो देवस्तस्मै नि
त्यं नमो नमः इति नमस्कृत्य इंद्र आसीनेनात्र बृहस्पतिर्दक्षिणायज्ञः पुर एतु सोमः देवसेना
नामभिभंजतीनां जयंतीनां मरुतो यंत्वग्रमिति पताकामालभ्य यो मे दंडः पराप तद्वैहाय
सोधि भूम्यां तमहं पुनरादद आयुषे ब्रह्मवर्चसायेति दंडमालभ्य ॐ त्रातारमिंद्रमिति पु
नः पठेत् ॐ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनां संक्रंदनोऽनिमि
ष एकवीरः शतꣳ सेना अजयत्साकमिंद्रः इति मंत्राभ्यां पीतपताकाध्वजावुच्छ्रयेत् ॐ इंद्रा
य सांगाय सपरिवाराय एष सघृतौदनबलिर्नमः ॐ भो भो इंद्र इमं मदीयं घृतौदनबलिं गृहाण

ममसपरिवारस्य यजमानस्य आयुःकर्त्ता क्षेमकर्त्ता शांतिकर्त्ता वरदो भव लोकेशो मां पताकां च
गंधपुष्पादिकं बलिं मया दत्तं गृहीत्वा वपाहि यत्त्वमिह स्थितः इति बलिं समर्पयेत् अनयैव
रीत्या तत्तद्देवोद्देशेन सर्वत्र बलिर्देयः ततः शचीपते गजारूढ वज्रहस्तामराधिप पूर्वावकाश
सुप्तामीरक्षणीयं प्रयत्नतः इति संप्रार्थ्य तत्रैव कलशद्वये ऐरावतं दिग्गजमभ्यावाह्य पू
जयेत् ऐरावताय दिग्गजाय नमः द्वारशाखयोः भूलोकाय नमः भुवोलोकाय नमः २ पुनः
आदित्याय नमः सोमाय नमः २ ऊर्ध्वोदुंबरे ऋग्वेदाय नमः १ अधोवास्तुपुरुषाय नमः १ इति
संपूज्य ध्वजे कुमुदाय नमः यो मे दंडः पुरा नैर्ऋत्याय सोऽपि भूम्यां नमहू पुनरादआयुषे ब्रह्म
णो ब्रह्मवर्चसायेति ध्वजदंडमालभ्य दंडे हेतुकभैरवाय नमः क्षेत्रपालाय नमः ३ एवं नाममं
त्रैर्गंधादिभिरभ्यर्च्य ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः अत्रिगोत्रश्च विप्रेंद्र ऋत्विक्त्वे
मम स्वभवेति ऋग्वेदं ध्यात्वा सांगं सपरिवारं गंधाद्युपचारैः पूजयेत् शैवव्रतोद्यापने तु पूर्व
द्वारे वामभागे नंदिने नमः दक्षिणभागे महाकालाय नमः इति द्वारपालावपि संपूज्य
तत्र जपः श्रीसूक्तं १ पावमानं च २ सोमसूक्तं ३ सुमंगलं ४ पौरुषं ५ रुद्रसूक्तं च ६ वामदे
व्यं तथैव च ७ अग्निमीले इत्यादीनेकविंशत्यनुवाकान् ८ तथा ऋग्वेदोक्तशांतिकाध्याय
मिति पूर्वेहृतो ब्राह्मणो जपेत् इति पूर्वद्वारपूजा २ अथाग्नेयकोणं गत्वा आचम्य
एकं कलशं तत्र पूर्ववत्स्थापयित्वा तत्राग्निमावाहयेत् ॐ एह्येहि सर्वामरहव्यवाहमुनिप्र
वीरैरभितोऽभिजुष्टः तेजोवता लोकगणेन सार्धं ममाध्वरं रक्ष कवे नमस्ते १ इत्यग्निमावाह्य
ॐ अग्निं दूतं पुरो दधे हव्यवाहमुपब्रुवे देवाँ आसादयादिह १ इति गंधाद्युपचारैः संपूज्य
सर्वदेवमयो देवो रक्तो वह्निर्महाबलः सप्तजिह्वो महावीर्यो नमो वैश्वानराय ते इति नम
स्कृत्य अग्निर्भाग्यानि वीतये गृणानो हव्यदातये नि होता सत्सि बर्हिषि इति रक्तध्वजपताके
आलभ्य ॐ त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अव यासिसीष्ठाः यजिष्ठो वह्नितमः शोशु
चानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् ॐ अग्निं दूतं पुरो दधे हव्यवाहमुपब्रुवे देवाँ आसादयादि
ह इतीमं मंत्रद्वयमुच्चार्य अग्नये सांगाय सपरिवाराय एष दीपो घृतौदनबलिर्नमः भो भो
अग्ने एनं सदीपघृतौदनबलिं गृहाण यजमानस्य शांतिकर्त्ता क्षेमकर्त्ता तुष्टिकर्त्ता वरदो भव
इति बलिं दत्वा प्रार्थयेत् नमस्तेऽग्निरूपाय नमो वैश्वानराय ते चंडाय चंडरूपाय नमस्ते
हव्यवाहन इति अत्राग्नेयकोणे पुंडरीकं दिग्गजं पूजयेत् ॐ पुंडरीकाय नमः १ इति गंधा
दिना पूजयेत् इत्याग्नेयकोणपूजा ततो दक्षिणद्वारपूजा अथातो दक्षिणं गत्वा चम्य
प्रतिद्वारकलशं पूर्ववत्स्थापितकलशद्वये धर्मराजमावाहयेत् एह्येहि वैवस्वत धर्म
राज सर्वामरैरर्चित धर्ममूर्ते शुभाशुभानंद शुचामधीश शिवाय नः पाहि मखं मदीयम् १
दंडहस्तो यमो देवो धर्माध्यक्षो महाबलः आवाहये धर्मराजं तस्मै प्रेतपते नमः इत्यावाह्य
ॐ असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन असि सोमेन समया विपृक्त आहुस्ते त्री
णि दिवि बंधनानीति गंधाद्युपचारैः संपूज्य यमाय त्वा सूर्यस्य त्वा तपसे देवस्त्वा सविता मध्वा
नक्तु पृथिव्याः संस्पृशस्पाहि इति पताकालंभः यो मे दंड इति दंडालंभनम् ॐ आयं गौः पृश्नि
रक्रमीदसदन्मातरं पुरः पितरं च प्रयन्त्स्वः इति मंत्रेण श्यामध्वजपताके उच्छ्रयेत् सुगं नः पं
था प्रदिशन्न एहि ज्योतिष्मध्येह्यजरन्न आयुः अपैतु मृत्युरमृतं न आगाद्वैवस्वतो नो अ
भयं कृणोतु इति मंत्रं पठित्वा यमाय सांगाय एष सदीपमाषभक्तबलिर्नमः भो यम एनं

महोत्कर्भीषभक्तबलिंगृहाण यजमानस्य शांत्यादिकर्त्ता भव एवं माषभक्तबलिंदत्वा प्रार्थयेत्
वैवस्वत महाबाहो नमस्ते यमसत्ताम दक्षिणे शिवाज्ञाविहितो देवदिशं रक्ष भवानिति तस्मिन्नेव
कलशद्वये वामनं दिग्गजं संपूज्य वामनाय नमः १ द्वारशाखयोः स्वर्लोकाय नमः १ मह
र्लोकाय नमः २ भीमाय नमः १ बुधाय नमः २ ऊर्ध्वोडुंबर्यां यज्ञवेदाय नमः १ द्वारशाखयोः
गोदावर्य्यै नमः १ कृष्णायै नमः २ उत्तरांगे गणेशाय नमः १ श्रियै नमः २ अथो वास्तुपुरु
षाय नमः ध्वजे पुंडरीकाक्षाय नमः योमेदंड इति दंडमालभ्य तत्राग्रभागस्थवेतालाय न
मः इति नाममंत्रैर्गंधादिना संपूज्य बलिदानांतं विधाय कात्यायनो यजुर्वेदस्त्रिष्टुभौ विष्णु
देवतः वैशंपायन ऋषिर्द्वक्षत्विक् कृत्ये मम एव भवेति यजुर्वेदं ध्यात्वा इषेत्वोर्जेत्वा मंत्रं पठित्वा
गंधादिनार्चयेत् शैवोद्यापने दक्षिणद्वारवामे गणेशाय नमः दक्षिणभागे वृषभाय न
इति द्वारपालावपि संपूज्यौ तत्र जपः आनो भद्रानुवाकस्य १ आशुः शिशानकस्तथा २
यदेवा त्रीणि च पठेत् ३ ततोऽष्टौ वसुनंतमा ४ अभि त्यास्त्रिसप्तैव ५ दीर्घायुत्वे ऋचं पठेत्
६ द्यौः शांति ७ रेकाप्यायस्व ८ बट्पथपः पृथिव्यामेकया ९ नमोऽस्तु सर्पेभ्यः १० आकृ
ष्णेन ११ देवस्य त्वा पृथक् पृथक् १२ नमः शंभव १३ इत्येकोऽग्निर्देवता क्रमात् १४ त्रातारमि
न्द्रमित्येका १५ सोमं राजानमेकया १६ अन्नपते १७ महाँ इंद्रः १८ ऋचं वाचं समग्रकं १९
इति दक्षिणद्वारपूजा अथ नैरृते गत्वा आचम्यार्घं संस्थाप्य पूर्ववत्स्थापितकलशे नि
रृतिमावाहयेत् ॐ एह्येहि रक्षोगणनायक त्वं विशालवेतालपिशाचसंघैः ममाध्व
रं पाहि शुभाधिनाथ लोकेश्वरत्वं भगवन्नमस्ते १ सर्वप्रेताधिपो देवो निरृतिर्नीलविग्र
हः खड्गचर्मधरो नित्यं नैरृताय नमो नमः इत्यावाह्य ॐ मोषुण इन्द्रात्र पृत्सु देवैरस्ति
हि ष्मा ते शुष्मिन्नवयाः महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वंदते गीः इति कल्पना ना
मः ॐ एष ते निरृते भागस्तं जुषस्व स्वाहा इति कृसोध्वजपताके उच्छ्रयेत् ॐ असुन्वन्तमयजमा
नमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य अन्यमस्मदिच्छ सा त इत्या नमो देवि निरृते तुभ्यमस्तु
इति गंधादिना निरृतिपूजनं ॐ मोषुण इति मंत्रं पठित्वा सांगाय सपरिवाराय निरृतये इ
मं कृसरबीजान्नपुराणचूतसहितं बलिं दद्यात् ॐ भो भो निरृते पुराणचूतसहितं कृसरबी
जान्नबलिं गृहाण यजमानस्य शांत्यादिकर्त्ता भव इति बलिं दत्वा ध्वजे वामनाय दिग्गजा
य नमः १ योमेदंड इति ध्वजदंडमालभ्य तत्राग्निजिह्वाय क्षेत्रपालाय नमः इति गंधादिना व
स्त्वं तत्पूजनं कृत्वा निरृतिं विद्रुहस्तं च सर्वलोकैकनायकं आवाहयामि यत्नेऽस्मिन्पूजेयं प्र
तिगृह्यतां राक्षसेभ्यो दिवरक्षार्थं भवानत्र प्रतिष्ठितः निर्विघ्नं यत्तथमिं त्वं कुरुष्व शववाह
न इति निरृतिं संप्रार्थ्य इति नैरृत्यकलशपूजा अथ पश्चिमद्वारपूजा पश्चिमद्वारे पूर्व
वत्स्थापितकलशद्वये वरुणमावाहयेत् एह्येहि यादोगणवारिधीनां गणेन पर्जन्यगणाप्सरोगणा
सार्धं विद्याधरेंद्रामरगीयमान पाहि त्वमस्मिन्भगवन्नमस्ते पाशहस्तात्मको देवो जलरा
श्यधिपो महान् निम्नगामीति विख्यातो वरुणाय नमो नमः इत्यावाह्य ॐ तत्त्वा यामि ब्र
ह्मणा वंदमानस्तदा शास्ते यजमानो हविर्भिः अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः
प्रमोषीः इति गंधादिना संपूज्य पाशहस्तं च वरुणं यादसांपतिमीश्वरं आवाहयामि य
ज्ञेऽस्मिन् वरुणाय नमो नमः इति नमस्कृत्य ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय त्वामवस्यु
राचके इति ध्वजपताकामालभ्य ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय

अथावयमादित्यव्रतेनवानागसो अदितयेस्याम इतिश्वेतोपताकाध्वजावुच्छ्रयेत ॐत्वन्नोअग्ने
वरुणस्यविद्वान् देवस्यहेडोअवयासिसीष्ठाः यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसि
प्रमुमुग्ध्यस्मत् इतिपठित्वा सांगायसपरिवारायवरुणायनवनीतघृतोदनबलिर्नमः भोवरु
णइमंबलिंगृहाण यजमानस्यशांत्यादिकर्ताभवेदितिपूर्ववत्सदीपबलिदानं अपांपतिरि
तिआपोवैदेवदेवनिगद्यसेशमंनयाशुविघ्नानिनमोमकरवाहन इतिसंप्रार्थ्य तस्मिन्नेवक
लशद्वये अंजनंदिग्गजंसंपूज्य अंजनायनमः द्वारशाखयोः जनलोकायनमः १ तपोलो
कायनमः २ पुनः बृहस्पतयेनमः १ शुक्रायनमः २ ऊर्ध्वोडुंबरेसामवेदायनमः द्वारशाख
योःनर्मदायैनमः १ ताप्त्यैनमः २ उत्तरांगे गणेशायनमः १ श्रियैनमः २ अथोवास्तुपुरु
षायनमः ध्वजेशंकुकर्णायनमः योमेदंडइति ध्वजदंडमालभ्य तस्मिन् कालायनमः क्षेत्र
पालायनमः इतिगंधादिकल्पेनसंपूज्य सामवेदस्तुविज्ञेयोजागतःशक्रदैवतः भारद्वाज
स्तुविप्रेंद्र ऋत्विकत्वेममखेमव अत्रशैवोद्यापने प्रत्यग्द्वारेवामभागे भृंगीरिटयेनमः
दक्षिणेस्कंदायनमः इतिद्वारपालावपिसंपूज्य तत्रजपः इंद्रायसामगायत १ अहमस्मिप्रथ
मजा २ सेवहन्तरा ३ स्वादिष्ठया गायंतित्वागायत्रिणः ५ कस्यनूनंकतमस्यामृतानां ६ सश्रु
क्यंबृहत्साम ७ ज्येष्ठसाम ८ रथंतरं ९ तथाचसामवेदोक्तशांतिपाठंपठेद्बुधः १० इतिपश्चि
मद्वारपूजा अथवायव्यकलशपूजा ततोवायव्येगत्वा आचम्य पूर्ववत्स्थापितकलशेवायु
मावाहयेत् एह्येहियज्ञेश्वरक्षणायमृगाधिरूढःसहसिद्धसंघैः प्राणाधिपःकालगतेःस
हायगृहाणपूजांभगवन्नमस्ते वायुमाकाशगंदेवंपवनंमृगवाहनं आवाहयामितस्मि
न्पूजेयंप्रतिगृह्यतां इत्यावाह्य तववायव्रतस्यतेत्वष्टुर्जामातरद्भुत अवांस्याहृणीमहे इतिमंत्रेण
गंधाद्युपचारैःसंपूज्य तस्मिन्नेवकलशेपुष्पदंतंदिग्गजंआवाह्य पुष्पदंतायनमः इतिसंपूज्य आनो
नियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञं वायोअस्मिन्सवनेमादयस्वयूयंपातस्वस्तिभिःसदा
नः इतिपताकालंभः वायोयेतेसहस्रिणोरथासस्तेभिरागहि नियुत्वान्सोमपीतयेइति तववायव्रतस्यत
इतिवा धूम्रोपताकाध्वजावुच्छ्रयेत् आनोनियुद्भिरितिपठित्वा सांगायसपरिवारायवाय
वे यवोदनबलिर्नमः भोवायोसदीपंयवोदनबलिंगृहाण यजमानस्यशांत्यादिकर्ताभवे
तिपूर्ववत्बलिदानं ततोध्वजेसार्वभौमायनमः इतिगंधादिभिःसंपूज्य योमेदंडइतिध्वज
दंडमालभ्य तस्मिन्सर्वनेत्रायक्षेत्रपालायनमः इतिगंधादिनासंपूज्य प्राणिनांप्राणरू
पायोमहाबलपराक्रमः महावेगमृगारूढदिशांरक्षप्रभंजन इतिप्रार्थयेत् इतिवाय
व्यस्तंभपूजा अथोत्तरद्वारपूजा तत उत्तरदेशेगत्वा आचम्य अर्घ्यंसंस्थाप्य पूजासंक
ल्पंविधाय पूर्ववत्स्थापितद्वारशाखस्थापितकलशद्वये सोममावाहयेत् एह्येहियज्ञेश्वरय
ज्ञरक्षांविधत्स्वनक्षत्रगणेनसार्द्धं सर्वौषधीभिःपितृभिःसदैवगृहाणपूजांभगवन्नम
स्ते नक्षत्राणांवसर्वेषांसोमोराजाप्रकीर्तितः रत्नागीचमहाहस्तसोमराजायतेनमः इत्यावाह्य
ॐआप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यंभवावाजस्यसंगथे इतिगंधादिनासंपूज्य सर्वेन
क्षत्रमध्येतुसोमोराजाप्रतिष्ठितः तस्मैदेवायसोमायनक्षत्रपतयेनमः ॐसोमाधेनुꣳसो
माअर्वंतमाशुꣳसोमोवीरंकर्मण्यंददाति सादन्यंविदथ्यꣳसभेयंपितृश्रवणंयोददाश
दस्मै इतिपताकालंभः ॐवयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतःप्रजावंतःसचेमहि
इतिसवर्णांवर्णोंध्वजपताकेउच्छ्रयेत् वयꣳसोमेतिमंत्रेणगंधादिनासंपूज्य प्रियंगवबलिं

सांगाय सपरिवाराय सोमाय एष मैयंगवबलिर्नमः भोसोम इमं सदीपं मैयंगवबलिं गृह्ण यजमानस्य शांत्यादिकर्त्ताभव इति बलिं दत्वा प्रार्थयेत् पालेयांशो महानूपनक्षत्राणामधीश औषधीनां प्रभो रक्ष उदीचीं त्वं समाहित इति तस्मिन्नेव कलशे सार्वभौमं दिग्गजमावाह्य सार्वभौमाय नमः इति नाममंत्रेण संपूजयेत् ततो द्वारशाखयोः सत्यलोकाय नमः ध्रुवलोकाय नमः २ पुनः शनैश्चराय नमः राहुकेतुभ्यां नमः ऊर्ध्वोदुंबरे अथर्ववेदाय नमः द्वारशाखयोः वेण्यै नमः पयोष्ण्यै नमः उत्तरांगे गणेशाय नमः श्रियै नमः २ अथो वास्तुपुरुषाय नमः ध्वजे सुमुखाय नमः यो मे दंड इति मंत्रेण ध्वजदंडालंभः तस्मिन्नेकपादयज्ञे त्रपालाय नमः इति नाममंत्रेण गंधादिना पूजयित्वा सवर्णानयनोऽथर्वानुष्टुप् छंदः वेदो वैतानगोत्रस्तु त्वेकलं मे मखे भवेत् अथर्ववेदं ध्यात्वा ॐ शन्नो देवीरभीष्टय आपो भवंतु पीतये शंयोरभिस्रवंतु न इति गंधाद्युपचारैः पूजयेत् शैवव्रतोद्यापने तु उत्तरद्वारे वामभागे उमायै नमः दक्षिणे चंडेश्वराय नमः इति द्वारपालावपि पूजयेत् तत्र जपः अथर्वाशिरसं चैव १ अथर्वशिरसं तथा २ तथैव शांतिकाध्यायं ३ पठेदुत्तरतः स्थितः इत्युत्तरद्वारपूजा अथैशानकलशपूजा ततईशानस्तंभसमीपमागत्य आचम्य पूर्ववत्स्थापितकलश ईशानमावाहयेत् ॐ एह्येहि विश्वेश्वर नाथ शूलकपालखट्वांगवरेण सार्धं लोकेश यज्ञेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते सर्वविद्याधिपो देव ईशानो नाम नामतः शूलपाणिर्महादेव त्रैलोक्याधिपतये नमः इत्यावाह्य ॐ कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे वोचेम शंतमं हृदे इति गंधादिना संपूज्य ॐ नमः शंभवाय च मयोभवाय च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय चेति पताकामालभ्य ॐ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयं पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये इति श्वेतां पताकां ध्वजाबुत्क्षिपेत् कद्रुद्रायेति मंत्रं पठित्वा सांगाय सपरिवाराय ईशानाय सदीपं गव्यपुक्तबलिं समर्पयामि भो ईशान इमं सदीपं गव्यपुक्तबलिं गृह्ण यजमानस्य शांत्यादिकर्त्ताभव इति बलिं दत्वा प्रार्थयेत् रक्ष ईशान कुरु मे देव त्रिनेत्राय त्रिशूलिने वृषध्वजाय यज्ञाय पतत्त्रपतये नम इति तस्मिन्नेव कलशे सुप्रतीकं दिग्गजमावाह्य सुप्रतीकाय नमः इति संपूज्य ध्वजे सुप्रतिष्ठिताय नमः यो मे दंड इति ध्वजदंडमालभ्य तस्मिन्भीमाय क्षेत्रपालाय नमः इति गंधादिना बल्यंतं पूजनं विधाय प्रार्थयेत् वृषस्कंध समारूढ शूलहस्त त्रिलोचन आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रतिगृह्यतां इतीशानकलशपूजा ततो नैर्ऋत्यपश्चिमयोर्मध्ये कल्पिताधःप्रदेशे अनंतमावाहयेत् ॐ एह्येहि पातालपन्नगाधिपते देवाधो नंतानीलविग्रह पाताले वसते नित्यमनंताय नमोनमः इत्यावाह्य ॐ नमोस्तु सर्पेभ्यो ये के च पृथिवीमनु ये अंतरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः इति पाद्यालंभः ॐ तद्विष्णोः परमं पदं सदा पश्यंति सूरयः दिवीव चक्षुराततं इति मेचकपताकां ध्वजाबुत्क्षिपेत् आयंगौरिति मंत्रेण वा ॐ विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा इति पठित्वा सांगाय सपरिवाराय अनंताय एष माषभक्तबलिर्नमः ॐ भो अनंत इमं माषभक्तबलिं सदीपं गृह्ण यजमानस्य सपरिवारस्य शांत्यादिकर्त्ताभव इति बा०

लिंदत्वाप्रार्थयेत् योसावनंतरूपेणब्रह्मांडंसचराचरं पुष्पवद्धारयेन्मूर्ध्नितस्मैनित्यंनमोनमः
इतिनमस्कृत्य अनंतत्वादनंतस्त्वंफणीशाधिपतेहरे त्वयात्ररक्षणंकार्यंकृष्णनेत्रायतेनमः
इतिपूजेत् योमेदंडइतिदंडमालभ्य तस्मिन्नेवभैरवायक्षेत्रपालायनमः इतिनाममंत्रेणगंधा
दिबल्यंतंपूजयेदिति इत्यनंतकलशपूजा ततःपूर्वेशानयोर्मध्येकल्पितेतीर्थप्रदेशेप्रागवत
स्थापितंकलशंब्राह्मणमापादयेत् ॐएह्येहिसर्वाधिपतेसुरेंद्रलोकेनसार्धंपितृदेवता
भिः सर्वस्यधातास्यमितप्रभावोरक्षाध्वरंनोभगवन्नमस्ते १ पद्मयोनिश्चतुर्मूर्तिर्वेदावास
पितामह आयाहिब्रह्मलोकात्त्वंतस्मैब्रह्मात्मनेनमः इत्यावाह्य ॐब्रह्मयज्ञानंप्रथ
मंपुरस्ताद्विसीमतःसुरुचोवेनआवः सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविव
इतिमंत्रेणसंपूज्य यद्देवादेवहेडनंदेवासश्चकृमावयं अग्निर्मातस्मादेनसोविश्वान्मुंचत्वं
हसः इतिपताकालंभः ब्रह्मयज्ञानमंत्रेणवरक्तोपताकाध्वजावुकुर्येत् ततःसांगायसा
परिवारायब्रह्मणेपायसबलिंदद्यात् भोब्रह्मन्निमंपायसबलिंगृहाण यजमानस्यस
परिवारस्य शांत्यादिकर्त्तोभव इतिबलिंदत्वाप्रार्थयेत् ब्रह्मयोनिश्चतुर्मूर्तिर्वेदावासः
पितामहः पद्मपत्त्रचतुर्वक्त्रस्तस्मैनित्यंनमोनमः इतिपठित्वा पितामहजगत्स्रष्टः
सेशाव्योमरूपिणे व्योमस्थायनमस्तुभ्यंरक्षस्वेदंमखंप्रभो इतिप्रार्थ्य ध्रुवेसप्रभायन
मः योमेदंडइतिध्वजालंभः ध्वजदंडेभूतनाथायक्षेत्रपालायनमः इतिगंधादिनाबल्यं
तंपूजयेत् इतिब्रह्मपूजा ततआचम्यमंडपस्यमध्ये ब्रह्मसमीपेवा किंकिणीचामरमयू
रपिच्छपुनोध्वजोषोडशहस्तदंडोदशहस्तदंडोवाविचित्रवर्णोमहाध्वजःस्थाप्यः मंत्रः
इंद्रस्यवृष्णोवरुणस्यराज्ञ आदित्यानांमरुतांशर्धउग्रम् महामनसांभुवनच्यवानां
घोषोदेवानांजयतामुदस्थादितिसंस्थाप्य ततः गणानांत्वागणपतिंहवामहे इत्यादि
मंत्रेणगणपतिंसंपूज्य ॐनमोस्तुरुद्रेभ्योयेदिवियेषांवर्षमिषवःतेभ्योदशप्राचीर्दशप्रा
दक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः तेभ्योनमोस्तुतेनोवंतुतेनोमृडयंतुतेनोयंद्विष्मो
यश्चनोद्वेष्टितमेषांजंभेदध्मः इत्यादिमंत्रत्रयेणदिक्षुविदिक्षुरुद्रान्संस्थाप्य तेभ्योबलिं
दत्वा ईशानभागेसार्वभौतिकबलिंदद्यात् भूमौत्रिकोणंहस्तचतुरस्रंमंडलंविधाय तत्र
फलपुष्पाद्युपेतंकृष्णशरादिबलिंनिधायहस्तेजलंगृहीत्वा अधश्चैवचयेलोकास्तस्
राश्चैवपन्नगाः सपत्नीपरिवाराश्चप्रतिगृह्णन्त्विमंबलिं ईशानोत्तरयोर्मध्येक्षेत्रपा
लामहाबलाः भीमनामामहादंष्ट्रःसचगृह्णात्विमंबलिं २ येकेचित्त्विहलोकेषुआगताब
लिकांक्षिणः तेभ्योबलिंप्रयच्छामिनमस्कृत्यपुनःपुनः ३ बलिंगृह्णंत्विमंदेवाआदित्या
वसवस्तथा मरुतोथाश्विनौदेवाःसुपर्णाःपन्नगाग्रहाः असुरायातुधानाश्चपिशाचा
मातरोनगाः शाकिन्योयक्षवेतालायोगिन्यःपूतनाःशिवाः जंभकाःसिद्धगंधर्वामा
लाविद्याधराःखगाः दिक्पालालोकपालाश्चयेचविघ्नविनायकाः जगतांशांतिकर्त्ता
रोब्रह्माद्याश्चमहर्षयः माविघ्नंमाचमेपापंमासंतुपरिपंथिनः सौम्याभवंतुतृप्ताश्चदेवा
भूतगणास्तथा ७ इतिबलिंसमर्पयन्पठेत् अथैवंपूर्वभागेवबलिंदद्यात् त्रैलोक्य
यानिभूतानिस्थावराणिचराणिच ब्रह्मविष्णुशिवैःसार्धंरक्षांकुर्वंतुतानिमे देवदान
वगंधर्वाःयक्षराक्षसपन्नगाः ऋषयोमनवोगावोदेवमातरएवच सर्वेममाध्वरेरक्षांप्र
कुर्वंतुमुदान्विताः ब्रह्माविष्णुश्चरुद्रश्चदेवपालगणैःसह रक्षंतुमंडपंसर्वेघ्नंतुरक्षां

सिसर्वतः इतिरक्षोघ्नमंत्रान्पठित्वा संक्षेपेणबलिदानंकुर्य्यात् यथा पूर्वदिग्वासिदिक्पालादि
ग्भूतानियपदिग्रुद्रदिग्मातृदिक्क्षेत्रपालेभ्योनमः इतिबलिंदत्वा तथैवमंडपदक्षिणे दक्षि
णादिग्वासिदिग्पत्यादिभ्योबलिदानं २ तथैवपश्चिमदिग्वासिभ्योबलिदानं एवंचोत्तरदिग्वा
सिसर्वभूतेभ्योबलिदानं एवंसर्वतोबलिदानंविधाय आचम्य मंडपस्यषोडशस्तंभेषुदेवे-
भ्योनमः वृषेशबुकिन्नरेभ्योनमः पृष्ठेपन्नगेभ्योनमः इतिनमस्कृत्य अथवितानारोपणम्
पंचरात्रागमे नवेनचित्रवस्त्रेणवितानंकारयेच्छुभं अथवाशुक्लवस्त्रेणवितानंकारयेदपि
उत्तमाधममध्यंतुप्रमाणेनतस्यकीर्तितं मंडपस्यप्रमाणेनश्रेष्ठंतस्माद्वितानकं मध्यमंवेदि
मात्रंतुकनिष्ठंमंडलस्यतु ततोयजमानःसाचार्य्योहस्तौपादौप्रक्षाल्याचम्य प्राग्द्वारेण
मंडपंप्रविश्य दक्षिणद्वारस्यपश्चिमतउपविश्ययथाविहितंकर्मकुरु इत्याचार्य्यंप्रेषयेत्
इतिमंडपप्रतिष्ठा ततआचार्य्योमहावेद्युपरिफलपुष्पसंवितंवितानंदत्वा पश्चिमतउपवि
श्य आचम्य अर्घ्यंसंस्थाप्य प्राणानायम्य महावेद्युपरिसर्वतोभद्रंवाषोडशारंतुमंडलं
पंचवर्णैःपूर्वोदितक्रमेणसंपाद्य शैवशाक्तादिव्रतोद्यापनेतुलिंगतोभद्रंसंपादयेत् तत्र
सर्वसाधारणंचतुर्लिंगतोभद्रं सर्वतोभद्रेदेवस्थापनंकुर्य्यात् ॐमद्येहएकादश्यादिव्रतो
द्यापनकर्मणिपूर्वांगत्वेनमंडलेदेवतानामावाहनंस्थापनंपूजनंचाहंकरिष्ये इतिसंक
ल्प्य ॐप्रणवस्यब्रह्माऋषिर्देवीगायत्रीछंदः परमात्मादेवता त्रिव्याहृतीनांविश्वामि
त्रजमदग्निभरद्वाजऋषयः गायत्र्युष्णिगनुष्टुप् छंदांस्यग्निवायुसूर्यादेवता मंडलेदेवता-
नामावाहनेविनियोगः तत्रमध्येब्रह्माणंस्थापयेत् ॐब्रह्मयज्ञानमितिगौतमोवामदेवऋ-
षिर्ब्रह्मादेवतात्रिष्टुप्छंदः ब्रह्मस्थापनेविनियोगः ॐब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसी
मतःसुरुचोवेनआवः सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॐब्रह्मणेनमः
ब्रह्माणंस्थापयामि ततोमंडलाद्बहिःप्रागादिक्रमेणलोकेशान्स्थापयेत् तत्रप्रथमं
पूर्ववाप्यां ॐत्रातारमिंद्रमितिगौतमऋषिः त्रिष्टुप्छंदः इंद्रोदेवता इंद्रावाहनेविनि-
योगः त्रातारमिंद्रमवितारमिंद्रꣳहवेहवेसुहवꣳशूरमिंद्रमाह्वयामिशक्रंपुरुहूतमिंद्र
ꣳस्वस्तिनोमघवाधात्विंद्रः इंद्रायनमः इंद्रमावाहयेत् २ ततः आग्नेय्यांत्रिपदेखंडेद्वौ त्व
न्नोअग्नेइत्यस्यहिरण्यस्तूपऋषिः त्रिष्टुप्छंदः अग्निर्देवता अग्न्यावाहनेविनियोगः
ॐत्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः यजिष्ठोवह्नितमःशोशुचानोवि
श्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् अग्नयेनमः अग्निमावाह्य ततोदक्षिणस्यांवाप्यां यमाय
त्वेतिविवस्वतऋषिः त्रिष्टुप्छंदः यमोदेवता यममावाहनेविनियोगः ॐयमायत्वाम
खायत्वासूर्यस्यत्वातपसेदेवस्त्वासवितामध्वानक्तुपृथिव्याः सꣳस्पृशस्पाहि अर्चि
रसिशोचिरसितपोसि यमायनमः यममावाहयामि ४ ततोनैर्ऋत्येत्रिपदे० असुन्व
न्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य अन्यमस्मदिच्छसातइत्यानमोदेवि
निर्ऋतेतुभ्यमस्तु निर्ऋतयेनमः निर्ऋतिमावाहयेत् ५ तत्वायामीतिशुनःशेपऋषिः
त्रिष्टुप्छंदः वरुणोदेवता वरुणावाहनेविनियोगः ॐतत्वायामिब्रह्मणावंदमानस्त
दाशास्तेयजमानोहविर्भिः अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः वरु
णायनमः वरुणमावाहयेत् इतिपश्चिमेवाप्यां ततोवायव्येखंडेद्वौत्रिपदे ॐआनो
नियुद्भिरितिप्रजापतिऋषिः त्रिष्टुप्छंदः वायुर्देवता वाय्वावाहनेविनियोगः ॐ

आनोनियुद्भिः शतिनीभिरध्वरग्ं सहस्रिणीभिरुपयाहि यज्ञं वायोऽअस्मिन्सवनेमादयस्वयू
यंपातस्वस्तिभिःसदानः वायवेनमः वायुमावा० ७ ततउत्तरेवाय्वोर्वयग्ंसोमेत्यस्यबंधु
ऋषिर्गायत्रीछंदः सोमोदेवता सोमावाहनेविनियोगः ॐवयग्ंसोमव्रतेतवमनस्तनूषु
बिभ्रतः प्रजावंतःसचेमहि सोमायनमः सोममा० ततईशान्यां त्रिपदेखंडेंद्रौ तमीशानं
मित्यस्यगोतमऋषिः जगतीछंदः ईशानोदेवता ईशानावाहनेविनियोगः ॐतमीशानं
जगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं पूषानोयथावेदसामसद्वृधे रक्षितापायुर
दब्धःस्वस्तये ईशानायनमः ५ ततईशानमध्ये भद्रे ॐसुगावोदेवाइत्यस्यप्रजापतिऋ
षिः त्रिष्टुप्छंदः वसवोदेवता वसूनामावाहनेविनियोगः ॐसुगावोदेवाःसदनाअकर्म
यआजग्मेदग्ंसवनंजुषाणाः भरमाणावहमानाहवीग्ंष्यस्मेधत्तवसवोवसूनिस्वाहावे
सुभ्योनमः १० इंद्राग्निमध्येभद्रेरुद्रासग्ंसृज्येतिप्रजापतिः त्रिष्टुप्छंदः रुद्रादेवता रुद्रा
णामावाहनेविनियोगः ॐरुद्राःसग्ंसृज्यपृथिवींबृहज्ज्योतिःसमीधिरे तेषांभानुरजस्र
इच्छुक्रोदेवेषुरोचते रुद्रेभ्योनमः रुद्राना० ११ अग्नियममध्ये द्वादशादित्यान् यज्ञोदेवाना
मिति कुत्सऋषिः त्रिष्टुप्छंदः आदित्यादेवता आदित्यानामावाहनेविनियोगः यज्ञोदे
वानांप्रत्येतिसुम्नमादित्यासोभवतामृडयंतः आवोर्वाचीसुमतिर्ववृत्यादग्ंहोश्चिद्यावरि
वोवित्तरासदादित्येभ्यस्त्वा द्वादशादित्येभ्योनमः द्वादशादित्याना० १२ यमनिर्ऋतिमध्ये
मरुतः मरुतोयस्येति गोतमोऋषिर्गायत्रीछंदः मरुतोदेवताः मारुनामा० विनियोगः
ॐमरुतोयस्यहिक्षये पाथादिवोविमहसः ससुगोपातमोजनः मरुद्भ्योनमः मरुतआवा०
१३ निर्ऋतिवरुणयोर्मध्ये भद्रेविश्वान् देवान् ॐओमासश्चर्षणीत्यस्यमधुछंदऋषिः गा
यत्रीछंदः विश्वेदेवादेवता विश्वेदेवानामावाहनेविनियोगः ॐओमासश्चर्षणीधृतोविश्वे
देवासआगतदाश्वाग्ंसोदाशुषःसुतं विश्वेभ्योदेवेभ्योनमः विश्वान्देवाना० १४ वरुणवा
युमध्येभद्रेसाध्यान्देवान् यज्ञेनयज्ञमितिनारायणऋषिः त्रिष्टुप्छंदः पुरुषोदेवता सा
ध्यानामावाहनेविनियोगः यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् तेहना
कंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः इतिसाध्येभ्योनमः साध्यानामावा० १५
वायुसोममध्येभद्रे अश्विनौ यावांकशेत्यस्य मेधातिथिऋषिः यजुर्गायत्रीछंदः अश्विनौ
देवता अश्विनावावाहनेविनियोगः अश्विनौयावांकशामधुमत्यश्विनासूनृतावति
तयायज्ञंमिमीक्षतम् अश्विनातेजसाचक्षुःप्राणेनसरस्वतीवीर्यंवाचेंद्रोबलेनेंद्रा
यदधुरिंद्रियं अश्विभ्यांनमः अश्विनावावाहयामि १६ सोमेशानमध्येभद्रे स्कंदं यद
क्रंदः प्रथमंजायमानउद्यन्त्समुद्रादुतवापुरीषात् श्येनस्यपक्षाहरिणस्यबाहू उपस्तु
त्यंमहिजातंतेअर्वन् स्कंदायनमः वृषभायनमः स्कंदमावाहयामि वृषभमावाहयामि
१७ ब्रह्मेंद्रमध्येवल्यांविष्णुं इदंविष्णुरितिमेधातिथिऋषिः गायत्रीछंदः विष्णुर्देवता विष्णो
रावाहनेविनियोगः इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं समूढमस्यपाग्ंसुरे विष्णवेनमः
विष्णुमावाहयामि १८ ब्रह्माग्निमध्येवल्यां गणपतिं गणानांत्वेतिप्रजापतिऋषिः जीग
पन्तग्ंषिछंदांसि गणपतिर्देवता गणपत्यावाहनेविनियोगः गणानांत्वागणपतिग्ं
हवामहे प्रियाणांत्वाप्रियपतिग्ंहवामहे निधीनांत्वानिधिपतिग्ंहवामहे वसोमम
आहमजानिगर्भधमात्वमजासिगर्भधं गणपतयेनमः गणपतिमा० १९ ब्रह्मयम

मध्येवल्यां पितॄन् आयान्तुनइत्यस्यप्रजापतिऋषिः त्रिष्टुप्छंदः पितरोदेवता पितॄणामा
वाहनेविनियोगः ॐआयान्तुनःपितरःसोम्यासोग्निष्वात्ताःपथिभिर्देवयानैः अस्मिन्यज्ञेस्व
धयामदन्तोधिब्रुवंतुतेवन्त्वस्मान् पितृभ्योनमः पितृनामावाहयामि २० ब्रह्मनिर्ऋतिमध्ये
वल्यां गंधर्वाप्सरसः ऋताषाडित्यस्यवामदेवऋषिःगायत्रीछंदः गंधर्वाप्सरसोदेवता गं
धर्वाप्सरसामावाहनेविनियोगः ॐऋताषाडृतधामाग्निर्गंधर्वस्तस्यौषधयोप्सरसोमुदो
नामताभ्यः गंधर्वाप्सरोभ्योनमः गंधर्वाप्सरसआवाहयामि २१ ब्रह्मवरुणमध्येवल्यां
सप्तमातॄः अंबेअंबिकेइत्यस्यप्रजापतिर्देवता अनुष्टुप्छंदः सप्तमातरोदेवताः सप्तमातॄ
णामावाहनेविनियोगः ॐअंबेअंबिकेंबालिकेनमानयतिकश्चनससस्त्यश्वकःसुभद्रिकांकांपी
लवासिनी सप्तमातृभ्योनमः सप्तमातॄनावाहयामि २२ ब्रह्मवायुमध्येवल्यां सर्पान् नमो
स्तुसर्पेभ्यइत्यस्यप्रजापतिऋषिः अनुष्टुप्छंदः सर्पादेवताः सर्पाणामावाहनेविनियो
ॐनमोस्तुसर्पेभ्योयेकेचपृथिवीमनु येअंतरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः सर्पानामावा०
२३ ब्रह्मसोममध्येवल्यांदुर्गां जातवेदसइत्यस्यकश्यपऋषिःत्रिष्टुप्छंदः जातवेदोग्निर्दे
वतादुर्गावाहनेविनियोगः ॐजातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः सनः
पर्षदतिदुर्गाणिविश्वानावेवसिंधुःदुरितात्यग्निः दुर्गायैनमः ॐदुर्गां आवाहयामि २४
ब्रह्मेशानमध्येवल्यांपंचनदीः पंचनद्यइत्यस्यगृत्समदऋषिः अनुष्टुप्छंदः गंगादिनद्यो
देवताः गंगाद्यावाहनेविनियोगः ॐपंचनद्यःसरस्वतीमपियंतिसस्रोतसः सरस्वतीतुपं
चधासोदेशेभवत्सरित् पंचनदीरावाहयामि २५ ततोमंडलांतः ब्रह्मेशानदलादारभ्यदला
ग्राष्टकेषु ऐशान्यांदलाग्रे अदितिद्यौरित्यस्य गोतमऋषिः त्रिष्टुप्छंदः दक्षाद्यादेवता
दक्षाद्यावाहनेविनियोगः ॐअदितिर्द्यौरदितिरंतरिक्षमदितिर्मातासपितासपुत्रः विश्वे
देवाअदितिः पंचजनाःअदितिर्जातमदितिर्जनित्वं दक्षादिभ्योनमः दक्षादीनामा० २६
पूर्वदलाग्रेपुरुषं सहस्रशीर्षेतिनारायणऋषिः अनुष्टुप्छंदः पुरुषोदेवता पुरुषावाहने०
ॐसहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् सभूमिंसर्वतःस्पृत्वात्यतिष्ठद्दशांगुलम्
पुरुषायनमः पुरुषमावाहयामि २७ आग्नेय्यांजातवेदसइत्यादिना दुर्गायैनमः दुर्गामा
वाहयामिनमः २८ दक्षिणस्यांदलाग्रेस्वधां उदीरितामित्यस्यशंखऋषिः अनुष्टुप्छंदः स्व
धादेवतास्वधावाहनेविनियोगः ॐउदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः अ
सुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषु स्वधायैनमः स्वधामावा० २९ नैर्ऋत्यांदलाग्रे
मृत्युं परंमृत्योरित्यस्यकौशिकोऋषिः त्रिष्टुप्छंदः मृत्युर्देवता मृत्योरावाहनेविनियोगः
ॐपरंमृत्योअनुपरेहिपंथांयस्तेअन्यइतरोदेवयानात् चक्षुष्मतेशृण्वतेतेब्रवीमिमानः प्र
जांरीरिषोमोतवीरान् मृत्यवेनमः मृत्युमावाहयामि ३० पश्चिमेदलाग्रे शेषं आयंगौरि
त्यस्य विश्वेदेवाऋषयः अनुष्टुप्छंदः शेषोदेवता शेषावाहनेविनियोगः ॐआयंगौः पृ
श्निरक्रमीदसदन्मातरंपुरः पितरंचप्रयंत्स्वः शेषायनमः शेषमावाह० वायव्यांदलाग्रे इ
मंमेइत्यस्यशुनःशेपऋषिः गायत्रीछंदः वरुणोदेवता सप्तसागरावाहनेविनियोगः इमं
मेवरुणः श्रुधीहवमद्याचमृडयत्वामवस्युराचके सप्तसागरेभ्योनमः सप्तसागरानावाह
यामि ३२ उत्तरेदलाग्रे मरुतः मरुतोयस्येतिगोतमऋषिर्गायत्रीछंदः मरुतोदेवता मरुता
वाहनेविनियोगः मरुतोयस्येतिमंत्रः पूर्ववत् मरुतआ० ३३ ब्रह्मणः पादमूलेगदापद्मे

गणानांत्वेति प्रजापतिरृषिर्यजुश्छंदः गणपतिर्देवता गणपत्यावाहने विनियोगः गणा
नांत्वेति मंत्रः पूर्ववत्पठनीयः गणपतये० गणपतिमा० ३४ कर्णिकायांक्ष्मामावाहयेत्
स्योनापृथिवीत्यस्य मेधातिथिरृषिः गायत्री छंदः पृथिवी देवता पृथिव्यावाहने विनि
योगः स्योनापृथिवी नोभवान्दृक्षरानिवेशनी यच्छानःशर्मसप्रथाः पृथिव्यैनमः पृथिवी
मावाहयामि ३५ तदुपरिमेरवेनमः मेरुमावाहयामि तत्परितःपूर्वादिक्रमेण पूर्वेऋग्वे
दं अग्निमीलेपुरोहितंयज्ञस्यदेवमृत्विजं होतारंरत्नधातमं ऋग्वेदायनमः ऋग्वेदमावाह
यामि ३६ दक्षिणस्यांयजुर्वेदं ॐइषेत्वोर्जेत्वावायवस्थदेवोवःसविताप्रार्प्ययतुश्रेष्ठत
मायकर्मण आप्यायध्वमघ्न्याइंद्रायभागंप्रजावतीरनमीवाअयक्ष्मामावस्तेनईशतमा
घशंसोध्रुवाअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि यजुर्वेदायनमः यजुर्वे
दमावाहयामि ३८ ततःपश्चिमेसामवेदम् ॐअग्नआयाहिवीतयेगृणानोहव्यदातये निहो
तासत्सिबर्हिषीति सामवेदायनमः सामवेदमावाहयामि उत्तरेअथर्ववेदं ॐशन्नोदेवीरभिष्ट
येआपोभवंतुपीतयेशंय्योरभिस्रवंतुनः अथर्ववेदायनमः अथर्ववेदमावाहयामि ४०
मंडलाद्बाह्ये प्रागादिक्रमेणलोकपालायुधानि ८ पूर्वेवज्रायनमः शक्तयेनमः दंडायनमः
खड्गायनमः पाशायनमः अंकुशायनमः गदायैनमः त्रिशूलायनमः ४८ इत्यष्टदिक्षुक्रमे
णपूज्यानि पुनःपूर्वादितः लोकपालानांवाहनानिन्यसेत् ८ ऐरावतायनमः मेषायनमः
महिषायनमः प्रेतायनमः मकरायनमः हरिणायनमः शिविकायैनमः वृषभायनमः
५६ पुनःपूर्वादिक्रमेणतद्बाह्ये गौतमायनमः भरद्वाजायनमः विश्वामित्रायनमः
कश्यपायनमः अत्रयेनमः जमदग्नयेनमः वसिष्ठायनमः अरुंधत्यैनमः तद्बाह्येपू
र्वादिक्रमेण आदित्यायनमः सोमायनमः बुधायनमः बृहस्पतयेनमः शुक्रायनमः
शनैश्चरायनमः राहवेनमः पूर्वेशानयोरंतराले केतवेनमः तद्बाह्येपूर्वादिक्रमेण ऐंद्र्यैनमः
कौमार्य्यैनमः ब्रह्माण्यैनमः वाराह्यैनमः चामुंडायैनमः माहेश्वर्य्यैनमः वैनायक्यै
नमः लिंगतोभद्रेऽपि एतादेवता अनेनैवक्रमेणवाह्यप्रतिष्ठाप्यपूजनीयाः इयानत्रवि
शेषः पूर्वे असितांगभैरवायनमः १ आग्नेय्यांरुरुभैरवायनमः २ दक्षिणेचंडभैरवाय
नमः ३ नैर्ऋत्येक्रोधभैरवायनमः ४ पश्चिमेउन्मत्तभैरवायनमः ५ वायव्येकपालिभैर
वायनमः ६ उत्तरेभीषणभैरवायनमः ७ ईशानेसंहारभैरवायनमः ८ पुनःपूर्वादिदि
क्षु पूर्वेभवायनमः १ आग्नेय्यांशर्वायनमः २ दक्षिणेपशुपतयेनमः ३ नैर्ऋत्येई
शानायनमः ४ पश्चिमेरुद्रायनमः ५ वायव्येउग्रायनमः ६ उत्तरेभीमायनमः ७
ईशानेमहतेनमः ८ पुनःपूर्वादिदिक्षु अनंतायनमः १ वासुकयेनमः २ तक्षायन
मः ३ कुलिकायनमः ४ कर्कोटकायनमः ५ शंखपालायनमः ६ कंबलायनमः ७
अश्वतरायनमः ८ ईशानेंद्रयोर्मध्ये ॐशूलायनमः १ इंद्राग्न्योर्मध्येचंद्रमौलयेनमः २
अग्नियमयोर्मध्येचंद्रमसेनमः ३ ॐयमनैर्ऋतयोर्मध्ये वृषभध्वजायनमः ४ निर्ऋति
वरुणयोर्मध्येत्रिलोचनायनमः ५ वरुणवाय्वोर्मध्येशक्तिधरायनमः ६ वायुसोम
योर्मध्ये महेश्वरायनमः ७ सोमेशानयोर्मध्ये शूलपाणयेनमः ततोवहिः ऐराव
तादिवाहनानि ८ तद्बाह्येगौतमादिऋषीन् ८ तद्बहिःसूर्यादीन्ग्रहान् ९ पूर्वादि
दिक्षु गणेशं १ दुर्गां २ क्षेत्रपालं ३ महाकालंच ४ पूजयेदिति लिंगतोभद्रमंडलेदेवतापू

ष्पैः शूद्रैरन्यैश्च मानवैः स्त्रीभिश्च कुरुशार्दूल तद्विधानमिदं शृणु इति भविष्ये शूद्रस्याप्युक्तं
एवं प्रायश्चित्तं शूद्रे जपहोमादिरहितं देयं तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितं प्रायश्चित्तं
प्रदातव्यं जपहोमविवर्जितमिति मिताक्षरायामांगिरसोक्तं अत्र जपहोमवर्जं प्रायश्चित्तंदा
नेतीर्थयात्रादौ न शूद्रसंबंधविधेरुपसंहारः इहभयत्वविधिश्चिष्टोद्देशे वाक्यभेदाद्द्विजा
नां तदभावापत्तेश्च किंतु शूद्रसंबंधिप्रायश्चित्तोद्देशेन जपहोमवर्जत्वविधिर्न्नोभयतः अत्र
केचित् प्रधानभूतयोर्जपहोमयोर्निषेधो नत्वंगभूतयोः अतएव महार्णवे लौकिकाग्नौ स्त्री
शूद्रयोः प्रायश्चित्तांगभूतव्याहृतिहोमो विप्रद्वारेत्युक्तं इत्याहुः तत्र आरंभे सर्वकृच्छ्राणां स
मासौ च विशेषतः आज्येनैव तु शालाग्नौ जुहुयाद्व्याहृतीः पृथक् आद्यंकुर्याद्द्विजो नान्तेन्तु गो
हिरण्यादिदक्षिणा स्त्रीणां होमो न कर्तव्यः पंचगव्यं तथैव चेति जाबालिना गृह्याग्निनिय
मात् न चाग्नेः प्रतिनिधिरस्तीत्युक्तम् अथ शूद्रस्य देवपूजाधिकारः शिवसर्वस्वे भविष्ये च य
स्तु पूजते लिंगं देवादिं मां जगत्पतिं ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा मत्परायणः तस्य प्रीतः प्र
दास्यामि स्वर्भोगांल्लोकाननुत्तमान् पूजा च स्पर्शरहिता विष्णुलीसेतौ स्त्रीणामनुपनीतानां शू
द्राणां च नरेश्वर स्पर्शने नाधिकारोस्ति विष्णौ वा शंकरस्य च यः शूद्रः संस्कृतं लिंगं विष्णुं वापि न
मेन्नरः इहैवात्यंतदुःखानि पश्यत्यामुष्मिके किम् शूद्रो वानुपनीतो वा नारी वा पतितोपि वा
केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते अथ शूद्रस्य महादानादावप्यधिकारः मात्स्ये हिरण्य
गर्भदाने नरो वा यदि वा नारी एवं ब्रह्मात्मसंभवं यः करोति महापुण्यं शृणु तस्यापि यत्फलं
कामधेनुदानेपि आग्नेये ब्रह्मविट्क्षत्रशूद्राणां कर्तव्या यत्नतो नृपेति तथा चान्यत्राप्युक्तं
अधिकारी भवेच्छूद्रः पूर्ते धर्मे न वैदिके मोक्षधर्मेपि मंत्रवर्जं न दुष्यति कुर्वाणः पौष्टिकीं
क्रियामिति पंचगव्यविधाने स्त्रीशूद्राणां विकल्पः स्त्रीशूद्रस्य विशुद्ध्यर्थं प्राजापत्यं समादिशे
त् पंचगव्यं न कुर्वीत स्नात्वा पीत्वा शुचिर्भवेत् इति पराशरोक्तेः यत्तु पंचगव्यं पिबेच्छूद्रो ब्राह्म
णस्तु सुरां पिबेत् उभौ तौ तुल्यकर्माणौ पूयाख्ये नरके स्थितौ तत्प्रायश्चित्तं विनातेनाधिविशेषः
प्रायश्चित्तरत्ने ज्ञेयः एवं पूर्तेपि जलाशयोत्सर्गप्रासादप्रतिष्ठामहादानादिषु शूद्रस्या
धिकारः अधिकारी भवेच्छूद्रः पूर्ते धर्मे न वैदिके पूर्तं चाह हेमाद्रौ मदनरत्ने जातूकर्ण्यः
वापीकूपतडागादिदेवतायतनानि च अन्नदानप्रपादानमारामः पूर्तमुच्यते नारदः ग्र
होपरागे यद्दानं सूर्यसंक्रमणादिषु द्वादश्यादिषु यद्दानं तत्पूर्तत्वमुदाहृतं शंखादिभिर
प्येवमुक्तं यत्र महादानादौ शूद्रस्य होमादावधिकारस्तत्र द्वेधा गतिः वैदिकमंत्ररहितं विप्रे
कार्यमित्येकः पक्षः मंत्रवर्जं न दुष्यति कुर्वाणः पौष्टिकीं क्रियामिति मन्वादिभिरप्येवमुदा
हृतं अन्ये त्वाहुः विप्रैर्वैदिकमंत्रेणैव होमादिकार्यं वक्ष्यमाणपाराशरोक्तेः माधवीयेप्ये
वं पौराणमंत्रैश्चाचार्यकर्तृकेषु पाठ एव याजमानेषु तेषां श्रवणमात्रमुक्तम् श्रवणविधि
जन्यस्तानस्यैवांगत्वात् वैदिके तु याजमानेन नमस्कार एव अनुमतोस्य नमस्कारो मंत्र इति गौ
तमोक्तिः व्यासमन्वादिवाक्यान्यप्येतद्विषयाण्येव अस्येति षष्ठीश्रुत्या तत्संबंधित्वान्नैर
णोपि विप्रस्यैव अमंत्रस्य तु शूद्रस्य विप्रो मंत्रेण गृह्यते इति पूर्वोक्तवाराहोक्तेः एवं शूद्रस्या
द्भुतरोगशांतिकर्मविपाकतुलादानादावपि स्त्रीशूद्राश्च सधर्माण इति स्मृतेः अतएव शूद्र
कर्तृकहोमो विप्रद्वारैव पराशरेणोक्तः तथा दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः
ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेदिति अत्र माधवाचार्यः यो विप्रः शूद्राद्दक्षि

गणामंत्रैरभिषिंचेयुः तत्रपत्नीवामे अथानंतरंकरोतु स्वस्तिनेब्रह्मेतिपूर्वोक्तैर्यजमानस्यनी
राजनं तिलकमाशीर्वादांश्चदद्युरितिसर्वत्र इतिशूद्रकमलाकरोक्तं शूद्रस्यपुण्याहवाचनं
अथशूद्रस्यमातृकापूजनम् तत्रकर्त्तातंडुलपुंजेषु गौरीपद्माशचीमेधासावित्रीविजया
जया देवसेनास्वधास्वाहामातरोलोकमातरः धृतिःपुष्टिस्तथातुष्टिरात्मनःकुलदेवता ग
णेशेनाधिकाह्येताःवृद्धौपूज्यास्तुषोडश ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा वाराही
चतथेंद्राणीचामुंडासप्तमातरइतिच गणेशयुतागौर्य्यादिषोडशमातरोब्राह्म्यादिसप्तमा
तरश्चसर्वाइहागच्छंतु सुप्रतिष्ठितावरदाभवंतु इत्येवंनामभिःपृथकपृथगावाह्य षोडशो
पचारैःसंपूज्याः ततःकुड्येघृतेनसप्तधाराःकृत्वा वसुधारायैनमः इत्यावाह्यसंपूज्य ल
लिताचउमागौरीअंबिकासाललिताशया भगाहीचभगाक्षीचसप्तैताघृतमातर इतिषोड
शोपचारैःसंपूज्य ततोनांदीश्राद्धंकुर्य्यात् अत्रसंकल्पादौविशेषःसंग्रहे शुभायप्रथमं
तेनवृद्धौसंकल्पमाचरेत् नषष्ठ्यायदिवाकुर्यान्महान्दोषोभिजायते अनुसंबंधशब्दानामरू
पानामगोत्रिणां अनाम्नांचाथतिलाद्यैश्चनांदीश्राद्धंचसव्यवत् कारिकाच संबंधनामरूपा
णिवर्जयेदत्रकर्मणीति अत्रसत्यवसुसंज्ञकौविश्वेदेवौतत्स्थानेद्वौविप्रौ मात्रादीनांचप्रत्ये
कंद्वौद्वौ एवंविंशतिर्ब्राह्मणाः यद्वामात्रादीनांत्रयाणांद्वौद्वौएवमष्टौ मात्रादीनामिति
मातृपितामहीप्रपितामहीनां पितृपितामहप्रपितामहानां मातामहप्रमातामहवृद्ध
प्रमातामहानांसपत्नीकानांस्थानत्रयेप्रत्येकंद्वौद्वौ विश्वेदेवानांद्वौ एवमष्टावेव अत्र
नापसव्यं तिलकार्य्येषुयवाएवस्वधास्थानेस्वाहाशब्दः विप्रादीनांनशूद्रस्यसव्यजानुनि
पातनाभावः आमान्नादिदानेप्राङ्मुखएवकुर्य्यात् ऋजुदर्भैःक्रियाहूर्वाभिर्वा इत्यादयो
विशेषाग्रंथांतरतोज्ञेयाः पिंडदानेकुलाचारदेशाचारतोव्यवस्था भविष्ये पिंडनिर्वपणंकु
र्यान्नवाकुर्यान्नराधिप वृद्धिश्राद्धेमहाबाहो कुलधर्माननवेक्ष्यत पिंडदानेविशेषोवसि
ष्ठेनोक्तः दधिकर्कंधुबदरीफलेनतुगुणीत तथा एकैकस्मैपिंडद्वयंदेयं एकनाम्नापरंतूष्णीं
दद्यात्पिंडद्वयंबुधः पिंडद्वयदानेहेत्वर्थं यद्वा विवाहव्रतचूडासुवर्षमर्धंतदर्धकं पिंडदा
नंमृदास्नानंनकुर्यात्तिलतर्पणमिति पित्रादित्रयाहश्राद्धातिक्रमदोषपरिहारार्थं देयं
तत्रएकनाम्नापरंतूष्णीमिति पिंडदानपक्षे अत्रापरोविशेषोरूपनारायणीये अग्नौकरण
मर्घ्यंचावाहनंचावनेजनं पिंडश्राद्धेप्रकुर्वीतपिंडहीनेनिवर्त्तते यथा पिंडनिर्वापरहितं यत्र
श्राद्धंविधीयते स्वधावाचनलोपोस्तिविकरस्तुनलिख्यते अक्षय्यंदक्षिणास्वस्तिसौमन
स्यंयथास्थितिमितिकर्त्तव्यमेव अथशूद्रस्यापिंडकवृद्धिश्राद्धेसंक्षिप्तप्रयोगः सत्यवसुसं
ज्ञकाविश्वेदेवाइदंवःपाद्यं मातृपितामहीप्रपितामह्यो नांदीमुखाइदंवःपाद्यं २ पितृपि
तामहप्रपितामहानांदीमुखाइदंवःपाद्यं ३ मातामहप्रमातामहवृद्धप्रमातामहानांदीमु
खाःसपत्नीकाइदंवःपाद्यं इदमासनं ततोगंधादिदानेएषगंधः इमानिपुष्पाणि एष
धूपः इदमाच्छादनं सत्यवसुसंज्ञकेभ्योविश्वेदेवेभ्यः १ मातृपितामहीप्रपितामहीभ्यो
नांदीमुखीभ्यः २ पितृपितामहप्रपितामहेभ्योनांदीमुखेभ्यः मातामहप्रमातामह
वृद्धप्रमातामहेभ्यःनांदीमुखेभ्यःसपत्नीकेभ्यः ४ इदंगंधाद्यर्चनंसंपद्यतांवृद्धिः इति प्र
नचतुष्टयेयथाक्रमंदत्वा ततःपरिवेषणार्थंमंडलमभ्युक्ष्य तत्रपरिवेषणंविधाय सत्यव
सुसंज्ञकविश्वेदेवेभ्यः१ मातृपितामहीप्रपितामहीभ्योनांदीमुखीभ्यः २ पितृपितामह

प्रपितामहेभ्यो नांदीमुखेभ्यः ३ मातामहप्रमातामहवृद्धप्रमातामहेभ्यो नांदीमुखेभ्यः ४ युग्मब्राह्मणभोजनपर्याप्तमन्नममृतरूपेण संपद्यतां वृद्धिरिति स्थानचतुष्टये यथाक्रमं देयं अन्नान्नं सदक्षिणमेव देयम् अत्रापि स्वस्तिवाच्यमिति संप्रदायः अनेन नांदीश्राद्धेन कर्मांगदेवताः प्रीयंतां वृद्धिः नांदीश्राद्धं संपन्नं दक्षितमस्तु शिवा आपः संतु सौमनस्यमस्तु अक्षतं चारिष्टमस्तु नांदीमुखो मातरः प्रीयंतां नांदीमुखाः पितरः प्रीयंतां नांदीमुखा मातामहाः प्रीयंतां गोत्रं नो वर्धतां दातारो नोभिवर्धतां वेदाः संततिरेव च श्रद्धा च नो माव्यगमत् बहु देयं च नो अस्तु अन्नं च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः संतु मा च याचिष्म कंचनेति संप्रार्थ्य विप्रैस्तथास्त्विति वाच्यं गोत्रं नो वर्धतां वेदाः संततिरेव च श्रद्धा च वो माव्यगमत् बहु देयं च वो अस्तु अन्नं च वो बहु भवे दतिथींश्च लभध्वं याचितारश्च वः संतु मा याचिध्वं कंचनेति प्रत्युक्ते ततो दक्षिणादानं तद्यथा कृतैतन्नांदीश्राद्धकर्मणः सांगतासिद्ध्यर्थं द्राक्षामलकामलकैः क्रयं वा दक्षिणां प्रत्येकं ददामि विश्वेदेवाः प्रीयंतां नांदीमुखाः देवताः प्रीयंतां माता पितामही चैव तथैव प्रपितामही पिता पितामहश्चैव तथैव प्रपितामहः मातामहस्तत्पिता च प्रमातामहकादयः एते भवंतु मे प्रीताः प्रयच्छंतु च मंगलमिति नत्वा विसर्जयेत् इति वृद्धस्य वृद्धिश्राद्धं ॥ अथोद्यापनप्रयोगः स च स्त्रीशूद्रयोः समानधर्मत्वादवैदिकएवोक्तः अतः पौराणमंत्रपुरस्कृतोभिधीयते तत्रादौ स्वाचार्योपदिष्टरीत्या सतोरणं वेदिमंडपं वा यथाशक्ति संपाद्योद्यापनसंभृतिं चादाय आसने उपविश्य आचम्य प्रतिज्ञासंकल्पं कुर्यात् देशकालौ संकीर्त्य अमुकगोत्रोमुकदासोहं स्त्री चेदमुकगोत्रामुकदासी चाहं सर्वपापक्षयपूर्वकसकलाभीष्टप्राप्तिपुत्र विष्णुप्रभृतिस्वाभीष्टदेवताप्रीत्यर्थं यथाविद्याचरितैकादशपादिव्रतसांगफलावाप्तये तदुद्यापनं करिष्ये तत्पूर्वांगत्वेन गणेशादिपूजार्थमाचार्यादिवरणं च करिष्ये अथाचार्यवरणं अद्यास्मिन्नेकादशपादिव्रतोद्यापनकर्मण्याचार्यत्वेन त्वामहं वृणे आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः तथा त्वं मम यज्ञेस्मिन् भवाचार्यो द्विजोत्तमेत्याचार्यं वृणुयात् सतिविभवे चतुर्दीरेषु जापकान् द्वारपालांश्चैव वृणुयात् ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः अत्रिगोत्रस्तु विप्रेंद्र ऋत्विक्त्वं मे मखे भव १ कौचराख्यो यजुर्वेदस्त्रैष्टुभो विष्णुदैवतः काश्यपेयस्तु विप्रेंद्र ऋत्विक्त्वं मे मखे भव २ सामवेदस्तु पिंगाक्षो जागतः शक्रदैवतः भारद्वाजस्तु विप्रेंद्र ऋत्विक्त्वं मे मखे भव ३ बृहन्नेत्रोथर्ववेदोनुष्टुभो रुद्रदैवतः वैशंपायनविप्रेंद्र ऋत्विक्त्वं मे मखे भव ४ यदा त्वाचार्य एवैकस्तदा ऋत्विगादिवरणं न कुर्यात् अथाचार्यो यजमानस्य स्वफलाम्रातादिकं बध्वा अभिषेकं कृत्वा दत्तासूत्रं करे बध्वा स्वस्तिवाचनं कृत्वा तिलकं कारयित्वा दूर्वाक्षतादिकं दद्यात् तत्र मंत्रः करोतु स्वस्ति ते ब्रह्मा स्वस्ति चापि द्विजातयः सरीसृपाश्च ये श्रेष्ठास्तेभ्यस्ते स्वस्ति सर्वदा १ ययातिर्नहुषश्चैव धुंधुमारो भगीरथः तुभ्यं राजर्षयः सर्वे स्वस्ति कुर्वंतु नित्यशः २ स्वस्ति ते स्तु द्विपादेभ्यश्चतुष्पादेभ्य एव च स्वस्त्यस्त्वपादकेभ्यश्च तव नित्यं महामखे ३ स्वाहा स्वधा शची चैव स्वस्ति कुर्वंतु नित्यशः लक्ष्मीररुंधती चैव कुरुतां स्वस्ति ते सदा ४ असितो देवलश्चैव विश्वामित्रस्तथांगिराः वसिष्ठः कश्यपश्चैव स्वस्ति कुर्वंतु ते सदा ५ धाता विधाता लोकेशो दिशश्च सदिगीश्वराः दिग्गजाश्चैव चत्वारो दितिश्च सनवग्रहाः ६ स्वस्ति ते संप्रयच्छंतु कार्तिकेयश्च षण्मुखः विवस्वान्भगवांश्चैव करोतु स्वस्ति सर्वदा ७ अथ स्ताइशणी पोसोनागो।

पारयतेसदा शेषश्चपन्नगश्रेष्ठःस्वस्तितेप्यप्रयच्छतु इतिस्वस्तिवाचनम् पठित्वापुष्पाक्षतादिकं
सर्वेदद्युः अथाचार्योभूतोत्सारणंकुर्यात् अपसर्पंतुतेभूता येभूताभुविसंस्थिताः येभूतावि
घ्नकर्त्तारस्तेनश्यंतुशिवाज्ञया १ यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वतः स्थानंत्यक्त्वातुतत्सर्वं
यत्रस्थंतत्रगच्छतु अथतोरणपूजनं पूर्वे सुदंष्ट्रतोरणपंनयत्तेरक्ष सर्वविघ्नान्निवारयेत्या
वाह्य ऋग्वेदाधिष्ठितायसुदंष्ट्रतोरणायनमइतिसंपूज्य दक्षिणेविकटतोरणपंनयत्तेरक्षस
र्वविघ्नान्निवारयेत्यावाह्य यजुर्वेदाधिष्ठितायविकटतोरणायनमः इतिसंपूज्य पश्चिमेसु
कर्मतोरण पंनयत्तेरक्षसर्वविघ्नान्निवारय सामवेदाधिष्ठितायसुकर्मतोरणायनमः इतिसं
पूज्य उत्तरे सुहोत्रतोरणपंनयत्तेरक्षसर्वविघ्नान्निवारय द्वारेषुकलशान्संस्थाप्यसंपूज्य स
र्वत्रकलशेषुदीपोदेयाः ततोद्वारपूजनम् पूर्वद्वारे धात्रेनमः विधात्रेनमः द्वारश्रियैनमः गण
पतयेनमः वास्तुपुरुषायनमः दक्षिणे बलायनमः सुबलायनमः द्वारश्रियैनमः गणपतये
वास्तुपुरुषाय पश्चिमे जयायनमः विजयायनमः द्वारश्रियै गणपतये वास्तुपुरुषाय
उत्तरे चंडायनमः प्रचंडायनमः द्वारश्रियै गणपतये वास्तुपुरुषायनमः मंडपपूजायाव्र
तोद्यापननिर्वर्त्तेषुप्रायशोनुक्तत्वा इदमंत्रैरेवानुष्ठेयत्वाच्च स्त्रीशूद्राद्यसमर्थानामुक्तिमाश्रि
त्यात्रपरित्यागउचित अथसर्वतोभद्रपूजाप्रारभ्यते तद्यथा कारयेत्सर्वतोभद्रं वेदिकोपरिसुं
दरं तिर्यगूर्ध्वगतारेखाः कुर्यादेकोनविंशतिः खंडेंदुस्त्रिपदःकोणेश्रृंखलाःपंचकोष्ठकाः एका
दशपदावल्लीभद्रंचनवभिःपदैः चतुर्विंशत्पदावापिपरिधिःविंशभिःपदैः मध्येषोडशभिःको
ष्ठैःपद्ममष्टदलंस्मृतं सितेंदुःश्रृंखलाकृष्णावल्लीनीलेनपूरयेत् भद्रारुणासिताचापिपरि
धिःपीतवर्णिका शुक्लंवायदिवारक्तंपद्मंकार्यंसुशोभनं वाह्यांतरादलाःश्वेताःकर्णिका
पीतवर्णिका खंडेंदुःश्रृंखलावल्लीवापीभद्रंतुपंचमं परिध्यावेष्टितंपद्मंवाह्येसत्वंरजस्तमः
सर्वव्रतंसमुद्दिष्टंसर्वतोभद्रमंडलं कारयेत्सर्वधान्यैर्वावर्णकैरुपशोभितं पीतंहरिद्राचूर्णं
स्यात्सितंतंडुलसंभवं कौसुंभचूर्णमरुणंकृष्णंदग्धपुलाकजं विल्वादिपत्रैर्हरितमेवंस्यात्
पंचवर्णकं तन्मध्येस्थापयेद्देवान्ब्रह्माद्यांश्चसुरासुरान् अथस्थानप्रकारः मध्येब्रह्मातथा
ष्टासुदिक्षुसोमादिदेवताः वायुसोमद्वयोर्मध्येवसूनष्टौतुपूजयेत् सोमईशानयोर्मध्येरुद्राने
कादशैवतु इंद्रईशानयोर्मध्येआदित्यान्द्वादशैवतु इंद्राग्निमध्येचतथाअश्विनौपूजयेत्तथा
आग्नेययमयोर्मध्येविश्वेदेवान्सपैतृकान् याम्यनैर्ऋतयोर्मध्येसप्तयक्षांश्चपूजयेत् नैर्ऋ
त्यावरुणयोर्मध्येनागानंतांश्चपूजयेत् आप्यवायव्ययोर्मध्येगंधर्वाप्सरसोयजेत् ब्रह्मसोम
द्वयोर्मध्येरुद्रानेकादशार्चयेत् स्कंदंनंदीवृषंशूलंमहादेवंचपूजयेत् ब्रह्मैशानद्वयोर्मध्ये
दक्षादीन्सप्तपूजयेत् ब्रह्मांतकदिशोर्मध्येस्वधांचैवप्रपूजयेत् ब्रह्मणोनिर्ऋतेर्मध्येगणाधिपं
तंप्रपूजयेत् वरुणब्रह्मणोर्मध्ये आपःसंपूजयेत्तथा मध्येवायोर्ब्रह्मणश्चमरुतःसंप्रपूजये
त् ब्रह्मणःपादमूलेतुमेदिनींतत्रपूजयेत् कावेरीनर्मदाचैवयमुनाचसरस्वती गंगाकृष्णात
थागोदापूज्याःसप्तचसागराः क्षारक्षीरमधुसर्पिर्मैरेयदधिसंभवाः तद्वाह्येचास्त्रपत्राणिदि
गीशानामनुक्रमात् पत्राणिवाहनानि सप्तर्षयोग्रहाश्चैवमाहेंद्रीप्रमुखाअपि अथस्थाप
नपूजाक्रमः सर्वतोभद्रमध्येकर्णिकायांब्रह्मणेनमः ब्रह्माणमावाहयामि १ पूर्वेवाप्यां
इंद्रायनमः इंद्रमावाहयामि २ आग्नेय्यांखंडेंदौश्रृंखलोपरिअग्नयेनमः अग्निमावाहयामि
२ दक्षिणवाप्यां यमायनमः यममावा० ३ नैर्ऋत्यांखंडेंदौश्रृंखलोपरिनिर्ऋतयेनमः निर्ऋ

तिमा० ४ पश्चिमेवाप्यां वरुणायनमः वरुणमा० वायव्यांवेदौ श्वेतलोपरिवायवेनमः वा
युमावाहयामि ६ उत्तरेवाप्यांसोमायनमः सोममा० ७ ईशानेवेदौ श्वेतलोपरि ईशाना
यनमः ईशानमा० ८ ईशानेंद्रमध्येभद्रेवसुभ्योनमः वसूनावा० ९ इंद्राग्निमध्येभद्रे रुद्रेभ्यो
नमः रुद्रानावाहयामि १० अग्नियममध्येभद्रे आदित्येभ्योनमः आदित्याना० ११ यमनिर्ऋति
मध्येभद्रे मरुद्भ्योनमः मरुतआवा० वायुसोममध्ये अश्विभ्यांनमः अश्विनावा० १५ सोमेशा
नमध्ये स्कंदंवृषभं १६ ततोब्रह्मेंद्रमध्ये वल्यांविष्णवेनमः विष्णुमावाहयामि १७ ब्रह्माग्निम
ध्येवल्यांगणपतयेनमः गणपति० १८ ब्रह्मयममध्येवल्यां पितृभ्योनमः पितॄना० १९ ब्रह्म
निर्ऋतिमध्येवल्यांगंधर्वाप्सरोभ्योनमः गंधर्वाप्सरसः २० ब्रह्मवरुणमध्येवल्यां सप्तमातृ
भ्योनमः सप्तमातृरावाहया० २१ ब्रह्मवायुमध्येवल्यांसर्पेभ्योनमः सर्पानावाहयामि २२
ब्रह्मसोममध्येवल्यांदुर्गायैनमः दुर्गामा० २३ ब्रह्मेशानमध्येवल्यां गंगादिपंचनदीभ्योनमः २४
पंचनद्यआवा० २५ ततोमंडलांतःपद्मस्याष्टदलेषु ईशानदलेदत्तायनमः दत्तमा० पूर्वदले०
पुरुषाय० पुरुषमावा० २६ आग्नेयदलेदुर्गायैनमः दुर्गामावाह० २७ दक्षिणदलेस्वधायैन०
स्वधामा० २८ नैर्ऋतदलेमृत्यवेनमः मृत्युमा० २९ पश्चिमदले शेषायनमः शेषमा० ३० वाय
व्यदलेसप्तसागरेभ्योनमः सप्तसागरानावा० ३१ उत्तरेमरुद्भ्योनमः मरुतआ० ३२ ब्रह्मणः
पादमूलेगणपतयेनमः गणपतिमा० ३३ कर्णिकायांमध्येपृथिव्यैनमः पृथिवीमा० ३४
मेरवेनमः मेरुमा० ३५ पूर्वेऋग्वेदायनमः ऋग्वेदमा० ३६ दक्षिणेयजुर्वेदायनमः यजुर्वे
दमा० ३७ पश्चिमेसामवेदायनमः सामवेद० ३८ उत्तरेअथर्ववेदायनमः अथर्ववेदमा० ३९
पूर्वादितः वज्रायनमः ४० शक्तयेनमः ४१ दंडायनमः ४२ खड्गायनमः ४३ पाशायनमः
अंकुशायनमः ४५ गदायैनमः ४६ शूलायनमः ४७ पुनःपूर्वादित ऐरावतायनमः ४८
मेषायनमः ४९ महिषायनमः ५० प्रेतायनमः ५१ मकरायनमः ५२ एणायनमः ५३ शिवि
कायैनमः ५४ वृषभायनमः ५५ पुनःपूर्वादितः गोतमायनमः ५६ भरद्वाजायनमः ५५ वि
श्वामित्रायनमः ५८ कश्यपायनमः ५९ जमदग्नयेनमः ६० अत्रयेनमः ६१ वसिष्ठायनमः
६२ अरुंधत्यैनमः ६३ पुनःपूर्वादितः आदित्यायनमः ६४ सोमायनमः ६५ भौमायनमः
बुधायनमः ६७ गुरवेनमः ६८ शुक्रायनमः ६९ शनयेनमः ७० राहवेनमः पूर्वेशानयो
मध्येकेतुभ्योनमः ७२ ततोबाह्येपूर्वादितः ऐंद्रीशक्तयेनमः ७३ कौमार्य्यैनमः ७४ ब्रह्माण्यै
नमः ७५ वाराह्यैनमः ७६ चामुंडायैनमः ७७ वैष्णव्यैनमः ७८ माहेश्वर्य्यैनमः ७९ वैना
यक्यैनमः ८० इतिसर्वदेवतासाधारणंसर्वतोभद्रपूजनम् गंधपुष्पाद्युतैर्विधेयम् शिवशा
न्तिव्रतेषुलिंगतोभद्रमंडलंविशेषेणोक्तम् तस्योद्धारक्रमोलिंगपुराणे रेखास्त्वष्टादशाः
कार्य्यालिंगतोभद्रमंडले कोणेंडाख्यपदःश्वेतस्त्रिपदैःकृष्णश्रृंखला वल्लीसप्तपदानीलाभद्रं
रक्तंचतुष्पदं भद्रपार्श्वेमहारुद्रंकृष्णमेकादशैःपदैः शिवस्यपार्श्वतोवापीकुर्य्यात्पंचपदाश्रि
तां पदमेकंतथापीतंभद्रवाप्योस्तुमध्यतः शिरसिश्रृंखलायाश्चकुर्यात्पीतंपदद्वयं लिंगानां
स्कंदतःकोष्टाविंशतीरक्तवर्णकाः परिधिःपीतवर्णोस्तुपदैःषोडशभिःस्मृतः पदैस्तुनवभि
र्मध्येरक्तंपद्मंसकर्णिकं अत्रापिसर्वतोभद्रमंडलदेवतापूजनं शक्तिपूजांतंकृत्वा अष्टभैर
वानांकार्य्यं पूर्वेअसितांगभैरवायनमः १ आग्नेयांरुरुभैरवायनमः २ दक्षिणेचंडभैरवायन
मः नैर्ऋत्येक्रोधभैरवायनमः पश्चिमेउन्मत्तभैरवायनमः ५ वायव्येकपालिभैरवायनमः ६

उत्तरेभीषणभैरवायनमः ७ ईशानेसंहारभैरवायनमः ८ पुनःपूर्वादितः भवायदेवायनमः १
शर्वायदेवायनमः पशुपतयेदेवायनमः ३ ईशानायदेवायनमः ४ रुद्रायदेवायनमः ५ उ
ग्रायदेवायनमः ६ भीमायदेवायनमः ७ महतेदेवायनमः ८ इतिमंडलदेवतापूजनंकृत्वा
व्रतोद्यापनदेवतापूजार्थंकलशस्थापनंकार्य्यं तच्चग्रहवेद्यांग्रहपूजापूर्वकंकार्य्यं अथ
करिष्यमाणैकादश्यादिव्रतोद्यानकर्मणोयथोक्तफलप्राप्त्यर्थंसूर्य्यादिनवग्रहाणामधि
देवताप्रत्यधिदेवतासहितानांस्थापनमहंकरिष्ये कलिंगदेशोद्भवकाश्यपगोत्रईश्वराधि
देवता अग्निप्रत्यधिदेवतासहितसूर्य्यइहागच्छ. यमुनातीरोद्भवआत्रेयसगोत्र उमाधि
देवता आपःप्रत्यधिदेवतासहित चंद्रइहागच्छ. २ अवंतीसमुद्भवभारद्वाजगोत्रस्कंदाधि
धिदेवताभूमिप्रत्यधिदेवतासहितभौमइहागच्छ. ३ मगधदेशोद्भवआत्रेयगोत्रविष्ण्वधि
देवताप्रत्यधिदेवतासहितबुधइहागच्छ.४ सिंधुदेशोद्भवआंगिरसगोत्रब्रह्माअधिदेवता
इंद्रप्रत्यधिदेवतासहितबृहस्पतेइहागच्छ.५ भोजकटदेशोद्भवभार्गवगोत्रइंद्राधिदेव
ताइंद्राणीप्रत्यधिदेवतासहितशुक्रइहागच्छ.६ सौराष्ट्रदेशोद्भवकाश्यपगोत्रयमअधिदे
वताप्रजापतिप्रत्यधिदेवतासहितशनेइहागच्छ.७ राठिकापुरोद्भवपैठीनसिगोत्रकाला
धिदेवतासर्पप्रत्यधिदेवतासहितराहोइहागच्छ.८ अंतर्वेदीसमुद्भवजैमिनिगोत्रचित्र
गुप्त अधिदेवताब्रह्मप्रत्यधिदेवतासहित केतोइहागच्छ.९ आदित्यादिग्रहेभ्यअधिदे
वताप्रत्यधिदेवतासहितेभ्योनमः इतिसर्वोपचारैःपूजयेत् अथप्रार्थना आदित्यश्चंद्र
माभौमोबुधोजीवःसितोर्कजः ग्रहाःसर्वेप्रसीदंतुराहुःकेतुश्चपूजिताः ततोगणेशादि
पंचलोकपालपूजनं शनेरुत्तरभागेगणपतेइहागच्छ शनेरुत्तरभागेदुर्गेइहागच्छ २
रवेरुत्तरभागेवायोइहागच्छ.३ राहोर्दक्षिणभागेआकाशइहागच्छ.४ केतोर्दक्षिणभा
गेअश्विनौदेवौइहागच्छतां.५ गणपतयेनमः १ दुर्गायैनमः २ वायवेनमः ३ आकाशाय
नमः ४ अश्विभ्यांनमः ५ एवंसर्वोपचारैःसंपूज्य ६ ततोग्रहमंडलात्पूर्वादितः इंद्रइहागच्छ
इंद्रायनमः १ अग्नेइहागच्छ आग्नेयेनमः २ यमइहागच्छयमायनमः निर्ऋतेइहागच्छ
निर्ऋतयेनमः ४ वरुणइहागच्छवरुणायनमः ५ वायोइहागच्छवायवेनमः ६ सोमइह
गच्छसोमायनमः ७ ईशानइहागच्छईशानायनमः ८ ब्रह्मनइहागच्छब्रह्मणेनमः ९
अनंतइहागच्छअनंतायनमः १० इत्यावाह्यसर्वोपचारैःसंपूज्यप्रार्थयेत् आखंडलोग्नि
र्भगवान्यमोवैनिर्ऋतिस्तथा वरुणःपवनश्चैवधनाध्यक्षःसदाशिवः ब्रह्मणासहिताः
शेषोदिक्पालाःपांतुसर्वदा इतिसमस्तमंडलदेवतापूजनम् सर्वतोभद्रादिमंडले व्रताधि
ष्ठातृदेवतापूजार्थंकलशंस्थापयेत् भूम्यैनमइतिभूमिस्पर्शः यवगोधूमधान्यानितिलाः
कंगुस्तथैवच श्यामाकाश्चणकाश्चैवसप्तधान्यमितिस्मृतं सप्तधान्येभ्योनमः इतिसप्तधा
न्ये कलशायनमः इतिकलशस्थापनम् गंगेचयमुनेचैवगोदावरिसरस्वति नर्मदेसिंधु
कावेरिजलेस्मिन्सन्निधिंकुरु इतितीर्थजलेनापूर्य्य कर्पूरंचंदनदर्पः कुंकुमंचचतुःस
मं सर्वगंधमितिख्यातंसमस्तसुरवल्लभं इतिगंधद्रव्यनिक्षेपः कुष्ठंमांसीहरिद्रेद्वेमुराशै
लेयचंदनं वचाचंपकमुस्ताचसर्वौषधिगणाःस्मृतः सर्वौषधीभ्योनमः इतिसर्वौषधिनि
क्षेपः अश्वत्थोदुंबरःप्लक्षश्चूतन्यग्रोधपल्लवाः पंचपल्लवेभ्योनमः पंचपल्लवप्रक्षेपः ग
जाश्वरथ्यवल्मीकसंगमाद्ध्रदगोकुलात् राजद्वारप्रवेशाच्चमृदःसप्तविनिक्षिपेत् उद्धृतासि

वराहेणकृष्णेनशतबाहुना मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतमिति सप्तमृत्तिका
भ्यो नमः इदं फलं महादिव्यं समस्तफलदं मतमिति फलं हिरण्यगर्भगर्भस्थं हेमबीजं
विभावसोः अनन्तपुण्यफलदमतः शान्तिं प्रयच्छतु इति हिरण्यं कनकं कुलिशं नीलं प
द्मरागं च मौक्तिकं पञ्चरत्नमिति ख्यातं कलशेषु नियोजयेत् पञ्चरत्नेभ्यो नमः दूर्वासि
शतपर्वासि शतमूला शतांकुरा शतं हरति पापानि शतमायुर्विवर्द्धये दूर्वायै नमः इति दू
र्वाप्रक्षेपः शरण्यं सर्वलोकानां लज्जायाः परिरक्षणं यस्मात्त्वं वस्त्ररूपासि अतः शान्तिं प्रयच्छ
तु इति रक्तवस्त्रेणावेष्ट्य पूर्णाशाः पूर्णसंकाशाः पूर्णाः सन्तु मनोरथाः पूर्णकुम्भस्य पूर्त्यर्थं
पूर्णपात्रं प्रदीयते पूर्णपात्राय नमः इति पूर्णपात्रं कलशोपरि दद्यात् ततः सर्वे समुद्राः
सरितस्तीर्थानि जलदा नदाः आयान्तु यजमानस्य दुरितक्षयकारकाः वरुणकलशाय न
मः इति सर्वोपचारैः संपूज्य प्रार्थयेत् कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः मूले त
स्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः कुक्षौ च सागराः सप्त सप्तद्वीपा वसुन्धरा देवदान
वसंबाधे मथ्यमाने महोदधौ उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयं त्वत्तोये सर्वतीर्था
नि देवाः सर्वे त्वयि स्थिताः त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः शिवः स्वयं त्वमेवा
सि विष्णुस्त्वं च प्रजापतिः आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः त्वयि तिष्ठन्ति सर्वेऽपि य
तः कामफलप्रदाः त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव सान्निध्यं कुरु मे देव प्रसन्नो
भव सर्वदा इति कलशस्थापनं विधाय शान्ताकारं भुजगशयनं पद्मनाभं सुरेशमित्यादि
विष्णुव्रतेषु ध्यानम् कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारं सदा वसन्तं हृदयारविं
दे भवं भवानीसहितं नमामि इति शिवरात्र्यादिव्रतेषु ध्यानम् आगच्छ देवदेवेश तेजोरा
शे जगत्पते क्रियमाणां मया पूजां गृहाण सुरसत्तम इत्यावाहनं नानारत्नसमायुक्तं का
र्तस्वरविभूषितं आसनं देवदेवेश प्रीत्यर्थं प्रतिगृह्यताम् इत्यासनं पाद्यं गृहाण देवेश सर्व
क्षेमकर प्रभो भक्त्या समर्पितं देव लोकनाथ नमोऽस्तु ते इति पाद्यम् नमस्ते देवदेवेश नम
स्ते धरणीधर नमस्ते जगदाधार अर्घ्योऽयं प्रतिगृह्यताम् इत्यर्घ्यम् कर्पूरवासितं तोयं मन्दाकि
न्याः समाहृतं आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः इत्याचमनम् शर्करारससंयुक्तं
पयो दधि घृतं मधु पंचामृतं समानीतं स्नानार्थं प्रतिगृह्यताम् इति पंचामृतस्नानम् गंगा
च यमुना चैव नर्मदा च सरस्वती तापी पयोष्णी रेवा च ताभ्यः स्नानार्थमाहृतं तोयमेतत्सु
खस्पर्शं स्नानीयं प्रतिगृह्यताम् इति शुद्धस्नानं सर्वभूषाधिके सौम्ये लोकलज्जानिवार
णे मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् इति वस्त्रं ८ सर्वदेव नमस्तेऽस्तु त्राहि मां भवसा
गरात् ब्रह्मसूत्रं सोत्तरीयं गृहाण परमेश्वर इति यज्ञोपवीतस्थाने पीतसूत्रादिकं देयं ९
श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरं विलेपनं सुरश्रेष्ठ गृहाण परमेश्वर इति गन्धः १०
माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो मयानीतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम्
इति पुष्पाणि ११ वनस्पतिरसो दिव्यो गन्धाढ्यो गन्ध उत्तमः आघ्रेयः सर्वदेवानां धूपोऽयं प्रति
गृह्यताम् इति धूपं १२ साज्यं त्रिवर्तिसंयुक्तं वह्निना योजितं मया दीपं गृहाण देवेश त्रैलोक्य
तिमिरापहं भक्त्या दीपं प्रयच्छामि देवाय परमात्मने त्राहि मां नरकाद्घोराद्दीपज्योतिर्नमो
ऽस्तु ते इति दीपम् १३ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितं भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्र
तिगृह्यताम् इति नैवेद्यम् १४ समस्तदेवदेवेश सर्वतृप्तिकरं परं अखण्डा[illegible]नन्दसंपूर्णं

नीयंप्रतिगृह्यतां इतिजलम् १५ इदंफलंमयादेवस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भ
वेज्जन्मनिजन्मनि इतिफलम् १६ पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतं कर्पूरैलासमायु
क्तंतांबूलंप्रतिगृह्यतां इतितांबूलम् १७ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपु
ण्यफलदमतःशांतिंप्रयच्छमे इतिदक्षिणाद्रव्यम् १८ चंद्रादित्यौचधरणीविद्युदग्निस्त्व
मेवच त्वमेवसर्वज्योतींषिआर्त्तिक्यंप्रतिगृह्यताम् इतिनीराजनम् १९ नमस्तेपुंडरीकाक्ष
नमस्तेस्त्वमरप्रिय नमस्तेजगदाधारदेवदेवनमोस्तुते पुष्पांजलिः २० यानिकानिचपापानि
जन्मांतरकृतानिच तानिसर्वाणिनश्यंतुप्रदक्षिणपदेपदे इतिप्रदक्षिणा २१ नमःसर्वहि
तार्थायजगदाधारहेतवे साष्टांगोयंप्रणामस्तेप्रयत्नेनमयाकृतः इतिनमस्कारः २२ यन्
मयाभक्तिसंयुक्तंपत्रंपुष्पंफलंजलं समर्पितंचनैवेद्यंतद्गृहाणजगत्पते इतिप्रार्थना २३
आवाहनंनजानामिनजानामिविसर्जनम् पूजामहंनजानामिक्षमस्वपरमेश्वर यस्यस्मृ
त्याचनामोक्त्यातपोयज्ञक्रियादिषु न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं इतिसर्वसाधारण
पूजाविधानं अथैकादशीव्रतोद्यापनेकश्चिद्विशेषोभिधीयते अत्रद्वादशमासस्थैश्चतु
र्विंशत्यैकादशीव्रतदेवतानांमूर्त्तयःकलशेषुपूज्याः सर्वतोभद्रस्यबहिःप्रागादिक्रमेण
अथवा द्वादशकमलादौपूज्याः श्रियासहितायआदिकेशवायनमः १ रुक्मिणीसहिताय
केशवायनमः २ कांत्यासहितायमाधवायनमः ३ मोहिनीसहितायचक्रिणेनमः ४ शा
न्त्यासहितायविष्णवेनमः ५ श्रियासहितायवैकुंठायनमः ६ विभूतिसहितायमधुसूदना
यनमः ७ मोहिनीसहितायजनार्दनायनमः ८ इच्छासहितायत्रिविक्रमायनमः ९ लक्ष्मी
सहितायउपेंद्रायनमः १० प्रीत्यासहितायवामनायनमः ११ कीर्त्यासहिताययज्ञपुरुषायन
मः १२ रत्यासहितायश्रीधरायनमः १३ पद्मासहितायवासुदेवायनमः १४ मायासहि
तायहृषीकेशायनमः १५ प्राप्तिसहितायहरयेनमः १६ राधासहितायपद्मनाभायनमः १७
सुशक्तिसहिताययोगीश्वरायनमः १८ महिमासहितायदामोदरायनमः १९ प्राकाम्या
सहितायपुंडरीकाक्षायनमः २० अंजनीसहितायकूर्मायनमः २१ मंगलासहितायपृथ्वी
धरायनमः २२ वरदासहितायनृसिंहायनमः २३ शुभासहितायउपेंद्रायनमः २४ सर्वोपचा
रैर्यथाशक्तिसंपूज्य अथात्रैवचतुर्विंशत्येकादशीनांपूजापिकार्य्या तत्रादौशुक्लाकृ
ष्णाश्चैकादश्योनाममंत्रैःसंपूजयेत् एकादशीवृषस्थानुनीलसुभ्रात्रिशूलिनी ताम्रवर्णार
थारूढापात्रखेटासिपंकजा १ एकादशीमृगारूढास्यात्तुलाकर्त्तरिकायुता सिंहाननारुण
गलातुंदिनीलासिनीपरा २ मातेवसर्वबालानामौषधंरोगिणामिव रक्षार्थंसर्वलोकानां
निर्मितैकादशीतिथिरिति ध्यात्वातासांनाममंत्राणिचैत्रकृष्णापापमोचिनी १ चैत्रशुक्लाका
मिका २ वैशाखकृष्णावरूथिनी ३ वैशाखशुक्लामोहिनी ज्येष्ठकृष्णापरा ५ ज्येष्ठशुक्ला
निर्जला ६ आषाढकृष्णायोगिनी ७ आषाढशुक्लाशायिनी ८ श्रावणकृष्णाकामदा ९
श्रावणशुक्लापुत्रदा १० भाद्रकृष्णाअजा ११ भाद्रशुक्लापद्मा १२ आश्विनकृष्णाइंदिरा १३
आश्विनशुक्लापापांकुशा १४ कार्त्तिककृष्णारमा १५ कार्त्तिकशुक्लाहरिबोधिनी १६ मार्ग
कृष्णाउत्पन्ना १७ मार्गशुक्लामोक्षदा १८ पौषकृष्णासफला १९ पौषशुक्लापुत्रदायिनी २०
माघकृष्णाषट्तिला २१ माघशुक्लाजया २२ फाल्गुनकृष्णाविजया २३ फाल्गुनशुक्लाआ
मलकी २४ एताअपिचतुर्विंशतिकलशेषुनाममंत्रैस्तत्रैवसंपूज्याः ततःकृतांजलिर्वद्य

माणमंत्रैः प्रार्थयेत् पूजितोसिभगवान्भक्त्यामत्यहंयावदव्रत प्रसीददेवदेवेशसर्वान्कामान्प्रदे
हिमे अज्ञानाद्ज्ञानतोवापि जातंन्यूनाधिकंचयत् दीनस्यममनाथस्त्वंक्षमस्वपुरुषोत्तम १
तत्कालंव्रतंचीर्णंभगवन्यन्मयाहरे व्रतंतत्पूर्णतांयातुत्वत्प्रसादाज्जनार्दन मार्गशीर्षेमया
देवयत्कृतंव्रतमुत्तमं भवेत्तांतेनमेप्रीतोसजायौकृष्णकेशवौ पौषेमास्यपिदेवेशयद्व्रतंकृत
मच्युत तेनानंतःसपत्नीकःप्रीतोनारायणोस्तुमे २ माघेर्चितःसपत्नीकोमाधवश्चाच्युतो
मया व्रतेनतोषितावद्यप्रीतोस्यातांजनार्दनौ ३ फाल्गुणेयद्व्रतंभक्त्याविहितंतेनमेहरे विश्वेश
चक्रिणौदेवौप्रीयेतांपापमोक्षदौ ४ चैत्रेवैकुंठविष्णूतोसजायौपूजितौमया येनव्रतेनते।
नाद्यस्तुप्रीतौशर्मयच्छतां ५ जनार्दनश्चवैशाखेतथैवमधुसूदनः अर्चितौयौमयापूर्व
प्रीतौस्यातांममाद्यतौ ६ ज्येष्ठेर्चितौसपत्नीकौमयोपेंद्रत्रिविक्रमौ तुष्येतांमेकृतेनाद्य।
देवेशौसपरिच्छदौ ७ आषाढेपूजितौयौतुयज्ञपुरुषवामनौ अद्यमेतौसपत्नीकौसुप्रीतौ
शर्मयच्छतां ८ वासुदेवःश्रीधरश्चश्रावणेयन्मयार्चितौ व्रतेनदेवदेवेशौप्रीतौतौमेद्यकेश
वौ ९ अर्चितौदेवदेवेशौनभस्येमासियौमया तौमेहरिहृषीकेशौप्रीयेतांसपरिच्छदौ १०
योगीश्वरःसपत्नीकःपद्मनाभस्तथैवच यौमयाश्वयुजेमासिप्रीयेतामद्यतौमम ११ कार्त्ति
केपुंडरीकाक्षस्तदादामोदरोविभुः अद्यमेतौसपत्नीकौसुप्रीतौपापशांतिदौ १२ एवंदेवो
जगद्योनिश्चतुर्विंशतिरूपधृक् चतुर्विंशत्सपत्नीकःप्रीयतांमेजगत्प्रभुः मामेस्त्रीत्वंमा
चमेदासभावोमामूर्खत्वंमाकुदेशेषुजन्म मिथ्यादृष्टिर्माचमेस्यात्कदाचिज्ज्ञानोजानोवि
ष्णुभक्तोभवेयम् इतिपूजाविधानम् अथहोमविधानम् अत्रशूद्रकर्तृकहोमकार्यंशूद्रक
मलाकरादिनिबंधोक्तविवाहसंस्काराल्लिख्यते तत्राचार्योहस्तमात्रंस्थंडिलंविधाय
स्थंडिलाद्दक्षिणे ब्रह्मासनंदत्वा ब्रह्मणोवरणपूजादिकंविधाय यथाचतुर्मुखोब्रह्मेत्या।
दिसंप्रार्थ्य तमुपवेश्य प्रणमेयपात्रेजलपूर्णेकुशान्निधायोत्तरतः कुशेषुनिधायाग्निं दर्भैःपू
र्वादितःपरिस्तीर्यासादनंकुर्यात् त्रीणित्रीणिद्वेपवित्रे प्रोक्षणीमाज्यस्थालीचरुस्थाली
साग्राःकुशाः उपयमनकुशास्तिस्रःसमिधः स्रुवआज्यपूर्णपात्रं ततःप्रादेशमात्रेपवित्रेकृत्वा
प्रोक्षणींसंस्कृत्य पवित्राभ्यामुत्पूय तत्रतेपवित्रेनिधाय दक्षिणेनसव्यंकृत्वोद्दिंगनंकृत्वा
पात्राणिप्रोक्ष्यनिधायाज्यस्थाल्यांनिरूप्याग्नौदक्षिणेधिश्रित्य पर्य्यग्निकृत्वा स्रुवंप्रतप्य कुशैःसं
मृज्य प्रोक्षणीभिःप्रोक्ष्य पुनःप्रतप्य दक्षिणेनिधायाज्यमुद्वास्योत्पूयावेक्ष्य स्रुवंनिरस्य पु
नःप्रोक्षणीवदुत्पूयावेक्ष्योपयमनकुशानादायाग्नौतिस्रः समिधोभ्याधाय प्रोक्षणीभिःपर्युक्ष्य
यजमानेनारब्धोदक्षिणंजान्वाच्य ब्रह्मदक्षिणहस्तेन्वारब्धः स्रुवेणाज्यंजुहुयात् प्रजापतये
नमः इंद्रायनमः इत्याघारौ इदंप्रजापतये इंद्रायनममेति अग्नयेनमः सोमायनम इत्याज्य
भागौ अग्नयेनमः वायवेनमः सूर्य्यायनमः अग्निवरुणाभ्यांनमः द्विःअग्नयेवरुणाय सवित्रे
विष्णवे विश्वेदेवमरुत्स्वर्केभ्यो वरुणायादित्यायअदितये प्रजापतयेनमः इत्याज्याहुतिर्हुत्वा
ततोघृताक्तयवतंडुलतिलानांहोमः गणपतयेनमः सूर्य्यायनमः चंद्रमसेनमः भौमायनमः
बुधायनमः बृहस्पतयेनमः शुक्रायनमः शनयेनमः राहवेनमः केतुभ्योनमः इत्यादि अत्र
ब्राह्मणकर्तृकःस्वाहाकर्मप्रयोगः नमोनमइतिशूद्रकर्तृकप्रयोगः शूद्रोवर्णश्चतुर्थोपि
वर्णत्वाद्धर्ममर्हति वेदमंत्रस्वधास्वाहावषट्कारादिकंविनेति नृसिंहतापिनीयोक्तवचना।
त् अधिदेवताहोमः ईश्वरायनमः १ उमायै· स्कंदाय· विष्णवे· ब्रह्मणे· इंद्राय· यमाय· काला

य विश्वरूपायनमः अथप्रत्यधिदेवताभ्योनमः अग्नयेनमः १ अद्भ्योनमः पृथिव्यै विष्णवेनमः इंद्रायनमः इंद्राण्यै प्रजापतये सर्पेभ्योनः ब्रह्मणे पंचलोकपालनाममंत्रैर्होमः गण पतये दुर्गायै वायवे आकाशाय अश्विभ्यां अथशुक्लैकादशीदेवताहोमः केशवाय नमः माधवाय गोविंदाय विष्णवे मधुसूदनाय त्रिविक्रमाय वामनाय श्रीधराय हृषी केशाय पद्मनाभाय दामोदराय अथकृष्णैकादशीदेवताहोमः संकर्षणाय वासुदेवा य प्रद्युम्नाय अनिरुद्धाय पुरुषोत्तमाय अधोक्षजाय नरसिंहाय अच्युताय जनार्द नाय उपेंद्राय हरये कृष्णायनमः एताश्चैकादशीदेवताः घृताक्तपायसेनहोतव्याः के वलाज्येनहोमः स्त्रीचतुःसहस्रसहितायैरुक्मिण्यैनमः स्त्रीचतुःसहस्रसहितायैसत्य भामायैजांबवत्यै स्त्रीचतुःसहस्रसहितायैकालिंद्यैनमः शंखायनमः चक्रायनमः गदायै पद्माय गरुडाय इंद्राय अग्नये यमाय निर्ऋतये वरुणाय वायवे सोमाय ईशाना यनमः ततोब्रह्माद्याःसर्वतोभद्रमंडलदेवताः केवलाज्येनहोतव्याः ब्रह्मणेनमः इंद्राय इत्यादिदशलोकपालाःपुनरपिहोतव्याः अष्टवसुभ्योनमः एकादशरुद्रेभ्यः दुर्गायै गं गादिनदीभ्यः दक्षाय नारायणाय दुर्गायै स्वधायै मृत्यवे शेषाय समुद्रेभ्यः मरुद्भ्यः गणपतये १ पृथिव्यै मेरवे ऋग्वेदाय यजुर्वेदाय सामवेदाय अथर्ववेदाय वज्राय शक्तये दंडाय खड्गाय पाशाय अंकुशाय गदायै त्रिशूलाय ऐरावताय मेषाय महि षाय प्रेताय मकराय मृगाय शिविकायै वृषाय गौतमाय भरद्वाजाय विश्वामित्राय जमदग्नये अत्रये वसिष्ठाय अरुंधत्यै सूर्यादिभ्योग्रहेभ्यः ९ ऐंद्र्यै कौमार्य्यै ब्राह्म्यै वा राह्यै चामुंडायै वैष्णव्यै माहेश्वर्य्यै वैनायिक्यैनमः अग्नयेस्विष्टकृतेनमः संस्रवप्राशनं प्रणीतापवित्राभ्यांमार्जनं तयोरग्नौप्रक्षेपः प्रणीताविमोकः पूर्णपात्रदानं अमंत्रकंप्रणीताहुति दानं अग्नयेजातवेदसेनमोनमः ततोयजमानोऽग्निमुपतिष्ठेत् तत्रमंत्रः त्वामेकमाद्यंपुरुषं पुराणंनारायणंविश्वसृजंयजामहे मयैषसांगोविहितोविधिर्यो गृहाण हव्यंजगतामधी श ततोग्निंत्रिःप्रदक्षिणीकृत्य देवमुपतिष्ठेत् कृष्णायवासुदेवायहरयेपरमात्मने प्रा णपायाप्रमेयायगोविंदायनमोनमः नमःस्थूलायसूक्ष्मायव्यापकाव्यापकायच अन तायजगद्धात्रेब्रह्मणोनंतमूर्तये अव्यक्तमायालेपायचिद्रूपायगुणात्मने नमोमूर्त्ताय सिद्धायपरायपरमात्मने प्रापणायाप्रमेयायगोविंदायनमोनमः देवदेवध्रुवध्यायपराय परमेष्ठिने कर्त्रेविश्वस्यगोप्त्रेचहंत्रेहर्त्रेनमोनमः इतिस्तुत्वादेवायवायनंनिवेदयेत् ततो यजमानस्तिथ्यादिसंकीर्त्यकृतस्यास्यैकादशीव्रतोद्यापनस्यसांगतासिद्ध्यर्थं यथाविधि नाहूतानाचार्य्यादीन् वस्त्रतांबूलदक्षिणादिभिःपूजयिष्ये इतिसंकल्पंविधाय सोपकर सोपकरणशय्यादिदानंकुर्य्यात् आचार्य्यायगोदानंदद्यात् तद्यथा अद्यकृतस्यैकादशीव्र तस्यसर्वसंपूर्त्तिकामःनारायणप्रीतयेआचार्य्यायगोदानमहंकरिष्ये गवामंगेषुदेवतान्या संकुर्य्यात् शृंगमूलयोर्ब्रह्मविष्णुभ्यांनमः ललाटेमहादेवायनमः नासावंशेषण्मुखाय नमः कर्णयोरश्विभ्यांनमः चक्षुषोःशशिभास्कराभ्यांनमः दंतेषुवायुभ्यः नासिकायांवरु णाय हुंकारेसरस्वत्यै गंडयोर्यमलाभ्यां ओष्ठयोःसंध्याद्वयाय ग्रीवायांइंद्राय कुक्षिदेशे छंदोभ्योनमः उरसिसाध्येभ्यो चतुष्पादेषुचतुर्युगधर्मेभ्यो खुरमध्येगंधर्वेभ्यो खुराग्रेषु अप्सरोभ्यो पृष्ठएकादशरुद्रेभ्यो सर्वसंधिषुवसुभ्यो श्रोणितटेपितृभ्यो लांगूलेसोमाय

वालेष्वादित्यरश्मिभ्यो नमः गोमूत्रे गंगायै॰ क्षीरे सरस्वत्यै॰ दध्नि नर्मदायै॰ सर्पिषि हुताशनाय रोमकूपेषु देवानामष्टाविंशतिकोटिभ्यो॰ उदरे पृथिव्यै॰ पयोधरेषु चतुःसागरेभ्यो न॰ सौरभे। यि सर्वहिते पवित्रे पापनाशिनि गृहीष्व मे मया दत्तं ग्रासं त्रैलोक्यवंदिते सर्वदेवस्वरूपिण्यै नमस्ते रुद्ररूपिणि तव पाद्यं मया दत्तं गृहाण सुरवंदिते सर्वदेवमये देवि सर्वतीर्थमये शु भे गृहाणार्घ्यं मया दत्तं सौरभेयि नमोस्तु ते देहस्थिता सि रुद्राणि शंकरस्य सदा प्रिये धेनुरू पेण सा देवी मम पापं व्यपोहतु आच्छादनं मया दत्तं सम्यक्शुद्धं सुशोभनं सुरभ्यै वस्त्रदानेन प्रीयतां परमेश्वरः श्रीखंडं चंदनं दिव्यं सर्वगंधसमन्वितं गृहाण परया भक्त्या मया दत्तं सुरे श्वरि ततोऽलंकारान् दद्यात् माल्यानि च सुगंधीनीति पुष्पं॰ वनस्पतिरसो दिव्यो धूपम्॰ आज्यं सह्वर्त्तिसंयुक्तं दीपं॰ सुरभिस्त्वं जगन्मातर्नित्यं रुद्रपदे स्थिता सर्वदेवमये ग्रासं मया दत्त मिदं ग्रस इति गोग्रासं॰ पूगीफलं महादिव्यमिति तांबूलं॰ हिरण्यगर्भेति दक्षिणा॰ पंच गावः समुत्पन्ना मथ्यमाने महोदधौ॰ तासां मध्ये तु या नंदा तस्यै धेन्वै नमो नमः इति नमस्कारः गा वो ममाग्रतः संतु गावो मे संतु पृष्ठतः गावो मे हृदये संतु गवां मध्ये वसाम्यहं इति प्रदक्षिणा इति गोपूजां कृत्वा स्वगोत्रादिकमुच्चार्य्य विप्रस्यापि गोत्रादिकं समुच्चार्य्य इमां गां सवत्सां यथाशक्तिभूषितां एकादशीव्रतोद्यापन पूर्णतासिद्धये श्रीविष्णुप्रीत्यर्थं तुभ्यमहं संप्रद दे इति सतिलजलकुशयुतं पुच्छं विप्रहस्ते निःक्षिपेत् नममेत्यागं कुर्यात् यज्ञसाधनभू ता या विश्वस्याघौघनाशिनी विश्वरूपधरो देवः प्रीयतामनया गवा अनेन गोदानेन श्रीवि ष्णुः प्रीयतां ततो गोदानसांगतासिद्ध्यर्थं हिरण्यगर्भेति मंत्रेण सुवर्णं दक्षिणां दद्यात् गावो म मायतः संतु इति मंत्रेण प्रदक्षिणीकृत्य विसर्जयेत् ततो यजमानः शुक्लैकादशीकृष्णै कादश्योरुद्यापनसंपूर्त्तिकामो द्वादशसंख्याकान् ब्राह्मणान् केशवादिद्वादशनामभिः संकर्षणादिद्वादशनामभिश्च यथाविभवं पक्वान्नादिभिः संपूज्य पक्वान्नपूरितान् सुवर्णतां बूलप्रतिमावस्त्रसहितान्द्वादशकलशान् प्रत्येकं विप्रेभ्यो दद्यात् तत्र मंत्रः पक्वान्नपूरितं कुंभं दक्षिणावस्त्रसंयुतं ददामि द्विजवर्य्याय विष्णुर्मे प्रीयतामिति केशवः प्रीयतामित्यादि मंत्रपाठः प्रत्येकं कलशदाने कार्य्यः तत इदं सोपस्करं पीठं सोपस्करां शय्यां च श्रीलक्ष्मी नारायणप्रतिमां च श्रीमहाविष्णुप्रीतये तुभ्यमाचार्य्याय संप्रददे तत आचार्य्यः पीठदेवा नामुत्थाप्य तत उद्धृतकलशोदकेन यजमानमभिषिंचेत् अथाभिषेकमंत्राः सुरास्त्वामभिषिंचंतु ब्रह्मविष्णुमहेश्वराः वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः प्रद्युम्न श्चानिरुद्धश्च भवंतु विजयाय ते आखंडलोऽग्निर्भगवान्यमो वै नैरृतिस्तथा वरुणः पवन श्चैव धनाध्यक्षस्तथा शिवः ब्रह्मणा सहितः शेषो दिक्पालाः पांतु मे सदा कीर्तिर्लक्ष्मी धृतिर्मेधा पुष्टिः श्रद्धा क्रिया रतिः बुद्धिर्लज्जा वपुः शांतिः पुष्टिः कांतिस्तु मातरः एतास्त्वा मभिषिंचंतु देवपत्न्यः समागताः आदित्यश्चंद्रमा भौमो बुधो जीवः सितोऽर्कजः ग्रहास्त्वा मभिषिंचंतु राहुः केतुश्च तर्पिताः देवदानवगंधर्वा यक्षराक्षसपन्नगाः ऋषयो मनवो गावो देवमातर एव च देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः अस्त्राणि चैव शस्त्राणि राजानो वाहनानि च औषधीनि च रत्नानि कालस्यावयवाश्च ये सरितः सागराः शैलास्तीर्थानि जल दा नदाः एते त्वामभिषिंचंतु धर्मकामार्थसिद्धये मंत्रार्थाः सफलाः संतु पूर्णाः संतु मनोरथाः शत्रूणां बुद्धिनाशोस्तु मित्राणामुदयोस्तु वः इत्यभिषेकांते यजमानः मंत्रहीनं क्रियाहीनं वि

थिहीनं च यत्कृतं तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर यान्तु देवगणाः सर्वे पूजामादाय मामकीं इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च इति विसर्जनम् ततः कृतस्य कर्मणः सांगतासिद्ध्यर्थं ब्राह्मणान् यथासंख्यापरिमितान् यथाशक्ति भोजयिष्ये यथाशक्ति भूयसीं दक्षिणां दातुमहमुत्सृजे अनेन कर्मणा स्वरूपी श्रीपरमेश्वरः प्रीयतां ततः सदक्षिणेन सदन्नेन ब्राह्मणान् संतोष्य आशिषो गृहीत्वा व्रतसंपूर्णतां वाचयेत् जपच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि सर्वं भवतु चाच्छिद्रं ब्राह्मणानां प्रसादतः इति प्रार्थ्य सर्वं भवत्वच्छिद्रं यज्ञविष्णुप्रसादत इति वदेयुः ततस्तान्नमस्कृत्य विसर्जयित्वा इष्टजनैः सह समहोत्सवो यजमानो भुंजीत ॥ इति शुक्लकृष्णैकादश्यादिव्रतोद्यापनप्रयोगः स्वस्ति श्रीरणवीरसिंहधरणीपालो वदान्याग्रणीर्नानाशास्त्रविचारसाररसविन्महेंद्रसंज्ञकः धर्माधर्मविभागकृद्रघुपतेः पादाब्जपूजारतो जीयात्पुत्रकलत्रमित्रसहितः संपालयन्क्ष्मां चिरम् १ रणवीरसिंहभूपेशकारिते कृत्यसागरे शुक्लादेर्व्रतनिष्ठाया अभूद्रत्नसमुच्चयः २ *

इति श्रीमत्सूर्यवंशावतंशरघुकुलभूषणश्रीमहाराजरणवीरसिंहकारिते कृत्यरत्नाकरे शुक्लकृष्णैकव्रतोद्यापनरत्नसंग्रहः दशमो रत्नसमुच्चयः

॥ १० ॥

ॐश्रीगणेशायनमः श्रीगुरुंगणपंदुर्गांवटुकंशिवमच्युतं ब्रह्माणंगिरिजांलक्ष्मीवाणींवंदे
विभूतये अथवर्षमासदिनादिविशेषकृत्यंनिरूप्यते तत्रादौसंवत्सरारंभस्यप्रथमोपस्थितत्वात्सं-
वत्सरारंभप्रतिपदानिर्णीयते साचचैत्रशुक्लप्रतिपदा तस्यामेवसंवत्सरारंभःकार्य्यः अत्रप्रतिःसूर्यो
दयव्यापिनीग्राह्या तदुक्तंब्राह्मे श्रीभगवानुवाच चैत्रेमासिजगद्ब्रह्माससर्जप्रथमेहनि शुक्लप
क्षेसमग्रंतत्तदासूर्योदयेसतीति भविष्योत्तरेपि प्रवृत्तेमधुमासेतुप्रतिपद्युदितेरवौ ब्रह्माप्रवर्त-
यामासकालस्यकलनामपीत्यादि दिनद्वयेतद्व्याप्तावव्याप्तौवापूर्वैव तदुक्तंज्योतिर्निबंधे चैत्रेसित
प्रतिपदियोवारोर्कोदयेसवर्षेशः उदयद्वितयेपूर्वोनोदययुगलेपिपूर्वःस्यात् यस्माच्चैत्रसितादेरु
दयाद्भानोःप्रवृत्तिरब्दादेरपि वसिष्ठेनाप्युक्तं वत्सरादौवसंतादौबलिराज्येतथैवच पूर्वविद्धैवक-
र्तव्याप्रतिपत्सर्वदाबुधैरिति पूर्वदिनेसूर्योदयविद्धाप्रतिपदित्यर्थः यदाचैत्रेमासिमलमासोभ
वति तदाद्येवकार्यंस्यात्तत्रप्रतिषिद्धत्वाच्छुद्धेमासिसंवत्सरारंभःकार्य्यः चैत्रशुक्लादितोवत्सरारं
भःसर्वसंमतः मलमासस्तुशुक्लप्रतिपदादितोभवति तस्यपूर्ववर्षएवांतर्भावःउदयसंबंधा
भावेसंवत्सरारंभप्रयुक्तकार्य्यलोपप्रसक्तौपूर्वतिथिविद्धाग्राह्येतिवचनं नतुसर्वथामायुक्ताग्रा
ह्येव अत्रतैलाभ्यंगोनित्यः वत्सरादौवसंतादौबलिराज्येतथैवच तैलाभ्यंगमकुर्वाणोनरकं
प्रतिपद्यते इतिवृद्धवसिष्ठवचनात् कौस्तुभेऽस्यामेवप्रतिपदिवत्सराधिपपूजोक्ताज्योतिर्निबंधे
यश्चैत्रशुक्लप्रतिपद्दिनवारोनृपोहिसः तस्यपूजाविधातव्यापताकातोरणादिभिः प्रतिगेहंध्वजाः
कार्य्याःशान्त्याब्राह्मणतर्पणं निरीक्षणंचकर्तव्यंशकुनानांशुभप्रदमिति भविष्ये चैत्रेमासिमहाबा
हो पुण्यायांप्रतिपत्परा अस्यांवैनिंबपत्राणिप्राश्यसंपूज्ययातिथिमिति शाकादिश्रवणमप्युक्तं
ज्योतिःशास्त्रे शाकवत्सरभूपमंत्रिणांरसधान्येश्वरमेघपादिनां श्रवणात्पठनाच्चवैनृणांशुभतां
यात्यशुभंसहस्रधेयेति अस्यामेववासंतनवरात्रव्रतारंभः तत्रप्रतिपत्परयुतैवग्राह्या अमायुक्ता-
नकर्तव्याप्रतिपच्चंडिकार्चने मुहूर्तमात्राकर्तव्याद्वितीयादिगुणान्वितेतिदेवीपुराणात् तिस्रो
ष्टिताःपराःकार्य्यास्तिथयःकुरुनंदन कार्तिकाश्वयुजोर्मासोश्चैत्रेमासिचभारतेतिहेमाद्रौब्रा
ह्मोक्तेः पराःपरयुताःकार्य्याः अत्रविशेषस्तुशारदनवरात्रेवक्ष्यते अत्रप्रपादानमप्युक्तंमपरा-
भविष्ये अतीतेफाल्गुनेमासिप्राप्तेचैत्रमहोत्सवे पुण्येह्निविप्रकथितेप्रपादानंसमारभेत्
तत्रमंत्रः प्रपेयंसर्वसामान्यभूतेभ्यःप्रतिपादिता अस्याःप्रदानात्पितरस्तृप्यंतुप्रपितामहाः
अनिवार्य्यंततोदेयंजलंमासचतुष्टयमिति प्रपादातुमशक्तेनविशेषाद्धर्ममीप्सता प्रत्यहंधर्मघ
टकोवस्त्रसंवेष्टिताननः ब्राह्मणस्यगृहेदेयःशीतामलजलःशुभः तत्रमंत्रः एषधर्मघटोदत्तो
ब्रह्मविष्णुशिवात्मकः अस्यप्रदानात्सकलाममसंतुमनोरथाइति अनेनविधिनायस्तुधर्म
कुंभंप्रयच्छति प्रपादानफलंसोपिप्राप्नोतीहनसंशयइति इयंप्रतिपत्श्वेतकल्पादि अत्रश्राद्ध
दानादिमहाफलं तदुक्तंहेमाद्रौनागरखंडे अथकल्पादयःपुण्याःकथ्यंतेतिथयःशुभाःयासु
श्राद्धेकृतेतृप्तिःपितॄणामक्षयाभवेत् चैत्रशुक्लप्रतिपदिश्वेतकल्पःपुराभवदिति अत्रब्रह्मपू
जोक्ताहेमाद्रौविष्णुधर्मोत्तरे चैत्रमासस्ययापुण्याशुक्लाप्रतिपदाभवेत् तदह्निब्रह्मणःकृत्वासो
पवासस्तुपूजनं संवत्सरमवाप्नोतिसौख्यानिभृगुनंदनेतिस्मृतेकौस्तुभेत्वियं मत्स्यजयंतीमु

कं कृते च प्रभवे चैत्रे प्रतिपच्छुक्लपक्षगा रेवत्यां योगविष्कुंभे दिवा द्वादशनाडिकाः मत्स्यरूपी कुमा
र्यां तत्रावतीर्णो हरिः स्वयमिति मात्स्यादिषूक्तं कल्पभेदादत्रव्यवस्था ज्ञेया अथात्रव्रतान्युच्यंते संव
त्सरारंभविधिश्च निरूप्यते श्रीभगवानुवाच चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेहनि शुक्लपक्षे सम
ग्रं तु तदा सूर्योदये सति प्रवर्तयामास तथा कालस्य कलनामपि ग्रहान्नक्षत्रानृतून्मासान्वत्सरान्संव
त्सराधिपान् ददौ स भगवान्ब्रह्मा सर्वदेवसमागमे ब्राह्मणः सनाथो ब्रह्माणमनिर्दिष्टपतं तु ततः
पयो महैस्तेनमस्यंतस्त्वंतत्र्यापुर्यासते ततस्ते कृतशुश्रूषा गत्वा चैव स्वमालयं स्वानि स्वान्यथ
कार्याणि नित्ययुक्तास्तु चक्रिरे ब्राह्मीसभा कामरूपा विशेषेण तदा तया धारयन्त्यमलं रूपमनि
र्देश्यं मनोहरं ततः प्रभृति यो धर्मः पूर्वैः पूर्वतरैः कृतः अद्यापि क्रियते सद्भिः कर्तव्यो सौ प्रयत्नतः
तत्र कार्या महाशांतिः सर्वकल्मषनाशिनी सर्वोत्पातप्रशमनी कलिदुःस्वप्नविनाशिनी आयुःप्र
दा पुष्टिकरी धनसौभाग्यवर्द्धिनी मंगल्या च पवित्रा च लोकद्वयसुखावहा तस्यामादौ च संपूज्यो
ब्रह्मा कमलसंभवः पाद्यार्घ्यपुष्पधूपैश्च वस्त्रालंकारभोजनैः होमैर्बलिप्रदानैश्च तथा ब्राह्मणतर्प
णैः ततः क्रमेण देवेभ्यः पूजा कार्या पृथक्पृथक् कृत्वोंकारनमस्कारैः कुशोदकतिलाक्षतैः पुष्प
धूपप्रदीपाद्यैर्भोजनैश्च यथाक्रमं मंत्रैः संपूजनीयोऽत्र बहुरूपं परिस्पृशेत् मंत्रमिति ज्ञात्वा वेदवच
ने नानारूपान्मंत्रान्परिगृह्णीयादित्यर्थः तत्र ॐ नमो ब्रह्मणे ॐ विष्णवे नमः ॐ परमात्मने नमः इ
त्येवं मंत्ररूपा ता देवताः शक्त्याश्च तर्प्यंताः प्रणवादयो नमोंताः मंत्रत्वेन ग्राह्याः ॐ नमो ब्रह्मणे तु
भ्यं कालाय च महात्मने नमस्ते तु निमेषाय त्रुटये च नमोस्तु ते लवाय च नमस्तुभ्यं नमस्तेस्तु क्ष
णाय च नमो नमस्ते काष्ठायै कलायै ते नमो नमः नाडिकायै सुसूक्ष्मायै मुहूर्ताय नमो नमः नमो
निशाभ्यः पुण्याभ्यो दिवसेभ्यो नमो नमः पक्षाभ्यां चाथ मासेभ्यः ऋतुभ्यः षड्भ्य एव च अयनाभ्यां च
पंचभ्यो वत्सरेभ्यश्च सर्वदा नमस्कृत्य युगादिभ्यो ग्रहेभ्यश्च नमो नमः अष्टाविंशतिसंख्येभ्यो न
क्षत्रेभ्यो नमो नमः राशिभ्यः करणेभ्यश्च व्यतीपातेभ्य एव च तिथिवर्षाधिपेभ्यश्च विस्तातेभ्यो नमो
नमः नमोस्तु कलनाशेभ्यः सानुयात्रेभ्य एव च सानुयात्रेभ्यः सानुचरेभ्य नमश्चतुर्दशभ्यश्च मनु
भ्यस्तु नमो नमः नमः पुरंदरेभ्यश्च तत्संख्येभ्यो नमो नमः पंचाषड्भ्यो मरुद्भ्यश्च दक्षकन्याभ्य एव
च नमो देव्यै सुभद्रायै जयायै चाथ सर्वदा भगणास्त्राय नमस्तुभ्यं सर्वास्तुजनकाय च नमस्ते बहुपु
त्राय पत्नीभिः सहिताय च नमो वृद्ध्यै तथा वृद्ध्यै निद्रायै धनदाय च नलकूबरपत्राय गुह्यकस्वामि
ने नमः नमोस्तु शंखपद्माभ्यां निधिभ्यामथ नित्यशः भद्रकाल्यै नमो नित्यं सुरभ्यै च नमो नमः
वेदवेदांगवेदांतविद्यासंस्थेभ्य एव च नागयक्षसुवर्णेभ्यो नमोस्तु गरुडाय च सप्तभ्यश्च समुद्रेभ्यः
सागरेभ्यश्च सर्वदा उत्तरेभ्यः कुरुभ्यश्च नमो हैरण्वताय च भद्राश्वकेतुमालाभ्यां नमः सर्वत्र सर्वदा
इलावृताय च नमो हरिवर्षाय चैव हि नमः किंपुरुषेभ्यश्च भरताय नमो नमः नमो भारतभेदेभ्यो नव
भ्यश्चाथ सर्वदा पातालेभ्यश्च सप्तभ्यो नरकेभ्यो नमो नमः कालाग्निरुद्रशेषाभ्यां हरये क्रोडरूपिणे
सप्तभ्यश्चाथ लोकेभ्यो महाभूतेभ्य एव च मनसे बुद्धये चैव नमः प्रकृतये तथा पुरुषायाभिमाना
य नमोस्तु व्यक्तमूर्तये हिमवत्प्रमुखेभ्यश्च पर्वतेभ्यो नमोस्त्वथ पौराणीभ्यश्च गंगाभ्यः सप्तभ्यश्च न
मो नमः नमो रत्नादिमुनिभ्यश्च सप्तभ्यश्चाथ सर्वदा नमोस्तु पुष्करादिभ्यस्तीर्थेभ्यश्च पुनः पुनः नि
म्नगाभ्यो नमो नित्यं दिवि स्थानादिभ्य एव च चतुर्दशभ्यस्तीर्थेभ्यो धरणीभ्यो नमो नमः नमो धात्रे विधा
त्रे च वृंदेभ्यश्च नमो नमः सुरभ्यै वरुणाभ्यां च नमो भूयो नमो नमः नमोस्तु योगेभ्यः श्रवसे ध्रुवाय च न
मो नमः नमोस्तु धन्वंतरये शस्त्रास्त्राभ्यां नमः सदा विनायककुमाराभ्यां विघ्नेभ्यश्च नमः सदा शा

खायचविशाखायनैगमेयायवैनमः नमःस्कंदग्रहेभ्यश्चस्कंदमातृभ्यएवच ज्वरायरोगपतयेभस्मप्र
हरणायच अप्सरोभ्यःसोमपेभ्योदेवेभ्यश्चनमोनमः असोमपेभ्यश्चनमोस्तुषितेभ्योनमःसदा आदि
त्येभ्योनमोनित्यंद्वादशभ्यश्चसर्वदा एकादशभ्योरुद्रेभ्यस्तपस्विभ्योनमःसदा सदैकोनपंचाशद्भ्यो
मरुद्भ्यश्चनमोनमः शिल्पाचार्यायदेवायनमस्तेविश्वकर्मणे अष्टभ्योलोकपालेभ्यस्तानुगेभ्यश्चसर्व
दा आयुधेभ्योवाहनेभ्योवर्मभ्यश्चनमःसदा आसनेभ्योदुंदुभिभ्योदेवेभ्यश्चनमःसदा दैत्यराक्षसगं
धर्वपिशाचेभ्यश्चनित्यशः पितृभ्यःसप्तभेदेभ्योमातृभ्यश्चनमोनमः सुसूक्ष्मेभ्यश्चदेवेभ्योभावगम्ये
भ्यएवच नमस्तेबहुरूपायविश्वेपरमात्मने अथकिंबहुनोक्तेनमंत्रेणानेनवार्चयेत् प्राङ्मुखो·
दङ्मुखोविप्रान्देवानुद्दिश्यपूर्ववत् ब्राह्मणान्देवतादेशेन् पूर्ववत् मंत्रोक्तक्रमेणार्चयेदित्यर्थः
अन्नालंविस्तरेण अर्चैः पुष्पैश्चधूपैश्चवस्त्रैर्माल्यैःसहृष्टकं सरोमांचंप्रजयेदित्यर्थः यतयात्मा
नविभवैर्दक्षिणाभ्यश्चसर्वदा इतिहासपुराणानांप्रवक्तॄश्चद्विजोत्तमान् कालज्ञान्वेदवेदज्ञान्भ
व्यान्संबंधिबांधवान् यत्नेनैवतुमंत्रेणस्वाहांतेनपृथक्पृथक् प्रविष्टायाग्रयेहोमःकर्तव्यःसर्वत
स्रये वेदविच्चतुर्थ्येदत्वास्थानेप्रधानिकेसति प्रविष्टायश्रेष्ठायवेदवेदज्ञायवेदोक्तविधिनायेत्यर्थः
मदनरत्नेतु वेदवतेइतिपठित्वावेदोक्तविधिनेतिव्याख्यातं चतुर्थीआज्यभागोप्रधानिकेस्थाने।
प्रधानहोमारंभे होमारंभेततःकुर्यान्मंगलालंभनंनरः मदरत्ने शालाहोमस्ततःकार्योमंगला
लंभनंततः भोजयित्वाद्विजान्सर्वान्सुहृत्संबंधिबांधवान् विशेषेणतुभोक्तव्यंकार्यश्चापिमहो।
त्सवः नवसंवत्सरारंभःसर्वसिद्धिप्रदायकः

इतिब्रह्मपुराणोक्तःसंवत्सरारंभविधिः॥ इयंचपूजादमनकेनकार्येतिस्मृतिकौ
स्तुभे यथोक्तंदेवीपुराणे ब्रह्मोवाच चैत्रादौकारयेत्पूजांममवत्सयथाविधि गंधधूपार्चनादानै
र्माल्यैश्चदमनोद्भवैरिति दमनाभविहर्वपाकुशाततेवा अत्रकार्यामहाशांतिरित्युक्तत्वादत्रम
हाशांतिर्लिख्यते भविष्योत्तरे श्रीकृष्णउवाच महाशांतिंप्रवक्ष्यामिमहादेवेनभाषितं नृपाभि
षेकेसाकार्यायात्राकालेनृपस्यतु दुःस्वप्नेदुर्निमित्तेचग्रहवैगुण्यसंभवे विद्युदुल्कानिपातेच
जन्मर्क्षग्रहभेदने केतूदयेचनिर्घातेचतथैवाष्टमेतथा यदास्युर्गुरुमंदाराःसूर्यश्चैवविशेषतः
युद्धेग्रहाणांसर्वेषांसूर्यशीतांशुकीलके वस्त्रायुधगवाश्वेषुभस्मितेशयवासने यदग्निःपरिदृश्ये
तराज्ञाविंदयत्नस्तथा वेश्मनश्चतुलाभंगोगर्भस्रवस्तरीषुच रविविंबद्दयेदृष्टेमहाशांतिःप्रश
स्यते रवींद्वोरुपरागेचमहोल्कापतनेषुच उत्पातेषुतथान्येषुनिमित्तेषुचसर्वतः सर्वारिष्टोप
शमनीमहाशांतिर्निगद्यते सर्वाणिदुर्निमित्तानिप्रशमंयांतिसर्वथा तांकुर्युर्ब्राह्मणाःपंचकुल
शीलसमन्विताः चतुर्वेदाद्विवेदाश्चद्विवेदाश्चापिपांडव आथर्वणाविशेषज्ञावहृचश्चसंयुताः
शुचयःश्रुतसंपन्नाजपहोमपरायणाः कृच्छ्रोपवासनक्ताद्यैःकृतकार्यविशोधनाः पूर्वमारभ्य
मंत्रास्तुप्रारंभेषुस्ततःक्रियाः मंत्राव्ययोगेवक्ष्यमाणान् दशद्वादशहस्तंवामंडपंकारयेच्छुभे
तन्मध्येवेदिकांकुर्याच्चतुर्हस्तप्रमाणतः आग्नेय्यांकारयेत्कुंडंहस्तमात्रंसुशोभनं मेखलात्रय
संयुक्तंयोन्याचापिसमन्वितं चारुचंदनमाल्यैश्चतोरणालंकृतंतथा गोमयेनोपलिप्तेचमंडपेते
द्विजातयः शुक्लांबरधराःस्नाताःशुक्लमाल्यानुलेपनाः कर्मकुर्युरितिशेषः ततश्चपंचकल
शान्सम्यग्वेद्यांनिधापयेत् आग्नेयादिषुकोणेषुपंचमंमध्यमेतथा अष्टपत्रकृतेपद्मेचूतपल्लव
धारिणः ब्रह्मकूर्चविधानेनपंचगव्यंतुकारयेत् ब्रह्मकूर्चविधानंयथा गोमूत्रंताम्रवर्णायाइत्या
दिपरिभाषोक्तंकार्यं औषधीःपंचरत्नानिरोचनाचंदनंतथा सिद्धार्थकान्दूर्वांकुशान्व्रीहिय·

वांस्तथा अपामार्गफलवती न्यग्रोधोडुंबरौ तथाश्वत्थाश्मन्तककपित्थाम्रप्रियंगुश्चूतपल्लवान् हस्ति-
दंतमदं चैव कोणकुंभेषु निक्षिपेत् फलवतीं गंधप्रियंगुः पुण्यतीर्थोदकोपेतं पंचगव्यं तु मध्यमे अ-
चैवाचमितीदं हि वह्निकुंभाभिमंत्रणं आपः शिशाननेऋज्याय देवावायुगोचरे ईशावास्यमितीशे-
न्यां कुंभस्य त्वभिमंत्रणं मध्यमे तु यजमव्याहृत्याः कुंभे यजुर्भवाः गंधपुष्पाक्षतैर्वस्त्रैर्नैवेद्यैर्हृतपावि-
तैः फलैश्च नारिकेलाद्यैर्दीपकैः कुंभपूजनं स्वस्तिवाचनिकं चैव कारयेत्तदनंतरं क्रमेणानेन शान्-
केरग्निकार्यं प्रयोजयेत् अनेन वक्ष्यमाणेन अग्निहूतमिहाग्निं च पूर्वमेव निधापयेत् पूर्वं कलश-
स्थापनात् अग्निस्थापनानंतरं कलशस्थापनं कुर्यादित्यर्थः हिरण्यगर्भः समितिब्रह्मासननियोज-
ने कयानयाप्रणीताश्च मंत्रेण विनियोजयेत् कृत्वा चास्तरणं वह्नेराज्यसंस्कारमेव च अथवा साद-
येदत्र द्रव्यं यस्य प्रयोजनं ततः पुरुषसूक्तेन पायसं श्रपणं भवेत् अभिघार्यार्थसंसिद्धं पायसं स्था-
पयेद्बुधः अष्टादशप्रमाणेन दद्याद्दश शमीमयान् पालाशीः समिधः सप्त सप्त तेषु निधापयेत्
आघारावाज्यभागौ तु जुहुयात्क्रमेण तु जुहुयादाहुतीः सप्त जातवेदस इत्यृचा स्थालीपाकस्य
जुहुयात्सर्वं वै जातवेदसे ततस्तु मदीसूक्तेन चतस्रो जुहुयात्ततः यमायेति च सप्ताभ्यः स्वाहान्ता जु-
हुयात्ततः इदं विष्णुस्ततः सप्त जुहुयादाहुतीर्नृप नक्षत्रेभ्यस्ततः स्वाहा सप्तविंशतिराहुतीः नक्षत्रा-
हुतयः स्वाहेत्यादिभिर्मंत्रैः कार्याः तत्र रोहिणीद्वयपुष्यहस्तादित्रयानुराधाभिजिद्द्वयशतभिष-
क स्वैकैकवचनं पुनर्वसुफाल्गुनीद्वयविशाखाश्विनीषु द्विवचनं शेषेषु बहुवचनं यत्कर्मणो जु-
हुयात्ततः स्विष्टकृत्तु पुनः ग्रहहोमस्ततः कार्यस्तिलैराज्यपरिप्लुतैः अत्र तिलविधानं वैकल्पिकं
यवादिनिवृत्त्यर्थमित्यर्थः प्रायश्चित्तं ततो हुत्वा होमकर्म समापयेत् ततस्तु तूर्यनिर्घोषैः शंखकाह-
लनिःस्वनैः यजमानस्य कर्तव्यो ह्यभिषेको द्विजोत्तमैः काश्मर्यवृक्षसंभूते समे भद्रासने स्थिते
काश्मर्यवृक्षः श्रीपर्णी भद्रासनं वेदिमध्यगतं कृत्वाऽनिमित्तप्रशांतये पंचभिः कलशैः पूर्णैर्मं-
त्रैरेतैर्यथाक्रमं सहस्राक्षं प्रथमं ततश्चैव शतायुषा सजोषसा रुद्र इति विश्वानि वरुणेति च द्रुपदा-
दिवेति च ततः स्नापयेयुः समाहिताः ततो दिशां वलिं दद्याद्दिव्यान्नसमाश्रितान् नमोस्तु सर्वभूते-
भ्य इमं मंत्रमुदीरयेत् स्नातस्य ब्राह्मणाः सर्वे पठेयुः शांतिमुत्तमां शांतितोयेन धारां च पातयित्वा स-
मंततः पुण्याहवाचनं कृत्वा शांतिकर्म समापयेत् तीर्थे देवालये चैव गोदोहं कारयेद्बुधः क्षितिं हि-
रण्यवासांसि शयनान्यासनानि च विप्रेभ्यो दक्षिणां दद्यात् यथाशक्त्या विमत्सरः दीनानाथविशिष्टे-
भ्यो दद्याच्चैव युधिष्ठिर भोजनं चानिशं दत्वा ततः सर्वं प्रसिद्ध्यति आयुश्च लभते दीर्घं शत्रूंश्च जयते
रणात् दुर्गाणि चास्य सिद्ध्यंति पुत्रांश्च लभते शुभान् यथा शस्त्रप्रहाराणां कवचं भवति वारणं त-
द्दैवोपघातानां शांतिर्भवति वारणं अहिंसकस्य दांतस्य धर्मार्जितधनस्य च दयादाक्षिण्ययुक्तस्य
सर्वे सानुग्रहा ग्रहाः अर्थांस्तु समर्थयंति वर्धयंते धर्मकामं समर्द्धयंति तस्यापि नष्टपापे यः कार्ये-
त्सकलदोषहरो महार्थो शांतिप्रशांतहृदयः पुरुषस एव अथ महाशांतिप्रयोगः तत्रादौ वेदिसं-
स्कारादि मंडपाभावपक्षे कार्यं तत्र वेद्या अग्निकोणे अग्निस्थापनार्थं हस्तमात्रं कुंडं स्थंडिलं वा का-
र्यं वेद्याश्चत्वारि द्वाराणि सतोरणानि परिकल्प्य चारुचंदनपुष्पमालावस्त्रादिभिरलंकृत्य यथोक्तं
पंचगव्येन आम्रपल्लवेन गायत्र्या मंडपं वेदिं च प्रोक्ष्य आसने उपविश्य आचम्य अपवित्रः पवित्रो वा
सर्वावस्थां गतोपि वा यः स्मरेत्पुंडरीकाक्षं स बाह्याभ्यंतरः शुचिः ततो देशाचारात् सूर्यादिपूजनं वि-
धाय संक्षिप्तसंकल्पं कुर्यात् ॐ अद्यामुकगोत्रो अमुकशर्मा अमुकवर्माहं सर्वपापक्षयसक-
ल ग्रहपीडासमुत्थोत्पातजनितसर्वारिष्टनिवृत्तिपूर्वकमात्मनो देशकुटुंबपरिवारशरीरादौ धनधान्य

संपन्नारोग्यादिसर्वाभीष्टसिद्ध्यर्थं कर्त्तव्यमहाशांतियागस्य पूर्वांगत्वेन गणेशपूजापुण्याहवाचन-
स्वस्तिवाचनमातृकापूजनाभ्युदयिकश्राद्धआचार्यऋत्विगादिवरणं करिष्ये मत्स्यपुराणे प्रतिज्ञाव-
रणं चैव स्वस्तिपुण्याहवाचमिति आदौ प्रतिज्ञा ततआचार्यवरणं गणपत्यादिपूजायां मन्त्रपाठार्थम्
ॐ अद्येत्यादि महाशांतियागकर्मणः पूर्वांगत्वेन गणपतिमातृकापूजावसोर्द्धारात्यभ्युदयादिप्रतिष्ठा
वृद्धिश्राद्धपुण्याहवाचनग्रहस्थापनप्रतिष्ठादिकर्म कारयितुमाचार्यत्वेन त्वामहं वृणे आचार्यस्तु य-
था स्वर्गे शक्रादीनां बृहस्पतिः तथा त्वं मम यज्ञेस्मिन्भवाचार्यो द्विजोत्तम इत्याचार्यवरणं विधाय भ-
द्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं
यदायुः इति मंत्रेण यजमानहस्ते कंकणबंधनं गणपतिसहितमातृकापूजनं कुर्यात् ॐ गणा-
नां त्वा गणपतिं हवामहे प्रियाणां त्वा प्रियपतिं हवामहे निधीनां त्वा निधिपतिं हवामहे वसो
मम आहमजानि गर्भधमात्वमजासि गर्भधं १ ॐ नमो गणेभ्यो गणपतिभ्यश्च वो नमो ॐ नमो व्रातेभ्यो
व्रातपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः
ॐ भगवन् गणपते इहागच्छ इह तिष्ठ मम पूजां गृहाण ॐ नमो भगवते गणाधिपाय नमः इति सर्वो-
पचारैः संपूज्य सुमुखश्चैकदंतश्च कपिलो गजकर्णकः लंबोदरश्च विकटो विघ्ननाशो विनायकः धू-
म्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः द्वादशैतानि नामानि यः पठेच्छृणुयादपि विद्यारंभे विवाहे च
प्रवेशे निर्गमे तथा संग्रामे संकटे चैव विघ्नस्तस्य न जायते ततो मातृकास्थापनं गौरी पद्मा शची मेधा
सावित्री विजया जया देवसेना स्वधा स्वाहा मातरो लोकमातरः धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदे-
वता गणेशेनाधिकाः पूज्या वृद्धौ षोडश मातृकाः षोडशमातृका इहागच्छत इह तिष्ठत श्रीसहित
षोडशमातृभ्यो नमः एवं गंधादिनैवेद्यांतपूजनं षोडशमातृकाः पूजितास्युस्तत्समधे ततः कुड्यादि-
लग्नाः सप्त सप्त घृतधारा वसोर्धाराः कर्तव्याः ॐ लक्ष्मीः श्रीर्धृतिर्मेधा पुष्टिः श्रद्धा सरस्वती
सर्वे वृद्धिकार्येषु सप्तैता वृद्धमातरः लक्ष्म्यादिसप्तमातृका इहागच्छतेत्यादि आवाहनपूजा ल-
क्ष्म्यादिसप्तमातृभ्यो नमः इति गंधादिनैवेद्यदक्षिणांतपूजनं रक्तवस्त्रमंगलसूत्रादिदाने पूजा।
अभ्युदयिकश्राद्धं ॐ अपवित्रः पवित्रो वा देवताभ्यः पितृभ्यश्च ॐ सत्यवसुसंज्ञका विश्वेदेवाः ॐ भू-
र्भुवः स्वः इदं वः पाद्यं १ मातृपितामही प्रपितामह्यः नांदीमुख्यः ॐ भूर्भुवः स्वः इदं वः पाद्यं संपद्यतां
वृद्धिः २ ॐ पितृपितामहप्रपितामहाः नांदीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं संपद्यतां वृद्धिः ३ ॐ मा-
तामह प्रमातामह वृद्धप्रमातामहाः नांदीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं संपद्यतां वृद्धिः ४ इदमा-
सनं वः संपद्यतां वृद्धिः ४ इदं गंधाद्यर्चनं वः संपद्यतां वृद्धिः ४ मंडले १२ परिवेषणं १२ विधाय
पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा इदं विष्णुर्विचक्रमे त्रेधा नि-
दधे पदं समूढमस्य पांसुरे विष्णो हव्यं रक्ष मदीयं ॐ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो युग्म-
ब्राह्मणभोजनपर्याप्तमिदमन्नं सोपकरणं सदक्षिणं वः संपद्यतां वृद्धिः ४ एवं स्थानचतुष्टये द्वाद-
शधा दत्वा ॐ अन्नहीनं क्रियाहीनं मंत्रहीनं विधिहीनं च यद्भवेत् तत्सर्वमच्छिद्रमस्तु इति जप्त्वा
सत्यवसुसंज्ञका विश्वेदेवा दत्तेनान्नपानादिभिः प्रीयंतां १ मातृपितामहीप्रपितामह्यः दत्तेनान्नपा-
नादिभिः प्रीयंतां २ पितृपितामहप्रपितामहाः दत्तेनान्नपानादिभिः प्रीयंतां ३ मातामहप्रमाता-
मह वृद्धप्रमातामहाः दत्तेनान्नपानादिभिः प्रीयंतां ४ ततः गोत्रं नो वर्द्धतां दातारो नोभिवर्द्धंतां
वेदाः संततिरेव च श्रद्धा च नो मा व्यगमद्बहुदेयं च नोस्तु अन्नं च नो बहु भवेदतिथींश्च लभेमहि
याचितारश्च नः संतु मा च याचिष्म कंचन इति संप्रार्थ्य पुनः सत्याशिषः संतु इति विप्राणां प्रतिवच

पैश्चदीपाक्षतजलैः शुभैः दूर्वांकुरैरत्नवरैर्दध्यावस्त्रेणपांडुरैः मंत्रेणानेनराजेंद्रक्षत्रियःसपु
रोहितः नवोनवोमासिमासिजायमानःपुनःपुनः आप्यायस्वसमेत्येवंसोमराजनमोस्तुते
अनेनविधिनाचार्घ्यंसर्वकामफलप्रदं यःप्रयच्छतिकौंतेयमासिमासिसमाहितः सकीर्त्या
यशसाकांत्याप्रज्ञयाचभुविमानवः पुत्रैःपौत्रैःपरिवृतोगोधान्यधनसंकुलः स्थित्वावर्षशतं
मर्त्येततःसोमपुरंव्रजेत् तत्रास्तेदिव्यवपुषाभुंजन्भोगान्मनोरमान् वरस्त्रीभिःसहात्यर्थं
यावदाभूतसंप्लवं धर्म्येसमृद्धिमतुलांयदिवांछसितंमासानुमासमिहमद्वचनंकुरुष्व
सोमस्यसोमकुलनंदनपुष्पधूपैरर्घ्यंप्रयच्छविधिनाभिनवोदितस्य
इतिभविष्योत्तरेभिनवचंद्रार्घ्यदानविधिः अस्यामेवविष्णुधर्मोत्तरोक्तंनेत्रव्रतम् ॥
मार्कंडेयउवाच नासत्यौदेवभिषजावश्विनौपरिकीर्तितौ तावेवप्रथितौलोकेसूर्यनासाधि
यौनृप सूर्यचंद्ररूपावित्यर्थः अमृतपानरतौयस्मादश्विनौपरिकीर्तितौ चैत्रशुक्लद्वितीया
यांसोपवासोजितेंद्रियः नासत्यौदेवभिषजौपूजयेत्प्रयतःशुचिः गंधमाल्यनमस्कारैर्धूप-
दीपान्नसंपदा कृत्वाचमूर्तिनिर्माणंनासत्यौपूजयेन्नृप नासत्यमूर्तिस्तुविश्वकर्मोक्ता द्विभु
जौदेवभिषजौगौरांगौचारुलोचनौ तयोरौषधःकार्य्योदिव्योदक्षिणहस्तगः सपुस्तकक
रौकार्य्यौदर्शनीयौतथाद्विज दीपमालांतथादद्यातपोनिशिविशेषतः कनकंरजतंचोभे-
दद्याद्द्विजेषुदक्षिणां संपूज्यनेत्रयुगलंविष्णोःसंवत्सरंनृप प्रदीप्ततेजाभवति चक्षुष्मा-
श्चैवजायते प्राणयात्रांप्रकुर्वीतदध्नाघृतयुतेनच नेत्रव्रतंद्वादशवत्सराणिकृत्वाभवेद्भू-
मिपतिप्रदीपः सद्रूपरूपोरिगणप्रमाथीधर्माभिरामोनृपवर्गमुख्यः ॥
इतिविष्णुधर्मोत्तरोक्तंनेत्रव्रतम् इतिचैत्रशुक्लद्वितीयाकृत्यं
अथचैत्रशुक्लतृतीयाकृत्यं नारदीये चैत्रशुक्लतृतीयायांगौरीहरसमर्चकौ सौवर्णीं
राजतींवापिताम्रजांमृण्मयींद्विज अभ्यर्च्यगंधपुष्पाद्यैर्वस्त्राभरणैःशुभैः दूर्वाकांडैश्च
विधिवत्सोमवासात्तकन्यका वरार्थिनीतसौभाग्यपुत्रभर्त्रर्थिनीतथा द्विजभार्याभर्तृम-
तीकन्यकावास्वलक्षणाः सिंदूरांजनवस्त्राद्यैःप्रतोष्यप्रीतमानसा रात्रौजागरणंकुर्याद्व्र
तसंपूर्तिकाम्यया ततस्तांप्रतिमांविप्रगुरवेप्रतिपादयेत् धातुजांमृण्मयींवापिनिक्षिपेच्च
जलाशये एवंद्वादशवर्षाणिकृत्वागौरीव्रतंशुभं धेनूर्द्वादशसंकल्प्यदद्यादुत्सर्गसिद्धये
किमत्रबहुनोक्तेनगौरीसौभाग्यदायिनी स्त्रीणांयथातथानान्याविद्यतेभुवनत्रये धनपु
त्रान्यनिविद्यामात्तासिद्धिंयशःसुखं लभतेसर्वमेवेहगौरीमभ्यर्च्यभक्तितः इतिसौ-
भाग्यगौरीव्रतं अथास्यामेवसौभाग्यशयनव्रतं मात्स्ये वसंतमासमासाद्यतृतीयायांजन
प्रिये सौभाग्यायसदास्त्रीभिःकार्य्यंपुत्रसुखेप्सुभिः शुक्लपक्षस्यपूर्वाह्णेतिलैःस्नानंसमाच
रेत् तस्मिन्नहनिसादेवीकिलविश्वात्मनासती पाणिग्रहणकैर्मंत्रैरुढायावरवर्णिनी त
यासहैवदेवेशंतृतीयायांसमर्चयेत् फलैर्नानाविधैर्धूपदीपनैवेद्यसंयुतैः प्रतिमांपंचगव्ये
नतथागंधोदकेनच स्नापयित्वार्चयेद्गौरीमिंदुशेखरसंयुतां नमोस्तुपाटलायैस्तुपादौदे
व्याःशिवस्यतु शिवायेतिचसंकीर्त्य १ जयायैगुल्फयोस्तथा १ त्रिगुणायेतिरुद्रस्य २ भवा-
न्यैजंघयोर्युग्मं शिवेरुद्रेश्वरायेति ३ जयायैइतिजानुनी संकीर्त्यहरिकेशाय ४ तथोरूवर
देनमः ईशायैशंकरं ५ रत्यैशंकरायेतिशंकरं कुक्षिद्वये ६ चकोदर्यै शूलिनःशूलपा-
णये ७ मंगलायैनमस्तुभ्यमुदरंचापिपूजयेत् ८ सर्वात्मनेनमोरुद्रंमीशान्यैचकुचद्वयं

शिवं वेदात्मने तद्वद्रुद्राण्यै कण्ठमर्चयेत् १० त्रिपुरघ्नाय विश्वेशमनन्तायै करद्वयं ११ त्रिलोचनायै
ति हरे बाहू कालानलप्रिये १२ सौभाग्यभवनायेति भूषणादि समर्चयेत् ततोर्धनारीशहरमसि
ताग्नीनि नासिकां १३ नमश्चण्डाय लोकेशं ललितेति पुनर्भ्रुवोः शिवाय पुरहन्तारं वसुदेव्यै तथालि
कं १४ नमः श्रीकण्ठनाथाय शिवं केशांस्तथार्चयेत् १५ भीमोग्रसौम्यरूपिण्यै शिरः सर्वात्मने न
मः १६ शिवमभ्यर्च्य विधिवत्सौभाग्याष्टकमित्यतः स्थापयेद्घृतनिष्पावकुसुम्भाजीरजीरकं
तालराजेक्षु लवणं कुस्तुम्बुरुमथाष्टमं दत्तं सौभाग्यकृद्यस्मात्सौभाग्याष्टकमित्यतः एवं निवेद
येत्सर्वमग्रतः शिवयोः पुरः चैत्रे शृङ्गोदकं प्राश्य स्वपेद्भूमावरिन्दम पुनः प्रभाते तत्तथा कृतस्ना
नजपः शुचिः संपूज्य द्विजदाम्पत्यं माल्यवस्त्रविभूषणैः सौभाग्याष्टकसंयुक्तं सुवर्णप्रतिमाद्वयं
प्रीयतामत्र ललिता ब्राह्मणाय निवेदयेत् एवं संवत्सरं यावत्तृतीयायां सदा मुने प्राशने दानमन्त्रे
च विशेषोयं निबोध मे गोशृङ्गोदकमाषाढे स्याद्वैशाखे गोमयं पुनः ज्येष्ठे मन्दारकुसुमं बिल्वपत्रं शु
चौ स्मृतं श्रावणे दधि संप्राश्यं नभस्ये च कुशोदकं क्षीरमाश्वयुजे मासि कार्तिके पृषदाज्यकं मा
र्गशीर्षे तु गोमूत्रं पौषे संप्राशयेद्घृतं माघे कृष्णतिलांस्तद्वत्पञ्चगव्यं च फाल्गुने ललिता विजया
भद्रा भवानी कुमुदा शिवा वासुदेवी तथा गौरी मङ्गला कमला सती उमा च दानकालेषु प्रीय
तामिति कीर्तयेत् मल्लिकाशोककमलं कदम्बोत्पलमालती कुब्जकं करवीरं च बाणमम्ला
नकुङ्कुमं सिन्दुवारं च सर्वेषु मासेषु क्रमशः स्मृतं बाणं नीलकण्ठः जपाकुसुमकुसुम्भमालती
शतपत्रिका यथालाभं प्रशस्तानि करवीरं च सर्वदा एवं संवत्सरं यावदुपोष्य विधिवन्नरः स्त्री
वा भक्त्या कुमारी वा शिवावभ्यर्च्य भक्तितः व्रतान्ते शयनं दद्यात्सर्वोपस्करसंयुतं उमामहेश्वरं है
मं वृषभं च गवा सह स्थापयित्वा च शयने ब्राह्मणाय निवेदयेत् गोयुगं हैमं अन्यान्यपि यथाश
क्त्या मिथुनान्यम्बरादिभिः धान्यालङ्कारगोदानैरभ्यर्च्य धनसंचयैः वित्तशाठ्येन रहितः पूज
येद्गतविस्मयः एवं करोति यः सम्यक् सौभाग्यशयनं व्रतं करोति समवाप्नोति वा श्रीकण्ठभुवने
मरैः पूज्यमानो वसेत्सम्यग्यावत्कल्पायुतत्रयं नारी वा कुरुते वापि कुमारी वा नरेश्वर सापि
तत्फलमाप्नोति देव्यनुग्रहलालिता इत्युद्यापनविधिः

इति मत्स्यपुराणे सोद्यापनं सौभाग्यशयनं गौरीव्रतं अत्रैव गौरीदोलोत्सव उक्तो
हेमाद्रौ देवीपुराणे तृतीयायां यजेद्देवीं शंकरेण समन्वितां कुङ्कुमागुरुकस्तूरीमणिवस्त्रसु
गन्धितां सुगन्धिपुष्पधूपैश्च दमनेन समालिना आन्दोले दोलयेत्तत्र शिवोमातुष्टये सदा रा
त्रौ जागरणं कार्यं प्रातर्दद्यात्तु दक्षिणां सौभाग्यार्थं यदा स्त्रीभिः कार्या पुत्रसुखार्थिभिः हेम
वस्त्रान्नपानानि ताम्बूलानि स्रजस्तथा सौवर्णी तत्प्रमा कार्या राजतः शंकरस्तथा दशभुजस्तु
देवेशो द्विभुजोमा प्रकीर्तिता इयं मुहूर्तमात्रापि परा ग्राह्या गौरीदेवतत्वात् मुहूर्तमात्रसत्वे
पि दिने गौरीव्रतं परे इमं मन्वादिरपि श्राद्धेऽपराह्णव्यापिनी ग्राह्या स्नानादौ पराग्राह्या ॥

इति देवीपुराणोक्तो गौरीदोलोत्सवः तृतीयायां मन्वादौ श्राद्धमुक्तं मात्स्ये
कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु हायनानि द्विसाहस्रं पितॄणां तृप्तिदं भवेत् चैत्रशुक्ल
तृतीयायां श्रीरामचन्द्रदोलोत्सवः श्रीरामार्चनचन्द्रिकायां गारुडे मधौ शुक्लतृतीयायां
जानकीरमणं प्रभुं राजोपचारैः संपूज्य मासमादोलयेत्कलौ दक्षिणाभिमुखं देवं दोलमानं न
रेश्वरं सकृद्दृष्ट्वा सर्वपापैः प्रमुच्यते चैत्रे मासि सिते पक्षे तृतीयायां रमापतिं दोला
रूढं समभ्यर्च्य मासमादोलितं भुवि दोलारूढं प्रपश्यन्ति ये कृष्णं मधुमाधवे अपराधान्विहा

ः श्रोता जगत्यस्मिन्भवता सदृशो मम जया च विजया चैव पार्वत्याः परिचारिके आगत्य स्तुतिः क
र्वाभिः गृहेभीष्टफलेच्छया भवत्यौ सर्वदा देव्याः स्थिते ह्यन्तिके किल केन व्रतोपचारेण कस्मिन्न-
हि पार्वती पूजिता तोषमायाति मे वैः केशववरानने तासां तद्वचनं श्रुत्वा जया प्रोवाच सादरं शृणु
न्नभिधास्यामि सर्वकालफलप्रदं व्रतमुत्तमसंयुक्तं नरनारीमनोरमं चैत्रमासि तृतीयायां दंत
धावनपूर्वकं उपवासस्य नियमं गृह्णीयाद्भक्तिभावतः अंजनं च समतांबूलं सिंदूरं रक्तवाससी वि
सर्जयेत्सोपवासाप्यद्वैधव्यकरं परं विधवा पतिमार्गेण कुमारी वा यदृच्छया कुर्यादार्यां च विधि
पूर्वतामत्र चक्रमः विचित्रपटवस्त्रैस्तु कुर्यान्मंडपिकां शुभां कारयेत्कुसुमामोदवासितां भू
षितां शुभां प्रवालालंवितप्रांतां मंतदिव्यवितानकां विन्यस्तपूर्णकलशां पीठस्थितलसद्वि
तां पुरतः कारयेत्कुंडं हस्तमात्रं समेखलं ततः स्नात्वा शुचिर्भूत्वा परिधाय सुवाससी देवान्पि
तॄंस्समभ्यर्च्य ततो देवीगृहं व्रजेत् नामाष्टकेन संपूज्य गौरीशंकरवल्लभां नामाष्टकेन वक्ष्य-
माणेन गौ भर्तृवल्लभामिति पाठे हेषभध्वजवल्लभामित्यर्थः तत्कालसंभवैः पुष्पैर्गंधाढ्यैरलि
कुलाकुलैः कुंकुमेन समालभ्य कर्पूरागुरुचंदनैः एवं संपूज्य विधिवत्सुधूपेनाधिवासयेत्
पार्वती ललिता गौरी गायत्री शांकरी शिवा उमा सती समुद्दिष्टं नामाष्टकमिदं शुभं लड्डुकैः खं
डवेष्टैः सुगुणकैः सिंहकेसरैः सोहालकैश्चेल्लरसैर्दधिभक्तैः सपूपकैः घृतपक्वैर्वहुविधैः सु
विभिः परिकल्पितैः हृष्टिप्राणप्रियैर्हृद्यैर्नैवेद्यैः पूजयेदुमां सिंहकेसरैः सिंहकेसरवद्वलीकृ
तैः धान्यकं जीरकं भव्यं कुंकुमं लवणं गुडं विकारवच्च यन्ली रहरिद्रां च पुरोन्यसेत् भव्यमुत्कृ
ष्टं नारिकेलं सनारंगं वीजपूरं सदाडिमं कूष्मांडं त्रपुसं हृन्नं दधित्थं पनसं तथा घृतं हृतवत
नातिपक्वमित्यर्थः त्रपुसं वालकं दधित्थं कपित्थं कालोद्भवानि चान्यानि फलानि पुरतोन्यसेत्
पत्रकौल्लावलशिलापूर्णं नालनिभिः सह नेत्रांजनं शलाकां च नवसाधनकानि च दर्पणानि-
मल्लिवृंदां भवान्यै विनिवेदयेत् शावर्त्तयन्निनादैश्च गीतमंगलनिःस्वनैः भक्त्याशक्त्या च संपूज्य
देवीं शंकरवल्लभां ततोऽस्तमयवेलायां कुमार्यः करकैर्नवैः स्नानं कुर्युर्मुदायुक्ताः सौभाग्य
रोग्यसिद्ध्यै कुमार्य्य इति व्रतचारिणीनामुपलक्षणं यामे यामे गते स्नानं देवीपूजनमेव च
तैरेव नामभिर्दीमक्ति लाजैन प्रशस्यते पद्मासनस्थिता साध्वी तेनैवार्द्रेण वाससा गौरीवक्रोक्त
गता रात्रिं तामतिवाहयेत् काश्चिद्गायंति संहृष्टाः काश्चिन्नृत्यंति हर्षिताः कथयंति कथाः का
श्चिद्धर्मकामार्थसंश्रयाः गीततालानुसंवद्धमनुद्धतसमाकुलं नृत्यंति चतुरादेव्याः काश्चि
द्विलसितभ्रुवः नृत्येन तुष्यति हरो गौरी गीतेन तुष्यति सद्भावेनाथवा सर्वे गृह्णंते त्रिदिवौक
सः सुवासिनीभ्यस्तांबूलं कुंकुमं कुसुमानि च प्रदेयं जागरं चैनामन्येषामप्यवारितं नटैर्विटै
र्भटैर्भट्टैः पूर्णैः प्रोत्तरोत्सवैः सखीभिः सहिता रात्रिं गीतनृत्यहासैर्नयेत् एवं प्रभातसमये स्ना
त्वा संपूज्य पार्वतीं शक्त्या तु तां समारोहेद्वस्त्रालंकारभूषिता तोलयेत्सितया त्मानं गुडेन लवणे
न च सितया शर्करया कुंकुमेनाथवा शक्त्या कर्पूरागुरुचंदनैः पर्वतानामपीच्छंति दानं केचि-
द्विरवयः कुंडमंडपसंभारमंत्रैरथिवसैवतत लवणेन तथात्मानं तोलयेत्प्रागुडेन च कया-
पि शक्तिरतया सौभाग्यमतुलीकृतं शक्तिरतया देवीरतया एवं देवीं प्रणम्यार्चां समाप्य गृहमा-
विशेत् ग्रामं त्वाद्विजदांपत्यं वासोभिर्भूषणैस्तथा संपूज्य भोजयित्वाथ दद्यात्तेभ्योथ दक्षिणां
यद्यदात्माभीष्टतमं शयनं यानमेव च वस्त्रमाभरणं गावः सर्वं तेभ्यो निवेदयेत् हेमपत्रं रत्नफ-
लं सुक्ताचूर्णं वचूर्णितं तांबूलं कांचिदिच्छति दीयमानं सावीजने पत्रस्थाने सुवर्णस्य पत्राणि

गस्थाने रत्नानि चूर्णस्थाने मुक्ताफलानि एवंविधं ताम्बूलं सबीजनैवेद्यं अन्नं च मधुरप्रायं भोजयित्वा सुवासिनीः स्वयं भुञ्जीत सहिता ज्ञातिबंधुजनैः स्वकैः यच्च देव्याः पुरो दत्तं नैवेद्यादि सुशोभनं प्रति-गेहं नयेत्सर्वं विभज्याग्रं ततमानसा दत्त्वायनकाद्याद्यन्तकन्याभ्यो वेदनतः विधिर्भाद्रपदे चैव सौख्य-संपत्प्रदायकः समथान्यद्विवृद्धं सुमूर्ध्न्यां पूजयेदुमां पूर्णकलशस्थाने शूर्पं इति विशेषः गोमूत्र-प्राशनं यस्मात्तस्माद्गोमूत्रसंज्ञिता माघमासे तृतीयायां विशेषः श्रूयतामयं पूर्वोक्तं सकलं कृत्वा प्रभाते पञ्चसंख्ये स्थापयित्वा कुन्दपुष्पैः पूजयेत्सुसुतामुमां एतेन कारणेनोक्ता चतुर्थी कुन्दसंज्ञिता पूर्वो-क्तं सकलं तृतीयायां कृत्वा प्रभाते चतुर्थीदिवसे सम्यक्तां विनायकसहितामुमां पूजयेदित्यर्थः उमा-रूपं तु कर्तव्यं गौर्यासनगतं शुभं सौवर्णं च महाराज साक्षसूत्रकमण्डलुं विनायकश्च कर्तव्यो गज-वक्त्रश्चतुर्भुजः तृतीयात्रयमेतत्ते कथितं सर्वकामदं जयया मुनिकन्यानां यत्पुरा समुदाहृतं एवं या कापि कुरुते नारी व्रतमिदं शुभं सा रूपसौभाग्ययुता मृता स्वर्गे महीयते न दुर्भगा कुले तस्याः कु-ले भवति भारत न दुर्विनीतश्च सुतो न भृत्यो विघ्नकृद्भवेत् न दारिद्र्यं गृहे तस्मिन्न व्याधिरुपजाय-ते यत्र सा रमते नारी धौतचामीकरप्रभा अन्याश्च याः करिष्यन्ति ब्राह्मणानुमते व्रतं संपूज्य वाचकं भक्त्या भूषणाच्छादनाशनैः तास्ताः सुसुखसंपन्ना ह्यविपन्नमनोरथाः भविष्यन्ति कुरुश्रेष्ठ कुलज्ये-ष्ठ नमोस्तु ते माघे महार्घमणिमण्डितपादपीठे चैत्रे विचित्रकुसुमोत्करचर्चिताङ्गि शूर्पप्रदे छन-

नवशाष्पमयीं नमस्ये संपूज्य शंभुदयितां प्रणमन्ति नार्यः

इति भविष्योत्तरोक्तं गौरीतृतीयाव्रतत्रयम् अथ चैत्रशुक्लतृतीयायामरुन्धतीव्रतं

तत्र स्त्रीणामेवाधिकारः अवैधव्यादिफलश्रवणात् तत्रादौ पूजा अष्टपत्रे कर्णिकायां मण्डले पू-जयेद्ध्रुवं अरुन्धतीं महादेवीं वसिष्ठसहितां सतीं ओं मधुचैत्रशुक्लतृतीयायां सर्वपापक्षयपूर्वका-वैधव्यादिसदभीष्टसिद्धये अरुन्धतीव्रताङ्गत्वेन वसिष्ठसहितारुन्धत्याः पूजनमहं करिष्ये आगच्छ वरदे देवि मण्डलेस्मिन्स्थिरा भव वसिष्ठेन समायुक्ता पूजां स्वीकुरु सत्कृता इत्यावाहनं अरुन्धति महादेवि सर्वसौभाग्यदायिनि दिव्यं सुचारु हैमं त्वमासनं प्रतिगृह्यतां इत्यासनं सु-चारुशीतलं दिव्यं नानागंधसुवासितं पाद्यं गृहाण देवेशि अरुन्धति नमोस्तु ते इति पाद्यं अरुन्ध-ति महाभागे वसिष्ठप्रियवादिनि अर्घ्यं गृहाण कल्याणि भर्त्रा सह पतिव्रते इत्यर्घ्यं गंगातोयसमा-नीतं सुवर्णकलशे स्थितं आचम्यतां महाभागे वसिष्ठसहिते नवे इत्याचमनं गंगासरस्वतीरेवा-पयोष्णीनर्मदाजलैः स्नापितासि मया देवि सदा शान्तिं कुरुष्व मे इति स्नानं नानारागसमायुक्तं दिव्यं चारु मनोहरं वस्त्रं गृहाण देवेशि अरुन्धति नमोस्तु ते इति वस्त्रं कर्पूरकुंकुमैर्युक्तं हरिद्रा-दिसमन्वितं कस्तूरिकासमायुक्तं चन्दनं प्रतिगृह्यतां इति गन्धं अक्षताश्च सुरश्रेष्ठे कुंकुमाक्ताः सुशोभनाः मालालंकारसिद्ध्यर्थं प्रीत्यार्थं प्रतिगृह्यतां इत्यक्षताः माल्यानि वै सुगंधीनि माल-त्यादीनि वै पुनः मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यतां इति पुष्पाणि गुग्गुल्वगुरुकस्तूरी-चन्दनादिविमिश्रितः आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यतां इति धूपः आज्यं त्रिवर्तिसंयुक्तं वह्निना योजितं मया दीपं गृहाण देवेशि त्रैलोक्यतिमिरापहे इति दीपः अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितं नैवेद्यं गृह्यतां देवि प्रसादं कुरु सर्वदा इति नैवेद्यं पूगीफलमिदं दिव्यं नागव-ल्लीदलैर्युतं कर्पूरैलासमायुक्तं ताम्बूलं प्रतिगृह्यतां इति ताम्बूलं इदं फलं मया देवि स्थापितं पुर-तस्तव तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि इति फलं हिरण्यगर्भगर्भस्थं हेमबीजं विभा-वसोः अनंतपुण्यफलदमतः शान्तिं प्रयच्छ मे इति दक्षिणा पुत्रान्देहि धनं देहि सौभाग्यं देहि

सुव्रते अन्यांश्च सर्वकामांश्च देहि देवि नमोस्तु ते इति प्रार्थना अरुंधति महाभागे वसिष्ठप्रियवा-
दिनि सौभाग्यं देहि मे देवि धनं पुत्रांश्च देहि मे इत्यर्घः द्विभुजां चारुसर्वांगीं साक्षसूत्रकमंडलुं
प्रतिमां कांचनीं कृत्वा नामभिः परिपूजयेत् देववंद्यायै नमः पादौ पूजयामि लोकवंद्यायै जानुनी
पू० संपत्तिदायिन्यै नमः नमः कटिं पू० गंभीरनाभ्यै नमः नाभिं पू० लोकधात्र्यै नमः स्तनौ पू० जगद्धा-
त्र्यै नमः कंठं पूज० शांत्यै नमः बाहू पू० वरदायै नमः हस्तौ पू० पुष्ट्यै नमः लोकधात्र्यै नमः स्तनौ पू०
जगद्धात्र्यै नमः कटिं पू० शांत्यै नमः बाहू पू० वरदायै नमः हस्तौ पू० पुष्ट्यै नमः मुखं पू० अरुंधत्यै नम
शिरः पू० सकलप्रियायै नमः शिखां पू० वसिष्ठप्रियायै नमः सर्वांगं पूजयामि ततो नीराजनं कुर्या-
त् पुष्पांजलिं च दद्यात् वंशपात्रस्थितं पूर्णं वायनं द्रव्यसंयुतं अरुंधत्यै श्रीनाशार्थं ब्राह्मणाय द-
दाम्यहं इति वायनं सुवर्णप्रतिमा युक्ता वसिष्ठेन सुशोभिता अरुंधती वसिष्ठं च ब्राह्मणाय ददा-
म्यहं इति मूर्तिदानमंत्रः गच्छ देवि यथास्थानं सर्वलंकारभूषिते अरुंधति नमस्तुभ्यं देहि सौभा-
ग्यमुत्तमं इति विसर्जनं अथ कथा हेमाद्रौ स्कांदे ईश्वर उवाच अरुंधतीव्रतं वक्ष्ये सदा सौभाग्य-
दायकं येन चीर्णेन वै सम्यङ् नारी सौभाग्यभाजना जायते रूपसंपन्ना पुत्रपौत्रसमन्विता वसंते
तु समासाद्य तृतीयां पुरुषर्षभ स्नानं कृत्वा तु वै सम्यक् त्रिरात्रोपोषिता सती मिथुनानि तु चत्वा-
रि समाहूय पतिव्रता पूजयेत्पुष्पतांबूलैश्चंदनेन च तथा ततः कुंकुमागुरुकर्पूरैः सिंदूरैर्मृगना-
दिभिः शिलापट्टेन संस्थाप्य जीरकं लवणान्वितं लोष्टकेन समायुक्तं वस्त्रयुग्मेन वेष्टितं आवा-
हयेन्महादेवीं वसिष्ठेन समन्वितां पतिव्रतानां सर्वासां मुख्यां त्वं देवभामिनि द्विभुजां चारुसर्वांगीं
साक्षसूत्रकमंडलुं प्रतिमां कांचनीं कृत्वा नामभिस्तां प्रपूजयेत् देववंद्यै नमः पादौ जानुभ्यां लोक-
वंदिते कटिं संपूजयेत्तस्या मम संपत्तिदायिनी नाभिं गंभीरनाभि तु लोकधात्र्यै तथा स्तनौ जग-
द्धात्र्यै तथा स्कंधौ बाहू शांत्यै नमस्तथा हस्तौ तु वरदायै तु मुखं पुष्ट्यै नमो नमः अरुंधति महाप्रजा
शिरस्तु सकलप्रिया एवं संपूज्य तां देवीं गंधपुष्पोपचारकैः पूजयित्वा संनिदेवीं ततश्चार्घ्यं प्र-
दापयेत् अरुंधति महाभागे वसिष्ठप्रियवादिनि सौभाग्यं देहि मे देवि धनं पुत्रांश्च सर्वदा अ-
र्घ्यमंत्रः पुत्रान्देहि धनं देहि सौभाग्यं देहि सुव्रते अन्यांश्च सर्वकामांश्च देहि देवि नमोस्तु ते
इति प्रार्थना सुवासिन्योथ संपूज्याः समाभिर्दिवसे तथा शुभगंधाद्यैः पुष्पैर्दद्यात्सूर्पान्समो-
दकान् होमं चैव तथा कुर्यात्समिद्भिश्च तिलैः पृथक् अष्टोत्तरशतं संख्या प्रार्थनामंत्रतः स्व-
यी मिथुनानि च संपूज्य भूषणाच्छादनादिभिः नानाविधोपचारैश्च चतुर्विंशति संख्यया आ-
चार्याय सभार्याय सुवस्त्राभरणानि च शय्यां सोपस्करां दद्यात्कांस्यपात्रं सदीपकं आदर्शं चामरं
चैव धेनुं दद्यात्पयस्विनीं शक्त्या च भोजयित्वाथ स्त्रियः सूर्पान्समोदकान् मोदकान्कांचनं चैव तथा
वस्त्रं यथाविधि पोलिका घृतपूरांश्च पूरिकाश्च विशेषतः सोहालिकाश्च दातव्या एकैकं द्विगुणं त-
था भोजनं हृद्यपर्यांतं दीनानाथांश्च तर्पयेत् एवं व्रतं समाप्याथ पश्चान्नक्तं समाचरेत् अनेनैव वि-
धानेन मानिनी कुरुते व्रतं अवैधव्यमवाप्नोति तथा जन्मसहस्रकं पुत्रपौत्रसमायुक्ता धनधान्य-
समन्विता जीवेद्वर्षशतं साग्रं सह भर्त्रा पतिव्रता पदमभ्यर्चयित्वा तु पदं गच्छत्यनामयं देवभार्या
यथा स्वर्गे ऋषिभार्या तथैव च राजभार्या महाभागा सर्वकामफलप्रदा पुरावृत्तमिदं विप्राः शृणु-
ध्वं व्रतमुत्तमं आसीद्विप्रः पुरा विप्राः सर्वशास्त्रविशारदः तस्यैका कन्यका जाता रूपेण प्रतिमा भु-
वि ततो विवाहं सम्प्राप्य वै पिता तस्याः करोद्विजाः बालरंडा तु सा जाता निर्वेदादगमद्गृहात् यमुना-
तीरमासाद्य चकार विपुलं तपः एकभक्तोपवासैश्च कृच्छ्रचांद्रायणैस्तथा मासोपवासनियमै-

त्मानंपावयन्सती कदाचिदागतस्तत्रभ्रमन्गौर्यासदाशिवः यमुनातीरमासाद्यपार्वतीतांददर्शसा
कृपयाचशिवांगौरीमहादेवमुवाचसा पार्वत्युवाच देवकेनेदृशीह्यस्याबालवैधव्यतोदशा वदेश्वरम
हादेवकृपांकृत्वाममोपरि महादेवउवाच अयंविप्रःपुरागौरिकुलशीलयुतोभुवि तेनकेन्यापरिहृता
सद्रूपायुवतीसती पतोविवाह्यतरुणींविदेशमगमद्द्विजः तस्याबहुतिथेकालेसापश्यत्स्वनरागमं
नागतस्तुमहाविशेयावज्जीवंतुसद्विजः तस्याजन्मागमत्सर्वंविनापत्यातुनिष्फलं तेनपापेनविप्रे-
सोनारीत्वंप्राप्तवान्शिवे स्वनारींयःपरित्यज्यनिर्दोषांकुलसंभवां यातिदेशांतरंवाथ्यगणायेमदना
र्णवे परदाररतोवास्यादन्यांवाकुरुतेस्त्रियं सोन्यजन्मनिदेवेशिस्त्रीभूत्वाविधवाभवेत् यानारीत्वप-
तिंत्यक्त्वामनोवाक्कायकर्मभिः रहःकरोतिवैजारंगत्वाचपुरुषांतरं भोगान्भुक्त्वाथसायोषित्सादी-
नाप्रमदासती तेनकर्मविपाकेनसानारीविधवाभवेत् स्वपत्नींकुलसंभूतांपतिव्रतरतांसतीं अनु
कूलांपरित्यज्यपरांयोयातिस्वेच्छया सपापीजायतेन्यस्मिन्स्त्रीहीनोविप्रजन्मनि अनेनसदृशं
लोकेसदृशंनास्तिपातकं नवैधव्यात्परोव्याधिर्नवैधव्यात्परोज्वरः नवैधव्यात्परःशोकोनवैधव्या
त्परोंकुशः नरकोनचवैधव्यात्कष्टंवैधव्यतान्नृषु तेनपापेनघोरेणजातेयंबालरंडिका सूतउवाच
इतिदेववचःश्रुत्वासागौरीविस्मिताभवत् पप्रच्छतंमहादेवंगौरीसाकरुणान्विता केनेदृशंमहापा
पंबालवैधव्यदायकं नश्यतेकर्मणायेनतन्मांवदकृपांकुरु श्रीमहादेवउवाच शृणुदेविप्रवक्ष्या
मिबालवैधव्यनाशनं अरुंधतीव्रतंपुण्यंनारीसौभाग्यदायकं यत्कृत्वाबालवैधव्यान्मुच्यतेना
त्रसंशयः श्रुतमेतन्मदाविप्रागौर्याशंकरतोद्विजाः यमुनातीरमासाद्यउपदिष्टंतदाद्विजाः तस्यै
नार्यैमहादेव्याकृतमेवव्रतंमया तेनपुण्येनमहताव्रतजेनमुनीश्वराः अरुंधतीव्रतमिदंतस्मा
त्कार्यंसदास्त्रिया नारीवैधव्यतोमुच्येन्सौभाग्यंप्राप्नुयात्परं इतिहेमाद्रौस्कांदे बालवैधव्यना
शनं सोद्यापनं अरुंधतीतृतीयाव्रतं अस्याविधानं ओंममाद्येहसर्वपापक्षयोनरजन्मजन्मांतरेषु
वैधव्यास्थिरसौभाग्यरूपसंपत्तिपुत्रपौत्रसंततिसंशामियनधान्यसंपत्यादिसमस्ताभीष्टकामना
सिद्ध्यर्थमरुंधतीसमानपातिव्रत्यमहिमाप्राप्तिकामनयाअरुंधतीतृतीयाव्रतंकरिष्येइतिसंक-
ल्पचत्वारिद्विजदंपत्यमिथुनानिसमाहूयतेभ्योयथाशक्तिसौभाग्याष्टकादिद्रव्यंदत्वा अनंतरं
सौवर्णींवसिष्ठारुंधतीमूर्तिंषोडशोपचारैःसंपूज्य वीयनंदत्वा तृतीयामुपवासमाचरेत् चतु
र्थ्यां द्विजदंपत्यानियथाशक्तिसौभाग्यद्रव्यैः परितोष्यभोजयित्वा तांमूर्तिमाचार्यायदद्यात्
तत्रमंत्रः सहुर्णप्रतिमायुक्तावसिष्ठेनसुशोभिता अरुंधतीवसिष्ठंचब्राह्मणायददाम्यहं एव
माचार्यायमूर्तिंदत्वास्वयंभुंजीतएवंयथाशक्तित्रिचतुःपंचवर्षाणिव्रतंकृत्वा अंतेउद्यापनंकुर्या
त् पूर्वोदितसंकल्पांते अरुंधतीव्रतोद्यापनंकरिष्येसर्वतोभद्रोपरिमूर्तिंप्रतिष्ठाप्य मंडलदे
वतापूजनांते अग्निस्थापनंविधाय अन्वाधानांतेवसिष्ठारुंधत्योर्नाममंत्रेगायत्र्यावाष्टोत्तरश-
ताहुतीर्हुत्वा मंडलदेवताभ्येकैकयाहुत्याहुत्वा चतुर्विंशतिमिथुनानिभोजयित्वा इत्यरुंधतीतृ
तीयोद्यापनं चैत्रशुक्लचतुर्थीकृत्यंनारदीये चैत्रशुक्लचतुर्थ्यांतुवासुदेवस्वरूपिणं गणपंसम्य
गभ्यर्च्यदत्वाकांचनदक्षिणां तिथिकृत्यप्रकरणे गणेशेकारयेत्पूजांलड्डुकादिभिरादरात्
चतुर्थ्यांविघ्ननाशायसर्वकामसमृद्धये अत्रैवविष्णुधर्मोक्तमाश्रमव्रतंचतुर्मूर्तिव्रतंच चैत्र।
मासमल्पपक्षेसोपवासोजितेंद्रियः चतुर्थ्यांवासुदेवस्यकृत्वासंपूजनंशुभं कांचनंदक्षिणांद-
द्याद्विजायब्रह्मचारिणे इत्याश्रमव्रतं अथचैत्रशुक्लपंचम्यांतृतीयादिपंचम्यंतेत्रिरात्रसाध्यं
हेमाद्रौविष्णुधर्मोत्तरोक्तंश्रीव्रतं मार्कंडेयउवाच अथातःसंप्रवक्ष्यामिश्रीव्रतंनामतेहितम् चै

त्रशुक्लतृतीयायांस्नानमभ्यंगपूर्वकं कृत्वाशुक्लांवरोराजन्शुक्लमाल्यानुलेपनः तिष्ठेद्धुतोद
नाहारोभूमौस्वप्यान्निशावताम् चतुर्थ्यांचतथास्नानंवह्निरेवसमाचरेत् पंचम्यांचविशेषेणशुक्लां
वरधरः शुचिः लक्ष्मींसंपूजयेत्पद्मेकृतकेकृतकेपिवा अकृतकेपद्मत्वजात्याक्रांते शुक्लेनगंधमा
ल्येनधूपदीपेनचाप्यथ हरिद्रयाचधान्येनआर्द्रकेनगुडेनच इक्षूणांत्वविकारैश्चलवणेनचभूरि
णा स्वशक्त्याचमहाराजभूरिणावलिकल्पनम् श्रीसूक्तेनततोवह्निंजुहुयात्कमलानिच तदला
भेचबिल्वानितदलाभेतथाघृतम् ब्राह्मणान्गोरसप्रायंघृतभूयिष्ठमाशयेत् आशाङ्गोजयेत् सु
वर्णमाषकंदद्याद्ब्राह्मणायचदक्षिणाम् अनाहारस्ततःस्वप्यात्तत्रचोद्देशेयथाविधि ततस्तुसप्त
मींप्राप्यपूर्वोक्तेपद्मिनीजले स्नात्वासंपूजनंकुर्यात्प्राग्वद्देवतथाश्रियः भूयएवद्विजेदद्यात्पूर्वं
कनकमाषकम् पूर्ववद्दक्षिणात्वेनपूर्वोक्तं पद्मात्तमथवाबिल्वंप्राश्नीयात्तदनंतरम् ततोहवि
ष्यमश्नीयाद्धारयतोमानवोत्तमः संवत्सरमिदंकृत्वाव्रतंपार्थिवसत्तम फलमाप्नोतिविपुलंरा
जसूयाश्वमेधयोः विनाकनकदानेनव्रतमेतत्समाचरेत् व्रतांतेमाषकंस्वर्णमग्निष्टोमफलंल
भेत् संपूज्यसोपवासस्तुशुक्लपक्षस्यपंचमीम् नित्यमेवश्रियंदेवींश्रियमाप्नोत्यनुत्तमाम् य
शमुत्तममाप्नोतिरूपमारोग्यमेवच जगत्त्रयानंदकरींचपुण्यांविभावरींसर्वगतांनरेंद्र श्रद्धा
न्वितःपूजयतीहयस्तुकामानवाप्नोतिससर्वकालम् ॥

अत्रैवप्रसंगात्संवत्सरपर्यंतं पद्मोक्तंशुक्लपंचम्यांलक्ष्मीव्रतं लक्ष्मीमभ्यर्च्यपंचम्यामु
पवासीभवेन्नरः समाप्तेहेमकमलंदद्याद्धेमसमन्वितम् सवैसर्वपदंयातिमानवःकुलनंद
नी एतल्लक्ष्मीव्रतंनामदुःखशोकविनाशनमितिपद्मपुराणोक्तंलक्ष्मीव्रतं अथास्यामेवपंचम्यां
चंद्रपूजनंपृथ्वीपूजनंचोक्तंवीरमित्रोदयेविष्णुधर्मोत्तरे पंचम्यांपूजनंकृत्वातथाचंद्रमसोनरः आ
युश्चविपुलांलक्ष्मींसर्वैश्वर्यंचविन्दति ॥ इतिविष्णुधर्मोत्तरोक्तंसौभाग्यव्रतं पंचम्यांपृथि
वींचैवतथासंपूजयेन्नरः तामेवाप्नोत्ययत्नेननात्रकार्याविचारणेतिविष्णुधर्मोक्तंपृथिवीव्रतम् अ
स्यामेवचैत्रशुक्लपंचम्यांपद्मपुराणीयपातालखंडोक्तंहयपंचमीव्रतम् अश्वराडस्ततोजातोवातरं
होमनोजवः उच्चैःश्रवाःपूजनीयःपंचम्यांचैत्रशुक्लके तत्रैवपूज्यागंधर्वास्तुरंगाणांतुवांधवाइ
त्यादि इयमेवमत्स्यपंचमीचोक्तानारदीये ॥ प्रोक्तामत्स्यजयंतीतुपंचमीमधुशुक्लगा अस्यांमत्स्याव
तारभक्तैः कार्योमहोत्सवः श्रीपंचमीतिचैवोक्तातत्रकार्यंश्रियोर्चनं गंधाद्यैरुपचारैस्तुनैवेद्यैःपा
यसादिभिः यस्तांसंपूजयेत्तत्रतंवैलक्ष्मीर्नमुंचति पृथ्वीव्रतंतथाचांद्रंहयग्रीवव्रतंतथा कार्यंतत्
द्विधानेनतत्फलमभीप्सुभिः तथाचब्रह्मपुराणे शुक्लायामथपंचम्यांचैत्रेमासिशुभानना श्री
ब्रह्मलोकान्मनुष्यंसंप्राप्ताकेशवाज्ञया तस्मात्तांपूजयेत्तत्रयस्तंलक्ष्मीर्नमुंचति एषाश्रीपंचमीकार्या
विष्णुलोकगतिप्रदा चैत्रस्यशुक्लपंचम्यांपूजयित्वातथाश्रियं सकृदेवाप्नुयादेतत्फलंसंवत्सरोद्भव
मितिहेमाद्रौविष्णुधर्मोत्तरे इयंचैत्रशुक्लपंचमीकल्पादि हेमाद्रौ मत्स्ये ब्रह्मणोयादिनस्यादिःक
ल्पादिस्साप्रकीर्तिता वैशाखस्यतृतीयायांकृष्णायांफाल्गुनस्यच पंचमीचैत्रमासस्यतथावान्यातथा
परा शुक्लत्रयोदशीमाघेकार्तिकस्यतुसप्तमी नवमीमार्गशीर्षस्यसप्तैताःसंस्मराम्यहं कल्पाना
मादयोह्येतादत्तस्याक्षयकारकाः अत्रसर्वोपिश्राद्धादिनिर्णयोमन्वादिवज्ज्ञेयः ॥

अथचैत्रशुक्लषष्ठ्यांस्कंदपूजाब्रह्मपुराणे अमावास्यांसमुद्भूतःस्कंदःपूर्वंहुताशनात् जात
पर्वणिषष्ठ्यांतुशुक्लायांचैत्रनामनि सेनापत्येभिषिक्तस्तुदेवानांब्रह्मणापुरा जितवान्तारकं
दैत्यंक्रौंचंशक्त्याबिभेदच तस्मात्सतत्रविधिनास्कंदमाल्यैःसुगंधिभिः दीपालंकारवस्त्रान्न·

कुंकुमैः पूज्य एव हि अन्नक्रीडनकै रम्यैर्घंटाचामरदर्पणैः सर्वासु शुक्लषष्ठीषु पूज्यो वा ग्रहयानैः
आरोग्यकामैर्बालानां पुत्रवद्भिर्विशेषतः नारदीयेपि चैत्रे मासि शुक्लषष्ठ्यां कुमारकुमारव्रतमुत्तमं
तत्रेष्ट्वा षण्मुखं देवं नानापूजाविधानतः पुत्रं सर्वगुणोपेतं प्राप्नुयाच्चिरजीविनं मदनरत्ने चैत्रशुक्ल
षष्ठीमारभ्य प्रारभ्यं कुमारव्रतं ईश्वर उवाच चैत्रशुक्लात्समारभ्य व्रतार्थमधुनोच्यते उपोष्य विधिना-
षष्ठ्यां विशेषोत्र षण्मुखं यजेत् सुवर्णमयीं प्रतिमां रम्यां तदा कुर्याद्विशेषतः षण्मुखं द्वादशभुजं योतत्कां
चनसप्रभं मयूरे वाहनं देवं सौम्यं लावण्यपूरितं शक्तिं घंटां पताकां च पाशं कुक्कुटभूषितं दंडाभयं
सवरदं खड्गं पुंथिशरासनं संपूज्य परया भक्त्या शुक्लपुष्पोपचारकैः नैवेद्यं गंधवस्त्राणि शुक्लान्येव प्र-
दापयेत् ब्राह्मीरसं समादाय घकपित्याज्यं फलं तथा सरस्वत्यास्तु नो मंत्रसहस्राष्टोत्तरेण तु सरस्वती
मंत्रेणानुमंत्रणं कृत्वेत्यर्थः आचार्यं पूजयेद्भक्त्या वस्त्रहेमान्नवाहनैः ब्राह्मीरसं हुतं चात्र प्राशयेत्प्राश
ने हितं मासि मासि प्रकर्तव्यं यावत्संवत्सरावधि ब्रह्मचर्येण शुचिना अब्दमेकं समाचरेत् महाकविर्भ
वेत्सोपि श्रुतिवाचस्पतिर्यथा सकृच्छ्रुत्वाति शास्त्राणि वादिनां मूर्ध्नि तिष्ठति रक्षो विनायकास्तस्य न हिंस
ति कदाचन स्कंदग्रहा महाघोरास्तथापस्मारदुर्ग्रहाः न हिंसंति महासेनव्रतस्यास्य प्रभावतः इदं व्र
तोत्तमं श्रेष्ठं कर्तव्यं भूमिवर्द्धनं षण्मुखं पार्वतीपुत्रं स्कंदं गुहं कुमारकं कार्तिकेयं तथा बालं तथान्यं
क्रौंचसूदनं तारकारातिसंज्ञं च तथान्यं कृत्तिकासुतं वैशाखं च विशाखं च मासि मासि प्रपूजयेत् स
र्वे सूर्यकलायुक्तं शशिना मूर्ध्नि भूषितं क्रमेण मंत्रा वो यथ्या द्वादशानां शिखिध्वज इति चैत्रादिद्वादश

शुक्लषष्ठीषु कुमारपूजाव्रतम् ॥

अथ चैत्रशुक्लसप्तम्यां सूर्यपूजाव्रतं तत्रैव नारदीयेपि चैत्रे तु शुक्लसप्तम्यां स्नानं वह्नि
समाचरेत् स्थंडिले गोमयालिप्ते गौरमृत्तिकया सिते लिखित्वाष्टदलं पद्मं कर्णिकायां विभावसुं विन्य
सेत्सर्वपत्रे तु द्वौ देवौ कृतघातकौ आग्नेये च न्यसेत्पत्रे द्वौ देवौ कृतकारकौ दक्षिणे च न्यसेत्पत्रे तथैवा
प्सरसद्वयं अकृतौ द्वौ न्यसेत्पत्रे नैर्ऋत्यमुनिसत्तम काद्रवेयो महानागो पश्चिमे कृतकारकौ वायव्ये
यातुधानौ वातस्त्रे च ऋषिद्वयं ऐशान्ये च न्यसेत्पत्रे ग्रहमेकं द्विजोत्तम तेषां संपूजने कार्यं गंधमाल्या
नुलेपनैः धूपदीपः सनैवेद्यैस्तांबूलैः क्रमुकादिभिः एवं संपूज्य होमं तु हुतेनाष्टशतं चरेत् सूर्यस्या
ष्टौ च चान्येषां प्रदद्यादाहुतीः क्रमात् नाममंत्रेण मेधावी ततः पूर्णाहुतिं ददेत् दक्षिणां च ततो देयाद्
द्विजेभ्यः शक्तितो द्विज एवं कृत्वा विधानं तु सर्वसौख्यमवाप्नुयात् देहांते मंडलं भानोर्भित्वा गच्छेत्परं
पदं अस्य विधिः सप्तम्यां वह्निः स्नानं गौरमृदा गोमयलिप्ते स्थले ऽष्टदलं पद्मं कृत्वा मध्ये विभावसुं
पूज्य दलेषु क्रमेण कृतघातकादीन्संपूज्य अग्निस्थापनं विधाय अन्वयानांते सर्वेषां नाममंत्रैरष्टो
त्तरशताहुतीर्घृतेन दद्यात् सर्वतोभद्रमंडलादि पूजापरिभाषोक्तक्रमेण कुर्यात् व्रतांते पूर्णाहुत्या
दिविधाय द्वादशब्राह्मणान्सहिरण्यमूर्तिकुंभदानादिभिः परितोष्य आचार्याय मूर्तिं शय्यां गोदानादि
कं दद्यात् इत्युद्यापनविधानं ॥ अत्रैव शुक्लसप्तम्यां दमनकादिभिः सूर्यपूजा कर्तव्या तदुक्तं नि
र्णयामृते देवीपुराणे भास्करस्य तु सप्तम्यां पूजां दमनकादिभिः कृत्वाप्नोति भोगादीन्विग-
तारिर्महायशा इति अस्यामेव भविष्योत्तरोक्तं मनोदनसप्तमीव्रतं हेमाद्रौ चैत्रशुक्लसप्तम्यां वह्निः
स्नानं समाचरेत् अथैव मंडले ऽष्टदलं विधाय तस्मिन्नेव सूर्यपूजां विधाय दध्ना पायसेन द्वादश ब्राह्मणा
न्संतर्प्य स्वयमनोदनं द्विजभुक्तशेषं प्राश्नीयात् आचार्यपूजाहोमादिकं प्राग्वदाचरेत् ॥ इति नोदन
सप्तमीव्रतं अस्यामेव भविष्योत्तरोक्तं नामसप्तमीव्रतं तदुक्तं हेमाद्रौ चैत्रात्प्रभृति कर्तव्या सर्वदा ना
मसप्तमीत्यादि ॥ अत्रैव चैत्रादारभ्य शुक्लसप्तमीषु द्वादशादित्यान् क्रमेण पूजयेत् धाता १ अर्यमा २

मित्रो ३ वरुणः ४ इंद्रो ५ विवस्वान् ६ पर्जन्यः ७ पूषा ८ अंशुः ९ भगः १० त्वष्टा ११ जिष्णुः १२
एतान् प्रतिमासमेकैकनाम्ना पूजयेत् वत्सरांते सर्वतोभद्रे मंडले देवतापूजनं अग्निकार्यं कृत्वा अ
न्वाधानान्ते नाममंत्रैराकृष्णेनेत्यादिमंत्रैर्होमं संपाद्य पूर्णाहुत्याचार्यादिपूजां यथाविधि समाचरेदि
ति नामसप्तमीव्रतं ॥ अथास्यामेव विष्णुधर्मोत्तरोक्तं सूर्यव्रतं चैत्रस्य शुक्लपक्षे तु सम्यक् षष्ठ्यामु-
पोषितः सप्तम्यामर्चनं कुर्यात् देवदेवस्य गोपतेः वह्निस्नानं ततः कृत्वा पूजनं सर्वदाचरेदिति सर्वदेति
सर्वासु शुक्लषष्ठीषूपोषणं सप्तमीषु सूर्यस्य पूजनं कुर्यादिति सूर्यसप्तमीव्रतं यावज्जीवं नेतावत्कार्यं ना
स्योद्यापनादि विधानं नित्यपूजावदित्यर्थः ॥ अत्र चैत्रशुक्लाष्टम्यां भवान्या उत्पत्तिः तत्र नवमीयुताष्ट
मी ग्राह्या अष्टमीनवमीयुक्ता नवमी चाष्टमीयुतेति ब्रह्मवैवर्तात् ॥ अत्र भवानीयात्रोक्ता काशीखंडे भवा
नीं यस्तु पश्येत शुक्लाष्टम्यां मधौ नरः न जातु लभते शोकं सदानंदमयो भवेदिति तथा च नारदीये
शुक्लाष्टम्यां चैत्रमासे भवान्याः प्रोच्यते जनैः प्रदक्षिणशतं कृत्वा कार्यो यात्रामहोत्सवः दर्शनं जग
दंबायाः सर्वानंदप्रदं नृणामिति अत्रैवाशोककलिकाप्राशनमुक्तं हेमाद्रौ लैंगे अशोककलिकाष्टौ ये पिबं
ति पुनर्वसौ चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः नारदीयेपि अत्रैवाशोककलिकाप्राशनं समुदा-
हृतं अशोककलिकाष्टौ न ते शोकमवाप्नुयुरिति पूर्वपाद एव महाष्टमीति सा प्रोक्ता देव्याः पूजाविधान
तः अशोककलिकाप्राशनमंत्रस्तु त्वमशोक हराभीष्ट मधुमाससमुद्भव पिबामि शोकसंतप्तो मा
मशोकं सदा कुरु इत्यत्र पुनर्वसुयोगो नावश्यकः किंतु प्राशस्त्यातिशयार्थः तिथिः शरीरं देवस्य
तिथौ नक्षत्रमाश्रितं तस्मात्तिथिं प्रशंसंति न नक्षत्रं तिथिं विनेति ज्योतिःशास्त्रात् तथा च तिथितत्वे
स्कांदे मीने मधौ शुक्लपक्षे अशोकाख्यां तथाष्टमीं पिबेदशोककलिकाः स्नायाल्लौहित्यवारिणि अ
त्र मधुशब्दः पृथक् मीनग्रहणात् अत्र विशेषः पृथ्वीचंद्रोदये विष्णुः पुनर्वसुबुधोपेता चैत्रे मा-
सि सिताष्टमी लौहित्ये विरजे स्नायात् सर्वपापैः प्रमुच्यते पृथिव्यां यानि तीर्थानि सरितः सागराद-
यः सर्वे लौहित्यमायांति चैत्रे मासि सिताष्टमी अत्र स्नानमंत्रः ब्रह्मपुत्र महाभाग शांतनोः कुलवर्द्ध
न अमोघागर्भसंभूत पापं लौहित्य मे हरेति कालिकापुराणेपि चैत्रे मासि सिताष्टम्यां यो नरो निय
तेंद्रियः स्नायाल्लौहित्यतोयेषु स याति ब्रह्मणः पदं लोहितात्सरसो जातो लौहिताख्यस्ततो भवत्
चैत्रं तु सकलं मासं शुचिः प्रयतमानसः लौहित्यतोयेषु स्नायात्स कैवल्यमवाप्नुयात् ॥ इति
अस्यामेवाष्टम्यां देव्या महापूजा कार्या तदुक्तं मार्कंडेयपुराणे देवीमाहात्म्ये शरत्काले महापू-
जा क्रियते या च वार्षिकी तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः सर्वबाधाविनिर्मुक्तो धन
धान्यसमन्वितः मनुष्यो मत्प्रसादेन भविष्यति न संशयः अत्र या च वार्षिकीत्यनेन मेषे वत्सर-
स्यादौ चैत्रशुक्लप्रतिपदमारभ्याष्टमीपर्यंतं क्रियमाणा पूजा विधीयते ततश्च शरद्वसंतयोस्तुल्य-
एव उत्सव इति संप्रदायविदः प्राहुः ॥ अथ चैत्रशुक्लनवम्यां श्रीरामजयंतीव्रतं तत्रा
दौ ॥ रामनाममहिमा स्कांदे मोक्षखंडे रुद्रगीतायां श्रीरामं प्रति रुद्रवाक्यं मुमुक्षोर्मणि
कर्णिकेऽर्द्धोदकनिवासिनः अहं दिशामि ते मंत्रं तारकस्योपदेशतः श्रीराम राम रामेति एतत्तार-
कमुच्यते अतस्त्वं जानकीनाथ परं ब्रह्माभिधीयत इति भविष्योत्तरे श्रीपार्वत्युवाच यत्त्वयास्म्यनुगृ
हीतास्मि कृतार्थास्मि जगत्प्रभो विच्छिन्नो मेऽतिसंदेहग्रंथिर्भवदनुग्रहात् त्वन्मुखाद्गलितं राममंत्रा-
मृतरसायनं पिबंत्या मे मनो देव न तृप्यति भवापह श्रीरामस्यामृतं नाम श्रुतं संक्षेपतो मया इदा-
नीं श्रोतुमिच्छामि विस्तरेण स्फुटाक्षरं श्रीमहादेव उवाच शृणु देवि प्रवक्ष्यामि गुह्याद्गुह्यतरं मह
त् प्राप्नोति परमामृद्धिं दीर्घायुः पुत्रसंपदं रामनामाखिलविघ्नलक्षकोटिप्रशान्तये एकैकम-

त्सर्वं पुंसां महापातकनाशनं सकामो ऽपि लिखेद्यस्तु निष्कामो वापि यो लिखेत् इहैव सुखमाप्नोति·
मोक्षं चांते समाप्नुयात् राम रामेति रामेति सर्वस्वं मम वल्लभे अथातः संप्रवक्ष्यामि पौरश्चरणिकं वि-
धिः विना येन न सिद्धः स्यान्मंत्रो वर्षशतैरपि प्रत्यहं पूर्वमुच्चार्य्य लिखेन्मंत्रं सदाशिवे अनेन प्रणवमु-
च्चार्य्य लिखेन्मंत्रं सदा प्रिये अनेन प्रणवमुच्चार्य्य नमेत्सीतापतिं प्रिये आदावंते च मध्ये च व्रतस्योद्याप-
नं चरेत् उद्यापनं विना नैव फलसिद्धिमवाप्नुयात् तस्मात्सर्वप्रयत्नेन सम्यगुद्यापनं चरेत् श्रीपा-
र्वत्युवाच नमस्ते देवदेवेश भक्तानुग्रहकारक उद्यापनविधिं ब्रूहि विस्तरेण मम प्रभो श्रीमहादे-
व उवाच शृणु देवि प्रवक्ष्यामि विस्तरेण यथाविधि नाम्नामुद्यापनं चात्र मत्तो भवदनुग्रहात् सुव-
र्णप्रतिमां कुर्य्यात् सीतारामसलक्ष्मणां हनुमत्प्रतिमां तद्वच्चतुर्थांशेन दारकीं सुवर्णस्य प्रमा-
णं तु पलाष्टकमुदीरितं अशक्तश्चेत्पलेनैव तदर्द्धार्द्धेन वा पुनः श्रीरामस्य प्रतिकृतिं वित्तशाठ्यं न
कारयेत् रजतेनासनं कुर्य्यात् मात्रैः षोडशभिस्ततः पीतवस्त्रेण संवेष्ट्य स्थापयेत्तंडुलोपरि तं-
डुलानां प्रमाणं तु भवेद्द्रोणचतुष्टयं शुचौ देशे गृहे तीर्थे मंडपं कारयेद्बुधः तोरणानि च द्वारेषु बं-
धयेदाम्रपल्लवैः भूमौ गोमयलिप्तायां सर्वतोभद्रमंडलं रचयेत्तस्य मध्ये वा नानारंगैः सुशोभनं
कुंभान् तत्रैव पूर्वादौ स्थापयेद्व्रणवर्जितान् कुंभमेकं मध्यदेशे स्थापयेत्तंडुलोपरि शुद्धोदकेन संपू-
र्ण्य पंचरत्नैः सपल्लवैः नारिकेलफलान्यष्टौ एकं रामाय दापयेत् आचार्य्यं वरयेत्तत्र वेदशास्त्र-
विशारदं ब्रह्मादिऋत्विग्विप्राणां वरणं कारयेत्ततः मधुपर्कैस्तान् संपूज्य वस्त्रालंकारभूषणैः ऋ-
त्विजः षोडशाष्टौ वा वरयेद्वेदपारगान् स्नात्वा नित्यं विधायादौ पूजयेद्गणनायकं पुण्याहवाच-
यित्वादौ पूजयेद्राममष्टकं ततो ऽग्निं च प्रतिष्ठाप्य स्वशाखोक्तविधानतः विष्णुसूक्तेन होतव्यं मू-
लमंत्रेण वा पुनः नवग्रहांश्च दिक्पालान् मंत्रानुक्रमाच्च होमयेत् पुरुषसूक्तेन होतव्यं समिदाज्य-
चरुं तिलान् अष्टोत्तरसहस्रं तु रामसंज्ञेन होमयेत् होमांते पूजयेत्सर्वान् रामचंद्रादिदेवताः पूज-
यित्वा ततो हुत्वा दत्वा पूर्णाहुतिं तथा श्रेयः संपाद्य दानं च अभिषेकं समाचरेत् रामं नत्वार्चयित्वा
च प्रार्थयित्वा पुनः पुनः आचार्य्यं पूजयेत्पश्चात्स्वर्णाद्यैर्वस्त्रभिः प्रतिमादानमंत्रेण आचार्य्याय
निवेदयेत् दानमंत्रः नमो ऽस्तु देवदेवेश बहुबुद्धिमहात्मभिः यश्चिंत्यसे कर्मपाशाद् हृदि नि-
त्यं मुमुक्षुभिः मायया गुणमय्या त्वं सृजस्यवसि लुंपसि अतस्त्वत्पादभक्तेषु त्वद्भक्तिस्थिरयो-
यिका भक्तिमेवाभिवांछंति त्वद्भक्ताः सारवेदिनः अतस्त्वत्पादभक्तेषु भक्तिरेव सदास्तु मे सं-
सारभयभीतानां भेषजं भक्तिरेव ते रामसीतासमो विद्वत्सु मद्भक्तितत्परः दानेनानेन राम त्वं मु-
क्तिमुक्तिप्रदो भव प्रतिमादानसिद्ध्यर्थं शक्त्या स्वर्णं तु दापयेत् दानं यद्दक्षिणाहीनं तत्सर्वं नि-
ष्फलं भवेत् ब्राह्मणान् शतसाहस्रं भोजयेन्मधुसर्पिषा पक्वान्नैः पायसैः स्वाद्यैः कदलीशर्करान्वि-
तैः ऋत्विग्भ्यो दक्षिणां दत्वा भूयसीं दक्षिणां यजेत् तदंते हुतपात्रं च तिलपात्रं च दापयेत् शय्याश्व-
रथदानानि दशदानानि शक्तितः अशक्तश्चेत्स्वर्णमेकं दत्वा रामं नमेत्ततः तिलकं कारयेत्पश्चा-
दभिषिंचेत्सपल्लवैः द्विजैस्तु चाशिषो देया नत्वा स्तुत्वा विसर्जयेत् उमामहेश्वरौ पूज्यौ पूजयेद्वटु-
कं तथा कुमारीणां च यं भोज्यं योगिराजं च पूजयेत् क्षेत्रपालबलिं दत्वा ध्यात्वा रामं सदा जपेत्
ब्रह्मादिभिस्तत्स्वरूपं वक्तुं शक्यं न किंचन अश्वमेधसहस्राणि वाजपेयशतानि च एकेन राम-
नाम्नैव तत्फलं लभते नरः नारी वा पुरुषो वापि शूद्रो वाप्यधमो नरः रामनाम्नैव मुक्तास्ते सत्यं
सत्यं वरानने अथ ध्यानं मूले कल्पद्रुमस्याखिलमणिविलसद्रत्नसिंहासनस्थं कोदंडं हृद्द-
पाणिं ललितकरयुगेनार्पितं लक्ष्मणेन वामांके न्यस्तसीताधृतनभरतमहामौक्तिकच्छत्रकांतिं

शत्रुघ्नं चामराभ्यां विलसितमनिशं रामचंद्रं भजेहम् ॥

इति श्रीभविष्योत्तरपुराणे उमामहेश्वरसंवादे राममलिखनोद्यापनं संपूर्णं

अथास्य प्रयोगः ॐ मयेत्यादि तिथ्यादि संकीर्त्य मम नानेकपापक्षयपूर्वकसकलमनोरथावाप्तिल
ाभसनकाश्रीरामप्रीत्यर्थं मया लिखितं यत्कोटिलक्षामुकावधिरामनाम तत्संपूर्णतासिद्धये तदु
द्यापनाख्यं कर्म करिष्ये इति संकल्प्य वृताचार्यः सर्वतोभद्रस्थकलशे संस्थापितपूर्णपात्रं षोडशमा
षात्मकराजतसिंहासने स्वर्णस्य पलेन तदर्धार्धेन वा निर्मितरामं वामतः सीतां दक्षिणतो ल
क्ष्मणं पुरतो हनुमंतं च सुवर्णप्रतिमाः संपूज्य नाममंत्रैः पुरुषसूक्तेन च परितोष्टकलशेषु
लोकेशान्संपूज्य प्रातः अग्निं प्रतिष्ठाप्य अन्वाहुतिं विदध्यात् अत्र लेखनदशांशेन होमः तत्र
प्रधानं राम साज्यद्रव्येण लेखनदशांशेन मूलमंत्रेण परिवारदेवता ब्रह्मादिदेवताश्च एकैकेक
याज्याहुत्या यजेत् एवं पूर्वोक्तविधिना होमं संपाद्य आचार्यं वस्त्रादिभिः संपूज्य सदक्षिणां पीठं प्रति
मां चाचार्याय दद्यात् तत्र मंत्रः सीतासौमित्रिहनुमद्युतं रामं सदक्षिणम् ददामि द्विजवर्याय प्रीतो रा
मो मे प्रीयतामिति ततो व्रतपूर्तये सालंकारां गोदानविधिना दत्वा घृतपूरितकांस्यपात्रं सस्वर्णं
तिलपात्रं च दत्वा यथाशक्ति दशदानानि दत्वा योगिराजं वटुकत्रयं कुमारीश्च भोजयित्वा सदन्ने
नान्यानपि ब्राह्मणान् दक्षिणादिभिः परितोष्याशिषो गृहीत्वा इष्टजनैः सह भुंजीत इति रामनव

मीरामनवमीव्रतसहितं रामनाममलिखनोद्यापनं ॥ अथ रामनवमीव्रतमहिमा

तदुक्तमगस्त्यसंहितायां अगस्त्य उवाच सर्वानुष्ठानसारं ते सर्वदा नोत्तमोत्तमं रहस्यं कथयिष्यामि
सुतीक्ष्ण शृणु सत्तम चैत्रे नवम्यां प्राक्पक्षे दिवा पुण्ये पुनर्वसौ उदये गुरुगौरांश्वोः स्वोच्चस्थे ग्रहपं
चके मेषे पूषणि संप्राप्ते लग्ने कर्कटकाह्वये आविरासीत्सकलया कौसल्यायां परः पुमान् तथा
चोक्तं रामार्चनचंद्रिकायां उच्चस्थे ग्रहपंचके सुरगुरौ सेंदौ नवम्यां तिथौ लग्ने कर्कटके पुनर्वसुयु
ते मेषगते पूषणि निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणे राविर्भूतमभूतपूर्वविभवं
यत्किंचिदेकं महः पलाशसमिध इति पलमांसं तदश्नंति येते राक्षसाः तान् निर्दग्धुं अयोध्यो
वारणिरग्निमथनकाष्ठं तन्मध्यादाविर्भूतं यत्किंचित् अनिर्वचनीयं महस्तेजो विशेषः श्रीराम
आविर्बभूवेत्यर्थः तथा च चैत्रमासि नवम्यां तु शुक्लपक्षे रघूत्तमः प्रादुरासीत्पुरा ब्रह्मन्परं ब्रह्मैव
केवलं तस्मिन्दिने तु कर्तव्यमुपवासव्रतं सदा तत्र जागरणं कुर्याद्रघुनाथपरो भुवीति अन्यत्रा
पि तस्मिन्दिने महापुण्ये राममुद्दिश्य भक्तितः यत्किंचित्क्रियते कर्म भवत्क्षयकारकं उपो
षणं जागरणं पितॄनुद्दिश्य तर्पणं तस्मिन्दिने तु कर्तव्यं ब्रह्मप्राप्तिमभीप्सुभिः राम एव परं ब्रह्म
तद्दिने रामतोषकमित्यादि अथैतस्य व्रतस्य नित्यत्वं प्रतिपाद्यते रामार्चनचंद्रिकायां नित्यं नैमि
त्तिकं काम्यं व्रतं चेति विचार्यते निः कामानां विधिना तत्र न काम्यं नावदिष्यते मुमुक्षवोपि हि
सदा श्रीरामनवमीव्रतं न त्यजंति सर्वश्रेष्ठा देवेशापि विशेषतः अत्र सदापदश्रवणात् यावज्जी
वं रामनवमीव्रतं कर्तव्यमिति तात्पर्यम् नहि नैमित्तिकं चैवं सदेति श्रूयते ततः नित्यमेव भवेत्त
स्मात् श्रीरामनवमीव्रतमिति न तस्य न च नित्यत्वं प्रत्यक्षत्वात्फलश्रुतेः सूर्यग्रहे कुरुक्षेत्रे महा
दानैः कृतैर्मुहुः यत्फलं समवाप्नोति श्रीरामनवमीव्रतादिति नारदीयेपि चैत्रस्य शुक्लपक्षे तु
श्रीरामनवमीव्रतं सविधूयेह पापानि व्रजेद्विष्णुपदं परं मेवं फलश्रुतेर्नित्यलक्षणाभावतोऽथ
वा न नित्यता तत्र नाशयोनिप्रहोत्रादौ विरोधतः नाप्यप्रकरणे तस्य महादोषश्रुतेः स्फुटं प्राप्ते
श्रीरामनवमीदिने मर्त्यो विमूढधीः उपोषणं न कुरुते कुंभीपाके षु पच्यते अकृत्वा रामनव

व्रतंसर्वव्रतोत्तमं योव्रतान्यानिकुरुतेनतेषांफलभाग्भवेत् यस्तुरामनवम्यांतुभुंक्तेमोहाद्विमू-
ढधीः कुंभीपाकेषुघोरेषुपच्यतेनात्रसंशयइति अतश्चाकरणेदोषविधानान्नित्यतास्थिता
कुर्याद्रामनवम्यांयउपोषणंमतेद्वितः नमातुर्गर्भमाप्नोतिसदेरामोभवेत्स्वयं तस्मात्सर्वात्म
नासर्वैःकार्यमेवनवमीव्रतं मुच्यन्तेसर्वपापेभ्योयान्तिब्रह्मसनातनमित्यादिवचनैः पापक्षय-
द्वारामोक्षार्थत्वमवगम्यते संयोगपृथक्त्वान्न्यायाच्चनफलनित्यत्वयोर्विरोधः अत्रकेचित्तदुपास-
कानामेवेदंनत्वन्येषामित्याहुः अन्येत्वकरणेदोषश्रवणात् तस्मात्सर्वात्मनासर्वैःकार्यंवै
नवमीव्रतमितिपूर्वोक्तवचनाच्चजन्माष्टम्यादिव दिदमपिसर्वेषांनित्यमन्यथाजन्माष्टम्या
दावपितदुपासकानामेवनित्यतांवक्तुं कोवारयेदित्याहुः इतिनित्यत्वकथनं शुद्धाविद्धेति-
भेदेननवमीसाद्विधामता समान्यूनाधिकाचेतिशुद्धापिनवमीत्रिधा पुनर्नक्षत्रसंयोगवि-
योगाभ्यांतुषड्विधा समापिक्षत्रभेदादिभेदैर्विद्धापिषड्विधा एवंद्वादशधाभिन्नानवमीतत्र
निर्णयः महाफलप्रदाशुद्धापुनर्वसुतयोगतः चैत्रमासिनवम्यांतुजातोरामःस्वयंहरिः पु
नर्वस्वृक्षसंयुक्तासातिथिःसर्वकामदा श्रीरामनवमीप्रोक्ताकोटिसूर्यग्रहाधिका चैत्रशुद्धातु
नवमीपुनर्वसुयुतायदि सैवमध्याह्नयोगेनमहातमाभवेत् केवलापिसदोपोष्यानवमी।
शब्दसंग्रहात् तस्मात्सर्वात्मनासर्वैःकर्तव्यंनवमीव्रतं सर्वैरितिसर्वेषामधिकारःप्रकाश्यते
विद्धेवचेदस्तुनात्रतंतत्रकथंभवेत् विद्धानिषेधश्रवणान्नवमीचेन्निवाक्यतः नवमीचाष्टमी-
विद्धात्याज्याविष्णुपरायणैः उपोषणंनवम्यांतुदशम्यामेवपारणमिति वैष्णवानांविशेषात्
तत्रविष्णुपरैरिति दशम्यादिषुवृद्धित्वाद्विहात्याज्यैववैष्णवैः तदन्येषांतुसर्वेषांव्रतंतत्रैवनिश्चि
तं दशम्यामेवशब्देनदशमीनेवलंघयेत् निश्चित्यैवंविचारेणनवमीव्रतमाचरेदिति अत्रविष्णु
परायणैरितिवदनात्प्रातस्त्रिमुहूर्तानवमीचतस्मिन्नेवदिनेसमाप्यते तदास्मार्तानामप्युत्तरदिव
सएकादशीनिमित्तोपवासेननवमीव्रतांगपारणलोपोमाभूदितितत्रस्मार्तैरष्टमीविद्धैवग्राह्या
वैष्णवानांतुरुणोदयप्रसंगाइतिद्वितीयेवतैःकार्यमितिसूचितं दशमीवृद्ध्यभावेष्टमीविद्धायांतु
येचवैष्णवैरपिविद्धैवोपोष्येत्यर्थसिद्धं तदेवंद्वितीयदिवसेनवम्यामध्याह्नव्यापित्वाभावेऽष्ट
मीविद्धायाः सर्वथात्याज्यत्वावैष्णवैर्द्वितीयेवोपोष्येतिरामार्चनचंद्रिकामतं हरिभक्तिविलासे
दशम्यांपारणायाश्चनिश्चयान्नामीत्ययेविद्धापिनवमीग्राह्यावैष्णवैरप्यसंशयमितिमदनरत्ना
दौत्वइयंतिथिर्विधेयामध्याह्नव्यापिनीसैवग्राह्यालग्नेकर्कटकाह्वइत्यगस्त्यसंहितावानमध्या
ह्नस्यजन्मकालत्वाभिधानात् सर्वेमध्याह्नयोगेनमहापुण्यतमोभवेदितिवचनाच्च उभयत्रम-
ध्याह्नव्यापित्वेमध्याह्नव्याप्त्यभावेवापुनर्वसुयुतासैवग्राह्यापुनर्वस्वृक्षसंयोगःस्वल्पोपि
यदिदृश्यते चैत्रशुद्धनवम्यांतुसापुण्यासर्वकामदेत्यगस्त्यसंहितावचनात् यद्वादिनद्वयेपिपुनर्व
सुयोगएकत्रमध्याह्ने उत्तरत्रमध्याह्नंविहायतदामध्याह्नपुनर्वसुयुक्ताग्राह्यामुख्ये श्रीरामजन्मका
लेयोगस्यलाभात् यदातुपरदिनेपिमध्याह्नेनवमीपुनर्वसुयोगः यदावादिनद्वयेपिमध्याह्ने विद्धा
यमध्याह्नात्पूर्वंपुनर्वसुयोगः यदावादिनद्वयेपिपुनर्वस्वभावः तदोत्तरैवग्राह्यानवमीचाष्टमीविद्धे
तिवचनादित्युक्तंनिर्णयसिंधौतु दिनद्वयेमध्याह्नव्याप्तौतदभावेवापूर्वदिनेपुनर्वस्वृक्षयुक्तामपि
त्यक्त्वापरैवकार्येत्युक्तं यत्तुनव्यैःपुनर्वसुयुतामपिनवमींत्यक्त्वानवमीचाष्टमीतिवाक्यबलात् परै
वकार्येतिसिंधुकारमतमसमंजसं नवमीचाष्टमीविद्धेतिवाक्येऽत्रस्यपदाभावात् अत्रऋक्षपदी
भावेपि नवमीचाष्टमीविद्धानिषेधकस्यसंकोचेमानाभावात् पुनर्वस्वृक्षसंयोगइत्यगस्त्य-

सहितावचनस्यपुनर्द्वयोगेप्राशस्त्यबोधकत्वेननसंकोचकत्वमितिदिक् ॥ इतिकल्पद्रु
मोक्तोरामनवमीनिर्णयः अत्रप्रसंगाद्वैष्णवलक्षणमुच्यते सांगंसमुद्रंसन्यासंसऋषिछंददैवतं
सदीक्षाविधिसध्यानंसपत्नंद्वादशाक्षरं अष्टाक्षरमथान्यंवायेमंत्रंसमुपासते ज्ञेयास्तेवैष्णवालो
केविष्णवर्चनरताःसदा सदीक्षाविधिसांगंवामंत्रराजसपंत्रकं षडक्षरंसंयुक्तंमूलव्याहृति
भेदतः पंचायतनरूपंचयेविप्राःसमुपासते महावैष्णवसंज्ञास्तेमहाविष्णोरतिप्रिया इतिविष्णुपु
राणे नचलतिनिजवर्णधर्मतोयः सममतिरात्मसुहृद्विपक्षपक्षे नहरतिनचहंतिकंचिदुच्चैः स्थित
मनसंतमवेहिविष्णुभक्तं श्रीभागवतेपित्रिभुवनविभवहेतवेप्यकुंठस्मृतिरजितात्मसुरादिभि
र्विमृग्यात् नचलतिभगवत्पदारविंदाल्लवनिमिषार्द्धमपीहवैष्णवोग्र्य इत्यादिश्रुतिवैष्णवलक्ष
णं अशक्तविषयेप्रतिनिध्यादिकंतपरिभाषायांद्रष्टव्यं रामार्चनचंद्रिकायांसुतीक्ष्णमाहागा
स्त्यः प्रकारःसोभिधीयते क्रमेणयोजयेत्सर्वंसोकर्यार्थंव्रतार्थिनां षडक्षरादिकेराममंत्रैःस्था
प्यजनंयथा सर्वेषांराममंत्राणांमंत्रराजःषडक्षरःतारकंब्रह्मचेत्युक्तंतेनपूजाप्रशस्यते य
द्यप्युक्तमूक्तेनदीक्षाविधिमजानतः वैदिकस्याप्यभावेषुनाममंत्रैर्भवेद्ध्रुवं अष्टम्यांचैत्रमा
सस्यशुक्लपक्षेजितेंद्रियः दंतधावनपूर्वंत्वप्रातःस्नायाद्यथाविधि नद्यांतडागेकूपेवाह्रदेप्र
स्रवणेतथा ततःसंध्यादिकंकुर्यात्संस्मरन्राघवंहृदि गृहमागत्यविप्रोसौकुर्याद्दोपासनादि
कं दानंकुटुंबिनेविप्रंवेदशास्त्ररतंसदा श्रीरामपूजानिरतंसुशीलंदंभवर्जितं विधिज्ञंराम
मंत्राणांराममंत्रैकसाधकम् आहूयभक्त्यासंपूज्य प्रणम्याप्रार्थयन्निति श्रीरामप्रतिमादानं
करिष्येहंद्विजोत्तम तत्राचार्योभवप्रीतःश्रीरामोपित्वमेवच इत्युक्त्वाचार्यंयेनविप्रंस्नापयित्वा
ततःस्वयं तैलनाभ्यंगपचस्नायाच्चिंतयन्राघवंहृदि श्वेतांबरधरःश्वेतगंधमाल्यानिधारयेत्
अर्चितोभूषितश्चैवकृतमाध्याह्निकक्रियः आचार्यंभोजयेत्पश्चात्सात्विकान्नैःसुविस्तरं भुंजी
तस्वयमप्येवंहृदिराममनुस्मरन् नवम्यामेकभक्तेनअग्राभूतेनराघव इक्ष्वाकुवंशतिलकप्री
तोभवरघूत्तम इत्येकभक्तनिवेदनमंत्रः एकभक्तंतुनवमुहूर्तात्मकमध्याह्नोत्तरं सार्द्धमु
हूर्तमध्येकर्तव्यं एकभक्तव्रतीतत्रसहाचार्योजितेंद्रियः सुप्तवन्नामकथादिभिरहःशेषंनयेत्त
ते सायंसंध्यादिकाःकुर्यात्क्रियाराममनुस्मरन् आचार्यसहितोरात्रावधःशायीजितेंद्रियः
स्वपेत्स्वयंतथैकांतेश्रीरामार्पितमानसः आचार्यकरणेशक्तःस्वयंभुक्त्वास्वपेत्स्वयं इत्यष्टमीकृ
त्यं अथनवमीकृत्यं तत्रैवततःप्रातःसमुत्थायस्नात्वासंध्यांविधायच प्रातःसर्वाणिकर्मा
णिशीघ्रमेवसमापयेत् उपोष्येनवमींत्वद्ययामेष्वष्टसुराघव तेनप्रीतोभवत्वंवैसंसारात्त्राहि
मांहरे इत्युपवासनिवेदनमंत्रः ततःस्वस्थमनोभूत्वाविद्वद्भिःसहितोनघ स्वगृहेचोत्तरे
भागेरामंडपमारभेत् चतुर्द्वारंपताकाढ्यंसवितानंसुशोभनं मनोरममहोत्साहंपुष्पा
द्यैःसमलंकृतं शंखचक्रहनूमद्भिःप्राग्द्वारेसमलंकृतं गुरुत्मच्छार्ङ्गबाणैश्चदक्षिणेसमलं
कृतं गदाखड्गांगदैश्चैवपश्चिमेसमलंकृतं पद्मस्वस्तिकमानैश्चकौबेरेसमलंकृतं मध्येहस्त
चतुष्काद्यंवेदिकायुक्तमायतं विचित्रनृत्यगीतैश्चवाद्यैश्चैवसुसंयुतं पुण्याहंवाचयेत्तत्रविद्व
द्भिःप्रीतमानसैः तत्रसंकल्पयेद्दैवंराममेवस्मरन् अस्यांरामनवम्यांतुरामाराधनतत्परः
उपोष्याष्टसुयामेषुपूजयित्वायथाविधि इमांस्वर्णमयींरामप्रतिमांसुप्रयत्नतः श्रीरामप्री
तयेदास्येरामभक्तायधीमते प्रीतोरामोहरत्वाशुपापानिसुबहूनिमे अनेकजन्मसंसिद्धान्य
भ्यस्तानिमहांतिच इतिविधिः प्रतिमादानसंकल्पः प्रकाशेत्वन्यशाखस्यमूर्तिनिर्माणासु

च्यते ततः स्वर्णमयीं रामप्रतिमां पलमात्रतः निर्मितां द्विभुजां दिव्यां वामांकस्थितजानकीं बिभ्र
तीं दक्षिणकरेणात्र मुद्रां महामनोः वामेनात्मकरेणाराद्देवीमालिंग्य संस्थितां सिंहासने राजतेत्र
पलद्वयविनिर्मिते अशक्तो यो महाभाग तस्य वित्तानुसारतः पलेनार्द्धेन तदर्द्धेन तदर्द्धार्द्धेन वा
मुने ततोप्यशक्तो रौप्येण कारयेद्रघुनंदनं लोहेन निर्मितं कुर्यात्शिलया दारुणापि च यद्वा
लेख्यविलेख्यं वा मातरं कगतं हरिं कोमलांगं विशालाक्षमिंद्रनीलमणिप्रभं दक्षिणांगे दशर
थपुत्रान्वेषणतत्परं पृष्ठतो लक्ष्मणं देवं सहच्छत्रं सचामरं पार्श्वे भरतशत्रुघ्नौ तालवृंतकरावुभौ
अग्रे व्यग्रं हनूमंतं रामानुग्रहकांक्षिणं वित्तशाठ्यमकृत्वैव मूर्तिं कुर्यात्प्रयत्नतः प्रतिमा विशु
षः कौसल्ये लैंगे सद्यः प्रसूतां कौशल्यां पितरं भ्रातृभिः सह सर्वाणि पृथक्कृत्वा श्रीरामं सीत
या सह लक्ष्मणोक्ताः सरूपास्ताः पूजयित्वा यथाविधि सहेत्यनेन श्रीरामं वामांकस्थितत्वेना
यते अतएव चंद्रिकायां ततः स्वर्णमयीमित्यादिना प्रतिमानिर्माणमित्युक्तमिति भविष्ये
विभवे सति यो मोहात्न कुर्याद्विधिविस्तरं न तत्फलमवाप्नोति देवद्रोही स उच्यते इति मूर्ति।
लक्षणं आसनोपविष्टो विष्णुन्यासं जलविधाय च शंखं संपूजयेद्दिव्यं गंधपुष्पाक्षतादिभिः
कलशं वा समभ्यर्च्य पूजाद्रव्याणि चादरात् पावंचशेत्तयेद्भक्त्या चात्मानं मंत्रमुच्चरन् विलि
खेत्सर्वतोभद्रं वेदिकोपरि सुंदरं तिर्यगूर्ध्वगता रेखाः कुर्यादेकोनविंशति खंडेंदुः त्रिपदाः को
णे श्रृंखला पंचकोष्ठिकैः एकादशपदा वल्ली भद्रं तु नवभिः पदैः चतुर्विंशत्पदा वापी परिधिर्वि
शतिः पदैः मध्ये षोडशभिः कोष्ठैः पद्मं चाष्टदलं स्मृतं सितेंदुः श्रृंखला कृष्णा वर्णानीलोनष्टरिका
भद्रारुणासिता वाप्यः परिधिः पीतवर्णकः बाह्येतरदले श्वेता कर्णिका पीतवर्णिका खंडेंदुः
श्रृंखला वापी वल्ली भद्रं तु पंचमं परिध्याविष्टितं पद्मं बाह्ये सत्वरजस्तमः सर्वव्रतसमुद्दिष्टं स
र्वतोभद्रमंडलं मध्ये ब्रह्माणमष्टासु दिक्षु सोमादिदेवताः वायुसोमद्वयोर्मध्ये वसूनष्टौ च का
रयेत् सोमईशानयोर्मध्ये रुद्रानेकादशैव तु इंद्रईशानयोर्मध्ये आदित्यान्द्वादशैव तु इंद्रा
ग्निमध्ये च तथा अश्विनौ पूजयेत्तथा आग्नेययमयोर्मध्ये विश्वान्देवान्सपैतृकान् याम्यनैर्ऋ
त्ययोर्मध्ये सप्तयक्षांश्च कारयेत् नैर्ऋत्यजलयोर्मध्ये नागभूतांश्च कारयेत् आप्यवायव्ययोर्म
ध्ये गंधर्वाप्सरसः कुरु ब्रह्मसोमद्वयोर्मध्ये रुद्रानेव च कारयेत् स्कंदं नंदीवृषं शूलं महादेवं
च कारयेत् ब्रह्मेशानद्वयोर्मध्ये दक्षादीन्संप्रपूजयेत् ब्रह्मेंद्रयोस्तथा मध्ये दुर्गां विष्णुं तथैव च
ब्रह्माग्निमध्ये च तथा स्वधां चैव प्रपूजयेत् ब्रह्मणो निर्ऋतेर्मध्ये गणपं तु प्रपूजयेत् वरुणब्र
ह्मयोर्मध्ये अपः संपूजयेत्तथा मध्ये वायो ब्रह्मणश्च मरुतः संप्रपूजयेत् ब्रह्मणः पादमूले
तु मेदिनीं तत्र कारयेत् कावेरी नर्मदा चैव यमुना च सरस्वती गंगा कृष्णा तथा गोदा पूज्याः समाश्च
सागराः क्षारक्षीरमधुसर्पिरिक्षुदधिसंभवाः ब्रह्मजज्ञानमित्याद्यैर्मंत्रैः स्थाप्यास्तु देवताः गं
धपुष्पादिभिः पूज्या दीपान्दद्याच्च सर्वतः सर्वत्र भद्रं यस्मात्तत्सर्वतोभद्रमुच्यते ॥ इति सर्वतो
भद्रं ॥ अथ मंडले तत्तन्मंत्रेण तत्तद्देवतास्थापनपूजाप्रयोगः तत्र मध्ये ब्रह्माणं ब्रह्मजज्ञा
नं गौतमवामदेवौ ब्रह्मा त्रिष्टुप् ब्रह्मस्थापने पूजने विनियोगः एवमग्रेपि ब्रह्मजज्ञानं उदीची
मारभ्य वायवीपर्यंतं सोमादयो वायंता अष्टौ लोकपालाः स्थापनीयाः तत्र आप्यायस्व गौतमः
सोमो गायत्री ओं आप्यायस्व मः अभि त्वा यीगतिः शुनः शेपः ईशानो जगती अभि त्वा देवस
वितः इंद्रं वो मधुच्छंद इंद्रो गायत्री ओं इंद्रं वो विश्वतः ओं अग्निं को एवा मेधातिथिरग्निर्गायत्री
अग्निं दूतं यमाय सोमं यमो अनुष्टुप् यमाय सोमं मसोः सुणो चौरः कण्वो निर्ऋतिर्गायत्री ओं

ॐमोषुणः तत्त्वायामि शुनःशेफो वरुणस्त्रिष्टुप् ॐ तत्त्वायामि वायो शतं गोतमो वायुरनुष्टुप् वायो
शतं वायुसोममध्ये अष्टौ वसून् तथा अत्रमैत्रावरुणिर्वसिष्ठो वसवस्त्रिष्टुप् ज्मया अत्र सोमेशानम-
ध्ये एकादश रुद्रान् आरुद्रासः श्यावाश्व एकादश रुद्रा जगती ॐ आरुद्रासः ईशानेंद्रमध्ये द्वा
दशादित्यान् त्यान्नुक्षत्रं दोमन्यो मैत्रावरुणिर्मान्यो वा वद्देवो वा मन्त्यात्तपयः द्वादशादित्या गा-
यत्री ॐ त्यान्नुक्षत्रियान् इंद्राग्निमध्ये अश्विनाराद्रूगणो गोतमोश्विना उष्णिक् ॐ अश्विनावर्ति-
रग्नियममध्ये विश्वेदेवान् सपितृकान् ओमासो मधुच्छंदा विश्वेदेवा गायत्री ॐ मासः यमनि-
र्ऋतिमध्ये सप्तयज्ञान् अभित्यं देवं वामदेवा सप्तयज्ञा प्रकृतिः अभित्यं देवं सवितारमोण्योः कवि-
क्रतुमर्चामि सत्यसवं रत्नधामभिप्रियं मतिं कविं मूर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिर-
ण्यपाणिरमिमीत सुक्रतुः कृपा स्वः निर्ऋति वरुणमध्ये भूतनागान् आयंगौः सार्पराज्ञी सर्पा
गायत्री ॐ आयंगौः वरुणवायुमध्ये गंधर्वाप्सरसः अप्सरे वा तरशन मां गंधर्वाप्सरसो नुष्टु-
प् ॐ अप्सरसां गंधर्वाणां यत्र अन्यंग्रे येषु अप्सरसां मैनतश इत्र्युध्यश्रूराङ्स्रक्तं तन्त्वावानुक्रम
विरोधात् उपेंद्र ब्रह्मसोममध्ये स्कंदनंदीश्वरशूलमहाकालान् कुमारं कुमारः स्कंदस्त्रिष्टुप् ॐ
कुमारेमाः ऋषभं ऋषभो वैराजा ऋषभोनुष्टुप् ॐ ऋषभं मा ब्रह्मेशानमध्ये दक्षादीन् सप्त अ-
दितिर्लौकिको बृहस्पतिर्दक्षोनुष्टुप् अदितिर्ह्यजनिष्ट ब्रह्मेंद्रमध्ये दुर्गां तामग्निवर्णां सोभरि-
र्दुर्गा त्रिष्टुप् ॐ तामग्निवर्णां इदं विष्णुः काण्वो मेधातिथिर्विष्णुर्गायत्री ॐ इदं विष्णुर्वि- ब्रह्माग्नि
मध्ये स्वधां उदीरतांशंखः स्वधा त्रिष्टुप् ॐ उदीरतामवर उत्परास उन् ब्रह्मयममध्ये मृत्युरोगा-
न् परं मृत्यो संकुसुको मृत्युरोगास्त्रिष्टुप् ॐ परं मृत्यो अनुपरेहि ब्रह्मनिर्ऋतिमध्ये गणपतिं
गणानां त्वा गृत्समदो गणपतिर्जगती ॐ गणानां त्वा ब्रह्मवरुणमध्ये अपः शन्नोदेवी रव-
र्घः सिंधुद्वीप आपो गायत्री शन्नोदेवीः ब्रह्मवायुमध्ये मरुतः मरुतो यस्य राहूगणो मरुतो
गायत्री ॐ मरुतो यस्य ब्रह्मणः पादमूले कर्णिकायां पृथ्वीं स्योनाभे धातिथिर्भूमिर्गायत्री ॐ
स्योना पृथ्वी तत्रैव गंगादिनद्यः इमंमे सिंधुक्षित्प्रैयमेधा दपो नद्यो जगती इदंमे गंगे यमुने
तत्रैव सप्तसागरान् धाम्नो राजवित्त वरुणावोमुच यदापो अध्न्या इति वरुणेति शपामहे ततो
वरुणनो मुंच मैवायो मोय थी हिंसीरतो विश्वत्यभूस्त्वतो वरुणनो मुंचन् तदुपरि मेरवे नमः इति
नाम्ना मेरुम् ततो मंडलाद्बहिः सोमादि समीपेन क्रमेणायुधानि गदा त्रिशूलवज्रशक्तिदंड
खड्गपाशांकुशान् ततो त्वे पुनरपि तेनैव क्रमेण गोतमं भरद्वाजं विश्वामित्रं कश्यपं जमदग्निं व-
सिष्ठं अत्रिं अरुंधतीं ततो त्वे पूर्वादौ ऐंद्रीं कौमारीं वाराहीं चामुंडां वैष्णवीं माहेश्वरीं विनायकीं
नाममंत्रैः पूजयेत् अथ मंत्रः ॐ ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः स बु-
ध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः १ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यं
भवा वाजस्य संगथे २ अभि त्वा देव सवितरीशानं वार्याणां सदावन्भागमीमहे ३ इन्द्रं वो वि-
श्वतस्परि हवामहे जनेभ्यः अस्माकमस्तु केवलः ४ अग्निं दूतं वृणीमहे होतारं विश्ववेदसं
अस्य यज्ञस्य सुक्रतुम् ५ यमाय सोमं सुनुत ६ मोषुणः परापरा निर्ऋतिर्दुर्हणा वधीत् प-
दीष्ट तृष्णया सह ७ तत्त्वायामि ब्रह्मणा वंदमानस्तदाशास्ते यजमानो हविर्भिः अहेडमानो
वरुणेह बोध्युरुशंसमान आयुः प्रमोषीः ८ वायो शतं हरीणां युवस्व पोष्याणां उत वा ते स-
हस्रिणो रथ आयातु पाजसा ९ ज्मया अत्र वसवो रंत देवा उरावंतरिक्षे मर्जयंत शुभ्राः अर्वा-
क्पथः उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य १० आरुद्रास इंद्रवंतः सजोषसो।

हिरण्यरथाः सुवितायगंतन इयंवोअस्मत्प्रतिहर्यतेमतिस्तृष्णजेनंदिवउत्साउदन्यवे ११ त्र्याते
त्वत्रियांअवृआदित्यान्वाचिषामहे सुमृडीकांअभिष्टये १२ ॐमासश्चर्षणीधृतोविश्वेदेवासआ
गतदाश्वांसोदाशुषःसुतं १३ अभित्यंदेवंसवितारमोण्योःकविक्रतुमर्चामिसत्यसवंरत्न
धामभिप्रियंमतिंकविं ऊर्ध्वायस्यामतिर्भाअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्र
तुःकृपास्वः १४ आयंगौःपृश्निरक्रमीदसदन्मातरंपुरःपितरंचप्रयत्स्वः १५ अप्सरसांग
धर्वाणांमृगाणांचरणेचरन् केशीकेतस्यविद्वान्त्सखास्वादुर्मदिंतमः १६ कद्रुद्रायप्रचेतसेमी
ढुष्टमायतव्यसे वोचेमशंतमंहृदि १७ कुमारंमातायुवतिःसमुब्धंगुहाबिभर्तिनददातिपि
त्रे अनीकमस्यनमिनज्जनासःपुरःपश्यंतिनिहितमरतौ १८ ऋषभंमासमानानांसपत्नानां
विषासहिं हंतारंशत्रूणांकृधिविराजंगोपतिंगवां १९ अदितिर्ह्यजनिष्टदक्षयादुहितातव तांदे
वाअन्वजायंतभद्राअमृतबंधवः २० तामग्निवर्णांतपसाज्वलंतीं २१ इदंविष्णुर्विचक्रमे २२
उदीरतामवरउत्परास २३ परंमृत्योअनुपरेहिपंथांयस्तेस्वइतरोदेवयानात्चक्षुष्मतेशृण्व
तेतेब्रवीमिमानःप्रजांरीरिषोमोतवीरान् २४ गणानांत्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्त
मं ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनःशृण्वन्नूतिभिःसीदसादनं २५ शंनोदेवीरभिष्टये २६
मरुतोयस्यहिक्षयेपाथादिवोविमहसः ससुगोपातमोजनः २७ स्योनापृथिविभव २८ इ
मंमेगंगेयमुनेसरस्वतीशुतुद्रिस्तोमंसचतापरुष्ण्या असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेआ
शृणुह्यासुषोमया २९ धाम्नोधाम्नोराजन्नितोवरुणनोमुंच यदापोअघ्न्यावरुणेतिशपामहेततो
वरुणनोमुंच ३० ॥ इतिसर्वतोभद्रमंत्राः तदुक्तंतंत्रसारे अनुक्तेकल्पयेद्यंत्रंलिखेत्पद्मदला
ष्टकं षट्कोणांतर्गतंतत्रवेदद्वारोपशोभितंकमलरचनाकारस्तुआयान्तीयंतत्एवंभूतंभूत
न्तद्वितीयंतत्त्वतत्त्वं चतुर्थमायेपुनरेवमेवयोगोभवेदष्टदलंचपद्ममितिअथोदकैःपूर्णकुंभ
रैवादरंशुभं चूतपल्लव पुष्पैश्चयुक्तंसंस्थाप्यचार्चितं सौवर्णेराजतेताम्रेपात्रेवाष्टकोणमालि
खेत् अलाभेबिल्वपाटेवाकलशोपरिसंस्थिते स्थाप्योपरिवस्त्रयुग्ममच्छिन्नंसदृशंशुभं दिव्य
सिंहासनेतत्रस्थापयित्वार्चयेत्सुधीः ॐनमोभगवतेविष्णवेसर्वभूतात्मनेवासुदेवायसर्वात्म
संयोगपद्मपीठात्मनेनमः इतितन्मंत्रेणतन्मध्येकुर्यात्पुष्पांजलिंपुनः इतिपीठार्चाअर्घ्यपा
द्यादिकंदद्यात्स्नानंपंचामृतेनच लेप्यादौनाभिषेकस्यात् दद्याद्यज्ञोपवीतकम् ततःसंस्थाप्य
पीठेतंपूजांकुर्याद्यथाविधिआवाहनंस्थापनंचसन्निधापनमेवच सन्निरोधनमेवंस्यादवगुं
ठनमंजसा ततोमुद्राभिरेवंस्यादेवंसंप्रार्थ्यभक्तितः नानारत्नविचित्राणिदद्यादाभरणानिच
हिमांबुघृष्टहरिचंदनसारसमन्वितं गंधंदद्यात्प्रयत्नेनसागुरुंचसकुंकुमं कल्हारकेतकीजा
तीपुंनागाद्यैःप्रपूजयेत् चंपकैःशतपत्रैश्चचंदनैःसुमनोहरैः चूतपल्लवपुष्पैश्चदूर्वाभिस्तु
लसीदलैः कोमलैर्बिल्वपत्रैश्चअशोककुसुमैस्तथा रामस्यजननीचासिरामात्मकमिदंज
गत् अतस्त्वांपूजयिष्यामिलोकमातर्नमोस्तुते इतिकौसल्यायां नमोदशरथायेतिपूजयेत्सि·
तांतथा इतिपितृपूजनं ततोनुज्ञाप्यदेवेशंपरिवारान्समर्चयेत् एवंषट्कोणकोणेषुहृदया
दीनिषट्क्रमात् तथावरणं हनूमंतंचसुग्रीवंभरतंसविभीषणं लक्ष्मणमंगदंशत्रुघ्नंजांबवंत
दलेष्विमान् द्वितीयंधृष्टिंजयंतंविजयंसुराष्ट्रंराष्ट्रवर्द्धनं अकोपंधर्मपालंचसुमंत्रंदलमध्य
नः तृतीयंदलाग्रेलोकपालांश्चइतिचतुर्थं तदस्त्राणितमोवहिः पंचमंनाममंत्रेणनमस्का
रतर्पाभ्यांप्रपूजयेत् घंटांचवादयन्धूपंदीपंचास्मैनिवेदयेत् मध्वाभीज्यादिनासहितया·

नैवेद्यं विधिनाचरेत् आचमनं सतांबूलं महानीराजनं ततः नमस्कुर्यात्ततः स्तोत्रैः स्तुत्वा वपूजये
न्मंत्रं शृणुयान्नजयंतीमाहात्म्यं दिव्यां रामकथां तथा रामभक्तैः समं यामं नयेद्राममनुस्मरन्
शुश्रावया वा रुनार्चां च कुर्याद्यामेष्वतंद्रितः रामो द्वितीयसंपूज्यो मध्याह्ने जन्म भावयेत् उक्तेष्वे
ग्रहपंचके सुरगौरी इत्यादिमंत्रैर्ववादयेद्गायान्द्या द्वैर्जगत्पतेः फलपुष्पाक्षतं संपूर्णं गृहीत्वा
शोवमुजलं अशोकचूतकस्तमैर्युक्तं चवलसीदलैः दशाननवधार्थाय धर्मसंस्थापनाय च
च दानवानां विनाशाय दैत्यानां नियनाय च परित्राणाय साधूनां जातो रामः स्वयं हरिः गृहा
णार्घ्यं मया दत्तं भ्रातृभिः सहितोनघ इत्यर्घ्यमंत्रः पुनः पुष्पांजलिं दत्वा यामे यामे त्वतंद्रितः पूजये
द्विधिवद्भक्त्या दिवारात्रं नयेद्बुधः इति रामनवमीविधायकसंग्रहः अथ व्रतपद्धतिः तत्रादौ द
शम्यां दंतधावनपूर्वकं नद्यादौ स्नात्वा नित्यनियमं निर्वर्त्याचार्यवरणं कुर्यात् तत्र मंत्रः श्रीरामप्रतिमा
दानं करिष्येहं द्विजोत्तम तत्राचार्यो भव प्रीतः श्रीरामोसि त्वमेव चेति आगतं स्नापयित्वा स्वयं ते
लेनाभ्यंजनं विप्रसात्विकान्नैर्भोजयित्वा स्वयं भुंजीत ततो नवम्यां एकभक्तेन अग्राभूतेन राघव इ
क्ष्वाकुवंशतिलक प्रीतो भव रघूद्वह इत्येकभक्तं निवेद्य सायंसंध्यां कृत्वा आचार्यसहितो राजा वधः श
यनं कुर्यात् इत्यष्टमीकृत्यपद्धतिः ततः नवम्यां प्रातः सत्यायपर्णादिभिर्गंडूषं मुखं संशोध्य
न आदिषु स्नात्वा संध्यां विधाय नित्यपूजनादि शीघ्रमेव निर्वर्त्य ततः सूर्यः सोमो यमः कालः सं
ध्ये भूतान्यहः क्षपा पवनो दिक्पतिर्भूमिराकाशं खचरा नराः ब्राह्मं शासनमास्थाय कल्पध्वमिह
सन्निधिं इति मंत्रेण सूर्यादिदेवताभ्यो व्रतं निवेद्य अपसर्पंतु ये भूता ये भूता भुवि संस्थिताः ये भू
ता विघ्नकर्तारस्ते नश्यंतु शिवाज्ञया इति मंत्रेण भूतान्युत्सार्य ओं मयेसोपवासं रामनवमीव्रतमहं करिष्ये
उपोष्य नवमीं त्वद्य यामेष्वष्टसु राघव तेन प्रीतो भव त्वं भो संसारात्त्राहि मां हरे इत्युक्त्वार्घ्यपात्रस्थं सपुष्पा
क्षतं जलं क्षिपेत् ततः चतुर्द्वारपरमं कोशमित्यादिना पूर्वमुक्तं शंखचक्रादिभिरलंकृतं चतुर्हस्तं वेदि
काप्रमाणं हस्तमात्रवेदिकायुक्तं वा मंडपं विधाय तन्मध्ये सर्वतोभद्रं कमलं वा विलिख्य तत्र कुंभस्थाप
नं कुर्यात् तत्र क्रमः आदौ गणपतिपूजनं मातृकापूजनं पुण्याहवाचनं च कृत्वा मही द्यौरिति भूमिं
स्पृष्ट्वा ओं ओषधय इति यवान्निक्षिप्य तत्र आजिघ्र कलशमिति कलशं संस्थाप्य इमं मे गंगे इति जलेनापूर्य गं
धद्वारामिति गंधं या ओषधीरिति सर्वौषधीः कांडात्कांडादिति दूर्वाः अश्वत्थेवपंचपल्लवान् स्योना पृथि
वीति सप्तमृदः याः फलिनीरिति फलं सहिरत्नानीति पंचरत्नानि हिरण्यरूप इति हिरण्यं च निक्षिप्य
युवा सुवासा इति वस्त्रेणावेष्ट्य पूर्णादर्वीति पूर्णपात्रं निधाय तत्त्वा यामीति वरुणं संपूज्य क
लशस्य मुखे इति पठेत् इति कलशस्थापनविधिः ततः कलशोपरि सौवर्णादिपात्रे अष्टकोणमालि
ख्य तदुपरि सदशमहतवस्त्रयुग्मं सुवर्णसिंहासनं स्थापयेत् ततः श्रीरामस्मरणं कृत्वा अस्यां
रामनवम्यां वै रामाराधनतत्परः उपोष्याष्टसु यामेषु पूजयित्वा यथाविधि इमां स्वर्णमयीं रामप्रति
मां संप्रयत्नतः श्रीरामप्रीतये दास्ये रामभक्ताय धीमते प्रीतो रामो हरत्वाशु पापानि सुबहूनि मे अने
कजन्मसंसिद्धान्यभ्यस्तानि महांति च इति त्रिभिर्व्रतसंकल्पं कुर्यात् अशक्तस्तु इमां यातमयीमिति प
ठेत् स्वर्णादिमय्यामसंभवात् लेख्यादौ तु नास्ति ततः आसने पृथ्वीति मंत्रेण उपविश्य तत्स्थाय
कूर्माय नमः आधारशक्तये ऊर्ध्वविद्यावरणपद्मसिंहासनाय नमः इति पूजयेत् अपक्रामंत्विति पठित्वा
सितवालत्रयं कृत्वा भूतसंघानुत्सार्य ओं रः अस्त्राय फट् इत्युक्त्वा करास्फालनेन छोटिकाभिश्च
दिग्बंधनं कृत्वा स्वचामे गुरुभ्यो नमः दक्षिणे गणपतये नमः मध्ये स्वेष्टदेवतायै इति नत्वा ता
लत्रयं कृत्वा पुनः ओं रः अस्त्राय फट् इत्युच्चार्य दक्षिणहस्ते जलं गृहीत्वा स्वात्मानं परितः भ्रामय

अग्निप्राकारमुद्रया अग्निप्राकारं भावयेत् ततः भूतशुद्धिप्राणप्रतिष्ठे केवलमातृकान्यासं च कृत्वा
केशवादिमातृकान्यासं कुर्यात् ओं केशवादिमातृकान्यासस्य साध्यनारायण ऋषिः गायत्री छंदः
लक्ष्मीनारायणो देवता हलो बीजं स्वराः शक्तिः ममामंत्रांगत्वेन न्यासे विनियोगः अंगुष्ठादिषु हस्त
स्थानेषु वक्ष्यमाणषडंगमंत्रैर्न्यासं विधाय हृदयादिषु न्यसेत् ओं श्री ओं नमो नारायणाय हंसः
सोहं अं कं खं गं घं ङं. आं ह्रीं हंसः सोहं ओं नमो नारायणाय क्रुद्धोल्काय स्वाहा ओं श्री देव्यै नमः
हृदयाय नमः ओं नमो नारायणाय हंसः सोहं इं चं छं जं झं ञं ईं ओं ह्रीं हंसः सोहं ओं नमो नाराय
णाय महोल्काय स्वाहा श्रीपद्मिन्यै नमः शिरसे स्वाहा ओं नमो नारायणाय हंसः सोहं उं टं ठं डं ढं
णं ऊं ओं ह्रीं हंसः सोहं ओं नमो नारायणाय वीरोल्काय स्वाहा अं विश्वपत्न्यै नमः शिखायै वषट् ओं नमो
नारायणाय हंसः सोहं एं तं थं दं धं नं ऐं ओं ह्रीं हंसः सोहं नमो नारायणाय द्युल्काय स्वाहा श्रीं वरदायै
नमः कवचाय हुं ओं श्री ओं नमो नारायणाय हंसः सोहं ओं पं फं बं भं मं औं ओं ह्रीं हंसः ओं नमो ना
रायणाय सहस्रोल्काय स्वाहा क्लीं कमलारूपायै नमः इति नेत्रं ओं श्री अं नमो नारायणाय हंसः
सोहं अं यं रं लं वं शं षं सं हं लं क्षं अः ओं ह्रीं हंसः सोहं अं नमो नारायणाय अनंतोल्काय स्वाहा त्रः शू
लिन्यै नमः इति अस्त्रं इति केशवादिमातृकान्यासं षडंगं ततो ध्यानं विद्यारविंदमुकुरामृत
कुंभयस्मकामोदकीदूरसुदर्शनशोभिहस्तं सौदामिनीमुकुरकांति विभाति लक्ष्मीनारायण
त्मकमवतु वितनादिमूर्तिः वक्ष्यति शेषः वामाधःकरमारभ्य दक्षिणाधःकरपर्यंतमायुधक्रमो ज्ञा
तव्यः ओं ह्रीं श्रीं क्लीं अं क्लीं श्रीं ह्रीं ओं केशवाय कान्त्यै नमः शिरसि ओं ह्रीं श्रीं क्लीं आं क्लीं श्रीं ह्रीं
ओं नमो नारायणाय कान्त्यै नमः मुखवृत्ते ओं ह्रीं श्रीं क्लीं श्रीं ह्रीं ओं माधवाय तुष्ट्यै नमः दक्षनेत्रे
ओं ह्रीं श्रीं क्लीं ह्रीं ओं गोविंदाय पुष्ट्यै नमः वामनेत्रे ओं ह्रीं श्रीं उं क्लीं श्रीं ह्रीं ओं विष्णवे धृत्यै नमः द
क्षिणकर्णे ओं ह्रीं श्रीं क्लीं ओं ह्रीं श्रीं ओं मधुसूदनाय शान्त्यै नमः वामकर्णे ओं ह्रीं श्रीं क्लीं ऋं क्लीं श्री
ह्रीं ओं त्रिविक्रमायै नमः दक्षनासापुटे ओं ह्रीं श्रीं क्लीं ॠं क्लीं श्रीं ह्रीं ओं वामनाय दयायै नमः वा
मनासापुटे श्रीं ह्रीं ओं श्रीधराय मेधायै नमः दक्षगंडे ओं ह्रीं श्रीं क्लीं लृं क्लीं श्रीं ह्रीं ओं हृषीकेशाय
हर्षायै नमः वामगंडे ओं ह्रीं क्लीं एं क्लीं ह्रीं ओं पद्मनाभाय श्रद्धायै नमः ऊर्ध्वोष्ठे ओं ह्रीं श्रीं क्लीं ऐं
क्लीं श्रीं ह्रीं ओं दामोदराय लज्जायै नमः अधरोष्ठे ओं ह्रीं श्रीं क्लीं श्रीं ह्रीं ओं वासुदेवाय लक्ष्म्यै नमः
ऊर्ध्वदंतपंक्तौ ओं ह्रीं श्रीं क्लीं औं क्लीं श्रीं ह्रीं ओं संकर्षणाय सरस्वत्यै नमः अधोदंतपंक्तौ ओं ह्रीं
श्रीं क्लीं अं क्लीं श्रीं ह्रीं ओं प्रद्युम्नाय प्रीत्यै नमः मूर्ध्नि ओं ह्रीं श्रीं अः क्लीं श्रीं ह्रीं ओं अनिरुद्धाय रत्यै न
मः मुखे ओं ह्रीं श्रीं क्लीं कं क्लीं श्रीं ह्रीं ओं चक्रिणे जयायै नमः दक्षबाहुमूले ओं ह्रीं श्रीं क्लीं खं क्लीं
श्रीं ह्रीं ओं गदिने दुर्गायै नमः दक्षकूर्परे ओं ह्रीं श्रीं क्लीं गं क्लीं श्रीं ह्रीं ओं शार्ङ्गिणे प्रभायै नमः
दक्षमणिबंधे ओं ह्रीं श्रीं क्लीं घं क्लीं घं क्लीं श्रीं ह्रीं ओं खड्गिने सत्यायै नमः दक्षांगुलीमूले ओं ह्रीं
श्रीं क्लीं ङं क्लीं श्रीं ह्रीं ओं शंखिने चंडायै नमः दक्षांगुल्यग्रेषु ओं ह्रीं श्रीं क्लीं चं क्लीं श्रीं ह्रीं ओं हलि
ने वाण्यै नमः वामबाहुमूले ओं ह्रीं श्रीं क्लीं छं क्लीं श्रीं ह्रीं ओं मुसलिने विलासिन्यै नमः वामकू
र्परे ओं ह्रीं श्रीं क्लीं श्रीं ह्रीं जं ओं शूलिने विजयायै नमः वाममणिबंधे ओं ह्रीं श्रीं क्लीं श्रीं ह्रीं झं ओं पा
शिने विरजायै नमः वामांगुलिमूले ओं ह्रीं श्रीं क्लीं ञं ओं अंकुशिने विश्वायै नमः वामांगुल्यग्रे ओं
ह्रीं श्रीं क्लीं टं क्लीं श्रीं ह्रीं ओं मुकुंदाय विमदायै नमः दक्षोरुमूले ओं ह्रीं श्रीं क्लीं ठं क्लीं श्रीं ह्रीं ओं नं
दजाय सुनंदनायै नमः दक्षजानुनि ओं ह्रीं श्रीं क्लीं डं क्लीं श्रीं ह्रीं ओं नंदिने स्मृत्यै नमः दक्षगुल्फे
ओं ह्रीं श्रीं ढं क्लीं ह्रीं नराय ऋद्ध्यै नमः दक्षपादांगुलिमूले ओं ह्रीं श्रीं क्लीं णं क्लीं श्रीं ह्रीं ओं नरका

जितेसमस्यै नमः दक्षगुल्फाग्रेषु ॐ ह्रीं श्रीं क्लीं नं क्लीं श्रीं ह्रीं ॐ हरये सुरूपायै नमः वामोरुमूले ॐ ह्रीं श्रीं क्लीं थं क्लीं श्रीं ह्रीं ॐ कृष्णाय हृष्टै नमः वामजानुनि ॐ ह्रीं श्रीं क्लीं दं क्लीं दं क्लीं श्रीं ह्रीं ॐ सत्याय प्रभृत्यै नमः वामगुल्फे ॐ ह्रीं श्रीं क्लीं धं क्लीं श्रीं ह्रीं ॐ सनातनाय मत्यै नमः वामपादांगुलिमूले ॐ ह्रीं श्रीं नं क्लीं श्रीं ह्रीं ॐ शौरिणे क्षमायै नमः वामांगुल्यग्रेषु ॐ ह्रीं श्रीं क्लीं पं क्लीं श्रीं ह्रीं ॐ शूराय परमायै नमः दक्षपार्श्वे ॐ ह्रीं श्रीं ॐ क्लीं फं क्लीं श्रीं ह्रीं ॐ जनार्दनाय उमायै वामपार्श्वे ॐ ह्रीं श्रीं क्लीं बं क्लीं श्रीं ह्रीं ॐ भूधराय क्लेदिन्यै पृष्ठे ॐ ह्रीं श्रीं क्लीं भं क्लीं श्रीं ह्रीं ॐ विश्वमूर्तये क्लिन्नायै नाभौ ॐ ह्रीं श्रीं क्लीं मं क्लीं श्रीं ह्रीं ॐ वैकुंठाय वसुदायै नमः जठरे ॐ ह्रीं श्रीं क्लीं यं क्लीं ह्रीं त्वगात्मने पुरुषोत्तमाय वसुधायै नमः हृदये ॐ ह्रीं श्रीं क्लीं रं क्लीं श्रीं ह्रीं ॐ असृगात्मने बलिने परायै नमः दक्षांसे ॐ ह्रीं श्रीं क्लीं लं क्लीं श्रीं ह्रीं ॐ मांसात्मने बलानुजाय परायणायै नमः ककुदि ॐ ह्रीं श्रीं क्लीं वं क्लीं श्रीं ह्रीं ॐ मेदात्मने बलाय सूक्ष्मायै वामांसे ॐ ह्रीं श्रीं क्लीं शं क्लीं श्रीं ह्रीं ॐ अस्थ्यात्मने वृषघ्नाय संध्यायै नमः हृदादिदक्षकराग्रपर्यंतं ॐ ह्रीं श्रीं षं क्लीं श्रीं ह्रीं ॐ मज्जात्मने वृषाय संध्यायै नमः हृदादिवामकरपर्यंतं ॐ ह्रीं श्रीं क्लीं सं क्लीं श्रीं ह्रीं शुक्रात्मने हंसप्रभायै हृदादिदक्षपादांतं ॐ ह्रीं श्रीं क्लीं हं श्रीं ह्रीं प्राणात्मने वराहाय निशायै नमः हृदादिवामपादांतं ॐ ह्रीं श्रीं क्लीं लं क्लीं श्रीं ह्रीं ॐ ज्ञानात्मने विमलाय अमोघायै नमः हृदादिनाभ्यंतं ॐ ह्रीं श्रीं क्लीं क्षं क्लीं श्रीं ह्रीं ॐ परमात्मने नृसिंहाय विद्युतायै नमः हृदादिमूर्द्धांतं यद्वा प्रणवादिकामबीजपूर्वकमातृकाक्षरादीन्वा केशवादिकीर्त्यादीन्मेधा न्यसेत् इति केशवादिन्यासः अन्येच वैष्णवमंत्रन्यासान्रामार्चनरत्नाकरे ज्ञेयाः अथ शंखस्थापनं तत्रातिसूक्ष्मप्रकारो गौतमीये अस्त्रेण शंखं प्रक्षाल्य हृन्मंत्रेण प्रपूरयेत् पूजयेत्प्रणवेनैव सामान्यार्घमिदं स्मृतं अथ विस्तरेण शंखप्रतिष्ठा सामान्यार्घोदकेन स्वपुरतः त्रिकोणषट्कोणचतुरस्रमंडलं कृत्वा आधारशक्तये कूर्माय अनंताय पृथिव्यै नमः इति संपूज्य शंखमुद्रां प्रदर्श्य गंधपुष्पाद्यैः आग्नेये हृदयाय नमः नैर्ऋते शिरसे स्वाहा वायव्ये शिखायै वषट् ईशाने कवचाय हुं मध्ये नेत्रत्रयाय वौषट् पूर्वादिदिक्षु अस्त्राय फट् इति मंडलं पूज्य मूलेन त्रिपादिकां प्रक्षाल्य रं अग्निमंडलाय दशकलात्मने श्रीरामार्घपात्रासनाय नमः इति मंडलोपरि आधारं प्रतिष्ठाप्य तत्र पूर्वादिप्रदक्षिणं उपर्यधश्च अग्नेर्दशकलाः पूजयेत् पूर्वे यं धूम्रार्चिषे नमः आग्नेये रं ऊष्मायै नमः दक्षिणे लं ज्वलिन्यै नमः नैर्ऋत्ये वं ज्वालिन्यै नमः पश्चिमे शं विस्फुलिंगिन्यै नमः वायव्ये षं श्रियै नमः उत्तरे सं सुरूपायै नमः ईशान्ये हं कपिलायै नमः पूर्वेशानयोर्मध्ये लं हव्यवाहायै नमः पश्चिमनैर्ऋत्यमध्ये क्षं कव्यवहायै नमः इति ततः अस्त्रेण शंखं प्रक्षाल्य सं सूर्यमंडलाय द्वादशकलात्मने श्रीरामार्घपात्राधाराय नमः इति आधारोपरि निधाय शंखोपरि वृत्ताकारेण सूर्यस्य द्वादशकलाः पूजयेत् पूर्वादिप्रादक्षिण्येन कं भं तपिन्यै नमः खं बं तापिन्यै · गं फं धूम्रायै · घं पं मरीच्यै · ङं नं ज्वालिन्यै · चं धं रुच्यै · छं दं सुषुम्नायै · जं थं भोगदायै · झं तं विश्वायै · ञं णं बोधिन्यै · टं ढं धारिण्यै · ठं डं क्षमायै नमः इति [illegible]र्घोदकेन अं लं हंसः शं वं लं रं यं मं भं वं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं लृं ॠं ऋं ऊं उं ईं इं आं अं मूलमंत्रं च जप्त्वा शंखमापूर्य ॐ सोममंडलाय षोडशकलात्मने श्रीरामार्घामृताय नमः इति संपूज्य तत्र चंद्रकलाः पूजयेत् अं अमृतायै नमः आं मानदायै इं पूषायै · ईं तुष्ट्यै नमः उं पुष्ट्यै नमः ऊं रत्यै नमः ऋं धृत्यै नमः ॠं शशिन्यै · लृं चंद्रिकायै · ॡं कान्त्यै · एं ज्योत्स्नायै नमः ऐं श्रियै · ओं प्रीत्यै · औं अंगदायै नमः अं पूर्णायै · अः पूर्णामृतायै नमः इति ततः ब्रह्मांडो-

दत्तीर्थानि करैः स्पृष्टानि ते रवे तेन सत्येन मे देव तीर्थं देहि दिवाकर गंगे च यमुने चैव गोदावरि सर
स्वति नर्मदे सिंधुकावेरि जलेऽस्मिन्संनिधिं कुरु इति सूर्यमंडलात्तीर्थं अंकुशमुद्रयाऽऽवाह्य शंखे
संयोज्य गंधपुष्पाद्यैः शंखजलं समभ्यर्च्य शंखे पाणितलं दत्वा मूलमंत्रमष्टधा जपेत् तज्जलं चि
न्मयं संचिन्त्य अस्त्रमंत्रेण संरक्षयेत् अमृतमुद्रयाऽमृतीकृत्य शंखमुद्रां रुद्रमुद्रां च प्रदर्श्य परमीकृत्य गंध
पुष्पाभ्यां शंखं संपूज्य तेन जलेन देवं आत्मानं पूजाद्रव्याणि च प्रोक्षयेत् इति शंखप्रतिष्ठा ततः शं
खात्पूर्वदिशा दक्षिणेन अर्घ्यपाद्याचमनीयमधुपर्कादि सामान्यार्घ्यविधिना स्थापयेत् ततः वाम
भागस्थं कलशं पूजाद्रव्याणि च प्रोक्षयेत् अथांतर्यागः स्वदेहे मंडूकादिन्यासं कृत्वा स्वहृदये धर्म
कंदसमुद्भूतज्ञाननालसुशोभनं ऐश्वर्याष्टदलं पद्मं परवैराग्यकर्णिकं तस्मिन्नीदेविदात्मानं
राघवं च स्वरूपिणं ध्यात्वा मानसैर्धूपदीपाद्यैः संपूज्य नैवेद्यावसरे किंचिज्जपं कृत्वा गुह्येति मंत्रेण।
जपं समर्पयेत् ततः स्वाधिष्ठानगतत्रिकोणकुंडे प्रज्वलितं चिदग्निं ध्यात्वा बिंदुनादप्रणवेनाहं नादि
कं हुत्वा ततः पूजाहोमादिकं देवकृतं यत् द्रव्यं गृहाण तेन प्रीतो भव त्वं भोः सुवृं मे मानसं कुरु
इति मंत्रेण सुषुम्नामार्गगतं तेजःस्वरूपमात्मानं समर्पयेत् ततस्तन्मयः सच्चिदानंदमयो भूत्वा तू
ष्णीं तिष्ठेत् इत्यंतर्यागः अथ पीठपूजा स्ववामभागे श्रीगुरुभ्यो नमः दक्षिणे गणपतये मध्ये स्वेष्ट
देवतायै पीठमध्ये ॐ मंडूकाय नमः कालाग्निरुद्राय कूर्माय· आधारशक्त्यै· अनंताय· पृथिव्यै·
क्षीरसागराय· रत्नद्वीपाय· रत्नमंडपाय· कल्पवृक्षेभ्यो· रत्नवेदिकायै· रत्नसिंहासनाय नमः
इति उपर्युपरि संपूज्य धर्माय नमः आग्नेये ज्ञानाय· नैर्ऋत्ये· वैराग्याय· वायव्ये ऐश्वर्याय· ईशा
नेऽधर्माय· पूर्वे अज्ञानाय· दक्षिणे अवैराग्याय· पश्चिमे अनैश्वर्याय· उत्तरे ततो मध्ये आनं
दकंदाय· संविन्नालाय सर्वतत्त्वकमलासनाय· प्रकृतिमयपत्रेभ्यो· विकृतिमयकेसरेभ्यो·
पंचाशद्वर्णाढ्यकर्णिकायै· अं अर्कमंडलाय द्वादशकलात्मने· ॐ सोममंडलाय षोडशकलात्म
ने· मं वह्निमंडलाय दशकलात्मने सं सत्त्वाय· रं रजसे· तं तमसे· आं आत्मने· अं अंतरात्मने·
पं परमात्मने· ह्रीं ज्ञानात्मने· मायातत्त्वाय कलातत्त्वाय· विद्यातत्त्वाय· परतत्त्वाय· ॐकाराद्या·
मोंता योगपीठाय कैकोपरि पूजयेत् ततः पूर्वादिशा दक्षिणेन नवशक्तीः पूजयेत् विमलायै· उ
त्कर्षिण्यै· आग्नेये ज्ञानायै· दक्षिणे क्रियायै· नैर्ऋत्ये योगायै· पश्चिमे प्रह्व्यै· वायव्ये सत्यायै· उ
त्तरे ईशानायै· ईशान्ये अनुग्रहायै· मध्ये ततः पुष्पांजलिं गृहीत्वा पीठमंत्रेण पुष्पांजलिं दद्यात्
ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगपद्मपीठात्मने नमः ततः मध्या
ह्ने जन्म भावयेत् उच्चस्थे ग्रहपंचके सुरगुरौ सेंदौ नवम्यां तिथौ लग्ने कर्कटके पुनर्वसुयुते मेषे
गते पूषणि निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेराविर्भूतमभूतपूर्वविभवं य
त्किंचिदेकं महः ततः पूर्वोक्तमूर्तौ अयोध्यानगरे रम्ये रत्नमंडपमध्यगे स्मरेत्कल्पतरोर्मूले रत्न
सिंहासनं शुभं तन्मध्येऽष्टदलं पद्मं नानारत्नप्रतिष्ठितं मातुरंकगतं राममिंद्रनीलमणिप्रभं
कोमलांगं विशालाक्षं विद्युद्वर्णांबरावृतं भानुकोटिप्रतीकाशं किरीटेन विराजितं रत्नग्रैवेय
केयूररत्नकुंडलमंडितं रत्नकंकणमंजीरकटिसूत्रैरलंकृतं श्रीवत्सकौस्तुभोरस्कं मुक्ताहा
रोपशोभितं दक्षिणांगे दशरथं पुत्रावेक्षणतत्परं पार्श्वे भरतशत्रुघ्नौ तालवृंतकरावुभौ अग्रेऽव्य
ग्रहनूमंतं रामानुग्रहकांक्षिणं एवंविधं ससीतं रामं ध्यात्वा पुष्पांजलिं गृहीत्वा मूलमुद्रया आ
त्मसंस्थमजं शुद्धं त्वामहं परमेश्वर अरण्यामिव हव्याशं मूर्तावावाहयाम्यहं इति मंत्रं पठेत्
सहस्रशीर्षेत्यावाहनीमुद्रां प्रदर्शयेत् ततः तवेयं महिमा मूर्तिस्तस्यां त्वां सर्वगं प्रभो भग

क्तिस्त्वेह समाकृष्टं दीपस्थापयाम्यहमिति पठित्वा स्थापनीमुद्रां प्रदर्शयेत् सर्वान्तर्यामिणं देवं
सर्वबीजमयं शुभं स्वात्मस्थमपरं शुद्धमासनं कल्पयाम्यहमित्युक्त्वा पुरुषसूक्तेनासनं अस्मिन्ना
सने देव त्वं वासीनो स्वरूपात्मक प्रतिष्ठितो भव देवेश त्वं प्रसीद परमेश्वरेत्युक्त्वोपवेशनं अथ सन्नि
धापनं अनन्यात्वं देवेश मूर्तिशक्तिरियं प्रभो सान्निध्यं कुरु तस्यां त्वं भक्तानुग्रहतत्परेत्युक्त्वा मू
लांते सन्निधापनं सन्निधापिनीमुद्रां प्रदर्शयेत् अथ सन्निरोधनं आज्ञपातवदेवेश कृपांभो
धे गुणांबुधे आत्मानंदैकतृप्तं त्वां निरुणध्मि पितर्गुरो इत्युक्त्वा मूलांते सन्निरोधिनीमुद्रां प्रदर्श
येत् अज्ञानाद्दुर्मनस्त्वाद्वा वैकल्यात्साधनस्य च यदपूर्णं भवेत्कृत्यं तथाप्यभिमुखो भवेत्युक्त्वाभिमुखी
मुद्रया सम्मुखीकरणं दृशा पीयूषवर्षिण्या पूरयन्यज्ञविष्टरं मूर्तौ वा यज्ञसम्पूर्त्यै स्थितो भव महेश्व
रेति प्रार्थना मुद्रया प्रार्थना अभक्तवाङ्मनश्चक्षुःश्रोत्रदूरातिरद्युते स्वतेजःपंजरेणाशु वेष्टितो भव
सर्वत इति अवगुंठनमुद्रयावगुंठनं ततो देवदेहे षडंगेन सकलीकरणं धेनुमुद्रया अमृतीकर
णं महामुद्रया परमीकरणं ततो दीपिन्या विधया दीपनं सा च यथा मूलमंत्रं पठित्वा ऐं वद वद वाग्
वादिनि ऐं क्लिन्नि क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु कुरु क्लीं सौं महाक्षोभं कुरु कुरु सौः ह्सौः इति
आकारादिक्षकारान्तानां मातृकानामुच्चार्य अर्घ्योदकेन देवं त्रिःप्रोक्ष्य देवस्य हृदयं स्पृशन् प्राण
प्रतिष्ठां कुर्यात् सा यथा ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोहं श्रीभगवतः प्राणा इह प्राणाः ॐ आं
ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोहं भगवतो जीव इह स्थितः ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हंसः सोहं
भगवतो वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठंतु स्वाहा यस्य दर्शनमिच्छंति देवाः
स्वाभीष्टसिद्धये तस्मै ते परमेशाय रामाय स्वागतं नमः कृतार्थोनुगृहीतोस्मि सफलं जीवितं मम
आगतो देवदेवेश सुस्वागतमिदं पुनः मूलांते श्रीराम सुस्वागतो भव ततः शंख १ चक्र २ गदा ३
पद्म ४ धेनु ५ कौस्तुभ ६ गरुड ७ श्रीवत्स ८ वनमाला ९ योनि १० मुद्राः प्रदर्श्य पुष्पांज
लिं गृहीत्वा मूलांते श्रीरामाय साङ्गाय सवाहनाय सपरिवाराय सशक्तियुक्ताय पुष्पांजलिं परिक
ल्पयामि नमः इति समर्पयेत् यद्भक्तिलेशसंपर्कात्परमानंदसंभवः तस्मै ते चरणाब्जाय पाद्यं शु
द्धाय कल्पते एतावानस्येति मूलांते श्रीरामाय पाद्यं परिकल्पयामि नमः पाद्यं पादयमयोर्दद्यात्
तापत्रयहरं दिव्यं परमानंदलक्षणं तापत्रयविनिर्मुक्तं तवार्घ्यं कल्पयाम्यहं त्रिपादूर्ध्वः मूलांते
श्रीरामायेदमर्घ्यं स्वाहा इत्यर्घ्यं शिरसि दद्यात् वेदानामपि वेदाय देवानां देवतात्मने आचम
नं कल्पयामीश शुद्धानां शुद्धिहेतवे तस्माद्विराडमूलांते श्रीरामायेदमाचमनीयं स्वधा आचम
नं मुखे दद्यात् सर्वकालोपहीनाय परिपूर्णसुखात्मने मधुपर्कमिमं देव कल्पयामि प्रसीद मे
मूलांते श्रीरामाय मधुपर्कं स्वधा मधुपर्कं मुखे दद्यात् उच्छिष्टोप्यशुचिर्वापि यस्य स्मरणमात्रत
शुद्धिमाप्नोति तस्मै ते पुनराचमनीयकमिति पुनराचमनं दद्यात् स्नेहं गृहाण स्नेहेन लोकना
महायशः सर्वलोकेषु शुद्धात्मन्ददामि स्नेहमुत्तममिति स्नेहसमर्पणं ततः सुगंधद्रव्यादिनोद्व
र्तनं कारयित्वा उष्णोदकेन शुद्धांबुना वा स्नापयेत् अथ पंचामृतस्नानं आप्यायस्वेति पयः दधिक्रा
व्णा इति दधि घृतं मिमिक्षे इति घृतं मधुवाता इति मधु स्वादुः पवस्वेति शर्करा ततः परमानंदबो
धाब्धिनिमग्ननिजमूर्तये सांगोपांगमिदं स्नानं कल्पयाम्यहमीशते इति वर्णेन च शुद्धेन सर्वगं
धजलेन च सर्वोदकस्नानं ततः मूलेन शंखोदकेनाभिषिच्य पुनराचमनीयं यस्य शक्तित्र
येणेदं संप्रोतमखिलं जगत् यज्ञसूत्राय तस्मै ते यज्ञसूत्रं प्रकल्पयेत् तस्माद्यज्ञात्सर्वहुतः सं
तमिति उपवीतं स्वभावसुंदरांगाय नानाशक्त्याश्रयाय ते भूषणानि विचित्राणि कल्पयाम्यमर

विलेतिभूषणानि हिमांशुरेणसारागुरुकुंकुममहासुगंधकनिष्टयासमर्पयेत् परमानंदसौभा॰
ग्यपरिपूर्णदिगंतर गृहाणपरमंगंधंकृपयापरमेश्वर तस्माद्यज्ञात्सर्वहुतगंधमितिदत्वा
तुरीयवनसंभूतंनानागुणमनोहरं अमंदसौरभंपुष्पंगृह्यतामिदमुत्तममितिपठित्वा त॰
स्मादश्वाइति पुष्पंदत्वापुष्पांजलित्रयंदद्यात् ततश्चंदनाक्षतपुष्पादिभिः सीतांसकौशल्यां
पूजयेत् रामस्यजननीव्याप्तिरामात्मकमिदंजगत् अतस्त्वांपूजयिष्यामिलोकमातर्नमो॰
स्तुते: ततः नमोदशरथायेतिदशरथंसंपूज्यलक्ष्मणभरतशत्रुघ्नांश्चसंपूज्य हनुमंतंपू॰
जयेत् ततः आवरणपूजार्थमनुज्ञाप्यषडंगपूजनंकुर्यात् इतिप्रथमावरणं हनूमंतंच
सुग्रीवंभरतंसबिभीषणं लक्ष्मणंगदशत्रुघ्नात्जांबवंतंदलेष्विमान् द्वितीयं धृष्टिजयंतंवि
जयंसुराष्ट्रंराष्ट्रवर्द्धनं अकोपंधर्मपालंचसुमंतंदलमध्यतः तृतीयंदलाग्रेलोकपालांश्च
चतुर्थं तदस्त्राणिततोवहिः पंचमंततःपुष्पांजलिंदत्वावनस्पतिरसोपेतोगंधाढ्यःसुमनो॰
हरः आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां यस्तरुषष्ठ्यद्युरितिधूपंदद्यात् सुप्रकाशोम॰
हादीपःसर्वतस्तिमिरापहः सबाह्याभ्यंतरंज्योतिर्दीपोयंप्रतिगृह्यतां ब्राह्मणोस्येतिदीपं अथ
नैवेद्यं मूलनास्त्रायफडितेचसंप्रोक्ष्यचक्रमुद्रयाभिरक्ष्यमूलेनाष्टयाभिमंत्र्यधेनुमुद्रांचप्रदर्श्य
मूलेनाभिमंत्र्यदक्षिणहस्तेउदकमादाय शालीभक्तंशशिकरप्रशितंपायसंपूपसूपंलेह्यंपे॰
यंसुचोष्यंसितममृतफलंघारिकाद्यंसखाद्यं आज्यंप्राज्यंसमिज्यंनयनरुचिकरंराजिकैला
मरीचं स्वादीयःशाकराजीपरिकरममृताहारजोषंजुषस्व हेमपात्रेगतंदिव्यंपरमान्नंसुसं॰
स्कृतं पंचधाषड्रसोपेतंगृहाणपरमेश्वर चंद्रमामनसइतिनैवेद्यंनिवेद्य अमृतोपस्तरणम॰
सीतिजलंदत्वा प्राणायस्वाहेत्यादिपंचग्रासान्विकचोत्पलमुद्राभिः ग्राहयित्वा नमस्तेदेवदेवे
शसर्वतृप्तिकरंपरं अखंडानंदसंपूर्णंगृहाणजलमुत्तममिति मध्येपानीयंदत्वा मध्येजवनि
कांकृत्वाब्रह्मशाद्यैःपरितउरुभिःसूपविष्टैःसुमेतोलक्ष्म्यासिंजद्वलयकरपासादरंवीज्यमान:
नर्मक्रीडाप्रहसनपरीहासपंक्तिंभोक्तृंस्त्वंभोपात्रेकनकघटितेषड्रसंश्रीरमेश इतिपठित्वा
यश्चिंतारत्नकामद्रुमविभवभुवांमंडनमंडलानां सर्वासांसंपदांयन्निजगतिजगतांमंगलंमं॰
गलानां हेमामत्रस्यदूर्वादधिमधुलवणोहृद्यमुत्रार्यचार्थेनीराज्योरामचंद्रोदिनकरकरजि॰
द्रत्नदीपावलीभिः इतिध्यात्वायथाशक्तिजलंकृत्वा अमृतापिधानमसीत्युत्तरापोशनंदत्वा
विष्वक्सेनायनम इतिउच्छिष्टशेषंदत्वा हस्तौप्रक्षाल्यकरोद्वर्तनंदद्यात् इदंफलमितिफलं॰
पूगीफलमिति तांबूलंहिरण्यगर्भेतिदक्षिणांमुकुटाद्याभूषणानिछत्रचामरादीनायथिकल्प॰
महानीराजनंकुर्यात् नाभ्याआसीदितिनमस्कारान्समास्यासन्नितिप्रदक्षिणायज्ञेनेतिपुष्पां॰
जलिंचदत्वा भगवन्प्रसीदेतिनमस्कृत्यस्तुवीत ध्येयंसदापरिभवघ्नमभीष्टदोहंतीर्थास्पदंशि
वविरंचिनुतंशरण्यं भृत्यार्तिहंप्रणतपालभवाब्धिपोतंवंदेमहापुरुषतेचरणारविंदं त्यक्त्वा
सुदुस्त्यजसुरेप्सितराज्यलक्ष्मींधर्मिष्ठआर्यवचसायदगादरण्यं मायामृगंदयितयेप्सितम
न्वधावद्वंदेमहापुरुषतेचरणारविंदं २ श्रीरामचंद्ररघुपुंगवराजवर्यराजेंद्ररामरघुनायकरा
घवेश राजाधिराजरघुनंदनरामभद्रदासोहमद्यभवतःशरणागतोस्मि यस्यामलंनृपसद॰
स्सुयशोधुनापिगायंत्यघघ्नमृषयोदिगिभेंद्रपट्टं तन्नाकपालवसुपालकिरीटजुष्टपादांबु
जंरघुपतेःशरणंप्रपद्ये नमोब्रह्मण्यदेवायरामायाकुंठमेधसे उत्तमश्लोकधुर्यायन्यस्तदंडा
र्पितांघ्रये इंदीवरदलश्यामोरामोराजीवलोचनः वर्ततेमानसेयस्यतंसीतांप्रणमाम्यहं त

तः पुष्पांजलिं दत्वा कपिमुद्रां विधाय प्रार्थयेत् यदाश्रयात्सर्वगता हृताते ध्यानेन चेतः परमाहृताते
स्तुत्यानयावाक्यरता हृताते हममस्त्वसर्वं मम देवदेव अज्ञानादथवाज्ञानादशुभं यन्मया कृतं क्षं
तुमर्हसि तत्सर्वं दास्येन च गृहाण मां श्रीगोविंद मुकुंद केशव शिव श्रीवल्लभ श्रीनिधे श्रीवैकुं
ठ स्तुकुंठकुंठितखल स्वामिन्नकुंठोदय शुद्धध्येयपवित्रमूर्त पूर्तयवल श्रीमाधवायोक्षज अद्य
बद्धविधेहि नस्त्वपि धियं पीतांबरश्रीधर त्वमेव भक्तिजनयत्स्वमेव मातुरुदरात्समुत्पातितं भवा
ब्धेः किंचित्कृपालो न दयास्ति विन्मे चेतर्हि हा कर्मवशो हतोस्मि गजास्यादिमपंचास्य शक्ति सिं
हास्यरूपवान् समकृतेन सर्वात्मारामः प्रीणातु विष्णुः ततउत्तरार्घ्यं दद्यात् फलपुष्पादि
संपूर्णं गृहीत्वा शंखमुज्ज्वलं अशोकचूतकुसुमैर्युक्तं च कदलीदलैः अर्घ्यमंत्रः दशाननव
धार्थाय धर्मसंस्थापनाय च परित्राणाय साधूनां जातो रामः स्वयं हरिः गृहाणार्घ्यं मया दत्तं भ्रा
तृभिः सहितोनघेति ततः यामेयामे पुष्पांजलिं दत्वा यथाशक्ति पूजयित्वा रात्रौ जागरणं कुर्या
त् इति रामनवमीपूजाविधिः अथ दशमीकृत्यं ततः प्रातः समुत्थाय स्नानं संध्यादिकाः
क्रियाः समाप्य विधिवद्रामं पूजयेत्पूर्ववत्सुते ततो होमं प्रकुर्वीत मूलमंत्रेण मंत्रवित् पूर्वो
क्तपायसं कुंडे वा स्थंडिले वा समाहितः लौकिकाग्नौ विधानेन शतमष्टोत्तरं ततः साज्येन पाय
सेनैव स्मरन्राममनन्यधीः अथ विस्तरेण होमविधिः तत्र यजमानः कृतनित्यक्रियः शु
चिः परिहितवासाः दर्भपाणिः पीठोपविष्टः प्राङ्मुखो वाचं यतो द्विराचम्य प्राणानायम्य देश
कालौ संकीर्त्य रामनवमीव्रतांगसाज्यपायसहोमं करिष्ये इति संकल्प्य तदंगस्थंडिलादिक
रिष्ये इति च संकल्प्य शुद्धदेशे शुद्धगृहादेन्यामंचा चतुरंगुलोन्नतं अष्टादशांगुलविस्तृतं
होमानुसारेण तदधिकं वा मध्यान्नतं स्थंडिलं कुर्यात् स्थंडिलं गोमयेनोपलिप्य यज्ञियश
कलेन उदगायतां पश्चात्प्रागायतां ततस्तिस्रो मध्ये उदक्संस्थाः प्रागायताः प्रादेशसं
मितास्तिस्र रेखाः उल्लिख्य ताः स्तृत्वा शकलं उदगग्रं निधाय स्थंडिलमद्भिरभ्युक्ष्य शक
लमाग्नेय्यां निरस्याप उपस्पृश्य पतत्रसेजसेव मृन्मयेन वा पात्रद्वयेन संपुटीकृत्य सुवासि
न्याः श्रोत्रियागाराद्वा स्वगृहाद्वा समस्तं अग्निमाहृत्य स्थंडिलाद्बहिराग्नेय्यां निधाय प्रत्यग्ने रु
गणो गोतमोग्निस्त्रिष्टुप् जुष्टोदमूनानाग्नेपोवसन्नोग्निस्त्रिष्टुप् अग्न्यावाहने विनियो
गः एत्ययरहूतोनातिपोदादव्युः सुपुरणमभवानः अवतोत्वारोदसीविश्वमिन्वे यजाम
हे मोमनसायदेवान् जुष्टोदमूना अतिथिर्दुरोण इभं नो यज्ञमुपयाहि विद्वान् विश्वाअग्ने
अभियुजो विहत्या शत्रूयतामाभरा भोजनानि इत्यन्ते तैराविवास्य छादनं हत्वीकृत्य समस्त
व्याहृतीनां परमेष्ठी प्रजापतिः प्रजापतिर्बृहती अग्निप्रतिष्ठापने वि. ओं भूर्भुवः स्वरित्यात्मा
भिमुखं पाणिभ्यां घटस्थले वा स्ततनत्कर्मस्तत्त्वामकममग्निं प्रतिष्ठापयामीत्यग्निं प्रतिष्ठा
प्य प्रोल्लितं यमानि प्रतिपत्ये वेण उद्यमस्याग्नेर्वोध्यं ध्यायेद्देवं चत्वारि शृंगा वामदेवोग्निस्त्रिष्टुप्
अग्निमूर्तिध्याने वि. चत्वारि शृंगास्त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य त्रिधा बद्धो वृष
भो रोरवीति महो देवो मर्त्याँ आविवेश सप्तहस्तश्चतुःशृंगी सप्तजिह्वो द्विशीर्षकः त्रिपात्प्रस
न्नवदनः सुखासीनः शुचिस्मितः स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा बिभ्रद्दक्षिण
हस्तैस्तु शक्तिमन्नं स्रुचं स्रुवं तोमरं व्यंजनं वामे घृतपात्रं च धारयन् आत्माभिमुखमासीनए
वंरूपो हुताशनः एषो ह देवः प्रदिशोनु सर्वाः पूर्वो ह जातः स उ गर्भे अंतः स एव जातः स ज
निष्यमाणः प्रत्यंजनास्तिष्ठति सर्वतोमुखः अग्ने वैश्वानर शांडिल्यगोत्र मेषध्वज प्राङ्मुख

ममसमस्तसुखोभवेतिध्यात्वा ततोन्वादध्यात् क्रियमाणेरामनवमीव्रतोद्यापनहोमेदेवतापरिग्र-
हार्थमन्वाधानंकरिष्यइतिसंकल्प्य समिद्द्वयमादायास्मिन्नन्वाहितेग्नौजातवेदसमग्निमिध्मेन
प्रजापतिंप्रजापतिंवाघारदेवते आज्येनाग्नीषोमौचक्षुषीआज्येनात्रप्रधानंश्रीराममष्टोत्तर-
शतसंख्याकाभिः साज्यपायसाहुतिभिः सीतारामस्यजननींदशरथं लक्ष्मणंभरतंशत्रुघ्नं
हनूमन्तंहृदयंशिरःशिखांकवचं नेत्रंअस्त्रंसुग्रीवंभरतंविभीषणंलक्ष्मणं अंगदं शत्रुघ्नं जां-
बवंतं धृष्टिःजयंतं विजयं सुराष्ट्रं राष्ट्रवर्द्धनं अकोपंधर्मपालं सुमंतं इंद्रं अग्निं यमं नि-
र्ऋतिं वरुणं वायुं कुबेरं ईशानं ब्रह्माणं अनंतं वज्रं शक्तिं दंडं खड्गं पाशं अंकुशं ग-
दां शूलं पद्मं चक्रं एताः प्रधानदेवताः प्रत्येकमष्टाविंशतिसंख्याकाभिरष्टाभिर्वासाज्य-
पायसाहुतिभिः शेषेणस्विष्टकृतमग्निमिध्मसन्नहनेनरुद्रं अर्यमणमग्निंदेवान्विसं
अग्निंवायुं सूर्यंप्रजापतिंचएताःप्रायश्चित्तदेवताः आज्यद्रव्येणज्ञाताज्ञातदोषनिवर्हणा-
र्थंत्रिवारमग्निंसकृन्मरुतश्चाज्येनांगदेवताःप्रधानदेवताःसर्वाःसन्निहिताःसन्तुसंयोगेनकर्म-
णासद्योयक्ष्ये व्याहृतीनांपरमेष्ठीप्रजापतिः प्रजापतिर्बृहती अन्वाधानसमिद्धोमेवि ओं भू-
र्भुवःस्वःस्वाहा प्रजापतयइदं इध्माबर्हिषोःसन्नहनं तत्रायंक्रमः प्रादेशमात्रास्त्रिंशद्दर्भा-
न् रज्जुकरणार्थंगृहीत्वा तत्रद्वादशदर्भैः संधिन्नपवनारज्जुंप्रादक्षिण्येनकृत्वापुनरन्यां र-
ज्जुंएवंरज्जुद्वयंगृहीत्वातदुभयंसप्रादक्षिण्येनसमन्याप्यपुनरन्यांरज्जुंपूर्ववत्कृत्वा प्राग्दक्षि-
णेनत्रिवृतंसमस्याग्रेप्रदक्षिणं ग्रंथिंकृत्वा तांरज्जुमुदगग्रांवितत्यतत्रप्रादेशमात्रान्सुदृढप-
रिमितान्दर्भान्निधायतयारज्ज्वातान्दर्भान्वृतिरावेष्ट्य तद्रज्ज्वग्रेणतद्रज्जुमूलमकुटादेशान्त-
र्द्व्यग्रशेषंपूर्वमावेष्ट्यरज्ज्वाधस्ताद्द्वितीयान्येदर्भेसदायनतस्यपश्चाद्भागेउपरिनिदध्यात्
ततःपूर्ववदन्यांत्रिवृतींरज्जुंकृत्वोदगग्रांवितत्यतत्रपलाशखदिराद्यन्यतमयज्ञियवृक्षस्यहि-
प्रादेशप्रमाणंपंचदशसमिदात्मकमिध्मंप्रागग्रंनिधायतयारज्ज्वासकृदावध्यापननस-
पश्चाद्भागेउपरिनिधाय ततःअग्निमायतनाद्बहिः सोदकेनपाणिनाआरभ्यैशानपर्यंतंप-
रिसमूह्य ततः प्राच्यामुदगग्रैः दक्षिणस्यांप्रागग्रैः प्रतीच्यामुदग्रैरुदीच्यांप्रागग्रैर्दर्भैः परि-
स्तृणीयात् पूर्वपश्चिमपरिस्तरणमूलयोरुपरिदक्षिणपरिस्तरणाग्रयोरधस्तादुत्तरपरिस्त-
रणं एवमग्निंपरिस्तीर्यकांश्चिदुत्तरतोदर्भानास्तीर्याग्नेरीशानमारभ्यपूर्ववत्पर्युक्ष्य दर्भेषू-
त्तरतोपात्राण्यासादयेत् दक्षिणसव्यपाणिभ्यांक्रमेणचरुस्थालीप्रोक्षणीदर्वीस्रुचौ
प्रणीताज्यपात्रे इध्माबर्हिषीशूर्पंकृष्णाजिने उलूखलमुसले प्रोक्षणीपात्रंचआनीकृत्यप्रा-
देशमात्रेनिधायाद्भिः पूरयित्वांगुष्ठोपकनिष्ठिकाभ्यामसंस्पृष्टेगृहीत्वानिरुत्पूयपात्राण्यु-
त्तानानिकृत्वादर्भैर्विसंस्यन्निःप्रोक्षयेत् प्रणीतापात्रमग्नेः प्रत्यङ्निधायतत्रपवित्रेनिधायोदकं
पूरयित्वागंधपुष्पाक्षतान्विक्षिप्य अस्मिन्कर्मणिब्रह्माकृताकृतः कृतः यजमानस्तत्प्रणीतापात्रेणैना-
सिकासमीपेनीत्वोत्तरतोग्रेदर्भेषुनिधायअन्यैर्दर्भैराच्छादयेत् तेपवित्रेशूर्पेनिधायश्रीराममुद्दि-
श्यतूष्णींचतुरोमुष्टीन्निरुप्येतरदेवताभ्यः सीतायैत्वाजुष्टंनिर्वपामीत्यादिवत्तरश्चतुरोमुष्टी-
न्निर्वपेत् श्रीरामायत्वाजुष्टंप्रोक्षामीतितथैवसीतायैत्वाजुष्टंप्रोक्षामीतिमंत्रेणप्रतिदेवतंचतुरःसं-
प्रोक्ष्याग्नेःपश्चात्प्राग्ग्रीवेऊर्ध्वलोम्निकृष्णाजिनेउलूखलंनिधायोलूखलेनिरुप्यव्रीहीन्पत्नीमु-
सलेनत्रिरवहन्यात् त्रिःफलीकृतान्तंडुलान्पयसिश्रपयेत् असंस्कृताग्नौश्रपणंपत्नीस
दीनांचतण्डुलानिर्वापादीनांचनिवृत्तिः पर्यग्नि ... तेपवित्रेआज्यपात्रेनिधायाज्य

स्रुवं सः संस्थाप्य तत्र विलीनाज्यं निक्षिप्य ततः परिस्तरणाद्दक्षिणतरतोऽग्रेरंगारान् योद्धृत्य आज्यपा
त्रं निधाय वामहस्ते दर्भाग्रद्वयं धृत्वा ज्वलता दर्भोल्मुकेनावज्वाल्य दर्भाग्रद्वयं अग्रमष्टपर्वमात्रप्र
क्षालि तं तत्र विलिप्य ज्वलता तेनैवोल्मुकेन च हस्तहितं त्रिः पर्यग्निं कुर्यात् उल्मुकं निरस्या
प उपस्पृश्याज्यं कर्षन्निवोदगुद्वास्यांगारानग्नौ प्रक्षिपेत् ततोंगुष्ठोपकनिष्ठिकाभ्यां समुत्ता
नाभ्यां पाणिभ्यां पवित्रे अग्रसंहते धृत्वा सवितुष्ट्वा हिरण्यस्तूपः सविता पुरउष्णिक् आज्यस्योत्प
वने विः सवितुष्ट्वा प्रसवउत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः प्रागुत्पुनाति सकृ।
न्मंत्रेण द्विस्तूष्णीं पवित्रे अद्भिः प्रोक्ष्याग्नौ प्रहरेत् अग्नेः पश्चात्परिस्तरणाद्दक्षिणात्मनोग्रे अवंघ
व्यस्य विवहिः सन्नहनी रज्जुमुदगग्रां वितत्य तद्बहिः प्रागग्रमुदगपवर्गमास्तीर्य तत्राज्यस्थाप
नं कृत्वा स्रुक्स्रुवौ दर्वीं स्रुवावग्नौ प्रताप्य भूमौ दर्वीं निधाय स्रुवं विलं दर्भाग्रैः प्रागपवर्गं त्रिः संमृज्य।
स्रुवपृष्ठं दर्भाग्रैरन्नाभिमुखं त्रिः संमृज्य कुशमूलेन पृष्ठादारभ्य विलपर्यंतं दंडं त्रिः संमृज्याग्नौ।
संप्रताप्य हृत्वा उत्तरतः स्थापयेत् तथैव दर्वीं संमृज्य स्रुवावोत्तरतो निधाय तान्दर्भानद्भिः प्रोक्ष्या
ग्नौ प्रहरेत् ततः स्रुवेणाज्यं गृहीत्वा शृतं हविरभिघार्योदगुद्वास्याग्न्याज्ययोर्मध्येन नीत्वा दक्षि
णतद्विष्या पायसं पुनरभिघार्य सह स्रुवपर्णपत्रे पात्रांतरे वा धृत्वेदं श्रीरामायेत्यादि चतुर्थ्यंतां पृथ
गभिमंत्रणं गंधपुष्पाक्षतैरग्निमर्चयेत् विश्वानि श्वानि न इत्यनयोर्वसुश्रुतोग्निस्त्रिष्टुप् अग्न्यर्चने
विः विश्वानि नो दुर्गहा जातवेदः सिंधुं न नावा दुरितातिपर्षि अग्ने अत्रिवन्नमसा गृणानोऽस्मा
कं बोध्यविता तनूनां यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि जातवेदो यशो अस्मासु
धेहि प्रजाभिरग्ने अमृतत्वमश्याम् इत्यभ्यर्च्य प्रतिपादं प्रतिदिशं प्राचीरभ्यर्च्य यस्मै त्वं सुकृत इत्य
स्य वसुश्रुतोग्निस्त्रिष्टुप् अग्न्युपस्थाने विः यस्मै त्वं सुकृते जातवेद उलोकमग्ने कृणवः स्योनं अ
श्विनं सपुत्रिणं वीरवंतं गोमंतं रयिं नशते स्वस्ति इत्युपस्थायात्मानं चालंकृत्य हस्तं प्रक्षाल्येध्म
सन्नहनीरज्जुं तत्रैव निधायेध्ममादाय मूलमध्याग्रेष्वभिघार्येयं त इध्म इत्यस्य मंत्रस्य वामदेवो
जातवेदा अग्निस्त्रिष्टुप् इध्महवने विः इयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्द्धस्व चास्मान् प्रज
या पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहेति हुत्वा जातवेदसेग्नय इदं अथ स्रुवेणाज्यं गृही
त्वा परिस्तरणाद्वायव्यकोणमारभ्याग्नेयीपर्यंतं प्रजापतये इति मनसा स्मरन् स्वाहेत्युच्चार्य वि
च्छेदेनार्जवेनार्जवेनाज्यधारां प्रज्वलितेग्नौ इध्माग्नौ इध्मदारुणि स्नावयन् हुत्वा पुनराज्यं गृहीत्वा प
रिस्तरणान्नैर्ऋत्यकोणमारभ्येशानीपर्यंतं तथैव च हुत्वा उभयत्र प्रजापतय इदं न ममेति त्य
जेत् पुनराज्यमादायाग्नये स्वाहेत्युत्तरपार्श्वे पुनराज्यमादाय सोमाय स्वाहेत्यग्नेर्दक्षिणपार्श्वे
ग्नय इदं सोमायेदं न ममेति यथाक्रमेण त्यजेत् ततो यजमानः अष्टोत्तरशतसंख्याहुतिप
र्याप्तं साज्यपायसद्रव्यं श्रीरामाय तथा प्रतिदैवतं अष्टाविंशतिसंख्याहुतिपर्याप्तं साज्यपायस
द्रव्यं च तदर्थं तेभ्यः सीताप्रभृतिभ्यो न ममेति सांकल्पजलेन त्यागं कुर्यात् ततो राममंत्रस्य अ
ष्टस्मरणपूर्वकं तेनाष्टोत्तरशतसंख्यः साज्यपायसहोमः कार्यः कारणी योवाचार्यहस्तेन
दीक्षारहितस्तु पूजामिव होममपि वैदिकमंत्रेण वा कुर्यात् वैदिकपक्षे तद्विष्णोरिति मंत्रस्य मे
धातिथिर्विष्णुर्गायत्री रामनवमीव्रतांगसाज्यपायसहोमे विः तद्विष्णोः परमं पदं सदा पश्यंति
सूरयः दिवीव चक्षुराततं स्वाहेति होमः कार्यः द्वितीयपक्षे ॐ श्रीरामस्वाहेति ततः ॐ सीतायै स्वा
हेत्येवं प्रणवादिस्वाहाकारांतैर्मंत्रैः प्रत्येकमष्टाविंशतिसंख्याः साज्यपायसाज्याहुतीर्हुत्वा।
स्विष्टकृद्धोमं कुर्यात् दर्व्यामुपस्तीर्य हविष्य उत्तरार्द्धात् पूर्वापदानं ततो भूयो नूवाना भिर्दुल्ली

भिः सौविष्टकृतमवदाय स्थालीस्थितमनभिघार्य दर्व्यां द्विरभिघार्य यदस्येत्यस्य हिरण्यगर्भ ऋषिः
अग्निः स्विष्टकृद्देवता अतिधृतिश्छंदः स्विष्टकृद्धोमे विनियोगः यदस्य कर्मणोऽत्यरीरिचं यद्वा
न्यूनमिहाकरं अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टं सुहुतं करोतु मे अग्नये स्विष्टकृते सुहुतहुते।
सर्वप्रायश्चित्ताहुतीनां कामानां समर्द्धयित्रे सर्वान्नः कामान्समर्द्धय स्वाहा अग्नेरीशानदेशे जुहु-
यात् अग्नये स्विष्टकृत इदं पंचावत्तिनां प्रधानहोमे मध्यात्पूर्वार्द्धात्पश्चार्द्धाद्विरवद्यति स्विष्टकृतस्तू-
त्तरार्द्धात्पूर्वार्द्धाद्वा द्विरपनिरस्तरस्यमानं ततस्थमवंधनरज्जुं विसृज्य रुद्राय पशुपतये स्वाहेति
हुत्वा रुद्रायेदं न ममेति त्यक्त्वाप उपस्पृश्य स्रुवेणाज्यमादाय अयाश्चेत्यस्य विमदो अग्निः
पंक्तिः प्रायश्चित्त होमे विनियोगः अयाश्चाग्नेस्यनभिशस्तीश्च सत्यमित्वमया असि अयासा वयसा कृतो या-
सन्हव्यमूहिषे यानो धेहि भेषजं स्वाहा अग्नये अयस इदं अतो देवा इति द्वयोर्मेधातिथिराण्वो देवो
देवता द्वितीयाया विष्णुर्गायत्री प्रायश्चित्त होमे विनियोगः ओं अतो देवा अवंतु नो यतो विष्णुर्वि-
चक्रमे पृथिव्याः सप्तधामभिः स्वाहा देवेभ्य इदं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढम-
स्यपांसुरे स्वाहा विष्णव इदं व्यस्तसमस्तसप्तव्याहृतीनां विश्वामित्रजमदग्निभरद्वाजभार्गव-
ऋषयः अग्निवायुसूर्यप्रजापतयो देवताः गायत्र्युष्णिगनुष्टुब्बृहत्यश्छंदांसि प्रायश्चित्ताज्यहो-
मे विनियोगः ओं भूः स्वाहा अग्नय इदं ओं भुवः स्वाहा वायव इदं ओं स्वः स्वाहा सूर्याय इदं ओं भूर्भु-
वः स्वः स्वाहा प्रजापतय इदं ब्रह्माप्येताः समस्ताज्याहुतीर्जुहुयात् मंत्रविपर्यासादिनिमित्ते प्रमे-
दोषे अनाज्ञातमिति मंत्रस्य हिरण्यगर्भ ऋषिः अग्निर्देवतानुष्टुप्छंदः प्रायश्चित्ताज्यहोमे वि-
नियोगः अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथुः अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथं स्वाहा अग्नय इदं
पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथं स्वाहा अग्नय इदं
यत्पाकत्रेत्यस्य स्वस्त्यात्रेयोऽग्निस्त्रिष्टुप् प्रायश्चित्ताज्यहोमे वि॰ यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्व-
ते मर्त्यासः अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाँ ऋतुशो यजाति स्वाहा अग्नय इदं यद्वो देवा अ-
भितयामरुतस्त्रिष्टुप् प्रायश्चित्ताज्यहोमे वि॰ यद्वो देवा अतिपातयानि वाचा च प्रयुती देवहेलनं अ-
रायो अस्माँ अभिदुच्छुनायते न्यत्रास्मन्मरुतस्तन्निधेतन स्वाहा मरुद्भ्य इदं सर्वप्रायश्चित्तं करिष्ये भूर्-
भुवः स्वः स्वाहा प्रजापतय इदं ततो यजमानः अस्य कर्मणः संपूर्णतासिद्ध्यर्थं पूर्णाहुतिं हो-
ष्यामीति संकल्प्य द्वादशगृहीतेनाष्टगृहीतेन चतुर्गृहीतेन वाज्येन स्रुचं पूरयित्वा तदुपरि व-
स्त्रादियुतं चंदनादिभूषितं फलं निधाय यजमानान्वारब्धः आचार्यः स्विष्टकृत्पूर्णाहुतिं जुहुयात् स-
मुद्रादूर्मिरित्येकादशर्चस्य सूक्तस्य गौतमो वामदेव ऋषिः आद्यास्त्रिष्टुप् अंत्या जगती पूर्णाहुतिहोमे
वि॰ ओं समुद्रादूर्मिर्मधुमां उदारदुपांशुना सममृतत्वमानट् घृतस्य नाम गुह्यं यदस्ति जिह्वा देवा-
नाममृतस्य नाभिः वयं नाम प्रब्रवामा घृतस्यास्मिन्यज्ञे धारयामा नमोभिः उप ब्रह्मा शृणवच्छस्य-
मानं चतुः शृंगोऽवमीद्गौर एतत् चत्वारि शृंगा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य त्रिधा ब-
द्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्व-
विंदन् इंद्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः एता अर्षंति हृद्यात्समुद्राच्छतव्र-
जा रिपुणा नावचक्षे घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्य आसां सम्यक्स्रवंति सरि-
तो न धेना अंतर्हृदा मनसा पूयमानाः एते अर्षंत्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः सिं-
धोरिव प्राध्वने शूघनासो वातप्रमियः पतयंति यह्वाः घृतस्य धारा अरुषो न वाजी काष्ठा भिंदन्नू-
र्मिभिः पिन्वमानः अभि प्रवंत समनेव योषाः कल्याण्यः स्मयमानासो अग्निं घृतस्य धाराः समि-

यो नः संततात्नुषाणो हर्यति जातवेदाः कन्याइव वहतुमेतवाउ अञ्ज्यं जाना अभिचाकशीमि यत्र सो
मः सूयते यत्र यज्ञो घृतस्य धारा अभितत्पवंते अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवंते धामंते विश्वंभुवनमधिश्रितमंतः समुद्रे हृद्यंतरायुषि
अपामनीके समिथे यदाभृतस्तदश्याम मधुमंतं तत उर्मिं स्वाहा अपरिमितधारां सततादव्यशेषेण स्रावं।
शेषं हुत्वा अयं इदं न ममेत्युक्त्वा विज्योतिषेत्यस्य जातो बृहदुक्थ ऋषिः अग्निर्देवता त्रिष्टुप्छन्दः होमे विनि॰
वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृं
गे रक्षसे विनिक्षे स्वाहा अनेनावशिष्टं सर्वं हुत्वा अय इदं न ममेत्युक्त्वा विश्वेभ्यो देवेभ्यः स्वाहेति।
मंत्रावं हुत्वा विश्वेभ्यो देवेभ्य इदं अथ पूर्वमासादितं पूर्णपात्रं अग्नीशानी बर्हिषि दक्षिणपाणिना नि॰
धाय तत्र गंगादिपुण्यनदीः स्मृत्वा दक्षिणपाणिनाभिमृशन् पूर्णमसि पूर्णं मे भूयाः सुपूर्णम
सि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः अक्षितिरसि मामेक्षा इति जपित्वा
प्राच्यादि पंचदिक्षु कुशाग्रैः प्रादक्षिण्यक्रमेण उदकमुत्क्षिपेत् प्राच्यां दिशि देवा ऋत्विजो मार्जयं
तां दक्षिणस्यां दिशि मासाः पितरो मार्जयंतां प्रतीच्यां दिशि गृहाः पशवो मार्जयंतां उदीच्यां दि
श्याप ओषधयो वनस्पतयो मार्जयंतां ऊर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयंतां ततः स्व
शिरसि कुशाग्रैरभिषिंचेदेभिर्मंत्रैः आपो अस्मानित्यस्य देवश्रवा आपस्त्रिष्टुप् मार्जने विनियो
गः आपो अस्मान्मातरः शुंधयंतु घृतेन नो घृतप्वः पुनंतु विश्वं हि रिप्रं प्रवहंति देवीरुदिदाभ्यः
शुचिरापूत एमि इदमाप इत्यस्य सिंधुद्वीप आपोनुष्टुप् मार्जने विनि॰ इदमापः प्रवहत यत्किंचि
दुरितं मयि यद्वाहमभिदुद्रोह यद्वा शेप उतानृतं सुमित्रान आप ओषधयः संतु दुर्मित्रास्तस्मै
संतु योस्मान्द्वेष्टि यं च वयं द्विष्मः ततो यजमानो वामपार्श्वस्थितपत्न्यंजलौ स्ववामकरेण पू
र्णपात्रस्थजलं माहं प्रजां परासिचं या नः सयावरी स्थन समुद्रे वो निनयानि स्वं पाथो अपीथ
इत्येकं ऋक्त्वा प्रत्यङ्मुखं निषिच्य तज्जलं बर्हिषि निषिंचेत् नाआपः समुद्रं गच्छंतीति ध्यात्वा
ततो यजमानोऽग्रेर्वायव्यदेशे स्थितः ॐ च मे स्वरश्च मे यज्ञोप च ते नमश्च यत्ते न्यूनं तस्मै त उप यज्ञेति
रिक्तं तस्मै ते नम इत्युपस्थाय परिस्तरणानि विसृज्य परिसमूह्य पर्युक्ष्य विश्वानि व इत्यग्निमलं
कृत्य मानस्तोके कुत्सो रुद्रो जगती विभूतिग्रहणे वि॰ मानस्तोके तनये मा न आयुषि मा नो गो
षु मा नो अश्वेषु रीरिषः मा नो वीरान्रुद्र भामिनो वधीर्हविष्मंतः सदमित्त्वा हवामहे इत्यने
न विभूतिं गृहीत्वा ॐ त्र्यायुषं जमदग्नेरिति ललाटे कश्यपस्य त्र्यायुषमिति कंठे अगस्त्यस्य त्र्यायुष
मिति नाभौ यद्देवानां त्र्यायुषमिति दक्षिणस्कंधे तन्मे अस्तु त्र्यायुषमिति वामस्कंधे शतायुष
मिति शिरसि ततः स्थापितानां देवतानां उत्तरपूजनं कृत्वाचार्यं गंधादिभिः संपूज्य प्रतिमादानं
तस्मै कुर्यात् आचार्याय दक्षिणां ब्राह्मणभोजनं भूयसीं च दत्वा यस्य स्मृत्येति पठित्वा कर्मस
मर्पणं कुर्यादिति इति होमविधिः समाप्तः ॥ ततो भक्त्या सुसंतोष्य आचार्यं पूजयेन्मु
कुंडलाभ्यां सुरत्नाभ्यां मंगलीयैरनेकधा गंधपुष्पाक्षतैर्वस्त्रैर्विचित्रैः सुमनोहरैः ततो राम
स्मरन्दद्यादेतं मंत्रमुदीरयन् इमां स्वर्णमयीं रामप्रतिमां समलंकृतां चित्रवस्त्रयुगच्छन्नां रामं
हं राघवाय ते श्रीरामप्रीतये दास्ये तुष्टो भवतु राघवः इति दत्वा विधानेन दद्याद्दक्षिणां च वै
अन्येभ्योऽपि यथाम्नायं गोहिरण्यादि शक्तितः दद्याद्दासीयुगं धान्यं यथाविभवमादरात् ब्राह्म
णैः सह भुंजीत तेभ्यो दद्याच्च दक्षिणां ततः पारणं कुर्यात् इयं च पारणा यदा पूर्वविद्धायामु
पवासस्तदापि नवमीमतिक्रम्य दशम्यां कर्तव्या दशम्यामेव पारणमित्येवकारेणान्ययोगव्य

यै ९४ इन्द्राण्यै नमः ९५ ओं भैरवाय नमः एताभिर्वेणसहपूज्याः इति मातृनवमीव्रतं ॥ चै
त्रशुक्लदशम्यां धर्मराजपूजा नारदीये चैत्रशुक्लदशम्यां तु धर्मराजं प्रपूजयेत् तत्कालसंभवैः पुष्पैः
फलैर्गन्धादिभिस्तथा सोपवासश्चैकभक्तो पूजयित्वा द्विजोत्तमान् चतुर्दश ततस्तेभ्यः शक्त्या दद्यात्तु
दक्षिणाम् एवं यः कुरुते विप्र धर्मराजस्य पूजनं स धर्मस्याज्ञया गच्छेद्देवैः साधर्म्यमच्युतः धर्मरा।
जमुद्दिश्य चतुर्दश विप्राणां पूजा कार्या तत्र मंत्रः यमाय धर्मराजाय मृत्यवे चांतकाय च वैवस्वता
य कालाय सर्वभूतक्षयाय च ओं उदुंबराय नीलाय दध्नाय परमेष्ठिने वृकोदराय चित्राय चित्रगुप्ताय वै
नमः पाशहस्ताय देवेश सपरिवाराय ते नमः अथ चैत्रशुक्लैकादश्यां दोलोत्सव उक्तो ब्राह्मे चैत्र
मासस्य शुक्लायामेकादश्यां तु वैष्णवैः आंदोलनीयो देवेशः सलक्ष्मीको महोत्सवैः अस्यां नृसिंह
परिचर्यायामपि आरूढे विशेषः चैत्रे मासि सिते पक्षे दक्षिणाभिमुखं हरिं मासमादौ समभ्यर्च्य मासमं।
दोलयेत्कलौ दोलारूढश्च भगवानवश्यं सालोक्यार्थिभिः पापक्षयार्थिभिश्चालोकनीयः तथा चोक्तं तत्रै
व दोलासंस्थं च ये कृष्णं पश्यंति मधुमाधवे क्रीडंति विष्णुना सार्द्धं वैकुंठे देववंदिताः दोलारूढं च पश्यं
ति कृष्णं कलिमलापहं अपराधसहस्रैस्तु मुक्तास्ते चूर्णिते कृते चूर्णिते आंदोलने दोलारूढस्य पुर
तो जागरणमपि कुर्यात् तथा च तत्रैव दोलास्थितस्य कृष्णस्य येऽग्रे कुर्वंति जागरं सर्वपुण्यफलावाप्ति
र्निमेषैकेण जायते पद्मपुराणे वर्णितयत्तत्फलं देवरटिकात्तचतुर्गुणः प्रहरः कोटिगुणितत्र नः सं
ख्यातत्र्यष्यते इयं चैकादशी कामदा पद्मलक्षिताख्याच तदुक्तं नारदीये चैत्रस्य शुक्लैकादश्यां सो
पवासो जितेंद्रियः कृत्वा च नियमान्सर्वान्वत्स माणान् दिनत्रये द्वादश्यामर्चयेद्भक्त्या वासुदेवं सना
तनम् उपचारैः षोडशभिस्ततः संभोज्य वाडवान् दत्वा च दक्षिणां तेभ्यो विसृज्याश्नीत च स्वयं इयं त
कामदा नाम सर्वपातकनाशिनी भुक्तिमुक्तिप्रदा विप्र भक्त्या सम्यगुपोषिता अथास्याः कथा वाराह
पुराणे पद्मपुराणे च युधिष्ठिर उवाच वासुदेव नमस्तुभ्यं कथयस्व ममाग्रतः चैत्रस्य शुक्लपक्षे तु का
नामैकादशी भवेत् श्रीकृष्ण उवाच शृणुष्वैकमना राजन्कथामेतां पुरातनीं वसिष्ठो यामकथयत्पुरा
दिलीपाय पृच्छते दिलीप उवाच भगवन्श्रोतुमिच्छामि कथयस्व ममाग्रतः चैत्रे मासि सिते पक्षे किं
नामैकादशी भवेत् को देवः को विधिस्तस्या एतन्मे वद विस्तरात् वसिष्ठ उवाच शृणुष्व कथयिष्यामि व्र
तानामुत्तमं व्रतं पापेंधनचयं शुष्कं माईदैवत्रं जन्मजं सकलं दहते सोयं हरिवासरपावकः चैत्रस्य
विशदे पक्षे तिथिरेकादशी तु या ज्ञेया कामप्रदा नाम्ना सा महापापनाशिनी शृणु राजन्कथां दिव्यां
पापघ्नीं श्रुतिसौख्यदां पुरा नागपुरे रम्ये हेमरत्नविभूषिते पुंडरीकमुखा नागा निवसंति मदोत्क
टाः नाम्ना तु पुंडरीकाख्यो राजा राज्यं चकार ह गंधर्वैरप्सरोभिश्च सेव्यमानो दिवानिशं वराप्स
रापि ललिता पद्मरागोपशोभिता ललितोपि स गंधर्वो युवा कामी मदोत्कटः उभौ रागेण संदृष्टौ दंप
ती काममोहितौ रेमाते तौ स्वगृहे धनधान्यसमाकुले ललिताचित्तसंलीनो ह्यासीत्स ललितः स
दा ललितस्य च स्वांते सा लग्नासीह्ललिताभृशं पुंडरीकादयो नागा वर्ततेसदसि स्फुटं ललित।
स्तं तु रुष्टैवकु कृत्तांगानमुत्तमं गानं कुर्वन्स ललितः सस्मार ललितां पुनः कामबाणवशं प्राप्त
पुंडरीकस्य चाग्रतः गानं कुर्वन्स स्खलितो ललितामेव संस्मरन् गंधर्वकुलरत्नं स सर्वविद्यावि
शारदः तस्य भावं तु तत्रस्थः कर्कोटो ज्ञातवांस्तदा कर्कोट उवाच शृणु त्वं पुंडरीकाख्य मम वाक्य
मुत्तमं ललितस्य त्वया भावो विज्ञातो वा न वा प्रभो कर्कोटकवचः श्रुत्वा पुंडरीको महोरगः ल
लितं भर्त्सयामास ललितागतमानसं रौद्रो भूत्स तदा नागो दुर्निरीक्ष्यो भयंकरः शशाप ललितं
तदा कोपसंरक्तलोचनः राक्षसो भव दुर्बुद्धे क्रव्यादः पुरुषादकः यतः पत्नीवशो जातो गायमानो

समागतः ललितायावशंशापः किन्त्वपुनस्त्वयाकृतं वचनात्तस्यनागस्य राक्षसः सोभवेत्क्षणा
त् रौद्राननोविरूपाक्षोदीर्घकायोभयंकरः योजनायतकायश्च कंधरासमुखस्तथा चंद्रसूर्यनि
भाक्षश्चपर्वतोपममस्तकः गुहाप्रतिमगंभीरनासारंध्रभयंकरः चपलोष्ठस्तीक्ष्णदंतो योजनाया
मविग्रहः ईदृशोराक्षसोभूत्वाकृच्छ्रेणविपिनेगतः चिंतयामासललितापतिंराक्षसविग्रहं ध्या
यमानात्मनैवाभून्महादुःखाब्धिमध्यगा किंकरोमिक्वगच्छामिपतिःशापेनमोहितः इतिसंचिं
त्यललितासौख्यंनलभतेस्मसा राक्षसःसविरूपाक्षोनागराक्षस्योजितः भ्राम्यमाणोदिवारा
त्रंनसुखंलभतेस्मसः ललितातेनवियोगार्ताचिंतयंतीपतिंशुचः बभ्रामविपिनेघोरेरुदंतीकरु
णःशनैः एकदातुभ्रमंतीसाविंध्यपर्वतमस्तके रम्यमाश्रममासाद्यददर्शतपसिस्थितं शृंगि
संज्ञंमुनिंतत्रसर्वभूतहितेरतं दृष्ट्वातंमुनिंतेचतत्पार्श्वंसाययौशनैः मुनिंदृष्ट्वाथतस्याग्रेवि
नयावनताभवत् तामुवाचमुनिःशृंगीकात्वंकस्यसुताशुभे किमर्थमिहसंप्राप्ताकथयस्वव
रानने ललितोवाच गंधर्वीवीरधन्वाख्योयोस्तितस्यसुतास्म्यहं ललिताख्यामुनिश्रेष्ठयदर्थमि
हचागता पतिर्मेललितोनाम्नामदासक्तमनाःकुधीः पुंडरीकाख्यनागेनशप्तोराक्षसतांगतः
तदाप्रभृतिमेब्रह्मन्नसुखंजायतेक्वचित् तद्व्रतंमुनिशार्दूलकथयस्वप्रसादतः यस्यप्रभावा
त्तस्यापिराक्षसत्वंप्रयास्यति मुनिरुवाच चैत्रमासस्यचाद्यैवशुक्लपक्षेहिजायते नाम्नासाप
मललिताकथितैकादशीबुधैः त्वयासैकादशीभद्रेक्रियतांपतिमुक्तये कृत्वाचतत्पुण्यफ
लंसंपूर्णंतस्यदीयतां दत्तेपुण्येक्षणादेवप्रेतत्वंयास्यतिक्षयं इतिश्रुत्वामुनेर्वाक्यंविनयावनता
स्थिता अकरोद्विधिनासम्यग्ललितैकादशीव्रतं विप्रस्यैवसमीपेतुमुरारेरग्रतोमुदा इतिवा
क्यंजगादासौपत्युःसंतारणायच मयाचयत्कृतंपुण्यंपत्येदत्तंतदच्युत तेनगोविंदमेपत्यूरा
क्षसत्वंप्रणश्यतु दत्तेपुण्येतयायम्ललितैकादशीभवे इतिश्रुत्वातुराजेंद्रकर्तव्यासाप्रय
त्नतः राक्षसत्वंगतंतस्यगंधर्वत्वमभूत्पुनः ततस्तौदंपतीहृष्टौललितोललितातदा पूर्वरूपंपु
नःप्राप्तौविमानवरमास्थितौ गतौस्वर्गंतदापूर्वललितैकादशीव्रतात् इतिमत्वामहाराजकर्त
व्यासामहाफला लोकानांतुहितार्थायकथितासामयातव इहलोकेत्रिवर्गश्चपरलोकेचमुक्ति
दा ब्रह्महत्यादिपापघ्नीमहाकल्याणकारिणी कुरुत्वंराजशार्दूलदिलीपैकादशीव्रतं श्री
कृष्णउवाच दिलीपोपितदाचक्रेस्वपौरैर्व्रतमुत्तमम् वसिष्ठवचनात्सौख्यंप्राप्यलेभेपरंपदम् ॥

इतिश्रीवाराहपुराणेचैत्रशुक्लाकामदैकादशीव्रतकथा ॥

अस्यामेवैकादश्यांस्त्रीभीरुक्मिणीयात्राकार्या तदुक्तंनिर्णयामृते ब्रह्मपुराणे एकादश्यांतु
तस्त्रीभिर्देवीपूज्याचरुक्मिणी धूपालंकारधूपान्नवस्त्रब्राह्मणतर्पणैरिति ॥ अस्यामेवैका
दश्यामपराह्णेवास्तुपूजाकार्या तथाचोक्तंनिर्णयामृते पद्मपुराणे तत्रापराह्णेवास्तुश्चवं
शानांवंशधारकः अर्घ्यैर्माल्यैश्चवस्त्रैश्चपूज्योरोगैःसुचित्रितैरिति अथात्रसंक्षेपतोवास्तुपूजा
विधिक्रमसमतानुसारेण तत्रादौअर्घ्यंसंस्थाप्याचम्यप्राणानायम्य ॐमद्येकादश्यांतिथौ आत्मनोवं
शानांवंश वृद्धयेवास्तुमंडलेवास्तुपूजनंकरिष्ये प्रणवस्यब्रह्माऋषिर्गायत्रीछंदोग्निः परमा
देवता व्याहृतीनांप्रजापतिऋषिर्गायत्र्युष्णिगनुष्टुप्छंदांस्यग्निर्वायुसूर्योदेवता वास्तुमंडलेप्र
त्यावाहनेविनियोगः ॐभूर्भुवःस्वःशिखिन्निहागच्छ इतिपीतपदेईशानेशिखिनेनमः १
पीतपदेपर्जन्यायनमः २ पीतपदे जयंताय ३ पीतपदे कुलिशायुधायपूर्वे ४ रक्ते सूर्याय
५ श्वेते सत्याय ६ कृष्णे भृशाय ७ आग्नेये धूम्रेवायवे ८ रक्ते पूष्णे ९ पुनारक्तेवितथाय

पीते गृहक्षताय॰ १२ कृष्णपदे यमाय॰ १३ दक्षिणे रक्ते गंधर्वाय॰ १४ कृष्णे भृंगराजाय॰ १५ पीते मृगा
य॰ १६ वायव्ये रक्ते पितृगणाय॰ १७ पुनारक्ते दौवारिकाय॰ १८ शुक्ले सुग्रीवाय॰ १९ रक्ते पुष्पदंताय॰ २०
पश्चिमे श्वेते वरुणाय॰ २१ पीते असुराय॰ २२ कृष्णे शोषाय॰ २३ पीते पापयक्ष्मणे॰ २४ वायव्ये। रक्ते
रोगाय॰ २५ पुनारक्ते अये॰ २६ पुनारक्ते मुख्याय॰ कृष्णे भल्लाटाय॰ २७ शुक्ले॰ उत्तरे सोमाय॰ २९ कृ
ष्णे सर्पाय॰ ३॰ पीते अदित्यै॰ ३१ पुनः पीते दित्यै॰ ३२ पर्जन्याय॰ श्वेते अपाय॰ ३३ जयंताय॰ श्वेते आ
पवत्साय॰ ३४ कुलिशाय॰ कृष्णे अर्यम्णे॰ ३५ सत्याय॰ रक्ते सवित्रे॰ ३६ भृशाय॰ शुक्ले सावित्राय॰ ३०
सावित्राय॰ शुक्ले विवस्वते॰ ३८ नभसा दथ॰ श्वेते जयंताय॰ ३९ ततउत्तरे रक्ते विबुधाधिपाय॰ ४॰ त
तोप्युत्तरे श्वेते मित्राय॰ ४१ ततोप्युत्तरे रक्ते राजयक्ष्मणे॰ ४२ ततोप्युत्तरे रक्ते रुद्राय॰ ४३ तदुपरि
रक्ते पृथ्वीधराय नमः ४४ मध्ये श्वेते पीते वा ब्रह्मणे नमः ४५ ततो बाह्ये ईशानकोणे धूम्रे चरक्यै
नमः ४६ पूर्वे रक्ते स्कंदाय नमः ४७ आग्नेये रक्तपदे विदारिकायै॰ ४८ दक्षिणे कृष्णपदे अर्यम्णे
नमः ४९ नैर्ऋत्ये हरितपदे पूतनायै नमः ५॰ पश्चिमे रक्तपदे जंभकाय नमः ५१ वायव्ये कृष्ण
पदे पापराक्षस्यै नमः ५२ उत्तरे पीतपदे पिलिपिच्छाय नमः ५३ ततो बाह्यतः पूर्वकं सार्वभौति
कबलिं दद्यात् तद्यथा ॐ भूतेभ्यो नमः ॐ पितृभ्यो नमः ॐ राक्षसेभ्यो नमः ॐ पिशाचेभ्यो नमः
ॐ मातृभ्यो नमः ॐ गणेशेभ्यो नमः ॐ दिव्यांतरिक्षेभ्यो भूतेभ्यो नमः देवा देवा मुनीद्रश्च ये चान्ये
बलिकांक्षिणः ते बलिं प्रतिगृह्णंतु तुष्टा यांतु स्वमंदिरं ततः प्रार्थना पूज्योसि त्रिषु लोकेषु यज्ञर
क्षादिहेतवे त्वां विना न हि सिद्धिः स्यादिति यज्ञदानान्यनेकशः १ अयोने भगवन्भर्गललाटस्वेदसंभव गृ
हाणार्घ्यं मया दत्तं वास्तो स्वामिन्नमोस्तु ते २ मंत्रहीनं क्रियाहीनं भक्तिश्रद्धाविवर्जितं यत्पूजितं मया
देव परिपूर्णं तदस्तु मे ३ नमस्ते देवदेवेश सर्वविघ्नहरो भव शांतिं कुरु सुखं देहि सर्वान्कामांश्च
देहि मे ४ इति वास्तुपूजनं ग्रहयागसहितं कार्यम् गंधादिपूजनं पायसादिबलिदानं ॥

इति चैत्रशुक्लैकादश्यां ब्रह्मपुराणोक्तं वास्तुपूजनं अस्यामेवैकादश्यां दमनोत्सवः कार्यः तदु
क्तं मदरत्ने निर्णयामृते च ब्रह्मपुराणे चैत्रमासस्य शुक्लायामित्युपक्रम्य दमनेनार्चयित्वाथ
रात्रौ जागरणं चरेदिति नृसिंहपरिचर्यायामप्येवं रामार्चनचंद्रिकायां तु द्वादश्यां दमनोत्सवः का
र्य इत्युक्तं द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवः बौधायनादिभिः प्रोक्तः कर्तव्यः प्रतिवत्सरं
तत्र स्वीयतिथिषु वह्न्यादेर्दमनार्पणं वह्न्यादयो देवता रत्नमालायां वह्निर्विरिंचो गिरिजा
गणेशः फणी विशाखो दिनकृन्महेशः दुर्गांतको विष्णुहरी स्मरश्च शर्वः शशी चेति क्रमेण उ
क्ताः अत्र देवताविशेषेण तिथिविशेषो ज्योतिर्निबंधे भविष्योत्तरेपि चतुर्थी गणनाथस्य दु
र्गाया नवमी तथा विष्णोस्तु नवमी पुण्या तथैव द्वादशी शुभा त्रयोदशी तु तस्यैव श्रीशारण्यनिवा
सिनः भैरवस्यैक वीराया ज्ञेया भूता कलिप्रदा भूता चतुर्दशी पूर्णिमा सर्वदेवानां श्रेष्ठा दमन
कार्पणे इति प्रकरणे प्रत्यवायस्तत्रैव पद्मपुराणे ऊर्जे व्रतं मधौ दोलां श्रावणे तंतुपूजनं चैत्रे
च दमनारोपमकुर्वाणो व्रजत्यधः इति शिवभक्त्यादिभिस्तु दर्शादौ कार्यं तत्र स्वात्स्वात्मति
थिष्वित्युक्तेः अथागमदीक्षावतो दमनकारोपणविधिः रामार्चनचंद्रिकायामुक्तः अस्य प्रयो
गः प्रातःस्नानादि नित्यं निर्वर्त्य प्रार्थनां कुर्यात् क्रियालोपविघातार्थं यत्त्वयादिहितं विभो न
मे विघ्नो भवेदत्र कुरु नाथ दयां मयि सर्वथा सर्वदा विष्णो मम त्वं परमा गतिः उपवासेन त्वां देव
तोषयामि जगत्पते काम क्रोधादयो ह्येते न मे स्युर्व्रतघातकाः अद्य प्रभृति देवेश यावद्वै शेषि
कं दिनं तावद्रक्षा त्वया कार्या सर्वस्यास्य नमोस्तु ते एवं विज्ञाप्य देवेशं गुरुं तत्राप्रपूज्य च ततः

संपूज्य विधिवद्देवेशं प्रयतः शुचिः गच्छेद्दमनकारामं एकादश्यां सुशोभने क्रमेणागायतीकृत्य पूज
येच्चंदनादिना नेष्यामि रामपूजार्थमिति संप्रार्थ्य तं नमेत् सांवत्सरिकपूजायाः परिपूर्णत्वसिद्धये द
मनत्वं समायाहि त्वमस्य च नमोस्तु ते विघ्नकार्यसमुद्रे प्यच्छेतव्योसि शिवाज्ञयेति दमनमामंत्र्ययेत्
अन्यदेवतापूजने तन्नामात्र ऊहनीयं उत्पाट्य पंचगव्येन प्रोक्ष्य प्रक्षाल्य वारिणा ततोऽशोकमूले देवाग्रे
स्थंडिलं कृत्वा तदुपरि कलशे घटे तत्पुंजे वा अशोकवृक्षकालवसंतकामान् क्रमेण चतुर्भिर्मंत्रैः प्रा
णप्रतिष्ठापूर्वकं प्रपूजयेत् तत्र अशोकाय नमस्तुभ्यं कामस्त्रीशोकनाशन शोकार्तिहर मे नित्यमानं
दं जनय स्वमे कालपूजामंत्रः ब्रह्मादिकल्पपर्यंतः कालरूपो महाबलः कलते चैव यः सर्वं तस्मै का
लात्मने नमः वसंतपूजामंत्रः वसंताय नमस्तुभ्यं वृक्षगुल्मलताश्रय सहस्रसुखसंवाह कामरूप
नमोस्तु ते तदनंतरं कामपूजामंत्रः नमोस्तु पुष्पबाणाय जगदाह्लादकारिणे मन्मथाय जगन्ने
त्ररतिप्रीतिप्रियाय ते इति दमनमुपस्थाय कामभस्मसमुद्भूत रतिबाष्पपरिप्लुत ऋषिगंधर्वदेवा
दिविमोहक नमोस्तु ते इति संगृह्य दमनं पूजयेन्मनुनामुना नमोस्त्विति पूर्वोक्तमंत्रेण दमनं संपूज्य
तस्मिन्दमने रक्तवस्त्राभरणमाल्यानुलेपनं वामदक्षिणयो रतिप्रीतियुतं पाशांकुशेक्षुचापबाण
धरं कामदेवं ध्यात्वा प्राणप्रतिष्ठापूर्वकं क्लीं कामदेवाय नम इति मंत्रेण गंधादिभिः पंचोपचारैः
संपूज्य कामदेवस्य वामतो रतिं गौरवर्णां रक्तवस्त्रपरिधानां सर्वाभरणभूषितां पद्मद्वयकरां ध्या
त्वा श्रीं श्रीं श्रीं क्रौं रत्यै नमः इति मंत्रेण गंधादिभिः संपूज्य कामस्य दक्षिणभागे प्रीतिं श्यामव
र्णां सर्वाभरणभूषितां रक्तवस्त्रपरीधानां तांबूलकरां ध्यात्वा श्रीं श्रीं श्रीं क्रौं प्रीत्यै नम इति मंत्रे
ण पंचोपचारैः संपूज्य पूर्वोक्त नमोस्तु पुष्पबाणायेत्यनेन कामप्रार्थनां कुर्यात् ततो दमनस्य भा
गद्वयं कृत्वैकस्मिन्भागे ॐ क्लीं कामाय नम इति मंत्रेण दमनं संपूज्य द्वितीयभागे दमनाय न
म इति दमनं संपूज्य नवे पटले निधाय धौतेन वाससाच्छाद्य घंटाध्वनिपुरुषसूक्तादिस्वनैः
स्वगृहमानयेत् इति दमनस्य गृहानयनं ततो रामाग्रे पुरतः स्थंडिलमुपलिप्य तत्राष्टदलं
कृत्वा सितकृष्णपीतरक्तवर्णैः संपूर्य तद्बहिश्चतुःकोणं कृत्वा पीतवर्णेन संपूर्य तद्बहिर्वर्तुल
मंडलत्रयं विधाय श्वेतरक्तपीतवर्णैः संपूर्य तद्बहिश्चतुष्कोणं संपाद्य रक्तवर्णेन संपूरयेत् तदे
तत्सार्वकामिकं मंडलं यद्वा सर्वतोभद्रमुद्धरेत् उपरि पंचवर्णवितानं कुर्यात् ततो देवस्य म
हापूजनं कृत्वा पूर्वोक्तमंडले कलशं संस्थाप्य तदुपरि दमनाधिवासनं कुर्यात् तत्र मंत्रः पू
जार्थं देवदेवस्य विष्णोर्लक्ष्मीपतेः प्रभोः दमन त्वमिहागच्छ सान्निध्यं कुरु मे नमः ततो दम
नकपूजां कृत्वा क्लीं कामदेवाय नमः इति कामं संपूज्य श्रीं श्रीं श्रीं क्रौं रत्यै नम इति रतिं श्रीं श्रीं श्रीं
क्रौं प्रीत्यै नम इति प्रीतिं च पंचोपचारैः संपूज्य षडंगपूजां कुर्यात् क्लां हृदयाय नमः क्लीं शिरसे स्वाहा
क्लूं शिखायै वषट् क्लैं कवचाय हुं क्लौं नेत्राभ्यां वौषट् क्लः अस्त्राय फट् ततोष्टदलेषु देवाग्रमार
भ्य प्रादक्षिण्येन भस्मशरीराय नमः १ अनंगाय नमः २ मन्मथाय नमः ३ कामाय नमः ४ वसं
तसखाय नमः ५ स्मराय नमः ६ इक्षुचापाय नमः ७ पुष्पास्त्राय नमः ८ इति संपूज्य चतुर
स्रे इंद्रादीन् लोकपालान् वज्रादीन्यायुधानि च संपूज्य पुनः कामं तन्मंत्रेणाभ्यर्च्य प्रणम्य ॐ स
स्वरूपाय विद्महे कामदेवाय धीमहि तन्नोऽनंगः प्रचोदयात् इति कामगायत्र्याष्टोत्तरशतं दमन
कमभिमंत्र्य धूपदीपाद्युपचारानुपकल्प्य हृदयाय नम इति पुष्पांजलिं दत्वा ॐ नमोस्तु पुष्प
बाणायेत्यनेन कामदेवनमस्कारं कुर्यात् ततः स्वेष्टदेवं संपूज्य हस्ते पुष्पांजलिं गृहीत्वा आमं
त्रयेत् आमंत्रितोसि देवेश पुराणपुरुषोत्तम प्रातस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव त्वं

ऽथिमहानागशय्यावस्थितविग्रह प्रातस्त्वां पूजयिष्यामि सन्निधो भव ते नमः निवेदयाम्यहं तुभ्यं
प्रातर्दमनकं शुभं सर्वथा सर्वदा विष्णो नमस्तेऽस्तु प्रसीद मे इत्यामंत्र्य देवेशं दत्वा पुष्पांजलिं भ
पुनः पूजितं तद्दमनकं कुंभस्योपरि संस्थितं अस्त्रेण सर्वतो रक्षेत्कवचेनावगुंठयेत् रक्षेद्वा च·
क्रमंत्रैश्च नारसिंहेन वै पुनः ॐ सहस्रार हुं फट् इति चक्रमंत्रः नारसिंहमंत्रो यथा उग्रं वीरं महा
विष्णुं ज्वलंतं सर्वतोमुखं नृसिंहं भीषणं भद्रं मृत्योर्मृत्युं नमाम्यहं ब्राह्मणेभ्यो नमस्कृत्य गुरुय
दोप्रणम्य च गीतमंगलनिर्घोषैः कुर्य्याज्जागरणं ततः सद्योधिवासे जाते च तत्र जागरणं न हीति द·
क्षिणमूर्तिसंहितावचनात् इति दमनाधिवासनम् ॥ अथाधिवासोत्तरदिनकृत्यं प्रातर्नत्वा च दे·
वेशं कुर्य्यात्स्नानं यथाविधि नित्यपूजां ततः कृत्वा कुर्य्यान्नैमित्तिकीं ततः दमनं हरये प्रोक्तं गंधाक्ष
तमथार्पयेत् तत्र मंत्रः देवदेव जगन्नाथ वांछितार्थप्रदायक हृत्स्थान्पूरय मे कामान्मम कामेश्व·
रीप्रिय इदं दमनकं देव गृहाण मदनुग्रहात् इमां सांवत्सरीं पूजां भगवन्परिपूरय मूलसंपुटितो
ह्येष दमनारोपणे मंत्रः नृसिंहपरिचर्यायां ततो दमनमंजरीं गृहीत्वा हृदयेनाभिमंत्र्य च सर्वर
त्नमयीं देव सर्वगंधमयीं शिवां गृहाण देवदेवेश नमस्तेऽस्तु नृकेसरिन् इति मंत्रेण देवस्य शिरस्यारो·
पयेत् रमापतेरप्यूहोऽत्र ज्ञेयः ततस्तत्परिभावनया दमनकमंजरीं वनमालां कृत्वा हृदयमंत्रेणा
भिमंत्र्य सर्वरत्नमयीं देव दामनीं वनमालिकां गृहाण देवपूजार्थं सर्वगंधमयीं विभो इति मूलमं
त्रेण देवस्य मुकुटे समर्प्यांगदेवताभ्यः स्वस्वमंत्रेण समर्पयेदित्युक्तं एवं समर्प्य देवाय प्रार्थयेद्वि·
ष्णुमव्ययं मणिविद्रुममालाभिर्मंदारकुसुमादिभिः इयं सांवत्सरी पूजा तवास्तु गरुडध्वज वन·
मालां यथा देव कौस्तुभं वहसे हृदि तद्वद्दामनकीं मालां पूजां च हृदये वह जानताऽजानता वापि न कृ
तं यत्तवार्चने तत्सर्वं पूर्णतां यातु त्वत्प्रसादाद्रमापते जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन नमस्ते
स्तु हृषीकेश महापुरुष पूर्वज मंत्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन यत्पूजितं मया राम परिपूर्णं
तदस्तु मे एवं संप्रार्थ्य देवेशं निपतेद्दंडवद्भुवि अथ संपूजयेद्भक्त्या गुरुं वस्त्रादिकांचनैः स्वयंधू·
त्वाभ्यर्च्य वैष्णवान्विप्रान्संपूज्य पारयेत् स्यादश्वमेधजं पुण्यमित्याह भगवान्शिवः पारणाहे·
न लभ्येत द्वादशी घटिकापि चेत् तदा त्रयोदशी ग्राह्या पवित्रदमनार्पणे नित्यं चेदं ऊर्जे व्रतमथो
दोला श्रावणे तंतुपूजनं चैत्रे च दमनारोपमकुर्वाणो व्रजत्यधः इति पाद्मात् माधवे दमनारोपः स्या
न्मधौ विस्मृतो यदि वैशाखे श्रावणे भाद्रे कर्तव्यं च तदर्पणमिति वचनेन गौणकालेन हि धाना
त् दक्षिणमूर्तिसंहितायामपि चैत्रादयस्त्रयो मासाः प्रोक्ताः पक्षौ सितेतरौ एतेषां पूर्वपूर्वस्तु कालः स
र्वोत्तमो भवेत् श्रावणावधि शुक्लास्तु कर्तव्यमिति नारद इति पाठांतरं इदं च मलमासे न कार्यं उपाकर्मो
त्सर्जनं च पवित्रदमनार्पणे इति कालादर्शे मलमासवर्ज्येषु प्रतिपादनात् उपाकर्म च हव्यं च काम्यं प·
र्वोत्सवं तथा उक्ते नियतं कुर्यान्मलेऽर्वाक् तन्निष्फलं भवेत् इति माधवीये प्रजापतिवचनाच्च शुक्रास्तादौ तु
कार्यमेवेति पूर्वोक्तत्वात् उपाकर्मोत्सर्जनं च पवित्रं दमनार्पणं ईशानस्य बलिर्विष्णोः शयनं परिव
र्तनं कुर्यात्कुकस्य च शरोर्माद्धयपीति विनिश्चयः इति दमनकपूजनारोपणविधिः अथ संक्षिप्तद
मनकपूजनं प्रातःस्नानान्नित्यपूजांतं निर्वर्त्य दमनकारामं गत्वा क्रमेणानमादाय चंदनादिना तं दे
वपूजयेत् श्रीरामपूजार्थं त्वां नेष्यामीति प्रणमेत् अन्यदेवतायां तु अमुकदेवतापूजार्थमित्यूहः त
तः पंचगव्येनाभिषिंच्य शुद्धोदकेन प्रक्षाल्याशोकमूलं केवलस्थंडिले वा स्थापयित्वा तत्राशोके अ
शोककालवसंतकामान् गंधादिभिः संपूजयेत् ततः शुचौ देशे काममात्रं पूजयेत् पूजांते अशो·
काय नमस्तुभ्यमित्यशोकः इत्यादिकल्पपर्यंतः कालरूपो महाबलः कालात्मने नम इति कालं

दमनायनमस्तुभ्यमितिवसंतं· नमोस्तुपुष्पबाणाय· इति कामं· कामभस्मसमुद्भूत इत्यादिदम
नमुपतिष्ठेत् ततः कामायनमः इतिसपरिवारंमन्मथरूपिणंदमनकंगंधादिनाभ्यर्च्य ततप
वसमुद्भूतदमनेनप्रपूजयेत् ततोधौतवाससाच्छाद्यवैणवपटलेनिधाय गीतमंगलपुरुषसू
क्तादिस्वनैर्गृहमानयेत् तत्ररात्रौदेवंसंपूज्य तदाज्ञयादमनमधिवास्यदेवस्यपुरतःस्थंडिलमु
पलिप्य तत्राष्टदलंसितपीतकृष्णरक्तवर्णैःकृत्वा तद्दिक्षुतःकोणंपीतेनपूर्य तद्बहिर्वर्तुलमंडलत्र
यंश्वेतरक्तपीतैःपूर्य तद्दिक्षुतःकोणंरक्तवर्णेनपूरयेत् सर्वतोभद्रंवाकारयेत् तदुपरिपंचवर्णवित
नंकृत्वा उक्तमंडले शुद्धोदककुंभं हेमरत्नफलपल्लवयुतंसंस्थाप्य पूजार्थंदेवदेवस्यविष्णोर्लक्ष्मीप
तेर्विभोः दमनत्वमिहागच्छसान्निध्यंकुरुतेनम इतिदमनकपूजनं क्लींकामदेवायनमइतिकामपूज
नं श्रीं श्रीं प्रीं क्लीं रत्यैनमः· श्रीं· २ क्लीं प्रीत्यैनमः एवंरतिप्रीतीपूजनं क्लां हृदयायनमः क्लीं शिरसेस्वा
हा क्लूं शिखायैवषट् क्लैं कवचायहुं क्लौं नेत्राभ्यांवौषट् क्लः अस्त्रायफट् इतिषडंगमभ्यर्च्य ततो
देवाग्राद्दक्षिणेन भस्मशरीरायनमः १ अनंगायनमः २ मन्मथायनमः ३ कामायनमः ४
वसंतसखायनमः ५ स्मरायनमः ६ इक्षुचापायनमः ७ पुष्पास्त्रायनमः ८ इतिसंपूज्यवहि
श्चइंद्रायनमइत्यष्टौलोकेशान् वज्रायनमः इतितेषामायुधानिचाभ्यर्च्य तत्पुरुषायविद्म
हे कामदेवायधीमहि तन्नोनंगःप्रचोदयादितिकामगायत्र्याष्टोत्तरशतवारमभिमंत्र्यगंधादिभिः
संपूज्यहृदयायनमइतिपुष्पांजलिंनिवेद्य नमोस्तुपुष्पबाणायजगदाल्हादकारिणे मन्मथायजग
न्नेत्रेरतिप्रीतिप्रदायते इतिनत्वा क्षीरोदधिमहानागशय्यावस्थितविग्रह प्रातस्त्वांपूजयिष्यामिसन्नि
धौभवतेनमः इतिदेवंसंप्रार्थ्यपुष्पांजलिंदत्वा दमनमस्त्रेणसर्वतोरक्षेत् कवचेनावगुंठयेत् त
तोगीतादिनारात्रिमतिवाहयेदितिदमनाधिवासनंकृत्वा प्रातर्नित्यपूजांतेपुनरनेकोपचारैःसंपूज्य
सदूर्वागंधाक्षतफलंदमनमंजरीमूलेनाभिमंत्र्यकराभ्यांगृहीत्वा जयजयश्रीरामचंद्रेत्युच्चार्यमूलं
पठित्वा देवदेवजगन्नाथवांछितार्थप्रदायक हृत्स्थान्पूरयमेविष्णोकामान्कामेश्वरप्रिय इदंदम
नकंदेवगृहाणमदनुग्रहात् इमांसांवत्सरींपूजांभगवन्परिपूरयेतिजप्त्वा मूलेनभगवतेसमर्प
येत् ततोयथाशोभंदमनकमारोप्यभगवंतंप्रार्थयेत् मणिविद्रुममालाभिर्मंदारकुसुमादिभिः
इयंसांवत्सरीपूजातवास्तुगरुडध्वज वनमालांयथादेवकौस्तुभंवहसेहृदि तद्वद्दामनकींमालांपू
जांचहृदयेवह जानताजानतावापिनकृतंयत्तवार्चने तत्सर्वंपूर्णतांयातुत्वत्प्रसादाद्रमापते जित
तेपुंडरीकाक्षनमस्तेविश्वभावन नमस्तेस्तुहृषीकेशमहापुरुषपूर्वज मंत्रहीनं· ततोदेवंनमस्कृ
त्य गुरुंदमनेनवस्त्रादिनासंतोष्य भगवतेकर्मनिवेद्यस्वयंचतत्प्रसादत्वेनदमनशेषंधृत्वा द्वि
जान्संपूज्यभोजयेत् स्वयंबंधुभिःसहभुंजीतेति इतिसंक्षेपतोदमनोत्सवविधिः अस्येदंक्रमद्वयंजयसिं
हकल्पद्रुमोक्तं श्रीमन्नृसिंहदेवस्यपरिचर्यासकौस्तुभा रामार्चाचंद्रिकाचैवदृष्ट्वेयंपद्धतिःकृता ॥
इतिचैत्रशुक्लद्वादश्यांमदनव्रतमाचरेत् ॥ स्थापयेदव्रणंकुंभंसिततंडुलपूरितं नानाफलयुतंतद्व
दिक्षुदंडसमन्वितं सितवस्त्रयुगच्छन्नंसितचंदनचर्चितं नानाभक्ष्यसमोपेतंसहिरण्यंस्वशक्तितः
ताम्रपात्रंगुडोपेतंतस्योपरिनिवेशयेत् तत्रसंपूजयेद्देवंकामरूपिणमच्युतं गंधाद्यैरुपचारैस्तु
पवासःपरेऽहनि पुनःप्रातःसमुत्थायब्राह्मणायनिवेदयेत् ब्राह्मणान्भोजयेच्चैवतेभ्योदद्याच्चदक्षिणां
वर्षमेवंव्रतंकृत्वाहुतयेत्रसमन्वितां शय्यांचदद्यात्कुरवेसर्वोपस्करसंयुतां कांचनंकामदेवंचशुक्लां
गांचपयस्विनीं वासोभिर्द्विजदंपत्यंपूज्यशक्त्यातदर्पयेत् प्रीयतांकामरूपीमेहरिरित्येवमुच्चरन्
यःकुर्याद्विधिनानेनमदनद्वादशीव्रतं ससर्वपापनिर्मुक्तःप्रयातिहरिसाम्यतां अथभर्तृद्वादशी

तं अस्यामेव सङ्गृहीतं भर्तृद्वादशिकाव्रतं स्नात्वा तांतत्रशय्यांतत्कृत्वा श्रीयुतं हरिं संस्थाप्य मंडपेषु
ष्पैस्तदुपर्य्यपि कल्पयेत् ततः संपूज्य गंधाद्यैर्व्रती जागरणं निशि नृत्यवादित्रगीताद्यैस्ततः शनैः प
रेहनि संस्थाप्य श्रीहरिं हैमं द्विजाग्र्याय निवेदयेत् द्विजान्संभोज्य विसृजेद्दक्षिणाभिः प्रतोषिता
न् एवं कृतव्रतस्यापि दांपत्यं जायते स्थिरं सप्तजन्मसु भुंक्ते च भोगान्लोकद्वयेप्सितान् ॥ अथ
चैत्रशुक्लद्वादश्यां मदनद्वादशीव्रतविधानं मत्स्यपुराणे सूतउवाच पुरा देवासुरे युद्धे हतेषु
हरिणा सुरैः पुत्रपौत्रेषु शोकार्ता गत्वा भूलोकमुत्तमं स्यमंतपंचके तीर्थे सरस्वत्यास्तटे शुभे
भर्तुराराधनपरा तप उग्रं चकार ह तदा दितिर्दैत्यमाता ऋषिरूपेण सुव्रता फलाहारा तपस्तेपे
कृच्छ्रं चांद्रायणं वहून् यावद्वर्षशतं साग्रं जराशोकसमाकुला ततः सा तपसा तप्ता वसिष्ठा·
दीनपृच्छत कथयंतु भवंतो मे पुत्रशोकविनाशनं व्रतं सौभाग्यफलदमिहलोके परत्र च
ऊचुर्वसिष्ठप्रमुखा मदनद्वादशीव्रतं यस्यानेकोनपंचाशद्येन लेभे दितिः पुरा सूतउवाच य
द्वसिष्ठादिभिः पूर्वं दितेः कथितमुत्तमं विस्तरेणाद्य देवेदं मत्स्यका शान्निबोधत चैत्रे मासि सिते
पक्षे द्वादश्यां नियतव्रतः स्थापयेदव्रणं कुंभं सिततंडुलपूरितं नानाफलयुतं तद्वदिक्षुदंडस
मन्वितं सितवस्त्रयुगाच्छन्नं सितचंदनचर्चितं नानाभक्ष्यसमोपेतं सहिरण्यं स्वशक्तितः ता
म्रपात्रं गुडोपेतं तस्योपरि निवेशयेत् तदभावे कथं कुर्य्यात्कामकेशवयोर्नरः कामनाम्ना ह
रेरर्चां स्नापयेद्गंधवारिणा शुक्लपुष्पाक्षततिलैरर्चयेन्मधुसूदनं कामाय पादौ संपूज्य जं
घे सौभाग्यदाय च ऊरू स्मराय इति पुनर्मन्मथायेति वै कटिं स्वच्छोदरायेत्युदरमनंगायेत्युरो·
हरेः मुखं पद्ममुखायेति वाहू पंचशराय वै नमः सर्वात्मने मौलिमर्चयेदिति केशवं एवं जागर
णं कृत्वा शुक्लमाल्यांबरो व्रती ततः प्रभाते तं कुंभं ब्राह्मणाय निवेदयेत् ब्राह्मणान्भोजयेद्भ·
क्त्या स्वयं भुंजीत वंधुभिः भुक्त्वा तु दक्षिणां दद्यादिमं मंत्रमुदीरयेत् प्रीयतामत्र भगवान्कामरू
पी जनार्दनः हृदये सर्वभूतानां यश्चानंदोभिधीयते अनेन विधिना सर्वं मासि मासि समाचरेत्
उपवासी त्रयोदश्यामर्चयेद्विष्णुमव्ययं फलमेकं च संप्राश्य द्वादश्यां भूतले स्वपेत् ततस्त्रयोदशे
मासे घृतधेनुसमन्वितां शय्यां दद्याद्द्विजेंद्राय सर्वोपस्करसंयुतां कांचनं कामदेवं च शुक्लां गां च
पयस्विनीं वासोभिर्द्विजदांपत्यं पूज्य शक्त्या विभूषणैः शय्यादिकं दत्त्वा प्रीयतामित्युदीरये
त् होमं शुक्लतिलैः कुर्य्यात्कामनामानि कीर्तयेत् गव्येन सर्पिषा तद्वत्पायसेन च धर्मवित्
विप्रेभ्यो भोजनं दद्याद्वित्तशाठ्यं विवर्जयेत् इक्षुदंडानथो दद्यात्पुष्पमालां स्वशक्तितः यः कुर्या
द्विधिनानेन मदनद्वादशीमिमां सर्वपापविनिर्मुक्तः प्राप्नोति हरिसाम्यतां इह लोके वरान्पुत्रा
न्सौभाग्यं सुखमश्नुते यः स्मृतो विष्णुरानंददाता स च महेश्वरः सुतार्थी कामरूपेण यजेत्तं जग
दीश्वरं तच्छ्रुत्वा च चचारासौ दितिः सर्वमशेषतः कश्यपो व्रतमाहात्म्यादागत्य परया मुदा वरे
णच्छंदयामास सा तु वव्रे सुतं वरं ततः सा व्रतमाहात्म्याल्लेभे गर्भमनुत्तमं कदाचिल्लब्धसंचारः
शक्रस्तु जठरं दितेः प्रविश्यैकोनपंचाशत्कृत्वा शक्रो जघान तं तावंतो बालका भूत्वा रुरुदुर्न मृतिं गताः
ततो वै चिंतयामास किमेतदिति वृत्रहा धर्मस्य कस्य माहात्म्यात्पुनः संजीविता अमी कदाचिदन्यान्नूनं
मदनद्वादशी कृता तत्प्रभावेन जीवंति तथापि हता अपि नूनमेतत्परिणतमधुनात्र रजनं व्रजे
णानिहताः संतानविनाशमवाप्नुयुः एकोप्यनेकतामाप वज्रधान्निहतोप्यलं अहो माहात्म्यमेतस्य म
दनद्वादशीव्रते जीवपुत्रा वहुसुता येन नारी प्रजायते ॥ इति मत्स्यपुराणोक्तं मदनद्वादशीव्रतं
अस्यामेव भर्तृद्वादशीव्रतं नारदाप्सरसंवादमथितान्यवराहपुराणे नारदउवाच वसंते शुक्ल·

पत्तस्य द्वादशी या भवेच्छुभा तस्यामुपोष्य विधिवत्स श्रीकं हरिमर्चयेत् पर्य्यंकास्तरणं कृत्वा ना
नास्तरणसंयुतं तत्र लक्ष्म्या युतं देवं रौप्यं कृत्वा निवेशयेत् तस्योपरि ततः पुष्पैर्मंडपं कारयेद्बुधः
नृत्यवादित्रघोषैश्च जागरं तत्र कारयेत् मनोभवायेति शिरस्त्वनंगायेति वै कटिं कामाय वाहुमू
लं वक्रसुमास्त्राय चोदरं मन्मथायेति वै पादौ हरये इति सर्वतः पुष्पैः संपूज्य देवेशं मल्लिकाजा
तिभिस्तथा पश्चात्तु रक्तादाय इक्षुदंडान्सुशोभनान् चतुर्दिक्षु न्यसेत्तस्य देवस्य प्रणतो बुधः ए
वं कृत्वा प्रभाते तद्दापयेद्ब्राह्मणाय तत् वेदवेदांगयुक्ताय संपूर्णांगाय धीमते ब्राह्मणांश्च तथा भो
जयेद्व्रतमेतत्समापयेत् व्रतस्यांते तथा विप्र भर्ता वो भविता ध्रुवं अकृत्वा मत्प्रणामं तद्दृष्ट्वा गर्वेण
शोभनाः व्रतेनानेन देवेशं पतिं लब्ध्वाभिमानतः अवसाने पहरणं गोपालैर्वो भविष्यति एवमु
क्त्वा तु देवर्षिः प्रययौ नारदः क्षणात् ताश्चाप्येतद्व्रतं चक्रुस्तुष्टश्चाप्यासां हरिः इति भर्तृद्वादशीव्रतं
अथ धरणीव्रतेषु चैत्रशुक्लद्वादश्यां वामनद्वादशीव्रतं वाराहपुराणे दुर्वासा उवाच एवमेव तु मुने
मासि चैत्रे संकल्प्य द्वादशीं उपोष्याराधयेद्भक्त्या देवदेवं जनार्दनं वामनायेति पादौ तु विष्णवे ।
कटिमर्चयेत् वासुदेवाय जठरमुरः संकर्षणाय च कंठं विश्वभृते पूज्य शिरो वै व्योमरूपिणे
बाहू विश्वजिते पूज्य स्वनाम्ना शंखचक्रके अनेन विधिनाभ्यर्च्य देवदेवं जनार्दनं प्रभवद्दत्तोदकुं
भं स्वयुग्मं पुरतो न्यसेत् वस्त्रयुग्मेन चक्रं भयुगममित्यर्थः प्राग्युक्तपात्रं संस्थाप्य वामनं कांचनं
बुधः यथाशक्त्या कृतं बद्ध्वा सितयज्ञोपवीतिनं कुंडिकां स्थापयेत्पार्श्वे छत्रिकां पादुके तथा
अक्षमालां च संस्थाप्य यष्टिकां च विशेषतः एतैरुपस्करैर्युक्तं ब्राह्मणाय निवेदयेत् दापयेत्स्वीय
तं विष्णुर्नृसिंहरूपीति कीर्तयेत् मासनाम्ना तु संयुक्तं प्रादुर्भावाभिधानकं प्रीयतामिति सर्वत्र वि
धिरेष उदाहृतः मासनाम्ना मार्गशीर्षे केशवादिनाम्ना प्रादुर्भावाभिधानकं मत्स्यरूपी कू
र्मरूपी नृसिंहरूपीति कीर्तयेत् श्रूयते च पुरा राजा हर्यश्वः पृथिवीपतिः अपुत्रश्च तपस्तेपे पु
त्रमिच्छंस्तपोधन तस्यैवं कुर्वतस्तुष्टिं पुत्रार्थं मुनिसत्तम आजगाम हरिर्देवो द्विजरूपधरः
स्तदा स चोवाच नृपं राजन्किं ते व्यवसितं विभो पुत्रार्थमिति प्रोवाच स च तं प्रत्युवाच तं इदमे
व विधानं तु कुरु राजन्प्रयत्नतः स विप्र एवमुक्त्वा तु क्षणादंतर्हितस्ततः राजा च तच्चकाराथ मं
त्रवित्तं द्विजातये दरिद्राय तथा प्रादाज्ज्योतिर्गर्भाय धीमते मंत्रविद्यथादिते पुत्राया इत्यादि
मंत्रविज्ञः तं वामनं अनेन विधिनोक्तेन तस्य पुत्रोऽभवन्मुने उग्राश्व इति विख्यातश्चक्रवर्ती म
हाबलः अपुत्रो लभते पुत्रान्धनहीनो लभेद्धनं भ्रष्टराज्यो लभेद्राज्यमंते विष्णुपुरं व्रजेत् ॥
इति वाराहपुराणे धरणीव्रतेषु चैत्रशुक्लद्वादश्यां वामनद्वादशीव्रतं ॥ चैत्रशुक्लत्रयो
दश्यां चंदनात्मककामदेवपूजनं नारदीये चैत्रशुक्लत्रयोदश्यां मदनं चंदनात्मकं कृत्वा सं
पूज्य यत्नेन वीजयेद्व्यजनेन तु ततः संतुष्टमितः कामः पुत्रपौत्रविवर्धनः अनंगयात्रा तत्रोक्ता तां ति
थौ मुनीश्वर सिंदूररजनीरागैः फलकेऽनंगमालिखेत् रतिप्रीतियुतं श्लक्ष्णं पुष्पचापेषुधारि
णं कामदेवं वसंतं वाजिवक्त्रं वृषध्वजं मध्याह्ने पूजयेद्भक्त्या गंधस्रग्भूषणांशुकैः भक्ष्यैर्ना
नाविधैश्चापि मंत्रेणानेन नारद नमो रामाय देवाय कामदेवस्य मूर्तये ब्रह्मविष्णुशिवेंद्रा
णां मनःक्षोभकराय वै ततस्तस्याग्रतो भक्त्या पूजयेद्गणनापतिं ब्रह्मविष्णुशिवेंद्रा
यमिति चिंतयेत् पूजयेद्द्विजदंपत्यं गंधवस्त्रविभूषणैः वस्त्रमाल्यादिभूषाद्यैः कामो
वं वसंतसमये प्राप्ते हृष्टः पुष्टः सदैव सः एवं यः कुरुते विप्र वर्षे वर्षे महोत्स
१ इक्षवं २ कामं ३ मन्मथं च ४ रतिप्रियं ५ अनंगं ६ चैवकंदर्पं ७ पूजयेन्मकरध्वजं ८

कुसुमायुधसंज्ञं च ९ ततः पश्चान्मनोभवं १० विषमेषुं तथा विप्र ११ मालतीप्रियमित्यपि १२ अजा
नां दानमप्युक्तं स्नात्वा तर्पयित्वा नरः अजापयस्विनीं दद्याद्दरिद्राय कुटुंबिने भूयस्त्वनेन दानेन यमलो
कं न गच्छतीति अत्रैवाजादानोपलक्ष्येण नक्तव्रतारंभः कार्यः तदुक्तं भविष्योत्तरे चैत्रे चित्रान्न नक्ताशी
तथा स्नात्वा ददाति यः अजास्तु पयस्विन्यो दरिद्राय कुटुंबिने न जायते पुनरसौ जीवलोके कदाचन इति
अथाजादाने तत्र मंत्रः अजापालो महीपालो ह्यजादानेन दिवं गत इत्यादि विधिं तस्य प्रवक्ष्यामि विश्वा
मित्रेणाभाषितां सर्वरत्नोपसंपन्नां सप्तधान्योपरि स्थितां वस्त्रमाल्योपमाल्यां तु भूषितां पञ्चजानकीं
वज्रनेत्रीं हेमशृंगीं सदोहनसमन्वितां सवत्सां रौप्यपादां च कुर्यात् दद्यात्कुशोदकं गोदानवत्प्रयुंजी-
त मंत्रेणानेन संयतः मंत्रश्च मंत्रवासे अजे ह्यन्तो यज्ञसंपत्करे शुभे स्पृष्ट्वा त्वं दह मे पापं जन्मांतरशतैः
कृतं एवं समुच्चरेद्धन्या द्विजहस्ते जलं क्षिपेत् प्रीयतां पद्मनाभाय वासुदेवाय वै नमः एवं प्रदक्षि
णीकृत्य सूर्यं समवलोकयेत् ततश्च स्वगृहं गत्वा हरिं संस्मृत्य मानवः ये बालत्वे कृताः पापाः काम
तो वाथ कामतः यौवने वार्धके चान्यदेहसंगेनापि पातकं अजादानस्य माहात्म्यान्निष्पापो जायते
नरः पुत्रपौत्रसमायुक्तः सदाचाररतिः स्थिरः विष्णुधर्मोत्तरेपि मंत्रः त्वं पूर्वं स्रष्टरूपा पवित्रा भव-
तीपरम् त्वत्प्रसूतोऽस्थितो यज्ञस्तस्माच्छांतिकरी भव प्रतिग्रहोऽस्याः एष देशे प्रोक्तः इयं चोदानक
ल्पादितिकल्पादितिथिनिर्णये प्रागुक्तम् अत्र श्राद्धदानादिप्रनंतफलदं अथ चैत्रशुक्लचतुर्द
शी सा पूर्वा ग्राह्या मधोः श्रावणमासस्य या च शुक्ला चतुर्दशी सा रात्रिव्यापिनी ग्राह्या नान्या शुक्ला
कदाचनेति हेमाद्रौ बौधायनोक्तेः परा पूर्वाह्णव्यापिनीति वा पाठः अत्र केचिद्यथाश्रुतमेव पठंति
निशि भ्रमंति भूतानि शक्तयः शूलधारकाः अतस्तत्र चतुर्दश्यां सत्यां तत्पूजनं भवेदिति ब्रह्मवैवर्तात
हेमाद्रिमाधवादिलिखितमप्येवं संप्रदायविदस्त्वाहुः चतुर्दशीति कर्तव्या त्रयोदश्या युता विभो इ
ति स्कांदस्तूत्सर्गः तदपवादश्च मधोः श्रावणमासेति तदपवादाभावे पुनरुत्सर्गस्थितिरिति-
न्यायेन पूर्वविद्धैव ग्राह्येति सिद्ध्यति ब्रह्मवैवर्तेतु सामान्यरूपमन्यत्रमात्रकाद्यामिति वचनेन पूर्व-
दिने त्रिमुहूर्तवेधे पूर्वा अन्यथोत्तरेति नारदीयेपि चैत्रशुक्लचतुर्दश्यां कुंकुमागुरुचंदनैः गंधाद्यैर्वस्त्र
मणिभिः कार्यार्चा महती शिवे विमानध्वजच्छत्राणि दद्यात्पूज्याश्च मानवः एवं कृत्वार्चनं विप्र सोप-
वासोऽथवैकभुक् अश्वमेधाधिकं पुण्यं लभते मानवो भुवि अत्रैव दमनार्चां च कारयेत्तं यथा पूर्वकैः स
मर्पयेत्सपूर्णायां शिवाय शिवरूपिणे शैवागमे मधुमासे तु संप्राप्ते चैत्रशुक्लचतुर्दशी व्याताम द
नभंजीति सिद्धास्तु रमहोत्सवा तत्र ये मूलमंत्रेण सत्नूलं दमनोच्चयं निवेदयंति गौरीशे तेषां शैवार्च
ने फलमिति अत्र लिंगपुराणे विशेष उक्तः मदनं तत्र योदश्यां तालहंतानिलेन तु हंसयानसा
माहृष्टः कामो मंत्रविवर्धितः नारीभिर्वीजितश्चैव त्रैलोक्योन्मादमाचरेत् तन्निर्वापणकामेन च त
दर्शं महामुने ततोऽर्थं मया प्रोक्ता नार्यश्चाद्यनरास्तथा कुर्वंति कर्दमेनैव ग्रात्मनस्त्वनुलेपनं
निर्वापितानंगपीडा भवत्येवममाज्ञया एतदर्थं सदा कार्यं क्रीडनं कर्दमेन च प्रातः प्रहरमात्रं तु
कर्तव्यं क्रीडनं नरैः प्रक्षाल्यांगं ततः कृत्वा गंधमाल्यानुलेपनं वस्त्रं नृत्यगीतादिरथ्याहृद्देषु
चाचरेत् वादित्रघोषितं चैव नित्यं कृत्वा शिवाग्रतः सर्वकामसमृद्धस्तु वसेच्छिवपुरे नरः स्वयंतु
लिंगमेकं तु हट्टानस्मिन्दिने नरः ज्ञानलब्ध्या शिवः सम्यग्भवेदेव न संशयः इति तथा च मधुमासे तु
संप्राप्ते या शुक्लचतुर्दशी प्रोक्ता मदनपूजा तु सिद्धिदा तु महोत्सव इति अत्र मदनोत्सवविधिः
स्कांदपुराणे चतुर्दश्यां तु दमनं वस्त्रामि दिनकाम्यया लोकानां पुण्यजनकां सर्वसौख्यप्रदा-
यिनीं यस्माद्दमनकैः पूजा चतुर्दश्यां विधानतः क्रियते शंकरी तस्माद्दमनाख्या चतुर्दशी चैत्र

शुक्लचतुर्दश्यां यथावत्पूजयेच्छिवं प्रासादशोभां कृत्वैव सम्यक्संमार्जनादिभिः संस्नाप्य विधिव
द्देवं क्षीरेणेक्षुरसादिभिः श्रीखंडागुरुकर्पूरकुंकुमैश्चानुलेपयेत् ततो दमनकैर्बिल्वैः प
त्रैर्मरुवकैः शुभैः आलिंगपीठपर्यंतं पूजयेद्ग्रथितैस्तथा अगुरुं देवदारुं च श्रीफलान्यथ
सिल्हकं तगरं महिषाक्षं च धूपं दानं दहेत्ततः शालिपिष्टोद्भवैर्दीपैः पंचभिर्नवभिस्तथा ज्ञ
यंदारात्रिकं शंभोः कांस्यपात्रे समुज्ज्वलैः विचित्रवस्त्रपूजा च कर्तव्या महती शिवे पुष्पमंडपि
का चित्रा सवितानोज्ज्वला शुभा महोत्सवेन विधिवद्वै तूर्यरवेण च विविधैर्भक्ष्यभोज्यैश्च नैवे
द्यं चोपकल्पयेत् संभवे सति कार्या स्याद्रथयात्रा पिनाकिनः प्रोक्षणीयैस्तथा नृत्यैर्वाद्यपात्रैश्च
भोजनैः पूजयेच्छिवभक्तांश्च विप्रान्नत्वा स्वशक्तितः प्रीयतां शिव इत्युक्त्वा नक्तं भुंजीत च स्वयं
वर्षे वर्षे प्रकर्तव्यमेतच्चैत्रोत्सवं महत् शिवभक्तैस्तथान्यैश्च कीर्तिश्रेयोभिवृद्धये ॥ इति
चैत्रशुक्लचतुर्दश्यां शिवदमनोत्सवविधिः ॥ अस्यामेव चतुर्दश्यां काशीवासिभिः पशुपती
श्वरयात्रा कार्या तदुक्तं काशीखंडे चैत्रशुक्लचतुर्दश्यामुपोषणपरायणः पूजयित्वा पशुप
तिं रात्रौ जागरणं चरेदिति हेमाद्रौ चैत्रशुक्लचतुर्दश्यां शिवं संपूज्य भक्तितः रोचनापलमात्रे
ण ततो लिंगं विलेपयेत् नैवेद्यं पायसं प्रस्थं खंडलड्डुकसंयुतं संपूतं गुग्गुलं दद्यात्पलानां तु
शतं पुनः निवेदयेत्पिष्टलिंगं तिलप्रस्थं सहेमयुक् शिवदक्षिणदिग्भागे स्थापितव्यं प्रयत्न
तः भवरुद्राय निर्वर्त्य आचार्यं पूजयेत्ततः एवं कार्यं प्रयत्नेन मोक्षमक्षयमिच्छतेति अस्या
मेव चतुर्दश्यां नृसिंहदोलोत्सवः कार्यः ॥ तदुक्तं गारुडे चैत्रशुक्लचतुर्दश्यां नृसिंहं जगतः
प्रभुं राजोपचारैः संपूज्य मासमांदोलयेन्नरः ॥ तत्रैव मधौ शुक्लचतुर्दश्यां नृसिंहं जगतां
पतिं दक्षिणाभिमुखं देवं दोलमानं सुरेश्वरं संपूजितं सकृद्दृष्ट्वा सर्वपापैः प्रमुच्यते ॥ इति
चैत्रशुक्लचतुर्दशी ॥ चैत्रपूर्णिमा सामान्यनिर्णयेपरैव अत्र विशेषो निर्णयामृते विष्णुरह
स्ये चैत्री चित्रायुता चेत्स्यात्तस्यां चित्रवस्त्रप्रदः तेन सौभाग्यमाप्नोति इति तथा च ब्राह्मे योग
विशेषेण फलविशेषः मंदे वार्के गुरौ वापि वारेष्वेतेषु चैत्रिका तत्राश्वमेधजं पुण्यं स्नानश्रा
द्धादिभिर्भवेत् अत्र सर्वदेवानां दमनपूजोक्ता तत्रैव वायवीये संवत्सरकृतार्चायाः सफला
याखिलान्सुरान् दमनेनार्चयेच्चैत्र्यां विशेषेण सदाशिवमिति अत्र स्वीयस्वीयतिथ्यां देवता
नां दमनारोपविशेषः स्वीयतिथावकरणे चैत्र्यां सर्वेषामेव इत्यन्ये दीक्षितेतरविषयमेव
व्यवस्थेत्यपरे इयं मन्वादिरुक्ता मन्वादिगणनायां अत्रापि श्राद्धदानाद्यनंतपुण्यकरं त
थाच पुण्यकरं नारदीये सनातनः चैत्रपूर्णा तु दिष्टैर्मन्वादिः समुदाहृता अस्यां स्नानोदकं
कुंभं प्रदद्यात्सोमतृप्तये मन्वादितिथिः श्राद्धे पराह्णव्यापिनी ग्राह्या उत्तरा स्नानदानादावि
त्युक्तेः अत्र श्राद्धमुक्तं मात्स्ये कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु हायनानां द्विसाहस्र
पितॄणां तृप्तिमिदं भवेदिति इदं चाधिकमासेपि विधेयं मन्वादिकं चोपयिकं कुर्यान्मासद्व
येपि चेति स्मृतिचंद्रिकोक्तेः अत्रापि पिंडदानं नास्ति तथा च कालादर्शे विषुवायनसंक्रां
तिमन्वादिषु युगादिषु विहाय पिंडनिर्वापं सर्वं श्राद्धं समाचरेदिति अकरणे प्रायश्चित्तं अ
गियाने तं भुवः प्रतिमंत्रेण शतवारं जले जपेत् मन्वादयो यदा न्यूनाः कुरुते नैव वापदि
एवं षण्णवतिश्राद्धान्यपि नित्यानि तेषामयं संयमः अमामनुयुगक्रान्तिधृतिपातमहा
लयाः अन्वष्टकं च पूर्वेद्युः षण्णवत्यः प्रकीर्तिताः इयं पूर्णिमा चित्रायोगे महाचैत्री भवति तदुक्तं
ब्रह्मपुराणे माससंज्ञं यदा नक्षत्रं पौर्णमास्यां भवेत्क्वचित् महती सा तिथिः प्रोक्ता स्नानदाने

श्ववाहया अत्ययनेकल्पांतस्थायिफलजनकत्वं अस्यामेवचेंद्रपूजाकार्य्या तदुक्तंनिर्णयामृ-
तेदेवीपुराणे चैत्रविधिप्रक्रमे पौर्णमास्यांतथाकार्य्यासर्वकार्य्यसमृद्धये इंद्रायसहसाध्याय
कामिकंलभतेफलमिति अस्यामेवनिकुंभपूजाकार्य्या तदुक्तंहेमाद्रौ आदित्यपुराणे सन
त्कुमारउवाच उपोष्यवचतुर्दश्यांपौर्णमास्यांहरिंयजेत् पौर्णमास्यांनिकुंभश्चपिशाचैः सहि-
तोबली योनियोद्धुंपिशाचांश्चसिकताद्वीपवासिन इति अत्रमृण्मयंतृणमयंवापिशाचंकृ
त्वागंधमाल्यादिभिर्मध्याह्नेपूजयित्वा स्वस्तिवाचनंकृत्वा ब्राह्मणान्विसृज्यद्वितीयदिवसेस
मीपस्थंपर्वतमारुह्य तत्रतंसोपकरणंविसृज्यगृहमागत्यवादित्रविशेषैर्जनकोलाहलैश्च
महोत्सवंकृत्वा दृढकाष्ठैःसुवेष्टितंतृणमयंसर्पंकृत्वा तेनदिनचतुष्टयंकृत्वा सर्पापस
र्पणमनंतत्त्वखंडंगृहेगृहे पूजनीयंसुयत्नेनरक्षितव्यंचवत्सरमित्यंतेनग्रंथेन महाचैत्रादी
नांलक्षणं गार्ग्येणोक्तं मासस्संज्ञेचनक्षत्रेचंद्रःसंपूर्णमंडलः गुरुणायातिसंयोगंसातिथिर्म
हतीस्मृतेति शंकरगीतायां देवीप्रति एकराशिगतौबालेयदागुरुनिशाकरौ सपौर्णमासीम-
हतीसर्वपापहरामता तथापौर्णमासीषुसर्वासुमासर्क्षसहितासुच ददतामिहदानानांफलंद
शगुणंभवेदिति अस्यांवाराहपुराणदानमुक्तं नारदीये इत्येवंनववाराहंशेषंपापप्रणाशनं
पठतांशृण्वतांचैवभगवद्भक्तिवर्धनं कांचनंगरुडंकृत्वातिलधेनुसमन्वितं लिखित्वातच्चयो
दद्याद्वैद्याविप्रायभक्तितः सलभेद्वैसर्वथामदेवर्षिगणवंदितः योवात्रक्रमणीमेतांशृणो
त्यपिचसादरं सोपिभक्तिंलभेद्विष्णोःसंसारोच्छेदकारिणीं ॥ अथचैत्रशुक्लपक्षतिथिकृत्या
न्युच्यंते तिथिकृत्येचकृत्स्नादिव्रतेशुक्लादिमेवच विवाहादौचसौरादिंमासंकृत्वाविनिर्दि-
शेदिति ब्राह्मप्रायशोवत्सस्य चैत्रशुक्लप्रतिपदमारभ्य तिथिकृत्यनिरूपणमुचितं व्रतादि
निरूपणेचैत्रशुक्लप्रतिपदमारभ्य वत्सरारंभारोग्यव्रतविद्याप्राप्तिब्रह्मपूजादिव्रतकृत्यनि-
रूपणमुचितमतः चैत्रशुक्लादितोत्रव्रतनिरूपणारंभः सकलनिबंधकृत्संप्रदायसिद्धः सौ
रेणमासेन संक्रांतेरारभ्यत्रिंशद्भिर्दिनैरंशैर्वाभुक्तैर्भवति सच पूर्वचांद्रमासस्यशुक्लादितो
भवति नकदापिप्रकृतचंद्रमासशुक्लादितः प्रकृतसौरमाससंक्रांतौ भवत्यतोत्रकृष्णपक्षाद
वेव सौरमाससंक्रांतेः पुण्यकालादिनिर्णयःप्रपंच्यते तत्रादौमीनसंक्रांतौपश्चात्षोडशघ-
टिकाः पुण्यकालः रात्रौतुनिशीथात्प्राग्यदितत्संक्रमे पूर्वदिनपरदिनयोः परभागपूर्व
भागौपुण्यकालयुक्तौ सामान्यनिर्णयादवसेयम् तत्रसामान्यनिर्णये नारदः याम्यायने
स्थिरेत्वाद्याः पराःसौम्येद्विमूर्तिभे मध्याविषुवतिप्रोक्ताः पुण्याःषोडशनाडिकाः याम्यायनेक
र्कटे संक्रांतौस्थिरराशौ वृषसिंहवृश्चिककुंभसंक्रांतिषु संक्रांतिकालादाद्याःपूर्वानाडिका
पुण्याः सौम्यायनेमकरसंक्रांतौ द्विमूर्तिभेद्विस्वभावराशीनांमिथुनकन्याचापमीनराशीनांसंक्रां
तिषुचपराःषोडशनाडिकापुण्याः विषुवतिमेषतुलराश्योःसंक्रमेमध्या नाडिकाः कति-
चित्पुण्याइतिसामान्यनिर्णयः अथचैत्रशुक्लप्रतिपदिकृत्यविशेषः पद्मपुराणे चैत्रमासि
महाबाहोपुण्याप्रतिपदापरा तस्यांयःश्वपचंस्पृष्ट्वास्नानंकुर्य्यान्नरोत्तमः नतस्यदुरितंकिं
चिन्नाधयोव्याधयोनृप भवंतिकुरुशार्दूलतस्मात्स्नानंसमाचरेत् नारीनीराजनंतत्रसर्वरोग-
विनाशनं गोमहिष्यादियत्किंचित्सर्वंतद्भूषयेन्नृप तैलवस्त्रादिभिःसर्वैस्तोरणाद्यस्ततोनयेत्
ब्राह्मणानांततोभोज्यंकुर्य्यात्कुरुकुलोद्वहेति अत्रप्रतिपदौदयिकीग्राह्या प्रवृत्तेमधुमासेतुप्र
तिपद्युदितेरवावितिभविष्योत्तरवचनात् अत्रहोलिकादीपनाऽव्यवहितोत्तरदिनेग्राह्यमितिपु-

क्तं अत्र एव वृद्धवसिष्ठेन पूर्वैव विहिता वत्सरादौ वसंतादौ बलिराज्ये तथैव च पूर्वविद्धैव कर्तव्या
प्रतिपत्सर्वदा बुधैरिति पूर्वदिने सूर्योदयविद्धा प्रतिपदित्यर्थः अत्र तैलाभ्यंगो नित्यः वत्सरा
दौ वसंतादौ बलिराज्ये तथैव च तैलाभ्यंगमकुर्वाणो नरकं प्रतिपद्यते अकरणे प्रत्यवायोक्त्या
तैलाभ्यंगस्य नित्यत्वं वृद्धवसिष्ठेनोक्तं अथ शुक्लपक्षादि चैत्रमासस्य कृत्यं महाभारते चैत्रं तु
नियतो मासमेकभक्तेन यः क्षिपेत् सुवर्णमणिमुक्ताढ्ये कुले महति जायते स्कंदपुराणे
यः क्षिपेदेकभक्तेन चैत्रमासं नरोत्तमः धनधान्यसमृद्धे तु कुले महति जायते वामनपुराणे
दानमप्युक्तं चैत्रे विचित्रवस्त्राणि शयनान्यासनानि च विष्णोः प्रीत्यर्थमेतानि देयानि ब्राह्म
णेष्वथ अत्र देयानि ब्राह्मणेष्विति वदन्नेतत् मात्रपर्यवसितं कपिंजलन्यायात् मत्स्यपुराणे
वर्जयेच्चैत्रमासे तु यस्तु गंधानुलेपनं शुक्तिं गंधभृतां दद्याद्विप्राय सितवाससी वारुणं पदमा
प्नोति इष्टव्रतमिदं स्मृतमिति गंधपूर्णा शुक्तिः सितवाससी युगमंते देयमित्युद्यापने चैत्रादि च तृ
तीयमासान् जलं दद्यादयाचितं व्रतांते मणिकं दद्यादन्नवस्त्रसमन्वितं तिलपात्रं हिरण्यं च ब्रह्मलो
के महीयते कल्पांते भूपतिर्नूनमानंदव्रतमुत्तमं वर्जयित्वा मधौ यस्तु दधिक्षीरघृतेक्षुकान् द
द्याद्वस्त्राणि सूक्ष्माणि रसपात्रैश्च तानि च संपूज्य विप्रमिथुनं गौरी मे प्रीयतामिति एतद्गौरीव्रतं
नाम भवानीलोकदायकं भविष्यपुराणे मासि चैत्रे तु संप्राप्ते यः कुर्यान्नक्तभोजनं शाल्यन्नं पय
सा युक्तं भुंजानः संयतेंद्रियः भानवे पाटलं दद्याद्वै सवीतरुणीं नृप पुष्परागमयैर्यानैर्नानाद्रं
सानुयायिभिः नक्तभोजनमिदं मासव्यापि व्रतांते तरुण्या गाः प्रदानत्वे विस्खदेवत्वेन भानुलो
काप्तिः फलं तथा चात्र प्रपादानमुक्तं भविष्यपुराणे अतीते फाल्गुने मासि प्राप्ते चैत्रमहोत्स
वे पुण्येह्नि द्विजप्रकथिते प्रपादानं समारभेदिति तत्र मंत्रः अविचार्य ततो देयं जलं मासचतुष्टयं
तथा च प्रपां दातुमशक्तेन विशेषाद्धर्मलिप्सुना प्रत्यहं धर्मघटको वस्त्रसंवेष्टिताननः ब्राह्मण
स्य गृहे देयः सान्नः शीतजलः शुचिः तत्र मंत्रः एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः अस्य प्र
दानात्सकला मम संतु मनोरथाः अनेन विधिना यस्तु धर्मकुंभं प्रयच्छति प्रपादानफलं सोपि प्रा
प्नोति न संशयः इति इयं चैत्रशुक्लप्रतिपदा नारसिंहकल्पादि अत्रापि श्राद्धदानादि महाफलं
इति विशारदमीकल्पास्तिथयः परमेष्ठिनः आरंभतिथयस्तासु युक्ताः पुण्यतमा मताः तासु श्राद्धं
कृते पुण्यं कल्पांतस्थायि कल्प्यते इति नागरखंडात् अथ चैत्रे तु शुक्लायां प्रतिपद्यपि सर्वदा भद्र
मलनटानां तु द्रष्टव्यं कौतुकं महत् इति चैत्रशुक्लद्वितीयायां तिथिपत्वेन ब्रह्मणः पूजा कार्या चै
त्रशुक्लतृतीयायां सौभाग्यसुंदरीव्रतांगत्वेन रतिसंज्ञा गौरीपूजा बलाया उदकं प्राशयेत् चैत्रशु
क्लचतुर्थ्यां श्रावणशुक्लादिक्रमेण संकष्टचतुर्थीव्रतं तत्र गणपतिपूजनं चंद्रोदये चंद्रायार्घ्य
दानं पंचगव्यप्राशनं चैत्रशुक्लपंचम्यां काश्मीरादेवीपूजा देवीपुराणे चैत्रे तु शुक्लपंचम्यां का
श्मीरा तु रजस्वला नित्यं भवति तस्मात्तां शुक्लनाशीलमयीस्त्रियः अभ्यंगवस्त्रनैवेद्यैः पूजयंति दिन
त्रयं पुष्पालंकारवस्त्रैश्च गोरसं वर्जयंति च शुक्लाष्टम्यां द्विजैः स्नाप्य सर्वौषधियुतैर्जलैः स्ना
पयित्वा च तां देवीं गंधपुष्पैश्च पूजयेत् स्विष्टपिष्टैस्त्रिकोणैश्च तथा भक्त्या च शालिजैः नैवेद्यं
सुमधुरं श्वेतवस्त्रं च सदा दद्यात् तन्निवेदितपुष्पं च ग्रथितं वै गृहे गृहे अतः परं सुस्नाता गर्भं गृ
ह्णाति मेदिनी चैत्रशुक्लषष्ठ्यां स्कंदपुराणोक्तं दारिद्र्यहरषष्ठीव्रतं षष्ठीनामतिथिः पूज्या स
मान्यदैवतैरपि एकभक्तेन नक्तेन तथैवायाचितेन वा उपवासेन दानेन नैलत्ता रविवर्जितः अथ
च भगवान्देवो भास्करः सः परद्युतिः येन शोच्येण रूपेण तत्कुलं कथयाम्यहं गोपनीयं व्रतं दि

व्यमिहलोके सुखप्रदं यस्मिन्कृते व्रते चैव दारिद्र्यं न भवेत्कुले षष्ठीतिथिं समुद्दिश्य ब्राह्मणास्य
तु भोजनं शाल्योदनं च पयसि कृत्वा शर्करया युतं वर्तुलं हुतसंयुक्तं वर्षमेकं प्रदापयेत् कुले
तस्यैव ये जाता ये भविष्यन्ति मानवाः अनुयास्ते महात्मानो व्रतेन पुण्यपावनाः ईप्सितं चैव गच्छ
ति न दारिद्र्यं प्रणश्यति षष्ठी माघे सप्तमी भानुयोगे पद्मकाख्यो योग उक्तो निर्णयामृते षष्ठी च·
सप्तमी योगो वारे चेदंशुमालिनः योगोऽयं पद्मको नाम सूर्यकोटिग्रहैः समः इति अत्र स्नानदाना
दि यत्कृतं तदक्षयफलदं भवतीति सर्वेष्वपि मासेष्वविशेषादयं योगो बोद्धव्य इति निर्णयसिंधौ
अथात्रैव षष्ठी मार्गे तिथौ रविवासरयोगे लोलयात्रा काशीखंडे प्रोक्ता कृतानि यानि पापानि न
रैः संवत्सरादपि नश्यन्ति तत्क्षणात्तानि षष्ठ्यर्के लोलदर्शनात् अत्र लोलो नाम लोलार्कः तत्र वा·
र्षिकयात्राप्युक्ता काशीखंडे सा मार्गशीर्षे कार्या पक्षद्वयगतासु सर्वमासषष्ठीषु तिथिपत्वे
न स्कंदपूजा तदुक्तं षष्ठ्यां पूजा गुहस्य चेति चैत्रकृष्णसप्तम्यां तिथिपत्वेन सूर्यपूजाव्रतं उक्तं च
सप्तम्यां भास्करस्य चेति चैत्रकृष्णाष्टम्यां काश्यां भैरवयात्रोक्ता काशीखंडे अष्टम्यां च चतुर्दश्यां
रविभूमिजवासरे यात्रां च भैरवीं कृत्वा नरः पापैः प्रमुच्यते तत्रैव दुर्गापूजाप्युक्ता अष्टम्यां च चतु
र्दश्यां भौमवारे विशेषतः संपूज्य सततं काश्यां दुर्गां दुर्गार्तिनाशिनीमित्याष्टमीसामान्यकृत्यं
अथ भविष्योत्तरोक्तं सोमाष्टमीव्रतं तस्य सोमस्य चाष्टम्यां पक्षयोरुभयोरपि विधिवच्चंद्रचूडं तु सोमं स
पूजयेन्निशि सोमं उमया सहितमित्यर्थः पूजयेदिति शेषः इति सोमाष्टमीव्रतं अशोकाष्टमीव्र·
तं चादिपुराणे भानुरुवाच अष्टमीषु च सर्वासु पूजनीयाप्यशोकिका अशोकिकाऽशोककलि·
का गंधमाल्यनमस्कारधूपदीपान्नसंपदा तस्मिन्नहनि यो भुंक्ते नक्तं पिंडविवर्जितं इंदुवर्जिते कृ
ष्णपक्षे भवत्यत्र विशोका सा पुत्रपौत्रसुखान्विता भविष्योत्तरोक्तं चंडिकाव्रतं योऽब्दमेकं न भुंजी·
त चंडिकाराधने रतः स याति परमं स्थानं यत्र सा चंडिका स्थितेति अथाष्टम्युद्यापनं तत्र व्रतकर्ता
अथाष्टम्यां प्रातःस्नानादि नित्यनैमित्तिकं विधाय मंडपशोभां विधाय पुनः संध्यायां सायंसंध्या
दि निर्वर्त्य उद्यापनसंकल्पं विधाय गणपतिपूजादिकलशस्थापनांतं कृत्वा तदुपरि ताम्रपात्रे रक्तव
स्त्रोपरि मंडलादि परतत्वांतं पीठं संपूज्य सौवर्णीमिष्टदेवप्रतिमां सांगां नीराजनांतोपचारैः संपूज्य रा
त्रौ जागरणं कृत्वा नवम्यां पुनः पूजयित्वा आज्येन वैदिकमूलमंत्रेण वाष्टोत्तरशतसंख्यया होमं वि।
धाय आचार्याय गोसुवर्णादिसहितं देवं दत्वा दंपतीकुमारीश्च संभोज्य स्वयमपि भुंजीत चैत्रकृष्णाष्ट
म्यां विष्णुधर्मोक्तं संतानाष्टमीव्रतम् हेमाद्रौ कृष्णाष्टम्यां चैत्रमासे स्नातो नियतमानस इत्यादि।
तत्र कृष्णः सदेवकी चाभ्यर्च्यो पोष्योत्तरदिने पारणं कुर्यात् इति संतानाष्टमीव्रतं इयमेव शीतला
ष्टमी स्कंद उवाच भगवन् शीतलास्तोत्रं वद देव्या महत्फलम् अतीव भक्तिर्मे जाता व्रतं वापि·
ब्रवीहि मे ईश्वर उवाच साधु वत्स महाभाग यत्त्वं पृच्छसि व्रतोत्तमम् कथयामि यथा पूर्वं·
पार्वत्या व्रतकं कृतम् सर्वोपद्रवनाशाय सर्वरोगोपशान्तये चैत्रमासासिते पक्षे याष्टमी शीतला·
ह्वया तामारभ्य प्रकर्तव्यं यावन्मासचतुष्टयम् पतिपुत्रसमेताभिर्योषिद्भिः श्रद्धयान्वितं विधा
नं शृणु मे वत्स येन सम्यक्प्रपूजयेत् सुशीतलजलैः स्नात्वा स्थाने गोमयलेपिते सुगंधैः शीतलै·
स्तोयैः कलशं लक्षणान्वितं आपूर्य विधिवत्तं च स्थापयेत्तत्र शीतलां लिखित्वा वा तत्र मूर्तिं पूजये।
द्विधिनामुना पुष्पचंदनकर्पूरवासितं शीतलं जलम् पाद्यार्घ्याचमनीयं च शीतले प्रतिगृह्यतां
सर्वसंतापशमनं सुगंधि मनसः प्रियम् गृह्यतां चंदनं देवि मत्कृतं शीतलं कुरु चंदनं खंडपान
समाच्छेनि नवपल्लवधारिणि शीतले कुरु कल्याणं पूजेयं प्रतिगृह्यताम् संपूज्य विधिवद्देवीं।

शृणुयाच्छीतलाष्टकम् पूर्वं मयैव संप्रोक्तं तच्छृणुष्व समाहितः ओं नमामि शीतलां देवीं रासभस्थां
दिगंबरां मार्जनीकलशोपेतां शूर्पालंकृतमस्तकाम् स्कंद उवाच भगवन्देवदेवेश शीतलास्तोत्रमु
त्तमं वक्तुमर्हस्यशेषेण विस्फोटकभयापहम् ईश्वर उवाच वंदेहं शीतलां देवीं सर्वरोगभयापहां
यामासाद्य निवर्तेत विस्फोटकभयं महत् शीतले शीतले चेति यो ब्रूयाद्दाहपीडितः विस्फोटकभ
यं घोरं क्षिप्रं तस्य प्रणश्यति यस्त्वामुदकमध्ये तु ध्यात्वा संपूजयेन्नरः विस्फोटकभयं घोरं कुले तस्य
न जायते शीतले ज्वरदग्धस्य पूतिगंधहतस्य च प्रणष्टचक्षुषः पुंसस्त्वामाहुर्जीवनौषधम् शीत
ले तनुजान्रोगान्नृणां हरसि दुस्त्यजान् विस्फोटकविशीर्णानां त्वमेकामृतवर्षिणी गलगंडग्रहा
रोगा ये चान्ये दारुणा नृणां त्वदनुध्यानमात्रेण शीतले यांति संक्षयम् न मंत्रं नौषधं किंचित्पापरो
गस्य विद्यते त्वमेका शीतले धात्री नान्यां पश्यामि देवताम् मृणालतंतुसदृशीं नाभिहृन्मध्यसं
स्थिताम् यस्त्वां चिंतयते देवि तस्य मृत्युर्न जायते शीतले त्वं जगन्माता शीतले त्वं जगत्पिता शीत
ले त्वं जगद्धात्री शीतलायै नमो नमः शीतलाष्टकमेवेदं न देयं यस्य कस्यचित् दातव्यं हि सदा त
स्मै श्रद्धाभक्तियुताय च श्रोतव्यं पठितव्यं च श्रद्धाभक्तिसमन्वितैः उपसर्गविनाशाय परं स्वस्त्यय
नं महत् रासभो गर्दभश्चैव खरो वैशाखनंदनः शीतलावाहनश्चैव दूर्वाकंदनिकृंतनः एता
न्येतानि नामानि शीतलाग्रे च यः पठेत् तस्य देहे च गेहे च शीतलारुङ् न जायते शीतलाष्टकं ॥ त
तः समाप्य तां देवीं दद्याद्विप्राय दक्षिणाम् सचयत्नेन तोयेन स्वात्मानं पतिपुत्रकम् भोजनं यत्त्वक
र्तव्यं तच्छृणुष्व षडानन भक्षयेद्वटकान्पूपांश्चैत्रे वै शीतलान्वितान् वैशाखे सक्तुकाषायं साज्य
शर्करयान्वितम् ज्येष्ठे शष्कुलिकाः शीताः पूरिकाश्च तथाविधाः आषाढे पायसं साज्यं सितशर्कर
यान्वितं एतन्मासविधानं ते कथितं पार्वतीसुत एवं या कुरुते नारी व्रतं वर्षचतुष्टयम् ततउद्याप
नविधिं वांछितं फलमाप्नुयात् तत्कुले नोपसर्पंति गलगंडग्रहादयः न च व्याधिभयं तस्य पति
पौत्रसमन्विता पतिसौख्ययुता साध्वी चिरकालं प्रमोदते इति स्कंदपुराणे शीतलास्तोत्रं समाप्तम्

अथ चैत्रशुक्लनवम्यां वाराहजयंतीव्रतं चैत्रशुक्लनवम्यां तु हरिर्वाराहरूपधृगिति पुराणो
क्तेः अत्रैव दशावतारजयंत्योऽप्यभिनिर्णीयंते पुराणसमुच्चये मत्स्योभूद्धुतभुक्दिने मधुसि
ते कूर्मो विधौ माधवे वाराहो गिरिजासुते नभसि यद्भूतेसिते माधवे सिंहो भाद्रपदे सिते हरिति
थौ श्रीवामनो माधवे रामो गौरितिथावतः परमभूद्रामो नवम्यां मधौ कृष्णोष्टम्यां नभसि तत्प
वाश्विने यद्दशम्यां बुद्धः कल्किर्नभसि समभूच्छुक्लषष्ठ्यां क्रमेण अथैषां प्रादुर्भावादिका
लाः अर्कमध्ये चाजन्मीरामरामौ मत्स्यः क्रोडश्चापराह्णे विभागे कूर्मः सिंहो बौद्धकल्की च सा
यं कृष्णो रात्रेः कालसाम्येन पूर्वे इति अत्र केचित्स्फुटाः श्लोकान्पठंति चैत्रे तु शुक्लपंचम्यां भगवा
न्मीनरूपधृक् ज्येष्ठे तु शुक्लद्वादश्यां कूर्मरूपधरो हरिः चैत्रशुक्लनवम्यां तु हरिर्वाराहरूप
भृत् नारसिंहश्चतुर्दश्यां वैशाखशुक्लपक्षके राधशुक्लतृतीयायां रामो भार्गवनामधृक्
चैत्रशुक्लनवम्यां तु रामो दाशरथात्मजः नभस्ये तु तृतीयायां वलभद्रो भवद्धरिः श्रावणे बहु
लेष्टम्यां कृष्णो भूल्लोकरक्षकः ज्येष्ठशुक्लतृतीयायां बुद्धकल्की भविष्यतः कौंकणास्तु वारा
हपुराणतत्वेन वाक्यानि पठंति आषाढे शुक्लपक्षे तु एकादश्यां महातिथौ जयंतीमत्स्यना
म्नीति तस्यां कार्यं सुपोषणं नभोमासि तृतीयायां हरिः कमठरूपभृत् वैशाखस्य चतुर्दश्यां
नृसिंहः समपद्यत वैशाखे तु तृतीयायां शुक्ले पक्षे भृगूद्वहः मासि भाद्रपदे शुक्लैकादश्यां वा
मनो हरिः चैत्रे नवम्यां रामो भूत्कौशल्यायां पुरः पुमान् श्रावणे बहुलेष्टम्यां वासुदेवो जनार्द

नः पौषेतशुक्लसप्तम्यांकार्यंरुद्रस्यपूजनं माघशुक्लतृतीयायांकल्किनः एतेषांपूजाकालनियम
प्रातःप्रातस्तुमध्याह्नेसायंसायंतथानिशि मध्याह्नेमध्यरात्रेचसायंप्रातरनुक्रमादिति तत्रमू
लवनिर्देशैर्विकल्पभेदेनव्यवस्थाद्रष्टव्या एतानिव्रतानिउपासकानांनित्यानि अन्येषांतुकाम्यानि ए
षांविशेषमग्रेवक्ष्यामः धरणीव्रतेपुस्फुटीभविष्यति चैत्रशुक्लदशम्यांतिथितत्वेनधर्मराजपू
जाव्रतं देवीपुराणे धर्मराजंदशम्यांतुपूजयित्वासुगंधिकैः विगतारिर्निरातंक इहचांतेपरंप
दमिति चैत्रकृष्णैकादशी पापमोचनिका भविष्योत्तरपुराणे मांधातोवाच आत्मनश्चहि
तार्थायलोकानांचहितायच पृच्छामिलोमशाहंत्वांसदयंमुनिसत्तम चैत्रस्यप्रथमेपक्षेकिं
नामैकादशीभवेत् किंनामकोविधिस्तस्याःकथयस्वममाग्रतः लोमशउवाच चैत्रस्यप्र
थमेपक्षेनाम्नावैपापमोचिनी शृणुराजन्कथांदिव्यांपवित्रांपापनाशिनीं पुराचैत्ररथंनाम
वनंकोकिलनादितं मयूरनादसुभगंकिन्नरीभिर्विराजितं देवकन्यास्तुतत्रैवनिवसंतिम
नोरमाः नापरंपुष्पदंकिंचिद्वनंचैत्ररथाद्वनात् तस्मिन्वनेहिमुनयस्तपंतिपरमंतपः तत्रा
सीन्मुनिश्रेष्ठोमेधावीनामनामतः तपोरतंमुनिश्रेष्ठंमंजुघोषाभिधाप्सराः इंद्रेणप्रेषिता
तत्रतत्तपोहंतुमाययौ तस्यशापभयाद्भीताक्रोशमात्रेचसाजगौ कामोपिविजयार्थायशिव
भक्तिंमुनेस्तदाजगामकौसुमैर्बाणैः शिववैरादनारतं तस्यावक्षीयतः कलातत्पक्षाश्रिगुणोत
पा नयनाभ्यांतुबाणाभ्यांजघानमदनोमुनिं गायंतींतांपुरोदृष्ट्वामेधावीमुनिपुंगवः काम
बाणवशंप्राप्तस्तथापिनैवशशंकसः मंजुघोषापितंदृष्ट्वासुंदरंमुनिपुंगवं कामबाणाहत
मनामंदंमंदंतदाजगौ मंजुघोषातमागत्यपुरोमेधाविनंमुनिं मोहयामासवामोरूर्हावभा
वैःसुविस्मिता अथसंस्थाप्यसावीणांपरिरेभेमनोदयौ वल्लीवपार्श्ववृक्षेणमिलितामुनि
नातदा मेधावीतुतयारेमेसतयामंजुघोषया तयासार्धंगतस्तत्रयत्रासीद्विजनंवनं शिव
तत्वंगतंतस्यकामार्तस्यानुराग... रात्रिंदिनंतयासाकंस्वाश्रमेरमतिस्मसः एवंगतोमहान्
कालस्तस्यमेधाविनोमुनेः मंजुघोषोत्कटोवाच त्वंमंतंमुनीश्वरं आज्ञांमेदेहिमेधाविन्स्व
र्गस्यगमनायभो महान्कालोव्यतीतोमेत्वत्समीपेमुनीश्वर मुनिरुवाच अये
वंसमायातावयत्नृषायांवरानने प्रातःसंध्यासमायातितावत्त्वंसुस्थिराभव इतिश्रुत्वामुनेर्वाक्य
मथभीतातदाभवत् पुनःसारमयामासमुनिंमेधाविनंमुदा मुनेःशापभयाद्भीताबहुकाल
चसारमत् पंचाशत्यचवर्षाणिनवमासंदिनत्रयं रमित्वामंजुघोषासामुनिंप्रोवाचवैशनैः
मंजुघोषोवाच प्रसादंकुरुमेब्रह्मन्ममादेशःप्रदीयतां त्वत्प्रसादान्मुनिश्रेष्ठस्वर्गंयास्या
मिसत्वरं मुनिरुवाच प्रातःकालःसमायातिशृणुष्ववचनंमम प्रातःसंध्यांयावदहंकुर्वेता
वत्स्थिराभव इतिवाक्यंमुनेःश्रुत्वामंजुघोषाभयावह हसित्वासातदाविप्रंप्रत्युवाचसुविस्मि
ता मंजुघोषोवाच किंप्रमाणंचविप्रर्षेतवसंध्याभविष्यति मयिप्रसादंकृत्वात्वंप्रमाणंसंवि
कार्यतां इतिश्रुत्वावचस्तस्याविस्मयोत्फुल्ललोचनः सुचिरंमनसिध्यात्वाविचारमकरोन्मु
निः सप्ताशीतिश्चवर्षाणिजातानिविफलानिमे ततश्चुकोपतस्यैसमुनिःक्रोधारुणोत्ता
नेत्राभ्यांतस्यविप्रर्षेःपेतुर्वह्निकणाभृशं एवंविचारयामाससमेधावीमुनिपुंगवः दिवार्जिते
तपोहंत्वंपावकप्रभयानया कष्टवर्जस्मतानीतंकागतिर्मेभविष्यति स्फुरदोष्ठप्रदोषाथा
स्तस्त्वाचाकुलेंद्रियः मंजुघोषेत्वमेशापाद्रूपात्वंचैपिशाचिनी धिक्पापेदुराचारेमत्तपो
नाशिनेत्वया मुनेःशापेनसात्वरलाविनयावनताब्रवीत् प्रसादंकुरुमेब्रह्मन्शापांततंवद

त्वमे सतांसंगेमुनिश्रेष्ठनैतद्युक्तंकदाचन त्वयासहमयाब्रह्मन्नीताश्चबहवःसमाः मेधाव्यु-
वाच मंजुघोषेममशृणुत्वंस्वशापांतमात्मनः चैत्रमासस्यसितेपक्षेपिशाचत्वविनाशिनी पाप-
मोचनिकानामैकादशीपापहारिणी यदासायातिचोपोष्यातत्वनश्येत्पिशाचता इत्युक्त्वातांमु-
निश्रेष्ठःआजगामनिजाश्रमं आयांतंतंसुतंदृष्ट्वाच्यवनोवाक्यमब्रवीत् यत्तेपापंकृतंवत्स
जानेतन्नात्रसंशयः किमर्थंयत्कृतंपुत्रत्वयासीत्पुण्यसंचयः इतिवाक्यंपितुःश्रुत्वामेधावी
वाक्यमब्रवीत् मेधाव्युवाच बहुपापंकृतंतातत्वप्सरोरमतामया यत्कष्टेनार्जितंपुण्यंपित-
स्सर्वमेतत्क्षयंगतं उपायःकथ्यतांतातत्रसुव्येयंयेनपापतः च्यवनउवाच चैत्रमासस्यसितेपक्षेनाम्ना
वैपापमोचनी कर्तव्यासात्वयायत्नात्ततोनश्यतितेघ्ययं इतिश्रुत्वापितुर्वाक्यंकृतंव्रतमनुत्तमं
कृतेपापंमुनेस्तस्यतत्क्षणात्प्रलयंगतं शापेनमंजुघोषापिदिवसावद्भुवोगताः नष्टंपापंचत-
स्यापिपापमोचनिकाव्रतात् दिव्यरूपधराजाता गतास्वर्गंवराप्सरा लोमशउवाच एवमन्यो
पियःकश्चित्पापमोचनिकाव्रतं कुर्यात्तस्यतुराजेंद्रपापंनश्यतितत्क्षणात् कामदात्विहलो-
केसापरलोकेचमोक्षदा माहात्म्यश्रवणादस्यागोसहस्रफलंलभेत् ब्रह्महाचैवगोघ्नश्च
सुरापोगुरुतल्पगः स्वर्णचौरश्चपूतःस्यात्पापमोचनिकाव्रतात् ॥ इतिभविष्योत्तरेचैत्र
कृष्णपापमोचनिकैकादशीमाहात्म्यं ॥ चैत्रकृष्णद्वादशी दर्शांतमासत्वेनवैराजकल्या-
दि अत्रापिश्राद्धाद्यनंतफलंभवति इतिकल्पादितिथिनिर्णयः चैत्रशुक्लत्रयोदशी शतभि-
षानक्षत्रयुतावारुणी तत्रगंगास्नानमुक्तं स्कांदे वारुणेनसमायुक्तामधौकृष्णत्रयोदशी
गंगायांयदिलभ्येतसूर्यग्रहशतैःसमेति इयमेवशनिवारशतभिषानक्षत्रोपेतामहावा-
रुणी तथाचोक्तंतत्रैव शनिवारसमायुक्तासामहावारुणीमता गंगायांयदिलभ्येतकोटिसू-
र्यग्रहैःसमेति इयमपिशुभयोगयुतामहामहावारुणीसंज्ञा तदप्युक्तंतत्रैव शुभयोगसमायु-
क्ताशनौशतभिषायदि महामहेतिविख्यातात्रिकोटिकुलमुद्धरेत् इति अथास्यांवारुणीपर्व-
योगस्यवरुणदेवत्वादत्रवारुणमंत्रैर्होमदानादिकार्यंतस्मादत्रसप्तसागरदानंकर्तव्यमुक्तं
मत्स्यपुराणे अथातःसंप्रवक्ष्यामिमहादानमनुत्तमं सप्तसागरकंनामसर्वपापप्रणाशनं पु-
ण्यंदिनमथासाद्यकृत्वाब्राह्मणवाचनं तुलापुरुषवत्कुर्याल्लोकेशावाहनंततः ऋत्विङ्मं-
डपसंभारभूषणाच्छादनादिकं कारयेत्सप्तकुंडानिकांचनानिविचक्षणः प्रादेशमात्राणितथार-
त्निमात्राणिवेपुनः कुर्यात्सप्तपलादूर्ध्वमासहस्राच्चशक्तितः संस्थाप्यानिचसर्वाणिकृष्णाजि-
नतिलोपरि कृष्णाजिनाभावेसकुशवस्त्रतिलोपरिस्थाप्यानि प्रथमंकारयेत्कुंडंलवणेनवि-
चक्षणः द्वितीयंपयसातद्वत्तृतीयंसर्पिषाततः चतुर्थंतुगुडेनैवदध्नापंचममेवच षष्ठंशर्कर-
यातद्वत्सप्तमंतीर्थवारिणा स्थापयेल्लवणस्यांतेब्रह्माणंकांचनंशुभं केशवंक्षीरमध्येतुघृतमध्ये
महेश्वरं भास्करंगुडमध्येतुदधिमध्येसुराधिपं शर्करायांन्यसेल्लक्ष्मींजलमध्येचपार्वतीम् स-
र्वेषुसर्वरत्नानिधान्यानिचसमंततः तुलापुरुषवच्छेषमात्रापिपरिकल्पयेत् ततोवारुण-
होमांतेस्नापितोद्विजपुंगवैः त्रिःप्रदक्षिणमावृत्यमंत्रानेतानुदीरयेत् मंत्राःप्रयोगेज्ञेयाः इति
ददातिरसामृतसंयुतान् शुचिरविस्मयसागरात् अखिलकांचनवर्णमयानसोपदमेतिहरे-
रमरार्चितः १ सकलपापविधौतविराजितःपितृपितामहपुत्रकलत्रकं नरलोकसमाकुलम-
प्ययंकदितिनेतमलंशिवमंदिरमिति अथसप्तसागरदानप्रयोगः अथदानकर्तापर्वदिना-
त्पूर्वदिनेपर्वदिनेवा ओमद्यमहामहावारुणीपर्वदिनेवाआत्मनः सकलकल्मषक्षयसंभा-

वितनरकनिवासिपितृपितामहपुत्रकलत्रादिसप्तगोत्रजत्रिकोटिकुलशिवमंदिरप्राप्तिपूर्वकरामतत्वविशिष्टस्वीयहरिपदप्राप्तिकामः सप्तसागरदानं करिष्ये ततो गोविंदपूजादिगुरुविनियोगांतं प्रकृतं कृत्वा क्रमासादितसकुशाक्षतसाजिनवस्त्रादिषु तिलद्रोणलवणाज्यदुग्धगुडदधिशर्करातीर्थवारिभिः कांचनसप्तकुंडानि सप्तकलशान्वा वारुणकलशसहितान्संस्थाप्य तेषु ब्रह्मकेशवमहेश्वरभास्करसुराधिपलक्ष्मीपार्वतीमूर्तीः स्थाप्य परितो दशधान्यानि वितानकं चोपरि कृत्वा ब्रह्मादीन्सपरिवारान्संपूजयेत् ततः कुंडसमीपस्थकलशस्थापनवनस्पतिहोमांतं कुंडेषु अष्टाविंशत्यष्टोत्तरशताष्टसहस्रान्यतमसंख्यया स्वशाखीयैर्वारुणमंत्रैस्तिलान् हुत्वा स्विष्टकृदादिपूर्णाहुत्यंतमभिषेकांतं शाक्तं तत्कृत्वाभिषेकांते सप्तसागरान्स्त्रिः प्रक्रम्य मंत्रानुपठेत् नमो वः सर्वसत्वानामाधारेभ्यः सनातनाः जंतूनां प्राणदेभ्यश्च सागरेभ्यो नमो नमः क्षीरोदकाज्यदधिमाधुरलावणेक्षुधारामृतेन भुवनत्रयजीवसंघान् आनंदयंति वसुभिश्च यतो भवंतस्तस्मान्ममाप्यघविघातमलं विदध्वं यस्मात्समस्तभुवनेषु भवंत एव तीर्थामरासुरनिबद्धमणिप्रदानं पापक्षयामृतविलेपनभूषणाय लोकस्य बिभ्रति तदस्तु ममापि लक्ष्मीः इत्यनुमंत्र्य पुष्पाणि निक्षिप्य नत्वा च वेदीपश्चिमत उपविश्य प्राङ्मुखस्तत् अद्येत्यादिपूर्वोक्तदेशकालादिकीर्तनांते सकलकल्मषक्षयेत्यादिमहासंकल्पमुक्त्वा इमानि वारुणदैवतलवणाज्यदुग्धगुडदधिशर्करातीर्थवारिभिः पूरितान्कांचनादिकुंडकलशादिरूपान्सप्तसागरान् विश्वदैवतान्तुलापुरुषोक्तमत्स्यपुराणीयव्यवस्थया नानानामगोत्रेभ्यो ब्राह्मणेभ्यो युष्मभ्यमहं संप्रददे न ममेति दानांते सुवर्णदक्षिणां दद्यात् स्वल्पेषु कश्चिद्विधिरिति केचित् सप्तकलशदानमावृत्त्या यथासंख्यमपि स्वशक्त्या कार्यमित्याहुः अत्राशक्तौ श्रीगोविंदगंगावरुणमूर्तित्रयं कलशत्रयसहितं यथाशक्ति पूजांते देयमित्यावश्यकं दानम् ततः पुण्याहवाचनग्रहादिविसर्जनब्राह्मणादि यथाशक्तिक्रियादिनि वारुणीपर्वानुष्ठेयं सप्तसागरदानम्

चैत्रकृष्णचतुर्दशी पिशाचमोचनी पुराणसमुच्चये चैत्रकृष्णचतुर्दश्यां यः स्नायाच्छिवसन्निधौ गंगायां च विशेषेण न स प्रेतोऽभिजायते चैत्रकृष्णचतुर्दश्यामंगारकदिनं यदि पिशाचत्वं पुनर्न स्याद्गंगायां स्नानभोजनात् भोजनं चान्नजलपानं अत्रान्यदपि कृत्यं तत्रैव यवलितकलशान्यस्तारकपताकान्वितास्तु गृही भवने चैत्रासितभूतदिने पापरुजं हरतो यते अत्र ब्रह्मपुराणं तस्यां निशायां कर्तव्यो नरैर्नित्यं प्रजागरः शंभुः पूज्यो निकुंभश्च पिशाचेभ्यो बलिं हरेत् मत्स्यमांसानि भूरीणि तथा माषौदनं शुभं वृक्षमूलेषु गोष्ठेषु तथा शून्यगृहेषु च चतुष्पथेषु रथ्यासु चत्वरेषु नदीषु च देवालयेषु पुण्येषु राजमार्गेषु नित्यशः तस्यां निशायां रक्ष्याश्च पिशाचेभ्यश्च बालकाः द्रष्टव्यं पुंश्चलीनृत्यं न कुर्यात्स्त्रीनिषेवणमिति चैत्रामावास्यायां कृत्यविशेषस्तत्रैव अमायां चैव चैत्रस्य सारमेयेश्च काश्यपैः वासुदेवाह्वयो लभ्यः प्रभूतं भोजनं त्विति तस्मात्तत्र पितॄन्देवांस्तर्पयित्वा द्विजैः सह शुनामन्नं प्रभूतं च पश्चाद्देयं यथेप्सितं तत्र मंत्रः श्वानौ द्वौ श्यावशबलौ वैवस्वतकुलोद्भवौ ताभ्यामन्नं प्रदास्यामि स्यातामेतावहिंसकाविति इयममावास्या मन्वादिः फाल्गुनस्यामावास्येति मन्वादिगणनात् सा च श्राद्धे अपराह्णव्यापिनी ग्राह्येति दर्शांतमासत्वेनेयं फाल्गुनस्योक्ता अथास्यां योगविशेषेण कृत्यविशेषो हेमाद्रौ शातातपेनोक्तः अमायां तु भवेद्वारो यदा भूमिसुतस्य वै जाह्नवीस्नानमात्रेण गोसहस्रफलं लभेत् इति भौमावास्या महाभारते अमा सोमे च भौमे च गुरुवारे यदा भवेत् तत्पर्व पुष्करं नाम सूर्यपर्वशताधिकं इति सोमभौमगुरुवा

रेषमापोतः तथाशनिवारयोगेणामायां फलाधिक्यमुक्तं स्कंदपुराणे अवंतीमाहात्म्ये श
निवारेयदामावैजायते सर्वकामदा तस्यांस्नानंतथादानंश्राद्धंचैवचकारयेत् तस्यहस्तगता
लक्ष्मीर्जायतेसर्वदाध्रुवीति अथामायांविशाखानुराधान्यतमयोगेनश्राद्धकरणेफलमुक्तं अमा
वास्यायदामैत्रविशाखास्वातियोगिनी श्राद्धेपितृगणास्तृप्तिंतदाप्नोत्यष्टवार्षिकीं अन्यच्च अमा
वास्यायदापुष्येरौद्रर्क्षेवापुनर्वसौ द्वादशाब्दंतदातृप्तिंप्रयांतिपितरोर्चिताः अत्रैवान्यदप्युक्तं वा
सवाजैकपादर्क्षेपितॄणांतृप्तिमिच्छतां वारुणेचाप्यदैवत्येदेवानामपिदुर्लभा अमाइतिशेष
संबंधः मैत्रमनुराधा रौद्रर्क्षमार्द्रा वासवंधनिष्ठा अजैकपात् पूर्वभाद्रपदा वारुणंशतभि
षा आप्यंपूर्वाषाढा इतिनक्षत्रयोगविशेषामावास्या अथामायांपारिभाषिकयोगविशेषेण
व्यतीपातयोगउक्तोभारते श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके अमाचेद्रविवारेणव्यती
पातःसउच्यते अत्रदत्तंहुतंजप्तंसर्वंकोटिगुणंभवेत् नागदैवतमश्लेषामस्तकंशीर्षकं सो
मवारादियुता अमावास्यासप्तम्यष्टम्यः सूर्यग्रहसमानाउक्ताः तदुक्तंशंखेन अमावास्यातुसो
मेनसप्तमीभानुनासह चतुर्थीभौमयुक्तेनसोमपुत्रेणचाष्टमी चतस्रस्तिथयस्त्वेताः सूर्यग्र
हणसन्निभाः स्नानंदानंतथाश्राद्धंसर्वंतत्राक्षयंभवेदिति इयंसोमवारादियुता अमातिथि
यः कपिलधारातीर्थश्राद्धेश्राद्धदावतिप्रशस्ता तदुक्तंकाशीखंडे अमासोमसमायोगेश्राद्धंयद्य
त्रलभ्यते तीर्थेकपिलधारेस्मिन्गययापुष्करेणकिं दिव्यंतरिक्षभौमानियानितीर्थानिसर्वशः
तान्यत्रनिवसिष्यंतिदर्शेसोमदिनान्विते अयंचयोगोदिवैवशस्तइतिशिष्टाः अथसोमवत्यमा
वास्याव्रतकथाभविष्ये युधिष्ठिरउवाच हतेषुकुरुमुख्येषुभीमसेनेनकोपिना तथापरेषु
सर्वेषुहतेषुयुधिजिष्णुना दुर्योधनक्रमेणजातोस्माकंकालक्षयः नसंतिभुविभूपालावा
लवृद्धातुराहते अवशिष्टावयंपंचवंशेभारतसंज्ञके एकातपत्रमपिमेनराज्यंप्रतिरोचते दृष्ट्वा
संततिविच्छेदंसंतापोहृदयेनिशं जीवितेपिजुगुप्सामेनचांगेपुरतिःक्वचित् अस्त्यामास्ति
निर्दग्धउत्तरागर्भसंभवः अतोमेद्विगुणंदुःखंपिंडविच्छेददर्शनात् किंकरोमिक्वगच्छामिपि
तामहत्विदानुना येनसंपद्यतेसद्यःसंततिश्चिरजीविनी भीष्मउवाच शृणुराजन्प्रवक्ष्यामिव्र
तानामुत्तमंव्रतं यस्याचरणमात्रेणसंततिश्चिरजीविनी अमावास्यायदापार्थसोमवारयुताभवे
त् तस्यामश्वत्थमागम्यपूजयित्वाजनार्दनं अष्टोत्तरशतंकुर्यात्तस्मिन्वृक्षेप्रदक्षिणाः तावत्सं
ख्यान्युपादायरत्नधातुफलानिच व्रतराजमिदंराजन्विष्णुप्रीतिकरंपरं उत्तरांकारयप्राज्ञग·
र्भोजीवमवाप्स्यति भविष्यतिगुणीपुत्रस्त्रिषुलोकेषुविश्रुतः श्रुत्वापितामहवचःप्रत्युवाचयु
धिष्ठिरः युधिष्ठिरउवाच तद्व्रतंव्रतराजाख्यंविस्तरेणप्रकाशय केनप्रकाशितंमर्त्येकेनेदंच
कृतंविभो भीष्मउवाच अस्तियासर्वविख्याताकांचीसंज्ञामहापुरी ब्रह्मक्षत्रियविट्शूद्रैःस्वक
र्मनिरतैर्वृता रजताचलसंकाशैःसौधशृंगैर्विराजिता सर्वेषुनागरजनैर्नारीभिरुपशोभिता
रूपचातुर्यवर्णाभिर्वेश्याभिःसमलंकृता अलकेवकुबेरस्यशक्रस्येवामरावती तेजोवतीव
रात्याप्यापातकस्यमहापुरी तत्रराजारत्नसेनोबभूवामितविक्रमः तस्मिन्शासतिभूचक्रंनक
ष्टमासीदतीवहि तस्यदेशेवसद्विप्रोवेदवेदांगपारगः देवस्वामीतिनाम्नावैदेवतातिथिपूजकः
तस्यभार्यातिविप्रस्यनाम्नाधनवतीशुभा यथार्थनामधेयासालक्ष्मीरिवसविग्रहा तस्यांसंजन
यामाससप्तपुत्रान्शुभान्वितान् एकांदुहितरंरम्यांनाम्नागुणवतीन्नृप कृतदारास्ततेपुत्राः
विहरंतियथासुखं कन्याकुमारिकाचासीदनुरूपप्रियार्थिनी अत्रांतरेद्विजःकश्चिद्भिक्षार्थी।

समुपागतः दीप्यमानः स्वतेजोभिर्मूर्तिमानिव पावकः द्वारदेशमथागम्य प्रयुयोजाशिषं
तदा देवस्वामिस्नुषाः सप्त सप्त ध्याय ससंभ्रमं भिक्षां प्रत्येकमानीय ददुस्तस्मै द्विजन्मने अ
वैधव्याशिषः प्रादात्ताभ्यः सौभाग्यसंपदां ततो गुणवती मात्रा प्रहिता सह भिक्षया विप्राय
भिक्षां प्रददौ कृत्वा पादाभिवंदनं आशिषं प्रयुंजे विप्रः शुभे धर्मवती भव स्ववैलक्ष्यं गुणवती
श्रुत्वा प्रत्याययौ गृहं मात्रे निवेदयामास आशिषं तेन योजितं श्रुत्वाथ धनवती पुत्रीकरे धृत्वा स
माययौ प्रणताभ्यः स्नुषाभ्यो मे त्वया दत्ता वराशिषः अवैधव्यकराः पुत्रस्त्वसौभाग्यप्रदायकाः
स्वतायां प्रणतायां च विपरीतं त्वयोदितं भद्रे धर्मवती भूया इत्युदीर्य पुनः पुनः आशीः प्रयुक्ता
विप्रर्षे कारणं वद सत्वरं द्विज उवाच धन्यासि त्वं धनवति प्रख्यातचरिता भुवि यथायोग्या प्रयु
क्तेयं मयाशीरिह द्विज स्तव इयं सप्तपदीमध्ये वैधव्यं समवाप्स्यति धर्माचरणमत्यर्थं कर्तव्यं परमे
तया यदागता भवेत्सोमा गृहे चेत्तर्हि सुंदरि तस्याः पूजनमात्रेण भवेद्वैधव्यनाशनं अतो म
याशीर्दत्तेयं शुभे धर्मवती भव श्रुत्वाथ धनवती जाता चिंताकुलितलोचना उवाच वचनं दीनं प्र
णिपत्य पुनः पुनः धनवत्युवाच सोमागमनमात्रेण भवेद्वैधव्यभंजनं का सा सोमा त्वया प्रो
क्ता का जातिः कुत्र संस्थितिः तस्या वद महाभाग न कालो विस्तरस्य मे द्विज उवाच सा सोमा र
जकी जातिः स्थिता त्वस्याश्च सिंहले सा गृहं याति ते वेश्म तदा वैधव्यभंजनं इत्युक्त्वा ब्राह्मणे
प्रयाते भिक्षा प्रतीक्षया धनवत्यपि पुत्रेभ्यः प्रोवाच वचनं तदा धनवत्युवाच इयं डलेलिमा
पुत्राः स्वसा गुणवती शुभा सोमानयनमात्रेण भवेद्वैधव्यभंजनं अस्ति यस्यापि त्वद्भक्तिर्मातृव
चनगौरवं स प्रयातु सह स्वस्रा सोमामानयितुं द्रुतं पुत्रा ऊचुः ज्ञातं मातस्तव स्वांतं पुत्रीस्नेहव
शंवदं यतो देशांतरं पुत्रान्प्रस्थापयसि दुस्तरे अंतरा दुस्तरः सिंधुः शतयोजनविस्तरः अश
क्यं गमनं तत्र न त्वागमनमेव यं देवस्वाम्युवाच अपुत्रः सत्तमैः पुत्रैरहं यास्यामि सिंहलं आ
नयिष्यामि तां सोमां पुत्रीवैधव्यनाशिनीं एवं वादिनि सक्रोधे देवस्वामिनि तत्क्षणे शिवस्वा
मी कनिष्ठश्च पुत्रः प्रोवाच सन्नतः मैवं वद महाभाग रोषावेशवशं गतः मयि तिष्ठति कः श
क्तो गंतुं द्वीपं हि सिंहलं स युक्तः सह सोमाय प्रणम्य शिरसा गुरुं प्रतस्थे सहितः स्वस्रा द्वीपं सिं
हलसंज्ञकं कियद्भिर्दिवसैर्गत्वा तीरं प्राप्य सरित्पतेः तत्रैतं मेतुर्यितत्र प्रयासमकरोद्द्विजः
स ददर्श सविस्तीर्णं न्यग्रोधद्रुममंतिके तत्कोटरे स्म वासी नागृध्रराजसुतास्त्रयः तस्मादपि
तत्र स्थित्वा ताभ्यां नीतं तत्र तद्दिनं शावकानां कृते मांसं गृहीत्वा शिशुभोजनं भोजनं दत्तमपि तै
र्भुंजते स्म न शावकाः पप्रच्छ चाग्रतो गृध्रः शावकान्स्वान्हि विह्वलः गृध्र उवाच कथं न भुंजते
पुत्रा भवंतः क्षुधिता अपि आनीतं कोमलं मांसं भवद्योग्यमिदं मया शावका ऊचुः एतद्द्रुम
तले तात मानवौ द्वावतिष्ठतः अस्वीकृते तयोस्तात कथं भुंजामहे वयं एतच्छ्रुत्वा स गृध्रस्तु करुणाहृ
तचेतनः तयोरंतिकमागत्य वचनं प्रत्यभाषत गृध्र उवाच ज्ञातस्तु युवयोः कामो भोजनं क्रियतां
मिदं पारमुत्तारयिष्यामि जलधेः प्रातरेव तु ततो रात्र्यां व्यतीतायामुदिते तु दिवाकरे पारमुत्तारि
तौ तौ तु गृध्रराजेन वेगिना सिंहलद्वीपमागत्य स्थितौ सोमागृहांतिके ततः प्रत्यूषसमये सम्मार्ज्यां
गनमंडलं लेपनं चक्रतुस्तत्र तदा वासे दिनं प्रति एवं विदधतोस्तत्र पूर्णः संवत्सरो ययौ स्नुषाः
पुत्रान्समाहूय सोमा पप्रच्छ विस्मिता मार्जनं लेपनं को वा करोति मम कथ्यतां एकदैवाग्रजग
दुः सर्वाः कार्यमिदं हि नः एकदा रजकी सोमा निभृता संस्थिता निशि ददर्श ब्राह्मणीं कन्यां मा
र्जयंतीं गृहांगनं लिपंतमंगनं प्रांते भ्रातरं च सुडगीतं सोमा पप्रच्छ तौ गत्वा को युवां कथ्यतां मम

ऊचतुस्तौ तदा पृष्टावावां ब्राह्मणपुत्रकौ सोमोवाच दग्धास्मि वत नष्टास्मि ब्राह्मणौ गृहमाजकौ कां
गतिं वत यास्यामि पापादस्मादसंशयं पापाजाम्यस्यहं ख्याता रजकी सर्वनिंदिता कथं वा ब्रा
ह्मणो भूत्वा विकृतं मे विकीर्षथ शिवस्वामुवाच एषा गुणवती नाम स्वसा मम सप्तमध्यमा इयं
सप्तपदीमध्ये वैधव्यं संप्रपत्स्यते तव सान्निध्यमात्रेण भवेद्वैधव्यभंजनं अतो हेतोः सहस्व त्वां द
स कर्म करोमि ते सोमोवाच अतः परं न कर्तव्यं यास्यामि तव शासनात् इत्युक्त्वा गृहमागत्य स्व
बाम्यः प्रत्युवाच ह यः कश्चिन्मम राज्येस्मिन् म्रियते मानवः क्वचित् तथैव रजकी योसौ यावदाग
म्यते मया कस्यचिद्वचनात्कोपि न दग्धव्यः कथंचन तथेत्युक्तास्नुषाभिः सा सोमा याता महांबुधिं
पारमुत्तारयामास तत्क्षणेन द्विजपुत्रकौ स्वमाकाशयानेन सा ततार महांबुधिं प्राप्ताः कांचीपुरीं सर्वे·
निमेषात्तत्प्रभावतः सोमाथ नवतीं दृष्ट्वा तत्र पूजामथाकरोत् अत्रांतरे शिवस्वामी तदा देशांतरा
त्स्वसुः ब्राह्मणं रुद्रशर्माणं गुणेन सदृशं स्वसुः ततः सा रजकी सोमा वैवाहिकमथाकरोत् सुल
ग्ने च सुनक्षत्रे देवस्वामीतकन्यकां ददौ तस्मै गुणवतीं गुणिने रुद्रशर्मणे ततो वैवाहिकैर्मंत्रैर्हूयमा
ने हुताशने अथ सप्तपदीमध्ये रुद्रशर्मा मृतोभवत् रुरुदुर्बांधवाः सर्वे स्थिता सोमा निराकुला
आक्रंदः सुमहानासील्लोकानां तत्र पश्यतां धनवत्यै च सा तूर्णं व्रतराजप्रभावजं पुण्यं संकल्प्य वि·
धिवद्दौ मृतिविनाशनं रुद्रशर्मापि तस्माच्च व्रतराजप्रभावतः आससाद तदा जीवं सुप्तवत्सहसो·
त्थितः एवं विवाहं निर्वर्त्य व्रतराजं निवेद्य च आमंत्र्य तां धनवतीं सोमा प्रयाहं गृहं प्रति एवं सा रजकी सो
मा जीवयित्वा मृतं द्विजं चचाल हर्षसंपूर्णा पूर्णकामा स्वमंदिरे अत्रांतरे गृहे तस्याः प्रथमं तनयो मृतः
पुनः स्वामी मृतस्तस्या जामाता च ततो मृतः आगच्छंत्यास्तदा तस्याः सोमवारान्विता तिथिः अमावास्या ब·
भूवाथ मृतसंजीविनी तिथिः सा ददर्श ततो यांतीं कांचिद्वृद्धां स्त्रियं तदा तूलभारभराक्रांतां क्रंदमा·
नां सुदुःखितां वृद्धोवाच अवतारय मे पुत्रि तूलभारं शिरःस्थितं एतद्भारभराक्रांतां क्रंदमानां सुदुःखि
तां सोमोवाच अमावास्याद्य हे पुत्रि सोमवारयुता तिथिः तूलराशिं न स्पृशामि नियमोयं मया कृतः
पुनर्ददर्श सा यांती मूलभारवतीं स्त्रियं साप्युवाच ततः पुत्रि मूलभारो महानिति अवतार्य क्षणं तिष्ठ
संगे यास्याम्यहं तव सोमोवाच अद्य मूलं तथा तूलं न स्पृशामि कथंचन ततो ग्रस्यतरुं चैव नदीतीर·
भवं पथि स्नात्वा विष्णुं समभ्यर्च्य प्राकाराभिः प्रदक्षिणं सा चकार महाभागा तदेवाष्टोत्तरं शतं
भीष्म उवाच यदा प्रदक्षिणावर्तं कृतं शर्करहस्तया तदा जीवितवंतस्ते जामाता पतिपुत्रकाः न
गरस्त्री समाकीर्णं तद्गृहं च विशेषतः अथायाता महाभागा सोमा स्वभवनं प्रति जीवितं वीक्ष्य भ
र्तारं पुत्रं जामातरं तथा अतुलां स्तां समासाद्य जगाम कृतकृत्यतां प्रणिपत्य स्नुषाः सर्वाः पप्र·
च्छुस्तां तपस्विनीं स्नुषा ऊचुः मृतास्ते तनया देवि पतिर्जामातृबांधवाः जीवितास्ते कथं देवि मृ
तास्ते च कथं वद सोमोवाच गुणवत्यै मया दत्तं व्रतराजप्रभावकं मृतास्ते तद्विपाकेन पतिजामा
तृपुत्रकाः तूलकं न मया स्पृष्टं मूलकं च तथैव च अश्वत्थे विष्णुमभ्यर्च्य तदा तत्र प्रदक्षिणं प्रा·
काराहस्तया भूयः कृतमष्टोत्तरं शतं जीवितास्तत्प्रभावेण पतिजामातृपुत्रकाः सर्वाभिः क्रिय
तामद्य व्रतराजं विधानतः भविष्यति न वैधव्यं सौभाग्यं संभविष्यति स्नुषास्ताः कारयामास
तथा सोमा व्रतेश्वरं भुक्त्वा भोगान्बहूंस्तत्र पुत्रपौत्रादिभिः सह तैश्च सर्वैः परिवृता विष्णुलो
कमवाप सा इत्येतत्कथितं पार्थ विस्तरेण मयानघ युधिष्ठिर उवाच माहात्म्यं व्रतराजस्य को
विधिर्वद विस्तरात् कर्तव्यं केन भीष्मेदं नारीभिः पुरुषेण वा भीष्म उवाच अमावास्या तिथि
पार्थ सोमवारान्विता यदा तदा प्राप्यते मः काले देवानामपि दुर्लभः प्रातरुत्थाय व्रतिना स्नानं

कार्यं जलाशये स्नात्वा मौनेन कौशेयं परिधाय व्रती ततः आयादश्वत्थवृक्षस्य समीपं कुरु
नंदन अश्वत्थमूले कर्तव्या विष्णुपूजा समंत्रका विष्णुपूजामंत्रः अव्यक्ताव्यक्तरूपाय स्
थितिस्थित्यंतकारिणे आदिमध्यांतहीनाय विष्टरश्रवसे नमः एवं संपूज्य गोविंदं पीतवस्त्रा
न्वितैः फलैः कुसुमैर्विविधैश्चैव भक्ष्यभोज्यैस्तथाविधैः अश्वत्थपूजनं कार्यं प्रोक्तमंत्रेण·
पांडव अश्वत्थपूजामंत्रः अश्वत्थाहुतमावास गोविंदस्य सदाश्रय अशेषं हर मे पापं वृक्षराज।
नमोस्तुते इति सोमायस्वः सोमवाराय नमः सोमायै नमः एवं पूजाविधिं कृत्वा ततः कुर्यात्प्र
दक्षिणां मौक्तिकैः कांचनै रौप्यैर्हीरकैर्माणिक्यैस्तथा कांस्यपात्रैस्ताम्रपात्रैर्भक्ष्यपूर्णैः पृथक्पृथ
क् गृहीत्वा भ्रमणं कार्यं प्रदक्षिणेन पिप्पले तावत्प्रदक्षिणं कार्यं यावदष्टोत्तरं शतं तद्वस्तुजातं
विप्राय पुरंध्रीभ्यः प्रदीयते ततो निरामिषाहारं कुर्यात्स्त्रीजनैः सह एष ते कथितो भूयो व्रतराज
विधिर्मया द्रौपदी च सुभद्रा च कारयत्नतयोत्तरा उत्तरागर्भसंस्थस्तु जीवितं लभते चिरात् युधि
ष्ठिर उवाच या चाल्पविभवा नारी कांचनाद्यैर्विना कृता सा कथं लभते पूर्णं व्रतराजफलं वद भी·
ष्म उवाच फलैः पुष्पैस्तथा भक्ष्यैर्वस्त्राद्यैरपि पांडव कुर्यात्प्रदक्षिणां वर्त्ते सापि पूर्णफलं लभेत्
व्रतमिदमखिलं नरेंद्र विष्णोः श्रुतमनपायि पराक्रमं तथापि पतिसुतधनमिच्छती पुरंध्री सप·
दि करोति तन्न चात्र चित्रमस्ति भीष्म उवाच शृणु पार्थ प्रवक्ष्येऽहमुद्यापनविधिं शुभं विना येन व्रत·
स्यास्य न पूर्णफलता भवेत् सर्वतोभद्रमध्ये तु स्थापयेत्कुंभमव्रणं वृक्षराजं सुवर्णस्य पंचरत्नस
मन्वितं तन्मूले प्रतिमां विष्णोः सौवर्णीं च चतुर्भुजां लक्ष्म्यावाहनसंयुक्तां माषमाषार्धपलावधि उ
पचारैरनेकैश्च यथाविभवविस्तरैः नैवेद्यैः पुष्पधूपैश्च दीपैश्च परितः स्थितैः रात्रौ जागरणं कुर्यात्
प्रभाते होममाचरेत् समिद्भिः पिप्पलाभिस्तु पायसेन तिलैस्तथा पूर्णाहुतिं च जुहुयाद्गां च दद्या·
त्पयस्विनीं द्वादश ब्राह्मणान्भोज्य घृतपायसमोदकैः उपवीतानि वस्त्राणि तेभ्यो दद्याच्च दक्षिणां प्र
णम्य दंडवद्भूमौ प्रार्थयित्वा विसर्जयेत् ॥ इति भविष्योक्तं सोमवत्यमावास्याव्रतं अथोद्याप
नप्रयोगः तिथ्यादि संकीर्त्य मम अवैधव्यपुत्रपौत्रप्राप्तिपूर्वकातुलसौभाग्यसिद्धिद्वारा अश्वत्थ
रूपीनारायणप्रीत्यर्थमाचरितसोमवत्यमावास्याव्रतस्य सांगताफलसिद्ध्यर्थं तदुद्यापनारंभक·
माहं करिष्ये इति संकल्प्य वृताचार्यः सर्वतोभद्रस्य कलशे रौप्यमयपीठस्थसौवर्णाश्वत्थवृक्षस्थ
स्थं हैमं लक्ष्मीनारायणं इदं विष्णुरिति मंत्रेण पूजयेत् अश्वत्थस्य सोमादिपूजामपि कुर्यात् त
त्रमंत्राः पूर्वोक्ता एव ज्ञेयाः कथाश्रवणादिना रात्रिं नयेत् प्रातः अग्निं प्रतिष्ठाप्य अन्वाद्ध्यात्
तत्र प्रधानं लक्ष्मीनारायणमश्वत्थसमित्पायसतिलद्रव्येण प्रत्येकमष्टोत्तरशतसंख्याकाहु·
तिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या यक्ष्ये एवं होमं समाप्य द्वादश ब्राह्मणान्वस्त्रादि·
ना संपूज्य लड्डुकपायसमंडुकादिपक्वान्नैः संतर्प्य अश्वत्थप्रतिमादिकमाचार्याय दत्वा गां
च सोपस्करां दत्वाशिष उपगृहीत्वा भुंजीत इति सोमवत्यमावास्याव्रतोद्यापनं ॥ अथ
सर्वमासेष्वमावास्यासाधारणव्रतानि हेमाद्रौ अमायां तु निराहार अब्दमेकं सुयंत्रितः शूलं
पिष्टमयं कृत्वा वर्षांते विनिवेदयेत् अनेन ब्रह्महत्यादिपातकहानिररिनाशश्च शिवलोक
प्राप्तिश्च भवतीति शिवधर्मोक्तममावास्याशूलव्रतं अथ पितृव्रतं हेमाद्रौ अगस्त्य उवाच सर्गादौ
ब्राह्मणः सृष्टास्तु पूर्वः पितरस्तदा वृत्तिं नो देहि भगवन्यथा वर्त्तामहे वयं ब्रह्मोवाच अमावा
स्यादिनं वोऽस्तु तस्यां कुशतिलोदकैः तर्पिता मानुषैस्तृप्तिं परां गच्छत नान्यथा तिलादेया·
स्तथैतस्यां तु पोष्या पितृभक्तितः चिरायतस्य संतानं वरं यच्छत माचिरं तस्मादस्यामितियोवि

ह्नानेतत्सर्वं समाचरेत् इतिवाराहपुराणोक्तममायांपितृव्रतं भविष्योत्तरोक्तंपितृव्रतंयथा
ब्रह्मोवाच पितरःस्वदिनेपिंडैरिष्टाःकुर्वंतिसर्वदा प्रजावृद्धिंधनंरत्नमायुष्यंबलमेवच मू
लमंत्राःस्वसंज्ञाभिरंगमंत्राश्चकीर्तिताः गंधपुष्पोपहारैश्चयथाशक्तिविधीयते पूजाऽवित्त
शाठ्येनकृतापितृफलप्रदाः आज्यधारासमिद्भिश्चदधिक्षीरान्नमाक्षिकैः पूर्वोक्तफलदो
होमस्तुतःशांतेनचेतसा इतिभविष्यपुराणोक्तममायांपितृव्रतं अथास्यांपयोव्रतंब्रह्मपु
राणे वर्षमेकंभवेद्यस्तुपंचदश्यांपयोव्रतः पंचदश्याममावास्यायां वत्सरांतेजलकुंभयु
तानिवासांसिदद्यात् तेनविष्णुलोकशामिर्भवति इतिब्रह्मपुराणोक्तममायांपयोव्रतम्

स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्नानाशास्त्रविचारसाररसवित्सद्वृंद
संरक्षकः धर्माधर्मविभागकृद्रघुपतेःपादांबुजार्चारतोजीव्यात्पुत्रकलत्रमित्रसहितःसं
पालयन्क्ष्मांचिरं १ रणवीरसिंहभूपेशकारितेकृत्यसागरे प्रभवच्चैत्रकृत्यानांरम्योरत्नस
मुच्चयः २ ॥ इतिश्रीमत्सूर्यवंशावतंसरघुकुलतिलकश्रीरणवीरसिंहमहाराजकारिते
कृत्यरत्नाकरेचैत्रमासकृत्यरत्नसमुच्चयः १ ॥ * ॥ * ॥ * ॥ * * ॥ *

॥ ॥ ॐस्वस्तिश्रीगणेशाय नमः ॥ अथ वैशाखमासे कृत्यनिर्णयः ॥ मेषसंक्रमणे प्रायः प्राक्षोडश घटिकाः पुण्यकालः रात्रौ चेत्प्रागुक्तो निर्णयः मध्याविषुवति प्रोक्ता इति सामान्यनिर्णये नारदीयवचनात् अत्र धर्मघटादिदानम् पृथ्वीचंद्रोदये तीर्थे चानुदिनं स्नानं तिलैश्च पितृतर्पणम् दानं धर्मघटादीनां मधुसूदनपूजनम् माधवे मासि कर्तव्यं मधुसूदनतुष्टिदम् स्कान्दपुराणे वैशाखं यः क्षिपेन्मासमेकभक्तेन मानवः स याति श्रेष्ठतां लोके हि जितोपनवानपि मत्स्यपुराणे वैशाखे पुष्पलवणं वर्जयित्वा तु गोप्रदः भूत्वा विष्णुपदे कल्पं स्थित्वा राजा भवेदिह विष्णुपदे विष्णुपुरे भविष्यपुराणे वैशाखे मासि राजेंद्र यः कुर्यान्नक्तभोजनम् मध्यादनं तु भुंजानो जितक्रोधो जितेंद्रियः गोष्ठे सायमधःशायी निशायामेकवस्त्रधृक् नियमं च यथोद्दिष्टं सामान्यं सर्वदाचरेत् महाभारते निस्तरेदेकभक्तेन वैशाखं यो जितेंद्रियः आयुष्यं ब्रह्मचर्यं च महापातकनाशनम् निस्तरेदिति वाहयेत् ब्रह्मचर्यमत्र व्रतांगम् महायानकन्याप्राशनात्र फलम् विष्णुधर्मोत्तरे हेमाद्रीये: क्षिपेदेकभक्तेन वैशाखं पूजयेद्धरिम् नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत् तत्रैव मार्कंडेय उवाच चैत्र्यां तु समतीतायां यावत्स्यात्तद्दिने दिने पूजयेद्देवदेवेशं नृसिंहमपराजितम् होमं सिद्धार्थकैः कुर्यात् प्रत्यहं प्रयतो नरः वैशाख्यां कनकं दद्यात्त्रिरात्रोपोषितो नृप। स्नानावाप्तिकरं स्यात्तद्धर्मबुद्धिविवर्धनमिति तथा चात्र प्रपादानम् तत्र च अपूपानां प्रदानेन वैशाखे सुखमश्नुते राजमार्तंडेपि तुलामकरमेषेषु प्रातःस्नायी सदा भवेत् हविष्यं ब्रह्मचर्यं च महापातकनाशनमिति पृथ्वीचंद्रोदये विष्णुस्मृतिपारिजातयोः ॥अथ वैशाखस्नानविधिः॥ अत्र सौरो मास उक्तः अन्यत्र पद्मपुराणे मधुमासस्य शुक्लायामेकादश्यामुपोषितः पंचदश्यां च भोवीर मेषसंक्रमणेपि वा वैशाखस्नाननियमं ब्राह्मणानामनुज्ञया मधुसूदनमभ्यर्च्य कुर्यात्संकल्पपूर्वकम् तत्र मंत्रः वैशाखं सकलं मासं मेषसंक्रमणे रवेः प्रातः सनियमः स्नास्ये प्रीयतां मधुसूदनः मधुहन्तः प्रसादेन ब्राह्मणानामनुग्रहात् निर्विघ्नमस्तु मे पुण्यं वैशाखे स्नानमन्वहम् प्रार्थना च माधवे मेषगे भानौ मुरारे मधुसूदन प्रातःस्नानेन मे नाथ फलदो भव पापहन्निति तीर्थविशेषोपि तत्रैवोक्तः मेषसंक्रमणे भानौ माधवे मासि यत्नतः महानद्यां नदीतीर्थे नदे सरसि निर्झरे देवखाते तथा स्नायाद्यथाप्राप्ते जलाशये दीर्घिकाकूपवापीषु नियतात्मा हरिं स्मरन् इति संकल्पे च तीर्थनाम ग्राह्यम् अज्ञाने तु विष्णुतीर्थमिति वदेत् तथा च तत्रैव यदा न स्थापितं नाम तस्य तीर्थस्य भो द्विजाः तदेदमुच्चारणं कार्यं विष्णुतीर्थमिदं त्विति तीर्थस्य देवता विष्णुः सर्वत्रापि न संशयः अथान्योपि विशेषस्तत्रैव पाद्मे तुलसीकृष्णगौराख्या तयाभ्यर्च्य मधुद्विषं विशेषेण तु वैशाखे नरो नारायणो भवेत् माधवं सकलं मासं तुलस्या योर्चयेन्नरः त्रिसंध्यं मधुहन्तारं तस्य नास्ति पुनर्भवः तथा च प्रातःस्नात्वा विधानेन माधवे माधवप्रिये योश्वत्थमूलमासिंचेत्तोयेन बहुना सदा कुर्यात्प्रदक्षिणं तेन सर्वदेवप्रियं ततः पितृदेवमनुष्यांश्च तर्पयेत्सचराचरं योश्वत्थमर्चयेद्देवमुदकेन समंततः कृत्वा नाम ततस्तेन तारितं स्यान्न संशयः कंडूयनं तु गोगात्रे स्नात्वापि जलतर्पणम् कृत्वा गोविंदमभ्यर्च्य न दुर्गतिमवाप्नुयात् तथा चात्र व्रतविशेषोपि एकभक्तमयो नक्तमयाचितमतंद्रितः माधवे मासि यः कुर्याल्लभते प्राप्समीप्सितम् वैशाखे विधिना स्नानं देवनद्यादिके बहिः हविष्यं ब्रह्मचर्यं च भूशय्या नियमस्थितिः व्रतं दानं दमो देवमधुसूदनपूजनम् अपि जन्मसहस्रोत्थं पापं हरति दारुणमिति मदनरत्ने स्कांदे प्रपा कार्या च वैशाखे देवे देया गलंतिका उपानद्व्यजनच्छत्रसूक्ष्मवासांसि चंदनम् जलपात्राणि देयानि तथा पुष्पगृहाणि च यानि कानि विचित्राणि द्राक्षारंभाफलानि च देयानि तानि वैशाखे मधुसूदनप्रीतये तिथिं तत्रैव च ददाति यो हि मेषादौ शक्तून्न घटान्वितान् पितृनुद्दिश्य विप्रेभ्यः सर्वपापैः प्रमुच्यते तथा वैशाखे यो घटं सर्पिःसंभोज्यं वै द्विजन्मने ददाति स नरो राजेंद्र स याति परमां गतिम् एवं संपूर्णस्नानाशक्तौ त्र्यहं वा स्नायात् तदुक्तं तत्रैव पाद्मे त्रयोदश्यां चतुर्दश्यां वैशाख्यां वा दिनत्रयम् अपि सम्यग्विधानेन नारी वा पुरुषोपि वा प्रातःस्नातःस्मरि

यमः सर्वपापैः प्रमुच्यते इति तथा च तत्रैव निदिश्य जलपात्रे च भानुमाधवमासके माधवं येऽर्चयिष्यन्ति देवता
स्तेन राजेन्द्र स्वर्णपात्रेऽथवा रौप्ये ताम्रे वा मृन्मयेऽपि वा तोयस्थं योऽर्चयेद्देवं शालिग्रामशिलोद्भवम् प्रतिमां
वा महाभाग तस्य पुण्यमनन्तकमिति हेमाद्रौ वामनपुराणे च वैशाखे पुष्पलवणं वर्जयित्वा च गोप्रदः प
तत्कांतिव्रतं नाम कांतिसौभाग्यदायकमिति विष्णुरेवात्र देवता यदा वैशाखे मलमासो भवति तदा कामा
नां तत्रैव समाप्तिनिषेधान्मासद्वयम् तन्नियमांश्च कर्त्तव्याः मासोपवासचान्द्रायणादिसमाप्तिस्तु मलमा
स एव तदुक्तं दीपिकायां नियतत्रिंशद्दिनत्वाच्छुभे मासारभ्य समापयेत् मलिने मासोपवासव्रतमिति अ
न्नदानविशेष उक्तोऽपरार्के वामनपुराणे गन्धाश्च माल्यानि तथा वैशाखे सुरभीणि च देयानि द्विजमुख्ये
भ्यो मधुसूदनतुष्टये एवं स्नानादिनियमं विधिना विधाय तस्योद्यापनम् तदुक्तं तत्रैव मासमेवं बहिः स्ना
त्वा नद्यादौ विमले जले एकादश्यां च द्वादश्यां पौर्णमास्यामथापि वा उपोष्यन्ति यतो भूत्वा ऊर्ध्वमुद्यापनं बु
ध इत्युद्यापनविधानम् तत्रैवाभिधास्यते अथ वैशाखकृष्णप्रतिपदायां तिथिपत्वेन वह्निपूजा विधानं
ब्रह्मपूजा वैशाखस्नानादिविधिः वैशाखकृष्णद्वितीयासमानकल्पादि अत्र कल्पादिविधानोक्तं श्राद्धदा
नादिकार्यं तिथिपत्वेन ब्रह्मपूजापि वैशाखकृष्णतृतीयायां गौरीव्रतांगत्वेन शीतिदेव्याः पूजनं कंकोलो
दकप्राशनं वैशाखकृष्णचतुर्थ्यां श्रावणादिसंकष्टव्रतांगत्वेन गणपतिव्रतं शतपत्रप्राशनं वैशाखकृ
ष्णपंचम्यां तिथिपत्वेन नागानां पूजनं वैशाखकृष्णषष्ठ्यां तिथिपत्वेन स्कंदपूजनं वैशाखकृष्णसप्तम्यां च
तिथिपत्वेन सूर्यपूजनं वैशाखकृष्णाष्टम्यां चैत्रकृष्णादित्वेन शीतलाव्रतविधानम् वैशाखे शक्तस्यां वह्ना
ज्ये शर्करयान्वितमिति स्त्रीभिः कार्यम् चैत्रवैशाखकृष्णशुक्लनवम्योश्चंडीपूजनमुक्तं भविष्योत्तरे निर्णयामृ
ते वैशाखे मासि राजेंद्र नवम्यां पक्षयोर्द्वयोः उपवासपरो भूत्वा पूजयानश्च चंडिकां हंसकुंदेंदुसंकाशं तेज
सार्कवसन्निभम् विमानवरमारूढो देवलोके महीयत इति वैशाखकृष्णदशम्यां मार्गशीर्षादिदशम्याभयद
शमीव्रतत्र्यांगत्वेन धर्मराजपूजा दिक्पूजा च कार्या इति विष्णुधर्मोत्तरे वैशाखकृष्णैकादशी वरूथिनी त
था च भविष्योत्तरे युधिष्ठिर उवाच वैशाखस्यासिते पक्षे किंनामैकादशी भवेत् महिमानं कथय मे वासुदेव न
मोऽस्तु ते श्रीकृष्ण उवाच सौभाग्यदायिनी राजन् इहलोके परत्र च वैशाखकृष्णपक्षे तु नाम्ना चैव वरूथिनी वरू
थिन्या व्रतेनैव सौख्यं भवति सर्वदा पापहानिश्च भवति सौभाग्यप्राप्तिरेव च दुर्भगा या करोत्येनां सा स्त्री सौभाग्य
माप्नुयात् लोकानां चैव सर्वेषां भुक्तिमुक्तिप्रदायिनी सर्वपापहरा नृणां सर्वपापनिकृंतनी वरूथिन्या व्र
तेनैव मांधाता स्वर्गतिं गतः धुंधुमारादयः सर्वे राजानो वसवस्तथा ब्रह्मकपालनिर्मुक्तो बभूव भगवान्भवः द
शवर्षसहस्राणि तपस्तप्यंति ये नराः तत्तेषां फलमाप्नोति वरूथिन्या व्रतादपि श्रद्धावान्कुरुते यस्तु वरूथिन्या व्र
तेन नरः वांछितं लभते सोऽपि परत्रेह यथा मानवः पवित्रा या विनीतैषा महापातकनाशिनी भुक्तिमुक्तिप्रदा ह्येषा क
हिण्याः राजसत्तम अश्वदानात्परं दानं नृपश्रेष्ठ गजसत्तम गजदानाद्भूमिदानं तिलदानं ततोऽधिकं अन्नदानात्पर
दानं न भूतं न भविष्यति पितृदेवमनुष्याणां तृप्तिरन्नेन जायते तत्समं कविभिः प्रोक्तं कन्यादानं नृपोत्तम धेनु
दानं च तत्तुल्यमित्याह भगवान्स्वयम् एतेभ्यः सर्वदानेभ्यो विद्यादानं विशिष्यते तत्फलं समवाप्नोति नरः कृ
त्वा वरूथिनीं कन्यावित्तेन जीवंति ये नराः पापमोहिताः पुण्यक्षये ते गच्छंति निरयं यातनायुतम् तस्मात्सर्वप्र
यत्नेन न ग्राह्यं कन्यकाधनम् कन्यां स्वर्णेन यो दद्याद्यथाशक्ति स्वलंकृताम् तत्पुण्यसंख्यां नृपते चित्रगुप्तो न वेत्त्य
लम् तत्तुल्यपुण्यमाप्नोति नरः कृत्वा वरूथिनीम् कांस्यं मांसं मसूरान्नं चणकान्कोद्रवांस्तथा शाकं मधु प
रान्नं च पुनर्भोजनमैथुने वैष्णवो व्रतकर्ता च दशम्यां दश वर्जयेत् द्यूतक्रीडां च निद्रां च तांबूलं दंतधावनम् प
रापवादपैशुन्यं स्तेयं हिंसां तथा रतिम् क्रोधं चानृतवाक्यं च एकादश्यां विवर्जयेत् कांस्यं मांसं सुरां क्षौद्रं
तैलं विभाषणम् व्यायामं च प्रवासं च पुनर्भोजनमैथुने स्पृश्यास्पृश्यं परद्रोहं द्वादश्यां परिवर्जयेत् अनेन विधि

नारायणं द्विजैस्तैश्च वरूथिनी रात्रौ जागरणं कुर्यात्पूजितो मधुसूदनः सर्वपापविनिर्मुक्तास्ते यान्ति परमां गतिम्
तस्मात्सर्वप्रयत्नेन कर्तव्या पापभीरुभिः आदित्यतनयाद्भीतैर्नरैर्देव वरूथिनी पठनाच्छ्रवणाद्राजन्गोस
हस्रफलं लभेत् सर्वपातकनिर्मुक्तो विष्णुलोके महीयते इति भविष्यपद्मयोर्वैशाखकृष्णा वरूथिन्येका
दशीव्रतकथा वैशाखकृष्णद्वादश्यां तिथीशपूजात्वेन हरिपूजा भोजनदक्षिणादिभिर्वैष्णवद्विजानां
परिचर्या कार्या वैशाखकृष्णत्रयोदशी गौरीकल्पादिः अत्रापि कल्पादित्वेन श्राद्धदानादेरक्षय
फलकल्पादिग्रन्थप्रतिपादनात् वैशाखकृष्णचतुर्दश्यां मासशिवरात्रिचतुर्दशीव्रतांगत्वेन वर्षशिवरा
त्रिव्रतवदुपवासजागरणप्रहरचतुष्टयपूजादिविधानं सर्वकृष्णचतुर्दशीषु कार्यम् वैशाखस्यामाव
स्यायां श्राद्धदानादिकं विधेयम् अकरणे प्रत्यवायः अमावास्यायां तीर्थतः पौर्णमास्यष्टमीषु च विद्वान्
श्राद्धमकुर्वाणो नरकं प्रतिपद्यत इति वैशाखकृष्णपक्षकृत्यनिर्णयः अथ शुक्लपक्षकृत्यनिर्णयः वैशाख
शुक्लप्रतिपदायाम् आरोग्यप्रतिपद्व्रतांगत्वेन धातृनामानं सूर्यम् पूजाव्रतं च कुर्यात् तत्र तिथिपत्वेन व
ह्निपूजामपि कुर्यात् वैशाखशुक्लद्वितीयायां नीललोहितकल्पादिः तत्र कल्पादिश्राद्धदानादिविधानं कु
र्यात् अत्र विशेषो नारदीये राधशुक्लद्वितीयायां भास्करं भुवनाधिपं चतुर्वक्त्रस्वरूपं च समभ्यर्च्य विधानतः
भोजयित्वा द्विजान्भक्त्या भास्करं लोकमाप्नुयात् वैशाखशुक्लतृतीया अक्षयतृतीया इयं गौरीव्रते ह
तरा कार्या रंभाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते इति ब्रह्मवै
वर्तात् गणो गणेशः तदेवाह चतुर्थीतृतीयाविद्धा तृतीया च तया शुभा कर्तव्या व्रतिभिः स्नात धर्म
कामार्थतत्परैरिति स्कंदपुराणे द्वितीयाविद्धानिषेधप्रयोजकत्वं च द्वितीयावेधो न त्रिमुहूर्तपरः किं
तु कलाकाष्ठादिरूपोपि अत एव तृतीया हि गौरीव्रते स्वल्पापि परा कार्या व्रतांतरेषु तु त्रिमुहूर्तवेधे न त्या
ज्यत्वं द्वितीयायाः पि त्रिमुहूर्तायाः पृथग्ग्राह्यत्वमिति यदा तु चतुर्थीयुता किंचिदपि न लभ्यते तदा गौ
रीव्रते त्रिमुहूर्तालाभे चेतरव्रतेष्वपि द्वितीयाविद्धापि ग्राह्या एकादशी तृतीया च षष्ठी चैव चतुर्दशी पू
र्वविद्धापि कर्तव्या यदि न स्यात्परेहनीति वृद्धवसिष्ठवचनात् अत्र सौभाग्यगौरीव्रतांगत्वेन उमादेवी
पूजा दधिप्राशनं केवलगौरीव्रतांगत्वेन विजयागौरीपूजा गोमयप्राशनं च इयं च त्रेतायुगादिः तत्र
श्राद्धं नित्यं काम्यं च युगादीन्नकमध्यानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्य इति विष्णुपुरा
णात् श्राद्धे त्वियमपराह्णव्यापिनी ग्राह्या तस्यापराह्णकालवचनात् कालव्याप्तिशास्त्रस्य सर्वापेक्ष
या बाधकत्वात् अत एव अमावास्या श्राद्धमनंतकालादर्शे पंचमन्वंतरादीनां युगादीनां विनिर्णयः म
हालयस्य पक्षस्य दृष्टकालामपि स्मृत इति यत्तु हे शुक्ले पूर्वे तथा कृष्णे युगादीं कवयो विदुः शुक्ले पूर्वाह्णि
के ग्राह्ये कृष्णे चैवापराह्णिक इति वचनं तदपि उपक्रमकालपरं शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विच
क्षणः कृष्णपक्षे पराह्णे तु रौहिणं तु न लंघयेदिति वायवीयवचनात् रौहिणमुहूर्तं न लंघयेदित्युक्तं य
दा शुक्लपक्षगता युगादितिथिः सर्वस्मिन्दिने कुतपोत्तरं दास्यप्रवृत्तोत्तरदिने हृद्या अपराह्णेपि किंचि
त्वर्तते तदा संपूर्णा या अपराह्णव्यापित्वेन पूर्वदिने तु गतताया एव ग्राह्यतापत्तिः तदपवादत्वेन कुत
पादयविद्धरूपापूर्वाह्णव्यापिनी अपराह्णस्पर्शिन्यत्र तु रापि ग्राह्येति विधीयते न च तदापराह्णशास्त्र
स्यानवकाशः अपराह्णेपि किंचित्तस्या विद्यमानत्वात् हेमाद्रिस्तु मन्वादिष्विव निर्णयः समत्यामन्वाद्या
युगाद्यास्तिथयस्तासु मानवः स्नात्वा हुत्वा च दत्त्वा च जप्त्वानंतफलं लभेदिति भारतोक्तेः स्नानादौ तु त
एकेचित्तु वैशाखस्य तृतीयायां पूर्वविद्धां करोति वै हव्यं देवा न गृह्णन्ति कव्यं च पितरस्तथेति गोभिलवच
नाच्छ्राद्धेपि पूर्वाह्णव्यापिन्येव परा कार्येति वदंति तत्कालादर्शादिविरुद्धमयुक्तं च अपराह्णः पितृणां
पराह्णे तु पैतृकं अपराह्णे पितृक्रियेत्यादिवचनैरपराह्णकालस्याभिधानात् कर्मणो यस्य यः कालस्तत्काल

व्यापिनी तिथिः तथा कर्माणि कुर्वीत ह्रासवृद्धी न कारणमिति वाक्याद् अपराह्णव्यापिन्या एव श्राद्धे ग्राह्यत्वात्
सर्वलिखितगोभिलवचनेन तु नाकर्तृ साकल्ये पित्र्ये देशेन क्रियमाणतर्पणादिविषये व्याख्येयं नारद
वचनं तु दैवकृत्ये इति वचनाद् देवव्याख्येयं इदं च युगादिकं पूर्वयुगादितिथिमध्य एव कर्तव्यं मन्वादौ च युगा॰
दौ च ग्रहणे चेन्दुसूर्ययोः व्यतीपाते वैधृतौ च तत्कालव्यापिनी क्रियेति स्कन्दपुराणात् अत्र कात्यायनः ब्र॰
ह्मपुराणे वैशाखमासि शुक्लायां तृतीयायां जनार्दनः यवानुत्पादयामास युगं चारब्धवान् कृते ब्रह्मलो॰
कात् त्रिपथगां पृथिव्यामवतारयत् तस्यां कार्यो यवैर्होमो यवैर्विष्णुं समर्चयेत् यवान् दद्याद् द्विजातिभ्यः स
यत्नं प्राशयेद् यवान् पूजयेच्छंकरं गंगां कैलासं च हिमालयं भगीरथं च नृपतिं सगराणां कुलावहं स्नानं दानं
तपः श्राद्धं जपहोमादिकं च यत् श्रद्धया क्रियते तत्र तदनन्तायकल्प्यते सिन्धोस्तीरे विशेषेण सर्वमक्ष॰
यमुच्यते होमश्चात्र विष्णवे स्वाहा उपक्रमे तथा दर्शनात् यवप्राशनेन तद्विकार इति वृद्धाः विष्णुः वै
शाखस्य तृतीयायामुपोषितोऽक्षतैर्वासुदेवमभ्यर्च्य तानेव हुत्वा दत्वा च पापेभ्यः पूतो भवति यच्च तस्मिन्न
हनि प्रयच्छति तदक्षय्यतामाप्नोति अभ्यर्च्य तृतीयायामित्यन्वयः तेनोपवासो द्वितीयायामित्यर्थात् अ
क्षतैर्यवैः अक्षतास्तु यवाः प्रोक्ता इत्यादिकोशात् भविष्ये यमः वैशाखे शुक्लपक्षे तु तृतीयायां तथैव च
गंगातोये नरः स्नात्वा सर्वपापैः प्रमुच्यते भविष्यपुराणे इत्येषा तिथिरित्येवं तृतीया लोकविश्रुता सर्व
विशेषतः पुण्या वैशाखे मासि या भवेत् वारिदानं प्रशस्तं स्यान्मोदकानां च भारत वैशाखे मासि राजेन्द्र
तृतीया चन्दनस्य च चन्दनस्य दानं प्रशस्तमित्यनुषंगः देवीपुराणे तृतीयायां तु वैशाखे रोहिण्यर्क्षे प्रपू॰
ज्य च उदकुम्भप्रदानेन ब्रह्मलोके महीयते कलधौतं तथा चान्नं घृतं चापि विशेषतः अक्षय्यदत्तम
क्षय्यं स्यात् तेनेयं त्वक्षया स्मृता पूज्येति देवी दुर्गामिति क्रमात्तेन रोहिणीनक्षत्रयुक्तायामक्षयतृतीया
यां दुर्गां पूज्य पूर्वोदितकुम्भदानस्य ब्रह्मलोकमहितत्वफलमित्यर्थः कलधौतं हिरण्यं हिरण्यदा
नं सुवर्णस्य च दातृत्वे कलधौतान्नघृतदानमक्षयं तत्प्रशस्तमित्यर्थः तथा इत्येषा कथिता राजन् तृतीया ति
थिरुत्तमा तृतीयायां तु वैशाखे ब्रह्मलोके महीयते वर्द्धनीयघटीमन्दलड्डुकादि भोज्यं शष्कुल्यादि
भविष्योत्तरे वैशाखस्य तृतीयायां श्रीसमेतं जगद्गुरुं नारायणं पूजयेत् पुष्पधूपविलेपनैः वस्त्राल॰
कारसद्भावैर्नैवेद्यैर्विविधैस्तथा ततस्तस्याग्रतो धेनुं लवणस्याढकेन तु कुर्यात् कुरुकुलश्रेष्ठ चतुर्भा॰
गेन वत्सकं रुक्मचर्मापि रिष्याप्य कल्पयित्वा विधानतः श्रीधरः श्रीपतिः श्रीमान् श्रीशः संप्रीयतामि
ति अनेन विधिना दत्वा धेनुं विप्राय भक्तितः गोसहस्रप्रदानस्य फलं प्राप्नोति निःसंशयः नारदीयेपि तत्रा
धात् तृतीयायामित्युपक्रम्य पुष्पधूपविलेपनैः महागंगामभिस्नातो मुच्यते सर्वकिल्बिषैः सक्तुभिः पूज॰
येद्विष्णुं तेनैव दद्यात् तेनैव नरः सक्तून् भोजयेद्विप्रानन्नं यमभ्यवहरेत् ततः एवं कृत्वाऽत्र तु विप्र नरो विष्णु
परायणः विष्णुलोकमवाप्नोति सर्वदेवनमस्कृत इति अत्र दानविशेषस्तत्रैव भविष्ये इमां सदा यस्तु तृ
तीयां प्रक्रम्य उदकुम्भान् सकनकान् सान्नान् सर्वरसैः सह यवगोधूमचणकान् सक्तून् दध्योदनं तथा
ग्रैष्मिकं सर्वमेवात्र सस्यं दाने प्रशस्यते देवीपुराणे तृतीयायां तु वैशाखे रोहिण्यर्क्षे प्रपूज्य च उदकुम्भप्र
दानेन शिवलोके महीयते मन्त्रस्तु एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः अस्य प्रदानात् तृप्यन्तु पित
रोपि पितामहाः गन्धोदकतिलैर्मिश्रं सान्नं कुम्भं फलान्वितं पितृभ्यः संप्रदास्यामि अक्षय्यमुपतिष्ठतु अ
त्र श्राद्धं पिण्डरहितं कार्यं अयनद्वितये श्राद्धं तथा च विषुवद्द्वये युगादिषु च सर्वासु पिण्डनिर्वपणादृते इ
ति हेमाद्रौ पुलस्त्यवचनात् अत्र रात्रिभोजने प्रायश्चित्तमुक्तं विधाने रात्रौ भुक्ते तु वत्सरेण तु मन्वादि
षु युगादिषु अभिषेचन मज्जनपेदशतया वन्मि अपरार्के यमः छायोपवासः सर्वेषु युगादिषु दिनेषु च
दर्शान्तु न्यादिसहितेन तेषां लोकाः महोदया इति वैशाखे मलमासे सति तत्रैव युगादिदिनं कार्यं अतथा

च हेमाद्रौ ऋष्यशृङ्गः दशहराः स्तनोत्कर्षः चतुर्दश्यपि युगादिषु उपाकर्माणि चोत्सर्गे होते तद्दष्टं वृषादित इति कालाद-
र्शेपि अत्रेदं च भमन्वादिमहालययुगादिष्विति मलमासकृत्येषु गणनात् महालयशब्देन मन्वादित्रयोदश्यु-
च्यते इति माधवः स्मृतिचन्द्रिकायां तु मासद्वयेप्यकर्तव्यमित्युक्तं योगादिकं मासिकं च श्राद्धं चापरपक्षिकं म-
न्वादिकं नैर्थिकं च कुर्यान्मासद्वयेपि चेति अपरपक्षोपि कृष्णपक्षः न तु महालयः तस्य तत्र निषेधात् मदनरत्ने
मरीचिरपि प्रतिमासं मृताहे च श्राद्धं तत्प्रतिवासरं मन्वादौ च युगादौ च तन्मासोभयोरपीति वत्सरं कि-
यमाणं कल्पादिश्राद्धमिति सप्तव्याचख्यौ अत्र श्राद्धकरणे प्रायश्चित्तम् अग्निविधानेनयस्तपा वा मंत्रैश्च
प्रातवारं तदा जपेत् युगादयो यदा स्युस्ताः कुरुते नैव चाप्ययमिति अत्र समुद्रे स्नानं प्रशस्तं तदुक्तं पृथ्वीचं-
द्रोदये सौरपुराणे युगादौ च नरः स्नात्वा विधिवल्लवणोदधौ गोसहस्रप्रदानस्य कुरुते ते हियत्फलं त-
त्फलं समवाप्नोति भूमिदानस्य चाक्षयमिति इयमेव तृतीया परशुरामजयन्ती सा प्रदोषव्यापिनी ग्राह्या
तदुक्तं स्कान्दे भार्गवार्चनदीपिकायां वैशाखस्य सिते पक्षे तृतीयायां पुनर्वसौ निशायाः प्रथमे यामे रामा-
ख्यस्समये हरिः स्वोच्चगैः षड्ग्रहैर्युक्ते मिथुने राहुसंस्थिते रेणुकायास्तु यो गर्भादवतीर्णो विश्वयमि-
ति दिनद्वये तद्व्याप्तावंशतः समव्याप्तौ च परा अन्यथा पूर्वैव तदुक्तं तत्रैव च भविष्ये शुक्ला तृतीया वै-
शाखे शुद्धोपोष्या दिनद्वये निशायाः पूर्वयामे चेदुत्तरान्यत्र पूर्विकेति अथाक्षयतृतीयाव्रतविधिः भ-
विष्ये श्रीकृष्ण उवाच वैशाखस्य तृतीयायां श्रीसमेतं जगद्गुरुं नारायणं पूजयेथा पुष्पधूपविलेप-
नैरिति यो यवान् ददाति करकान्वारिबीजसमन्वितान् प्रयाति पुरुषो वीर लोकान्वै हेममालिनः बीज-
मन्त्रे हेममालिनः सूर्यस्य बहुनात्र किमुक्तेन किं वक्षातरमालया वैशाखस्य सिता मे का तृतीयामक्ष-
या स्मृता अस्यां स्नानं जपो होमः स्वाध्यायः पितृतर्पणं दानं च क्रियते तेन स्वाल्पं वा यदि वा बहु तत्सर्वम-
क्षयं प्रोक्तं तस्मात्साक्षयतया स्मृता आदिः कृतयुगस्येयं युगादिस्तेन कथ्यते सर्वपापप्रशमनी सर्वसौभा-
ग्यदायिनी पुरा महोदये पार्थ वणिगासीत्सतिर्द्धनः तेन श्रुता वाच्यमाना तृतीया रोहिणीयुता यस्त्र-
स्या बुधसंयुक्ता तदा सा तु महाफला तस्यां यद्दीयते किंचित् तदक्षयं तदेव हि इति श्रुत्वा तु गंगायां संतर्प्य पि-
तृदेवताः गृहमागत्य करकान्सान्नानुदकसंयुतान् अन्नपूर्णान्बृहत्कुम्भान् जलेन विमलेन च यवा-
गोधूमलवणान्सक्तून् दध्योदनं तथा द्राक्षादीरविकारांश्च सहिरण्यान्स्वशक्तितः सुविशुद्धेन मन-
सा ब्राह्मणेभ्यो ददौ वणिक् भार्यया वार्यमाणोपि कुटुम्बासक्तचित्तया तया तस्यास्थिरं सर्वं मत्वा सर्वं
विनश्वरं धर्मासक्तमतिः पार्थ कालेन बहुनां ततः जगाम पंचत्वमसौ वासुदेवमनुस्मरन् ततः स क्ष-
त्रियो जातः कुशावत्यां युधिष्ठिर बभूव चाक्षया तस्य समृद्धिर्धर्मसंयुता इयाज स महायज्ञैः समाप्तव-
रदक्षिणैः सददौ गोहिरण्यानि दानान्यन्यान्यहर्निशं बुभुजे कामतो भोगान्दीनार्थांस्तर्पयन् धनैः तथाप्य-
क्षयं तस्य यातिं न तद्धनं श्रद्धापूर्वं तृतीयायां यद्दत्तं विभवं विना इत्येतत्ते समाख्यातं श्रूयतामत्र
यो विधिः तृतीयां तां समासाद्य संतर्प्य पितृदेवताः एकभावं तदा कुर्याद्वासुदेवं प्रपूजयेत् उदकुम्भान्स-
करकान्सान्नान्सर्वरसैः सह ग्रैष्मिकं सर्वमेवान्नं सस्यं दाने प्रशस्यते छत्रोपानहमाद्युक्तं गोभूकांचन-
वाससा यद्यदिष्टतमं चान्यत्तद्देयमविशंकया एतत्ते सर्वमाख्यातं किमन्यच्छ्रोतुमिच्छसि अनाख्ये-
यं न मे किंचिदस्तीति स्तीह सदा न च अस्यां तिथौ क्षयमुपैति हुतं न दत्तं तेनाक्षयेति कथिता मुनिभिस्तृ-
तीया उद्दिश्य दैवतपितॄन्क्रियते मनुष्यैस्तच्चाक्षयं भवति भारत सर्वमेव अथ विष्णुधर्मोक्तमक्षय-
तृतीयाव्रतं वैशाखशुक्लपक्षे तु तृतीयायामुपोषितः अक्षयं फलमाप्नोति तेन सा ह्यक्षया मता यदा
सा कृत्तिकायोगेन विशेषेण प्रपूजिता तत्र दत्तं हुतं जप्तं सर्वमक्षयमुच्यते अक्षया सा तिथिस्तस्मात्तस्या-
सुकृतमक्षयं अक्षतैः पूज्यते विष्णुस्तेन साप्यक्षया मता अक्षतैस्तु नरः स्नातो विष्णोर्दत्त्वा तथाक्षतान् स-

अस्य हृत्ताश्चैव दत्त्वा च मृगनंदन एवमेव तृतीयानां सर्वासां तु फलं लभेत् इति वैशाखशुक्लचतुर्थीकृत्यम्
नारदीये वैशाखस्य चतुर्थ्यां तु संप्रपूज्याऽनिरुद्धकं यतिभ्यो लंबुपात्राणि दत्त्वाभीष्टं लभेन्नरः चतुर्मूर्तिव्र
तान्येवं कृत्वा हा द्वादशवत्सरं उद्यापनविधानेन कर्तव्यं फलमिच्छता वैशाखपंचम्यां शिवपूजोक्ता तत्रैव
अथ वैशाखपंचम्यां शिवं चाभ्यर्च्य भक्तितः सर्वनागगणोपेतं सोऽभीष्टं लभते फलमिति वैशाखशुक्लष
ष्ठीकृत्यं च तत्रैव वैशाखशुक्लषष्ठ्यां पूजयित्वा च कार्तिकं लभते मातृजं सौख्यं नात्र कार्या विचारणा
वैशाखशुक्लसप्तम्यां गंगोत्पत्तिर्नारदीये वैशाखशुक्लसप्तम्यां जह्नुना जाह्नवी स्वयं क्रोधात्पीता पुनस्त्य
क्ता कर्णरंध्रात्तु दक्षिणात् तां तत्र पूजयेत्स्नात्वा प्रत्यूषे विमले जले गंधपुष्पादिनाद्यैश्च सर्वैरेवोप
चारकैः ततो घटसहस्रं तु देयं गंगाव्रतं त्विदं भक्त्या कृतं सप्तकुलं नयेत्स्वर्गमसंशयः गंगापूजनप्र
कारस्तु दशहराप्रकरणे द्रष्टव्यः अत्र सप्तमी पूर्वाह्णव्यापिनी ग्राह्येति समयमयूखे निर्णयसिंधौ तु
त्रिमुहूर्ता चापराह्णमध्याह्नव्यापिनी ग्राह्येत्युक्तम् अस्यामेव कमलसप्तमीव्रतं नारदीये कमलव्रतमः
प्यत्रोक्तं तद्विधिरुच्यते तिलपात्रे तु सौवर्णं विधाय कमलं शुभं वस्त्रयुग्माहतं कृत्वा गंधपुष्पादिना
र्चयेत् नमस्ते पद्महस्ताय नमस्ते विश्वधारिणे दिवाकर नमस्तुभ्यं प्रभाकर नमोऽस्तु ते इति संप्रा
प्यार्द्र्ये देवेशं सूर्ये चास्तमुपागते सोदकुंभं तु तत्पात्रं कपिलां च वियोजयेत् तद्दिने तूपवासस्तु भोक्त
व्यं च परेऽहनि संभोज्य ब्राह्मणान्भक्त्या व्रतस्य फलमाप्नुयात् पाद्मे तु वसंतामलसप्तम्यां स्नातः स
न् गौरसर्षपैः तिलपात्रे तु सौवर्णं निधाय कमलं शुभमित्युपक्रम्य एवं संवत्सरं कृत्वा अंते तु स्वर्णक
मलान्विते सूर्यशयनादि च दद्यात् सर्वसौख्यान्वितो भवतीति कमलसप्तमीव्रतम् अस्यामेव सप्त
म्यां निंबसप्तमीव्रतं भविष्योत्तरे नारदीयेऽपि निंबव्रतं च तत्रैव तद्विधानमिदं शृणु निंबपत्रैः स्मृता
पूजा भास्करस्य द्विजोत्तम खखोल्कायेति मंत्रेण प्रणवाद्येन नारद ॐ खखोल्काय नमः अनेन सूर्य
पूजनं निंबपत्रभक्षणं च कुर्यात् निंबपत्रं ततोऽश्नीयात् स्वपेद्भूमौ च वाग्यतः द्विजान्परेऽह्नि संभोज्य स्व
यं भुंजीत बंधुभिः निंबव्रतमिदं चैतत्कर्तॄणां सर्वसौख्यदं भविष्योत्तरे च वैशाखशुक्लसप्तम्यां जि
तक्रोधो जितेंद्रियः निंबपत्रं ततोऽश्नीयात् सप्तम्यां मंत्रतो नरः मंत्रस्तु निंबपल्लव भद्रं ते सुभद्रं तेऽस्तु सर्वदा
ममापि कुरु भद्रं वै प्राशनाद्रोगहा भवेति इत्थं प्राश्य स्वपेद्भूमौ देवस्य पुरतो नृप अष्टम्यां भानुं पूजयित्वा
ब्राह्मणान्भोजयित्वा स्वयं भुंजीतेति निंबसप्तमीव्रतम् अस्यामेव शार्करासप्तमीव्रते पद्मपुराणे पुल
स्त्य उवाच वैशाखे शार्करानाम सप्तम्यां श्रद्धयान्वितः प्रातः स्नात्वा तिलैः शुक्लैः शुक्लमाल्यानुलेपनैः स्थं
डिले पद्ममालिख्य कुंकुमेन सकर्णिकं नमस्ते नमः सवित्रेति पुष्पधूपं निवेदयेत् स्थापयेद्वर्णकुंभं श
र्करापात्रसंयुतं शुक्लवस्त्रेण संवेष्ट्य शुक्लमाल्यानुलेपनैः सहिरण्यं यथाशक्त्या मंत्रेणानेन पूजयेत्
विश्वदेवमयो यस्माद्वेदवादीति पठ्यसे त्वमेवामृतसर्वस्वमतः पाहि सनातन पंचगव्यं ततः पीत्वा स्वपे
त्तत्पार्श्वे तद्दिने सौरसूक्तं जपन्तिष्ठेत्पुराणश्रवणेन वा अहोरात्रे गते पश्चादष्टम्यां कृतनित्यकः त
त्सर्वं वेदविदुषे ब्राह्मणाय निवेदयेत् भोजयेच्छक्तितो विप्राञ्छर्कराघृतपायसैः भुंजीतातैललवणं
स्वयमप्यथ वाग्यतः अनेन विधिना सर्वं मासि मासि समाचरेत् वत्सरांते पुनर्दद्यात् ब्राह्मणाय स
मादितः प्राप्य नवनीतं शर्कराकलशान्वितं सर्वोपस्करसंयुक्तं तथैकां गां पयस्विनीं गृहं च शक्ति
तो दद्यात्सप्तलोपस्करान्वितं सहस्रेणाथ निष्काणां कृत्वा दद्याच्छतेन वा दशभिर्वा त्रिभिर्वापि निष्कै
रेकेन वा पुनः पद्मं च शक्तितो दद्याद्वित्तशाठ्यविवर्जितः पद्मं सौवर्णं अत्र मंत्रः अमृतं पिबतो व
क्त्रात्सूर्यस्यामृतबिंदवः निष्पेतुस्तेभ्यः समुत्पन्नाः शालिमुद्गयवेक्षवः शर्करा च पुनस्तस्मादिक्षुसारा
मृतोपमाः इष्टा रवेस्ततः पुण्या शर्करा हव्यकव्ययोः शर्करासप्तमी चैषा वाजिमेधफलप्रदा सर्वा

दुःखोपशमनी छत्रसंततिवर्द्धिनी अस्यां तु शार्करादानं शर्कराभोजनं तथा कर्तव्यं हि प्रयत्नेन व्रतमे
तद्विधिप्रियं यः कुर्यात् परया भक्त्या स वै सद्गतिमाप्नुयात् कल्पमेकं वसेत्स्वर्गे ततो राजा भवेत्परम् इ
दमपि च शृणोति यः स्मरेद्वा पठति स याति हरेः स्वलोके मतिमपि च ददाति यो जनानां मम स्व
यं जनकिन्नरैः ससेव्यः इति पद्मपुराणे नारदीये च शर्करासप्तमीव्रतं वैशाखशुक्लाष्टमीकृ
त्यम् नारदीये वैशाखस्य सिताष्टम्यां समुपोष्य च वारिभिः स्नात्वापराजितां देवीं मांसीबालकचंदनैः
स्नापयित्वार्च्य गंधाद्यैर्नैवेद्यं शार्करामयं कुमारीर्भोजयेच्चापि नवम्यां पारणायतः ज्योतिर्मयविमानेन
भ्राजमानो यथा रविः लोकेषु विचरेद्दिव्यदेव्याश्चैव प्रसादतः देवीपुराणे तु सहकारफलैः स्नानं वै
शाखस्याष्टमीदिने आत्मानं देवतां स्नाप्य मांसीबालकवारिभिः लेपनं फलकर्पूरं धूपं पंचसुगंधि
के फले जातिफले पंचसुगंधिके कंकोललवंगकर्पूरजातीफललवंगकैः सुगंधपंचकं प्रोक्तमाम्र
वैदर्भकाश्मकैः देव्याः पूजां च कुर्वीत केतक्यापंचकेन च शर्करान्नीरनैवेद्यं कन्याविशेषभोजनं आत्मनः
पारणं पश्चाद्दक्षिणां शक्तितो ददेत् सर्वतीर्थाभिषेकं वा तेन प्राप्नोति भार्गवेति वैशाखशुक्लाकृष्णा
नवमीद्वयकृत्यम् नारदीये राधे नवम्यां दलयोश्चण्डिकायास्तु पूजयेत् विधिना स विमानेन तु देवैः सह
मोदते तथा च निर्णयामृते भविष्योत्तरे वैशाखे मासि राजेन्द्र नवम्यां पक्षयोर्द्वयोः उपवासपरो भक्त्या
पूजयानस्तु चंडिकां हंसकुंदेंदुसंकाशो गजस्कंधवसन्निभः विमानवरमारूढो देवलोके महीयत इति वै
शाखशुक्लदशम्याकृत्यमुक्तं नारदीये दशम्यां माधवे विप्र धर्मराजस्वरूपिणं प्रपूज्य शुक्ले गंधाद्यै
र्विधिमभ्यर्च्य मानवः गंधाद्यैरुपचारैस्तु धूपनैवेद्यैः सुगंधिभिः शतं प्रदक्षिणाः कृत्वा विप्रान्संभो
ज्य भक्तितः लभते वै स्ववंल्लोकं नात्र कार्या विचारणा वैशाखशुक्लैकादशी मोहिनी तदुक्तं नारदी
ये वैशाखशुक्लैकादश्यां समुपोष्य च मोहिनीम् स्नात्वा परेद्युः संपूज्य गंधाद्यैः पुरुषोत्तमं सम्भो
ज्य विप्रान्मुच्येत पातकेभ्यो न संशयः अस्याः कथा कौर्मे पाद्मे युधिष्ठिर उवाच वैशाखस्य सि
ते पक्षे का वा ह्येकादशी भवेत् किं फलं को विधिस्तस्याः कथयस्व जनार्दन श्रीकृष्ण उवाच क
थयामि कथामेतां शृणुष्व धर्मनंदन वसिष्ठो यामकथयद्रामाय पृच्छते श्रीराम उवाच कथ
यस्व प्रसादेन वसिष्ठ मुनिसत्तम मयाकृतानि पापानि सीताहरणकालतः केन व्रतप्रभावेन ता
निश्यंति सत्वरं तद्ब्रूहि मुनिशार्दूल त्वमाख्यातुमर्हसि श्रीवसिष्ठ उवाच साधु साधु महाराज
त्वत्समो नास्ति मानवः त्वन्नामोच्चारणादेव पूतो भवति नारकी स भवान्पृच्छति व्रतं पापघ्नं सर्व
कामदं मनुष्याणां त्वमापन्नः परमात्मासि मो ततः तद्ब्रूतं राजराजेंद्र कथयिष्यामि विस्तरात् ये
न पापानि नश्यंति ब्रह्महत्यादिकानि च वैशाखस्य सिते पक्षे राम वैकादशी स्मृता मोहिनी नाम नाम्ना
वै सर्वपापहरा परा अस्या व्रतप्रभावेन मम स्यात्पातकं भवेत् शृणुष्व राजशार्दूल कथां पापहरां
परां यस्याः श्रवणमात्रेण पापानां निःकृतिर्भवेत् सरस्वत्यास्तटे राजन्पुरी भद्रावती शुभा द्युति
मान्नाम राजा वै तस्यां राज्यं चकार ह सोमवंशसमुद्भूतो राजा परमधार्मिकः धनपालेति नाम्ना वै तस्या
मस्पुष्कलधनं सकृत्प्रीतयेऽत्यर्थमकरोद्धर्मसंचयं प्रपाण्यायतनान्येव विविधानि चकार सः पंचैव
पुत्रास्तस्यासन्सुरूपाश्चित्रसन्निभाः सुमना द्युतिमांश्चैव मेधावी सुकृतिरेव च पंचमो धृष्टबुद्धिश्च महापा
परतः सदा वारस्त्रीषु च मद्येषु मांसेषु विविधेषु च पितृस्तेन तद्धनं नीतमन्यायात्पितृसंचितं महापा
परो दुष्टः सोऽभूद्ब्राह्मणनिंदकः अभक्ष्यभक्षको नित्यं पापासक्तमनाः सदा वेश्याकंठेऽर्पितदिव्याबाहुर्वै
चत्वरे परिभ्रमति जने दृष्टिपथं प्राप्तेन लज्जामकरोत्खलः भ्रातृभिः स तदा त्यक्तः स्वजनैर्जनकेन च ग
णिकाभिश्च संत्यक्तो धनहीनो यतस्ततः सर्वैर्यदा परित्यक्तस्तदा चिंतापरोऽभवत् किं करोमि क्व गच्छामि ।

केनोपायेन संप्रति जीवाम्यहं द्रव्यहीनो भाग्यहीनो लघुस्वतः स्तेयकर्म करिष्यामि स्वपितुर्नगरे ध्रुवम् इति सं
चिन्त्य तेनैव मुषितं नगरे पितुः ज्ञातश्चारैर्गृहीतो पि मुक्तो राज्ञस्तु गौरवात् एकदा स तु पापात्मा नीतो नग
ररक्षकैः संप्रेष्य राज्ञा कथितं क्रियतां नगराद्बहिः राजाज्ञया तदैवाशु प्रापितो नगराद्बहिः धृष्टपाले
स्ततो रण्यं गहनं प्रविवेश ह क्षुधितस्तृषितश्चैव बभ्राम स इतस्ततः मृगया कर्तुमारेभे मांसजीवी ब
भूव सः धारालीस्त्राणकेरम्यसत्पूर्णारिष्टभागतः निर्दयत्वात्पापकर्मा स बाणैरहनन्मृगान् तत्रै
व मुनिवर्यो सौ कौण्डिन्यो पि चरंस्तपः प्रत्यहं गाङ्गवीतीरे स्नानार्थं समुपाययौ वैशाखे मासि संस्नानं दानं च विधिना
करोत् कृत्वा स्नानं जगामाशु मार्गेणाश्रमं प्रति मार्गमध्ये धृष्टबुद्धिर्दुःखितः स ददर्श सः कौण्डि
न्यः छायया तस्य स्पृष्टवान् गङ्गावारिणा ततस्तयं यदा स्पृष्टो मुनिना गङ्गावारिणा तदैव पुण्यवान्
जातो धृष्टबुद्धिः प्रहर्षितः कौण्डिन्यं मुनिशार्दूलं विनयावनतो ब्रवीत् व्रतं कथय मे स्वामिन् विना वित्ते
न यद्भवेत् कौण्डिन्य उवाच व्रतं ते कथयिष्यामि येन पापक्षयो भवेत् वैशाखस्य सिते पक्षे मोहिनी नामना
मतः एकादशी महापुण्या नराणां पापनाशिनी मेरुतुल्यानि पापानि क्षयं नयति तत्क्षणात् पातकानि
त्वयं कानि यं चाशतजन्मनो तमांसि कीदृशेनैव मोहिन्येकादशीव्रतात् इति श्रुत्वा मुनेर्वाक्यं विधि
दृष्टं यथाविधि भक्त्याकरोद्धृष्टबुद्धिर्मोहिन्येकादशीव्रतं सर्वपापक्षयं नीतं व्रतेनानेन तेन वै जन्मान्ते
मोत्तमाप्नोद्बभूव गरुडासनः ईदृशं कथितं राम मोहिन्येकादशीव्रतं माहात्म्यश्रवणाद्यस्य गोस
हस्रफलं लभेत् इति कूर्मपुराणोक्ते चैव वैशाखशुक्ला मोहिन्येकादशीव्रतकथा वैशाखशुक्ला
द्वादश्यां धरणीव्रते जामदग्न्यद्वादशीव्रतं दुर्वासा उवाच वैशाखस्यैवमेवं तु संकल्प्य विधि
ना नरः नदीस्नानं सदा कृत्वा ततो देवालयं व्रजेत् तत्राराध्य हरिं भक्त्या मन्त्रैरेभिर्विचक्षणः जाम
दग्न्याय पादौ तु उदरं सर्वधारिणे मधुसूदनायेति कटिं मुरः श्रीवत्सधारिणे क्षत्रान्तकाय बाहू च
मणिकण्ठाय कण्ठं च स्वनाम्ना प्राणं चक्रेति शिरो ब्रह्माण्डधारिणे एवमभ्यर्च्य मेधावी प्राग्वेत्स्याग्रतो
घटं विन्यसेद्देवि स्थितं तत्र युग्मवस्त्रविशेषतः वैणवेन च पात्रेण तस्मिन्संस्थापयेद्धरिं जामदग्न्येन रूप
णकृत्वा सौवर्णमयतः दक्षिणे परशुं चैव हस्ते तस्य च कारयेत् सर्वगन्धैश्च संपूज्य पुष्पैर्नानाविधैस्त
था ततस्तस्याग्रतः कुर्याज्जागरं भक्तिमान्नरः प्रभाते विमले सूर्ये ब्राह्मणाय निवेदयेत् एवं नियमयु
क्तस्य यत्फलं तन्निबोध मे आसीद्राजा महाभागो वीरसेनो महाबलः अपुत्रः स पुनस्तीव्रं तपस्तेपे
महाबलः चरतस्तत्तपो घोरं याज्ञवल्क्यो महामुनिः आजगाम महायोगी तं द्रष्टुं चाभियोगतः रा
जोवाच कथं मे भविता पुत्रः स्वल्पायासेन वै द्विज एतन्मे कथय प्रीत्या भगवन्प्राणतस्य वै एवमुक्तो
मुनिस्तेन पार्थिवेन यशस्विना आचख्यौ द्वादशीं चेमां वैशाखे सितपक्षजां स द्विजाज्ञाविधानेन पुत्रका
मो विशेषतः उपोष्य लब्धवान्पुत्रं तेन परमधार्मिकं योधापि कीर्तितो लोके पुण्यश्लोको नरोत्तमः आ
नन्तकफलं स्येत व्रतस्यास्य महामुने यत्पुत्रो जायते तेन विद्यावान्कीर्तिरुत्तमा इह जन्मनि किं चित्रं परलो
केऽष्टमे कल्पमेकं ब्रह्मलोके उषित्वाप्सरसां गणैः क्रीडित्वा ते पुनः सृष्टौ जायन्ते चक्रवर्तिनः त्रिं
शत्कल्पसहस्राणि जायन्ते नात्र संशयः इति वाराहपुराणे धरणीव्रते वैशाखशुक्ला जामदग्न्यद्वाद
शीव्रतकथा अस्यामेव द्वादश्यां योगविशेषो हेमाद्रौ पंचाननस्थे गुरुभूमिपुत्रौ मेषे रविः स्याद्यदि शुक्ल
पक्षे मासाभिधानाकरभेण युक्ता तिथिर्व्यतीपातदतीययोगः अस्मिंस्तु गोभूमिहिरण्यवस्त्रदानेन पा
पं परिहाय सर्वं सुरत्वमिन्द्रत्वमनामयत्वं मर्त्याधिपत्यं लभते मनुष्य इति पंचाननः सिंहः मासाभिधा
नामासमं हस्ताभिधाना तिथिर्द्वादशी करभेणा हस्तनक्षत्रेण युक्ता अस्यामेव माधवपूजनमुक्तं नार
दीये वैशाखशुक्लाद्वादश्यां सोपवासो जितेन्द्रियः संपूज्य माधवं भक्त्या गन्धाद्युपचारकैः पक्वान्नन्ना

जनतकं मधुरं सोदकुंभकं विधाय दद्याद्द्विजवराय वः प्रीयतामिति वैशाखशुक्लत्रयोदश्यां कामदेवपू-
जाव्रतम् नारदीये राधाशुक्लत्रयोदश्यां कामदेवव्रतमुत्तमं तत्रांगादिभिः कामं पूजयेदुपवासवान् प्रति-
मासं ततः पश्चात्त्रयोदश्यामिति दले एवमेव व्रतं कार्यं वर्षांते गामलंकृतां दद्याद्द्विजाय सत्कृत्य व्रतसांगत्व-
सिद्धये वैशाखशुक्लचतुर्दश्यां नृसिंहजयंतीव्रतं तदुक्तं वाराहपुराणे वैशाखस्य शुक्लपक्षे चतुर्दश्यां
महातिथौ जयंती तत्र कर्तव्या नृसिंहस्य द्विजोत्तमैरिति गोविंदार्णवे ब्राह्मे चतुर्दश्यां शुक्लपक्षे माधवमा-
सि वसंतके प्रादुर्भूतो नृपंचास्यस्तस्मात्तां समुपोषयेदिति इयं प्रदोषव्यापिनी ग्राह्या तदुक्तं मदनरत्ने
हेमाद्रौ नृसिंहपुराणे वैशाखशुक्लपक्षे तु चतुर्दश्यां निशामुखे मज्जन्मसंभवं पुण्यं व्रतं पापप्रणाश-
न वर्षे वर्षे तु कर्तव्यं मम संतुष्टिकारकमिति टोडरानंदे स्कांदे वैशाखस्य चतुर्दश्यां सोमवारेनिलर्क्ष-
के अवतारो नृसिंहस्य प्रदोषसमये द्विज तथाच नृसिंहप्रसादोदाहृतं नृसिंहपुराणे वैशाखशुक्लप-
क्षस्य चतुर्दश्यां विवस्वति अस्तंगामिनि सर्वेषां पुरतस्तंभमध्यतः प्रबभूव महाविष्णुर्नरसिंहाकृतिर्नृ-
प तस्माद्व्रतं नरैः कार्यं महाविष्णोरतिप्रियमिति कूर्मे सिंहो वा ह कल्की च समायमिति पुराणसमुच्चयाच्च
दिनद्वये प्रदोषव्याप्तावव्याप्तावेकदेशसंकल्परूपव्रतोपक्रमकालसत्त्वात् शुक्लपक्षगतत्वाच्चैव
स्यैनैकदेशयोगे अधिकव्याप्तिमती ग्राह्योक्तं रत्नावल्यां मध्ये वेदीक्षितो यत्र दिनद्वये व्याप्तावव्याप्तौ वा
पूर्वा पूर्वदिने गौणकालव्याप्तेः सत्त्वात् परदिने च तदभावादित्युक्तं यत्तु केचिदुक्तं पूर्वदिने प्रदोषका-
लव्यापि चतुर्दशीसत्त्वेपि उत्तरदिने प्रदोषकालास्पर्शेपि उत्तरविद्धा ग्राह्या अनंतेन समायुक्ता नैवो-
पोष्या चतुर्दशी तथा पुत्रैर्वियुज्येत तस्मात्तां परिवर्जयेदिति वचनेन पूर्वविद्धानिषेधादिति तन्न एत-
द्वचनस्य हेमाद्रिमदनरत्नादिसकलमहानिबंधेष्वलिखितत्वेनानादृतत्वात् अस्या एवं योगविशेषेण
प्राशस्त्यमुक्तं नृसिंहपुराणे स्वातीनक्षत्रयोगे च शनिवारे महद्व्रतं सिद्धयोगस्य संयोगे वणिजे करणे
तथा पुंसां सौभाग्ययोगेन लभ्यते दैवयोगतः सर्वैरेतैस्तु संयुक्तं हत्याकोटिविनाशनं एतैर्योगैर्विनापि
स्यान्मद्दिनं पापनाशनमिति अस्मिन्व्रते सर्वेषामधिकारः सर्वेषामपि वर्णानामधिकारोस्ति मद्व्रते म-
द्भक्तैस्तु विशेषेण कर्तव्यं मत्परायणैरिति तत्रैवोक्तेः इदं च संयोगपृथक्त्वन्यायेन समूलत्वेपि दिनद्वये
प्रदोषकाले समव्याप्तिसत्त्वे पूर्वविद्धाया निषेधकत्वाच्च वैष्णवानां तु परविद्धाया निषेधात् सर्वथा शुद्धै-
वोपोष्या तथाच हरिभक्तिविलासे बृहन्नारसिंहे वैशाखशुक्लपक्षस्य चतुर्दश्यां समाचरेत् मज्जन्मसं-
भवं पुण्यं व्रतं पापप्रणाशनं स्वातिनक्षत्रसंयोगे शनिवारे हि मद्व्रतं सिद्धयोगस्य संयोगे वणिजे करणे त-
था पुंसां सौभाग्ययोगेन लभ्यते दैवयोगतः सर्वैरेतैस्तु संयुक्तं हत्याकोटिविनाशनं केवले च प्रकर्तव्यमा-
द्दिने फलकांक्षिभिः वैष्णवैस्तु न कर्तव्या परविद्धा चतुर्दशीति आगमेपि प्रिये चतुर्दशी भौमे कर्तव्या कि-
ल्बिषापहा कामविद्धा न कर्तव्या स्वाती भौमयुता यदीति इदं व्रतं नित्यं काम्यं च वर्षे वर्षे तु कर्तव्यमिति वी-
प्साश्रवणात् तथाच वित्ताय मद्दिने यस्तु लंघयेत्पापकृन्नरः स याति नरकं घोरं यावच्चंद्रदिवाकरा-
वित्यकरणे दोषश्रवणाच्च अपुत्रो लभते पुत्रानित्यादिफलश्रवणाच्च इति नृसिंहजयंत्या ग्राह्यतिथिनि-
र्णयः अथात्र कृत्यमुच्यते कृत्यरत्नावल्यां अथास्याः सोपोषणो व्रतविधिः अस्यां प्रातः कृत्यं विधाय
नृसिंहादिदेवताभ्यो व्रतं निवेद्याचम्य प्राणानायम्योदङ्मुखो वारिपूर्णं ताम्रपात्रं गृहीत्वा संकल्पं कुर्वीत त-
दुक्तं हेमाद्रौ नृसिंहपुराणे नियमं च प्रकुर्वीत दंतधावनपूर्वकमिति दंतधावनग्रहणं प्रातःकृत्योपल-
क्षणं दंतधावनं तृणपर्णादिना द्वादशगंडूषैर्वा कार्यं उपवासदिने दंतकाष्ठनिषेधात् निर्णयसिं-
धौ दीक्षित एवं संकल्प्य नृपव्रतकर्म समारभेदिति नृसिंहपुराणोक्तेरिति मदनरत्नेप्येवमेव वस्तुत-
स्तु संकल्पः प्रातरेव कर्तव्य उचितः प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकमित्यादिवचनात् व्रतकर्मस-

मारभेदिति नृसिंहपुराणोक्तेस्तु व्रतस्य स्वजादिरूपस्य पयोगियन्मेउपादिसामग्रीसंपादनतत्परत्वात् नि-
त्यकर्म समारभेदिति पाठस्यैव बहुशो दृष्टत्वेन तत्र व्रतप्रारंभात्तेस्थ संकल्पमंत्रस्तत्रैव श्रीनृसिंहोग्रदंष्ट्र
त्वं दयां कुरु ममोपरि अद्याहं तव विद्याम्यामि व्रतं निर्विघ्नतां नयेति निर्णयसिंधौ तु नृसिंहदेवदेवेश तव ज
न्मदिने शुभे उपवासं करिष्यामि सर्वभोगविवर्जितः इति संकल्पमंत्र उक्तः ततो व्रतस्थेन मिथ्यालापप-
रिहासादिसंभाषणवर्जनं कार्यं ततो मध्याह्ने नद्यादौ मृद्गोमयतिलोदकैः स्नात्वा नित्यकर्म निर्वर्त्य गृहं
गच्छेत् ततः सायंकाले गोमयोपलिप्ते भूप्रदेशे अष्टदलं कृत्वा तत्र कलशं संस्थाप्य सर्वतोभद्रं वा विर
च्य आचार्यादिवरणं च विधाय कलशोपरि हैमीं सुवर्णनृसिंहप्रतिमां पलपलार्धार्धादिमितां नृसिंह-
प्रतिमां लक्ष्मीप्रतिमां च संस्थाप्य अग्न्युत्तारणपूर्वकं प्राणप्रतिष्ठां कृत्वा मूलमंत्रेण वैदिकेन वज्र
नखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि तन्नो नारसिंहः प्रचोदयात् इति गायत्र्या नाममंत्रेण च षोडशो
पचारैः पूजयेत् तत्रादौ पूजोपयोगित्वेन नृसिंहमंत्रन्यासादिकमुच्यते ओं नमः उग्रवीरं महाविष्णुं
ज्वलंतं सर्वतोमुखं नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहं अस्य मंत्रस्य ब्रह्मा ऋषिः अनुष्टुप्छंदः श्रील
क्ष्मीनृसिंहो देवता हं बीजं ईं शक्तिः न्यासे विनियोगः ब्रह्मणे ऋषये नमः शिरसि अनुष्टुप्छंदसे न
मो मुखे श्रीनृसिंहदेवतायै नमो हृदये हं बीजाय नमो गुह्ये ईं शक्तये नमः पादयोः उग्रवीरं अंगुष्ठाभ्यां नमः म
हाविष्णुं तर्जनीभ्यां स्वाहा ज्वलंतं सर्वतोमुखं मध्यमाभ्यां वषट् नृसिंहं भीषणं अनामिकाभ्यां हुं भद्रं
मृत्युमृत्युं कनिष्ठिकाभ्यां वौषट् नमाम्यहं करतलकरपृष्ठाभ्यां फट् एवमेव हृदयादिषडंगन्यासं कुर्यात्
ततो ध्यानं कुर्यात् नृसिंहं भजे जानुविन्यस्तबाहुं त्रिनेत्रं भुजे प्रोल्लसच्छंखचक्रं कृशानूपमं ज्योतिषादी
प्तदेहं शिरः प्रोल्लसद्दंष्ट्रासंदीप्तजिह्वम् १ वामांके न्हरेः पूज्या लक्ष्मीभूषणभूषिता वामे पद्मधरा द
क्षे बाहुना न्हरिं विभुं २ आश्लिष्यंती प्रीतिमूर्तिमंतौ गात्रे प्रकल्पयेत् ध्यानांतरं चागमे माणिक्याद्रि
समप्रभं निजरुचा संत्रस्तरक्षोगणं जानुन्यस्तकरांबुजं त्रिनयनं रत्नोल्लसद्भूषणं बाहुभ्यां धृतशंखचक्रम
निशं दंष्ट्राग्रवक्त्रोल्लसत् ज्वालाजिह्वमुदग्रकेशनिचयं वंदे नृसिंहं विभुम् १ एवं ध्यात्वा मानसैरुपचा
रैः संपूज्य शालग्रामस्थापनं षट्कोणमंडलं विधाय पूजां कुर्यात् आगच्छ देवदेवेश प्रल्हादवरदायक या
वत्पूजां करोम्यत्र तावत्त्वं सुस्थिरो भव सहस्रशीर्षेत्यावाहनं नानारत्नसमायुक्तं कीर्तिस्वर्णविभूषितं
नृसिंहदेवदेवेश आसनं परिगृह्यतां पुरुषएवेदमित्यासनं २ गंगादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृ
तं तोयमेतत्सुखस्पर्शं पाद्यार्थं परिगृह्यताम् एतावानस्येति पाद्यम् ३ नृसिंहाच्युत देवेश लक्ष्मीकां
त नमोस्तु ते अर्घ्यं गृहाण देवेश भक्तानां वरदायक त्रिपादूर्ध्वेत्यर्घ्यम् ४ कर्पूरवासितं तोयं मंदाकिन्याः
समाहृतं आचम्यतां त्वया देव मयादत्तं हि भक्तितः तस्माद्विराडित्याचमनम् ५ पंचामृतेन स्नपनं करि
ष्ये सर्वसिद्धिदं पयोदधिघृतं गव्यं माक्षिकं शार्करां तथा पंचामृतेन स्नपनं गृहाण सुरसत्तम ६ आ
प्यायस्वेति पयसा १ दधिक्राव्णेति दध्ना २ घृतमिमिति घृतेन ३ मधुवातेति मधुना ४ स्वादुः पवस्वेति
शार्करया ५ एवं पंचामृतस्नानम् गंगा च यमुना चैव नर्मदा च सरस्वती तापी पयोष्णी कृष्णा च ताभ्यः
स्नानार्थमाहृतं तोयमेतत्सुखस्पर्शं स्नानार्थं प्रतिगृह्यतां यत्पुरुषं व्यदधुरिति स्नानम् ७ स्नानानं
तरमाचमनीयम् पीतांबरयुगं देव सर्वकार्यार्थसिद्धये मया निवेदितं भक्त्या नृसिंह वरदायक तं यज्ञ
मिति वस्त्रम् ८ लक्ष्मीकांत नमस्तेस्तु त्राहि मां भक्तवत्सल ब्रह्मसूत्रं सोत्तरीयं गृहाण सुरनायक तस्माद्
यज्ञात्सर्वहुत इति यज्ञोपवीतम् ९ शीतलं चंदनं दिव्यं चंद्रकुंकुममिश्रितं ददामि तव तुष्ट्यर्थं नृसिंह
परमेश्वर तस्माद्यज्ञात् ऋचः सामानि इति गंधम् १० अक्षताश्च सुरश्रेष्ठ कुंकुमाक्ताः सुशोभनाः नृ
सिंहदेवदेवेश प्रीत्यर्थं स्वीकुरु प्रभो इत्यक्षताः कालोद्भवानि पुष्पाणि तुलस्यादीनि वै प्रभो पूजयामि

नृसिंहत्वोल्लक्ष्मीसहनमोस्तु ते तस्मादस्मादिति पुष्पाणि ११ कालागुरुमयं दिव्यं सर्वदेवतवल्लभं धूपं गृहा
ण देवेश सर्वकामसमृद्धये यज्ञरूपेणेति धूपम् १२ दीपः पापहरः प्रोक्तस्तमोराशिविनाशनः दीपेनला
भते तेजस्तस्माद्दीपं ददामि ते ब्राह्मणास्येति दीपम् १३ नैवेद्यं सखण्डं चारु भक्ष्यभोज्यसमन्वितं ददामि ते
रमाकान्त सर्वपापक्षयं कुरु चन्द्रमा मनस इति नैवेद्यम् १४ इदं फलं मया नीतमिति फलम् पूगीफलं महद्दि
व्यमिति ताम्बूलं हिरण्यगर्भगर्भस्थमिति दक्षिणा पञ्चवर्तिसमायुक्तं सर्वमङ्गलदायकं नीराजनं निरी-
क्षस्व रमाकान्त नमोस्तु ते इति नीराजनं मालतीमल्लिकापुष्पैर्नागचम्पकसंयुतैः पुष्पाञ्जलिं गृहाण मया
दांबुजगुरोर्पितं इति पुष्पाञ्जलिं समर्पयेत् नृसिंह देवदेवेश सर्वकामफलप्रद लक्ष्मीकान्त नमस्तुभ्यं
पुत्रपौत्राभिवृद्धये नमस्ते देवदेवेश नमस्ते सुरनायक नमस्ते कमलाकान्त नमस्ते भक्तवत्सल नमस्तेस्तु
विभूतेशावासुदेव नमोस्तु ते नाभ्या आसीदिति प्रार्थनां नमस्कारं च कारयीत् सप्तास्यासन्निति प्रदक्षिणां च
कृत्वा ३ नरार्घ्यं च दद्यात् तत्र मन्त्रः नृसिंहाच्युत देवेश लक्ष्मीकान्त नमोस्तु ते अनेनार्घ्यप्रदानेन सफलाः
स्युर्मनोरथाः ततो यज्ञेन यज्ञमिति मन्त्रेण पुष्पाञ्जलिं दत्त्वा रात्रौ गीतवाद्यपुराणश्रवणादिभिर्जागरणं
कुर्यात् इति व्रतविधानं उद्यापनेपि सर्वतोभद्रे सर्वमण्डलदेवतापूजान्ते कलशोपरि नारसिंहमन्त्रेण
यथाविधि पूजनं पूर्वोक्तमन्त्रैर्विधाय प्रातः पुनरपि देवतापूजां मण्डलदेवतासहितां विधाय कुण्डे स्थ
ण्डिले वा ब्रह्मवरणं चाग्निसंस्थापनं विधायान्वाधानान्ते व्याहृतिभिर्हुत्वा नरसिंहगायत्र्या आज्येन चरु
णा हुत्वा ब्रह्मादयो मण्डलदेवता ग्रहादियागदेवताश्चैकैकयाहुत्याहुत्वा नृसिंहोद्देशेन चतुर्दशा-
पिकान् ब्राह्मणान् प्रति मां कुम्भवस्त्रपवित्रादिभिरभ्यर्च्य स्वर्णमयीं सिंहसहितां श्रीमन्नृसिंहस्य
यान प्रतिमां गां भूहिरण्यतिलपात्रशय्यासहितामाचार्याय दत्त्वा प्रार्थयेत् महेशो ये च राजानो जनि-
ष्यन्ति च ये परे तान्समुद्धर देवेश दुस्तराद्भवसागरात् पातकार्णवमग्नस्य व्याधिदुःखाम्बुवारिभिः जी
वैस्तु परिभूतस्य महादुःखगतस्य मे करावलम्बनं देहि शेषशायिन् जगत्पते श्रीनृसिंह रमाकान्त भ-
क्तानां भवनाशन क्षीराम्बुधिनिवासेश चक्रपाणे जनार्दन व्रतेनानेन देवेश भुक्तिमुक्तिप्रदो भव
एवं संप्रार्थ्य प्रतिमां सोपस्करामाचार्याय दद्यात् तत्र मन्त्रः पीताम्बर महाबाहो प्रह्लादभयनाशक
त् अनेनार्घ्यप्रदानेन यथोक्तफलदो भवेति ततः पूर्णाहुतिं विधाय दक्षिणादिभिर्ब्राह्मणान् संतो-
ष्य मध्याह्ने बन्धुभिः सह स्वयं भुञ्जीतेति इति नृसिंहचतुर्दश्याः सोद्यापनपूजा अथ नृसिंहपरिचर्याया
मस्याः कथा हेमाद्रौ नृसिंहपुराणे हिरण्यकशिपुं हत्वा देवदेवं जगद्गुरुं सुखासीनं तदुत्सङ्गगतस्ततः
कोपं रमापतिं प्रह्लादो ज्ञानिनां श्रेष्ठः पालयन् राज्यमुत्तमं एकाकी च तदुत्सङ्गे प्रियं वचनमब्रवीत् प्र
ह्लाद उवाच नमस्ते भगवन्विष्णो श्रीनृसिंह रमापते त्वद्भक्तोहं सुरेशेशं त्वां पृच्छामि तत्त्वतः स्वामिन्
त्वयि मम अभिन्ना भक्तिर्जाता त्वनेकधा कथं च ते प्रियो जातः कारणं वद मे प्रभो श्रीनृसिंह उवाच कथया
मि महाप्राज्ञ शृणुष्वैकाग्रमानसः भक्तेर्यत्कारणं वत्स प्रियत्वस्य च कारणं पुराकाले ह्यभूद्विप्रः किन्त्व
नेनाध्यधीतवान् नाम्ना तु वासुदेवो हि वेश्यासक्तमानसः तस्मिन् जन्मनि नैव त्वं चकार सुकृतं किय
त् मुक्त्वा मद्व्रतं चैकं वेश्यासङ्गतिलालसः मद्व्रतस्य प्रभावेन भक्तिर्जाता तवानघ प्रह्लाद उवाच श्री
नृसिंहाच्युत तात कस्य पुत्रस्य किं व्रतं वेश्याया वर्तमानेन कथं तच्च कृतं मया येन तद्धि सुमाहात्म्यं व
क्तुमर्हसि सांप्रतं नृसिंह उवाच पुरावन्तिपुरे ह्यासीद्ब्राह्मणो वेदपारगः तस्य नाम सुशर्मेति विद्वल्लोके
सुविश्रुतः ब्रह्मक्रियासु नियतं सर्वासु किल तत्परः तत्परश्चासक्तः अग्निष्टोमादिभिर्यज्ञैरिष्टाः सर्वे
सुरोत्तमाः तेनापि विद्यमानेन कृतं तेनोडुकृतं किं यत् तस्य भार्या सुशीला च विख्याता भुवनत्रये पति-
व्रता सदाचारा पतिभक्तिपरायणा जज्ञिरे स्यां सुताः पञ्च तस्माद्द्विजवरात्तथा सदाचाराः सुविद्वांसः

पितृभक्तिपरायणाः तेषां मध्ये कनिष्ठस्त्वं वेश्यासंगातितत्परः तया निषिध्यमानेन महारायानं त्वया कृतं सुव-
र्णं चापहृतं यौवनं सार्धं त्वया बहु विलासिन्या गृहे नित्यं वसंस्तप्य विचारतः विलासिनी वेश्या एकदा
तद्गृहे स्यासीत्तया सह महान् कलिः ततः कलहभावेन भोजनेन त्वया कृतं अज्ञानान्मद्व्रतं कृतं व्रताना-
मिदमुत्तमं त्वया विरहयोगेन रात्रौ जागरणं कृतं वेश्यया वल्लभं किंचित्प्रत्तां तेन तया सह रात्रौ जाग-
रणं चीर्णं त्यक्त्वा भोगमनेकशः व्रतेनानेन चीर्णेन मोदन्ते दिवि देवताः त्वदर्थं त्रिपुरा ब्रह्मा च केशे
तदनुत्तमं मद्व्रतस्य प्रभावेन निर्मितस्तु वरं ईश्वरेण पुरा चीर्णं त्रिपुराणां वधार्थिना माहात्म्येन
व्रतस्यास्य त्रिपुरा विनिपातिताः अन्यैस्तु बहुभिर्देवैर्ऋषिभिश्च पुरा नच राजभिश्च महाप्राज्ञ विहितं
व्रतमुत्तमं एतद्व्रतप्रभावेन सर्वे सिद्धिमुपागताः वेश्यापि मत्प्रिया जाता त्रैलोक्ये सुखचारिणी ई-
दृशं मद्व्रतं वत्स त्रैलोक्ये चातिविश्रुतं कलहेन विलासिन्या व्रतमेतदुपस्थितं प्रह्लाद तेन ते भक्तिर्म-
पि जाता ह्यनुत्तमा पूर्वं तया च विलासिन्या ज्ञात्वा व्रतमिदं महत् कोलहस्य कृतो येन मद्व्रतं च कृतं भवे-
त् सा वेश्यापि त्वत्प्राजाता भुक्त्वा भोगाननेकशः भक्त्या कर्मविहीनत्वं च प्रह्लाद विश्वासेऽपि कार्यार्थं त्वम-
वा नाके मत्पुरे स्थिता या विधाय सर्वकार्याणि शीघ्रं चैवागमिष्यसि यदिदं व्रतमावश्य प्रचरिष्यन्ति मा-
नवाः तेनेषां पुनरावृत्तिर्मतः कल्पशतैरपि अपुत्रो लभते पुत्रान्मद्भक्तश्च सुवर्चसः दरिद्रो लभते ल-
क्ष्मीं धनदस्य यथा हरी तेजस्कामो लभेत्तेजो राज्यार्थी राज्यमुत्तमम् आयुःकामो लभेदायुर्यादृशं तच्छि-
वस्य च स्त्रीणां व्रतमिदं साधु पुत्रदं भाग्यदं तथा अवैधव्यकरं तासां पुत्रशोकविनाशनं धनधान्य-
करं चैव तासां श्रेयस्करं शुभं स्त्रियो वा पुरुषा वापि कुर्वन्ति व्रतमुत्तमम् तेभ्यो ददाम्यहं सौख्यं भुक्तिमु-
क्तिसमन्विते बहुनोक्तेन किं वत्स व्रतस्यास्य फलं महत् मद्व्रतस्य फलं वक्तुं नाहं शक्तो न शंकरः
ब्रह्मा चतुर्भिर्वक्त्रैश्च न लभेन्महिमावधिं प्रह्लाद उवाच भगवंस्त्वत्प्रसादेन श्रुतं व्रतमनुत्तमं
व्रतस्यास्य फलं साधु त्वयि मे भक्तिकारणं स्वामिन् जातिविशेषेण त्वत्तः पापनिकृन्तनं अधुना श्रो-
तुमिच्छामि व्रतस्यास्य विधिं परं कस्मिन्मासे भवेदेतत्कस्मिन्वा वासरे प्रभो एतद्विस्तरतो देव वक्तुम-
र्हसि साम्प्रतं विधिना येन वै स्वामिन् समग्रफलभाग्भवेत् ममोपरि कृपां कृत्वा त्वरितं सकलं प्रभो
श्रीनृसिंह उवाच साधु साधु महाभाग व्रतस्यास्य विधिं परं सर्वं कथयतो मे त्वमेकाग्रमतिः शृणु
वैशाखे शुक्लपक्षे तु चतुर्दश्यां समाचरेत् मज्जन्मसंभवं पुण्यं व्रतं पापप्रणाशनं वर्षे वर्षे प्रकर्तव्यं
मम संतुष्टिकारणं महापुण्यमिदं श्रेष्ठं मानुषैर्भवभीरुभिः कर्तव्यमिति शेषः तेनैव क्रियमाणेन
सहस्रद्वादशीफलं जायते मत्प्रसादाच्च मानुषाणां महात्मनां मानुषाणां मध्ये जायते इत्यन्वयः मत्प्रा-
[illegible] इति शेषः स्वातिनक्षत्रयोगे च शनिवारे मद्व्रते सिद्धयोगस्य संयोगे वणिजे करणे तथा पुंसां
सौभाग्ययोगेन लभते दैवयोगतः सर्वैरेतैस्तु संयुक्तं हत्याकोटिविनाशनं एतदन्यतरे योगे तद्दिनं
पापनाशनं केवलेऽपि प्रकर्तव्यं मद्दिने व्रतमुत्तमं अन्यथा नरकं याति यावच्चन्द्रदिवाकरौ यथा य-
थात्र वृत्तिः स्यात् तथा कस्य कलौ युगे तथा तथा प्रणश्यन्ति सर्वधर्मा न संशयः मद्व्रतस्य प्रभावेन मति-
मेष्यादुगात्मना विचार्यैतत्प्रकर्तव्यं माधवे मासि मद्व्रतं नियमश्च प्रकर्तव्यो दन्तधावनपूर्वकं श्रीनृ-
सिंह महोग्र त्वं कृपां कुरु ममोपरि अद्याहं वै विधास्यामि व्रतं निर्विघ्नतां नय इति व्रतग्रहणमंत्रं व्रत-
स्थेन न कर्तव्यं संगतिः पापिभिः सह मिथ्यालापो न कर्तव्यः समग्रफलकांक्षिभिः स्त्रीभिर्ईहैश्च आला-
व्रतस्थेनैव कारयेत् स्मर्तव्योऽहं महारूपमद्दिने सकलैस्तु भिः ततो मध्याह्नवेलायां नद्यादौ विमले जले
गृहे वा देवखाते वा तडागे विमलोदके वैदिकेन च मन्त्रेण स्नानं कृत्वा विचक्षणः मृत्तिकागोमयेनैव धा-
त्रीफलेन च तिलैश्च सर्वपापघ्नैः स्नानं कृत्वा महामतिः परिधाय शुचिं वासो नित्यकर्म समाचरेत्

तोरहं समागतस्य सरन्मां भक्तियोगतः गोमयेन प्रलिप्याथ कुर्यादष्टदलं शुभम् कलशं स्थापयेत्तत्र रत्नपल्लव-
गर्भितम् तस्योपरि न्यसेत्पात्रं तंडुलैः परिपूरितम् हैमीं तत्र च मन्मूर्तिं स्थाप्याभ्यर्च्य तथैव च पलेन च तदर्द्धेन
तदर्द्धार्द्धेन वा पुनः यथाशक्तिस्तथा कार्या वित्तशाठ्यविवर्जिता पंचामृतेन संस्नाप्य पूजनं च समाचरेत् त
तो ब्राह्मणमाहूय तमाचार्य्यमलोलुपं सदाचारसमायुक्तं शांतं दांतं जितेंद्रियम् तेनैव कारयेत्पूजां द्र
व्याशास्त्रानुसारतः आचार्य्यपठनाद्धीमान्पूजां कुर्याद्यथाविधिः मंडपं कारयेत्तत्र पुष्पस्तवकशोभि
तम् ऋतुकालोद्भवैः पुष्पैः पूजयेद्यतमानसः उपचारैः षोडशभिर्मंत्रैर्नाममिरंकितैः ततः पौराणिकैर्मंत्रैः
पूजनीयो यथाविधिः चंदनं शीतलं दिव्यं चंद्रकुंकुममिश्रितं ददामि तव तुष्ट्यर्थं नृसिंह परमेश्वर इति चंद
नमंत्रः कालोद्भवानि पुष्पाणि तुलस्यादीनि वै प्रभो पूजयामि नृसिंह त्वां लक्ष्मासह नमोस्तु ते कालागुरु
मयं धूपं सर्वदेवस्य वल्लभम् करोमि ते महाविष्णो सर्वकामसमृद्धये दीपः पापहरः प्रोक्तस्तमोराशिवि
नाशनः दीपेन लभ्यते तेजस्तस्माद्दीपं ददाम्यहम् नैवेद्यं सौख्यदं देव भक्ष्यभोज्यसमन्वितम् ददामि ते
रमाकांत सर्वपापक्षयं कुरु नृसिंहाच्युत देवेश लक्ष्मीकांत जगत्पते अनेनार्घ्यप्रदानेन सफलाः स्युर्मनो
रथाः पीतांबर महाबाहो प्रह्लादभयदायक यथाभूतार्चनेनाद्य यथोक्तफलदो भव रात्रौ जागरणं का
र्यं गीतवादित्रनिस्वनैः पुराणपठनैर्नृत्यैः श्रोतव्या च कथा शुभा ततः प्रभातसमये स्नानं कृत्वा ह्युतं दि
नः पूर्वोक्तेन विधिना पूजयेन्मां प्रयत्नतः वैष्णवं तत्र चैत्राद्यं मदग्रे सुस्थमानसः ततो दानानि देयानि
वक्ष्यमाणानि चानघ धात्रे भक्तद्विजेभ्यश्च लोकद्वयजिगीषया सिंहः स्वर्णमयो देयो मम संतोषकारकः
गो भूतिलहिरण्यानि देयानि च फलेप्सुभिः शय्यासतूलिका देया सप्तधान्यसमन्विता अन्यानि च यथाशक्त्या
देयानि मम तुष्टये वित्तशाठ्यं न कर्तव्यं यथोक्तफलमिच्छता ब्राह्मणान्भोजयेद्भक्त्या तेभ्यो देया च दक्षिणा
निर्द्धनैरपि कर्तव्यं देयं शक्त्यनुसारतः सर्वेषामेव वर्णानामधिकारोस्ति मद्व्रते मद्भक्तैस्तु विशेषेण कर्तव्यं
मत्परायणैः मद्व्रते ये च राजानो जनिष्यंति च मत्पराः तान्समुद्धर देवेश दुस्तराद्भवसागरात् पातकार्णव
मग्नस्य व्याधिदुःखांबुराशिभिः जीवैस्तु परिभूतस्य महादुःखगतस्य च करावलंबनं देहि शेषशायिन् ज
गत्पते श्रीनृसिंह रमाकांत भक्तानां भवनाशन क्षीराब्धिनिवास त्वं चक्रपाणे जनार्दन व्रतेनानेन देवे
श भुक्तिमुक्तिप्रदो भव एवं प्रार्थ्य ततो देवं विसृज्य च यथाविधि उपहारादिकं सर्वमाचार्याय निवेदयेत्
दक्षिणाभिस्तु संतोष्य ब्राह्मणांस्तु विसर्जयेत् मध्याह्ने तु समायुक्तो भुंजीत बंधुभिः सह य इदं शृणुयाद्भ
क्त्या व्रतं पापप्रणाशनं तस्य श्रवणमात्रेण ब्रह्महत्यां व्यपोहति व्रतं नाम व्रताख्यानमित्यर्थः पवित्रं पर
मं गुह्यं कीर्तयेद्यस्तु मानवः सर्वान्कामानवाप्नोति व्रतस्यास्य फलं लभेत् इति नृसिंहचतुर्दशीव्रतकथा
अस्यामेव चतुर्दश्यां ओंकारेश्वरयात्रा प्रोक्ता काशीखंडे राधशुक्लचतुर्दश्यां समापितेत्र वासिनः तत्र
यात्रां करिष्यंति महोत्सवपुरःसराः तत्र जागरणं कृत्वा चतुर्दश्यामुपोषिताः प्राप्नुवंति परं स्थानं यत्र कु
त्रापि ये मताः ब्रह्मांडोदरमध्ये तु यानि तीर्थानि सर्वतः तानि वै मम भूयासु रागत्याकृतिदर्शनादिति अ
स्यामेव कालांतरोक्तं लिंगव्रतम् तदुक्तं हेमाद्रौ चतुर्दश्यां शुक्लपक्षे वैशाखस्य प्रयत्नतः शिवं संस्नाप्य वि
धानेन महास्नपनपूर्वकम् विलिप्य कुंकुमेनैव चंदनेनार्चयेच्छिवम् लिंगं पिष्टमयं कृत्वा हेमपुष्प
विलेपनं तिलप्रस्थसमायुक्तं गुग्गुलागुरुसिल्हकं धूपं दत्वा दमनपुष्पैः संपूज्य भवाय रुद्रायेति ना
म्नाद्याः व्रतकर्तास्मिन् स्थितेर्णां च शिवलोकप्राप्तिर्भवतीति अस्याः सर्वमेव कृत्यं नारदीयेप्युक्तम् वै
शाखस्य चतुर्दश्यां श्रीनृसिंहव्रतं चरेत् उपवासविधानेन शक्तो शक्तस्त्वेकभुक् निशागमे तु संपू
ज्य नृसिंहं दैत्यसूदनं उपचारैः षोडशभिः स्नानैः पंचामृतादिभिः ततः क्षमापयेद्देवं मंत्रेणानेन नारद न
महाटककेशांत ज्वलत्पावकलोचन वज्राधिक नखस्पर्श दिव्यसिंह नमोस्तु ते इति संप्रार्थ्य देवेशं व्रती

सात्त्विको लिप्सयः जितेन्द्रियो जितक्रोधः सर्वभोगविवर्जितः एवं यः कुरुते विद्वान्विधिवद्व्रतमुत्तमं वर्षे
वर्षे सकलमतं भुक्त्वा भोगाहरेः पदं ॐकारेश्वरयात्रा च कार्या त्रैवक्त्रनीश्वर दुर्लभं चागमे चात्र दर्शनं पापना
शनं किमत्र बहुनोक्तेन पूजाध्यानजपेन तु यः शिवेन समुद्दिश्य स्नानं मोक्षप्रदं नृणाम् अत्र लिङ्गव्रतं चा
पि कर्तव्यं पापनाशनं पञ्चामृतेन संस्नाप्य लिङ्गमालिप्य कुंकुमैः नैवेद्यैः सफलैः धूपैः दीपाबलिविभूष
णैः एवं यः कुरुते येषु लिङ्गं सर्वार्थसिद्धिदं भुक्तिं मुक्तिं स लभते महादेवप्रसादतः इयं च गारुडकल्पादिः
तत्र कल्पादिनियमोक्तं श्राद्धदानादि सर्वमेवाक्षयफलदमुक्तं भवति इति वैशाखशुक्लचतुर्दशीकृत्या
नि अथ वैशाखपौर्णमास्यां वैशाखस्नानं प्रातरेव प्रथममेव कार्यं तथा च भविष्ये वैशाखीकार्तिकीमा
घीतिथयोऽतीव पूजिताः स्नानदानविहीनास्ता न कार्याः पाण्डुनंदन अस्यां दानप्रकारो नारदीये वैशाख्या
मपि पूर्णायां दानं सर्वसुखप्रदं यद्यद्द्रव्यं ददद्विप्रे तत्तदाप्नोति निश्चितं धर्मराजव्रतं चात्र कथितं तत्रै
पायसं छन्नमुदकुम्भं च वैशाख्यां वै द्विजातये यस्तु कृष्णाजिनं दद्यात्सकृत्सविधिपूर्वकं सर्वधान्य
विदे सप्तद्वीपभूमिप्रदः स वै मोदते विष्णुलोके ह्यावच्चन्द्रार्कतारकं कुंभान्स्वच्छतिलैः पूर्णान्हिर
ण्येन समन्वितान् यः प्रदद्याद्द्विजाग्र्येभ्यः स न शोचति किंचित् इति पाद्मे वैशाख्यां विधिवत्स्नात्वा भो
जयेद्ब्राह्मणान्दश शाकृशरैः सर्वपापेभ्यो मुच्यते नात्र संशय इति विष्णुधर्मोत्तरे वैशाख्यां पौर्णमास्यां तु
ब्राह्मणान्सप्त पंच वा क्षौद्रयुक्तैस्तिलैः कृष्णैः वाचयेद्यद्द्विजोन्नरः प्रीयतां धर्मराजेति यद्वा मनसि व
र्तते तिलैर्दत्तैरिति शेषः वाचयेदिति वाचयेदित्यर्थः यावज्जीवकृतात्पापात्तत्क्षणादेव मुच्यत इ
ति यत्कालः स्यादित्यर्थः धर्मराजः प्रीयतां विष्णुः प्रीयतामिति वा तथा प्रपा कार्या प्रयत्नेन गो
द्विजार्थं प्रयत्नत इति ब्रह्मपुराणे वैशाख्यां पौर्णमास्यां तु सृष्टाः कमलयोनिना तिलाः कृष्णा
श्च गौराश्च तुष्टये सर्वदेहिनां तस्मात्कार्यं तिलैः स्नानं तत्र श्रेयो जुहुयात्तिलान् निवेदयेच्च विधिवत्ति
लपात्रं च विष्णवे तिलतैलेन दीपाश्च देया देवेभ्य एव च मोदकाश्च तिलैः स्नानं कर्तव्यं पितृतर्पणम्
तिलैः सममधुमिश्रैश्च ब्राह्मणेभ्यश्च भोजनं दातव्या दक्षिणा चापि तिलैर्मधुयुतैः सह मंत्रं जपेच्च यो
णां पारंपर्यक्रमागतं तिलाः सोमदेवत्याः हरेः सृष्टाः स्वयंभुवे स्वर्गप्रदाः स्वतंत्राश्च तेमां रक्षं
तु नित्यशः दद्यादनेन मंत्रेण तिलपात्राणि तत्र च एवं कृते समुक्तः स्यात्पापैर्जन्मशतार्जितैः महाभा
रतेपि वैशाख्यां पौर्णमास्यां तु तिलान्दद्याद्द्विजातिषु तिलाभक्षयितव्याश्च तथैवालभनं तिलैः का
र्यमनन्तमिच्छद्भिः श्रेयः सर्वात्मना गृहे आलभनमुद्वर्तनं आपातिः सर्वाणि तिलसंयुक्तैः ब्राह्मणान्सं
वसम्मता तर्पयेदुद पात्रैश्च ब्रह्महत्यां व्यपोहति तर्पणमत्र तिलांबुदानमुक्तं वैशाखमधिकृत्य
देवीपुराणे इन्द्राग्निदेवतेऽक्षे तु पौर्णमास्यां तथैव च पूजां कृत्वा भवेद्ब्रह्मन्विगतो वो न संशयः इन्द्रा
ग्निदैवते विशाखायाः पूजा दुर्गायाः देवीपुराणैकमात् तेन विशाखायुक्तायां वैशाखपौर्णमास्यां
दुर्गायाः पूजां कृत्वा सुवर्णतिलदानेन सकलाघविनाशः फलं सुवर्णनाभं कृत्वा तु सर्वरत्नमा
णिक्यं तिलैः शक्त्या यो दद्यान्न स पुण्यफलं लभेत् समस्तु द्व्युह्यतेन सशैलवनकाननां चतुरंतामभ
वेद्दत्ता पृथिवी नात्र संशयः कृष्णमार्गं कृष्णमृगचर्म एवमेव निर्णयामृते पुराणसमुच्चये वै
शाख्यां पौर्णमास्यां तु विशाखासु विशेषतः यस्तु कृष्णाजिनं दद्यात्सखुरं सशृंगसंयुतमित्यादिना
अमावास्या सोमवारे समं तत्कुर्वीत सोमव्रतं तथा चात्र शोकहरप्रीतये स्मृतम् तामयात्र पद्मः एनां कृत्वा
तत्र वशंकरं मण्डपो गौरिविष्णुं गन्धपुष्पाद्यैस्तैर्महत् महतां च पात्रमित्यन्वयः षड्विंशादश लप
त्रयुतं मण्डपे रिक्तीर्तितं पत्रैः प्रतिपादितं शिवभक्ते द्विजे दद्याद्भोजयित्वा विधानतः प्राच्यां समुत्कृते सोमे
प्रतीच्यां च गौरीवी पौर्णमास्यां तु वैशाख्यां गृहपात्रं शिवाय तु प्रीयतां तेन महादेवः सोममूर्तिर्जगत्पतिः

तस्मै विप्राय तत्सर्वं समर्पयेद्भक्तितः शनैः एतत्सोमव्रतं नाम कृत्वा सोमान्तिकं व्रजेत् इहलोकादिहायातो भ
वेज्जातिस्मरो नरः पूर्वाभ्यासेन तेनैव पुनः शिवपुरं व्रजेत् इति वैशाखे सोमव्रतम् वैशाखीकार्त्तिकीमा
घीति तिथित्रयमपि कृत्य वैशाखीपौर्णिमाविधानम् भविष्योत्तरे युधिष्ठिर उवाच संवत्सरे प्रियाः का
श्चित्तिथयः पुण्यलक्षणाः तां वदय दुश्रेष्ठ स्नाने दाने महाफलाः श्रीकृष्ण उवाच वैशाखीकार्त्तिकीमा
घीतिथयोऽतीव पूजिताः स्नानदानविहीनास्ता न नेयाः पाण्डुनन्दन तीर्थस्नानं तथा शक्त्या दानं वित्तानुसार
तः वैशाख्यां पाण्डवश्रेष्ठ पुण्या चोज्जयिनी मता कार्त्तिक्यां पुष्करं श्रेष्ठं माघे वाराणसी मता स्नानेनो
दकदानेन तारयेत्त्वखिलान्पितॄन् कुम्भान्सुदृढजलैः पूर्णान्हिरण्यान्नसमन्वितान् वैशाख्यां ब्राह्मणे दत्त्वा
नशोचति कृताकृते मधुरान्नरसैः पूर्णं भाजने कनकोज्ज्वले बहुनिधनधान्यानि भक्त्या परमया युतः गो
भूहिरण्यवासांसि विप्राय विधिवार्थय माघ्यां स्नात्वा तथा सम्यक् तर्पयित्वा देवताः तिलपात्राणि दे
यानि तथाश्मफलमोदनं कार्पासदानमत्रैव येन दानं प्रशस्यते कंबलाजिनरत्नानि मोचकौ पापमो
चकौ उपानद्दानमत्रैव वत्सं मेघरथेन तु प्रत्यक्षेत्रत्र वा स्नानं दानं वित्तानुसारतः कालेकाले इदं सर्वं प्र
स्यते पाण्डुनन्दन कार्त्तिक्यां तु वृषोत्सर्गं विवाहं पुण्यलक्षणम् कुर्यात्कुरुकुलश्रेष्ठ हरेर्नीराजनं तथा ग
जाश्वरथदानानि घृतधेन्वादिकानि च प्रदेयानि द्विजातिभ्यस्तास्ताः संस्मृत्य देवताः फलानि यानि दिव्यं
तेसुगन्धीन्यगदानि च अगस्त्यौषध्यानि प्लक्षलवंगादीनि तानि च कंकोलकफलं जातीलवंगोलवलीफ
लं खर्जूरं नारिकेलं च कदलीफलमेव च दाडिमं मातुलिंगं च कर्कोटं त्रपुसं तथा हृत्ताकं कारवेल्लं च चि
चाम्लस्यारमेव च फलानामप्रदानेन येषां तु तिथयो गताः व्याधितास्ते दरिद्राश्च जायन्ते भुवि मानवाः न
केवलं ब्राह्मणानां दानमत्र प्रशस्यते भगिनीभागिनेयानां मातुलानां पितृष्वसुः दरिद्राणां च बन्धूनां दा
नं कोटिगुणोत्तरं मित्रं कुलीनमापन्नं बन्धुं दरिद्रं पीडितं अभ्यागतो हि हराय सोऽतिथिः स्वर्गसंक्र
मः वनं प्रस्थापिते रामे सभीते सह लक्ष्मणे मातामहकुलाद्देन्य विप्रदेनांतरात्मना शापथैः आविनाने
कैः कौशल्या भरतेन वै यदा न प्रत्ययं याता कदाचित्कौशलात्मजा तदा मातृविभावेन तिथयः आवि
ताः पुनः वैशाखीकार्त्तिकीमाघीतिथयो मरपूजिताः अप्रदानव्रतोपेताः तयस्त्वं भ्रमनेराः क्रमानी
यभरतं सान्त्वयामास दुःखितं एतत्तिथीनां माहात्म्यं कथितं बहुविस्तरं भूयस्ते संप्रवक्ष्यामि तव भारतसत्त
म वैशाखकार्त्तिकमाघास्त्रितानरैर्ययास्तथा पूर्णिमा भवन्ति सर्वाशा शाकविष्णु तस्मोजलान्नकरकान्नुर
मान्नपत्रं दत्त्वा प्रयाति पुरुषः पुरुहूतलोकं इति भविष्योत्तरे वैशाखीकार्त्तिकीमाघीविधिः अथ वैशा
खकृत्योद्यापनं अथपार्के वामनपुराणे मासमेवं बहिः स्नात्वा नद्यादौ विमले जले एकादश्यां च द्वादश्यां
पौर्णमास्यामथापि वा उद्यापनं नियतो भूत्वा कुर्यादुद्यापनं बुधः मंडपं कारयेदादौ कलशं तत्र विन्यसेत्
निष्कवातेन तदर्धार्धेन वा पुनः माहात्म्यकारयेद्देवं सौवर्णं लक्षणान्वितं लक्ष्मीयुतं जगन्नाथं
पूजयेदासने बुधः भूषणोद्वर्तनैः पुष्पैर्धूपैर्दीपैर्नैवेद्यसंचयैः एवं संपूज्य विधिवद्रात्रौ जागरणं चरेत् प्रभाते
कृतमैत्रोऽथ यदुपर्वीयाथ्यहोन्यजेत् होमं कुर्यात्प्रयत्नेन पायसेन विचक्षणः तिलाज्येन यवैर्वापि तिलैर्वापि
सुपाक्तितः अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा एतद्विष्णुतरेनैव इदं विष्णुरनेन वा व्रतसंपूर्तिसिद्ध्य
र्थं धेनुमेकां पयस्विनीं पादुकोपानहौ छत्रं गुरवे व्यंजनं तथा शय्यां सोपस्करां दद्याद्दीपिकां दर्पणं त
था ब्राह्मणान्भोजयेत्त्रिंशत्तेभ्यो दद्याच्च दक्षिणां कलशान् तोयसंपूर्णांस्तेभ्यो दद्याद्धनं तथा एवं कृते
माधवस्य उद्यापनविधौ शुभं फलमाप्नोति सकलं विष्णुसायुज्यमाप्नुयात् एतावत्पशकोऽतत्रैवो वै
शाख्यां विधिवत्स्नात्वा भोजयेद्ब्राह्मणान्दश कृशरं सर्वपापेभ्यो मुच्यते नात्र संशयः इति वैशाखोद्याप
नम् अथ होममंत्रो एतद्विष्णुस्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठः यस्योरुषु विक्रमणेष्वधिक्षियंति भ

वनानि विष्णोः १ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पांसुरे २ अथ गोदानस्य विधिः तत्रादौ दे-
शकालौ संकीर्त्य आत्मना सह एकविंशतिपुरुषतारणार्थं सर्वपृथिवीदानफलप्राप्त्यर्थं च वैशाखमास-
स्नानदानजपहोमब्राह्मणपूजनदक्षिणान्नदानादिसमस्तफलप्राप्तिभूतगोदानमहं करिष्ये ततो
गणपतिपूजनपूर्वकं गोदानप्रतिग्रहीतारं ब्राह्मणं वृणुयात् आत्मनो गोत्रप्रवरनामादिकमुच्चार्य ब्रा-
ह्मणस्य गोत्रप्रवरनामादिकं द्वितीयान्तमुच्चार्य अस्मिन् गोदानप्रतिग्रहकर्मणि त्वामहं वृणे एवं कृत्वा
यथामिलितोपचारैर्विप्रं संपूज्य गावो नमः इति सवत्सां गां संपूज्य तद्देहे देवानावाहयेत् शृंगमूलयोर्ब्र-
ह्मविष्णू आवाहयामि १ शिरोमध्ये महादेवं आवाहयामि ललाटाग्रे गौरीमा नासावंशे षण्मुखमा-४ ना-
सापुटयोः कंबलाश्वतरौ नागौ वा-५ कर्णयोरश्विनौ वा-६ नेत्रयोः शशिभास्करौ वा-७ दंतेषु वायून्-८
जिह्वायां वरुणमा-९ हुंकारे सरस्वतीमा-१० गंडयोर्यमानौ वा-११ ओष्ठयोः संध्याद्वयमा-१२ ग्रीवाया-
मिंद्रमा-१३ कक्षोरक्षांसि-१४ उरसि साध्यान्-१५ खुराग्रेष्वप्सरोगणान्-१६ पृष्ठे एकादशरुद्रान्-
१७ सर्वसंधिषु वसून्-१८ श्रोणीतटे पितॄन्-१९ लांगूले सोममा-२० बालसमूहे आदित्यरश्मीन्-२१ गो-
मूत्रे गंगामा-२२ गोमये यमुनामा-२३ क्षीरे सरस्वतीमा-२४ दधिनि नर्मदामा-२५ सर्पिषि हुताशनमा-
२६ रोमसंधिषु वसून्-२७ समस्तसंधिषु देवकोटीरावाहयामि उदरे पृथिवीमा-स्तनेषु चतुरः सा-
गरानावाहयामि इत्यावाह्य सर्वानेव यथामिलितोपचारैः संपूज्य आच्छादनं मया दत्तं सूक्ष्मं देवविनिर्मितं सु-
रभि वस्त्रदानेन प्रीयतां परमेश्वरि इति मंत्रेण वस्त्रं निवेद्य स्वर्णशृंगी रौप्यखुरा ताम्रपृष्ठयुक्ता लांगूला-
ग्रपादस्थाने नैवेद्यं दत्त्वा कांस्यदोहनं निधाय प्राङ्मुखो दाता पुष्पांजलिं गृहीत्वा त्रिः प्रद-
क्षिणीकृत्य या लक्ष्मीः सर्वभूतानां या च देवेष्ववस्थिता धेनुरूपेण सा देवी मम पापं व्यपोहतु १ देह-
स्था या च रुद्राणी शंकरस्य सदा प्रिया धेनुरूपेण सा देवी मम पापं व्यपोहतु २ विष्णोर्वक्षसि या लक्ष्मीः
स्वाहा या च विभावसोः चंद्रार्कशक्रशक्तिर्या धेनुरूपास्तु सा श्रिये चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्ध-
नदस्य च लक्ष्मीर्या लोकपालानां सा धेनुर्वरदास्तु मे स्वधा या पितृमुख्यानां स्वाहा यज्ञभुजां तथा स-
र्वपापहरा धेनुस्तस्माच्छांतिं प्रयच्छ मे इति पुष्पांजलिं दत्त्वा गोपुच्छोदकेन देवर्षिपितृतर्पणं कुर्या-
दिति केचित् तत्र मूलं चिंत्यं ततस्ताम्रपात्रे कांस्यपात्रे वा घृतदधितिलकुशोदकसुवर्णादि दक्षिणा-
न्वितं गोपुच्छं कृत्वा ओमद्येत्यादि देशकालौ संकीर्त्यात्मनश्च गोत्रप्रवरनामादिकमुच्चार्य सर्वकर्मफलवि-
चित्यभुक्तिमुक्तिप्रदसर्वयज्ञजन्यफलप्राप्तिसर्वपापक्षयकामो वैशाखमासस्नानदानादियथोक्त-
फलावाप्तये इमां गां रुद्रदैवत्यां सुवर्णशृंगीं रौप्यखुरां ताम्रपृष्ठादिसर्वोपस्करसंयुतां अमुकवे-
दांतर्गतामुकशाखिने यथानामगोत्रप्रवरायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे न मम इति
गोपुच्छे विप्रकरे दत्त्वा यस्मात्त्वं सर्वभूतानां विश्वस्यापि च विनाशिनी विश्वरूपधरा देवि प्रीयतां मम
न यागवेति पठित्वा घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः घृतनद्यो घृतावर्त्तास्ता मे संतु गृहे सदा
गावो ममाग्रतः संतु गावो मे संतु पृष्ठतः सव्यदक्षिणयोर्गावो गवां मध्ये वसाम्यहं क इदं कोदात् इति
पठित्वा स्वस्तीति वदेत् ततो गोप्रतिष्ठार्थमिदं हिरण्यं दशमाषमितं तुभ्यमहं संप्रददे रजतं वा दद्यात्
विप्रोऽपि प्रतिगृह्य गोमतीं विद्यां पठेत् गावो मामुपतिष्ठंतु हेमशृंग्यः पयोमुचः सुरभ्यः सौरभेय्य-
श्च सरितः सागरं यथा गावः पश्याम्यहं नित्यं गावः पश्यंतु मां सदा गावोऽस्माकं वयं तासां यतो गाव-
स्ततो वयं गावः सुरभयो नित्यं गावो गुग्गुलुसन्निभाः गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् अन्न-
मेव परं गावो देवानां हविरुत्तमं पावनं सर्वभूतानां रक्षंति च वहंति च सर्वेषामेव भूतानां गावः शरण-
मुत्तमं गावः सर्वस्य लोकस्य गावो धन्याः शुभावहाः नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च नमो ब्र-

वस्त्रभोज्यविभूषणैः सवसेद्ब्रह्मणो लोके यावच्चंद्रार्कतारकमिति मेषसंक्रांतौ गरुडपुराणदानमपि तत्रै
व इत्येतद्गारुडं नाम पुराणं भुक्तिमुक्तिदम् कीर्तितं पापशमनं पठतां शृण्वतां नृणाम् लिखित्वैतत्पुरा
णं तु विषुवे यः प्रयच्छति सौवर्णहंससंयुक्तं विप्राय स दिवं व्रजेत् इति गरुडपुराणदानं अत्रैव मा
त्स्यपुराणदानमपि नारदीये लिखित्वैतत्पुराणं तु हैममत्स्यसमन्वितम् विप्रायाभ्यर्च्य यो दद्यात्स या
ति परमं पदम् मत्स्यपुराणेपि विषुवे हेममत्स्येन धेन्वा चैव समन्वितम् यो दद्यात्पृथिवी तेन दत्ता भ
वति चाखिला इति मत्स्यपुराणदानम् ॥ स्वस्ति श्रीरणवीरसिंहधरणीपालो वदान्याग्रणीर्ज्ञाना
शास्त्रविचारसारसुविन्यस्तहृद्दसंरक्तकः धर्माधर्मविभागकृद्रघुपतेः पादांबुजार्चारजो जीयात्पुत्र
कलत्रमित्रसहितः संपालयन्मां चिरम् १ रणवीरसिंहभूपेन कारिते कृत्यसागरे अभूद्वैशा
खलक्षणानां रम्यो रत्नसमुच्चयः २ इति श्रीसूर्यवंशावतंसरघुकुलतिलकश्रीरणवीरसिंहमहा
राजकारिते कृत्यरत्नाकरे वैशाखमासकृत्यरत्नसमुच्चयः ॥ संपूर्णोस्तमासम् ॥ शुभं भू
यात् ॥ तत्सद्ब्रह्म ॥

॥ ॥ श्रीगणेशाय नमः ॥ अथ ज्येष्ठमासकृत्यनिर्णयः ॥ वृषादौ वृषसंक्रान्तौ पूर्वाः षोडश घटिकाः पु-
ण्यकालः रात्रौ संक्रमणे सति प्रागुक्तो निर्णयः अथ मासकृत्यं महाभारते ज्येष्ठामूलं च यो मासमेकभक्तेन संक्षि-
पेत् ऐश्वर्यमतुलं श्रेष्ठं पुमांस्त्रीवायतिवर्गं संक्षिपेद्यिवाहयेत् तथाच निदाघकालपानीयं यस्य तिष्ठत्युपदारि-
तं संसर्गविषमं कृच्छ्रं न कदाचिदवाप्नुयात् छत्रदानात्तथा ज्येष्ठे सर्वान्कामानवाप्नुयात् छत्रोपानहयोर्दानं
तस्माज्ज्येष्ठे द्विजोत्तमाः अक्षयं फलमाप्नोति नागलोकं स गच्छति अक्षयफलं छत्रादि दानेन भवेदित्य-
र्थः वामनपुराणे तस्माज्ज्येष्ठे सदा भूप तोयस्थो योर्चयेद्धरिं शीततापो न रात्तिष्ठेद्यावदाभूतसंप्लवं वि-
ष्णुधर्मोत्तरे अखिलज्येष्ठमासव्यापि श्रीप्राप्तिव्रतमुक्तं वैशाख्यां समतीतायां प्रतिपत्प्रभृतिक्रमात्
एवं वृत्तं जयेद्देवं श्रीसहायं दिने दिने पुष्पैर्माल्यैः फलैश्चैव सुपूजयाद्दत्तांस्तथा बिल्वाश्च वर्ज्यो सततं गौर-
सैर्भोजयेद्द्विजान् त्रिरात्रोपोषितो ज्येष्ठ्यां कनकं प्रतिपादयेत् वस्त्रयुग्मं च राजेंद्र तेन साफल्यमाप्नुयात् इति
श्रीप्राप्तिव्रतं भविष्योत्तरे पिष्टेन कंजलं कृत्वा ज्येष्ठे मासि सवेदकं पुष्पैः संपूज्य गंधाद्यैर्नानावस्त्रविभूषितैः
वर्षकोटियुगं साग्रं सूर्यलोके महीयते कंजजो ब्रह्मा वामनपुराणे उदकुंभांबुधेनूंश्च तालवृंतं सचंदनं त्रि-
विक्रमस्य प्रीत्यर्थं दातव्यं ज्येष्ठमासि च ज्येष्ठकृष्णप्रतिपदमारभ्य श्रीप्राप्तिव्रतारंभो नैवोक्तः ज्येष्ठकृष्णद्विती-
यायां स्नानकल्पादि तत्र आर्द्रादिकल्पादिकल्पोक्तं ज्येष्ठकृष्णतृतीयायां गौरीव्रतांगत्वेन पतिगौर्याः पूजनं
पातालवासीपूजनं ज्येष्ठकृष्णचतुर्थीव्रतांगत्वेन गणपतिपूजनं चंद्रोदये अर्घ्यदानं घृतप्राशनं च कार्यं ज्ये-
ष्ठकृष्णपंचम्यां पातालनागपूजनं ज्येष्ठकृष्णषष्ठ्यां स्कंदकुमारपूजाव्रतं ज्येष्ठकृष्णसप्तम्यां उभयसप्तमी-
व्रतांगत्वेन मित्राख्यसूर्यपूजाव्रतं ज्येष्ठकृष्णाष्टम्यां त्रिलोचनाख्यशिवपूजारंभः नारदीये ज्येष्ठमासि द्विज-
श्रेष्ठ कृष्णाष्टम्यां त्रिलोचनं यः पूजयति लोकेशं नाकलोकं व्रजेन्नरः भविष्योत्तरेपि ज्येष्ठमासि तथाषा-
ढे श्रावणे च तथापरे अपरे भाद्रपदे मासि पूजयेच्चतुरो मासान्नीलोत्पलकदंबकैः त्रिपुरांतकरं शंभुं शि-
वलोके वसेन्नरः ज्येष्ठकृष्णनवम्यां दुर्गासरस्वतीपूजा ज्येष्ठकृष्णदशम्यां तिथिपत्वेन यमपूजोभयदशा-
मीव्रतं ज्येष्ठकृष्णैकादश्यामपरा युधिष्ठिर उवाच ज्येष्ठस्य कृष्णपक्षे च का नाम्नैकादशी भवेत् एतदाचक्ष्व
मे कृष्ण यथैवापापमोचनी श्रीकृष्ण उवाच साधु पृष्टं त्वया राजन् लोकानां हितकाम्यया ज्येष्ठस्य कृष्णपक्षे तु
ह्यपरानाम नामतः एकादशी महाराज महापातकनाशिनी ब्रह्महा मद्यपः स्तेयी गोत्रहा भ्रूणहा तथा
अपरासेवनाद्राजन्मुक्तो भवति मानवः कूटमानी कूटसेवी कूटसाक्ष्यं वदेन्नरः तुलाकूटकरः पापी कूटभाषार-
तस्तथा ज्योतिषां कूटगणकः कूटायुर्वैदिको भिषक् कूटशास्त्रप्रवक्ता च विज्ञेया नरकौकसः अपरासेवना-
त्तेषां पापंनप्रणतिनान्यथा क्षत्रियो यः क्षात्रधर्मं त्यक्त्वा युद्धात्पलायते स गच्छेन्नरकं घोरं यावदिंद्राश्चतुर्दश
शिष्यः शास्त्रं पठित्वा यो गुरुं निंदति निस्त्रपः चतुराशीति कल्पांतं रौरवे नरके वसेत् स्वभर्तारं परित्यज्य
या सेवेत्परपूरुषं सा नारी नरकं गच्छेद्यावदाभूतसंप्लवं अपरासेवनात्तेषां पापंनप्रपतिनान्यथा कथ-
यिष्यामि माहात्म्यमपरायान्नृपोत्तम शृणुष्व परया भक्त्या सर्वपापप्रणाशनं पुष्करे च प्रयागे च कार्त्तिक्यां
च नृपसत्तम त्रिषु स्थानेषु राजेंद्र नदीनां संगमेषु च केदारे च विशालायां जंबूमार्गे तथैव च हरिहरे
कनखले कुशावर्ते तथैव च ॥ कोटितीर्थे प्रभासे च कुरुक्षेत्रे च पांडव द्वारिकायां च गोमत्यां गंगासा-
गरसंगमे तीर्थेष्वेतेषु राजेंद्र सेव्यमानेषु यत्फलं तत्फलं समवाप्नोति ह्यपरैकादशीव्रतात् रविग्रहे
कुरुक्षेत्रे दानहोमनिषेवणात् गयायां पिंडदानेन प्रयागे स्नानमात्रतः यत्फलं मुनिभिः प्रोक्तमपरासे-
वनात्तु तत् नातः परतरा काचित्पुण्या शुभफलप्रदा अर्धप्रसूतां गां राजन्यो ददाति द्विजन्मने तेनैव पृ-
थिवी दत्ता ससप्तद्वीपसागरा तस्माच्छतगुणं पुण्यमपराव्रतसेवनात् लोकानां चैव सर्वेषां हिताय क-
थितं तव माहात्म्यश्रवणादस्या दशगोदानजं फलं स्त्री पुमान्समवाप्नोति नात्र कार्या विचारणा इ-

तिब्रह्माण्डपुराणे पद्मपुराणे च ज्येष्ठकृष्णापरैकादश्या व्रतकथा ज्येष्ठकृष्णद्वादश्यां तिथितत्त्वेन हरिपूज
कार्या ज्येष्ठकृष्णत्रयोदश्यां वटसावित्रीव्रतारम्भः कार्यः पक्षप्रदोषव्रतमपि कार्यम् अत्र सावित्रीव्रता
रम्भे अमावास्यापूर्णिमान्तरीये नयथा त्रिरात्रसंपत्तिस्तथा त्रयोदशी कार्येति कथायामुक्तम् कृत्यरत्नाव
ल्याम् अमापूर्णिमयोः प्राधान्याभिधानात् ज्येष्ठकृष्णे च चतुर्दशी माहेश्वरकल्पादि तत्र श्राद्धकल्पादि कृ
त्योक्तं कार्यम् अस्यामेव मासि सतीजन्मदिनव्रतं स्त्रीभिः सौभाग्यप्राप्तये कार्यम् तथोक्तं नारदीये ज्येष्ठ
कृष्णे च चतुर्दश्यां जाता पूर्वं सुमा सती तस्मात्सात्र संपूज्या स्त्रीभिः सौभाग्यवृद्धये उपहारैश्च विविधैः
गीतनृत्योत्सवादिभिः होमैः पयोभिर्वस्त्रैश्च यत्र पुष्पैः सुगन्धिभिरिति ॥ अथ ज्येष्ठस्यामावास्यायाम्
सावित्रीव्रतम् ज्येष्ठमासस्यामावास्यायां सावित्रीव्रतमुत्तमम् अवैधव्याय कुर्वन्ति स्त्रियः सर्वाः समन्वि
ताः इति राजमार्त्तण्डे उक्तं च निर्णयामृते भविष्ये ज्येष्ठामायां तथा ज्येष्ठे वटमूले महासतिः त्रिरात्रो
पोषिता नारी विधिनानेन पूजयेत् अशक्तौ तु त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रिया अयाचितं चतुर्दश्याम
मायां समुपोषणम् अथ व्रतविधिः उद्यापनं च नद्यादौ तिलामलकरजनीविलेपनपूर्वकं स्नात्वा
वार्षिकत्वात् पूजादिकं निर्वर्त्य उद्यापनपूजादिसंकल्पं कुर्यात् तद्यथा तिथ्यादिकमादावुच्चार्य म
म भर्तुः पुत्रादीनां च आयुरारोग्यैश्वर्यादि प्राप्तिपूर्वकं इहजन्मनि जन्मान्तरे च आत्मनश्चावैधव्यप्राप्तये
आचरितवटसावित्रीव्रतोद्यापनपूजादिकमहं करिष्ये इति संकल्प्य वृताचार्यो वटमूले गृहे वा वेदि
कां विधाय तत्र सर्वतोभद्रं विरच्य तत्र ब्रह्मादिदेवताः संपूज्य तत्र कलशद्वयं प्रतिष्ठाप्य एकस्मिन्कल
शे हैमं ब्रह्माणं ब्रह्मयज्ञानमिति मन्त्रेण गायत्रीमन्त्रेण सावित्रीं हैमीं प्रतिष्ठाप्य तदनन्तरं द्वितीयकुम्भे प
लादधिकराजतपर्यङ्के हैमीं सत्यवत्सावित्रीयमनारदप्रतिमाः संस्थाप्य नाममन्त्रैरावाहयेत् ततः काष्ठ
भारं कुठारं च हैमं राज्ञे तेन च निधाय पूजयेत् अत्राशक्तौ एकस्मिन्कलशे एकस्यामेव मूर्तौ सर्वेषां पूजनं प्र
ष्य पूजोत्तरं नाममन्त्रैरङ्गपूजा सावित्र्यै पादौ पू० सावित्र्यै जानुनी कमलपत्राक्ष्यै कटिं भूतधारिण्यै उदरं पू०
गायत्र्यै कटिं पू० ब्रह्मप्रियायै शिरः पू० पत्रपुष्पपूजोत्तरं अर्घ्यं दद्यात् रजतादिपात्रेण द्वयोरपि ओंका
रपूर्वकं देवि वीणापुस्तकधारिणि वेदमातर्नमस्तुभ्यमवैधव्यं प्रयच्छ मे पतिव्रते महाभागे भर्तुश्च प्रियवादि
नि अवैधव्यं च सौभाग्यं देहि त्वं मम सुव्रते पुत्रान्पौत्रांश्च सौभाग्यं गृहाणार्घ्यं नमोऽस्तु ते अथ ब्रह्मसत्यवतोरर्घ्य
दानं त्वया सृष्टं जगत्सर्वं सदेवासुरमानुषं सत्यव्रतधर देव ब्रह्मरूप नमोऽस्तु ते अथ यमायार्घ्यदानं त्वं धर्म
साक्षी लोकानां शुभाशुभविवेककृत् वैवस्वत गृहाणार्घ्यं धर्मराज नमोऽस्तु ते ततो नारदायार्घ्यदानं नारदाय
नमस्तुभ्यं सुरेशादिभिरर्चित गृहाणार्घ्यं मया दत्तमवैधव्यं प्रयच्छ मे अथ सर्वेषां प्रार्थना सावित्री ब्रह्मगाय
त्री सर्वदा प्रियभाषिणी तेन सत्येन मां पाहि दुःखसंसारसागरात् मया कृतं महाघोरं जन्मान्तरशतैरघं भ
स्मीभवतु तत्सर्वमवैधव्यं प्रयच्छ मे ब्रह्मसत्यवतोः प्रार्थना अवियोगो यथा देव सावित्र्या सह ते विभो अवि
योगस्तथास्माकं भूयाज्जन्मनि जन्मनि सावित्र्याः प्रार्थना सावित्री त्वं यथा देवि चतुर्वर्षशतायुषं पतिं प्रा
प्तासि गुणिनं मम देवि तथा कुरु यमप्रार्थना कर्मसाक्षिन् जगन्नाथ सर्ववैद्य प्रसीद मे सत्यवन्सरव्रतं सर्वं प
रिपूर्णं तदस्तु मे ततः सुवासिनीः संपूज्य वायनानि दद्यात् कथाश्रवणादिना रात्रिं जपेत् प्रातः अग्निं प्रति
ष्ठाप्य अन्वाधानम् सावित्रीं गायत्रीमन्त्रेण पायसचरुना हवीः तिलव्रीहियवद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्या
काहुतिभिर्ब्रह्माणं धर्मराजं नारदं च व्याहृतिमन्त्रेण तिलव्रीहियवद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्या
कुतिभिर्ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या यद्वा सत्यव्रतसावित्र्योर्ब्रह्मसावित्र्योश्च यवाज्याहुत्या कृत्वात्प्र
यक होमादिकं नास्तीति पूजादौ तन्नाममन्त्राभ्यामेव तयोः पूजाद्युक्तत्वात् एवं होमं संपाद्य ततश्चतु
र्विंशतिर्द्वादश अष्टौ वा चत्वारि मिथुनानि वस्त्रादिना संपूज्य पूरिकामोदकमण्डकादिकूष्माण्डनारिके

लमातुलिंगदाडिमबीजपूरादिफलहरिद्राकुंकुमकेसरविचूर्णकज्जलकेटसूत्रकंकणमौक्तिकपादभूष
णावस्त्रकंचुकीआदर्शपात्रादिदक्षिणांताम्बूलादियुतं सूर्यस्य नवं सूर्यसहितं वायनं दद्यात् तत्र मंत्रः सोप
स्कर द्विजश्रेष्ठ व्रतसंपूर्तिकारकं वायनं ते प्रयच्छामि सावित्री प्रीयतामिति ततः पीठं व्रतपूर्तये गां च दत्वा
सदन्नेन ब्राह्मणान्संतर्प्य आशिषो गृहीत्वा इष्टजनैः सह भुंजीत इयानत्र विशेषः रात्रौ अरुंधतीं दृष्ट्वा तस्यै
च अर्घ्यं दद्यात् अरुंधति नमस्तुभ्यं वसिष्ठस्य प्रिये शुभे सुतान्देहि सुखं देहि गृहाणार्घ्यं नमोस्तु ते इत्यर्घ्यं
दत्वा भुंजीत अथात्र पंचतपाव्रतं मात्स्ये ज्येष्ठे पंचतपाः सायं हेमधेनुप्रदो भवेत् यात्यष्टमीचतुर्दश्योरुद्र
व्रतमिदं स्मृतं ज्येष्ठे अष्टम्यां चतुर्दश्यां च शुक्लायां पंचतपाः पंचाग्निव्रतष्ठकृच्चतुर्दश्यां सायंकाले व्र
तांते हेमधेन्वाख्यदानाद्द्विविधानीत्यर्थः हेमधेनोरिति षष्ठीसमासः षष्ठ्यर्थलक्षणायते तथा चाग्नेये
ज्येष्ठे पंचतपाः सायं चतुर्दश्यष्टमीषु च यः करोति सुवर्णाख्यधेनुदानं द्विजातये स याति शांकरं लोकं रु
द्रव्रतमिदं स्मृतम् धेनुः सौवर्णी शेषं पूर्ववत् इति रुद्रव्रतं ज्येष्ठशुक्लपक्षे कर्तव्यं सप्ताहमात्रसाध्यं अ
गशाको शुक्लपक्षे अष्टमीचतुर्दशीमात्रेपि वा कार्यम् तत्रैवाख्यसमाप्तिदर्शनात् अष्टमीचतुर्दश्योः
प्रत्येकदिनसाध्यं वा अस्य समाप्तिश्चतुर्दश्यामेवोक्ता सायंकालव्यवेत्युक्तत्वात् वामनपुराणे शुक्ल
पक्षे दानमुक्तम् उदकुंभाबुधेनुं च तालवृंतं सचंदनं त्रिविक्रमस्य प्रीत्यर्थं दातव्यं साधुभिः सदेति ज्ये
ष्ठप्रकरणात् सदा ज्येष्ठशुक्लपक्षे एवेदं दानं प्रतिवर्षं प्रदेयमिति सदापदद्योतनाभिप्रायः शिष्टा
श्चाप्येवमाहुरिति योहषवर्तिनि सवितरि शिशिरीघवरबीजमश्नाति स नरः खगपतिसदृशो नागकुलेद
प्यते सततं बीजवरेण कीटाद्यविद्धता ज्येष्ठशुक्लप्रतिपदायामारोग्यप्रतिपद्व्रतांगत्वेन वरुणाख्व
सूर्यपूजाव्रतं कार्यं नारदीये अत्र करवीरव्रतमुक्तं अथ ज्येष्ठशुक्लपक्षे पक्षस्यादिवसोदये देवोद्या
ने भवं वृक्षं करवीरं समर्चयेत् रक्तं तंतु परीधानं गंधधूपविलेपनैः प्रभूतसप्तधान्यैश्च नारंगैर्बीजपूरकैः
अभ्युक्ष्याक्षतपात्रेण मंत्रेणानेन मानयेत् करवीर वृषावास नमस्ते भानुवल्लभ दंभोलिभृत्सदुर्गा
दिदेवानां सततं प्रिय आकृष्णेनेति वेदोक्तमंत्रेणाभ्यर्चमानयेत् एवं भक्त्या समभ्यर्च्य दत्वा विप्राय द
क्षिणां प्रदक्षिणां ततः कृत्वा पश्चात्स्वभवनं व्रजेत् इदं करवीरपूजाव्रतं भविष्योत्तरेपि एतद्व्रतं पुरा
पार्थ सूर्याराधनकाम्यया अनुष्ठितं विलभया सावित्र्या सत्यभामया दमयंत्या सरस्वत्या गायत्र्या गंग
या तथा अन्याभिरपि नारीभिर्मर्त्यलोकेप्यनुष्ठितं करवीरव्रतं पार्थ सर्वसौख्यफलप्रदं संपूज्य रक्त
कुसुमार्चितसर्वशाखं नीलैर्दलैस्ततनुं करवीरवृक्षं भुक्त्वा मनोभिलषितान्विभवान्भोगान्स्ते वै
प्रयाति भवनं भवतो भानोः अथास्यामेव ज्येष्ठशुक्लप्रतिपदि दशहराव्रतांगत्वेन गंगापूजाख्य
व्रतज्ञादिप्रारंभः कार्यः तदुक्तं काशीखंडे ज्येष्ठे मासि सिते पक्षे प्राप्य प्रतिपदं तिथिं दशाश्वमेधिके
स्नात्वा मुच्यते सर्वपातकैः एवं सर्वासु तिथिषु क्रमस्नायी नरोत्तमः आशुक्लपक्षदशमी दशजन्मा
र्जितमुत्सृजेदिति दशहरागंगास्तोत्रं दशहरादशमीविधाने वक्ष्यमाणं ज्ञेयम् ज्येष्ठशुक्लद्वितीयायां च
तुर्वक्त्ररूपभानुपूजा नारदीये ज्येष्ठशुक्लद्वितीयायां भास्करं भुवनाधिपं चतुर्वक्त्रस्वरूपं च समभ्यर्च्य विधा
नतः भोजयित्वा द्विजान्भक्त्या भास्करं लोकमाप्नुयात् इयं ज्येष्ठशुक्लद्वितीया कलित्तयंनी तदुक्तं ज्येष्ठ
शुक्लद्वितीयायां बोद्धः कल्किर्भविष्यतीति नभस्ये च द्वितीयायां बलभद्रो भवेन्नदेन्यादि इयं द्वितीया सो
मपदा इति कालादर्शे सिता ज्येष्ठद्वितीया च आश्विने दशमी सिता चतुर्थी द्वादशी माघे एताः सोमपदाः स्मृ
ता इति अत्र वेदाध्ययननिषेधो नारदीये युगादिषु च सर्वासु तथा मन्वंतरादिषु अनध्यायं प्रकुर्वीत
तथा सोमपदास्वपीति ज्येष्ठशुक्लतृतीयायां रंभाव्रतमुक्तम् नारदीये भविष्ये च अथ ज्येष्ठतृतीया तु शुक्ला
रंभेति नामतः तस्यां समाप्य विधिवत्पूजयेद्ब्राह्मणोत्तमम् गंधपुष्पांशुकाद्यैस्तु नारी सौभाग्यका

मया रंभाव्रतमिदं विप्रविधिवत्समुपोषितं ददाति वित्तपुत्रांश्च मतिं धर्मे शुभां दृढां साधवीये भवि
ष्यामि भद्रे कुरुष्व यत्नेन रंभाख्यं व्रतमुत्तमं ज्येष्ठशुक्लतृतीयायां स्नात्वा नियमतत्परेति सा च विप्राग्र
हा द्दृढव्रता तया रंभा सावित्री वटपैतृकी कृष्णाष्टमी च भूता च कर्तव्या संमुखी तिथिरिति स्कांदोक्तेः
अस्याः कथाविधानं च भविष्ये युधिष्ठिर उवाच स्त्रीणां संपद्यते येन मर्त्यलोके गृहे शुभं पतिप्रेम तथा
त्यं तत्त्वं मे ब्रूहि व्रतं शुभं श्रीकृष्ण उवाच एकदा पार्वती शंभू स्थितौ मुनिसुराहतौ कैलासशिखरे र
म्ये नानाधातुविचित्रिते नानाद्रुमलताकीर्णे नानापुष्पोपशोभिते शंकरः पार्वतीं प्राह किं त्वया सु
तेकृतं वामोरु येन मे त्वं तु प्रिया सर्ववरवर्णिनि आगत्य जानुदेशं मे सुप्रसन्नानना प्रिये ब्रूहि चाविदि
यं सर्वं त्वया पार्वति यत्कृतं इत्युक्ता प्रणता भूत्वा गौरी प्राह शिवं शुभा तृतीयायां समाचीर्णं मया रं
भाव्रतं शुभं तेन मे त्वं मनोहारि भर्ता भूतोसि शंकरः ईश्वरी चाप्यहं स्त्रीणां तव देहार्धहारिणी ईश्वर उवा
च कीदृशं तद्व्रतं भद्रे सर्वसौख्यप्रदायकं ब्रूहि पार्वति यत्नेन यच्चीर्णं पितुरंतिके गौर्युवाच पुराहं
देव तिष्ठामि कुमारी भवने पितुः हिमवत्कूटरम्ये सखीगणसमावृता ततोहं मेनया प्रोक्ता सपित्रा च
हिमाद्रिणा पुत्रि रंभाव्रतं चीर्णं चिरसौभाग्यवर्धनं येन प्रारब्धमात्रेण सर्वं संपत्स्यते तव सौभाग्यं स्त्री
गणैश्वर्यं महादेवीपदं ततः एवं करोमि तेनात मया चोक्तं वचः पितुः मनोभिलषितं कांतं येन प्राप्नोमि
शंकरं मेनोवाच अद्य शुक्लतृतीयायां स्नात्वा नियमतत्परा कुरु पार्श्वेषु पंचाग्नीन् ज्वलमानान् कृता
शनान् गार्हपत्यं दक्षिणाग्निमानाय्याहवनीयकं पंचमं भास्करं तेजस्त्वेते पंच वह्नयः एतेषां मध्यमाश्रि
त्यातिष्ठ एवं सुलोचने सर्वाभरणसंयुक्ता देवीमभिमुखीकुरु महालक्ष्मीं महाकालीं महामायां महा
सतीं चतुर्भुजां ध्यानपरां पंकजोपरिसंस्थितां मृगाजिनच्छन्नकुचां जटावल्कलधारिणीं गंगा च य
मुना सिंधुः शतद्रुर्नर्मदा नदी सरस्वती वैतरणी सैव प्रोक्ता महासती तस्याश्च प्रीतये पराभव तद्भा
वभाविता होमं कुर्युर्यतात्मानो ब्राह्मणाः सर्वतो दिशं देव्याः पूजा प्रकर्तव्या पुष्पधूपादिना ततः
बहुप्रकारैर्नैवेद्यैर्नैवेद्यैर्घृतपाचितैः स्थापयेत्पुरतो देव्याः पृथक्सौभाग्यमेव च जीरकं लवणं राजक्षुकु
सुंभं कुंकुमं तथा निष्पावाः पावनतरा लवणं शर्करा गुडं पुष्पमंडपिका कार्या पार्श्वे पुष्पाधिवासिता प
मामनेन संतिष्ठेद्यावत्परिणतो रविः ततः प्रणम्य रुद्राणीं मंत्रमेतदुदीरयेत् वेदेषु सर्वशास्त्रेषु दिवि भू
मौ धरातले दृष्टश्रुतस्त्वद्रूपेण प्राक्त्या रहितः शिवः त्वं शक्तिस्त्वं स्वधा स्वाहा त्वं सावित्री सरस्वती प
तिं देहि देहि देवेशि देहि नमोस्तु ते एवं क्षमापयेद्देवीं प्रणिपत्य पुनः पुनः देहि भक्त्या गृहं रम्यं विचित्रव
कुंभभूमिकं ध्वजघंटारकेदारकपोतालिविभूषितं कुड्यस्तंभगवाक्षाढ्यं मणिमंडिततोरणं पद्मराग
महानीलवज्रवैडूर्यभूषितं गृहदानविधानेन ब्राह्मणाय तपस्विने सपत्नीकाय संपूज्य सर्वोपस्करसंयुतं
सुवासिनीभ्यः स्नेहेन नैवेद्यं सर्वसंस्थितं निवेद्य विधिवत्तेन ततः पश्चात्क्षमापयेत् दंपत्यानि च पूज्या
नि चतुर्थ्यां मधुरै रसैः इत्युक्त्या मया चीर्णं हर रंभाव्रतं परं व्रतांते गमस्य मुनये दत्तं गृहवरं शुभं लोपा
मुद्रा प्रिया पत्नी तस्यैव प्रेमनिर्जिता तेन धर्मेण देव त्वं भर्ता लब्धोसि शंकर अर्द्धकायस्थिता तेन स्त्री
णां ज्येष्ठापि चेश्वरी अत एतद्व्रतं रम्यं याश्चरिष्यंति योषितः कौंतेय पुरुषो वापि स्यात्तं ब्रह्मव्रतं भुवि
ता सा पुत्रा गृहे भोगा कुलवृद्धिर्भविष्यति स्त्रीणां चाचलसौभाग्यं गार्हस्थ्यं सार्वकामिकं बालहृद्दुःस्यस
ध्यानां रूपलावण्यबृंहणं सपत्नीदर्पदलनं वशीकरणमुत्तमं अनेन व्रतधर्मेण परलोके युधिष्ठिर चिं
तितो वापि संसर्गः पिंडवंध्यः प्रजायते मर्त्यलोके शुभे देशे शुभे ग्रामे शुभे पुरे हिमवद्विंध्ययोः संध्ये चार्या
वर्ते मनोहरे अन्यच्च शुभे वासे सर्वोत्पन्नधने कुले मृतः शक्रपुरं याति ततो विष्णुपुरं व्रजेत् ततः शिवपु
रं याति व्यासस्य वचनं यथा यद्भयात्मलभयाय हरेल्लतश्च गौर्या हिमाद्रिभवनस्थितया पिचीर्णं त

स्याव्रतमुक्तिकरोति रनामस्य धर्मे ब्रह्मेशकेशवपतिं सुखवंदत्तमेत्सा इति भविष्योत्तरे पंचाग्निसाधने रं
भाव्रतं ज्येष्ठशुक्लतृतीयायां कार्यं अस्योद्यापनं यथाशक्ति गृहदानसहितं कार्यं गृहदानं कुर्मेश्वराहो
शक्तितः सर्वसंपूर्णं गृहं रम्यमथापि वा सदक्षिणं द्विजेंद्राय ब्रह्मलोकं व्रजेन्नरः गारुडे च पैष्टिकं दारवं वा
पि मृण्मयं वापि शक्तितः सर्वोपस्करणोपेतं दत्वाविविफलं गृहं ब्राह्मणाय दरिद्राय विडौजश्चक्र इंद्रि
ने क्रीडित्वा सुचिरं कालं मानुष्यलोकमागतः भवत्याढ्यो नृपैश्वर्यैः सर्वकामसमन्वितः अथगृ
हदानप्रयोगः गृहमध्ये दक्षिणभागे पंचवर्णरजोभिः पद्मं विलिख्य तदुपरि प्रस्थमात्रान् तिला
न्तदुपरि शय्यां स्थापयित्वा शय्योपरि सौवर्णौ लक्ष्मीनारायणौ च संपूज्य प्रतिगृहीतारं सपत्नीकं प्रति
गृहार्थं हत्वा तं च करे गृहीत्वा समंत्रघोषं वक्ष्यमाणमंत्रैर्गृहं प्रवेशयेत् तेच मंत्राः एह्येहि नारायण दिव्य
रूप सर्वामरैरर्चितपादपद्म शुभाशुभानंदसुधामधीश लक्ष्मीयुतस्त्वं च गृहं गृहाण नमः कौस्तुभना
थाय हिरण्यकवचाय च क्षीरोदार्णवशायाय जगद्धात्रे नमो नमः भूर्लोकप्रमुखा लोकास्तव देहे व्यव
स्थिताः नंदंति यावत्कालं तेन तथास्मिन्भवने गृहे त्वत्प्रसादेन देवेश पुत्रपौत्रैर्युतो गृहे पंचयज्ञक्रिया
युक्तो वसेदाचंद्रतारकं ततस्तं पूर्वस्थापितशय्योपरि उदङ्मुखमुपवेश्य स्वयमासने प्राङ्मुखमुपविश्य
ॐ अद्येत्यादि देशकालकीर्तनानंतरम् अमुकगोत्रायामुकशर्मणे ब्राह्मणायेदं पक्वेष्टकादिरचितं यथो
पपत्तिसंपादितं कांस्यताम्रादिभाजनसर्वधान्यलवणगुडशर्करादिविविधरसोपेतं गोबलीवर्द दासी
दासमंचतूलिकावितानादिसर्वोपकरणयुतं सदीपभोज्यं सर्वदैवतं गृहं सर्वपापक्षयपूर्वकं कल्प
कोटिशतावधि ब्रह्मलोकमहीयत्वादि यथाभिलषितकामनया तुभ्यमहं संप्रददे शिलाकाष्ठपक्वे
ष्टकारचितगृहेन कल्पकोटिशतावधि नारायणसमीपवर्तित्वनिवासकाम इति मृण्मयगृहदाने
ष्टि प्रत्येकमन्वंतरावच्छिन्नप्रतिलोकपालपुरनिवासकाम इति इहतु मनोभिलषितमहेश्वरप्रतिम
भर्तृरतिप्रेमान्वितस्थिरसौभाग्यकामये रंभातृतीयाव्रतोद्यापनसांगतावाप्तये इदं तुभ्यमहं संप्रददे त
तः प्रार्थना इदं गृहं गृहाण त्वं सर्वोपस्करसंयुतं तवविप्रप्रसादेन ममास्त्वभिमतं फलं गृहं मम विप्र
त्वर्थं गृहाण त्वं द्विजोत्तम प्रीयतां मे जगन्नाथो वासुदेवो जनार्दनः ततः प्रतिगृहीता देवस्त्वेति य
ज्जुषा प्रतिगृह्णीयात् कामस्तुतिं च पठेत् ततः स्वर्णसहस्रमारभ्यैकसुवर्णपर्यंतं दानदक्षिणा यथा
शक्त्या प्रदेया ततः पादुकोपानहच्छत्रचामरादिकं दद्यात् संपन्नं वाप्यसंपन्नं गृहोपस्करभूषणं सर्वं
संपूर्णमेवास्तु त्वत्प्रसादाद्द्विजोत्तमेति प्रार्थयेत् अस्य फलं मात्स्ये य एवं सर्वसंपन्नं पक्वेष्टं विनिवेद
येत् कल्पकोटिशतं यावद्ब्रह्मलोके महीयते शैलजं दारुजं वापि यो दद्याद्विधिपूर्वकं वसेत्स्त्रीगणीये
रथेन नारायणसमीपतः मृण्मयं वापि यो दद्याद्गृहं सोपस्करान्वितं पुरेतु लोकपालानां प्रतिमन्वंतरं वसे
त् अत्र दातृपूजनमपि कार्यं मंडपवेदिपूजा सर्वतोभद्रमंडलदेवतापूजा ग्रहहोमादिकं आचार्यानुम
त्वा यथाशक्ति कुर्यात् चतुर्दिक्षु चत्वारि कुंडानि विधाय दक्षिणाभिमुखः पूजाहोमादिकं ब्राह्मणैः का
रयित्वा दक्षिणावस्त्रगोदानादिकं यथाशक्ति कुर्यात् इति सोद्यापनं रंभातृतीयाव्रतं अस्य सौभाग्यशय
नव्रतं गत्वेन ललितादेवीपूजा चूतप्राशनं गौरीव्रतं गत्वेन भद्रागौरीपूजाव्रतं मंदारपुष्पप्राशनं च इति
ज्येष्ठशुक्लतृतीयाव्रतानि ज्येष्ठशुक्लचतुर्थ्यां सतीव्रतमुक्तं नारदीये अथ ज्येष्ठचतुर्थ्यां तु सतीव्रतमत
तेन हत्वा गणपतेर्मातुर्लोके मोदेत ततः स्मे निर्णयामृते अस्याश्चोमाजन्मोक्तं ज्येष्ठशुक्लचतुर्थ्यां तु जाताप
र्वमुमा सती तस्मात्तत्र संपूज्या स्त्रीभिः सौभाग्यवृद्धये उपचारैश्च विविधैर्गीतनृत्योत्सवादिभिः होमैः पयो
भिर्वस्त्रैश्च पत्रपुष्पैः सुगंधिभिरिति ज्येष्ठशुक्लपंचम्यां पितृपूजनं नारदीये तथा ज्येष्ठस्य पंचम्यां पितॄन्सम
र्चयेत्सुधीः सर्वकामफलावाप्त्यै वापनैर्विप्रभोजनैः ज्येष्ठशुक्लषष्ठ्यां दिननाथपूजाव्रतम् ज्येष्ठमासे

शुक्लषष्ठ्यां विधिनेष्ट्वा दिवाकरं लभते वांछितान्कामान् तत्प्रसादान्न संशयः ज्येष्ठशुक्लषष्ठ्यामेव स्कंदष
ष्ठीव्रतमपि कार्य्यं ज्येष्ठशुक्लसप्तम्यां इन्द्रपूजाव्रतं नारदीये ज्येष्ठे तु शुक्लसप्तम्यां जात इन्द्रो रविः स
यं तं संपूज्य विधानेन सोपवासो जितेन्द्रियः स्वर्गतिं लभते विप्र देवेन्द्रस्य प्रसादतः ज्येष्ठशुक्लाष्टम्यां दे
वीपूजा रोगघ्नं शुक्लादेवीपूजाव्रतं शुक्लाष्टम्यां पुरा देवी शुक्ला देवी महाशनिं वधाय दानवेन्द्राणां शुक्ला
शुक्लां प्रपूजयेत् अशनिं जग्राहेति शेषः नारदीयेप्येवं ज्येष्ठशुक्ले तथाष्टम्यां यो देवीं पूजयेन्नरः स वि
मानेन चरति गंधर्वाप्सरसां गणैः ज्येष्ठशुक्लनवम्यां उमाव्रतं नारदीये ज्येष्ठशुक्लनवम्यां तु सोप
वासो नरोत्तमः उमां संपूज्य विधिवत्कुमारीर्भोजयेद्द्विजान् सशक्त्या दक्षिणां दत्वा शाल्यन्नं पयसा
प्लुतं उमाव्रतमिदं विप्र यः कुर्य्याद्विधिवन्नरः स भुक्त्वेह वरान्भोगानंते स्वर्गगतिं लभेत् अथैवं भवि
ष्योत्तरेपि उपवासपरो भूत्वा नवम्यां पूजयेदुमां ब्राह्मणीमिति वै नाम्ना श्वेतरूपेण रूपिणीं ज्येष्ठे मासि च
पक्षे शुक्ले कृत्वा नक्तं स्वयं विधिं शाल्यन्नं पयसोपेतं स्वयं भुंजीत वाग्यतः कुमारीर्भोजयेद्भक्त्या स्वशक्त्या
ब्राह्मणांस्तथेति ज्येष्ठशुक्लदशमी दशहराख्या तदुक्तं नारदीये ज्येष्ठशुक्लदशम्यां तु जाह्नवी सरि
तांवरा समायाता धरां स्वर्गान्नभस्तात्पुण्यदा स्मृता अत्र दशयोगविशेषस्तत्रैव ज्येष्ठः शुक्लदले हस्ते
बुधश्च दशमी तिथिः गरानंदव्यतीपाताः कन्येन्दुवृषभास्कराः दशयोगाः समाख्याता महापुण्यतमोत
मः हरते दश पापानि तस्माद्दशहरा स्मृता अस्यां यो जाह्नवीं प्राप्य स्नाति संप्रीतमानसः विधिना जा
ह्नवीतोये स याति हरिमंदिरं हेमाद्रौ भविष्ये अस्याः केवलदशम्या एव हस्तमात्रयोगे दशहरात्वमुक्तं
ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता हरते दश पापानि तस्माद्दशहरा स्मृता वाराहे तु गंगायाप
वदशहरेति नामविशेषः दशम्यां शुक्लपक्षे तु ज्येष्ठे मासि कुजेहनि अवतीर्णा यतः स्वर्गाद्धस्तर्क्षे च
सरिद्वरा हरते दश पापानि तस्माद्दशहरा स्मृता तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषत इति स्कांदेपि
दशयोगा उक्ता यथा ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः गरानंदव्यतीपाते कन्याचंद्रे वृषे रवौ द
शयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते अत्र बुधभौमयोर्योगकल्पभेदेन व्यवस्था इयं च यत्र योगबा
हुल्यं तत्रैव कार्य्या योगाधिक्ये फलाधिक्यश्रवणात् ज्येष्ठे मलमासे सति योगविशेषेण तत्रैव कार्य्या
न तु शुद्धे दशहरात्वोत्कर्षश्च चतुर्थ्यपि युगादिरिति वदंति हेमाद्रौ ऋष्यशृंगोक्तेः तथा च ब्रह्मपुरा
णे ज्येष्ठस्य शुक्ला दशमी संवत्सरमुखी स्मृता तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषत इति इयं च युगा
दित्वं तत्रैव योगविशेषं विनापि दशपापहरेति तथा च स्कांदे यां कांचित्सरितं प्राप्य दद्याद्दर्भति
लोदकं मुच्यते दशभिः पापैर्महापातकसंभवैः एवं ज्येष्ठशुक्लदशम्यां नदीस्नानमात्रस्य दशविधपाप
हृतिः फलं एवं दानस्यापि तथा च ज्येष्ठे मासि सिते पक्षे दशमी बुधसंयुता हरते दश पापानि तस्माद्दशह
रा स्मृता अत्र बुधयोगप्राधान्यं अत्र हस्तयोगोऽधिकः सर्वत्र तिलतर्पणे तिलयोगस्य तुल्यार्थत्वमप्येत
ते नदीमात्रस्नाने दशविधपापनिहंतीति फलविशेषतः तथा ज्येष्ठशुक्लदशम्यां तु भवेद्भौमदि
नं यदि ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः तथा च गंगास्नानासिता ज्येष्ठे दशमी हस्तसंयु
ता हरते दश पापानि तस्माद्दशहरा स्मृतेति कृत्यमहार्णवे गंगायोगयोगनिबंधे च ज्येष्ठमासि क्षिति
सुतदिने शुक्लपक्षे दशम्यां हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोके पापं तस्यां हरति हि तिथौ
सा दशेत्याहुरार्य्याः पुण्यं दद्यादपि दशगुणं वाजिमेधायुतस्य एवं चात्र हस्तभौमयुतायां ज्येष्ठशु
क्लदशम्यां गंगास्नानस्य दशविधपापनाशो वाजिमेधायुतप्राप्ति गुणदशगुणप्राप्तिः फलं दशविधपा
पानि तु परिभाषितानि भविष्यत्पुराणे स्कंदपुराणे काशीखंडे च परद्रव्येष्वभिध्यानं मनसानिष्ट
चिंतनं वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतं १ पारुष्यमनृतं चापि पैशुन्यं चापि सर्वशः असंब

लेशहमूर्तये सर्वसंशयछेदिकारिण्यै नमः पापारिमूर्तये भुक्तिमुक्तिप्रदायिन्यै भद्रदायै नमो नमः भोगायै भोगप्रदायिन्यै भोगवत्यै नमोस्तु ते मंदाकिन्यै नमस्तेस्तु स्वर्गदायै नमो नमः नमस्त्रैलोक्यभूषायै त्रिपथायै नमो नमः नमस्त्रिशुक्लसंस्थायै क्षमावत्यै नमो नमः त्रिहुताशनसंस्थायै तेजोवत्यै नमो नमः नंदायै लिंगधारिण्यै सुधाधारात्मने नमः नमस्ते विश्वमुख्यायै रेवत्यै ते नमो नमः बृहत्यै ते नमस्तेस्तु लोकधात्र्यै नमो नमः नमस्ते विश्वमित्रायै नंदिन्यै ते नमो नमः परावरशताढ्यायै तारायै ते नमो नमः पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः पाशजालनिकृंतिन्यै अभिन्नायै नमोस्तु ते शांतायै च वरिष्ठायै वरदायै नमो नमः उस्रायै सुखजग्ध्यै च संजीविन्यै नमोस्तु ते ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः प्रणतार्तिप्रभंजिन्यै जगन्मात्रे नमोस्तु ते सर्वापत्प्रतिपक्षायै मंगलायै नमो नमः शरणागतदीनार्तपरित्राणपरायणे सर्वस्यार्तिहरे देवि नारायणि नमोस्तु ते निर्लेपायै दुर्गहंत्र्यै दक्षायै ते नमो नमः परात्परपरायै च गंगे निर्वाणदायिनि गंगे ममाग्रतः पाहि गंगे मे देवि पृष्ठतः गंगे मे पार्श्वयोरेधि गंगे त्वय्यस्तु मे स्थितिः आदौ त्वमंते मध्ये च सर्वं त्वं गां गते शिवे त्वमेव मूलप्रकृतिस्त्वं पुमान्पर एव हि गंगे त्वं परमात्मा च शिवस्त्वं च नमः शिवे य इदं पठति स्तोत्रं शृणुयाच्छ्रद्धयापि यः दशधा मुच्यते पापैः कायवाचिकमानसैः रोगस्थो रोगतो मुच्येत् विपद्भ्यश्च विपद्गतः मुच्यते बंधनाद्बद्धो भीतो भीतेः प्रमुच्यते सर्वान्कामानवाप्नोति प्रेत्य च त्रिदिवं व्रजेत् दिव्यं विमानमारुह्य दिव्यस्त्रीपरिवीजितः गृहेपि लिखितं यस्य सदा तिष्ठति धारितम् नाग्निचौरभयं तस्य न सर्पादिभयं क्वचित् ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता संहरेत्त्रिविधं पापं बुधवारेण संयुता तस्यां दशम्यामेतच्च स्तोत्रं गंगाजले स्थितः यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः सोपि तत्फलमाप्नोति गंगां संपूज्य भक्तितः उपवासी वसन्मार्गो दशपापैः प्रमुच्यते सर्वान्कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते इति दशहरागंगास्तोत्रं श्रीसेतुबंधरामेश्वरस्य प्रतिष्ठापितत्वात् तत्र विशेषेण पूजा कार्या तदुक्तं स्कांदे सेतुमाहात्म्ये ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः गरानंदव्यतीपाते कन्याचंद्रे वृषे रवौ दशयोगे सेतुबंधे लिंगरूपधरं हरम् रामो वै स्थापयामास शिवलिंगमनुत्तमम् इति ज्येष्ठशुक्लदशम्यां दशहराविधिः ज्येष्ठशुक्लैकादशी निर्जला तत्र निर्जलमुपोष्यैव विप्रेभ्यो जलकुंभान्दद्यादिति निर्णयामृते उक्तं मदनरत्ने स्कांदेपि ज्येष्ठे मासि नृपश्रेष्ठ या शुक्लैकादशी शुभा निर्जलं समुपोष्यात्र जलकुंभान्सशर्करान् प्रदाय विप्रमुख्येभ्यो विष्णुलोके समोदते तथा च नारदीये ज्येष्ठशुक्लैकादशीं च निर्जलां समुपोष्य तु उदयादुदयं यावद्भास्करस्य द्विजोत्तम प्रभाते कृतनित्यस्तु द्वादश्यामुपचारकैः हृषीकेशं समभ्यर्च्य विप्रान्संभोज्य भक्तितः चतुर्विंश्येकादशीनां फलं यत्तत्समाप्नुयात् अथास्याः कथा भीमसेन उवाच भगवन्देवदेवेश वासुदेव जनार्दन एकादश्यां न भोक्तव्यमिति वेदविदो विदुः एकभक्तेन शक्नोमि नोपवासमतः परम् वृकनामा तु यो वह्निर्वर्तते जठरे मम प्रतिक्षणं मुहूर्तं तु भोजनं क्रियते मया उपवासं न शक्नोति कर्तुं देवकिनंदन तदहं किं करोमीह जपहोमादिकं हरेः एतस्मात्कारणात्कृष्ण ममाग्रे कथय प्रभो येनाहं त्वेकादशीनां व्रतेन फलमाप्नुयाम् समाचरन्मम कृष्णेति वसुमाधव श्रीभगवानुवाच सत्यं सत्यं त्वया वीर ममाग्रे कथितं वचः तद्वक्ष्ये येन वत्सरैकादशीफलं ज्येष्ठे मासि तु संप्राप्ते वृषभस्थे दिवाकरे अथवा मिथुनस्थेर्के या शुक्लैकादशी भवेत् निर्जला नाम सा प्रोक्ता महापातकनाशिनी उपवासं तु यस्तस्यां करोति जलवर्जितं तेनैवाप्नोति स नरो वत्सरैकादशीफलं दशम्यां नियमः कार्यो दंतधावनपूर्वकं एकादश्यां निराहारो वर्जयिष्यामि वै जलं द्वादश्यां पारणं चैव करिष्यामि जनार्दन व्रतेनानेन गोविंद शरणं मे भवाच्युत एकादश्यां निराहारो

दकवर्जिता तत्र स्नानाचमनादन्यद्वर्जयित्वोदकं बुधः माषकस्य सुवर्णस्य यत्र मज्जति वै मणिः एतदाचम
नं प्रोक्तं पवित्रं कायशोधनं उपयुंजीत नान्यत्तु व्रतभंगोन्यथा भवेत् उदयादुदयं यावद्वर्जयित्वोदकं नरः
अयत्नात्समवाप्नोति द्वादशद्वादशीफलं प्रभाते विमले जाते द्वादश्यां स्नानमाचरेत् सस्वर्णेन जलेन दत्वा
द्विजातिभ्यो यथाविधि भुंजीत कृतकृत्यस्तु ब्राह्मणैः सहितो वशी एवं कृते तु यत्पुण्यं भीमसेन शृणुष्व
तत् संवत्सरे तु यावत्य एकादश्यो भवंति वै तासां फलमवाप्नोति तत्र मे नास्ति संशयः इति मां केशवः प्रा
ह शंखचक्रगदाधरः सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज एकादश्यां निराहारः सर्वपापात्प्रमुच्यते
द्रव्यशुद्धिः कलौ नास्ति संस्कारः स्मार्त एव च वैदिकस्य कुतस्त्वास्ति प्राप्ते दुष्टे कलौ युगे किं तु ते बहुनोक्ते
न वायुपुत्र पुनः पुनः एकादश्यां न भुंजीत पक्षयोरुभयोरपि एकादश्यां सिते पक्षे ज्येष्ठे मास्युदकं विना पुण्य
फलं वा प्राप्नोति तच्छृणुष्व वृकोदर सर्वतीर्थेषु यत्पुण्यं सर्वदानेषु यत्फलं तत्फलं समवाप्नोति इमां कृत्वा वृ
कोदर संवत्सरे यियाश्च शुक्लाः कृष्णा वृकोदर उपोषितास्ताः सर्वाः स्युरेकादश्यां न संशयः धनधान्यव
हाः पुण्याः पुत्रारोग्यफलप्रदाः यमदूता महाकायाः करालाः कृष्णपिंगलाः दंडपाशधरा रौद्रा नांते
पश्यंति तं नरं पीतांबरधराः सौम्याश्चक्रहस्ता मनोजवाः अंतकाले नयंत्येनं मानवं वैष्णवीं पुरीं तस्मात्सर्व
प्रयत्नेन सोपोष्योदकवर्जिता जलधेनुं तदा दत्वा सर्वपापैः प्रमुच्यते इति श्रुत्वा तदा चक्रुः पांडवा जनमे
जय तथा त्वमपि भूपाल सोपवासार्चनं हरेः कुरु सर्वप्रयत्नेन सर्वपापप्रशांतये स्वशेत्रं दृश्यमानं
पश्यंतं तरगते च यत् ततस्य मम दोषास्तु प्रार्थयेत्वामहं प्रभो भोक्ष्येपरेह्नि देवेश निर्विघ्नं कुरु मेच्युत
मुच्चार्य ततो मंत्रमुपवासपरो भवेत् सर्वपापविनाशाय श्रद्धाभक्तिसमन्वितः मेरुमंदिरमात्रं तु स्त्रि
यो वा पुरुषस्य वा सर्वं तद्भस्मतां याति एकादश्याः प्रभावतः न शक्नुवंति ये दातुं जलधेनुं नराधिप स
कांचनः प्रदातव्यो घटको वस्त्रसंवृतः तोयस्य नियमं यो वा सत्कुरुते वै स पुण्यभाक् पलकोटिसुवर्णस्य
यामे यामेश्नुते फलं स्नानं दानं जपं होमं यदस्यां कुरुते नरः तत्सर्वं चाक्षयं प्रोक्तमेतत्कृष्णेन भाषि
तं किं वा परेण धर्मेण निर्जलैकादशीं त्विमां उपोष्य सम्यग्विधिवद्वैष्णवं पदमाप्नुयात् सुवर्णमन्नं वासां
सि यदस्यां संप्रदीयते तत्सर्वं कुरुश्रेष्ठ सर्वं चाप्यक्षयं भवेत् एकादशीदिने चान्नं भुंक्ते पापं स केवलं
इह लोके स चंडालो मृतो दुर्गतिमाप्नुयात् ये प्रदास्यंति दानानि द्वादश्यां समुपोष्य वै ज्येष्ठे मासि सिते प
क्षे प्राप्स्यंति परमं पदं ब्रह्महा मद्यपः स्तेयी गुरुद्वेषी सदानृती मुच्यंते पातकैः सर्वैर्द्वादशीयैरुपोषि
ता विशेषं शृणु कौंतेय निर्जलैकादशीदिने यः कर्तव्यो नरैः स्त्रीभिः श्रद्धाभक्तिसमन्वितैः जलशायी
तु संपूज्यो देया धेनुर्घृतमयी प्रत्यक्षा वा कुरुश्रेष्ठ तया धेनुरथापि वा दक्षिणाभिश्च पुष्टाभिर्मिष्टान्नैश्च पृ
थग्विधैः तोषणीयाः प्रयत्नेन द्विजा धर्मभृतांवर तुष्टा भवंति वै विप्रास्तैस्तुष्टैर्मोक्षदो हरिः आत्मद्रो
हः कृतस्तैस्तु यैरेषा न समुपोषिता पापात्मानो दुराचारा दुष्टास्ते नात्र संशयः कुलानां शतकं चापि कुलानीतं
तथापरं आत्मना सहितं नीतं वासुदेवस्य मंदिरं ऊर्ध्वं द्विजेंद्र राजेंद्र यैरेषा समुपोषिता अन्नपानं त
था गावो वस्त्रं शय्यासनं शुभं कमंडलु तथा छत्रं दातव्यं निर्जलादिने उपानहौ यो ददाति पात्रं भूमि
द्विजोत्तमे स सौवर्णेन यानेन स्वर्गलोके महीयते यश्चेदं शृणुयाद्भक्त्या यश्चापि परिकीर्तयेत् उभौ
तौ स्वर्गं गतौ नात्र कार्या विचारणा यत्फलं सन्निहत्यायां राहुग्रस्ते दिवाकरे कृत्वा श्राद्धं लभेन्मर्त्यस्त
दस्याः श्रवणादपि नियमश्च प्रकर्तव्यो दंतधावनपूर्वकं एकादश्यां निराहारो वर्जयिष्यामि वै जलं के
शवप्रीणनार्थाय अन्यदाचमनादृते द्वादश्यां देवदेवेशः पूजनीयस्त्रिविक्रमः गंधपुष्पैस्तथा दीपैर्नै
वेद्यैः प्रियदर्शनैः पूजयित्वा विधानेन मंत्रमेतदुदीरयेत् देवदेव हृषीकेश संसारार्णवतारक उदकुंभप्रदा
नेन नय मां परमां गतिं ततः कुंभाः प्रदातव्या ब्राह्मणेभ्यः स्वशक्तितः सान्नवस्त्रयुगा भीम सच्छत्रोपानद्युगानि

ताः दानानि चात्र देयानि जलधेनुर्विशेषतः भोजयित्वा ततो विप्रान्स्वयं भुंजीत वाग्यतः एवं यः कुरुते भीम
द्वादशीं पापनाशिनीं सर्वपापविनिर्मुक्तो पदं गच्छत्यनामयं ततः प्रभृति भीमेन कृता ह्येकादशी शुभा पां
डवद्वादशी ह्येषा लोके ख्याता बभूव ह इति ब्रह्मवैवर्ते ज्येष्ठशुक्ला निर्जलैकादशी माहात्म्यम् अत्र निर्ज
लमुपोष्य विप्रेभ्यो जलकुंभान्दद्यादिति निर्णयामृते उक्तं मदनरत्ने स्कांदे च ज्येष्ठमासि त्वपक्षे ष्टयाशुक्लै
कादशीं शुभां निर्जलं समुपोष्यात्र जलकुंभान्सशर्करान् प्रदाय विप्रमुख्येभ्यस्तापत्रयविवर्जितः विष्णुलो
कमवाप्येह मोदते विष्णुसन्निधाविति एवमेतस्मेकादश्यां पुराणेषु जलधेनुदानं चोक्तं तत्प्रकारस्तू
च्यते हेमाद्रौ वसिष्ठ उवाच जलधेनुं प्रवक्ष्यामि प्रीयते दत्तया यया देवदेवो हृषीकेशः सर्वेशः सर्वभाव
नः जलकुंभं नरव्याघ्र सुवर्णरजतान्वितं रत्नगर्भमशेषैस्तु ग्राम्यैर्धान्यैः समन्वितं सितवस्त्रयुगाच्छन्नं ह
दूर्वापल्लवशोभितं कुष्ठमांसीमुरोशीरवालकामलकैर्युतं प्रियंगुपत्रसहितं सितवस्त्रोपवीतिनं छ
त्रोपानत्समायुक्तं दर्भविष्टरसंस्थितं चतुर्भिः संयुतं भूप तिलपात्रैश्चतुर्दिशं स्थापितं दधिपात्रेण घृ
तक्षौद्रयुतं शुभं उपोषितः समभ्यर्च्य वासुदेवं जनेश्वरं पुष्पधूपोपहारैश्च यथाविभवमादृतः संक
ल्प्य जलधेनुं च तं कुंभमभिपूज्य च पूजयेद्वत्सकं तद्वत्कृतं जलमयं तु यः एवं संपूज्य गोविंदं जलधेनुं
सवत्सकां सितवस्त्रधरः शांतो वीतरागो विमत्सरः दद्याद्विप्राय राजेंद्र प्रीतये जलशायिनः जलशा
यी जगद्योनिः प्रीयतां मम केशवः इति चोच्चार्य भूनाथ विप्राय प्रतिपादयेत् अपक्वान्नाशिना स्थेयम
होरात्रमतः परं अत्रायं प्रकारः जलकुंभमित्यादि कुंभोत्र जलकलशः सुवर्णरजतयोः सुवर्णस्य शृं
गाकृतित्वं रजतस्य च खुराकृतित्वं तिलपात्राणां ताम्रमयत्वं दधिपात्रस्य कांस्यमयत्वं अनियतप
रिमाणतया शक्तिविधानं पंचरत्नानि धान्यानि च परिभाषायामुक्तानि अत्र यद्यपि सामान्यतो पदेशः
तथापि तत्सामान्यादितरेषु तथात्वमिति न्यायादितरधेनुवदविरुद्धधर्मानुष्ठानं वेदितव्यं यथा सु
वर्णस्य शृंगाकृतित्वं रजतस्य खुराकृतित्वं तिलपात्राणां ताम्रमयत्वं दधिपात्रस्य कांस्यमयत्वं चानु
संधेयं तथा धान्यानि पार्श्वद्वये कुष्ठादीनि घ्राणदेशे प्रियंगुपात्रं श्रवणे यज्ञोपवीतं शिरःस्थाने स्था
पयेत् वत्सोपि चतुर्थांशेन धेनुवत्कार्यः क्वचित् पूजयेद्वत्सकं तद्वत्कृतं जलमयं तु य इति पाठाद्धृतयोर्वि
कल्पोवगम्यते कृष्णाजिनं चतुर्हस्तं प्राग्ग्रीवं विन्यसेद्भुवि गोमयेनोपलिप्तायां दर्भानास्तीर्य सर्वतः लघ्वे
णकाजिनं तद्वद्वत्सस्य परिकल्पयेत् प्राङ्मुखीं स्थापयेद्धेनुमुदक्पादां सवत्सकां एणकाजिनं कृष्णा
जिनं प्राङ्मुखीं प्राक्शिरसमित्यर्थः तदुत्तरेण वत्सोपि तथैव परिकल्पनीय इति मत्स्यपुराणे प्राग्वद्गु
डधेनुवदत्र द्रव्यपरिमाणबोधः तच्चोत्तमा गुडधेनुः स्यात्सदा भारचतुष्टयं वत्सं भारेण कुर्वीत भाराभ्यां
मध्यमा स्मृता अर्धभारेण वत्सः स्याद् गृहवित्तानुसारतः भारस्तु तुलास्त्रियां पलशतं भारः स्याद्विंशतिस्तु
लाः इति वचनाद्विंशति तुलापरिमित गृहवित्तानुसारत इति अत्रोत्तममध्यमादिकल्पना निजवित्तानुसा
रतः कर्तव्येत्यर्थः अथ प्रयोगः कर्ता देशकालौ संकीर्त्यामुकधेनुदानमहं करिष्ये इति संकल्प्य गणेशपू
जनं पुण्याहवाचनमाचार्यवरणं ब्रह्मवरणं च कृत्वाचार्यः स्वयं भूशुद्ध्यादि कुर्यात् तत्क्रमः यदत्र सं
स्थितं भूतमिति सितसर्षपान् विकीर्य शुचीवो हव्येति भूमिं संप्रोक्ष्य समे भूप्रदेशे गोमयोपलिप्तायां
भूमौ दर्भानास्तीर्य तत्र कृष्णाजिनं प्राग्ग्रीवं धेनुवत्सयोरुपकल्पनार्थमास्तीर्य तदुपरि व्रीहियवगोधू
मकंगुसर्षपमाषमुद्गरूपाणि ग्राम्यधान्यानि यथाप्रमाणं पार्श्वद्वये निधाय तत्र कुंभं सजलं दर्भवि
ष्टरस्थितं सुवर्णरजतान्वितं रत्नगर्भं दूर्वापल्लवशोभितं सितवस्त्रयुगाच्छन्नं चतुर्दिक्षु तिलपात्रोपेतं
सच्छत्रं सोपानत्कं संस्थाप्य मुखप्रदेशे दधिघृतक्षौद्रसहितानि त्रीणि पात्राणि विन्यस्य घ्राणदेशे कुष्ठ
मांसीमुरोशीरामलकादीनि विन्यस्य प्रियंगुपात्राणि श्रवणयोर्विन्यस्य शिरसि यज्ञोपवीतं निधाय

द्राक्षाफलेक्षुणांश्चितकंदलगलकंबलां ताम्रककुत्पृष्ठां सितचामररोमाणां विद्रुमभ्रूयुगोपेतां इंद्र
नीलतारकां नवनीतस्तनांकितां हेममयपुच्छां कांस्यदोहां स्वर्णशृंगाभरणोपेतां राजतखुरां नानाफ
लरूपदंतयुक्तां गां सवत्सां संपाद्य आगावोअग्मन्निति सूक्तं पठनोत्तरं सवत्सायै गवे नम इत्यावाह्य
प्राणप्रतिष्ठां कृत्वा मनोजूतिरिति प्रतिष्ठाप्य वैदिकं संपूज्य पुष्पांजलिं गृहीत्वा त्रिः प्रदक्षिणीकृत्य प्रार्थये
त् या लक्ष्मीः सर्वभूतानां या च देवेष्ववस्थिता धेनुरूपेण सा देवी मम शांतिं प्रयच्छतु देहस्था या च रुद्रा
णी शंकरस्य सदा प्रिया धेनुरूपेण सा देवी मम पापं व्यपोहतु विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभाव
सोः चंद्रार्कशक्रशक्तिर्या धेनुरूपास्तु सा श्रियै चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च लक्ष्मीर्या
लोकपालानां सा धेनुर्वरदास्तु मे स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां तथा सर्वपापहरा धेनुस्तस्मा
च्छांतिं प्रयच्छ मे एवमामंत्र्य तां धेनुं ब्राह्मणाय निवेदयेत् अत्रैष दानप्रयोगः अद्य अमुकस्मिन्काले
अमुकगोत्रोहं अमुकशर्मा अमुककामः अमुकगोत्रायामुकशर्मणे ब्राह्मणाय इमां जलधेनुं सर्वो
पस्करणवतीं यथोक्तवत्ससहितां विष्णुदैवतां तुभ्यं संप्रददे न मम देवस्य त्वा रुद्राय गामित्यादि ब्राह्म
णस्तत्पुच्छदेशे गृहीत्वा स्वस्ति कुर्यात् क इदं कस्मा अदात् कामः कामाय दात् कामो दाता कामः प्रतिगृ
हीता कामः समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णा
तु इति कामस्तुतिं पठेत् ततो दक्षिणादानं ततो गोपुच्छेन तर्पणं कृत्वा गोस्तवं कुर्यात् गावो ममाग्रतस्तिष्ठं
तु भुवनानि चतुर्दश यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च गावो मे अग्रतः संतु गावो मे संतु पृष्ठतः
गावः शिरसि मे नित्यं गवां मध्ये वसाम्यहं पंचगावः समुत्पन्ना मथ्यमाने महोदधौ तासां मध्ये च यानंदा न
म्यै देव्यै नमो नमः कर्म परमेश्वरार्पणं कृत्वा ब्राह्मणान्भोजयित्वा स्वयं भोजनं कुर्यात् इति जलधेनुदा
नविधिः अथ घृतधेनुदानविधिः वसिष्ठ उवाच तिलाभावे तथा दद्याद्घृतधेनुं प्रयत्नतः येन भूपविधा
नेन तदिहैकमनाः शृणु वासुदेवं जगन्नाथं घृतक्षीराभिषेचनैः संपूज्य पूर्ववत्पुष्पैर्गंधधूपादिभिर्नवैः
अहोरात्रोषितो भूत्वा अभिपूज्य घृतार्चिषं घृतार्चिष जगन्नाथ देवदेव नमोस्तु ते इति स्तुतिः गव्यस्य सर्पि
षः कुंभं पुष्पमालाविभूषितं कांस्यपिधानसंयुक्तं सितवस्त्रयुगेन च हिरण्यगर्भं सहितं मणिविद्रुम
मुक्तिकैः अत्र पलसहस्रपरिमाणः कुंभः द्वादशपलाधिकानि पंचशतपलानीति केचित् कांस्यपिधान
सहितं कांस्यपात्रपिहितं मध्यवर्तिना हिरण्येन सहितमित्यर्थः मणिविद्रुममौक्तिकैः सहितमिति
शेषः इक्षुयष्टिमयान्पादान्खुरान्रौप्यमयांस्तथा सौवर्णे चाक्षिणी कुर्यात् शृंगे चागुरुकाष्ठके अ
त्र सुवर्णादेरनुदितसंख्यत्वाद्यथाशक्ति विधानं सप्तधान्यमये पार्श्वे पत्रोर्णेन च कंबलं कुर्यात्तुरुष्कक
र्पूराभ्यां घ्राणं फलमयान्स्तनान् तद्वच्छर्करया जिह्वां गुडक्षीरमयं मुखं पत्रोर्णेत्यंतकौशेयम् तुरुष्कः सिह्ल
कः सिल्हरस इति प्रसिद्धः रोमसूत्रेण लांगूलं रोमाणि सितसर्षपैः ताम्रपात्रमयं पृष्ठं कुर्याच्छ्रद्धासमन्वितः
ईदृक्कल्पनयोपेतां कल्पयेद्घृतधेनुं नराधिप तद्वत्कल्पनया विद्वान्घृतवत्सं प्रकल्पयेत् तद्वद्धेनुवत्खुरशृंगा
दियुक्तमित्यर्थः स च धेनोश्चतुर्थभागेन कर्तव्यः तं च विप्रमहाभागं मनसैव घृतार्चिषं कल्पयित्वा ततस्त
स्मै प्रयतः प्रतिपादयेत् एतां मम उपकाराय गृह्णीष्व द्विजसत्तम प्रीयतां मम देवेशो घृतार्चिः पुरुषोत्तमः
इत्युदाहृत्य विप्राय दद्याद्धेनुं नराधिप स्कंदपुराणोक्तोयं मंत्रः घृतं गावः प्रसूयंते घृतं भूमौ प्रतिष्ठितं घृत
मग्निश्च देवाश्च घृतं मे संप्रगृह्णतामिति विष्णुधर्मोत्तरे घृतमग्निर्घृतं सोमस्तत्काम्याः सर्वदेवताः घृतधे
नुप्रदानेन सर्वास्तुष्यंतु देवताः घृतरत्नसुवर्णानां सम्यक्कल्पनया कृतां दत्वैकरात्रं स्थित्वा तु घृताहारो न
राधिप मुच्यते सर्वपापेभ्यस्तथा दानफलं शृणु घृतक्षीरवहा नद्यो यत्र पायसकर्दमाः तेषु लोकेषु सर्वेषु
सपूर्वजः प्रजायते पितृन्सर्वान्नयेत्स्वर्गं पुरुषास्तत्र येप्ययः वांछितेषु नृपलोकेषु मनसेप्सितकल्पयः स

कामानामियं पुष्टिः कथिता नृपसत्तम विष्णुलोकं नरो याति निष्कामो घृतधेनुदः घृतमग्निर्हुतं सोमस्तन्मयाः सर्वदे-
वताः घृतं प्रयच्छता तृप्ता भवंत्यखिलदेवताः सुवर्णमत्र दक्षिणा अनुक्तदक्षिणेषु तस्य यथाशक्ति विहितत्वात् कु-
मारिकादिसाधनकं तु जलधेनुवत्कार्यं गोमत्रतिः सर्वदैव अस्याः प्रयोगादिकं जलधेनुवत् इति विष्णुधर्मोक्तो
घृतधेनुविधिः अस्यामेव रात्रौ च द्वादशीव्रतं तत्र द्वादशी प्राङ्गेन एकादश्येव ग्राह्या दुर्वासा उवाच ज्येष्ठमासेऽप्ये-
वमेव संकल्प्य विधिना नरः अर्चयेत्परमं देवं पुष्पैर्नानाविधैः शुभैः ओं नमो राघवायेति पादौ पूर्वं प्रपूजयेत् त्रिवि-
क्रमायेति कटिं धृतविश्वाय चोदरं उरः संवत्सरायेति कटं संवर्तकाय च सर्वास्त्रधारिणे बाहू स्वाहा एवमब्जरथांगके
सहस्रशिरसेऽभ्यर्च्य शिरस्तस्य महात्मनः अब्जरथांगकेपूर्वं खचक्रे एवमभ्यर्च्य विधिवत्तदग्रे कुंभं प्रकल्पयेत्
प्राग्वद्वस्त्रयुगाच्छन्नौ सौवर्णौ रामलक्ष्मणौ प्राग्वन्मत्स्यप्रतिमावत् अनयोः स्वरूपं तथा च विष्णुधर्मोत्तरे रा-
मो दाशरथिर्मौलीराजलक्षणलक्षितः मौलीमुकुटवान् भरतो लक्ष्मणश्चैव शत्रुघ्नश्च धनुर्धरः तथैव तु ते
कर्तव्याः किंतु मौलिविवर्जिता इति अर्चयित्वा विधानेन प्रभाते ब्राह्मणाय तौ दातव्यौ मनसा काममीहता
पुत्रदेशेन प्रीयेतां मे राघवौ यौ रामो लक्ष्मणसंयुतः अपुत्रेण पुराऽभीष्टो राज्ञा दशरथेन तु वसिष्ठः पुत्रकामा-
य प्रोवाच परमादृतः इदमेव विधानं तु कथयामास तं द्विजाः प्राप्य हर्षं विदित्वा तु स राजा कृतवानिदं तस्य
पुत्रः स्वयं जज्ञे रामाख्यो मधुसूदनः चतुरंशोऽप्यभूद्विष्णुः परितोषान्महामुने एतदैहिकमाख्यातं पारत्रिकम-
तः शृणु दिव्यान्भोगान्भुंजते स्वर्गसंस्थो यावच्चेंद्रा दश च द्विद्विसंख्याः अतीत्य कालं पुनरेत्य मर्त्ये राजा राज्ञां
जायते यज्ञयाजी दश च द्वि द्विसंख्याश्चतुर्दशेंद्रा इत्यर्थः न स्पृशंति पापानि च तस्य पुंसः कामानवाप्नोति
यथा समीहान् निःकाम एतद्व्रतमेव चीर्त्वा प्राप्नोति निर्वाणपदं स्थिरं तत् इति वाराहपुराणोक्तधरणीव्रते
ज्येष्ठशुक्लैकादश्यां रात्रावेव द्वादशीव्रतं इति निर्जलैकादशीविधिः समाप्तः ज्येष्ठशुक्लद्वादश्यां य-
मुनास्नानं भविष्यपुराणे यमुनासलिले स्नात्वा पुरुषो मुनिसत्तम ज्येष्ठमासे सिते पक्षे द्वादश्यामुपवासकृ-
त् समभ्यर्च्याच्युतं सम्यङ्मथुरायां समाहितः अश्वमेधस्य यज्ञस्य प्राप्नोत्यविकलं फलं अत्रैकादश्यामुपवा-
सो द्वादश्यामर्चनमिति नारदीये द्वादश्यां ज्येष्ठशुक्लायां पूजयित्वा त्रिविक्रमं गंधाद्यैर्मधुरान्नाद्यैः करकं
विनिवेदयेत् दद्याद्द्विजाय तत्पश्चादेकभक्तं समाचरेत् व्रतेनानेन संतुष्टो देवदेवस्त्रिविक्रमः ददाति वि-
पुलान्भोगांस्ततो मोक्षं च नारद ज्येष्ठशुक्लत्रयोदश्यां दौर्भाग्यशमनं व्रतं नारदीये ज्येष्ठशुक्लत्रयोद-
श्यां दौर्भाग्यशमनं व्रतं तत्र स्नात्वा नदीतोये पूजयेत्कुंभदेशजं श्वेतमंदारमर्कं वा करवीरं च रक्तकं निरी-
क्ष्य गगने सूर्यं प्रार्थयेन्मंत्रतस्तथा मंदारकरवीरार्कभवंतो भास्करांशजाः पूजिता मम दौर्भाग्यं नाशयं-
तु नमोऽस्तु वः इत्थं योऽर्चयते भक्त्या वर्षे वर्षे तु मत्रयं न स्पृशति तस्य दौर्भाग्यं नात्र कार्या विचारणा भविष्ये
तथैवेदं व्रतमुक्तं युधिष्ठिर उवाच ब्रूहि मे यदुशार्दूल व्रतं वंध्यविनाशनं कृतं यद्धंति रोगं च दौर्भाग्यश-
मनं तथा श्रीकृष्ण उवाच इमं प्रश्नं पुरा पार्थ जातूकर्ण्यो महामुनिः पृष्टो व्यासो महामत्या स ऋषिः का-
लमंद्या कथयामास सप्रश्नमुपविश्य शृणोति सा देवी कृतांजलिपुटा जातूकर्ण्यो वदद्व्रतं ज्येष्ठमा-
सि सिते पक्षे त्रयोदश्यां युधिष्ठिर गत्वा पुण्यं नदीतोये पूजयेत्कुंभदेशजं श्वेतमंदारमर्कं च करवीरं
च रक्तकं निंबं च सूर्यदेवस्य वल्लभं मंडलं तथा दीपनैवेद्यपुष्पाद्यैर्मंत्रेणानेन पांडव निरीक्ष्य गगने
सूर्यं स्नात्वा हृदि समुच्चरेत् सूर्यांशसंभूत मंदारश्वेतार्कार्कसमप्रभ करवीर नमस्तुभ्यं निंब हृत नमो-
स्तु ते इति योऽभ्यर्चयेद्भक्त्या वर्षे वर्षे पृथक् नरः वर्षत्रयं नृपश्रेष्ठ नारी वा भर्तृसंयुता तस्याः शरीरे दौ-
र्गंध्यं दौर्भाग्यं च न जायते न सापत्न्यं भवेल्लोके न वंध्यात्वं ध्रुवं लभेत् जायते नीव सौभाग्यं मर्त्ये स्त्री
दुर्लभं नृप कथितं याश्चरिष्यंति तांप दौर्भाग्यनाशनं सर्वपापविनिर्मुक्ताः स्वर्गं वसंति मानवाः निंबः
सितार्ककरवीरलताः संपूज्याः याः पूजयंति कुसुमाक्षतदीपदानैः ताः सर्वकामसुखवृद्धिसमृद्धि-

भाज्ञो दौर्भाग्यदोषरहिताः सुभगा भवंति अत्र कृत्तत्रयानिं दहृत्नोथिक इति नारदीयाद्विशेषः ज्येष्ठशु
क्लचतुर्दश्यां पंचतपाख्यं रुद्रव्रतं नारदीये ज्येष्ठशुक्लचतुर्दश्यां दिवा पंचतपा निशि मुखे ददेद्धेमधेनुं रु
द्रव्रतमिदं स्मृतं ज्येष्ठपौर्णमासी मन्वादिः सा च पौर्वाह्णिकी ग्राह्येति मन्वादिनिर्णये आदित्यपुराणे ज्ये
ष्ठमासि तिलान्दद्यात्पौर्णमास्यां विशेषतः अश्वमेधस्य यत्पुण्यं तत्प्राप्नोति न संशयः विष्णुरपि ज्येष्ठी ज्येष्ठ
युक्ता चेत्तस्यां छत्रोपानत्प्रदानतः नरो नराधिपत्यं प्राप्नोतीति हेमाद्रौ ज्योतिषे अत्र योगविशेषः चंद्रगु
रुः शशी चैव प्राजापत्ये रविस्तथा पूर्णिमा ज्येष्ठमासस्य महाज्येष्ठी प्रकीर्तिता अपरार्के वामनपुराणे
ज्येष्ठ्यां कुंभांबुदानं च तालवृंतं सचंदनं त्रिविक्रमस्य प्रीत्यर्थं दातव्यं ज्येष्ठमास्यपि अस्यां पूर्णिमायां व
टसावित्रीव्रतं इयं च पूर्वविद्धा कार्या पूर्वविद्धा न कर्तव्या अमावस्या च पूर्णिमा वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्र
तमुत्तममिति ब्रह्मवैवर्ते वर्जयित्वेति पर्युदासाद्दष्टादशनाडीवेधो वटसावित्रीव्रतं तिथिकल्पः इयं च त्रयो
दशीमारभ्य पूर्णिमांतं तथा च त्रिरात्ररूपं तथा च स्कांदभविष्ययोः ज्येष्ठे मासि सिते पक्षे द्वादश्यां रजनीमु
खे व्रतं त्रिरात्रमुद्दिश्य अहोरात्रं स्थितो भवेत् इत्युपक्रम्यांते उपदृष्टहितं ज्येष्ठे मासि सिते पक्षे पूर्णिमा
यां तथा व्रतं चीर्णं पुरा महाभक्त्या कथितं ते मया न चेति यम उवाच नारी वा विधवा वापि सपुत्रा पुत्रवर्जिता
सभर्तृका सपुत्रा वा कुर्याद्व्रतमिदं शुभं ज्येष्ठे मासि सिते पक्षे पौर्णमास्यां पतिव्रता स्नात्वा चैव शुचिर्भूत्वा नि
यमं कारयेत्ततः निराहारा स्थिते भविष्ये च अमायां च तथा ज्येष्ठे वटमूले तथा सती त्रिरात्रोपोषिता तत्र व्र
तेनानेन पूजयेत् इति अथ व्रतविधिः आचम्य मासपक्षाद्युल्लिख्य मम भर्तुः पुत्राणां चायुरारोग्यप्राप्तये
जन्मजन्मन्यवैधव्यप्राप्त्यर्थं च सावित्रीव्रतमहं करिष्ये इति संकल्प्य वटसिंचनमंत्रः वट सिंचामि ते मूलं स
लिलैरमृतोपमैः सूत्रेण वेष्टयेद्गंधपुष्पाद्यैरर्चयेत् ओं नमो वैवस्वताय इति भ्रामयंती प्रदक्षिणं भक्त्या
दत्तं यमराज सावित्रि प्रतिगृह्यतां पाद्यं भक्त्या मया हृतं तोयं फलपुष्पसमन्वितं अर्घ्यं गृहाण सावित्रि
ममास्य व्रतसिद्धये अर्घ्यं सुगंधि सहकर्पूरं सुरभि स्वादु शीतलं स्वपत्या सह सावित्रि कुरुष्वाचमनीय
कं आद्भिः पंचामृतैः स्नानं मया भक्त्या प्रकल्पितं मंदाकिन्याः समानीतमुदकं च सदा प्रियं सावित्र्यै नमः
धर्मराजाय च नमः इति सर्वत्र पूजामंत्रः आचमनं सूक्ष्मतंतुमयं वस्त्रं कार्पासेन विनिर्मितं सावित्रि स
त्यवत्कांते मया दत्तं प्रगृह्यतां इति वस्त्रं सावित्रि सत्यवत्कांत धर्मराज सुरेश्वर सावित्रि ब्रह्मणा सार्ध
मुपवीतं प्रगृह्यतां इत्युपवीतं कुंकुमागुरुकर्पूरकस्तूरीरोचनान्वितं चंदनं ते मया दत्तं सावित्रि प्रति
गृह्यतां चंदनं अक्षताश्च सुरश्रेष्ठे कुंकुमाक्ताः सुशोभनाः मया निवेदिता भक्त्या गृहाण परमेश्वरि
अक्षताः माल्यादीनि सुगंधीनि मालत्यादीनि वै प्रभो मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यतां
पुष्पाणि अथांगपूजा सावित्र्यै पादौ पूजयामि प्रसावित्र्यै जंघे। कमलायतायै कटिं। भूतधात्र्यै उद
रं। ब्रह्मप्रियायै शिरः। अथ ब्रह्मसत्यवतोरंगपूजा धात्रे नमः पादौ। ज्येष्ठाय उदरं। परमेष्ठिने गुह्यं।
अग्निरूपाय कटिं। वेधसे ऊरू। पद्मनाभाय हृदयं। स्वयंभुवे कंठं। हिरण्यगर्भाय मुखं। ब्रह्मणे शि
रः। विश्वेदेवसर्वांगं पूजयामि देवद्रुमसमुद्भूतः कालागुरुसमन्वितः आघ्रेयो यं महाधूपः सावित्रि प्रतिगृ
ह्यतां धूपं चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणं आर्तिक्यं कलितं भक्त्या गृहाण परमेश्वरि दी
पं अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितं भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यतां नैवेद्यं पूगी
फलं महद्दिव्यं नागवल्लीदलैर्युतं खदिराचूर्णसहितं तांबूलं प्रतिगृह्यतां तांबूलं हिरण्यगर्भगर्भ
स्थं हेमबीजं विभावसोः अनंतपुण्यफलदमतः शांतिं प्रयच्छ मे इति दक्षिणा सावित्रि च प्रसावित्रि सततं
ब्रह्मणः प्रिये जगत्रयं जगन्नाथ धात्रि वरदे नमः सावित्रि त्वं यथा देवि चतुर्वर्गप्रदायिनी
प्रापितुलितं मम देवि तथा कुरु सावित्रि च प्रसावित्रि सततं ब्रह्मणः प्रिये पूजितासि द्विजैः सर्वैः सौभि

मुनिगणैस्तथा त्रिसंध्यं देवि भूतानां वंदनीयासि सुव्रते मयादत्तां च पूजेयं त्वं गृहाण नमोस्तु ते इति पु
ष्पांजलिं दत्वा ततोर्घ्यं दद्यात् ओंकारपूर्वके देवि सर्वदुःखनिवारिणि देवि मातर्नमस्तुभ्यमवैधव्यं प्र
यच्छ मे पतिव्रते महाभागे चाद्रिजाते शुचिस्मिते दृढव्रते दृढमते सर्वदा प्रियवादिनि अवैधव्यं च
सौभाग्यं देहि त्वं मम सुव्रते पुत्रान्पौत्रांश्च सौख्यं च गृहाणार्घ्यं नमोनमः इत्यर्घ्यं दत्वा प्रार्थयेत्
सावित्रि ब्रह्मगायत्रि सर्वदा प्रियभाषिणि तेन सत्येन मां पाहि दुःखसंसारसागरात् त्वं गौरी त्वं शचि गौरी
त्वं प्रभा चंद्रमंडले त्वमेव च जगन्माता मामुद्धर वरानने यन्मया दुःकृतं सर्वं कृतं जन्मशतैरपि भस्मीभव
तु तत्सर्वमवैधव्यं च देहि मे अवियोगो यथा देव सावित्र्या सहितस्तव अवियोगस्तथास्माकं भूयाज्जन्मनि
जन्मनि इति प्रार्थना इति पूजाविधिः अथ कथा स्कांदे सनत्कुमार उवाच कुलस्त्रीणां व्रतं देव माहात्म्यं
च तथैव हि अवैधव्यकरं स्त्रीणां पुत्रपौत्रप्रदं वद ईश्वर उवाच आसीन्मद्रेषु धर्मात्मा ज्ञानी परमधार्मिकः ना
म्नाचाश्वपतिर्वीरो वेदवेदांगपारगः अनपत्यो महाबाहुः सर्वैश्वर्यसमन्वितः सपत्नीकस्तपस्तेपे समारा
धयत्तपः सावित्रीं च प्रसावित्रीं जपन्नास्ते महामनाः जुहोति चैव सावित्रीं भक्त्या परमया युतः ततस्तुष्टा तु सा
वित्री सा देवी द्विजसत्तम साविग्रहवती देवी तस्य दर्शनमागता तां तु दृष्ट्वा नगद्धंधां सावित्रीं च तपोन्नमः प्रणि
पत्य नृपो भक्त्या प्रहृष्टेनांतरात्मना तं दृष्ट्वा पतितं भूमौ तुष्टा देवी जगाद ह तुष्टाहं तव राजेंद्र वरं वरय सुव्रत ए
वमुक्तस्तया राजा प्रसन्नां तामुवाच ह अनपत्योस्म्यहं देवि पुत्रमिच्छामि शोभनं नान्यं वृणोमि सावित्रि पुत्र
मेव जगन्मये अन्यदस्ति समग्रं मे त्वत्तो यच्चापि दुर्लभं प्रसादात्तव देवेशि तत्सर्वं विद्यते गृहे एवमुक्ता तु
सा देवी प्रत्युवाच नराधिपं पुत्रस्ते नास्ति राजेंद्र कन्यका ते भविष्यति कुलद्वयं तु सा राजन्नुद्धरिष्यति भामि
नी मन्नाम्ना राजशार्दूल तस्या नाम भविष्यति इत्युक्त्वा तं मुनिश्रेष्ठ स्वस्थानं ब्रह्मणः प्रिया अंतर्धानं गता दे
वी सुसंतुष्टो महीपतिः ततः कतिपयाहस्सु तस्य राज्ञी महीभुजः समस्तासुषुवे कन्यां पूर्णे काले सुताय च
सावित्र्या तु यया दत्ता सावित्र्या जप्तया तथा सावित्रीति तेन वरदात्सा नाम बभूव ह राजते देवगर्भाभा क
मलकमललोचना वर्द्धते च मुनिश्रेष्ठ चंद्रलेखेव चांबरे सावित्री ब्रह्मणो वै साक्षाच्छ्रीरिवायतलोचना तां तु
दृष्ट्वा स गर्भां तां राजा चिंतामुपेयिवान् अयाच्यमाना च वरै रूपेण प्रतिमा भुवि तस्या रूपेण ते सर्वे सन्नि
रुद्धा महीभुजः ततः स राजा संचिंत्य उवाच कमलेक्षणां पुत्रि प्रदानकालस्ते नैव याचेति केचन स्वयं
वरय सयं ते पतिं गुणसमन्वितं मनः प्रह्लादनकरं कुलेनाभिगुणेन च इत्युक्त्वा तां स राजेंद्रो वृद्धामा
त्यैः सहैव तां वस्त्रालंकारसहितां धनरत्नैः समन्वितां विसृज्य च क्षणं तत्र यावत्तिष्ठति भूमिपः तावत्तत्र
समागच्छन्नारदो भगवानृषिः संत्यज्य च ततो राजा अर्घ्यपाद्येन तं मुनिं आसने सुखमासीनः पूजितस्तेन
भूभुजा पूजयित्वा मुनिं राजा प्रोवाचेदं द्विजोत्तम पावितोहं त्वया विप्र दर्शनेनाद्य नारद यावदेवं वदन्
राजा तावत्सा कमलेक्षणा आश्रमादागता देवी वृद्धामात्यैः समन्विता अभिवाद्य पितुः पादौ ववंदे सा च
मुनिं ततः नारदेन तु दृष्टा सा दृष्ट्वा सोवाच भूमिपम् कन्येयं देवगर्भाभा किमर्थं न प्रयच्छसि वराय त्वं
महाबाहो वरयोग्यापि सुंदरी एवमुक्तस्तदा तेन मुनिना राजसत्तमः उवाच तं मुनिं गत्वा मुनिनार्थेन
प्रेषिता आगतेयं विशालाक्षी मया संप्रेषिता सती अनया च वृतो भर्ता पृच्छ त्वं मुनिसत्तम सा पृष्टा तेन मु
निना तत्रैवाचष्ट भामिनी आश्रमे सत्यवान्नाम द्युमत्सेनसुतो मुने भर्ता त्वेन मया निष्कृतो सो राजनंद
नः नारद उवाच कष्टं कृतं महाराज दुहित्रा तव सुव्रत अज्ञानं त्याहूतो भर्ता सत्यवानिति विश्रुतः सत्यं वद
त्यस्य पिता सत्यं माता प्रभाषते स्वयं सत्यं प्रभाषेत सत्यवानिति तेन सः तथा चाश्वाः प्रियास्तस्य अश्वैः क्री
डति मृण्मयैः चित्रेपि च लिखत्यश्वांश्चित्राश्व इति चोच्यते रूपवान्गुणवांश्चैव सर्वशास्त्रविशारदः
न तेन सदृशो लोके विद्यते चेह मानवः सर्वैर्गुणैः समं पूर्णो रत्नैरिव महार्णवः एको दोषो महानस्य गुणा

नाहत्वतिष्ठति रुवत्सरेणक्षीणायुर्देहस्यांतंकरिष्यति अश्वपतिरुवाच अन्यंवरयभद्रंतेवरंसावित्रि गतं विवाहस्यतुकालोयंवर्ततेशुभलोचने सावित्र्युवाच नान्यमिच्छाम्यहंतातमनसापिवरंविभो यो मयावृतोभर्तासमेनान्योभविष्यति विचिंत्यमनसापूर्वंपश्चाद्वाचासमुच्चरेत् क्रियतेचततःपश्चाच्छुभंवायदिवाशुभं एतमन्यंशुभांशंचकथंचान्यंवृणोम्यहं सकृज्जल्पंतिराजानःसकृज्जल्पंतिपंडिताः सकृत्कन्याःप्रदीयंतेत्रीण्येतानिसकृत्सकृत् पतिंमत्वानमेबुद्धिर्विचलतिकथंचन सगुणोनिर्गुणोवापिमूर्खःपंडितएवच दीर्घायुरथवानायुःसचभर्ताममप्रभो नान्यंवृणोमिभर्तारंयदिवास्याच्छचीपतिः इतिमत्वामयातातयत्कर्तव्यंस्वरेणच नारदउवाच स्थिराबुद्धिश्चराजेंद्रसावित्र्याःसत्यवान्पतिः वरयस्वविवाहायभर्त्रासहकुरुष्वेति ईश्वरउवाच निश्चित्यतुमतिंज्ञात्वास्थिरबुद्धिश्चनिश्चयात् सत्यानुगोमहाराजाश्वपतिस्सोवनंप्रति गृहीत्वातुसुतांराजाद्युमत्सेनस्यसन्निधौ नारदस्तुततःस्वैवे तत्रैवांतरधीयत गत्वाराजशार्दूलोद्युमत्सेनवनंगतः वृद्धश्चांधश्चराजाचवृक्षमूलमुपाश्रितः तथाश्वपतिराजासोपादौजग्राहवीर्यवान् स्वनामचसमुच्चार्यतस्थौतस्यसमीपतः उवाचराजातंभूपं किमागमनकारणं पूजयित्वार्घ्यदानेनवन्यमूलफलैश्चसः ततःपप्रच्छकुशलंसराजामुनिसत्तम अश्वपतिरुवाच कुशलंदर्शनेनाद्यतवराजन्ममाद्यवै दुहितानामसावित्रीतवपुत्रमभीप्सति भर्तारं राजशार्दूलप्रीत्यियमनिंदिता ममेदंकांक्षितंपूर्वंभर्तारमनयाविभो आवयोश्चैवसंबंधीभवत्वद्य ममेप्सितः द्युमत्सेनउवाच वृद्धश्चांधश्चराजेंद्रफलमूलाशनोनृप राज्याच्च्युतश्चमेपुत्रोवन्येनाद्यच जीवति साकथंसहतेदुःखंदुहितातवकानने अनभिज्ञाचदुःखानांप्रत्यहंसाभिकांक्षते अश्वपतिरुवाच अनयाचवृतोभर्ताज्ञानंत्याराजसत्तम अनेनसहवासस्तुतवपुत्रेणमानद स्वर्गतुल्योमहाराजभविष्यतिनसंशयः एवमुक्तस्तदातेनराज्ञाराजर्षिसत्तमः तथेतिसप्रतिज्ञायचकारोद्वाहमुत्तमं कृत्वाविवाहंराजेंद्रःसंपूज्यविविधैर्धनैः अभिवाद्यद्युमत्सेनंजगामनगरंप्रति सावित्रीतुपतिंलब्ध्वाइंद्रंप्राप्यशचीयथा सत्यवानपिब्रह्मर्षेतयापत्न्याभिनंदितः क्रीडतेनगृहोद्देशेपौलोम्यामघवानिव नारदस्यचतद्वाक्यंहृदयेनमनस्विनी वहंतीनियमंचक्रेव्रतस्यास्यचभामिनी गणयंतीदिनान्येवनलेभेतोषमुत्तमं ज्ञात्वाचदिवसंविप्रभर्तुर्मरणकारणं अत्रांतरेचनियमंत्रिदिनस्यमनस्विनी अस्मिन्दिनेजिगमिषावनेसत्यवतोभवत् कुठारंसंपरिगृह्यपीठकंचैवमुत्तमं प्रस्थितश्चवनायैवसावित्रीवाक्यमब्रवीत् नगंतव्यंवनेत्वद्यममवाक्येनमानद अथवागमनेसाधोमयासहवनंव्रज संवत्सरश्चसंपूर्णोह्याश्रमेस्मिन्ममप्रभो तद्वनंद्रष्टुमिच्छामिप्रसादंकुरुमेप्रभो सत्यवानुवाच नाहंस्वतंत्रःसुश्रोणिपृच्छस्वपितरौमम ताभ्यांप्रस्थापितागच्छ मयासहविनिश्चिता एवमुक्तातदातेनभर्त्रासाकमलेक्षणा श्वश्रूश्वशुरयोःपादावभिवाद्येदमब्रवीत् वनंद्रष्टुंममेच्छेयसाज्ञामद्यप्रदीयतां उवाचवचनंसाध्वीवरमेकंप्रयच्छत भर्त्रासहवनंगंतुमेतद्वरयतेमनः तस्यास्तद्वचनंश्रुत्वाद्युमत्सेनोब्रवीदिदं व्रतंकृतंत्वयाभद्रेपारणंकुरुसुव्रते पारणंतेभीकृततोगंतुंतावत्त्वमर्हसि सावित्र्युवाच नियमश्चकृतोस्माकंराज्ञोचंद्रोदयेसति जातेमयाद्यकर्तव्यंपारणंतातमेशृणु वनदर्शनकामोस्तिभर्त्रासहममाद्यवै नमेतत्रभवेद्ग्लानिर्भर्त्रासहनराधिप इत्युक्तस्तुतदाराजाद्युमत्सेनोमहीपतिः यत्तेभिलषितंतत्त्वंतत्कुरुष्वसुमध्यमे नमस्कृत्वाथसावित्रीश्वश्रूश्वशुरयोरथ सहितातेनसासाध्वीवनंसत्यवतायया अवलोकयंतीभर्तारंतंचकालंमनस्विनी वनंचफलितंदृष्ट्वापुष्पितद्रुमसंकुलं द्रुमाणांचैवनामानिमृगाणांचैवभामिनी पृच्छंतीमृगयूथानिहृदयेनप्रवेपती तत्र गत्वासत्यवान्वैफलान्यादायसत्वरः काष्ठानिचसमादायवबंधभारकंतदा कठिनंपूरयामास

कृत्वा दृष्ट्वावलोकनं वटवृक्षसमासाद्य उपविष्टा महासती काष्ठान्पाटयतस्तस्य जाता शिरसि वेदना स्वा
निश्च महती जाता गात्रात्प्राणां वेपथुस्तदा आगत्य वृक्षसामीप्यं सावित्रीमिदमब्रवीत् स्वानिश्च महती जाता
शिरसश्चापि वेदना कंटकैर्भिद्यते भद्रे शिरो मे शूलसन्निभैः उत्संगे तव सुश्रोणि स्वप्तुमिच्छामि सुव्रते आ
भिज्ञानाद्विशालाक्षी तस्य मस्तो मनस्विनी आसन्नकालं मन्यमाना तस्थौ तत्रैव भामिनी सत्यवानपि सुप्तस्तु कृ
त्वोत्संगे शिरस्तदा तावत्तत्र समागच्छत्पुरुषः कृष्णपिंगलः जाज्वल्यमानो वपुषा तं ददर्श शुभा भामिनी उवा
च वाक्यं वाक्यज्ञा कस्त्वं लोकभयंकरः यम उवाच क्षीणायुस्तु वरारोहे भर्त्ता तव मनस्विनी विना केनापि मां ने
तुं न शक्यस्तु त्वदंतिके देवि दुर्विषहं तेजः सोढुं शक्यं न ते शुभे इति ज्ञात्वा महाभागे स्वयमागमनं मम इत्यु
क्त्वा तं वरारोहां तस्य देहान्महात्मनः अंगुष्ठमात्रं पुरुषं बद्ध्वा पाशेन सत्वरं विकर्षन् ततो वेगाद्गृहीत्वा प्रस्थितं पु
रीं सावित्री च ततः पश्चादनुयाति स्म तं पतिं यम उवाच निवर्तस्व महाभागे त्वं दूरं समुपागता गत्वा स्वभवनं पु
त्रे कुरु चैवोर्ध्वदैहिकं एवमुक्ता तु सा तेन प्रत्युवाच यमं तदा न श्रमो नैव च ग्लानिः सकाशे तव मानद विशेषतश्च
भर्तुर्मे कुतो ग्लानिः सुरेश्वर धर्मेण त्वं पालयसे धर्मेण त्वं विवर्द्धसे नाफलं दर्शनं देव सतां युक्तं कदाचन आ
हुः सप्तपदीं मैत्रीमिति वेदविदो विदुः ईश्वर उवाच संतुष्टस्तु वचः क्येन धर्मराजो यमस्तदा वराणामीश्वरो
दाता वरं तस्यै ददे शुभं सा पश्चादात्मनः पुत्रान्पितुः पुत्रांस्तथा चक्षुःप्राप्तिं च सा वव्रे श्वश्रूश्वशुरयोरपि
राज्यप्राप्तिं तथा ब्रह्मन् जीवितं च तथा विभोः भर्तुः कमलपत्राक्षी निहत्य सा शुभमध्यमा प्रदक्षिणं ततः कृत्वा धर्म
राजस्य सुव्रता तथेत्युक्त्वा धर्मराजो जगाम च स्वमालयं सा गत्वा वटसामीप्यं कृत्वोत्संगे शिरस्तथा प्रबुद्धस्तु
ततो ब्रह्मन् सत्यवानिदमब्रवीत् मया सुप्तं वरारोहे दृष्टमद्यैव भामिनि तत्सर्वं कथितं तस्याय द्वृत्तं सर्वमेव तत्
तया च कथितं सर्वं संवादस्य यमेन हि अस्तं गते ततः सूर्ये द्युमत्सेनो महीपतिः पुत्रस्यागमनाकांक्षी इतश्च
तश्च धावति आश्रमादाश्रमं गच्छन्पुत्रदर्शनकांक्षया आवयोरंधयोर्यष्टिः क्व गतोसि विना वयोः एवं स
विविधक्रोशन्सपत्नीको महीपतिः चकार दुःखमत्युग्रं पुत्र पुत्रेति चासकृत् अकस्मादेव राजेंद्रो लब्धवांश्च
क्षुर्महीश्वरः तं दृष्ट्वा महदाश्चर्यं चक्षुःप्राप्तिं द्विजोत्तम तच्छ्रुत्वैव तदा वाक्यमूचुस्ते तापसा भृशं चक्षुःप्राप्तिश्च
ते राजन्सूचयते तु महामते पुत्रेण च स्नुषया योगं प्राप्स्यसे नृपसत्तम ईश्वर उवाच यावदेवं वदंत्येनं तापसा द्विजसत्तमाः
सावित्र्या सहितः प्राप्तः सत्यवान्द्विजसत्तम नमस्कृत्य द्विजान्सर्वान्पितरं मातरं तथा सावित्री च ततो ब्रह्मन्व
वंदे चरणाविति श्वश्रूश्वशुरयोर्ब्रह्मन्सावित्री कमलेक्षणा मुनय ऊचुः किंतु सावित्रि जानासि कारणं व
द वर्णिनि वृद्धयोश्चक्षुषोः प्राप्तिं श्वश्रूश्वशुरयोस्तव सावित्र्युवाच न जानामि द्विजश्रेष्ठाश्चक्षुषोः प्राप्ति
कारणं चिरं सुप्तः सुप्तमे भर्त्ता तेन कालव्यतिक्रमः सत्यवानुवाच अस्याः प्रभावात्संजातं तेन दृष्टं कारणं
परं तत्सर्वं तिष्ठते विप्राः सावित्र्यास्तपसः फलं व्रतस्यैव तु माहात्म्यं दृष्टमेतन्मयाधुना ईश्वर उवाच ए
वं तु वदतस्तस्य तदा सत्यवतो विभोः पौरास्समागतास्तत्र अथ चक्षुर्नृपतिर्यतः येन राज्यं बलाद्राजन्ह
तं क्रूरेणामंत्रिणा अमात्येन हतः सोपि इति पौराः समागताः पौरा ऊचुः उत्तिष्ठ राजशार्दूल स्वराज्यं पा
लय प्रभो अभिषिंच स्वराजेंद्र पौरैर्मंत्रिपुरोहितैः ईश्वर उवाच स गत्वा राजशार्दूलः स्वपुत्रजनसंवृतः
पितृपैतामहं राज्यं संप्राप्तश्च महामनाः सावित्री सत्यवांश्चैव परं मुदमवापतुः जनयामास पुत्राणां श
तं वै वाक्यशालिनी व्रतस्यैव तु माहात्म्यात्तस्यापि तु व्यजायत पुत्राणां च शतं ब्रह्मन्स्वसन्नाथ मराजतः प
त्नेकथितं सर्वं व्रतमाहात्म्यमुत्तमं क्षीणायुर्जीवितो भर्त्ता व्रतस्यास्य प्रभावतः कर्त्तव्यं सर्वनारीणामेव य
थाफलप्रदं सनत्कुमार उवाच विधानं ब्रूहि देवेश व्रतस्यास्य च त्र्यंबक क्रियते विधिना येन स्त्रीभिः पुर
निषूदन ईश्वर उवाच वर्षैकं नियमं कृत्वा एकभक्तेन मानद नक्ताहारेण वा विप्र भुक्तं प्राप्य द्विजर्षभ त्रि
दिनं लंघयित्वा तु चतुर्थे दिवसे शुभे चंद्रायार्घ्यं प्रदद्याच्च पूजयित्वा सुवासिनीः सावित्रीं च प्रसादिता गंधपु

पतिवेदनैः मिष्टान्नानि यथाशक्त्या भोजयित्वा यथासुखं भोजयेद्धं जगद्धात्रि निर्विघ्नं कुरु मे शुभे दिनंप्र
ति दिने श्रेष्ठ ऊर्ध्वान्न्यग्रोधसेवनं कृत्वा वंशपात्रे पवित्रे चाद्यात प्रस्थमेव च सप्तधान्याहृतं पात्रं प्रस्थैकेन
द्विजोत्तम कारयेत्तु निशार्द्रहूलवस्त्रयुग्मेन वेष्टयेत् तस्योपरि न्यसेद्देवीं सावित्रीं ब्रह्मणा सह सावित्री स
त्यवांश्चैव कार्यौ रौप्यमयावुभौ पीठकं स्वकुठारं च कृत्वा रौप्यमयं द्विज फलैः कालोद्भवैर्देवीं पूजये
द्ब्रह्मणः प्रियां हरिद्राकुंकुमैश्चैव कंठसूत्रैः समर्चयेत् सतीनां कंठसूत्राणि त्रिदिनं प्रतिपादयेत् प
क्वान्नानि च देयानि नित्यमेव द्विजोत्तम माहात्म्यं चेदसावित्र्याः श्रोतव्यं मुनिसत्तम पुराणश्रवणं
कार्यं सतीनां चरितं विभो पूजयेन्नित्यमेवेह मंत्रेणानेन सुव्रत सावित्री च प्रसावित्री सततं ब्रह्मणः
प्रिया पूज्यसे सत्यसे देवि द्विजैः स्तुनिगणैः सदा त्रिसंध्यं देवि भक्तानां वंदिता त्वं जगन्मये मया दत्तांश्च पू
जोपचारांस्त्वं गृहाण नमोऽस्तु ते नमः सावित्र्यै पादौ पूजयामीत्यादि पूजनं सावित्री च प्रसावित्री द्विधाभूतासि
शोभने जगत्रये स्थिता देवि त्रिसंध्ये त्वं तथानघे वेदे वेदि त्रिलोके त्वं त्रयीगीस्त्वं महेश्वरि पुत्रान्देहि धनं देहि
सर्वजन्मसु सर्वदा रूपं देहि यशो देहि सौभाग्यं देहि मे शुभे आपितं सकलं लोकमनोमां पाहि सर्वदा य
थाते न वियोगस्तु भर्त्रा सह सुरेश्वरि तथा मेऽस्तु महाभागे कुरु त्वं जन्मजन्मनि एवं संपूजयेद्देवीं कमलासन
संस्थितां एवं दिनत्रयं नीत्वा चतुर्थेऽहनि सत्तम मिथुनानि च संपूज्य षोडशैव द्विजोत्तम पूजयेद्दृष्टदानेश्च
भूषणैश्च द्विजोत्तमान् अर्चयित्वा तथाचार्यं सपत्नीकं सुसम्मते तस्मै संकल्पितं सर्वं हेमसादि त्रिसंयुतं मं
त्रेणानेन दातव्यं द्विजमुख्याय सत्तम सावित्रीकल्पविडंषप्रणिपत्य तथा मुने सावित्रीजगतां माता सावित्रीज
गतां पिता मया दत्ता च सावित्री ब्राह्मणप्रतिगृह्यतां अवैधव्यं च मे नित्यं यावज्जन्मनि जन्मनि मृत्वा च वसते
लोके ब्रह्मणः पतिना सह तत्रैव च चिरं कालं भुंक्ते भोगाननुत्तमान् अनेनैव विधानेन कर्तव्यं व्रतमुत्तमं सर्व
मनोरथावाप्यन्ते रुद्रोयज्जायते इति स्कांदे सावित्रीव्रतं अथ पूसार्थं हेमाद्रौ स्कांदे च धर्मराजवर
दानानंतरं सावित्र्युवाच या मदीयं व्रतं देव भक्त्या नारी करिष्यति भर्त्रा सा सहिता साध्वी सदा स्यात्सुखभाजना
धर्मराज उवाच नारी वा विधवा वापि अपुत्रा पुत्रवर्जिता सभर्तृका सपुत्रा वा कुर्याद्व्रतमिदं शुभ ज्येष्ठे मासि
तु सम्प्राप्ते पौर्णमास्यां पतिव्रता स्नाता चैव शुचिर्भूत्वा वटं सिंचेद्धृदकैः सूत्रेण वेष्टयेद्भक्त्या गंधपुष्पा
क्षतैः शुभैः नमो वैवस्वताये ति भ्रामयंती प्रदक्षिणं रात्रौ कुर्वीत नक्तं च अभुक्तं च समाहिता तथैव वटवृ
क्षं च पतिं संप्रपूजयेत् संप्राप्ते च पुनर्ज्येष्ठे लघुश्मश्रुकद्वादशीं नयेत् दंतानां धावनं कृत्वा नियमं कारये
त्ततः त्रिरात्रं लंघयित्वा तु चतुर्थे दिवसे शुभे चंद्रायार्घ्यं प्रदाय स्वामि पूजयित्वा शुभाः सतीः मिष्टान्नानि
यथाशक्त्या भोजयित्वा द्विजोत्तमान् भोस्त्वं हंत जगद्धात्रि निर्विघ्नं कुरु मे शुभे इति नियममंत्रः कृत्वा
वंशमये पात्रे वालुकाप्रस्थमेव च सप्तधान्ययुतं पात्रं प्रस्थैकेन द्विजोत्तम वस्त्रयोपरि संस्थाप्य सावित्रीं ब
ह्मणा सह हैमीं तत्तस्य योः प्रीत्यै त्रिरात्रमुपवासतः न्यग्रोधस्य तले तिष्ठेत् यावद्वै वदिनत्रयं सौवर्णीं चैव
सावित्रीं सत्येन सह कारयेत् रौप्यपर्यंकमारोप्य रथोपरि निवेशयेत् पलार्द्धं यथाशक्त्या रथं रौप्यमयं
शुभं काष्ठभारं कुठारं च वटं चैव सुविस्तृतं एवं च मिथुनं कृत्वा पूजयेत्तत्समत्सरः वर्तुलं मंडलं कार्यं गो
मयेन तपोधन पंचामृतेन स्नपनं गंधपुष्पोदकेन च चंदनागुरुकर्पूरैर्माल्यवस्त्रविभूषणैः नमः सावित्र्यै
पादौ तु प्रसावित्र्यै तु जानुनी कटिं कमलपत्राक्ष्यै उदरं च तथा श्रियै ॐ नमो गायत्र्यै कंठे शिरः सिद्ध ब्रह्मणः प्रि
यै अर्यं ब्रह्म सत्यवत्पादौ पूजयेत्सायतन्मदा धात्रे नमः इति संज्याहृत्ज्येष्ठायै नमः परमेष्ठिने नमः मेरू
अग्निरूपाय ये वै करिं देवमेचोदरं पूज्यं पद्मनाभाय वै हृदि कंठं सुमेधसे पूज्यं मुखं हिरण्यगर्भजे ब्रह्मणे
वै शिरः पूज्यं सर्वांगं विस्तवे नमः अभ्यर्च्य वं क्रमेणैव षष्ठान्क्ष विधिनाशुभं ततो रजतपात्रेणार्घ्यं दद्या
द्वयोरपि अथार्घ्यमंत्रः ॐकारश्च विकाचैव वीणापुस्तकधारिणि वेदमातर्नमस्तेऽस्तु अवैधव्यं प्रयच्छ मे

पतिव्रते महाभागे वह्निजाते शुचिस्मिते दृढव्रते दृढमते भर्तुश्च प्रियवादिनि अवैधव्यं च मे देहि देवि त्वं
मम सुव्रते पुत्रान्पौत्रांश्च सौख्यं च गृहाणार्घ्यं नमो नमः अथ ब्रह्मसत्यवतोरर्घ्यमंत्रः त्वया सृष्टं जगत्सर्वं
सदेवासुरमानुषं सत्यव्रतधरो देव ब्रह्मरूप नमोस्तु ते यमार्घ्यदानं त्वं कर्मसाक्षी लोकानां शुभाशुभ
विवेककृत् वैवस्वत गृहाणार्घ्यं धर्मराज नमोस्तु ते धर्मराजः पितृपतिः साक्षिभूतश्च जंतुषु कालरू
प गृहाणार्घ्यमवैधव्यं प्रयच्छ मे गंधपुष्पैश्च नैवेद्यैः फलैः कुसुमदीपकैः रक्तवस्त्रैरलंकारैः पूजयेद्भक्तिमान्न
रः अथ सावित्रीप्रार्थना सावित्री ब्रह्मगायत्री सर्वदा प्रियभाषिणी तेन सत्येन मां पाहि दुःखसंसारसागरा
त् त्वं गौरी त्वं शची लक्ष्मीस्त्वं प्रभा चंद्रमंडले त्वमेव जगतां माता मामुद्धर भवार्णवात् सौभाग्यं कुलवृद्धिं
च देहि त्वं मम सुव्रते यन्मया दुष्कृतं सर्वं कृतं जन्मशतैरपि भस्मीभवतु तत्सर्वमवैधव्यं च देहि मे अथ ब्रह्म
सत्यवतोः प्रार्थना अवियोगो यथा देव सावित्र्याः सहितस्य ते अवियोगस्तथास्माकं भूयाज्जन्मनि जन्मनि
यमप्रार्थना कर्मसाक्षिन् जगत्पूज्य सर्ववंद्य प्रसीद मे अथ सावित्र्याः सावित्री त्वं यथा देवि चतुर्वर्षशतायुषं
पतिं प्राप्ता हि सुश्रोणि तं मम देवि तथा कुरु सावित्री च प्रसावित्री सततं ब्रह्मणः प्रिया पूजितासि द्विजैः सर्वैः स्त्री
भिर्मुनिगणैस्तथा त्रिसंध्यं देवि भक्तानां वंदनीयासि सुव्रते मया दत्ता च पूजेयं त्वं गृहाण नमोस्तु ते जाग
रं तत्र कुर्वीत नारी नृत्यवादित्रमंगलैः सुवासिन्यस्तथा पूज्या दिवसे दिवसे गते सिंदूरं कुंकुमं चैव तांबूलं च सपू
गकं तथा दद्याच्च पूर्णानारीभ्यः सौभाग्यमष्टकं सौभाग्याष्टकं परिभाषोक्तं याति ह्येवं दिवा रात्रौ कामको
पविवर्जिता दिनत्रयेपि कर्तव्यमेवमर्घ्यादिपूजनं ततश्चतुर्थदिवसे कर्तव्यं तच्छृणुष्व मे मिथुनानि चत्वारिं
शत्षोडश द्वादशाष्ट वा पूजयेद्वस्त्रगोदानैर्भूषणाच्छादनासनैः आचार्यं च ततः पश्चाद्व्रतस्य विधिका
रकं सर्वलक्षणसंयुक्तं सर्वशास्त्रार्थपारगं वेदविद्याव्रतस्नातं शांतं दांतं जितेंद्रियं सपत्नीकं समभ्यर्च्य
वस्त्रालंकारकुंडलैः शय्यां सोपस्करां दद्याद्गृहं चैवातिशोभनं अशक्तस्तु यथाशक्त्या स्तोकं स्तोकं प्रकल्प
येत् सौवर्णीं प्रतिमां पुत्रपतिना सह दापयेत् दानमंत्रः सावित्रि त्वं यथा देवि चतुर्वर्षशतायुषं सत्यवंतं प
तिं लब्धा मया दत्ता तथा कुरु सावित्री जगतां माता सावित्री जगतां पिता मया दत्ता च सावित्री ब्राह्मणप्रति
गृह्यतां प्रतिग्रहमंत्रः मया गृहीता सावित्री त्वया दत्ता सुशोभने यावच्चंद्रश्च सूर्यश्च सह भर्त्रा सुखी भ
व गुरुं च गुरुपत्नीं च ततो भक्त्या क्षमापयेत् यन्मया कृतवैकल्यं व्रतेस्मिन्दुरधिष्ठिते सर्वं संपूर्णतां यातु
युवयोरर्चने कृते अथ वटसेचनमंत्रः धर्मराजो यमो धाता निलः कालोंतकोव्ययः वैवस्वतश्चित्रगुप्तो दमो
मृत्युस्त्रयोवटः मासि मासि तथा तैस्तैर्नामभिः सिंचयेद्वटं इति द्वादशनामभिर्द्वादशमासेषु वटसेच
ने द्वादश मंत्राः ज्येष्ठादितो ज्ञेयाः १२ न्यग्रोधेहं वसे नित्यं तस्माद्यत्नेन सेचयेत् इति सावित्रीं प्रति यम
राजवचनं ततो गत्वा सपत्नीकं पूजयेद्व्रतविस्मया भूषणैश्च सुवस्त्रैश्च कुंकुमैश्च मनोहरैः न्यग्रोधस्य स
मीपे तु गृहे वा स्थंडिले शुभे सावित्र्याश्चैव मंत्रेण हुतहोमं तु कारयेत् पायसं जुहुयाद्भक्त्या घृतेन सह
भामिनि व्याहृत्या चैव मंत्रेण तिलव्रीहियवांस्तथा होमांते दक्षिणां दद्याद्वित्तशाठ्यविवर्जिता क्ष
मापयेत्ततो विप्रं वंशपात्रे प्रयत्नतः भुंजीत वा समाप्ते तु नक्ते पूर्णा यशस्विनी अर्घ्यं दद्यादरुंधत्यै ध्या
त्वा चैव प्रणम्य च अरुंधति नमस्तेस्तु वसिष्ठस्य प्रिये शुभे सर्वदेवनमस्कार्ये पतिव्रते नमोस्तु ते अर्घ्य
मेतन्मया दत्तं फलपुष्पसमन्वितं पुत्रान्देहि धनं देहि गृहाण त्वं शुभे मम सखीभिर्ब्राह्मणैः सार्द्धं भुंजीत वि
जितेंद्रिया एवं करोति या नारी व्रतमेतदनुत्तमं भ्रातरः पितरौ पुत्राः श्वशुरौ स्वजनास्तथा चिरायुषस्तथारोगाः
स्युः सुजन्मशतत्रये भर्त्रा च सहिता साध्वी ब्रह्मलोके महीयते इति स्कंदपुराणोक्तोद्यापनं वटसावित्रीव्र
तं अथास्य प्रयोगः संक्षिप्तप्रकारेण इदं व्रतं त्रयोदशीमारभ्य पंचदश्यंतं कार्यं कृष्णपक्षे त्वमांतं शुक्ल
पक्षे पौर्णिमास्यंतं कार्यं तत्र विधिः नद्यादौ तिलामलकरजनीविलेपनपूर्वकं स्नात्वा व्रतस्य वार्षि

कत्वात् स्नानादिकं निवर्त्योद्यापनं संकल्पं कुर्यात् तद्यथा तिथ्यादि संकीर्त्य मम भर्तुः पुत्रादीनां च पुरायो-
पिसर्ष्ट्यादिप्राप्तिपूर्वकं इह जन्मनि जन्मान्तरे चात्मनोऽवैधव्यफलप्राप्तये आचरितवटसावित्रीव्रतोद्याप-
नं करिष्य इति संकल्प्य आचार्यवरणं विधाय वटमूलेऽथ देवा वेदीं विधाय तत्र सर्वतोभद्रं विरच्य ब्रह्मा-
दिदेवतास ग्रहादिकाः संपूज्य तत्र कलशद्वयं प्रतिष्ठाप्य तत्रैकस्मिन् कलशे ब्रह्म यज्ञानमिति मंत्रेण हैं-
मं ब्रह्माणं गायत्रीमंत्रेण हैमीं सावित्रीं च प्रतिष्ठाप्य तदनन्तरं द्वितीयकलशोपलादपिकराज्ञतपर्यंके हैमीः
प्रतिमाः सत्यवत्सावित्री यमनारदानां नाममंत्रैरावाह्य पुरतः काष्ठभारं कुठारं च हेमराजतं च निधाय पूज-
येत् अथाशक्तौ एकस्मिन् कलशे सर्वेषां पूजा पुष्पपूजांते सावित्र्यै पाद्यं पूजयामि प्रसादित्र्यै जानुनी क-
मलपत्राक्ष्यै कटिं भूतधारिण्यै उदरं गायत्र्यै कंठं ब्रह्मप्रियायै शिरः एवं मंत्रपुष्पार्चनानंतरं अर्घ्यं दद्या-
त् राजतादिपात्रेण द्वयोः कलशयोरुपरि ओंकारपूर्विके देवि वीणापुस्तकधारिणि वेदमातर्नमस्तेऽस्तु
अवैधव्यं प्रयच्छ मे पतिव्रते महाभागे भर्तुश्च प्रियवादिनि अवैधव्यं च सौभाग्यं देहि त्वं मम सुव्रते पुत्रा-
न्पौत्रांश्च सौभाग्यं गृहाणार्घ्यं नमोऽस्तु ते अथ ब्रह्मसत्यवतोः त्वया सृष्टं जगत्सर्वं सदेवासुरमानुषं सत्य-
व्रतधरो देव ब्रह्मरूप नमोऽस्तु ते यमस्य त्वं कर्मसाक्षी लोकानां शुभाशुभविवेककृत् देवस्तत्र गृहा-
णार्घ्यं धर्मराज नमोऽस्तु ते नारदस्य नारदायन मस्तुभ्यं सुरर्ष्यादिभिर्वंदित गृहाणार्घ्यं मया दत्तमवै-
धव्यं प्रयच्छ मे ततः सावित्रीं प्रार्थयेत् सावित्री ब्रह्मगायत्री सर्वदा प्रियभाषिणी तेन सत्येन मां पाहि दुः-
खसंसारसागरात् मया कृतं महाघोरं जन्मांतरशतैरपि भस्मीभवतु तत्सर्वमवैधव्यं प्रदेहि मे ब्रह्मसत्य-
व्रतोः अवियोगो यथा देव सावित्र्या सहितस्तव अवियोगस्तथास्माकं भूयाज्जन्मनि जन्मनि सावित्र्याः
सावित्री त्वं यथा देवी चतुर्वर्षशतायुषं पतिं प्राप्तासि गुणितं मम देहि तथा कुरु यमस्य कर्मसाक्षी जगत्पूज्य
सर्वं वंद्य प्रसीद मे संवत्सरव्रतं सर्वं परिपूर्णं तदस्तु मे ततः सुवासिनीः संपूज्य वायनानि दद्यात् कथाश्रव-
णादिना रात्रिं नयेत् प्रातः अग्निं प्रतिष्ठाप्य अन्वाधाय सावित्रीगायत्रीमंत्रेण पायसघृतदूर्वातिलव्री-
हियवैः प्रत्येकं अष्टोत्तरशतसंख्याकाहुतिभिः ब्रह्माणं धर्मराजानं नारदं च व्याहृतिपूर्वकं नाममंत्रेण
प्रत्येकमष्टोत्तर १०८ शतसंख्याकाहुतिभिर्हुत्वा ब्रह्मादिदेवताभ्यो एकैकया हुत्वा हुत्वा पश्चे सत्यवत्सा-
वित्र्याः ब्रह्मसत्यवतो ब्रह्मसावित्र्योश्च पृथक् पृथक् होमो नास्ति तत्र मंत्रैस्तयोः पूजा प्रार्थनैवोक्त-
त्वात् ततश्चतुर्विंशति द्वादश अष्टौ चत्वारि वा मिथुनानि वस्त्रादिना संपूज्य पूरिका मोदक मंडकादिकू-
ष्मांड नारिकेल मातुलिंग दाडिम बीजपूरादिक हरिद्रा कुंकुम केसरक स्तूरी विष्टूर्णित कज्जल कंठसू-
त्र कंकण मौक्तिक पादभूषण वस्त्र कंचुकी आदर्श दक्षादि दक्षिणा तांबूलादियुत नवसूर्प विहितं वायनं
दद्यात् तत्र मंत्रः सोपस्करं द्विजश्रेष्ठ व्रतसंपूर्णकारकं वायनं ते प्रयच्छामि सावित्री प्रीयतां मम ततः पी-
ठं व्रतसंबंधि यो गां च दत्वा ब्राह्मणान्संतर्प्य आशिषो गृहीत्वा स्वजनैः सह भुंजीत इयान्तत्र विशेषः सा-
वित्र्यर्कं धर्मी दृष्ट्वा संपूज्य अर्घ्यं दद्यात् अर्कं धतिनमस्तेऽस्तु वशिष्टस्य प्रियेशुभे पुत्रान्देहि सुखं देहि गृ-
हाणार्घ्यं नमोऽस्तु ते इति वटसावित्रीव्रतोद्यापनं अस्यामेव ज्येष्ठपौर्णमास्यां पुत्रकामव्रतं पद्मपुराणे
सृष्टिखंडे भीष्म उवाच श्रोतुमिच्छाम्यहं ब्रह्मन् ज्येष्ठस्य पौर्णिमाव्रतं सुतानेकोनपंचाशद्येन लेभे
पुनर्दितिः पुलस्त्य उवाच यद्वसिष्ठादिभिः पूर्वं दित्यै कथितपूर्वकं विस्तरेण तदेवेदं मत्स्यकाशात्रि-
शृणु मय ज्येष्ठमासि सिते पक्षे पौर्णमास्यां धृतव्रता स्थापयेद्व्रणं कुंभं सिततंडुलपूरितं नाना-
फलयुतं तद्वदिक्षुदंडसमन्वितं सितवस्त्रयुगच्छन्नं सितचंदनचर्चितं नानाभक्ष्यसमोपेतं सहिरण्यं
त्वशक्तितः ताम्रपात्रं गुडोपेतं तस्योपरि निवेशयेत् तस्मादुपरि ब्रह्माणं सौवर्णं कलशोपरि कु-
र्यात्प्राक्करयोपेतं सावित्रीं तस्य वामतः गंधपुष्पं तयोर्दद्याद्दीनं वाद्यं च कारयेत् तदभावे कथां कु-

णां यथा तुष्येत्पितामहः ब्रह्मणः स्थाप्य प्रतिमां कृत्वा गुडमयीं शुभां शुक्लपुष्पाक्षततिलैरर्चयेत्पद्मसंभवं ब्रह्मणे पादौ संपूज्य जंघे सौभाग्यदाय च विश्वाय चोरुयुग्मं च मन्मथायेति वै कटिं स्वच्छोदरायेत्युदरमनंतज्ञाये त्युरो दितं मुखं पद्मशुक्लायेति बाहू वै वेदपाणये नमः सर्वात्मने मौलिमर्चयेच्चापि पंकजे ततः प्रभाते तत्कुंभं ब्राह्मणाय निवेदयेत् ब्राह्मणान्भोजयेद्भक्त्या स्वयं तु लवणं विना भक्त्या तु दक्षिणां दद्यादिमं मंत्रमुदीरयेत् प्रीयतामत्र भगवान्सर्वलोकपितामहः हृदये यस्समालोक्य तच्चानंदोभिधीयते अनेन विधिना सर्वमासि मासि समाचरेत् उपवासी पौर्णमास्यामर्चयेद्ब्राह्मणत्रयं फलमेकं च संप्राश्य पश्चाद्वर्षं भूतले स्वपेत् ततस्त्रयोदशे मासे घृतधेनुसमन्वितां शय्यां दद्याद्विरिंचाय सर्वोपस्करसंयुतां ब्रह्माणं कांचनं कृत्वा सावित्रीं रजतेन तथा पद्मात्मकः सृष्टिकर्ता सावित्री सुपलब्धतः वस्त्रैर्द्विजं सपत्नीकं संपूज्य भक्त्या विभूषणैः शय्यासनादिकं दद्यात्प्रीयतामिति संदीरयेत् होमं शक्त्या तिलैः कुर्याद्ब्रह्मनामादिकीर्तयन् गव्येन सर्पिषा तत्र हुत्वा यत्नेन च धर्मवित् विप्रेभ्यो वा प्रदद्याद्यथा मालां च शक्तितः यः कुर्याद्विधिनानेन पौर्णमास्यां स्त्रिया पिता सर्वपापविनिर्मुक्तः प्राप्नोति ब्रह्मसाम्यतां इहलोके यथेष्टं तु भोगं भुक्त्वा ध्रुवं व्रतं यो ब्रह्मा सस्ततो विष्णुरानंदात्मा महेश्वरः एकार्थत्वस्वरूपेण स्मरेद्देवं पितामहं एवं श्रुत्वा चकारासौ दितिः सर्वमशेषतः कश्यपो व्रतमाहात्म्यादागत्य परया मुदा चकार कर्कशां भूयो रूपलावण्यसंयुतां वरेणाछंदयामास सा तु वव्रे वरं वरं पुत्रं शक्रवधार्थाय समर्थं च महौजसं वरयामि महात्मानं सर्वामरनिषूदनं उवाच कश्यपो वाक्यमिंद्रहंतारमूर्जितं प्रदास्याम्यहमेतेन किं तच्च क्रियतां शृणु आपस्तंभां कुरुत्वेष्टिं पुत्रीयां मे यथा स्थिते विधास्यामि ततो गर्भं गर्भस्थो यस्ते शुभे भविष्यति शुभो गर्भे दिविशक्रनिषूदनः आपस्तंभं ततश्चक्रे पुत्रेष्टिं द्रविणाधिकां इंद्रशत्रो भवस्वेति जुहाव बहुविस्तरं देवाश्च मुमुदुर्दैत्या दानवाश्च मुमुदुस्तदा दित्या गर्भमथाधत्त कश्यपः प्राह तां पुनः मुखं ते चंद्रप्रतिमं स्तनौ बिल्वफलोपमौ अधरौ विद्रुमाकारौ वर्णश्चापीव शोभनः नाहं दृष्ट्वा विशालाक्षि विस्मरामि त्वकां ततः तदेव गर्भः सुश्रोणि हर्षे सृष्टौ रतैनौ तव त्वया यत्नाद्विधातव्यो ह्यस्मिन्गर्भे वरानने एवं संवत्सरशतमस्मिन्नेव तपोवने संध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि न स्थातव्यं न गंतव्यं वृक्षमूलेषु सर्वदा नोपस्करेषु निविशेन्मुशलोलूखलादिषु जले नैवावगाहेथाः शून्यागारं च वर्जयेः न शायानासदातिष्ठेद्वायामं च विवर्जयेः न तुषांगारभस्मास्थिकपालेषु समाविशेत् वर्जयेत्कलहं लोके गात्रभंगं तथैव च न मुक्तकेशा तिष्ठेत नाशुचिः स्यात्कथंचन न शयीतोत्तरशिरा न चैवाधःशिराः क्वचित् न वस्त्रहीना नोद्विग्ना न चार्द्रचरणा सती नामंगल्यां वदेद्वाचं न च हास्याधिका भवेत् कुर्याच्च गुरुभिर्नित्यं पूजां मंगलतत्परा सर्वौषधीभिः हृष्टेन वारिणा स्नानमाचरेत् कृतरक्षा सुभूषा च वास्तुपूजनतत्परा तिष्ठेत्प्रसन्नवदना भर्तुः प्रियहिते रता न तर्जयेच्च भर्तारं सर्वावस्थमपि क्वचित् कृपणा प्राङ्दुर्बला चैव वार्द्धक्यं मम चागतं स्तनौ मे चलितौ स्थानान्मुखं च वलिभिर्युतं एवंविधस्त्वया चाहं कृतो हि न वदेत्क्वचित् सत्यमस्त्वेवं गमिष्यामि तथेत्युक्तस्तया पुनः पश्यतां सर्वभूतानां तत्रैवांतरधीयत ततस्त्वभर्तृवाचोक्तविधिना समतिष्ठत अथ तत्कालात्प्रेंद्रोपि दितेः पार्श्वमुपागतः विहाय देवसदनं तां शुश्रूषुरवस्थितः दितेः छिद्रांतरप्रेप्सुरभवत्पाकशासनः विपरीतोदरव्यग्रः प्रसन्नवदनो बहिः अजानन्किं च तत्कार्यमात्मनः शुभमाचरेत् ततो वर्षशते तु ते सा न्यूने तु दिवसैस्त्रिभिः मेने कृतार्थमात्मानं प्रीता वा सुस्थितमानसा अकृत्वा पादयोः शौचं शयाना मुक्तमूर्धजा निद्राभारसमाक्रांता दिवापरशिराः क्वचित् ततस्तदंतरं लब्ध्वा प्रविष्टस्तु शचीपतिः वज्रेण सप्तधा चक्रे तं गर्भं त्रिदशाधिपः ततः सप्त च ते जाताः कुमाराः सूर्यवर्चसः रुदंतः सप्त ते बाला निषिद्धास्त्रिदशारिणा भूयोपि रुदमानांस्तानेकैकं सप्तधा छिनत् एवमेकोनपंचाशद्भूत्वा ते रुरुदुर्भृशं इंद्रो निवारयामास मा रुदध्वं पुनः पुनः ततः स चिंतयामास वितर्कं मतिहृद्वरः कर्मणः कस्य माहात्म्यात्पुनः संजीविता स्त्वमी विदित्वा ध्यानयोगेन पौर्णमासीफलं त्विदं नूनमेतत्परिणतमथवा ब्रह्मपूजनात् वज्रेण

भिहताः संतानविनाशमवाप्नुयुः एकोप्यनेकतामापयस्मादुदरगोप्ययं अवध्यानूनमेवैतेतस्माद्दृष्टास्मवंदि
ति यस्मान्माहदइत्युक्ता रुदंतोगर्भसंस्थिताः मरुतोनामतेनाम्नाभवंतस्तद्भागिनः ततः प्रसाद्यदेवेश
त्वमस्वेतिदितिंपुनः अर्थशास्त्रसमाख्यायमयैतद्दुःकृतंकृतं कृत्वामरुद्गणोदेवःसमेतोह्यमराधिपः
दितिंविमानमारोप्यसंयुक्तामरामहद्दिवं यज्ञभागभुजोजातामरुतस्तेततोभवन् नजग्मुरैक्यमसुरैस्ते
नतेसुरवल्लभाः इतिपाद्मेसृष्टिखंडेज्येष्ठपूर्णिमायां पुत्रकामव्रतं अथास्मिन्नेवज्येष्ठ्यां बिल्वत्रिरात्रव्रतं
ब्रह्मोवाच ज्येष्ठेमासिततसंप्राप्तेपौर्णमास्यांद्विजोत्तम ज्येष्ठाऋजादिनेकुर्यात्सिद्धार्थैःस्नानमुत्तमं श्रीवृक्षंचिं
तयेत्तत्र गंधपुष्पैश्चपूजयेत् वत्सरंत्वेकभक्तंतुहविष्यान्नेनकारयेत् भूमौकरवरादीनांदर्शनेभोजनंत्यजे
त् अनेनविधिनासम्यक्मासिमासिसमाचरेत् ततःसंवत्सरेपूर्णेगत्वाबिल्वसमीपतः गृहीत्वावालुकापात्रेप्र
स्थमात्रंमहासने अथवाधान्यमादायवशालितिलादिकं ततोवंशमयेपात्रेवस्त्रयुग्मेनवेष्टयेत् उमामहे
श्वरंहैमंप्रकृत्वाकुर्याद्विभूषितं रक्तवस्त्रयुगंदद्यान्नैवेद्यंफलसंयुतं पुष्पैर्बहुविधैश्चापिफलैर्नानाविधैस्तथा
गुडेक्षुक्षीरकैस्तद्वल्लवणेनविडंबकैः सप्तधान्यैस्तथादीपैर्वंशपात्रप्रकल्पितैः रजनीकंठसूत्रैश्चसुशुभैः
कुंकुमकेसरैः अवलंबकरोत्येषाउमादेवीहरप्रिया श्रीनिकेतनमस्तुभ्यंशिवप्रियनमोस्तुते अवैधव्यंच
मेदेहिश्रियंजन्मनिजन्मनि श्रियंधनंपतिंपुत्रमारोग्यंकुलसंततिं सौभाग्यंरूपसंपत्तिंपूजितेत्वंप्रयच्छ
मे सहस्रंबिल्वपत्राणांहोमयेत्तुयथाविधि पापसंततवृत्तिंकुर्याद्विप्रःशांतोथमंत्रवित् रजतंश्रीतरुंकृत्वा
सुवर्णफलशोभितं अष्टोत्तरशतंयावत्पीतवस्त्रेणवेष्टयेत् त्रयोदशींसमारभ्ययावत्पूर्णाभवेत्तिथिः त्रि
रात्रंजागरंकृत्वापीठवासीजितेंद्रियः उमापतेपशुपतेत्रैलोक्याधिपतेप्रभो गृहाणार्घ्यंमहादेवगौर्या
सहमहेश्वर ततःप्रभातेसंप्राप्तेस्नात्वाचतिलसर्षपैः वस्त्रालंकारयुग्मैश्चगुरुंदांपत्यमर्चयेत् पादुको
पानहच्छत्रपाद्यार्घ्यांगांचसुभूषितां गुरुंसंपूज्यभक्त्यातुदद्यादेतत्त्रयंयत्नतः षोडशाष्टौचतस्रोवाद्विजान्दं
पत्यभूषितान् वस्त्रालंकारगोदानैस्तस्मिन्नहनिपूजयेत् मिष्टान्नंभोजनंदद्यादात्मनःश्रेयइच्छता या
नारीकुरुतेचैतद्व्रतंपापप्रणाशनं सर्वसिद्धिकरंपुण्यंप्राप्यलोकेमहीयते कल्पकोटिशतंयावद्वसत्य
शिवसन्निधौ ततोराज्ञीभवेन्मर्त्येपुत्रपौत्रसमन्विता इतिस्कंदपुराणोक्तंसोद्यापनंबिल्वत्रिरात्रव्रतं अ
स्यामेवपौर्णमास्यांतिलदानंछत्रोपानहादिदानंचकुर्यात् तदुक्तंनिर्णयामृते ज्येष्ठेमासितिलान्दद्या
त्पौर्णमास्यांविशेषतः अश्वमेधस्ययत्पुण्यंतत्प्राप्नोतिनसंशयः विष्णुधर्मोत्तरे सोपवासस्तथाज्येष्ठे
ष्ठेतुशाललक्षणे उपानहौतथाछत्रंदत्वायंत्रसुखीभवेत् तत्रमंत्रः उपानहौप्रदास्यामिकंटकादि
निवारणे सर्वमार्गेषुसुखदेअतःशांतिंप्रयच्छमे छत्रदानमंत्रः इहामुत्रातपत्राणंकुरुमेकेशवप्रभो
छत्रंत्वत्प्रीतयेदत्तंब्राह्मणायमयासह मयालक्ष्म्यासह विष्णुस्मृतौ ज्येष्ठीज्येष्ठायुताचेत्स्यात्तत्रछत्रोपा
नहप्रदानेननराधिपत्यमाप्नोतिइति तथावामनपुराणे उदकुंभांबुदानंत्रिविक्रमसुप्रीत्यर्थंदातव्यं
ज्येष्ठेमासिसितेति इंद्रचरोश्चमन्वादिः तत्रमन्वादिकार्यत्वेनश्राद्धदानादिविधेयं तथाचकौर्मकल्पादित्वाद
पि कल्पादिकार्यमपिकार्यं अत्रपद्मपुराणदानमुक्तंमत्स्यपुराणे एतदेवयदापद्ममभूद्धैरण्मयंजग
त् तत्कथाश्रयंतद्वत्पाद्ममित्युच्यतेबुधैः पाद्मंतन्मंचपंचाशत्सहस्राणितुपठ्यते ज्येष्ठेमासितिलैर्युक्तं
शाश्वमेधफलंलभेत् नारदीयेच एतद्धिपंचपंचाशत्सहस्रंपद्मसंज्ञितं पुराणंलेखयित्वावैज्येष्ठ्यांस्वर्णाब्जसं
युतं यःप्रदद्यात्सुसंपूज्यब्राह्मणायमानवः स्यातिवैलोकंधामसर्वदेवनमस्कृतः इतिपद्मपुराणदानं ॥ अ
स्ति श्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्नानाशास्त्रविचारसारसविधहृत्संरक्षकः धर्मायधर्मविभा
श्रीगरुडध्वजपतेःपादांबुजार्चारतो जीयात्पुत्रकलत्रमित्रसहितःसपालयन्क्ष्मांचिरं १ रणवीरसिंहभूपेन
कारितेकृत्यसागरे अभवज्ज्येष्ठकृत्यानांरम्योरत्नसमुच्चयः २ इतिश्रीमत्सूर्यवंशावतंसरघुकुलतिल
क श्रीरणवीरसिंहमहाराजकारितेकृत्यरत्नाकरेज्येष्ठमासकृत्यरत्नसमुच्चयः ॥

स्नात्वायाति भो यस्माद्धेममाली दुरात्मवान् निश्चयः क्रियतामस्य इत्युवाच पुनः पुनः यक्षा ऊचुः वनिताका
मुको गेहे रमते स्वेच्छया नृप तेषां वाक्यं समाकर्ण्य कुवेरः कोपपूरितः आनयामास तं तूर्णं वटुकं हेममा।
लिनं ज्ञात्वा कालात्ययं सोपि भयव्याकुललोचनः अस्नात एव चागत्य कुवेरस्याग्रतः स्थितः तं दृष्ट्वाथ धनदः
क्रुद्धः कोपसंरक्तलोचनः प्रत्युवाच रुषाविष्टः स्फुरदोष्ठपुटद्वयः धनद उवाच आः पाप दुष्ट दुष्टेन कृतं
मे देवहेलनं अष्टादशश्वित्रकुष्ठी वियुक्तः कान्तया तया अस्मात्स्थानादपध्वस्तो गच्छ स्थानमथाधमम् इत्यु
क्तेथ नदेशेन तस्मात्स्थानान्न्यपात सः महादुःखाभिभूतश्च कुष्ठपीडितविग्रहः नैव तोयं न भक्ष्यं च वने रौ
द्रे लभदसौ न सुखं दिवसे तस्य न निद्रां लभते निशि पातकेनाभिभूतोपि पूर्वकर्म स्मरत्यसौ छायायां।
पीडिततनुर्निदाघे तपपीडितः शिवपूजाप्रभावेन स्मृतिस्तस्य न लुप्यते भ्रममाणस्ततो गच्छन् हिमाद्रिप
र्वतोत्तमं तत्रापश्यन्मुनिवरं मार्कण्डेयं तपोनिधिं यस्यायुर्विद्यते सप्तब्रह्मणो दिवसात्मकं आश्रमं तत्र गा
तस्तस्य कृष्णैर्ब्रह्मसदःसमं ववंदे चरणौ तस्य दूरतः पापकर्मकृत् मार्कण्डेयो मुनिवरो दृष्ट्वा तं कुष्ठिनं
सदा परोपकरणार्थाय समाहूयेदमब्रवीत् कस्मात्कुष्ठाभिभूतस्त्वं कुतो निंद्यतरो ह्यसि इत्युक्तः सप्र
त्युवाच मार्कण्डेयं महामुनिं हेममाल्युवाच राजराजस्यानुचरो हेममालीति नामतः मानसात्पुष्प
निचयमानीय प्रत्यहं मुने शिवपूजनवेलायां कुवेराय समर्पये एकस्मिन्दिवसे काललोपश्च विहितो म
या पत्नीसौख्यप्रसक्तेन कामव्याकुलचेतसा ततः क्रुद्धेन शप्तोहं राजराजेन वै मुने कुष्ठाभिभूतः संजा
तो वियुक्तः कान्तया तया अधुना तव सान्निध्यं प्राप्तोस्मि शुभकर्मणा सतां स्वभावतश्चित्तं परोपकरणाद
म इति ज्ञात्वा मुनिश्रेष्ठ मां प्रशाधि कृतागसं मार्कण्डेय उवाच त्वया सत्यमिदं प्रोक्तं नासत्यं भाषितं य
तः अतो व्रतोपदेशं ते कथयामि शुभप्रदं आषाढे कृष्णपक्षे त्वं योगिनीव्रतमाचर अस्य व्रतप्रभावेन।
कुष्ठं नश्यति तेनच इति वाक्यं मुनेः श्रुत्वा दंडवत्पतितः क्षितौ उत्थापितो मुनिना च बभूवातीव हर्षितः
मार्कण्डेयोपदेशेन कृतं तेन व्रतोत्तमं तद्व्रतस्य प्रभावेन देवरूपो बभूव सः संयोगं कान्तया लेभे बुभुजे।
सौख्यमुत्तमं ईदृग्विधं नृपश्रेष्ठ कथितं योगिनीव्रतं अष्टादशसहस्राणि द्विजान्भोजयते तु यः तत्फ
लं समवाप्नोति योगिनीव्रतकृन्नरः महापापप्रशमनी महत्पुण्यफलप्रदा मयोक्ता सैकादशी ते।
कथिता योगिनी नृप पठनाच्छ्रवणान्मर्त्यः सर्वपापैः प्रमुच्यते इति ब्रह्मवैवर्तपुराणे ॥ ४

पद्मपुराणे च आषाढकृष्णयोगिन्येकादशीमाहात्म्यं

अथ पुण्डरीकाक्षनाम्नो विष्णोः पूजनं आषाढकृष्णद्वादश्यां तिथीशत्वेन हरेः पूजनं कार्यं आषा
ढकृष्णत्रयोदश्यां त्रयोदशीमात्रव्रतत्वेन कामत्रयोदशीव्रतं हेमाद्रौ भविष्योत्तरे कामं पूज्य त्रयो
दश्यां स्वरूपो जायते ध्रुवं इष्टां रूपवतीं भार्यां लभेत्कामांश्च पुष्कलान् मूलमन्त्रोङ्गमन्त्राभिरङ्गमन्त्राः
प्रकीर्तिताः पूर्ववत्सम्प्रयत्नः कर्तव्यः प्रतिथीश्वरः गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते पूजात्र
वित्तशाठ्येन कृतापि न फलप्रदा आज्यधारासमिद्भिश्च दधिक्षीरान्नमाक्षिकैः पूर्वोक्तफलदो होमः
कृतः शान्तेन चेतसा अत्र मूलमन्त्रः कामगायत्री सा चैत्रशुक्लत्रयोदश्यामुक्ता त्रयोदश्यां अङ्गमं
त्राश्च पिततैव ज्ञेयाः आषाढकृष्णचतुर्दश्यां मासशिवरात्रिव्रतं मासत्वेन शिवचतुर्दशीव्रतं तदुक्तं
मदनरत्ने स्कन्दपुराणे यतः कृष्णचतुर्दश्यां पूजां यत्नेन मे कृता तथा जागरणं मन्त्रोसन्निधौ मे कृतं
तथैति आषाढामावास्यायां कल्यादि कल्यादित्वमधिकृत्यात्र श्राद्धादि विधेयं अमावास्यायां
सकलामावास्यासाधारणं शूलव्रतं हेमाद्रौ शिवधर्मेषु अमायां तु निराहारो योऽब्दमेकं समर्चयेत्
शूलपिष्टमयं कृत्वा वर्तीर्विनिवेदयेत् अनेन भ्रूणहत्यादिपापानि सकलान्यपि नश्यन्त्यचिरेविना
शाश्वते शिवलोके गतिर्भवेत् अथ आषाढशुक्लप्रतिपदायां आरोग्यप्रतिपद्व्रतं विष्णुधर्मोत्तरे

न सूर्यपूजनं ब्राह्मणपूजनंच संवत्सरमिदं कृत्वा ततः सान्तात्रयोदशं पूजनं देवदेवस्य तस्मिन्नहनि भा-
र्गवेति विख्यातधर्मोत्तरोक्तमार्गेण व्रतं सदा प्रतिपदं प्राप्य शुक्लपक्षस्य यादव संवत्सरं महाभाग शुक्लगंधा-
नुलेपनैस्त्र्यादिभिश्शुक्लप्रतिपदि सविस्तरं ज्ञेयं आषाढशुक्लद्वितीयायां रथयात्रोत्सवः तदुक्तं तिथि-
तत्त्वे स्कांदे आषाढस्यासितेपक्षे द्वितीया पुष्यसंयुता तस्यां रथे समारोप्य रामं मां भद्रया सह नारदीयेपि
आषाढस्यासितेपक्षे द्वितीयापुष्यसंयुतेत्यादि द्विजातिभिर्व्रती सार्धं परिक्रम्य पुरादिकं जलाशयांतिकं
गत्वा कारयेच्च महोत्सवं ततं तेदेवभवनं प्रवेश्य पूजयेद्यथाविधि ब्राह्मणान्भोजयेच्चैव व्रतस्यास्य प्रपूर्तये इति
आषाढशुक्लतृतीयायां सलक्ष्मीकेशवपूजा नारदीये आषाढस्य तृतीयायां शुक्लपक्षे च वासरा केश-
वं तु सलक्ष्मीकं सस्त्रीकं तु द्विजोर्चयेत् भोजनैः सुरभीदानैर्वस्त्रैश्चैव विभूषितैः प्रियैर्वाक्यैर्मंशप्रीत्या नारी
सौभाग्यवांछया समुपास्य व्रतं चैतद्धनधान्यसमन्वितं देवदेवप्रसादेन विष्णुलोकमवाप्नुयात् आषा-
ढशुक्लचतुर्थी रथंतरकल्पादिः तस्यां कल्पादिश्राद्धदानादिकमनंतफलदमिति वाक्यपंचितम् आषा-
ढशुक्लपंचम्यां पंचवर्णध्वजं ग्रामाद्बहिर्दिग्रोपांते निधाय वायुपूजा सर्वलोकपालपूजा तदुक्तं नारदीये
आषाढशुक्लपंचम्यां वायुं सर्वगतं मुने ग्रामाद्बहिर्विनिर्गत्य यत्रोपांते समास्थितः ध्वजं तु पंचवर्णं तु वंशाद-
ग्रसंस्थितं संमूर्छितं निदध्यात्तु कल्पितासनमध्यतः ततस्तन्मूलदेशे तु दिक्षु सर्वासु नारद लोकपा-
लान्समभ्यर्च्य कुर्याद्वायुपरीक्षणं तस्मिन्नेते से द्विगीशाय पूजां सम्यक्प्रकल्पयेत् एवं स्थित्वा निराहारस्तत्र या-
मचतुष्टयं सायमागत्य गेहे स्वं भुक्त्वा स्वयमवस्थितः लोकपालान्नमस्कृत्य सुप्याद्भूमितले स्थितः यः स्वप्नो जा-
यते तस्यां रात्रौ यामे च तुर्यके स एव भविता नूनं सत्यमित्याह वै शिवः अशुभे तु समुत्पन्ने शिवपूजापरायणः सो-
पवासो यजेद्देवं यामं तद्दिनमेव वा भोजयित्वा द्विजानष्टौ ततः शुभफलं भवेत् एतमेतत्समुद्दिष्टं शुभाशुभ-
निदर्शनं नृणां सौभाग्यजनकमिह लोके परत्र च इति सौभाग्यजनकपंचमीव्रतं आषाढशुक्लषष्ठ्यां स्कं-
दव्रतं नारदीये आषाढशुक्लषष्ठ्यां तु स्कंदव्रतमनुत्तमं उपोष्य पूजयित्वैव शिवोमाप्रियमात्मजं लभते
वांछितान्कामान्पुत्रपौत्रादिसंततिं आषाढशुक्लसप्तम्यां सूर्यपूजाव्रतं नारदीये आषाढशुक्लसप्तम्यां
जात इंद्रो रविः स्वयं संपूज्य विधियत्नेन सोपवासो जितेंद्रियः स्वर्गतिं लभते विप्र देवेंद्रस्य प्रसादतः निर्णया-
मृतेपि आषाढशुक्लसप्तम्यां कश्यपाद्विवस्वान्नाम सूर्यो जातः तत्र वर्तुलमंडलस्थितं सूर्यं धूपदीपाक्षतै-
पमादिभिः संपूज्य नैवेद्यं दद्यात् तदुक्तं ब्रह्मपुराणे आषाढशुक्लसप्तम्यां विवस्वान्नाम भास्करः जातः पू-
र्वं तु तस्मात्तत्रोपोष्य यजेत्सदा रथचक्राकृतौ रम्ये मंडले सर्वकामदं भक्त्या भोज्यैस्तथा पेयैः पुष्पैर्धूपैर्वि-
लेपनैरिति आषाढशुक्लाष्टम्यां महिषघ्नीदेवीव्रतं नारदीये शुक्लाष्टम्यां तथाषाढे स्नात्वा चैव निशां तु ना तेनैव
स्नापयेद्देवीं पूजयेच्च विधानतः ततः शुद्धजलैः स्नाप्य विलिप्तैश्चंदनैः नैवेद्यं शाकरोपेतं दत्वाचमनमर्पयेत्
भोजयित्वा ततो विप्रान्दत्वा स्वर्णं च दक्षिणां विसर्ज्य च ततः पश्चात्स्वयं भुंजीत वाग्यतः एतद्व्रतं नरः कृत्वा देवी-
लोकमवाप्नुयात् तथा च देवीपुराणे अष्टम्यां च तथाषाढे निशांते येन स्नापयेत् ततो देवीं जलैः कुष्ठैर्वंदागु-
रूदकेन च स्नात्वा विलिप्य कर्पूरचंदनरोचनां तु मिरिति पाठांतरं धूपचंदनकर्पूरवालकैः सितसिल्हकैः भक्त्या
नूपार्करयापूर्णानूपानिकानि शुभानि च दापयेत्कन्यका विप्रान्भोजनं चात्मनस्तदा शक्तितो दक्षिणां दद्या-
न्महिषघ्नीं च कीर्तयेत् दीपमालां हुते नैव सर्वान्कामानवाप्नुयात् सर्वयज्ञमहादानसर्वतीर्थफलं लभेत् ए-
तद्व्रतवरं शुक्र मया रुद्रेण विष्णुना जगतो हितमिच्छद्भिः शीर्णं दुर्गाव्रतं महत् भ्रातृनाथ बहुविधं समस्तं चक्र-
तं पुरा देवासुरैर्यैश्च नागकिंनरैर्मानवैस्तथा अप्सरोभिस्तथा स्त्रीभिः सौभाग्यस्य विवृद्धये कृतं चैव ग्रहग्रा-
हैर्लयशक्र कार्यं यथाविधिः श्रवणादस्य चाप्नोति सर्वकामसुखानि च इष्टानि लभते मर्त्यो वंध्या पुत्रं प्रस-
पते इति महिषघ्नीनवमीव्रतं आषाढशुक्लनवम्यामैंद्रीदेवीपूजाव्रतम् नारदीये आषाढस्य नवम्यां

चयः कुर्यात्पयसायोर्हि द्विज नक्तं चैंद्रीसमभ्यर्च्य रावणस्थितांसितां सभवेद्देवलोकेतु भोगभाग्देवयानगः
आषाढशुक्लदशमीमन्वादिका नारदीये आषाढशुक्लदशमीपुण्यामन्वादिकामता तस्यांस्नानंदानज
पोहोमोवास्वर्गतिप्रदः अथात्राषाढशुक्लैकादशीदेवशयनीकृत्यं नारदीये आषाढशुक्लैकादश्यांय॰
द्विधानंतत्तच्छृणु उपोष्यतस्मिन्दिवसेविधिवन्मंडपेशुभे स्थापयेत्प्रतिमांविष्णोः शंखचक्रगदांबुजैः
लसच्चतुर्भुजांसौम्यांकांचनींवापिराजतीं पीतांबरधरांशुभ्रेपर्यंकेस्वास्तृतेद्विज ततःपंचामृतस्नानंमंत्रैः शु
द्धजलेनच पौरुषेणाचसूक्तेनउपचारान्प्रकल्पयेत् नीराजनांतान्याद्यादींस्ततःसंप्रार्थयेद्धरिं सुप्तेत्वयिज
गन्नाथजगत्सर्वंचराचरं इतिसंप्रार्थ्यदेवाग्रेचातुर्मास्यव्रतोदितान् नियमांस्तुयथाशक्तिगृह्णीयाद्भक्तिमा
न्नरः ततःप्रभातेद्वादश्यांसमर्च्यक्षीरशायिनं उपचारैःषोडशभिस्ततःसंभोज्यवाडवान् प्रतोष्यदक्षिणा
भिस्तुस्वयंभुंजीतवाग्यतः ततःप्रभृतिविप्रेंद्रगंधाद्यैःप्रत्यहंयजेत् कृत्वैवंविधिनाविप्रदेवस्यशयनीव्रतं
भुक्तिमुक्तिंनियतोमर्त्योभवेद्धितत्प्रसादतः अत्रैवदेवशयनोत्थापनयोस्तत्रोक्तं भविष्योत्तरे मिथुनस्थेसहस्रां॰
शौस्थापयेन्मधुसूदनं तुलाराशिगतेतस्मिन्पुनरुत्थापयेद्धरिं आषाढस्यसितेपक्षेएकादश्यामुपोषि
तः इत्यादिकृत्यकल्पोऽग्रेवक्ष्यते अथदेवशयन्येकादशीकथा भविष्योत्तरेपद्मपुराणेच युधिष्ठिरउ
वाच आषाढस्यसितेपक्षेकावाह्येकादशीभवेत् किंनामकोविधिस्तस्याःकिंपुण्यंचवदस्वमे श्रीकृष्णउ
वाच शृणुपार्थप्रवक्ष्यामिगोविंदशयनव्रतं कटदानंसमुत्थानंचातुर्मास्यव्रतक्रमं युधिष्ठिरउवाच
किंदेवशयनंनामकिंवैदेवःस्वपित्यहो देवःकिमर्थंस्वपितिकिंविधानंचतद्वद केमंत्राःकेचनियमाःव्रता
न्यत्रकानिचका क्रियाकार्याकिंचभोक्तव्यंसुप्तेदेवेजनार्दने श्रीकृष्णउवाच मिथुनस्थेसहस्रांशौस्थापयेन्म॰
धुसूदनं तुलाराशिगतेतस्मिन्पुनरुत्थापयेद्धितं अधिकेमासिपतितेएषएवविधिक्रमः
नान्यथास्थापयेद्देवंतथैवोत्थापयेद्धरिं आषाढस्यसितेपक्षेएकादश्यामुपोषितः स्थापयेत्प्रतिमांविष्णोः
शंखचक्रगदाधरां कांचनींराजतींताम्रमयींपैत्तलिकींतथा पीतांबरधरांसौम्यांपर्यंकेस्वास्तृतेशुभे सि
तवस्त्रसमाच्छन्नेसोपधानेयुधिष्ठिर इतिहासपुराणज्ञोब्राह्मणोवेदपारगः स्नापयित्वादधिक्षीरघृत
क्षौद्रैर्जलेनवा समालभ्यशुभैर्गंधैःपुष्पैर्धूपैःसुधूपितां पूजितांकुसुमैःशुभैर्मंत्रेणानेनपांडव सु
प्तेत्वयिजगन्नाथेजगत्सुप्तंभवेदिदं विबुद्धेत्वयिबुद्ध्येतजगत्सर्वंचराचरं एवंतांप्रतिमांविष्णोःस्थापयि
त्वायुधिष्ठिर तस्यैवाग्रेस्वयंस्थित्वागृह्णीयान्नियमान्नरः चतुरोवार्षिकान्मासान्देवस्योत्थापनावधि गृ
हीतोनियमःशुद्धोनिर्विघ्नंसचयातुमे स्त्रीवानरोवामद्भक्तोधर्मार्थीसुदृढव्रतः गृह्णीयान्नियमानेतान्दं
तधावनपूर्वकं तेषांफलानिवक्ष्यामिकर्तॄणांतुपृथक्पृथक् मधुरस्वरोभवेद्राजन्पुरुषोगुडवर्जना
त् लभेच्चसंततिंदीर्घांपुत्रपौत्रादिवर्द्धिनीं तैलस्यवर्जनात्पार्थसुंदरांगःप्रजायते कटुतैलपरित्यागा
द्रिपुनाशमवाप्नुयात् मधुतैलपरित्यागात्सौभाग्यमतुलंभवेत् पुष्पादिभोगनियमात्स्वर्गेविद्याधरो
भवेत् योगाभ्यासीभवेद्यस्तुसब्रह्मपदमाप्नुयात् कटुकतिक्तमधुरकषायक्षाररसान् वर्जयेत्स
चवैरूप्यंदौर्गंध्यंनाप्नुयात्सदा तांबूलवर्जनाद्भोगीरक्तकंठश्चजायते घृतपत्रापशानोद्भोगीचापाहृत
मलोभवेत् पादाभ्यंगपरित्यागाच्छिरोभ्यंगादिवर्जनात् दीप्तिमान्दीप्तकरणोयक्षोद्रव्यपतिर्भवेत् दधि
दुग्धपरित्यागीगोलोकंलभतेनरः इंद्रातिथ्यत्वमाप्नोतिस्थालीपाकविवर्जनात् लभतेसंततिंदीर्घांतै
लपक्वविवर्जनात् भूमौसंस्तरशायीचहरेरनुचरोभवेत् सदामुनिःसदायोगीएकभक्तस्यभोजनात्
निर्व्याधिर्नीरुजोजस्वीमद्यमांसस्यविवर्जनात् एवमादिपरित्यागाद्धर्मःस्याद्धर्मनंदन एकांतरोपवासेन
ब्रह्मलोकेमहीयते धारणान्नखलोम्नांतुगंगास्नानंदिनेदिने मौनव्रतीभवेद्यस्तुतस्याज्ञास्खलिताभ
वेत् भूमौभुंक्तेनरोयस्तुपृथिव्यधिपतिर्भवेत् ॐनमोनारायणायेतिजपितानंतकंफलं पादाभिवंद

नाह्विसोर्लभेद्गोदानजंफलं कल्पस्थायीभवेद्राजन्सनरोनात्रसंशयः विष्णुपादोदुजस्पर्शान्दृक्पक
ल्पोभवेन्नरः विष्णोर्देवालयेकुर्यादुपलेपनमार्जनं कल्पस्थायीभवेद्राजन्सनरोनात्रसंशयः प्रदक्षि
णशतंयस्तुकरोतिस्तुतिपाठकः हंसयुक्तविमानेनसतुविष्णुपुरंव्रजेत् त्रिरात्रभोजनाच्चैवमोद
तेदिविदेववत् षडह्नभोजनाद्राजन्देवोदेमातृयोभवेत् प्राजापत्यंचरेद्यस्तुवर्षाद्धर्मास्यव्रतंनरः मु
च्यतेपातकैः सर्वैस्त्रिविधैर्नात्रसंशयः नमःकृच्छ्रातिकृच्छ्रौमाषंयःक्षिपेत्शयनेहरेः सयातिपरमंस्था
नंपुनरावृत्तिवर्जितं चांद्रायणेनरोराजन्क्षिपेन्मासचतुष्टयं दिव्यदेहोभवेत्सायसोमलोकंचगच्छति
शुक्लपक्षेनरोयोवैनजेद्दन्तादिमक्षणं तेनपक्षोपवासेनप्रतिपक्षंहरिप्रियः समाहेद्वरिसायुज्यंनभ्र
नभूयस्तुप्रजायते भिक्षाभोजीनरोयोहिसभवेद्वेदपारगः नलिप्यतेसपापेनस्वपत्रमिवांभसा
कृष्णेविष्णौहृषीकेशेप्रसुप्तेमधुसूदने परान्नंवर्जयेद्यस्तुकृतकृत्योभवेद्द्विजः परान्नवर्जनात्पार्थ।
चांद्रायणफलंलभेत् सर्वपापविनिर्मुक्तःसोमलोकेमहीयते शाकाहारंतुयःकुर्याद्राजन्मासचतु
ष्टयं तस्यवंशसमुच्छेदःकदाचिन्नोपजायते लवणंवर्जयेद्यस्तुभूपमासचतुष्टयं त्रिजन्मोपार्जितं
पापंसर्वंनाशमवाप्नुयात् शय्यादानंतुयःकुर्याद्यावन्मासचतुष्टयं विष्णुर्दिशपराजेंद्रसदेवत्व
मवाप्नुयात् पंचगव्याशनःपार्थचांद्रायणफलंलभेत् निर्मलंदेहमाप्नोतिगंगास्नानंदिनेदिने कां
स्यमासेन्नंतद्युतंव्यायामंक्रोधमैथुने हिंसांतैलंविवादंचनिद्रांनेमौल्यलंघनं द्वादशैतांद्वादशैतानि
विष्णुभक्तोविवर्जयेत् उपवासंतथानक्तमेकभक्तमयाचितं अशक्तस्तुप्रमाकुर्यात्सायंप्रातरवंहि
तः स्नानेपूजादिसंयुतंसनरोहरिलोकभाक् गीतवाद्यकरोविष्णोर्गांधर्वंलोकमाप्नुयात् लोकान्ववो
ययेयस्तुसातेविष्णुपुरंव्रजेत् कृत्वाप्रदक्षिणंकंदिव्यंलोकमप्सरसांव्रजेत् कृत्वाप्रेक्षणकंविष्णोर्निर्मलंदे
हमाप्नुयात् नित्यस्नायीनरोराजन्नरकंनैवपश्यति भोजनंवर्जयेद्यस्तुसस्नानेपौष्करंलभेत् तीर्थस्ना
नहरिस्नानान्निर्मलंदेहमाप्नुयात् एकभक्ताशनान्नित्यमग्निहोत्रफलंलभेत् अयाचितेनचाप्नोतिवापी।
कूपप्रपाफलं षष्ठाह्नःकालभोजेनस्वर्गायीसर्वोनरोभवेत् भौमेनभोजनेनेत्यर्थः पत्रेषुयोनरोभुंक्तेकु
रुक्षेत्रफलंलभेत् शिलायांभोजनेनित्यंप्रयागस्नानजंफलं सुप्तेनाथेजगन्नाथेकेशवेगरुडध्वजे नि
वर्ततेक्रियाःसर्वाश्चातुर्मास्येचभारत यामद्वयंजागरणान्नरोगैरभिभूयते जागरणेयत्फलंदंडिका-
चतुर्गुणं प्रहरःकोटिगुणितस्ततःसंख्यानविद्यते ॥ इतिपद्मपुराणेजागरणफलमुक्तम् ॥
एवमादिव्रतैःपार्थतुष्टिमायातिकेशवः विवाहव्रतबंधादिक्रियाःसंस्कारलक्षणाः गृहप्रवेशादि
गोदानादिप्रतिष्ठितं पुण्यानियानिकर्माणिवर्जयेद्दक्षिणायने असंक्रांतंतथामासंदैवेपित्र्येविवर्जयेत्
मलिम्लुचमशौचंचरविसंक्रांतिवर्जिते शास्त्रेभाद्रपदेमासेएकादश्यांसितेहनि कटिदानंभवेद्विष्णोर्म
हापूजाप्रवर्तते कृष्णकृष्णजगन्नाथयोगिगम्यनिरंजन कटिदानंकुरुष्वाद्यशुभेभाद्रपदेशुभे कटि
दानंपार्श्वपरिवर्तनम् एतद्दैवशयनंतत्रमेकारणंशृणु पुराणयःप्रभावेणतोषयित्वाहरिंप्रभुं या
चितंप्रवसंवासंस्थानंपौराणिकया निरीक्ष्यचात्मनोदेहंरुंडंलक्ष्याउरस्थलं शंखचक्रासिशार्ङ्ग-
अवाहवोष्यपश्यमे नाभेर्योनिरुद्धंमेवैनतेयेनपद्मिना मुकुटेनशिरोरुद्धंकुंडलैःश्रवणौतथा
ददाम्यहंमतलक्षेणत्रयोःस्थानमादरात् चतुरोवार्षिकान्मासान्वस्पृष्टाभविष्यति योगनिद्रापितद्दा
कंश्रुत्वापौराणिकंशुभं चकारसैवमावासमनोर्थमेयुधिष्ठिर अहंतत्तावदद्यापिमानयामिसमाधि
नी योगनिद्रांमहानिद्रांशेषाहिशयनेस्वयं क्षीरोदमोयवीच्यग्रेधौतपादंसमाहितं लक्ष्मीकरांबुजैःशि
हैर्संघमानपदद्वयं सवकालेतुयोमासानमानुकृष्यतरःक्षिपेत् व्रतैरनेकैर्नियमैःपांडवप्रेमुखामवः क
ल्पस्थायीविष्णुलोकेवसतेनात्रसंशयः ततोविबोधयेद्देवंशंखचक्रगदाधरं कार्तिकेशुक्लपक्षस्यएका

दश्यांप्रयतस्तत्र मंत्रेणानेनराजेंद्रदेवमुत्थापयेत्ततः उत्तिष्ठोत्तिष्ठगोविंदयोगनिद्रांविहायच लक्ष्मीविसृ
ज्यलोकेत्वमलक्ष्मीनुदकेशव समुत्थितेतदाविष्णौक्रियाःसर्वाःप्रवर्तते तत्रैवदेवदेवस्यतत्पूर्ववत्स्नानमा
चरेत् महानद्यरंवेराजेंद्रोभ्रामयेत्स्यंदनेस्थिते दर्शयेत्सर्वलोकांश्चउत्थितंधरणीधरं ससदेशोपिराजेंद्र
सर्वःस्वर्गीयकल्प्यते रात्रौजागरणंकार्यमेकादश्यांमहालये प्रभातेविमलेस्नात्वाद्वादश्यांविष्णुमर्चयेत्
जङ्याद्यवाद्यैर्वस्त्रविद्वैर्नृत्तादिभिः ततोविप्रान्सुभावाद्यान्भोजयेदन्नविस्तरैः घृतक्षीरदधिक्षौद्र
कषायगुडमोदकैः यजमानोग्रतःस्थित्वाचराहास्यविवर्जितः एकादशद्वादशाष्टौवाभोजयेत्कुरुसत्तम
अर्चयेद्वंदनैस्तूर्णैःपुष्पैर्गंधैर्द्विजोत्तमान् शास्त्रोक्तविधिनापार्थभोजयेद्गतकल्मषान् आपांतेभ्यस्ततो·
दद्यात्मकंयत्किंचिदेवच स्वभावाद्यदभीष्टंवैपत्रपुष्पफलादिकं चतुरोवार्षिकान्मासान्नियमोयस्ययःकृ
तः कथयित्वाद्विजेभ्यस्तद्दद्यान्नक्त्याचदक्षिणां दत्त्वाविसर्जयेद्विप्रांस्ततोभुंजीतचस्वयं यत्त्यक्तंचतुरो
मासान्तासिंतस्यसमुच्चरेत् एवंयआचरेत्पार्थसोनंतफलमाप्नुयात् अवसानेतुराजेंद्रवासुदेवपुरंव्र
जेत् यस्याविघ्नंसमाप्येतचातुर्मास्यव्रतंनृप समवेत्कृतकृत्यस्तुनपुनर्मानुषोभवेत् योदेवशयनंवा
पिकदिदानंसमाचरेत् अन्यानंवापिकुलस्यसहहरेर्लोकमाप्नुयात् शृणोतिध्यायतिस्तौतिजुहोत्याख्या
तियोनरः हरिभक्तिकरःपार्थसगच्छेद्वैष्णवंपदम् उत्थापितेभोगिशयनेभगवाननंतोयस्मिन्दिनेस्व
पितिचापिविबुध्यतेवा तस्मिन्ननन्यमनसामुपवासभाजांपुंसांददातिसुगतिंगरुडाग्रगामी ॥ इति

श्रीभविष्योत्तरपद्मपुराणयोर्विष्णोःशयनकटिनदानोत्थापनैकादशीमाहात्म्यम्

अस्यामेवैकादश्यांवासुदेवद्वादशीव्रतंवाराहपुराणे दुर्वासोवाच आषाढेप्येवमेवंतुसंकल्पवि
धिनानरः अर्चयेत्परमंदेवंगंधपुष्पैर्विधानतः वासुदेवायपादौतुकटिंसंकर्षणायच प्रद्युम्नायेति
जठरमनिरुद्धायचेत्युरः चक्रपाणयेतुभुजौकंठंभूपतयेतथा स्वनाम्नाशंखचक्रौतुपुरुषायेतिवै
शिरः एवमभ्यर्च्यमेधावीप्राग्वत्तस्याग्रतोघटं विन्यसेद्वस्त्रयुग्मंतुतस्योपरितुतोन्यसेत् कांचनंवा·
सुदेवंचचतुर्बाहुंसनातनं नाममभ्यर्च्यविधानेनगंधपुष्पादिभिःक्रमात् प्राग्वत्तुब्राह्मणेदद्याद्वेदवा
दिनिसव्रते एवंनियमयुक्तस्यपुण्यंतस्यफलंशृणु वसुदेवोभवद्राजायदुवंशीविवर्द्धनः देवकी
तस्यभार्यासीत्समानव्रतचारिणी सात्वपुत्राभवेत्साध्वीपतिधर्मपरायणा तस्याःकालेनमहतानार
दोभ्यागमद्गृहं वसुदेवेनभक्त्यासौपूजितोवाक्यमब्रवीत् कथयामासधर्मंतोदेवकीवसुदेवयोः
तावप्येवंविधंभक्त्याचक्रतुःश्रद्धयान्वितौ तयोस्तुष्टःस्वयंविष्णुःपुत्रत्वंसंजगाममह एवमेषापाप·
हराद्वादशीपुत्रदास्मृता इमामुपोष्येहसुतान्विपाविमलंलभंतिच राज्यंचभ्रष्टराज्यास्तुपायिनःपाय
संक्षयं यथाभारोपनीतस्तुधरिण्याःकेशवेनवै मृतोविष्णुपुरेरम्येमोदतेकालसंक्षये मन्वंतरा
णिषट्त्रिंशत्ततःकालात्ययेपुनः इहलोकेभवेद्राजासमवर्षाणितानितु दातायज्वासमायुक्तस्त·
तोनिर्वाणमाप्नुयात् ॥ इतिवाराहपुराणेधरणीव्रतेषु आषाढशुक्लैकादश्यांवासुदेवद्वादशीव्रतमा
हात्म्यं पद्मपुराणे श्रीमहादेवउवाच अश्वमेधसहस्राणिवाजपेयशतानिच एकादश्युपवासस्य।
कलांनार्हंतिषोडशीं स्नानंदानंजपोहोमःस्वाध्यायोदेवतार्चनं चातुर्मास्येकृतंयच्चसर्वंहिचाक्षयंस्मृ·
तम् एककालंहिकालंवापुराणंशृणुतेनरः सर्वपापविनिर्मुक्तोविष्णुलोकंसगच्छति हरौसुप्तेवि·
शेषेणहरेर्नामपदंनजपन् तत्फलंकोटिगुणितंलभतेद्विजसत्तम वैष्णवोब्राह्मणोयस्तुपूजनंप्रक।
रोतियः सएवसर्वधर्मात्मापूज्यएवनसंशयः चातुर्मास्यमिदंपुण्यंपवित्रंपापनाशनं श्रुत्वातुलभतेपु।
ण्यंगंगास्नानसमुद्भवम् व्रतंकृत्वामहाभागायदिनोद्यापनंचरेत् सकर्ताकर्मणांतातनसम्यक्फलभा।
ग्भवेत् व्रतेवैकल्यमासाद्यकुष्ठीनामप्रजायते एतस्मात्कारणाच्चैवकुर्याद्उद्यापनंद्विज गृहीत्वानियमाने

तान्पालयित्वा यथाविधि सुप्तोत्थिते जगन्नाथे गत्वा ब्राह्मणसन्निधौ समापयेद्देवदेवं यथाविधि सवि
स्तरात् यत्त्यक्तं नियमेनात्र तत्तद्द्यात्सदक्षिणं शय्यां सोपस्करां दद्याद्दासीं दद्याद्द्विजातये गोभूहिर
ण्यवासांसि गृहोपकरणानि च अशक्तौ तु यथाशक्ति ब्राह्मणानेव भोजयेत् यथाशक्ति प्रपूज्यार्थं सर्वं संपू
र्णतामियात् इति उत्तरखंडे आषाढशुक्लैकादश्यां स्वापमहोत्सव उक्तो मदनरत्ने ब्रह्मपुराणेपि एका
दश्यां तु शुक्लायामाषाढे भगवान्हरिः भुजंगशयने शेते क्षीरार्णवजले सदा ततस्तत्प्रतिमा कार्या सर्वल
क्षणसंयुता सुप्तां तु शेषपर्यंके शैलमद्भिल्लवारिभिः ताम्ररक्तदरजतैस्तथा चित्रपटेथवा लक्ष्म्या उत्सं
गहस्ते च विन्यस्तचरणां बुधः उत्संगहस्ते उत्संगस्थितहस्ते नानाविधोपकरणैः पूजां च विधिपूर्वकं उ
पवासश्च कर्तव्यो रात्रौ जागरणं तथा तस्यां रात्र्यां व्यतीतायां द्वादश्यां पूजयेत्तथा त्रयोदश्यां तथा गीतैर्न
त्यवाद्यैर्निवेदयेदिति दोडरानंदेपि आषाढशुक्लैकादश्यां कुर्यात्स्वापमहोत्सवमिति अयं च द्वादश्या
मपि कार्यः आभाकादिषु मासेषु मिथुने माधवस्य च द्वादश्यां शुक्लपंचम्यां प्रस्वापावर्तनोत्सवा ॥ इति
निर्णयसिंधौ भविष्योक्तेः आषाढशुक्लद्वादश्यां क्षीराब्धिशयनोत्सवः कार्योन्यथा त्वनावृष्टिर्भवेन्नो
राणिकं व्रत इति रामार्चनचंद्रिकोक्तेश्च द्वादश्यामित्यत्र पारणाहमात्रं विवक्षितं पारणाहे पूर्वरात्रे च
दादीन्वादयेन्मुकुंदीतितत्रैवोक्तेः नृसिंहपरिचर्यायामपि यद्यपि आषाढस्य सिते पक्ष एकादश्यामु
पोषितः नक्तं द्विजवरश्रेष्ठ गृह्णीयान्नियमं व्रती कार्तिके शुक्लपक्षस्य एकादश्यां समाहितः इत्यादिव
चनैरेकादश्यामेवानुष्ठेयता गम्यते तथापीयं च द्वादशी प्रबोधार्थविनिर्मितेति मंत्रलिंगानुगृहीत
शिष्टाचाराद्द्वादश्यामप्यनुष्ठेयता निर्णीयत इत्युक्तं यत्तु द्वादश्यां शयनादिकमुक्तं न मिथुनार्क एव
आभाकादिषु मासेष्विति भविष्योक्तेः स्वापकालविशेषस्तु निशि स्वापो दिवोत्थानं संध्यायां परिवर्तनमि
ति ब्रह्मपुराणवचनेन विशिष्योक्तेः एतास्व द्वादश्यो रात्रिसंध्यादिनेषु नूराधाश्रवणरेवतीनामा
दिमध्यांतभागयुक्ताः क्रमेण प्रस्वापादिषु प्रशस्ताः तथा च नारदीये मैत्राद्यपादे स्वपितीह विष्णुः
श्रुतेश्च मध्ये परिवर्तते च पौष्णावसाने न सुरारिहंता प्रबुध्यते मासचतुष्टयेनेति भविष्येपि आभा
कासितपक्षेषु मैत्रश्रवणरेवती रेवतीत्यत्र सप्तमीलोपः आदिमध्यावसानेषु प्रस्वापावर्तनोत्सवाः
यदा तु द्वादशीषु रात्र्यादिभागेषु तत्तद्भागो नास्ति तदा द्वादश्यां नक्षत्रमात्रयोगोपि रात्र्यादिगतो
ग्राह्यः पादयोगो यदा तत्स्याहत्तेणापि तदा भवेदिति वराहपुराणात् विष्णुर्दिवा न स्वपिति न च रा
त्रौ प्रबुध्यते द्वादश्यामृक्षसंयोगे पादयोगो न कारणमिति विष्णुधर्मोत्तराच्च यदा तु द्वादशीषु तानि
नक्षत्राणि न संत्येव किं त्वेकादशीषु त्रयोदशीषु वा तदा तत्रापि तत्तद्भाग एव निशादिवेलाना
दरेण प्रस्वापादि कार्यं आद्यामे द्वादशीमृक्षे उत्थाने शयने हरेः पादयोगे न कर्तव्यो नाहोरात्रं विचिं
तयेदिति जीमूतवाहनधृतवचनात् पादयोगादन्यतिथौ द्वादश्यामृक्षसंगमादिति वचनाच्च कौ
स्तुभे तु अप्राप्त इत्यादिवचनं मुख्यकाले केनापि निमित्तेनाकृतोत्सवेन पुंसा त्रयोदश्यादिगौणकाले कर्त
व्योत्सवः पादयोगवशेन दिवैव वा कार्यो रात्रौ वेति संदेहे नियमार्थं न तु नक्षत्ररहितद्वादशीबाधेन त्र
योदश्यादौ पादयोगे अप्राप्तकर्तव्यतायाः प्रापणपूर्वं रात्र्यादिनिषेधार्थं अपूर्वविधौ गौरवादिति व्या
ख्यातम् एवं च द्वादश्यां निशाद्यादेरन्यतिथौ च नक्षत्रपादयोगादेव नियते सति यदा द्वादशीषु निशादेर
न्यत्र तद्भागयोरन्यतिथौ च तदितरनक्षत्रस्यैव योगः तदा द्वादशीषु संध्यायां प्रस्वापादि द्वादश्यां
संधिसमये नक्षत्राणामसंभवे आभाकासितपक्षेषु शयनावर्तनादिकमिति वराहवचनात् संधिसम
य इति स्थापनादावन्वेति संधिसमयश्च सायंसंध्यैव रेवत्यादेरलाभे वा द्वादश्यां च विभा भवेत् उभयोर
प्यभावे तु संध्यायां च महोत्सव ॥ इति हरिभक्तिविलासे रेवत्यां तोयदा रात्रौ द्वादश्यां च समागतः ता

दा प्रबुध्यते विष्णुर्दिनान्ते शाश्वरेवनीमिति जीमूतवाहनवचनात् अत्र वह्नवचनेषु चतुर्थभागवाचिपादग्र-
हणाच्चतुर्थीविभक्ता तु रात्रिरेव तयोरात्र्यंत्यपादयोरेव स्वापबोधोत्सवौ कार्यौ न चादिमध्यावसानस्थितिवाक्ये
समंस्यादक्षतत्वादिति त्रेधाविभागएवमतएव मध्यग्रहणमप्युपपद्यतइति वाच्यं वचनांतरेषु पादग्रहणे
नविशेषश्रवणादक्षततत्वादिति हेतोरसिद्धेः श्रवणस्यतत्रेधाविभक्तमध्यभागएवस्थाप्यः ॥ आषाढ
कार्तिकपौर्णमास्योरपि स्वापप्रबोधावाहयमः क्षीराब्धौशेषपर्यंकआषाढ्यां संविशेद्धरिः निद्रां त्यजति
कार्तिक्यां तयोस्तं पूजयेत्सदेति अत्र चाषाढीकार्तिकीपदे आषाढस्येयं कार्तिकस्येयमिति व्युत्पत्त्या का
दश्यौपरे नचवृद्धियेस्साचामादिति निहृद्धसंज्ञायां तु आषाढीयमिति स्यादिति वाच्यं कचिदपवादविष
येप्यौत्सर्गिकप्रवृत्तिरिति न्यायेनाणप्रत्ययेनेष्टसिद्धिरिति लक्ष्मीधरभट्टाः यत्तु आषाढशुक्लपक्षांते भ
गवान्मधुसूदनः भोगिभोगे निजां मायां योगनिद्रां समाप्नुयात् शेते सौ चतुरो मासान् यावद्भवति कार्ति
कीतिवचने तदपि पौर्णमास्यां शयनप्रबोधस्वीकारे सेन तद्विषयं बोध्यं श्रीदत्तादयस्तु आषाढशु-
क्लैकादशीमारभ्य पौर्णमासीपर्यंते विष्णोर्निद्राग्रहणरूपशयनसमयः अतएव एकादश्यां शयनम
भिधाय तदादिदिनपंचके कर्मकथनं ब्रह्मपुराणे वाराहपुराणे च निद्राग्रहणमंत्रानंतरमाषाढमा-
सेद्वादश्यामित्यभिधानं वामनपुराणे वा अनुत्तांवासितेप्य द्वादश्यां प्रयतः शुचिः लब्ध्वा पीतांबर
धरः स्वस्ति निद्रां समानयेदित्यभिधानं च यमस्मृतौ चाषाढीपदस्योपायेस्तत्रैव प्रहतेः हृशिमायाश-
यनेऽभिधानं च संगच्छते विस्मृतधर्मान्तरेष्वेवम् केचित् भगवतः शयनकालेविकल्पएव कथमन्य-
था आवेशाद्वाहुजगवन्निजाचुंबनायाः सविन्नो देवो दैत्यप्रवरपरश्रुपीवदेकांतरम्यः अंतः शय्याप
रिणतलु योगनिद्रामुपैति नावहृष्टेः समयउदितो ब्रह्मणाभाषिते नेति गाणकशास्त्रादेशाद्वादिमासेद्व
दिशायनमित्याहुः एतेषां च पक्षाणां यथा संप्रदायं व्यवस्था श्रीरामस्य तपारणेन द्वादशीमध्ये त्रयोदशी
मध्ये वा पूर्वं रात्रेस्याणोत्सवः पारणाद्देहवेतरात्रइति रामार्चनचंद्रिकोक्तेः शिष्टास्तु सर्वदेवानामपि पारणा
नंतरेव शयने कुर्वतीति केचित् यत्तु मोहचूडोत्तरे मिथुनस्थोयदाभानुरमावास्याद्वयं स्पृशेत् द्विराषा-
ढः सविज्ञेयोविष्णुः स्वपिति कर्कटइति तदत्र रवर्षेदात कर्कार्कस्वापपरमिति माधवः मेषादिमिथुनां
तेषु यदा दर्शद्वयं भवेत् अन्यांतरेनतदावश्यं मिथुनार्केहरिः स्वपेदिति वराहमिहिरोक्तेः एतस्य चावश्या-
नुष्ठेयत्वेन कालमाधवे चंद्रिकायां गारुडे मिथुनस्थे सहस्रांशौ शेतेस्वापपर्मियोहरिं वेत्सवैः सहसंभूय त्व-
ब्रह्मचिह्नदाभवेदिति अथ रामार्चनचंद्रिकोक्तः स्वापमहोत्सवविधिः पारणाद्देहवेतराचैघंटादीन्वादये
न्मुहुः विधायमहतीं पूजां विष्णुमभ्यर्च्य वैसवान् नीराज्य नवयाने य रामभ्यारोप्यवैस्वैः गीतवादित्र-
नृत्यैर्देवनीत्वाजलाशये पुष्पांजलिं प्रदायाथ यानादुत्तारयेत्प्रभुं नीरेंधिन्यासमाशास्य हस्तं दत्त्वोपवेश-
येत् यौनांधिपाणि राजांतः कुर्यात्संकल्पमाहृतः न्यासं कृत्वा च देवे च स्वर्णां च मोत्र वाकपतः तथा पुरु-
षसूक्तेनोत्तरनारायणेन च पंचमस्तेन संस्नाप्य संपूज्याथ रहूत्तमं अत्तो देवेति मंत्रेण जलेप्रस्वापयेत्प्रभुं
शेषपर्यंकवर्यस्मिन् फणामणिगणामले श्वेतद्वीपांतरे देवकुरु निद्रां नमोस्तु ते अथ कृत्वा महापूजां गं-
धस्रग्धूपदीपकैः अनंतां कल्पयन्मायेरात्रां मानुग्रहं हरेः सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदं विबु-
द्धे च विबुध्येत प्रसन्नो मे भवाव्यय इति संप्रार्थ्यतस्याग्रे गृह्णीयान्नियमानिमान् श्वेतद्वीपे भोगिनाथे यो-
गनिद्रास्थिते मयि चातुर्मास्यव्रतेनुज्ञां देहि लक्ष्मीपते मम लब्ध्वानुज्ञां श्वेहस्तो यथाप्रोषितभर्तृका
चतुरो वार्षिकान्मासानाचबोध्याय नावधि इमं करिष्ये नियमं निर्विघ्नं कुरु मेच्युत इदं व्रतं मया देव गृही-
तं पुरतस्तव निर्विघ्नं सिद्धिमायातु प्रसादात्ते रमापते गृहीतेस्मिन्व्रते देव पंचत्वं यदि मे भवेत् तदा भवतु
संपूर्णं प्रसादात्ते रहूत्तम इत्यभ्यर्थ्याथ देवाय पुष्पांजलिनाद्यान्निवेदयेदिति अथ प्रयोगः एकादश्यां नित्यनै-

मितिकं चपूजनंकृत्वा नरयानेनरथेन वागीतवादित्रघोषेणदेवंजलाशयंनीत्वा पुष्पांजलिंदद्या-
पयानाङ्गनार्यस्वहस्तेहस्तंदत्वातीरउपवेशयेत् ततःस्वयंयोक्ताद्विपाणिराचांतःसंकल्पंकुर्यात्
ततोविष्णुमंत्रस्य छंदऋषिन्यासपूर्वकं ध्यानंकृत्वाकेशवादिमात्रकांन्देहेदेवेचन्यसेत् त-
तःसुवर्णघर्मानुवाकः पुरुषसूक्तोत्तरनारायणानुवाकान्न्यसेत् तेनयथा सुवर्णघर्मंपरिवेद
वेनं इंद्रस्यात्मानंदशधाचरंतं अंतःसमुद्रेमनसाचरन्तम् ब्रह्मान्वविंदद्दशहोतारमर्णे अंतः
प्रविष्टःशास्ताजनानामेकः सन्बहुधाविचारः शतशुक्राणियत्रैकंभवंति सर्वेवेदायत्रैकंभवंति
सर्वेहोतारोयत्रैकंभवंति समानसानआत्माजनानां अंतःप्रविष्टःशास्ताजनानाꣳसर्वीयप्रजा-
पत्रैकंभवंति चतुर्होतारोयत्रसंपदंगच्छंतिदेवैः समानसीआत्माजनानां ब्रह्मेंद्रमग्निंजगतःप्र-
विष्टांदिवआत्मानꣳसवितारंबृहस्पतिं चतुर्होतारंप्रविशोनुक्लृप्तं वाचोवीर्यंतपसान्वविंदत् अं-
तःप्रविष्टंकर्तारमेतं त्वष्टारꣳरूपाणिविकुर्वंतंविपश्चिं अमृतस्यप्राणंयज्ञमेतं चतुर्होतृणामात्मा-
नंकवयोनिचिक्युः अंतःप्रविष्टंकर्तारमेतंदेवानांबंधुनिहितंगुहासु अमृतेनक्लृप्तंयज्ञमेतं चतु-
र्होतृणामात्मानंकवयोनिचिक्युः शतंनियुतःपरिवेदविश्वाविश्ववारःविश्वमिदंवृणाति इंद्रस्यात्मानि-
हितःपंचहोता अमृतंदेवानामायुःप्रजानां इंद्रꣳराजानꣳसवितारमेतं वायोरात्मानंकवयोनि-
चिक्युः रश्मिꣳरश्मीनांमध्येतपंतं ऋतस्यपदेकवयोनिपांति यआंडकोशेभुवनंबिभर्ति अनिर्भि-
न्नःसन्नथलोकान्विचष्टे यस्यांडकोशꣳशुष्ममाहुः प्राणमुल्बंतेनक्लृप्तोमृतेनाहमस्मि सु-
वर्णकोशꣳरजसापरीवृतं देवानांवसुधानींविराजं ४ अमृतस्यपूर्णांतामुकलांविचक्षते पाद-
ꣳषड्ढोतुर्नकिलाविवित्से येनर्तवःपंचधोतक्लृप्ताः उतवाषड्धामनसोतक्लृप्ताः तꣳषड्ढोतार-
मृतुभिःकल्पमानंऋतस्यपदेकवयोनिपांति अंतःप्रविष्टंकर्तारमेतंअंतश्चंद्रमसिमनसाचरंतं सहै-
वसंतंनविजानंतिदेवा इंद्रस्यात्मानꣳशतधाचरंतं ५ इंद्रोराजाजगतोयईशे सप्तहोतासप्तधा
विक्लृप्तःपरेणतंतुपरिषिच्यमानः अंतरादित्येमनसाचरंतं देवानाꣳहृदयंब्रह्मान्वविंदत् ब्रह्मैतद्ब्रह्म
णउज्जभार अर्कꣳश्चोतंतꣳसरिरस्यमध्ये आयस्मिन्सप्तपेरवः मेहंतिबहुलाꣳश्रियंबह्वश्वामिंद्रगोम।
तीं ६ अच्युतांबहुलाꣳश्रियं सहरिर्वसुवित्तमः पेरुरिंद्रायपिन्वते बह्वश्वामिंद्रगोमती अच्युतां
बहुलाꣳश्रियम् मह्यमिंद्रोनियच्छतु शतꣳशताअस्यमुक्ताहरीणां अर्वाङायातुवसुभीरश्मिरिं-
द्रःप्रमꣳहमाणोबहुलाꣳश्रियं रश्मिरिंद्रः सवितामेनियच्छतु ७ घृतंतेजोमधुमदिंद्रियं मय्ययं
मग्निर्दधातु हरिःपतंगःपटरीसुवर्णोदिविक्षयोनभसायएति सनइंद्रःकामवरंददातु पंचारंचक्रं
परिवर्ततेपृथु हिरण्यज्योतिःसरिरस्यमध्ये अजस्रंज्योतिर्नभसासर्पदेति सनइंद्रःकामवरंददातु
सप्तयुंजंतिरथमेकचक्रं ८ एकोअश्वोवहतिसप्तनामा त्रिनाभिचक्रमजरमनर्वं येनेमाविश्वा
भुवनानितस्थुः भद्रंपश्यंतउपसेदुरग्रेतपोदीक्षामृषयःसुवर्विदः ततःक्षत्रंबलमोजश्चजातं
तदस्मैदेवाअभिसन्नमंतश्वेतꣳतस्मिन्बुभुज्यमानं अपांनेतारंभुवनागल्पएकरूपाः शतꣳसहस्राणि
युतानिनाव्यानां अयंयःश्वेतोरश्मिःपरिसर्वमिदंजगत् प्रजांपशून्धनानिअस्माकंददातु श्वे-
तोरश्मिःपरिसर्वंबभूव सुवन्मह्यंपशून्विश्वरूपान् पतंगमक्तमसुरस्यमायया ९ हृदापश्यं-
तिमनसामनीषिणः समुद्रेअंतःकवयोविचक्षते मरीचीनांपदमिच्छंतिवेधसः पतंगोवाचमना
साबिभर्ति तांसायुर्यीवदद्गर्भेअंतः तांद्योतमानाꣳस्वर्यंमनीषां ऋतस्यपदेकवयोनिपांति येग्रा-
म्याःपशवोविश्वरूपाःविरूपाःसंतोबहुधैकरूपाः अग्निस्ताꣳअग्रेप्रमुमोक्तुदेवःप्रजापतिःप्रज-
यासंविदानः वीतꣳस्तुकेस्तुके युवमस्मासुनियच्छतं प्रप्रयज्ञपतिंतिर येग्राम्याःपशवोविश्व।

पाः विरूपाः संतो बहुधैकरूपाः तेषां सप्तानामिह रंतिरस्तु रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय
आरण्याः पशवो विश्वरूपाः संतो बहुधैकरूपाः वायुस्तां अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया सं
विदानः ३ इडायै सृप्तं घृतवच्चराचरं देवा अन्वविदन् गुहाहितं य आरण्याः पशवो विश्वरूपाः वि
रूपाः संतो बहुधैकरूपाः तेषां सप्तानामिह रंतिरस्तु रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ४ सह
स्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् स भूमिं सर्वतः स्पृत्वात्यतिष्ठद्दशांगुलम् १ पुरु
ष एवेदं सर्वं यद्भूतं यच्च भाव्यं उतामृतत्वस्येशानो यदन्नेनातिरोहति २ एतावानस्य महिमा
तो ज्यायांश्च पूरुषः पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ३ त्रिपादूर्ध्व उदैत्पुरुषः पादोस्ये
हाभवत्पुनः ततो विष्वङ् व्यक्रामत् साशनानशने अभि ४ तस्माद्विराडजायत विराजो अधि पू
रुषः स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ५ यत्पुरुषेण हविषा देवा यज्ञमतन्वत वसं
तोस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ६ सप्तास्यासन्परिधयः त्रिः सप्त समिधः कृताः देवा यद्यज्ञं
तन्वानाः अबध्नन्पुरुषं पशुं तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः तेन देवा अयजंत साध्या ऋ
षयश्च ये ८ तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यं पशूंस्तांश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये ९ त
स्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे छंदांसि जज्ञिरे तस्मात् यजुस्तस्मादजायत १० त
स्मादश्वा अजायंत ये के चोभयादतः गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ११ यत्पुरुषं व्य
दधुः कतिधा व्यकल्पयन् मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते १२ ब्राह्मणोस्य मुखमासी
त् बाहू राजन्यः कृतः ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत चंद्रमा मनसो जातः चक्षोः सू
र्यो अजायत मुखादिंद्रश्चाग्निश्च प्राणाद्वायुरजायत १४ नाभ्या आसीदंतरिक्षं शीर्ष्णो द्यौः समव
र्तत पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकां अकल्पयन् १५ वेदाहमेतं पुरुषं महांतं आदि
त्यवर्णं तमसस्तु पारे सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाभिवदन्यदास्ते धाता पुर
स्ताद्यमुदाजहार शक्रः प्रविद्वान्प्रदिशश्चतस्रः तमेवं विद्वानमृत इह भवति नान्यः पंथा अ
यनाय विद्यते यज्ञेन यज्ञमयजंत देवास्तानि धर्माणि प्रथमान्यासन् ते ह नाकं महिमानः स
चंत यत्र पूर्वे साध्याः संति देवाः ७ अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताग्रे धि
तस्य त्वष्टा विदधद्रूपमेति तत्पुरुषस्य विश्वमाजानमग्रे वेदाहमेतं पुरुषं महांतं आदित्यव
र्णं तमसः परस्तात् तमेव विद्वानमृत इह भवति नान्यः पंथा विद्यतेयनाय प्रजापतिश्चरति ग
र्भे अंतः प्रजायमानो बहुधा विजायते तस्य धीराः परिजानंति योनिं तं मरीचीनां पदमिच्छंति वे
धसः यो देवेभ्य आतपति यो देवानां पुरोहितः पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये रुचं ब्रा
ह्मं जनयंतः देवा अग्रे तदब्रुवन् यस्त्वेवं ब्राह्मणो विद्यात् तस्य देवा असन्वशे श्रीश्च ते लक्ष्मी
श्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपं अश्विनौ व्यात्तं इष्णन्निषाण अमुं म इषाण सर्वलोकं म
इषाण २ पुरुषसूक्तेन संपूज्य अनो देवेति मंत्रेण जलेशायनं कुर्यात् शेषपर्यंकवर्येस्मिन्फ
णामणिगणामले श्वेतद्वीपांतरे देवकुरु निद्रां नमोस्तु ते इति मंत्रेणात्रापि महापूजां कृत्वा
अस्मिन्हरेरनुग्रहं प्राशास्य सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदं विबुद्धे च विबुध्येत प्रस
न्नो मे भवाव्ययेति संप्रार्थ्य श्वेतद्वीपे भोगनाथे योगिनाथे स्थिते त्वयि चातुर्मास्यव्रते नुज्ञां देहि
लक्ष्मीपते समेति भगवत्कृपाकटाक्षदंतामात्तो लब्ध्वा प्रायः तत्त्वो देवस्याग्रे नियमस्वीकारं कुर्या
त् नमस्कारस्तु हेमाद्रौ भविष्ये प्रवेताप्रतिमां विष्णोः पूजयित्वा स्वयं नरः प्रभावेनाग्रतो विष्णोः कृ
तांजलिपुटस्तथा तत्र मंत्रः चतुरो वार्षिकान्मासान् देवस्योत्थापनावधि इमं करिष्ये नियमं नि।

द्विहकुकर्मैच्युते इदंव्रतंमयादेवगृहीतंपुरस्तव निर्विघ्नंसिद्धिमायातुप्रसादात्तेरमापते गृ-
हीतेचव्रतेदेवपंचत्वंयदिमेभवेत् तदाभवतुमेपूर्णंप्रसादात्तेरघूत्तमेति ततोदेवालयेदेवंशं-
खेनार्घ्यंनिवेदयेत् तत्रमंत्रः शंखपात्रेगतंतोयंफलपुष्पसमन्वितं अर्घ्यंगृहाणदेवेशरमाकांतव
रघूद्वहेति अर्घ्यदानोत्तरंभगवतःस्तुतिंकुर्यात्साचतथा यःपृथ्वीभरवारणायदिविजैःसंप्रार्थितश्चि-
न्मयः संजातःपृथिवीतलेरविकुलेमायामनुष्योव्ययः निश्चक्रंहतराक्षसःपुनरगाद्ब्रह्मत्वमा-
द्यंस्थिरां कीर्तिंपापहरांविधायजगतांतंजानकीशंभजे १ विश्वोद्भवस्थितिलयादिषुहेतुमेकंमाया-
श्रयंविगतमायमचिंत्यरूपं आनंदसांद्रममलंनिजबोधरूपंसीतापतिंविदिततत्वमहंनमामि २
भजेहंसदाराममिंदीवराभंभवारण्यदावानलाभाभिधानं भवानीहृदाभावितानंदरूपंभवाभाव-
हेतुंभवादिप्रपन्नं ३ सुरानीकदुःखौघनाशैकहेतुंनराकारदेहंनिराकारमीड्यं परेशंपरानंदरू-
पंवरेण्यंपहरिंराममीशंभजेभारनाशं ४ प्रपन्नाखिलानंददोहंप्रसन्नंप्रपन्नार्तिनाशेद्धताशाभिधेयं
नयोयोगयोशीशभावाभिभाव्यंकपीशादिमित्रंभजेराममित्रं ५ सदाभोगभाजांसुदूरेविभांतंस-
दायोगभाजामदूरेविभांतं चिदानंदकंदंसदाराघवेशंविदेहात्मजानंदरूपंप्रपद्ये ६ महायोगमा-
याविशेषानुयुक्तोविभासीशलीलानराकारवृत्तिः चिदानंदलीलाकथापूर्णकर्णः सदानंदरूपाभवं-
तीहलोके अहंमानपानाभिमत्तःप्रमत्तोनवेदाखिलेशाभिमानाभिमानः इदानींभवत्पादपद्मप्रसा-
दात्त्रिलोकाधिपत्याभिमानोविनष्टः ८ स्फुरद्रत्नकेयूरहाराभिरामंधराभारभूतासुरानीकदावं शा-
रच्चंद्रवक्त्रंलसत्पद्मनेत्रंदुरावारपारंभजेराघवेशं ९ सुराधीशनीलाभनीलांगकांतिविराधादिरक्षोग-
णानीकशांतिं किरीटादिशोभंपुरारातिलाभंभजेरामचंद्रंरघूणामधीशं १० लसच्चंद्रकोटिप्रकाशा-
दिपीठेसमासीनमंकेसमाधायसीतां स्फुरद्धेमवर्णांतडित्पुंजभासंभजेरामचंद्रंनिवृत्तार्तितंद्रं ११ ॥

इत्यध्यात्मरामायणोक्तंरामचंद्रस्तोत्रं ॥

इतिस्तुत्वाप्रजापालंराजन्याशाम्यमंगलं शंखतीर्थंचसंप्रोक्ष्यगीतनृत्यादिनाहरिं परितोष्याथसं-
पूज्यवैष्णवान्नरपादकम् भगवंतंसमारोप्यगीतवादित्रघोषकैः आगात्यमंदिरेकृत्वामहानीराज-
नंप्रभोः विसृज्यवैष्णवान्देवमुपवेश्यस्वयंस्वपेत् इतिशयनोत्सवः मदनरत्नेमहाभारते आषा-
ढशुक्लपक्षेएकादश्यामुपोषितः चातुर्मास्यव्रतंकुर्याद्यत्किंचिन्नियतोनरः सनत्कुमारस्तुचा-
तुर्मास्यव्रतारंभस्यकालांतरमप्याह एकादश्यांतुशुक्लायांसंक्रांतौकर्कटस्यवा आषाढ्यांवान-
रोभक्त्याचातुर्मास्योदितंव्रतमिति अस्यचप्रारंभोगुर्वस्तादावपिकार्यः तथाचवृद्धगार्ग्यः नशो-
धवंनमौढ्यंचशुक्रगुर्वोर्नवांतिथेः एवंतुचिंतयेच्चादौचातुर्मास्यविधौनरः तच्चाविशेषान्निय-
तव्रतानांप्रथमारंभविषयमपि यदपिहेमाद्रौव्रतप्रकरणेभविष्ये असंक्रांतेतथामासेदेवपित्र्ये
चकर्मणि मलमासमशौचंचवर्जयेन्मतिमान्नरइति तच्चावरोवर्जयेत्स्वाकमित्यादिनाश्राव-
णादिमासविशेषविहितव्रतानुवृत्यर्थं स्पष्टमासविशेषाख्याविहितंवर्जयेन्मलइतिवचनात्
चातुर्मास्यव्रतानिवर्ततरामलमासेप्यनुवर्ततएवेत्यपर इतिमहार्णवे एतद्वचनंचातुर्मास्यप्रकर-
णपठितमपिअसंबद्धार्थत्वात्पूर्वानुमंत्रेणन्यायेनात्रोत्कृष्टव्यमितितत्वं प्रकरणानिवेशेपिवाप्र-
थमारंभविषयंज्ञेयमितिनिर्णयसिंधौ वस्तुतस्तुअधिमाससंनिपातेपितदेवावधिक्रमइतिवच-
नेनचातुर्मास्यव्रतारंभानंतरंसमागतेः प्रागेतरामलमासपातेऽनुवृत्तिं विधायतेनैतद्वचनेनतत्प्रक-
रणेपठितमपितज्जिन्नविषयं एकादश्यामशौचेपूर्णिमायांकर्कसंक्रांतौवारभेत् त्रितयेप्यशौचे
प्रथमतोनारंभएव आरब्धेसूतकंनस्यादनारब्धेतुसूतकमितिविस्मृतेः द्वितीयारंभस्तुभव-

ण्येव प्रतिवर्षं च यः कुर्यात्तद्देवं वै संस्मरन् देहान्ते तिग्मदीप्तेन विमानेनार्कवर्चसा मोदते विष्णु
लोके सौ यावदाभूतसंप्लवमिति हेमाद्रौ भविष्यवचनेन प्रतिवर्षं क्रियमाणस्यैकफलसंबं
धेनैकव्रतत्वेन प्रथमारम्भस्य ग्रहणत्वादिति यत्तु वचनदीपिकायां स्कान्दे अशुचिर्वा शुचिर्वापि य
दि स्त्री यदि वा पुमान् व्रतमेतन्नरः कुर्यान्मुच्यते सर्वपातकैरिति तदारम्भोत्तरं बोध्यं ॥ चा
तुर्मास्यव्रतानि भविष्योत्तरीये तिहासप्रसंगेन पूर्वमेवोक्तानि अथ चातुर्मास्यवर्ज्यानि भविष्ये
श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा दुग्धमाश्वयुजे मासि कार्त्तिके चामिषं त्यजेत् द्विदलं
त्यजेदित्यपि पाठः प्राण्यंगचूर्णं चर्माम्बु जंबीरं बीजपूरकं अयज्ञशिष्टमन्नाद्यं यद्विस्सारं निवे
दितं दग्धमन्नं मसूरं च मांसमष्टविधं मतः रूच्यं तत्तद्देशलभ्यं फलमूलादि वर्जयेत् पाद्मे का
र्तिकमाहात्म्ये द्विजक्रीता रसाः सर्वे लवणं भूमिजं तथा ताम्रपात्रस्थितं गव्यं जलं पल्वलसंस्थि
तं आत्मार्थं पाचितं चान्नमशितं तत्स्मृतं बुधैः जंबीरं राजमाषांश्च मूलकं शृंजनं तथा कूष्मांडं
चेक्षुदंडं च चातुर्मास्ये त्यजेद्बुधः तथा विशेषाद्बदरीधात्रीकूष्मांडतिंतिणीस्त्यजेत् जीर्णयां
त्रीफलं ग्राह्यं कथंचित्कारये शयनमिति तथा निष्पावान् राजमाषांश्च मसूरान्संचितानि च वृं
ताकं च कलिंगं च सप्तमे द्वे न भक्षयेत् स्कांदे यत्नार्थेतानि नित्यानि चतुराश्रमवर्तिनां प्रथमे मा
सि कर्तव्यं नित्यं शाकव्रतं नरैः द्वितीये मासि कर्तव्यं दधिव्रतमनुत्तमं पयोव्रतं तृतीये तु चतुर्थे
पि निशामय द्विदलं बहुबीजं च वृंताकं चैव वर्जयेत् नित्यान्येतानि विप्रेंद्र व्रतान्याहुर्मनीषि
णः स्कांदे वार्षिकांश्चतुरो मासान्प्रसुप्ते वै जनार्दने मंचखट्वादिशयनं वर्जयेद्भक्तिमान्नरः
अनृतौ वर्जयेद्भार्यां मांसं मधु परौदनं पटोलं मूलकं चैव वृंताकं च न भक्षयेत् शाकशब्दश्च
दशधा रूढः मूलपत्रकरीराग्रफलकांडाधिरूढकाः त्वक्पुष्पं कवकं चैव शाकं दशविधं
स्मृतमित्युक्तेः अधिरूढं अंकुरः स्मृतिकौस्तुभे मूलपत्रेत्यभियुक्तोक्तेः शाकशब्दस्य व्यंजन
न तया प्रसिद्धेश्चैव फलमूलादिपूपसंहारः लोकव्यवहारादिति यत्तु नमन्त्वालोद्भवाः शाक।
वर्जनीयाः प्रयत्नतः बहुबीजमबीजं च विकारि च विवर्जयेदिति भविष्यवचनं तत्स्वयत्नात इ।
ति विशेषग्रहणात् एतेषां शाकानां दोषाधिक्यत्वापनार्थं बहुबीजमिति च अधिकबीजव
त्फलमित्यर्थः अबीजं विकारीति पदद्वयेन कालादिविकृतं विकारवशेन विनष्टबीजं फलमुच्य
ते चकारद्वयमेकस्मिन् धर्मिण्यविशेषद्वयसूचनार्थं आचारप्रदीपे वृंताकं च कलिंगं च वि
ल्वोडुंबरभिस्सटाः उदरे यस्य जीर्यंति तस्य दूरतरो हरिः भिस्सटा दग्धान्नं भीस्सटे दीर्घपाठस्तु भी
स्सटा श्लेष्मातकमिति धन्वंतरिनिघंटुः यत्तु नृसिंहपरिचर्यायां वृंताकं सर्वदा वैष्णवैर्वर्ज्यम् ये
भक्षयंति वृंताकं तेषां दूरतरो हरिरित्यादिनिंदाश्रवणादिति तत्र श्वेतवृंताकपरं तथा च पराश
रः पलांडुं श्वेतवृंताकं कुसुंभं वनकंटकं नालिकां चालपुष्पं च भुक्त्वा दिनमभोजनम् अत्रा
पि पलांडुमिति श्वेतपलांडावेवोपसंह्रियत इति माधवः देहलीदीपकन्यायेन तच्छ्वेतयुक्तमि
ति तदाशयः एतान्यातुरस्यौषधक्रियायामप्रतिषिद्धानीति सम्मतं तथा चतुर्थ्यपि हिमा।
से षष्ठहविष्याशी न पापभागिति हविष्याणि च परिभाषायां द्रष्टव्यानि महाभारते दानधर्मेषु
कंचिद्धर्मं प्रवक्ष्यामि मानुषाणां सुखावहमिति प्रक्रम्य चतुरो वार्षिकान्मासान्यो ददाति ति
लोदकम् भोजनं च यथाशक्ति ब्राह्मणे वेदपारगे अग्निकार्यं च कर्तव्यं परमान्नेन भोजनं
दीपकश्चापि कर्तव्यः पितॄणां सतिलोदकः एतेन विधिना मर्त्यः श्रद्दधानः समाहितः प
शुबन्ध्यशतस्येह फलं प्राप्नोति पुष्कलमिति अत्र क्रमेण पैतृकाण्येव तर्पणश्राद्धदीपदाना

निविधीयते अग्निकार्य्यमग्नौकरणं परमान्नेनेत्यस्यमध्यमणिन्यायेनान्वयः अन्येचचा-
तुर्मास्यनियमाभविष्योत्तरोक्ते निहासेद्रष्टव्याः ॥

अथ चातुर्मास्यव्रतसमाप्तौ विशेष उच्यते चातुर्मास्ये तु यत्त्यक्तं भक्ष्यभोज्यादिकं च यत् चा-
तुर्वार्षिकान्मासान्नियमो यस्य यः कृतः कथयित्वा द्विजेभ्यस्तद्दद्याद्भक्त्या सदक्षिणम् दत्वा
विसर्जयेद्द्विजान् ततो भुञ्जीत तत्स्वयमिति अथ तत्तद्वस्तुत्यागव्रतसमाप्तौ देयद्रव्याणि का-
शीखण्डे पत्रभोजी भवेद्यस्तु कांस्यं त्याज्यं प्रयत्नतः कांस्यस्य नियमे दद्यात्कांस्यं सर्पिः प्रपूरि-
ते ऊर्जे न भक्षयेद्यस्तु लोहमतिद्वद्गतिप्रदम् मधुत्यागे घृतं दद्यात्पायसं च सशर्करं अभ्यं-
गाभ्यवहारे च तैलमूर्जे विवर्जयेत् तैलत्यागे तिलान्दद्यात् द्रोणमात्रान् सकांचनान् वह्ना-
ले कांस्यभोजी यः स क्रमिः पूयशोणिते मांसाशिनोपि ये भूत्वा त्यजेयुस्तेपि कार्तिके निय-
मे मत्स्यमांसानां दद्याद्धेनुं कार्तिके व्रती कूष्माण्डानि समाषाणि विंशत्स्वर्णयुतान्यपि विंशति-
ति कूष्माण्डविशेषणं ॥ कार्तिके मौनभोजी यः सोश्नात्यमृतमेव हि स घण्टां सविलां मौ-
नी सहिरण्यां प्रदापयेत् कार्तिके लवणं त्यक्तं येन व्रतभृता सदा त्यक्ताः सर्वे रसास्तेन त-
स्यागौ गां प्रदापयेत् भूशय्यां कार्तिके कुर्वन्नमं च संस्पृशेद्व्रती पर्य्यंकं भूमये दद्यात्सत-
लं सोपधानकम् फलत्यागे फलं देयं रसत्यागे च तद्रसः धान्यत्यागे च तद्धान्यमथवा शा-
लयः स्मृताः धेनुं दद्यात्प्रयत्नेन सालङ्कारां सकाञ्चनीं एकतः सर्वदानानि दीपदानं तथै-
कतः कार्तिके दीपदानस्य कलां नार्हति षोडशीं तथा दीपं यः कार्तिके दद्यादखण्डं घृतव-
र्तिकं मोहान्धतमसं प्राप्य न स गच्छति दुर्गतिमिति ॥ चातुर्मास्यव्रतासम्भवे कार्तिके किंचि-
द्व्रतमवश्यं कार्य्यं चतुर्ष्वपि च मासेषु न सामर्थ्यं व्रते यदि तदोर्जे व्रतिना भाव्यमप्यर्थफल-
मिच्छता अव्रतः कार्तिके येषां गतो मूढधियामिह तेषां पुण्यस्य लेशोपि न भवेत्सूक-
रात्मतामिति काशीखण्डात् अत्रैव देवाग्रे स्वस्तिकादिकमपि कर्तव्यमिति पाद्मे इदं च का-
र्तिकशुक्लद्वादश्यां वक्तव्यमपि प्रसंगादत्र लिखितं तथा भार्गवार्चनदीपिकायां पाद्मे श-
यनी बोधिनी मध्ये शमी दूर्वापमार्गकैः भृंगराजेन देवांस्तु नार्चयीत कदाचनेति हेमाद्रौ पा-
द्मे आषाढादिचतुर्मासान् अभ्यंगं वर्जयेन्नरः समाप्तौ च पुनर्दद्यात्तिलतैलं घृतं घटम् आषा-
ढादिचतुर्मासं वर्जयेन्नखकृन्तनं वृन्ताकं गृञ्जनं चैव मधुसर्पिर्घटान्वितं कार्तिकान्ते पुनर्द-
म्ब्राह्मणाय निवेदयेत् अन्यान्यपि वर्जनीयकल्पतरुपाद्मोक्तेभ्योग्रेभ्यो ज्ञेयानि ॥

आषाढशुक्लद्वादश्यां तप्तमुद्राधारणमुक्तं रामार्चनचन्द्रिकायां दीपिकायां च तत्र मुद्राधारणं
कर्तव्यं वैष्णवैरेतत्संप्रदायानुरोधतः शयन्यां चैव बोधिन्यां चक्रांकितोपि तत्र चेत् अन्यथा चक्रिया-
नेन वह्निपूतो भवेन्नर इति तथा पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः अ-
तप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशत तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अ-
स्य तन्तवो व्यस्थिरन् इति ऋग्वेदे स होवाच याज्ञवल्क्यस्तत्पुमानात्मद्दिताय प्रेम्णा हरिं भजे-
त् सुश्लोकमौलेर्वं मां एष्यग्निना संधन इति शातपथिकश्रुतौ एतेह्वि सोम ब्रह्मचक्रे सुतमेजना-
न्नाभो येत्तर्त्तवे च षण्णीद्राः मूले बाह्वोर्दधते न्ये पुराणलिङ्गान्यंगे तावकान्यर्पयंति इति सामवेदे
उरुक्रमस्य चिह्नैरंकितालोके सुभगा भवाम इत्यथर्वणे अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा ब्रा-
ह्मणस्य तथा नित्यं तप्तचक्रांकधारणम् इति पाद्मे एतत्प्रकारस्तु रामार्चनचन्द्रिकातो ज्ञेयः पृथ्वी-
वेदोदयादिग्रन्थेषु तु यस्तु संतप्तशंखादिलिङ्गचिह्नतनुर्नरः स सर्वयातनाभोगी चण्डालो जन्म-

क्रोडेषु द्विजस्तप्तमुद्राशङ्खादिलिङ्गाङ्कितस्तनुर्नरः संभाष्य रौरवं याति यावदिन्द्राश्चतुर्द
शेति बृहन्नारदीयोक्तेः शङ्खचक्राद्यङ्कनं च गीतनृत्यादिकं तथा एकजातेरयं धर्मो न जा
तु स्याद्द्विजन्मनः शङ्खचक्रे मृदा यस्तु कुर्यात्तप्तायसेन वा स शूद्रवद्बहिः कार्यः सर्वस्मा
द्द्विजकर्मणः यथा श्मशानजं काष्ठमनर्हं सर्वकर्मसु तथा चक्राङ्कितो विप्रः सर्वकर्मसु
गर्हितः तथा शिवके शवयो रक्तान्त्रूलचक्रादिकान्द्विजः न धारयेत मतिमान्वैदिके वर्त्म
नि स्थित इति विश्वाश्वलायनादिवचनात् ऋग्वेदादिश्रुतीनां तद्धर्मादिस्तुतिपरत्वात् अ
न्यश्रुतीनां च तथाविधानामनुपलम्भादुदाहृतपाद्मवचनस्य चाकरग्रन्थेष्वनुपलम्भाच्चक्रा
दिधारणं शूद्रविषयमेवेत्युक्तं यद्यपि निषेधस्य प्रतिसापेक्षत्वाद्विधिं विना च तद्योगाद्गुप
जीव्यविरोधेन एकजातेरयं धर्म इत्यनेन सामान्यवाक्यानामुपसंहाराद्द्विजातिनिषेधो नित्या
नुवाद इति तदाशय इति निर्णयसिन्धौ यद्यपि विश्वाश्वलायनादिवचनेषु मृदापि शङ्खचक्रा
दिधारणनिषेधः प्रतीयते तथापि शङ्खचक्राङ्कितो विप्रः श्मशानेऽपि म्रियते पि चेत् प्रयागे या ग
तिः सैका सा गतिस्तस्य नारदेति विष्ण्वायुधाङ्कितं चिह्नं गोपीचन्दनमृत्स्नया प्रयागादिषु तीर्थे
षु स गत्वा किं करिष्यतीत्यादिवाराहपुराणवचनैर्मृदाकर्तव्यतावगमेन विहितप्रतिषिद्धत्वाद्वि
कल्पोऽवसीयत इत्यलमनया प्रसक्तानुप्रसक्तचिन्तया यतः पञ्चरात्रागमे मुद्राधारणस्याधि
कारिविशेषमपुरस्कृत्य विहितत्वान्मुद्राधारणं सर्वपुरुषधर्म इति केचिदाहुः ॥ तथा हि
पञ्चरात्रागमे तद्धारणविधिं वक्ष्ये महापातकनाशनं शङ्खचक्रं समाराध्य गन्धपुष्पादिभिः
शुभैः इत्युपक्रम्याग्निनैव सुसन्तप्तं चक्रमादाय साधकं दक्षिणं बाहुमूलं स्वं दहेद्धि नतः
साधकः उच्चारयन्निमं मन्त्रं भ्रूदेशे मां विचिन्तयन् सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ
अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय इमं मन्त्रं समुच्चार्य दक्षिणं बाहुमर्पयेत् पाञ्चज
न्य निजध्यानध्वस्तपातकसञ्चय पाहि मां पापिनं घोरसंसारार्णवतारण इति मन्त्रं समुच्चार्य
दहेत्सव्यभुजं तथेत्युक्तं एवं सनत्कुमारसंहितादिष्वपि सायायणेन चक्रादियारणविधाय
कानि वचनानि दृष्टानि एवं स्मृतिपुराणादिवचनान्यपि चक्रादिधारणविधायकान्युपलभ्यन्ते म
नवपुराणे लीनपापिलिखेद्यस्तु बाहुमूले सुदर्शनम् कुलकोटिं समुद्धृत्य स गच्छेद्वैष्णवं पदमि
ति कूर्मपुराणे चक्राङ्कितनयराः केचित् कुले विष्णुपरिग्रह इति महाभारते भीष्मपर्वणि ब्रा
ह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः अर्चनीयाश्च सेव्याश्च नित्ययुक्ताः स्वकर्मस्विति चिह्नल
क्ष्म च लक्षणमित्यभिधानकोशाद् लक्षणशब्देन तप्तचक्रादिचिह्नमेवाभिवदितं यज्ञोपवीता
दीनां सर्वसाधारणत्वाभावात् विष्णुधर्मे यमकिङ्करसंवादे भवतां भ्रमतामत्र विष्णुसंश्रयमुद्र
या आक्रान्तो गोचरो नैव भविष्यति नरः क्वचित् इतिहाससमुच्चये पुण्डरीकाख्याने केचिच्चक्रा
ङ्किता स्तत्र प्राणिनो विचरन्ति हि विचरन्ति यथा योगं पुण्यतीर्थप्रशंसिन इति तस्मिंश्चक्रादिधारणं सर्वपुरु
षधर्म इति अन्ये तु पञ्चरात्रागमविहितं सुदर्शनादिधारणं शूद्राणां त्रैवर्णिकानां च धर्मः तन्त्रमार्ग
स्थ वैदिकमार्गमार्गान्तरण व वैदिकं तत्पुरस्कृत्य यच्छ्रुतं तन्त्रं समाचरेदिति वचनेन वैदिकतान्त्रिका
कर्मणां क्रमविधायकेन वैदिककर्मानुष्ठानानन्तरं तान्त्रिकसीमन्तोन्नयनादि षोडशकर्मणां विल
क्षणरीत्या विहितत्वात् एवं च तान्त्रिकोपनयनादिसंस्कारस्यैव गुरुलघुकल्पाभ्यां तान्त्रिकपू
जनमुद्राबचफलार्थं तथा विधीयते संस्कारैर्वैष्णवैः शुद्धः पूजार्हो भवति ध्रुवमिति पाञ्चरात्रवचने
न तान्त्रिकपूजाधिकारिसंस्कारकत्वेन तेषां विधानात् अत्रैव प्रकरणबलात् पूजाशब्देन तान्त्रिक

पूजैव गृह्यते च तांत्रिकमार्गस्य च वैदिककर्मानुष्ठानेन सह न नित्यवदनुष्ठाननियमः वैदिका
नां तांत्रिककर्माननुष्ठाने प्रत्यवायबोधकवचनाभावात् किं तु तंत्रमार्गेण श्रेयः प्राप्तुमिच्छतः
स्वेच्छया तंत्रमार्गप्रवेशः एवं चैतादृशतंत्रमार्गप्रविष्टान् प्रत्येव शंखचक्राद्यंकने शिखायज्ञो
पवीतादिधारणवत्तांत्रिककर्मकर्तृसंस्काररूपतया विधीयते न तु स्वतंत्रफलसाधनपापफल।
वत्तांत्रिकपूजाविधिसन्निधिपठितस्य प्रधानकर्मत्वायोगेनांगत्वस्यैवौचित्यात् फलवत्सन्निधा
वफलं तदंगमिति न्यायात् अत एव पांचरात्रे दिव्यसिद्धांते प्रतिपादितं तत्तंत्रप्रवेशार्थं तत्तंत्रो
क्तवर्त्मना दीक्षाचिह्नादिकं कार्यं वैष्णवाग्रे यथाविधि यथा कृष्यादिसंस्कारात्क्षेत्रे सस्यफलो
दयः तथा तापादिसंस्कारात्पुरुषस्य फलोदयः भगवच्चिह्नसंतप्तो भगवच्छास्त्रचोदिते धर्मे
यदि न वर्तेत घातयेत्तं महीपतिरिति सनत्कुमारसंहितायामपि तत्रसंस्कारयुक्तस्तत्तंत्रमार्गम
नाश्रयन् केवलं वैदिकं मार्गं सेवमानः पतत्ययः उपवीतादिवद्धार्याः शंखचक्रगदाध्वजाः तत्र
मार्गप्रवृत्तस्य वैष्णवस्य यथाविधि अप्रसन्नप्रवृत्तानां चिह्नमत्र ध्वजो यथा तत्रमार्गप्रवृत्तानां
तथा चक्रादिधारणम् चक्रादिधारणं पुंसां हरिसंबंधवेदने याति ब्रह्मनिमित्तं द्विकलया हि वि
ग्रहणमिति एवं च सुदर्शनं धारयित्वा वह्नितप्तं द्विजोत्तमः उपनीयविधानेन पश्चात्कर्मस्वयो
जयेदिति वचनेन सुदर्शनादिधारणस्य तांत्रिकोपनयनांगत्वेन प्रतीयते उपवीतादिवद्धार्या इ
ति सनत्कुमारवचनेनैव कुर्यात् उपवीती शिखी विप्रश्चक्रलाञ्छनसंयुतः चक्रलाञ्छन
हीनस्य विप्रस्य विफला क्रियेति यमवचनेनापि लाञ्छनहीनस्य तांत्रिकक्रियावैकल्यमेव प्र
तिपाद्यते पूर्वोक्तप्रमाणेभ्यश्चक्रादिलाञ्छनस्य तांत्रिकक्रियायामेवांगत्वावगमात् चक्रांकिता
यदन्नानि हव्यकव्यानि यानि वै रसांसि तानि गच्छंति न पितॄन्न च देवता इत्यादिवचनैः केवल
वैदिकानामुत्कृष्टाचारस्य निषेधाच्च अथ पूर्वोक्तरीत्या तप्तमुद्राधारणस्य तांत्रिकविषयत्वमस्तु गो
पीचंदनादिकृतसुदर्शनस्य सर्वस्वरूपसाधारणं स्यात् गोपीचंदनतो नित्यं लाञ्छितं यस्य विग्र
हम् शंखचक्रगदापद्मैर्देहे तस्य सदा हरिः कृत्स्नायुधांकनं पुण्यं गोपीचंदनमृत्स्नया प्रयागा
दिषु तीर्थेषु स गत्वा किं करिष्यति ललाटे तु गदा धार्या मूर्ध्नि चापशरौ तथा भ्रूमध्ये नंदकं चैव
शंखचक्रौ भुजद्वये ॥ इत्यादिपद्मपुराणवचनेषु पुरुषविशेषाश्रवणादिति चेन्न अनारभ्या
धीतस्याग्निष्टोमे प्रवृणीतेत्यादिवाक्यादग्निष्टोमार्थत्ववदुत्पत्तिवाक्यसंनिधावश्रूयमाणयजमा
नसंबंधस्यापि गोपीचंदनादिकृतचक्रादिधारणस्य गोपीचंदनमृत्स्नाद्यैः शंखचक्रादिलाञ्छितः
स्वगृहे पूजयेद्देवं पांचरात्रविधानतः इति वाक्यात्तांत्रिकपूजांगत्वावगमादित्याहुः परे तु वैष्णवसं
स्काराः सर्वेऽपि बिम्बालयपूजार्था एव न तु गृहे बिम्बाराधनार्थाः श्रीशास्त्रे संकर्षणप्रोत्सवा।
तानामालयपूजाप्रकाराणामेव बहुशः प्रपंचमानतया आलयपूजाया एव प्रकरणे त्वौचित्या
त् गृहस्थस्य क्वचित्कविधानप्रकरणीयत्वायोगात् तथा च सुदर्शनधारणमालयपूजकदे
वलकादिविषयमेवेत्याहुः वस्तुतस्तु पांचरात्रागमोक्ततांत्रिकानां द्विजात्यादिपदघटितवच
नानां पांचरात्रागमोक्तदीक्षासंस्कृतद्विजातिविषयत्वेन प्रामाण्यं व्यवस्थापितं द्विजात्यादि
पदघटितस्य निषेधशास्त्रस्यापि तद्विषयत्वमेव युक्तं तथा च विहितप्रतिषिद्धत्वाद्ग्रहणाग्रह
णत्संगावाज्यभागवद्विकल्पो मुद्राधारणस्य वैदिकतांत्रिकदीक्षासंस्कृतानां न च शुद्धवैदि
कानामेव धात्र्यादिप्रसक्तं चक्रादिधारणं निषिध्यत इति वाच्यं बहूनां निषेधवाक्यानां विधाय
कत्वे संभवति नांतरीयेन दिवेत्यादिवदनुवादकत्वानौचित्यात् न वाष्टदोषदुष्टविकल्पापा

त्तिः अप्रामाण्यापर्यायानुवादकत्वापेक्षया फलमुखत्वेन विकल्पस्य स्वीकर्त्तुमुचितत्वात्
निषेधवाक्यानि बहूनि पुराणादिषूपलभ्यन्ते स्वशरीरेऽन्यदेहे वा अनेककारणाद्द्विज इति इदं।
द्विमनुवचनं ब्रह्मविष्णुरुद्राणां चिह्नमेकस्य धारयेदिति वचनानुरोधेन द्विजशब्दप्रतिपाद्या-
नां ब्राह्मणादीनां त्रिविधवेषाणां ब्रह्मविष्णुरुद्रचिह्नाङ्कनरूपनिषेधपरं शातातपस्मृतौ नाङ्कयेन्न
देहे ह्यन्तं देवतायुधलाञ्छनैः अङ्कयेद्यदि वा मोहात्पतत्येव न संशय इति यमस्मृतौ नाङ्कये-
न्न देहे ह्यन्तं देवतायुधलाञ्छनैः दहनाल्लेखनाद्विप्रः पातित्यं याति तत्क्षणात् इति बौधायनस्मृ-
तौ नाङ्कनाय देहे देहं दहेच्चेत्कामकारतः नाधिकुर्वीत तद्ग्रामान्श्रौतस्मार्तेषु कर्मस्विति अन्य-
त्रापि तप्तमुद्राधारणे वैष्णवचापधारणेऽपि पाखण्डाः सर्व एवैते सर्वकर्मबहिष्कृता इति स्मृति
सारसंग्रहे चण्डालपतितं व्यंगं तप्तचक्रधरं द्विजं सूतिकां मृतिदं दृष्ट्वा सवासा जलमाविशेदिति
ग्रन्थान्तरे कुक्कुटश्ववराहश्च तप्तचक्रधरस्तथा रजस्वला च शूद्रश्च पञ्चैते श्राद्धदूषकाः चक्राङ्कि-
ताय दत्तानि हव्यकव्यानि यानि वै रक्तासिता निगच्छन्ति न पितॄन्न च देवताः पाखण्डिनश्च पति-
ताश्चैव चक्राङ्किता द्विजाः पुण्यकर्माणि तेषां वै सन्निधिर्नेष्यते क्वचित् तप्तचक्राङ्कितं विप्रं न पा-
पयेत्पुण्यकर्मणि तं दृष्ट्वा च द्विजो भूमावशुद्धिमवाप्नुयात् अज्ञानाद्यदि वा लोभादङ्कितो
वा स्वदर्शनम् यत्नेऽकुलयं तं दृष्ट्वा सवासा जलमाविशेत् भुजाग्रे सलिलेनैव विलिखेद्यः सुद-
र्शनम् वेदशास्त्रविनीतोऽपि दहत्यासप्तमं कुलमिति चक्राङ्कितस्तनुर्वापि राजलिङ्गाङ्कितोऽपि
वा नाधिकारी च विज्ञेयः श्रौतस्मार्तेषु कर्मसु शंखचक्रे च लिङ्गं च यो मृच्छा धारयेत्पुमान् पाखण्-
डः स हि विज्ञेयः सर्वकर्मबहिष्कृतः पाखण्डिनं पाशुपतं विकर्मस्थं निरीश्वरम् विवासयेत्स्वरा-
ष्ट्रात्तु सर्वानेतान्नवैदिकानिति तापरोपस्तवर्णादिकृतचक्रादिलाञ्छनम् विधीयते हि शूद्राणां
न द्विजानां कथंचनेति नारदवचने आदित्यपुराणे वेदेषु यज्ञभागेषु यस्य नास्त्यधिकारिता
स तापयित्वा चक्रादि धारयेत्स्वभुजद्वयमिति शंखचक्राद्यङ्कनं चन्नृत्यगीतादिकं तथा ए-
कजातेरयं धर्मो न जातस्य द्विजन्मनः यथा श्मशानजं काष्ठमनर्हं सर्वकर्मसु तथा च-
क्राङ्कितो विप्रः सर्वकर्मसु गर्हितः शंखचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा स शूद्रवद्ब-
हिः कार्यः सर्वस्माद्द्विजकर्मणः इति किंच लीलयापि लिखेद्यस्तु बाहुमूले सुदर्शनम् कु-
लकोटिं समुद्धृत्य स गच्छेद्वैष्णवं पदमित्यादिमानवादिवचनैः स्वतन्त्रफलार्थत्वविहितस्य सु-
दर्शनधारणस्य पाञ्चरात्रागमविहितदीक्षाकर्तृसंस्कारकत्वे प्रमाणाभावः न च प्रकरणा-
त्तदवगमः प्रकरणापेक्षया बलीयसा वाक्येन फलार्थतया विनियुक्तस्य दुर्बलेन प्रकरणेन-
विनियोगासंभवात् किंचात्र प्रकरणमेव न संभवति परस्पराकाङ्क्षालक्षणं हि प्रकरणं
न च फलार्थत्वेन विनियुक्तस्य मुद्राधारणस्योपकार्याकाङ्क्षास्ति न च चक्रलाञ्छनस्य विफ-
लीक्रियते पूर्वोक्तवचनेन तान्त्रिकाङ्गत्वे प्राप्ते इति वाच्यं अतः क्रियाशब्देन फलसाधनपञ्चरा-
त्रागमविहितहोमादिक्रियाया अभिधानेन पूजादेः क्रियाशब्देनाभिधेयत्वेन तदङ्गत्वे प्रमा-
णाभावात् न च वैष्णवत्वस्य सिद्ध्यर्थमित्यादिवचनैर्दीक्षाङ्गत्वावगमः तत्र वैष्णवत्वस्य सिद्ध्यर्थं सं-
भवेन वैष्णवत्वस्य विष्णुभक्तेर्व्यञ्जकत्वेन प्रतीतेः न चोपनीतादिवद्धार्याः शंखचक्रगदादयः तं-
त्रमार्गप्रवृत्तस्य वैष्णवस्य यथाविधीति वचनेन तान्त्रिककर्माङ्गत्वावगमः तद्वचनस्य शंखचक्रा-
दिधारणे तन्त्रमार्गप्रवृत्तवैष्णवस्वरूपकर्तृविधायकत्वात् शुद्धतान्त्रिकविषयत्वेन मिश्रमार्गप्रवृ-
त्तवैष्णवविषयत्वाभावाच्च एवं च सुदर्शनं धारयित्वा वह्नितप्तं द्विजोत्तम उपनीयवि॥

यानेनपश्चात्कर्मसुयोजयेदितिवचनेनत्वाप्रत्ययः कालमात्रविधायकः नत्वंगत्वबोधकोपिदर्श
पूर्णमासाभ्यामिष्ट्वासोमेनयजेतेतिवत् वस्तुतस्तुचक्रांकिततनुर्वापिराजन्लिंगांकितो
पिवा नाधिकारीपरिज्ञेयः श्रौतस्मार्तेषुकर्मसुइतिबृहद्दाक्षिकवचनेचक्रांकिततनोः ।
श्रौतस्मार्तकर्मस्वधिकारनिषेधः प्रतीयते चक्रांकिततनुश्चतंत्रदीक्षासंस्कृतएवतस्य
चवैदिकंतु पुरस्कृत्वापश्चात्तंत्रंसमाचरेदितिवचनेनवैदिककर्माधिकारप्रतीतेर्मिश्रमा
र्गप्रवृत्तानांस्कंदविकल्पसिद्धानिनचकेवलतंत्रमार्गप्रवृत्तानामपिविकल्पःस्यादितिवा।
च्यं वैदिककर्माधिकारिणामेवनिषेधविधिविषयत्वेनतत्रैवविकल्पोचितत्वात् वैदिक॰
कर्माधिकारशून्यानामेवकेवलतंत्रमार्गाधिकारात् एवं नारदीयेप्यसवर्णादिकृतंचक्रा॰
दिलांछनं विधीयतेहिशूद्राणांनद्विजानांकथंचनेत्यादिमपुराणवचनेकथमपीति कृ
थंचनेतिपदेनघटितेनांत्रिकदीक्षासंस्कृतत्वेपिचक्रादिधारणनिषेधपरैः तस्मात्केवलवैदि
कैःशंखचक्रादिधारणंनकार्यं ज्ञापकप्रमाणाभावात् मिश्रमार्गप्रवृत्तैः पूर्वोक्तदिशादिवि॰
कल्पेनानुष्ठेयं केवलतंत्रमार्गप्रवृत्तैस्तुनियमेनानुष्ठेयमितिसमानाद्वृत्तानुवृत्तिपरंपर॰
येत्यलंव्यवस्था अथमत्स्यपुराणोक्तंविभूतिद्वादशीव्रतं नंदिकेश्वरउवाच शृणुनारद व॰
क्ष्यामिविष्णोर्व्रतमनुत्तमं विभूतिद्वादशीनामसर्वामरविभूषिता कार्तिकेवाथवैशाखेमार्ग
शीर्षेऽथफाल्गुने आषाढेवादशम्यांतुशुक्लायांलघुभुङ्नरः कृत्वासायंतनींसंध्यांगृह्णीयान्नि
यमंबुधः एकादश्यांनिराहारःसमभ्यर्च्यजनार्दनं द्वादश्यांद्विजसंयुक्तःकरिष्येभोजनंततः
तदविघ्नेनमेयातुसाफल्यंमधुसूदन ततःप्रभातेचोत्थायकृतस्नानजपःशुचिः पूजयेत्पुंड
रीकाक्षंशुभमाल्यानुलेपनैः विभूतिदेनमःपादौविशोकायेतिजानुनी नमःशिवायेत्यूरूच
कटिंवैविश्वरूपिणे कंदर्पायनमोमेढ्रमादित्यायनमःकरौ दामोदरायेत्युदरंवासुदेवायच
स्तनौ माधवायेत्युरोविष्णोःकंठमुत्कंठिनेनमः श्रीधरायमुखंकेशान्केशवायेतिनारद पृ
ष्ठंशार्ङ्गधरायेतिश्रवणौवरदायवै स्वनाम्नाशंखचक्रासिगदावरदपाणये शिरःसर्वात्म
नेब्रह्मन्नमइत्यभिपूजयेत् मत्स्यमुत्पलसंयुक्तंहैमंकृत्वातुशक्तितः उदकुंभसमायुक्तं।
त्वग्रतःस्थापयेद्विभोः गुडपात्रंतिलैर्युक्तंसितवस्त्राभिवेष्टितं रात्रौजागरणंकुर्यादितिहास
कथादिकं प्रभातायांतुशर्वर्यांब्राह्मणायकुटुंबिने सकांचनोत्पलंदेवसोदकुंभंनिवेदयेत्
यथानमुच्यसेविष्णोःसदासर्वविभूतिभिः तथामामुद्धराशेषदुःखसंसारकर्दमात् दशावता
ररूपाणिप्रतिमासंक्रमान्मुने दत्वाद्वैयंतथाव्यासमुत्पलेनसमन्वितं प्रतिमासंतुकर्तव्याः पु
नपःकांचनेनवै कांचनस्यैवपद्मस्यसंस्थाप्योपरिपूजयेत् पुष्पधूपादिनैवेद्यैर्भक्ष्यभोज्यैः स
दीपकैः वस्त्रैराभरणैश्चैवयथाविभवसारतः रात्रौजागरणंकुर्याद्गीतनृत्यादिभिर्नरः ततःप्र
भातेविमलेकृतस्नानादिकक्रियः उपदेष्टृतदातव्यंसर्वमेतत्समाहृतं प्रतिमासपुराणज्ञेवे।
दवेदांगपारगे ततःसंवत्सरांतेचविश्वेशांशक्तिपूर्वकं शक्तिपूर्वकमिति सविभूतिपुरःसरं
कृत्वासंपूज्यलवणपर्वतेनसमन्वितं लवणपर्वतदानविधिस्तुदानखंडेगवेषणीयः शय्यांसो
पस्करांश्रेष्ठांगांचैवोपस्करान्वितां ग्रामंदेशपतिर्दद्यात्क्षेत्रंग्रामपतिस्तथा निवर्तनंचैवनृपतिर्भ
वनंत्वसमृद्धिमत् एवंविभवसारेणपूजयित्वेहशंकरं अन्यानपियथाशक्त्यातर्पयित्वाद्विजोत्त॰
मान् वस्त्रान्नगोहिरण्यादि सर्वमास्थायवैत्तम यत्रसंतनत्वहरिस्तोषमायात्यसंशयं यश्चाति
निःस्वःपुरुषोभक्तिमान्माधवंप्रति पुष्पार्चनविधानेनसकुर्याद्वत्सरत्रयं अनेनविधिनाय

स्त्वविभूतिद्वादशीव्रतं कुर्यात्सपापनिर्मुक्तः पितॄणांतारयेच्छतं सप्तजन्मन्यसौमर्त्योविभू-
तिंप्राप्नुयात्परां रोगदौर्गन्ध्यपापानांभोजनेनोपजायते भक्तिश्चयत्तपुरुषेतस्यजन्मनिजन्म-
नि प्राप्नुयादच्युतेस्थानमच्युतस्यप्रसादतः इयंचाखंडितकार्याविभूतिद्वादशीनरैः सर्वपा।
पप्रशमनीसर्वफलप्रदायिनी इतिकल्मषविदारणांजनानांपठतिसदायशृणोतिवेतिभक्त्या
मतिमपिचददातिदेवलोकेवसतिचिरंचसंपूज्यतेऽमरौघैः इतिमत्स्यपुराणोक्तविभूतिद्वाद।
शीव्रतं ॥ अथस्कंदपुराणोक्तंदेवशयन्येकादशीव्रतं तथाचपद्मपुराणे युधिष्ठिरउवाच
आषाढस्यसितेपक्षेकिंनामैकादशीभवेत् कोविधिःकेनवाचीर्णाकिंपुण्यंचवदस्वमे श्री
कृष्णउवाच कथयामिकथांपुण्यांस्वर्गमोक्षप्रदायिनीं कामिकानामसंज्ञेतिसर्वपापहरा
परा यस्याःश्रवणमात्रेणवाजपेयफलंभवेत् सत्यंसत्यंमयाप्रोक्तंनातःपरतरंनृणां पापि-
नांपापनाशायतृणदावानलोपमा अतःपरंनरश्रेष्ठनैवमोक्षप्रदायिनी तस्मात्सत्कारणा-
द्राजन्नृणांगतिरुत्तमा वैसवैर्ममभक्तैश्चसततंश्रुतिपोषकैः आषाढेवामनोयैस्तुपू।
जितस्तैर्जगत्त्रयं वामनःपूजितोयेनकमलैःकमलेक्षणः तेनार्चितंजगत्सर्वंत्रयोदेवाःस
नातनाः एतस्मात्कारणाद्राजन्कर्तव्यंहरिवासरं युधिष्ठिरउवाच संशयोस्तिमहाभागश्रू-
यतांमेजनार्दन कथंसुप्तोसिदेवेशकथंत्वंबलिमानदः संतुष्टःपृथिवीदेवकिंकुर्वंतिजु।
नास्तदा किंव्रतंकोविधिस्तेवचात्तुर्मास्येसमागते एतद्विस्तरतोदेवसंशयंछिंधिमेप्रभो
श्रीकृष्णउवाच श्रूयतांराजशार्दूलकथांपापहरांपरां बलिर्वैदानवःपूर्वमासीत्त्रेतायुगेनृ।
प पूजयत्येवमांनित्यंमद्भक्तोमत्परायणः यज्ञैस्तुविविधैःसूक्तैर्जपन्नास्तेसनित्यशः द्विजा-
नांपूजकोनित्यंयज्ञकृद्धर्मकृन्नतः परंसविंदविद्वेषादिंद्रलोकमजीजयत् मद्दत्तमिंद्रलोकंतजि-
तंतेनदुरात्मना एवंविधोयंवहुधास्तुतइंद्रेणसूक्तिभिः गुरुणादेवतैःसार्धंबहुधापूजितोह्य-
हं ततोवामनरूपेणह्यवतारेतुपंचमे अत्युग्ररूपेणातदासर्वब्रह्मांडरूपिणा बालकेनजितः
सोपिसत्यमालंव्यतस्थिवान् मयाव्याप्तंचतत्सर्वंत्रैलोक्यंसप्तसागरं एवंरूपंतदाकृत्वाश्रूयतां
राजसत्तम संकल्पमात्रेणाकृतंपदत्रयमिदंक्रमात् प्रार्थ्यमानेमयितदासंकल्पःपतितःकरा-
त् भूलोकेतुपदंन्यस्यभुवर्लोकेतुजानुनी स्वर्लोकेतुकटिंन्यस्यमहर्लोकेतथोदरं जनलोके
चहृदयंतपोलोकेचकंठकम् सत्यलोकेमुखंस्थाप्यउत्तमांगंतदूर्ध्वके सूर्यचंद्रग्रहाःसर्वेनक्ष-
त्रयोगसंयुताः देवाःसेंद्राश्चनागाश्चममतस्थुस्तथोदरे स्तुवंतोवेदसंभूतैःसूक्तैश्चविविधैस्तदा
करेगृहीत्वातुबलिंत्रिपादैःपूरितामही अर्धंतत्सत्पदंवैतदान्यस्यपदंबद्द त्रिभीरसातलेराजन्
दानवोममपूजकः त्रिभिस्तुदानवेचैवकिमकुर्वंततःपरं विनयावनतोसौतुप्रसन्नोहंजनार्दनः
आषाढशुक्लपक्षेवैकामिकाहरिवासरः तस्यामेकाचममूर्तिर्बलिमाश्रित्यतिष्ठति द्वितीयाशेषपृष्ठ-
केतीरेक्षीरसागरोत्तमे सुप्तेमयिहृषीकेशोयावदायातिकार्तिकी तावद्यन्मवेत्पुण्यंसर्वपुण्योत्त।
मोत्तमं एतस्मात्कारणाद्राजन्कर्तव्यासाप्रयत्नतः नातःपरतराकाचित्पवित्रापापनाशिनी य-
स्यांप्रसुप्तोमेदेवःशंखचक्रगदाधरः श्रीयुक्तंपूजयेद्देवंत्रैलोक्यस्यपितामहं रात्रौजागरणंकृत्वा।
भक्त्यायुक्तोविशेषतः एवंयःकुरुतेराजन्नेकादश्याविधानकं सर्वपापहरंचैवभुक्तिमुक्तिप्रदायकं
शृणुयाद्वैवयोमर्त्यःकथांपापहरांपरां अश्वमेधस्ययज्ञस्यफलंप्राप्नोतिमानवः ॥ ॥

इतिश्रीस्कंदपुराणोदेवशयनीकामदैकादशीव्रतकथा

अस्यामेवाषाढशुक्लैकादश्यांमन्वादितिथिश्राद्धंकर्तव्यंतत्रैकादशीमध्याह्नव्यापिनीग्राह्येति

पाकमन्वादिकृत्येभियाजत् आषाढशुक्लैकादशीकृत्यनिर्णयः अत्राषाढशुक्लद्वादश्यामनुराधा
योगरहितायांपारणंकुर्यात् तदुक्तंहेमाद्रौभविष्ये आभाकासितपक्षेषु मैत्रश्रवणरेवती सं
गमेनहिभोक्तव्यंद्वादशीव्रतमाचरेत् अस्यार्थः ॥ आषाढभाद्रपदकार्तिकशुक्लद्वादशीष्वनुरा
धाश्रवणरेवतीयोगे एकादशीव्रतस्यपारणंनकुर्यात् एषुत्रिष्वप्येकादशीषूपवासव्रतक
र्तव्यतोक्ता तथाचभगवद्वचनं मत्स्वपनेतुमदुत्थानेमत्पार्श्वपरिवर्तनेनरोमूलफलाहारीहृ
दिशल्यंसमर्पयति यदाषाढद्वादश्यांमैत्रेणाद्ययामात्मकोयोगस्तदोपवासद्वयप्रसंगादशक्तो
द्विभिर्मैत्राद्यपादयोगएवपारणेवर्ज्यः तदुक्तंविष्णुधर्मोत्तरे मैत्राद्यपादेस्वपतीहविष्णुः पौष्णा
न्त्यपादेप्रतिबोधमेति श्रुतेश्चमध्येपरिवर्तमेतित्रिष्वपिप्रबोधपरिवर्तनमेववर्ज्यमिति इदंत्वनुरा
धायोगेपारणवर्जनंकृतादियुगांतरविषयं तथाचज्योतिर्निबंधेमहाभारते आभाकापौसिते·
पक्षेमैत्रांत्यश्रुतिरोहिणी संगमेनैवभोक्तव्यंद्वादश्यांद्वादशीहरेत् मैत्रंतुकृतेत्याज्यंत्रेतायां
रेवतींत्यजेत् द्वापरेरोहिणीत्याज्याकलौतुश्रवणंत्यजेदिति अत्रवक्तव्योव्यवस्थाविषयः श्रव·
णायोगेवक्ष्यते अथपुनरपिदेवशयनमुपक्रम्य सर्वेषांदेवतानांशयनकालःप्रदर्श्यते वामन
पुराणे एकादश्यांजगत्स्वामीशयनंपरिकल्पयेत् शेषाहिभोगपर्यंकेकृत्वासंपूज्यकेशवं कृ।
त्वापवित्रकंचैवसम्यक्संपूज्यचद्विजान् अनुज्ञांब्राह्मणेभ्यश्चद्वादश्यांप्रयतः शुचिः लब्ध्वापीतांब
रधरः स्वस्तिनिद्रांसमापयेत् त्रयोदश्यांचततः कामः स्वपतेशयनेशुभे कदंबानांसुगंधानांकुसु
मैः परिकल्पिते चतुर्दश्यांतथायक्षाः स्वपंतिसुखशीतले सौवर्णपंकजकृते सुखास्तीर्णोपधान
के पौर्णमास्यामुमानाथः स्वपतेचर्मसंभवे वैयाघ्रेसजटाभारंसमुद्ग्रथ्यचचर्मणा यदादिवा·
करोराशिंसमायातिचकर्कटं ततोमराणांरजनीभवतिदक्षिणायनं नीलोत्पलमयेशुभ्रेब्रह्मा
प्रतिपदितथा तल्पेस्वपितिलोकानांदर्शयन्मार्गमुत्तमं विश्वकर्माद्वितीयायांतृतीयायांगिरेः
सुता विनायकश्चतुर्थ्यांतुपंचम्यामपिधर्मराट् षष्ठ्यांस्कंदःस्वपितिहिसप्तम्यांभगवान्रविः
कात्यायनीतथाष्टम्यांनवम्यांकमलालया दशम्यांभुजगेशाश्चस्वपंतेवायुभोजनाः एकादश्यां
तुकृष्णायांसाध्याब्रह्मन्स्वपंतिच ॥ एवमेकादश्यांशयनपरिकल्पनं द्वादश्यांनिद्रोदयः इति·
वामनपुराणात् अत्रविभूतिद्वादश्यांलवणपर्वतदानमुक्तंपाद्मे उत्तमः षोडशद्रोणैः कर्तव्यो·
लवणाचलः मध्यमः स्यात्तदर्द्धेनचतुर्भिरधमः स्मृतः वित्तहीनोयथाशक्त्याद्रोणादूर्ध्वंतुकारयेत् चतु
र्थांशेनविष्कंभपर्वतान्कारयेत्पृथक् अत्रपृथगित्युक्तेः प्रत्येकमेकद्रव्यचतुर्थांशपरिमितेनलव·
णेन विष्कंभपर्वतचतुष्कमयंधान्यपर्वतवत् विष्कंभमंत्रेषुशैलमितिमदनः अत्रविधानंधान्यप
र्वतवत् तत्रमंत्राश्च सौभाग्यरससंभूतोयतोयंलवणोरसः तदात्मकत्वान्मांपाहिपापान्नगो
त्तमः यस्मादन्नरसाः सर्वेनोत्कटालवणंविना प्रियंचशिवयोर्नित्यंतस्माच्छांतिंप्रयच्छमे विष्णु
देहसमुद्भूतंयस्मादारोग्यवर्द्धनं तस्मात्पर्वतरूपेणपाहिसंसारसागरात् अनेनविधिनायस्तुद·
द्याल्लवणपर्वतं उमालोकेवसेत्कल्पंततोयातिपरांगतिं संकल्पश्चकल्पपर्यंतमुमालोकप्राप्ति
समनंतरपरमगतित्वकामईश्वरप्राप्तिकामोवालवणाचलदानमहंकरिष्ये एवमेवदानविधानं
इतिलवणाचलदाने ॥ अथचातुर्मास्येधारणापारणाव्रतविधानं भविष्योत्तरे श्रीकृष्णउवाच
भ्रूणांकौंतेयवक्ष्यामिधारणापारणाव्रतं वंधवादिवधेदोषः सर्वेंद्रियनियामकं चातुर्मास्येतिख्या
वादौमासिकौंतेयसव्रतं पुण्याहंकारयेत्पूर्वमेकादश्यांशुभेदिने पश्चात्संकल्पनियमंनदार·
म्यव्रतंचरेत् आदौमासिनयाचांतेचातुर्मास्यमथापिवा एकस्मिन्धारणंकार्यंपारणंचतथापरं

उपवासो यः पारणं स्यात्पारणं भोजनं भवेत् धारणाख्यदिने प्राप्ते अर्घ्यं पूर्वं निवेदयेत् पारणे तु ततः
कार्यं मंत्रमष्टाक्षरं जपेत् अष्टोत्तरशतं दद्यादर्घ्यं देवाय तन्मनाः समाप्ते मासि राजेंद्र कुर्यादुद्याप-
नं बुधः चातुर्मास्यव्रतं चाद्यमासे मासे तु कारयेत् उपवासदिने प्राप्ते मंडपाद्यं कारयेत्तदा आचार्यं
वरयेत्पश्चाद्ब्राह्मणांस्तु ततः परं कुर्यात्प्रतिमां तत्र लक्ष्मीनारायणस्य च पूर्णकुंभे तु तां स्थाप्य पू-
जयेद्विधिना नृप पंचामृतैस्तथा शुद्धैस्तुलसीदलसंयुतैः मालतीकेतकीमिश्रमल्लिकाकुसु-
मैस्तथा रात्रौ जागरणं कुर्यात्पुराणपठनादिभिः प्रातःकाले तु संप्राप्ते ब्राह्मणांस्तु निमंत्रये-
त् मासे विप्राः पंचदश द्विमासे द्विगुणान्नृप चातुर्मास्ये तथा राजन् तथा त्रिंशति भूसुरान् आ-
नीय संख्यया राजन् ब्राह्मणांस्तान्निमंत्रयेत् पश्चात्पूजादिकं कृत्वा देवपूजां समाचरेत् पश्चादग्निं
समाधाय होमं कुर्याद्यथाविधि निवसीदेति मंत्रेण जुहुयाच्च तिलोदकं अपराजिके मंत्रेण
जुहुयाच्च तिलोदकं अष्टाक्षरेण मंत्रेण पायसं जुहुयात्ततः लक्ष्मीनारायणो देवः स्थानत्रयेपि
देवता पूर्णाहुतिं ततो हुत्वा होमशेषं समापयेत् ब्राह्मणान्भोजयेत्पश्चादाचार्यं पूजयेत्ततः एवं
कृते महाभागा ब्रह्महत्यादिपातकैः मुच्यते नात्र संदेहः सम्यक्कृत्वा महाव्रतं सुग्रीवस्तु पुरा राजन्
कृत्वा वालिनमाहवे नारदोपि पुरा राजन् पूर्वजन्मनि शूद्रजः द्विजेभ्य उपदेशात्तु सकृद्धारणपारणं
होमादिकं विना चापि व्रतस्यास्य प्रभावतः जितेंद्रियस्ततो भूत्वा ब्रह्मभूदृषिणां वरः तस्मात्सर्वप्रय-
त्नेन धारणापारणं कुरु इंद्रियाणां वशार्थाय सर्वपापापनुत्तये तस्मात्त्वमपि राजेंद्र कुरुष्वेदं व्रतो-
त्तमं किं दानैरल्पपासाद्यैः किमन्यैश्च व्रतैर्यमैः धारणापारणं कुर्याद्व्रतानामुत्तमं व्रतं सर्वयज्ञेषु
तीर्थेषु सर्वदानेषु यत्फलं तत्फलं समवाप्नोति कृत्वा धारणापारणं इदं व्रतं महापुण्यं तपसा-
मुत्तमं तपः यज्ञानामुत्तमो यज्ञो व्रतानामुत्तमं व्रतं तस्मात्त्वमपि राजेंद्र कुर्विदं विधिपूर्वकं वाय-
वादिवेधदोषैश्च व्यसनात्तमं श्रयं इतितं संप्रभाष्याथ कृष्णः स्वां च पुरीं ययौ दृश्यमानः पौरजनैः
समस्तैः पांडुपुत्रकैः युधिष्ठिरोपि राजर्षिश्चकारेदं महाव्रतं विमुक्तः सर्वपापेभ्यो वंशापश्च तथा
भवत् इति भविष्योत्तरे धारणापारणव्रतम्

अस्यामेव द्वादश्यां कृत्यांतरं नारदीये आषाढशुक्लद्वादश्यां विप्रान्द्वादश भोजयेत् मधुरान्ने-
न संपूज्य पट्टयुग्मांगुलादिभिः क्रमात् तेभ्यो वासांसि दद्याच्च ब्रह्मसूत्राणि मुद्रिकाः पात्राणि च दद्-
द्यात् विष्णुर्मे प्रीयतामिति महाभारते दानधर्मेषु आषाढमासि द्वादश्यां वामनेति च पूजये-
त् नरमेधमवाप्नोति पुण्यं च लभते महदिति आषाढशुक्लत्रयोदशीमारभ्य पंचदिनात्मक-
मुमामहेश्वरमूर्तिपूजाव्रतं नारदीये शुचिशुक्लत्रयोदश्यामेकभक्तं समाचरेत् पूजयित्वा जग-
न्नाथामुमामाहेश्वरीं ततः हेममयीं रौप्यमयीं वा यथाशक्ति विधाय च सिंहोपस्थो देवगृहे गो-
ष्ठे ब्राह्मणवेश्मनि स्थापयित्वा प्रतिष्ठाप्य देवमंत्रेण नारद ततः पंचदिनं पूजा चैकभक्तव्रतं त-
था स्त्रीवापि दिवसे प्रातः स्नात्वा संपूज्य तौ पुनः समर्पणीयो विप्राय वेदवेदांगशालिने वर्ष-
वर्षं ततः पश्चाद्द्वितीये पंचवार्षिकं तदंते धेनुयुग्मेन सहितौ तौ प्रदापयेत् अयं नरो वा नारी वा कृ-
त्वा व्रतमिदं शुभं नैव दांपत्यविच्छेदं लभते सप्तजन्मसु ॥ इति सोद्यापनमुमामाहेश्वरं व्रतं
आषाढत्रयोदश्यां जयापार्वतीव्रतं भविष्योत्तरे श्रीलक्ष्मीरुवाच देवदेव जगन्नाथ भुक्तिमु-
क्तिप्रदायक कथयस्व प्रसादेन लोकानुग्रहकाम्यया नारीणां यद्व्रतं चैव अवैधव्यकरं शुभं
येन चीर्णेन नारीणां बहुफलदं भवेत् श्रीभगवानुवाच सम्यक्पृष्टं त्वया देवि न च मिथ्यात्वयोदि-
तं तद्व्रतं कथयिष्यामि नाख्यातं कस्यचित्तया येन चीर्णेन नारीणामवैधव्यं प्रजायते अकथ्यं

परमं गुह्यं पवित्रं पापनाशनं आषाढे चैव कर्तव्यं शुक्लपक्षे त्रयोदशी गृह्णीयान्नियमं तत्र
दंतधावनपूर्वकं तत्र दंतधावनमंत्रः आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ब्रह्मप्र·
ज्ञां च मेधां च त्वं नो देहि वनस्पते नियमात्फलमाप्नोति निष्फलं नियमं विना तस्मात्सर्वप्र·
यत्नेन व्रतं नियमपूर्वकं एवं भक्त्या व्रतं चैव करिष्ये विधिनाधुना क्षाररहितयान्येन तेन·
पापं व्यपोहतु उमामाहेश्वरौ कार्यौ सुवर्णरजतादिभिः अथवा मृण्मयौ सिंहवृषदेहोप
रिस्थितौ गोष्ठे देवालये वापि तथा ब्राह्मणवेश्मनि स्थापयेद्देवमंत्रेण प्रतिष्ठां तत्र कारयेत्
तद्दिने दंतकाष्ठं च यूथिकाया वरानने कुंकुमागुरुकस्तूरीसिंदूरैरष्टगंधकैः चंपकैः सम
पत्रैश्च यूथिकायास्तोऽद्भवैः ग्रीवासूत्रेण हूर्वीया पूजयित्वा विधानतः अर्घ्यं णवातिशुभ्रेण चो
नरीयगुणेन वै श्रीवृत्तद्राक्षादाडिमैस्तथा जातिफलेन च आर्यादेवी च शर्वाणी शंकरस्य म
हाप्रिये अर्घ्यं गृहाण देवेशि मम चोपरि कृपां कुरु इति पूजा प्रकर्तव्या कथां शृणु द्विजोत्तमा
त् श्रीलक्ष्मीरुवाच अच्युतायनमस्तुभ्यं पुरुषादिस्वरूपिणे व्रतानामुत्तमं महाप्राप्तं त्वं हृदि
तयकारक कथयस्व प्रसादेन व्रतानां व्रतमुत्तमं केन चादौ पुराचीर्णं मर्त्यलोके प्रकाशितं
एतत्सर्वं प्रसादेन ब्रूहि मे जगदीश्वर श्रीभगवानुवाच अथातः संप्रवक्ष्यामि पार्वत्यास्तेक·
थामिमां यां श्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः आसीत्पुरा कृतयुगे कौंडिन्यनगरे वरे
ब्राह्मणो वसते तत्र सत्यशौचपरायणः गुणवाञ्छीलसंतोषी वामनो नाम नामतः तस्य भा
र्या प्रिया सत्या रूपलक्षणसंयुता धनाढ्यो वेदविदुषो गृहे वै सर्वसंपदः केन कर्मविपाके
न संतानरहितोऽभवत् अपुत्रस्य गृहं शून्यं श्मशानसदृशं भवेत् दंपती तेन दुःखेन तप्तौ मो·
जातौ शरीरतः एकदा कालयोगेन नारदो गृहमागतः अर्घ्यपाद्यं कृतं तेन कथां चक्रे मुना
सह वामन उवाच नारद त्वं मुनिश्रेष्ठ सर्वज्ञानपरायण कथयस्व प्रसादेन कथं दुःखं प्रशा
म्यति दानेन केन देवर्षे व्रतेन नियमेन च तीर्थेन केन देवर्षे संतानं मे भविष्यति नारद उ।
वाच शृणु विप्र प्रवक्ष्यामि संतानं ते भविष्यति वनस्य दक्षिणे पार्श्वे बिल्ववृक्षस्य मध्यतः
स्थितं लिंगं च विख्यातं भवानीसहितं परं सपर्यां कुरु यत्नेन तस्मोद्भास्यति संततिं अपूज्यं लिं
गमभ्यर्च्य पूज्यस्य च प्रदीयते अनाथप्रेतसंस्कारं कोटियज्ञफलं लभेत् इत्युक्त्वा नारदः स्व।
र्गं गतो वै मुनिपुंगवः वनमध्यगामी दीनौ दंपती पुत्रकांक्षिणौ बिल्वमध्यगतं दृष्ट्वा शिव।
लिंगं पुरातनं बिल्वपत्रेण जीर्णेन लिंगं तत्रैवाच्छादितं विहाय बिल्वपत्राणि तदादाय विले·
पनं पंचामृतेन प्रक्षाल्य पूजां कृत्वा मनोरमां नित्यं नियमसंयुक्तौ पूजयन्परमेश्वरं पंचाब्दं
पूजितस्तेन पार्वतीसहितो हरः एकदा तु गतोसौ द्विजपुष्पार्थं ब्राह्मणोत्तमः कुसुमं गृह्णते या·
वनावृष्टस्तु पन्नगैः पतितस्तु हते वीरसिंहव्याघ्रसमाकुले तृतीयेन मुहूर्तेन तद्भार्यां चिंत
यतदा केनापि कारणेनायकथं नायाति मे पतिः पार्वतीं नमस्कारायागता स्तुति ब्राह्मणी
कंदमानां च तां दृष्ट्वा पार्वती वरदाभवत् सा याशीकारहस्तेन विप्रवक्त्रे प्रसुश्रुती अप्यतीवाब्राह्मण
स्तत्र निशीथे निद्रायायथा तावन्मत्त्येव देव्या गृहीत्वा वनयान्वितौ पार्वत्योक्तमिदं वाक्यं व·
रं वरयस्व व्रते ब्राह्मण उवाच तत्प्रसादेन कृतार्थाल्पं तव वांछितं मया संतानं चैव मे नास्ति पु
त्रदुःखं च मे नद पार्वत्युवाच व्रतं कुरु विधानेन मम नाम्ना च विश्रुतं जयाख्यं व्रतं नाम मे लो·
कपावनं परं जया पार्वती व्रतं चैव दायाके पाकलोचने क्षाररहितचान्नेन लवणरहितेन च
भोक्तव्यं पंचकदिनं कर्तव्यं तद्दत्तं अपोह्य यां समारभ्य तृतीयायां समापनं शुक्लपक्षे स

मारभ्य कुर्यात्तत्समापने पंचाब्दं पावनानैस्तद्व्रतं कार्यं प्रयत्नतः पंचाब्दत्रयवैशिष्ट्ये व्रतं तल्लवणा
विना पंचाब्दं तंडुलैः कार्यमित्युरसविवर्जितं पंचाब्दं चैवमुक्तैस्तत्पंचहायनविंशतिः विंशतमेत।
नोद्वेत व्रतोद्धारं समाचरेत् दंपत्योपरिदाने द्विप्रदद्याद्रुद्रप्रीतये भोज्यं सुवासिनीनां चतुर्तीयायां
यथोचितं विंशतिः प्रथमेपक्षेविमंशादरमतःपरं वपकं पंचकेकार्यं परिधानं सभोजनं नाना
रसैः समायुक्तं घृतखंडसमन्वितं सभर्तृकायै दातव्यं भोज्यं सौभाग्यहेतवे कुंकुमं कज्जलं देयं
मद्वेद्वेच स्वशक्तितः रात्रौ जागरणं कुर्याद्वंदं पालदं भवेत् अनेन विधिना यस्तु कुरुते व्रतमु
त्तमं जागरणो कृते यातिव्रतं संपूर्णतां सदा व्रतेन रहिता नारी विधवा जन्मजन्मनि शोचेतदु
खसंयुक्तान च सौभाग्यभाग्भवेत् नारीणां च व्रतैर्दानैः पतिभक्त्या ततः परं सौभाग्यमतुलं याति
पतिसंतोषदानतः एवमुक्ता व्रतवरं तत्रैवांतरधीयते पश्चाद्गृहं समागत्य सा पत्या च समन्विता
पूर्वोक्तेन व्रतं कृत्वा प्राप्तं पुत्रसुखं तयोः भर्तारं च विशेषेण अवैधव्यं परं सुखं भुक्त्वा च विविधान्भो
गानंते प्राप्नोति शिवालयं श्रीभगवानुवाच एवं या कुरुते नारी न च भर्त्रा वियुज्यते कुलत्रयं स
मुद्धृत्य नयते शिवमंदिरं सान्निध्यं स्वमाप्नोति शिवलोके महीयते कथां श्रुत्वा विधानेन सर्व
पापैः प्रमुच्यते ॥ इति भविष्योत्तरे गुर्जराचारप्राप्तं जयापार्वतीव्रतं आषाढशुक्लचतुर्द
श्यामपि शिवपूजाव्रतं नारदीये शुचिशुक्लचतुर्दश्यां शिवं संपूज्य मानवः देशकालोद्भवैः
पुष्पैः सर्वाः संपदमाप्नुयात् आषाढपौर्णिमायां गोपद्मव्रतं कोकिलागौरीव्रतं नारदीये च
तुर्भुजं महाकायं जांबूनदसमप्रभं शंखचक्रगदापद्मरमागरुडशोभितं सेवितं मुनिभिर्देवै
र्यक्षगंधर्वकिन्नरैः एवंविधं हरिं ध्यात्वा तत्र पूजां समाचरेत् षोडशैर्वस्त्रकैर्न गंधाद्यैरुप
चारकैः आचार्यं वस्त्रभूषाद्यैस्तोषयेद्विगतमानसः भोजयेन्मिष्टपक्वान्नैर्द्विजानन्यांश्च श
क्तितः एवं कृत्वा व्रतं विप्रप्रसादात्कमलापतेः ऐहिकामुष्मिकान्कामान्लभते नात्र संशयः
कोकिलाव्रतमप्यत्र प्रोक्तं तद्विधिरुच्यते पूर्णिमायां समारभ्य व्रतेस्नायाद्द्विर्जले पूर्णते।
श्रावणे मासि गौरीमभ्यर्च्य कोकिलां स्वर्णपत्रां रत्ननेत्रां प्रवालमुखपंकजां कस्तूरीवर्णसं
युक्तां नंदनवने चूतचंपकवृक्षस्थां कलगंभीरनादिनीं चिंतयेत्पार्वतीं देवीं कोकि
लारूपधारिणीं गंधाद्यैः प्रत्यहं शर्करालिखितां वर्णकैः पटे ततो व्रतांते हैमीं वा तिलपिष्टमयीं
द्विजा यादिशाय मंत्रेण भक्त्या सस्वर्णदक्षिणां देवि चैत्ररथोत्पन्ने कोकिले हरवल्लभे संप्र
ज्यदत्ता विप्राय सर्वसौख्यकरी भव द्विजं सुवासिनी त्रिंशद्देकां वा भोजयेत्ततः वस्त्रादिदक्षिणां
शक्त्या दत्वा नत्वा विसर्जयेत् एवं या कुरुते नारी कोकिलव्रतमुत्तमं सा लभेत्सुखसौभाग्यं स·
प्तजन्मसु नारद ॥ अथ गोपद्मव्रतपूजाक्रमः तत्रादौ तिथ्यादि संकीर्त्य मन ऐहिकामुष्मि
कसर्वकामावाप्तिकामो विष्णुप्रीत्यर्थं गोपद्मव्रतं करिष्ये ध्यानं चतुर्भुजं महाकायं जांबून
दसमप्रभं शंखचक्रगदापद्मरमागरुडशोभितं सेवितं मुनिभिर्देवैर्यक्षगंधर्वकिन्नरैः ए
वंविधं हरिं ध्यात्वा ततो यजनमारभेत् आवाहयामि देवेशं भक्तानामभयप्रदं स्निग्धकोमल
केशं च मनसावाहयेद्ध्रुवं सहस्रशीर्षेत्यावाहनं १ सुवर्णमणिभिर्दिव्यै रचितं देवनिर्मितं
दिव्यसिंहासनं विष्णो उपविश्य प्रसीद मे पुरुषएवेत्यासनं २ पादोदकं सरस्योत्थं स्वर्णक·
लशोर्पितं गंधपुष्पादितैर्युक्तं पाद्यं मे प्रतिगृह्यतां एतावानस्येति पाद्यं ३ अर्घ्यद्रव्यसमायु
क्तं स्वर्णपात्रोदकं शुभं अभयंकर भक्तानां गृहाणाचमनीयकं तस्माद्विराडित्याचमनं ४
गंगा गोदावरी पुण्या यमुना च सरस्वती नर्मदा सिंधु कावेरी ताभ्यः स्नानार्थमाहृते यत्पुरुषे

णेतिपंचामृतादिस्नानं ५ वस्त्रयुग्मं समानीतं पट्टसूत्रेण निर्मितं सुवर्णरचितं दिव्यं गृ-
हाण त्वं सुरेश्वर तेयज्ञमितिवस्त्रं ६ कार्पासतंतुभिर्युक्तं ब्रह्मणा निर्मितं पुरा अनेकरत्न-
खचितमुपवीतं गृहाण मे तस्मादितियज्ञोपवीतं ७ चंदनं मलयोद्भूतं कस्तूर्यागुरुसंयु-
तं कर्पूरेणच संयुक्तं स्वीकुरुष्वानुलेपनं तस्मादितिगंधं ८ शतपत्रैः कर्णिकारैश्चंपकैः
मल्लिकादिभिः तुलसीयुक्तपुष्पाणि गृहाण पुरुषोत्तम तस्मादश्वाइतिपुष्पं ९ दशांग
गुग्गुलं धूपं सुगंधं च मनोहरं कृष्णागुरुसमायुक्तं धूपं देव गृहाण मे यत्पुरुषमितिधूपं
१० आज्यस्य वर्तिसंयुक्तं वह्निना योजितं चयत् दीपं गृहाण देवेश त्रैलोक्यतिमिरापह ब्रा-
ह्मणोस्येतिधूपं ११ अन्नं चतुर्विधं स्वादुरसैः षड्भिः समन्वितं भक्ष्यभोज्यसमायुक्तं नैवेद्यं
प्रतिगृह्यतां चंद्रमेतिनैवेद्यं १२ इदं फलमितिफलं नाभ्याआसीदिति तांबूलं १३ हिर-
ण्यगर्भमिति सप्तास्यासन्निति दक्षिणा १४ यज्ञेनयज्ञमिति मंत्रपुष्पांजलिः १५ या-
यतनद्वर्षीकवायणं सपक्वान्नमिदं विप्रवायणं परिगृह्यतां तत्प्रसादादहं सर्वं व्रतस्य फल-
माप्नुयां यानि कानीति प्रदक्षिणा मंत्रहीनमितिप्रार्थनाइतिपूजा अथ कथा सनत्कुमा-
र उवाच नारदैकं परिपृच्छामि चतुर्वर्गफलप्रदं नारीणामथवा पुंसां भुक्तिमुक्तिफलप्रदं
ब्रूहि चेदस्ति देवर्षे कृपां कृत्वा ममोपरि नारद उवाच भगवन् सर्वमाख्यामि यत्पृष्टं विभो।
त्वया गोपद्मकव्रतं नाम व्रतानामिदमुत्तमं कार्यसिद्धिकरं लोके विख्यातं भुवनत्रये
सनत्कुमार उवाच भगवन्भूतभव्येश सर्वशास्त्रविशारद तद्व्रतं ब्रूहि मे सर्वं कथमुद्यापनं
भवेत् पुरेदं केन वा चीर्णं देवर्षे कथयस्व मे नारद उवाच आषाढकार्तिकौ मासौ व्रतग्रहणे
सिद्धिदौ आषाढपौर्णमास्यां तु तथा पद्मायां हरेर्दिने प्रारभेद्व्रतमेतच्च कार्तिकावधि नित्यशः
तिलामलककल्केन स्नानं नित्यं विधाय च नदीतीरे तथा गोष्ठे शिवागारे हरेर्गृहे अभेंद्रा
वने वापि लिखेद्गोपद्मकं पदे त्रयस्त्रिंशत्पद्मानि कुर्याद्व्रत्यादिने दिने तत्संख्यया च कार्ज-
याच्चर्यं प्रदक्षिणा नतीः बालकृष्णं समुद्दिश्य लक्ष्म्या सह जगद्गुरुं गंधाद्यैरुपचारैश्च य-
थाशक्त्या प्रपूजयेत् ब्राह्मणं च ततः पूज्य पद्मसंख्या प्रपूजयेत् प्रथमे द्वे च वटके द्वितीये पूप-
केर्व्रती तृतीये शाकमिष्टान्नैश्चतुर्थे पूरिकादिभिः पंचमे परमान्नैस्तु सुधीगणं पूजयेद्व्रती
अत्रैवोदाहरंतीममितिहासं पुरातनं ऋषीणां पृच्छमानानां सूतेनोक्तं यथाश्रुतं ऋषयऊ-
चुः केन वादौ पुरा चीर्णं मर्त्यैः केन प्रकाशितं कथमुद्यापनं तस्य किं फलं सूत कथ्यतां सूत-
उवाच पुरा शक्रो महाबाहुर्देवदानवकिन्नरैः रुद्रैरादित्यमुख्याद्यैर्गंधर्वैश्चारणैः सह रंभा-
नृत्यसमारंभे क्रीडालोभेन विह्वला एवं नृत्ये समारब्धे त्रुटितं चर्ममंडलं क्षणमात्रं विचार्या-
थ यमराज स्वमुक्तवान् यम उवाच जन्ममध्येऽपि येन कृतं प्राणिभिः क्वचित् तच्चर्म स्वा-
मुभिः शक्र कर्तव्यं छादनं तयोः नारदेन श्रुतं तत्र जगाम यदुनंदनं अर्चयित्वा यतः कृष्णं व-
चनं चेदमब्रवीत् श्रीकृष्ण उवाच सर्वलोकेषु देवर्षे भुवनेषु चरन् सदा किमाश्चर्यं त्वया
दृष्टं सत्यं मे ब्रूहि नारद नारद उवाच शक्रस्य भवने दृष्टमाश्चर्यं देवसंसदि तत्र सर्वे समाया-
ताः सुराश्चेंद्राश्चतुर्दश रुद्रा एकादशविधा आदित्या द्वादशापि च वसवोऽष्टौ तथा नागा यक्ष-
राक्षसपन्नगाः रंभया च समारब्धं नृत्यं शक्रस्य पश्यतः त्रुटितं चर्म वाद्यानां महद्वैलक्ष्यमायते
यमः प्राह तदा हृष्टान्समुद्रानपि व्रतान्नास्ति भो नामानयध्वं तच्चर्म वाद्ययोग्यं सदाक्षिति तच्छ्रुत्वा
तया मद्भीत्या सर्वं निवेदितं सूत उवाच इति नारदवाक्यं तच्छ्रुत्वा कृष्णः समन्वितः सभ

दायागृहं गत्वा पूजितस्तासु वाच ह किंचिद्व्रतं त्वया भद्रे कर्तव्यं नेति शंस मे सुभद्रोवा
च सर्वव्रतानि मे कृष्ण कृतान्येव न संशयः नो चेन्न वसहोदर्य्यस्त्वामर्जुनवल्लभा पु
त्रोभिमन्युश्च कथं कथयस्व जगत्पते श्रीकृष्ण उवाच तथापि त्वं महाभागे व्रतमेकं स
माचर गोपद्मेति च विख्यातं त्रिषु लोकेषु विश्रुतं इति कृष्णवचः श्रुत्वा सुभद्रा तत्तदा
करोत् कृष्णोपदिष्टविधिना सत्वरं तत्समापितं सोद्यापने व्रते पूर्णे कालेयमभटा य
युः हन्तुं ऊचुः सुभद्रे तव देहस्य च मार्गे त्वागता वयं तत्र मे देव वायार्थ यमेन परिक
ल्पितं इति दूतवचः श्रुत्वा सुव्रतास्मीति सा ब्रवीत् ततो यमभटाः सर्वे ददृशुः सा दृशास्त।
दा पद्मानां निचयं तस्या गृहे गांच सवत्सकां स्थंडिले हस्तमात्रेतु सुसमिद्धं हुताशनं कृष्णो
पदिष्टं वीक्ष्यैव भटा जग्मुर्यमांतिकं श्रापव्रतप्रभावेन सुभद्रा पदमच्युतं इति सूतवचः श्रु
त्वा शुनयश्च ऋषिरे व्रतं सनत्कुमार उवाच भो भो नारद देवर्षे सर्वज्ञानस्तु या निधे श्रीब्रू
हि सर्वे मत्यं व्रतस्योद्यापने विधिं नारद उवाच पूर्णे तु पंचमे वर्षे व्रतस्योद्यापनं चरेत् श्री
विष्णोः प्रतिमा कार्या सुवर्णस्य पलेन वै पुष्पमंडपिका कार्या चतुर्द्वारि सुशोभना त
त्रैव पूजयेद्भक्त्या रमया सहितं हरिं त्रयस्त्रिंशत्ततो विप्रान्व्रत होमं समारभेत् घृतोद
वेति मंत्रेणाज्जुहुयात्तिलपायसं रक्तवस्त्रयुतां धेनुमाचार्याय प्रदापयेत् ब्राह्मणांश्च स
पत्नीकान्भोजयेच्च यथाक्रमं एवं या कुरुते विप्र तस्याः श्रीरचला भवेत् यं यं चिंतयते
कामं तं तं प्राप्नोत्यसंशयं अंते विष्णुपदं गच्छेत्सर्वपापविवर्जितः ॥ इति नारदोक्तं सो
द्यापनं गोपद्मव्रतं अत्र मूलं शिष्टाचार एव अस्यामेवाषाढपूर्णिमायां कोकिलाव्रतं त
स्य विधानं स्नात्वा आचम्य प्राणानायम्य मासपक्षाद्युल्लिख्य मम इह जन्मनि सर्वपापक्षयपू
र्वक पुत्र पौत्र स्थिर लक्ष्मि त्वावैधव्य सपत्नीनाश सौभाग्य सिद्धि द्वारा कोकिला रूप गौरी प्री
त्यर्थं कोकिलाव्रतं करिष्ये इति संकल्प्य आषाढपौर्णमास्यां तु संध्याकाले उपस्थिते
संकल्प्य येन्मासमेकं श्रावणे प्रत्यहं त्वहं स्नानं करिष्ये देवेशि कोकिलप्रतिमेन च जलेसि
त्वावने पुण्ये सर्वदेवजलाशये इति मंत्रेण तिलामलफलैः सर्वौषधिजलेन च पिष्टेन चा
ष्टौ दिनानि प्रत्येकं तिलामलकपिष्टेन चौषधियुतेन च षड्दिनान्येवं मासावधि स्नाने·
आमः एवं स्नात्वा रविं ध्यात्वा तस्मै अर्घ्यं दद्यात् ततः आदित्य भास्कर रवे अर्क सूर्य दिवा
कर प्रभाकर नमस्तुभ्यं गृहाणार्घ्यं नमोस्तु ते इति सूर्याय अर्घ्यं दद्यात् ततः स्वर्णाय दं
तौष्य पादां मौक्तिक नेत्रां प्रवाल मुखां रत्न पुच्छां चूतचंपक हस्तस्थां गौरी रूपिणीं कोकिलां लि
खित्वा पूजयेत् दिवसांते ध्यानं कुर्यात् स्वर्णपक्षां रक्तनेत्रां प्रवालसुख पंकजा कस्तूरीवर्णा
मधुकामनुत्यमानंदनेवने चूतचंपकहस्तस्था पुष्पस्वरसमन्विता चिंतयेत्पार्वतीं देवीं को·
किला रूपधारिणीं ध्यानं श्रीसूक्तेन गौरीमिमायेति मंत्रेण पूजा आगच्छ कोकिले देवि देहि
मे वांछितं फलं चंपकद्रुममारूढा क्रीडसि नंदने वने इत्यावाहनं आसनं तौमवस्त्राणि
मितं चानयेत्तव गृहाणेदं मया दत्तं कोकिले प्रीतिवर्द्धिनि सौभाग्यं धनपुत्रांश्च देहि मे को·
किले नमः तिलपुष्पफलैर्युक्तं पाद्यं मे प्रतिगृह्यतां इति पाद्यं रत्न चंपक पुष्पैश्च पीत चंद
नसंयुतं हेमपात्रस्थितं तोयं गृहाणार्घ्यं नमोस्तु ते इत्यर्घ्यं निर्मलं सलिलं गांगं कोकिले पा·
त्रिरूपिणि वासितं च सुगंधेन गृहाणाचमनीयकं इत्याचमनं पंचामृतेन स्नपनं कोकिले
कलवादके मया दत्तेन सुप्रीता भव त्वं परमेश्वरि इति पंचामृतं मंदाकिनी जल पुण्यं सर्व

तीर्थसमन्वितं स्नानार्थं ते मया दत्तं कोकिले गृह्यतां नमः इति स्नानं यस्मात्कर्पाससूत्रेण वासांसि
विविधानि च पीतवस्त्रप्रदानेन प्रीता भव ममांबिके इति वस्त्रं कंचुकं च मया दत्तं नानावर्णैर्वि
निर्मितं कोकिले गृह्यतां देवि प्रसीद परमेश्वरि कंचुकं हरिद्रारंजितं देवि कंठसूत्रं मयार्पितं
कोकिले सुभगे देवि वरदा भव मेंबिके कंठसूत्रं यानि रत्नानि सर्वाणि गंधर्वैर्भूरगेषु च तैर्युक्तं भू
षणं देहि मे कोकिले प्रतिगृह्यतां इत्याभरणं श्रीखंडं चंदनं दिव्यं मलयादिसमुद्भवं विलेपनं सुर
श्रेष्ठे गृह्यतां परमेश्वरि इति गंधं अक्षताः कुंकुमाक्ताश्च कामिनीभूषणास्पदं सौभाग्यदे गृहाण
त्वं नमस्ते हरवल्लभे इत्यक्षताः शतपत्रैर्जातिपुष्पैश्चंपकैर्मरुपत्रकैः पाटलैश्च बहुर्वाभिर्युतं पु
ष्पं गृहाण मे इति पुष्पाणि तिलस्नेहे तिलसुवे तिलसौख्ये तिलप्रिये सौभाग्यं धनपुत्रांश्च देहि
मे कोकिले नमः पुष्पोत्तरमंगपूजा शिवायै शिरः पूजयामि वनवासिन्यै ललाटं पूजयामि २ सु
रूपायै भ्रूमध्यं पू० पार्वत्यै चिबु० पू० तिर्यक्रूपिण्यै कंठं पू० कोकिलायै हृदयं पू० पक्षिरूपिण्यै गु
ह्यं पू० पद्मावत्यै पादौ पूजयामि कृष्णवर्णायै सर्वांगं पू० वनस्पतिरसो धूप इति धूपं आज्यं सवर्ति
संयुक्तमिति दीपं शर्कराखंडखाद्यानि दधिक्षीरघृतानि च आहारार्थं मया दत्तं नैवेद्यं प्रतिगृह्यतां
इति नैवेद्यं पाटलोशीरकर्पूरयुक्तं स्वादु सुशीतलं पानीयं ते मया दत्तं कोकिले प्रतिगृह्यतां इति
जलं चंदनागुरुकर्पूरकस्तूरीकुंकुमान्वितं करोद्वर्तनकं देवि कोकिले प्रतिगृह्यतां इति क
रोद्वर्तनं कूष्मांडं नारिकेलं च पनसं कदलीदलं जंबूं च मातुलिंगं च फलं गृह्ण नमोस्तु ते इति
फलं पूगीफलं महादिव्यमिति तांबूलं हिरण्यगर्भेति दक्षिणा कोकिले कृष्णवर्णा च सदा वस
तिकानने भवान्ये हरकांतायै कोकिलायै नमो नमः इति नीराजनं पूजिता परया भक्त्या को
किला हरवल्लभा पुष्पैर्नानाविधैस्तुष्टा वरदास्तु सदा मम इति पुष्पांजलिः कोकिलारूपधा
रिण्यै जगन्मात्रे नमोस्तु ते शरणागतदीनार्तं त्राहि देवि सदांबिके इति नमस्कारः गंधपुष्प
फलैर्युक्तं तोयं हेमफलान्वितं कोकिले त्वं गृहाणार्घ्यं वांछितार्थं प्रयच्छ मे आषाढस्यासिते पक्षे
मधुवर्णा हरप्रिये कोकिले त्वं जगन्मातर्गृहाणार्घ्यं नमोस्तु ते इति पुनरर्घ्यं ततः प्रार्थना रूपं
देहि जयं देहि सौभाग्यं देहि मे सदा पुत्रान्देहि धनं देहि सर्वान्कामान्प्रयच्छ मे काकवंध्या वि व
त्सा च मृतवत्सा तिदुःखिता ताः सर्वाः फलिताः संतु कोकिले त्वत्प्रसादतः त्वया लब्धः पतिर्दे
वः शंकरो लोकशंकरः अतोहं त्वत्प्रसादेन लभेयं पतिमुत्तमं इति प्रार्थना अंते हैमीं तिलपि
ष्टजां वा कोकिलां कृत्वा विप्राय दद्यात् देवि चैत्ररथोत्पन्ने विंध्यपर्वतवासिनि अर्चिता पूजिता सि
त्वं कोकिले हरवल्लभे कोकिले कलकंठासि माधवे मधुरस्वरे वसंते वससे देवि गच्छ त्वं नंदने वने
इति विसर्जनं इति कोकिलाव्रतपूजा अथ कथा युधिष्ठिर उवाच स्वभर्तृरति संवंधे महास्नेहो
यथा भवेत् कुलस्त्रीणां तथा चक्ष्व व्रतं मम जगद्गुरो श्रीकृष्ण उवाच यमुनायास्तटे पूर्वं मथुरा
स्ति महापुरी तस्यां शत्रुघ्ननामाभूद्राजा राघववंशजः तस्य भार्या कीर्तिमाला नाम्नासीत्पृथि
व्यां भुवि तया प्रणम्य भगवान्वशिष्ठो मुनिसत्तमः पृष्टः कथं मुनिश्रेष्ठ सौभाग्यमतुलं भवेत् ए
वमुक्तस्तया ज्ञानी वशिष्ठः कीर्तिमालया ध्यात्वा मुहूर्तमाचष्टे कोकिलाव्रतमुत्तमं वसिष्ठ उवाच
आषाढपूर्णिमास्यां तु संध्याकाले ह्युपस्थिते संकल्पयेन्मासमेकं श्रावणं प्रतिगृह्यतां स्नानं
करिष्ये नियता ब्रह्मचर्ये स्थिता सती भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनां दयां इति संकल्प्य
पुरुषो नारी वा व्रतमिणां तिके प्राप्यानुज्ञां ततः प्रातः सर्वसामग्रिसंयुतः पुरुषः प्रतिपत्काले दंत
धावनपूर्वकं स्नानं कुर्यात्तु तीर्थे सुगंधामलकैस्तिलैः पिष्टकं ततः पश्चात् सर्वौषध्याः पु

नः पुनः स्नात्वा ध्यात्वा रविं संध्यां तर्पयित्वा पितॄंस्तथा पूजयित्वा लिखित्वा पिष्टैः कोकिलां पक्षिरू-
पिणीं कलकंठां शुभैः पुष्पैः पूजयेच्चंपकोद्भवैः पत्रैर्वा धूपनैवेद्यैर्दीपालक्तकचंदनैः तिलतं-
डुलदूर्वाद्यैः पूजयेत्तां क्षमापयेत् नित्यं तिलव्रती भक्त्या मंत्रेणानेन पांडव तिलस्नेहे तिलसुखे
तिलसौख्ये तिलप्रिये सौभाग्यं धनपुत्रांश्च देहि मे कोकिले नमः इत्यर्घ्यं दत्वा ततः पश्चाद्गृहमाग-
त्य संयतः कृताहारः स्वपेत्पार्थ यावन्मासः समाप्यते मासांते ताम्रपात्रांतः कोकिलां तिलपिष्ट-
जां रत्ननेत्रां स्वर्णपक्षां ब्राह्मणाय निवेदयेत् वस्त्रैर्गुडैः समायुक्तां श्रावण्यां कुलजातिका श्वश्रू-
श्वशुरवर्गे वा देवरे वा पुरोहिते व्यासे च संप्रदातव्या व्रतिभिः शुभकांक्षया तिलस्नेह इत्यादि ति-
लदानमंत्रः एवं यः कुरुते नारी कोकिलाव्रतमादरात् सप्तजन्मानि सौभाग्यं सा प्राप्नोतीति नि-
श्चितं निःसपत्नं पतिं भव्यं सस्नेहं प्राप्य भूतले मृता गौरीपुरं याति विमानेनार्कवर्चसा तया
चानुष्ठितं पार्थ समग्रं कीर्तिमालया तस्याश्च सर्वसंपन्नं वसिष्ठवचनादिह पुत्रसौभाग्यसत्का-
रेशात्तु ब्रह्मप्रसादजं एवमन्यापि कौंतेय कोकिलाव्रतमादरात् चरिष्यति व्रतं तस्याः सौभाग्यं
च भविष्यति ये कोकिलां कलरवां कलकंठपीठां यच्छंति साज्यतिलपिष्टमयीं द्विजेभ्यः ते नं-
दनादिषु वनेषु विहृत्य कामं मर्त्यं समेत्य मधुरध्वनयो भवंति ॥ इति हेमाद्रौ भविष्योत्तरे
कोकिलाव्रतकथा ॥ अथ वाराहे कोकिलाव्रतं कीर्तिमालोवाच वद मे त्वं मुनिश्रेष्ठ सौभाग्य-
प्राप्तिदं व्रतं पूज्यः कथं च भगवान् शिवः केन व्रतेन वै वसिष्ठ उवाच यदि पृच्छसि सत्यं हि व्र-
तानामुत्तमं व्रतं नाशनं सर्वपापानां कथयामि निबोध तत् दक्षप्रजापतेर्यज्ञे पुरा देवाः समाग-
ताः ऋषयश्च तथा सर्वे विद्याधरगणास्तथा ब्रह्मा विष्णुश्च वायुश्च देवराजस्तथैव च वरुणो
निर्ऋहाः सर्वे ये चान्ये च दिवौकसः वसिष्ठो वाल्मिकी गार्ग्यो विश्वामित्रो महामुनिः एते चान्ये च ब-
हवः सर्वे यज्ञार्थमागताः अपश्यन्नारदस्तत्र संतिके त्वागता इति ईश्वरेण विना सभ्यान्दृष्ट्वा सर्वा-
न्समागतान् शिवां संस्पृश्य पाणिभ्यां ननर्त कलहप्रियः ज्ञात्वा कलहमूलं च ततः कैलासमाययौ
सर्वांश्च नाग्नीन्स्थानं कैलासशिखरं शुभं तत्र दृष्ट्वा समासीनं गौरीसहितमीश्वरं कृतांजलिपुटो
भूत्वा प्रणिपत्य मुनिः स्थितः ईश्वरस्तमुवाचाथ मुनिः स्वस्थं तमनेकधा किमागमनकृत्यं ते मदी-
यसदनं प्रति निश्वासोच्छ्वाससंयुक्तस्तन्मे ब्रूहि तपोधन ईश्वरस्य वचः श्रुत्वा शिवां संस्पृश्य पा-
णिना दुःखयुक्त इवोवाच नारदः कलहप्रियः नारद उवाच यन्निमित्तमहं देव मर्त्यलोकात्समा-
गतः त्वदंतिकं दुःखयुक्तस्तच्छृणुष्व जगत्पते दक्षयज्ञमहं द्रष्टुमद्य देवाः समागताः तत्र यज्ञे स्थि-
ताः सर्वे दक्षजामातरः प्रजाः दृष्टास्तेन च तन्मध्ये न दृष्टस्त्वं त्रिलोचनः तदा वज्ञा कृता जेन दक्षेण
पुण्यकर्मणा तेन निश्वाससंयुक्त आगतोस्मि त्वदंतिकं ईश्वरेण विना किंचिद्धर्मकार्यं न सिद्ध्य-
ति अतोस्य विफलः सर्वः प्रयासः समवाप्नुति तस्य तद्भाषितं श्रुत्वा नतन्निश्चितिं चिंतयन् सक्रो-
धस्तु ततो जात ईश्वरो जगदीश्वरः गौर्या संप्रार्थितो देवः श्रुत्वा तन्नारदेरितं तस्य यज्ञस्य घातार्थं
देवदेव व्रजाम्यहं इत्युक्त्वा त्वरिता कोपादीश्वरेण निवारिता जगदीश नमस्तुभ्यं व्रजामि पितृवेश्म-
नि नारदेनाथ सहिता गणनाथेन संयुता यज्ञार्थमागता चैव दक्षद्वारे शिवप्रिया वह्निं दृष्ट्वा व-
सा दीर्घलज्जिता चापि शिवप्रिया तिष्ठंती द्वारि तां दक्षो न ददर्श महासती क्षणमेकं च सा तिष्ठद्यदा द-
क्षेण पश्यति तदैवं चिंतितं देव्या जीवितव्यं मया कथं यावत्ता कुंडनिकटे हाहाकृत्वा च सा ततः
वह्नौ क्षिप्ता तदा गौर्या शापं दत्वा सुदारुणं दृष्ट्वा तद्गणपो शेषपाशः परशुकृतनः त्वत्योत्पत्य सो तदा
त्यर्थं गौर्या अर्थं गणाधिपः पाशेन बध्वा कतिचित्कोपान्निहतवान्सुरान् दक्षेणानोदिता देवाः सर्वे

युद्धायनिर्ययुः महद्युद्धमभूत्तत्र सहदेवैर्गणेशितुः तद्दृष्ट्वा नारदः शीघ्रं पुनः कैलासमाययौ
निवेदयामासचतत्सर्वं तत्सर्वमीश्वरे तच्छ्रुत्वास्फालयामासजटांकोपादुमापतिः ततोजातो ऽ
तिविकटः पुरुषोरक्तलोचनः सचभाषेमहादेवंस्वामिन्नाज्ञांप्रदेहिमे वीरभद्रेतिनामास्यकृ
त्वाचाज्ञांसमादिशत् दक्षयज्ञविनाशायगच्छवीरेतिसत्वरं श्रुत्वातदीश्वरवचः सर्वप्रमथसंवृ
तः आययौयज्ञसदनमस्त्रवह्निषुनिक्षिपत् ततश्चेन्द्रादयोदेवास्तद्वधायविनिर्ययुः लग्नान्परा
जितांस्तेनविद्रुतांस्तेदिशोदश अनुद्रुतांश्चतान्सोपिपूष्णोदंतानपातयत् भगस्यनेत्रेनासांच
सहसाव्यनिकृन्तत एवंविद्रावितान्सर्वाञ्छिरोदक्षस्यचिच्छिदे कृत्वैवंयज्ञघातंसब्रह्माजगामशि
वांतिकं नमस्कृत्यपुरस्तस्थौकृतंकार्यमितिब्रुवन् तदाप्रशान्तः कोपेऽस्यतान्वितंतानचचक्षुषा
प्रसादयितुमीशानंब्रह्मविष्णूसमीयतुः नमस्कृत्यस्तुतस्ताभ्यांप्रसन्नोभूत्सदाशिवः नारदस्त
वसंश्चैवगीतैःशिवमतोषयत् प्रसन्नंवीक्ष्यतंविप्रःशिवांसंस्पृश्यपाणिना ननर्तनारदस्तत्र
तोषयन्नधिकंशिवं एतस्मिन्नन्तरेब्रह्माविष्णुश्चप्रमथाधिपं व्याजिज्ञपत्तदेवंद्रादीन्कृपादृष्ट्या-
वलोकय कृत्स्नांगान्कुरुपूर्णांगान्मृतान्संजीवयप्रभो विलोकितास्तेदेवेनकृपादृष्ट्यावलो-
किताः यथापूर्वंसुराःसर्वेअभूवंस्तत्प्रसादतः उत्थितःपादयोर्मूर्ध्नाययौदक्षःपिनाकिनः अप-
राधंक्षमस्वेतिपुनःपुनरुवाचह उत्थापितःकरेणासौततोदक्षःपिनाकिना उक्तश्चमापुनःका
र्षीरेवमीशावमाननं विचरस्वस्वसद्मेनेतिभूयस्तेकोपमाविशत् शशापचतदागौरींयज्ञविघ्न-
करींशिवः यज्ञेविघ्नंकृतवतीदक्षस्यैषाततश्चिरात् तिर्यग्योनिंसमापन्नाविचरिष्यसिभूतले
ततोगौरीवभाषेतप्रणिपत्यसदाशिवं कथंयास्यामितिर्यक्त्वंभूतलेवस्थितिःकथं अन्यथानैव
भविताशापएषस्त्वयोदितः कोकिलानांस्वरंरूपंनारीरूपंपतिव्रता विधारूपंकारूपाणांत्वमा
रूपंतपस्विनां अचिरादेवचपुनःकालेमहतिजन्मनि भूयास्त्वमेवभर्ताचनवियोगश्चनौयतः
वरयेत्कुलजांशान्तःकुरूपामपिकन्यकां दुःकुलायाःसुरूपायाभर्तुःपातयतेकुलं नदीपातयते
कूलंनारीपातयतेकुलं नारीणांचनदीनांचस्वच्छंदललितागतिः ततस्तस्यामहादेवश्चक्रेशाप-
विमोचनं दशवर्षसहस्राणिकोकिलारूपधारिणी नंदनेदेवविपिनेचरिष्यसिततःपरं हिमा-
चलसुताभूत्वामत्प्रियात्वंभविष्यसि देवानांचयथाविष्णुःसहकारोमहीरुहां गंगाचसर्वतीर्था-
नांभव्यानियेत्रकोकिला आषाढेहियदास्नाताकोकिलायास्तदार्चनं सदायाकुरुतेनारीन-
सावैधव्यमाप्नुयात् वसिष्ठउवाच एतद्वाक्यावसानेतुगौरीसाकोकिलाभवत् तदाप्रादिष्टचेद्धि
तंकोकिलायाव्रतंशुभं यानारीनैवकुरुतेमोहात्साविधवाभवेत् कुरुत्वमेतत्कल्याणिकीर्तिमा
लेव्रतंशुभं कीर्तिमालोवाच कथमाराध्यतेगौरीकोकिलारूपधारिणी विधानंब्रूहिमेब्रह्मन्नुत्व
त्प्रसादात्करोम्यहं वसिष्ठउवाच कोकिलाव्रतमाहात्म्यंविधानंचवदाम्यहं शृणुदेविप्रवक्ष्या-
मिमंत्रैःपौराणिकैर्युतं मलमासेत्वतिक्रांतेशुद्धाषाढेसमागते आषाढ्यांपौर्णमास्यांतुसंध्याका-
लेसमुपस्थिते संकल्पयेन्मासमेकंश्रावणेप्रतिगृह्यच स्नानंसमाचरेन्नित्यंब्रह्मचर्यस्थितासती भो
क्ष्येनक्तंचभूशय्यांकरिष्येप्राणिनांदया सौभाग्यधनधान्यादिप्राप्तयेशिवतुष्टये इतिसंकल्प्यवि
प्राग्रेनारीविप्रेभ्यएवच आध्यानुज्ञांसंपाद्यसामग्रींसकलामपि प्रत्यूषेचप्रतिदिनंदन्तधावनपू
र्वकं नद्यांगत्वाथवाप्यांवातडागेगिरिनिर्झरे स्नानंकरोमिदेवेशिकोकिलेप्रीतयेतव जलेस्मि-
न्पावनेपुण्येसर्वदेवजलाश्रये स्नानंकुर्यात्ततोदेविस्नुग्धामलकैस्तिलैः दिनाष्टकंततःपश्चा-
त्सर्वौषध्यःपुनःपृथक् ततःपिष्टेनचस्नानंदिनान्यष्टौसमाचरेत् तिलामलकपिष्टेनसर्वौषधि

युतेनच षट्दिनानिततःस्नानेसंपूर्णफललिप्सया स्नात्वाध्यात्वारविंतस्मैदद्यादर्घ्यंप्रयत्नतः
आदित्यभास्कररवेत्यर्कसूर्यदिवाकर प्रभाकरनमस्तुभ्यंगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यमंत्रः
कारयेत्कोकिलांदेवींसौवर्णींसर्वकामदां रौप्यंचरणयोश्चैवनेत्रयोश्चापिमौक्तिकं रत्नानिपंच
पृष्ठेतुचूतवृक्षसमाश्रितां अथवातिलपिष्टेनकोकिलांपक्षिरूपिणीं निधायताम्रपात्रेतांपूज
येत्सुसमाहिता उपचारैःषोडशभिर्यथावत्तन्निबोधय आवाहयामित्वांदेवींकोकिलारूपधा-
रिणीं अवतारंकुरुष्वात्रप्रसादंकुरुसुव्रते आवाहनं आगच्छकोकिलेदेविदेहिमेऽखिलवां-
छितं चूतवृक्षंसमारुह्यरमसेनंदनेवने आसनं तिर्यग्योनिसमुद्भूतेकोकिलेकलकंठके
तिलपुष्पाक्षतैरर्घ्यंगृहाणत्वंनमोस्तुते अर्घ्यं आषाढस्यसितेपक्षेमेघवर्णस्वरूपिणि को-
किलेनामत्वंदेविस्नानीयंप्रतिगृह्यतां स्नानं कोकिलेकलकंठेचमाधवेमधुरस्वरे वसंतेवससे
देविवस्त्रंचप्रतिगृह्यतां वस्त्रं श्रीखंडचंदनंदिव्यंगंधाढ्यंसुमनोहरं विलेपनंमयादत्तंप्रीत्यर्थं
प्रतिगृह्यतां गंधं हरिद्राकुंकुमद्रव्यैःकोकिलेकामसंभवे कुंकुमेनार्चितासित्वमतःशांतिंप्र-
यच्छमे हरिद्रा कुसुंभशुक्लंचरक्तंवावासांसिविविधानिच पीतवस्त्रप्रदानेनप्रीताःस्युःसर्वदे-
वताः वस्त्रयुग्मं शतपत्रैर्जातिपुष्पैश्चंपकैर्मरुपत्रकैः पाटलैश्चैवदूर्वाभिर्युतंपुष्पंगृहाण-
मे इतिपुष्पं वनस्पत्युद्भवइतिधूपं आज्यंसवह्निसंयुक्तमितिदीपं सर्वभक्ष्यसमायुक्तंरसैः
सर्वैःसमन्वितं सर्वदेवसमाहारंनैवेद्यंप्रतिगृह्यतामितिनैवेद्यं कूष्मांडैर्नारिकेलैश्चखर्जूरैर्दा-
डिमीफलैः चूतजंबीरजंबूभिःश्रीफलामलकैस्तथा द्राक्षाबादामवदरैर्मातुलिंगैःसशर्करैः
फलानि नागवल्लीदलैश्चूर्णकर्पूरैलासमन्वितं पूगीफलंसखदिरंतांबूलंप्रतिगृह्यतां तांबूलं
हिरण्यगर्भमितिदक्षिणा भिन्नानिकंठसूत्राणिदद्यादपिदिनेदिने कुंकुमंपुष्पतांबूलमक्षतांश्च
दिनेदिने कुर्यादेवंविधांपूजांश्रावण्यांतु सुव्रती विसर्जयेत्तुपश्चात्तांसौवर्णींकोकिलांयदि
यदातुतिलपिष्टस्यक्रियतेकोकिलायदि कुर्यात्तत्प्रत्यहंपूजांभिन्नायास्तुविसर्जनं रम्यंवनंस-
मागत्यश्रुत्वाकोकिलकूजितं यदानश्रूयतेशब्दउपवासस्तुतद्दिने कोकिलेकृष्णवर्णेचसदा
वासोवनेशुभे सौभाग्यमतुलंदेहिगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यंदत्वाविसर्जनं तत्रमंत्रः
देविदेवैर्यथोत्पन्नेविंध्यपर्वतवासिनि गच्छगच्छमहादुर्गेस्वस्थानेनंदनेवने प्रार्थनाना-
मस्कारमंत्रः रूपंदेहिधनंदेहिसर्वसौख्यंचदेहिमे पुत्रान्देहियशोदेहिसौभाग्यंदेहिसंप-
दः इत्युक्त्वाचततःपश्चाद्धविष्यान्नेनसुव्रती नक्तभोजीभवेत्तावद्यावन्मासःसमाप्यते मा-
सांतेताम्रपात्रेतुकोकिलांस्वर्णनिर्मितां वस्त्रधान्यगुडैर्युक्तांश्रावण्यांकुंडलंतथा दद्यात्सद-
क्षिणंचापिदैवज्ञेवापुरोहिते एवमाषाढमासस्यद्वैविध्येसमुपस्थिते सधवाविधवावापिया
नारीकोकिलाव्रतं करोतिसप्तजन्मानिसौभाग्यंलभतेतुसा मृतागौरीपुरंयातिविमानेनार्क-
तेजसा भविष्योत्तरे श्रीकृष्णउवाच एतद्व्रतंवसिष्ठेनमुनिनाकथितंपुरा तयाकृतंसुतत्त्व-
वैविधिनाकीर्तिमालया तस्याःसर्वंचनिष्पन्नंवसिष्ठवचनंयथा एवमन्यापिकौंतेयकोकिला-
व्रतमुत्तमं करिष्यतिततस्तस्याःसौभाग्यंचभविष्यति आषाढौद्वौयदास्यातांकोकिलाव्रतमा-
चरेत् नकरोतियदानारीव्यालीभवतिकानने एकतःसर्वदानानिकोकिलाव्रतमेकतः कृतं
पुराप्सरोभिश्चऋषिपत्नीभिरादरात् अहल्ययाचसास्नात्वाकृताशापविमुक्तये अरुंधत्यासदा-
स्नात्वापूजिताकोकिलानृप सीतयापूजितासापिसर्वकामार्थसिद्धये गौतम्यांदंडकारण्येस्नानं
कृत्वायथाविधि नलान्वेषणकामायदमयंत्याचपूजिता रुक्मिण्याचततःस्नात्वापूजिताकोकि-

लाश्रित्वा विस्तोः पत्युरवाप्यर्थं तत्त्वजातं न संशयः कुचैलामलिनादीनायरकर्मरतातथा एवंवं
ध्याकाकवंध्याकन्यावत्साविदत्सकाः सर्वास्ताः फलभाजः स्युर्व्रतस्यास्य प्रभावतः आयुरारोग्य।
मैश्वर्य्यसुखंवृद्धिं यशः सुतान् सौभाग्यं सुंदरं रूपं नारी प्राप्नोति नान्यथा एवं व्रतं मयाख्यातं।
कार्य्यं वारत्रयं नृप तृतीयांते च विधिवत्कार्य्यमुद्यापनं शुभं एकस्मा जायते द्रव्यं द्वितीयाल्लभ·
ते सुतान् तृतीयाच्चापि सौभाग्यं प्राप्नुयान्नात्र संशयः इति वाराहे कोकिलाव्रतम् अथोद्यापनं भ
विष्योत्तरे युधिष्ठिर उवाच उद्यापनविधिं ब्रूहि व्रतस्यास्य मम प्रभो येन विज्ञातमात्रेण सौभाग्यं
च भविष्यति श्रीकृष्ण उवाच श्रावण्यां पौर्णमास्यां तु शुक्लपक्षे विशेषतः द्वितीयायामेकभ·
क्तं दंतधावनपूर्वकम् उपवासस्य नियमं कर्त्तव्रतपरायणं तृतीया पुण्यफलदा मध्याह्ने समु
पोषिता उपलिप्य शुचौ देशे मंडलं तत्र कारयेत् लिखेदष्टदलं पद्मं चतुष्कोणोपशोभितम्
कलशं वारिपूर्णं च पंचरत्नसमन्वितम् तस्योपरिन्यसेत्पात्रं शूर्पं वंशैकविंशति समस्थान्यभृ·
तं पात्रं प्रस्थेनैकेन पूरितं तदभावे तदर्द्धं वा कुडवेनाथ पाण्डव ऊर्णपट्टेन स्वर्णयुग्मं द·
यात्स्वशक्तितः तस्योपरिन्यसेद्देवीं कोकिलां पूजयेत्ततः अन्नगंधप्रदानेन धूपदीपप्रदानकैः
नैवेद्यं मोदकाद्यं च पक्वान्नं सहितं वद अर्घ्यं चैव प्रदातव्यं तांबूलं फलमुत्तमं रात्रौ जागरणं का·
र्यं वाद्यनृत्यसमन्वितं पूजयित्वैकचित्तेन फलं प्राप्नोति चाक्षयं प्रभाते विमले जाते स्नानं कृत्वा विधान
तः नित्यं निर्वर्त्य विधिवद्धोमं च विधिना द्विजः तिलं पंचकपुष्पैश्च तंडुलैर्घृतपायसैः अष्टोत्तरश
तं हुत्वा दुर्गामंत्रैश्च वैदिकैः कोकिलाप्रीतये तद्वद्व्याहृतीनां शतत्रयं ब्राह्मणान्भोजयेत्पश्चात्स
पत्नीकांश्च पंच च अशक्तो ह्येकयुग्मं च भोजयेच्च तथा गुरुं स्त्रीभ्यश्चैव प्रदातव्यां करकाः पंच चैव
त मोदकाश्च सहस्राश्च वंशपात्रसमन्विताः कृष्णवर्णसमायुक्ताः पक्वान्नैर्न वपूरयेत् सर्वोपस्क
रसंयुक्तं त्रिस्त्रीभ्यश्च प्रदापयेत् आचार्य्यं पूजयेद्भक्त्या गां कृष्णां च सवत्सकां उपानहौ तथा शय्यां वास
सी युग्ममेव च मुद्रिकाकर्णवेष्टौ च चंदनं कुसुमान्वितं सर्वं दद्याद्द्विजेंद्राय सपत्नीकाय वै द्विजः
दापयेद्विधिवत्सर्वं ब्राह्मणाय कुटुंबिने व्रतोपदेष्ट्रे दानं च भोजनं च सदक्षिणं एवं या कुरुते राजन्
कोकिलाव्रतमुत्तमं सर्वं प्राप्नोति सौभाग्यं पुत्रधान्यधनानि च ततो भुंजीत नैवेद्यं पुत्रपौत्रसमन्वितः
कोकिले पूजिता गच्छ विधिवत्सर्वकामदे कारयेत्कोकिलां देवीं सौवर्णां सर्वकामदां रौप्यं चरणयो
श्चैव नेत्रयोश्चापि मौक्तिकं पंचरत्नानि पृष्ठे च चूतवृक्षसमाश्रितां एवं चैव यथा पूज्य यथोक्तविधि·
नाशनैः विप्रहस्तेर्पिता लक्ष्मीः सं स्वभावेमिदं शृणु महाक्रममवाप्नोति महामाया प्रसादतः ॥

इति श्रीनारदीये कोकिलाव्रतोद्यापनम्

अस्याश्चकरणे प्रत्यवायो यो यो ध्याकांडे भरतेनोक्तः आषाढी कार्तिकी माघी तिथयो मीव पुण्यदाः अ
प्रदानवमी यां तु यस्यार्थी तु मतेगतः अथास्योद्यापने संक्षिप्तप्रयोगः कौमुद्यां पूर्वोक्तसंकल्पांते
यथोक्तफलप्राप्त्यर्थमाचरितकोकिलाव्रतोद्यापनं करिष्ये तत्रादावाचार्य्यवरणं विधाय· एकलिं
गतोभद्रे ब्रह्मादिदेवताः स्थाप्य तदुपरि प्रस्थपरिमितसप्तधान्यपुंजोपरि ताम्रपात्रे कलशं वस्त्र·
युग्मवेष्टितं कलशं प्रतिष्ठाप्य तदुपरि एकविंशतिवंशपात्रं तिलपूर्णं वंशपात्रं निधाय तत्र पूर्वोक्त
लक्षणां हैमीं कोकिलां गौरीमिमायमंत्रेण प्रतिष्ठाप्य पूर्वोक्तप्रकारेण पूजयेत् रात्रौ जागरणं कृत्वा प्रातः
अग्निं प्रतिष्ठाप्य अन्वादध्यात् कोकिलारूपिणीं गौरीं गौरीमिमायेति मंत्रेण तिलपंचकपुष्पतंडुल·
पायसाज्यद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिस्तथा व्याहृतिमंत्रेण बिल्वपत्रैः शतत्रयप·
रिमिताहुतिभिर्ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या यजे एवं होमं संपाद्य पंचमिथुनानि संपूज्य अश

क्षौद्रयंतेभ्योगुडतैलमिश्रितपक्वान्नपूरितकरकयुतं सौभाग्यद्रव्यदक्षिणान्वितं वंशपात्रस्थं छ
न्नोर्णवस्त्रेणवेष्टितंवायनं दद्यात् तत्रमंत्रः देविचैत्ररथोत्पन्ने विंध्यपर्वतवासिनि अर्चितापूजिता
सित्वंकोकिलेहरवल्लभे कोकिलेकलकंठासिमाधवेमधुरस्वरे वसंतेवससेदेविगच्छत्वंनंदनंवनं
इतिमंत्रेणविसर्जयेत् ततःसदन्नेनब्राह्मणान्संतोष्य आचार्यायकोकिलाप्रतिमांसोपस्करांशय्यां
गांचदत्त्वा भूरिदानेनान्यानपिसंतोष्याशिषोगृह्णीयादिति कोकिलाव्रतोद्यापनं आसामेवांबि
काव्रतं ब्रह्मपुराणे आषाढस्यपौर्णमास्यांयोर्चयेदंबिकांनरः सोपवासोमहाभागसयातिपरमां
गतिं सोपवासःकृतोपवासः परमगतिर्मोक्षः अत्रशिवपूजोक्ता भविष्यपुराणे आषाढस्यपौ
र्णमास्यांविधिवत्पूजयेच्छिवं सोश्वमेधमवाप्नोति विष्णुलोकेमहीयते अत्राभियुक्ताःपठंति शु
चिसितदिनकरवारेकरमूलेबद्धमूलस्य नागारेरिवनागाःप्रयांतिकिलदूरतस्तस्यतथा आर्द्रायाः
प्रथमेपादेक्षीरमश्नातियोनरः अपिरोषान्वितस्तस्यतक्षकःकिंकरिष्यति क्षीरंपरमान्नमश्नात्ययं
वक्ष्यादितिव्रतिहस्तकाः तथा मूलंतंडुलवारिणापिबतियःप्रत्यंगिरासंभवं निष्पिष्टंशुचिभद्रयोग
दिवसेतस्याहिभीतिःकुतः कुर्यादेवयदाफणीदशतितंमोहान्वितोभूलयं स्यानंतेनसएवयाति
नियतंचक्रंयमस्याचिरात् शुचिराषाढःप्रत्यंगिराशिरीषः अत्रविश्वेदेवपूजोक्ता ब्रह्मपुराणे आ
षाढ्यांतेवैश्वदेवेनक्षत्रेसतिशोभने दशतान्पूजयेन्मंत्रैः विश्वेदेवान्महाबलान् वैश्वदेवंउत्तराषा
ढानक्षत्रंतेचदशक्रतुर्दक्षोवसुः सत्यःकालःकामस्तथैवच धुरिश्चलोचनश्चैवतथाचैवपुरूरवाः
आर्द्रवश्चदशैतेतुविश्वेदेवाःप्रकीर्तिताः इतिबृहस्पत्युक्तेः भविष्यपुराणे आषाढ्यांस्नानपूजेच
श्रावण्यांसततंनरः आषाढ्यामथकार्तिक्यांमाघ्यांवाश्वपदान् पूजयेत्पितृदैवतदत्तमक्षयमु
च्यतेइति अत्रविष्णुपुराणदानमुक्तं नारदीये एतद्धिविष्णुपुराणंतुसर्वशास्त्रार्थसंग्रहः वाराहकल्पवृ
त्तांतंव्यासेनकथितंत्विह योनरःपठतेभक्त्यायःशृणोतिचसादरं तावुभौविष्णुलोकंतुव्रजेतांभुक्तभो
गकौ तल्लिखित्वाचयोदद्यादाषाढ्यांघृतधेनुना सततंविष्णुभक्तायपुराणार्थविदेद्विज सयातिवै
ष्णवंधामविमानेनार्कवर्चसा इति घृतधेनुदानंविष्णुधर्मोत्तरेज्ञेयम् अस्यांशिवशयनमुक्तं हेमा
द्रौवामनपुराणे पौर्णमास्यामुमानाथःस्वपतेचर्मसंस्तरे वैयाघ्रेचजटाभारंसमुद्ग्रथ्याहिवर्षाणि
ति इयंचमहाव्रतत्वात्सर्वविद्याशाल्या अत्रविष्णुशयनमप्युक्तं आगेकादशीप्रकरणे अत्रैवआषाढ्यां
शयांआपूजायोज्ञाकाशीत्वंउदीच्यांभारभूतेश्वमाषाढीशंसमर्चयेत् आषाढ्यांपंचदश्यांतेनघा
पैःपतिष्यते कृत्वासांवत्सरीयात्रामनेनाजायतेनरइति अस्यांकिंचिद्दानंकार्यमाषाढीकार्तिकी
माघ्यादिनावैशाखीप्रकरणेद्रष्टव्यम् अस्यामेवशिवपवित्रारोपणमुक्तं हेमाद्रौ शिवधर्मपुराणभवि
ष्ययोः पौर्णमास्यांतथाषाढ्यांशिवंसंपूज्ययत्नतः उपवीतंशिवेदद्याद्विभवेभक्तिमान्प्रपूजयेत् पुन
रेवचकार्तिक्यांपूज्यशंभुंक्षमापयेत् यतिभ्योदक्षिणांदद्यात्सूत्रवस्त्रादिपूर्वकं यःकुर्यात्सकृदप्ये
वंचात्मीशेपवित्रकं कल्पकोटिशतंदिव्यंरुद्रलोकेमहीयतइति अत्रैवकालांतरविधिपूर्वकं
नित्यत्वमुक्तंकालांतरे आषाढ्यांतेचतुर्दश्यांनभस्यनभसोस्तथा अष्टम्यांचचतुर्दश्यापक्षयोरुभ
योःसमं पवित्रारोपणंकार्यंसप्तम्यांचाधिवासनपूर्वकं गंधपवित्रारोपणंशिवेकार्यं पौर्णमा
स्यामनुष्ठानपक्षेचतुर्दश्यामष्टम्यांवाचाधिवासनंकार्यं सप्तम्यांवात्रयोदश्यांतत्रगंधपवित्रक
विधानतः आवणेप्रोष्ठपद्यांचपवित्रारोपणंतयः कुरुतेनापवित्रःस्यात्सतुसंवत्सरंनरइति शि
वरहस्यवचनाच्चपवित्रारोपणंशुचौ आषाढ्यामधिमासत्वेतत्रनेदंकार्यं आषाढेतुनकर्तव्यं

सुप्ते देवे जनार्दन इति वचसा तदभिप्रायेण निबंधकृद्भिः प्रत्याख्यानात् उक्तमासत्रयेतदकरणे कन्या
गतेपि सूर्ये तत्कार्यं उक्तमासत्रये यस्तु न कुर्यात्सूत्रारोहणं असौ कन्यागते भानौ यथा दक्षिणेनाकृ·
ते कुर्यात्पवित्रं शंभोस्तु तुलायां न कथंचनेति वचनाद्दक्षिणेनाघोरमंत्रेणेति व्याख्यातं हेमाद्रिणा
सहकालासंभवे सद्योपि तत्कर्तव्यं यद्वा तदेव कर्तव्यं यदि प्रत्यग्रतया तदा गोदोहांतरितं कृत्वा सा·
धिवासिकं पवित्रकमिति वचनांतरात् मंत्रातिरिक्तविधिस्तु विष्णुपवित्रारोपणवद्बोध्यः अस्यामेव
पौर्णमास्यां संन्यासिनामौत्सर्गिकसंचरणे चातुर्मास्यगतापवादस्य परिपालनसंकल्पांगत्वेन क्षौ·
रं व्यासपूजादिकं विहितं उत्सर्गशास्त्रं चाह स्येनाश्वतरीये एकरात्रं वसेद्ग्रामे पत्तने तु दिनत्रयं पुरे
दिनद्वयं भिक्षुर्नगरे पंचरात्रकं वर्षास्वेकत्र तिष्ठेत स्थाने पुण्यजनाश्रिते आत्मवत्सर्वभूतानि प·
श्यन्भिक्षुश्चरेन्महीमिति अहरणस्तौ वर्षास्वध्रुवशीलस्तु मासेकाकी यतिश्चरेत् द्वावेवाचरेदि·
ति अत्र वर्षास्तु मास्विति कार्तिकांताश्चत्वारो मासा उच्यंते द्वाविति द्वयोर्वा श्रावणभाद्रपदयोरित्य·
र्थः ध्रुवशीलः एकस्थिरः चरेदिति भिक्षाटनाद्यनुवादः मेधातिथिः आषाढ्यां पौर्णमास्यां च का·
रयेद्वपनं यतिः चातुर्मास्यमध्ये तु वर्जयेद्वपनं यतिरिति तथा च वपनांते तु पुनः स्नानमद्भिर्द्वाद·
शभिर्यतिरिति द्वादशं च प्रकुर्वीत क्षौरांते प्राणसंयमानिति अत्रिः वपनानंतरं स्नात्वा पूजयेत्पु·
रुषोत्तममिति यतिधर्मसमुच्चये देवं कृष्णं मुनिं व्यासं भाष्यकारं गुरोर्गृहं गुरुदेवगणाध्यक्षं डमं
देवीं सरस्वतीं गणं गणेशं अध्यक्षं क्षेत्रपालं अत्र क्षौरादिसंकल्पकर्मणि औदयिकी त्रिमुहूर्ता पू·
र्णिमा ग्राह्या त्रिमुहूर्तातिथिकं ग्राह्यं पर्व क्षौरे प्रणामयोरित्यभियुक्तोक्तेः कृत्यरत्नावल्यादौ तु मध्या·
ह्नव्यापिनी ग्राह्या दिनद्वये तादृशी चेत्परैवेत्युक्तं केनापि प्रणिधानेन पौर्णमास्या अस्य संकल्पवि·
धेरसंभवे द्वादश्यामेवानुष्ठेयं द्वादश्यां पौर्णमास्यां वा कुर्यात्संकल्पमात्मविदित्यादिवचनादिति
अथ व्यासपूजाविधिरुच्यते आषाढपौर्णमास्यां यतिः प्रातरुत्थाय मृच्छौचादि कृत्वा अष्टोत्तरश·
तस्नानपूर्वकं क्षौरस्नानसंध्यादिपर्वतर्पणांतं कार्यं ततो व्यासपूजां स्थापनांगत्वेन हस्तौ पादौ प्रक्षा·
ल्य प्राणायामं च कृत्वा ब्राह्मणैः सह तिथ्यादि संकीर्त्य व्यासपूजां करिष्ये इति संकल्प्य श्रीपर्णीवृ·
क्षपीठं निधाय तदुपरि सदशं धौतवस्त्रं निःसार्य तत्र संन्यासपीठं गंधादिना लिखेत् तत्राद्यं क्रम·
प्रागायता द्वादश रेखा उदगायता उदक्संस्था द्वादश रेखा लिखेत् ततः पृथिव्या मेरुपृष्ठ ऋषिः
सुतलं छंदः कूर्मो देवता आसनोपवेशने विनियोगः पृथ्वि त्वेति पठित्वा आधारशक्तये नमः वे·
दव्यासाय नमः अनंताय नमः इत्यासनमावाह्य पूर्वे रक्षतु गोविंदो आग्नेय्यां गरुडध्वजः याम्यां
रक्षतु वाराहो नारसिंहस्तु नैर्ऋते केशवो वारुणीं रक्षेद्वायव्यां मधुसूदनः उत्तरे श्रीधरो रक्षेदीशा·
न्यां तु गदाधरः ऊर्ध्वं गोवर्धनधरो ह्यधस्तात्तु महीधरः इति दिग्बंधः प्राणायामत्रयं कृत्वांगकरन्यासौ
कृत्वा प्रणवस्य ऋष्यादि स्मृत्वा पादादिन्यासध्यानं कृत्वा सलिलं स्पृशेत् आधारशक्तिमारभ्य सात्व·
तपृष्ठे पीठदेवता आवाहयेत् आधारशक्तये नमः वैराग्याय नमः ऐश्वर्याय नमः वेदव्यासाय न·
मः अनंताय नमः वराहाय नमः पृथिव्यै नमः रत्नदीपाय नमः रत्नप्रासादाय नमः दिव्यसिंहा·
सनाय नमः धर्माय नमः ज्ञानाय नमः वैराग्याय नमः ऐश्वर्याय नमः अधर्माय नमः अज्ञानाय
नमः अवैराग्याय नमः अनैश्वर्याय नमः सं सत्वबोधात्मने नमः रं रजसे प्रकृत्यात्मने नमः तं त·
मसे सोमात्मने नमः ॐ मूलाय नमः कंदाय नमः ॐ नालाय नमः पद्माय· पत्रेभ्यः· केसरेभ्यः·
कर्णिकायै· द्वादशकलात्मने सूर्याय· षोडशकलात्मने सोमाय· दशकलात्मने अग्निमंडलाय·
आत्मने· अंतरात्मने नमः इति पीठदेवता आवाह्य ततो मुख्यदेवता आवाहनं तत्र क्रमः गंगाण·

पतये· ॐ दुर्गायै· क्षेत्रपालाय· इंद्राय· सरस्वत्यै· निर्ऋतये· इत्याग्नेये वायव्ये ईशाने नैर्ऋ
त्यकोणेषु स्थापयेत् मध्ये श्रीकृष्णाय कृष्णपूर्वे वासुदेवाय· दक्षिणे संकर्षणाय नमः पश्चि
मे प्रद्युम्नाय· उत्तरे अनिरुद्धाय· इति कृष्णपंचकम् कृष्णदक्षिणभागे व्यासपंचकं स्थाप्य म
ध्ये वेदव्यासाय· व्यासपूर्वे सुमंतवे· व्यासदक्षिणे जैमिनये· व्यासपश्चिमे वैशंपायनाय नमः
व्यासोत्तरे पैलाय· इति व्यासपंचकं स्था· कृष्णवामभागे शंकराचार्यपंचकम्· मध्ये शंकरा
चार्येभ्यो नमः पूर्वे विश्वरूपाचार्येभ्यो· दक्षिणे पद्मपादाचार्येभ्यो· पश्चिमे हस्तामलकाचार्ये
भ्यो· उत्तरे त्रोटकाचार्येभ्यो नमः इति शंकराचार्यपंचकम् आवाह्य कृष्णपार्श्वयोर्ब्रह्मरुद्रौ प
श्चिमादौ सनकादीन्स्था· सनकाय नमः सनंदनाय नमः सनातनाय नमः सनत्कुमाराय नमः
सनत्सुजाताय नमः शुक्राय नमः नारदाय नमः इति कृष्णपूर्वभागे गुर्वादीन्स्थापयेत् गंगुरु
भ्यो नमः पं परमगुरुभ्यो नमः पं परमेष्ठिगुरुभ्यो नमः पं परात्परमगुरुभ्यो नमः अन्यांश्च ब्रह्मवि
द्याचार्यान्पूजयेत् ते च ब्रह्म ब्रह्मा वसिष्ठश्च शक्तिश्चैव पराशरः व्यासः शुक्रो गौडपादो गोविन्दस्वा।
मिशंकराः इडविद्याचार्येभ्यो नमः विवरणाचार्येभ्यो नमः समस्तब्रह्मविद्यासंप्रदायप्रवर्तका
चार्येभ्यो नमः ततः इंद्रादिदिक्पालान्स्वस्थाने स्थापयेत् तत्रायं क्रमः पूर्वे इंद्राय नमः अग्नये न
मः यमाय नमः निर्ऋतये नमः वरुणाय नमः वायवे नमः सोमाय नमः ईशानाय नमः ब्रह्मणे न
मः अनंताय नमः आत्मने नमः अंतरात्मने नमः परमात्मने नमः इति दिक्पालानावाह्य गृहान्विप्र·
तिष्ठाप्य ततस्तन्मित्रावरुणौ ततः षोडशोपचारैर्वेदमंत्रैः पूजयेत् सहस्रशीर्षेति षोडशर्चस्य नारा·
यण ऋषिः पुरुषो देवता अनुष्टुप्छंदः अंत्या त्रिष्टुप् षोडशोपचारपूजायां विनियोगः सहस्रशीर्षे·
त्यावाहनं पुरुष एवेत्यासनं एतावानस्येति पाद्यं· त्रिपादूर्ध्व इत्यर्घ्यं· तस्माद्विराडित्याचमनं आप्या·
यस्वेत्यादिमंत्रैः पंचामृतं यत्पुरुषेणेति स्नानं तं यज्ञमिति वस्त्रं· तस्माद्यज्ञात्सर्वहुतः संभृतमिति य·
ज्ञोपवीतं· हिरण्यरूप इत्यलंकारान् तस्माद्यज्ञात्सर्व· ऋचः सामानीति अक्षताः तस्मादश्वेति पुष्पा
णि· परिमलद्रव्यम् यत्पुरुषं व्यदधुरिति धूपं· ब्राह्मणोस्येति दीपं· चंद्रमा मनस इति नैवे·
द्यम्· मध्ये पानीयं· उत्तरापोशानं करोमीत्युद्वर्तनम् नाभ्या आसीदिति फलम्· तांबूलं च· स
प्तास्यासन्निति दक्षिणा नीराजनं च· यज्ञेन यज्ञमिति मंत्रपुष्पं· अथवा सर्वानेव तत्तन्नाम्नाय।
ति: पूजयेत् पश्चाद्दंतकाष्ठवस्त्रचंदनोदकं च दद्यात् व्यासयुक्तानिमान्सर्वान्पूजयेत् यथाक्रमं अ
थ पुष्पांजलिः लक्ष्मीकलत्रं ललिताब्जनेत्रं पूर्णेंदुवक्त्रं पुरुहूतमित्रं कारुण्यपात्रं कमनीयगा
त्रं वंदे पवित्रं वसुदेवपुत्रम् १ ॐ नमो भगवते वासुदेवाय शुद्धबुद्धस्वरूपिणे हिरण्यरेतसं त्र·
यं प्रधानपुरुषरूपिणे १ नमोस्त्वनंताय· नीलोत्पलदलश्याममंपीतांबरधरं हरिम् शंखचक्रगदा
पद्मधारिणं प्रणमाम्यहम् इति कृष्णाय पुष्पांजलिः वेदव्यासस्वात्मरूपं सत्यसिंधुपरायणम्
प्रशांतं दिव्यमुनिं वैशंपायनं प्रणमाम्यहम् १ इति वैशंपायनपुष्पांजलिः सर्वशास्त्रार्थतत्त्वज्ञं प
रमानंदरूपिणम् ब्राह्मणं शंकराचार्यं प्रणमामि विवेकिनम् २ परात्परतरं शांतं योगींद्रं योगि·
सेवितं शांतेंद्रियं जितक्रोधं सशिष्यं प्रणमाम्यहं इति शंकराचार्यपुष्पांजलिः पदे पदे महापाप
मज्ञानकृतं सकलं कृतान् प्रदक्षिणानंतं मया गृहाण जगदीश्वर इति प्रदक्षिणा ततः पूर्वासनोप
विश्य त्वा नमस्कारं कुर्यात् व्यक्ताव्यक्तं स्थूलसूक्ष्मं निर्गुणं सगुणं शुभम् विश्वव्यापिममीशानं वंदे
देवं मायातिम् १ इति नमस्कारः उद्भिज्जैरंडजैर्वापि प्राणिभिर्व्याप्यते मही सूक्ष्मास्तु क्षेमे वर्षासु जन्तै
र्नानारूपैः समंततः एतेषां रक्षणार्थाय समापाद्य दिवसान्यतः अप्रतिप्रतिबंधे येत्र मासान्वैवार्षिकानि

ह निवसामीति संकल्प्य मनसाविधिपूर्वकं वाचिकसंकल्पसंन्यासिवक्त्राच्छ्रावणादिः सा·
यावच्चतुरो मासान्सर्वभूतहिताय वै निद्रां यास्यति शेषांके लक्ष्म्या सह जगत्पतिः सुप्ते देवे स्थितो या।
वन्न भवेत्स सनातनः अहं तावन्निवत्स्यामि सर्वभूतहिताय वै १ इदं व्रतं मया देव गृहीतं पुरतस्तव
निर्विघ्नं सिद्धिमायातु प्रसादात्ते रमापते २ शरत्काले तु प्रायेण प्राणिभिर्व्याप्यते मही स्थास्यामि
चतुरो मासानतस्तेषां हिताय वै ३ स्वापयिष्यामि शेषांके लक्ष्म्या सह जगत्पतिं शेषपर्यंकवर्येस्मि
न्फणामणिगणान्विते श्वेतद्वीपांतरे चैव कुरु निद्रां जगत्पते ४ सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवे
दुवि विबुद्धे च विबुध्येत प्रसन्नो मे भवाव्यय श्वेतद्वीपे योगिनाथे भोगिनाथे स्थिते त्वयि चातुर्मास्य·
व्रतानुज्ञां देहि लक्ष्मीपते नमः चतुरो वार्षिकान्मासान्देवस्योत्थापनावधि इति चातुर्मास्यसंकल्प
ततः उक्तवंतं यतिं ब्रूयुः पार्श्वस्था ये द्विजातयः निवसंतु सुखेनात्र गमिष्यामः कृतार्थतां दर्शना·
त्सहवासाच्च भाषणादभिवंदनात् भिक्षादानाद्दत्तदानाद्भविष्यामः कृतार्थतां त्वयि भुक्ते जगन्ना
थो भुक्तो भवति सर्वदा त्वयि तुष्टे देवगणाः संतोषं यांति सर्वदा अतो भवद्भिः स्थातव्यं चातुर्मास्यव्र
तावधि यथाशक्त्या सुश्रूषां वः करिष्यामो ह्यहर्निशं गृहस्थैः प्रार्थितो भिक्षुरत्रैव स्थास्यामीति प्रति
वदेत् ततो यतिः यस्य स्मृत्वेति पठित्वा अनेन परमेश्वरः प्रीयतामिति वदेत् ततो गृहस्थैरासन·
कौपीनांतर्वासोबहिर्वासः प्रावरणीयवस्त्रापवरणीयवस्त्रैर्गंधाक्षतपुष्पधूपदीपखाद्यनैवेद्य।
फलनीराजनमंत्रपुष्पप्रदक्षिणानमस्कारैर्यतिस्तोषणीयः पूजानिवेदनं कृत्वा ब्राह्मणान्संपूज्य
यथाशक्ति दक्षिणां दत्वा श्रीपरमेश्वरः प्रीयतामिति यथाशक्ति ब्राह्मणान्भोजयेत् इति गृहस्थधर्माः
प्राग्दृष्टैर्मृदमादाय शुद्धां कंचिदपीडयन् प्राग्दृष्टैर्ज्येष्ठाषाढमासयोः एवं मृत्तिकासंग्रहो दंतका
ष्ठदंडोदकपात्रादिकसंग्रहप्रदर्शनार्थः तस्य सर्वस्य समानत्वात् स्मरन्यतेश्वरं विष्णुं वामनं क्रोड
रूपिणं येनोद्धृतासि देवि त्वं क्रोडरूपेण दंष्ट्रया त्वया सह समायातु केशवो धरणीधरः इति मन्त्रं स

गृह्य इति शंकराचार्यकृता व्यासपूजा समाप्ता ॥

अस्यामेव गजपूजोक्ता व्रतहेमाद्रौ एवमस्त्विति देवेश स्तम्भुवाच मतंगजं आषाढ्यां च तथाभा
द्र्यां समभ्यर्च्य गजाधिपं तव पूजां करिष्यंति दन्तोद्यिषो वरस्तवेति तद्विधिस्तत्रैव द्रष्टव्यः विस्त
रभयान्नेह प्रतन्यते इयं मन्वादिः अस्यामेव दिग्विशेषो वायुसंचारे फलविशेष उक्तो ज्योतिःशा।
स्त्रे आषाढ्यां भास्करास्तेमरपतिनिलये वातिवाते सुवृष्टिः सस्यार्द्धं संप्रकुर्याद्यदि दहनदिशि
मंदवृष्टिर्यमेन नैर्ऋत्ये सस्यनाशो वरुणदिशि जलं वायुकोणे प्रवायुः कौबेर्यां सस्यपूर्णास
कलवसुमतीतद्वदीशानवायौ १ अत्र नक्षत्रयोगवशादपि फलविशेष उक्तः संहितायां आषाढ
पूर्णिमायां तु तन्नक्षत्रं विचारयेत् पूर्वाषाढे सुभिक्षं स्यान्मूले दुर्भिक्षमुच्चकैः उत्तराषाढके स्यान्नां
पीडा कटकसंहतिरिति अस्यां विष्णुपुराणाद्दानं तल्लिखितावयोदयादाषाढ्यां हूतयेत्तु तेन तु क्रमम्
हूतयेत्तु दानं विष्णुधर्मोत्तरे तिलाभावे तथाद्याहूतयेत्तु प्रयत्नतः वासुदेवं जगन्नाथं हूतह्नीराभि
वचनैः संपूज्य पूर्ववत्सुधौर्गंधधूपादिभिर्नरः अहोरात्रोषितो नाम्ना अभिभूय ह्रतार्चिषं गव्यस्य·
सर्पिषः कुंभं पुष्पमालाविभूषितं कांस्योपधानसंयुक्तं सितवस्त्रयुगेन च हिरण्यगर्भसहितं मणि
विद्रुममौक्तिकैः कुंभः पलसहस्रपरिमाणः द्वादशपलादिकानि पंचशतपलानि वा कुंभः इक्षुय
ष्टिमयान्मासादान्नुरान् रौप्यमयांस्तथा सौवर्णे चाक्षिणी कुर्यात् शृंगे चागुरुकाष्ठजे सप्तधान्यमा
ये पार्श्वे पत्रोर्णेन च कंबलम् पत्रोर्णा धौतकौशेयं कुर्यात्तु रुक्मकर्पूरैर्घ्राणं फलमयांस्तनान् तथा·
क्षः सिल्हकं शिल्हारस इति यावत् पुच्छं लोममयं कार्यं रोमाणि सितसर्षपैः ताम्रपृष्ठं विधिवत्

इष्टकरूपांमनोहरां विधिनाकृतवत्सांचक्रधारिण्यांललितां एवंकृत्वातथानत्वापूजयित्वावि
धानतः तत्सक्राय प्रदातव्या मंगलाशास्त्रपारगे एतांममोपकाराय गृहाणत्वंद्विजोत्तम प्रीयतां·
ममदेवेशोहृताविः पुरुषोत्तमः इत्युदाहृत्यविप्रायदद्याद्धेनुंनराधिप स्कांदेत्वयंमंत्रः घृतमग्नि
श्चदेवाश्चघृतंमेदीयतामितिफलं घृतक्षीरवहानद्योयत्रपायसकर्दमाः त्रिषुलोकेषुसर्वेषुस-
त्वभागीभवेन्नरः सकामानांविषयंतुष्टिः कथितान्नृपसत्तम त्वृष्टिःफलं विष्णुलोकंनरोयाति
निष्कामायदिदीयतेइत्यादि दक्षिणात्वेकसुवर्णप्रभृतियथाशक्तीतिदिक्रूपमिति घृतधेनुदा-
नविधिः ॥ स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्नानाशास्त्रविचारसाररसवि
त्सहृंदसंरक्षकः धर्माधर्मविभागकृद्रघुपतेःपादांबुजार्चारतो जीयात्पुत्रकलत्रमित्रसहितस्सं
पालयन्क्ष्मांचिरं २ रणवीरसिंहभूपेणकारितेकृत्यसागरे अभूदाषाढकृत्यानांरम्योरत्नस-
मुच्चयः ३ इतिश्रीमत्सूर्यवंशावतंसरघुकुलतिलकश्रीरणवीरसिंहमहाराजकारितेकृत्य
रत्नाकरे आषाढमासकृत्यरत्नसमुच्चयः ॥

श्रीगणेशायनमः

श्रीरघुनाथोजयति

अथश्रावणमाससंक्रान्तिनिर्णयः तत्रकर्कटसंक्रांतौपूर्वास्त्रिंशत्घटिकाःपुण्यकालः सूर्योद
योत्तरंसंक्रमेतुपरदिनएवपुण्यकालः रात्रौतुनिशीथात्प्राक् परतश्चसंक्रमे अपरार्कहेमाद्रि
नंतभट्टादिमते पूर्वोत्तरयोर्दिनयोः पंचपंचनाड्यःपुण्यकालः धनुर्मीनावतिक्रम्यकन्यांचमि
थुनंतथा पूर्वापरविभागेनरात्रौसंचरतेरविः दिनांतेपंचनाड्यस्तुतदापुण्यतमामताः उदये
पितथापंचदैवेपित्र्येचकर्मणि इतिस्कांदोक्तेः पूर्वापरविभागेनेति मकरकर्कटभिन्नसंक्रांति
परंवक्ष्यमाणवचोविरोधात् इत्युक्तंमदनरत्ने तेनायमर्थः रात्रौपूर्वविभागेमकरेपंचनाड्यः
पुण्यकालः रात्र्यर्धपरविभागेकर्कटसंक्रमेपूर्वदिनांतेपंचनाड्यः विषुवतोपूर्वदिनेपंच पर
दिनेतिवाक्यांतरानुरोधात् तेनहेमाद्रिमाधवयोःसर्ववचनानांचाविरोधः माधवमतेतु अर्धरा
त्रेतदूर्ध्वंतुसंक्रांतौदक्षिणायने पूर्वमेवदिनंग्राह्यंयावन्नोदयतेरविरितिवृद्धगर्गोक्तेः मिथुना
त्कर्कसंक्रांतिस्तुयदास्यादंशुमालिनः प्रभातेवानिशीथेवातदापुण्यंतुपूर्ववत् इतिभविष्योक्ते
श्चपूर्वदिनएवपुण्यं दाक्षिणात्यास्तुनदेवाद्रियंते अर्धरात्रावपिस्नानदानादिभवतीत्युक्तम्
प्राक् अत्रदानोपवासाद्युक्तं तथात्र केशादिविकर्तनंनिषिद्धं कुंभेचकर्कटेवापितथैवका
र्मुकेपिवा रोमखंडंगृहस्थस्यापिहन्यात्तयनेपुपय इतिसुमंतुवचनादिति विशेषस्तुजीवत्पि
तृविषये अत्रनदीनांरजोदोषः हेमाद्रावत्रिः सिंहकर्कटयोर्मध्येसर्वानद्योरजस्वलाः तासु
स्नानंनकुर्वीतवर्जयित्वासमुद्रगामिति व्याघ्रोक्तेश्च इदंतुदनदीविषयं माहात्म्येत्वगस्त्यो
दयावधित्वमुक्तं यावन्नोदेतिभगवान्दक्षिणाशाविभूषणं तावद्रजोवहानद्यःकरतोयाप्रकी
र्तिताः करतोयास्वल्पोदकाः तथाचकात्यायनः याशोषमुपगच्छंतिग्रीष्मेकुसरितोभुवि ता
सुप्राहुस्तिनस्नायादपूर्णेदशवासरे स्रवंतिसंग्रहे धनुःसहस्राण्यष्टौचगतिर्यासांनविद्यते न
तानदीशब्दवहागर्तास्तेकथिताभुवि महानदीषुभविष्योक्तं आदौकर्कटकेदेविमहानद्योर
जस्वलाः त्रिदिनंतुचतुर्थेह्निशुद्धाःस्युर्जाह्नवीयथा महानद्यश्चब्राह्मे गोदावरीभीमरथीतुंग
भद्राचवेणिका तापीपयोष्णीविंध्याद्दक्षिणेपरिकीर्तिताः वेणिकाकृष्णवेणा भागीरथीन
र्मदाचयमुनाचसरस्वती विशोकाचवितस्ताचविंध्यस्योत्तरतःस्थिताः द्वादशैतामहानद्योदेव
र्षीक्षेत्रसंभवाः मदनरत्नेपुराणांतरे महानद्योदेविकाचकावेरीजरातथा रजसातुप्रदुष्टास्तुक
र्कटादौत्र्यहंनृप कात्यायनः कर्कटादौरजोदुष्टागोमतीवासरत्रयं चंद्रभागासतीसिंधुसरयू
र्नर्मदातथा इदंगंगाद्यतिरिक्तविषयं गंगाचयमुनाचैवप्लक्षजाचसरस्वती रजसानाभिभू
यंतेयेचान्येनदसंज्ञकाः शोणःसिंधुर्हिरण्याख्यःकोकिलोहितघर्घराः शतद्रुश्चतथासप्ता
र्णवाःपरिकीर्तिताः इतिदेवलोक्तेः यत्तु प्रथमेकर्कटेदिनत्र्यहंगंगारजस्वलेति जाह्नवीभिन्ना
गोदावर्यादिगंगांतरपरमितिमदनरत्ने अन्येतु नदतीरनिवासिनामितिनिगमोक्तेः नूतनकू
पादौयोगियाज्ञवल्क्यः अजागावोमहिष्यश्चब्राह्मणीचप्रसूतिका दशरात्रेणशुद्ध्यंतिभूमि
स्थंचनवोदकमिति क्वचित्तुदोषाभावमाह व्याघ्रपादः अभावेकूपवापीनामन्येनापिपयोभृते

नोदुष्टेपि पयसि ग्रामभोगो न दुष्यति तेनोद्धृतेन दोषः तथा तासु स्नानं न कुर्वीत इत्याहुः वसि
ष्ठोपि इत्याकर्मीणि चोत्सर्गे प्रेतस्नाने तथैव च सूर्यचंद्रग्रहे चैव रजोदोषो न विद्यते इत्यलं विस्तरेण
अथ श्रावणकृत्यविशेषा आग्नेयपुराणे यश्चेंधनं ददेद्देवि वर्षादिचतुरोन्नृतून् घृतधेनुप्रदोंतेच परं
ब्रह्मादि गच्छति शातातपः अयनादिदानमाह अयनादौ सदा देयं द्रव्यमिष्टं गृहेषु यत् यदा तु क
र्कटं याति भगवान् चंडदीधितिः ततः प्रभृति कालः स्याद्दक्षिणायनसंज्ञकः तत्र प्रावृडृतुसं
द्रव्यफलपुष्पाणि भूमिस्तथा गोरसान्कांस्यंस्तथा शाकान्ब्राह्मणेभ्यो निवेदयेत् हिमं च शर्कराचैव धा
कमूलफलानि च उपानच्छत्रमाल्यानि तिलायेनुं च शास्त्रवत् तत्र कर्कटसंक्रांतिदिने हिमंक
पूरं अत्र स्वर्गीयफलं विश्वजिन्न्यायात् भविष्ये नैवेद्यमणयो मासं विधिनाजयेद्धवि पुण्यत
देवसकलं भवेद्विषुवदर्शनात् एवमेव च विज्ञेयं ग्रहणे चोत्तरायणे संक्रांतिदिवसे चैव षडशी
तिमुखेषु च तत्कार्तिक्यां भवेत्पुण्यं समाराध्य दिवाकरं पुण्यमेव च फाल्गुण्यां माघ्यामाषाढ्यामेवमे
व च मत्स्यपुराणाग्निपुराणयोः आषाढ्यादिचतुर्मासान्प्रातःस्नायी भवेन्नरः विप्रेषु भोजनं द
द्यात्कार्त्तिक्यां गोप्रदो भवेत् स वैष्णवं पदं याति विष्णुव्रतमिदं स्मृतं आषाढीति बहुव्रीहिस्तत्कृ
ग्नासंविज्ञाने [आरभ्य] चतुरो मासां कार्त्तिक्यां गोप्रदो भवेदिति श्रवणात् आग्नेयपुराणे अयनादयनं याव
द्वर्जयेत्पुष्पसर्पिषी तदंते पुष्पदानानि घृतधेन्वा सदैव तु दद्याच्छिवपुरं याति विप्राय घृतपायसं
एतच्छीलव्रतं नाम शीलारोग्यप्रदायकं महाभारते श्रावणं नियतो मासमेकभक्तेन यः क्षिपेत्
यत्र तत्राभिषेकेन युज्यते ज्ञातिभिर्धनैः यत्र तत्रेति ह्यांत्रिमे जलाशयेपीति श्रावणकृष्णप्रतिपाद
यो श्रावणमासनियमानां प्रारंभः आषाढ्यामुपोषणं संकल्पश्च विधेयः अत्र तिथित्वेन वह्नि
ऊनाधिकायां श्रावणकृष्णद्वितीयायामशून्यशयनव्रतं मत्स्यपुराणे श्रीभगवानुवाच श्रा
वणस्य द्वितीयायां कृष्णायां मधुसूदनः क्षीरार्णवे सलक्ष्मीकः सदा स्वपिति केशवः तस्यां संपूज्य गो
विंदं सर्वान्कामानवाप्नुयात् गोभूहिरण्यदानानि शतकल्पशतायुषं अशून्यशयनी नाम द्विती
यायां प्रकीर्त्तिता तस्यां संपूज्य गोविंदं मंत्रैरेभिर्विचक्षणः श्रीवत्सधारिन् श्रीकांत श्रीवास श्री
निकेतन गार्हस्थ्यं मा प्रणाशं मे यातु धर्मार्थकामद अग्नयो मा प्रणश्यंतु देवता पुरुषोत्तम पि
तरो मा प्रणश्यंतु मत्तो दांपत्यभेदतः लक्ष्म्या वियुज्यते देवो न कदाचिद्यथा दिवि तथा कलत्रसंबं
धो देव मा मे वियुज्यतां लक्ष्म्या न शून्यं वरद यथा ते शयनं सदा शय्या ममाप्यशून्यास्तु तथा मे म
धुसूदन गीतवादित्रनिर्घोषं देवदेवस्य कारयेत् घंटा भवेदशक्तस्य सर्ववाद्यमयी यतः एवं संपू
ज्य गोविंदं भोजनं तैलवर्जितं सशाकं क्षारलवणं यावन्मासचतुष्टयं ततः प्रभाते संजाते लक्ष्मीप
तिसमन्वितं दीपान्नभोजनैर्युक्तां शय्यां दद्याद्विचक्षणः पादुकोपानहच्छत्रचामरासनसंयु
तां अभीष्टोपस्करैर्युक्तां शुक्लपुष्पांबरावृतां सोपधानकविश्रामां फलैर्नानाविधैर्युतां तथा
भरणधान्यैश्च यथाशक्त्या समन्वितां अव्यंगाय च विप्राय वैष्णवाय कुटुंबिने दातव्यावेदविदुषे
न च कुप्येत कस्यचित् तत्रोपवेश्य दांपत्यमलंकृत्य विधानतः पत्न्यास्तु भाजनं दद्याद्भक्ष्यभोज्य
समन्वितं ब्राह्मणस्यापि सौवर्णीमुपस्करसमन्वितां प्रतिमां देवदेवस्य सोदकां विनिवेदयेत् एवं
यस्तु पुमान्कुर्यादशून्यशयनं हरेः वित्तशाठ्येन रहितो नारायणपरायणः न तस्य पत्न्या विरहः क
दाचिदपि जायते नारी वा विधिवद्युक्ता यावच्चंद्रार्कतारकं न विरूप्यं विशोकं च दांपत्यमभिजायते
न पुत्रधनरत्नानि क्षयं यांति पितामह सप्तकल्पसहस्राणि सप्तकल्पशतानि च कुर्वन्नशून्यशयनं
विष्णुलोके महीयते विष्णुपदगोदिदार्थः उपक्रमे तथा कीर्त्तनात् द्विधाऽपि पितद्वते क्रियमाणे

कलत्रपदेपतिपदोहः पुरुषस्यस्त्रियश्चेतिक्रमात् यावन्मासचतुष्टयं स्यादित्यर्थः एवंसंपूज्यगोविं
दमश्नीयात्तैलवर्जितं मितिपूजानंतरमत्रातैलाशनप्रतिपादनात् यत्रैवदिनेपूजातत्रैव दिनेअने
प्रानम् पूजनेचकृष्णद्वितीयायामेव तस्यांसंपूजयेद्विष्णुमितिकीर्तनात् अतोयावत्तृतीयाभवति
तावत्कृष्णद्वितीयातिथिगोविंदपूजनं नक्तमक्षारतैललवणंभोजनमित्यर्थः ततःप्रभातइति च
तुर्थकृष्णद्वितीयानंतरंप्रभातेशय्यादिदानमित्यर्थः लक्ष्मीपतिसमन्वितामितिलक्ष्मीपतिना
युवासितांशय्यांदद्यादित्यर्थः तत्तत्प्रतिमान्वितां प्रतिमायाश्चाग्रेदानकथनात् इतिमत्स्यपुरा
णे अशून्यशयनद्वितीयाव्रतम् भविष्यपुराणे श्रीभगवानुवाच अशून्यशयनांनाम द्विती
यां शृणुभारत शेतेजगत्पतिःकृष्णःश्रियासार्द्धंमहीपते अशून्यशयनींनामसदाकार्याद्वि
सातिथिः कृष्णपक्षेद्वितीयायांश्रावणेमासिभूपते इदमुच्चारयेन्मंत्रंप्रणम्यजगतःपतिं श्री
वत्सधारिन्श्रीकांतश्रीवासश्रीपतेऽव्यय गार्हस्थ्यंमाप्रणाशंमेयातुधर्मार्थकामद अग्नयोमा
प्रणश्यंतुमाप्रणश्यंतुनिर्जराः यामयोमाप्रणश्यंतुयतोदांपत्यमेवच लक्ष्म्यावियुज्यतेदेवो
नकदाचिद्यथाभवान् तथाकलत्रसंबंधोदेवमामेवियुज्यतां लक्ष्म्यानशून्यंवरदयथातेशय
नंसदा शय्याममाप्यशून्यास्तुतथैवमधुसूदन एवंप्रसाद्यपूजांचकृत्वालक्ष्म्यासहहरेः फ
लानिदद्याच्छय्यायामभीष्टानिजगत्पतेः नक्तंप्रणम्यायतनेहरिंभुंजीतवाग्यतः ब्राह्मणायद्वि
तीयेह्निशय्यांदद्यात्सदक्षिणां शतानीकउवाच कानिकानित्वभीष्टानिफलानिकेशवस्यतु यो
ग्यानिशयनेविप्रदेवदेवस्यकथ्यतां किंचिद्दानंद्वितीयेह्निदातव्यंब्राह्मणस्यच भक्तैर्नरैर्द्विजश्रे
ष्ठदेवदेवस्यशक्तितः सुमंतुउवाच यानितत्रमहाबाहोकालेसंतिफलानिच मधुराण्यतितीक्ष्
णानिनचात्तिकटुकानिच दातव्यानिनृपश्रेष्ठस्वशक्त्याशयनेतदा मधुराणिचदत्त्वातुमनो
वल्लभतामियात् तस्मात्कटुकतीक्ष्णाणिस्त्रीलिंगानिचवर्जयेत् खर्जूरमातुलिंगानिस्थितानिशिरा
सांसह द्वितीयेह्निप्रदेयानिभक्त्याशक्त्याचभारत वासोदानंचधायान्यदानंयान्नस्यशस्यते एवंक
रोतियःसम्यङ्नरोमासचतुष्टयं तस्यजन्मत्रयंवीरगृहभंगोनजायते अशून्यशयनश्चास्यधर्मकामा
र्थसाधकः भवत्यव्याहतैश्वर्यःपुरुषोनात्रसंशयः नारीवाराजधर्मज्ञव्रतमेतद्यथाविधिः याक
रोतिनशोच्यासौबंधुवर्गस्यजायते वैधव्यंदुर्भगत्वंचभर्तृत्यागंचसत्तम नाप्नोतिजन्मत्रितयेकृ
त्वैतद्व्रतमुत्तमम् इत्येषाकथिताराजन्द्वितीयातिथिरुत्तमा यामुपोष्यनरोराजन्वृद्धिमर्द्धिंश्रियंल
भेत् मात्स्येपिश्रियासहप्रणम्येत्यर्थः उपोष्येत्यत्रउपवसनमुपासनं अन्यनक्तंभुंजीतेत्यभिधा
नात् अग्नयोमाप्रणश्यंतिसाविद्यमानव्रतेनेत्यर्थः नालिकेरंत्वनेन यत्तभागहरोविष्णुः गांगेय
मत्रसवर्णं मासचतुष्टयं तत्रमासकृष्णचतुर्थीचतुष्टयमित्यर्थः स्त्रीकर्तृकपक्षेकलत्रसंबं
धोमामेवियुज्यतामित्यत्रकलत्रपदस्थानेपतिपदोहः पूर्ववदेव फलानिदद्याच्छय्यायामिति
धारणमात्रे अग्रेदानाभिधानात् नक्तंप्रणम्येत्यादौ नक्तंप्रणम्यभुंजीतेत्यन्वयः इत्येषाकथि
तेत्यादिना कर्मारंभफलांतरार्थं आषाढ्यानंतरंचसमाचारात् इत्यशून्यशयनद्वितीयाव्रतम्
इदंश्रावणादिमासचतुष्टयं कृष्णपक्षद्वितीयासुकार्यं द्वितीयाचचंद्रोदयव्यापिनीग्राह्या ए
कभक्तेदिवानक्तेनिशिचंद्रोदयेव्रते तिथिस्तात्कालिकीग्राह्येतिमदनरत्नस्मृतिसंग्रहवचनात्
चंद्रोदयव्रतत्वंचास्य चंद्रोदयेऽर्घ्यदानस्यादर्घ्यदानविधेषित इतिचंद्रोदयेऽर्घ्यविधानात् दिन
द्वयेतत्रसत्त्वेऽसत्त्वेवापूर्वाचतुर्थीसितपक्षेषुमासेषुश्रावणादिषु अशून्याख्यव्रतंकुर्यादाय
यातुफलाधिक मितिमदनरत्नोदाहृतवचनात् अत्रपूर्णिमांतोमासोग्राह्यः दिनद्वयेतथापि

पूर्वी अन्नगोपूजा यवान्नप्राशनमितिविशेषो दिवोदासीये श्रावणकृष्णतृतीयाकज्जलीसंज्ञेतिदि
वोदासीये कृत्यरत्नावल्यां तत्रश्यामवर्णपुष्पादिभिः सांजनाक्षतैश्च देवीपूजा कज्जलादिसौभाग्य
द्रव्यं सुवासिनीभ्योदेयमिति शिष्टाचारात् अस्यामेव श्रवणयुक्तायां विष्णुपूजा तदुक्तं हेमाद्रौ वि
ष्णुधर्मोत्तरे तृतीयाश्रवणोपेता यासाश्रवणसंयुता तस्यां संपूज्य गोविंदं तदृष्टिमग्राममवाप्नुयादि
ति श्रावणकृष्णचतुर्थी सोमकल्पादि तत्र श्राद्धादिकल्पांतस्यापि फलप्रदमुक्तं कल्पादिप्रबंधे
श्रावणकृष्णचतुर्थ्यां संकष्टचतुर्थीव्रतम् तच्चंद्रोदयव्यापिन्यां कार्यं श्रावणेबहुलेपक्षेचतुर्थ्यां
तुविधूदये गणेशं पूजयित्वाच चंद्रायार्घ्यं प्रदीयते इति कथायाम् तत्रचपूजाविधानात् दिनद्वये
तद्व्याप्तावव्याप्तौवापूर्वा मातृविद्धागणेश्वर इतिवचनात् गणेशगौरीबहुलाव्यतिरिक्ताः प्रकी
र्तिताः चतुर्थ्यः पंचमीविद्धा देवतांतरयोगत इति मदनरत्ने ब्रह्मवैवर्तवचनाच्च नचतृतीयावि
द्धाविधायकवचनात् दिवात्रिमुहूर्तेवेपेसत्येवप्रहत्त्रिनैराज्ञाविति भ्रमितव्यं अहः स्वातिययः
पूएषाः कर्मानुष्ठानतोदिवा नक्तादिव्रतयोगेषु रात्र्यंशो गो विशिष्यते इति तत्रात्रिव्यापस्यापिरात्रि
साध्यकर्मसु हेमाद्रिमाधवादिभिरुक्तत्वात् अथव्रतविधिः मासपक्षाद्युल्लिख्य विद्याधनपुत्र
रोगमुक्तिसंकटनाशकामः स्त्रीतुभर्त्रादिविरहसंकटविमुक्तिकामासंकटचतुर्थीव्रतपूजादिकं
करिष्ये इति संकल्पः सौवर्णीरौप्यताम्र मृण्मयाद्यन्यतमां गणेशमूर्तिं कृत्वा जलपूर्णंव
स्त्रयुतं कुंभं तस्याग्रेस्थापयित्वाषोडशोपचारैः पूजयेत् तत्रादौ ध्यानं लंबोदरंचतुर्बाहुं त्रिनेत्रंरक्त
वर्णकं नानारत्नैः सुवेषाढ्यं प्रसन्नास्यं विचिंतयेत् ध्यायेद्गजाननंदेवं तप्तकांचनसंनिभं चतुर्भुजं
महाकायं सूर्यकोटिसमप्रभं आवाहनं आगच्छत्वंजगन्नाथसुरासुरनमस्कृत अनाथनाथस
र्वज्ञविघ्नराजनमोस्तुते गजास्यायनमः आसनं गोप्तात्वंसर्वलोकानांसिद्ध्यादीनांविशेषतः भक्त
दारिद्र्यविच्छेदिन्नेकदंतनमोस्तुते विघ्नराजायनमः पाद्यम् मोदकानामर्पणेनभक्तानांवरदा
यक देवदेवनमस्तेस्तुभक्तानांवरदोभव लंबोदरायनमः अर्घ्यम् महाकायमहारूपअनंतफल
दायक देवदेवनमस्तुभ्यंसर्वेषांपापनाशन शंकरसूनवेनमः ४ स्नानंपंचामृतेनैवगृहाणगण
नायक अनाथनाथसर्वज्ञनमोमूषकवाहन उमासुतायनमः स्नानं कुरुष्वाचमनंदेवसुरवंद्या
खुवाहन सर्वविघ्नदलनस्वामिन्नीलकंठनमोस्तुते वक्रतुंडायनमः ६ वस्त्रं रक्तवस्त्रकयुग्मंचदेवा
नामपिदुर्लभं गृहाणमंगलंदेवलंबोदरनमोस्तुते शूर्पकर्णायनमः ७ यज्ञोपवीतं ब्रह्मसूत्रं
सोत्तरीयंगृहाणगणनायक आरक्तंब्रह्मसूत्रंचकनकस्योत्तरीयकं कुब्जायनमः ८ चंदनम्
गृहाणेश्वरसर्वज्ञदिव्यंचंदनमुत्तमम् विनायकनमस्तुभ्यंशिवसूनोनमोस्तुते विघ्ननाशनाय
नमः ९ अक्षताः शालितंडुलसंभूतान्कुंकुमाक्तान्सुखंडितान् अक्षतान्गणनाथत्वंगृहाण
वरदोभव पुनर्विघ्ननाशनायनमः १० पुष्पं सुगंधिद्रव्यमाल्यंचगृहाणत्वमिभानन विनायक
नमस्तुभ्यंशिवसूनोनमोस्तुते विकटायनमः ११ धूपं दशांगगुग्गुलंधूपमुत्तमंगणनायक ग
हाणदेवदेवेशउमासुतनमोस्तुते विकटाक्षायनमः १२ दीपं सर्वज्ञसर्वरत्नानांसर्वेशाविबुध
प्रिय गृहाणमंगलंदीपंघृतकर्पूरसंयुतं वामनायनमः १३ नैवेद्यम् नैवेद्यंगृह्यतांदेवनानामोद
कसंयुतं सर्वान्नफलसंयुक्तंसर्वभक्तिसमन्वितं सर्वदेवायनमः १४ फलं फलान्यमृतकल्पानि
सुगंधीन्यघनाशन आनीतानियथाप्राप्तान्यागृहाणेमानिमानद सर्वार्तिनाशनेनमः १५ तांबू
लं तांबूलंगृह्यतांदेवनागवल्लीदलैर्युतम् कर्पूरगंधसंयुक्तंसुगंधिमुखभूषणं विघ्नहर्त्रेनमः
१६ समस्तपूजार्पणम् सर्वदेवाद्यदेवायसर्वसिद्धिप्रदायक भक्त्याकृतामिमांपूजांगृहाणोमासुत

तपुष्पगंधाद्यैः पूजयित्वाविसर्जयेत् ततोवैपूर्वविशिष्टांश्च ज्ञातिमित्रसमाश्रितान् भोजयेदागतां
श्चान्यान्मिष्टान्नंश्चस्वशक्तितः एवंविधिंविनिर्वर्त्यपवित्रारोपणेहरेः विष्णोःसायुज्यमाप्नोतिपुन
रावृत्तिवर्जितं स्थंडिलेदेवदेवस्यएषएवविधिःस्मृतः पवित्रारोपणेविष्णोर्विशेषःश्रूयतामिह या
वन्मानसमायुक्तंभावयेत्तज्जनार्दनं तावदंगुलकंतस्यपवित्रंमानवंस्मृतं यावंतोग्रंथयःप्रोक्ताः
स्वनस्तेष्वानुमंत्रणं तत्रैवमूलमंत्रेणदद्याद्विष्णोःपवित्रकं प्रतिमायांस्थंडिलेवाकृत्वाविष्णोःपवि
त्रकं कुलानांशतमुद्धृत्यविष्णुलोकंव्रजेन्नरः एवंसंपाद्यविधिनापवित्रारोपणंहरेः अर्चयित्वावि
धानेनहरिंचसपवित्रकं विसर्जनस्यमंत्रेणअनेनैवपवित्रकं सांवत्सरींशुभांपूजांसंपाद्यविधिव
न्मम व्रजेदानींपवित्रत्वंविष्णुलोकंविसर्जितः मंत्रेणानेनतत्सूत्रंपावनार्थंयथाविधि उत्तार्यब्रा
ह्मणेदद्यात्तोयेचाथविसर्जयेत् यावत्पुण्यंस्मृतंसम्यक्पवित्रारोपणेकृते उपवीतेकृतेभक्त्या
तत्फलंचाप्नुयान्नरः अनेनैवविधानेनतस्यपूजाविसर्जनं प्रार्थनावाहनंदानंसमस्तंविधिनाचरेत्
तत्वमंत्रैःसमावेशाविसर्जनविधिक्रियाः अर्चनेचसुरेंद्राणांसर्वकामानवाप्नुयात् आयुर्बलंय
शोविद्यामारोग्यंकीर्त्तिमव्ययं प्रयच्छंतियथाशक्त्याप्रसन्नास्तुदिवौकसः अर्चितेदेवदेवेशे
शंखचक्रगदाधरे अर्चिताःसर्वदेवाःस्युर्यतःसर्वगतोहरिः अर्चितेसर्वलोकेशेसुरासुरनमस्कृते
केशवेकंसकेशिघ्नेनयातिनरकंनरः प्रातर्मध्येपराह्नेचसुरासुरगुरुंहरिं येनमंत्रिनरानित्यंव्रते
नरकगामिनः तपस्तप्त्वानरोघोरमरण्येविजितेंद्रियः यत्फलंसमवाप्नोतिस्तुत्वातद्गरुडध्वजं
इतिगुह्यतमंविष्णोःपूजाकल्पमयोदितं समाचरतियोमर्त्यःसयातिपरमांगतिं इतिब्रह्मपु
राणोक्तःपवित्रारोपणविधिः शिवागमेशिवपवित्रलक्षणं एकाशीत्यथवासूत्रैःत्रिंशताचाष्टयु
क्तया पंचाशतावाकर्त्तव्यं तुल्यग्रंथ्यंतरालकं द्वादशांगुलमानानिव्यासादष्टांगुलानिवा लिं
गविस्तारमानानिचतुरंगुलिकानिवा तथैवपिंडिकास्पर्शीचतुर्थ्यंसार्वदैवतं गोगावतारकंका
र्यपवित्रमतिसुंदरं गोगःशिवः अथविष्णुरहस्योक्तःपवित्रारोपणविधिः नारदउवाच भगवन्
देवदेवेशपरंकौतूहलंहिमे पवित्रारोपणंपुण्यंप्रसादाद्वक्तुमर्हसि पवित्रेतिकथंसंज्ञाकुतो
त्पन्नंकिमुच्यते कृतेचकिंफलंप्रोक्तंविधानंतस्यकीदृशं द्रव्येणकेनवाकुर्यात्किंप्रमाणंहित
त्स्मृतं किंदैवतंचकिंछंदःकोवातस्यऋषिःस्मृतः अध्यात्मंचाधियज्ञंचआधिदैवंकथंभवेत् के
नमंत्रेणतत्कुर्याद्विधानंतस्यकीदृशं कस्मिन्कालेतुकर्त्तव्यंनक्षत्रेचतिथौकथं कियंतंध्रियते
कालमेतद्ब्रूहिसुरेश्वर श्रीभगवानुवाच साधुनारदधर्मज्ञतोषितोहंत्वयानघ शृणुष्वैतद्वक्ष्या
मिपवित्रारोपणंक्रमात् पावयत्येवयन्नित्यंत्रायतेभवबंधनात् पवित्रंतेनविख्यातंब्रह्मतेजो
हिगीयते विष्णवाद्येयत्तुविख्यातंतदालोकेनिगद्यते तदेवसूत्ररूपेणयत्तेशःकर्मणःप्रभुः त
दैवत्रिगुणीभूतंमननात्रायणाख्यया त्रिदेवात्मात्रिवेदात्मात्र्यक्षरःप्रणवःस्मृतः तेनेनवःसमु
द्भूतावसद्धार्थागमिश्रिताः कृतेउत्पन्नमितियत्प्रश्नस्यैवेदमुत्तरं संपानेनचसंभूतानत्रात्माप
रिकीर्तितः तंतूनांप्रथमोदेवोवासुदेवोजगद्गुरुः हलायुधोद्वितीयश्चप्रद्युम्नश्चतृतीयकः अप
रश्चानिरुद्धस्ततोनारायणःप्रभुः ब्रह्माविष्णुस्तथैवाग्निर्वराहेणसमाश्रिताः अधिदैवेनरूपेण
अध्यात्मंचनिबोधमे मनोबुद्धिरहंकारस्तन्मात्राणितथैवच जीवश्चेतिनवैवात्रअध्यात्मेसंव्यव
स्थिताः द्यौरंतरिक्षंपृथिवीभूर्भुवस्स्वस्तथैवच अकारश्चउकारश्चमकारश्चाधिभूतके अग्नित्रयंत
थाकर्मत्रयंचसदनत्रयं तेषांपवित्रेनद्विद्वानधिदेवमुदाहरेत् छंदश्चैवात्रगायत्रीप्रद्युम्नऋषि
रुच्यते वासुदेवःपरस्तस्यदेवतापरिकीर्तिता योगोस्यसर्ववेदानांब्राह्मणानांविशेषतः अलंका

रंद्विजातीनांकर्तव्यंप्रतिवत्सरं शरद्दर्भैस्तुकुर्वीतपवित्रारोपणंशुभं यावच्चधारयेत्तत्तुतावत्कुर्वीततद्
व्रतं तथापवित्रकंकृत्वात्रीन्मासान्मासमेववा पक्षंद्विमासमष्टौवात्रिरात्रंपंचएववा अवधिंकार्त्तिकं
कृत्वासितपक्षाद्यनुक्रमात् यथाशक्त्यायजेद्देवंकालसंकल्पनात्तथा पवित्रेध्रियमाणेवैनत्याज्यंदे
वतांतिकं अपवित्रेकृतेपश्चाद्यद्दोषं विचरेद्बुधः मंगलंशोभनंरुद्रंविजयंचचतुर्थकं आषाढस्य
क्रमेणैवदेवनामानिधारयन् द्वादश्यांश्रावणेवाथंचाष्टम्यामथवाद्विज अनुकल्पेतुकर्तव्यंपंच
दश्यामथापिवा सूत्रंतुसान्निकंकृत्वा तृणवल्कलसंभवं कार्पासिकंतथाकार्य्यदार्भिकंवापिकार
येत् ब्राह्मणीकर्तितंसूत्रमन्यज्ञातुयथारुचि त्रिगुणंत्रिगुणीकृत्यक्षालयेन्निर्मलांभसा यत्नेना
शोधयेद्दोषान्केशादींश्चस्वयंबुधः अष्टोत्तरशतंकुर्य्याच्चतुःपंचाशदेवताः सप्तविंशतिरेवाथ
ज्येष्ठमध्यकनीयसां अंगुष्ठपर्वमात्रास्तुग्रंथयश्चोत्तमाःस्मृताः तदर्धमध्यमाश्चैवतदर्धमधमाः
स्मृताः प्रथमंनाभिमात्रंस्याद्हृन्मात्रंद्वितीयकं उत्तमंजानुमात्रंचप्रतिमायानिगद्यते एवंद्विरूपतः
कुर्य्यादधमोत्तममध्यमे यथाशोभंप्रकुर्वीतग्रंथयोविषमाःस्मृताः सैवप्रोक्ताभवेद्देवग्रंथिर्देवत
विग्रहा आरोग्यदंद्विजश्रेष्ठएवंविद्याद्विचक्षणः स्थंडिलेवाथवक्ष्यामिप्रथमंकर्णिकांतरे द
लाग्रगंद्वितीयंचदिक्पालांतगंपरं यथाशक्त्यातुकर्तव्यंप्रत्यवायोह्यतिक्रमात् पितृतोमातृतः
शुद्ध आत्मशुद्धस्तथैवच सदाचारस्थितोमंत्रीवेदवेदांगपारगः अलुब्धोपिशुनःसौम्यःसर्वभूतहि
तेरतः आचार्यःसतुविज्ञेयःसर्वकर्मरतोद्विजः ब्राह्मणःक्षत्रियोवैश्यस्तथास्त्रीशूद्रएवच स्वधर्मा
वस्थिताःसर्वेभक्ताश्चमधुसूदने पूर्वोक्तंगुरुमासाद्यभक्त्यासंतोषयेच्चतं पक्षार्थंप्रार्थयेत्पश्चा
उद्धारंकुरुमेप्रभो पवित्रेणैवयत्नेनयजेयंमधुसूदनं करिष्याम्येवमित्युक्तेसंभारांश्चसमाचरेत्
हरेःसूत्रादियत्सर्वंगुरवेतन्निवेदयेत् यथाशक्त्यापवित्रंचशुचिःकुर्य्यादतंद्रितः अष्टाक्षरेणमंत्रे
णग्रंथ्यंतेग्रंथयस्तथा कुंकुमंरोचनाचैवकर्पूरेणसमन्वितं आदावुक्तेनमंत्रेणव्यस्तेनचविनि
क्षिपेत् समस्तेनततोमंत्रीमंत्रयेतविचक्षणः उक्तेनैवतुमंत्रेणचार्चयेत्पवित्रकं इतिकुंकुमंनि
क्षिप्यनमइति तदुपरिरोचनं नारायणायेतितदुपरिकर्पूरमिति व्यस्तेनमेलयित्वा ओंनमोनारा
यणायेतिसमस्तेनमंत्रेणाभिमंत्र्य समस्तेनैवपवित्रमलंकुर्य्यात् इतिविस्तरहस्योक्तःपवित्रारोपण
विधिः स्मृतिकौस्तुभेहेमाद्रौ कालोत्तरेपवित्रारोपणोपकरणे कृतेमणिमयंकार्यंत्रेतायांहेमसंभवं
पट्टजंद्वापरेसूत्रंकार्पासंतुकलौस्मृतं यतिर्मानसंकार्यमिति अथनृसिंहपरिचर्य्यायांरामार्चनचंद्रिको
क्तः पवित्रारोपणविधिः श्रावणस्यसितेपक्षेद्वादश्यांशौनकादिभिः उक्तस्तदाप्रकर्तव्यःपवित्रारोप
णोत्सवः तथाचबह्वृचपरिशिष्टे सस्नातःसर्वतीर्थेषुसर्वयज्ञेषुदीक्षितः हरेश्चप्रीतिमाप्नोतियः
पवित्रंसमाचरेत् विधिनाशास्त्रदृष्टेनयोनकुर्यात्पवित्रकं हरंतिराक्षसास्तस्यवर्षपूजादिजंफलं
पाद्मेतु ऊर्जेव्रतंमधौदोलांश्रावणेतंतुपूजनं चैत्रेदमनकारोपमकुर्वाणोव्रजत्यधः पवित्रारोप
णंविज्ञात्श्रावणेनभवेद्यदि कार्त्तिकावधिसिंहार्केकर्तव्यमितिनारदः इतिपवित्रनित्यताप्र
योगसारादुत्पत्तिपवित्रस्यप्रतन्यते कनीयान्वासुकेर्भ्रातापवित्रोनामनागराट् निराहारव्रतोभू
त्वादैविकंशरदांशतं तपस्तेपेसमाश्रित्यदेवदेवंमहेश्वरं प्रसन्नस्तपसातस्यप्रत्युक्तःपुरुषोत्तमः
प्रणतार्तिहरःशंभुराविरासीदुमाधवः प्रसादाभिमुखंदृष्ट्वादेवेशंभुजगेश्वरः कंठाभरणतांप्रा
प्तुंवव्रेवरमनुत्तमं तथेत्याभाष्यतंकंठेदधारत्रिपुरांतकः प्रादात्तस्मैवरंचान्यंपवित्रायात्मयोगिने
येत्वांनबहुमन्यंतेयथासंभावितोमया जपहोमादिजंतेषांफलंत्वामेतुनिश्चयात् अतएवश्रावणे
मासिनक्षत्रेवापिवैष्णवे तस्मादाराधयंतत्त्वांनित्यंनैमित्तिकोद्यताः वैदिकाःसक्तहोमेनपूजां

कुर्वन्तेनेह त्वत्सादृश्यानुकारेणानिवीतेनैव तान्त्रिकाः आराध्यदेवाय पूज्यायै देवतायै पवित्रकम्
नानागमोक्तमार्गेण तस्य कर्तव्यतोच्यते हैमरौप्यताम्रक्षौमैः सूत्रैः कौशेयजैः शुभैः काशैश्च का
र्पासैर्ब्राह्मणकर्तितैः शुभैः कन्यया वाथ पवित्रं स्यात्तन्तुपूर्वादिभिः कृतैः स्नात्वा त्रिगुणितं सूत्रं।
त्रिगुणीकृत्य शोधयेत् अभिषिंचेत्पंचगव्यैरद्भिः प्रक्षालयेत्ततः मूलेनाष्टोत्तरशतं गायत्र्यारामसंत
या अभिमंत्रयेदिति शेषः शंखोदकेनाभिषिंच्य पवित्राणि विनिर्मयेत् दुग्धद्यान्यपि गुणसूत्रैः पं
चगव्यक्रमं विदुः आप्यायस्वदधिक्राव्णस्तेजोसि पयः पंचगव्यके गंधद्वारां च गायत्री क्रमात्सूक्तेयं विच
क्षणैः इति सूत्रशुद्धिः तत्रोत्तमं पवित्रं तु यद्भ्रासहस्रशतैस्त्रिभिः समन्तात्सहितं ह्याभ्यां पवित्रं मध्यमं
स्मृतं साष्टीतिनाशतेनैव कनिष्ठं तत्समाचरेत् अष्टोत्तरशतं दद्याद्देनवसूत्रक्रमेण वा जानूरुना
भिपर्यंतमुत्तमादित्रयं भवेत् अष्टोत्तरसहस्रेण वनमालां प्रकल्पयेत् उत्तमस्य पवित्रस्य द्विगुणेन
विभावयेत् आरभ्य मुकुटं पादमूत्रेणारचिता शुभा आपादलंबिनी माला वनमाला प्रकीर्तिता यज
मानपवित्रं चाधिवासनपवित्रकं कनिष्ठेन समं कार्यं मध्यमेन समं गुरोः कुर्वीताग्रपवित्रं तु मध्यमे
न समं शुभं साधारणपवित्राणि त्रिभिः सूत्रैः समाचरेत् उत्तमं तु शतग्रन्थिं पंचाशद्ग्रंथिमध्यमं क
निष्ठं तु पवित्रं स्यात्षट्त्रिंशद्ग्रन्थिशोभितं षट्त्रिंशच्च चतुर्विंशत्तद्द्वादशेति केन च चतुर्विंशत्
द्वादशाष्टाविति केचन योविदुः अंगुष्ठपर्वमात्रं तु कुर्याद्ग्रंथिमथोत्तमे तदर्धेन तदर्धेन मध्यमे च क
निष्ठके ग्रंथीन्कुर्वीत सर्वत्र सदृशान्समनोहरान् न वेदिसमसंख्याकान्ग्रंथीन्कुर्वीत कर्हिचि
त् विशोभेन प्रदानेन कर्तुः स्यादशुभं फलं पवित्रं परयाभक्त्या तस्मात्कुर्वीत शोभनं कुंकुमं रोचनां
चैव कर्पूरेण च मिश्रितां तेन संरंजयेत्सूत्रमष्टाक्षरविमंत्रितं ततोभिमंत्रणं कुर्यात्तदिदं विष्णुरमं
त्रतः द्वादशाक्षरमंत्रो वा सर्वसाधारणः स्मृतः इति पवित्रलक्षणं ततस्तानि पवित्राणि वेणवेप
टले शुभे संस्थाप्य शुचिवस्त्रेणाविधाय पुरतो न्यसेत् आरभ्य संमितां वेणीं कुर्यात्षट्त्रिंशता कुशैः
मंत्रयेन्मूलमंत्रेणापंचगव्येन शोधयेत् तांतु कर्णान्तरे कृत्वा मानसं स्नानमाचरेत् ततस्तु सर्वतो रक्षां कृ
त्वा मौ होममाचरेत् महास्नानं प्रकुर्वीत उपचारांस्तथैव च देवस्य सर्वतः स्थाप्य दंतकाष्ठं जलं कुशाः
मृत्तिकां च हरिद्रां च कुंकुमं गोरोचनानि च पादुकोपानहौ छत्रं चामरं व्यजनं तथा व्रीह्यादीनि च धान्या
नि पुरतः स्थापयेत्तथा दंडवत्प्रणिपातैश्च स्तोत्रैर्नानाविधैरपि वैदिकैश्च जपैर्देवं यथावत्प्रतिबोधये
त् क्रियालोपविघातार्थं यत्त्वया विहितं प्रभो मयैतत्क्रियते देव तव तुष्ट्यै च पवित्रकं न हि विघ्नो भवे
दत्र कुरु नाथ दयां मयि सर्वथा सर्वदा विष्णो मम त्वं परमा गतिः उपवासेन त्वां देव तोषयामि जगत्प
ते कामक्रोधादयो ह्येते न मे स्युर्व्रतघातकाः अद्य प्रभृति देवेश यावद्वैशेषिकं दिनं तावद्रक्षा त्वया
कार्या सर्वस्यास्य नमोस्तु ते एवं विज्ञाप्य देवेशं गुरुपादौ प्रणम्य च कुर्यात्तु वैष्णवैः सार्धं पवित्रारो
पणं हरेः कुंभं पूर्णं तु नाभ्यूर्णं सर्वतोभद्रके शुभे स्थापयेत्पुरतो विष्णोस्तत्र सूत्राणि पूजयेत् संवत्स
रस्य यागस्य पवित्रीकरणाय भोः विष्णुलोकात्पवित्रत्वमागच्छेह नमोस्तु ते अनेनावाहयेत्सूत्रं
मूलमंत्रयुतेन च उत्तमादित्रये विद्वान्स्मरेद्देवत्रयं तथा गुणान्वेदत्रयं चैव ध्यायेल्लोकत्रयं तथा प्र
कृतिं वन दूर्वीयामालायां निखिलात्मिकां द्युलोकं मुकुटे सूत्रे ध्यायेत्तत्र शालिनी सर्वाभरण
विभूषण सर्वदेव नमस्तुभ्यं लावण्यरूपविष्णवात्मन्पवित्रसूत्रं समाश्रय सर्वलक्ष्मीकर श्रीश सर्वता
नमयात्मक निरन्तरूपविश्वात्मन्नमप्यसूत्रे समाश्रय अतिवेगजगद्योने पुरुषात्मन्दिवस्पते
कनीयसे प्रभो देव तेजसा सूत्रमाश्रय सर्वाधार परात्पर सर्वकर्तः प्रजापते सर्वधाम्नेशसूत्रेस्मि
न्सान्निध्यं कुरु ते नमः सर्वरत्नोज्ज्वलाकार ब्रह्मांड ब्रह्मरोचिष मुकुटोत्तमसर्वांगशिरःसूत्रदेहेहि

भोः प्रकृतिर्जगतः कर्त्री सर्वलावण्यदायिनी श्रीसूत्रे नित्यकल्याणि सान्निध्यं कुरु तेनमः उत्तमा
दीनि सूत्राणि क्रमाद्दलम्बयाणि ना मनुभिर्मंत्रयेदेभिः पूजयेन्मूलमंत्रतः ब्रह्मविष्णुमहादेवा स्थि-
सूत्रीदेवतास्मृताः ॐकारः सोमवह्नीच ब्रह्मानागाः शशी रविः शिवश्च विश्वेदेवाश्च नवसूत्राधिदेवताः
क्रियाच पौरुषी वीरा विजया पराजिता मनोन्मनी जया भद्रा मुक्तिश्च ग्रंथिदेवताः ध्यात्वावाह्य
मूर्तीकृत्य गंधपुष्पाक्षतांकुरैः धूपदीपान्ततांबूलैः पवित्राणि तु योचयेत् अथ देवकरे विद्वान् पट्ट
सूत्रसमुद्भवं वितस्तिमानकं ॐ बध्नीयान्मंगलात्मकं संवत्सरकृतार्चायाः संपूर्णफलदोस्ति यत्
पवित्रारोपणायेदं तत्कुरुष्व परे नमः ते इत्यपि पाठः ॐ विष्णुतेजोद्भवं रम्यं सर्वपातकनाशनं
सर्वकामप्रदं देव तवांगे धारयाम्यहं मूलसंपुटितादस्माद्द्याङ्गपपवित्रकं नीराजयेत्ततो देवं मं
गलाघोषपूर्वकं नैवेद्यं विविधं दद्यात्तांबूलमनुलेपनं उपतिष्ठेत्ततो देवं जितमित्यादिभिस्तवैः
मंत्रेणाथ सुरेशानं देवदेवं निमंत्रयेत् आमंत्रितोसि देवेश पुराणपुरुषोत्तम प्रातस्त्वां पू-
जयिष्यामि सान्निध्यं कुरु केशव क्षीरोदधि महाभाग शय्यावस्थित विग्रह प्रातस्त्वां पूजयिष्यामि
सन्निधौ भव ते नमः निवेदयाम्यहं तुभ्यं प्रातरेतत्पवित्रकं सर्वथा सर्वदा विष्णो नमस्तेस्तु प्रसीद मे
निपत्य दंडवद्भूमौ दत्त्वा पुष्पांजलिं पुनः पूजितान्यत्र सूत्राणि कुंभं च पुरतः स्थितं अस्त्रेण सर्वतो
रक्षेत्कवचेनावगुंठयेत् रक्षेद्वा चक्रमंत्रेण नृहरेर्मनुनाथवा ब्राह्मणांस्तु नमस्कृत्य गुरुपादौ प्रण
म्य च गीतमंगलनिर्घोषैः कुर्याज्जागरणं ततः अधिवासे विधिः प्रोक्तः कपिलेनीरदादिभिः अधि
वासनकालश्च दीपिकायामुक्तः गोदोहनदिने काले पूर्वे त्वधिवासनमिति इति पवित्राधिवासनं
ततः प्रातः समुत्थाय ध्यात्वा देवं यथोदितं नित्यपूजां ततः कृत्वा पवित्राणि तथैव च नीराजयेच्च तै
दीपैर्मंगलाघोषपूर्वकं स्तुत्वा च विविधैः स्तोत्रैर्महादेवस्वरार्चितं ततो मंगलनिर्घोषैः शंखतूर्या
दिनिःस्वनैः गंधदूर्वाक्षतैर्युक्तं दद्याद्देवाय सूत्रकं ॐ रामरामनमस्तुभ्यं गृहाणेदं पवित्रकं पवित्री
करणार्थाय वर्षपूजाफलप्रदं पवित्रं तत् कुरुष्वाद्य यन्मया दुष्कृतं कृतं शुद्धो भवाम्यहं देव त्वत्प्रसा
दात्सुरेश्वर मूलसंपुटितो ह्येष पवित्रारोपणे विभुः अंगाद्याहृतिदेवेभ्यस्ततो दद्यात्स्वनामभिः
नैवेद्यं तु महापूर्वं ततो दद्याच्च भक्तितः नीराजयेत्ततो देवं रमाकांतं सुमंगलं संवीज्य चामरैः पुष्प
दर्पणं दर्शयेत्ततः विविधानि च पुष्पाणि दद्यात्पुष्पांजलिं ततः प्रार्थयेद्देवदेवेशं मंत्रैरेभिर्यथा-
विधि मणिविद्रुममालाभिर्मंदारकुसुमादिभिः इयं सांवत्सरी पूजा तवास्तु गरुडध्वज वनमाला
यथा देव कौस्तुभः सततं हृदि पवित्रमस्तु ते न हृत्पूजा च हृदये वह ज्ञानतोज्ञानतो वापि न कृतं य
त्तवार्चनं केनचिद्विघ्नदोषेण परिपूर्णं तदस्तु मे अपराधसहस्राणि क्रियंतेहर्निशं मया दासो
यमिति मां मत्वा क्षमस्व मधुसूदन निपत्य दंडवद्भूमौ भक्तियुक्तेन चेतसा प्रणमेद्देवदेवेशरा-
ममिष्टार्थदं बुधः ततः पवित्रं गुरवे दद्यादर्घ्यादिपूर्वकं अथैनं पूजयेद्भक्त्या स्वर्णवस्त्रानुलेपनैः ब्रा
ह्मणान्विष्णुभक्तांश्च गंधपुष्पादिनार्चयेत् भक्त्या प्रतोषयेत्तांस्तु वस्त्रभोजनकांचनैः मासं पक्षमहो
रात्रं त्रिरात्रं धारयेत्तथा देवे नैसूत्रसंभेदे देशकालविवक्षया प्रत्यहं स्नानकार्यादि सूत्राणपुत्राये
कारयेत् अभिषिच्यार्चितोयेन पुनर्देवं निवेदयेत् अथान्ते देवमभ्यर्च्य विशेषात्पुष्पचंदनैः नैवे
द्यं विधिवद्दत्वा ततः सूत्रं विसर्जयेत् सांवत्सरीं शुभां पूजां संपाद्य विधिवन्मम व्रजेदानीं पवि-
त्रत्वं विष्णुलोकं विसर्जितः यावदेव पवित्राणि तावत्तिष्ठेत्समाहितः ब्रह्मचारी हविष्याशी देव-
पूजापरायणः पवित्रारोपणं कालेन करोति कथंचन तदा पुनर्जपेन्मंत्रं स्तोत्रं चापि समाचरेत्
इति पवित्रारोपणं अथ सर्वसाधारणप्रयोगः पवित्राणि तु स्वर्णरजतताम्रपट्टसूत्रक्षौमदर्भपद्म

सूत्रं कुशकाशमुंजशणवल्कलकार्पाससूत्रेषूत्तमसूत्रैः कुर्यात्तत्र निषिद्धसूत्राणि केशयुक्तं त
तदग्रं मध्यरक्तादिदूषितं मलिनं नीलरक्तं वा प्रयत्नेन विवर्जयेदिति कर्पाससूत्रं चेत्स्ववासिनीभिः
कर्त्तितं तथा लब्धं वा गृहीत्वा त्रिगुणीकृत्य नवसूत्रस्यैकरसत्वेन कल्पितैः सूत्रैः पवित्राणि कुर्या
त् स्वर्णादिसूत्रकृतपवित्रेषु यथाकृततंतुमादाय वक्ष्यमाणसंख्यासमानानीयेति शिवार्चन
चंद्रिकारत्नमालाकारयोराशयः तत्रादौ सूत्रशुद्धिक्रमः तत्सूत्रं पंचगव्येनाभिषिंच्याद्भिः प्रक्षा
ल्य मूलेनाष्टगायत्र्या वाष्टोत्तरशतवारमष्टवारं वा शंखोदकेनाभिमंत्र्य शुचौ देशे निधाय पवि
त्राणि कुर्यादिति सूत्रशुद्धिः तत्र उत्तमपवित्रं षष्ठ्यधिकत्रिशतसूत्रैर्मध्यमं साशीतिशतसूत्रैः
कनिष्ठं अथवाष्टोत्तरशतेनोत्तमं मध्यमं तदर्धं सप्तविंशत्या कनिष्ठं तच्च देवस्य जानुपर्यंतमुत्त
मं ऊरुपर्यंतं मध्यमं नाभिपर्यंतं कनिष्ठं वनमाला त्वष्टोत्तरसहस्रसूत्रैः कार्या उत्तमपवित्रसूत्र
प्रमाणान्नवगुणेन वा कार्या मुकुटमारभ्य पादपर्यंता माला वनमाला यजमानपवित्रमधिवास
नपवित्रं चाशीत्यधिकशतसूत्रैः सप्तविंशतिसूत्रैः कार्यं गुरुपवित्रं तु द्विसप्तत्यधिकशतद्वय
सूत्रैः चतुःपंचाशता सूत्रैर्वा कर्त्तव्यं नृसिंहपरिचर्यायां तु गुरुपवित्रं सप्तविंशतिभिर्द्विगुणावृत्त्या वा
नवसूत्र्या वा कर्त्तव्यमित्युक्तं अग्निपवित्रं तु गुरुपवित्रेण समं सप्तविंशत्या सूत्रैर्वा कर्त्तव्यं शिवप
वित्रं तूत्तममेकाशीत्या सूत्रैः कार्यं पंचाशता सूत्रैर्मध्यमं अष्टविंशता सूत्रैः कनिष्ठं तत्पवि
त्रप्रमाणं च द्वादशांगुलमानानि व्यासादष्टांगुलानि वा लिंगविस्तारमानानि चतुरंगुलकानि
वेति अन्यानि साधारणपवित्राणि त्रिभिः सूत्रैः कर्त्तव्यानि क्रमतस्तानि शिष्याणां च स्कंदादिना
भिपर्यंतं दैर्घ्यमुक्तं नृसिंहपरिचर्यायां तु परिवारदेवतानां पवित्राणि सप्तविंशति षोडश द्वा
दश नव त्रिसूत्रीभिः कर्त्तव्यानीत्युक्तं उत्तममध्यमकनिष्ठपक्षत्रयानुसारेण पवित्राणि कुर्यादि
ति शिवार्चनचंद्रिकाकारः अथ पवित्रेषु ग्रंथयः अष्टाक्षराभिमंत्रितैः कुंकुमगोरोचनैः कर्पूर
लत्सूत्रं रंजयित्वेदं विष्णुरिति मंत्रेण द्वादशाक्षरमंत्रेण वाभिमंत्र्य ग्रंथीन् कुर्यात् तत्रोत्तमपवित्रे
शतं ग्रंथयः षट्त्रिंशद्वा चतुर्विंशतिर्वा कर्त्तव्याः मध्यमपवित्रे तु पंचाशत् चतुर्विंशतिर्द्वादश वा
ग्रंथयः कार्याः कनिष्ठपवित्रे षट्त्रिंशतिरष्टादशाष्टौ वा ग्रंथयः कार्याः शिवार्चनचंद्रिकायां
त्वेतानि सर्वाणि द्वादशग्रंथियुक्तानि कर्त्तव्यानीत्युक्तं वनमालायामष्टोत्तरशतं ग्रंथयः कार्याः
गपपवित्रं तु द्वादशनवसूत्रीभिर्द्वादशग्रंथियुक्तमरत्निमात्रं ग्रंथिरहितं वितस्तिमात्रं वा कार्यं
अथ ग्रंथिरचनाप्रकारमाह अंगुष्ठपर्वमात्रग्रंथिरुत्तमे तदर्धेन मध्यमे तदर्धेन कनिष्ठे एवं
युक्तान् शोभनान् समान् ग्रंथीन् नारायणाष्टाक्षरकवचमंत्रेण वा जपन् कुर्वीत शिवार्चनचंद्रि
कायां तु ग्रंथिषु सूत्रवेष्टनसंख्योक्ता उत्तमपवित्रे षट्त्रिंशत् मध्यमेषु चतुर्विंशति कनिष्ठेषु
द्वादशेति ततो वस्त्राच्छादिते नवे वैणवे पटले तानि पवित्राणि संस्थाप्य पवित्राधिपदेवस
पुरतो न्यसेत् ततोऽरत्निसंमितां षट्त्रिंशता कुशैर्वेणीं कृत्वा तां वेणीं मूलमंत्रेणाभिमंत्र्य
पंचगव्येन संशोध्य कलशांतरे कृत्वा मानसस्नानं कुर्यात् तद्यथा स्वस्थितपुंडरीकाद्दं मंत्र
मूर्तिं प्रभुं स्मरन् अनंतादित्यसंकाशं वासुदेवं चतुर्भुजं शंखचक्रगदापद्ममुकुटवनमालि
नं दिव्यचंदनलिप्तांगं चारुहासं शुभेक्षणं नारदाद्यैः सेव्यमानं भास्वद्विपुलकंकणं सकिंक
णीककेयूरहारिणं मणिनूपुरं ध्वजच्छत्रांकुशालक्तपादपंकेरुहद्वयं तत्पादोदकजां धारां
निपतंतीं स्वमूर्धनि चिंतयेत् सुषुम्नामार्गेण प्रविशंतीं स्वकीं तनुं तया संक्षालयेत्सर्वमंतर्देहगतं म
लं तत्क्षणाद्विरजा मंत्री जायते स्फटिकोपमः इत्यांतरकं स्नानं सहस्राद्यधिकं स्मृतं ततः सर्व

नमस्कृत्य संवत्सरकृतार्चायाः संपूर्णफलदोसि यतः पवित्रारोपणायेतत्कुरुकंधरके नमः विष्णुते
जोद्भवंरम्यं सर्वपातकनाशनं सर्वकामप्रदंदेवतवांगेधारयाम्यहमिति मूलसंपुटितं श्लोकद्वयं
पठित्वा देवकरेबध्नीयात् ततोमंगलारात्रिकेनदेवंनीराज्यपुनर्नैवेद्यतांबूलादिभिः संपूज्य ध्ये
यंसदापरिभवघ्नमभीष्टदोहं तीर्थास्पदंशिवविरिंचिनुतंशरण्यं भृत्यार्त्तिहंप्रणतपालभवाब्धिपो
तं वंदेमहापुरुषतेचरणारविंदं १ त्यक्त्वासुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठआर्यवचसाय
दगादरण्यं मायामृगंदयितयेप्सितमन्वधावद्वंदेमहापुरुषतेचरणारविंदं २ श्रीमत्सरोरुहय
वांकुशतत्कवापमत्स्याकितंनवविलोहितपल्लवाभं लक्ष्म्यालयंपरममंगलमात्मध्येयंवंदेमहा
पुरुषतेचरणारविंदं ३ वृंदावनांतरमगादनुगोकुलानांसंचारितंसर्वपशुभिः सुविषद्वैकामी संचिं
तयद्व्रजगिरामृगपक्षिणांयद्वंदेमहापुरुषतेचरणारविंदं ४ यद्गोपिकाविरहजाग्निपरीतदेहा
स्तत्स्तनेषुविजहुःपरिरम्यतापं रासेतदीयकुचकुंकुमपंकलिप्तंवंदेमहापुरुषतेचरणारविं
दं ५ ज्ञानालयंश्रुतिविमृग्यमनादिमर्च्यं ब्रह्मादिभिर्हृदिविचिंत्यमगाधबोधैः संसारकूपपतितो
त्तरणावलंबंवंदेमहापुरुषतेचरणारविंदं ७ येनांगबालवपुषाःस्तनपानबुध्याक्षिप्तांघ्रिणा
हतमनोविपरीतचक्रं विघ्नस्तभांडमपतत्सुविगोपमर्त्यैर्वंदेमहापुरुषतेचरणारविंदं ८ इत्यष्ट
कंपठतियःपरमस्यपुंसोनारायणस्यनरकार्णवतारणास्य सर्वाभिमाशुहृदयःकुरुतेमनुष्यः
संप्राप्यदेहविलयंलभतेचमोक्षम् ९ योंतःप्रविश्यममवाचमिमांप्रसुप्तांसंजीवयत्यखिलश
क्तिधरःस्वधाम्ना अन्यांश्चहस्तचरणश्रवणत्वगादीन्प्राणान्नमोभगवतेपुरुषायतुभ्यं १०
इत्यादिभिःस्तुत्वादेवंनिमंत्रयेत् आमंत्रितोसिदेवेशपुराणपुरुषोत्तम प्रातस्त्वांपूजयिष्यामि
सन्निधौभवतेनमः निवेदयाम्यहंतुभ्यंप्रातरेतत्पवित्रकं सर्वथासर्वदाविष्णोनमस्तेस्तुप्रसीदमे
इतिसंप्रार्थ्यसाष्टांगंप्रणिपत्य पुष्पांजलिंदत्वा सूत्राणयस्त्रेणसंरक्ष्य कवचेनावगुंठ्य नृसिंहमं
त्रेणरक्षणंकुर्यात् नृसिंहमंत्रस्तु उग्रंवीरंमहाविष्णुंज्वलंतंसर्वतोमुखं नृसिंहंभीषणंभद्रंमृ
त्युमृत्युंनमाम्यहं ततोब्राह्मणवंदनंगुरुवंदनंचकृत्वा रात्रौजागरणंकुर्यात् सद्योधिवासनेतु
जागरणंनास्ति ततोजागरणंकुर्यात्सद्योजागरणंनहीति दक्षिणामूर्तिसंहितावचनात् इत्ये
कादश्यांपवित्राधिवासनं ततोद्वादश्यांनित्यंनैमित्तिकंचदेवपूजनंकृत्वा पवित्राणिचकृत्वासं
पूज्यदेवंनीराज्यस्तोत्रैःस्तुत्वा गंधदूर्वाक्षतैर्युक्तंपवित्रंहस्तेगृहीत्वा मूलमंत्रेणाष्टवारमभिमंत्र्य
मूलसंपुटितेनश्लोकद्वयेनपवित्रमर्पयेत् ॐरामरामनमस्तुभ्यंगृहाणेदंपवित्रकं पवित्रीक
रणार्थायवर्षपूजाफलप्रदं पवित्रंतत्कुरुष्वाद्ययन्मयादुष्कृतंकृतं शुद्धोभवाम्यहंदेवत्वत्प्र
सादात्सुरेश्वरेति ततोंगादृतिदेवतास्तत्तन्नामभिर्दद्यात् ततोमहानैवेद्यंसमर्प्यनीराजनंकृत्वा
चामरैःसंवीज्यादर्शंदर्शयित्वापुष्पांजलिंसमर्प्य मणिविद्रुममालाभिर्मंदारकुसुमादिभिः इयं
सांवत्सरीपूजातवास्तुगरुडध्वज वनमालायथादेवकौस्तुभंसततंहृदि पवित्रमस्तुतेतद्वत्पूजां
चहृदयेवह जानताजानतावापिनकृतंयत्तवार्चनं केनचिद्विघ्नदोषेणपरिपूर्णंतदस्तुमे अ
पराधसहस्राणिक्रियंतेहर्निशंमया दासोयमितिमांमत्वाक्षमस्वमधुसूदन इतिसंप्रार्थ्यसा
ष्टांगंप्रणम्यदेवंप्रसादाभिमुखंविचिंत्य मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वर पूजनंपूर्णतामे
तुपवित्रेणाधिनेनतइतिपठित्वा गुरवेगंधादिशर्वकंपवित्रंदत्वा सुवर्णवस्त्रादिभिःपूजयेत् ततो
ब्राह्मणान्संभोज्यस्वयंभुंजीत पवित्रधारणंतुदेवस्यदेहेच मासपक्षादियथासंभवंकार्यं स्ना
नादिकालेतत्तडत्तार्यदेवंस्नापयेत् [illegible] तोयेनाभिषिंच्यदेवांगेसांगेचतद्वार

येत् विसर्जनसमयेदेवंसूर्यंचविशेषेणगंधादिभिःसंपूज्यविसर्जयेत् विसर्जनमंत्रस्तु ॐसांवत्सरीं
शुभांपूजांसंपाद्यविधिवन्मम व्रजेदानींपवित्रत्वंविष्णुलोकंविसर्जितः यावद्देवेपवित्राणितावद्ब्र।
ह्मचर्यादिनियमेन स्थेयं एवंयःकुरुतेविद्वान्वर्षेवर्षेनसंशयः सयातिपरमंस्थानंयत्ररामःस
नातनः यावत्तंतुपवित्रंतुतावत्स्वर्गेमहीयते आयुरारोग्यमैश्वर्यंविपुलंतस्यवर्धते अथसंक्षे
पेणपवित्रारोपणविधिः दशम्यांहेमरौप्यादिसूत्रपवित्राणिकुर्यात् कार्पाससूत्रंचेत्तस्यनवसू
त्रीविधायपंचगव्येनप्रोक्ष्य प्रणवेनप्रक्षाल्यमूलेनाष्टोत्तरशतजपमभिमंत्र्यशुचिदेशे अष्टोत्त
रशततदर्धगुणितनवसूत्र्या देवस्यजानूरुनाभिपर्यंतानिषट्त्रिंशच्चतुर्विंशतिद्वादशग्रंथिकान्यु
त्तममध्यमकनिष्ठानि पवित्राणिविधायाष्टोत्तरसहस्रनवसूत्र्या अष्टोत्तरशतग्रंथिकवनमालां
विधाय द्वादशनवसूत्रीभिः तावद्ग्रंथिकंगंधपवित्रंसप्तविंशतिनवसूत्र्यागुरुपवित्रंचकृत्वाग्रं
थीन्कुंकुमेनरंजयित्वापामार्गबिल्वान्यतरकाष्ठेनदंतान्संशोध्य क्रियालोपविघातार्थंयत्त्व।
याविहितंप्रभो मयैतत्क्रियतेदेवतवतुष्ट्यैपवित्रकं नमेविघ्नोभवेदत्रकुरुनाथदयांमयि सर्वथा
सर्वदाविष्णोममत्वंपरमागतिरिति प्रार्थ्यैकभक्तेनतद्दिनमतिवाह्यैकादश्यांकृतनित्यक्रियः
श्रीरामंमहामंडपेराज्ञोपचारैःसंपूज्यहरेःपुरतः सर्वतोभद्रस्योदकुंभेवेणवंपटलंनिधाय त
त्रपूर्वनिर्मितसकलसूत्राणिनिधाय त्रिसूत्र्यांब्रह्मविष्णुशिवान्नवसूत्र्यां ॐकारसोमवह्निब्र
ह्मनागशशिसूर्यसदाशिवविश्वेदेवान्ग्रंथिषुक्रियापौरुषीवीराजयापराजिताविजयामुक्तिदा
सदाशिवामनोन्मनीसर्वतोमुखी प्रणवादिनमोंतैरेतैरेवयावद्ग्रंथिसंख्यमावर्त्यमानानामभि
रावाह्य गंधादिभिरभ्यर्च्य गंधपवित्रंधूपितमादाय प्रणवेनाभिमंत्र्य विष्णुतेजोद्भवंरम्यंसर्व
पातकनाशनं सर्वकामप्रदंदेवतवांगेधारयाम्यहमितिमंत्रेणमूलसंपुटितेनभगवत्पादयोः
समर्प्यप्रार्थयेत् आमंत्रितोसिदेवेशपुराणपुरुषोत्तम प्रातस्त्वांपूजयिष्यामिसन्निधौभवते
नमइति तत्कथाजागरेणतांरात्रिमतिवाह्य द्वादश्यांकृतनित्यक्रियाश्रीरामंपवित्राणिचसंपू
ज्य गंधदूर्वाक्षतयुक्तंकनिष्ठपवित्रमादायदद्यात् मंत्रः देवदेवनमस्तुभ्यंगृहाणेदंपवित्रकं
पवित्रीकरणार्थायवर्षपूजाफलप्रदं पवित्रकंकुरुष्वाद्ययन्मयादुष्कृतंकृतं शुद्धोभवाम्यहं
देवत्वत्प्रसादात्सुरेश्वरेति एवंमध्यमोत्तमवनमालाः एतन्मंत्रावृत्त्यासमर्प्य अंगदेवताभ्योपि
यथासंभवंसमर्प्यनीराज्यप्रार्थयेत् ॐमणिविद्रुममालाभिर्मंदारकुसुमादिभिः इयंसांवत्सरी
पूजातवास्तुगरुडध्वज वनमाला यथादेवकौस्तुभंसततंहृदि तद्वत्पवित्रतंतूंस्त्वंपूजांच।
हृदयेवह जानताजानतावापियत्कृतंनतवार्चनं केनचिच्छिद्रदोषेणपरिपूर्णंतदस्तुमे अप
राधसहस्राणिक्रियंतेहर्निशंमया दासोयमितिमांमत्वाक्षमस्वपरमेश्वर ततोगुरुंचसंपूज्य
समर्प्यब्राह्मणैःसह पारणंविधायत्रिरात्रंब्रह्मचर्यादिनियमवान् देवेपवित्रसंदर्भमभिषे
कान्यकालेसंस्थाप्य त्रिरात्रांतेदेवंसंपूज्य पवित्राणिविसर्जयेदिति इतिसंक्षिप्तपवित्रारोपण
विधिः अत्राप्यसमर्थश्चेत् नित्यस्नानेपवित्रपूजनंकृत्वामूलेनदेवायपवित्रंसमर्प्यावरण
देवताभ्यएकैकंसमर्प्यगुरुंसंपूज्यपवित्रंसमर्प्य स्वयंपवित्रंधृत्वा ब्राह्मणान्भोजयेदिति।
इतिसंक्षिप्तपवित्रारोपणविधिः पद्मपुराणे महादेवउवाच श्रावणेमासिसंप्राप्तेपवित्रारो
पणविधिः यत्कृतेसतिदेवेशिदिव्यभक्तिःप्रजायते पवित्रारोपणंविष्णोःकर्तव्यंश्रद्धयाबुधैः सं
पूर्णंजायतेतस्यपूजाभवतिवार्षिकी पवित्रारोपणेविष्णोर्जायतेसुखमात्मनः संपूजितेसदा
विष्णौनानासुखमवाप्नुयात् सूत्रंचाथसमानीयब्राह्मणपाकर्तितंशुभं स्त्रैणेवकर्तितंसूत्रंतेनैव।

वं प्रकल्पयेत् नष्टद्वाकर्णितंसूत्रं तत्तु ग्राह्यं सदा तथैव च अन्यथा विक्रयेणापि ग्राह्यं वा च यथा तथा दो
मेनैव प्रकर्तव्याः पवित्रारोपणे विधिः हेम्नेणैव तथा कार्यं पवित्रं विष्णुदैवतं सौवर्णेनापि देवेशि
कर्तव्यं विधिपूर्वकं अभावे सर्वधातूनां ग्राह्यं सूत्रं तथा बुधैः कृत्वा तु त्रिगुणं सूत्रं प्रक्षाल्य मुदकेन
च लिंगे लिंगप्रमाणं तु प्रतिमायां यथामिति पादान्तं जानुपर्यन्तं तथा नाभिसमं स्मृतं ज्येष्ठं मध्यं
कनिष्ठं च पवित्रं कारयेद्बुधः संवत्सरदिनं यद्वत्तदर्धार्धेन संख्यया सूत्रेणैव प्रकर्तव्यं ग्रंथिम
ष्टोत्तरेण तु तदर्धसंख्यकेनापि युक्त्या वा तत्र पार्वति लिंगे वै लिंगसंज्ञं तु गंगानाममभिरन्वितं प्र
तिमायां तथा देवि पवित्रं वनमालिकं यथाशोभं तथा कार्यं येन विष्णुः प्रसीदति एकं वै सुपवित्रं
तु गंगाख्यं कारयेत्सदा तंतूनामेव संयुक्तं कर्तव्यं वैष्णवैर्नरैः देवानां च तथैवोक्तं पवित्रं विष्णुदेव
तं अंबरीषाय भक्ताय अन्ये ये च ध्रुवादयः पवित्राणि ततः पश्चाद्दातव्यानीह पार्वति प्रतिपद्
नदस्योक्ता पवित्रारोपणे तिथिः लक्ष्म्या देव्या द्वितीया तु तिथीनामुत्तमा तिथिः तृतीया तु भव
प्रोक्ता चतुर्थी गणपस्य तु पंचमी स्याच्चंद्रमसः षष्ठी वै कार्तिकस्य तु सप्तमी च रवेः प्रोक्ता दुर्गायाश्चा
ष्टमी मता नवमी चैव मातॄणां यमस्य दशमी तथा एकादशी तु रुद्राणां द्वादशी माधवस्य तु त्रयो
दशी तु कामस्य शिवस्योक्ता चतुर्दशी तद्वत्पंचदशी ख्याता धातुर्वै पूजने पुनः एता वै तिथयः
प्रोक्ताः पवित्रारोपणे क्रमात् कनिष्ठे द्वादश प्रोक्ता मध्यमे द्विगुणा मताः त्रिगुणाश्चोत्तमे चैव ग्रंथ
यः पवित्रके कर्पूरकेसराभ्यां च चंदनेन हरिद्रया रंजयित्वा तु तत्सर्वं स्थापयेन्नवकरंडके देवस्य
यजनं यत्र स्थाप्यं तत्र च देववत् आदौ देवार्चनं कृत्वा अधिवासं च पवित्रकं अधिवासितेपवित्रे तु
ततो वै पूजनं स्मृतं पवित्रेषु च ये देवास्तेषां निकटमाचरेत् ब्रह्मादि विष्णु रुद्रश्च त्रयो वै सूत्रदेव
ताः क्रिया च पौरुषी वीरा चतुर्थी चापराजिता जया च विजया चैव मुक्तिदा च सदाशिवा मनो
न्मनी तु नवमी दशमी सर्वतोमुखी ग्रंथीनां देवताश्चैव सूत्रेषु विनिवेशयेत् आवाहनं मुद्रा
याश्च शास्त्रोक्तविधिना ततः आवाह्य तत्र ताः सर्वाः सन्निधीकरणं ततः संरक्ष्य दत्तमुद्राभिर्धेनुमु
द्रयामृती क्रिया प्रागेव देवताग्रे तु गृहीत्वा कलशोदकं आगमोक्तेन मंत्रेण प्रोक्ष्य क्लीं कृष्णमंत्र
तः क्लीं कृष्णाय नम इति प्रोक्षणमंत्रः गंधपुष्पैर्धूपदीपैर्नैवेद्यैः फलसंयुतैः तांबूलदक्षिणा
दानैस्ततो देवाग्रतः पुनः धूपयित्वा पवित्रं तु नतिमुद्रां समाचरेत् एवमभ्यर्च्य मंत्रेण मंत्रयेत्तत्प
वित्रकं आमंत्रितोऽसि देवेश सार्धं देव्या गणादिभिः मंत्रैर्वा लोकपालैश्च सहितः परिवारकैः
आगच्छ भगवन् विष्णो विधिसंपूर्तिहेतवे प्रातस्त्वां पूजयिष्यामि सान्निध्यं नियतं कुरु ततो गं
धपवित्रं देवस्य चराचरगुरोः श्रीविष्णोश्चरणयोर्निक्षिप्य प्रातर्नित्यक्रियां विधाय पुण्याहं
स्वस्तिवाचनं विधाय जयशब्दैर्घंटावादित्रघोषैः पवित्रं समर्प्य पूजां कुर्यात् प्रथमं ज्येष्ठं ततो
मध्यमं पश्चात्कनिष्ठमभिर्मंत्रैः सर्वैर्यथाक्रमेण पूजां कुर्यात् ॐ वासुदेवाय विद्महे श्रीवि
ष्णुश्च धीमहि तन्नो देवः प्रचोदयात् इति पवित्रदानम् अथवा स्वमंत्रैः ततोत्र महती पूजा
विष्णोश्चैव प्रसाधिनी यथा चैवार्चितो देवो विष्णुरात्मा प्रसीदति समन्ताद्दीपमाला च कर्त
व्या विधिना ततः चतुर्विधं तथान्नं च नैवेद्यं कारयेद्बुधः पवित्राणि ततो दद्यात्प्राक्स्वजाते
सुशोभनं भक्त्या चैव विशेषेण आश्रीयरं पूजयेत्ततः वस्त्रालंकारविधिना पूजनीयो गुरुर्महान्
पूजयित्वा गुरुं तत्र पवित्रं धारयेत्ततः अथवा वैष्णवाः संति तेभ्यस्तांबूलादिकं दत्वा पूर्णाहुतिं
अत्रयेपश्चाद्दत्वा श्रीनिवासाय श्रीकृष्णाय कर्म निवेदयेत् मंत्रहीनं क्रियाहीनं भक्तिहीनं
न केशव यत्पूजितो मया सम्यक् संपूर्णं यातु मे ध्रुवं तत उद्वासयेद्देवं पुष्पैरस्तया विधेर्वा

सहितःसन्मिष्टमन्नंस्वयंभुंजीत एतत्पूजनकंदिव्यंयेऽश्नन्तिद्विजोत्तमाः सर्वपापविनिर्मुक्ता यां-
तिविष्णोःपरंपदं यावच्चंद्रोजगत्यस्मिन्यावत्तपतिवैरविः पवित्रारोपकस्तावन्मोदतेनात्रसं-
शयः पृथिव्यांयानिदानानिनियमाश्चतथापुनः सर्वेसंपूर्णतांयांतिपवित्रारोपणेकृते अ-
यमुत्सवराजोवैपवित्रारोपकोविधिः ब्रह्महाशुध्यतेतत्रनात्रकार्याविचारणा सत्यंसत्यंपु-
नःसत्यंयदुक्तंनगनंदिनि पवित्रारोपणेपुण्यंदर्शनेनतथास्मृतं श्रद्धयाथमहाभागेपवि-
धिः कृतोवैभक्तिभावेनसर्वयत्नतमःस्मरन् धन्योहंकृतकृत्योहंसुभाग्योधरणीतले मया
यात्तुकृताभक्तिर्देव्याःसर्वमुक्तिदायिका इतिपद्मपुराणेउत्तरखंडेपवित्रारोपणं श्रावणशुक्ल-
त्रयोदश्यांरतिकामव्रतंशुभं वैधव्यवारणंस्त्रीणांतथासंतानवर्धनं कृतोपवासःपुरुषोना-
रीवाद्विजसत्तम ताम्रेवामृण्मयेवापिसौवर्णेराजतेतथा रतिकामौप्रविन्यस्यगंधाद्यैःसम्य-
गर्चयेत् सत्कृत्यभोज्यपतिमेदद्यात्ताभ्यांसदक्षिणं एवंचतुर्दशाब्दंतुकृत्वाव्रतमनुत्तमं
धेनुयुग्मान्वितंदेयंव्रतसंपूर्तिहेतवे श्रावणशुक्लचतुर्दश्यांदेवीपवित्रारोपणं नारदीये न-
भःशुक्लचतुर्दश्यांपवित्रारोपणंमतं तत्स्वशाखोक्तविधिनाकर्तव्यंद्विजसत्तम शताभिमं-
त्रितंकृत्वाततोदेव्यैसमर्पयेत् पवित्रारोपणंकृत्वानरोनार्यथवादरात् महादेव्याःप्रसादेन
भुक्तिमुक्तिमवाप्नुयात् शिवपवित्रमपितत्रैव कालांतरे आषाढेतुचतुर्दश्यांनभस्यनभसो-
स्तथा अष्टम्यांचचतुर्दश्यांपक्षयोरुभयोरपि अधिवासनंतुदीपिकायां गोदाहांतरितेका-
लेपूर्वेद्युर्वाधिवासनमिति अथश्रावणपूर्णिमायांरक्षाबंधनमुपाकर्मचनारदीये अथश्रा-
वणपूर्णियांवेदोपाकरणंस्मृतं याजुषैस्तत्रकर्तव्यंदेवर्षिपितृतर्पणं ऋषीणांपूजनंचापि-
स्वशाखोक्तविधानतः बह्वृचैस्तुचतुर्दश्यांसामगैर्भाद्रकेकरे रक्षाविधानेनतथाकर्तव्यंवि-
धिपूर्वकं सिद्धार्थाक्षतराजिकाश्चविष्टरारक्तांशुकारोपिता कौसुंभेनचतंतुनाथसलिलैः
प्रक्षाल्य कांस्येधृता गंधाद्यैरभिपूज्यदेवनिकरान्संप्रार्थ्यविश्वादिकान् बध्नीयाद्द्विजहस्त-
तःप्रमुदितोनत्वाप्रकोष्ठेस्वके ततस्तुदक्षिणांदत्वाद्विजेभ्योध्यायमाचरेत् विसृज्यचऋषीन्स-
प्रधारयेद्ब्रह्मसूत्रकं रंजितंकुंकुमाद्यैस्तुनवीनंनिर्मितंस्वयं शक्त्यासंभोज्यविप्रांश्चान्तेक-
भक्तंसमाचरेत् कृतेह्यस्मिन्व्रतेविप्रवार्षिकंकर्मवैदिकं विस्मृतंविधिहीनंचनकृतंतुकृतंभ-
वेत् इत्यभिधानात्ततोपाकर्माणिरक्षाबंधादिकर्मयथाविधानमाचरंतिशिष्टाः अथश्रावणीकृ-
त्यं तत्ररक्षाबंधनंकार्यं तदुक्तंमदनरत्नेभविष्योत्तरे युधिष्ठिरउवाच सर्वरोगोपशमनंसर्वा-
शुभविनाशनं सकृत्कृतेनाब्दमेकंयेनरक्षान्वितोभवेत् श्रीकृष्णउवाच शृणुपांडवशार्दूल
इतिहासंपुरातनं इंद्राण्यायत्कृतंपूर्वंशक्रस्यजयहेतवे देवासुरमभूद्युद्धंपुराद्वादशवार्षिकं
तत्रासुरैर्जितःशक्रःसहसर्वैःसुरोत्तमैः बृहस्पतिसमीपंअथइदंवचनमब्रवीत् नष्टप्रायस्तुचैवशक्रो-
स्मिनगंतुंतैरभिद्रुतः सर्वथायोद्धुमिच्छामिगुरुस्त्वंचन्यवारयत् तयोःसंवदतोरेवंशचीप्राहह-
रिष्टं अच्युतमिदंदेवप्रातःसर्वंभविष्यति अहंरक्षांविधास्यामियेनतेजोभविष्यति इत्युक्त्वा
पौर्णमास्यांसापौलोमीकृतमंगला बबंधदक्षिणेपाणौरक्षापोटलिकांततः बद्धरक्षस्ततःश-
क्रःकृतस्वस्त्ययनोद्विजैः जघानदानवानीकंक्षणात्कालइवप्रजाः शक्रश्चविजयीभूत्वापुनरे-
वजगत्त्रयं प्राप्यातिशोभते एवंप्रभावोरक्षायाःकथितस्तेयुधिष्ठिर जयदःसुखदश्चैवपुत्रारो-
ग्यधनप्रदः युधिष्ठिरउवाच क्रियतेकेनविधिनारक्षाबंधःसुरोत्तम कस्मिंस्तिथौकदादेवए-
तन्मेवक्तुमर्हसि यथायथाहिभगवन्विचित्राणिप्रभाषसे तथातथानमेतृप्तिर्बहुधीःश्रुतव

तः कथा कृष्ण उवाच संप्राप्ते श्रावणस्यांते पौर्णमास्यां दिनोदये स्नानं कुर्वीत मतिमान् श्रुतिस्मृति
विधानतः ततो देवान् पितॄंश्चैव तर्पयेत्परमांभसा उपाकर्मदिने प्रोक्तं ऋषीणां चैव तर्पणं कुर्वी
त ब्राह्मणैः सार्धं वेदानुद्दिश्य शक्तितः शूद्राणां मंत्ररहितं स्नानं दानं च शस्यते ततोऽपराह्णसमये
कुर्यात्पोटलिकां शुभां कारयेच्चाक्षतैः शस्तैः सिद्धार्थैर्हेमचर्चितां वस्त्रैर्विचित्रैः कार्पासैः क्षौमै
र्वा मलवर्जितैः विचित्रितं तु ग्रथितां स्थापयेद्भाजनोपरि कार्या गृहस्य रक्षा गोमयरचितैः सुवृत्तै
स्तु दूर्वावर्णकसहितैर्भित्तौ दुरितोपशमनाय उपलिप्ते गृहमध्ये दत्त्वा चतुष्के न्यसेत्कुंभं पीठं
दत्त्वोपविशेद्राजा मात्यैर्युतस्तु सुमुहूर्ते वेश्याजनेन सहितो मंगलसहितैः सम्यक्प्रीतैर्हृष्टैः र
क्षाबंधः कार्यः प्रशांतिदः सर्वविघ्नानां देवद्विजातिशस्त्राण्यक्षैः रक्षाभिरर्चयेत्प्रथमं तदनु पु
रोधा नृपतेः रक्षां बध्नीत मंत्रेण येन बद्धो बली राजा दानवेंद्रो महाबलः तेन त्वामपि बध्नामि
रक्षे मा चल मा चल ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः कर्त्तव्यो रक्षिकाबंधो द्विजा
न्संपूज्य भक्तितः अनेन विधिना यस्तु रक्षाबंधनमाचरेत् स सर्वदोषरहितः सुखी संवत्सरं भवे
त् यः श्रावणे विमलमासि विधानदक्षो रक्षाविधानमिदमाचरते मनुष्यः आस्ते सुखेन पर
मेण स वर्षमेकं पुत्रप्रपौत्रसहितः ससुहृज्जनः स्यादिति अत्र पूर्णिमा अपराह्णव्यापिनी ग्राह्या
ततोऽपराह्णसमये रक्षापोटलिकां शुभामित्युक्तेः दिनद्वये तद्व्याप्तौ व्याप्तौ च पूर्वा ग्राह्या श्रा
वणी दौर्गनवमीति हृद्वयमवचनात् स्मृतिकौस्तुभे तु अस्मिन्कर्मण्यौदयिकी तिथिर्ग्रा
ह्या पौर्णमास्यां दिनोदय इत्युपक्रमात् उपाकर्मोपलक्षितोत्तरकालताप्रतीतेश्चेति पूर्वस्यां
भद्रायां त्वुत्तरा ग्राह्या भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा श्रावणी नृपतिं हंति ग्रा
मं दहति फाल्गुनीति वचनाच्च अत्र सर्वेषामप्यधिकारः ब्राह्मणैः क्षत्रियैर्वैश्यैरिति भविष्यवच
नात् इति रक्षाबंधनविधिः अथोपकर्मकालनिर्णयः तत्र बहृचानामुपाकर्मकालमाहाश्व
लायनः अथातोऽध्यायोपाकरणमोषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पंचम्यां हस्तेन वेति
ओषधीनां प्रादुर्भावे अंकुरोदय इति यावत् श्रवणसंबंधिन्यां हस्तयुक्तपंचम्यां केवलपंचम्यां
हस्ते वा कर्त्तव्यमिति व्याख्यातारः यजुर्वेदविषये पारस्करः अथातोऽध्यायोपाकर्म श्रवणेन
श्रावण्यां पौर्णमास्यां पंचम्यां हस्तेन वेति बौधायनः श्रावण्यां पौर्णमास्यां वोपाकृत्य छंदां
स्यधीयीतेति एवमन्यान्यपि यजुर्वेदिकानां गृह्यसूत्राण्युदाहार्याणि छंदोगविषये तार्ग्यः
सिंहस्थे वा तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः छंदोगा मिलिताः कुर्युरुत्सर्गं सर्वछंदसां शुक्लपक्षे तु हस्ते
न उपाकर्मापराह्णिकमिति अथर्ववेदिनां तूपाकर्मकाल उक्तः कौशिकगृह्ये अथर्ववेदस्याध्या
यनविधिं वक्ष्यामः श्रावण्यां प्रौष्ठपद्यां वोपाकृत्याऽर्धपंचमासानधीयीरन् अर्धमासं वोपाकृ
त्य क्षपेरन् अहस्तु तत्र आरंभः श्रावण्यामुक्तपौष्यामुत्सर्ग इति गोभिलः पर्वण्यौदयिके
कुर्युः श्रावण्यां तैत्तिरीयकाः बहृचाः श्रवणे कुर्युर्हस्ते सामवेदिन इति मनुः श्रावण्यां प्रौ
ष्ठपद्यां वाऽप्युपाकृत्य यथाविधि युक्तश्छंदांस्यधीयीत मासान्विप्रोऽर्धपंचमानिति अर्धेन युतः पं
चमो येषां ते अर्धपंचमाः शाकपार्थिवादित्वादुत्तरपदलोपी समासः सार्धांश्चतुरो मासानित्यर्थः
प्रचेताः भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तत्र ब्राह्मणान्भोजयेत्तत्र पितॄनुद्दिश्य देवता
इति याज्ञवल्क्यः अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा हस्तेनौषधिभावे वा पंचम्यां श्रा
वणस्य त्विति ओषधीनां प्रादुर्भावे श्रावण्यामिति च सर्वत्र संबध्यते हस्तेन युक्तायां पंचम्यामिति
स्मृतिचंद्रिकायां दिनांतरेऽपि हस्तेन युक्त इति हेमाद्रिः एवमेव स्मृत्यर्थसारेऽपि अत्रेयं व्यवस्था

बह्वृचैरोषधीप्रादुर्भावे सति शुक्लप्रतिपदादिश्रावणमासस्य श्रवणनक्षत्रे वैदिककर्मत्वात् पूर्वाह्णे उपाकर्म
कर्तव्यं यजुर्वेदिभिस्तु श्रावण्यां पूर्वाह्णे कर्तव्यं छंदोगैस्तु सिंहस्थे सूर्ये हस्तनक्षत्रे अपराह्णे कर्तव्यम्
एषां ग्रहसंक्रांतिदुष्टत्वे बह्वृचैः हस्तयुक्तायां श्रावणशुक्लपंचम्यां केवलपंचम्यां वा हस्तयुक्ते श्रावणशु
क्लतिथ्यंतरे वा कार्य्यं यजुर्वेदिभिर्भाद्रपद्यां येषां गृह्ये आषाढ्युक्ता तैराषाढ्यां कार्य्यं वाजसनेयिभि
स्तु पंचम्यां तदुक्तं स्मृत्यंतरे उपाकर्म प्रकुर्वीत क्रमात्सामर्ग्यजुर्विदः ग्रहसंक्रांत्युदुष्टेषु हस्तश्रवणप
र्वसु तथा संक्रांतौ ग्रहणे चैव सूतके मृतके तथा गणस्नानं न कुर्वीत नारदस्य वचो यथा अथ चेद्दोष
संयुक्ते पर्वणि स्यादुपक्रमः दुःखशोकामयग्रस्ता राष्ट्रे तस्मिन् द्विजातयः तथा यदि स्याच्छ्रावणं
पर्व ग्रहसंक्रांतिदूषितं स्यादुपाकरणं शुक्लपंचम्यां श्रवणस्य तु स्मृतिमहार्णवे संक्रांतिर्ग्रहणं
वापि यदि पर्वणि जायते तन्मासे हस्तपंचम्यां कार्यं वाजसनेयिभिरिति अत्र पंचमी तन्मासगतैव ग्रा
ह्यते नान्यमासगता अप्रकृतत्वात् वाजसनेयिग्रहणं तेषां गृह्ये पंचम्युक्ता तेषामुपलक्षणं येषां गृह्य
सूत्रे पंचमी नोक्ता तेषामोषधिप्रादुर्भावदूषश्रवणगतकालस्य ग्रहादिदुष्टत्वेपि भाद्रपदपर्वोदितश्रव
णादिकालेषूपाकर्मोचितं एतद्वार्षिकमित्याचक्षत इत्यादिवाक्यानामोषध्यप्रादुर्भावपर्वसंक्रांतिदो
षेपि भाद्रपदप्रापकतायास्तुल्यत्वात् बौधायनीयानां तु श्रावण्याः पौर्णमास्या ग्रहादिदुष्टत्वे आषा
ढ्यां तदनुष्ठानमुचितं श्रावण्यां पौर्णमास्यामाषाढ्यां चोपाकृत्य छंदांस्यधीयीतेति बौधायनवचना
त् ग्रहसंक्रांतिदोषश्च उपाकर्मसंबंधिन्यहोरात्रे भाव्योर्धरात्रात्पूर्वं नक्षत्रपर्वणोर्विद्यमान एव दूष
को नान्यथा तथातीतार्धरात्रात्परतो विद्यमानो दूषको न तत्पूर्वः नाप्युपाकर्मांगभूततिथिन
क्षत्रयोः पूर्वोत्तरकालीनेति तिथ्यंतरेण नक्षत्रांतरेण वा विद्यमानः अर्धरात्रादधस्ताच्चेत्संक्रांतिर्ग्रह
णं तथा उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत् इति मदनरत्नधृतगार्ग्यवचनात् यद्यर्धरात्राद
र्वाक्स्याद्ग्रहः संक्रांतिरेव तु नोपाकर्म तदा कुर्याच्छ्रावण्यां श्रवणेपि चेति शास्त्रांतराच्च बह्वृचः श्र
वणे कुर्युर्ग्रहसंक्रांतिवर्जिते इत्यादौ श्रवणादिसामानाधिकरण्येन ग्रहणादिपर्युदासः श्रवणाच्च
यानि तु त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवं मांगल्येषु समस्तेषु ग्रहणे चंद्रसूर्ययोः तथाद्या
दश्यादितृतीयांतो वेधः खंडग्रहे स्मृतः एकादश्यादिकः सौरश्चतुर्थ्यंतः प्रकीर्तितः खंडग्रहे तयोः प्रो
क्त उभयत्र दिनत्रयमित्यादीनि तु पौर्णमासीव्यतिरिक्तदिनानामपि दोषत्वप्रतिपादकानि वचनानि
तान्युपाकर्मादिव्यतिरिक्तकर्मविषयाणि नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च उपाकर्मणि
चोत्सर्गे ग्रहवेधो न विद्यत इति वाक्येन उपाकर्मणि वेधदोषाभावस्योक्तत्वात् पर्वणि ग्रहणे सति
पूर्वं त्रिरात्रादिवेधाभावं वक्तुमिदं तेन पर्वणि ग्रहणेपि चतुर्दश्यां श्रवणे कार्यमिति हेमाद्रिः यदा
पि गौणकालेपि ओषधिप्रादुर्भावाभावः ग्रहसंक्रांतियोगो वा निमित्तांतरेण केनचिदनयतिर्वा
भवति तदा वर्षर्तुमध्ये यदाकदाचित्कार्यं न तु श्रावणसंबंधनियमः तदुक्तं शौनकेन तद्वार्षिक
मित्याचक्षत इति वर्षासु भवं वार्षिकमित्यर्थः अत एव बह्वृचकायाम् आहृष्टौषधयस्तस्मि
न्मासे तु न भवंति चेत् तदा भाद्रपदे मासि श्रवणेन तदिष्यत इति गोभिलः प्रौष्ठपदीहस्तेनोपाकर
णमिति प्रौष्ठपदीं प्राप्नोतीति शेषः वसिष्ठोपि स्थिते रवावुपाकर्म कर्तव्यं सिंहयुक्तके इति व
चनं तु नर्मदोत्तरभागविषयं नर्मदोत्तरभागे तु कर्तव्यं सिंहपुराणोक्तकं कर्कटे संस्थिते भानावु
पाकुर्यान्नर्मदादक्षिणे इति वचनात् कथं तर्हि नर्मदोत्तरभागगतानां शिष्टानां कर्कटस्थे रवावुपाकर्मा
नुष्ठानं अत्र केचित् अस्य वचनस्य सामगविषयत्वात्तद्व्यतिरिक्तानां कर्कस्थेपि सूर्ये न दोष इत्याहुः
अन्ये तु सामगविषयत्वस्यायुक्तत्वादेतस्य वचनस्य प्राच्यग्रंथेषु दाक्षिणात्यप्राचीननिबंधेषु चादृष्ट

त्वादनाकरत्वमाहुः एतच्च शुक्लात्वादावधिकार्थ्ये उपाकर्मोत्सर्जनं च पवित्रदमनार्पणमिति दमनारोपेलिखि
तवचनात् यज्ञोपवीतं कर्तव्यं श्रावणे गुरुशुक्रयोः मौढ्येपि वार्धके बाल्ये नित्यवत्कर्मनोदितमिति स्मृतिसा
रसमुच्चयाच्च प्रथमारंभस्तु न भवति गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेपि वा तथाधिमाससंसर्पमलमा
दिषु द्विजाः प्रथमोपाकृतिर्नस्यात्कृतं कर्मविनाशकृदिति संग्रहवाचनात् अत्र आदिशब्देन सिंहस्थगु
र्वादिग्रहणं द्वितीयादिप्रयोगोपि अधिमासे उत्कर्षबालवृद्धोस्याउपाकर्मादिकर्माणि अभिषेकादिवृद्धी
नां नत्वकर्षो युगादिष्विति कात्यायनेनोक्तेश्च यत्तु दशहरास्तु नोत्कर्षश्चतुर्ष्वपि युगादिषु उपाकर्म-
णि चोत्सर्गेष्टितद्दिनचतुष्टय इति ऋष्यशृंगवचनं तत्सामगविषयं तेषां सिंहार्कीयजीवनेन विहित-
स्योपाकर्मणो अधिममासे संभवात् एतानि हस्तश्रवणपर्वाणि दिनद्वयेपि कर्मकालप्राप्तावौदयिकानि
ग्राह्याणि उक्तं गृह्यपरिशिष्टे धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितं श्रावणं कर्म कुर्वीरन् ऋग्यजुः
सामपाठका इति व्यासः श्रवणेन तु यत्कर्म उत्तराषाढसंगतं संवत्सरकृतोध्यायस्तत्क्षणादेव नश्यति
धनिष्ठासंयुतं कुर्यात् श्रावणं कर्म यद्भवेत् तत्कर्मसफलं विद्यादुपाकरणसंज्ञितं निगमे ग्रहयोगोगु
रुं हेति संक्रांतिः शिष्यघातिनी तपो हंत्युत्तराषाढा उपाकर्माणि वै सदा धनिष्ठामिश्रिते कार्यमुपा-
करणसंज्ञितं कालिकापुराणे चतुर्दश्यां समुत्पन्नावसुरौ मधुकैटभौ वेदान्नीकुर्वतः पद्मयोनेस्तौ ज
हतुः श्रुतीः हत्वा तावसुरौ देवः पातालतलवासिनौ आहृतवान् श्रुतीस्तस्मै ददौ लोकगुरुः स्वयं अभवद्
श्रुतिर्ब्रह्मा पर्वण्यौदयिके पुनः अतो भूतयुते तस्मिन्नोपाकरणमिष्यते आसुरं वर्जयेत्कालं वेदग्र
हणं कारयेत् औदयिकानि च पर्वादीनि प्रातः संगवात्मकषण्मुहूर्तव्यापीनि ग्राह्याणि श्रावण्यां पौ
ष्टपद्यां वा प्रतिपन्षण्मुहूर्तके विद्यमाने छंदसां तत्रोपाकर्मोत्सर्जनं भवेदिति निगमवचनात् पर्व
ग्रहणं हस्तश्रवणयोरप्युपलक्षणं अत एव षष्ठी चंद्रोदये श्रावण्यां पौर्णमासीन्तु संगवात्परतो यदि
तदैवौदयिकी ग्राह्या नान्यदौदयिकी भवेदिति गार्ग्यवचनं लिखित्वा उदये संगवस्पर्शे कृते चापर्वणि वा
कैभे कुर्युर्नभस्युपाकर्म ऋग्यजुःसामगाः क्रमादिति वचनांतरमपि लिखितं स्मृतिकौस्तुभे तु षष्ठी
चंद्रोदयोदाहृतवचने संगवस्पर्श इति स्पर्शग्रहणात्संगवैकदेशव्याप्तिः प्रतीयते निगमवाक्ये तु षण्मु
हूर्तक इति श्रुतिभागद्वयव्याप्तिः तदधिकव्याप्तिरपि गार्ग्यवचनात्प्रतीयते एषां वचसां यथाश्रुतार्थ
परत्वे संभवति नान्यतरस्यानुवादत्वं वक्तुमुचितं नापि विकल्पपरत्वं तस्याष्टदोषदुष्टत्वात् अनेक
श्रुतिकल्पनाप्रसंगाच्च किंतु येषां शाखिनां षण्मुहूर्तसाध्यमेवोपाकर्म तान्प्रति षण्मुहूर्तव्याप्तिरे
वा ग्राह्यत्वनियामिका एवमितरे अपि व्याप्तीति तच्छाखिनां प्रति ग्राह्यत्वनियामके बोध्ये अत एव स्फु
टस्मृत्यर्थसारोक्तिः तिथिखंडे सत्युदयव्यापिनी प्रयोगपर्याप्तितिथिरुपाकरणे ग्राह्येति एवं च नो
क्तवचनेषु क्वापि स्वार्थत्यागः नाप्यनेकश्रुतिकल्पनाप्रसक्तिः सर्वेषां कर्मकालव्याप्तिशास्त्रप्रपंच
कत्वरूपत्वादिति सिंहाभट्टीये श्रावणः श्रवणपर्वसंगवस्पृग्यदा भवेत् तदैवौदयिकं कार्यं नान्यदौद-
यिकं भवेदिति निर्णयसिंधौ तु उदयव्यापिन्येव विस्पष्टं घटिकाद्वयं तत्कर्म सफलं ज्ञेयं तस्य पूर्ण
त्वं तत्क मिति गार्ग्यवचनविरोधादेतानि वचनानि प्राशस्त्यमात्रपराणीत्युक्तं परमार्थतस्तु बहूनां
वचनानां प्राशस्त्यपरत्वस्यानुचितत्वादेकस्योदयव्यापिनीति गार्ग्यवचनस्यैव वैयानराधिकरण-
न्यायेन षण्मुहूर्तात्मककालावयवमुहूर्तात्मककालस्तुतिद्वारा षण्मुहूर्तात्मकपूर्वोक्तकालस्तावक-
त्वं युक्तमिति प्रतिभाति हेमाद्रिमदनपारिजातादयस्तु पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः
बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रांतिवर्जिते इति वाक्ये तैत्तिरीयकग्रहणात् तैरेवौदयिके कार्यं धनिष्ठाप्रतिप
द्युक्तामिति गृह्यपरिशिष्टवाक्ये [illegible] शंखप्रमद्वचनानुरोधेन तैत्तिरीयकपरः अतो

वाजसनेयिभिः श्रावणीदुर्गानवमीतथादुर्गाष्टमीचया पूर्वविद्धातत्कर्तव्याशिवरात्रिर्बलेर्दिनमितिवच।
नात्पूर्वविद्धपौर्णमास्यामिदंकार्यमित्याहुः मदनरत्नेतु पर्वण्यौदयिकइतिवचनस्यबह्वृचपरिशिष्टा
यत्त्वेनतान्प्रत्येवकर्मविधातृत्वप्रहत्त्वाद्बह्वृचाश्रावणेकुर्युरित्यनेनबह्वृचकर्तृकउपाकर्मणिश्रवणा
न्वितकालेविहितेकालिकापुराणादौप्राशस्त्यपूर्वकंयजुर्वेदादिविशेषमनुपादायसामान्येनविहितं
हितंयदौदयिकंपर्वतद्बह्वृचैःकर्मानुष्ठानयोग्यौदयिकपर्वलाभेप्राशस्त्यबुध्याश्रवणपरित्यागेन
मायाहीत्येतदर्थंपनिष्टाप्रतिपच्युक्तामित्यादिवाक्यप्राप्तौदयिकपर्वणोयजुर्वेदिसंबंधिपर्वणिपौद।
यिकेकुर्युःश्रावणंतैत्तिरीयका इतिवाक्यंप्रतिपादयतीत्येतदनुवादकंअनुवादस्यचप्राप्त्यधीन
त्वादौदयिकपर्वप्राप्तेश्च यजुर्वेदिमात्रसाधारणत्वात्तदनुवादवाक्यगततैत्तिरीयपदस्ययजुर्वेदि
मात्रोपलक्षकत्वात् श्रावणीदुर्गानवमीतिवाक्यस्यपवित्रारोपणादौचरितार्थत्वाच्चसर्वैरपियजु
र्वेदिभिरौदयिकेपर्वण्युपाकर्मकर्तव्यमित्याह स्मृतिकौस्तुभेतु तैत्तिरीयशब्दस्यप्रसिद्धार्थबाध।
प्रसंगात् गोभिलवाक्यस्यबह्वृचान्प्रतिश्रवणविधानमात्रपरत्वेनतेनतत्समशक्यत्वाच्च अथतदपिसाम
गानामितिस्मृतिमात्रविधिपरमितिचेत् नहोलाधिकरणोक्तनीत्यागृह्यग्रंथानांचाध्यापनव्यवस्थ
याप्रामाण्यव्यवस्थानाप्राप्तांदूरीकृत्यसर्वान्प्रतिप्रामाण्यस्यस्थापितत्वेनतत्परिशिष्टेतत्तच्छाखी
यपुरस्कारेणप्रवृत्तविधेर्विवक्षामंगीकृत्येतरशाखीयान्प्रतिप्रतीयमानविध्यविवक्षांगीकारस्यनि
र्हेतुकत्वादिति इदंब्रह्मचारिगृहस्थवनस्थैस्त्रिभिरपिकार्यं अतएवनारायणवृत्तौ अध्यानोध्या
योपाकरणमितिसूत्रव्याख्यानेयस्माद्ब्रह्मव्रताध्ययनंनित्यंअतउपाकर्मावश्यकमित्यादिनाब्रह्म
यज्ञांगतायुक्ता अतएवजीर्णप्रयोगरत्नेगोभिलः उपाकर्मोत्सर्जनंचवनस्थानामपीष्यते धार।
णाध्ययनांगत्वाद्गृहिणांब्रह्मचारिणामिति ननुगृहस्थस्यसमावर्तनोत्तरंग्रहणाध्ययनांगतया
वाप्तस्यकर्मणः अनुष्ठानंकथंयुक्तमितिचेत् उच्यते समावृत्तोब्रह्मचारिकल्पेनयथान्यायमि
तरेनाधीयेपीत्येके इत्याश्वलायनसूत्रेव्याख्यानेचैतदित्थंवृत्तिकारेण ब्रह्मचारिकल्पेनब्रह्मचा
रियधर्मैरित्यर्थः स्वाध्यायकाले विहितायेधर्माः मधुमांसस्त्रीगमनखट्वादिवाशयनादिवर्जनाद
यः तैर्युक्तोधीयीतसमावृत्तः मेखलादयस्तुनभवंति अस्वाध्यायधर्मत्वात् इतरेब्रह्मचारिणइत्य
र्थः अत्राध्ययनेब्रह्मचारिणामपिप्रवृत्त्यर्थमिदं इतरथासमावृत्तानामेवेतिशंकास्यात्समावृत्तो।
जायांगच्छेदित्येकआहुः ऋतावेवगच्छेन्नाऋताविति वेदव्रतानिवापारंनीत्वाह्युभयमेवचेत्यादि
श्रुतिरपिवेदसमाप्त्यभावेपिसमावर्तनविधानेनगृहस्थानामपिवेदाध्ययनसूचनाच्च अत्रचसा
पुज्यकामयोराजपुरोहितयोःकुलाययज्ञइवाध्येष्यमाणोध्यायैरन्वारब्धइत्याश्वलायनसूत्राच्च
रवनपंचावत्त्वाद्यभिन्नकल्पनायामप्यधिकारः अत्रापिसमानकल्पयोरेवाधिकारोस्त्वितिचेन्न
एतदधिकरणस्यतुल्यकल्पादिकाराधिकरणापवादतयाभाष्यादौप्रतिपादितत्वात् स्मृतिकौ
स्तुभेतु प्रधानभूतोप्याचार्योबहुभिरपिचतुरवत्तिभिःसहोपाकर्मकुर्वन् एकस्यापिजामदग्न्यस्या
नुरोधेनपंचावत्तमेवकुर्यात् आग्रयणेजघन्येप्येवंद्यावापृथिव्यनुरोधेनमुख्यानेकेंद्राग्न्यादीनांप्रस
मपिनियमसाधकतयाद्वादशाध्यायोक्तस्यकांस्यभोजिन्यायस्यप्रकृतेपितुल्यत्वात् उक्तंहिचतुर
वत्तिनंप्रत्यपिपाक्षिकपंचावत्तानुष्ठानं कात्यायनेनतस्माद्धिरवत्तिर्जामदग्न्यानांसर्वेषांचोभय।
विरोधादितिव्याख्यातंचैतत् कर्काचार्यदेवयाज्ञिकैः स्वशाखीयेतरेपंचावत्तंजामदग्नीनामित्युक्तेस्ते
षांपंचावत्तमेव अन्येषांचतुरवत्तंपंचावत्तंवेतिसत्यप्यत्राव्यवस्थितविकल्पप्रसक्तौजामदग्न्यानु।
त्तयैवाजामदग्न्यशाकांकुर्यात् अथजामदग्न्योमामंत्र्यपंचावत्तंकुर्वीतेत्यापस्तंबोक्तेः अतएवतनू

नयान्नराशंसयोरिव चत्वरवत पंचावनयोर्व्यवस्थाभावात् अजामदग्न्यानां जामदग्न्यैः सहानधिकारशंका तेनरा
जपुरोहितो सायुज्यकामोयजेतामिति वचनात्कुलाययज्ञइवोपाकर्मणि चोत्सर्गइति कार्ष्णाजिनिवचनादि
हापि सहाधिकारइति तदुभयमप्ययुक्तं वाजिनमिवेत्युपेक्षणीयं नचकुलायदृष्टांतेनसमाधानमप्युचितम्
वसिष्ठशुनकादिगोत्रोत्पन्नेनपुरोहितेनसहैव राज्ञोधिकारंप्रतिपादयतोवचनस्योपपत्तौ सत्रवत्कुलायेपि
प्रयाजगोचरभिन्नकल्पाहीणां सहाधिकारकल्पनानुपपत्तेः सोमचमसाकलचमसार्हत्वेनभिन्नक
ल्पयोर्विप्रक्षत्रिययोः सहाधिकारप्रतिपादकत्वत्तया चास्याधिकरणस्यतुल्यकल्पाधिकाराधिकरण
पश्चादलसंभवन्यात्यालोकयितुमुचितंविद्वद्भिरिति अथात्रकर्तव्यमुच्यते कार्ष्णाजिनिः उपाक
र्मणि चोत्सर्गे यथाकालंसमेत्यतु ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततइति व्यासः ऋषीणा
मर्चनं पूर्वं कर्तव्यं चनिवीतिनेति कार्ष्णाजिनिः वेदारंभणतः पूर्वं सक्तुप्राशनतःपरं नवयज्ञोपवीतानि
दद्याद्धारयेत्ततइति गालवः कृत्वायज्ञोपवीतानिनवानिवस्त्राण्यपि कृत्वाग्नौ गुरवे दत्वा पितृभ्योधारये
त्ततइति पितृभ्यइत्यत्रापिदत्वेत्यनुषज्यते वायवीये उपाकर्मणिविप्रेभ्यो दद्याद्यज्ञोपवीतकं आयु
ष्मान्जायतेनेनकर्मणामानवो भुवि ब्रह्मचारिणोविशेषः कालादर्शे मौंजीयज्ञोपवीतंचनवंदंडंच
धारयेत् अजिनंकटिसूत्रंच नवंवस्त्रंतथैवच अत्रविशेषः कारिकायां पश्चादग्नेस्तुदर्भेषु प्रागग्रेषूपवि
श्य च आसिच्यापः शरावादौ दर्भांस्तत्रनिधायच प्रागग्रदर्भगर्भास्तुकुर्याद्ब्रह्मांजलीस्तथा सव्याहृ
तिं जपंस्तूच्चैः सावित्रीं ब्रह्मयज्ञवत् त्रिरभ्यसेत्पुरोंकारं व्याहृतीश्चात्रकर्मणि गोभिलः उत्सर्जनंचवेदा
नामुपाकरणकर्मच अकृत्वावेदजप्येनफलंनाप्नोतिमानवः अतएवचोपाकर्मोत्सर्जनयोर्नित्यत्वं
इत्युपाकर्मकालनिर्णयः अथोत्सर्जनप्रयोगः आचार्यआचम्य प्राणानायम्य देशकालौसंकी
र्त्य अधीतानां छंदसामाप्यायनद्वारा श्रीपरमेश्वरप्रीत्यर्थं एभिर्ब्राह्मणैःसह ग्रंनरिनमुत्सर्जनाख्यं
कर्मकरिष्ये तदंगंहोमंकर्तुंस्थंडिलादिकरिष्ये स्थंडिलमुपलिप्योल्लिख्याभ्युक्ष्य कलशमाग्नेय्यां
निरस्यपाणिंप्रक्षाल्य प्रत्यग्नेरङ्गणोगोतमोग्निस्त्रिष्टुप् जुष्टोदमूना आत्रेयोवसुश्रुतोग्निस्त्रिष्टुप् अ
ग्न्यावाहने विनियोगः ॐ अयमग्रेहरिहोता निषीदादब्धःसुपुरएता भवा नः अवतांत्वा रोदसी विश्वमिन्वे
यजामहे सौमनसायदेवान् जुष्टोदमूना अतिथिर्दुरोण इमन्नोयज्ञमुपयाहिविद्वान् विश्वाअग्ने
अभियुजोविहत्याशत्रूयतामाभराभोजनानि इत्यत्तैरावाह्य व्याहृतीनांपरमेष्ठीप्रजापतिः प्र
जापतिर्बृहती अग्निप्रतिष्ठापने विनियोगः ॐ भूर्भुवः स्वः अग्निंपावकनामानंप्रतिष्ठापयामीतिप्रति
ष्ठाप्य प्रोक्षितैरिन्धनान्निनिक्षिप्य वेणुधमन्याप्रबोध्य ध्यायेद्देवं चत्वारिशृंगावामदेवोग्निस्त्रिष्टुप् अ
ग्निमूर्तिध्यानेविनियोगः ॐ चत्वारिशृंगास्त्रयो अस्यपादाद्वेशीर्षे सप्तहस्तासो अस्यत्रिधाबद्धोवृष
भो रोरवीतिमहोदेवोमर्त्यांआविवेश सप्तहस्तश्चतुःशृंगः सप्तजिह्वोद्विशीर्षकः त्रिपात्प्रसन्नवदनः
सुखासीनःशुचिस्मितः स्वाहांतुदक्षिणेपार्श्वेदेवीवामेस्वधांतथा बिभ्रद्दक्षिणहस्तेस्तुशक्तिमा
न्नंस्रुचंस्रुवं तोमरंव्यजनंवामेघृतपात्रंचधारयन् आत्माभिमुखमासीनएवंरूपोहुताशनः एवं
ध्यात्वासमिद्द्वयमादाय अस्मिन्क्रियमाणोत्सर्जनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये अस्मि
न्नन्वाहितेग्नौ जातवेदसमग्निमिध्मेनप्रजापतिंचाघारदेवते आज्येनाग्नीषोमौचक्षुषीआज्येनात्र
प्रधानं सवित्रींब्रह्माणंश्रद्धांमेधांप्रज्ञांधारणांसदसस्पतिं अनुमतिंछंदांस्यृषीन् एताःप्रधानदेव
ता आज्यद्रव्येणपुनरत्रप्रधानं अग्निंअप्सरसंसूर्यम् अग्निंशतक्रतुंअग्निंमित्रावरुणौअग्निंअपः
अग्निंप्रजापतिंदेवंब्रह्माणं अग्निंइंद्रासोमौइंद्रं अयासमरुतः पवमानंसोमं पवमानसोमं अग्निंस
त्वानं एताःप्रधानदेवताग्रहास[illegible]नमग्निमिधासत्वहृनेनरुद्रमयासमग्निं

देवान्विश्वान्समग्निं वायुं सूर्यं प्रजापतिं चैताः प्रायश्चित्तदेवताः आज्येन ज्ञाताज्ञातदोषनिवर्हणार्थं त्रिवारमग्निम
हूतश्चाज्येन सांगोपांगेन कर्मणा सद्योयक्ष्ये व्याहृतीनां परमेष्ठी प्रजापतिर्बृहती अन्वाधाने समिद्धोमे विनि
योगः ओं भूर्भुवः स्वः स्वाहा प्रजापतय इदं न मम अग्निं परिसमूह्य परिस्तृणीयात् अग्नेरष्टांगुलपरिमिते देशे
ऐशानीं दिशमारभ्य दक्षिणं समंतात्सोदकेन पाणिना त्रिः परिमृज्य दर्भैर्दशांगुलमिते देशे प्राच्यादिषु परि
स्तृणीयात् तत्र प्राचीं प्रतीचीं चोदगग्रा दर्भा अवाचीमुदीचीं च प्रागग्राः पूर्वं पश्चात्परिस्तरणमूलयोरुपरि
दक्षिणपरिस्तरणं उपरि परिस्तरणं तु तदग्रयोरधस्तात् एकैकस्यां दिशि चत्वार एव षोडश उत्तरतः पात्रा
सादनार्थं कांश्चित्प्रागग्रान्दर्भान्स्तृणीयात् अग्नेरैशानीतस्त्रिरंभसा परिषिच्य दक्षिणसव्यपाणिभ्यां क्रमे
ण चरुस्थाली प्रोक्षणीपौ दर्वीस्रुवौ प्रणीताज्यपात्रे इध्माबर्हिषी इति द्वे द्वे न्यग्पात्यासादयेत् ततः प्रोक्ष
णीपात्रमुत्तानं कृत्वा तत्रानंतर्गर्भितसाग्रसमस्थूलप्रादेशमात्रे कुशद्वयरूपे उत्तराग्रे पवित्रे निधाय शुद्धा
भिरद्भिस्तत्पात्रं पूरयित्वा गंधपुष्पादि क्षिप्त्वा अंगुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यामुदगग्रे धृत्वा
पवित्रे धृत्वा अपस्त्रिरुत्पूय पात्राणि उत्तानानि कृत्वा इध्मग्रंथिं विस्रस्य सर्वाणि त्रिः प्रोक्षयेत् प्रणीतापात्र
मग्नेः प्रत्यङ्निधाय तत्र पवित्रे निधायोत्पूताभिरद्भिः पूरयित्वा गंधपुष्पादि निःक्षिप्य पूर्णपात्रं पाणिभ्या
मादायाग्नेः प्राग्दक्षिणेन नासिकाग्रं नीत्वाग्नेरुत्तरतो दर्भेषु निधाय पवित्रे गृहीत्वान्यैर्दर्भैराच्छादयेत् गृह
सिद्धान्यद्द्रव्यं चरुस्थाल्यामादाय ते पवित्रे आज्यपात्रे निधाय तत्पवित्रं पुरतः संस्थाप्य तस्मिन्नाज्यमासि
च्याग्नेरंतःस्थितांगारान्भस्मना सहाग्नेरुदक्परिस्तरणाद्बहिर्निरूह्य तेष्वाज्यपात्रमधिश्रित्य ज्वलताद
र्भोल्मुकेन प्रज्वाल्यांगुष्ठपर्वमात्रं प्रक्षालितं दर्भाग्रद्वयमाज्ये प्रक्षिप्य पुनर्ज्वलतानेनैव दर्भोल्मुके
न सिद्धान्नद्रव्येण सहाज्यं त्रिः पर्यग्निं कृत्वा तदुल्मुकमपास्याप उपस्पृश्याज्यपात्रं तु विकर्षन्नुदगुद्वास्यांगा
रानग्नौ प्रत्यस्याप उपस्पृश्य तत्रस्थमेवाज्यं सवितुष्ट्वा हिरण्यस्तूपः सविता पुरश्चिक आज्यस्योत्पवने विनि
योगः सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः इति मंत्रेणैकवारमुच्चारितेनै
कं वारं द्विस्तूष्णीं उत्पूतपवित्रे अद्भिः प्रोक्ष्याग्नौ प्रहरेत् अथाग्नेः पश्चात्परिस्तरणाद्बहिर्भुवं प्रोक्ष्य तत्र ब
र्हिः सन्नहनीरज्जुमुदगग्रां प्रसार्य तदुपरि बर्हिः प्रागग्रमुदगपवर्गमविरलमास्तीर्य तस्मिन्नाज्यपात्रं नि
धाय दक्षिणकरे स्रुक्स्रुवौ गृहीत्वा सव्येन कांश्चिद्दर्भानादाय सहैवाग्नौ प्रताप्य स्रुचं निधाय दक्षिण
हस्तेन स्रुवं सबिलमग्रे [illegible] मध्यान्मयतः आरभ्य पृष्ठतो यावदुपरिष्टाद्बिलं मयेत्कुशानां मूलेना
दंडमेकैकं त्रिर्मृजीत ते [illegible] प्रताप्य चासाद्य बर्हिषुत्तरतो न्यसेत् एवमेव दर्वीमपि संमृज्य तान्कुशान्
कृतसमानूप्रोक्ष्याग्नौ प्रहरेत् ततो गृहसिद्धान्नमग्न्याज्ययोर्मध्येन नीत्वा आज्याद्दक्षिणतो बर्हिषि सांनर
मासाद्याभिघार्य [illegible]गंधादिभिरभ्यर्चयेत् विश्वानि न इति तिसृणामात्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप् द्वाभ्याम
र्चनं त्योपस्थाने विनियोगः विश्वानि नो दुर्गहा जातवेदः सिंधुं न नावा दुरितातिपर्षि अग्ने अत्रिवन्नमसा
गृणानोऽस्माकं बोध्यविता तनूनां यत्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि जातवेदो यशो
अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्यां यस्मै त्वं सुकृते जातवेद उ लोकमग्ने कृणवः स्योनं अश्विनं स पु
त्रिणं वीरवंतं गोमंतं रयिं नशते स्वस्ति आद्यमंत्राभ्यामष्टसु दिक्षु चर्चयेदष्टभिः पादैः अंत्योपस्थानं आ
मानं चालंकृत्य हस्तं प्रक्षाल्य इध्मबंधनरज्जुमिध्मस्थाने निधाय पाणिनेध्ममादाय मूलमध्याग्रेषु स्रु
वेण त्रिरभिघार्य अयं त इति वामदेवो जातवेदा अग्निस्त्रिष्टुप् इध्महवने विनियोगः अयं त इध्म आत्मा जा
तवेदस्तेनेध्यस्व वर्धस्व चेद्ध वर्धय चास्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा जातवेदसे
अग्नय इदं न मम ततः स्रुवेणाज्यं गृहीत्वा वायव्यदिशमारभ्याग्नेयीदिक्पर्यंतमाज्यधारामाहरेत् तथैव म
नैर्ऋतीदिशमारभ्यैशानीपर्यंतं जुहुयात् प्रजापतिं मनसा ध्यायन्स्वाहेति जुहुयात् उभयत्र प्रजापतय म

इदंनमम तेनाग्नयेस्वाहा अग्नयइदंउत्तरतः सोमायस्वाहा सोमायेदं दक्षिणतः ततःसावित्र्यादिनवभ्यः सावित्र्यै
स्वाहा सावित्र्याइदं ॐब्रह्मणेस्वाहा ब्रह्मणइदं ॐश्रद्धायैस्वाहा श्रद्धायाइदं ॐमेधायैस्वाहा मेधायाइदं प्र
ज्ञायैस्वाहा प्रज्ञायाइदं ॐधारणायैस्वाहा धारणायाइदं ॐसदसस्पतयेस्वाहा सदसस्पतयइदं ॐअनुम
तयेस्वाहा अनुमतयइदं ॐछंदोभ्यऋषिभ्यःस्वाहा छंदोभ्यऋषिभ्यइदं आभ्याहुतिभ्येनेचतत्वत्यप्याचार्यः
पंचावर्तिनेशिष्यमामंत्र्य विंशतिकृत्वः पंचावत्तंकुर्वीत शिष्टाचारश्चेत्स्वयंपंचावतिनउत्थायाचार्यः स्वयं
वपसूनइतिमंत्रेणनिवेदयंति मसूत्तोभक्षमकंचरावपिसोमंप्रथमः सूरिरुन्मृजेसूतेसातेनपद्यागमेवा
प्रतिविश्वामित्रजमदग्नीदमे ततःस्रुवेणस्रुच्याज्यमुपस्तीर्य गृह्यसिद्धान्नमध्यादंगुष्ठमध्यमानामिकाभि
रुदगग्राभिर्नखसंस्पर्शनमकुर्वन्नवदायदर्वीमीष्य ततोन्नपूर्वार्धात् पश्चिमार्धाभिस्त्रयैवावदायदर्वी
मोष्यपात्रस्यमन्त्रमभिघार्य दर्वीस्थमवत्तंचाभिघार्य अग्निमीलेविश्वामित्रोमधुच्छंदा अग्निर्गायत्रीउत्सर्ज
नप्रधानगृह्यसिद्धान्नहोमेविनियोगः ॐअग्निमीलेपुरोहितंयज्ञस्यदेवमृत्विजं होतारंरत्नधातमंस्वाहा
अग्नयइदंनममेतिसर्वत्रत्यागमाचार्यएवकुर्य्यात् प्राक्तस्थानुदकसंस्थानिचावदानानिजुहुयादि
तिनयेतः कुसुंभकोमैत्रावरुणिरगस्त्योऽग्निःसूर्यो अनुष्टुप् उत्सर्जनप्र॰ ॐकुसुंभकस्तदब्रवीद्गिरेःप्र
वर्तमानकः वृश्चिकस्यारसंविषमरसंवृश्चिकतेविषंस्वाहा अग्निसूर्याभ्यइदं त्वमग्नेशौनकोगृत्सम
दोऽग्निर्जगती उत्सर्जन॰ ॐत्वमग्नेद्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि त्वंवनेभ्यस्त्वमोषधी
भ्यस्त्वंनृणांनृपतेजायसेशुचिः स्वाहाअग्नयइदं ॐआवदंश्छौनकोगृत्समदः शकुंतोजगतीउत्स॰ आ
वदंस्त्वंशकुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः यदुत्पतन्वदसिकर्करिर्यथाबृहद्वदेमविदथेसु
वीराःस्वाहा शकुंतायेदं सोमस्यमागाथिनोविश्वामित्रोऽग्निस्त्रिष्टुप् उत्स॰ ॐसोमस्यमानवसंवत्सृअग्ने
वह्निंचकथं विदथेयजध्यैदेवाँअच्छादीद्ययुंजेअद्रिं शमायैअग्नेतनवंजुषस्वाहा अग्नयइदं गणानाभा
र्गवोजमदग्निर्मित्रावरुणौगायत्री उत्स॰ ॐगणानांजमदग्निनायोनावृतस्यसीदतंपातंसोममृतावृधा
स्वाहा मित्रावरुणाभ्यामिदं त्वाह्यग्नेगोत्तमोवामदेवोऽग्निरष्टिः उत्स॰ त्वाह्यग्नेसदसित्समन्यवोदेवासोदेवम
रतिंन्येरिरइतिक्रत्वान्येरिरे अमर्त्यंयजतमर्त्येष्वादेवमादेवंजननप्रचेतसंविश्वमादेवंजननप्रचेतसं॰
स्वाहा अग्नयइदं धामंतेगौतमवामदेवआपोजगती उत्स॰ ॐधामंतेविश्वंभुवनमधिश्रितमंतःसमु
द्रेहृद्यं १ तरायुषि अपामनीकेसमिथेयआभृतस्तमश्यामम धुमंतंतऊर्मिंस्वाहा अद्भ्यइदं प्रबोध्यात्रेयो
बुधगविष्टिरवग्निस्त्रिष्टुप् उत्स॰ ॐप्रबोध्यग्निःसमिधाजनानांप्रतिधेनुमिवायतीमुषासंयह्वाइवप्र
वामुज्जिहानाःप्रभानवः सिस्त्रतेनाकमच्छस्वाहा अग्नयइदं गंतानश्यात्रेयएवयामरुन्मरुतोऽतिजग
ती उत्स॰ ॐगंतानोयज्ञंयज्ञियासुशमिश्रोताहवमरक्षएवयामरुत्ज्येष्ठासोनपर्वतासोव्योमनित्तूयं
तस्यप्रचेतसः स्यातदुर्धर्तवोनिदःस्वाहा मरुद्भ्यइदं त्वंह्यग्नेवार्हस्पत्योभरद्वाजोऽग्निस्त्रिष्टुप् उत्स॰ ॐ
त्वंह्यग्नेप्रथमोमनोतास्याधियोअभवोदस्महोतात्वंसीवृषन्नकृणोर्दुष्टरीतुसहोविश्वस्मैसहसेसहध्यैस्वाहा अग्नय
इदं योनस्सोमस्वानःपायुर्देवब्रह्माणोनुष्टुप् उत्स॰ योनस्सोअररणोयश्चनिष्ट्योजिघांसतिदेवास्तंसर्वेधूर्व
तुब्रह्मवर्ममममांतरंस्वाहा देवब्रह्मभ्यइदं अग्निस्त्रयोमैत्रावरुणिर्वसिष्ठोऽग्निर्विराट् उत्स॰ अग्निंनरोदीधिति
भिररण्योर्हस्तच्युतीजनयंतप्रशस्तं दूरेदृशंगृहपतिमथर्युंस्वाहा अग्नयइदं प्रतिचक्ष्वमैत्रावरु
णिर्वसिष्ठइंद्रासोमावनुष्टुप् उत्स॰ ॐप्रतिचक्ष्वविचक्ष्वेंद्रश्चसोमजागृतं रक्षोभ्योवधमस्यतमशनिं
यातुमद्भ्यःस्वाहा इंद्रासोमाभ्यामिदं माचिन्नकाण्वःप्रगाथइंद्रोबृहती उत्स॰ ॐमाचिदन्यद्विशंसत
सखायोमारिषण्यतइंद्रमित्स्तोतावृषणंसचासुतेमुहुरुक्थाचशंसतस्वाहा इंद्रायेदं अग्नेपाहिकाण्वः
सोभरिरग्निर्मरुतोनुष्टुप् उत्स॰ अग्नेपाहिमरुत्भिर्बाहुदेभिःसोमपीतये सोभर्याउपसुष्टुतिंमादयस्व

स्वर्णारैत्वास्वाहा अग्नामरुद्भ्यइदं स्वादिष्टयावैश्वामित्रोमधुच्छंदः पवमानःसोमोगायत्री उत्स॰ ॐस्वादिष्ठ॰
यामदिष्टयापवस्वसोमधारयाइंद्रायपातवेसुतःस्वाहा पवमानायसोमायेदं पतीराजन्मारीचःकश्यपःसो
पवमानःसोमःपंक्तिः उत्सर्ज॰ ॐपतेराजन्त्छतंहविस्तेनसोमाभिरक्षतः अरातीवामानस्तारीन्मोचनः॰
किंचिनाममदिंद्रायेंद्रोपरिस्रवास्वाहा पवमानायसोमायेदं अग्नेहस्त्रासंस्त्रिनोग्निस्त्रिष्टुप् उत्स॰ ॐअ
ग्नेहस्त्वृषसामूर्धाअस्याविर्जगत्यावमसोऽन्योनिर्बागात् अग्निर्भानुनाहृषनास्वंगआजातोविश्वासमा
न्यग्राःस्वाहा अग्नयइदं समानीवआंगिरसः संवननःसंज्ञानमनुष्टुप् उत्स॰ॐसमानीवआकूतिःस
मानाहृदयानिवः समानमस्तुवोमनोयथावःसुसहासतिस्वाहा संज्ञानायेदं स्रुवेणाज्यंदर्व्यामुपस्ती
र्य महासिद्धान्नमन्नभागतोभूयोनूचानाभिरेवांगुलीभिरवदायदर्व्यामोपात्रस्यंहविरभिघार्य यदस्य
कर्मणोहिरण्यगर्भोग्निरतिधृतिः स्विष्टकृद्धोमेविनियोगः ॐयदस्यकर्मणोन्यरीरिचंयद्वान्यूनमिहा
करं अग्निष्टत्स्विष्टकृद्विद्वान्सर्वं स्विष्टंसुहुतंकरोतुमे अग्नयेस्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां
कामानांसमर्द्धयित्रेसर्वान्नःकामान्समर्धयस्वाहा अग्नयेस्विष्टकृतइदं रुद्रायपशुपतयेस्वाहा पशुप
तयेरुद्रायेदंततः प्राणायामंकृत्वा पृथ्वीत्यस्यमंत्रस्यमेरुपृष्ठऋषिः कूर्मोदेवता सुतलंछंदः आस
नेविनियोगः पृथ्वि त्वयाधृतालोकादेवित्वंविष्णुनाधृता त्वंचधारयमांदेविपवित्रंकुरुचासनं अप
सर्पंतुवामदेवोभूतान्यनुष्टुप् भूतोत्सादनेविनियोगः अपसर्पंतुतेभूतायेभूताभुविसंस्थिताः येभूता
विघ्नकर्तारस्तेनश्यंतुशिवाज्ञया अनेनभूतानुत्साद्य शरावंजलंकुशांश्चाधायविद्युदसिविद्यमेपाप्मा
नमृतात्सत्यमुपैमि नत्तुलमभिमृश्योपस्पृश्यकृते दर्भगर्भब्रह्मांजलिंविधाय प्रणवादिस्वयमुच्चारय
न्पात्रप्येवमेवोपविष्टान्वाचयेत् प्रणवस्यपरब्रह्मऋषिःपरमात्मादेवता देवीगायत्रीछंदः व्याहृ
तीनांपरमेष्ठीप्रजापतिः प्रजापतिर्बृहतीगायत्र्यागाथिनोविश्वामित्रः सविता गायत्री अग्निमीलइत्या
दीनांछंदसांवैश्वामित्रमधुच्छंदादयऋषयः अग्न्यादयोदेवताः गायत्र्यादीनिछंदांसिसर्वेषामुत्सर्जनेवि
नियोगः ॐभूर्भुवःस्वःतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात् ॐभूर्भुवःस्वःतत्समहिधि
यो॰यात् ॐभूस्वःतत्स॰हिधियो॰प्रचोदयात् अग्निमीलेपुरोहितंयज्ञस्यदेवमृत्विजंहोतारंरत्नधातमं अग्निः
पूर्वेभिरृषिभिरीड्योनूतनैरुतसदेवांएहवक्षति अग्निनारयिमश्नवत्पोषमेवदिवेदिवे यशसंवीरवत्तमं अग्नेयं
यज्ञमध्वरंविश्वतःपरिभूरसिसइद्देवेषुगच्छति अग्निर्होताकविक्रतुःसत्यश्चित्रश्रवस्तमः देवोदेवेभिरागम
त् यदंगदाशुषेत्वमग्नेभद्रंकरिष्यसितवेतत्सत्यमंगिरः उपत्वाग्नेदिवेदिवेदोषावस्तर्धियावयंनमोभरंत
एमसि राजंतमध्वराणांगोपामृतस्यदीदिविंवर्धमानंस्वेदमे सनः पितेवसूनवेग्नेसूपायनोभवसचस्वा
नःस्वस्तये अग्निर्वैदेवानामवमोविष्णुःपरमः अथमहाव्रतम् एषपंथाएतत्कर्म अथातःसंहिताया
उपनिषत् विदामघवन्विदामहाव्रतस्यपंचविंशतिसामधेन्यः इषेत्वोर्जेत्वा अग्नआयाहिवीतये शन्नोदे
वीरभिष्टये अथैतस्यसमाम्नायस्यसमाम्नायःसमाम्नातः मयरसतजभनलगसंमितं गौःग्मा पंचसंवत्स
रमयं अथशिक्षांप्रवक्ष्यामि वृद्धिरादैच् यदिंद्रादोदाशराज्ञेउदंजनाउपश्रुत योगीश्वरंयाज्ञवल्क्यंनारा
यणंनमस्कृत्य अथातोधर्मंव्याख्यास्यामः अथातोधर्मजिज्ञासा अथातोब्रह्मजिज्ञासा तच्छंयोरावृ
णीमहे गातुंयज्ञाय गातुंयज्ञपतये दैवीस्वस्तिरस्तुनः स्वस्तिर्मानुषेभ्यः ॐऊर्ध्वंजिगातुभेषजं शन्नोअ
स्तुद्विपदेशंचतुष्पदे ॐनमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः नमोवाचेनमोवाचस्प
तयेनमोविष्णवेमहतेकरोमि इमामृचंत्रिःपठेत् भद्रंनोअपिवातयमनः ॐशांतिःशांतिःशांतिः वृष्टि
रसिवृश्चमेपाप्मानमृतात्सत्यमुपागाम् ततः सर्वेउत्सर्गावैवेदाइत्युक्त्वाअंजलिस्थान्कुशानाचार्याय
दद्युः आचार्यःस्रुवेणप्रायश्चित्तान्याहुतीर्जुहुयात् तत्रमंत्रः अयाश्चाग्नेविमदोप्राजापतिःपंक्तिः अयश्चि॰

त्राज्यहोमे विनियोगः ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्वमित्त्वमयाअसि अयासा वयसा हृतो यास
ह्व्यमूहिषे या नो धेहि भेषजं स्वाहा अयासेमयद्दं अतो देवा इति द्वयोः काण्वो मेधातिथिर्ऋषिः पूर्वो
दैवत्र्याण्वैश्नवी गायत्री छन्दः मापः स्नेष्टा इति जपित्वा कुशाग्रैः प्राच्यादिपंचदिक्षु प्रादक्षिण्यक्रमेणो
दकमुत्क्षिपेत् प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणस्यां दिशि मासाः पितरो मार्जयन्तां प्रती
च्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश आप ओषधयो वनस्पतयो मार्जयन्तां ऊर्ध्वायां दिशि य
ज्ञः संवत्सरः प्रजापतिर्मार्जयतां मार्जयन्तामिति वा स्वशिरसि कुशाग्रैरभिषिंचेदेतैर्मन्त्रैः आपो अ
स्मादेवश्रवा आपस्त्रिष्टुप् मार्जने विनियोगः आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु विश्वं हि
रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूत एमि इदमापः सिन्धुद्वीप आपोनुष्टुप् मार्जने विनियोगः इदमा
पः प्रवहत यत्किंचिद्दुरितं मयि यद्वाहमभिदुद्रोह यद्वा शेप उतानृतं सुमित्र्या न आप ओषधयः सन्तु दुर्मित्र्या
स्तस्मै सन्तु योस्मान्द्वेष्टि यं च वयं द्विष्म इति ततः आचार्यः स्ववामकरे प्रणीतापात्रं माहं प्रजां परासिचं यानः
सयावरी स्थन समुद्रे वो निनयामि स्वं पाथो अपीथेति कक्ष्याः पठन्नन्यत्र सुखमवाङ्निनीय तज्जलेनाध्या
यान्मार्जयेत् विषाणिनेति ऋचेनाग्रे रुक्मरजजनोपस्थानं कुर्य्यात् मानस्तोकस्याङ्गिरसः कुत्सो रुद्रो जगती
विभूतिग्रहणे विनियोगः ॐ मानस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः वीरान्मा नो रु
द्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे इति कृष्णविषाणेन विभूतिं गृहीत्वा ॐ त्र्यायुषं जमदग्नेरिति
ललाटे कश्यपस्य त्र्यायुषं कण्ठे अगस्त्यस्य त्र्यायुषं नाभौ यद्देवानां त्र्यायुषं दक्षिणांसे तन्मे अस्तु त्र्यायुषं
वामांसे सर्वमस्तु शतायुषं शिरसि धारयेत् आचार्यो ग्रैवीयत्वदेशे स्थितं ॐ च मे स्वरश्च मे यज्ञोप(वीत)च ते न
मश्च यते न्यूनं तस्मै त उपयन्नो तिरिक्तं तस्मै तेन नमः स्वस्ति श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलं आयुष्यं
तेज आरोग्यं देहि मे हव्यवाहन इति पूर्ववत्परिसमूह्य पर्युक्षेत् गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर
यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन इत्यग्निं विसृज्य मान्तदेवगणाः सर्वे पूजामादाय पार्थिवीं इष्टका
मप्रसिद्ध्यर्थं पुनरागमनाय च ततः उदकतीरं गत्वा शरीरशुद्ध्यर्थमुत्सर्जनांगत्वेन सर्वैः सह स्नानानि कुर्य्या
त् तद्यथा प्राणानायम्य देशकालौ स्मृत्वा उत्सर्जनांगत्वेन गणस्नानमहं करिष्य इति संकल्प्य स्ना
त्वाचम्य उत्सर्जनांगत्वेन भस्मगोमयस्नानानि करिष्ये भस्मादाय ईशानाय नम इति शिरसि तत्पुरुषा
य नम इति मुखे अघोराय नम इति हृदये वामदेवाय नम इति गुह्ये सद्योजाताय नम इति पादयोः प्रणवे
न सर्वांगे यद्वा अग्निरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं ह वा इदं भस्म मान
स्तोक इति सर्वांगे विलिप्य स्नात्वाचम्य गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीं ईश्वरीं सर्वभूतानां ता
मिहोपह्वये श्रियं अनेन गोमयमादाय अग्रमग्रं चरन्तीनामोषधीनां वने वने तासामृषभपत्नीनां पवित्रं
कायशोधनं तन्मे रोगांश्च शोकांश्च पापांश्च नुद गोमय सर्वदेहे निशिरः प्रभृत्यंगानि विलिप्य स्नात्वाचम्य
बलित्था पर्वतानां छिद्रं विभर्षि पृथिवि प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि इति भूमिं प्रार्थ्य मा वो
रिषत्खनिता यस्मै चाहं खनामि वः द्विपच्चतुष्पदस्माकं सर्वमस्त्वनातुरम् इति खनित्वा स्योना पृ
थिवि भवानृक्षरा निवेशनी यच्छा नः शर्म सप्रथाः इति मृदमादाय आपनेति परायणो दूर्वा रोहन्तु
पुष्पिणीः ह्रदाश्च पुण्डरीकाणि समुद्रस्य वहा इमे इति दूर्वामादाय गायत्र्या सर्वां मृदमभ्युक्ष्याश्मोनि
याय त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रं ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विं
द्रः इति पूर्ववत् यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः
इति दक्षिणतः तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः अहेडमानो वरुणेह बोध्युरु
शंस मा न आयुः प्रमोषीः इति पश्चिमतः वयं सोम व्रते तव मनस्तनूषु बिभ्रतः प्रजावन्तः सचेमहि

नीः स्वस्त्ययनीः सदुघा हि घृतश्चुतः ऋषिभिः संभृतो रसः ब्राह्मणेष्वमृतं हितं पावमानीर्दिशंतु न इ
मं लोकमथो अमुं कामान्समर्धयंतु नः देवीर्देवैः समाहिता येन देवाः पवित्रेणात्मानं पुनते सदा
तेन सहस्रधारेण पावमान्यः पुनंतु मा प्राजापत्यं पवित्रं शतोद्यामं हिरण्मयं तेन ब्रह्मविदो वयं
पूतं ब्रह्म पुनीमहे इंद्रः सुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या यमो राजा प्रमृणाभिः पु
नातु मा जातवेदा मोर्जयंत्या पुनातु आपो हि ष्ठेति तिसृभिर्मार्जयित्वा इमं मे गंगे इत्युदकमालोड्य ऋतं
चेति तिसृभिरघमर्षणं कृत्वा प्रवाहाभिमुखः स्थित्वा मार्जयित्वाचम्य स्नानांगतर्पणं कुर्यात् तद्य
था ब्रह्मादयो ये देवास्तान्देवांस्तर्पयाति भूर्देवांस्त० स्वर्देवांस्त० कृष्णद्वैपायनादयो ये ऋषयस्तानृ
षींस्त० भूः ऋषींस्त० भुवः ऋषींस्त० स्वः ऋषींस्त० सोमः पितृमान् यमोंगिरस्वानग्निः कव्यवाहनाद
यो ये पितरस्तान्पितॄंस्त० भूः पितॄंस्त० भुवः पितॄंस्त० स्वः पितॄंस्त० भूर्भुवःस्वः पितॄंस्त० अग्निदग्धा
श्च ये जीवा ये प्यदग्धाः कुले मम भूमौ दत्तेन तोयेन तृप्ता यांतु परां गतिमिति तिलांजलिं तटे निक्षिप्य
यन्मया दूषितं तोयं शारीरमलसंभवात् तद्दोषपरिहारार्थं यक्ष्माणं तर्पयाम्यहं यक्ष्मतर्पणं कृत्वा
ऋषीन्पूजयेत् तत्र स्नात्वा आचम्य प्राणानायम्य देशकालौ संकीर्त्य ऋषीन्पूजयिष्य इति संकल्प्य
कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः अरुंधतीसहिता
न्सप्तऋषीनावाहयामि तदस्तु मित्रावरुणा गृहा वै प्रतिष्ठा अरुंधतीसहितेभ्यः सप्तऋषिभ्यः स
प्तऋषिभ्यो नमः आवाहनं स० आसनं पाद्यमर्घ्यं आचमनीयं स्नानीयं पुनराचमनं वस्त्रं०
आचम० यज्ञोपवीतं० अथ गंधः पुष्पाणि धूपं० दीपं० नैवेद्यं० आचमनं० फलं तांबूलं दक्षिणा
अरुंधतीसहितेभ्यः सप्तऋषिभ्यो नमः मंत्रपुष्पांजलिं समर्पयामि मंत्रहीनं क्रियाहीनं आवा
हनं न जानामीति च क्षमाप्य ततः सावित्र्यादींस्तर्पयेत् सावित्रीं तर्पयामि ब्रह्माणं त० श्रद्धां तर्प०
मेधां त० प्रज्ञां त० धारणां त० सदसस्पतिं त० अनुमतिं त० छंदांस्यृषींस्त० अग्निं त० आरण्यसूर्या
स्त० अग्निं त० शाकुनं त० अग्निं त० मित्रावरुणौ त० अश्विनौ त० अप्स्तर्पयामि० अग्निमरुतस्त०
अग्निं तर्प० देवब्रह्माणं त० अग्निं तर्प० इंद्रासोमौ त० इंद्रं तर्प० अग्नामरुतस्त० पवमानसोमं तर्प०
अग्निं त० संज्ञानं तर्प० ब्रह्मयज्ञांगत्वमुक्तं तर्पणं स्यादिद्यापितत् इति कारिकोक्तेः प्रजापतिस्तृप्यतु
ब्रह्मा तृप्य० वेदास्तृप्यंतु देवास्तृप्यं० ऋषयस्तृप्यंतु सर्वाणि छंदांसि तृप्यंतु ओंकारस्तृप्यतु व
षट्कारस्तृप्यतु व्याहृतयस्तृप्यंतु सावित्री तृप्यतु यज्ञास्तृप्यंतु द्यावापृथिवी तृप्यतां अंतरिक्षं
तृप्यतु अहोरात्राणि तृप्यंतु संख्यास्तृप्यंतु सिद्धास्तृप्यंतु समुद्रास्तृप्यंतु नद्यस्तृप्यंतु क्षेत्रौषधि
वनस्पतिगंधर्वाप्सरसस्तृप्यंतु नागास्तृप्यंतु वयांसि तृप्यंतु गावस्तृप्यंतु साध्यास्तृप्यंतु विप्रा
स्तृप्यंतु यक्षास्तृप्यंतु रक्षांसि तृप्यंतु भूतानि तृप्यंतु एवमंतानि तृप्यंतु अथ ऋषयः उपवीती
शतर्चिनस्तृप्यंतु माध्यमास्तृप्यंतु गृत्समदस्तृप्यतु विश्वामित्रस्तृप्यतु वामदेवस्तृप्यतु भरद्वाज
स्तृप्यतु वसिष्ठस्तृप्यतु प्रगाथास्तृप्यंतु पावमान्यस्तृप्यंतु क्षुद्रसूक्तास्तृप्यंतु महासूक्तास्तृप्यं०
प्राचीनावीती अत्र जीवत्पितृकस्यापसव्ये विशेषमाह अपसव्यं द्विजाग्र्याणां पित्र्ये सर्वत्र कीर्ति
तं आब्रह्मकोशात्प्रकर्तव्यं मातापित्रोस्तु जीवितोरिति पित्राचारात् सुमंतुजैमिनिवैशंपायनपैल
सूत्रभाष्यभारतमहाभारतधर्माचार्यास्तृप्यंतु जानंतिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमां
डव्यमांडूकेयास्तृप्यंतु गार्गीवाचक्नवी तृप्यतु वडवाप्रातिथेयीं त० सुलभां मैत्रेयीं त० कहोलं त
र्पयामि कौषीतकं त० महाकौषीतकं तर्प० पैंग्यं तर्पयामि० महापैंग्यं तर्पयामि सुयज्ञं तर्प० सांख्या
यनं तर्पया० ऐतरेयं त० महैतरेयं तर्पयामि शाकलं तर्पया० बाष्कलं तर्पया० सुजातवक्त्रं तर्पयामि

औदवाहिंतर्पयामि महौदवाहिंतर्पयामि सौजामिंत॰ शौनकंतर्पया॰ आश्वलायनंत॰ येचान्येआ
चार्यास्तेसर्वेतृप्यंत्विति अत्रकारिकात्रिंशद्भिरेकेनोनैस्तद्द्वादशेश्च नथाभवेत् त्रयोविंशतिवाकेचि
त्तद्देवर्षीश्चपितॄनृक्रमात् अस्मत्पितरममुकशर्माणममुकगोत्रंवसुरूपंस्वधानमस्तर्पयामि ३
एवंपितामहंप्रपितामहंमात्रादीतिस्रः मातामहादीन्सपत्नीकान्पत्नीसुतादीन्पितृव्यंमातुलं
भ्रातरंपितृस्वसारं मातृष्वसारंमात्मस्वसारंयथायोग्यंसपवाःसननयाःश्वशुरंगुरुंशिष्यानामां॰
श्चतर्पयेत् आब्रह्मस्तंबपर्यंतदेवर्षिपितृमानवाः तृप्यंतुपितरःसर्वेमातृमातामहादयः अ
तीतकुलकोटीनांसप्तद्वीपनिवासिनां आब्रह्मभुवनाल्लोकादिदमस्तुतिलोदकं येकेचास्मत्
कुलेजाताअपुत्रागोत्रिणोमृताः तेगृह्णंतुमयादत्तंवस्त्रनिष्पीडनोदकं इत्युत्तरीयंतटेनिष्पीड्य
सव्येनवायमादीस्तर्पयेत् यमंतर्पयामि धर्मराजंतर्पयामि बध्नंतर्पयामि ततोयमानिहंना
पितृधर्मराजोवैवस्वतोदंडधरश्चकालः भूताधिपोदत्तकृतानुसारीकृतांतमेतद्दशभिर्जपंति
इतिदशवारंजपेत् ततःशांत्यर्थं आनोभद्राः १० शन्नइंद्राग्नी १५ त्यमूषवा ३ महित्रीणामवस्तु
थ्वीतिन्योवाचःपर्जन्यायप्र ३ अच्छावद १० बलित्थापर्वतानां ३ प्रदेवत्राब्रह्मणे १५ इहस्पते
प्रतिमे १६ एतानिपर्जन्यसूक्तानि ऋषयोवैसरस्वत्यांसत्रमासतेतिब्राह्मणखंडइयंचवै
दिकाःपठंति ततोवेदप्रीत्यर्थंब्राह्मणान्भोजयेत् विच्छिन्नानेसवनेषुप्रवाच्यायाचकथमप्यव
त्रिंदसुब्रते यावंतमन्युहसंमतं वरवयाहणोःशरभापश्चारंवधवे इत्यूषीजलेउद्वासयेत् इत्यु
त्सर्जनप्रयोगः अथोपाकर्मप्रयोगः सचोत्सर्जनवज्ज्ञेयः विशेषोलिख्यते नूतनब्रह्मचारिणा
उपाकर्मार्थितया नूतनकटिसूत्राद्युपकल्पनं स्वस्तिपुण्याहवाचनं नांदीश्राद्धंचकार्यं नात्
शाब्रह्मचार्यभावेनूपकल्पनमात्रंकृत्वाचम्य प्राणानायम्यदेशकालौसंकीर्त्य अधीताना
मध्येष्यमाणानांछंदसांयातयामता निरासेनाप्यायनद्वाराश्रीपरमेश्वरप्रीत्यर्थंपभिब्राह्म
णैःसहोपाकर्मकरिष्ये अन्वाधानेक्रियमाणेउपाकर्महोमेदेवतापरिग्रहार्थंमद्दासिद्धान्स्मा
नेदधिसक्तुद्रव्येणशेषेणस्विष्टकृतमग्निमित्याससव्यहनेनरुद्रंयज्ञोपवीतेनपरमात्मानम॰
यामः इध्मसत्वहनहोमानंतरंदधिसक्तुप्राशनोपवीतहोमदानधारणानिच दधिक्राव्णोवामदेवो
दधिक्रावानुष्टुप् दधिसक्तुप्राशनेविनियोगः ॐदधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः सु
रभिनोमुखाकरत्प्राणआयूंषितारिषत् इतिमंत्रेणप्राङ्मुखाःप्रत्येकंदधिसक्तून्प्राश्याच॰ पुः
अग्नेयस्वादंकधारणपापकैःकःप्राङ्मुखउपविश्यमार्जनंचकुर्यात् कृत्वायज्ञोपवीतानिनवा
निवसुधाधिप हुत्वाग्नौगुरवेदत्वापितृभ्योधारयेत्ततइति गालववचनात् वेदारंभेऋष्यादिस्म
रणंनेसर्वेषामुपाकरणेविनियोगः अनेनउपाकृतावेवेदाइत्युक्त्वाअंजलिस्थान्कुशान्दक्षि॰
णाकटौनिवेश्यपादउपस्पृशेयुः वेदारंभणात्पूर्वंसक्तुप्राशनतःपरं नवयज्ञोपवीतानिदध्या
द्वैधारयेन्नतु इतिकार्ष्णाजिनिवचनात् पितृभ्यइत्यस्यापिदत्वेत्यनेनान्वयः होमेधारणेचयज्ञो
पवीतमितिमंत्रस्यपरब्रह्मपरमात्मात्रिष्टुप् यज्ञोपवीतहोमेविनियोगः यज्ञोपवीतंपरमंपवित्रंप्रजा
पतेर्यत्सहजंपुरस्तात् आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजः स्वाहापरमात्मनइदं
ब्रह्मचारीनूतनमेखलादिधारयेत् अजिनंकटिसूत्रंच नववस्त्रंतथैवचेति कालादर्शोदाहृतवच
नात् एषांधारणेक्रमोमंत्रप्रकारश्चोपनयनवद्बोध्यः अन्यदुत्सर्जनेनसमानं इत्युपाकर्मप्रयो
गः अथात्रकश्चनोपयुक्तशास्त्रार्थोलिख्यते हविकृन्मतेउत्सर्जनप्रकरणस्यदेवताग्रहणेना
ऋष्यादीनांसावित्र्यादिभिःसहतेनोक्तत्वात् जयंतमतेसावित्र्यादीनांप्रधानदेवतात्वेनऋ॰

कल्पश्च त्वाज्यसेवा स्विष्टकृतेनावेद्याति सावित्र्यादीनामंगत्वादितितदुक्तेः अत्रकारिकाः आ
ज्यसंस्कारपर्यंतमुपलेपादि पूर्ववत् आज्येनदधिसक्तूनां त्रिःपर्यग्निकरणं भवेत् उन्मृतसान
माज्यंवेनेद्यात्रिःप्रोक्षणं भवेत् इध्ममभिघारणांतं स्यादाज्यसोद्वासनादिकं अन्वारंभोऽपुनाधि
ब्धेः स्वयमेव न संतिचेत् प्रकुर्वीताज्यभागांतमिध्माधानादि पूर्ववत् इहाज्यभागौ तत्रस्तस्थै
वोत्सर्जनेऽपितौ हुत्वाज्येन चभिर्मंत्रैः सावित्र्याद्यैस्ततःपरं हुत्वा च दानधर्मेणतान्सक्तून्दधिसंयुता
न् हुत्वाग्निमीळ इत्याद्यैर्मंत्रैर्विंशतिभिःक्रमात् शाकलानांसमानीवइत्यृचांत्या उंतीभवेत्
बाष्कलानां तत्तच्छयोरित्यृचांत्या उंतिर्भवेत् योनःस्वतिमंत्रेदेवब्रह्मतेदेवताइतिसम्प्रदायः देवानां
ब्रह्मणश्चदेवतात्वमितितयुक्तं अस्याऋचोदेवाब्रह्मचदेवेतिभाष्यकृताभिधानात् ब्रह्ममंत्रः
समेत्यांतंरक्षशाणांनिवारकं कर्मविद्य तद्‌इति व्याख्यानदशायामपि भाष्यकृतैवकर्मणोब्रह्मत
वगुणाभिधेयित्वेनस्वातंत्र्यनिराकरणाच्च एवंचऋष्यादिस्मरणकालेपिदेवब्रह्मणपनुष्टुवि
त्येवपतितमुचितं त्यागश्चदेवब्रह्मणइदमितिपंचावत्तिमत्वेद्विरवदायतथैवदधिसक्तून्सकृ
द्विर्वावदापद्विरभिघारयेद्भृगनिष्टकृन्मते जयंतत्रतेतुनाज्यावदानं ततोऽस्यावशेषःकारिकायां अ
थस्विष्टकृतंहुत्वादधिसक्तुभिरेवच दधिसक्तून्स्वयंशिष्यान्प्राशयाचम्यततःपरं परिस्तरणा
दर्भैस्तैः रत्तर्दयतिवांजलीन् अन्येनसेचयित्वायस्ताभिःकुर्वीतमार्जनमिति वेदारंभेकारिकाः
पश्चादग्रेषुदर्भेषुप्रागग्रेषूपविश्यच आशिच्यापःशरावादौदर्भांस्तत्रनिधायच प्रागग्रदर्भग
र्भास्तेकुर्युर्ब्रह्मांजलीन्नय सव्याहृतिंवदंत्युच्चैःसावित्रींब्रह्मयज्ञवत् त्रिरभ्यसेत्पुरोकारंव्याहृ
तीश्चात्रकर्मणि अग्निमीळेइदंसूक्तमनुवाकंयथाविधि प्रारभेरन्नृचंवापित्वध्याप्याद्वाचये
द्गुरुः प्रायश्चित्तादिसकलंहोमशेषंसमापयेदिति उत्सर्जनस्नानेयाःकारिकाः अथतीरमपां
गत्वांतेवगाह्य ततोजलं सावित्र्याद्यास्तथाप्याद्यादेवतास्तर्पयंतिच सावित्रींतर्पयाम्यग्निं
तर्पयामीतितर्पयेत् जयंस्तत्वग्निमीत्यादिमंत्रैस्तर्पणमब्रवीत् ब्रह्मयज्ञांगमुक्तंयत्तर्पणंस्या
दिहापिचेतिअवगाह्यैन्दनेनन भस्मगोमयमृत्स्नानानिशास्त्रांतरसिद्धानिविहितानीतिशिष्टव्यव
हारः अतएवविवाहादूर्ध्वकालेप्रसिद्धस्यपिंडनेर्मदास्नानेनकुर्यात् तिलतर्पणमित्यादिनिषेध
स्यनात्रप्रवृत्तिः नचात्रनदीनांरजोदोषप्रसक्तिः उपाकर्मणिचोत्सर्गेरजोदोषोनविद्यतइतिगा
र्ग्यवचनात् वेदाश्छंदांसिसर्वाणिब्रह्माद्याश्चदिवौकसः जलार्थिनोथपितरोमरीच्याद्यास्तथर्
षयः उपाकर्मणिचोत्सर्गेस्नानार्थंब्रह्मवादिनः पिपासवोनुगच्छंतिसंहृष्टाःस्वशरीरिणः
समागमस्तत्रयत्रैषांतत्रहत्यामलानिच नूनंसर्वंक्षयंयातिकिमुतैकंनदीरज इतिछंदोगप
रिशिष्टाच्च उत्सर्गानंतरंऋषिपूजातर्पणेकार्ये उपाकर्मणिचोत्सर्गेयथाकालंसमेत्यच ऋ
षीन्दर्भमयान्कृत्वापूजयेत्तर्पयेत्तत इतिस्मृतिचंद्रिकोदाहृतवचनात् तत्रत्यजलोपस्पर्शनपा
नाभ्यामाभ्युदयप्राप्तिः ऋषीणांसिच्यमानानामंतरालंसमाश्रितः संपिबेद्यःशरीरेणस्पृश
न्मुक्तजलच्छटाः विद्यादीन्ब्राह्मणःकामान्वरादीन्कन्यकांस्तथा आमुष्मिकान्यपिसवा
न्याप्नुयात्स्नानसंश्रयइति छंदोगपरिशिष्टात् ततःप्रकृतदेवतातर्पणं ब्रह्मयज्ञांगतर्पणं स्व
पित्रादितर्पणंचकार्यं ततोयमतर्पणं कुर्यादितिशिष्टाः बाष्कलानांतत्तच्छंयोःशंपुविश्वे
देवाःशक्वरीउर्जनच्छंयोदेस्वाहा विश्वेभ्योदेवेभ्यइदं इत्युपाकर्मोत्सर्जनप्रयोगः अत्रैवप्रसं
गादुत्सर्जनकालोनिर्णीयते तत्रयाज्ञवल्क्यः पौषमासस्यरोहिण्यामष्टकायामथापिवा ज
लांतेछंदसांकुर्यादुत्सर्गंविधिवद्बहिः पौषमासस्यरोहिण्यांकृष्णाष्टम्यांवाजलसन्निधौग्रा

माद्बहिर्वेदानामुत्सर्जनं कुर्यादित्यर्थः अनयोः पक्षयोः स्वस्वगृह्यानुसारेण व्यवस्था मनुः पुष्ये तु छंद-
सां कुर्याद्बहिरुत्सर्जनं द्विजः माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेहनि व्यवस्थितश्चायं विकल्पः श्राव-
ण्यां प्रोष्ठपद्यां वाप्युपाकृत्य यथाविधि युक्तश्छंदांस्यधीयीत मासान्विप्रोर्द्धपंचमानिति तेनैवोक्त-
त्वात् तेन श्रावण्यां यदोपाकर्म तदा पौषशुक्लप्रतिपदि उत्सर्जनं कार्यं यदा प्रोष्ठपद्यां तदा माघ-
शुक्लप्रतिपदि कार्यमित्यर्थः यत्तु हारीतः अर्द्धपंचममासानधीत्योर्द्धमुत्सृजेत् पंचार्द्धषष्ठान्वेति
तदा बाह्वृच्यामुपाकर्मविषयं यत्तु कात्यायनः उपाकृत्योदगयने ततोधीयीत धर्मवत् उत्सर्गश्चै-
कएवेषां तैषां प्रोष्ठपदेपि वेति अत्र प्रोष्ठपदपदं सिंहोपलक्षकं सिंहे रवाविति गार्ग्यवचनात्
बौधायनस्तु पौष्यां माघ्यां वा कुर्युः श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य पौष्यां माघ्यां वो-
त्सृजेदिति तत्सूत्रात् तैत्तिरीयास्तु तेषां कार्यं पौष्यां पौर्णमास्यां रोहिण्यां वा विरमेदिति तत्सू-
त्रात् बह्वृचैस्तु माघ्यां कार्य्यं अथाध्यायोत्सर्जनं चाध्याय पौर्णमास्यां विधीयत इति कारिकोक्तः म-
ध्यमाष्टकायामिताभ्योन्नेन हुत्वाभ्यर्चयंति एता एव देवतास्तर्पयंति आचार्यानृषीन् पितृंश्चे-
त्युत्सर्जनमित्याश्वलायनसूत्राच्च व्याख्यातं चैतद्वृत्तिकारेण मध्यमाष्टकाग्रहणात् पौषमासांतल-
क्षणार्थं तेन तस्याः समीपे माघ्यां पौर्णमास्यामित्यर्थ इति कातीयास्तु भाद्रपदे कुर्युः उत्सर्गश्चैत-
दातिष्यातिथ्यं तेषां प्रोष्ठपदे वेति कात्यायनोक्तेः अत्र कातीयसूत्रे अर्द्धषष्ठान्मासानधीत्योत्सृजे-
युरर्द्धसप्तमान्वेति तथा पौषस्य रोहिण्यां मध्यमायां वाष्टकायां अध्यायानुत्सृजेयुरिति अत्र
हरिहरः पौषे उत्सर्जनकर्तव्यतामभिधीयाह ततस्त्रिरात्रानंतरं शुक्लपक्षेषु छंदांस्यधीयीरन्
कृष्णपक्षेष्वंगानि ततः पुनरर्द्धषष्ठानर्द्धसप्तमान्वाधीत्योर्द्धमेवोत्सर्गं विधाय त्रिरात्रमेकरात्रं वा
वस्थाय यथेष्टं विप्रतिष्ठेरन् ततः पुनरुपाकृत्याध्ययनं यावदुत्सर्गमिति अनेनोत्सर्गद्वयं का-
तीयानां कर्तव्यमिति प्रतीयते अपरे तु एकस्यैवोत्सर्गस्य कालद्वयं मन्यंते तेनोत्सर्गद्वयमि-
ति अत्र द्वितीयमतमेव सूत्रस्वरसानुसारीति प्रतीयते सामगास्तु सिंहार्के पुष्ये कुर्युः सिंहे रवौ वि-
निपूर्वाह्णे गार्ग्यवचनात् सर्वैरुपाकर्मदिने वा कार्यं पुष्ये तदुत्सर्जनं कुर्यात् उपाकर्मदिनेथवेति रे
हेमाद्रौलादिगृह्योक्तेः स्वाध्यायमधीतेहमिति श्रुतेश्च यत्तु तिथ्यर्के इदानीं तैराश्वलायनैरप्य-
यमेवोत्सर्जनकाल आद्रियते तत्र मूलं न ज्ञानद्दत्युक्तं तद्भ्रांतिविजृंभितं पुष्ये तदुत्सर्जनं कुर्या-
दुपाकर्मदिनेथवेति स्वयमेव स्वादिगृह्यस्य मूलत्वेनोक्तत्वात् न च गृह्यसूत्राणां तत्कारबौधा-
त्वेन व्यवस्थितप्रामाण्यकत्वमिति वाच्यं अविरोधिनां त्वेकत्वेन परशाखीयस्यापि ग्राह्यत्वनात्
यदा सिंहस्थे सूर्ये सति तन्मध्यस्थहस्तनक्षत्रात्प्राक् पुष्यः कर्कस्थो भवति तदा तस्मिन्पुष्ये उत्स-
र्गं कृत्वा तदुत्तरहस्ते उपाकर्म सामगाः कुर्युः मासे प्रोष्ठपदे हस्तात्पुष्यः पूर्वो भवेद्यदा तदा श्रव-
णे कुर्यादुत्सर्गं छंदसां द्विज इति तत्परिशिष्टोक्तेः अत्र प्रोष्ठपदश्रावणशब्दौ मीनादिसौरमासा-
भिप्रायेण छंदोगानामुत्सर्जनोपाकर्मणोः सौरमास एव विधानात् एतच्च कर्मद्वयं प्रत्यहं कार्य-
तदुक्तं हेमाद्रौ कात्यायनेन प्रत्यहं करणे कर्मणोत्सर्गविधिवर्जितैः क्रियते छंदसां तेन पुनराप्या-
यनं भवेत् अयातयामैश्छंदोभिर्यत्कर्म क्रियते द्विजैः क्रीडमानैरपि सदा तत्तेषां सिद्धिकारकमि-
ति अत्र द्विजैरिति त्रयाणामाश्रमिणां वर्णानामधिकारसिद्धिः यत्तु मासान्विप्रोर्द्धपंचमानि
त्युदाहृतवाक्ये विप्रग्रहणात् ब्राह्मणस्यैव स्मृतोधिकारः क्षत्रियवैश्ययोस्तदन्वारंभमात्रमेवेति ज्ञा-
पनार्थं अप्येष्यमाणोध्यायेरन्वारब्ध इत्याश्वलायनसूत्रे चाध्यायकपरेणाध्येष्यमाणपदेन अ-
ध्यापनाधिकृतब्राह्मणस्यैव स्वतंत्राधिकारप्रतीतिरिति उत्सर्जनोत्तरं कार्यं मनुराह अतऊर्ध्वं तु।

छंदांसि शुक्लेषु नियतः पठेत् कारिकायां तु विशेषः अतश्चारभ्यषण्मासान् षडंगानित्यधीयते शुक्ले वेदमधीयीत कृष्णेंऽगानीति केचनेति अत्र नदीनां दोषो नास्तीत्याह वसिष्ठः उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च चंद्रसूर्यग्रहे चैव रजोदोषो न विद्यत इति गार्ग्योऽपि उपाकर्मणि चोत्सर्गे रजोदोषो न विद्यत इति उपाकर्मोत्सर्गानंतरं त्रिरात्रं पक्षिणीमहोरात्रं वा अध्ययनं न कार्यं तदुक्तं निर्णयसिंधौ मिताक्षरायां उपाकर्मण्युत्सर्गे च त्रिरात्रं पक्षिणीमहोरात्रं वा नध्याय इति एतच्च कर्मद्वयमध्येष्यमाणोऽध्यायैरन्वारब्ध इति सूत्रात् शिष्यैः सह कार्यं तदपि कारिकस्य कर्मण आचार्यो गृह्यमान्यस्याग्नावन्योऽनुहूयादिति निषेधात् कर्मद्वयमिदं केचिल्लौकिकाग्नौ प्रकुर्वीत इति कारिकोक्तेश्च लौकिकाग्नावेव कर्तव्यं तदभावे तु अध्यायोपाकृतिं कुर्यात् नित्योपासनवह्निनेति वचनात् स्मार्त इति गर्वः इत्युत्सर्जनम् अस्यामेव आश्वलायनैः श्रवणाकर्म कार्यं श्रावण्यां पौर्णमास्यां श्रवणाकर्मेति सूत्रात् सामवेदिनामप्यत्रैव श्रवणाकर्म सर्पबलिश्च अथातः श्रवणाकर्म पौर्णमास्यामित्यादिना श्रवणाकर्म विधाय अहरहस्तूष्णीं बलिं हरेत् सायं प्राग्घोमादाग्रहायण्या इति नदीयगृह्यसूत्रात् अत्र पौर्णमासी मामान्तोऽस्तावपि ग्रंथांतरवशेन पूर्णिमासीविशेषे तदुपसंहारसंभवः कात्यायसूत्रेऽपि अथातः श्रवणाकर्म श्रावण्यां पौर्णमास्यां श्रवणाकर्मोक्तानंतरं नेसर्पबलिरप्युक्तः अस्यामेव रात्रौ तैत्तिरीयकैः स्थालीपाकः कार्यः श्रावण्यां पौर्णमास्यां स्थालीपाक इति सूत्रात् अस्मिन्कर्मद्वये प्रदोषव्यापिनी पौर्णमासी ग्राह्या अस्तमिते स्थालीपाकं श्रपयित्वेति अस्तमयकालविधानात् कर्मणो यस्य यः काल इति वचनात् पौर्णमासीशब्दस्य पर्वान्यत्वणवचनत्वात्पर्वसंधिदिवसे रात्रौ श्रवणाकर्मानुष्ठानं वदंति अस्य च श्रवणाकर्मणो मुख्यकाले दैवादकरणे लोपः मुख्यकालेऽपि सकृदेव करणमिति केचित् यथोक्तमेतत्तुल्यन्यायाष्टकाप्रकरणे कर्केणसकृत्करणं चाभ्यां सश्रवणादीति अन्ये त्वीदृशपाकयज्ञानां प्रत्यब्दमावृत्तिं मन्यंते उक्तं हि रेणुकाकारिकायां अथातः श्रवणाकर्म प्रत्यब्दस्याप्ययोच्यते श्रावण्यामेव तत्कार्यमभावाद्गौणकालतः वचनात्सूत्रकारस्य सकृदस्य क्रिया भवेत् एवमेवेतरेषां स्यादावृत्तिर्वास्त्वतेर्बलात् सकृत्करणमिच्छंति पाकयज्ञे च केचन आवृत्तिं केचिदिच्छंति तन्नावृत्तिः सतां मतेति अस्यामेव हयग्रीवप्रजोत्पाकल्पतरौ ब्राह्मे श्रावण्यां श्रवणे जातः पूर्वं हयशिरा हरिः जगाद सामवेदं तु सर्वकल्मषनाशनं सिंधुनंदा वितस्तायां प्रविष्टा तत्र चैवहि अतोऽत्र श्रवणे तत्र स्नानं सर्वार्थसिद्धिदं तत्र संगमे कृत्वा संपूजयेद्धि स्थुशंखचक्रगदाधरं श्रानव्यान्यथमामानि पूज्याविप्रांश्च सर्वदा क्रीडितव्यं च भोक्तव्यं तत्रैव स्वजनैः सह जलक्रीडा तत्कर्तव्या नारीभिर्मत्तलब्धपदेति अत्र सर्वदेवानां पवित्रारोपणमुक्तं निर्णयामृते मत्स्यपुराणे आषाढ्यामथ चाष्टम्यां चतुर्दश्यामुमापतिं पवित्रैरर्चयेद्ब्रह्मा श्रावण्यां चेतरान्सुरानिति अस्यामेव पौर्णमास्यां देवीपुराणोक्तं जयाव्रतं हेमाद्रौ अगस्त्य उवाच ब्रह्मणा यो विधिः शक्रे कथितो विजयावहः जयंति पूर्णिमा नाम श्रावणस्य शुभावहे त्यादि अत्र यवांकुरादियुक्तायां वेद्यां देवीं संस्थाप्य रोचनाचंदनगंधैरुपलिप्य पुष्पादिभिः संपूज्य यवगोधूममुद्गशालिषष्टिकाढकीतिलमाषादीन् बिल्वादीनि फलानि च निवेदयेत् इति जयापूर्णिमाव्रतम् अत्र जलधेनुदानमुक्तं विष्णुः श्रावण्यां श्रवणयुतायां जलधेनुं सालंकारां वस्त्रयुगाच्छादितां दत्वा स्वर्गलोकमवाप्नोति विष्णुधर्मोत्तरे श्रावण्यां शुक्लपक्षे तु द्वादश्यां प्रीतये नृप गोप्रदानेन देवेशो यत्पूर्वं लिखितं तव कृतोपवासः संप्राश्य पंचगव्यं नरेश्वर घृतक्षीराभिषेकं च कृत्वा विष्णोः समाहितः समभ्यर्च्य च गोविंदं पुष्पादिभिररिंदम उदङ्मुखीं प्रजापित्वा तनयाग्रहष्टिं पयस्विनीं सपुत्रां वस्त्रसंवी

गृह्यतां धूपं त्वंज्योतिःसर्वदेवानां तेजसांतेजमुत्तमं आत्मज्योतिःपरंधामदीपोयंप्रतिगृह्यतां दीपं अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यतां नैवेद्यम् आचमनायं करोद्वर्तनं· फलं· तांबूलं· दक्षिणां· वज्रमाणिक्यवैदूर्यमुक्ताविद्रुममंडितं पुष्परागसमायुक्तंभूषणंप्रतिगृह्यतां भूषणानि· नीराजनम् नमोदेव्यैपुष्पांजलिं प्रदक्षिणा· नमस्कारः पुत्रान्देहियशोदेहि सौभाग्यंदेहिमंगले अन्यांश्चसर्वकामांश्चदेहिदेविनमोस्तुते इतिप्रार्थना ततोवैणवपात्रेतुसौभाग्यद्रव्यमाक्षिपेत् अन्नंकंचुकिसंयुक्तंसवस्त्रंफलदक्षिणं वायनंगौरिविप्रायददामिप्रीतयेतव सौभाग्यारोग्यकामानांसर्वसंपत्समृद्धये गौरीगिरीशतुष्ट्यर्थंवायनंतेददाम्यहं इतिमंत्राभ्यांवायनं ताम्रेवावैणवेपात्रेसौभाग्यद्रव्यमाक्षिपेत् लड्डुकंचुकिसंयुक्तंसवस्त्रफलदक्षिणं मात्रेसुवासिनीभ्यश्चदेयंवायनमुत्तमं जननीमातृसंबंधिस्त्रियःषोडशभोजयेत् नीराजनंततःकुर्याद्दीपैःषोडशसंख्यकैः मौक्त्यादीपकाश्चाथस्त्रीभिःसहस्वयंततः अन्नंलवणवर्जंतुमौनेनभोजयेत्स्वयं सुवासिनीश्चापितथावस्त्रालंकारभूषणैः पूजयेत्ततःपश्चात्कुर्याद्गौरीविसर्जनं विप्रायप्रतिमांदद्याद्रत्नवस्त्रादिभूषिताः एवंकृतेविधानेस्मिन्नार्यवैधव्यमाप्नुयात् इतिमंगलागौरीपूजोद्यापनविधिः अथकथा युधिष्ठिरउवाच नंदनंदनगोविंदश्रुतवंतोबहुलाःकथाः श्रुताऽन्यत्पुत्रायुःकरंश्रोतुंममव्रतं श्रीकृष्णउवाच अवैधव्यकरंवक्ष्ये व्रतंचारिनिसूदन शृणुत्वंसावधानःसन्कथांवक्ष्येपुरातनीं कुंडिनंनामनगरंख्यातंतत्रद्विजप्रियः आसीद्ब्राह्मणधर्मपालोनाम्नाबहुधनोपिसः सपत्नीकोप्यपुत्रोसौनास्तीतिव्याकुलोहृदि तस्यगेहेभस्मलिप्तोदेहेरुद्राक्षधारकः जटिलोभिक्षुकोनित्यमागच्छन्प्रियदर्शनः नस्वीकुर्वंस्तदन्नंसइतिदृष्ट्वाबलावदत् स्वामिन्नयंसदायातिभिक्षुकोजटिलोगृहे नस्वीकरोत्यस्मदन्नमितिदृष्ट्वा ममाधिकं दुःखंप्रजायतेनित्यंश्रुत्वाभार्यावचोब्रवीत् धर्मपालउवाच प्रियेकदाचिद्गुप्तात्वंससुवर्णागृहेभव यदाभिक्षार्थमायातिभिक्षोर्वस्त्रांतरेत्वया तदातस्यप्रदेयानिसुवर्णानिप्रियेनघे अनंतरंतस्यभार्याऽचीकरत्स्वामिनोदितम् जटिलेनतुसाशप्तापत्यंतेनभविष्यति श्रुत्वाभिक्षोरिदंवाक्यंदुःखितातंमुवाचह स्वामिन्शप्तास्म्यहंपापाच्छापादुद्धरसंप्रति इत्युक्त्वातस्यचरणौववंदेदीनभाषिणी जटिलउवाच भर्तुःसमीपेवक्तव्यंत्वयापुत्रिममाज्ञया नीलवस्त्रःसमारुह्यनीलाश्वंगच्छकाननं खननंतत्रकर्तव्यंयत्राश्वस्खलिष्यति रम्यंपक्षिभिरायुक्तंमृगसंघद्रुमाकुलं सुवर्णरचितंरत्नमाणिक्यादिविभूषितं नानापुष्पैःसमायुक्तंदृश्यंदेवालयंततः वर्ततेतत्रभवतीभवानीभक्तवत्सला आराधयत्वंमनसायथाविधुद्धरिष्यति त्वांभवानीतिवचनंश्रुत्वाभिक्षोःसुखप्रदं ववंदेतस्यचरणौपुनःपुनरुवाचच तदैवकालेजटिलस्त्वंतर्भूतोबभूवसः सावदत्पतिमत्रेद्विजश्रेष्ठभिक्षुकमादरात् यथोक्तमवदद्भर्तातच्छ्रुत्वावाक्यमग्रहीत् नीलवस्त्रःसमारुह्यनीलाश्वंप्रस्थितोवनं गच्छन्नानाविधान्वृक्षान्पथिपश्यन्भयाकुलः मृगान्सिंहान्दंदशूकान्पथिपश्यन्भयाकुलः ददर्शसौतडागंचबाहुल्येनविराजितं रक्तनीलोत्पलैश्चक्रवाकहंसैश्चराजितं स्नानंचकारतत्रासौतर्पणाद्यपिभूरिशः पुनरश्वंसमारुह्यजगामगहनंवने स्खलितंवाजिनंपश्यदश्वाङ्घ्रीर्यपदवच चखानपृथिवींतत्रयावद्देवालयंगतः ददर्शचमहास्थलंदेवालयमसौततः रत्नैर्मुक्ताफलैश्चैवमाणिक्यैश्चापिसर्वतः पूजयामासजटिलवाक्यंस्मृत्वातिविस्मितः सुवर्णयुक्तवस्त्राणिचंदनान्यक्षतान्छुभान् चंपकादीनिपुष्पाणिधूपदीपविशेषतः नानापक्वान्नसंयुक्तंरसैःषड्भिःसमन्वितं नानाशाकैःसमाक्रांतंसद्गंधघृतशर्करं नैवेद्यंकरमुद्यार्यचंदनंमलयाद्रिजं संपाद्यतदृष्टहृदयः फलतांबूलदक्षिणाः जप्त्वापमंत्रानगुणैसौसगुणध्यानपूर्वकं देवीभक्तमहादेत्यतोषयामाससादरं प्रसन्नावददत्रैयंप्रजासंपादिनाकथं येनसंपादितानस्मैददामिवरमद्भुतम् इतिश्रु

त्वा धर्मपालो देव्यग्रे प्रांजलिः स्थितः भगवत्युवाच धर्मपाल त्वया सम्यक् पूजा संपादिता न च वरं याचय मद्भ
क्त ददामि बहुलं धनं धर्मपाल उवाच बहुलं धनं संपन्नं वर्तते त्वत्प्रसादतः अपत्यं प्राप्तुमिच्छामि पितृणां
तारकं शुभं आयाति भिक्षुको गेहे गृह्णाति न मद्दत्तकं तेन मे बहुलं दुःखं सभार्यस्योपजायते इति दीनवचः
श्रुत्वा देवी वचनमब्रवीत् देव्युवाच धर्मपाल कतेऽदृष्टे पत्यं नास्ति सुखप्रदं तथापि किं याचयसि कन्यां
विगतभर्तृकाम् पुत्रमल्पायुषं वाथाप्यंधं दीर्घायुषं सुतं धर्मपाल उवाच पुत्रमल्पायुषं देहि तावताह
त्यक्तत्यतां प्राप्नोमि चोद्धरिष्यामि पितरो मम चोरगाः देव्युवाच मत्पार्श्ववर्तमानस्य नाभादारुत्थकुंडिनः
तत्पार्श्ववर्तिचूतस्य गृहीत्वा फलमद्भुतं पत्न्यै देयं ततः पुत्रो भविष्यति न संशयः इति देवीवचः श्रुत्वा
गत्वा तत्पार्श्व एव च नाभिं गजमुखस्याथारुह्य जग्राह मोहतः फलान्युत्तार्य च ततः फलमेकं ददर्श सः
एवं पुनः पुनः कुर्वन् फलमेकं ददर्श सः तदा गणपतिश्चाथ धर्मपालाय शप्तवान् षोडशे वत्सरे प्रा
मेऽहिः पुत्रं दशिष्यति धर्मपालो फलं सम्यक् वस्त्रे बद्ध्वागमद्गृहं फलं पत्न्यै ददौ सापि भक्षयित्वा पति
व्रता गर्भं साधारयामास पत्न्या सह सुसंगता संपूर्णे नवमे मासे सा सूत सुतमुत्तमं जातकर्म चकार
स पिता संतुष्टमानसः षष्ठीपूजां चकारास्य षष्ठे तु दिवसे ततः द्वादशेऽह्नि संप्राप्ते शिवनाम्ना तु ह्वा
तं षष्ठे मासि चकारासावन्नप्राशनमद्भुतं तृतीये वत्सरे चूडामष्टमेऽब्दे त्वनुत्तमं कृत्वोपनयनं पार्थिवि
योऽभूत्तुष्टमानसः दशमे वत्सरे प्राप्ते ब्रवीद्भार्या पतिव्रता भार्योवाच बालकस्य विवाहोऽपि कर्तव्यः
सुमुहूर्तके धर्मपाल उवाच मया संकल्पितं काश्यां गमनं बालकस्य तत् कृत्वा समायातु ततो विवा
होऽस्य भविष्यति पुत्रोऽसौ प्रेषितस्तेन प्रपालकेन समन्वितः वाराणस्यां प्रस्थितोऽसौ गृहीत्वा बहुलं धनं
कुर्वतौ पथि सद्धर्मं प्रतिष्ठापुरमायतुः क्रीडंतः कन्यका दृष्टास्तत्र देशे मनोरमे तासां समाजे गौरांगी सु
शीला नाम कन्यका तया सह सखी काचिच्चकार कलहं भृशं गालनं च ददौ तस्यै रंडे भाग्ये मुहुर्मुहुः
सुशीलोवाच सखि त्वया गालनं मे व्यर्थं दत्तं शुभानने जनन्या मे मानवत्याश्चास्ति गौरीव्रतं शुभं तस्य
प्रसादात्सकलाः संबंधिन्यः प्रियास्त्रियः आजन्माविधवा जाताः किं पुनः कन्यका ध्रुवं वदेपतस्य प्रभावं
किं व्रतराजस्य भामिनि पूजने धूपदीपो यं यत्र तत्र सुखं भवेत् इति श्रुत्वा ततो वाक्यं विस्मयोत्फुल्ललो
चनः मातुलश्चिंतयामास बालकस्य प्रियं ततः शतंजीवो भवेदेष एतद्व्रतात्तरा यदि पतंत्यमुष्याधि
रसि इति भाव्यं पुनः पुनः सुशीलामेव पश्यन्स विस्मयोत्फुल्ललोचनः सुशीला प्रस्थिता गेहे तदनुप्र
स्थितावुभौ स्वगृहं प्राप गौरांगी निकटे तद्गृहस्य तौ तौ तडागे रम्यदेशे वासं चक्रतुरादरात् विवाहका
ले संप्राप्ते सुशीलाजनको हरिः विवाहोद्योगवान्जातो विचचार हरं वरं असमर्थं हरं दृष्ट्वा तन्मातापित
रावुभौ ययाचतुः शिवं बद्धांजली विनययुक्तकौ वरपितरावूचतुः उपस्थितो विवाहो नौ पुत्रस्य शुभया
हरेः सुशीलया कन्यया यमसमर्थश्च दृश्यते अतो देयो शिवः श्रीमान् लग्नकाले त्वया विभो लग्नं भविष्य
ति ततो देयोऽस्माभिः शिवस्तव मातुल उवाच अवश्यं लग्नकाले सो शिवो ग्राह्यः प्रियंवदः ततो मुहूर्ते सं
यामे विवाहमकरोच्छिवः तत्रैव शयनं चक्रे स सुशीलः प्रियंवदः स्वप्ने सा मे गत्वा गौरी मातृरूपेण भा
स्वता सुशीलामवदत्सा धीहितं वचनमेव च गौर्युवाच सुशीले तव गौरांगि भर्तारं दंशार्थमागतः महा
न्भुजंग उत्तिष्ठ दुग्धं स्थापय तत्पुरः घटं च स्थापयास्तु त्वं तन्मध्ये स गमिष्यति स्ववस्त्रं गात्रिकास्य बं
धनीयस्त्वया घटः प्रातस्तस्याय देहि त्वं मात्रे वायनकं शुभं इति गौरीवचः श्रुत्वा सुशीला द्वारमास्थिता
ददर्शाग्रे निःश्वसंतं कृष्णसर्पं महाभयं ततश्चकार गौर्युक्तं प्रयत्नान्निद्रिते ततः उवाच वरस्थाम न्वकेल्ल
ग्रामहती मम भक्षणायाशु देहि त्वं लड्डुकादिकमुत्तमं श्रुत्वेति वाक्यं पात्रे सा ददौ लड्डुकमुत्तमं भक्ष
यित्वा शिवं हैमेन स्थिन्या चांगुलीयकं दत्वा तस्यापयामास स्थले गुप्ते शुभानना सखि न धाय्यं च केष्ट

थिव्यांसर्वकोविदः ततःप्रभातसमयेशिवआगाद्गृहंस्वकं स्नानंकृत्वासुशीलासामात्रेवायनकंददौ मातार
दर्शनंतस्यैमुक्ताहारमनुत्तमं ददौप्रियायैकन्यायैसहर्षातुष्टमानसा क्रीडाकालेसंप्राप्तेहरआगा
तमंडपे आदेशायत्सुशीलांतांक्रीडार्थंजननीततः सुशीलोवाच नायंवरोमेजननियेनपाणिग्रहःकृतः
अनेनसहमनसाक्रीडनेच्छानयानमे इतिश्रुत्वासमाक्रांतौचिंतयापितरौततः अन्नदानस्ययापूर्वंचवि
चेरतुरितिद्रुतं तदारभ्यचक्रतुस्तौपुराणोक्तविधानतः सुशीलापादयोश्चक्रे क्षालनंमंडिकान्विता ज
लधारांददौमाताचंदनंपुत्रकोहरेः हरिर्ददौचतांबूलंबुभुजुस्तक्रमानवाः इतिरीत्यान्नदानंतत्प्रवृत्तंभिक्ष
योरिदं तावुभौप्रस्थितौकाशींप्राप्तौकाशींसुखप्रदां निर्मलांभक्तिगंगायाःस्नानंचक्रतुरादरात् स
गृहात्प्रस्थितौतौकुर्वंतौधर्ममुत्तमम् पीतांबराणिददतुर्भिक्षुकाणांगृहेगृहे आशिषश्चददुस्तस्मै
चिरंजीवोभवेदिति विश्वेश्वरंसमायातौनत्वास्तुत्वापुनःपुनः स्वयंगृहंप्रस्थितौतौशिवोमार्गेद्रुतंवर
न् शिवउवाच कार्येमेकिंचिदस्त्यत्रमातुलमतिभातिहि ततःप्राणोत्क्रमेतस्ययमदूताउपस्थिताः
मंगलागौरिकाचापितेषांयुद्धमभून्महत् जित्वातान्मंगलाप्राणान्ददौतस्मैशिवायच शिवो
कस्मादुत्थितोसौमातुलंप्रत्युवाचह स्वप्नेयुद्धंमयादृष्टंमंगलायमभृत्ययोः जितास्तेमंगलागौ
र्यातनोहंशयनच्युतः मातुलउवाच यज्ज्ञातंशिवतज्ज्ञातंनस्मर्तव्यंत्वयापुनः गच्छावआवांनगरे
पितरौदृष्टुमुत्सुकौ प्रस्थितौतौततस्तस्मात्प्रतिष्ठानपुरमापतुः रम्येतडागतटेतौपाकारंभंविचक्रतुः
दृष्टौतौहरिदासीभिर्येयौदार्थयरौशुभौ दास्यऊचुः अन्नदानंहरेर्गेहेप्रवृत्तंतत्रगम्यतां उभावूचतुः
भोदास्योयात्रिकावावांगच्छावोनक्वचिद्गृहे इतिश्रुत्वातयोर्वाक्यंदास्योजग्मुःस्वकंगृहं स्वस्वामि
निकटेवाक्यमवदन्सादरंतदा सर्वदासीवचःश्रुत्वातदर्थंप्रभुरादरात् प्रेषयामासहस्त्यादिरत्नव
स्त्राणिभूरिशः तंदृष्ट्वाविस्मितौतावागच्छावश्चहरेर्गृहं हरिर्मातुलमभ्यर्च्यशिवंपूजितुमागतः
तालयंतीचसाकन्याचरणौतस्यसत्रपा अभूद्धरोयमितिजननीप्रत्युवाचह हरिःपप्रच्छसाश्चर्यं
शिवंमंगलदर्शनं हरिरुवाच किंचिच्चिह्नंनवास्त्यत्रब्रूहिमेवरदर्शन शिवउवाच ममेदंचिह्नमस्तीहइ
त्युक्त्वागृहमागतः तत्रानीयतत्पात्रंदर्शयामाससादरं तत्पात्रंचहरिर्दृष्ट्वाकन्यादानंचकारसः ददौरत्ना
निवस्त्राणिसुवर्णानिबहून्यपि तामादायप्रस्थितौतौददावोबहुलंधनं श्रावणेमासिसंप्राप्तेव्रतंभौमेच
कारसा भुक्त्वासर्वेप्रस्थितास्तेयोजनंजग्मुरुत्तमाः सुशीलोवाच गौरीविसर्जनंचापिदीपमानंकरिष्यते
ततोगंतव्यमस्माभिःपितरौद्रष्टुमादरात् इत्युक्त्वाश्यागतास्तत्रगौर्याआवाहनंकृतं दृष्टस्तत्रसौवर्णदेव
लयमनुत्तमं गौरीविसर्जनंदीपमानंसाचव्यचीकरत् ततःसर्वेप्रस्थितास्तेपितरौद्रष्टुमुत्सुकाः कुंडिनास
न्नदेशेतान्दृष्ट्वाविस्मायितोजनाः अब्रुवंस्तेधर्मपालंसोत्कंठंप्रियदर्शनाः जनाऊचुः धर्मपालाद्यतेपुत्र
सभार्यःसपालकस्तथा समायातोवयंदृष्ट्वाप्रधुनैवसमागताः यावदुक्तंतावदत्रतावत्सोपिसमागतः
नमस्कारांश्चकारासोपितृभ्यांपितृवल्लभः मातुलोपिनतिंचक्रेभगिनीधर्मपालयोः सुशीलाश्वश्र्वायाभि
श्वशुरंनत्वास्थितातदा श्वश्रूरुवाच सुशीलेतद्व्रतंब्रूहियद्व्रतस्यप्रभावतः आयुर्वृद्धिःशिशोर्मेपिजाता
कमललोचने सुशीलोवाच नजानेहंव्रतंश्वश्रूजानेमानवतीह्यसौ श्वशुरंधर्मपालंचश्वश्रूंचमवतीतथा
मंगलांदेवतांजानेवरंतपुत्रयोःसतं इत्युक्त्वाचसुशीलासाबुभुजेसांतदार्पिता कृष्णउ० तस्माद्व्रतमि
दंधर्मस्त्रीभिःकार्यंसदैवतु युधिष्ठिरउ० फलमस्यश्रुतंकृष्णविधानंब्रूहिकेशव कृष्णउ० श्रावणेमासिभौ
मेषुचतुर्षुव्रतमाचरेत् प्रातःस्नात्वायथास्नातासंकल्प्यव्रतमुत्तमं उपचारैःषोडशभिःपूजयेन्मंगलांतथा
नीराजनंततःकुर्याद्दीपैःषोडशसंख्यया पात्रेसुवासिनीभ्यश्चदेयंवायनमुत्तमं भोक्तव्यादीपकाश्चापिश्र
वणलवणवर्जितं विसर्जनंमंगलायादीपमानंततःक्रमात् पंचसंवत्सरेष्वेवंकर्तव्यंपतिमिच्छुभिः इतिश्री

भविष्योत्तरपुराणेमंगलागौरीव्रतोद्यापनंसंपूर्णम्

॥ ॐ ॥

श्रीगणेशाय नमः ।

अथ भाद्रपदमासकृत्यनिर्णयः ॥ तत्रादौ सिंहसंक्रमणे
आद्याः षोडश नाड्यः पुण्यकालः नारदीये याम्यायने स्थिरे त्वाद्याः पराः सौम्ये द्विमूर्तिभे मध्या विषुवति
सोक्ताः पुण्यनाड्यस्तु षोडशेति तथा चात्र सस्वर्णछत्रदानं हेमाद्रौ दानखंडे विश्वामित्रः मेषसंक्रमणे भानो
र्मेषदानं महाफलमित्युपक्रम्य सस्वर्णछत्रदानं सिंहेपि विहितं तथा अत्र सिंहसंक्रांतौ कलियुग
स्नानतः ब्रह्मपुराणे सूर्यस्य सिंहसंक्रांत्यामतः कलियुगस्य तु अत्र श्राद्धादिकमक्षयफलदमिति युगाद्युयु
गांतेषु श्राद्धमक्षयमुच्यते तच्च पिंडादिरहितं संकल्पमात्रमिति युगादिकृत्ये निर्णीतं अथात्र सिंहसंक्रां
तौ तुलसीव्रतं विंशतिदिनात्मकं प्रारभ्यं तथा च सिंहसंक्रांतिदिनमारभ्य दशादिनावधि तुलसीमू-
ले षन्यहं सूत्रक्षेपः पुनर्दशमदिने तदादाय दशगुणं दशग्रंथियुतं च कृत्वा पुमान्दक्षिणे नारी वाम
भुजे धृत्वा तच्च दशादिनावधि तुलसीमंत्रेण संपूज्य पर्वंते मोचयेत् कथाश्रवणं दानविसर्जनादि
कं कुर्यात् अत्र पूजामंत्रः तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे नमस्ते नारदनुते नारायणम
नःप्रिये अथ तुलसीकवचं स्कंदपुराणे तुलसीकवचस्यास्य ऋषिर्विष्णुरुदीरितः छंदोनुष्टुप्
समाख्यातं तुलसी देवता तथा धर्मार्थकाममोक्षार्थे विनियोगः प्रकीर्तितः तुलसी मे शिरः पातु सुखं च
सुमुखी मम जिह्वां मे पातु शुभदा कंठं विद्यामयी मम स्कंधौ कल्हारिणी पातु भुजौ मे पापहारिणी करौ
पद्मकरा पातु हृदयं विष्णुवल्लभा पुण्यदा मध्यमं पातु नाभिं सौभाग्यदायिनी कटिं कुंडलिनी पा
तु ऊरू नारदपूजिता ज्वालिनी जानुनी पातु जंघे सकलवंदिता नारायणप्रिया पादौ सर्वांगं सर्वरक्ष-
का संकटे विषमे दुर्गे भये वादे महाहवे नित्यं हि संध्ययोः पातु तुलसी सर्वतः सदा इतीदं परमं गु
ह्यं तुलस्याः कवचामृतं तुलसीकानने तिष्ठन्नासीनो वा जपेदिदं सर्वान्कामानवाप्नोति विष्णुसा
युज्यमाप्नुयात् इति स्कंदपुराणे तुलसीकवचं अथ तुलसीव्रतकथा भविष्योत्तरे श्रीकृष्ण उवाच
एकदा देवदेवेशो लक्ष्मीं प्राणसमप्रियां संतुष्टः परया भक्त्या रहस्यं विष्णुरब्रवीत् श्रीविष्णुरुवाच
लक्ष्मि लक्ष्मि प्रिये देवि वरं वरय सुव्रते प्रसन्नस्त्वां ददाम्यद्य यत्ते मनसि विद्यते लक्ष्मीरुवाच यदि तु
ष्टोसि देवेश यदि ते वल्लभास्म्यहं ऐहिकामुष्मिकं नॄणां सर्वसौख्यप्रदायकं तद्व्रतं ब्रूहि निश्चित्य व्र-
तानां चोत्तमोत्तमं केन चादौ पुराचीर्णं वैकुंठ ब्रूहि विस्तरात् श्रीविष्णुरुवाच शृणु लक्ष्मि महाभागे
कुरु त्वं तुलसीव्रतं येन व्रतप्रभावेण सर्वसिद्धिर्भवेन्नृणां अत्र ते कथयिष्यामि कथां पापप्रणाशिनीं
भुक्तिमुक्तिप्रदां पुण्यां सावधाना वधारय पुरा कृतयुगस्यादौ दक्षिणस्यां महापुरी माहिष्मतीति विख्या
ता सर्वसंपत्समन्विता तत्रासीद्भूभृतां श्रेष्ठो धर्मदत्ताभिधो बली सौंदर्ये कामतुल्योसौ वाग्वादे
व गुरोः समः दाने बलिसमो लक्ष्मि युद्धे पांडुसुतो यथा निर्दंभो विष्णुभक्तश्च सर्वशास्त्रविशारदः त
स्य पत्नी महादेवी नाम्ना ख्याता जगत्त्रये गुणैर्भर्तृसमा देवी पतिभक्तिपरायणा धर्मदत्तस्य सा राज्ञी
प्राणेभ्योपि गरीयसी कदाचित्सुषुवे कन्यां सर्वलक्षणसंयुतां विष्णुदासीति विख्याता विष्णुपूजनतत्प
रा तत्र कश्चिन्महायोगी विष्णुभक्तिपरायणः रागद्वेषविहीनश्च धर्मात्मा संयतेंद्रियः सदा तस्य गृ
हं याति सेवार्थं नृपवल्लभा महादेवी प्रसंगेन विष्णुदास्यपि साध्वी कदाचित्तु संप्राप्ता राज्ञी यु-
क्तिमवाप सा सा कन्यापि शुभाचारा तथैवार्चनतत्परा प्रत्यहं तद्गृहं गत्वा संमार्जनपरायणा द्वेषे-
ण चापरा राज्यस्त्रस्यां दोषमरोपयन् एतत्प्रसिद्धं लोके तु विमाता नेक्षतुच्छति सपत्नीसंततिं दृष्टा

श्रावणे बडवा दिवा सिंहे गावः प्रसूयंते स्वामिनो मृत्युदायकाः इति अत्र तंत्रोक्ताद्भुतशांतिः कार्या
भाद्रकृष्णप्रतिपदमारभ्य भाद्रमासोक्तदानव्रतनियमादीनामारंभः कार्यः मासि भाद्रपदे दद्यात्पाय
सं मधुसर्पिषी हृषीकेशप्रीणनार्थं लवणं सगुडोदनमिति अत्र फाणितदानमपि विष्णुधर्मोत्तरे प्रो
ष्ठपादं तथा मासि प्रदाता फाणितस्य च फाणितं खंडमंडकीतिपायसविशेषाख्यं महाभारते प्रोष्ठ-
पदां तु यो मासमेकभक्तेन संक्षिपेत् गवाढ्यः स्फीतकमलमैश्वर्यं प्रतिपद्यते भाद्रकृष्णद्वितीया
यामशून्यशयनव्रतं तथा च चतुर्ष्वसितपक्षेषु मासेषु श्रावणादिषु अशून्याख्यव्रतं कुर्याज्ज-
ययातु फलाधिकमिति अत्र जयया तृतीयाया विद्धा द्वितीया कार्येत्यर्थः भाद्रकृष्णतृतीयायां विशा-
लाक्षीयात्रोक्ता काशीखंडे भाद्रकृष्णतृतीयायामुपवासपरैर्नरैः कृत्वा जागरणं रात्रौ विशालाक्षीसमीपत इ
ति अत्र तृतीया रात्रिव्यापिनी ग्राह्या रात्रौ जागरणविधानादिति भाद्रकृष्णचतुर्थ्यां संकष्टचतुर्थीव्रतं
स्कांदे श्रावणे बहुले पक्षे चतुर्थ्यां तु विधूदये गणेशं पूजयित्वा तु चंद्रायार्घ्यं प्रदीयते श्रावणश्चा
मांतो ग्राह्यः व्रते शुक्लादिमेव चेति वचनात् इयं चंद्रोदयव्यापिनी ग्राह्येति प्रागभिधानात् चंद्रोद-
यव्रतत्वाच्च चंद्रोदयव्रते चैव तिथिस्तात्कालिकी स्मृतेति दिनद्वये चंद्रोदयव्यापित्वे पूर्वा चतुर्थी
सतृतीया चेन्महापुण्यफलप्रदा कर्तव्या व्रतिभिर्वत्स गणनाथस्तुतोषिणी ब्रह्मवैवर्तवचनात्
गणेशगौरीबहुला अतिरिक्ताः प्रकीर्तिताः चतुर्थ्यः पंचमीविद्धा देवतांतरयोगत इति वचनाच्च
नच तृतीयाविद्धाविधायकानि वचनानि दिवा त्रिमुहूर्तवेधे सत्येव प्रवर्तंते तेन रात्रियोगमात्रत
इति वाच्यं रात्रिसाध्यकर्मसु रात्रावपि वेधस्य जन्माष्टमीप्रकरणे माधवादिभिः प्रदर्शितत्वात्
अत एव महालक्ष्मीव्रतसमापने दिनद्वये अष्टम्याश्चंद्रोदयकालव्यापित्वे कृष्णपक्षेऽष्टमी चैव कृ-
ष्णपक्षे चतुर्दशी पूर्वविद्धैव कर्तव्या परविद्धा न कुत्रचित् इति वचनात् पूर्वविद्धा ग्राह्येत्युक्तं
हेमाद्रौ मदनरत्ने च यानि चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते मध्याह्नव्यापिनी ग्राह्या परत
श्चेत्परेऽहनीत्यादिवचनानि तु सिद्धिविनायकादिव्रतविषयाणि तेषु मध्याह्नस्य कर्मकालविष-
यत्वात् प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजनं सदेति वचनात् अत एव माधवेन मध्याह्नस्य कर्म-
कालत्वमंगीकृतं च विनायकव्रते मध्याह्नव्यापिनी ग्राह्येत्युक्तं तस्मादुभयत्र चंद्रोदयकाले सर्वथा
पूर्वैवेति न्याय्यः पंथा इत्यलं बहुना अथ व्रतविधिः ॐ मद्येत्यादि विद्याधनपुत्रारोग्यादिकामः सं-
कष्टचतुर्थीव्रतं करिष्ये इति संकल्पः स्त्री तु भर्त्रादिप्रीतिद्वारा सर्वकामावाप्त्यै संकष्टचतुर्थीव्रतं क-
रिष्ये सौवर्णरौप्यताम्रमृण्मयान्यतमां गणपतिमूर्तिं कृत्वा जलपूर्णं वस्त्रयुतं कुंभं तस्योपरि स्था-
पयित्वा षोडशोपचारैः पूजयेत् ध्यानं लंबोदरं चतुर्बाहुं त्रिनेत्रं रक्तवर्णकं नानारत्नसुवेषाढ्यं प्रस-
न्नास्यं विचिंतयेत् ध्यायेद्गजाननं देवं तप्तकांचनसन्निभं चतुर्भुजं महाकायं सूर्यकोटिसमप्रभं अ-
थव्रतविधिः प्रातःकृत्यादि कृत्वा सूर्यादिदेवताभ्यो व्रतं निवेद्याचम्योदङ्मुखो वारिपूर्णं ताम्रपात्रं
गृहीत्वा मासाद्युल्लिख्य मम सर्वकर्मनिर्विघ्नसिद्धिपुत्रपौत्रसौभाग्यादिसिद्ध्यर्थं संकष्टहरणगणप-
तिप्रीत्यर्थं संकष्टहरणचतुर्थीव्रतमहं करिष्ये इति संकल्प्य मौनेन दिनमतिवाह्य संध्यासमये तैला-
भ्यंगपूर्वकं स्नानं कृत्वा सायंसंध्यादि कृत्वा भूतशुद्धिप्राणप्रतिष्ठां केवलमातृकान्यासं च कृत्वा स-
र्वसंकष्टहरणार्थं चतुर्थ्यां गणपतिपूजनमहं करिष्ये इति संकल्प्यार्घ्यादिस्थापनं कृत्वा पीठमंडू-
कादिपरतत्त्वांतं संपूज्य तीव्रायै नमः ज्वालिन्यै नमः नंदायै नमः भोगदायै नमः कामरूपिण्यै नमः
उग्रायै नमः तेजोवत्यै नमः सत्यायै नमः दिक्षु विदिक्षु च मध्ये विघ्नविनाशिन्यै नमः सर्वशक्ति-
कमलासनाय नमः इति पूजयेत् ततः पीठमध्ये मूर्तौ फलके वा स्वेष्टदेवमागमोक्तप्रकारेण पूज-

येत् अथ ध्यानं॥ कोटिसूर्यप्रभं देवं गजवक्त्रं चतुर्भुजं पाशांकुशधरं देवं ध्यायेत्सिद्धिविनायकं इति
ध्यात्वा आत्मसंस्थमजं शुद्धं त्वामहं परमेश्वरं अरण्यामिव हव्याशं मूर्तावावाहयाम्यहमितिपठित
त्वहशीर्षेत्यावाहनं आगच्छ देवदेवेश गणनाथ नमोस्तुते विनायक नमस्तुभ्यं गौरीमलसमुद्भव॥
आवाहनं १ अनेकरत्नसंयुक्तं मुक्ताफलविभूषितं स्वर्णसिंहासनं देव प्रीत्यर्थं प्रतिगृह्यतां पुरुषएवे
ति विघ्नविनाशिने नम॥ इत्यासनं समर्पयामि २ तवेयं महिमा मूर्तिस्तस्यां त्वां सर्वगं विभो
भक्तिस्नेहसमाकृष्टं दीपवत्स्थापयाम्यहमिति स्थापनं ३ अनन्या तव देवेश मूर्तिः शक्तिर्महाप्र
भो सान्निध्यं कुरु तस्यां त्वं भक्तानुग्रहतत्परेति सन्निधापनं ४ आज्ञया तव देवेश कृपाम्भोधे गुणाम्बुधे
आत्मानं दैकतत्त्वं त्वां निरुणद्मि सदाऽगुणेति संनिरोधनं ५ अज्ञानाद्दैमनस्याद्वा वैकल्यात्साधनस्य
च यदपूर्णं भवेत्कृत्यं तथाप्यभिमुखो भवेति सन्मुखीकरणं ६ अभक्तवाङ्मनश्चक्षुःश्रोत्रदू
रायतद्युते स्वतेजःपंजरेणाशु वेष्टितो भव सर्वत इत्यवगुंठनं ५ ततो मूलमंत्रेण सकलीकर
णं ६ अमृतीकरणं ७ परमीकरणं ८ ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदय रमहाक्षो
भं कुरु कुरु क्लीं सौं महामोहं कुरु सौः ह्सौः अं आं इत्यादिशोध्य प्राणप्रतिष्ठां कुर्यात् ॐ आं ह्रीं क्रों मि
तुचार्य्यदेवस्य जीव इह स्थितः ॐ आं ह्रीं क्रों मितुचार्य्यदेवस्य सर्वेंद्रियाणि इह तिष्ठंतु ॐ आं ह्रीं क्रों मि-
तुचार्य्यदेवस्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठंतु स्वाहा इति प्राणप्रतिष्ठा ततः
पाद्यं गौरीपुत्र नमस्तेस्तु गणनामीश्वर प्रभो भक्त्या पाद्यं मया दत्तं सर्वसिद्धिं प्रयच्छ मे एतावानस्येति
लंबोदराय नमः पाद्यं समर्पयामि नमः व्रतमुद्दिश्य देवेश गंधपुष्पाक्षतैर्युतं गृहाणार्घ्यं मया दत्तं
भक्तिस्नेहेन पूजित त्रिपादूर्ध्व इत्यर्घ्यं चंद्रधारिणे नमः आचम्यतां गणाधीश सर्वसिद्धिप्रदायक अ
नाथनाथ सर्वज्ञ गीर्वाणवरपूजित तस्माद्विराडिति विश्वप्रियाय नमः आचमनीयम्· गव्यं द-
धिसमानीतं मधुना च समन्वितं गृह्योक्तविधिना दत्तं मधुपर्कं गृहाण भो गणपतये नमः मधु-
पर्कम्· मधुपर्कानंतरं पुनराचमनीयम्· पंचामृतं मयानीतं पयो दधि घृतं मधु सितया च स-
मायुक्तं स्नानार्थं प्रतिगृह्यतां पंचामृतस्नानम्· गंगादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतं गृहाण
विघ्नराजेंद्र मया दत्तं हि भक्तितः यत्पुरुषेणेति सर्वास्त्रधारिणे नमः शुद्धोदकस्नानं साङ्गाचमनं र-
क्तवस्त्रं महादिव्यं दिव्यगंधाधिवासितं मया दत्तं गृहाणेश लंबोदर हरात्मज तंयज्ञमिति कुमार
गुरवे नमः आच्छादनम्· राजतं ब्रह्मसूत्रं च कांचनं चोत्तरीयकं गृहाणेश्वर सर्वज्ञ भक्तानां वरदा
यक तस्माद्यज्ञात्सर्वहुतः संभृतमिति शिवात्मजाय नमः इत्युपवीतम्· गंधं गृहाण देवेश दि
व्यं चंदनमुत्तमं कर्पूरागुरुसंयुक्तं गणाध्यक्ष सुरार्चित तस्माद्यज्ञात्सर्वहुतः ऋचस्साम· रुद्रप्रिया-
यनमः गंधम्· अक्षताश्च सुरश्रेष्ठ कुंकुमाक्ताः सुशोभनाः गृहाण विघ्नराजेंद्र दयां कृत्वा ममोपरि वि
घ्नहर्त्रे नमः अक्षताः· सिंदूरं गृह्यतां देव बालार्कसदृशद्युति सर्वसंकष्टनाशार्थं दत्तं परशुधा-
रिणे परशुधारिणे नमः सिंदूरम्· विनायक नमस्तुभ्यं सुरासुरसुपूजित सुगंधीनि च पुष्पाणि गृ
हाण परमेश्वर तस्मादश्वा इति गुणशालिने पुष्पाणि· दशांगं गुग्गुलुं धूपं सुगंधं सुमनोहरं उमासु
त नमस्तुभ्यं गृहाण वरदो भव यत्पुरुषमिति भवानीप्रीतिकर्त्रे नमः इति धूपम्· गृहाण मंगलं दी
पं घृतवर्तिसमन्वितं भासनं सर्ववस्तूनां तेजोराशे जगत्पते ब्राह्मणोस्येति गजकर्णाय नमः दी
पम्· लड्डुकानि च पक्वान्नं नानाभक्ष्यं च पायसं गृहाण विघ्नराजेंद्र फलैर्नानाविधैर्युतं चंद्रमाम
नस इति नैवेद्यम्· अघनाशिने नमः पंच प्राणाहुतीर्मुख्याः कारयेत् नमस्ते देवदेवेश सर्वतृप्ति
करं परं अन्नं निवेदितं भक्त्या प्रकृतिस्थं सुशीतलं परमानंदसंपूर्णं गृहाण जलमुत्तमं मध्ये पानी

यं उत्तरापोशानं दत्वा करोद्वर्तनीयादि च दत्वा तांबूलं दद्यात् पूगकर्पूरसंयुक्तं नागवल्लीदलैर्युतं
तांबूलं गृह्यतां देव सर्वमंगलदायक सिद्धिदाय नमः तांबूलं सम- नारिकेलं सनारंगं कदलीमातुलुं
गकं इक्षुदंडं गृहाणेश सर्वप्रिय नमोस्तु ते संकष्टनाशिने नमः सफलमिक्षुदंडं स- हिरण्यगर्भ
गर्भस्थं हेमबीजं विभावसोः अनंतपुण्यफलदमतः शांतिं प्रयच्छ मे सर्वभोगदायिने दक्षिणां स-
ततः पुष्पांजलिदानार्थं एकविंशतिदूर्वांकुरानादाय वक्ष्यमाणनामभिः पूजां कुर्यात् गणाधिपाय
नमः उमापुत्राय- अघनाशनाय- एकदंताय- इभवक्त्राय- मूषकवाहनाय- विनायकाय-
ईशपुत्राय- सर्वसिद्धिप्रदायकाय- कुमारगुरवे नमः एकां दूर्वां गृहीत्वा गणाधिप नमस्तेस्तु
उमापुत्राघनाशन एकदंतेभवक्त्रेति नमो मूषकवाहन विनायकेशपुत्रेति सर्वसिद्धिप्रदायक
कुमारगुरवे तुभ्यं पूजयामि प्रयत्नतः एभिर्नामभिः संपूज्य प्रत्येकनामभिर्दूर्वायुग्मं द्विराहृत्या सम-
र्पयेत् ततः पुष्पांजलिं दत्वा नीराजनं कुर्यात् कर्पूरवर्तिकायुक्तः सर्ववस्तुप्रकाशकः नीराजनार्थ
मानीतो दीपोयं प्रतिगृह्यतां सर्वविघ्नविनाशिने नमः नीराजनं समर्पयामि पुनः पुष्पांजलिं दत्वा
संकष्टहरणं कृत्वा हृदस्थान्कामान्प्रपूरय विघ्नान्नाशय मे सर्वान्नाशायोपस्थितान्प्रभो त्वत्प्रसादेन
कार्याणि सर्वाणीह करोम्यहं इति विज्ञाप्य देवेशं प्रणिपत्य पुनः पुनः नमस्कारं करोमीश सर्वकामा
र्थसिद्धये प्रीत्या तु गृह्य देवेश प्रसादसुमुखो भव नाभ्यामासीदिति नमस्कारः ततः प्रदक्षिणां क
रोमीश सर्वकामार्थसिद्धये सर्वकामप्रदस्त्वं हि सर्वविघ्नहरो भव सप्तास्यासन्निति उमासुताय-
नमः प्रदक्षिणाः पुनर्नत्वा प्रार्थयेत् संसारपीडाव्यथितं हि मां सदा संकष्टभीतं सुमुख प्रसीद
त्वं त्राहि मां मोचय कष्टसंघान्नमो नमो विघ्नविनाशकाय त्वामुद्दिश्य कृतं मेद्य यथाशक्त्या तु पूजनं
तत्सर्वं पूर्णतामेतु त्वत्प्रसादाद्गजानन अथ वायनदानं श्रीविप्राय नमस्तुभ्यं साक्षाद्देवस्वरूपिणे
गणेशप्रीतये तुभ्यं मोदकान्वै ददाम्यहं मोदकान्सफलान्सौद्रान्दक्षिणाभिः समन्वितान् आवयोस्ता
रणार्थाय गृहाणेशान्नमो नमः आवयोर्दंपत्योर्वा दातृप्रतिगृहीत्रोरित्यर्थः एवं वायनं दद्यात् ॥
ततश्चंद्रपूजनं कृत्वा चंद्रायार्घ्यं दद्यात् शंखे दुग्धदूर्वाक्षतफलानि दत्वा ज्योत्स्नायते नमस्तुभ्यं
नमस्ते ज्योतिषांपते नमस्ते रोहिणीकांत गृहाणार्घ्यं नमोस्तु ते सौम्याय देवदेवाय ग्रहराजाय शा
लिने अर्घ्यं गृहाण देवेश द्विजराज नमोस्तु ते क्षीरोदार्णवसंभूत अत्रिनेत्रसमुद्भव गृहाणार्घ्यं
मया दत्तं रोहिणीसहित प्रभो गगनार्णवमाणिक्य क्षीराब्धिमथनोद्भव जानासि त्वं मदीयातः स
मया दत्तं रोहिणीसहित प्रभो गंगतार्णवमाणिक्य क्षीराब्धिमथनोद्भव जानासि त्वं मदीयातः स

मराजाय ते नमः क्षीरोदार्णवसंभूत लक्ष्मीबंधो निशाकर गृहाणार्घ्यं मया दत्तं गणेशप्रीतिवर्द्धन
समस्तनारकाधीश जगदाह्लादकारक गृहाणार्घ्यं मया दत्तं बालचंद्र नमोस्तु ते इत्यनेनार्घ्यं दत्वा
नमस्कारं कुर्यात् शंकरस्य ललाटस्थं तिलकं तु मनोहरं अत्रिनेत्रसमुद्भूतं नमामि शशिनं सदा
नमो मंडलदीपाय शिरोरत्नाय धूर्जटेः कलाभिर्वर्द्धमानाय नमश्चंद्राय चारवे इति चंद्रप्रार्थनां कु
र्यात् ततो गणेशायार्घ्यं गणेशाशेषविघ्नेश सर्वसिद्धिप्रदायक संकष्टहर मे देव गृहाणार्घ्यं नमो
स्तु ते गौरीसुत नमस्तेस्तु सततं मोदकप्रिय संकष्टनाशनार्थाय गृहाणार्घ्यं नमोस्तु ते कृसपदे च
तुर्थ्यां तु पूजितोसि शुभाप्तये गृहाणार्घ्यं मया दत्तं मम कामान्प्रपूरय इत्यर्घ्यं दत्वा तिथ्यर्घ्यं दद्यात्
तिथीनामुत्तमे देवि गणेशस्य च वल्लभे गृहाणार्घ्यं मया दत्तं सर्वसिद्धिप्रदायिके इति चतुर्थ्यर्घ्यं
र्घ्यं दत्वा गणेशं प्रार्थयेत् यद्दत्तं भक्तिमात्रेण पुष्पं पत्रं फलं जलं निवेदितं च नैवेद्यं तद्गृहाणानु
कंपया आवाहनं न जानामि न जानामि विसर्जनं पूजां चैव न जानामि त्वं गतिः परमेश्वर कर्मणा
मनसा वाचा त्वत्तो नान्यास्ति मे गतिः अंतश्चरसि भूतानां द्रष्टा त्वं परमेश्वर देवसोनि सहस्रेषु येषु

आसनं नानातीर्थाहृतंशुद्धंनिर्मलंपुष्पमिश्रितं पाद्यंगृहाणदेवारेविश्वरूपनमोस्तुते पाद्यं गंगादि
सर्वतीर्थेभ्योमयानीतंसुशीतलं गृहाणाचमनंकृष्णविश्वकायनमोस्तुते आचमनीयं गंधपुष्पाक्ष-
तैश्चैवफलेनचसमन्वितं अर्घ्यंगृहाणदेवेशमयादत्तंहिभक्तितः अर्घ्यं दधिक्षौद्रघृतंशुद्धंकपिला
यासुगंधियत् सुस्वादमधुरंक्षीरेमधुपर्कंगृहाणमे मधुपर्कआचमनं पंचामृतैस्तुस्नपनंकरि-
ष्यामिसुरोत्तम क्षीरोदधिनिवासायलक्ष्मीकांतायतेनमः मंदाकिनीगौतमीचयमुनाचसरस्वती ता
भ्यःस्नानार्थमानीतंगृहाणशिशिरंजलं स्नानं पुनराचमनं शुद्धजांबूनदप्रख्येतडिद्भास्वररोचिषी
मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां वस्त्रंपुनराचमनीयं यज्ञोपवीतंपरममितियज्ञोपवीतं॥
किरीटकुंडलादीनिकांचीवलययुग्मकं कौस्तुभंवनमालांचभूषणानिभजस्वमे भूषणानि मल
याचलसंभूतंगंधसारमनोहरं हृदयानंदनंचारुचंदनंप्रतिगृह्यतां चंदनं मालतीचंपकादीनि
यूथिकाबकुलानिच तुलसीपत्रमिश्राणिगृहाणसुरसत्तम पुष्पाणि देवकीवसुदेवंचरोहिणीं
सबलांतथा सात्यकिंचोद्धवाक्रूरानुग्रसेनादियादवान् नंदयशोदांतत्कालप्रसूतांगोपिकास्तथा
कालिंदीकालियंचैवपूजयेन्नाममंत्रतः वनस्पतिरसोद्भूतंकालागुरुसमन्वितं धूपंगृहाणगोविं
दगुणसागरगोपते धूपं आज्यंचवर्तिसंयुक्तमितिदीपं नैवेद्यंगृह्यतांदेवेतिनैवेद्यं शाल्योदनं
पायसंचसिताघृतविमिश्रितं नानापक्वान्नसंयुक्तंनैवेद्यंप्रतिगृह्यतां नैवेद्यंतदंतेपुनराचमनी
यं पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतं कर्पूरादिसमायुक्तंतांबूलंप्रतिगृह्यतां तांबूलं इदंफल
मितिफलं हिरण्यगर्भगर्भस्थमितिदक्षिणा नीराजयेत्ततोभक्त्यामंगलंसमुदीरयन् जयमंगल-
निर्घोषैर्देवदेवंसमर्चयेत् दत्वापुष्पांजलिंचाथदक्षिणादिपुरःसरं प्रणमेद्दंडवद्भूमौभक्तिभक्तः
पुनःपुनः स्तुत्वानानाविधैःस्तोत्रैःप्रार्थयेत्तंजगत्पतिं नमस्तुभ्यंजगन्नाथदेवकीनंदनप्रभो वसु
देवात्मजानंतयशोदानंदवर्द्धन गोविंदगोकुलाधारगोपीकांतनमोस्तुते ततस्तुदापयेदर्घ्यमिं-
दोरुदयतःशुचिः कृष्णायप्रथमंदद्याद्देवकीसहितायच नारिकेलेनशुद्धेनदद्यादर्घ्यंविचक्षणः कृ
ष्णायपरयाभक्त्याशंखेकृत्वाविधानतः जातःकंसवधार्थायभूभारोत्तारणायच कौरवाणांविनाशाय
दैत्यानांनिधनायच गृहाणार्घ्यंमयादत्तंदेवकीसहितोहरे कृष्णार्घ्यमंत्रः शंखेकृत्वाततस्तोयं-
सपुष्पफलचंदनं जानुभ्यामवनींगत्वाचंद्रायार्घ्यंनिवेदयेत् क्षीरोदार्णवसंभूतअत्रिनेत्रसमुद्भव
गृहाणार्घ्यंमयादत्तंरोहिणीसहितोविधो ज्योत्स्नापतेनमस्तुभ्यंनमस्तेज्योतिषांपते नमस्तेरोहिणी
कांतगृहाणार्घ्यंनमोस्तुते चंद्रार्घ्यमंत्रः इत्थंसंप्रार्थ्यदेवेशंरात्रौजागरणंचरेत् गीतनृत्यादिनाचै
वपुराणश्रवणादिभिः प्रत्यूषेविमलेस्नात्वापूजयित्वाजगद्गुरुं पायसेनतिलाज्यैश्चमूलमंत्रेण
भक्तितः अष्टोत्तरशतंहुत्वाततःपुरुषसूक्ततः इदंविष्णुरितिप्रोक्तात्कुर्याद्वैघृताहुतीः होमशेषं
समाप्याथपूर्णाहुतिपुरस्सरं आचार्यंपूजयेद्भक्त्याभूषणाच्छादनादिभिः गामेकांकपिलांदद्याद्व्रत
संसिद्धिहेतवे पयस्विनींसुशीलांचसवत्सांसगुणांतथा स्वर्णशृंगीरौप्यखुरांकांस्यदोहनिकायुतां
रत्नपुच्छांताम्रपृष्ठींस्वर्णघंटासमन्वितां ताम्रपृष्ठांवस्त्रछन्नामेवंसंपूर्णांतांव्रजेत् कपिलायाअभावेतु
गौरन्यापिप्रदीयते ततोदद्याच्चऋत्विग्भ्योन्येभ्यश्चैवयथार्हतः ब्राह्मणान्भोजयेत्पश्चाद्दद्यात्तेभ्यश्च
दक्षिणां कलशानन्नसंपूर्णान्दद्याच्चैवसमाहितः प्राप्यानुज्ञांतथातेभ्योभुंजीतसहबंधुभिः एवंकृ
तेमहाराजव्रतोद्यापनकर्मणि निःपापस्तत्क्षणादेवजायतेविबुधोत्तमः पुत्रपौत्रसमायुक्तोधन-
धान्यसमन्वितः भुक्त्वाभोगान्चिरंकालमंतेममपुरंव्रजेत्॥ इतिभविष्योत्तरोक्तंजन्माष्टमीव्रतोद्यापनं
॥

अथस्मृतिकौस्तुभोक्तंजन्माष्टमीव्रतोद्यापनंच॥

युधिष्ठिर उवाच ॥ त्वत्प्रसादाद्धृषीकेश श्रुतमेव्रतमुत्तमं इदानीं कृपया ब्रूहि व्रतोद्यापनकर्म च उद्यापनं-
विना नैव व्रतस्य फलमश्नुते कर्तव्यं तु कथं भक्तैरखंडफलभोक्तृभिः श्रीकृष्ण उवाच शृणु पांडव व
क्ष्यामि व्रतोद्यापनमुत्तमं व्रतं कृतेन राजेंद्र सफलं विपुलं भवेत् ३ यथा तथा च तत्कुर्याद्वित्तशाठ्यं न
कारयेत् वर्षे वर्षे तथाष्टम्यां कुर्यात्पूजामनुत्तमं ४ सप्तम्यां पंचगव्येन विधिवत्कायशोधनं कुर्या-
द्व्रतेन तथाष्टम्यां मध्याह्ने चेष्टबंधुभिः ५ इष्टबंधवोपि तत्र सहाया भवेयुरित्यर्थः सर्वौषधैः सर्वगंधैः-
स्नानं शुक्लतिलामलैः वेदोक्तविधिना स्नात्वा तर्पयेत्पितृदेवताः ६ ततो यथोक्तविधिना कुर्यादाराधनं
हरेः पद्मसहित कृपया कमलक्षीरोदार्णवसंस्थित ७ पद्मचक्रमहाशंखलक्ष्मीगरुडशोभित श्रीवत्सकौ-
स्तुभोरस्क फणसप्तान्वितप्रभो ८ व्रतस्योद्यापनेन त्वं सर्वकामप्रदो भव इत्यावाहनमंत्रः इति प्रार्थ्यत
तो देवमर्चितं सनकादिभिः ९ आगतानर्चयेत्तत्र गंधपुष्पादिभिः क्रमात् पुण्याहवाचनं कुर्यात्संकल्पं-
च यथाविधि आचार्यमर्चयेद्विद्वान् श्रोत्रियं च कुटुंबिनं श्रुतिस्मृतिसमायुक्तं ब्राह्मणं वरयेत्ततः धर्म
शास्त्रार्थतत्त्वज्ञानन्यांश्च वेदपारगान् वरयेद्यजनार्थं हि ब्राह्मणानां च सप्तकं आशीर्वादं गृहीत्वाथ स-
र्वैर्द्विजवरोत्तमैः शुचौ देशे तु संलिप्ते गोमयेन विचक्षणः मंडलं कारयेत्तत्र पंचवर्णैः सुशोभनं नवना
भं सारविंदं सर्वतोभद्रसंज्ञकं मंडलं कारयेन्मध्ये मनसोह्लादकं परं मंडपं कारयेत्तत्र सुतोरणसम
न्वितं चतुर्द्वारान्वितं ह्येतत्स्थापयेदिष्टदेवताः प्रथमे द्वारमार्गे तु वरुणं स्थापयेद्बुधः अवतेहेलमंत्रे
णैनं वेद्यां तं प्रकल्पयेत् द्वितीयद्वारदेशे तु कुबेरं स्थापयेत्ततः गणानां त्वेति मंत्रेण चतुर्थे गणनायकं
एवं संपूजितं तत्र मंडले पंकजादिभिः मध्ये वस्थापयेत्कुंभं सौवर्णं राजतं तथा अभावे ताम्रजं वापि मृ
ण्मयं वापि कारयेत् २२ सुधाधवलितं कृत्वा चंद्रसूर्यनिभं शुभं नामांकितं तु तत्कृत्वा जलपूर्णं सरत्नकं
गंधपुष्पादिकैर्युक्तं सपल्लवफलं तथा पात्रं च कारयेत्पश्चाद्धेम्ना वा रजतेन वा अभावे ताम्रपात्रं तु कुं
भस्योपरि विन्यसेत् सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः २४ आयांतु यजमानस्य दुरितक्षयकारकाः
इति जलावाहनं स्थितं त्वयि जगत्सर्वं सदेवासुरमानुषं आत्मनः कार्यसिद्ध्यर्थं स्थापयित्वा घटोपरि
मूर्तिं च कारयेत्तत्र कलशस्यैव विचक्षणः २६ अष्टमाषप्रमाणं तु वित्तशाठ्येन कारयेत् तदर्द्धेनाथवार्द्धे
न शक्त्या वा कारयेद्बुधः २७ आवाहयेत्प्रयत्नेन मूर्तिं कलशसंस्थितां चामरं छत्रशय्यां च पीठिकां चाथ पा
त्रकं २८ सोपस्करसमायुक्तं देवस्याग्रे निवेदयेत् देवसमीपे स्थापयेत् एवं पंचामृताद्युपकल्पन
विधानम् पंचामृतेन तत्स्नानं कुर्याद्देवस्य मंत्रतः स्नानं च कारयेत्पार्थ पश्चात्पूजां समाचरेत् तत-
स्तु पूजयेद्देवं विष्णुं तं विश्वरूपिणं ३० वस्त्रयुग्मेन संवीतं पीतयज्ञोपवीतिनं चंदनेन सुगंधेन कर्पू
रागुरुगंधिना विलेपनेन भोगाय प्रीयतां मधुसूदनः उक्तविलेपनेन सह भोगाय यद्यपेक्षितं नैवे-
द्यतांबूलादि तस्यापि प्रकल्पनं कार्यमित्याशयः अथ पूजा प्रकर्तव्या मंत्रैर्वेदपुराणकैः ३१ आगच्छ
देवदेवेश तेजोराशे जगत्पते। पूजयिष्याम्यहं देव प्रसादसुमुखो भव सहस्रशीर्षेत्यावाहनं देवा
ब्रह्मादयो येच स्वरूपं न विदुस्तव अतस्त्वां पूजयिष्यामि मातुरुत्संगवासिनं यस्यावताररूपाणि स-
मर्चंति दिवौकसः अपश्यंतः स्वयंरूपं तस्मै श्रीब्रह्मणे नमः पुरुषएवेदं आसनं अवतारसहस्राणि
करोषि मधुसूदन न ते संख्यावताराणां कश्चिज्जानाति तत्त्वतः एतावानस्येति पाद्यं जातः कंसवधा-
र्थाय भूभारोत्तारणाय च देवानां च हितार्थाय धर्मसंस्थापनाय च कौरवाणां विनाशाय पांडवानां हिताय च
गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे त्रिपादूर्ध्व इत्यर्घ्यं सुरासुरनरेशाय क्षीराब्धिशयनाय च यो
गेश्वराय देवाय योगिनां पतये नमः योगोद्भवाय नित्याय गोविंदाय नमो नमः कृष्णाय वासुदेवाय द
द्याचमनं शुभं तस्मादिराजाचमनीयं नारायण नमस्तेस्तु नरकार्णवतारक गंगोदकं समानीतं

स्नानार्थं प्रतिगृह्यतां तस्माद्यज्ञात् इति स्नानं पयोदधिघृतं क्षौद्रं शर्करास्नानमुत्तमं तदर्थं देवदेवेश गृह्यतां देव
कीसुत पंचामृतस्नानं शुद्धोदकस्नानं आचमनं क्षौमं च यद्दृढसूत्राढ्यं मयानीतं शुकं शुभं गृह्यतां देवदेवेश मया द
त्तं सुरोत्तम तस्माद्यज्ञात् द्वितीयवस्त्रं च नमः कृष्णाय देवाय शंखचक्रधराय च ब्रह्मसूत्रं जगन्नाथ गृहाण प
रमेश्वर तस्मादश्वेत्युपवीतं नानागंधसमायुक्तं चंदनं चारुचर्चितं कुंकुमाक्तादिनैर्युक्तं गृह्यतां परमेश्वर
तं यज्ञमिति गंधं पुष्पाण्येतानि दिव्यानि पारिजातोद्भवाय च मालतीकेसरादीनि पूजार्थं प्रतिगृह्यतां यत्पुरु
षमिति पुष्पं अथांगपूजा श्रीकृष्णाय नमः पादौ पूजयामि संकर्षणाय नमः स्फिजौ पू० कालात्मने नमो जानु-
नी पू० विश्वकर्मणे० जंघे पू० विश्वनेत्राय० कटिं पूजयामि विश्वकर्मणे मेढ्रं पू० वाचस्पते नमस्तुभ्यमि-
ति संपूजयेन्मुखं ललाटे केशवायेति ललाटं पू० सर्वात्मने० शिरसि पू० कालात्मा विश्वरूपात्मा नारायणा न
मो नमः इति सर्वांगपूजा वनस्पतिरसो दिव्यो गंधाढ्यः सुमनोहरः आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्य
तां ब्राह्मणोस्येति धूपं त्वं ज्योतिः सर्वदेवानां तेजस्त्वं तेजसां परं आत्मज्योतिर्नमस्तुभ्यं दीपोयं प्रतिगृह्यतां
चंद्रमा मनस इति दीपं नानागंधसमायुक्तं भक्ष्यभोज्यं चतुर्विधं नैवेद्यार्थं मया दत्तं गृहाण परमेश्वर ना-
भ्या आसीदिति नैवेद्यं तांबूलं च सकर्पूरं पूगीफलसमन्वितं मुखवासकरं रम्यं प्रीतिदं प्रतिगृह्यतां यत्पु-
रुषेणेति तांबूलम् सुवर्णं रजतं ताम्रं नानारत्नसमन्वितं कर्मसाद्गुण्यसिध्यर्थं दक्षिणा प्रतिगृह्यतां सप्ता
स्यासन्निति दक्षिणा इदं फलं यज्ञेन यज्ञमिति फलं १६ ततो वैदिकमंत्रैः पुष्पांजलिं दद्यात् इदं विष्णुरि-
त्यादिभिः एवं पूजा प्रकर्तव्या रात्रौ जागरणं तथा गीतवादित्रसंयुक्तं पुराणश्रवणं तथा प्रतिमायां विधायै-
वं पूजां देवस्य चक्रिणः ततः प्रभातसमये स्नात्वा शुचिजलाशये पूर्ववत्पूजयेद्देवं पश्चाद्धोमं समाचरेत्
स्वगृह्योक्तविधानेन प्रतिष्ठाप्य चरुं ततः व्रीहियवतिलैश्चैव घृतेन च परिप्लुतैः अतो देवेति मंत्रेण
शतमष्टोत्तरं क्रमात् त्रुटये स्वाहा कालात्मने स्वाहा अहोरात्राय स्वाहा अर्द्धमासाय स्वाहा मासाय स्वाहा
संवत्सराय स्वाहा सर्वात्मने स्वाहा ततः इदं विष्णुरिति मंत्रेण पंचखायकृतं स्मृतं यथासंख्यं च कर्तव्यं कृतं
सहस्रमेव च ततो महाव्याहृतयो होममंत्राः प्रकीर्तिताः जपेत्पुरुषसूक्तं तु स्मरेद्देवमनन्यकं पूर्णाहु-
तिं ततो हुत्वा यदैवं दिवृतादिभिः आदित्यादीन्ग्रहांश्च सर्वान् शक्त्या वा राधयेदिह नैवेद्यैर्विविधैश्चैव व-
स्त्राभरणैः शुभैः कर्णांगुलीभूषणैश्च गौरीणं कृत्वा पवित्रकं अर्घ्यपुष्पप्रदानेन आचार्यं तु प्रपूजयेत् आचा
र्यं पूजयित्वा च वस्त्रैर्नानाविधैः शुभैः वस्त्रं छत्रं च हेमं च रत्नादिभिरलंकृतं सकंकणं हारयुक्तं सपत्नी-
कायदाप्य च मुद्रिकाकर्णभूषैश्च तथा वस्त्रैः प्रपूजयेत् दद्यात्तद्दक्षिणार्थं तु सवत्सां च पयस्विनीं स्व
र्णशृंगीं रौप्यखुरां कांस्यदोहनसंयुतां ताम्रपृष्ठीं स्वर्णघंटां नासिकामौक्तिकान्वितां रत्नपुच्छां वस्त्रयुतां ति-
कत्रयसमन्वितां भक्त्या समर्पयेत्सर्वं यथाविभवसारतः सुरभी वैष्णवी माता नित्यं विष्णुपदे स्थिता गोग्रा-
सं तु मया दत्तं सुरभि प्रतिगृह्यतां गावो मामग्रतः संतु गावो मे संतु पृष्ठतः गावो मे हृदये संतु गवां मध्ये
वसाम्यहं येन तु स्पृष्टानमस्कुर्यात्कुर्याच्चैव प्रदक्षिणां प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा नमो गोभ्यः
श्रीमतीभ्यः सौरभेयीभ्य एव च नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः नमस्कारः गवामंगेषु तिष्ठंति भुवना
नि चतुर्दश यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च गोप्रार्थना यस्मात्त्वं पृथिवी रूपा धेनुरूपेण संस्थिता
त्वदर्चनाद्धरिः प्रीतो मम पापं व्यपोहतु मंत्रैरेभिस्तु संपूज्य आचार्याय निवेदयेत् पदं चैव प्रदातव्यं वस्त्रा
यष्टकसंयुतं पादुकोपानहौ छत्रं मुद्रिकादिभिरंकितं नामांकं सजलं कुंभं तंडुलैः पूरितं तथा सोपस्का
रं च प्रतिमामाचार्याय निवेदयेत् हेमाधानं तदुपायदास्यामि प्रतिमामिमां द्रव्य विष्णुसमुद्भूतामतः शांतिं प्रयच्छ
मे प्रतिमामंत्रः मंडलं फलसंयुक्तं ब्राह्मणाय निवेदयेत् अन्येभ्यो ब्राह्मणेभ्यश्च भक्त्या दद्याच्च दक्षिणां आ-
भिषेकं ततः कुर्याद्यजमानस्य मंत्रतः समुद्रेति प्रतिमंत्रैः शर्करास्त्वेति मंत्रतः कोटितीर्थसमुद्भवमाचार्ये

उद्यापयेत् मंत्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन संपूजितो मया देव परिपूर्णं तदस्तु मे क्षमापनमं
त्रः इष्टमित्रादिसंयुक्तो गृहमागम्य संयुतः ब्राह्मणान्भोजयेत्पश्चात्यथा विभवविस्तरैः मिष्टान्नपायसै
र्भोज्यैः पश्चाद्दद्याच्च दक्षिणां दीनानाथांश्च संपूज्य ब्राह्मणांश्च विशेषतः भुंजीत वाग्यतो भूत्वा चिंतयेत्त
दिने हरिं एवं कृते यथर्मराज कर्मणासौ जनार्दनः सकृत्स्वरूपी भगवत्प्रियो भवति सर्वदा सगरेण पुरा
वीरराजभिर्जनकादिभिः मनुना च दिलीपेन रघुणा भरतेन च नृपैरन्यैश्च चरितं राज्यं भुक्त्वा दिवं
गताः यः करोति नृपश्रेष्ठ व्रतस्योद्यापनं मुदा व्रतस्य फलमाप्नोति विष्णुलोके महीयते ॥ इति जन्माष्ट
म्युद्यापनविधिः समाप्तः ॥ ॥ ॥ अथास्यामेव रोहिणीयुक्तायामग्निपुराणोक्तं जयंतीव्रतम् ॥
वसिष्ठ उवाच कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी नृप जयंती नाम सा प्रोक्ता उपोष्या सा प्रयत्नतः सप्तजन
मकृतं राजन्यत्पापं त्रिविधं नृणां तत्क्षालयति गोविंदस्तिथौ तस्यां सुभावितः उपवासश्च तत्रोक्तो महापा
तकनाशनः जयंत्यां जगतीपाल विधिना नात्र संशयः त्रेतायां द्वापरे चैव राजन्कृतयुगे पुरा रोहिणीस
हिता चेयं विद्वद्भिः समुपोषिता वियोगे पारणं चक्रुर्मुनयो ब्रह्मवादिनः संयोगिके व्रते प्राप्ते यत्र कोपि वि
युज्यते तत्र पारणकं कुर्यादेवं विधिविदो विदुः अतः परं महीपाल संप्राप्ते तामसे कलौ जन्मनो वासुदे
वस्य भविता व्रतमुत्तमं आराधितः सदेवक्या विष्णुः सर्वेश्वरः पुरा समयोगे तु रोहिण्यां निशीथे राजसत्तम
समजायत गोविंदो बालरूपी चतुर्भुजः तं दृष्ट्वा जगतां नाथं प्रणम्य गरुडध्वजं देवकी प्रांजलिर्भूत्वा इदं व-
चनमब्रवीत् देवक्युवाच नाहमेवंविधं सोढुं हार्दे प्रस्तुतलोचना तवेदृक्रूपमालोक्य कंशात्त्रसामि मधु-
सूदन वासुदेव उवाच त्वं मादृक्षस्य संदिग्धे दिनेस्मिन्नेव तामसे तव दर्शनमेष्यामि बालरूपेण देवकि ये
त्वां पुष्पादिभिर्देवि पूजयिष्यंति मानवाः दिनेस्मिन्मामहाभागास्तवोत्संगे व्यवस्थितं दास्यंति ये निशीथेर्घ्यं
रोहिणीसहिते विधौ सुवर्णेन कृते पात्रे राजते वा नरोत्तमाः सर्वान्कामानवाप्स्यंति इह लोके परत्र च सप्त
मीसंयुताष्टम्यां निशीथे रोहिणी यदि भविता साष्टमी पुण्या यावच्चंद्रदिवाकरौ प्रतिमासं च तेष्वेतामष्टम्यां
यः करिष्यति मम चैवाखिलान्कामान् संप्राप्स्यति न संशयः ॥ वसिष्ठ उवाच अनेन विधिना यस्तु प्रतिमा-
सं नरेश्वर करोति वत्सरं पूर्णं यावदागमनं हरेः दद्याद्धेनुं सुसंपूर्णां भोगरत्नैरलंकृतां ब्राह्मणाय तत्-
पश्चाद्व्रतस्य पुण्यफलं शृणु यत्पुण्यं सम्यगिष्टेन राजसूयेन पार्थिव तत्पुण्यं सफलं लब्ध्वा विष्णोः सालोक्य
तां व्रजेत् नापुत्री स्यान्नो दुःखी न वियोगी कुरूपवान् भवेन्नाकालतो मृत्युर्यावज्जन्मशतं नृप शंखे
तोयं समादाय सपुष्पफलकांचनं जानुभ्यां च धरां गत्वा चंद्रायार्घ्यं निवेदयेत् क्षीरोदार्णवसंभूत अत्रिने-
त्रसमुद्भव गृहाणार्घ्यं शशांकेमं रोहिण्या सहितो मम रोहिणीसहितं चंद्रं कृत्वा रौप्यमयं बुधः द्वादशांगुल
विस्तारं तत्रार्घ्यं संनिवेदयेत् ततो वै पूजयेत्तां तु सकृष्णां देवकीं नृप गंधपुष्पैः सनैवेद्यैर्वस्त्रालंकारभूषणैः
प्रणम्य देवजननीं त्वयाजातस्तु वामनः वासुदेवस्तथा कृष्णो नमस्तुभ्यं नमो नमः सपुत्रार्घ्यं प्रदत्तं मे गृहाणे
मं नमोस्तु ते अदितिर्देवमाता त्वं वसुदेवस्तु कश्यपः अजीजनस्त्वमीड्यं हि वासुदेवं सनातनं इत्येवं पूज-
यित्वा तु पुनः सूक्तैः सुवेलवैः स्तुत्वा वादित्रनिर्घोषैर्गीतवाद्यैः सुमंगलैः सकथाभिर्विचित्राभिस्तथा प्रेक्ष
णकैरपि सर्वेतिहासैः पौराणैः क्षपेत्तां शर्वरीं नृप दद्यात्स्वशक्तितो राजन्प्रभाते उदिते रवौ ब्राह्मणेभ्यो-
यथाशक्त्या धेनुं वस्त्रादि कांचनं दक्षिणां तु द्विजेभ्यस्तु सर्वं तदक्षयं भवेत् भांते कुर्यात्तिथेर्वापि संभार
तपारणं कृतेन तेन पूतात्मा राजसूयफलं भवेत् यः कुर्याद्व्रतमेतत्तु पुण्यवान् शक्तितः सदा इहामुत्र-
सुखी विद्वान्परात्परतरं व्रजेत् आदित्यपुराणे तमेतमेव विधिमभिधाय पूजाविशेष उक्तः गंधैर्माल्यै-
स्तथा धूपैर्यवगोधूमसंभवैः सगोरसैर्भक्ष्यभोज्यैः फलैश्च विविधैरपि रात्रौ प्रजागरः कार्यो नृत्यगीतसमा
कुलैः अरुणोदयवेलायां नवम्यां च ततः स्त्रियः रक्तवस्त्रान्विताः सर्वाः पुष्पमाल्यैरलंकृताः नयंति प्रतिमां

सितो नानाविभवसंभवाः नदीतीरे शुभे रम्ये विविक्तं प्रतिवत्सरं तत्र स्नानं प्रकुर्वीत तथा पर्यंति च तथा स्नातः ततः प्रविश्य च गृहं पवित्रं भुंजते चिंताः पुत्रमित्र विकारैश्च मध्याज्यमरिचैः सह इति जयंतीव्रतम् ॥

अथ व्रतोद्यापनकौस्तुभोक्तं संक्षेपेण जन्माष्टमीव्रतोद्यापनं ॥ ॥ प्रातर्दंतधावनपूर्वकं स्नात्वा देशकालौ संकीर्त्य ममाखिलपापक्षयपूर्वकधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रमुककामनया वा आचरितजन्माष्टमीव्रतोद्यापनं करिष्ये तदंगं पुण्याहवाचनादि कृत्वा वृताचार्यः गोमयादिलिप्ते शुद्धदेशे पंचवर्णपुष्पमालादिशोभिता यां वेद्यां सर्वतोभद्रस्योपरि स्थकलशोपरि पूर्णपात्रे रौप्यपर्यंके सौवर्णीं देवकीं तदंके गवामस्तनपायिनं सौवर्णं श्रीकृष्णमिदं विष्णुरिति मंत्रेण विष्णोर्नुकमिति वा परितः वसुदेवं बलदेवं नंदं यशोदां सुभद्रां रोहिणीं विधुं मत्स्यादिदशावताराणि आदित्यादिग्रहान् अश्विन्यादिसप्तविंशतिनक्षत्राणि देवान् नागान् यक्षान् विद्याधरान् उरगान् यमुनां कालियं कंसं गां योगनिद्रां सात्यकिं उद्धवं अक्रूरं उग्रसेनादियादवान् शंखं चक्रं गदां पद्मं त्रुटिकालात्मानं अहोरात्रं मासं संवत्सरं सर्वात्मानं द्वारपालान् पुण्यशीलं जयं विजयं पुरतो गरुडं पर्वनाममंत्रैरावाह्य पुरुषसूक्तेन पूजयेत् कृष्णं चतुर्भुजं देवं शंखचक्रगदाधरं पीतांबरयुगोपेतं लक्ष्मीयुक्तं विभूषितं लसत्कौस्तुभशोभाढ्यं मेघश्यामं सुलोचनं ध्यायामि पुंडरीकाक्षं जगदानंदकारकं अथांगपूजा कृष्णाय नमः पादौ पूजयामि संकर्षणाय· गुल्फौ· कालात्मने नमः जानुनी· विश्वकर्मणे· जंघे· विश्वनेत्राय· कटिं पद्मनाभाय· नाभिं· परमात्मने· हृदयं· श्रीकराय· कंठं· सर्वास्त्रधारिणे· बाहू· वाचस्पतये· मुखं· केशवाय· ललाटं· सर्वात्मने· शिरसि० पूजां समाप्य स्तोत्रं पठेत् अनघं वामनं शौरिं श्रीकंठं पुरुषोत्तमम् वासुदेवं हृषीकेशं माधवं मधुसूदनं वाराहं पुंडरीकाक्षं नृसिंहं दैत्यसूदनं दामोदरं पद्मनाभं केशवं गरुडध्वजं गोविंदमच्युतं कृष्णमनंतमपराजितं अधोक्षजं जगद्बीजं सृष्टिस्थित्यंतकारकं अनादिनिधनं विष्णुं त्रैलोक्येशं जगद्गुरुं नारायणं चतुर्बाहुं शंखचक्रगदाधरं पीतांबरधरं नित्यं वनमालाविराजितं श्रीवत्सांकं जगद्वंद्यं श्रीधरं श्रीपतिं हरिं एवं स्तुत्वा देवस्य जातकर्मनामकर्मषष्ठीपूजादि कृत्वा पुरतः अभयावचाकुष्ट गुडूचीपिप्पलीशास्त्राणि निक्षिप्यार्घ्यं दद्यात् चंद्रोदये जातः कंसवधार्थाय धर्मसंस्थापनाय च गृहाणार्घ्यं मया दत्तं देवकीसहितो हरे ॥ ॥ इति कृष्णार्घ्यं अंगनेभ्यो राजतं चंद्रबिंबं संपूज्य अर्घ्यं जानुभ्यामवनीं गत्वा दद्यात् मंत्रः क्षीरोदार्णवसंभूत लक्ष्मीबंधो निशाकरः गृहाणार्घ्यं मया दत्तं रोहिण्या सहितः शशिन् ततः प्रार्थना त्राहि मां सर्वलोकेश शाचोरसंसारसागरात् त्राहि मां सर्वपापघ्न दुःखशोकार्णवात्प्रभो यद्बाल्ये यच्च कौमारे यौवने यच्च वार्द्धके तत्पुण्यं वृद्धिमाप्नोतु पापं हर हलायुधेति रात्रौ जागरणं कुर्यात् प्रातः स्नात्वा संपूज्याग्निं प्रतिष्ठाप्यान्वाद्ध्यात् प्रधानं विष्णुं इदं विष्णुरिति मंत्रेणाज्यसतिलव्रीहियवद्रव्यैः प्रतिद्रव्यं अष्टोत्तरशतसंख्याकाहुतिभिः पुनः पंचरवाद्येन विष्णोर्नुकमिति मंत्रेणाष्टोत्तरशतसंख्याकाः पुनः पुरुषसूक्तेन प्रत्यृचं प्रत्येक याज्याहुत्या महाव्याहृतिभ्यः अष्टाविंशतिसंख्याभ्याहुतिभिः परिवारदेवताभ्यः एकैकाज्याहुत्या शेषेण स्विष्टकृतमित्यादि होमशेषं समाप्य ततश्चाचार्यं संपूज्य विभवे सति भूषाख्या रौप्यवस्त्रकांचनासनं दत्वा पीठं दत्वा श्रीकृष्णः प्रतिगृह्णाति श्रीकृष्णो वै ददाति च श्रीकृष्णस्तारको भक्त्या श्रीकृष्णाय नमो नमः श्रीकृष्णानंतरूपाय दास्यामि प्रतिमामिमां द्रव्यं विष्णुसमुद्भूतमतः शांतिं प्रयच्छ मे व्रतपूर्तये गां च दद्यात् सुरास्त्वामित्यादिभिर्यजमानमभिषिंचेत् अग्निं विसृज्य भूयसीं दक्षिणां दत्वा शतमर्द्धं शतं विंशतिं दश वा ब्राह्मणान्संतर्प्य स्वयं भुंजीतेति जन्माष्टमीव्रतं भविष्योत्तरे ॥ ॥ ॥ ः॥

अस्यामेव कृष्णाष्टम्यां पुमामारूप्यरं व्रतं हेमाद्रौ नभस्ये मासि चाष्टम्यां यदाद्रीजायते तदा व्रतमेतद्विधातव्यं पुमामारूप्यं ब्रुवीत्यादि अस्यामेव मृगशिरोयुक्तायां कालाष्टमीव्रतम् हेमाद्रौ वामनपुरा-

णे नभस्येमासि च तथा यास्यात्कृष्णाष्टमी शुभा युक्ता स्यान्मृगशीर्षेण सा तु कालाष्टमी स्मृता तस्यामपि शिवपूजनं
कार्यं इयं मन्वादिरपि भाद्रकृष्णनवमी गोगानवमीति क्वचित्प्रसिद्धा गोगामीवृषभध्वज इति नामानु
सारेण कालाष्टमीव्रतं कुर्यात्तिथेरंते च पारणम् शिवपूजैवात्र कार्या दशम्यामेतकस्य चेति वाक्या
त् ।। दशम्यां धर्मराजव्रतम् ।। भाद्रकृष्णैकादश्यजानामैकादशी ब्रह्माण्डपुराणे ।। युधिष्ठिर उवाच
भाद्रस्य कृष्णपक्षे तु किं नामैकादशी भवेत् एतदिच्छाम्यहं श्रोतुं कथयस्व जनार्दन श्रीकृष्ण उवाच
शृणुष्वैकमना राजन् कथयिष्यामि विस्तरात् अजेति नाम विख्याता सर्वपापप्रणाशिनी पूजयित्वा
हृषीकेशं व्रतमेनत्करोति यः पापानि तस्य नश्यंति महापातकजान्यपि नातः परतरा राजन् लोकद्वय-
हिता वरा सत्यमेतन्मया प्रोक्तं नासत्यं मम भाषितं हरिश्चंद्र इति ख्यातो बभूव नृपतिः पुरा चक्रवर्ती
सत्यसंधः समस्ताया भुवः पतिः कस्यापि कर्मणो योगाद्राज्यभ्रष्टो बभूव सः विक्रीतौ वनिता पुत्रौ स च का-
रात्मविक्रयं पुक्कसस्य च दासत्वं गतो राजा स पुण्यकृत् सोभवन्नृपतिश्रेष्ठो न सत्याच्चलितस्तथा एवं
भूतस्य नृपतेर्बहवो वत्सरा गताः ततश्चिंतातुरो राजा स बभूवातिदुःखितः किं करोमि क्व गच्छामि
निष्कृतिर्मे कथं भवेत् इति चिंतयतस्तस्य मग्नस्य वृजिनार्णवे आजगाम मुनिः कश्चिज्ज्ञात्वा राजानमातुरं
परोपकरणार्थाय ब्रह्मणा निर्मिता द्विजाः स तं दृष्ट्वा द्विजवरं ननाम नृपसत्तमः कृतांजलिपुटो भूत्वा गौ-
तमस्याग्रतः स्थितः कथयामास वृत्तांतमात्मनो दुःखसंयुतं श्रुत्वा नृपतिवाक्यं तु गौतमो विस्मयान्वितः
उपदेशं नृपतये व्रतस्यास्य ददौ मुनिः मासे भाद्रपदे राजन् कृष्णपक्षेतिशोभने एकादशी समाख्याता
नाम्नाऽजेति पुण्यदा अस्याः कुरु व्रतं राजन् पापस्यांतो भविष्यति तव भाग्यवशादेषा सप्तमेह्नि समागता
उपवासपरो भूत्वा रात्रौ जागरणं कुरु एवमस्य व्रते चीर्णे तव पापक्षयो ध्रुवं तव पुण्यप्रभावेणाहमागतो-
ऽहं नृपोत्तम इत्युक्त्वा [illegible] मुनिस्तत्रैवांतरधीयत मुनेर्वाक्यं नृपः श्रुत्वा चकार व्रतमुत्तमं कृतेनानेन
[illegible] प्रभावेण [illegible] तस्य च निस्तीर्णदुःखो राजासीद्व्रत[illegible]
[illegible] पत्न्या सह [illegible] पुत्रेण च समागतः देवदुंदुभयो नेदुः पुष्पवर्षमभूद्दिवः एकादशी-
प्रभावेण प्राप्य राज्यमकंटकं स्वर्गं लेभे हरिश्चंद्रः सपुत्रः सपरिच्छदः ईदृग्विधं व्रतं राजन्ये कुर्वंति द्वि-
जोत्तमाः सर्वपापविनिर्मुक्तास्ते [illegible] यांति ते नृप पठनाच्छ्रवणाद्राजन्नश्वमेधफलं लभेत् ।। ।।

इति ब्रह्माण्डपुराणे भाद्रकृष्णाजैकादशीव्रतकथा ।। ।।

भाद्रपदमासकृष्णद्वादशी वत्सद्वादशी ।। सा च [illegible] प्रसिद्धा अस्या मूलं मृग्यं तत्र सवत्-
सायाः गोः पूजा पिष्टमयीं सवत्सां गां स्त्रियः पूजयंति । तदुक्तं भविष्योत्तरे सवत्सां तुल्यवर्णां गां क्षीरिणीं
वत्सयुक्तां चंदनादिभिरालिप्य पुष्पमालाभिरर्चयेत् सवत्सायै धेनवे नमः ।। इति संपूज्य ।। वस्त्रेणाच्छा-
द्यार्घ्यं दद्यात् क्षीरोदार्णवसंभूते सुरासुरनमस्कृते सर्वदेवमये मातर्गृहाणार्घ्यं नमोस्तु ते ततः प्र-
णम्य गां संपूज्य तस्यै ग्रासदानमंत्रः सुरभि त्वं जगन्मातर्नित्यं विष्णुपदे स्थिता सर्वदेवमयी ग्रासं मया दत्तं
प्रतीच्छ स ।। ततः प्रार्थना सर्वदेवमये देवि सर्वदेवैरलंकृते मातर्ममाभिलषितं सफलं कुरु नंदिनि
भाद्रकृष्णत्रयोदशी युगादि ।। तदुक्तं भविष्योत्तरे कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः अत-
स्तां युगादीं संकल्प्य ।। पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः श्राद्धं कृतं तेन समाः सहस्रं
रहस्यमेतत्पितरो वदंति ।। विष्णुपुराणेपि ।। युगादयः स्मृता ह्येताः पितॄणां तृप्तिहेतवे भारतेपि ।।
माघमास्याद्युगाद्यासु तिथिषु यस्तु मानवः स्नात्वा दत्वा च जप्त्वा चानंतफलं लभेत् युगादिषु युगांतेषु श्राद्ध-
मक्षयमुच्यते इमं च श्राद्धमप्युक्तं पानीयमित्यादिना भाद्रकृष्णचतुर्दश्यां शिवपूजा विधीयत इति चतुर्द-
श्यां शिवस्य चेति वचनात् भाद्रामायां कुशाग्रहणं हेमाद्रौ हारीतः मासे नभस्यमावास्या तस्यां दर्भोच्चयो

मतः अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः अत्रातिदेशात् नभस्यैकादशीभूतदर्शाष्टम्यां समुद्धृ
ता वर्षयोग्याः कुशास्त इत्यादि नारदीये शुचौ नभस्ये भाद्रे च मासे पूर्णान्तिके द्विज पितृश्राद्धं दानहोमं
सुरार्चनं त्वमश्नुते भाद्रदर्शे पराह्णे तु तिलक्षेत्रसमुद्भवान् विरिंचिमनुना मंत्री ॐ फट् छित्वा कुशान्द्वि
जः सर्वदा सर्वकार्ये प्रयोजयेदेकदापरान् मंत्रस्तु विरिंचिना सहोत्पन्न परमेष्ठिनिसर्गज दह पापा
नि सर्वाणि दर्भ स्वस्तिकरो भव भाद्रशुक्लप्रतिपदाकृत्यं नारदीये भाद्रशुक्लप्रतिपदि जपेन्नाम्नां सहस्रकं
व्रतं मौनमयं चक्रे विहाङ्गरुद्रशिवार्चनं नैवेद्यं तु पचेन्मौनी षोडशान्त्रिगुणानि च फलानि पिष्टपक्वानि द
द्याद्विप्राय षोडश देवाय षोडशान्यानि भुंजीत षोडशात्मना सौवर्णं शिवमभ्यर्च्य कुंभोपरि विधानवित् त
त्सर्वं वै गुरुसहितमाचार्याय निवेदयेत् इति कृत्वा व्रतं विप्र देवदेवस्य शूलिनः चतुर्दशाब्दं देहान्ते भुक्त्वा
भोगाञ्छिवं व्रजेदिति अथ भाद्रशुक्लप्रतिपदि स्कंदपुराणोक्तं महत्तमाख्यं शिवव्रतं तदेव मौनव्रतमित्यु
च्यते इदं व्रतं पूर्वविद्धायामेव कर्तव्यं तदुक्तं निर्णयामृते ब्रह्मवैवर्ते च पूजाव्रतेषु सर्वेषु कर्तव्यास्सं
मुखी तिथिरिति मदनरत्ने स्कांदे नंदिकेश्वर उ० देवकेन विधानेन व्रतं पुण्यं महत्तमं कस्मिंस्तिथौ त
त्कर्तव्यं विधानं तद्वदस्व मे स्कंद उ० मासे भाद्रपदे शुक्ले पक्षे च प्रतिपत्तिथौ नैवेद्यं तु पचेन्मौनी षोड-
शत्रिगुणानि च फलानि पिष्टपक्वानि दद्याद्विप्राय षोडश देवाय षोडशैतानि दातव्यानि प्रयत्नतः भु
ञ्जीत षोडश तथा व्रतस्य नियमाश्रयात् सौवर्णं कारयेद्देवं यथाशक्त्या हिरण्मयं सौवर्णकर्षपरिमि
तसौवर्णघटितं यथाशक्ति वा नेत्रत्रयसमायुक्तं जटामंडलमंडितं पंचवक्त्रं चतुर्बाहुं षडस्राक्षस्य-
मध्यगं त्रिशूलं यज्ञसूत्रं च वरदं तं दक्षिणे करे कपालं कुंडिकं वामे शिखायां चंद्रधारिणं पंचामृतेन स्न
पनं कृत्वा संस्थापयेत्ततः कुंभस्योपरि देवेशं शुक्लवस्त्रयुगान्वितं गंधपुष्पैः समभ्यर्च्य फलैर्नानावि
धैस्तथा प्रसीद देव देवेश चराचरजगद्गुरो ॥ वृषध्वज महादेव त्रिनेत्राय नमो नमः पूजामंत्रः देव
स्य च परीधानं दद्याद्धेनुं पयस्विनीं अनेन तु विधानेन यः कुर्याद्व्रतमुत्तमं स राज्यं लभते देव दीर्घ-
मायुस्तथैव च सर्वपापविनिर्मुक्तः शिवलोके महीयते भुक्त्वा तु विविधान्भोगांस्ततः शिवपुरं व्रजेत्
इति महत्तमव्रतं अथास्यामेव स्कंदपुराणोक्तं मौनव्रतम् पार्वतीप्रश्नानंतरं ईश्वर उवाच शृणु देवि प्रव
क्ष्यामि यत्पृष्टोऽहं त्वयाधुना व्रतमेतत्पुरा चीर्णं सीतया राघवेण च अन्यैरपि जनैः सर्वैराचीर्णं व्रतमुत्त
मं नभोमासे व्यतिक्रांते नभस्ये च प्रवर्तिते नभः श्रावणः नभस्यो भाद्रपदः तौ चात्र पूर्णिमांतौ ग्राह्यौ-
एवं कालक्रमेणैव श्रावणी पूर्णिमा गता सद्दिनं प्राप्य विप्रेणोत्सवे तत्रैवाभिधानात् व्रतमेतत्तु कर्तव्यं
षोडशैव दिनानि तु एतच्छ्रुत्वा ततो देवी प्रहृष्टा वाक्यमब्रवीत् पार्वत्युवाच विधानं च पुरा प्रोक्तं व्रतं मौ
नव्रतात्मकं तत्समस्तं समाचक्ष्व प्रसादं कुरु मे प्रभो ईश्वर उ० तद्दिने चैव संप्राप्य सभार्यः सह बांधवैः गत्वा प्र
भातसमये स्नानार्थं जलसन्निधौ तडागे वा नदीतीरे गत्वा प्रस्रवणेऽथवा स्नानं कार्यं तदा सर्वैः शिवध्यानप
रायणैः दूर्वाः षोडश संगृह्य षोडशग्रंथिसंयुताः तत्सूत्रं च करे पुंसः स्त्रिया वामे न दक्षिणे एवं विधानेन कर्तव्यं
यावत्स्यात्प्रतिपद्दिनं तद्दिने चैव संप्राप्ते समाप्त्यर्थं व्रतस्य तु मौनेनैवानयेत्तोयं मौनाद्गोधूमपेषणं मौनेनै
व च कर्तव्यं नैवेद्यं भोजनादिकं सर्वोपस्करमादाय गत्वा च जलसन्निधौ स्नानं कार्यं तदा तत्र नित्यकर्म ततः
परं देवर्षिमनुजानां च पितॄणां चैव तर्पणं पश्चाद्देवाय देवेशि मंत्रैः संपूजयेत्ततः शूलपाणे वृषारूढ अर्द्ध
चंद्रविभूषण तोयेन स्नापितो देव पवित्रं कुरु मां सदा देवैस्तु वंदिता धेनुः सर्वपापप्रणाशिनी तत्क्षीरस्ना
पितो देव नित्यं शोकहरो भव कामतोऽकामतो वापि यन्मया दुष्कृतं कृतं तत्सर्वं विलयं यातु दध्ना स्नानेन मे शिव
रसानामुत्तमं त्वाज्यं देवानां च सदा प्रियं तेन त्वं स्नापितो देव निधिकांतिप्रदो भव यस्योच्चारणमात्रेण तृप्तिं यांति पिता
महाः मधुना स्नापितो देव नित्यं शोकहरो भव यमलोकभयत्रस्ताः शरणं त्वागताः शिव खंडस्नानेन देवेश मां कुरु

घस्समानुषं यस्यदर्शनमात्रेणशुद्धिमायातिजीवितं तेनैवोत्तमतोयेन स्नातोदेहिप्रियंकुरुष्व सुगं
धिचंदनैर्देवकुंकुमेनसमन्वितैः अर्चितोसिमयाभक्त्याशिवलोकप्रदोभव अक्षतान्धूपपुष्पादीन्नानैवेद्यानि
वाससः अंतेचैवातवंलोकमहत्तैरर्चितःकुरु संतानःपारिजातश्चयेचान्येसुरपादपाः तेषांपुष्पैर्मयाद
त्तैर्वसुंदरोगंधवान्शुचिः ईप्सितंमेवरंदेहियत्रचशुभांगतिं शुद्धाशुद्धावरावर्तिराज्येनचसमन्विता दी
पवर्तिप्रदानेनप्रीतस्त्वादीश्वरोमम सर्वमन्नंमयादत्तंदेवानांचसदाप्रियं तेनैवान्नप्रदानेनसुप्रीतोवर
दोभव शाखाप्रशाखाचसिताचदृढोविस्तारभूतायरणीतलेयथा ममापिसंतानवरंतथात्वयंकुरुषदेवे
शिवस्तनेनेन नानाविधंफलंसुवंशसपुष्पाक्षतचंदनं भक्त्यापरमयादत्तंगृहाणत्वंसुरेश्वर जन्मजन्मां
तरेष्वेवमावाभावेनयत्कृतं दानंदेवतत्सर्वंशंभोत्वांशरणंगतः एतत्सर्वंतुमौनेनशुद्धोभूत्वासमाहितः
शिवपूजांप्रकुर्वाणःकृतकृत्योभवेन्नरः एवंसंपूज्यविधिनासंकल्पःक्रियतेततः सदासंपन्नपूजायांप्री
तोममशंकरः संप्रीतोभवदेवेशभक्तिग्राह्यसदार्चितः एवंपंचामृतस्नानंयःकारयतिमानवः आज
न्मोपार्जितात्पापान्मुच्यतेनात्रसंशयः विभागेनप्रदातव्यंब्राह्मणायशिवायच आत्मनाचैवभोक्तव्यंपक्वा
न्नंविधिवच्छुभं एवंक्रमेणकर्तव्यंसहपूजनबांधवैः व्रतिनाहितकामार्थंद्विजाभोज्याःसदक्षिणाः दा
तव्येप्रीतिपूर्वेणयाचेत्साक्षिदकेहितं ततश्चशिवपूजादिभावाभावेनयत्कृतं तत्सर्वंममपूर्णंस्यादधर्म-
कामार्थसाधनं पुत्रपौत्रप्रदंह्येतत्सर्वकामप्रदंव्रतं एतत्सर्वंमयाख्यातंत्वदग्रेप्रीतिपूर्वकं श्रुतमा
त्रेणदेवेशिसर्वपापैःप्रमुच्यते इतिमौनव्रतम् ॥ ॥ ॥

भाद्रशुक्लद्वितीयायां शक्रध्वजविधानपूजा नारदीये भाद्रशुक्लद्वितीयायांशक्रध्वजंजगद्विधिं
वजयित्वाविधानेनसर्वक्रतुफलंलभेत् भविष्यपुराणे भाद्रशुक्लतृतीयामधिकृत्योक्तं माघेभाद्र
पदेवापिस्त्रीणांधन्याःप्रचक्षते गुडाष्टयास्तुदातव्यामासिभाद्रपदेतथा तृतीयायांपायसंवावासुदे
वस्यतुष्टये इयंमन्वंतरादि भारते यामन्वाद्यायुगाद्याश्चतिथयस्तासुमानवः स्नात्वादत्वाचहुत्वाचज
प्त्वाचानंत्यमश्नुते ॥ अथास्यांहरितालव्रतं नारदीये भाद्रशुक्लतृतीयायांव्रतंवैहारितालिकं कु
र्यात्द्रव्यविधानेनपाद्यार्घ्यंचमपूर्वकम् व्रतस्तुकांचनेपात्रेराजतेवापिताम्रके वैणवेमृण्मये
वापिविन्यस्यान्नंसदक्षिणं सफलंचसवस्त्रंचद्विजायप्रतिपादयेत् तदंतेपारणंकुर्यादिष्टबंधुज
नैःसह एवंकृतव्रतानारीभुक्त्वाभोगान्मनोरमान् व्रतस्यास्यप्रभावेणगौर्याःसहचरीभवेत् सौभा
ग्यद्रव्यवस्त्राणि वंशपात्राणिषोडश दातव्यानिप्रयत्नेनब्राह्मणेभ्योयथाविधि अन्येभ्योविप्रवर्येभ्योद
क्षिणांचप्रयत्नतः भूयसींचततोदद्याद्विप्रेभ्योदेवितुष्टये एवंयाकुरुतेनारीव्रतंसौभाग्यवर्द्धनं सातु
देविप्रसादेनसौभाग्यंलभतेध्रुवं यदातृतीयाभाद्रेतुहस्तर्क्षसहिताभवेत् ब्रह्मगौरीव्रतंनामसमु
द्दिष्टंतुपौराणैः धर्मेणाहरिणावेतिबोध्यं तथाकोटीश्वरंनामव्रतंप्रोक्तंपिनाकिना लक्षेश्वरीतिच
तथातद्विधानमथोच्यते अस्याव्रतंतुसंप्राप्तेयावद्वर्षचतुष्टयं उपवासेनकर्तव्यंवर्षेवर्षेतुनारद
अखंडानांतिलानांतु तंडुलानांचनारद लक्षमेकंविशोध्याथक्षिपेत्पयसिसंस्कृते तस्यैकेनविनिर्मायदे
वीमूर्तिंसुशोभनां प्रकारैर्गंधपुष्पाणांपुष्पमालाविभूषितां संस्थाप्यपार्वतींतत्रपूजयेद्भक्तिभावतः
गंधैःपुष्पैस्तथाधूपैस्तथानैवेद्यविस्तरैः विविधैश्चफलैर्विप्रनमस्कृत्यक्षमापयेत् ततोविसर्जये
द्देवींजलमध्येचदक्षिणां दद्याद्विधिवद्विप्रेभ्योभुंजीयाच्चपरेहनि इतितेकथितंविप्रलक्ष्यकोटी
श्वरीव्रतं गौरीलोकंप्रयातीहव्रतस्यास्यप्रभावतः अतोस्यांतृतीयायांगौरीदेवत्यंव्रतचतुष्टयमु
क्तं ॥ हरितालिकाव्रतं ॥ हस्तगौरीव्रतम् ॥ कोटीश्वरीव्रतम् ॥ लक्षेश्वरीव्रतंच ॥ तत्रशिष्टपरि
गृहीतं हरितालिकाव्रतं तत्रपरविद्धायांकार्यंमुहूर्तमात्रसत्वेपिदिनेगौरीव्रतंपरेऽहनिमाधवी

तेः आयाम शुक्लाश्वणिका कज्जलीहरितालिकाँ चतुर्थीमिश्रिताः स्त्रीभिर्दिवानक्ते विधीयते तृतीयानभसः शु
क्लामथ श्रावणिकाह्वता रंभाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते
इति ब्रह्मवैवर्तात् द्वितीययायुता विद्धा तृतीया न कदाचन कर्तव्या स्त्रीभिस्तात धर्मकामार्थतत्परैः विद्धाये-
कातु रंभाख्या तृतीया पुण्यवर्द्धिनी इति स्कांदोक्तेर्द्वितीया विद्धा निषेधश्चायं नक्तत्रद्वितीयानत्रिमुहूर्तकः किं
तु कलाकाष्ठात्मकोपि तदुक्तं स्कांदे कलाकाष्ठादिमात्रापि द्वितीया संप्रदृश्यते सा तृतीया न कर्तव्या कर्तव्या
गणसंयुतेति अतएव स्वल्पापि तृतीया चतुर्थीयुता कार्या अयं चाल्पवेध प्रयुक्तो निषेधो गौरीव्रतविष
यः विद्धायैकातु रंभाख्या इति पर्युदासेन त्वेतत्सदृशानामेव व्रतानां ग्रहणप्रतीतेः इयं मन्वादिः भाद्र
स्य कज्जली कृष्णा शुक्ला च हरितालिकेति दिवोदासोदाहृतवचनात् अथ हरितालिकाव्रतविधिः मास
पक्षाद्युल्लिख्य मम समस्तपापक्षयार्थं सप्तजन्मारोग्यसौभाग्यादिवृद्धये उमामहेश्वरसायुज्यतासिद्ध्यर्थं ह-
रितालिकाव्रतमहं करिष्ये तत्रादौ गौरीयुक्तं महेश्वरं संपूजयिष्ये ॥ अथ ध्यानं पीतकौशेयवसनां हेमाभां
कमलासनां भक्तानां वरदां गौरीं सशिवां चिंतयाम्यहं १ मंदारमालाकलितालकायै कपालमालांकित
शेखराय दिव्यांबरायै च दिगंबराय नमः शिवायै च नमः शिवाय २ इति ध्यात्वा ॥ देवदेवि समागच्छ प्रा
र्थयेहं जगन्मये इमां मयाकृतां पूजां गृहाण सुरसत्तमे शिवगौरीभ्यां नमः इत्यावाहनं ॥ भवानि त्वं महादे-
वि सर्वसौभाग्यदायके अनेकरत्नसंयुक्तमासनं परिगृह्यतां इत्यासनं ॥ सुचारु शीतलं दिव्यं नानागंधा
धिवासितं पाद्यं गृहाण देवेशि महादेवि नमोस्तु ते पाद्यं ॥ श्रीपार्वति महाभागे शंकरप्रियवादिनि अ-
र्घ्यं गृहाण कल्याणि भर्त्रा सह पतिव्रते इत्यर्घ्यं ॥ गंगाजलं समानीतं सुवर्णकलशे स्थितं आचम्यतां महा-
भागे रुद्रेण सहितेनघे इत्याचमनं ॥ गंगासरस्वतीरेवाकावेरीनर्मदाजलैः स्नापितासि मया देवि तथा
शांतिं कुरुष्व मे स्नानं ॥ आप्यायस्वेति पयः दधिक्राव्णेति दधि घृतमिति घृतं मधुवातेति मधु स्वादुः पवे
ति शर्करा पंचामृतं समानीतं पयोदधिघृतं मधु शर्करां जलसंयुक्तं स्नानार्थं प्रतिगृह्यतां पंचामृत
स्नानं वरुणस्येति शुद्धस्नानं हरिद्रा सर्षपद्रव्यैरुद्वर्तनं पुनराचमनं शिवगौरीभ्यां नमः सर्वसत्वा
धिके रम्ये लोकलज्जानिवारणे मयोपपादिते देवि वाससी परिगृह्यतां वस्त्रं कर्पूरागुरुसंघृष्टं कुंकु
मादिसमन्वितं कस्तूरिकासमायुक्तं चंदनं प्रतिगृह्यतां गंधं रंजिताः कुंकुमाद्येन अक्षताश्चातिशोभ
नाः ममैषां देवि दानेन प्रसन्ना भव सर्वदा अक्षताः मल्लिकाबकुलचंपकपाटलापुन्नागजातिकर
वीररसालपुष्पैः बिल्वप्रवालतुलसीदलमालिकाभिस्त्वां पूजयामि जगदीश्वरि मे प्रसीद पुष्पाणि
देवद्रुमरसोद्भूतः कृष्णागुरुसमन्वितः आनीतोयं मया धूपो भवानि प्रतिगृह्यतां धूपः त्वं ज्योतिः सर्वदे
वानां तेजसां तेज उत्तमं आत्मज्योतिः परं धाम दीपोयं प्रतिगृह्यतां नैवेद्यं पुनराचमनं श्रीशिवाभ्यां
नमः मलयाचलसंभूतं कर्पूरेण समन्वितं करोद्वर्तनकं चारु गृह्यतां जगदीश्वर करोद्वर्तनं इदं
फलमिति फलं कर्पूरैलालवंगादि तांबूलीदलसंयुतं क्रमुकस्य फलं देवि तांबूलं प्रतिगृह्यतां तां
बूलं हिरण्यगर्भेति दक्षिणाद्रव्यं वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममंडितं पुष्परागसमायुक्तं काच
नं प्रतिगृह्यतां सुवर्णमंत्रपुष्पं चंद्रादित्यौ च धरणी विद्युदग्निस्तथैव च त्वमेव सर्वतेजांसि आर्तिक्यं प्रति-
गृह्यतां नीराजनं अथ नामपूजा उमायै नमः गौर्यै नमः पार्वत्यै नमः जगदात्र्यै नमः जगत्प्रतिष्ठायै नमः
शांतिरूपिण्यै नमः हराय नमः महेश्वराय नमः शंभवे नमः शूलपाणये नमः पिनाकधृते नमः शि-
वाय नमः पशुपतये नमः महादेवाय नमः इति पुष्पांजलिः यानि कानि च पापानि जन्मांतरकृतानि
च तानि सर्वाणि नश्यंति प्रदक्षिणपदे पदे इति प्रदक्षिणा ॥ अन्यथा शरणं नास्ति त्वमेव शरणं मम त
स्मात्कारुण्यभावेन रक्ष मां परमेश्वरि इति नमस्कारः ततो वेणुपात्रस्थं वायनं दद्यात् अन्नं सौवर्ण

पात्रस्थं फलवस्त्रसदक्षिणं वायनं गौरि विप्राय ददामि प्रीतये तव सौभाग्यारोग्यकामानां सर्वसंपत्स
मृद्धये गौरीगिरीशतुष्ट्यर्थं वायनं ते ददाम्यहं प्रतिगृह्ण द्विजश्रेष्ठ संपूर्णफलदायक त्वत्प्रसादात्तु स्वेष्ट
मुच्येऽहं सर्वपातकात् इति वायनदानं आचार्याय च गां दद्यात्सवत्सां च पयस्विनीं शक्त्या च दक्षिणां दद्या
द्व्रतसंपूर्तिहेतवे अथोपवासनिवेदनं निराहारोऽद्य देवेश उमाकांत जगद्गुरो भोक्ष्यामि श्वो जगन्नाथा-
स्मिन्हरितालिकाव्रते कथां श्रुत्वा तदनंतरं प्रतिमादानं अथ कथा नारायणं नमस्कृत्य सूत उवाच मंदार
मालाकुलितालकायै कपालमालांकितशेखराय दिव्यांबरायै च दिगंबराय नमः शिवायै च नमः शिवाय
कैलासशिखरासीनं गौरी पप्रच्छ शंकरं प्रपन्नास्मि जगन्नाथ तथ्यं ब्रूहि मम प्रभो केन व्रतप्रभावेन तपो
दानेन शंकर अनादिमध्यनिधनो भर्ता त्वं जगतः प्रभुः मयाऽप्राप्तोऽसि देवेश न जाने तत्सदाशिव कथयस्व
प्रसादेन यद्यहं तव वल्लभा ईश्वर· शृणु देवि प्रवक्ष्यामि तवाग्रे व्रतमुत्तमं येन व्रतप्रभावेन प्राप्तमर्द्धासनं
प्रिये यत्कृतं मम सर्वस्वं कथयामि तव प्रिये यथा चोडुगणे चंद्रो ग्रहाणां भानुरेव च वर्णानां तु यथा
विप्रो देवानां विष्णुरुत्तमः नदीनां तु यथा गंगा पुराणानां तु भारतं वेदानां तु यथा साम इंद्रियाणां मनो
यथा पुराणवेदसर्वस्वमागमेषु यथोदितं तदेकाग्रेण मनसा शृणुष्वेदं सनातनं येन पुण्यप्रभावेन प्रा
प्तमर्द्धासनं मम तत्सर्वं कथयिष्यामि त्वं मम प्रीयसी यत भाद्रे मासि सिते पक्षे तृतीया हस्तसंयुता तद
नुष्ठानमात्रेण सर्वान्कामानवाप्नुयात् शृणु सर्वं यथा देवि त्वया तस्यामनुष्ठितं तत्सर्वं कथयिष्यामि य-
था वृत्तं हिमाचले श्रीपार्व· कथं सर्वं मया चीर्णं व्रतानामुत्तमं व्रतं तत्सर्वं श्रोतुमिच्छामि त्वत्सकाशाद्वृषध्वज
ईश्वर· नानापक्षिगणैर्युक्तो नानामृगनिषेवितः यत्र देवाः सगंधर्वाः सिद्धचारणगुह्यकाः विहरंति प्र
यासार्थं गंधर्वा गीततत्पराः स्फाटिकैः कांचनैः शृंगैर्मणिवैडूर्यभूषितैः भुजैर्लिखन्निवाकाशं सुहृदो मं
दरो यथा हिमेनावृतः सर्वो गंगाध्वनिविराजितः तत्समासे सो यत्र शोभमानो नगेश्वरः तत्र त्वं पार्वती
बाल्ये आचरंती महत्तपः द्वादशाब्दानि देवेशि धूम्रपानमधोमुखी भूत्वा त्वं पतिरित्येवं मदाराधनत
त्परा संवत्सरचतुःषष्टिं पक्वपर्णाशनं त्वया दृष्ट्वा तातस्तु ते कष्टं दुःखितश्चिंतितो भृशं कस्मै देया
मया कन्या एवं चिंतातुरोऽभवत् इत्येवं चिंतयाविष्टे देवर्षिर्नारदोऽभ्यगात् पाद्यार्घ्याचमनादीनि नार
दाय ददौ गिरिः हिमवानुवाच किमर्थमागतः स्वामिन्वद त्वं मुनिसत्तम महाभाग्येन संप्राप्तं त्वद
यागमनं प्रभो अद्य मे सफलं जन्म अद्य मे सफलाः क्रियाः गतं चाद्य जडत्वं मे यज्ञातं तव दर्शनं गता
द्य मानसी चिंता यया हं दुःखितो भृशं कन्यारत्नमिदं कस्मै देयं तद्ब्रूहि मे मुने नारद उवाच शृणु शै
लेंद्र महाकंपि विष्णुना प्रेषितो ह्यहं योग्यं योग्याय दातव्यं कन्यारत्नमिदं त्वया वासुदेवसमो नास्ति ब्रह्म
सूर्यशिवादिषु चतुर्वर्गप्रदस्यैव दीयतां मम संमतं हिमवानुवाच वासुदेवसमो देवः कन्यां प्रार्थय-
ते यदि तस्मै देया मया कन्या त्वदागमनगौरवात् इत्येवं गदितं श्रुत्वा वैकुंठं नारदो ययौ प्रीतः पीतांब
धरं शंखचक्रगदाधरं चतुर्भुजं वासुदेवं नमस्कृत्याभ्यभाषत नारद· शृणु देव विवाहार्थं गंतव्यं शैले
जां प्रति तेन दत्तं प्रतिज्ञातं कन्यारत्नं सुशोभनं हिमवांस्तु तदा गौरीमुवाचातीवहर्षितः दत्तासि त्वं म
या देवि देवाय गरुडध्वजे श्रुत्वा वाक्यं पितुर्देवी सख्या सार्द्धं वनांतरं गता सानशनं कृत्वा तपस्तेपे सु
दुःखिता सख्युवाच किमर्थं नगपुत्रि त्वं दुःखिता तप्यसे पुनः को वा कामोऽभिलषितः सखि जाने न-
वै शुभे पार्वत्युवाच सखि शृणु महान्कामो मनसा चिंतितो मया अल्पेन तपसा किं स प्राप्यते माहश्वे
खलु अतो मया सह तु न अलततु वनांतरे सख्युवाच को वा कामोऽभिलषितो योऽल्पेन तपसा नरैः
न प्राप्यते तं मे ब्रूहि उपायं चिंतयामि वै ॥ पार्वत्युवाच ॥ कैलासशिखरासीनं देवदेवं वृषध्व-
जम् भर्तृत्वेनैव मनसा कामयेऽहं न संशयः सोऽयं कामो महाननघ मे तातेन कृतोऽन्यथा तस्मादे-

रूपरित्यागं करिष्येहं न संशयः पार्वत्या वचनं श्रुत्वा सखी वचनमब्रवीत् न गच्छ त्वमिमहद्भाग्यं प्रार्थिता वि-
ष्णुना यतः स सेव्यो देवतैः सर्वैर्महेंद्रादिसुरोगमैः यस्यैकगुणलेशेन गुणवंतो भवंति हि सगुणानामनं-
तत्वादनंत इति विश्रुतः देवानां कन्यका भद्रे स्वकीयां चेष्टदेवतां संत्यज्य त्वमिमं इति प्रार्थयंति दिवानिशं अ-
तिभाग्यवशाद्देवि भाविष्यं प्राप्यते यथा किं त्वया पापसंमूढा भिक्षार्थं गम्यतेन्यतः प्राप्यापि कामदं देव-
प्रार्थ्यते कामदाहकः अस्ति का चित्क्वचिदस्यास्त्रिलोक्यां त्वद्दिना प्रिये नरोत्तमाय दत्तासि न वपित्रा शुभं कृतं
माशोचस्व निवर्त्तस्व जानासि त्वं गुणांस्तयोः आमितास्य च केन त्वं स्पृष्ट एवैकमनानचे किरीटी केशवो नि-
त्यं जटी मृत्युंजयो न चे केशवः सुमुखो भद्रे स च भीममुखः सदा सुपंक्तिरत्नदंतश्च विपंक्तिदीर्घदंष्ट्रकः र-
त्नकुंडलवान्विष्णुर्नागकुंडलवाञ्छिवः विष्णुः कमलनेत्रश्च ज्वलन्नेत्रः सदाशिवः चतुर्भुजधरो विष्णुः स
वै दशभुजो महान् श्रीवत्सलांछनो विष्णुः शिवस्य ब्रह्मणः शिरः पीतांबरधरो विष्णुः स च चर्मांबरः सदा पद्म-
पाणिर्ध्रुवा विष्णुः स रुद्रः शूलपाणिधृक् अम्लानपद्ममालः स मुंडमालाप्रियः स च कंठेस्य कौस्तुभं रत्नं तस्य
कंठे विषं सदा वाहनं गरुडो यस्य जरठोक्षा शिवस्य च शेषपर्यंकशायी स चिताभस्मशयः स च गंधर्वध्वनिना
हृष्टो भूतानां रोदनेन सः विष्णुर्भोगी च योगी च कथं कामयसे शिवं पार्वत्युवाच न जानासि विमूढा त्वं योगिनं-
शूलपाणिनं यस्याज्ञा साथ को विष्णुस्त्रिलोकीं पाति तान्यथा राजसेन स्वरूपेण ब्रह्मा सृष्टिं विधाति च ताम-
सेन स्वरूपेण रुद्रो हंति सकलं रुषा गुणानां तस्य वैशिष्ट्यं महत्त्वं वेत्ति कः शुभे यस्याज्ञाकामगो भूत्वा विष्णुः
शेषीस्थारवै पुनः सूकरो भूत्वा तां च दंतैर्दधार वै यद्दत्तान् भुंजते भागान् विष्णुर्भोगीति कथ्यते सहस्र
कमलैः एवं विष्णुनाराधितः शिवः वैकुंठं संश्रयं तेजस्तेन दत्तं निजं क्षणात् इंद्रादीनां तु यो दाता स देवो-
न श्रुतस्त्वया यद्दत्तं च राज्यं तु इंद्रो यो भुंजते सुखं कुबेरेणापि महती श्रीर्वाप्ता वरानने वरुणेन जले पात्येशे-
षः पातालसंस्थितः सूर्यस्तपति भीत्या वै वायुर्वाति दिवानिशं यमः संयमनीं पाति तं देवं किं न वेत्सि य-
स्याज्ञया स्वकालेन मेघा वर्षंति सर्वतः पावकः सर्वदेवानां वदनं वर्त्तते न चे पितरः पितृलोकत्वममि-
नापर्वतेश्वरः चंद्रो रुद्रगणेशत्वं समुद्रो वै गभीरतां सोमः प्रापौषधीशत्वं चंदनश्च सुगंधितां यस्याज्ञया स्व-
कालेपि भवंत्यदेशवर्तिनः वृष्टिः शीतं च धर्मश्च स्वकाले च गमागमं शक्राद्याश्चापि दिक्पालाः स्वां दिशं पा-
लयंति ते येषु कार्येषु ये देवा योजितास्ते तु तत्पराः अन्यथा करणे तेषां स च दंडं विधास्यति परात्परः स
वै देवो निर्गुणः सगुणोपि वा निराकारश्च साकारो योगी भोगी स एव हि केवलो निर्गुणः साक्षी त्वरूपश्चाद्य
रूपवच्च को वेद तस्य तद्रूपं यद्ब्रह्मेति प्रचक्षते ब्रह्माद्या देवताः सर्वा ऋषयश्च तपोधनाः योगिनां त्व
ननिषायेयदर्थं त्यक्तबंधनाः तेपि तस्य न जानंति स्वरूपं स विश्वमूलिनः अतस्तं कामये हृद्वै विपत्तिं पा-
नाशुभे ॥ सख्युवाच सम्यक्कामोभिलषितस्तदर्थे त्यक्तजीविता यत्रैव निश्चिता बुद्धिः सकामो भवति ध्रुवं
ममापि च महद्भाग्यं यतस्त्वत्कर्मकारिका किंचिदिच्छाम्यहमिच्छामि त्वयाचे यत्नेवचः श्वेविकाष्ठजनंक
यं तन्मया कामदं श्रुतं तवेष्टदात्री या देवी सापि सख्या प्रयत्नतः तमपि त्वनुशृङ्गे देवि मयि प्रीतिरनुत्तमा अ
उक्तादानमात्रेण निसं सफलतां नय करिष्याम्यहमप्येतन्नैर्ध्याः सुजनमुत्तमं तथेति संमते कृत्वाया-
तावत्र महावनं पिता निरीक्षयामास हिमवान् स्वगृहे गृहे केन नीतानु सा पुत्री देवदानवकिन्नरैः स
संकृतं च नक्षये किं दास्ये गरुडध्वजे इत्येवं चिंतयाविष्टो मूर्छितो निपपात ह हाहाकृत्वा ततो लोकः
प्रभावंति गिरिश्रंति आगत्य मुनयः सर्वे पप्रच्छुस्तं हिमालयं किमर्थं मूर्छितांशातः कथयस्वहरिस्थितिं।
हिमवानुवाच यद्दृष्टः खसंभ्रांतः कन्यारत्नं हृतं मम दृष्टा वा कालसर्पेण सिंहव्याघ्रेण वा हृता प
तितः शोकसंतप्तो वातेनेव यथा तरुः निर्गतो गिरिराजस्तु दृष्टिश्च गवेषणे गत्वाथ विपिने घोरे रसिं
हृष्टाई लसंकुलं व्याघ्रसिंहैश्च भल्लूकैर्यूथमानैर्महागजैः तस्मिन्वने महाघोरे गत्वा तां सरिदिभिर्युतां

दृष्टा तत्र नदी रम्या वनमध्ये गुहान्तरे उपविष्टालिभिः सार्द्धमन्नाहारविवर्जिता संस्थाप्य बालुकापिंडं पा-
र्वत्या सहितं मम हस्तनक्षत्रसंयुक्तामासि भाद्रे सिताजया तत्र वाद्यैर्गीतैर्नरा जागरेण हृतं तेन व्र-
तप्रभावेनासनं चलितं मम प्राप्तोहं देवि तत्रैव यत्र त्वं सखिभिः सह करोषि मम प्रीत्यर्थं मद्गंधादि-
लेपनं गुरूपदिष्टमार्गेण तेन तुष्टोस्म्यहं सदा प्रसन्नोस्मि वरं ब्रूहि मया प्रोक्तं वरानने ॥ पार्वत्युवाच ॥
प्रसन्नोसि यदा देव ददस्व मनसेप्सितं सर्वज्ञस्य न चाज्ञातं किंचिदस्ति महीतले ॥ महादेव उवाच ॥
अहं भर्त्ता भवेयं वै इति हेतोः कृतं व्रतं तन्माप्स्यसि त्वं सुभगे न वृथा मम दर्शनं व्रतमेतत्करिष्यति या ना-
री दृढमानसा ॥ प्राप्यापि सकलान्कामान्युज्यते ब्रह्मणा सह इत्युक्त्वा च ततो देवि कैलासमहमागतः
ततः प्रभातसमये नद्यामेव विसृज्य तां पारणं तु ततः कृत्वा यत्र त्वं वनमध्यमे पुनस्तत्रैव सुप्तासि स-
ख्या सार्द्धं सरित्तटे हिमवानपि तत्रैव संप्राप्तस्त्वद्गवेषणात् पश्यन्नपि च चतुर्दिक्षु अन्नपानविवर्जितः
सुप्तं दृष्ट्वा नदीतीरे हरतः कन्यकाद्वयं उत्थाप्य त्वां गमानीय रुदन्तीं त्वामुवाच ह सिंहव्याघ्रादिभिर्जुष्टं से-
वितं हिमवद्वनं प्रविष्टासि किमर्थं त्वं प्रिये किं करवाणि ते श्रीपार्वत्युवाच शृणु तात मया तात त्वं मां
दत्तासि शूलिने तदन्यथा कृतं तात तेनाहं वनमागता तथेत्युक्तं हिमवता त्वमानीता गृहं प्रति तेना-
हूतस्त्वहं देवि विवाहार्थं त्वया सह ॥ श्रीपार्वत्युवाच किं कृतं गिरिणा तत्र विवाहोभूत्कथं मम त्व-
यात्र किं कृतं नाथ श्रोतुमिच्छामि विस्तरात् ॥ श्रीमहादेव उवाच ऋषयः सप्त भो देवि त्वदर्थं प्रेषिता म-
या दृष्टास्तेन गराजेन पद्मवन्मुदिताननात् कृतमागमनं जातं भवतां ज्ञानं च त्वत्पिता अन्यथा मह-
तां प्रिजेडानां वै कथं भवेत् ऋषय ऊचुः नगराज वयं तावच्छंकराज्ञाविधायिनः त्वत्समीपे तु
कन्यार्थं दीयतां यदि रोचते गिरिरुवाच ॥ महादेवो यदा मत्तः कन्यां प्रार्थयते तदा कन्यया च कृतं सम्य-
क् यदर्थं उग्रं तपः अतस्तेन प्रसादोस्याः कर्त्तव्यः शूलपाणिना ऋषिभिर्गीयते नित्यं स देवो भक्तवत्स-
लः इति श्रुत्वा गता विप्रा महादेवस्य सन्निधौ तद्वृत्तान्तं समाकर्ण्य आजगाम महेश्वरः आजग्मुस्तत्र वै
सर्वे देवा इन्द्रपुरोगमाः पातालादागतः शेषः क्षीराब्धिशयनो विभुः यत्र यत्र स्थिता देवा गंधर्वाः सिद्धचार-
णाः ते तत्स्थानात्समाजग्मुस्तन्महोत्सवसंभ्रमाः विष्णुना च धृतं छत्रं ब्रह्मणा श्वेतं शतशलाकजं इंद्रो वै चामरं दि-
व्यं कुवेरः कोशधारकः स्वफणामणिभिः शेषो दीपमालां बिभर्ति सः सहस्रयोजनायामं तेनाकारि सुमंड-
पं यत्कस्तंभमयं प्रोक्तं योजनानां शताधिकं ब्रह्माद्या देवताः सर्वे मंत्राशिषमचीकरन् जयशब्दः कृतो देवैर्ऋ-
षयश्च तपोधनाः नृत्यंत्यप्सरसस्तत्र गंधर्वा ललितं जगुः वाद्यानां स्वनितं मेघो मंदं मंदं च गर्जति विक-
रंश्च चतुर्दिक्षु तुषारकुसुमानि सः देवकन्या नागकन्या लाजैस्तु कृतमंगलाः सरस्वती रमा देवी श-
च्याद्या देवतास्त्रियः स्वर्णपात्रे निधायाथ पुष्पचंदनमक्षतान् दधि दूर्वां च सिद्धार्थान्हरिद्रां रत्नदीपिकां
नीराजनं प्रकुर्वंति गिरिजायाः शिवस्य च पुष्पवृष्टिं प्रकुर्वंति देवास्तव्याप सर्वतः महोत्सवः प्रवृत्तो
भूद्धिमालयस्थिते तथा गिरिणा च तदा तस्मै दत्तं जामातृतोषकं गजानां दशसाहस्रमश्वानां नियुतं त-
था अनर्घ्याण्यपि रत्नानि दत्तानि तस्मै गिरीश्वरः मुक्तानां दशकोट्यश्च प्रवालकोट्यश्च विद्रुमाः हीरकं दश
कोट्यस्तु पारिवर्हं ददौ गिरिः असंख्याताश्च वै दास्यो मनःसंतुष्टिकारिकाः मेनाकस्तु स्त्रियार्थे वै गिरिणा
प्रेषितः स्वयं एवं गिरिजया सार्द्धं कैलासमहमागतः आगत्य देवतान्सर्वान्स्वस्वस्थाने समादिशम् ॥ शिव
उवाच ॥ तेन व्रतप्रभावेन सौभाग्यमतुलं त्वया प्राप्तमर्द्धासनं देवि साधितं सुमहत्तरं अद्यारभ्य व्रतं देवि न
कस्यापि निवेदितं यद्गोप्यं परमं देवि यन्नोक्तं कस्यचिन्मया तदुक्तं त्वत्समीपे तु त्वत्सौभाग्यविमोहनात्
व्रतराजस्य नामापि शृणु देवि यथाभवत् आलिभिर्हरिता तस्मात्तस्मात्सा हरितालिका पार्वत्युवाच
केन प्रवर्त्तितं नाथ विधिं चास्य वद प्रभो किं पुण्यं किं फलं चास्य कैश्चैव क्रियते नरैः महादेव उवाच

शृणु देवि विधिं वक्ष्ये नारीणां व्रतमुत्तमं कर्तव्यं तु प्रयत्नेन यदि सौभाग्यमिच्छति तोरणादि च कर्तव्यं कद
लीस्तंभमंडितं आच्छाद्य पट्टवस्त्रैर्वा नानावर्णविचित्रकैः चंदनानि सुगंधीनि लेपयेद्गृहमंडपे शंखभेरी
मृदंगैश्च वादित्रैर्बहुभिः स्वनैः नानामंगलचारश्च कर्तव्या मम सद्मनि स्थापयेल्लिंगमातत्र यावन्मास
दिनं मम पूजयेद्बहुभिः पुष्पैर्गंधधूपैर्मनोहरैः नानाकारैश्च नैवेद्यैर्नानाभक्ष्योपचारकैः नानाप्रहार-
तांबूलै रूपकासमन्वागरैः नारिकेलैः पूगफलैर्दाडिमैः कनकादिभिः वीजपूरैः सनारंगैरन्यैश्चर्तुभ
वैस्तथा कालदेशोद्भवैः सर्वैः फलैश्च विविधैः शुभैः गंधपुष्पैस्तथा दीपैर्मंत्रेणानेन पूजयेत् नमः
शिवाय शांताय पंचवक्त्राय शूलिने नंदिभृंगिमहाकालगणयुक्ताय शंभवे शिवायै हरकांतायै प्र-
कृत्यै सृष्टिहेतवे शिवायै सर्वमंगल्यै शिवरूपे जगन्मये शिवे कल्याणदे नित्यं शिवरूपे नमो नमः
शिवरूपे नमस्तुभ्यं शिवायै सततं नमः नमस्ते ब्रह्मरूपिण्यै जगद्धात्र्यै नमो नमः संसारभयसंताप
त्राहि मां सिंहवाहिनि येन कामेन देवि त्वं पूजितासि महेश्वरि राज्यसौभाग्यसंपत्तिं देहि मामव पार्वति
सर्वोक्तेन विधानेन पूजयेदुमया सह कथां श्रुत्वैकचित्तेन दद्याद्दानानि भूरिशः आचार्याय प्रदातव्यं
वस्त्रयेतु हिरण्यकं अन्येषां दीयते दानं स्त्रीणां वा भूषणादिकं ततो वाद्येन गीतेन नेतां निशां कौतुकादिना
नयेद्व्रतं द्वितादेवि यदि सौभाग्यमिच्छति तस्मिन्दिने या नारी भोजनं कुरुते यदि सप्तजन्म भवेद्वंध्या वै
धव्यं च पुनः पुनः दारिद्र्यं पुत्रशोकं च कर्कशा दुःखभागिनी पतेत्सा नरके घोरे नोपवासं करोति या
कांचनं राजतं ताम्रं वैणवं वापि मृन्मयं संपुटीकृत्य तन्मध्ये फलानि विविधानि च हरिद्रां कुंकुमं चैव
अंजनादि प्रकल्पयेत् वस्त्राण्याभरणादीनि तांबूलं सहिरण्यकं कृत्वा संछाद्य वस्त्रेण प्रदद्याद्ब्राह्मण-
स्त्रियै प्रीत्यर्थं तव देवेशि दानं देयं स्वशक्तितः दत्वानेन विधानेन पारणं तदनंतरं एवं विधिं या कु
रुते च नारी भर्त्रा समं सा रमते सुखेन विनाशकाले मम तुल्यरूपं सायुज्यमुक्तिं लभते सुखेन अ-
श्वमेधसहस्राणि वाजपेयशतानि च कथाश्रवणमात्रेण तत्पुण्यं लभते नरः एतत्ते कथितं देवि वि
धानं सरहस्यकं कोटियज्ञकृतं पुण्यमस्यानुष्ठानमात्रतः ॥ इति भविष्योत्तरपुराणे हरितालिकाव्रतं
अथोद्यापनं पार्वत्युवाच उद्यापनविधिं ब्रूहि तृतीयायाः सुरेश्वर भक्तितः श्रोतुमिच्छामि व्रतसंपूर्ति
हेतवे महादेव उवाच उद्यापनविधिं वक्ष्ये येन सांगफलं लभेत् प्राप्ते भाद्रपदे मासि तृतीया हस्तसौम
युक्ते तस्यां प्रयत्नेन यथोक्तं सर्वमाचरेत् सर्वतोभद्रसंज्ञं वा लिंगतोभद्रमेव च कारयेद्विधिवद्वे
दिमंडलस्य प्रपूजनं तस्याग्रे स्थापयेत्कुंभं व्रणच्छिद्रविवर्जितं तस्योपरि न्यसेद्देवं पार्वत्या सहितं शिवं
वस्त्रयुग्मेन संवेष्ट्य पूर्ववत्पूजनं चरेत् ततः प्रभातसमये युग्मान्यष्टौ निमंत्रयेत् कृत्वा तु षोडशादिन
युग्मांश्च पक्वान्नाद्यैश्च पूजयेत् सौभाग्यद्रव्यवस्त्राणि वंशपात्राणि षोडशोक्तं तच्छक्त्यपरतया शेषं
आचार्यं वरयेत्तत्र चतुर्भिर्ब्राह्मणैः सह स्थंडिलं तु प्रकर्तव्यं हस्तमात्रं सुशोभनं ततो होमं प्रकुर्वीत
शतं दूर्वासमित्तिलैः पृथक्पृथक् शतं कृत्वा मंत्रेण जातवेदसे पातयित्वा वसोर्धारां पुनः पूजनमाचरेत्
नमः प्रणतपालाय नमः कैलासवासिने नमो वेदांतवेद्याय उमादेहार्धधारिणे उत्पत्तिस्थितिसंहारक
त्रैनेत्रे नमोस्तु ते येन कामेन भो देव पूजितश्चोमया सह व्रतं संपूर्णतां यातु त्वत्प्रसादाज्जगद्गुरो इति
स्तुत्वा महादेवं प्रणिपत्य पुनः पुनः गोभूहिरण्यदानानि वस्त्रदानान्यनेकशः सहिरण्यं सवस्त्रं चोपा
ध्याय दद्याच्च भक्तितः उमामहेश्वरो देवः प्रीयतामेन मो नमः ततः कुर्यात्स्वयं देवि बंधुभिः सह भोजनं
सर्वान्कामानवाप्नोति सौभाग्यं लभते ध्रुवं मृतवत्सा तु या नारी पुत्रं प्राप्य चिरायुषं न पुनर्गर्भमायाति
सा गौर्या सह लीयते ॥ इति स्कंदपुराणे उमामहेश्वरसंवादे उद्यापनहरितालिकाव्रतकथा संपूर्णा ॥
अथोद्यापने पार्वत्युवाच उद्यापनविधिं ब्रूहि तृतीयायाः सुरेश्वर भक्तितः श्रोतुमिच्छामि व्रतसंपूर्तिहेतवे ॥

ह्यत्र नदी रम्या वनमध्ये गुहान्तरे उपविष्टालिभिः सार्द्धमन्नाहारविवर्जिता संस्थाप्य वालुकापिंडं पा-
र्वत्या सहितं मम हस्तनक्षत्रसंयुक्ता मासि भाद्रे सितान्यया तत्र वाद्येन गीतेन रात्रौ जागरणं कृतं तेन व्र-
तप्रभावेन आसनं चलितं मम प्राप्तोहं देवि तत्रैव यत्र त्वं सखिभिः सह करोषि मम प्रीत्यर्थं मद्गंधादि-
लेपनं गुरूपदिष्टमार्गेण तेन तुष्टोऽभवं मुदा प्रसन्नोस्मि वरं ब्रूहि मया प्रोक्तं वरानने ॥ पार्वत्युवाच ॥
प्रसन्नोसि यदा देव ददस्व मनसेप्सितं सर्वज्ञस्य न चाज्ञातं किंचिदस्ति महीतले ॥ महादेव उवाच ॥
अहं भर्त्ता भवेयं वै इति हेतोः कृतं व्रतं तत्प्राप्स्यसि त्वं सुभगे नह्यथा ममदर्शनं व्रतमेतत्करिष्यंति या ना-
र्यो हृष्टमानसाः प्राप्यापि सकलान्कामान्युज्यंते ब्रह्मणा सह इत्युक्त्वा च ततो देवि कैलासमहमागतः
ततः प्रभातसमये न याम एव विसृज्य तां पारणं तु ततः कृत्वा यस्मात्त्वं वनमध्यमं पुनस्तत्रैव सुमासि स-
ख्या सार्द्धं सरित्तटे हिमवानपि तत्रैव संप्राप्तस्त्वद्गवेषणात् पश्यन्ययौ चतुर्दिक्षु अन्नपानविवर्जितः
सुमहत्फनदीतीरे हरतः कन्यकाद्वयं उत्थाप्य त्वं गमानीय रुदंतीं ता उवाच ह सिंहव्याघ्रादिभिर्दुष्टैः से-
विते हिमहावनं प्रविष्टासि किमर्थं त्वं प्रिये किं करवाणि ते श्रीपार्वत्युवाच शृणु तात मया ज्ञातं त्वमा-
दत्तासि शूलिने तदन्यथा कृतं तात तेनाहं वनमागता तथेत्युक्त्वा हिमवता त्वमानीता गृहं प्रति तेना
युक्तं स्वं हर देवि विवाहार्थं त्वया सह ॥ श्रीपार्वत्युवाच किं कृतं गिरिणा तत्र विवाहो भूत्कथं मम त्व-
यात्र किं कृतं नाथ श्रोतुमिच्छामि विस्तरात् ॥ श्रीमहादेव उवाच ऋषयः सप्त भो देवि त्वदर्थं प्रेषिता म-
या दृष्टास्तेन नगराजेन पप्रच्छ मुदिताननात् कुत आगमनं जातं भवतां ज्ञानचक्षुषां अन्यथा मह-
तां प्राप्तिर्जडानां वै कथं भवेत् ऋषय ऊचुः नगराज वयं तावच्छंकराज्ञाविधायिनः त्वत्समीपे तु
कन्यार्थं दीयतां यदि रोचते गिरिरुवाच ॥ महादेवो यदा मत्तः कन्यां प्रार्थयते तदा कन्यया च कृतं सम्य-
क् यदर्थं उग्रं तपः अतस्तेन प्रसादोस्याः कर्त्तव्यः शूलपाणिना ऋषिभिर्गीयते नित्यं स देवो भक्तवत्स-
लः इति श्रुत्वा गता विप्रा महादेवस्य सन्निधौ तद्वृत्तांतं समाकर्ण्य आजगाम महेश्वरः आजग्मुस्तत्र वै
सर्वे देवा इंद्रपुरोगमाः पातालादागतः शेषः क्षीराब्धिशयनाद्विभुः यत्र यत्र स्थिता देवाः गंधर्वाः सिद्धचार-
णाः ते तत्स्थानात्समाजग्मुस्तन्महोत्सवसंभ्रमाः विष्णुना च धृतं छत्रं श्वेतं शतशलाकजं इंद्रो वै चामरं दि-
व्यं कुवेरः कोशधारकः स्वफणामणिभिः शेषो दीपमालां विभर्त्ति सः सहस्रयोजनायामं तेनाकारि सुमंड-
पं पंचस्तंभमयं प्रोक्तं योजनानां शताधिकं ब्रह्माद्या देवताः सर्वे मंत्रपाठमचीकरन् जयशब्दं कृतो देवा ऋ-
षयश्च तपोधनाः नृत्यं चाप्सरसस्तत्र गंधर्वा ललितं जगुः वाद्यानां स्वनितं मेघो मंदं मंदं च गर्जति विक-
रंश्च चतुर्दिक्षु तुषारकुसुमानि सः देवकन्या नागकन्या लाजैर्युक्तानमंगलाः सरस्वती रमा देवी श-
च्याद्या देवतास्त्रियः स्वर्णपात्रे निधायाथ पुष्पचंदनमक्षतान् दधि दूर्वां च सिद्धार्थान्हरिद्रां रत्नदीपिकां
नीराजनं प्रकुर्वंति गिरिजायाः शिवस्य च पुष्पवृष्टिं प्रकुर्वंति देवाः सव्यापसव्यतः महोत्सवः प्रवृत्तो
ऽभूद्धिमालयशिरे तथा गिरिणा च तदा तस्मै दत्तं जामातृतोषकं गजानां दशसाहस्रं अश्वानां नियुतं त-
था अनर्घ्यान्यपि रत्नानि ददौ तस्मै गिरीश्वरः मुक्तानां दशकोट्यश्च शतकोट्यश्च विद्रुमाः हीरकं दश-
कोट्यस्तु पारिबर्हं ददौ गिरिः असंख्याताश्च वेदास्या मनःसंतुष्टिकारिकाः मैनाकस्त्वत्प्रियार्थं वै गिरिणा
प्रेषितः स्वयं पर्वं गिरिजया सार्द्धं कैलासमहमागतः आगत्य देवतान्सर्वान्स्वे स्वे स्थाने समादिशम् ॥ शिव
उवाच ॥ तेन व्रतप्रभावेन सौभाग्यमतुलं त्वया प्राप्तमर्द्धासनं देवि साधितं तु महत्तरं अद्यारभ्य व्रतं देवि न
कस्यापि निवेदितं यद्गोप्यं परमं देवि यन्नोक्तं कस्यचिन्मया तदुक्तं त्वत्समीपे तु त्वत्सौभाग्यविमोहनात्
व्रतराजस्य नामापि शृणु देवि यथाभवत् आलिभिर्हरिता तस्मात्तस्मात्सा हरितालिका पार्वत्युवाच
केन सर्वं कृतं नाथ विधिं चास्य वद प्रभो किं पुण्यं किं फलं चास्य केश्चैव क्रियते नरैः महादेव उवाच

शृणु देवि विधिं वक्ष्ये नारीणां व्रतमुत्तमं कर्त्तव्यं तु प्रयत्नेन यदि सौभाग्यमिच्छति तोरणादि च कर्त्तव्यं कद
लीस्तंभमंडितं आच्छाद्य पट्टवस्त्रैर्वा नानावर्णविचित्रकैः चंदनानि सुगंधीनि लेपयेद्गृहमंडपे शंखभेरी
मृदंगैश्च वादित्रैर्बहुभिः स्वनैः नानामंगलचारैश्च कर्त्तव्या मम सद्मनि स्थापयेत्प्रतिमां तत्र पार्वत्या स
हितं मम पूजयेद्बहुभिः पुष्पैर्गंधधूपैर्मनोहरैः नानाकारैश्च नैवेद्यैर्नानाभक्ष्योपचारकैः नानोपहार-
तांबूलैरुपवासप्रजागरैः नारिकेलैः पूगफलैर्दाडिमैः कनकादिभिः बीजपूरैः सनारंगैरन्यैर्ऋतुभ
वैस्तथा कालदेशोद्भवैः सर्वैः फलैश्च विविधैः शुभैः गंधपुष्पैस्तथा दीपैर्मंत्रेणानेन पूजयेत् नमः
शिवाय शांताय पंचवक्त्राय शूलिने नंदिभृंगिमहाकालगणयुक्ताय शंभवे शिवायै हरकांतायै प्र-
कृत्यै सृष्टिहेतवे शिवायै सर्वमंगल्यै शिवरूपे जगन्मये शिवे कल्याणदे नित्यं शिवरूपे नमो नमः
शिवरूपे नमस्तुभ्यं शिवायै सततं नमः नमस्ते ब्रह्मरूपिण्यै जगद्धात्र्यै नमो नमः संसारभयसंतापा
त्त्राहि मां सिंहवाहिनि येन कामेन देवि त्वं पूजितासि महेश्वरि राज्यसौभाग्यसंपत्तिं देहि मामंब पार्वति
एवोक्तेन विधानेन पूजयेदुमया सह कथां श्रुत्वैकचित्तेन दद्याद्दानानि भूरिशः आचार्याय प्रदातव्यं
वस्त्रं धेनुं हिरण्यकं अन्येषां दीयते दानं स्त्रीणां वा भूषणादिकं ततो वाद्येन गीतेन नीता निशा कौतुकादिना
नयेज्जागृता देवि यदि सौभाग्यमिच्छति तस्मिन्नहनि या नारी भोजनं कुरुते यदि सप्तजन्म भवेद्वंध्या वै
धव्यं च पुनः पुनः दारिद्र्यं पुत्रशोकं च कर्कशा दुःखभागिनी पतेत्सा नरके घोरे नोपवासं करोति या
कांचनं राजतं ताम्रं वैणवं वापि मृन्मयं संपुटीकृत्य तन्मध्ये फलानि विविधानि च हरिद्राकुंकुमं चैव
अंजनादि प्रकल्पयेत् वस्त्राण्याभरणादीनि तांबूलं सहिरण्यकं कृत्वा संछाद्य वस्त्रेण प्रदद्याद्ब्राह्मण-
स्त्रियै प्रीत्यर्थं तव देवेशि दानं देयं स्वशक्तितः दत्वानेन विधानेन पारणं तदनंतरं एवं विधिं या कु
रुते चा नारी भर्त्रा समं संसारमते सुखेन विनाशकाले मम तुल्यरूपं सायुज्यमुक्तिं लभते सुखेन अ-
श्वमेधसहस्राणि वाजपेयशतानि च कथाश्रवणमात्रेण तत्पुण्यं लभते नरः एतत्ते कथितं देवि वि
धानं सरहस्यकं कोटियज्ञकृतं पुण्यमस्यानुष्ठानमात्रतः॥ इति भविष्योत्तरपुराणे हरितालिकाव्रतं
अथोद्यापनं पार्वत्युवाच उद्यापनविधिं ब्रूहि तृतीयायास्सुरेश्वर भक्तितः श्रोतुमिच्छामि व्रतसंपूर्ति
हेतवे महादेव उवाच उद्यापनविधिं वक्ष्ये येन सांगफलं लभेत् प्राप्ते भाद्रपदे मासि तृतीया हस्तसाम
युक् तस्यां तत्र प्रयत्नेन यथोक्तं सर्वमाचरेत् सर्वतोभद्रसंज्ञं वा लिंगतोभद्रमेव च कारयेद्विधिवद्द
विमंडलस्य प्रपूजनं तस्याग्रे स्थापयेत्कुंभं मंत्रेण छिद्रविवर्जितं तस्योपरि न्यसेद्देवं पार्वत्या सहितं शिवं
वस्त्रयुग्मेन संवेष्ट्य पूर्ववत्पूजनं चरेत् ततः प्रभातसमये युग्मान्यष्टौ निमंत्रयेत् क्वचित्तु षोडशाहिम
युग्मांश्च पक्वान्नाद्यैश्च पूजयेत् सौभाग्यद्रव्यवस्त्राणि वंशपात्राणि षोडशोन्मितं तच्च कृत्वा परतपाशेयं
आचार्यं वरयेत्तत्र चतुर्भिर्ब्राह्मणैः सह स्थंडिलं तु प्रकर्तव्यं हस्तमात्रं सुशोभनं ततो होमं प्रकुर्वीत
शतनर्वासमितिलैः पृथक्पृथक्शतं कृत्वा मंत्रेणानेन वेदसे पातयित्वा वसोर्धारां पुनः पूजनमाचरेत्
नमः प्रणतपालाय नमः कैलासवासिने नमो वेदांतवेद्याय उमादेहार्धधारिणे उत्पत्तिस्थितिसंहारक
र्त्रे नेत्रे नमोस्तु ते येन कामेन भो देव पूजितश्चोमया सह व्रतं संपूर्णतां यातु त्वत्प्रसादाज्जगद्गुरो इति
स्तुत्वा महादेवं प्रणिपत्य पुनः पुनः गोभूहिरण्यदानानि वस्त्रदानान्यनेकशः सहिरण्यं सवस्त्रं चैते
भ्यो दद्याच्च भक्तितः उमामहेश्वरौ देवौ प्रीयतां मे नमो नमः ततः कुर्यात्स्वयं देवि बंधुभिः सह भोजनं
सर्वान्कामानवाप्नोति सौभाग्यं लभते ध्रुवं मृतवत्सा तु या नारी पुत्रं प्राप्य चिरायुषं न पुनर्गर्भमायाति
सा गौर्या सह लीयते॥ इति स्कंदपुराणे उमामहेश्वरसंवादे उद्यापन हरितालिकाव्रतकथा संपूर्णं॥
अथोद्यापने पार्वत्युवाच उद्यापनविधिं ब्रूहि तृतीयायाः सुरेश्वर भक्तितः श्रोतुमिच्छामि व्रतसंप्रतिदिनवे॥

ईश्वर उवाच ॥ उद्यापनविधिं वक्ष्ये व्रतराजस्य शोभनं यस्यानुष्ठानमात्रेण संपूर्णं हि व्रतं भवेत् च
तुःस्तंभं चतुर्द्वारं कदलीस्तंभमंडितं वेदिकाचामरयुतं कमलैरुपशोभितं चंदनागुरुकर्पूरै-
र्लेपितं धूपितं शुभं मध्ये वितानं बध्नीयात्तं च वर्णैरलंकृतं तन्मध्ये कारयेत्पद्मं पंचवर्णैः सुशोभनैः
तस्योपरि न्यसेद्धीमान् द्रोणेन परिसंमितान् सौवर्णं राजतं ताम्रं कलशं विन्यसेद्बुधः पंचरत्नानि नि
क्षिप्य सर्वौषधिसमन्वितं तस्योपरि न्यसेत्पात्रे सौवर्णं राजतं द्विवा वृषारूढं महादेवं रजतेन विनि-
र्मितं सर्वावयवसंयुक्तां गौरीं हेम्ना विनिर्मितां पूजयेत्तत्र गंधाद्यैः पुष्पैर्नानाविधैः शुभैः रात्रौ जा-
गरणं कुर्यात्कथावाचनपूर्वकं ततः प्रभाते विमले कृत्वा स्नानादिकर्म च पूर्ववच्चार्चयेद्देवं पश्चाद्धो
मं समाचरेत् स्वगृह्योक्तविधानेन कृत्वाग्निं स्थापयेत्ततः आरभेच्च ततो होमं नववस्त्रद्वपुरः सरं तिला
ज्ययवसंमिश्रान्नाज्येन च परिप्लुतान् जुहुयाद्धोरमंत्रेण गौरीमंत्रेण मंत्रवित् अष्टोत्तरशतं वापि
अष्टाविंशतिरेव वा एवं समाप्य होमं तु ततश्चाचार्यं प्रपूजयेत् सुवर्णरत्नवासोभिर्गां च दद्याद्यथाविधि
शय्यां सोपस्करां दद्यादाचार्याय प्रयत्नतः षोडशद्विजयुग्मांश्च पक्वान्नाद्यैश्च भोजयेत् सौभाग्यद्रव्य
वस्त्राणि वंशपात्राणि षोडश दातव्यानि प्रयत्नेन ब्राह्मणेभ्यो यथाविधि अन्येभ्यो विप्रवर्येभ्यो दक्षिणां च प्र
यत्नतः भूयसीं परया भक्त्या प्रदद्याद्विवत्तुष्टये उद्दिश्य पार्वतीशं च सर्वं कुर्यादतंद्रितः बंधुभिः सह भुं
जीत नियतश्चापरेऽहनि एवं या कुरुते नारी व्रतराजं सुमध्यमे सौभाग्यमतुलं तस्याः सप्तजन्मनि संशयः
इति श्रीभविष्योत्तरे हरितालिकाव्रतोद्यापनं ॥ ॥ अस्यामेव तृतीयायां कोटेश्वरीव्रतं ॥ मदनरत्ने
रंभोवाच देवलोके महादेवि गणिकाः सौख्यसंयुताः मर्त्यलोके तथा सर्वाः स्त्रियः सौभाग्यगर्विताः
कथं भाग्यं च भोगांश्च लभंते परमेश्वरि ॥ पार्वत्युवाच शृणु भद्रे परं गुह्यं सर्वकामफलप्रदं दुर्भगाणां
च नारीणां सौभाग्यकरणं परं लक्षेश्वरीति विख्यातं ततः कोटीश्वरीव्रतं तृतीयायां शुक्लपक्षे तु मासि
भाद्रपदे भवेत् तस्या व्रतं तु संग्राह्यं यावद्वर्षचतुष्टयं उपवासेन कर्तव्यं वर्षे वर्षे तु सुंदरि अखंडि
तानां तंदुलानां तिलानां वा सुलोचने लक्षमेकं विविच्याथ क्षिपेत्पयसि शोभने क्षीरसंमिश्रितैः का-
र्या देव्या मूर्तिः सुलोचना कृत्वा तु पुष्पप्राकारं फलपुष्पसुमंडितं संस्थाप्य पार्वतीं देवीं पूजयेद्भक्ति-
संयुतः पूजयेद्विविधैः पुष्पैः कुंकुमागुरुचंदनैः गंधैः पुष्पैश्च धूपैश्च नैवेद्यैर्विविधैस्तथा वस्त्रे-
णैव रत्नेन पूजयेत्परमेश्वरीं उमादेवि नमस्तुभ्यं कात्यायनि नमोस्तु ते नमः शर्वाणि रुद्राणि अ
पर्णे शंकरप्रिये सर्वभूतहिते देवि त्राहि संसारसागरात् ॥ अत्र पूजामंत्रः ॥ नमो लक्षेश्वरि दे
वि कोटीश्वरि नमोस्तु ते गृहाणार्घ्यं मया दत्तं शंकरेण समं मम इत्यर्घ्यमंत्रः ॥ पुरा व्रतमिदं भद्रे इंद्रा-
ण्या च कृतं शुभम् विद्यावल्या च सावित्र्या अरुंधत्या कृतं पुरा दमयंत्या च रोहिण्या कृतं व्रतवरं शुभं
गौरिणीर्भोजयेच्च तथा इंद्राण्येवं सुदीक्षिता गौरिणी सुवासिनी एवं विधिविधानेन कर्तव्यं नियतं व्रतं
न तस्याः स्याच्च दारिद्र्यं न चैवेष्टवियोजनं अष्टपुत्रा भवेन्नारी भर्तारं च गुणाधिकं स्वरूपं गुणिनं कां
तं पंडितं प्रियदर्शनं ईश्वरं चैव राजानं लभेद्दीर्घायुषं प्रियं दातारं चैव भोक्तारं समस्तजनवल्लभं
सुशीलं धार्मिकं शूरं चंद्रवत्प्रियदर्शनं सुरूपा सुभगा चैव सदा पत्युः प्रिया भवेत् सदा पत्या वरारोहा
कुरुते राज्यमुत्तमं अंतकाले समं तेन रमते त्रिदिवे तथा षष्टिवर्षसहस्राणि षष्टिवर्षशतानि वा
इदं कृत्वा पुरेंद्राणी इंद्रं लेभे पतिं प्रियं रोहिणी पतिमालेभे चंद्रं व्रतनिषेवणात् संज्ञा देवी स्वभर्तार-
मादित्यं प्राप्य सत्पतिं इदं ते कथितं भद्रे व्रतं कोटीश्वरीभवं लक्षेश्वरीति विख्यातं कुरु रंभे यथोदितं
इति कोटीश्वरी लक्षेश्वरीव्रतम् ॥ ॥ ॥ अथास्यास्तृतीयायाः संततिव्रतमुद्यापनमुच्यते ॥
आयुर्लिप्सुर्मम सकलपापक्षयपूर्वकं सप्तजन्म सौभाग्यपुत्रादि भर्तृवियोगराहित्यादि भोग-

आमिहाराउमामहेश्वरप्रीत्यर्थंयथाकालाचरितहरितालिकाव्रतोद्यापनंकरिष्ये॥ आचार्यंवृत्वा उक्तविधि
नालिंगतोभद्रेद्रोणपरिमितव्रीहिस्थकलशेराजतंशिवंहैमींगौरींपुरतोराजतंवृषभंउक्तमंत्रैः प्रतिष्ठा
प्यसंपूजयेत् तत्र मंत्राः मंदारमालाकुलितालकायैकपालमालांकितशेखराय दिव्यांबरायैचदिगंब
रायनमःशिवायैचनमःशिवाय इत्यावाहनादिषोडशोपचारैः एवंवत्संपूज्यप्रार्थयेत् नमःशिवाय
सौमार्यपंचवक्त्रायशूलिने नंदीभृंगीमहाकालगणयुक्तायशंभवे शिवायैहरकांतायैप्रकृत्यैसृष्टिहे-
तवे नमस्तेरुद्ररूपिण्यैजगद्धात्र्यैनमोनमः येनकामेनदेवित्वंपूजितासिहरप्रिये संपूर्णंकुरुमेकामं
सौभाग्यंचप्रयच्छमे ततःसुवासिनीःपूज्यारात्रिंतांनियतानयेत् प्रातःअग्निंप्रतिष्ठाप्य अन्वादध्यात् अथा-
नेउमामहेश्वरंचगौरीमिमायेतिमंत्रः गौरीमिमायसलिलानितक्षत्येकपदी द्विपदीसाचतुष्पदी अष्टापदीनव
पदीबभूवुषीसहस्राक्षरापरमेव्योमन् त्र्यंबकंयजामहइतिमंत्रः त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्द्धनं उर्वारु
कमिवबंधनान्मृत्योर्मुक्षीयमामृतात् मंत्राभ्यांप्रतिमांच प्रतिद्रव्यंअष्टोत्तरशतसंख्याकाभिस्तिलयव
साज्याहुतिभिर्यजेत्ब्रह्मादिदेवताः परिवारदेवताश्चएकैकयाज्याहुत्यायजेत् एवंहोमंसमाप्य ततःसं
पूजितायाचार्यायगांदत्वा षोडशाष्टौवायुग्मानिसंपूज्यसौभाग्यद्रव्यवस्त्रदक्षिणायुतानिसपूर्णपात्राणिवा-
यनानिदद्यात् तत्रमंत्रः सौभाग्यारोग्यकामानांसर्वसंपत्समृद्धये गौरीगौरीशतुष्ट्यर्थंवायनंतुददाम्यहं
इतिसंक्षिप्तहरितालिकाव्रतोद्यापनं॥ अथात्रैवहस्तगौरीव्रतं॥ सूतउवाच कुंतीसुखोपविष्टायांहस्तिनापुरमुत्त
मे मानितायांनरेंद्रश्चतनयैःपंचभिःसह तस्याःकुशलमन्विच्छन्नाजगामाथमाधवः अभिनंद्यसुखासीनंदेवदेवंज
नार्दनं उवाचकुंतीसानंदाह्यप्रगल्भमिदंवचः॥ कुंत्युवाच यथास्मिकृतकृत्यास्मिसनाथास्मिपरंतप साहंसंभावि
तास्मित्वयासर्वजगद्गुरो यदिमेसुप्रसन्नोसितदाचक्ष्वव्रतंविभोयद्विधायसुखंराज्यंप्राप्नुयात्तनयैःसह कृष्णउ
वाच कुंतितेकथयिष्यामिव्रतानामुत्तमंव्रतं यत्कृत्वासुखसंतानंधनधान्यसमन्वितं विधूतदुष्कृतापुण्यासप्रजा
राज्यंप्राप्स्यसि हस्तगौरीव्रतंभद्रेकुरुष्वशुचिमानसा कुंत्युवाच यच्चोक्तंतुव्रतंनाथविधानंतस्यकीदृशं के
नचैवकृतंदेवतन्मेब्रूहिजनार्दन॥ कृष्णउवाच कैलासशिखरेदेवीहस्तस्थेचदिवाकरे दिव्यप्रसूनमालागौ-
रीहरसन्निधिमानसा सासुप्तादेवदेवेशंस्वप्नेशंभुंददर्शह अर्द्धदेहंहृषाईस्यमर्धचंद्रकलाधरं उत्थाय
सहसागौरीप्रोवाचशंकरंप्रति किमिदंतन्ममाचक्ष्वतप्यतेमानसंमम॥ ईश्वरउवाच देविपूर्वंनिमि
दासिहस्तनक्षत्रगतेरवौ नस्नातव्यंदिवातत्रतस्येदंविहितंफलं शृणुदेवित्वयायेनखंडितोहंविलोकि-
तः त्वयाएवंव्रतंदेविमदाराधनकाम्यया अपूर्णेस्मिन्प्रसन्नोसिनत्वयाचसमुज्झितं अपूर्णव्रतचारेण
दृष्टोहंतादृशास्त्वया तत्कुरुष्वाधुनादेविहस्तगौरीव्रतंशुभं॥ पार्वत्युवाच॥ आदिश्यतांव्रतंनाथविधाने
नमहेश्वर आरंभोस्यकदाकार्यःकोविधिःकस्यपूजनं॥ ईश्वरउवाच॥ मंडपेस्थापनंकुर्यात्सर्वालंकार
भूषिते सत्वरंकांचनैःपुष्पैः फलमुक्तान्वितैःशुभैः नैवेद्यैःपंचखाद्यैश्च शृणुयात्तत्परंकथां दिनेचतुर्द
शीआमेस्थापयेत्प्रतिमांशुभां पूजयेच्चसुवर्णस्यपुष्पैश्चान्यैःसुगंधिभिः चंदनैर्धूपदीपैश्चतांबूलैश्चफला
दिभिः ध्यायेच्चहृदयेगौरींहरदेहार्धसंयुतां दक्षिणांचततोदत्वानत्वादेवींविसर्जयेत् व्रतंसमाचरे-
द्देवियावद्वर्षत्रयोदश स्वर्णभाजनगौर्यादिप्रतिवर्षंविसर्जयेत् ततश्चतुर्दशेवर्षेमंडपापनमाचरेत्
संस्थाप्यगणपंगौरींकांचनींकांचनेगजे पूर्वोक्तविधिनापूज्यवासराणित्रयोदश चतुर्दशेद्यदिवसेसजा-
तेनानुरूपिणा कृतोपवासनियमगजंगौरींप्रपूजयेत् पक्वान्नंस्वर्णपात्रेषुत्रयोदशसुनिक्षिपेत् स्त्री-
भ्यश्चैकैकशोदत्वाभोजयित्वाविसर्जयेत् एवंदेविव्रतंकृत्वासर्वान्कामानवाप्नुयात् अशक्तोतुसदाकार्या
प्रतिमामृत्तिकामयी पात्राणिवैणवान्येवपीतपुष्पाणिचैवहि॥ श्रीकृष्णउवाच॥ ततस्त्वेकेव्रतंगौरीप्रा
प्तासावांछितंफलं त्वमप्येतद्व्रतंकुंतिकुरुश्रद्धासमन्विता अथभक्त्याव्रतंकुंतीसविधानंतदाकरोत् गा-

रीचापितच्छ्रुत्वाव्रतंचक्रेयथाविधि तुष्टाचभक्तिभावेनपृष्टागौरीततोब्रवीत् ॥ पार्वत्युवाच ॥ कुंतितेपरितु
ष्टास्मिवरंवरयसुव्रते ॥ कुंत्युवाच ॥ देहिमे सर्वसंपत्तिंसर्वसौख्यंसदोदयं प्रयच्छममपुत्राणांमहद्राज्य
मनामयं व्रतमेतत्तुयःकुर्यात्तवलोकमवाप्स्यति नदारिद्र्यंनवैधव्यंनशोकोनापिदुष्कृतं कष्टंनोपद्रवं
देविकदाचित्संभवेदिह तथेत्युक्त्वाततोदेवीतत्रैवांतरधीयत एतद्व्रतंसकलदुःखविनाशहेतुः सौभा-
ग्यराज्यफलभावनयाचरंति यायोषितःसुखमनंतमिहापिदृष्ट्वागौरीपतिंपतिरतास्तुततोलभंते ॥
इतिभविष्योत्तरोक्तभाद्रपदशुक्लतृतीयायांहस्तगौरीव्रतंसमाप्तम् ॥ ॥

अस्योद्यापनंहरितालिकाव्रतोद्यापनवत् ज्ञेयंविशेषश्चात्रगौरीहरगणेशपूजा त्रयोदशवि-
धंवायनदानम् ॥ ॥ तिथ्यादिसंकीर्त्यसकलदुःखदुःस्वप्ननाशसौभाग्यसुखावाप्तिद्वाराश्रीपरमेश्वर
प्रीत्यर्थंत्रयोदशवर्षाचरितंहस्तगौरीव्रतसंपूर्णतासिद्धयेतदुद्यापनंकरिष्यइति तत्राचार्यंवृत्वा ॥
लिंगतोभद्रेउक्तप्रकारेणकलशेकांचनगजेगौरीहरंगणेशंचसुवर्णपुष्पादिनातत्तन्मंत्रैःसंपूज्यसु
वासिनीःपूज्यरात्रिंनिनयेत् प्रातराचार्यःअग्निंप्रतिष्ठाप्य अन्वादध्यात् गौरीहरंगणेशंचगौरीमिमायेति
तिगौरी त्र्यंबकंयजामहेइतिहरं गणानांत्वेतिगणपतिं प्रत्येकमष्टोत्तरशत तिलाज्याहुतिभिर्ब्र-
ह्मादिदेवताभ्यस्तिलाज्याहुत्यायक्षेशेषेणस्विष्टकृतमित्यादिहोमंसमाप्य वायनं त्रयोदशविधत्र-
योदशसंख्याकपक्वान्नपूरितंसौवर्णंवैणवंवापात्रेकृत्वा त्रयोदशदंपतीःसुवासिनीर्वासंपूज्यदद्या
त् तत्रमंत्रः पक्वान्नपूरितंविप्रव्रतसंपूर्णहेतवे वायनंतेप्रयच्छामिगौरीगौरीशतुष्टये ॥
तत्राचार्यंगोशय्यादिकंचदद्यादितिहस्तगौरीव्रतउद्यापनम् ॥ ॥ ॥

अस्यामेवभाद्रशुक्लतृतीयायांभविष्योत्तरोक्तंहरिकालीव्रतम् ॥ ॥ युधिष्ठिरउवाच भग-
वन्हरिकालीतिकादेवीप्रोच्यतेभुवि आदौयास्थिताकस्मात्पूज्यतेस्त्रीजनेनसा पूजिताकिंददातीह
सर्वंमेब्रूहिकेशव ॥ श्रीकृष्णउवाच पार्थपौराणिकीदिव्यामत्तःशृणुकथामिमां आसीद्दक्षस्यदुहिताकाली
नाम्नीतुकन्यका वर्णेनापिचसाकृष्णानवनीलोत्पलप्रभा त्र्यंबकायचसादत्तामहादेवायशूलिने विवा
हितविधानेनशंखतूर्यनिनादिना यज्ञयागतैर्देवैर्ब्राह्मणानांचनिःस्वनैः निवर्तितेविवाहेतुका
लासार्धंत्रिलोचनः क्रीडतेविविधैःकामैर्मनसःप्रीतिवर्धनैः अथदेवसमाजेतुकदाचिद्वृषभध्वजः
आस्थानमंडपेरम्येआस्तेविष्णुसहायवान् तत्रस्थआह्वयामासनर्मणात्रिपुरांतकः कालींनीलोत्पल
प्रियां इत्येवमुक्त्वासादेवीव्रीडिताक्रुद्धमानसा निःश्वासोच्छ्वासताम्राक्षीवाष्पगद्गदयागिरा रुरोदतुस्व
नप्रभो समाजेदेवसंघानांवासुदेवस्यसन्निधौ तस्मादहमिदंकृष्णरूपंहोमिज्वलितेनले इत्युक्त्वावार्य
माणापिहरिकालीरुषान्विता मुमोचहरितांछायांकांतिंहरितशाद्वले चिक्षेपदेहंरोषेणज्वलितेह
व्यवाहने पुनःपर्वतराजस्यगृहेगौरीबभूवसा महादेवस्यदेहार्धस्थिता संपूज्यतेसुरैः यामुक्त्वाशाद्वले
वे तुष्टैर्देवगणैर्दत्तोवरस्तस्यैशृणुष्वमे येत्वांशाद्वलसंस्थांवैकालीतिवरदायिनीं पूजयिष्यंतिपुरुषा
नार्यश्चापिविशेषतः सर्वपापविनिर्मुक्ताः सुखसौभाग्यगर्विताः चिरायुषोभविष्यंतिभर्तृपुत्रसमन्वि-
ताः एवंसाहरिकालीतिगौरीसाप्यव्यवस्थिता ॥ श्रीकृष्णउवाच शुक्लेभाद्रपदस्यैवंतृतीयायांसमाचरेत
समयात्स्वैस्तवैःसर्वैः कृत्वाहरितशाद्वलीं खर्जूरैर्नारिकेलैश्चफलैश्चमधुरैस्तथा मातुलिंगकुसुमैश्च-
याम्यकैर्जीरकैस्तथा गंधैःपुष्पैः फलैर्धूपैर्नैवेद्यैर्गौरीं [illegible] नाम्नासमभ्यर्चयपद्मरागेणभास्वता

चंदनवाद्यादिभिर्गीतैः शुभैर्दिव्यकथानकैः पूजनीया महाराज मंत्रेणानेन भक्तितः हरेनाङ्गसमुत्पन्ने हरिका-
लि हरिप्रिये सर्वदाशेषमूर्तिस्थे प्रणतार्तिहरे नमः इत्थं संपूज्य तां देवीं दद्याद्विप्राय दक्षिणां कृत्वा जागर-
णं रात्रौ प्रभाते किंचिदङ्गते स्त्रीभिः सुवासिनीभिश्च स्नानेयात्तु जलाशये ततो जलाशये रम्ये मंत्रेणैव विसर्जये
त् अर्चितासि मया भक्त्या गच्छ देवि सुरालयं मम दौर्भाग्यनाशाय पुनरागमनाय च एवं यः पांडवश्रेष्ठ हरि
कालीव्रतं चरेत् प्रतिवर्षं विधानेन नारी वा भक्तितत्परा चीर्णाय फलमाप्नोति तदन्येन न चाप्यते मर्त्यलो
के चिरंजीवेत्सर्वकामैः सुपूजिता पुत्रपौत्रसुहृन्मित्रैर्नप्तृदौहित्रसंकुलं सार्धं वर्षशतं जीवेद्रोगान्मुक्ता-
महीतले ततो वसाने देहस्य शिवलोके महीयते वीरभद्रमहाकालनंदीश्वरविनायकाः सर्वे प्रसादसुमु-
खा भवंति व्रतयोगतः संपूज्य सूर्यगत मुक्त विरुद्ध सस्यां देवीं हिमाद्रितनयां हरिकालिकाख्यां नैवेद्यजा-
गरसमुद्धतगीतवाद्यैः संप्राप्नुवंति मनुजाः सुचिरं सुखानि॥ इति भविष्योत्तरोक्तं हरिकालीव्रतम् ॥ ॥

अथ भाद्रशुक्लचतुर्थ्यां सिद्धिविनायकव्रतम् ॥ हेमाद्रौ स्कांदे तत्र मध्याह्नव्यापिन्यां कार्यं प्रातः शु
क्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृपेति गणपतिकल्पे तत्रैव पूजाविधानात् दिनद्वये तद्व्याप्तावव्याप्तौ
वा पूर्वा अन्यथा परा चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते मध्याह्नव्यापिनी सा च परतश्चेत्परेहनीति
बृहस्पत्युक्तेः इयं च रविभौमयोरतिप्रशस्ता भाद्रशुक्लचतुर्थी या भौमेनार्केण वा युता महती सा त्र वि-
घ्नेशमर्चयित्वेष्टमाप्नुयादिति वाराहोक्तेः अथ व्रतविधिः मासपक्षाद्युल्लिख्य जयपुत्रादिकामः स्त्री-
सुतसौभाग्यादिकामा सिद्धिविनायकव्रतं तत्पूजनमहं करिष्ये इति संकल्पः ॥ षोडशोपचारैः पूजां
कुर्यात् ॥ तत्र ध्यानं॥ एकदंतं शूर्पकर्णं गजवक्त्रं चतुर्भुजं पाशांकुशधरं देवं ध्यायेत्सिद्धिविनायकं
ध्यायेद्गजाननं देवं तप्तकांचनसन्निभं चतुर्भुजं महाकायं सर्वाभरणभूषितं दंताक्षमालापरशुपूर्ण
मोदकधारिणं मोदकासक्तशुंडाग्रमेकदंतं विनायकं इति ध्यानं॥ आवाहयामि विघ्नेश सुरराजार्चि
तेश्वर अनाथनाथ सर्वज्ञ पूजार्थं गणनायक सहस्रशीर्षेत्यादिपुरुषसूक्तमंत्रैः सर्वोपचारपूजा
सहस्रशीर्षेत्यावाहनं विचित्ररत्नखचितं दिव्यास्तरणसंयुतं स्वर्णसिंहासनं चारु गृहाण सुरपूजित इ
त्यासनं॥ गणाध्यक्ष नमस्तेस्तु गृहाण करुणाकर अर्घ्यं च फलसंयुक्तं गंधमाल्याक्षतैर्युतं इत्यर्घ्यं
सर्वतीर्थसमुद्भूतं पाद्यं गंधादिभिर्युतं विघ्नराज गृहाणेदं भगवन्भक्तवत्सल इति पाद्यं दध्याज्यमधु
संयुक्तं मधुपर्कं मयाहृतं गृहाण सर्वलोकेश गणनाथ नमोस्तु ते मधुपर्कं विनायक नमस्तुभ्यं त्रि
दशैरभिवंदित गंगोदकेन देवेश कुरुष्वाचमनं प्रभो इत्याचमनं॥ स्नानं पंचामृतं दिव्यं सर्वतीर्था-
हृतं मया गंधतोयैर्मया पुत्र गृहाणाभीष्टदायक स्नानं रक्तवस्त्रद्वयं देव देवांगसदृशं प्रभो सर्वप्र-
द गृहाणेदं लंबोदर हरात्मज वस्त्रं राजतं ब्रह्मसूत्रं च कांचनं चोत्तरीयकं गृहाण चारु सर्वज्ञ भ-
क्तानां भक्तवत्सल यज्ञोपवीतम् नानाविधानि दिव्यानि नानारत्नोज्ज्वलानि च भूषणानि गृहाणेश पार्वती
प्रियनंदन आभरणं गंधं गृहाण भगवन्सर्वगंधसमन्वित गणाध्यक्ष नमस्तेस्तु भक्ताभीष्टफलप्रद गं
धं अक्षतान्धवलान्देव गृहाण द्विरदानन अनाथनाथ सर्वज्ञ गीर्वाणपरिपूजित अक्षताः सुगंधी
नि च पुष्पाणि जातीकुंदमुखान्यपि विविधानि च पत्राणि गृहाण गणनायक पुष्पाणि अथांगपूजा
गणेशाय नमः पादौ पूजयामि १ विघ्नराजाय नमः जानुनी पू· २ आखुवाहनाय नमः ऊरू पू· ३
हेरंबाय· कटिं पू· ४ कामारिसूनवे· नाभिं· पू· ५ लंबोदराय· उदरं पू· ६ गौरीसुताय· स्तनौ पू· ७
गणनायकाय· हृदयं पू· ८ स्थूलकंठाय· कंठं पू· ९ स्कंदाग्रजाय· स्कंधौ पू· १० पाशहस्ताय·
हस्तौ पू· ११ गजवक्त्राय· मुखं पू· १२ विघ्नहर्त्रे· ललाटं पू· १३ सर्वेश्वराय· शिरः पू· १४
गणाधिपाय नमः सर्वांगं पूजयामि १५ अथ पत्रिकापूजा सुमुखाय काकमाचीपत्रं समर्पयामि· १

गणाधिपाय भृंगराजं सं० २ उमापुत्राय बिल्वपत्रं सं० ३ गजाननाय दूर्वापत्रं सं० ४ लंबोदराय बदरीपत्रं सं० ५ हरसूनवे धत्तूरपत्रं सं० ६ गजकर्णाय तुलसीदलं सं० ७ वक्रतुंडाय शमीपत्रं सं० ८ गुहाग्रजाय अपामार्गपत्रं सं० ९ एकदंताय बृहतीपत्रं सं० १० विकटाय मधुपत्रं सं० ११ विनायकाय अश्मंतपत्रं सं० १२ कपिलाय अर्कपत्रं सं० गजदंताय अर्जुनपत्रं सं० १४ विघ्नराजाय विष्णुक्रांतपत्रं सं० १५ वटवे दाडिमीपत्रं सं० १६ सुराग्रगण्याय देवदारुपत्रं सं० १७ भालचंद्राय मरुपत्रं सं० १८ हेरंबाय सिंदूरपत्रं सं० १९ चतुर्भुजाय जातीपत्रं सं० २० सर्वेश्वराय अगस्तिपत्रं सं० २१ इत्येकविंशतिनामभिरेकविंशतिपत्रिकापूजा ॥ ॥ ॥ कुमारगुरवे तुभ्यं पूजनीयः प्रयत्नतः दूर्वायुग्मं गृहीत्वा तु गंधपुष्पाक्षतैर्युतं एकैकेन तु नाम्ना तु दत्त्वैकं सर्वनामभिः अथैकविंशतिगृह्य मोदकान्घृतपाचितान् स्थापयित्वा गणाध्यक्षसमीपे कुरुनंदन दश विप्राय दातव्याः स्वयं चाद्यात्तथा दश एकं गणाधिपे दद्यात्सनैवेद्यं नृपोत्तम जानद्रूपमयं देवं ब्राह्मणाय निवेदयेत् कृत्वा नैमित्तिकं कर्म पूजयेदिष्टदेवतां ब्राह्मणान्भोजयेत्पश्चात् भुंजीयात्तैलवर्जितं विनायकस्य प्रतिमां वस्त्रयुग्मसमन्वितां दद्याद्विप्राय विडपे सर्वविघ्नोपशांतये एवं कृते धर्मराज विघ्ननाथस्य पूजने विजयस्ते भवेन्नूनं सत्यं सत्यं मयोदितं वैसवाद्यास्तु दीनास्तु अत्रोदीरितो गणाधिपः तस्मिन्संपूजिते विष्णुरीशो माचतथा रमा ह्यवाहमुखा देवाः पूजिताः स्युर्न संशयः चंडिकाद्या मातृगणाः परितुष्टा भवंति च तस्मिन्संपूजिते विप्राः भक्त्या सिद्धिविनायके यद्दं शृणुयान्नित्यं श्रावयेद्वा समाहितः सिद्ध्यंति सर्वकार्याणि सिद्धिदस्य प्रसादतः ॥ इति सिद्धिविनायकव्रतपूजा ॥ ॥ ॥ एवमेवोक्तं नारदीयेपि ॥ ॥ अथ शुक्लाचतुर्थ्यां तु सिद्धिवैनायकं व्रतं आवाहनादिभिः सर्वैरुपचारैः समर्चयेत् एकाग्रमानसो भूत्वा ध्यायेत्सिद्धिविनायकं पाशांकुशधरं देवं तप्तकांचनसन्निभं एकविंशति पत्राणि चैकविंशतिनामभिः समर्पयेद्भक्तियुक्तस्तानि नामानि मे शृणु सुमुखाय कामाची गणाधीशाय भृंगजं उमापुत्राय विल्वस्य दूर्वा गजमुखाय तु लंबोदराय बदरीं धत्तूरं हरसूनवे सूर्पकर्णाय तुलसी वक्रतुंडाय वै शमीं गुहाग्रजायापामार्गमेकदंताय वार्हतं विकटायाश्मंतपत्रं कपिलायार्कपत्रकं गजदंतायार्जुनं च विष्णुक्रांतां विघ्नराजके वटवे दाडिमीपत्रं सुराग्रण्ये सुदुर्ज मरुपत्रं भालचंद्रे प्रदद्याद्भक्तिभावतः हेरंबाय च सिंदूरं जातीपत्रं चतुर्भुजे सर्वेश्वरे अगस्तिपत्रं दद्यात्त्वीति विधेयं विंशतिरेव भवंति नामानि विनायकेति नाम पूर्वोक्तं ज्ञेयं दूर्वायुग्मं ततो गृह्य गंधपुष्पाक्षतैर्युतं पूजां निवेदयेद्भक्तियुतो मोदकपंचकं आचमय्य नमस्कृत्य संप्रार्थ्य च विसर्जयेत् विनायकस्य प्रतिमां हैमीं सोपस्करां मुने निवेदयेच्च गुरवे द्विजेभ्यो दक्षिणां ददेत् एवं कृत्वार्चनं भक्त्या पंचवर्षाणि नारद उद्याप्य लभते कामानैहिकामुष्मिकाञ्छुभान् ॥ इति हेमाद्रौ भविष्योत्तरे च मासि भाद्रपदे धान्या शिवलोके प्रपूजिता तस्यां स्नानं तथा दानमुपवासोर्चनं तथा क्रियमाणं शतगुणं प्रसादाद्दंतिनो नृप चतुर्थी मध्यमगः ॥ अत्रैव रात्रौ चंद्रं न पश्येत् तस्य दर्शनेन मिथ्याभिशापप्राप्तिर्भवति तदाह पराशरः ॥ मार्कंडेयः भाद्रमासि सिते पक्षे चतुर्थी स्यान्निषेधिनी मिथ्याभिशापकृत् तेन दृष्टचंद्रान संशयः पराशरोपि कन्यादित्ये चतुर्थ्यां तु शुक्ले चंद्रस्य दर्शनं मिथ्याभिदूषणं कुर्यात्तस्मात्पश्येन्न तं सदा पंचाननगते भानौ पक्षयोरुभयोरपि चतुर्थ्यामुदितः सोमो नेक्षितव्यः कदाचनेति अनेन चतुर्थ्यां न पश्येदित्यर्थः प्रधानक्रियान्वयलाभात् तेन चतुर्थ्यामुदितस्य पंचम्यां न निषेधः अत्र रात्रिशब्दग्रहणाद्दिवा चंद्रदर्शनेन निषेध इति यत्तु केनचिदुक्तं रात्रिशब्दो द्वारात्रपर इति तन्न एतादृशार्थप्रतिपादकवचनस्य महानिबंधेष्वदृष्टत्वात् कदाचित्प्रमादादृष्ट्वा विष्णुपुराणोक्तं श्लोकं पठेत् तथा च पुराणांतरे तत्प्रायश्चित्तं ...... नवः पठेत्पौराणिकं वा

ङ्मुखोवाप्युदङ्मुखएव इतिनिर्णयामृते ब्रह्मपुराणेतुचंद्रदर्शनेविशेषउक्तः वासुदेवोभिशप्तस्तुनिशाकरम
रीचिषु स्थितश्चतुर्थ्यामाद्यायामनुष्याणांपतिश्चसः ततश्चतुर्थ्यांचंद्रंतुप्रयत्नाद्वीक्ष्यमानवः पठेत्पौरा-
णिकंवाक्यंप्राङ्मुखोवाप्युदङ्मुखः तद्दोषशांतयेसिंहःप्रसेनइतिवैपठेत् सिंहःप्रसेनमवधीत्सिंहोजांब
वताहतः सुकुमारकमारोदीस्तवह्येषःस्यमंतकः इति सिंहःप्रसेनमितिमंत्रेणाभिमंत्रितं जलंपेयंस्य-
मंतकोपाख्यानंचश्रोतव्यमाचारादितिस्मार्ताः॥ इतिव्रतरत्नावल्याम् ॥ ॥ अथस्यमंतकोपाख्यानम् ॥
नंदिकेश्वरउवाच ॥ शृणुष्वैकाग्रचित्तःसन्व्रतंगाणेश्वरंशुभं चतुर्थ्यांशुक्लपक्षस्यसदाकार्यंप्रयत्नतः
सनत्कुमारयोगींद्रयदीच्छेच्छुभमात्मनः नारीवापुरुषोवापियःकुर्याद्व्रतमुत्तमं मोचयित्वाशुसंकष्टादि-
ष्टंददातितंनरं अपवादहरंचैवसर्वविघ्ननिवारणं कांतारेविषमेचैवत्रिषुलोकेषुविश्रुतं अतो-
नविद्यतेचान्यत्सर्वसंकष्टनाशनं ॥ सनत्कुमारउवाच ॥ केनचादौपुराचीर्णंमर्त्यलोकेकथंगतं प्र-
तत्समस्तंविस्तार्यब्रूहिगाणेश्वरंव्रतं ॥ नंदिकेश्वरउवाच ॥ चक्रेव्रतंजगन्नाथोवासुदेवःप्रतापवान्
यथादिष्टंनारदेनैववृथालांछनशांतये ॥ सनत्कुमारउवाच ॥ षड्गुणैश्वर्यसंपन्नःसृष्टिसंहारकारकः वा-
सुदेवोनगद्यापिप्राप्तवान्लांछनंकथं एतदाश्चर्यमाख्यानंब्रूहित्वंनंदिकेश्वर ॥ नंदिकेश्वरउवाच ॥
भुवोभारावतारार्थंवसुदेवसुतावुभौ रामकृष्णौसमुत्तीर्णौपद्मनाभहलायुधौ जरासंधभयात्कृष्णोद्वारि-
कांसमकल्पयत् विश्वकर्माणमाहूयपुरींहाटकनिर्मितां तत्रषोडशसाहस्रंस्त्रीणांचैवशताधिकं भव-
नानिमनोज्ञानितेषांमध्येप्यकल्पयत् यादवानांगृहास्तत्रषट्पंचाशच्चकोटयः अन्येचबहवोलोकाव
संतिविगतज्वराः यत्किंचित्त्रिषुलोकेषुसौंदर्यंतत्रदृश्यते सत्राजितप्रसेनाख्यौपुत्रावुग्रस्यविष्णुतो-
यंभोयेस्त्रीरमासाद्यतन्मनस्कतयाचसः सत्राजितस्तपस्तेपेसूर्यमुद्दिश्यबुद्धिमान् व्रतंनिरशनंशुद्ध
सूर्यसंबद्धलोचनः ततःप्रसन्नोभगवान्सत्राजितपुरःस्थितः सत्राजितोपितुष्टावदृष्ट्वादेवंदिवाकरम्
तेजोराशेनमस्तुभ्यंनमस्तेसर्वतोमुख विश्वव्यापिन्नमस्तेस्तुनमस्तेविश्वरूपिणे काश्यपेयनमस्तेस्तु
हरिदश्वनमोस्तुते ग्रहराजनमस्तेस्तुनमस्तेचंडरोचिषे वेदत्रयनमस्तेस्तुसर्वदेवनमोनमः प्रसी-
दपाहिदेवेशसुदृष्ट्यामांदिवाकर इत्थंसंस्तूयमानोसौदेवदेवोदिवाकरः स्निग्धगंभीरमधुरंस-
त्राजितमुवाचह ॥ सूर्यउवाच ॥ वरंब्रूहिप्रसन्नोस्मियत्तेमनसिवर्तते सत्राजितमहाभागतुष्टोहंतव
निश्चयात् ॥ सत्राजितउवाच ॥ स्यमंतकमणिंदेहिपरितुष्टोसिभास्कर ददौतस्यचतद्रत्नंस्वकंठा
दवतार्यसः ॥ सूर्यउवाच ॥ भाराष्टकंशातकुंभंस्रवतेसौमहामणिः शुचिस्मितासदाधार्यंरत्नमेत-
न्महोत्तमं सत्राजित्तत्क्षणेनैतदशुचिंहंतिमानवं इत्युक्त्वांतर्दधेदेवस्तेजोराशिर्दिवाकरः तत्कंठर
त्नज्वलमानरूपः पुरींसकृत्स्वस्यविवेशसत्वरं दृष्ट्वातुलोकामनसादिवाकरंसंचिंतयंतस्तिमिरा
रिरेषयः समागतोयंहरिदश्वदीधितिर्जनेनाद्यनंद्रष्टुमसंशयेन नायंसहस्रांशुरितीहलोकाः स
त्राजितोयंमणिकंठभास्वान् ॥ स्यमंतकंमहारत्नंदृष्ट्वातत्कंठमंडले स्पृहांचक्रेजगन्नाथोनजहारम
णिंतदा सत्राजितोजातभयोयाचयिष्यतिमांहरिः प्रसेनायददौभ्रात्रेधार्योयंशुचिनात्वया एकदाकंठे
देशासादित्वातंमणिमुत्तमं मृगयाक्रीडनार्थायगतःकृत्स्नसंयुतः अश्वारूढःशुचिश्चासौहतःसिंह
नेनतत्क्षणात् रत्नमादायसिंहोपिगच्छन्जांबवताहतः नीत्वास्वविवरेरत्नंददौपुत्रायजांबवान् पुरी
विवेशकृष्णोपिस्वकैःसर्वैःसमाहृतः प्रसेनोथापिनायातिहतःकृष्णेननिश्चितं मणिलोभेनहाकष्ट
बांधवःपापिनाहतः द्वारिकावासिनःसर्वेजनाऊचुःपरस्परं वृथापवादसंतप्तःकृष्णोपिनगराद्व
नैः सहैवततोगतोरण्यंदृष्ट्वासिंहनिपातितं प्रसेनंवाहनयुतंतत्पादानुसरन्नतः ऋक्षेणनिहतंसि
हंदृष्ट्वाकृष्णश्चान्तर्बिलं विवेशयोजनशतमंधकारंस्वतेजसा निवारयन्ददर्शाग्रेप्रासादंबहुभूमिकं

कुमारंजांबवंतस्य दोलायामभितद्युतिं मणिकंलंबमानंचददर्शभगवान्हरिः रूपयौवनसंपन्ना-
कन्याजांबवतीशुभा दोलांदोलायमानांचददर्शकमलेक्षणः समहाविस्मयंचक्रे दृष्ट्वातांचारुहासिनीं सिं-
हः प्रसेनमवधीत्सिंहाजांबवताहतः सुकुमारकमारोदीस्तवह्येषःस्यमंतकः मदनज्वरदाहार्तादृ-
ष्ट्वातंकमलेक्षणं उवाचललितंवाक्यं गम्यतांगम्यतामिति रत्नंगृहीत्वावेगेनयावज्जेतुंजांबवान्
इत्याकर्ण्यहसन्शौरिःशंखंदध्मौप्रतापवान् आकर्ण्यसहसोत्थायक्रुद्धःसमुपस्थितः तयोर्युद्धमभूद्घो-
रंहरिजांबवतोस्तदा द्वारिकावासिनःसर्वेगतास्तेसप्तमेदिने मृतःकृष्णोभवित्तिवासिनःसंदिग्ध्याविचार्यच
परलोकक्रियांचक्रुःपरेतस्यचतेतदा एकविंशदिनंयावद्द्वाभ्यांप्रहरणैर्विभुः युयुधेतेनऋक्षेणयु-
द्धकर्मणितोषितः जांबवानाक्रांतस्त्वाद्दृष्ट्वादेवबलंमहत् जांबवानुवाच अजेयोहंसुरैःसर्वैर्य-
क्षराक्षसदानवैः त्वयाजितोहंदेवेशदेवस्त्वमसिनिश्चितं जानेत्वांदेवस्त्वंतेजोनान्यथाबलमीदृशं
इतिप्रसाद्यदेवेशंददौमणिकमुत्तमं सुतांजांबवतींचाथभार्यार्थंवरवर्णिनीं पाणिंचग्राहयामास
वासुदेवंचजांबवान् मणिमादायदेवोपिजांबवत्याचसंयुतः तद्वृत्तांतंसमाचष्टेद्वारिकावासिनांततः
सत्राजितस्यमाणिकंदत्तवान्सदसिस्थितः मिथ्याभिशापसंशुद्धिंप्राप्तवान्मधुसूदनः सत्राजितोपिसं-
त्रस्तःकृष्णायप्रददौसुतां सत्यभामांमहाबुद्धिर्ददौसर्वगुणान्वितां शतधन्वाक्रूरमुख्यायादवादुष्टमा-
नसाः सत्राजितेनतेवैरंचक्रूरत्नाभिलाषिणः दुरात्माशतधन्वापिगतेकृष्णेपिकुत्रचित् सत्राजितं
निहत्यासमणिंजग्राहपापधीः कृष्णस्यपुरतःसत्यासमाचष्टविचेष्टितं श्रुतदृष्टोवहिःकोपीकृष्णःक-
पटनायकः बलदेवंपुरोवाक्यमुवाचधरणीधरः हत्वासत्राजितंहृत्वामणिमादायगच्छति निह-
त्यशतधन्वानंगृहीत्वारत्नमावयोः ममयोग्यंचतद्रत्नंभविष्यतिनसंशयः एतच्छ्रुत्वाभयत्रस्तःश-
तधन्वापियादवः आहूयाक्रूरनामानंमाणिकंप्रददौचसः आरुह्यवडवांवेगान्निर्गतोदक्षिणांदिशं र-
थस्थावनुगच्छेतांतदारामजनार्दनौ शतयोजनमात्रेणममारवडवातदा पलायमानोनिहतःपदाति-
स्तुपदातिना अदृष्ट्वातत्रतद्रत्नंबलदेवंपुरोवदत् तदाकर्ण्यमहारूषउवाचवचनंबलः कप-
टीत्वंसदाकृष्णपापीलोभीसुनिश्चितं अर्थायस्वजनंहंसिकस्त्वांवधुःसमाश्रयेत् अनेकशपथैःकृष्णो
बलदेवंप्रसादयन् सोपिधिक्कृष्णमित्युक्त्वाययौवैदर्भमंडलं कृष्णोपिरथमारुह्यद्वारिकांप्रययौपुनः
तथैवोचुर्जनाःसर्वेनसाधीयानयंहरिः निष्कासितोरत्नलोभाज्ज्येष्ठोभ्रातावलोबली तच्छ्रुत्वादीनवदनः
संतप्तोनैवभातिच वृथाभिशापसंतप्तोबभूवसजगत्पतिः अक्रूरोपिविनिर्गम्यतीर्थयात्राभिषात्ततः
काशींगत्वानुदिवं नासाववसत्प्रभुमीश्वरं तोषमुत्पादयत्तेनद्रव्येणसोचबुद्धिमान् सुरालयगृहैःश्रेष्ठै-
र्नगरंसमकल्पयत् नदुर्भिक्षंनवैरोगाईतयोनचबंधनं अशुचिनाधार्यतेतत्रमणिःसूर्यस्यनिश्चितं
जानन्नपिससर्वज्ञोमानुषंभावमाश्रितः लोकाचारंतथामायामज्ञानेचसमाश्रितः बंधुवैरंसमुत्पन्नं-
लांछनंसमुपस्थितं वृथापवादवक्रलंनायमानंकथंसहे इतिचिंतातुरंकृष्णंनारदःसमुपस्थितः
गृहीत्वातत्कृतांपूजांसुखासीनस्ततोब्रवीत् नारदउवाच किमर्थंखिद्यसेदेवकिंवातेशोककारणं
यथावृत्तंसमाचष्टनारदायतुकेशवः ज्ञाताभिकारणंदेवयदर्थंलांछनंतव त्वयाभाद्रपदेशुक्लचतु-
र्थ्यांचंद्रदर्शनं कृतंतेनसमुत्पन्नंलांछनंतुहृषीवहि श्रीकृष्णउवाच वदनारदमेशीघ्रंकोदोषश्चं-
द्रदर्शने किमर्थंतुद्वितीयायांकुर्वंतितस्यदर्शनं नारदउवाच गणनाथेनशप्तश्चचंद्रमारूपद-
र्पितः त्वद्दर्शनेनराणांहिवृथानिंदाभविष्यति श्रीकृष्णउवाच किमर्थंगणनाथेनशप्तश्चंद्रःसुधा-
मयः इदमाख्यानकंश्रेष्ठंयथावद्वक्तुमर्हसि नारदउवाच गणानामाधिपत्येनरुद्रेणब्रह्मणापुरा
अणिमामहिमाचैवगरिमालघिमातथा प्राकाम्यंवशित्वमित्यवअर्थकामावसाधिनौ भार्यार्थंप्रददौदेवो

गणेशस्य प्रजापतिः पूजयित्वा गणाध्यक्षं स्तुतिं कर्तुं प्रचक्रमे॥ ब्रह्मोवाच गजवक्त्र गणाध्यक्ष लंबोदर वरप्रद
विद्याधीश्वर देवेश सृष्टिसंहारकारक पूजयेयुर्गणाध्यक्षं मोदकाद्यैः प्रयत्नतः तेषां वै जायते सिद्धिर्निर्वि-
घ्नेन न संशयः असंपूज्य गणाध्यक्षं ये वांछंति नराः सुखं न तेषां जायते सिद्धिः कल्पकोटिशतैरपि त्वदाज्ञया
तु गणाध्यक्ष विष्णुः पालयते सदा रुद्रोपि संहरत्याशु त्वच्छक्त्यैव सृजाम्यहं इत्थं संस्तूयमानोसौ देवदेवो गज-
जाननः उवाच परमप्रीतो ब्रह्माणं जगतां पतिं गणेश उवाच वरं ब्रूहि प्रदास्यामि यत्ते मनसि वर्तते ब्रह्मो-
वाच क्रियमाणा तु मे सृष्टिर्निर्विघ्ना जायतां प्रभो एवमस्त्विति देवेशो गृहीत्वा मोदकान्करे सत्यलोकान्नामा-
गच्छन्स्वेच्छया गगने पथि चंद्रलोकं समासाद्य स्खलितो गणनायकः अथ हास्यमकरोच्चंद्रः सोमो रूपमदा-
न्वितः तेन दृष्ट्वा कोपताम्राक्षो गणनाथः शशाप ह दर्शनीयः सुरूपोहं सुंदरश्चाहमित्यय गर्वितोसि शशां-
क त्वं फलं प्राप्स्यसि सत्वरं अद्यप्रभृति लोकास्त्वां न हि पश्यंति पापिनं ये पश्यंति प्रमादेन त्वां नरा मृगलांछ-
न मिथ्याभिशापसंयुक्ता भविष्यंति हि ते ध्रुवं हाहाकारो महाञ्जातः श्रुत्वा शापं सुदारुणं अत्यंतम्लानवदनो
जले चंद्रः समाविशत् कुमुदे कौमुदीनाथः स्थितस्तत्र कृतालयः ततो देवाः सगंधर्वा निराशा दीनमानसाः
सुरासाहं पुरोधाय जग्मुस्ते प्रपितामहं दृष्ट्वा पितामहं देवं शशांकस्य विचेष्टितं दत्तः शापो गणेशेन कथया-
मासुरादरात् विचार्य भगवान्ब्रह्मा तान्सुरानिदमब्रवीत् गणेशशापो देवेंद्राः शक्यते केन चान्यथा कर्तुं
मिंद्रेण न मया विष्णुनापि विनिश्चितं तमेव देवदेवेशं व्रजध्वं शरणं सुराः स एव शापमोक्षं च करिष्यति
न संशयः देवा ऊचुः केनोपायेन वरदो गजवक्त्रो गणेश्वरः पितामह महाभाग तदस्माकं वद प्रभो पि-
तामह उवाच चतुर्थ्यां देवदेवोसौ पूजनीयः प्रयत्नतः कृष्णपक्षे विशेषेण नक्तं कुर्याद्व्रतं प्रियं अपू-
पैर्घृतसंयुक्तैर्मोदकैः परितोषयेत् मधुरान्नं हविष्यं च स्वयं भुंजीत वाग्यतः स्वर्णरूपं गणेशस्य दान-
व्यं द्विजसत्तमे शक्त्या च दक्षिणां दत्वा वित्तशाठ्यं न कारयेत् गीष्पतिं प्रेषयामासुः समेतास्त्रिदशेश्वराः स
गत्वा कथयामास वचो ब्रह्मोदितं तु तत् व्रतं चक्रे ततश्चंद्रो यथोक्तं ब्रह्मणा पुरा आविर्बभूव भगवान्ग-
णेशो व्रततोषितः संक्रीडमानं गणनायकं च तं दृष्ट्वा तु कलानिधानः चंद्र उवाच त्वं कारणं का-
रणकारणानां वेत्तासि वेद्यं च विभो प्रसीद प्रसीद देवेश जगन्निवास गणेश लंबोदर वक्रतुंड १
विरिंचिनारायणपूज्यमान क्षमस्व मे गर्वकृतं च हास्यं ये त्वामसंपूज्य गणेश नूनं वांछंति मूढा-
विहितार्थसिद्धिं २ ते देव नष्टा निभृतं च लोके ज्ञातो मया ते सकलः प्रभावः ये चाप्युदासीनतरास्तु-
पापास्ते यांति पापं नरकं सदैव ३ एवं संस्तूयमानोसौ चंद्रेणाथ गजाननः उवाच प्रहसन्वाक्यं मेघ-
गंभीरया गिरा तुष्टोहं तव दास्यामि वरं ब्रूहि निशाकर चंद्र उवाच लोकानां दर्शनीयोहं भवामि पुन-
रेव हि विपापोहं विशापोहं त्वत्प्रसादाद्गणेश्वर गणेश उवाच वरमन्यं प्रदास्यामि नैतद्देयं मयानघ
विघ्नेशवचनं श्रुत्वा ब्रह्माद्यास्तु भयाकुलाः देवं विज्ञापयांचक्रुर्गणेशं भक्तवत्सलं देवा ऊचुः वि-
शापं कुरु देवेश प्रार्थयामो वयं तव ततोनुनीतो ब्रह्माद्यैः प्रसन्नोभूद्गजाननः विशापमकरोच्चंद्रं
कमलासनगौरवात् शुक्लपक्षे चतुर्थ्यां तु ये पश्यंति सदैव हि मिथ्याभिवादमायासं ते प्राप्स्यंति न संश-
यः मासादौ पूर्वमेव त्वां ये पश्यंति सदा जनाः भाद्रायां शुक्लपक्षस्य तेषां दोषो न जायते तदाप्रभृति
लोकोयं द्वितीयायां कृतादरः चंद्रस्य दर्शनार्थाय गणनाथस्य भाषितं भाद्रशुक्लचतुर्थ्यां तु यस्त्वां प-
श्यति पापधीः मिथ्याभिशापमालिन्यमावर्षं तस्य जायते पुनरेव तु पप्रच्छ कलावान्गणनायकं के-
नोपायेन देवेश तुष्टो भवसि तद्वद गणेश उवाच सदा कृष्णचतुर्थ्यां तु मोदकाद्यैः प्रपूजयेत् रोहिणी-
सहितं त्वां च समभ्यर्च्य विधानतः यथाशक्त्या तु मद्रूपं स्वर्णेन परिकल्पितं दत्वा द्विजाय भुक्त्वाय क-
थां श्रुत्वा विधानतः सदा तस्य करिष्यामि संकष्टस्य विनाशनं भाद्रशुक्लचतुर्थ्यां तु मृण्मयीं प्रतिमां शुभा

द्रमाभावेतुकर्तव्यानानापुष्पैःप्रयत्नतः ब्राह्मणभोजयेत्तत्र ज्ञातिगृह्याच्चविशेषतः स्थापयेद्ब्राह्मणंकुंभंयथा
न्यस्योपरिशोभितं यथाशक्त्यातुमद्रूपंशातकुंभेननिर्मितं वस्त्रद्वयसमाच्छन्नंमोदकाद्यैःप्रपूज्यमां र-
क्तांबरधरोमौनीब्रह्मचर्यरतःसुधीः रोहिणीसहितंलाचपूज्याप्यचमत्परः रजतस्यकृतेरूपंयथा-
शक्त्यादिनिर्मितं वक्रांशचप्रियायेतिगणाधिपनमोस्तुते गंधंलंबोदरायेतिपुष्पंसिद्धिप्रदायच धूपं
गजमुखायेतिदीपंमूषकवाहिने विघ्ननाशायनैवेद्यंफलंसर्वार्थसिद्धिदे तांबूलंकामरूपायदक्षि-
णाथनदायच इक्षुदंडैस्तुराष्ट्र्यंनाम्नाशोभाकरंशुभं विसर्जनसमारंभैःसर्वसिद्धिप्रदायकं एवंस-
म्यग्विधिंप्रेशेकधांश्रुत्वाविधानतः मंत्रेणानेनतत्सर्वंब्राह्मणायनिवेदयेत् दानेनानेनदेवेशप्रीतो-
भवगणेश्वर सर्वत्रसर्वदादेवनिर्विघ्नंकुरुसर्वदा मनोन्नतिंचराज्यंचपुत्रान्मेत्वंवरेदेहिमे गा
ज्यथानेचवामासिदद्यात्स्वंवेस्वशक्तितः दत्वातुब्राह्मणेसर्वंस्वयंभुंजीतकामतः मोदकापूपमधुरंल
वणाहारवर्जितं एवंकरोतियश्चेदंतस्याहंसर्वदाजयं सिद्धिंचयशनधान्यंचददामिविपुलांप्रजां इद्
क्रांतंदंधेदेवोगणनाथोविनायकः तद्भक्तकुरुकृत्स्नंत्वंततःशुद्धिमवाप्स्यसि नंदिकेश्वरउवाच नार
देनैवमुहायक्षातंचकेहरिःस्वयं मिथ्यापवादसंशुद्धिंप्रापदेवोजनार्दनः येशृण्वंतितवाख्यानं
स्यमंतकमणीयकं चंद्रस्यचरितंसर्वंतेषांदोषोनजायते भाद्रेशुक्लचतुर्थ्यांतुचंद्रस्यदर्शनंक्वचित्
जातंतत्परिहारार्थंश्रोतव्यंसदैवेदंतु यदायदामनःकष्टसंदेहमुपजायते तदातदाचश्रोतव्य
माख्यानंकष्टनाशनं एवमुक्तस्ततोदेवोगणेशःकृष्णतोषितः यदायदापश्यतिकार्यमुद्यतंनारी
नरश्चापिकरोतिसद्भक्त्या सिद्ध्यंतिकार्याणिसमीप्सितानिकिंदुर्लभंविघ्नहरेप्रसन्ने श्रावणस्यासि
तेपक्षेचतुर्थ्यामेकभुग्वती व्रतंकुर्याद्गणेशस्ययावन्मासचतुष्टयं इतिस्कंदपुराणोक्तमंतकोपा
ख्यानं ॥ ॥ ॥ अथान्यप्रकारोक्तंसिद्धिविनायकव्रतम् ॥ तत्रप्रातःकृत्यादिकृत्वा ॥
मध्यादिरचिताभ्योव्रतंनिवेद्य आचम्योदङ्मुखोवादिङ्गणनाथपात्रंगृहीत्वामासपक्षाद्युल्लिख्यम
मसर्वकर्मनिर्विघ्नसिद्धिपुत्रपौत्रसौभाग्यादिसुखसिद्ध्यर्थंसिद्धिविनायकगणपतिप्रीत्यर्थंचसि
द्धिविनायकपूजामहंकरिष्ये इतिसंकल्प्य ध्यानम् एकदंतंशूर्पकर्णमिति आगच्छजगदाधार-
सुरासुरवरार्चित अनाथनाथसर्वज्ञगीर्वाणपरिपूजित॥ आवाहनं १ स्वर्णसिंहासनंदिव्यंसर्व
मंगलसंयुतं तवाहंस्थापयिष्यामिगणाध्यक्षनमोस्तुते आसनं २ गौरीसुतनमस्तेस्तुशंकरा-
प्रियनंदन पाद्यंगृहाणदेवेशगंधपुष्पाक्षतैःसह पाद्यं ३ अक्षतंगंधोदकंदिव्यंसर्वमंगलसंयुतं
गृहाणदेवदेवेशभक्तानांवरदायक इत्यर्घ्यं ४ गंगाजलंसमानीतंसुवर्णकलशेस्थितं आचम्यतां
गणाध्यक्षसर्वविघ्नहरोभव आचमनं ५ दधिक्षीरघृतंचैवमधुखंडविमिश्रितं तन्मधुदेवदेवे
शामधुपर्कंददामिते मधुपर्कं ६ स्नानंपंचामृतंदेवगृहाणवरदायक अनाथनाथसर्वज्ञस
र्वसिद्धिप्रदोभव पंचामृतस्नानं ७ सर्वतीर्थात्समुद्भूतंगंधतोयंकुशोधकं फलतोयैर्जलैर्गांगैःस्ना
पयामिगणेश्वर शुद्धस्नानं ८ रक्तवस्त्रद्वयंदेवदेवांगसदृशंप्रभो गणेश्वरगृहाणत्वंभक्तानां-
वरदायक वस्त्रं ९ राजतंब्रह्मसूत्रंचकांचनंचोत्तरीयकं गृहाणदेवदेवेशगणाध्यक्षनमोस्तुते
यज्ञोपवीतं १० श्रीखंडचंदनंदिव्यंकर्पूरेणचसंयुतं गंधंदास्यामिदेवेशगणाध्यक्षनमोनमः गंधं
११ अक्षतान्धवलान्देवगृहाणद्विरदानन सर्वदेवनमस्तुभ्यंहिताल्पयंकुरुमेफलं अक्षताः १२ सुगंधी
निचपुष्पाणिगृहाणद्विरदानन विनायकनमस्तेस्तुसुरासुरप्रपूजित पुष्पं १३ अथांगपूजा गणे
शायनमःपादौपूजयामि १ विघ्नराजाय जानुनी २ आखुवाहनाय ऊरू ३ हेरंबाय क
टिं ४ गणाधिपाय नाभिं ५ लंबोदराय उदरं ६ गणनाथाय हृदयं ७ गुहाग्रजाय

स्कंधौ· ८ स्थूलकंठाय कंठं· ९ पाशहस्ताय हस्तान्· १० गजवक्त्राय वक्त्रं· ११ विघ्नराजाय नेत्राणि· १२ सर्वेश्व
राय शिरः पूजयामि १३ अथ पत्रिकापूजा सुमुखाय नमः साचीपत्रं समर्पयामि १ गणाधिपाय भृंगराजपत्रं २
उमापुत्राय· बिल्वपत्रं· ३ गजाननाय दूर्वापत्रं· ४ लंबोदराय· बदरीपत्रं· ५ हरसूनवे· धत्तूरपत्रं· ६ गज-
कर्णाय· तुलसीपत्रं· ७ गुहाग्रजाय· अपामार्गपत्रं· ८ एकदंताय· कंटकारिपत्रं· ९ वक्रतुंडाय· शमीपत्रं· १०
विकटाय· करवीरपत्रं· ११ इभतुंडाय· अश्मंतकपत्रं· १३ कपिलाय· अर्जुनपत्रं· १४ भिन्नदंताय· विष्णुक्रांता
पत्रं· १५ पत्नीहीनाय· दाडिमीपत्रं· १६ वटवे· देवदारुपत्रं· १७ भालचंद्राय· मरुवकपत्रं· १८ शूर्पकर्णा
य· जातीपत्रं· १९ सुराग्रजाय· गांधारीपत्रं स· २० सिद्धिविनायकाय· केतकीपत्रं समर्पयामि नमः २१ इत्ये-
कविंशतिपत्राणि समर्पयामि २१ अथ दूर्वापूजा दूर्वायुग्मं गृहीत्वा तु गंधपुष्पाक्षतैर्युतं पूजयेत्सिद्धिविघ्नेशं-
प्रत्येकं सर्वनामभिः एकैकं समर्पयामीति शेषः गणाधिपाय नमः दूर्वायुग्मं १ उमापुत्राय नमः अघनाशिनेन
मः विनायकाय नमः ईशपुत्राय नमः सर्वसिद्धिप्रदायकाय नमः एकदंताय नमः ७ इभवक्त्राय नमः ८
मूषकवाहनाय नमः ९ कुमारगुरवे नमः १० सर्वनामभिरेकं दूर्वादलं समर्पयामि नमः २१ दशांगगुग्गु
लोधूपं सुगंधिं मनोहरं गृहाणेश्वर सर्वज्ञ उमापुत्र नमोस्तु ते धूपं सर्वज्ञ सर्वलोकेश सर्वेषां तिमिरापह
गृहाण मंगलं दीपं रुद्रप्रिय नमोस्तु ते दीपं नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु ईप्सितं मे वरं देहि परत्र-
च परां गतिं नैवेद्यं १६ तांबूलं गृह्यतां देव नागवल्लीदलैर्युतं कर्पूरेण च संयुक्तं देवतानां परं प्रियं तां
बूलं १७ इदं फलमिति १८ हिरण्यगर्भगर्भस्थमिति दक्षिणा १९ विघ्नेश्वर विशालाक्ष सर्वाभीष्टफलप्रद
प्रदक्षिणां करोमि त्वां सर्वान्कामान्प्रयच्छ मे प्रदक्षिणा २० नमस्कृतोसि देवेश सर्वविघ्नहरो भव ईप्सितं मे वरं
देहि नमस्ते भक्तवत्सल देवदेव जगन्नाथ भक्तानां वरदायक अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा न
मस्कारः विनायक नमस्तेस्तु विघ्नेशासुरपूजित ईप्सितं मे वरं देहि नमस्ते करुणाकर प्रार्थनामंत्रः
मल्लिकामालतीपुष्पनानाचंपकसंयुतं पुष्पांजलिं गृहाणेमं पादांबुजयुगार्पितं गणनाथेति मंत्रेण वा
गणाधिप नमस्तेस्तु सततं मोदकप्रिय अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा दाता विघ्नेश्वरो देवो गृहीता-
च स विघ्नराट् तस्मादिदं मया दत्तं संपूर्णं व्रतमस्तु मे गणेशः प्रतिगृह्णाति गणेशो वै ददाति च दीयते ग
णनाथाय प्रीयतां मे गणाधिपः सोमः सोमनसं नित्यं करोतु गणनायकः इति मंत्रं समुच्चार्य दद्याद्द्वि
जातये इति नैवेद्यदानं ॥ विनायकस्य प्रतिमां वस्त्रयुग्मसमन्वितां ब्राह्मणाय प्रदास्यामि सर्वविघ्नोप-
शांतये इति प्रतिमादानं ॥ [illegible] विघ्नानि नाशयाशु सर्वाणि सुरनायक कार्याणि सिद्धिमायांतु पूजिते त्व
[illegible] सूत्रातिरिक्तानि परिस्फुटानि यान्यत्र कर्माणि मया कृतानि तान्यानि सर्वाणि शुभप्रदाय प्रयांतु तुष्टिं
[illegible] ॥ अथ संकष्टहरणचतुर्थी कर्तव्या रोहिणीसहितचंद्रपूजां कुर्यात् अथ कथा ऋषय ऊचुः ॥
[illegible] नु कार्याणि कथं सिद्ध्यंति सूतज अर्थसिद्धिः कथं नृणां पुत्रसौभाग्यसंपदः दंपत्योः कलहे चैव बंधुभेदे तथा
णां उदासीने पुलोके च कथं संमुखता भवेत् विद्यारंभे तथा नृणां वाणिज्यार्थे कृषौ तथा नृपतेः परचक्रस्य जयसिद्धि
[illegible] सूत उवाच सन्नद्धयोः पुरा विप्राः कुरुपांडवसेनयोः पृष्टवान्देवकीपुत्रं धर्मपुत्रो युधिष्ठिरः ॥
[illegible] उवाच निर्विघ्नेन जयोस्माकं केषां वद देव कथं भवेत् कं देवं [illegible] सम्यक् राज्यं लभेमहि श्री
[illegible] गणाध्यक्षं विघ्नेशं सिद्धिदायकं तस्मिन्संपूजिते राजन्सर्वान्कामानवाप्स्यसि युधिष्ठिर
[illegible] विधानेन पूजनीयो गणाधिपः पूजितस्तु तिथौ कस्यां सिद्धिदो गणपो भवेत् श्रीकृष्ण उवाच ॥
[illegible] चतुर्थ्यां तु सदा पूज्यो नराधिप यदा चोत्पद्यते भक्तिस्तदा पूज्यो गणेश्वरः शुक्लपक्षे चतुर्थ्यां तु मासि भा-
[illegible] तथा प्रातः [illegible] तिलैः स्नात्वा मध्याह्ने पूजयेन्नृप निष्कमात्रसुवर्णेन तदर्धार्धेन वा पुनः स्वशक्त्या गण
[illegible] स्वर्णेन यथाकृतिं अथवा मृन्मयीं कुर्याद्वित्तशाठ्यविवर्जितः कृत्वा संपूजयेद्यत्नेन स्नाप्य पंचामृतैः

पुष्पैः वस्त्रं सर्वपदे रक्तं सुगंधं दद्यात्सुभावितं गणाध्यक्षेति नाम्ना वै गंधं दद्याच्च भक्तितः विनायकेति पुष्पाणि धूपं चोमासुतेति च दीपं रुद्रप्रियायेति नैवेद्यं विघ्ननाशिने ततो दूर्वांकुरान् एकविंशतिं चैकमेव हि पूजयेत्तु प्रयत्नेन एभिर्नामपदैः पृथक् गणाधिप नमस्तेस्तु उमापुत्राघनाशन विनायकेशपुत्रेति सर्वसिद्धिप्रदायक एकदंतेभवक्त्रेति तथा मूषकवाहन कुमारगुरवे तुभ्यं पूजनीयः प्रयत्नतः दूर्वायुग्मं प्रदातव्यं तु गंधपुष्पं प्रपूजयेत् एकैकेन तु नाम्ना वै पूजा चैकेन सर्वतः एकेन दूर्वांकुरेण सर्वतः सर्वनामभिः पूजा श्रीयदत्यैकं सर्वनामभिरिति वीरमित्रोदये तथैकविंशतिं पक्वान् मोदकान् घृतपाचितान् स्थापयित्वा गणाध्यक्षसमीपे कुरुनंदन दशविप्राय दातव्याः स्वयं चाद्यात्तथा दश पक्वं गणाधिपे दत्वा नैवेद्यं च नृपोत्तम गणेशः प्रतिगृह्णाति गणेशो वै ददाति च दीयते गणनाथाय प्रीयतां मे गणाधिपः सोऽयं सौमनसं नित्यं करोतु गणनायकः इति मंत्रं समुच्चार्य दद्याद्द्विजातये गुरुं व्रतोपदेष्टारमलंकृत्य प्रयत्नतः दद्याच्च दक्षिणां सम्यक् यथाविभवविस्तरं आनडुहमयं देवं ब्राह्मणाय निवेदयेत् कृत्वा नैमित्तिकं कर्म पूजयेदिष्टदेवतां ततः प्रार्थना विघ्नानि नाशमायांतु सर्वाणि सुरनायक कार्यं मे सिद्धिमायातु पूजिते त्वयि धातरि विप्राय भोजनं दद्यात् भुंजीयात्तैलवर्जितं एवं कृते धर्मराज गणनाथस्य पूजने विजयस्ते भवेन्नित्यं सत्यं सत्यं मयोदितं त्रिपुरं दग्धुकामेन पूजितः शूलपाणिना शक्रेण पूजितः पूर्वं तथा वृत्रवधे नृप रामेणाराधितः पूर्वं सीतामन्वेषता पुरा दृष्टा सीता महाभागा वानरेण हनूमता भगीरथेन तद्वच्च गंगामानयता पुनः अमृतोत्पादनार्थाय तथा देवासुरैरपि अमृताहरणात्पूर्वं वैनतेयेन पक्षिणा आराधितो गणाध्यक्षो अमृतं तु हृतं बलात् यदा एवं तु दैत्येन हृतो रुक्मिणिनंदनः आराधितो मया तद्वत् रुक्मिण्यासहितेन च कुष्ठव्याधियुतेनाथ सांबेनाराधितः पुरा जयकामस्तथा त्वं हि तमाराधय पांडव प्राप्स्यसि त्वं निजं राज्यं जित्वा शत्रुगणान् रणे सिध्यंति सर्वकार्याणि नात्र कार्या विचारणा सूत उवाच एवमुक्तस्तु कृष्णेन सानुजः पांडुनंदनः पूजयामास देवेशं पुत्रं त्रिपुरघातिनः शत्रुसंघान्निहत्याशु प्राप्तवान् राज्यमोजसा सिध्यंति सर्वकार्याणि मनसा चिंतितान्यपि विद्यारंभे पूजनीयो विद्यालाभो भवेन्नृणां विवाहे क्रियमाणे तु पूज्यश्चासौ विनायकः सिध्यंति सर्वकर्माणि अर्थसिद्धिर्भवेन्नृणां कृषिप्रारंभसमये कार्षिकेण विनायकः पूजनीयः प्रयत्नेन धान्यं तस्याक्षयं भवेत् वृष्टिकामैस्तथा शूद्रैः पूजनीयो गणाधिपः विद्याकामो लभेद्विद्यां धनकामो लभेद्धनं जयं च जयकामश्च पुत्रार्थी लभते सुतं पतिकामा च भर्त्तारं सौभाग्यं तु सुवासिनी विधवा पूजयित्वा तु वैधव्यं नाप्नुयात्पुनः यं यं चिंतयते कामं तं तं प्राप्नोति लीलया वैष्णवादिषु दीक्षासु आदौ पूज्यो गणाधिपः यस्मिन्संपूजिते विष्णुरीशो भानुस्तथा ह्युमा हव्यवाहमुखा देवाः पूजितास्तु न संशयः चंडिकाद्या मातृगणाः परितुष्टा भवंति च यस्मिन्संपूजिते भक्त्या विप्राः सिद्धिविनायके य इदं शृणुयान्नित्यं श्रावयेद्वापि भक्तितः सिध्यंति सर्वकार्याणि सिद्धिदस्य प्रसादतः ॥ ॥ इति स्कंदपुराणे सिद्धिविनायकव्रतं ॥

इयमेव चतुर्थी शिवा नाम्नी ॥ ॥ सुमंतुरुवाच ॥ शिवा शांता सुखा राजन् चतुर्थी त्रिविधा मता मासि भाद्रपदे शुक्ला शिवा लोकेषु पूजिता माघशुक्ला स्मृता शांता भौमवारे सुखा स्मृता तस्यां स्नानं तथा दानमुपवासो जपस्तथा क्रियमाणं शतगुणं प्रसादाद्दंतिनो नृप दंतिनो विनायकस्येत्यर्थः गुडलवणघृतानां दानं शुभकरं स्मृतं गुडापूपैस्तथा वीर पुण्यब्राह्मणभोजनं चतुर्थ्यां नरशार्दूल पूजनीयाः सदा स्त्रियः गुडैर्लवणपूजाभिः सुसस्वश्रूश्वमातरः ताः सर्वाः सुभगाः सर्वे विघ्नेशस्यानुमोदनात् कन्या वा तु विशेषेण विधिनानेन पूजयेत् ॥ इति भविष्योत्तरोक्तं शिवाचतुर्थीव्रतं ॥ ॥ अस्यामेव दूर्षणी नाम्नी पार्वतीपूज्या तत्र स्मृतिः ॥ भाद्रशुक्लचतुर्थ्यां तु दूर्षणी नाम या मता पूजयेत्पार्वतीं तस्यां सौभाग्यं न विहन्यते ॥ अथ भाद्रशुक्लपंचम्यां नागपूजा ॥ अत्र पंचमी परयुता ग्राह्या तदुक्तं चमत्कारचिंतामणौ ॥

पंचमीनागपूजायांग्राह्यासषष्ठीसमन्विता तस्यांतुतुषितानागाइतरायचतुर्थिकेतिवचनात्सूर्योदययु
तांग्राह्येत्यर्थः प्रभासखंडे ॥ शिवउवाच ॥ तथाभाद्रपदेमासिपंचम्यांश्रद्धयान्वितः यस्त्वालेख्यनरो
नागान्नीलपीतादिवर्णकैः कुरुकुल्यांतथावीथ्यांस्वगृहेविलिखेद्बुधः कुरुकुल्लामंत्रेण ॥ ॐकुरु
कुल्लेहुंफट्स्वाहा पूजयेद्गंधपुष्पैश्चपयसापायसेनच तस्यसंतुष्टिमायांतिपन्नगास्तक्षकादयः आ
सप्तमात्कुलात्तस्यनभयंनागतोभवेत् अत्रायंप्रोच्यतेमंत्रःसर्वासुखनिषेधकः तस्मिन्जप्तमात्रेतुन-
विषंक्रमतेतदा इत्येवंकथितंदेविनागव्रतमनुत्तमं यच्छ्रुत्वाचपठित्वाचमुक्तःस्यात्सर्वपातकैः नागा
श्चात्र वासुकि तक्षक कालिय मणिभद्र ऐरावत कर्कोटक धनंजय धृतराष्ट्रसंज्ञाः इमालेख्यपंचमी
अत्रैवनागदष्टव्रतमुक्तं सुमंतुरुवाच॥ नागदष्टोनरोराजन्प्राप्यमृत्युंव्रजत्यधः अधोगत्वाभवेत्सर्पोनि-
र्विषोनात्रसंशयः॥ शतानीकउवाच॥ नागदष्टःपितायस्यभ्रातावादुहिताथवा मातापुत्रोथवाभार्याकर्त-
व्यंतद्वदस्वमे मोक्षायतस्यविप्रेंद्रदानंव्रतमुपोषणं ब्रूहिमेद्विजशार्दूलयेनतद्वैकरोम्यहं सुमंतुरुवाच
उपोष्यापंचमीसम्यङ्नागानांबलवर्द्धिनी त्वमेकमेवतावच्चविधानंशृणुभारत उपोष्येतिदिवसेभोजना
भावस्तेननक्तव्रतमित्यग्रेतथोक्तेः मासिभाद्रपदेचैवशुक्लपक्षेतुपंचमी सर्वपुण्यतमाप्रोक्ताग्राह्यासौ
गत्यकाम्यया चतुर्थ्यामेकभक्तंचतस्यांनक्तंप्रकीर्तितं तस्यांपंचम्यामित्यर्थः कृत्वारौप्यमयंनागमथवा
कलधौतजं अथवादारुमयंभव्यंमृण्मयंवाथभक्तितः पंचम्यामर्चयेद्भक्त्यानागंपंचफणंतथा करवीरै
स्तथापद्मैर्जातिपुष्पैःसुगंधिभिः गंधपुष्पैःसुनैवेद्यैःस्नापितंक्षीरादिभिर्नृप ब्राह्मणान्भोजयेत्पश्चाद्घृत-
पायसमोदकैः अनंतंवासुकिंशंखंपद्मंकंबलमेवच धृतराष्ट्रंशंखपालंकालियंतक्षकंतथा पिंगल-
चतथानागंमासिमासिप्रपूजयेत् पूजयित्वाप्रयत्नेनपंचम्यांनक्तभुग्भवेत् एवंद्वादशकृत्वावैमासि-
भाद्रपदेनृप वत्सरांतेयथाशक्त्यामहाभोज्यंतुकारयेत् ब्राह्मणानांयतीनांचनागानुद्दिश्यभक्तितः इति
हासविदंनागं कांचनंरत्नचित्रितं गांचदद्यात्सवत्सांवैसर्वोपस्करसंयुतां दानकालेपठेदेतत्स्मरन्नारा-
यणंविभुं सर्वगंसर्वधातारमनंतमपराजितं येकेचिन्मत्कुलेसर्पैर्दष्टाःप्राप्ताअधोगतिं व्रतेनानेन-
गोविंदभक्तिभाजोभवंतुते इत्युच्चार्याक्षतैर्युक्तंसितचंदनमिश्रितं वासुदेवाग्रतोभूपतोयंतोयेविनिः
क्षिपेत् अनेनविधिनासर्वेयेमरिष्यंतियेमृताः सर्पतस्तेभियायांतिस्वर्गतिंनृपसत्तम कृत्वासर्वान्सु
हृत्कुलजान्कुलनंदन प्रयातिविष्णुसान्निध्यंसेव्यमानोप्सरोगणैः वित्तशाठ्यविहीनोयःसर्वमेतत्फलं
लभेत् नक्तेनभुक्तिसहिताःकिलपंचमीषुयेपूजयंतिसुभगाःकुसुमोपहारैः तेषांगृहेष्वभयदाहिभवं
तिसर्पादर्पान्वितामणिमयूखविभासितांगाः इतिदष्टपंचमीव्रतं अस्यामेवभाद्रशुक्लपंचम्यां ऋषिपंच
मीव्रतं तत्रमध्याह्नव्यापिनीपंचमीग्राह्या पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनीतिथिरितिहारीतोक्तेः
दिनद्वयेतथात्वेहेमाद्रिमतेपरा पंचमीतुप्रकर्तव्याषष्ठीयुक्तातुनारदेतिवाक्यात् सितापरयुतातस्माद
सितापूर्वसंयुतेति दीपिकोक्तेश्च शुक्लपक्षेतिथिर्ग्राह्यायस्यामभ्युदितोरविरितिवचनाच्च ऋषिपंचमीष
ष्ठीयुतेति दिवोदासीयेपि माधवमदनरत्नादिमतेतुपूर्वासर्वत्रपंचमीपूर्वैवेत्युक्तेः निर्णयसिंधौकल्पत
त्नावल्यामप्येवं अत्रऋषिपूजनमुक्तंनारदीये भाद्रस्यशुक्लपंचम्यांवेदिकांकारयेन्मुदा गोमयेनोपलि
प्यकृत्वापुष्पोपशोभितां तत्रास्तीर्यकुशान्विप्रऋषीन्सप्तसमर्चयेत् गंधैश्चविविधैःपुष्पैर्धूपैर्दीपैः
सुशोभनैः कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगौतमः जमदग्निर्वसिष्ठश्चसप्तैतेऋषयःस्मृताः एतेभ्योवै
वविधिवत्कल्पयित्वाविधानतः नैवेद्यंकल्पयेद्विद्वान्श्यामाकाद्यैरकृष्टजैः तन्निवेद्यविसृज्यैतान्स्वयं
वाधानदेवहि अनेनविधिनासप्तवर्षाणिप्रतिवत्सरं कृत्वातानेववरयेदाचार्यान्सप्तवैदिकान् प्रतिमाः
सप्तर्षीन्सुवर्णेनस्वशक्तितः जटिलाःसाक्षसूत्राश्चकमंडलुसमन्विताः संस्थाप्यकलशेष्वेतान्नता-

मेऽष्टगणमयेऽथवा स्नापयेद्विधिवद्भक्त्या पृथक्पंचामृतैरपि उपचारैः षोडशभिस्ततः संपूज्य भक्तितः अर्घ्यं दत्वा ततो रम्ये तानि लब्धीदियवादिभिः सहस्तोमाइ लिख्यानामभिः पूजयेत् पृथक् पुष्पैर्मंत्रैस्तथैवान्यैर्जप्त्वा प्रणामकृतिं चरेत् ततस्तु सप्तगादद्याद्वस्त्रालंकारसंयुता आचार्यं पूजयेच्चैव वस्त्रालंकारभूषणैः अनुज्ञया गुरोः पश्चान्मूर्तीर्विप्रेषु चार्चयेत् भोजयित्वा च तान्भक्त्या प्रणिपत्य विसर्जयेत् ततः शिष्टैः सह स्नातः स्वयं ब्राह्मणशेषतः एवं कृत्वा व्रतं सा गमेवानुज्ञाय वांछितान् सप्तर्षीणां प्रसादेन विमानवरगो भवेत् ब्रह्मपुराणेपि नभस्यशुक्लपक्षेतु या वै भवति पंचमी नद्यादिके तदा स्नात्वा कृत्वा नियममेव च ब्राह्मणी क्षत्रिया वैश्या शूद्रा चापि वरानने कृत्वा नैमित्तिकं कर्म गत्वा निजगृहं पुनः वेदीं सम्यक् प्रकुर्वीत गोमयेनोपलेपितां रंगवल्लीसमायुक्तां श्वेतपुष्पोपशोभितां ततः सप्तऋषीन् दिव्यान्भक्तियुक्तः प्रपूजयेत् गंधैश्च विविधैः पुष्पैर्धूपदीपैः सुशोभनैः ततो नैवेद्यसंपन्नमर्घ्यं दद्याच्छुभैः फलैः तत्रार्घ्यमंत्राः कश्यपोत्रिर्भरद्वाजो विश्वामित्रोथ गौतमः जमदग्निर्वसिष्ठश्च अरुंधत्या समन्विताः गृह्णन्त्वर्घ्यं मया दत्तं तुष्टा भवंतु मे सदैवेति एवं पूजां विनिर्वर्त्य ऋषीन्ध्यात्वा समाहितः अकृष्टपृथ्वीसंजातं शाकाद्याहारं प्रकल्पयेत् शायीत ब्रह्मचर्येण ऋषीन्ध्यात्वा समाहितः अनेन विधिना सम्यक् वेदवेदांगपारगान्नित्यादि सर्वं न पाठः अनुज्ञया गुरोः पश्चाद्ब्राह्मणेभ्यो निवेदयेत् प्रीतिभावसमायुक्तो भोजयित्वा यथाविधि अनेन विधिना सम्यग्व्रतमेतत्समाचरेत् सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु यत्फलं सर्वदानेषु दत्तेषु तदेतत्फलमाप्नुयात् ॥

इति नारदीये ब्रह्मपुराणे च ऋषिपंचमीव्रतविधानम् ॥

अथ कथा हेमाद्रौ ब्रह्मांडपुराणे मिताश्व उवाच ॥ श्रुतानि देवदेवेश व्रतानि सुबहूनि च संप्रतं मे समाचक्ष्व व्रतं पापप्रणाशनं ॥ ब्रह्मोवाच ॥ शृणु राजन्प्रवक्ष्यामि व्रतानामुत्तमं व्रतं ऋषिपंचमीति विख्यातं सर्वपापहरं परं येन चीर्णेन राजेंद्र नरकं नैव पश्यति अत्रैवोदाहरंतीममितिहासं पुरातनं वैदर्भोऽभूत् द्विजवर उत्तंगो नाम नामतः तस्य भार्या सुशीलेति पतिव्रतपरायणा अस्याश्चापत्ययुगलं पुत्रो दुहिता विभीषणः अधीतवान्सुतस्तस्य वेदान्सांगपदक्रमान् समानेन कुलीनेन सुतायाश्चापि विवाहिता विवाहितैव सा दैवाद्वैधव्यं प्राप सत्तमा स्वशीलं पालयंती सा आस्ते निजपितुर्गृहे ततो दुःखेन संतप्तः सुतं संस्थाप्य वेश्मनि गंगातीरे वनं प्राप्तः सकलत्रस्तया सह सतत्राध्यापयामास शिष्यान्वेदविदोत्तमः सुता च कुरुते तत्रापि पितुः शुश्रूषणं परं पितुः शुश्रूषणं कृत्वा परिश्रांता कदाचन निशीथे शयने तस्याः सुप्ताया कृमिराशिरजायत तां तेन तथाविधां दृष्ट्वा विवर्णा प्रस्तरस्थितां शिष्या निवेदयामासुर्मातुः करुणान्विताः न जानीमो वयं किंचिद्देवी साध्वी तथाविधा कृमिराशिमयी जाता मातः संपश्य दृश्यतां वज्रपात समं वचस्तच्छ्रुत्वा शिष्यैरुदीरितं संभ्रांतमानसा शीघ्रं तत्समीपमुपागता सुतां तथाविधां दृष्ट्वा विललाप सुदुःखिता उरश्च ताडयामास सुतरां मोहमाप च क्षणेन प्राप्य चैतन्यं सुतायाश्च परिमृज्य च समालभ्य च बाहुभ्यां नीत्वा तत्पितुरंतिकं स्वामिन्कथय मे साध्वी केन दुष्कृतकर्मणा निशीथसंप्रसुप्तेयं जायते कृमिसंकुला एतच्छ्रुत्वा ततो वाक्यं मुनिर्ध्यानपरायणः ज्ञात्वा निवेदयामास तस्याः कारणमुक्तवानिदं ॥ ऋषिरुवाच ॥ [illegible] जन्मनि ब्राह्मणी ह्यभूत् नात्मसा रस्वभांडे [illegible] अस्याः कृतेन पापेन कृमिवद्वपुः रजस्वलायाः पापेन युक्ताभवत्तिसा प्रथमेहनि चांडाली द्वितीये ब्रह्मघातिनी तृतीये रजकी प्रोक्ता चतुर्थेहनि शुध्यति तथैतया सखीसंगाद्व्रतं दृष्ट्वाऽवमानितं दृष्टव्रतप्रभावेण जाता द्विजकुले मले अवमानाद्व्रतस्यास्य कृमिराशिमयी तु सा पतिना कथितं तत्र कारणं दुष्कृतस्य च सुशीलोवाच ॥ दर्शनादपि यत्तस्याद्विप्राणां निर्मले कुले जन्म सुपुण्यं द्वितयं नो द्विजायते ब्रह्मतेजसा अवमानात्प्रजायेत विप्रेंद्र कृमिराशयः महाश्चर्यकरं नाथ तद्व्रतं कथय स्वमे ॥ ऋषिरुवाच ॥ सुशीले श्रू-

एतत्सम्यग्व्रतानामुत्तमंव्रतं येनचीर्णेनसद्यःपापादस्मात्प्रमुच्यते ङःखवृत्रयाभिघातश्चजायते
नात्रसंशयः कल्याणानिप्रवर्द्धंतेसंपदश्चनिरापदः नभस्येशुक्लपक्षेतुयदाभवतिपंचमी नद्या
दिषुतदास्नात्वाकृत्वानियममेवच विधायनित्यकर्माणिगत्वाद्वारवतीमृषीन् द्वारवतीत्र्यभिहोत्रशा
ला स्नापयेद्विधिवद्भक्त्यापंचामृतरसैःशुभैः चंदनागुरुकर्पूरैर्विलिप्यचसुगंधिभिः पूजयेद्विवि
धैःपुष्पैर्गंधधूपादिदीपकैः समाच्छाद्यशुभैर्वस्त्रैःसोपवीतैर्यथाविधि ततोनैवेद्यसंपन्नमर्घ्यंदद्याच्छु
भैःफलैः अर्घ्यमंत्रः जमदग्निभरद्वाजइतिश्रोतव्यमिदमाख्यानंशाकाहारंप्रकल्पयेत् स्थातव्यं
ब्रह्मचर्येणऋषिध्यानपरायणैः अनेनविधिनासम्यग्व्रतमेतत्समाचरेत् तस्यापिजायतेपुण्यंत
च्छृणुष्वसमाहिता सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुयत्फलं सर्वदानेषुदत्तेषुतदस्यव्रतमात्रतः कृत
नेयाव्रतंचैतत्सानारीसुखभागिनी रूपलावण्यसंयुक्तापुत्रपौत्रादिसंयुता इहलोकेसदैवस्यात्पर
त्राप्युत्तमागतिः व्रतस्यास्यप्रभावेणजातिस्मरतिपौर्विकी ॥ इतिहेमाद्रौब्रह्मांडपुराणेऋषिपंच
मीव्रतकथा ॥ ॥ अथपूजाविधिः ॥ ॐमासपक्षाद्युल्लिख्यमयाज्ञानतोऽज्ञानतोवारजस्वला
वस्थायांभांडादिसंपर्कजनितदोषपरिहारार्थंशास्त्रोक्तसमस्तफलप्राप्त्यर्थंऋषिपंचमीव्रतपूज-
नमहंकरिष्ये इतिसंकल्प्य पीठेकलशेवादर्भमयानरुंधतीसहितान्सप्तऋषीन्पूजयेत् तत्रमंत्राः
आगच्छंतुमहाभागाश्चतुर्वेदस्वरूपिणः यावद्व्रतमहंकुर्वेकृपयाभवतांप्रभो आवाहनं मूर्तंब्रह्म-
ण्यदेवस्यब्राह्मणानिजमुत्तमं सूर्यकोटिप्रतीकाशंऋषिवृंदंविचिंतयेत् इतिध्यानं ऋग्यजुःसाम
वेदानांस्वरूपेभ्योनमोनमः पुराणपुरुषेभ्योहिदेवर्षिभ्योनमोनमः आसनं गंधपुष्पाक्षतैर्युक्तं
पाद्यंगृह्णंतुभोद्विजाः प्रसादंकुरुतप्रीत्या तुष्टाःसंतुसदामम पाद्यं नभस्येशुक्लपंचम्यामर्चिताऋषि
सत्तमाः दहंतुपापंमेसर्वमर्घ्यंगृह्णंतुवोनमः अर्घ्यं लोकानांसृष्टिकर्तारोयूयंसर्वेतपोधनाः नमोवो
धर्मविज्ञेभ्योमहर्षिभ्योनमोनमः आचमनं मंदाकिनीगोतमीचयमुनाचसरस्वती गोमतीनर्म-
दातापीताभ्य स्नानीयमाहृतं स्नानं सर्वेनित्यंतपोनिष्ठाब्रह्मज्ञाःसत्यवादिनः वस्त्राणिप्रतिगृह्णं-
तुमुक्तिंयच्छंतुसर्वदा वस्त्रं यज्ञोपवीतंपरमंपवित्रमितियज्ञोपवीतं कुंकुमागुरुकर्पूरसुगंधै
र्मिश्रितंशुभं गंधाढ्यंचंदनंदिव्यंगृह्णंतुऋषिसत्तमाः चंदनं रंजिताःकुंकुमाद्येनअक्षताश्चसु
शोभनाः गृह्णंतुममसंतुष्टाःप्रसन्नाऋषिसत्तमाः अक्षताः माल्यानिवकुलादीनिमालत्यादीनिवैद्विजा
मयाहृतानिपुष्पाणिपूजार्थंप्रतिगृह्यतां पुष्पाणि वनस्पतिरसोधूपोगंधाढ्यःसुमनोहरः आघ्रेयःस
र्वदेवानांधूपोयंप्रतिगृह्यतां धूपः आज्यंचवर्तिसंयुक्तंवह्निनायोजितंमया दीपंगृह्णंतुमुनयस्त्रै-
लोक्यतिमिरापहं दीपं नानापक्वान्नसंयुक्तंरसैःषड्भिःसमन्वितं नैवेद्यमृषयःसर्वेगृह्णंतुवसु-
दायकाः नैवेद्यं लोकानांसृष्टिकर्तारोयूयंसर्वेतपोधनाः नमोवोधर्मविज्ञेभ्योमहर्षिभ्योनमोनमः आ-
चमनं पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतं कर्पूरादिसमायुक्तंतांबूलंप्रतिगृह्यतां तांबूलं इदं
फलमितिफलं हिरण्यगर्भगर्भस्थमितिदक्षिणा यानिकानिचपापानिप्रदक्षिणा वायनंफलसंयु
क्तंव्रतसंपूर्तिहेतवे भवंतःप्रतिगृह्णंतुज्योतिरूपास्तपोधनाः वायनं न्यूनातिरिक्तकर्माणिमयाया
निकृतानिच क्षमध्वंतानिसर्वाणियूयंसर्वेतपोधनाः इतिप्रार्थना इतिपूजा ॥ ॥
अथकथा युधिष्ठिरउवाच श्रुतानिदेवदेवेशव्रतानिसुबहूनिच सांप्रतंमेसमाचक्ष्वव्रतंपा-
पप्रणाशनं श्रीकृष्णउवाच अथान्यच्चापिराजेंद्रऋषिपंचमिसंज्ञिता कथयिष्यामियांकृत्वानारी-
पापात्प्रमुच्यते युधिष्ठिरउवाच कीदृशीपंचमीकृष्णकथंचऋषिसंज्ञिता पातकान्मुच्यतेकस्मान्ना
रीयदुकुलोद्भव श्रीकृष्णउवाच अज्ञानाज्ज्ञानतोवापियास्त्रीजातारजस्वला दुष्टास्पृशतिभांडानिगृह

कर्मणि संस्थिताः प्राप्नोति सा महापापं सर्ववर्णसमुद्भवा स्पर्शदोषकारणं यस्माद्वर्जनीया रजस्वला शो-
त्साध्या एव तस्मात्पि चातुर्वर्ण्येन भारत ब्रह्महत्यां पुरा शक्रो वृत्रं हत्वाप्यवाप्तवान् तया वै व्रीडितो राज
न् पीडितो वृत्रहा पुनः ब्रह्माणं समुपागच्छदात्मनः शुद्धिकारणात् शुद्धिं शक्रस्य राजेंद्र प्रहृष्टेनांतरा-
त्मना विभज्य ब्रह्महत्यां तु चतुर्द्धा च चतुर्मुखः प्राक्षिपत् राजशार्दूल चतुस्थानेषु वै तदा वह्नौ प्रथमजा
तासु ज्वालासु च नदीषु च पर्वतेषु च राजेंद्र नारी रजसि चैव हि अतो रजस्वला नारी शोत्साध्या च प्रयत्नतः
ब्राह्मणैः शासनार्थं चातुर्वर्ण्येन सर्वदा प्रथमेऽहनि चंडाली द्वितीये ब्रह्मघातिनी तृतीये रजकी प्रोक्ता चतु
र्थेऽहनि शुद्ध्यति अज्ञानाज्ज्ञानतो वापि जातसंपर्कपातकं तस्याप संहत्यार्थं हि कार्य्येयमृषिपंचमी सर्व
पापप्रशमनी सर्वोपद्रवनाशिनी ब्रह्मक्षत्रियविट्शूद्रैः स्त्रीभिः कार्या विशेषतः ॥ श्रीकृष्ण उवाच ॥ अ
थान्यदपि वक्ष्यामि तव राजन् कथानकं पुरा कृतयुगे राजन् विदर्भायां बभूव ह श्येनजिन्नाम राजेंद्रश्चतु
र्वर्णानुपालकः तस्य देशे च सद्विप्रो वेदवेदांगपारगः सुमित्रो नाम राजेंद्र सर्वभूतहिते रतः कृषिष्व
ास समासीनः कुटुंबपरिपालकः तस्य भार्या सुसाध्वी च पतिशुश्रूषणे रता जयश्रीर्नाम विख्याता बहुभृ
त्यसुहृज्जना क्षेत्रादिषु रता साध्वी व्याकुलीकृतमानसा एकदा सा त्वनिप्राप्तमृतुकालं न्यलोकयत्
रजस्वलापि सा नारी गृहकर्म च कार ह भांडानि सास्पृशद्राजन् तैः प्राप्तेऽपि भामिनी कालेन बहुना साध्वी
पंचत्वमगमत्तदा भार्या तस्य जयश्रीः सा ऋतुसंपर्कदोषतः शुनीयोनिमनुप्राप्ता सुमित्रोऽपि नरेश्वर
तस्याः संपर्कदोषेण बलीवर्दो बभूव ह तद्दोषेण महाराज दुर्गतिं तौ गतौ तदा सुमित्रस्य च पुत्रोऽभू
त्पितृशुश्रूषणे रतः सुमतिर्नाम धर्मज्ञो देवतातिथिपूजकः तस्य तौ पितरौ पार्थ ऋतुसंपर्कदोषतः
तिर्यग्योनिमनुप्राप्तौ तु भो जातिस्मरौ नृप उच्छिष्टभोजिनी साभूत्स्मरंती पूर्वपातकं सुमित्रोऽपि पितात-
स्य बलीवर्दो बभूव ह अथ क्षयाहे संप्राप्ते पितृशुश्रूषणे रतः भार्यां चंद्रवतीं प्राह सुमतिः श्रद्धयान्वितो
तया कृता पाकशुद्धिः सुमतेर्भर्तुराज्ञया मुक्तं पायसभांडेऽस्याः सर्पेण गरलं ततः दृष्ट्वा ब्रह्मवधाद्भीता शु
नी भांडान्स्पृशन्मुहुः द्विजभार्या च तां दृष्ट्वा उल्मुकेन जघान तां भोजिता ब्राह्मणास्तत्र श्राद्धं कृत्वा प्रयत्नतः त
तो भुक्तेषु निःशेषे पुनोच्छिष्टं प्रददौ बहिः दारस्था या स्तदा शुन्या उपवासस्तथाभवत् ततो रात्रौ प्रवृत्तायां
सा शुनी क्षुधिता नृप बलीवर्दमुपागत्य भर्त्तारमिदमब्रवीत् बुभुक्षिताद्य नाथाहं न दत्तं भोजनं तु मे ग्रासा
दिकं वा न लभे क्षुधा मां बाधते बलात् अन्यस्मिन्दिवसे पुत्रो मम लेह्यं ददात्यसौ अद्य मह्यं किमप्येव उच्छिष्ट
मन्नं नो ददौ पायसान्ने प्रपाताद्य गरलं सर्पसंभवं मया विचिंत्य मनसा मरिष्यंति द्विजोत्तमाः संस्पृष्टं पा
यसं —— रोषाद्वध्याहं ताडिता भृशं दुखितं तेन गात्रं मे कटिर्भग्ना करोमि किं ततः प्रहस्य वै भर्त्ता भद्रे ते
पायसस्पर्शहात् कथं हृतास्म्यशक्तश्च भारवाहत्वमागतः अद्याहमात्मजैः क्षेत्रे वाहितः सकलं दिनं
मारितश्चात्मजेनाहं मुखं बद्धा बुभुक्षितः वृथा श्राद्धं कृतं तेन जाताद्य मम कष्टता श्रीकृष्ण उवाच ॥ तयोः
संवदतोरेवं मातापित्रोश्च भारत श्रुत्वा वाक्यं तदा पुत्रो यदुक्तं च तदोभयोः ततो रजन्यां तत्कालं ददौ तस्मै
सुभोजनं पितरौ तौ विदित्वा तु दत्तवान्सुमतिस्तदा तदासौ दुःखितः पुत्रः श्रुत्वावस्थां तदा तयोः माता
पित्रोश्च राजेंद्र तदासौ प्रस्थितो वनं ज्ञातुमिच्छामि कष्टं वै मातापित्रोश्च भारत तत्र गत्वा ज्ञानवृद्धान् ऋ-
षीन्सर्ववनाश्रितान् प्रणिपत्याब्रवीद्वाक्यं हितं चैव तदा तयोः सुमतिरुवाच कथयध्वं ब्रह्मर्षयः प्रश्नमेत
त्समाहिताः केन कर्मविपाकेन पितरौ मे न पोषिताः इमामवस्थां संप्राप्तौ मोच्यं ते पातकात्कथं ऋषय
ऊचुः तव माता पुरा विप्र स्वगृहे बालभावतः ऋतुप्राप्तं विदित्वा तु संपर्कमकरोद्द्विज तेन कर्मवि-
पाकेन शुनीयोनिमुपागता पिता च स्पर्शदोषेण बलीवर्दो बभूव ह एतयोर्मुक्तिकामार्थं कुरुत्व ऋषि
पंचमी भार्यया सह विप्रेंद्र ऋषीन्संपूज्य यत्नतः आचरस्व व्रतं तत्र सप्तवर्षं द्विजोत्तम अंते चोद्या

पनंकुर्य्याद्वित्तशाठ्यविवर्जितः शाकाहारस्तुकर्त्तव्यःश्यामाकाहारएववा नीवारैर्वापिकर्त्तव्यःकृ
ष्टपच्यंनभक्षयेत् श्राव्यभाद्रपदेमासिशुक्लपक्षस्यपंचमी तस्यांमध्याह्नसमयेनद्यादौविमलेजले कृ
त्वापामार्गकाष्ठेनदंतधावनमादितः आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वन्नोदे
हिवनस्पते संप्रार्थ्यानेनमंत्रेणकुर्य्याद्वैदंतधावनं मुखदौर्गंध्यनाशायदंतानांचविशुद्धये ष्ठीवनायम-
लानांचकुर्वेहंदंतधावनं अनेनदंतान्संशोध्यस्नायात्मन्त्रानुपूर्वकं तिलामलककल्केनकेशान्सं
शोध्ययत्नतः परिधायनवेशुद्धवाससीसुसमाहितः पूजयस्वऋषीन्दिव्यानरुंधत्यासमन्वितान्
कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगौतमः जमदग्निर्वसिष्ठश्चसाध्वीचैवाप्यरुंधती मंत्रेणानेनुसप्तर्षी
न्पूजयेत्तुसमाहितः व्रतेनऋषिपंचम्याःकृतेनैवंद्विजोत्तम ऋतुसंपर्कजोदोषःक्षयंयातिनसंशयः
कृष्णउवाच श्रुत्वातत्तुमतिर्वाक्यंपरमंऋषिभाषितं गृहमेत्यव्रतंचक्रेसभार्य्यःश्रद्धयान्वितः व्रतंतु
ऋषिपंचम्याःसर्वपापविनाशनं कृत्वासर्वंयथोक्तंचमातापित्रोःफलंददौ व्रतपुण्यप्रभावेणमातातस्य
स्वयोनितः मुक्तान्वपतिशार्दूलविमानवरमास्थिता दिव्यांवरधराभूत्वागतास्वर्गेचभारत पितापिसोमृ
तोगच्छत्सुमतेःपशुयोनितः स्वर्गंप्राप्तोमहाराजव्रतस्यास्यप्रभावतः कायिकंवाचिकंवापिमानसंयच्च-
दुष्कृतं तत्सर्वंविलयंयातिव्रतस्यास्यप्रभावतः अस्ययज्जायतेपुण्यंतच्छृणुष्वनृपोत्तम सर्वव्रतेषुयत्पु-
ण्यंसर्वतीर्थेषुयत्फलं सर्वदानेषुदत्तेषुतदेतद्व्रतधारणात् कुरुतेयाव्रतंनारीसाभवेत्सुखभागिनी रूप
लावण्यसुयुक्ताचपुत्रपौत्रादिसंयुता इहलोकेसदैवस्यात्परत्रचपरांगतिं एतत्तेकथितंराजन्व्रतानां
मुत्तमंव्रतं सर्वसंपत्प्रदंचैवनारीणांपापनाशनं धनंयशश्चस्वर्गश्चपुत्रानपिचभारत पठतांशृण्व
तांवापिनारीणांपापनाशनं ॥ ॥ इतिभविष्योत्तरेऋषिपंचमीव्रतकथा ॥ ॥

अथोद्यापनं युधिष्ठिरउवाच किमस्योद्यापनंप्रोक्तंव्रतपूर्णफलप्रदं सुमतिःकेनविधिना
चकारवदतत्त्वतः श्रीकृष्णउवाच पूर्वस्मिन्दिवसेकुर्य्यादेकभक्तंसमाहितः शुचौदेशेसमालिख्य
सर्वतोभद्रमंडलं अव्रणंसजलंकुंभंताम्रंमृण्मयमेववा संस्थाप्यवस्त्रसंवीतंकंठदेशेसुशोभने पंच
रत्नसमायुक्तंफलगंधाक्षतैर्युतं सहिरण्यंसमाच्छाद्यताम्रेणपटजेनवा वंशमृण्मयपात्रेणयवपूर्णे
नचैवहि आच्छादयेच्चचैलेनलिखेदष्टदलंततः सौवर्णीःप्रतिमाःकार्य्याःऋषीणांभावितात्मनां पले
नवातदर्धेनतदर्धार्धेनवापुनः शक्त्यावाकारयेत्तत्रवित्तशाठ्यविवर्जितः वितानंपंचवर्णंचफल
पुष्पसमन्वितं बध्नीयादुपरिष्टात्तुसंविधायात्रवेदिकां मध्याह्नेपूजयेद्भक्त्याऋषीन्श्रद्धासमन्वितः
कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगौतमः जमदग्निर्वसिष्ठश्चसाध्वीचैवाप्यरुंधती मंत्रस्नानेनराजेंद्रकृ
त्वापूजांसमाहितः रात्रौजागरणंकुर्य्यात्पुराणश्रवणादिभिः कृतनित्यक्रियःप्रातर्जुहुयात्तिलसर्पि
षा वैदिकोवापिपौराणोऽधिकारान्मनुस्मृतात् अत्रवैदिकोमंत्रः सहस्तोमाःसहछंदसइति ॥
सप्तऋषयइतिवा अष्टोत्तरसहस्रंवाशतमष्टोत्तरंतुवा पुनःपूजांततःकृत्वागुरुंसंपूजयेद्व्रत
स्वर्णांगुलीयवासोभिःकुंडलामृतभोजनैः दद्यादेकांसवत्सांतुगुरवेगांपयस्विनीं पूजयेद्द्विजःस-
प्तवासोभिर्दक्षिणादिभिः कलशांश्चपवित्रांश्चदद्यात्तेभ्यःसुभक्तितः आचार्य्यंचसपत्नीकंप्रणिपत्य
क्षमापयेत् भोजयेद्ब्राह्मणान्भक्त्यादीनानाथांश्चतर्पयेत् सोपस्करांतांप्रतिमामाचार्य्यायनिवेदयेत्
लब्धानुज्ञोनुभुंजीतस्वेष्टैर्बंधुजनैर्वृतः उद्यापनविधिःप्रोक्तःसर्वत्रायंफलार्थिनां एवंयःकुरुतेभूप
उद्यापनविधिंपरं सर्वपापविनिर्मुक्तःस्वर्गलोकेमहीयते इहलोकेचिरंकालंभर्त्रासहसुचिस्मिता
पुत्रपौत्रपरिवृताभुक्त्वाभोगान्मनोरमान् निष्पापासुभगानित्यंलभतेचाक्षयांगतिं ॥ इतिभविष्यो
त्तरेसोद्यापनमृषिपंचमीव्रतम् ॥ ॥ ॥ अथप्रयोगः नद्यादौसमंत्रकदंतधाव

नपूर्वकं स्नात्वा ॥ निमज्जां कृत्वा ओमद्येत्यमज्ञानतोऽज्ञानतो वा रजस्वलावस्थायां कृतसंपर्कजा-
तदुर्यो नित्यदोषपरिहारार्थं शुभप्राप्त्यर्थं यथाशक्त्याचरितऋषिपंचमीव्रतपूजोद्यापनं करि-
ष्ये आचार्यं वरणं विधाय सर्वतोभद्रे सप्तकलशेषु पृथक्स्थितं वा अरुंधतीसहिताः सप्तर्षिप्र-
तिमाः संपूजयेत् सग्रहाः सर्वतोभद्रादिमंडलदेवताश्च ग्रहयज्ञविधिना संपूज्य कश्यपोऽत्रि-
र्भरद्वाज इति मन्त्रेण वैदिकमन्त्रैर्वा ऋषिपूजनं कार्यं पूजांते वायनं दद्यात् न्यूनातिरिक्तकर्मा-
णि मया यानि कृतानि च क्षमध्वं तानि सर्वाणि यूयं सर्वे तपोधनाः ततः कथाश्रवणादिना रात्रिं नयेत्
प्रातरग्निप्रतिष्ठाप्यान्वादध्यात् अत्र प्रधानं अरुंधतीसहितकश्यपादिऋषीन् पूजामन्त्रेण तिल-
व्रीहियवसर्पिर्द्रव्यैः प्रतिद्रव्यमष्टोत्तरशतमष्टाविंशतिसंख्याहुतिभिर्ब्रह्मादिदेवताश्चैकैकया-
ज्याहुत्या यद्व्येशेषेण स्विष्टकृतमिति होमं समाप्य पुनः पूजां कृत्वा सपत्नीकान्सप्तब्राह्मणान्सं-
पूज्य तेभ्यः क्रमेण दक्षिणाप्रतिमायुतान् कलशान्दद्यात् तत्र मंत्रः प्रतिगृह्य द्विजश्रेष्ठाः
प्रतिमादिसमन्वितान् कलशान् ऋषिसंप्रीत्यै व्रतसंपूर्तिहेतवे यदेककुंभे प्रतिमापूजनं
तदा सर्वप्रतिमायुतं कलशमाचार्याय अन्येभ्यः पक्वान्नवस्त्रदक्षिणायुतान् दद्यात् ततः स-
प्तभ्यः सप्त गाः आचार्याय पक्वां गां दत्वा प्रार्थयेत् सप्तर्षिभ्यः शुभाः श्रेष्ठाः सर्वेषां च फलप्रदाः सर्वं
पापं च मे व्रतं त्वज्ञानतोज्ञानतः कृतं एते सप्तर्षयः सर्वे भक्त्या संपूजिता मया यथोक्तफलदाः संतु
व्रतस्य फलदायका इति तत आशिषो गृहीत्वा ब्राह्मणान्संतर्प्य स्वयं भुंजीत ॥ ॥ इति ऋषि-
पंचमीव्रतोद्यापनम् ॥ ॥ ॥ ॥ भाद्रशुक्लषष्ठी सूर्यषष्ठी ॥

सा सप्तमीयुतेति दिवोदासः शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्करपूजनं प्राशनं पंचगव्यस्य चा-
श्वमेधकृतं फलमिति वचनात् अत्र स्नानादिकृतमक्षयं भवति तदुक्तं भविष्योत्तरे येयं भाद्र-
पदे मासि षष्ठी स्याद्भरतर्षभ इयं पापहरा पुण्या शिवा शांता शुभा नृप स्नानदानादिकं सर्वमस्या-
मक्षयमुच्यते योऽस्यां पश्यति गांगेयं दक्षिणापथवासिनं ब्रह्महत्यादिपापैस्तु मुच्यते नात्र संशयः

इयमेव ललिताषष्ठी ॥ ॥ तथा चोक्तं नारदीये ॥ भाद्रे मासि शुक्लषष्ठ्यां ललिताव्रतमु-
च्यते प्रातः स्नात्वा विधानेन नारी शुक्लांबरावृता शुक्लमाल्यधरा चापि नद्योः संगमवालुकां गृही-
त्वा वंशपात्रे तु कृत्वा पिंडाकृतिं च तां पंचधा ललितां तत्र ध्यायेद्वनविलासिनीं पंकजं करवीरं च नेपा-
लीमालिनीं तथा नीलोत्पलं केतकीं च संगृह्य तगरं तथा एकैकाष्टशतं ग्राह्यं ताभ्यां देवीं प्रपूज्य च प्रा-
र्थयेदग्रतः स्थित्वा देवीं तां गिरिशप्रियां गंगाद्वारे कुशावर्ते विल्वके नीलपर्वते स्नात्वा कनखले ती-
र्थे हरं लब्धवती पतिं ललिते सुभगे देवि सुखसौभाग्यदायिनि अनंतं देहि सौभाग्यं मह्यं तुभ्यं न-
मो नमः मंत्रेणानेन कुसुमैर्धूपकस्य सुशोभनैः अभ्यर्च्य विधिवत्तस्या नैवेद्यं पुरतो न्यसेत् कु-
केरपि कूष्मांडैर्नारिकेलैश्च दाडिमैः वीजपूरैस्तु जंबीरैः कारवेल्लैः सुनिर्भरैः फलैस्तत्काल-
संभूतैः कृत्वा शोभां तदग्रतः विरूढधान्यांकुरकैः सदीपावलिभिस्तथा सार्धं सुगुणकैर्धूपैः
सोहालिककरंजकैः गुडपुष्पैः कर्णवेष्टैर्मोदकैरुपमोदकैः बहुप्रकारैर्नैवेद्यैर्यथाविभवमानतः
एवमभ्यर्च्य विधिवद्रात्रौ जागरणं तथा वै गीतवाद्ययुतैर्नृत्यैः प्रेक्षणीयैरनेकशः सखीभिः सहिता
साध्वी तां रात्रिं प्रयता नयेत् एवं जागरणं कृत्वा सप्तम्यां सरितं नयेत् गंधपुष्पैरथाभ्यर्च्य गीतवाद्य-
पुरःसरं तच्च दद्याद्द्विजेंद्राय नैवेद्यादि द्विजोत्तम स्नात्वा गृहं समागत्य हुत्वा वैश्वानरं ततः देवान्पि-
तॄंश्च संतर्प्य पूजयित्वा सुवासिनीः कन्यकाश्चैव संभोज्या ब्राह्मणान् दश पंच च भक्ष्यैर्भोज्यैर्बहुविधै-
र्दत्वा दानान्यनेकशः ललिता [illegible] विसर्जयेत् यः कश्चिदाचरेदेतद्व्रतं सौभाग्यदं प-

नैवाथ दिवा नारी तस्य पुण्यफलं शृणु यद्व्रतैश्च तपोभिश्च दानैर्वा नियमैरपि व्रतेनानेन लभ्येत
किं बहूक्तेन नारद मृतेरनंतरं प्राप्य शिवलोकं सनातनं मोदते ललितादेव्या सह देवसखिव चिरं ॥
इति नारदीये ललिताषष्ठीव्रतं ॥ ॥ अस्यामेव चंपाषष्ठीव्रतमुक्तं स्कांदे ॥ षष्ठी भाद्रपदे शुक्ला
वैधृतेन समन्विता विशाखाभौमयोगेन चंपाषष्ठीति विश्रुता रविवारेण युक्ता रविवारेण संयुता
सा चंपेति प्रकीर्तितेति मदनरत्ने देवासुरमनुष्याणां दुर्लभा षष्टिदायिनी कृते त्रेतायां पंचाशद्दाय-
नी द्वापरे पुनः चत्वारिंशत्कलौ त्रिंशद्दायनी सफला मता अत्र रम्ये सूर्यमूर्त्या द्वादशदलेनाममंत्रैः
पूजा कार्या अत्र नाममंत्राः आदित्यस्तपनः पूषा भानुमान्भानुरर्यमा विष्णुः शुक्रोंशुमान्देवः राहु-
स्तांशुर्विनायकः सूरः सूर्यः खगद्युति पूजनीयः प्रयत्नतः अत्रादित्यः कर्णिकायां दलेषु शेषनामभिः
पूजा कार्या ॥ स्कंद उवाच प्राप्तराज्यं च राज्यानं धर्मपुत्रं युधिष्ठिरं कदाचिदागतो द्रष्टुं दुर्वासा मुनि-
सत्तमः ततो राजा तमभ्यर्च्य पाद्यार्घ्यैरिदमब्रवीत् अहं त्वत्तः श्रोतुमिच्छामि कर्तुं च मुनिसत्तम दुर्वासा उवा-
च शृणु राजन्महाभाग व्रतानामुत्तमं व्रतं अस्ति दुष्प्रचीर्णमात्रं सर्वकामांस्तु पूरयेत् यदि लभ्येत जी-
वद्भिर्दैवेन नृपसत्तम षष्ठी भाद्रपदे शुक्ला वैधृतेन समन्विता विशाखाभौमयोगेन सा च पीतोद-
विश्रुता तस्मादियं चंपाषष्ठी द्विधा ज्ञेया एका वैधृतियोगवती भाद्रशुक्ला अपरा विशाखाभौमयो-
गवत्येव षष्ठी चेति देवासुरमनुष्याणां दुर्लभा षष्टिदायिनी कृते त्रेतायां पंचाशद्दायनी द्वापरे पुनः
चत्वारिंशत्कले त्रिंशद्दायनी दुर्लभा ततः आदौ कृतयुगे पूर्वं याचीर्णा विश्वकर्मणा तत्फलाद्विश्व-
कर्तृत्वं प्राजापत्यमवाप्तवान् पृथुना कार्त्तवीर्येण भूविनाशायेण च ईश्वरेण मया सार्द्धमितरैर्नर
लिप्सया यश्चैनां विधिवत्कुर्यात्सोऽनंतं फलमश्नुते युधिष्ठिर उवाच तद्विधिं श्रोतुमिच्छामि विस्तरा-
दद्य तो मुने के मंत्राः के च नियमाः सा च किंलक्षणा भवेत् दुर्वासा उवाच द्विदैवत्यर्क्षभौमेन वैधृतेन
समन्विता नभस्यशासिता षष्ठी सा चंपेति निगद्यते द्विदैवतर्क्षं विशाखा पंचम्यां नियमं कुर्यादुपवा-
सस्य च व्रती उपवासस्यांगभूतं नियममेकभक्तं कुर्यादित्यर्थः चंपाषष्ठीव्रतं कुर्याद्यथोक्तवचना-
द्गुरोः ततः प्रभाते विमले दंतधावनपूर्वकं कृत्वा सम्यक्व्रतं तस्य संकल्पं कारयेन्नरः कृत्वेति सक-
लांगोपेतं व्रतं स्वसाध्यत्वेन मयि निधायेत्यर्थः निराहारो य देवेश त्वद्भक्तस्त्वत्परायणः पूजयिष्या-
म्यहं भक्त्या शरणं भव भास्कर संकल्पमंत्रः ततः स्नानं प्रकुर्वीत नद्यादौ विमले जले मृदमालभ्य
मंत्रैश्च तिलैः शुक्लैश्च मंत्रवित् सावित्रः परमस्त्वं हि परं धाम जले मम त्वत्तेजसा परिभ्रष्टं पापं यातु
सहस्रधा प्रार्थनामंत्रः आपस्त्वमसि देवेश ज्योतिषां पतिरेव च पापं नाशय मे देव वाङ्मनःकर्मभिः कृ-
तं स्नानमंत्रः ततः संतर्पयेद्देवानृषीन्पितृगणानपि ततश्चैत्यगृहे मौनी पाखंडालापवर्जितः स्थं-
डिलं कारयेच्छुद्धं चतुरस्रं सुशोभनं स्थापयेदव्रणं कुंभं पंचरत्नसमन्वितं रक्तवस्त्रयुगच्छन्नं रक्तचं-
दनचर्चितं तस्योपरि न्यसेत्पात्रं सौवर्णं ताम्रमेव च कुंकुमेन लिखेत्पद्मं द्वादशारं सकर्णिकं तस्यो-
परि न्यसेत्सूर्यं सौवर्णं सरथारुणं शक्त्या वा वित्तसारेण वित्तशाठ्यविवर्जितः तमर्चयेत्कुंदपुष्पैर्वि-
धिमंत्रपुरःसरं पंचामृतेन स्नपनं कुर्याद्देवस्य संयुतः ततस्तु गंधतोयेन परां पूजां समाचरेत्
गंधैर्नानाविधैर्दिव्यैः कर्पूरागुरुकुंकुमैः फलैस्तदृतुसंभूतैरनेकैश्च सुगंधिभिः मंडपं कारयेत्त-
त्र पुष्पमालाविभूषितं यथाशोभं प्रकुर्वीत अथ पश्चात्परिसर्वतः ततस्तु पूजयेद्देवं भास्करं कमलोपरि
आदित्याय नमः तपनाय नमः पूष्णे नमः भानुमते नमः भानवे नमः अर्यम्णे नमः विश्वच-
काय नमः अंशुमते नमः विनायकाय नमः सुराय नमः सूर्याय नमः खगाय नमः
एवं त्रयोदशसु नामसु आदित्याय नमः इत्यनेन मध्ये पूजनं इतरैर्द्वादशभिः पूर्वादिदलक्रमे-

यद्भजने जन्मांतरसहस्रेण दुष्कृतं यन्मया कृतं तत्सर्वं नाशमायातु दिवाकरतवार्चनात् प्रार्थना-
मंत्रः विनतातनयो देवः कर्मसाक्षी तमोनुदः सप्ताश्वः सप्तरज्जुश्च अरुणो मे प्रसीदतु ॥ अरुण-
पूजामंत्रः ततः संपूजयेद्देवमच्युतं तु रथे स्थितं अष्टाक्षरेण मंत्रेण गंधपुष्पादिभिः क्रमात् अष्टा-
क्षरो घृणिरिति मंत्रः घृणिआदित्याय नमः कालात्मा सर्वभूतात्मा वेदात्मा सर्वतोमुखः जन्ममृत्युजरा-
रोगसंसारभयनाशनः इत्यर्घ्यमंत्रः ॥ सूर्योदयी पठनीयः ततः संपूजयेद्धेनुं कांस्यवस्त्रां गां पयस्वि-
नीं सवस्त्रकंठाभरणां सुघंटाभिरलंकृतां ब्रह्मणोत्पादिता देवि सर्वपापविनाशिनि संसारार्णवमग्नं
मां गोमातस्त्रातुमर्हसि स्वर्गपावकरूपाश्च मातरो लोकमातरः गावो मामुपसर्पंतु सरितः सागरं यु-
था या लक्ष्मीः सर्वदेवानां या च देवी व्यवस्थिता धेनुरूपेण सा देवी मम पापं व्यपोहतु या लक्ष्मीर्लो-
कपालानां या लक्ष्मीर्धनदस्य च चंद्रार्कशक्रशक्तिर्या सा धेनुर्वरदास्तु मे ॥ धेनुपूजामंत्रः ॥
तिलहोमं ततः कुर्यात्सावित्र्याष्टोत्तरशतं ततस्तां कल्पयेद्धेनुमर्को मे प्रीयतामिति आचार्याय त-
तो दद्यादादित्यं सरथारुणं सकुंभरत्नैर्वस्त्रैश्च सर्वोपकरणैः सह ददामि भानुं भवतीं सर्वोप-
स्करसंयुतं मनोभिलषितावाप्तिं करोतु मम भास्करः दानमंत्रः गृह्णामि भास्कर रवे भवंतं वि-
प्रतो मुखं मनोभिलषितावाप्तिं शुभयोः कर्तुमर्हसि प्रतिग्रहमंत्रः सर्वतीर्थमयीं धेनुं सर्वयज्ञ-
मयीं शुभां सर्वदानमयीं देवीं ब्राह्मणाय ददाम्यहं गोदानमंत्रः गृह्णामि सुरभिं देवीं सर्वयज्ञमयीं शु-
भां उभौ पुनीहि वरदे उभयोस्तारका भव धेनुप्रतिग्रहमंत्रः ॥ ततस्तु भोजयेद्विप्रान् द्वादशैव स्वश-
क्तितः दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य विसर्जयेत् अथैकल्यं व्रते तस्य शंसेयुस्ते द्विजोत्तमाः आशि-
षमाशीर्भिः परितुष्टैरभिनंदिताः ततस्तु स्वयमश्नीयाद्द्विजानां शेषमिष्टकं सहपुत्रैः कलत्रैश्च
भृत्यैर्बंधुजनैर्वृतः एवं यः कुरुते चंपां सोऽत्यंतं फलमश्नुते प्रभूणां च प्रभुः श्रोता स च प्रभूणां च गोचरः स-
र्वेष्टेतद्व्रतं कार्य्यं स्वशक्त्या तु स्वभीरुभिः प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते विफलं तस्य तत्ता-
त्स्यात् नीशस्त्वनुकल्पकः पंचम्यां नियमं कुर्यादाचार्यवचनाद्व्रती षष्ठ्यां स्नानं प्रकुर्वीत संतर्प्य पितृ-
देवताः अभ्येत्य स्वगृहं मौनी सूर्यं मनसि चिंतयेत् स्थापयेदव्रणं कुंभं घृतपात्रं च तयोपरि तस्योपरि स्थि-
तं सूर्यं पलेनैकेन निर्मितं सौवर्णं भक्तिसंयुक्तो वित्तसारं तथारुणं तमर्च्चयेज्जगन्नाथं गृहीत्वा चागु-
रोस्तथा षडक्षरेण मंत्रेण गंधपुष्पानुसंभवं ॐ नमः सूर्यायेति षडक्षरमंत्रः संपूज्य विधिवद्देवं फल-
पुष्पादिकं च यत् सूर्याय वेदयेत्सर्वं सूर्यो मे प्रीयतामिति ततः प्रभाते विमले गत्वा गुरुगृहं व्रती स-
र्वोपकरणैः सूर्यमाचार्याय निवेदयेत् धान्यं पुष्पं फलं वस्त्रं रत्नं धेन्वादिकं च यत् गवां कोटिसहस्रे-
ण कुरुक्षेत्रेऽर्कपर्वणि चंपादानस्य राजेंद्र कलां नार्हति षोडशीं सर्वतीर्थप्रदानानि तथान्यान्यपि
षोडश चंपया तुलितान्यासाश्चपैका व्यतिरिच्यते आदित्यस्तपनः पूषा भानुमान्भानुरर्यमा वि-
चकोंशुमान्देवः सहस्रांशुः खनायकः सूरः सूर्यः खगः पूज्यः एवं पत्रादेवद्वयंकुमतो विशेषेण
पंचम्यामित्यादिना पुनर्व्रतविधिर्धनहीनविषयः इति स्कंदपुराणोक्तं चंपाषष्ठीव्रतं ॥

ब्रह्मांडपुराणे मल्लारिमाहात्म्ये मार्गपौषं च पौषषष्ठ्युक्ता मार्गभाद्रपदे शुक्ला षष्ठी वैधृति-
संयुता रविवारेण संयुक्ता सा च पेतीह विष्णुना विशाखाभौमयोगेन सा च पेतीह विष्णुना ॥

अथ भाद्रशुक्लसप्तम्याममनंतसप्तमीव्रतं हेमाद्रौ विष्णुधर्मोत्तरे शुक्लपक्षे तु सप्तम्यां मासे भा-
द्रपदे नृप तत्र सूर्यं दिवा पूज्य नक्तं भुंजीत वत्सरं मत्स्यपुराणेऽपि शुक्लपक्षे तु सप्तम्यां मासे भाद्र-
पदे शुभे प्रणाम्याशिरसा नित्यं पूजयेत्सप्तवासरान् पुष्पधूपादिभिर्वीरकुंजपानां च तर्पणैः पा-
खंडादिभिरालापं वर्जयेत्प्रयतात्मना अत्र कृतपादाक्षालनाद्युक्ताः विधाय दक्षिणां दत्त्वा नक्तं भुंजीत-

वाग्यतः तिष्ठन्नुत्तरन्नास्थितश्चचक्षुःप्रस्खलनादिषु आदित्यनामस्मरणंकुर्वन्नुच्चारणंतथा अनेनैव विधानेन मासान्द्वादशवैक्रमात् उपोष्यपारणेपूर्णेसमभ्यर्च्यजगद्गुरुं ब्राह्मणेनश्रवणेनेह प्रीणय-न्निष्टमश्नुते एवंयःपुरुषःकुर्यादादित्याराधनंशुचिः नारीवास्वयमभ्येत्यआनंत्यफलमश्नुते

अस्यामेवभाद्रशुक्लसप्तम्याममुक्ताभरणसप्तमीव्रतम् ॥

तत्रपूजायांसप्तमीपूर्वविद्धाग्राह्यामध्यममुन्योरितियुग्मवाक्यात् नारदीये ॥ भाद्रस्यशुक्लसप्त-म्याममुक्ताभरणव्रतं सोमस्यतुमहेशस्यपूजनंचात्रकीर्त्तितं गंधादिभिःषोडशभिरुपचारैःस मर्चयेत् ॥ प्रार्थ्यप्रणम्य विसृजेत्सर्वकामसमृद्धये ॥ अत्रकृत्यंभविष्योत्तरे ॥ भूमौलिखितो-मासहितशिवप्रतिमायामावाहनं पद्मोद्भिभगवन्देवसर्वपापप्रणाशन तवपूजांकरिष्यामिस न्निधौभवशंकरेति भवानीशंकरावावाह्यषोडशोपचारैःसंपूज्य नमस्तेभूतनाथायनमस्तेशशि-शेखर नमस्तेदक्षयज्ञघ्ननमस्तेकामनाशन नमस्तेपार्वतीदेव्यैचंडिकायैनमोनमः वरदायै-नमस्तेस्तुभद्रकाल्यैनमोनमः इतिसंप्रार्थ्य ॥ शर्कराघृतमिश्रंतंडुलपिष्टमुपहारंनिवेद्यपक्वा दशतंतुयुतंसूत्रमेकादशग्रंथिविशिष्टंवामहस्तेवध्वापूजांतेकथांशृणुयात् ॥ अथपूजाविधिः मासपक्षाद्युल्लिख्यसर्वपापक्षयपूर्वकंसर्वकामसमृद्ध्यर्थंउमासहितसोमशंकरपूजनव्रतमहंकरिष्ये ॥ भूमौलिखितभवानीशंकरप्रतिमायामावाहनादिसर्वोपचारपूजांकुर्यात् देवदेव महेशानपरमात्मन्जगद्गुरो प्रतिपादितयासोमपूजयापूजयाम्यहं ॥ इत्यावाहनम् ॥ अनेक रत्नखचितंसौवर्णंमणिसंयुतं मुक्ताचितंमहादेवगृहाणासनमुत्तमं ॥ इत्यासनम् ॥ पाद्यं गृहाणदेवेशसर्वविद्यापरायण ध्यानगम्यसदाशंभोसर्वेश्वरनमोस्तुते ॥ इतिपाद्यं ॥ इदमर्घ्यमन-र्घ्यंत्वममराधीशशंकर किंकरीभूतसर्वेशमयादत्तंगृहाणवै ॥ इत्यर्घ्यं ॥ गंगादिसर्वतीर्थेभ्यःस-मानीतंसुशीतलं जलमाचमनीयार्थंगृहाणसोमयासह ॥ इत्याचमनम् ॥ मध्वाज्यशर्कराभ्यश्च सुधयापरिकल्पितं शंकरप्रीतयेतीदंमधुपर्कंनिवेदये ॥ इतिमधुपर्कः ॥ आदौपंचामृतैःस्नानं पश्चाच्छुद्धेनवारिणा स्नानंकुरुमहादेवनिजयाकांतयासह ॥ इतिस्नानं ॥ स्नानादूर्ध्वंमहादेव-श्रीमन्पापप्रणाशन वस्त्रयुग्मंसमानीतंमद्दत्तंप्रतिगृह्यतां ॥ इतिवस्त्रं ॥ उपवीतंसोत्तरीयंना नाभरणभूषितं गृहाणसोमविमलंमयाहृतमिदंशुभं ॥ इतियज्ञोपवीतं ॥ मलयाचलसंभूतंसु गंधिचंदनसारयुक् चंदनंपंचवदनगृहाणदयितायुत ॥ इतिगंधं ॥ जातीचंपकपुन्नागवकु-लैःपारिजातकैः शतपत्रैश्चकल्हारैरर्चयेहमुमापतिं ॥ इतिपुष्पाणि ॥ त्रैलोक्यपावनानंतप रमात्मन्जगद्गुरो चंदनागुरुकर्पूरैर्धूपंदास्यामिशंकर ॥ इतिधूपम् ॥ शुभवर्तियुतंसर्पिर्लो-डितंवह्निनायुतं दीपमेकमनेकार्कप्रतिमंकल्पयेत्विमं ॥ इतिदीपम् ॥ पायसापूपकसारंदुग्धा-न्नंसगुडोदनं दिव्यान्नंषड्रसोपेतंसुधारससमन्वितं समर्पयामिदेवेशकिंकरःशंकरायते ॥ नैवेद्यं ॥ पुनराचमनं पुनराचमनंशुद्धंकुरुसोमांबुनामुना मुखशुद्धिकरंपूर्णंकृपयात्वंगृहाणवै ॥ पुनराचमनं ॥

कस्तूरिकासमायुक्तंमलयाचलसंभवं गृहाणचंदनंसोम करोद्वर्तनहेतवे ॥ इतिकरोद्वर्तनं ॥ नारिकेलफलंजंबूफलंनारंगमुत्तमं कूष्मांडपुरतोभक्त्याकल्पितंपरिगृह्यतां इतिफलम् ॥ पूगीफलंमहादिव्यं ॥ इतितांबूलम् ॥ हिरण्यगर्भगर्भस्थमितिदक्षिणा ॥ भक्त्या दीपावलिंदेव ॥ इतिनीराजनं ॥ अथपुष्पांजलिः ॥ यानिकानिचपापानि ॥ इतिप्रदक्षिणा ॥ महादेवमहाराजभक्तानांपापनाशन अस्माकंकुर्वतोपूजांसाधुवासाधुयोजितां ज्ञानतोज्ञानतो-वापिभावतोविहितांचयां संपूर्णांयतुविश्वेशविमलांकोमलस्तुतिं पापोहंपापकर्माहमितिप्रार्थ्य

ना देवदेवजगन्नाथसर्वसौभाग्यदायक गृह्णीष्वं डोरकं पुत्रपौत्रप्रवर्द्धनं ॥ इतिडोरकग्र-
हणं ॥ समस्तकामोपगीतंत्वां धारयामिजगद्गुरो सत्रग्रंथिस्थितंनित्यंधारयामिस्थिरोभव ॥
इतिडोरकोद्धारणम् ॥ ॥ ॥ ॥ ॥ अथवायनं ॥ मंडकान्वेष्टकान्वापि सघृतान्दक्षिणायु
तान् एकादशमितान्स्तान्वान्ब्राह्मणायकुटुंबिने ॥ वेदशास्त्रप्रवीणाय दद्यात्सोमस्यतुष्टये ॥
शंकरःप्रतिगृह्णातिशंकरोवैददातिच शंकरस्तारकोस्माकंशंकरायनमोनमः ॥ इतिवायन-
दानम् ॥ एवंसृजनंकुर्य्यात्सोमस्यसुखदस्यच सर्वान्कामानवाप्नोतिपुत्रपौत्रैश्चमोदते ॥

॥ इत्यमुक्ताभरणसप्तमीव्रतेसोमशिवपूजा ॥

अथकथा हेमाद्रौ भविष्योत्तरे श्रीकृष्णउवाच मुनींद्रोलोमशोनाममथुरायांगतः पुरा
सोर्चितोवसुदेवेनदेवक्याचयुधिष्ठिर उपविष्टः कथाःपुण्याःकथयित्वामनोरमाः ततःकथयितुं
भूयः कथामेतांप्रचक्रमे कंसेनतेहताःपुत्राजाताजाताःपुनःपुनः मृतवत्सादेवकीत्वंपुत्रदुःखे
नदुःखिता यथाचंद्रमुखीदीवभूवनहुषप्रिया पश्चाचीर्णव्रताचैवबभूवात्तनवालका त्वमपि
देवकितथाभविष्यसिनसंशयः देवक्युवाच कासाचंद्रमुखीब्रह्मन्वभूवनहुषप्रिया किंचीर्णं
व्रतंदिव्यंतयासंततिवर्द्धनं सपत्न्यादर्पशमनंसौभाग्यारोग्यवर्द्धनं लोमशउवाच अयोध्यायां
पुराराजानहुषोनामविश्रुतः तस्यासीद्रूपसंपन्नादेवीचंद्रमुखीप्रिया तथातत्रैवनगरेविष्णुगुप्तोभव
द्द्विजः आसीद्गुणवतीतस्यपत्नीभद्रमुखीतथा तयोरासीदतिप्रीतिः स्पृहणीयापरस्परं अथतेद्व
पिसख्यौवैस्नानार्थंसरयूजले प्राप्तेप्राप्ताश्चतत्रैवबाह्याद्वैनागरांगनाः तास्नात्वामंडलंचक्रु-
स्तन्मध्येव्यक्तरूपिणं लेखयित्वाशिवंसोमसुमयासहशंकरं गंधपुष्पाक्षतैर्भक्त्यापूजयित्वाय
थाविधि प्रणम्यगंतुकामास्ताःपप्रच्छतुर्वरस्त्रियः ताऊचुःशंकरोस्माभिःपार्वत्यासहपूजितः
बध्वासूत्रमयंतंतुशिवस्यात्मानिवेदितः धारणीयमिदंतावद्यावत्प्राणविधारणं तासांतद्वचनंश्रु
त्वासख्यौचैमातुर्देवकि कृत्वातुसमयंतत्रबबंधदोर्भ्यांतुडोरकं ततस्ताश्चगृहंजग्मुःस्वसखीभिः
समावृताः कालेनमहतातस्यास्तद्व्रतंविस्मृतंशुभं चंद्रमुख्याःप्रमत्तायाविस्मृतस्तत्तुडोरकः भद्र
मुख्यास्तथाभद्रेविस्मृतंसर्वमेवतत् मृताकेश्चिद्दहोरात्रैःसाबभूवविहंगमी भद्राख्याकुक्कुटी
जातात्वतमंगाच्छुभानने संभूयभूयःसमयंप्रागवत्तचक्रतुःसदा कालेनपंचतांप्राप्तेसखीभावात्सदे
वते अदेवमातर्केदेवजातेपिकुलसंयुते ब्राह्मणीब्राह्मणीजातारात्रीचंद्रमुखीपुरा नाम्नाभद्रमु
खीजाताभूषणानामसामता अग्निमीलस्यसारज्ञापित्रातस्यपुरोथसा अतीववल्लभाचासीद्भूषणा
भूषणप्रिया भूषिताभूषणावरैरूपेणालंकृतास्वयं तस्यावभूवुरष्टौचपुत्राःसर्वगुणान्विताः अ
तीवरूपसंपन्नाःपितृवद्धर्मशीलिनः सख्यौतेतेनतद्वच्चजातेजातिस्मरेकिल पुनर्निरंतराप्रीतिस्त
योरासीद्यथापुरा कालेवहुतिथेजातेत्यक्तासात्यक्तयौवना मध्येवैयहिराज्ञीचपुत्रमेकमजीज-
नत् ईश्वरीरोगिणीमूकंप्रज्ञाहीनंचविस्वरं नाटशापिमहाभागमृतासानववार्षिकः ततस्ता
भूषणादृष्टुमीश्वरींपुत्रदुःखिनीं सखीभावादतिस्नेहात्सुतैःस्वैःपरिवारिता ॥ अमुक्ताभरणभद्रा
स्वरूपेणैवभूषिता साहिभद्राद्विजस्याभूद्भार्य्याभूषणानामिका पुरोहितस्यकालेन कुकुटीवहु
विणी तांदृष्ट्वातादृशींभद्रांप्रज्वालेश्वरीतथा ततोगृहंप्रेषयित्वाब्राह्मणींतीव्रमत्सरा चिंतया
मासमाशीघ्रंतस्याःपुत्रवधंप्रति निश्चित्यचेतसाक्रूराघातयामासतान्सुतान् हतान्हताश्चतेपु
त्राःपुनर्जीवंत्यनामयाः तदद्भुततरंदृष्ट्वासखीमाहूयभूषणां उपवेश्यासनेश्रेष्ठेवहुमानपुरः
सरं अपृच्छद्विस्मयाविष्टाराज्ञीसानृपवल्लभा ब्रूहितथ्यंमहाभागेकिंत्वयासुकृतंकृतं दानंव्रतंतं

शिवलोके महीयते इत्युक्ताभरणसप्तमीव्रतं नारदीये शुक्लाष्टम्यां नभस्यस्य कुर्याद्दूर्वाष्टमीव्रतं नरः एवं वद्रा-
थिकां देवीं कलशस्थां प्रपूजयेत् मध्याह्ने पूजयित्वैनामेकभक्तं समाचरेत् शक्तो भक्त्योपवासं परेऽह्नि विधि-
नानतः सुवासिनीर्भोजयित्वा गुरवे प्रतिमार्पणं कृत्वा स्वयं च भुञ्जीत व्रतमेतं समापयेत् व्रतेनानेन देवर्षे कृते-
न विधिना व्रते रहसंगोहर्जं लब्ध्वा राधापरिकरे वसेत् इयमेव ज्येष्ठानक्षत्रयोगेन ज्येष्ठाष्टमी तथा च नारदीये
यदा ज्येष्ठर्क्षसंयुक्ता भवेज्ज्येष्ठाष्टमी द्विज ज्येष्ठा नाम्नीति सा ज्ञेया पूजिता पापनाशिनी अथैतां तु समारभ्य व्रतं षो-
डशवासरं महालक्ष्म्याः समुद्दिष्टं सर्वसंपद्विवर्धनं करिष्येऽहं महालक्ष्मि व्रतं ते त्वत्परायणः तदविघ्नेन मेया-
तु समाप्तिं त्वत्प्रसादतः तदविघ्नेन मे यायात् डोरकं दक्षिणे करे षोडशग्रन्थिसहितं गुणैः षोडशभिर्युतं ततो-
ऽहं महालक्ष्मीगाथां येरचयेद्व्रती यावत्कलाष्टमी तत्तु चरेदुद्यापनं बुधः अथ ज्येष्ठापूजा लिङ्गपुराणे क-
न्यास्थार्काष्टमी या तु ज्येष्ठर्क्षे महती स्मृता अलक्ष्मीपरिहाराय ज्येष्ठां तत्र प्रपूजयेत् अत्र कन्यास्थार्कयोगेन प्रा-
शस्त्यमात्रं मासस्तु भाद्रपदश्चाद्य एव कालादर्शेऽपि भाद्रे शुक्लाष्टमी ज्येष्ठानक्षत्रेण समन्विता महती कीर्ति-
ता तस्यां ज्येष्ठां देवीं प्रपूजयेत् यत्तु ज्येष्ठानक्षत्रापेक्षं व्रतं तत्तिथिव्रताद्भिन्नं तयस्यां तिथौ ज्येष्ठानक्षत्रे तस्यां तिथौ-
कार्यं तदुक्तं माधवीये स्कान्दे मासि भाद्रपदे शुक्लपक्षे ज्येष्ठर्क्षसंयुते यस्मिन्कस्मिन्दिने कुर्याज्ज्येष्ठायाः परिपूजन-
मिति अष्टम्या खण्डत्वे ज्येष्ठायोगवशेन पूर्वा परा वा ग्राह्या दिनद्वये योगे तदभावे वा परा एवं द्विसन्नियोगे एवं व-
नवम्या सहिता कार्या स्यादष्टमी नात्र संशयः मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुते राज्ञि यस्मिन्दिने तत्र ज्येष्ठायाः
परिपूजनमिति तत्रैवोक्तेः अस्यापवादः यस्मिन्दिने भवेज्ज्येष्ठा मध्याह्नादूर्ध्वमप्यणु तस्मिन्नह्नि च पूजा च मूलाचेत्पूर्ववा-
संर इति ज्येष्ठानक्षत्रेण खण्डत्वेऽष्टमी भानुवारयुगन्यतरयुग्वा ज्येष्ठानक्षत्रं ग्राह्यं तत्राष्टम्यां भानुवारे यदा ज्येष्ठ-
र्क्षमेव वा लीलज्येष्ठेति सा प्रोक्ता दुर्लभा बहुकालिकेति स्कान्दात् अन्यतरयोगस्याप्यभावे मध्याह्नादूर्ध्वमनुवर्तमा-
नं ग्राह्यं पूर्वोक्तस्कान्दात् तथा मैत्रेण वाहयेद्देवीं ज्येष्ठायां तु प्रपूजयेत् मूले विसर्जयेद्देवीं त्रिदिनं व्रतमुत्तममि-
ति विशाखायोगे सति ज्येष्ठानुमैत्रेण मनुराधायां तद्योगरहितायां कार्यं असंभवे पादमात्रं हित्वास्थापयेदिति-
निर्णयोद्धारे उक्तं अत्र भद्रादि वर्जयित्वा ज्येष्ठां निमन्त्रयेत् अपरिहार्ययोगे तु भद्रामुखमात्रं त्यजेत् संपूर्णा वैधृति-
श्चेत्तदा घटिकाः षोडशाद्या दशवाप्यक्ता मन्त्रयेत् इदं व्रतं महाराष्ट्रेषु प्रसिद्धं निर्णयसिन्धौ इदं व्रतं केवलतिथौ के-
वलनक्षत्रे चोक्तं मात्स्ये प्रत्याब्दिकतिथावुक्तं यज्ज्येष्ठादेवतं व्रतं प्रतिज्येष्ठाव्रतं यच्च विहितं केवलोडुनि ति-
थावेवाचरेदाद्यं द्वितीयं केवलोडुनि दक्षिणात्यास्तु नक्षत्र एव कुर्वंति अत एव मदनरत्ने भविष्ये उक्तं मासि भा-
द्रपदे शुक्ले पक्षे ज्येष्ठा यदा भवेत् रात्रौ जागरणं कुर्यादेभिर्मन्त्रैः प्रपूजयेत् पूजामन्त्रो भविष्ये पुत्रदार-
समृद्ध्यर्थं लक्ष्म्याश्चैव विवृद्धये अलक्ष्म्याश्च विनाशाय ज्येष्ठे त्वां पूजयाम्यहमिति मन्त्रेण षोडशोपचारैः पूज-
येत् ततो नमस्कारमन्त्रः ज्येष्ठायै ते नमस्तुभ्यं श्रेष्ठायै ते नमो नमः शर्वायै ते नमस्तुभ्यं शाकंभर्यै ते नमो नमः अ-
पकथारूपं प्रजाविधानं भविष्योत्तरे युधिष्ठिर उवाच ऋतुवन्ध्या तु या नारी काकवन्ध्या तथा परा भर्तृस्ना-
वात्ती या या नारी दोषेश्वरविता निर्धनाश्च जना ये च दारिद्र्यमहति स्थिताः कर्मणा केन मुच्यन्ते तन्मे ब्रूहि जनार्द-
न कृष्ण उवाच मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठा यदा भवेत् रात्रौ जागरणं कुर्याद्गीतवादित्रनिःस्वनैः पवं-
विधिविधानेन एभिर्मन्त्रैश्च पूजयेत् एह्येहि त्वं महाभागे सुरासुरनमस्कृते ज्येष्ठे त्वं सर्वदेवानामत्समी-
पगता भव ॥ आवाहनं ॥ श्वेतसिंहासनस्था तु श्वेतवस्त्रैरलंकृता वरदं पुस्तकं पाशं बिभ्रत्यै ते नमो नमः
आसनम् ॥ ज्येष्ठे श्रेष्ठे तपोनिष्ठे ब्रह्मिष्ठे ब्रह्मवादिनि क्षीराब्धौ तु समुद्भूते अर्घ्यं ज्येष्ठे नमोऽस्तु ते ॥ अर्घ्यं ॥
शार्ङ्गबाणाश्च खड्गं च धात्र्यै तामरदर्पणैः अन्यैरप्यायुधैर्युक्तां ज्येष्ठे त्वामर्चयाम्यहं सुरासुरनरैर्वन्द्याय-
किन्नरपूजिता पूजितासि मया देवि ज्येष्ठे त्वामर्चयाम्यहं विप्रप्रिये महाभागे सुरासुरसुपूजिते स्थूलस्थ-
लमये देवि ज्येष्ठे त्वामर्चयाम्यहं एभिर्मन्त्रैः सर्वोपचारपूजां त्वं लक्ष्मीस्त्वमुमा देवी त्वं ज्येष्ठे सर्वदाम-

रैः पूजितासिमयादेविवरदाभवमेसदा इतिप्रार्थनामंत्रः एवंदशदिवसैरर्घ्यंलक्ष्म्याश्चैवद्विजोत्तमैः शुक्लसप्त
येत्कृत्वावस्त्राभरणादिभिः द्वादशैवतुवर्षाणिपूजनीयाप्रयत्नतः यावज्जन्मतथापूज्याविधिनानेनमानवैः
दद्यातिवित्तपुत्रांश्चपूजनीयातदास्त्रियः अनेनविधिनायुक्तोयोहिपूजयतेनरः नारीवाप्रत्ययस्तेनातस्यल
क्ष्मीर्विवर्धते वंध्यापुत्रलभेत्पुत्रानदुर्भगासुभगाभवेत् मृतवत्साजीवपुत्राकाकवंध्याप्रजावती दुःखि-
तोहिनरःकश्चित्सर्वदासस्तुखीभवेत् एवंविधविधानेनज्येष्ठायस्त्वर्चयेत्सदा विप्रास्तस्यप्रणश्यंतियथा-
ग्नुलवणंतथा यथाप्रयंकुरुश्रेष्ठज्येष्ठायाःशोभनंव्रतं नीराजनीकृतेपश्चाद्दीपोयाद्यःसुभक्तितः नैवेद्य-
सहितंप्राणाद्वनितंश्रेयुधिष्ठिर शुक्लस्नानस्तथाहोदीपःप्रज्वलितोमहान् ज्ञातस्याभक्तियुक्तस्तुशुचिः
प्रयतमानसः अनेनविधिनाचैवव्रतंआद्यंयुधिष्ठिर ज्येष्ठानामपरादेवीभुक्तिमुक्तिफलप्रदा यस्तुपूजयते
राजत्रस्मैस्वर्गंप्रयच्छति तत्रैवस्कांदे मासिभाद्रपदेपक्षेशुक्लेज्येष्ठर्क्षसंयुते यस्मिन्कस्मिन्दिनेकुर्याज्ज्ये
ष्ठायाःपरिपूजनं तत्रापिस्यायदावारोभामोज्येष्ठर्क्षमेवच नीलज्येष्ठेतिसाप्रोक्तादुर्लभावहुकालिकीकृ
तःस्नानोनरःकुर्यात्तस्यामन्यत्रवादिने भक्तियुक्तःशुचिःकुर्यात्ज्येष्ठादेव्यास्तुपूजनं नद्यःपूर्वेपुराहृत्यसि
कताःशुद्धदेशजाः देवीरूपंतुतैर्वकृत्वातुब्राह्मणैःसह मंडलेतांतुसंस्थाप्यदेवींहेममयींततः स्थापये-
द्राजतींताम्रींलिख्यांवापटकुड्ययोः आवाहयेत्ततोदेवीमथवापुस्तकेपिवा त्रिलोचनांशुक्लदंतींराजंतीं
विभ्रतींतनुं विवस्त्रांरक्तनयनांज्येष्ठामावाहयाम्यहं इतिमंत्रेणतांदेवीमावाह्यसुकृतव्रती स्नानंदद्या-
त्पाद्यंपादयोर्द्विजपुंगवः श्रीखंडकर्पूरयुतंदद्यादर्घ्यंतथार्चनं भक्त्यामयाप्रयत्नेनयदन्नंदीयतेतव
तद्गृहाणसुरेशानिज्येष्ठेश्रेष्ठेनमोनमः इत्युच्चार्यसुवर्णादिपात्रेणाजलिनापिवा अर्घ्यंदत्त्वास्मरेद्देवीं
गंधपुष्पैस्तथार्चयेत् गोधूमयवशाल्यादितद्द्रव्यैस्तुपारयेत् ततःप्रस्तनमात्रेस्तुपूरिकादीनिसर्पिषा
निवेदयेच्चतैरेवदद्याद्देव्यैप्रयत्नतः ततस्तुनामहादेवीसर्वकामफलप्रदा ज्येष्ठायैतेनमस्तुभ्यंश्रेष्ठायै-
तेनमोनमः ज्येष्ठेश्रेष्ठेतपोनिष्ठेब्रह्मिष्ठेसत्यवादिनि गृहाणहित्वंमहामायेअर्घ्यंगृह्णनमोस्तुते अर्घ्यं
स्तुत्वाक्षमाप्यतोत्रसंपत्यागीतानिपुरतस्ततः सौवीरेश्चैवसंयुक्तोदद्याद्धान्येभ्यएवच सुवासिनीभ्यःसत्या
तुदद्यादस्त्रंकृतव्रती तत्रदेवीमनुज्ञाप्यततोभुंजीतवाग्यतः भक्त्याविनाततदाचम्यदेवींनत्वापुनःपुनः
शयीतब्रह्मचर्येणकुर्यात्प्रातर्विसर्जनं एवमेवप्रकुर्याद्धिव्रतंतुप्रतिवत्सरं विसर्जनांतेतुततःसि
कतांवारिणाक्षिपेत् अष्टपवटकान्दद्याद्ब्राह्मणेभ्यस्ततोद्विजः कुर्याद्देवंप्रयत्नेनसायंप्रातर्विसर्जयेत्
विद्यार्थीप्राप्नुयाद्विद्यांस्त्रीकामस्त्रियमाप्नुयात् शिवस्मरणकारीतुदेव्यैदद्यादसौश्रियै सौवर्णांराजतंताम्रं
कृतकृत्योभवेत्तदा व्रतंस्वपंचकृतयाकृताईणःदेव्यामहत्वंकथितंतदेवंविधिश्चयत्रार्चनसंयुतस्त-
था मंत्रोपिसायुज्यकरोव्रतस्यतस्मान्मयातेकथितंसदेवं ॐअथोद्यापनं ॐमद्यममालक्ष्मीपरिहारपू-
र्वकधनधान्यपुत्रसौभाग्यादिहेतवेज्येष्ठाव्रतोद्यापनंकरिष्ये सौवर्णांज्येष्ठाप्रतिमांसर्वतोभद्रस्यकल
शोपरिसंस्थाप्यमंडलदेवतासहितां तस्याःपूजांकृत्वात्रिलोचनांशुक्लदंतामितिध्यात्वा विवस्त्रांरक्तनय-
नामित्यावाह्य ज्येष्ठेश्रेष्ठेतपोनिष्ठेत्यर्घ्यंदत्वा तामग्निवर्णां आपोहिष्ठेतितिसृभिः हिरण्यवर्णामित्या
दिभिःसंपूज्य यस्याःसिंहोरथेयुक्तोव्याघ्राश्चापिमहावलः ज्येष्ठामहमिमांदेवींप्रपद्येशरणंविभुं ततःप्रा
र्थना॥ज्येष्ठांतर्पयामि श्रेष्ठांतर्पयामि सत्यांतर्पयामि विद्यांतर्पयामि वैनायिकींतर्पयामि तापिनींत-
र्पयामि श्रीकृष्णांतर्पयामिनमः ततःअष्टवटकान्वायनंदद्यात् रात्रौजागरणंकुर्यात् प्रातःपुनःसं
पूज्याग्निंप्रतिष्ठाप्य अन्वादध्यात् ततोहोमंकुर्यात् तत्रप्रधानं गौरीतामग्निवर्णांतपसाज्वलंतींवैरो
चनींकर्मफलेषुजुष्टां दुर्गांदेवींशरणमहंप्रपद्ये इतिमंत्रेण॥दधिमधुक्षीरघृतैःप्रत्येकमष्टोत्तरश
तसंख्याहुतिभिःमंडलदेवताश्चैकैकयाआज्याहुत्याएवादिचरुहोमेनयद्वे एवंहोमंसंपाद्य आ-

यायपीठे प्रतिमां वस्त्रगोदानादि दत्वा सुवासिनीर्ब्राह्मणांश्च संपूज्य सिकतादिकं नद्यां त्यजेत् एवं द्वादशपर्यंतं
आजन्मपर्यंतं वा ज्येष्ठाव्रतं अत्र पूजा स्नानमाचमनं चैव मधुपर्कोपवीतकं गंधं पुष्पं तथा धूपं दीपं नै-
वेद्यमेव च पुनराचमनं चैव कारयित्वा विसर्जयेत् ॐ ज्येष्ठायै नमः ॐ सत्यायै नमः ॐ कलियायै नमः
ॐ विद्यायै नमः ॐ विनायै नमः ॐ नाप्यै नमः ॐ श्रियै नमः ॐ श्रीकलायै नमः एभिरष्टभिर्नामभि-
स्तर्पणं होमं च कुर्यात् हविष्यं स्वयमश्नीयाद्ब्राह्मणांस्तेन भोजयेत् अनेन विधिना यस्तु ब्राह्मणानां च
तुष्टये व्रतांते प्रतिमां कुर्यात्सौवर्णीं फलसंमितां कलवस्त्रेण संयुक्तामाचार्याय निवेदयेत् वस्त्राभरण-
माल्यादिलेपनैः पूजितं द्विजं प्रणिपत्य ततः पश्चात्तस्मै सर्वं निवेदयेत् ब्राह्मणानुज्ञां वंदनलेपं कुर्याः स्वस्ति
वाचनं एवं कृते व्रते सम्यक् सर्वशांतिः प्रजायते धनधान्यसमृद्ध्यर्थं आरोग्यं च प्रजायते इति ज्येष्ठाव्र-
तम् ॥ ॥ ॥ अथ दूर्वाष्टमीव्रतं ॥ नारदीये ॥ दूर्वाष्टमीव्रतं चात्र कथितं तत्र
मे शृणु शुचौ देशे प्रजातायां दूर्वायां द्विजसत्तम स्थाप्य लिंगं ततो गंधैः पुष्पैर्धूपैश्च दीपकैः नैवेद्यैरर्चयेत्
दन्त्यादध्यक्षतफलादिभिः अर्घ्यं प्रदद्यात्संजाते मंत्राभ्यां सुसमाहित इति इदं च पूर्वविद्धायामष्टम्यां कार्यं
श्रावणी दुर्गानवमी दूर्वा चैव हुताशनी पूर्वविद्धा तु कर्तव्या शिवरात्रिर्बलेर्दिनमिति बृहद्धर्मवचनात्
शुक्लाष्टमी तिथिर्या तु मासि भाद्रपदे भवेत् दूर्वाष्टमीति सा ज्ञेया नोत्तरा सा विधीयते इति हेमाद्रौ मदनर-
त्नधृतपुराणसमुच्चयवचनाच्च मुहूर्ते रौहिणे युक्ताष्टम्यां दूर्वा वा यदि वा परा दूर्वाष्टमी तु सा कार्या ज्येष्ठा-
मूलं च वर्जयेदिति परेत्युक्तं तत्र ज्येष्ठामूलयोगे कर्मकालव्याप्त्यभावे चेद्दृश्यं दूर्वाष्टमी सदा त्याज्या
ज्येष्ठामूलर्क्षसंयुता तथा भाद्रपदे मासि शुक्लाष्टम्यां च भारत दूर्वामभ्यर्चयेद्भक्त्या ज्येष्ठामूले विवर्जयेत्
यैर्दूर्वा पूजिता दूर्वा कृत्यपत्यानि नान्यथा भर्तुराशु हरामूले तस्मात्तं परिवर्जयेदिति मदनरत्ने स्कांदे
शुक्ले भाद्रपदे मासि दूर्वासंज्ञा च याष्टमी सिंहार्के एव कर्तव्या न कन्यार्के कदाचन सिंहस्थे तु तमास्त-
येनुदिते मुनिसत्तम तत्रैव अगस्त्य उदिते तां पूजयेद्व्रतोऽङ्गवां वैधव्यं पुत्रशोकं च दश जन्मानि
पंच च यदा तु भाद्रशुक्लाष्टम्यामगस्त्योदयस्तदा तत्सर्वं कृत्स्नाष्टम्यां कार्यं शुक्लपक्षाभावे पूर्णिमांतमा-
सेन भाद्रपदलाभात् यदा तु भाद्रपदोऽधिकस्तदा सिंहार्क एवेति उदाहृतवचनात् अधिमासे तु संप्रा-
प्ते अगस्त्य उदिते मुने अर्वाक्केंद्रे व्रतं कार्यं परतो न तु कुत्रचिदिति निर्णयदीपे स्कांदाच्चाधिक एव
कर्तव्यं इदं च स्त्रीणां नित्यं यस्तु न पूजयते नारी मोहादिह यथाविधि स्त्रीणि जन्मानि वैधव्यं लभते नात्र सं-
शयः तस्मात्संपूजनीया सा प्रतिवर्षं वधूजनैरिति पुराणसमुच्चयात् यदा तु ज्येष्ठादिकं विना सर्वथा-
ष्टमी न लभ्येत तदा कर्तव्या चेक भक्तेन ज्येष्ठामूलं यदा भवेत् दूर्वामभ्यर्चयेद्भक्त्या न वंध्यं दिवसं नये-
दिति भविष्योत्तरादनुकल्पेनानुष्ठानं न तु सर्वथा व्रतलोपः ॥ अथ व्रतम् हेमाद्रौ भविष्ये ब्रह्मणा
द्वपदे मासि शुक्लाष्टम्यामुपोषितः पूजयेच्छंकरं भक्त्या यो नरः श्रद्धयान्वितः स याति परमं स्थानं यत्र देव
स्त्रिलोचनः गणेशं पूजयेद्यस्तु दूर्वया सहितं मुने ॥ अत्र गणेशः ॥ शिवः फलाद्यैः सकलैर्दिव्यै-
र्गंधपुष्पैर्विलेपनैः दूर्वा पूज्य तथेशानं मुच्यते सर्वपातकैः शुचौ देशे प्रजातायां दूर्वायां ब्राह्मणोत्तम
स्थाप्य लिंगं प्रतिष्ठाप्य पुष्पैर्धूपैः समर्चयेत् खर्जूरैर्नारिकेलैश्च मातुलिंगैः फलैस्तथा पूजयेच्छंकरं भक्त्या
दूर्वां च विधिवद्द्विज दध्यक्षतैर्द्विजश्रेष्ठ अर्घ्यं दद्यात्त्रिलोचने दूर्वाशमीभ्यां संपूज्य मानवः श्रद्धयान्वितः
सर्वं सुकृतजन्मा स्यात्सर्वदेवैर्नमस्कृतः विद्यां प्राप्नोति विद्यार्थी पुत्रार्थी पुत्रमाप्नुयात् धर्मार्थी धर्ममाप्नोति
कन्यार्थी लभते च तां मनसा यद्यदिच्छेत तत्तदाप्नोति मानवः य एवं पूजयेद्दूर्वां भक्तेशं मानवः फलैः स-
प्त सप्तजन्मपापैश्च मुच्यते नात्र संशयः कृतोपवासः सप्तम्यामष्टम्यां शिवमर्चयेत् दूर्वां समंतं विप्रेंद्र दध्य-
क्षतफलैः शुभैः ॥ अथ दूर्वापूजामंत्रः ॥ त्वं दूर्वेऽमृतजन्मासि वंदितासि सुरासुरैः सौभाग्यं संतति-

देहि सर्वकार्यकरी भव यथा शाखाप्रशाखाभिर्विस्तृतासि महीतले तथा विस्तृतसंतानं देहि त्वमजरामरं तांहि
रामंत्रेरीशानमर्चयेत्प्रयतः शुचिः ततः संपूजयेद्विप्रान्फलैर्नानाविधैर्द्विज [illegible] पक्वमश्नीयाद्दन्नं दधि फल-
तथा अक्षारलवणं ब्रह्मन्नश्नीयान्मधुनान्वितं दद्यात्फलानि विप्रेभ्यः फलाहारः स्वयं भवेत् प्राणस्य शिरसा दूर्वां
शिवं शिवमुपाप्नुते य एवं कुरुते भक्त्या महादेवस्य पूजनं गाणत्ययात्यसौ ब्रह्मन्मुच्यते ब्रह्महत्यया एवं पु
गणापापहरा अष्टमी दूर्वेसंज्ञिता चतुर्णामपि वर्णानां स्त्रीजनानां विशेषतः आदित्यपुराणे अत्र श्रीपूज-
मपुत्रो शुक्लाष्टम्यां तु संप्राप्ते मासि भाद्रपदे तथा दूर्वां प्रतानं स्वप्नेन मुक्तराशाभिगामिनं पूजयेद्रूपमानीय
गंधमाल्यानुलेपनैः फलपुष्पैस्तथा चैव दीपैर्धूपैर्विसर्जयेत् अग्निपक्वं तथा सर्वेन निवेद्यं कथंचन भो-
क्तव्यं च तथा ब्रह्मन्नग्निपक्वविवर्जितं दूर्वांकुरस्यां संपूज्य विधिना यौवने स्त्रियं यौवनं स्थिरमाप्नोति यत्नय
त्राभिजायते भविष्योत्तरे विशेषः अष्टम्यां फलपुष्पैश्च खर्जूरैर्नारिकेलकैः द्राक्षामोदकपिष्टैश्च बदरैर्लकु
चैस्तथा नारंगैर्जंबुकैरात्रैर्बीजपूरैश्च दाडिमैः दध्यक्षतैः स्रजोभिश्च धूपैर्नैवेद्यदीपकैः मंत्रेणानेन राजेंद्र
शृणु यावद्धितो मम त्वं दूर्वे मृतजन्मासीत्यादि पूर्वोक्त एव मंत्रः दत्वा पिंडानि विप्रेभ्यः फलैश्च विविधैः प्रभो
तिलपिष्टकगोधूमधान्यपिंडानि पांडव भोजयित्वा सुहृन्मित्रसंबंधिसुजनांस्तथा ततो भुंजेत तत्र च स्वयं
श्रद्धासमन्वितः कर्तव्या चैकभक्तेन ज्येष्ठा मूलं यदा भवेत् दूर्वामभ्यर्चयेद्भक्त्या नाववधिदिसं नयेत् पक्षेभ
दपदस्यैवं शुक्लाष्टम्यां युधिष्ठिर दूर्वाष्टमीव्रतं पुण्यं यः करोतीह मानवः न तस्य क्षयमाप्नोति संतानं सातपौरु
नंदते वर्धते नित्यं यथा दूर्वा तथा कुलं इति भविष्ये दूर्वाष्टमीव्रतम् ॥ ॥
भाद्रशुक्लनवम्यां श्रीवृक्षनवमीव्रतं भविष्योत्तरे श्रीकृष्ण उवाच समुद्यत्तेषु देवेषु क्षीरोदमथने पुरा
दैत्यानां मोहनार्थाय योधिष्ठिते जनार्दन विह्वलद्देत्तगणा जाता कमला कमलालया ममेयमिति चान्योन्यं यु-
युधुर्देवदानवाः जिताः सर्वे पुरा पार्थ युधि हस्तेन चक्रिणा यातालं गमिता दैत्याः साश्रीशा मा च यो नरा श्रीस
मावासिता यस्मात् श्रीवृक्षस्तेन संस्मृतः तस्माद्भाद्रपदस्यैव शुक्लपक्षे कुरूत्तम नवम्यामर्चयेद्भक्त्या ईषत्स्व
गौरतोयेन प्रीतमंत्रेर्विविधैः पुष्पैः रक्तग्रिपचितैः फलैः तिलमिष्टान्नगोधूमैर्धूपगंधस्रगंवरैः ईषद्वानुक
रानाश्रुतान्नेक्षतन भस्तले मंत्रेणानेन राजेंद्र प्रकाकोलोक दर्शने श्रीनि[illegible]श्रीवृक्ष शंकरप्रिय
ममाभिलषितं कृत्वा सर्वविघ्नहरो भव संपूज्यैवं ततोभ्यर्च्य श्रीवृक्षं प्रणिपत्य च मंत्रेणानेन राजेंद्र दत्वा
ब्राह्मणभोजनैः ततो भुंजीत नक्तं वै तिलक्षारविवर्जितं अनग्निपक्वस्वापान्नं दधिपुष्पफलं शुभं एवं यः कु
रुते पार्थ श्रीवृक्षाभ्यर्चनं नरः नारी वाडः खवेशाका धीमाबुध्यते नात्र संशयः सप्तजन्मान्तरे यावत्सुखसौभा-
ग्यनान्यथा श्रीमती फलिनी यन्या मर्त्यलोके महीयते श्रीवृक्षमक्षतफलं सततं नवम्यां नैवेद्यपुष्पफ
लवस्त्रविभूषणाद्यैः संपूज्य प्रभातसमये पुरुषोत्तमेष्टां संप्राप्नुवंति पुरुषाः श्रियमुत्तमां च ॥
इति श्रीभविष्योत्तरे श्रीवृक्षनवमीव्रतं ॥
अत्रैव नंदानवमी अत्र दुर्गापूजोक्ता नारदीये भाद्रे तु शुक्लानवमी नंदाख्या परिकीर्तिता तस्यां यः पू
जयेद्दुर्गां विधिवच्चोपचारिकैः सोश्वमेधफलं प्राप्य विष्णुलोके महीयते मदनरत्ने भविष्योत्तरेपि
सुमंतुरुवाच मासि भाद्रपदे या तु नवमी बहुला तथा बहुलः कृष्णपक्षस्तदितरा शुक्ला नवमी तस्यां यः पूज
येद्दुर्गां विधिवत्कुरुनंदन सोश्वमेधफलं विद्यादिष्टलोकं च गच्छति एकभक्तं तु सप्तम्यामष्टम्यां समु-
पोषितः दूर्वा परिस्थितां देवीमित्यादि खर्जूरनारिकेलादिभिः पूजयित्वा रात्रौ जागरणं कार्यः नंदामंत्रजपं
तु ॐ नंदायै स्वाहा ह्रूं स्वरिति ततः प्रभाते नवम्यां चंडिकां प्रीणयित्वा गुरुं पश्चात् कुमारीं पूजयेत्ततः एवं
चाश्वयुजे मासि कार्तिके कार्तिकोत्तरे पूजयेच्चतुरो मासान्नंदां भगवतीं विभो स्नाने कुशोदकं प्रोक्तं प्राशा
ने च नराधिपेत्यादि इति नंदानवमीव्रतं ॥ ॥ ॥ भाद्रशुक्लदशम्यां दशावतारव्रतं नारदीये

अथनभस्यशुक्लायां दशम्यां द्विजसत्तम व्रतंदशावताराख्यंस्नानंतत्रजलाशये कृतसंध्यादिनियमोदेवर्षिपि
तृतर्पणं ततोदशावताराणिसमभ्यर्चेत्समाहितः मत्स्यंकूर्मंवराहंचनरसिंहंत्रिविक्रमं रामंरामंचकृष्णं
चबौद्धंकल्किनमेवच दशमूर्तीस्तुसौवर्णीः पूजयित्वाविधानतः दद्याद्दशभ्योविप्रेभ्यःपूजयित्वातुनारद
उपवासंचैकभक्तंकृत्वासंभोज्यवाडवान् विसृज्यपश्चाद्भुंजीतस्वयंस्वीयैःसमाहितः भक्त्याकृत्वाव्रतंते
नद्भुक्त्वाभोगानिहोत्तमान् विमानेनव्रजेदंतेविष्णुलोकेसनातनमिति दशावतारमूर्त्तयः पंचरात्रे
वामेशंखगदादक्षेद्विभुजोमत्स्यरूपधृक् नराग्निर्मत्स्यरूपोवामत्स्यरूपीजनार्दनः अर्थोग्निर्मत्स्यरूपो
वायुक्तायुधकरश्चरणादिमान्मत्स्यरूपइतिविकल्पः कूर्मस्तुकमठाकारोमत्स्यरूपोक्तरूपवान् ॥२॥
नरांगस्तकरास्यंचमनाक्षीनंसुभीषणं श्रीवामकूर्परस्यातुधरानंतोपदानुगो पतद्रूपधरंदेवंवराहं
भुक्तिमुक्तिदं कूर्परंदंष्ट्राग्रमिति ॥३॥ ज्वलदग्निसमाकारंसिंहवक्त्रंनरांगकं दंष्ट्राकरालवदनंल
लजिह्वंसुभीषणं हस्तास्यंकुटिलभ्रूकंमालीढंपीनवक्षसं अभेद्यतीक्ष्णनखरमात्मसंहृतदानवं
तद्वक्षोदारयंतंचकराभ्यांनखरैर्भृशं गदाचक्रधरंदोर्भ्यांनरसिंहंचतुर्भुजं ४ कुंडेकधरोद्विदोर्वा
मनःपरिकीर्त्तितः द्विदोर्द्विभुजाः ॥५॥ क्षत्रांतकरणंघोरंमुद्वहन्परशुंकरे जामदग्न्यश्चकर्त्तव्यो
भृशंरोषारुणेक्षणः ॥६॥ युवाप्रसन्नवदनःसिंहस्कंधोमहाबलः आजानुबाहुःकर्त्तव्योरामोबाणधनुर्धरः
मद्यपानंचमीरंचवामदक्षिणयोःक्रमात् गदामुशलवज्रंचहलीरामःप्रकीर्त्तितः शंखंचक्रंगदांपद्मं
दधानोनीलमेघभः कृष्णःकमलपत्राक्षःकर्त्तव्यश्चचतुर्भुजः द्विभुजोवापिकर्त्तव्यःपीतांबरविभूषितः
शंखचक्रधरःश्यामोद्विभुजःकृष्णसंज्ञकः ८ कषायवस्त्रसंवीतःस्कंधसंसक्तचीवरः पद्मासनस्थो
द्विभुजो ध्यायीबुधःप्रकीर्त्तितः खड्गोद्यतकरःक्रुद्धोहयारूढोमहाबलः म्लेच्छच्छेदकरःकल्कीद्विभुजः
परिकीर्त्तितइति ॥१०॥ अस्यविधानंभविष्योत्तरे ॥ युधिष्ठिरउवाच दशम्यांशुक्लपक्षस्ययासौश्रेष्ठ
परेशुचिः स्नात्वाजलाशयेस्वच्छेपितृदेवादितर्पणं कृत्वाकुरुकुलश्रेष्ठगृहमागत्यमानवः गृहीत्वाथा
न्यचूर्णस्यस्वहस्तेप्रसृतित्रयं क्रमेणपाचयेत्तत्तुपायसंघृतसंयुतं प्रथमेपूपकान्वैद्वितीयेघृत
पकान् तृतीयेपूपकंसरांश्चतुर्थेमोदकान्शुभान् सोहालकान्पंचमेचषष्ठीवैखंडवेष्टकान् सप्तमे
वैकोकरसामकंपुण्यांस्तथाष्टमे नवमेकर्णवेष्टांश्चदशमेमंडकान्शुभान् दद्यात्स्वयंदशाहरेद्द्विजा
यप्रदापयेत् क्रमेणभक्षयेद्दत्वायथोक्तविधिनानृप अर्द्धार्द्धंविष्णुवेदेवमर्थार्थेचद्विजातये ततोम
र्यमभ्रीयाद्गत्वारम्येजलाशये मंत्रेणानेनमेधावीहरिमभ्युक्षवारिणा मत्स्यंकूर्मंवराहंचनरसिंहंत्रि
विक्रमं रामंरामंचकृष्णंचबौद्धंचैवसकल्किकं गतोस्मिशरणंदेवंहरिंनारायणंविभुं प्रणतोस्मि
जगन्नाथंसमेविष्णुःप्रसीदतु छिनत्तुवैष्णवींमायांभक्त्याप्रीतोजनार्दनः श्वेतद्वीपंनयेत्तस्मान्मायामास
न्निवेदितः अत्रहैमीर्मत्स्यादिप्रतिमाःकृत्वापूज्याः एवंयःकुरुतेभक्त्याविधिनानेनसुव्रतः दशावता
रनामाधंतस्यपुण्यफलंशृणु अयंनयास्तिमालोकेमनुष्याणांदशादशाः ताछिनत्तिनसंदेहश्चक्रप्र
हरणोविभुः संसारसागराद्घोरान्समुद्धृत्यजगत्पतिः श्वेतद्वीपंनयत्याशुव्रतेनानेनतोषितः किंतस्य
नभवेल्लोकेयस्यतुष्टोजनार्दनः यद्दुर्लभंयदप्राप्यंमनसोयन्नगोचरं तदप्यप्रार्थितंध्यातोददातिम
धुसूदनः सोहंजनार्दनःप्राप्तःकालरूपधरोच्युतः मर्त्यलोकेस्वयंपार्थभूभारोत्तारकारणात् या
व्रतमिदंपार्थचरिष्यतिमयोदितं सालक्ष्म्याचलयुक्तस्यात्पुत्रभर्तृसमन्विता मर्त्यलोकेचिरंस्थित्वा
विष्णुलोकेमहीयते विष्णुलोकादिहलोकंततोयातिपरांगतिं येपूजयंतिपुरुषाःपुरुषोत्तमस्यमत्स्यादि
कांस्तुदशमीषुदशावतारान् मन्येदशास्वपिदशासुसुखंविहृत्यतेयांतियानमधिरुह्यसुराल
कं ॥ इतिभविष्येदशावतारदशमीव्रतं ॥ ॥ ॥

भाद्रशुक्लैकादशीपद्मा तदुक्तं नारदीये नभस्यैकादशीशुक्ला पद्माख्यांसमुपोषयेवै कृत्वा निर्मार्जनं तत्र
कर्त्तव्यदानमथाचरेत् एवंवत्त्वापि मायास्तु प्रतिमा या द्विजोत्तम समुत्सवविधानेननीत्वा तांसलिलाश-
ये कृत्वा तु स्पर्शनात्तस्य संपूज्य विधिनाततः आनीयमंडपे तस्मिन्पार्श्वेन च स्वापयेत् ततः प्रभाते द्वाद
श्यां गंधाद्यैरर्च्य वामनं संभोज्य वाडवान्दत्वा दक्षिणां च विसर्जयेत् एवंयः कुरुते विप्र पद्माव्रतमनुत्त
मं भुक्तिमुक्तिमिह भुक्तिं च लभते नात्र संशयः कर्त्तव्यं दानं भगवतः पार्श्वपरिवर्त्तने शय्यादानमित्यर्थः
अथ कथा भविष्योत्तरे युधिष्ठिर उवाच नभस्यस्यासिते पक्षे किंनामैकादशी भवेत् कथयस्व प्र
सादेन कोवात्र विधिरुत्तमः कृष्ण उवाच कथयामि महीपाल कथामाश्चर्यकारिणीं कथयामास
यां ब्रह्मा नारदाय महात्मने नारद उवाच कथयस्व प्रसादेन चतुर्मुख नमोस्तु ते नभस्य शुक्लपक्षे तु किं
नामैकादशी भवेत् एतदिच्छाम्यहं श्रोतुं विधिर्विष्णोराराधनायवै ब्रह्मोवाच वैष्णवोसि मुनिश्रेष्ठ साधु पृ
ष्टं कलिप्रिय नातः परतरं लोके पवित्रं हरिकीर्त्तनं पद्मानामेति विख्याता नभस्यैकादशी सिता हृषी-
केशः शेते यस्याः कर्त्तव्यं व्रतमुत्तमं कथयामि तवाग्रेहं कथां पौराणिकीं शुभां यस्याः श्रवणमात्रेण म
हापापं विनश्यति मांधाता नाम राजर्षिर्विवस्वद्वंशसंभवः बभूव चक्रवर्त्ती स नृपः सत्यप्रतापवान्
धर्मतः पालयामास प्रजाः पुत्रानिवौरसान् तस्य देशे न दुर्भिक्षं नाधयो व्याधयस्तथा निरातंकाः प्रजास्त
स्य धनधान्यसमेधिताः नान्यायोपार्जितं वित्तं कोशे तस्य महीपतेः स्वस्वमार्गे प्रवर्त्तंत प्रजा धर्मपरायणाः
कामधेनुसमा भूमिस्तस्य राज्ञो महीपते तस्यैव कुर्वतो राज्यं बहुवर्षगणा गताः अथ कदाचित्संजाते विपा
के किल कर्मणः वर्षत्रयं तु विषये न ववर्ष बलाहकः तेनोद्विग्नाः प्रजास्तस्य बभूवुः क्षुधयार्दिताः अ
थ प्रजाः समागम्य राजानमिदमब्रुवन् श्रोतव्यं नृपशार्दूल प्रजानां वचनं त्वया आपो नारा इति प्रोक्ताः पु
राणेषु महर्षिभिः अयनं भगवांस्तस्मान्नारायण इति स्मृतः पर्जन्यरूपी भगवान्विष्णुः सर्वगतः स्थितः
स एव कुरुते वृष्टिमन्नं चैव ततः प्रजाः तदभावे नृपतिः क्षयं गच्छंति ताः प्रजाः तथा कुरु नृपश्रेष्ठ यथा
सपद्धक्षेत्रे तद्यथा निर्ति ... [illegible]
गदेमं यथा भवेत् राजोवाच सत्यमुक्तं भवद्भिस्तु न मिथ्याभिहितं वचः अन्नं ब्रह्मेति यत्प्रोक्तं सर्वं मन्ने
प्रतिष्ठितं इत्येवं श्रूयते लोके पुराणे बहुविस्तरे नृपाणामपचारेण प्रजानां पीडनं भवेत् नाहं पश्या
म्यपकृत्यं दोषं पश्चाद्विचारयन् तथापि साधयिष्यामि प्रजानां हितकाम्यया इति कृत्वा मतिं राजा परि
मितपरिच्छदः नमस्कृत्य विधातारं जगाम गहनं वनं चचार मुनिमुख्यानामाश्रमांस्तपसान्वितान् दद-
र्श तपस्तस्मिन्नृषिमांगिरसं नृपः तेजसा द्योतितदिशं द्वितीयमिव भास्करं तं दृष्ट्वा हर्षितो राजा अव-
तीर्य स्ववाहनात् नमश्चक्रे स्वपादाभ्यां राजा कृतांजलिपुटोभवत् मुनिस्तमभिनंद्याथ स्वस्तिवाचनपूर्वकं
पप्रच्छ कुशलं राज्ये सप्तस्वंगेषु भूपतेः निवेदयित्वा कुशलं पप्रच्छानामयं नृपः दत्तासनो गृहीतार्घ्यमु-
पविष्टस्व सन्निधौ अथोवाच मुनिं राजा पृष्टो ह्यागमकारणं राजोवाच भगवन्धर्मविधिना मम पालय-
तो महीं अनावृष्टिः प्रवृत्ता वै नाहं वेदात्र कारणं संशयच्छेदनार्थाय ह्यागतोहं तवांतिकं योगक्षेमविधा-
नेन प्रजानां कुरु निर्वृतिं ॥ अंगिरा उवाच एतत्कृतयुगं राजन्युगानामुत्तमं स्मृतं अत्र धर्मपरा लोका-
धर्मः स्याच्चतुष्पदः अस्मिन्युगे तपोयुक्ता ब्राह्मणा नेतरे जनाः विषये तव राजेंद्र वृषलोहि तपस्यति
विकर्मकरणात्तस्य न वर्षति बलाहकः कुरु तस्य वधे यत्नं येन दोषः प्रशाम्यति ॥ राजोवाच नाह
मेनं वधिष्यामि तपस्यंतमनागसं धर्मोपदेशं कथय ह्युपसर्गविनाशनं ॥ ऋषिरुवाच ॥ ततः शृणु
नृपश्रेष्ठ कुरु घैकादशीव्रतं नभस्यस्य सिते पक्षे पद्मानामेति विश्रुता यस्या व्रतं कुरु नृप सप्रजः स
परिच्छदः इति वाक्यमृषेः श्रुत्वा राजा स्वगृहमागताः तस्या व्रतप्रभावेण सुवृष्टिरभवत्तदा सर्वसिद्धि
करी ह्येषा सर्वोपद्रवनाशिनी प्राप्ते भाद्रपदे मासि पद्माव्रतमथाकरोत् प्रजाभिश्चाथ सर्वाभिश्चातु

वर्णैः समन्वितः एवं व्रते कृते राजन् प्रववर्ष बलाहकाः जलेन प्लाविता भूमिरभवत्सस्यशालिनी हृषीकेशप्रसादेन लोकाः सौख्यं प्रपेदिरे एतस्मात्कारणाद्देव कर्त्तव्यं व्रतमुत्तमं भुक्तिमुक्तिप्रदं चैव लोकानां सुखदायकं पठनाच्छ्रवणाद्राजन् सर्वपापैः प्रमुच्यते इति ब्रह्माण्डपुराणे भाद्रशुक्लापद्मैकादशीव्रतमाहात्म्यकथा अस्यामेवैकादशीश्रवणनक्षत्रसंयुतायां विजयैकादशीव्रतं तदुक्तं मदनरत्ने हेमाद्रौ च भविष्योत्तरे ॥ श्रीकृष्ण उवाच द्वादश्यास्ते विधिः प्रोक्तः श्रवणेन युधिष्ठिर सर्वपापप्रशमनः सौख्यमोक्षप्रदायकः एकादशी यदा शुक्ला श्रवणेन समन्विता विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा अभीष्टा सर्वदेवस्य सर्वदा विजया तिथिः एषैव फाल्गुने मासि पुष्येण सहिता नृप विजया प्रोच्यते सद्भिः कोटिकोटिगुणोत्तरा एषैव शुक्लपक्षैकादशी परा मता ते एकादश्यां सोपवासो राजन्संपूजयेद्धरिं सौवर्णे रौप्यपात्रे वा दारुवंशमयी पि वा सौवर्णं वामनं कुर्य्यात्स्वचित्तस्यानुसारतः शुभाननं धारयंतं मत्स्यत्वं तथैव च शिखीकमंडलुधरं छत्रीयज्ञोपवीतवान् एवं लक्षणसंपन्नं वामनं पूजयेद्धरिं आच्छाद्य पात्रं वासोभिः रत्नैः फलसंयुतं मार्गेण चर्मणा वापि भक्त्या वा शक्त्यपेक्षया तिलोदकेन संपूर्णं प्रस्थेन कुडवेन वा यथालाभे यवगोधूमैः फलसुख्यं तिलैर्भवेत् पुष्पैर्धूपैः फलैर्धूपैः कालोत्थैरर्चयेद्धरिं नानाविधैश्च नैवेद्यैर्भक्ष्यैर्भोज्यैर्गुडोदनैः मंत्रवत्तत्कृतं पुण्यं भवत्याकोटिगुणोत्तरं पूजामंत्रान्प्रवक्ष्यामि तान् शृणुष्व युधिष्ठिर पादौ मत्स्याय च नमो नमः कूर्माय जानुनी वाराहाय नमो गुह्यं नृसिंहाय ते नाभितः उरस्तु वामनायेति भुजौ रामाय वै नमः मुखं रामाय च नमः कृष्णाय च नमः शिरः मत्स्यः कूर्मो वराहश्च नरसिंहोथ मनः रामो रामश्च कृष्णश्च अर्चयामि नमो नमः इत्यर्चनमंत्रः गंधपुष्पफलैश्चैव नैवेद्यैर्विधिनार्चयेत् एवमभ्यर्च्य विधिवदेकादश्यां समंत्रकं जागरं तत्र कुर्वीत गीतवादित्रनिःस्वनैः एवं सुनियमं स्थित्वा प्रभाते विमले सति एवं तु विधिना तत्र यदर्चयेद्वामनं हरिं प्रदद्याद्वेदविदुषो ब्राह्मणे मंत्रतो नृप वामनो बुद्धिदो दाता द्रव्यस्थो वामनः स्वयं वामनोस्य प्रतिग्राही वामनो वै नमस्कृतः ब्राह्मणश्चेति मंत्रेण प्रतिगृह्णीत मंत्रवित् वामनः प्रतिगृह्णाति वामनोऽयं ददाति च वामनस्तारको द्वाभ्यां वामनाय नमो नमः इति तिग्रह मंत्रः एवं दत्वा ततः प्रातर्भोजनं एषदाप्यकं एवं दत्वा वामनेभ्यः पश्चाद्भुंजीत च स्वयं भूयोय येच्छया राजन् सर्वत्रैव विधिः स्मृतः एवं कृते व्रते ब्रह्मन्यत्पुण्यं तन्निबोध मे यावत्कल्पशतं पूर्णमेकसप्ततिसंख्यया प्राप्य विष्णुपुरं राजन् क्रीडते कालमक्षयं इहागत्य भवेद्राजा प्रतिपक्षक्षयंकरः हस्त्यश्वरथदाता नाना दाता भोक्ता विमत्सरी रूपसौभाग्यसंपन्नो दीर्घायुर्नीतिमान्भवेत् पुत्रपौत्रैः परिवृतो जीवेच्च शरदां शतं एषा व्युष्टिः समाख्याता एकादश्यां मयं तव व्युष्टिः फलं एष एव समाख्याता द्वादशी श्रवणान्विता उपोष्यैकादशीं पश्चाद्द्वादशीमप्युपोषयेत् न चात्र विधिलोपः स्यादुभयोर्देवतं हरिरिति इदं श्रावणद्वादशीव्रतमुत्तरदिने विजयैकादशीव्रतं चैकादश्यामेव श्रवणयुक्तायां कार्यं श्रवणयुक्तैकादश्या उत्तरदिने ऽलाभे दशमीविद्धायामपि श्रवणयुक्तैकादश्यामेव कार्यं दशम्येकादशी यत्रेत्यन्यत्र तद्व्रतप्रकरणस्थवह्निपुराणवचनात् विशेषस्तु द्वादशीनिर्णये ज्ञेयः एतत्पारणं तु परेद्युः श्रवणापेक्षया कर्तव्यं श्रवणस्याधिके पारणनिषेधे सति श्रवणमतिवाह्य त्रयोदश्यामेव कर्तव्यं तिथिवृद्धौ तु द्वादश्या उद्धसंख्ययात् वृद्धौ कुर्य्यात् त्रयोदश्यां तत्र दोषो न विद्यते इत्येतत्प्रकरणपठितवह्निपुराणवचनात्

इति विजयैकादशीव्रतनिर्णयः ॥ ॥ ॥ अस्यां श्रवणैकादश्यां मध्याह्ने वामनावतार इति निर्णयामृते निर्णयसिंधौ च भविष्योत्तरे श्रीभागवते ऽष्टमस्कंधे ऽष्टादशाध्याये तु वामनोत्पत्तिरुक्ता सा यथा श्रावणे श्रवणद्वादश्यां मुहूर्ते ऽभिजिति प्रभुः सर्वनक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणं ॥ १ ॥ द्वादश्यां सविता तिष्ठन्मध्यंदिनगतो नृप विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः २ अस्यार्थः श्रवणस्थेंदौ

नृहंसमर्थ्यावयवपूजांकुर्यात् शिरसिवासुदेवायनमः मुखे श्रीधरायनमः कंठे श्रीकृष्णायनमः
वक्षसि श्रीपतयेनमः बाह्वोः सर्वास्त्रधारिणेनमः पादयोः सर्वात्मनेनमः ततोविशेषार्घ्यंदद्यात् तत्र
मंत्रः शंखचक्रगदापद्मसशार्ङ्गशरपूजित गृहाणार्घ्यंमयादत्तंशार्ङ्गपाणेनमोस्तुते इतिधूपदीपौदत्वा
घृतपक्वनैवेद्यंफलतांबूलादीनिचसमर्प्यजागरंकृत्वा प्रभातेस्नात्वादेवंसंपूज्य पुष्पांजलिंदद्यात्
तत्रमंत्रः नमस्तेअस्तुगोविंद बुधश्रवणसंज्ञक अघौघसंक्षयंकृत्वासर्वसौख्यप्रदोभवेति ततःसर्व
माचार्यायदत्वापारणांकुर्यादिति अस्यव्रतस्यबुधायोगेसतिफलातिशयोवर्णितव्योबुधश्रवणसंज्ञके
तिमंत्रलिंगात् ॥ इतिनृसिंहपरिचर्य्याकारः ॥ अत्रदध्योदनदानादिकंकार्य्यं तच्चद्वादश्यामग
मनुष्ठेयम् ॥ इतिविजयैकादशीव्रतम् ॥ ॥ ॥ अत्रैवकल्किद्वादशीव्रतं वाराहेधरणी
व्रतेषु ॥ दुर्वासाउवाच तावद्भाद्रपदेमासिशुक्लपक्षेतुद्वादशी संकल्पविधिनादेवमर्चयेत्परमेश्वरं
नमोस्तुकल्किनेपादौ हृषीकेशायवैकटिं म्लेच्छप्रध्वंसनायेतिजगन्मूर्त्तेतथोदरं श्रीकंठायेतिवैकंठं
खड्गपाणीतिवैकटिं स्वनाम्नाशंखचक्रेतिविश्वमूर्त्तेतथाशिरः सितवस्त्रयुगच्छन्नंगंधपुष्पोपशोभितं
कृत्वाप्रभातेविप्रायप्रदेयंशास्त्रवित्तमे प्रीयतांमेहृषीकेशःकल्किरूपेतिमंत्रतः पुरैवराजाविशालाख्ये
काशिपुर्य्यामहाबलः द्वादशीकृतवान्सोपिचक्रवर्तीबभूवह यज्ञैश्चविविधैरिष्ट्वापरंनिर्वाणमाप्तवा
नन्नपैतासांद्वादशीनांफलानांभेदउच्यते पूज्यतेमत्स्यरूपेणसर्वज्ञत्वमभीप्सुभिः स्ववंशोद्धरणार्था
यकूर्मरूपीतिपूज्यते नरसिंहस्वरूपेणसर्वपापभयानुदैः वामनोमोहनाशायवित्तार्थेजमदग्निजः
क्रूरशत्रुविनाशायचयजेद्दाशरथिंबुधः बलभद्रंयजेद्धीमान्पुत्रकामोनसंशयः रूपकामोयजेद्बुद्धं
कल्किंशत्रुघातनं इतिधरणीव्रतेषुकल्किद्वादशीव्रतं ॥ अथात्रैवकटिपरिवर्तनोत्सवः
तथाचभविष्योत्तरे प्राप्तेभाद्रपदेमासिएकादश्यांसितेहनि कटिदानंभवेद्विष्णोर्महापातकनाशनं
कटिदानंपार्श्वपरिवर्तनं रामार्चनचंद्रिकायां शयनोत्सववच्चैवदेवंनीत्वाजलाशयं कटिदानो
त्सवंकुर्वे इतिसंकल्प्यपूजयेत् देवदेवजगन्नाथयोगगम्यनिरंजन कटिदानंकरोम्यद्यप्राप्तेभा
द्रपदेशुभे अनेनकटिपरिवर्तिदक्षिणांप्रकल्पयेत् महापूजांततःकृत्वाएवंवास्त्वगृहंव्रजेत्
इतिनिर्णयसिंधौतुद्वादश्यांविष्णोः परिवर्तनकृत्यमुक्तं तच्चसंध्यायांविष्णुंसंपूज्यप्रार्थयेत् मंत्र
स्तुतिथितत्वे वासुदेवजगन्नाथप्राप्तेयंद्वादशीतव पार्श्वेनपरिवर्तस्वसुखंस्वपिहिकेशव इति
भाद्रपदशुक्लैकादशीकृत्यं ॥ ॥ अथभाद्रशुक्लद्वादशीकृत्यंतत्रपारणंश्रवणायोगरहितायांकु
र्यात् आभाकासितपक्षेषुमैत्रश्रवणरेवती संगमेनैवभोक्तव्यंद्वादशद्वादशीर्हरेदितिदिवोदा
सोदाहृतवचनात् ज्योतिर्निबंधेतु आभाकापोसितेपक्षेमैत्रान्त्यश्रुतिरोहिणी संगमेनैवभोक्तव्यं
द्वादशद्वादशीर्हरेदितिवायुपुराणोक्तेः पौषशुक्लैकादश्याःव्रतपारणेरोहिणीद्वादशीयोगेपिपार
णानिषेधउक्तः तत्रैवकृतयुगादिवशाद्व्यवस्थापुक्ता महाभारते मैत्रैकांतुकृतेत्याज्यंत्रेतायांवै
ष्णवीत्यजेत् द्वापरेरोहिणीत्याज्याकलौतुश्रवणंत्यजेत् अत्रश्रवणद्वादशीयोगेपारणाप्रत्यवाय
प्रतिरुक्ता उपोष्यैकादशीमोहात्पारणंश्रवणेयदि करोतिहंतितत्पुण्यंद्वादशीद्वादशीभवमिति
स्कांदाच्च अस्यतत्रैवप्रतिप्रसवः मार्कंडेयः विशेषेणमहीपालश्रवणंवर्द्धतेयदि तिथिक्षये
भोक्तव्यंद्वादशींलंघयेन्नहीति इदंचयदाश्रवणद्वादशीयोगवाहुल्यंतदाश्रवणर्क्षंत्रेधाविभज्य
मध्यमंविंशतिघटिकायोगंत्यक्त्वापारणंकार्य्यं तदुक्तंविष्णुधर्मेश्रुतेश्चमध्येपरिवर्तमेतिसुप्तिप्र
बोधिपरिवर्तनमेववर्ज्यमितिकेचित्तुश्रवणर्क्षंत्रेधाविभज्यमध्यमपादद्वयंवर्ज्ययित्वापारण
माहुः अन्येत्वाभाकाविरतितिमैत्राद्यपादइत्यपिचनिर्मूलमित्याहुः अत्रैवशक्रध्वजोत्थापन

सपरार्के गर्गेण द्वादश्यांतु सितेपक्षे मासि भाद्रपदे तथा शक्रमुत्थापयेद्राजा विष्णुश्रवणवासरे अ
ग्निपुराणे च इंद्रो भाद्रपदे मासि पक्षे शुक्ले च विष्णुना नियुक्तः सर्वसस्यानि व्रीहींश्चैव फलानि च ओ
षधीर्वज्रहस्तश्च जनयन्पालयत्यपि तद्दयात्तानि सर्वाणि वर्धयत्यखिलं जगत् तस्मात्संततं संपूज्य
सभार्यश्च दिने दिने सगणः सायुधश्चैव सानुयात्रः सवाहनः पटभित्तिकृतो देवो राज्ञा पूज्यो विशेष
तः भक्ष्यैः फलैर्नैवेद्यैर्मूलैर्वस्त्रैश्चैव विशेषतः तमुद्दिश्यार्चयेद्विप्रांस्तथा रंगोपजीविनः पटभित्तिकृ
त इति पटे भित्तौ वा लिखित इति दिने दिने इति वचनात् द्वादशीमारभ्य यावदवस्थानं प्रत्यहं
पूज्यः ज्योतिःशास्त्रे द्वादशीं तु परित्यज्य तिथावन्यत्र शास्त्रतः शक्र उत्थापितो हंति राजानं राष्ट्रमेव च
शक्रमुत्थापयेद्राजा उत्तरेण कदाचन श्रवणे वा धनिष्ठायां न तु नक्षत्रांतरेण तु विष्णुमुत्थितमाश्विन्यां-
श्रवणे यमदैवते वासवे तु धनिष्ठायां निशि शक्रं प्रवासयेदिति अत्रैव श्रीपतिसंहितावचनम्
हिरण्याक्षे तु कन्यायां शक्रमुत्थापयेद्यदि राज्ञो राज्यं विनश्येत प्रजाश्चैव निपीड्यते अथ तत्पूजा तत्रा-
वाहनमंत्रः एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेश संमुत्थितस्त्वं श्रवणाद्यपादे गृहा-
ण पूजां भगवन्नमस्ते इत्यावाहनं ऐरावतसमारूढो वज्रहस्तो महाबलः शतयज्ञाधिपो देवस्त-
स्मै नित्यं नमो नमः वज्रहस्त सुरारिघ्न बहुनेत्र पुरंदर रक्षार्थं सर्वभूतानां पूजेयं प्रतिगृह्यतां इत्ये
तैर्मंत्रैः संपूज्य प्रार्थयेत् नमस्ते देवदेवेश सहस्राक्ष नमोस्तु ते आखंडल नमस्तेस्तु तुष्टः प्रदेहि श्रि
यं स्थिरां इत्यष्टदिवसांतं प्रत्यहं संपूज्य विसर्जयेत् अष्टमे दिने भरण्यां विसर्जनं राजमार्तंडे याम्य-
ततो देवपतेर्निशायां विसर्जनं शांतिकरं नृपाणां विसर्जने तु व्यासोक्तो मंत्रः सार्द्धं सुरासुरगणैः पुरं
दर शतक्रतो उपहारं गृहीत्वेमं महेंद्र प्रतिगम्यतां अयमष्टमेह्नि भरण्यामेव विसर्जनीयः त
दुक्तं राजमार्तंडे अंतकस्यादिमध्यांतयदि स्यादष्टमेहनि शक्रं विसर्जयेत्तत्र नो विधिश्चाष्टमोप
रि पातयेदष्टमे चाह्नि लोकपालं तदंतिके निशायां सर्वसत्वानां करोति कुशलं भुवि नवमे तु दि-
ने हंत्येष राज्ञां शक्रो भयप्रदः ततो नाहन्यमायां तं निशि सुप्तो तु पातयेत् नवमाद्यरतः शक्रमंतक
स्यानुरोधतः ये पश्यंति वज्रपाणिं तेषां राष्ट्रं विनश्यति अंतकां तयमदैवतस्य भरणीनक्षत्रस्य तु-
मनिशावसाने अप्राप्ताष्टमनिशावसाने भरण्युदयस्य तन्मध्यस्य तदंतस्य वालाभे शक्रविस-
र्जनं तदपि तदलाभे तदेवाश्विन्यामपि तद्विसर्जनं अत्र भौमशनिवारवर्ज्यं विसर्जनमुक्तं त-
था च सौरभूमिजयोर्वारे सूतके मृतके पि वा भूमिपालादिकोन्माते शक्रं नैव प्रवासयेत् इयमे
व श्रवणद्वादशी नारदीये नभस्यशुक्लद्वादश्यां त्रनीं संपूज्य वामनं तदग्रे भोजयेद्विप्रान्पायसैर्द्वाद
शीतिथौ सौवर्णीं दक्षिणां दत्त्वा विष्णुप्रीतिकरो भवेत् अत्रोपवासादिकं महाफलमित्युक्तं हेमाद्रौ भ-
विष्योत्तरे मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता सर्वपापहरा प्रोक्ता उपवासे महाफलेति शुक्ल
द्वादश्यां श्रवणाभावे कृष्णद्वादश्यामाद्यादौ सत्त्वे सर्वग्राह्या तदुक्तमाथर्वीये शुक्ला वा यदि वा कृष्णा
द्वादशी श्रवणान्विता तस्यामेवोपवासश्च त्रयोदश्यां तु पारणमिति एतच्च वचनं श्रवणयुक्त-
द्वादशीसामान्याभिप्रायं भाद्रपदशुक्लद्वादश्यां नियमेन श्रवणयोगस्यासंभवात् तेनैकादश्यां
द्वादशीश्रवणयोगे सैवोपोष्या एकादशी द्वादशी चेद्वैष्णवमपि तत्र चेत् तद्विष्णुशृंखलं नाम वि
ष्णुसायुज्यकृद्भवेदिति विष्णुधर्मोक्तेः यदा दिनद्वयेपि श्रवणद्वादश्योर्योगस्तदाप्येकादशीयोगस्य
प्रशस्तत्वात्तद्युक्तायामेवोपवासादिकर्तव्यं तदुक्तं मदनरत्ने मात्स्ये द्वादशी श्रवणस्पृष्टा भवेदे
कादशी यदि स एव वैष्णवो योगो विष्णुशृंखलसंज्ञितः तस्मिन्नुपोष्य विधिवन्नरः संक्षीणकल्मषः
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिवर्जितामिति यदा त्वेकस्मिन्नहोरात्रे श्रवणमेकादशी सह द्वाद-

शीं स्पृशति तदा फलाधिक्यमुक्तं नारदीये संस्पृश्यैकादशीं राजन् द्वादशीं यदि संस्पृशेत् श्रवणं-
ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहति इति ॥ अस्मिंस्तु विष्णुशृङ्खलयोगे एकादश्युपवासो द्वादश्यु-
पवासश्च तन्त्रेणैवानुष्ठेयः एकदैवत्यत्वाद्विरोधाभावाच्च ॥ अत्र चैकादश्याः श्रवणयोगाभा-
वेपि तद्दिनावच्छेदेन श्रवणद्वादशी योगादेव विष्णुशृङ्खलमिति हेमाद्रिमतं निर्णयामृतेतु
श्रवणस्यैकादशीद्वादशीभ्यां योगो एव विष्णुशृङ्खलं नान्यथेति अत्रोदयादुदयपर्यन्तोऽस्तम-
यपर्यन्तो वा मनक्षत्रयोग इतरद्वादशीवन्नापेक्षितः मासि भाद्रपद इति भविष्योत्तरवाक्यात्
तथा च मदनरत्नादिषु स्वल्पश्रवणयोगेपि सम्पूर्णा पुण्यतमा भवतीत्युक्तं द्वादशी श्रवणस्य
ह्यकृत्स्नापुण्यतमा तिथिः नतु मानेन संयुक्ता तावत्येव प्रशस्यत इति मत्स्यपुराणात् निर्ण-
यसिन्धौ दीपिकायां च यदा तिथ्यन्ते नक्षत्रस्योदयावधि द्विकलामात्रमपि श्रवणर्क्षं भवति
तदापि एवं वेत्युक्तं प्रक्रम्य तिथिनक्षत्रयोर्योगो योगश्चैव नराधिप द्विकलो यदि लभ्येत स-
ज्ञेयो ह्यष्टयामिक इति नारदीयवचनात् दिवोदासीये तु रात्रेः प्रथमयामे श्रवणयोगे पूर्वा-
न्यथोत्तरा रात्रेः प्रथमपादे चेच्छ्रवणं हरिवासरे तदा पूर्वामुपवसेत्प्रातर्भवति पारणमि-
त्युक्तमिति इदं तु निर्मूलत्वात्सर्वविरोधादुपेक्ष्यमिति निर्णयसिन्धौ दीपिकास्मृतिकौस्तुभयोर्म-
तेऽसमूलमेव मदनरत्ने निर्णयसिन्धौ प्रतापमार्तण्डे च यत्तु यस्मिन्दिने उदयकालीनश्रवण-
द्वादशीयोगस्तस्मिन्दिने श्रवणद्वादशीव्रतस्य विधायकमुदयव्यापिनी ग्राह्या श्रवणद्वादशीव्र-
त इति हरन्नारदीयवचनं• यच्च स्मृत्यर्थसारे उदयव्यापिनी ग्राह्येत्युक्तं तद्यदा शुद्धाधिका द्वाद-
शी परदिने एवोदयकालिकश्रवणयोगवती पूर्वदिने उदयकालव्यतिरिक्तकालिकश्रवणयो-
गवती तदोत्तरायामेवं परमित्युक्तं यदा तूभयत्रोदयकालीनः श्रवणयोगस्तदा पूर्वा ग्राह्या व्र-
तकर्मकालव्यापित्वात् यदा तु श्रवणनक्षत्रमेकादश्यामेव भवति नतु द्वादश्यां तदा श्रवण-
द्वादशीव्रतमेकादशीव्रतमेकादश्यामपि कर्तव्यं तदुक्तं यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्व-
चित् एकादशी तदोपोष्या पापघ्नी श्रवणान्विता उभयोर्देवता विष्णुः पुराणपुरुषोत्तमः विभेदो-
नैव कर्तव्यो विभेदात्पतनं नरः इति विष्णुपुराणेपि याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयो-
गतः तास्वेव तद्व्रतं कुर्याच्छ्रवणद्वादशीविनेति श्रवणद्वादशीव्रतं श्रवणान्वितायामेकादश्याम-
पि कर्तव्यम् नतु श्रवणरहितायां द्वादश्यामेवेति नियम इत्यर्थः श्रवणयुतश्चेदेकादश्या अला-
भे तु दशमीविद्धापि श्रवणयुता ग्राह्या तथा च वह्निपुराणे दशम्येकादशी यत्र सा नोपोष्या भवेत्तिथि
श्रवणेन तु संयुक्ता सोपोष्या सर्वकामदेति एतावांस्तु विशेषः श्रवणैकादश्यां वामनावतारः ॥
कृतपूजा च श्रवणद्वादश्यां जनार्दनपूजा विधिस्त्वेक एव हरिभक्तिविलासेऽयं विशेषः तथा च
कारिका एकादश्यामुपवसेत् द्वादश्यां कृत्स्नमर्चयेत् प्रादुर्भूतो हि भगवान्द्वादश्यामेव वामनः
तथा च मत्स्यपुराणे उपोष्यैकादशीं एवं द्वादश्यां पूजयेद्धरिमिति अतो न यदि लभ्येत मध्याह्ने
द्वादशी तदा द्वादशीमध्य एवार्च्यो वामनस्तर्हि हरिभिरिति यदा चैकादशी शुद्धा द्वादशी श्रवणा-
न्विता तदाऽसमर्थेनोपवासद्वयं विधाय त्रयोदश्यां पारणं कर्तव्यं तदुक्तं भविष्योत्तरे एका-
दशीमप्युपोषयेत् न चात्र विधिलोपः स्यादुभयोर्दैवतं हरिरिति पारणमन्तरेणैकादशीव्रतस-
माप्तिर्द्वयविधिलोपो न स्यादित्यर्थः यत्तु विष्णुधर्मे पारणान्तं व्रतं ज्ञेयं व्रतान्ते विप्रभोजनम् अ-
समाप्ते व्रते पूर्वे नैव कुर्याद्व्रतान्तरमिति तदेतदन्यव्रतविषयं नारदीयपुराणे द्वादश्यामुपवा-
सात्त्रयोदश्यां तु पारणं निषिद्धमपि कर्तव्यमित्याज्ञा पारमेश्वरीति मार्कण्डेयोप्येवं निर्णय-

सिंधौ अत्रगौडाः शृणुराजन्परंकाम्यंश्रवणद्वादशीव्रतमितिस्मृतिशीर्षवचनात् काम्यमेवेदम्
तेनाशक्तस्यनित्यमेकादशीव्रतमेवेतिमन्यंते द्वादश्यामुपवासेनशुद्धात्मानृपसर्वशः चक्रव
र्तित्वमतुलंसंप्राप्नोत्युत्तमांश्रियमितिगौडनिबंधेमार्कंडेयोक्तेश्चेति कालतत्त्वविवेचने एतांश्चा-
र्थोद्वादश्यः काम्याएवेतिनित्यत्वेप्रमाणाभावात् फलश्रवणाच्च यत्तु नकरिष्यंतियेलोकेद्वाद-
श्यांषष्ठेममास्त्वया तेषांयमपुरेवासोयावदाभूतसंप्लवमित्यादीनिपद्मपुराणस्यवचनानीतिकेन
चिल्लिखितानि तान्यपिवैष्णवग्रंथेष्वदर्शनादग्राह्याण्येव कौस्तुभेतुइदंचव्रतंनित्यकाम्यं उप
वासमसत्कृत्वातुनरोनरकमृच्छतीतिश्रवणद्वादशीप्रकरणेवामनपुराण वचनादिति तत्रमूलं
मृग्यं कल्पतरुरत्नावल्यांतुअत्रव्रतंकाम्यंनित्यमितिकेचिदित्युक्तं यस्तूपवासद्वयासमर्थोयावज्जीवं-
स्वीकरोत्येकादशीव्रतंश्चसत्वेकादश्यामुपोष्यश्रवणद्वादश्यांविष्णुंसंपूज्यदध्योदनदानादिकं
कृत्वापारणंकुर्यात् तदुक्तंमत्स्यपुराणे द्वादश्यांशुक्लपक्षेतुनक्षत्रेश्रवणेयदि उपोष्यैकादशीं
तत्रद्वादश्यांपूजयेद्धरिं अस्यार्थः कालतत्त्वविवेचने हरिपूजामेवकुर्यान्नतूपवासमित्यर्थः
उपवासकरणेतदंगहरिपूजायाः प्राप्तत्वादेवतद्विधिवैयर्थ्यादिति उपवासद्वयासमर्थेनास्त्री
कृतैकादशीव्रतेनकाम्यंनित्यस्यबाधकमितिन्यायेनश्रवणद्वादश्यामेवोपवासः कर्तव्यः तदु-
क्तंनारदीयपुराणे उपोष्यद्वादशींपुण्यांवैष्णवर्क्षेणसंयुतां एकादश्युद्भवंपुण्यंनरःप्राप्नोत्यसं-
शयम् वाजपेयेयथायज्ञेकर्महीनोपिदीक्षितः सर्वंफलमवाप्नोतिह्यस्नातोप्यहुतोपिसन्निति
एवमेकादशींभुक्त्वाद्वादशींसमुपोषणात् पूर्ववासरजंपुण्यंसर्वंप्राप्नोत्यसंशयमिति निर्णयसिं
धावपिवामनपुराणे एकादश्यांनरोभुक्त्वाद्वादश्यांसमुपोषणात् व्रतद्वयकृतंपुण्यंसर्वंप्राप्नो
त्यसंशयमिति दिवोदासीयेभविष्यपुराणे उपवासद्वयंकर्तुंनशक्नोतिनरोयदि प्रथमेह्निफ-
लाहारीनिराहारोपरेह्नीति उभयदिनेश्रवणाभावेतुएकादश्यामुपोष्यद्वादश्यांवामनोत्स-
वंकुर्यात् श्रवणयोगाभावेकेवलद्वादशीव्रतविधानाभावात् तथाहरिभक्तिविलासेकारिका
दिनद्वयेपिश्रवणाभावे तद्योगहानितः एकादश्यामुपोष्यैवद्वादश्यांवामनंयजेत् पारणेतद्भ-
यांतोमुख्यः तदुक्तंस्कंदपुराणे तिथिनक्षत्रनियमेतिथिभांतेचपारणं अतोन्यथापारणायांव्र
तभंगमवाप्नुयात् उभयांतालाभे एकतरांतेवापारणंकुर्यात् तदुक्तं हेमाद्रौमदनरत्ने नार-
दीयपुराणे तिथिनक्षत्रसंयोगे उपवासोयदाभवेत् पारणंतुनकर्तव्यंयावन्नैकस्यसंक्षयइ
ति इयंबुधवारेतिप्रशस्ता श्रवणद्वादशीयोगेबुधवारोयदाभवेत् अत्यंतमहतीनामद्वादशी-
साप्रकीर्तितेति विष्णुधर्मोत्तरीयवचनात् भाद्रपदेसात्यंतफलदा तथाच स्कंदपुराणे मा
सिभाद्रपदेशुक्लाद्वादशीश्रवणान्विता महतीदशथाज्ञेयाउपवासेमहाफला बुधश्रवणसं-
युक्तायामेवद्वादशीभवेत् अत्यंतमहतीतस्यांदत्तंभवतिचाक्षयमिति अत्रकृत्यंकल्पतरुरत्नाव
ल्यां ब्रह्मवैवर्तपुराणे बुधश्रवणसंयुक्ताविजयासंगमेतदा वारिधानीप्रदायास्याद्दध्योदनसम
न्विता येनयोनौनजायेतपूजयित्वान्नवामनं वंशाःसमुद्धृतास्तेनमुक्तःपितृऋणादसौ अत्रती
र्थस्नानादिकमनंतफलंभवति तदुक्तंविष्णुधर्मोत्तरे भाद्रस्यशुक्लपक्षेतुनक्षत्रेश्रवणेयदि त
संयाजीर्थेयत्स्नानंतत्स्नानं तत्फलंभवेत् देवतापूजनंविप्रभोजनंहवनंतथा एकजप्यात्सहस्र-
स्वजपस्यफलमश्नुते दानंचमहदल्पवासहस्रगुणितंभवेतइति अस्यांबुधयोगेसंगमस्ना
नमुक्तंलैंगे अतः परंतुसंसेव्योगंगावरुणासंगमः श्रवणद्वादशीयोगेबुधवारोयदाभवेत्
नरानस्मिन्नरःस्नात्वासर्वपापैःप्रमुच्यते तस्मिन्कालेयशस्विनि ता
हरूपफलंलभेदिति श्राद्धंकरोतियस्तत्र

रयेत्सपितॄन्सर्वान्विष्णुलोकं सगच्छति अन्यत्रापिनदीनांसंगमे स्नानमुक्तं विष्णुधर्मोत्तरे श्रवण
द्वादशीयोगंसंपूजयित्वाजनार्दनं दानंदत्वाचविप्रेभ्यः सोपवासोजितेंद्रियः पुण्येषुसततंराज
न्नदीनांसंगमेषुच गंगासरय्वोर्गंगायाःशोणस्यचसमागमे इक्षुमत्याश्चगंगायांगंगायमुन
योस्तथा गोमत्याश्चसरय्वाश्चकौशिक्यांगंडकागमे विपाशायादेवह्रदेयत्रयोगंप्रपद्यते वि
पाशाचतथायोगंयत्रयातिशतद्रुहा इरावतीतथायोगंयत्रयातिचसिंधुना चंद्रभागातथायोगं
तौष्यांयत्रसमागता चंद्रभागायत्रयातिवितस्तायाःसमागमं महासिंधुश्चसंयोगंयत्रयाति-
वितस्तया विष्णुलोकंप्रापयतियावदाभूतसंप्लवं राजसूयादिभिर्यज्ञैर्यत्फलंसमवाप्यते
श्रवणद्वादशींप्राप्यतत्फलंलभतेनरइति ॥ ॥ अथविष्णुधर्मोत्तरे श्रवणद्वादशीवि-
धानम् ॥ रामउवाच उपवासासमर्थानांकिंचिदेकमुपोषितं महाफलंमहादेवत
न्ममाचक्ष्वपृच्छतः शंकरउवाच यारामश्रवणोपेताद्वादशीमहतीतुसा तस्यामुपोषि
तःस्नातःपूजयित्वाजनार्दनं प्राप्नोत्ययत्नाद्धर्मज्ञद्वादशद्वादशीफलं दध्योदनयुतंतस्यां
जलपूर्णंघटंतथा वस्त्रेणवेष्टितंदत्वाछत्रोपानहमेवच नदुर्गतिमवाप्नोतिगतिमग्र्यांच
विंदति अक्षयंस्थानमाप्नोतिनात्रकार्याविचारणा श्रवणद्वादशीयोगोबुधवारोभवेद्यदि
अत्यंतमहतीनामद्वादशीसाप्रकीर्तिता स्नानंजप्यंतथादानंहोमंश्राद्धंसुरार्चनं सर्वमक्ष
यमाप्नोतितस्यांभृगुकुलोद्वह तस्मिन्दिनेतथास्नातोयत्रकांचनसंगमे सगंगास्नानजंराम
फलंप्राप्नोतिसंशयं श्रवणे संगमाःसर्वेपरपुष्टिप्रदाःसदा विशेषाद्द्वादशीयुक्तेबुधयुक्ते
विशेषतः तथैवद्वादशीप्रोक्तासर्वकामफलप्रदा ॥ इतिविष्णुधर्मोत्तरोक्ता
श्रवणद्वादशी ॥ ॥ अथभविष्योत्तरोक्ताश्रवणद्वादशीकथा ॥ युधिष्ठिरउवाच
उपवासासमर्थानांसदैवपुरुषोत्तम एकायाद्वादशीपुण्यातांवदस्वममानघ श्रीकृष्णउ-
वाच मासिभाद्रपदेशुक्लाद्वादशीश्रवणान्विता सर्वकामप्रदापुण्याउपवासेमहाफला सं
गमेसरितांस्नात्वाद्वादश्यांसमुपोषितः समग्रंफलमाप्नोतिद्वादशद्वादशीभवं बुधश्रवण
संयुक्तासैवचेद्द्वादशीभवेत् अतीवमहतीतस्यांसर्वंकृतमिहाक्षयं द्वादशीश्रवणोपेतायदा
भवतिभारत संगमेसरितांस्नात्वागंगादिस्नानजंफलं सोपवासःसमाप्नोतिनात्रकार्या
विचारणा जलपूर्णंतथाकुंभंस्थापयित्वाविचक्षणः पंचरत्नसमोपेतंसोपवीतंसुपूजितं
तस्यस्कंधेसुघटितंस्थापयित्वाजनार्दनं स्वशक्त्यास्वर्णघटितंशंखशार्ङ्गविभूषितं स्नापयि
त्वाविधानेनसितचंदनचर्चितं सितवस्त्रयुगच्छन्नंवस्त्रोपानद्युगान्वितं ॐनमोवासुदेवाय
शिरःसंपूजयेत्ततः श्रीधरायमुखंतद्वद्वैकुंठायइशोनमः नमःश्रीपतयेवक्षोभुजौसर्वा-
स्त्रधारिणे व्यापकायनमःकुक्षीकेशवायोदरंनमः त्रैलोक्यजनकायेतिमेढ्रंसंपूजयेद्धरिं
सर्वाधिपतयेजंघेपादौसर्वात्मनेनमः अनेनविधिनाराजन्पुष्पैर्धूपैःसमर्चयेत् ततस्तस्या-
ग्रतोदेयंनैवेद्यंघृतपाचितं मोदकांश्चनवान्कुंभान्दद्याच्छक्त्याविचक्षणः एवंसंपूज्यगोवि
दंकुर्याज्जागरणंनिशि प्रभातेविमलेस्नात्वासंपूज्यगरुडध्वजं पुष्पधूपादिनैवेद्यैःफलैर्व-
स्त्रैःसुशोभनैः पुष्पांजलिंततोदत्वामंत्रमेतमुदीरयेत् नमोनमस्तेगोविंदबुधश्रवणसंज्ञि
क अघौघसंक्षयंकृत्वासर्वसौख्यप्रदोभव अनंतरंब्राह्मणेतंवेदवेदांगपारगे पुराणज्ञेवि
शेषेणविधिवत्संप्रदापयेत् प्रीयतांदेवदेवेशोममसंकष्टनाशनः अनेनविधिनाराजन्
नयात्तीरेनरोत्तमः सर्व[illegible]गकभक्तारतोपिसन् मत्रार्चेदानभक्तिं चंद्रोदये॥

शंखचक्रगदापद्मशरशार्ङ्गविभूषित गृहाणार्घ्यं मया दत्तं शार्ङ्गपाणे नमोस्तु ते इति भविष्योत्त
रोक्तं श्रवणद्वादशीव्रतम् ॥ ॥ अथ वामनपुराणोक्ता श्रवणद्वादशीकथा ॥
पुलस्त्य उवाच शृणुतां कथयिष्यामि कथां पापप्रणाशिनीं पुरा त्रेतायुगस्यादौ यथा वृत्तं तपो
धनं मद्रदेश इति ख्यातो देशो वै ब्रह्मणः सुत शाकलं नगरं तत्र ख्यातं स्थानीयमुत्तमं त
त्र वणिग्वसतिस्थः सुधर्माख्योभवद्वणिक् धनाढ्यो गुणवान्भोगी नानाशास्त्रविशारदः स चैक
दा निजाद्राष्ट्रात्स्वराष्ट्रं गंतुमुद्यतः सार्थेन महता युक्तो नानाविपणिपण्यवान् गच्छतः पथि त
स्याथ मरुभूमौ कलिप्रिय अभवद्दस्युतो मनोह्यवस्कंदोतिदुःसहः ततः सहृतसर्वस्वो वणि
ग्दुःखसमन्वितः असहायो मरौ तस्मिन्नचारोन्मत्तवद्वशी चरन्नानदरण्ये वै दुःखाक्रांतेन नारद
शाल्माद्वशमीवृक्षो मरावासादितः शुभः तं मृगैः पक्षिभिश्चैव हीनं दृष्ट्वा शमीतरुं क्लांतः क्षु
त्तृट्परीतात्मा तस्याधः समुपाविशत् सुमहच्चापि सुविश्रांतो मध्याह्ने च सुस्थितः समपश्यत्तथा
यांतं प्रेतं प्रेतशतैर्वृतं उह्यमानमथान्येन प्रेतेन प्रेतनायकं पिंडाशिभिश्च परितो धावद्भिर्भीम
विग्रहैः अथाजगाम प्रेतोसौ पर्यटित्वा वनानि च उपगम्य शमीमूले वणिक्पुत्रं ददर्श ह स्वा
गतेनाभिवाद्यैनं समाभाष्य परस्परं उपोपविष्टः छायायां पृष्टः कुशलमात्मवान् ततः प्रेता
धिपतिना पृष्टः स तु वभूव तुः कुतश्चागम्यते ब्रूहि क्व सार्थो वा गमिष्यति कथं चेदं महारण्यं मृ
गपक्षिविवर्जितं समासन्नोसि भद्रं ते सर्वमाख्यातुमर्हसि सर्वमाख्यातवान्ब्रह्मन्स्वदेशाथन
विच्युतिं तं च श्रुत्वा स वृत्तांतं तस्य दुःखेन दुःखितः वणिक्पुत्रं वचः प्राह प्रेतपालः स बंधुवत्
प्रेतपाल उवाच ॥ एवं गतेपि मा शोकं कर्तुमर्हसि सुव्रत भूयो प्यर्था भविष्यंति यदि भाग्य
फलं तव भाग्यक्षयेथ क्षीयंते भवं सभ्युदयेन ते क्षीणस्यास्य शरीरस्य चिंतया नो भयं भवे
त् इत्युच्चार्य समारुह्य स्वान्भृत्यान्वाक्यमब्रवीत् अत्रातिथिरयं पूज्यः सहदेशजनैर्मम अ
स्मिन्दृष्टे वणिक्पुत्रे यथा स्वजनदर्शनं अस्मिन्समागते प्रेताः प्रीतिर्जाता ममातुला एवं हि
वदतस्तस्य भृत्यास्ते सुदृढेन वै दध्योदनेन संपूर्णामाजगाम यथेप्सितं तथा नवा च सुहृद्वासं
पूर्णा परमांभसा वारिधाने च संप्राप्ते प्रेतानामग्रतः स्थिता तदागतं च सलिलमन्नं वीक्ष्य महा
मतिः प्राहोत्तिष्ठ वणिक्पुत्र त्वमाह्निकमुपाचर ततस्तौ वारिवाहिन्याः सलिलेन विधानतः
कृत्वाह्निकावुभौ जातौ वणिक्प्रेतपती तथा ततो वणिक्सुते प्रादाद्दध्योदनमथेच्छया दत्वा ते
भ्यश्च सर्वेभ्यः प्रेतेभ्यो प्यददात्ततः भुक्तवत्सु च सर्वेषु कामतोंभसि सेविते अनंतरं च बुभुजे
प्रेतपालो वराशनं प्रकामतृप्ते प्रेते तु वारिधानोदनस्ततः अंतर्धानमगाद्ब्रह्मन्वणिक्पुत्रस्य प
श्यतः ततस्तदद्भुततमं दृष्ट्वासौ मतिमान्वणिक् पप्रच्छ तं प्रेतपालं कौतूहलमना वशी अर
ण्ये निर्जले देशे कुतोन्नस्य समुद्भवः कुतस्तु वारिधानीयं संपूर्णा परमांभसा तथा वीतभया
भृत्यास्तेभ्यर्णा वर्णतः कृशाः भवानपि च तेजस्वी किंचित्पुष्टवपुः शुभः शुक्लवस्त्रपरीधानो व
[illegible]परिपालकः सर्वमेतन्ममाचक्ष्व भवान्कः काशमीविधिं इत्थं वणिक्सुतवचः श्रुत्वा मे
प्रेतनायकः प्राशंसत्सर्वं तस्यार्थ यथावृत्तं पुरातनं अहमासं पुरा विप्रः शाकले नगरोत्तमे
सोमशर्मेति विख्यातो वकुलागर्भसंभवः ममासीच्च वणिक्श्रीमान्प्रातिवेश्यो महायशाः सोहं
कदर्यो मूढात्माथ नैषिमसि दुर्मतिः न ददामि द्विजातिभ्यो न चाश्नाम्यन्नमुत्तमं प्रमादाद्य-
दि भुंजे यदपि क्षीरघृतान्वितं राज्ञो ततो नृभिर्घोरैस्ताड्यते मम विग्रहः प्रातर्भवति मे घोरा
महत्सगुल्याविसूचिका नच कश्चि[illegible]ममेत्र तिष्ठति बांधवः कथं कथमपि प्राणा मया

संप्रतियाचिताः एवमेतादृशःपापोनिवसाम्यतिनिर्घृणः सौवीरतिलपिण्याकशाकशाकादिभोज
नैः तर्पयामिकदन्नाद्यैःरात्मनःकालयापनं एवंतत्रसत्र्येमह्यं महान्कालोप्यगादयं
श्रवणद्वादशीनाममासिभाद्रपदेभवत् तत्रनागरिकोलोकोगतःस्नानंचसंगमे इरावत्या-
नद्वलायाश्चमन्दत्तत्पुरःसरः प्रातिवेशप्रसंगेनतत्रस्नातुंगतोह्यहं कृतोपवासःशुचिनाश्रका
दर्शायतव्रतः ततःसंगमतोयेनवारिधानीनवाहृता संपूर्णावस्त्रसंवीताछत्रोपानहसंयुता
मृत्पात्रमपिमृष्टस्यपूर्णदध्योदनस्यहि प्रदत्तंब्राह्मणेंद्रायशुचयेस्नातधर्मिणे तदेकंजीवता
दत्तंमयादानंवणिक्सुत वर्षाणांसप्ततीनांतुनान्यद्दत्तंहिकिंचन मृतःप्रेतत्वमापन्नोदत्ता
प्येतान्यमेद्विमे एतत्तेकारणंप्रोक्तंयद्दत्तंतुमयाभसा दत्तंतदिदमायातिमध्याह्नेपिदिनेदिने
यावच्चान्नेनभुंजेहंनतावत्तृप्यमेतिवै मयिभुक्तेचपीतेचसर्वमंतर्हितंभवेत् यच्चातपत्र
मदंसोयंजातःशमीतरु उपानद्युगलेदत्तेप्रेतोमेवाहनोभवत् यदेतन्नवोक्तंसर्वंहिम-
याज्ञानवतात्मना श्रवणद्वादशीपुण्यात्तवोक्तापुण्यवर्धिनी इत्येवमुक्तोवचनेवणिक्पुत्रो
भवेद्वचः यन्मयातवकर्तव्यंतदनुज्ञातुमर्हसि तत्तस्यवचनंश्रुत्वावणिक्पुत्रस्यनारद
प्रेतपालोवचःप्राहस्वार्थसिद्धिकरंततः यत्त्वयातातकर्तव्यंमद्धितार्थंमहामते कथ
यिष्यामितत्सम्यक्तनवश्रेयस्करंमम गयायांतीर्थजुष्टायांस्नात्वाशौचसमन्वितः ममनामस
मुद्दिश्यपिंडनिर्वापनंकुरु तत्रपिंडप्रदानेनप्रेतभावादहंसखे मुक्तःसर्वपितॄणांहियास्यामि
सहलोकतां याचेयंद्वादशीपुण्यामासिप्रौष्ठपदेसिता बुधश्रवणसंयुक्तासातेश्रेयस्करीस्मृता
इत्येवमुक्त्वानुवचः प्रेतराजोनुगैःसह स्वनामानियथान्यायंसम्यगाख्यातवान्शुचिः प्रेतस्क
धंसमारोप्ययातितोमरुधन्वकं रम्येचशूरसेनाख्येदेशेग्रामःसवैवणिक् स्वकर्मधर्मयोगेन-
धनमुच्चावचंबहु उपार्जयित्वाप्रययौगयातीर्थमनुत्तमं पिंडनिर्वपणंचक्रेतेषांप्येषांसगो
त्रिणां एवंप्रदत्तेष्वथवैपिंडेषुप्रेतभावतः विमुक्तास्तेद्विजप्रेताब्रह्मलोकंततोगताः सचापि
हिवणिक्पुत्रोनिजमालयमाव्रजत् श्रवणद्वादशीकृत्वाकालधर्ममुपेयिवान् गंधर्वलोकेसु-
चिरंभोगान्भुक्त्वासुदुर्लभान् मानुषंजन्मचासाद्यसवैशाकलेविराट् स्वकधर्मेहितःश्रव
णद्वादशीरतः कालधर्ममवाप्यासौगुह्यकावासमाप्तवान् तत्रोष्यसुचिरंकालंभोगान्भुक्त्वा
यकामतः मर्त्यलोकमथप्राप्यराजपुत्रतनयोभवत् तत्रापितत्रहृतिस्योदानधर्मरतोवशी
नोग्रहेरिगणान्जित्वाकालधर्ममुपेयिवान् शाक्रलोकंचदुष्प्रापंदेवैःसर्वैःसुपूजितं पुण्यक्षे-
यादिहागत्यशाकलेचाभवद्द्विजः ततोविकटरूपोसौसर्वशास्त्रार्थपारगः व्यवाहयद्द्विजसुतां
रूपेणानुपमांद्विजः सातुतंनिजभर्त्तारंसुशीलमपिभामिनी विरूपमितिमत्वानाततःसोभू
त्सुदुःखितः ततोनिर्वेदसंयुक्तोगत्वाश्रमपदंमहत् इरावत्यास्तटेधीमान्चक्रधारिणमासद
त् तमाराध्यजगन्नाथंनक्षत्रपुरुषेणहि नक्षत्रपुरुषव्रतेननित्यर्षिः ॥ सुरूपंतामवाप्या-
ग्रामस्मिन्नेवजन्मनि ततःप्रियाभद्रार्यायाभोगवानभवद्वशी श्रवणद्वादशीयुक्तः पूर्वा-
भ्यासादजायत एवंपुरासौद्विजपुंगवस्तुकुरूपरूपोभगवत्प्रसादात् अनंगरूपप्रति-
मोवभूवमृतश्चराजासपुरंदरोभवत् ॥ ॥ इतिश्रीवीरमित्रोदयेवामनपुरा
णोक्तश्रवणद्वादशीकथा ॥

अथभविष्योत्तरोक्ताश्रवणद्वादशीकथा ॥ ॥ श्रीकृष्णउवाच अत्राप्युदाहरंतीममिति
हासंपुरातनं मरुन्यरण्येयद्वृत्तंभूमिपालशृणुष्वतत् देशोदशार्णकोनामतस्यभागेतुपश्चिम

अतीवासीन्महद्देशः सर्वसत्वभयंकरः संततप्तसिकताभूमिर्यत्र क्रूरामहोरगाः अल्पच्छायाद्रुमाकी
र्णामृतप्राणिसमाकुला शमीखदिरपालाशसकरीरेश्चपीलुकैः तत्रभीमद्रुमाः पार्श्वकंटकैः सं
वृताहृष्टाः दुष्टप्राणिगणाकीर्णातत्रभूर्दृश्यतेक्वचित् अग्न्यर्कतापविषमानिस्तृणापुरुषोज्वलाः
ज्वलदग्निसमंचैवयत्किंचित्तत्रदृश्यते तथापिजीवाजीवंतिसर्वकर्मनिबंधनाः नोदकंसुदका
भाराजंस्तत्रवलाहकाः कदाचिदपिदृश्यंतेप्लवमाना विहंगमाः येकांतारगतैःकैश्चिच्छि
श्रुभिस्तृषितैः समं गच्छंतिजलपानाय संभ्रमात्सैकतेतटे सैकतेष्वेवनश्यंतिजलेसैकतसे
तुवत् तस्मिंस्तथाविधेदेशेकेश्चिद्दैववशाद्वणिक् निजसार्थपरिभ्रष्टःप्रविष्टोमरुजांगले व-
भ्रामभ्रांतहृदयःक्षुत्तृष्णाश्रमपीडितः क्वग्रामःक्वजनःकार्यंयास्यामिवह्नथेरितः अथप्रेतान्दद-
र्शासौतृष्णाव्याकुलितेंद्रियः स्नायुवद्धास्थिचरणांधावमानानितस्ततः उत्कचान्मलिनान्रूक्ष
न्निर्मांसान्भीमदर्शनान् प्रेतस्कंधसमारूढमेकंविकृतदर्शनं ददर्शवहुभिःप्रेतैःसमंता
त्परिवारितं आगच्छन्तृषितंभर्ज्जासस्तुतिशब्दपुरःसरं प्रेतस्कंधान्महीगत्वातस्यांतिकमुपा
गमत् सोभिवाद्यवणिक्श्रेष्टमिदंवचनमब्रवीत् अस्मिन्घोरतरेदेशप्रवेशोभवतःकथं
तमुवाचवणिक्श्रीमान्सार्थभ्रष्टयोगतः प्रवेशोदैवयोगेनकष्टकर्मकृतेनतु तृष्णामेवाध
तेत्यर्थंक्षुत्श्रमोप्यभृशंतथा प्राणाःकंठमनुप्राप्तावचनंनष्टयेवमे अत्रोपायंनपश्यामिजीवेयं-
येनकेनचित् ॥ क्रूसउवाच इत्येवमुक्तःप्रेतस्तंवणिजंवाक्यमब्रवीत् एवमुक्तोतथाचक्रेस-
येनकेनवित् ॥ क्रूसउवाच इत्येवमुक्तःप्रेतस्तंवणिजंवाक्यमब्रवीत् पुन्नागवृक्षान्शीतोवारिधानीमनोरमा
वणिक्तृष्णयार्दितः मध्याह्नमयेप्राप्तेततस्तंदेशमागताः पुन्नागवृक्षान्शीतोवारिधानीमनोरमा
दध्योदनस्यभक्तेनवर्धमानेनसंयुता अवतीर्यततःसाग्रेदथावतिष्ठयेत्ततः तेषामामंत्रने
नैवपरांतृप्तिमुपागतः वितृष्णोविज्वरश्चैवक्षणेनसमपद्यत ततःप्रेतसंघस्यतस्माद्भागाप्र
मादसौ दध्योदनान्सपानीयात्प्रेतास्तृप्तिंपरांगताः अतिथिंतर्पयित्वातुप्रेतलोकंचसर्वशः त
नःस्वयंचबुभुजेभुक्तशेषंयथासुखं तस्यभुक्तवतस्तत्रपानीयंचक्षयंययौ प्रेताधिपंततस्तु
ष्टोवणिग्वचनमब्रवीत् आश्चर्यमेतत्परमंवनेस्मिन्प्रतिभातिमे अन्नपानस्यसंप्राप्तिः परमस्य
कृतस्तव स्तोकेनचतथान्नेनविभर्षिसुवहून्पृथक् तृप्तिंगताःकथंत्वेतिनिर्मांसाभिन्नकुत्-
यः अपरंचकथंह्येतन्ममाश्चर्यकथंयतः कथमस्यामटव्यांत्वंघोरालंचकृतालयाः तदेतत्सं
शयंछिंधिवरंकौतूहलंमम एवमुक्तःसवणिजाप्रेतोवचनमब्रवीत् ॥ प्रेतउवाच ॥ शृणुभ
द्रपवक्ष्यामिदुःकृतंकर्मचात्मनः शाकलेनगरेरम्येअहमासंसुदुर्मतिः वणिगासंपुराका
लेततोभद्रंममानघ शाकलेनगरेतस्मिन्नास्तिक्यस्यदुरात्मनः धनलोभात्तदातत्रकदाचि
त्कामदेरिता नदत्ताभिक्षवेभिक्षान्तृष्णार्तेजलंकदा प्रतिवेश्यस्तुतत्रासीद्ब्राह्मणोगुणवा
न्मम श्रवणाद्वादशीयोगेमासिभाद्रपदेतथा सकदाचिन्मयासार्द्धंतौषीनामनदीययौ तस्या
स्तुसंगमःपुण्योयत्रासीच्चंद्रभागयाः चंद्रभागासोमसुतातौषीचैवार्कनंदिनी तयोःशीतोष्ण
सलिलेसंगमंसुमनोहरं तत्तीर्थवरमासाद्यप्रातिवेश्यस्तुमेद्विजः श्रवणद्वादशीयोगेस्ना
तश्चैवउपोषितः चंद्रभागस्यतोयस्यवारिधान्योनवादृढाः दध्योदनयुतैःसार्द्धंसंपूर्णैर्वद्धै
मानकैः छत्रोपानद्युगंवस्त्रंप्रतिमांविधिवद्धरेः प्रददौविप्रमुख्याय रहस्यज्ञोमहामतिः
विनसंरक्षणार्थायतस्यापिचततोभयात् सोपवासेनदत्तावैवारिधानीतदामया चांद्रभागस्य
तोयस्यदध्योदनयुतातदा पंचत्वमहमायातो कालेनकेनचित् ततःकालेनकेनचित् पंचत्वमहमायातो
नास्तिक्यात्प्रेततांगतः अस्यामटव्यांघोरायांयथादृष्टस्त्वयानघ ब्रह्मस्वहारिणस्त्वेतेपापाःप्रेतत्व

मागताः परदाररताः केचित्स्वामिद्रोहरताः परे मित्रद्रोहरताः केचित्पापकर्मरताश्चये मत्र्यै
मत्र्यैतेभृत्यतांयाताश्चन्नपानकृतेनघ अद्ययोभगवान्विष्णुः परमात्मासनातनः यद्दीयतेत-
मुद्दिश्यअद्ययंतत्रकीर्तितं मयाविहीनाः किंत्वेतेवनेस्मिन्भृशदारुणे पीडामनुभविष्यंति
दारुणांकर्मयोनिजं एतेषांतुमहाभागममानुग्रहकाम्यया अनेकनामगोत्राणिगृह्णीयास्त्व-
चिरेणच गयाशीर्षेततोगत्वाश्राद्धंकुरुमहामते एकमेकंसमुद्दिश्यप्रेतंप्रेतंयथाक्रमं अ-
स्तिकत्त्वागताचैवतत्रसंपुटिकाशुभा हिमवंतमथासाद्यतत्रत्वंलप्स्यसेनिधिं इत्याज्ञाप्य-
सचप्रेतोवणिजंतंयथासुखं विसर्जयामासतदासवैप्रायात्स्वमालयं समासाद्यगृहंतत्रम-
श्रात्वायाद्धिमालयं तत्रोपदिष्टंविधिवन्निधिंप्राप्यसमागतः सयष्टिंसंप्रतिष्ठाप्यगयाशीर्षंत-
तोगतः यत्नमागस्तथाद्दायगयाशीर्षेततोवटं प्रेतानांक्रमशस्तत्रचक्रेश्राद्धंदिनेदिने ततः
सप्रेतनाथोहितजांबूनदप्रभः समारुह्यविमानेसौस्वर्गलोकमितोगतः स्वर्गतेप्रेतनाथे
तुप्रभावात्सवणिक्ततः प्रेतानांक्रमशस्तत्रचक्रेश्राद्धादिसर्वतः यस्ययस्ययथाश्राद्धंकरोति
सदिनेवणिक् ससत्तदातदास्वमेदर्शयत्यात्मनस्तनुं ब्रवीतिचमहाभागप्रसादेनतवानघ
प्रेतभावमिमंत्यक्त्वाप्राप्तोस्मिपरमांगतिं सकृत्वाथनलोभेनप्रेतानांसद्गतिंवणिक् जगाम
स्वगृहंतत्रमासिभाद्रेयुधिष्ठिर चकारविधिवद्दानंततोधिष्ठांतमागतः अवापपरमंस्थानं
दुर्लभंसर्वमानुषैः यत्रकामफलावृत्ताः नद्यःपायसकर्दमाः शीतलामलपानीयाः पुष्करिण्य
मनोरमाः तंदेशमासाद्यवणिक्महात्मासन्हेमजांबूनदभूषितांगः कल्पंसमग्रंसुरसुंदरीभिः
स्वर्गेसुरेमेमुदितः सदैव बुधश्रवणसंयुक्ताद्वादशीसर्वकामदा दानंदध्योदनेपाप्तमुपवा
सः परोमतः सगरेणककुत्स्थेनधुंधुमारेणगाधिना एतैश्चान्यैश्चराजेंद्रकामदाद्वादशीकृ
ता याद्वादशीबुधयुताश्रवणेनसार्द्धं सावैजयंतिकथितामुनिभिर्नभस्ये तामादरेणसमु
पोष्यनरोहिसम्यक्प्राप्नोतिसिद्धिमणिमादिगुणोपपन्नाम् ॥ ॥

इतिभविष्योत्तरोक्तश्रवणद्वादशीव्रतकथा ॥ ॥

अथोद्यापनं उपोषितोनरोभक्त्यास्यायप्रतिमायहः कृत्वासौवर्णिकंदेयंवामनंतमथाव्ययं
गंधैः पुष्पैस्तथाधूपैर्नैवेद्यैर्विविधैरपि ततस्तस्यासमेपेतुदधिभक्तघटंन्यसेत् करकः पुरतः
स्याप्यागंधोदकसमन्वितः छत्रंचसाक्षसूत्रंचसुव्यष्टिंकुंडिकांतथा न्यासेत्तस्यसमेपेतुशुचिःशु
द्धेनचेतसा नैवेद्यैर्विविधैर्भक्ष्यैः सर्वतस्तंप्रपूजयेत् पुष्पमंडपिकांकृत्वाजागरंतत्रकारयेत्
गीतवाद्यैरवैश्चैवब्रह्मघोषविमिश्रितैः एवंजागरणंकृत्वाप्रभातेविमलेजले स्नानादिकंवि
धायाथहोमंकुर्यात्तिलैः सह पूजांचएवंवत्कृत्वावामनस्यसमीपतः दद्यात्तद्विप्रवर्य्यायवामनं
तिलमध्यगं वामनोबुद्धिदोदातावामनःस्वयं वामनोस्यप्रतिग्राहीतेनवामनतेनमः
वामनःप्रतिगृह्णातिवामनोवेददातिच वामनस्तारकोभाभ्यांतेनवामननेनमः ॥ इतिदा
नप्रतिग्रहमंत्रो ॥ ॥ अत्रप्रतिमायतइतिउपवासदिनेश्रवणद्वादशीव्रतांगत्वेनत
स्याःप्रतिमायाःपूजनंकृतं तदग्रेउपवासदिनएवोद्यापनांगत्वेनप्रतिमांतरस्थापनंरात्रौप्र
जांतरविधानमुच्यते उपोषितइतिचाशक्तिस्यापिदिवाहारवर्जनंरात्रिपूजात्वेनकथ्यतेद्र
ष्टव्यं एवंजागरणंकृत्वेतिश्लोके एवंकृतस्नानादिभिन्नवक्ष्यमाणहोमांगत्वेनस्नानवासःप
रिधानादिविधीयते उद्यापनांगत्वेनजागरणतुल्यतांदर्शयितुंतदपवामितिलैः सहेति पाय
सादानांचेतिशेषः पौरुषेणतुसूक्तेनपायसंहोमयेत्सुधीः पश्चात्तिलाज्यतांश्चैवपूर्णाहु-

त्यासमन्वितः दद्यात्तु द्विजवर्य्याय वामनं विमलं स्थितमिति शास्त्रं नरः संप्रथायात् ॥ ॥

अथ प्रयोगः भाद्रशुक्लद्वादश्यां संगमे स्नात्वा गृहमागत्य श्रवणद्वादशीप्रयुक्तं विष्णुपू-
जनं कृत्वा बुद्धश्रवणद्वादशीव्रतांत्वेनोद्यापनं करिष्ये इति संकल्प तदंगत्वेन गणेशपूज-
नाद्याचार्यवरणांतं कुर्य्यात् यथाविभवं तस्य पूजनं च अथाचार्योहं स्त्रीं वामनप्रतिमायाम
ग्नुत्तारणं कुर्य्यात् यथाविभवं तत्पूजनं च सायं संध्योत्तर एवं पूजितप्रतिमाग्रे पुष्पमंडपि
कायां सर्वतोभद्रादिमंडलस्थकलशोपरि वामनप्रतिमायां ॐ वामनाय नम इति मंत्रेण सह
स्रशीर्षेत्यादिमंत्रसहितेन षोडशोपचारैः संपूजयेत् तत्र नैवेद्यं बहुविधं प्रदर्शयेत् पूजां
ते देवदेवस्य पुरतः दधिघटगंधोदकपूर्णकरकछत्रादि च सादयेत् ततो नानावाद्यघो
षैश्चालनवेदघोषैश्च जागरणं कुर्य्यात् सर्वप्रहरेषु नानाविधभक्ष्यनैवेद्यसमर्पणं च कुर्य्यात्
ततः प्रातर्नित्यस्नानहोमौ विधाय पुनः स्नानं धौतवाससलिलकधारणे कृत्वोद्यापनांगहोमं
कल्पयेत् आचार्योयदन्नसंस्थितामिति सर्षपविकरणप्रोक्षणादि देशशुद्धिं विधाय होमांग
त्वेन स्थंडिलेऽग्निं प्रतिष्ठाप्येशानदेशे कलशे वरुणपूजनांतं ग्रहपूजनं च कृत्वाऽग्नेः पश्चिमे
देशे उपविश्य ग्रहोद्देशेनान्वाधानेऽर्कादिसमिच्चर्वाज्यानि संकीर्त्य पुरुषनारायणं षोडश
पायसाहुतिभिः षोडशतिलाज्याहुतिभिः शेषेण स्विष्टकृतमित्यादि अष्टपात्रासादनप्रणी
तानिधानांतेऽआज्यनिर्वापः ग्रहसमिद्पायसेन सह तिलैर्यवतंडुलैश्च आज्यपर्य्यग्निकरणं
संमार्जनांते पायसं मध्यावधिश्रित्याभिधार्य्योद्वास्याजं दक्षिणे आसाद्य ग्रहार्चनादि आज्यभागां
ते यथान्वाधानं प्रायश्चित्तांते वलिदानपूर्णाहुति ततः पूर्णपात्रानयनं संस्राजयपरिस्त
रणविसर्जनाग्न्यर्चना ततो वरुणकलशोदकेन यजमानाभिषेकः आचार्य्याय धेनुदानं त-
तो वामनस्य ग्रहाणां चोत्तरपूजांते ताः प्रतिमा आचार्य्यहस्ते प्रतिपाद्य दशावतारब्राह्मणभो
जनं संकल्पेश्वरार्पणं कुर्य्यादिति श्रवणद्वादशीव्रतं ॥ ॥

अथ वामनजयंतीव्रतकथा ॥ भविष्योत्तरे ॥ श्रीकृष्ण उवाच ॥ ॥ द्वादश्या-
स्तु विधिः प्रोक्तः श्रवणेन युधिष्ठिर सर्वपापप्रशमनः सर्वसौख्यप्रदायकः एकादशी यदा
सा स्यात् श्रवणेन समन्विता विजया सा तिथिः प्रोक्ता व्रतिनामभयप्रदा पुरा देवगणैः सर्वै
र्निजधामपरिच्युतैः प्रार्थितो भगवान् विष्णुरिंद्राग्न्यनिलसंयुतैः वलवानतितो विष्णुर्वलि
र्नाम महावलः तेन देवगणाः सर्वे पातिता निजमंदिरात् त्वं गतिः सर्वदेवानां शीघ्रं कष्टं त्वमु
द्धर जहि दैत्यं महावाहो वलिं वलवत्तां वर श्रुत्वा विष्णुस्तदा वाक्यं देवानां करुणोदयं उवा-
च वाक्यं वाक्यज्ञो देवानां हितकाम्यया जाने विरोचनसुतं वलिं त्रैलोक्यशंकितं तपसा भा
वितात्मानं शांतं दांतं जितेंद्रियं मद्भक्तं मद्गतप्राणं सत्यसंधं महावलं स पूजयति मां भक्त्या
प्रजानामप्रियकारकः न गुणास्तस्य शक्यं ते वक्तुं केनापि भूतले अवध्यस्तपसोपेतैर्भोक्ष्यंतपसः
फलं तपसस्तस्य वहुना कालेनांतो भविष्यति यदा विनष्टपि संज्ञास्यात्कालेन केन चित्कृता समा
हृत्य प्रियं तस्मात्तदादास्ये दिवौकसां अदितिर्मे प्रयत्नाद्वै पुत्रार्थी पुत्रगृध्निनी तस्या मनीषितं दे-
वकार्य्यं विश्वरचिंतयत् सचिंतयित्वा सुचिरं देव्या गर्भावधारणं अथितिं वरयामास वांछितं ते
भविष्यति अथ काले वहुगते गर्भिणी साभवत्तदा सुषुवे नवमे मासि पुत्रं सा वामनं हरिं ह्रस्व
पादं ह्रस्वकायं महाशिरसमर्थं पाणिपादोदरं कृशांगं ह्रस्वजंघोरुकेसरं दृष्ट्वा तु वामनं आनम
दितिर्मोददायकं भयं वभूव दैत्यानां देवतास्तोषमागमन् जातकादीन् शुभकरान्संस्कारान्स्वयमे

वहि चकारकश्यपोथीमान्नजापतिसमन्वितः आवद्धमेखलो दंडी जटी यज्ञोपवीतवान् कृष्ण-
चर्माजिनधरः कमंडलुविभूषितः वलेर्वलवतो यज्ञं जगाम बद्धविस्तरं दृष्ट्वा दैत्यवलं सर्वं वा-
मनो भेत तत्क्षणं अर्थनार्हं यत्त्वपते देयं तां मम मेदिनी पदत्रयप्रमाणेन याचनार्थी स्थितोस्म्य-
हं दत्ता दत्तान वत तथा वलिः प्राह द्विजोत्तमं ततो वर्द्धितुमारेभे वामनोनंतविक्रमः पादौ ध्व-
मौ प्रतिष्ठाप्य शिरसा व्याप्तरोदसी तं दृष्ट्वा महदाश्चर्यं सिद्धा देवर्षयस्तथा साधु साध्विति दे-
वेशं प्रशशंसुर्मुदान्विताः ततो दैत्यगणान् सर्वान् जित्वा त्रिभुवनं वशी वलीं प्राह च भोगाढ्यं-
पातालं सबलानुगः तत्र त्वमीप्सितान् भोगान् भुंक्ष्व महाबाहुपालितः अस्यैंद्रस्यावसाने तु त्वमे-
वेंद्रो भविष्यसि एवमुक्तो वलिः शायान्नमस्कृत्य नरोत्तमं विसृज्य च वलिं देवो लोकपालानुवा-
चह स्वानि धिष्ण्यानि लोके शागच्छध्वं विगतज्वराः देवेनोक्ता गता देवाः प्रहृष्टाः पूज्य वामनं देवः कृ-
त्वा जगत्कार्यं तत्रैवांतरधीयत एतत्सर्वं समभवदेकादश्यां नराधिप तेनेष्टा देवदेवस्य सर्व-
या विजया तिथिः एवं च फाल्गुने मासि पुष्येण सहिता नृप विजया प्रोच्यते सद्भिः कोटिकोटि-
गुणा तदा एकादश्यां सोपवासो रात्रौ संपूजयेद्धरिं रौप्ये सौवर्णपात्रे वा दारुवंशमयेपि वा सौ-
वर्णं वामनं कुर्यात्स्ववित्तस्यानुसारतः शिखीकमंडलुधरः छत्री यज्ञोपवीतवान् एवंल-
क्षणसंपन्नं वामनं पूजयेद्धरिं आच्छाद्य पात्रं वासोभिरहतैः फलसंयुतैः नार्गेण चर्मणा नद्धं
भक्त्या वा शक्त्यपेक्षया तिलोदकेन संपूर्णं प्रस्थेन कुडवेन च अलाभे यवगोधूमैः फलैः शुक्ल-
तिलैर्नवैः पुष्पैर्गंधैः फलैर्धूपैः कालोत्थैरर्चयेद्धरिं नानाविधैश्च नैवेद्यैर्भक्ष्यैर्भोज्यैर्गुडौदनैः स्व-
स्ववित्तानुसारेण सहिरण्यं च कारयेत् एभिर्मंत्रपदैस्तत्र पूजयेद्गरुडध्वजं उपहारैर्नृपश्रेष्ठ
विभूत्यासमाहितः ॥ ॥ अथाग्नेयभविष्योत्तरोक्तो वामनजयंत्याप्रयोगः ॥

तत्रादौ भाद्रशुक्लद्वादश्यां नदीसंगमादितीर्थं गत्वा ॥ वरोवरेण्यो वरदो वराहो
धरणीधरः अपवित्रं पवित्रं मां करोतु भगवान् हरिरिति मंत्रेण तिलकल्कादिविलेपनपूर्वकं
स्नात्वा संध्यापूजादिनित्यविधिं समाप्य संकल्पं कुर्यात् ॥ ॥ ओमद्येत्यादिदेशकालौ संकीर्त्या-
त्मनोऽखिलपापक्षयपूर्वकपैशाच्यादिदुर्गतिनिवारणद्वारा विष्णुप्रीत्यर्थं पुत्रपौत्रादिपरिवा-
रसहितचिरंजीवत्वसुखसौभाग्यादिसदभीष्टसिद्ध्यर्थं वामनजयंतीव्रतोद्यापनांगभूतवाम-
नपूजाविधानं करिष्ये आचार्यवरणादिपूजांतं तु समाप्य मंडपांतर्वेदिकायां पीठादौ देवताः पू-
जयेत् आधारशक्तयेनमः विमलायैनमः उत्कर्षिण्यैनमः ज्ञानायनमः क्रियायैनमः प्रह्वा-
यैनमः सत्यायैनमः मेधायैनमः मध्ये परदेवतायैनमः परितो वाह्ये इंद्रादिलोकपालेभ्यः
सायुधेभ्यः सपरिवारेभ्योनमः पूर्वादिदिक्षु गणपतिं दुर्गां क्षेत्रपालं वास्तोष्पतिमभ्यर्च्य
सर्वतोभद्रं प्रसार्य तत्र ब्रह्मादिदेवता आवाह्य संपूज्य तदुपरि कृष्णाजिनं वा प्रसार्य तत्र द्रो-
णपरिमितं तिलपर्वतं अलाभे यवगोधूमान् उपरि तिलपूरितं पात्रं सकलशं संस्थाप्य तत्र
द्वादशाक्षरमंत्रे हैमीं वामनप्रतिमां स्थापयेत् तत्र मंत्रः त्रीणि पदानि विचक्रमे विष्णुर्गोपा अदा-
भ्यः अतो धर्माणि धारयन् इति संस्थाप्य पूजयेत् ॥ ॥ ॥ अथ ध्यानम्
ध्यात्वा जलमयं देहं देवदेवस्य चक्रिणः ब्रह्मांडमुदरे यस्य महद्भूतैरधिष्ठितं मायावी वामनः
श्रीमान् समापाद्या जगत्पतिः शिखीकमंडलुधरः छत्री यज्ञोपवीतवान् एवंलक्षणसंपन्नं वामनं
पूजयेद्धरिं सहस्रशीर्षेति आवाहनम् आगच्छ देवदेवेश तेजोराशे जगत्पते क्रियमाणां मया
पूजां गृहाण सुरसत्तम १ पुरुष एवेदमासनं नानारत्नसमाकीर्णं कार्तस्वरविभूषितं आस-

माणिक्याजदोमः विलोः कर्माणिपश्यतयतोव्रतानिपस्पशेइंद्रस्ययुजः सखास्वाहा १-८ ततोहोम
शेषं समाप्य द्वादशविप्रान् वस्त्रादिनासंपूज्य दध्यन्नमुपवीतगोपीचंदनपूगीफलदक्षिणायुता
न्करकान्तेभ्योदद्यात् तत्रमंत्रः वामनः प्रतिगृह्णातीतिमंत्रपाठः ततः एक सुगंधिजलपू
र्णं दधिभक्तयुतं द्विजकरकं तेप्रयच्छामिवामनः प्रीयतामिति वामनः प्रतिगृह्णातीतिपठि
त्वा आचार्यायदद्यात् सोपस्करं शय्यां गांचव्रतपूर्तये आचार्यायदत्वापूर्णाहुतिंविधाय ईशा
नकलशोदकेनाभिषेकंविधाय अन्यानपिभूरिदक्षिणादिभिः परितोष्यआशिषांगृह्णीयात्
श्रीकृष्णउवाच एवंदत्वाततःपश्चाद्भोजनंएषदाज्यकं पूर्वंदद्याद्ब्राह्मणेभ्यः पश्चाद्भुंजीतवा
ग्यतः यथोपदिष्टयाराजन्सर्वज्ञैषविधिःस्मृतः एवंकृतेव्रतेराजन्यःपुण्यंतच्छृणुष्वमे।
यावत्कल्पसहस्राणितावद्वर्षाणिसंख्यया प्राप्यविष्णुपुरेभोगान्भुक्त्वातेकल्पसंक्षये। इहागत्य
भवेद्राजाराजभिश्चापिसेवितः हस्त्यश्वरथयानानिदासीदासाभिसंवृतः विमलश्री रूपसौभाग्यसंपन्नो
दीर्घायुर्नीतिसंयुतः पुत्रपौत्रैः परिवृतोजीवेत्सशरदांशतं एषाबुद्धिर्मयाख्याताद्वादश्यास्ते
युधिष्ठिरः एवमेवसमाख्याताद्वादशीश्रवणान्विता उपोष्यैकादशींपश्चाद्द्वादशीमप्युपोषयेत्
नचात्रविधिलोपःस्यादुभयोर्देवताहरिः बुधश्रवणसंयुक्ताद्वादशीसंगमोदकं दानंदध्योदनं
सम्यगुपवासोर्चनंहरेः सगरेणककुत्स्थेनधुंधुमारेणगाधिना एतैश्चान्यैश्चराजेंद्रकृतो-
यंद्वादशीविधिः इतिभविष्योत्तरेपुराणेसाद्यापनंवामनजयंतीव्रतम्॥

अथास्यामेवभाद्रशुक्लद्वादश्यामवियोगद्वादशीव्रतंभविष्योत्तरे युधिष्ठिरउवाच
अवियोगव्रतंब्रूहिमह्यंदेवकिनंदन विधानंकीदृशंचास्यकिंपुण्यंकात्रदेवता श्रीकृष्णउवाच
शृणुपांडवयत्नेनकथ्यमानंमयाखिलं अवियोगव्रतंनामव्रतानामुत्तमोत्तमं प्रोष्ठपादेसितेपक्षे
द्वादश्यांप्रातरुत्थितः समुचिःशुक्लाभरणःस्नात्वाएवंजलाशये हृदयेस्थविलिप्तेच विलि[illegible]मंडले
हरिं गोधूमचूर्णपिष्टैर्लक्ष्मीमनुपार्श्ववर्तिनीं तत्रैवहरंगौरीसहितंसावित्र्याब्रह्मणसहितंराज्ञी
सहितंचरविंत्रैलोक्यस्यकर्तारं गंधैःपुष्पैर्धूपैर्नैवेद्यैरर्चयेद्यथाशक्त्या अवियोगव्रतचारी
मंत्रेणानेनराजेंद्रनारीवापुरुषोवा अवियोगव्रतंदृष्टंकृत्वा भ[illegible]
वान् सहस्रमूर्धापुरुषः पद्मनाभोजनार्दनः व्यासर्षिकपिलाचार्योभगवान्पुरुषोत्तमः नारा
यणोमधुलिहाविष्णुर्दामोदरोहरिः महावराहोगोविंदः केशवोगरुडध्वजः श्रीवत्सः पुंडरी
काक्षोविश्वरूपस्त्रिविक्रमः उपेंद्रोवामनोरामोवैकुंठोमाधवोविभुः वासुदेवोहृषीकेशः कृ
ष्णः संकर्षणोच्युतः अनिरुद्धोमहायोगीप्रद्युम्नोनंतएवच नित्यंममास्तुसुप्रीतःसमुतःकै
टभसूदनः उमापतिर्नीलकंठः स्थाणुःशंभुर्भगाक्षिहा ईशोस्तुसहपार्वत्याशंकरःशंकरप्रियः
त्र्यक्षःशंभुःप्रभुर्ब्रह्मापुष्कराक्षःपितामहः हिरण्यगर्भोवेदज्ञः परमेष्ठीप्रजापतिः वेधाचतु
र्मुखः कर्तास्वयंभूःकमलासनः विरिंचिपद्मयोनिश्चममास्तुवरदः सदा आदित्योभास्करोभानु
सूर्योर्कःसवितारकः मार्तंडोमंडलीज्योतिरश्मिरश्मिर्महेश्वरः प्रभाकरः सुसंतुष्टिस्तरणिः
सरणिःखगः दिवाकरोदिनकरः सहस्रांशुर्मरीचिवान् पद्मप्रबोधनःपूषाकिरणीमहत्प्रभु
णः दिवाभावल्लभोदेवः सप्रीतोस्तुसदामम लक्ष्मीःश्रीपद्महस्ताचचंचला कमलालया
सदाभवतुसुप्रीताममसाहरिवल्लभा उमागौरीमृडानीचगिरिजामेनकात्मजा सदाभवतुमे
प्रीतापार्वतीहरवल्लभा सावित्रीभारतीवाणीवीणापुस्तकसंयुता सासदामेप्रसन्नास्याद्वे
विधियुक्तासरस्वती प्रभाकरयुतानित्यंछायाभाद्योतकारिणी प्रीताभवतुमेसंज्ञादिवुभाभा

स्करप्रिया इतिपद्मनाभशंकरपितामहार्कास्त्रियासहितान् एवंकृत्वाद्रतादानंव्रजेद्देश्म यश्चरतिनरः कश्चिद्व्रतमेतद्भक्तिभावितोलोके भवतिपरोधनभागीसंततिमान् विगतसंतापः हरिहरहिरण्यगर्भप्रभाकराणांक्रमेणलोकेषु भुक्त्वाभोगान्विपुलानथयोगीनिर्वृतोभवति स्त्रीषुंसोर्यदियुग्मंपुरुषोवायदिसमाचरतिकश्चित् नारीवाव्रतमेतत्कृत्वायात्यालयंविष्णोः इतिभविष्योत्तरेहरिहरहिरण्यगर्भप्रभाकराणामवियोगव्रताध्यायः ॥ ॥

अस्यामेवभाद्रशुक्लद्वादश्यांदुग्धत्यागव्रतारंभः कार्यः॥ तदुक्तं दुग्धंमाद्रयुजेमासीति दुग्धव्रतंपापसादिवर्जं दधिघृतादयस्तुग्राह्याएव नन्वेवंसंधिन्यनिर्दशावत्सागोः पयः परिवर्जयेदिति संधिन्यादिक्षीरनिषेधेपिदध्यादियाल्लंस्यादितिकेचित् तच्चवाचिकनिषेधत्वात्तदाह अपरार्केशंखः क्षीराणियान्यभक्ष्याणितद्विकाराशनंबुधः सप्तरात्रंव्रतंकुर्यात्प्रयत्नेनसमाहितइति व्रतंचात्रगोमूत्रयावकमितिनिर्णयसिंधौदीपितीयेच ॥

इतिभाद्रशुक्लद्वादशीकृत्यानि ॥ ॥ अथभाद्रशुक्लत्रयोदश्यांगोत्रिरात्रव्रतं नारदीये भाद्रशुक्लत्रयोदश्यांगोत्रिरात्रव्रतंस्मृतं लक्ष्मीनारायणंकृत्वास्नौवर्णंवापिराजतं पंचामृतेनसंस्नाप्यमंडलेष्टदलेशुभे तटेविन्यस्यवस्त्राद्यैर्गंधाद्यैःपरिपूजयेत् आरार्तिकंततःकृत्वादद्यात्सान्वोदकंघटं एवंदिनत्रयंकृत्वाव्रतीतेगांसमर्प्यच सम्यगर्ध्यंचसंपाद्यदद्यान्मंत्रेणनारद पंचगावःसमुत्पन्नामथ्यमानेमहोदधौ तासांमध्येचयानंदातस्यैधेन्वैनमोनमः प्रदक्षिणीकृत्यततोदद्यात्विप्रायमंत्रतः गावोममाग्रतःसंतुगावोमेसंतुपृष्ठतः गावोमेपार्श्वतःसंतुगवांमध्येवसाम्यहं ततश्च द्विजदंपतयःसम्यगभ्यर्च्यभोजयेत् लक्ष्मीनारायणंनस्मैनमस्कृत्यप्रदापयेत् अश्वमेधसहस्राणिराजसूयशतानिच तद्वायत्फलमाप्नोतिगोत्रिरात्रव्रतान्नरः इतिभविष्योत्तरोक्तं गोत्रिरात्रव्रतं ॥ ॥ युधिष्ठिरउवाच भगवंस्त्वत्प्रसादेनबहूनिवतानि कृतानिमे श्रुतानिवहुपुण्यानिकृतानिमधुसूदन सर्वपापहराणिस्तु सर्वकामप्रदानिच नतुतंश्रोतुमिच्छामिव्रतानांव्रतमुत्तमं किंचियोगव्रतंभूरियदितुष्टोसिमाधव यत्कृत्वासर्वपापेभ्योनरोनारीविमुच्यते श्रीकृष्णउवाच कथयामिनृपश्रेष्ठव्रतानामुत्तमंव्रतं कथयामिनृपश्रेष्ठ तच्छृणुष्वनृपोत्तम यान्यांकामान्स्ववांछेलिलभंतेतांस्तथैवच तत्क्षणादेवमुच्यंतेनराःपापेभ्यः सर्वशः विलोभगवतोराजन्कामधेनोःप्रसादतः सौभाग्यंसंततिंलक्ष्मींप्राप्नोतिमनुजोत्तमः युधिष्ठिरउवाच यदितुष्टोसिभगवन्व्रतस्यास्यविधिंशुभं ब्रूहिमेयदुशार्दूलकरोमित्वत्प्रसादतः केमंत्राःकेनमस्काराःदेवानार्घ्यंचकीर्तिताः किंदानमर्चनंतत्रकथयस्वसुरोत्तम कृष्णउवाच शृणुपार्थव्रतोत्तमं मासिभाद्रपदेशुक्लेनारदेनपुराराजन्यदुक्तंसगरादिषु स्मारितंतत्त्वयाराजंस्तच्छृणुष्वव्रतोत्तमं मासिभाद्रपदेशुक्ले त्रयोदश्यांसमारभेत् त्रयोदश्यांप्रभातेतुसमुत्थायशुचिर्भवेत् गृहीयान्नियमंपूर्वंदंतधावनपूर्वकं आचम्योदकमादायइमंमंत्रमुदीरयेत् गोत्रिरात्रव्रतस्यास्योपवासंकरोमिम शरणंभव मेनित्यंनमस्तेधेनुरूपिणि प्रसीदतुमहादेवोलक्ष्मीनारायणःप्रभुः लक्ष्मीनारायणंदेवंसौवर्णंवास्वशक्तितः पंचामृतेनगव्येनस्नापयेत्कमलापतिं स्थापयेत्सर्वतोभद्रेमंडलेष्टदलेपिवा गंधपुष्पैश्चनैवेद्यैःस्तुतिगीतादिनर्तनैः नारिकेलार्घ्यदानेनश्रीणयेद्वादरिंतथा लक्ष्मीकांतनमस्तुभ्यंनैवेद्यं गृहाणार्घ्यंनमोस्तुते आरार्तिकंततःकुर्याद्भक्त्यागन्नाथगोत्रिरात्रव्रतंमम परिपूर्णंकुरुष्वेमं गृहाणार्घ्यंनमोस्तु कृत्वादिनत्रयंपार्थप्रीतयेविनिवेदयेत् कृष्णस्यतुष्टिदं नवकुंभंजलभृतं दद्याद्विप्रायनेनएरितं कृत्वादिनत्रयंपार्थप्रीतयेविनिवेदयेत् पंचगव्यंततःकृत्वाजलधाराप्रदक्षिणं पुरादत्वातुमुक्तदंकुंडसेकंक्रमेणतथा अन्नगोदानगंधादि

दिव्यपुष्पैः सुदीपकैः अहोरात्रं भवेत्किंचिद्भुक्तदीपं दिनत्रयं अर्घ्यदानं ततः कुर्यान्नारिकेला-
दिभिः फलैः मंत्रो यथा पंच गावः समुत्पन्ना मथ्यमाने महोदधौ तासां मध्ये तु या नंदा तस्यै धेन्वै नमो
नमः प्रदक्षिणीकृता येन धेनुर्वर्ष्या तु पांडव प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा गावो ममाग्रतः
संतु गावो मे संतु पृष्ठतः गावो मे पार्श्वतः संतु गवां मध्ये वसाम्यहं आरार्तिकं सनैवेद्यं गीतवाद्यं महो-
त्सवः कुंकुमं कलशं सूत्रं धेन्वै दद्याद्विचक्षणः एवं संपूज्य तां धेनुं सम्यग्भक्त्या दिनत्रयं यवांश्च
यवसं चैव चारयेत्पाययेदथ गोमयाद्यागतैर्यौ तैः कुर्यात्तैरेव पारणां धेन्वै प्रजागरं कुर्यात्सर्व-
पापप्रणाशनं त्रिविधान्मुच्यते पापात्प्रहत्यादीन पांडव तस्योत्तरकृतात्पापान्महारेण विमुच्यते
चत्वारि वेणुपात्राणि कारयित्वा प्रपूजयेत् नारिकेलाम्रकदलीद्राक्षाखर्जूरदाडिमैः शुभैर्वि-
रूढैः सिंदूरैर्वस्त्रैः कुंकुमकज्जलैः प्रथमे बीजपूरांश्च द्वितीये दाडिमं शुभं तृतीये नारिकेलेन
दद्यादर्घ्यं दिनत्रयं करकास्तु त्रयः कार्या हविष्यान्नेन पूरिताः लक्ष्मीनारायणं देवं ब्राह्म-
णं भार्यया सह पूजयेत्कुसुमैर्वस्त्रैर्हेमरत्नैर्युधिष्ठिर दंपत्योर्भोजनं देयं धेनुभक्त्या दिनत्रय
पारणे पौर्णिमीं विप्रान्तिष्टान्बंधूंश्च भोजयेत् गुरवे पायनं धेनुं द्विजाय प्रतिपादयेत् सकुंकु-
मां सवत्सां च घंटाभूकुटभूषितां गीतवादित्रनृत्यादिस्तुतिपाठपुरस्सरं यायादि प्रवरं यावत्स-
पयेत्तत एव च एवं यः कुरुते नारी त्रिरात्रव्रतमुत्तमं भवांतरकृतात्पापात्त्रिविधान्मुच्यते नर
...द्भवति पश्येत भर्तुः सुखं नराधिप पुत्रपौत्रसुखं तस्याः भविष्यति न संशयः जन्मांतरे
प्यसौ नारी वैधव्यं नैव पश्यति वैधव्यं तु नरः दुःखं न भवेत्तु भवांतरे अपुत्रो लभते पुत्रान्धनही-
नो धनं लभेत् कायेन मनसा चैव कर्मणा यदुपार्जितं तत्सर्वं पातकं याति गोत्रिरात्रव्रते कृते
इह भोगान्सविपुलान्भुक्त्वायुः पूर्णमेव च व्रतस्यास्य प्रभावेन स्वर्गलोके महीयते कीर्तिदं धन-
दं चैव सौभाग्यकरणं नृप आयुरारोग्यकरणं सर्वपापप्रणाशनं एतस्मात्कारणाद्राजन्सभा-
र्यस्त्वं कुरु व्रतं यदि राज्यं परां कीर्तिं निर्विघ्नं प्राप्तुमिच्छसि ॥ ॥ अथ गर्गाचार्यप्रोक्तं गोत्रिरात्रव्र-
तं युधिष्ठिर उवाच येनापि सकला लक्ष्मीर्नराणां भवने भवेत् संततिर्वर्द्धते स्त्रीणां तद्व्रतं व-
द मे प्रभो कृष्ण उवाच शृणु राजन्प्रवक्ष्यामि व्रतानामुत्तमं व्रतं येनैव क्रियमाणेन सर्वपापक्ष-
यो भवेत् गोत्रिरात्रमिति ख्यातं स्त्रीणां फलदायकं वांछितं जायते तेषां येषां चेतसि वर्त-
ते युधिष्ठिर उवाच कीदृशं तद्व्रतं देव विधानं तत्र कीदृशं कथमेव समुत्पन्नं कस्मिन्काले तु
केशव ॥ कृष्ण उवाच पुरा कृतयुगे पार्थ मनुर्नाम बभूव ह वैवस्वतकुले जातो बभूव पृ-
थिवीपतिः द्वितीय इति विख्यातो साक्षान्मनुरिवापरः नृपाः सर्वे वशं जाता बभूवुः वरदायकाः
नित्यं धर्मपरो राजा पूजनीयो मनीषिणां न जायते तु संतानं तस्यैवं वर्तते सुतः वांछता संतति-
तेन रम्यां मंत्रिषु कोशलां सपुत्रार्थं सपत्नीको वसिष्ठस्याश्रमं ययौ वाहाद्भिः पथि कल्याणं सार-
स्तोरणीकृतं विविधानि च वृक्षाणि मार्गेषु फलितानि च स राजा महिषी साईं रथारूढः सुवाहनः
संध्यायां योगिनस्तस्य महर्षेराप पदाश्रमं सारथिं च समादृश्य वाजीन् विश्रामयेत्यथ रथादुत्ती-
र्य दंपत्याश्रमं तु गतं मुनेः एवं कर्माणि संध्यायां दिलीपो ददृशे गुरुं अरुंधत्या समासीनं सावित्र्या-
वपितामहं तौ प्रणम्य गुरुं तत्र मुनिपत्नीं विशांपतिः स्थितौ तस्य समीपे तु प्रीत्यानंदितौ तयोः
दिलीपं च नरश्रेष्ठं स्वधर्मज्ञं लोकपालकं पप्रच्छ कुशलं राज्ये वसुधायां शुभं मुनिः दिलीप उवाच
कुशलं नः सदा देव स्थिते त्वयि गुरौ सति सुराणां च मनुष्याणां विपद्भ्यो रक्षिता भवान् विषये मम
कांता वाम पत्नी किं न जायते तत्तत्कार्यं ... तरो मम तथा कुरु मुने श्रेष्ठ

भवति मे यथा राज्ञाधिपतिसंप्राप्तौ त्वदायत्तं सुखं मुने वेदेति कथितं राज्ञा मुनये वै युधिष्ठि
र तथा मुनिः क्षणं तस्थौ ध्यानस्तिमितलोचनः कारणं संततेराज्ञो मुनिर्दृष्ट्वा समाधिना प
श्चान्निवेदितं तस्मै दिलीपाय प्रयत्नतः॥ वसिष्ठ उवाच पुरा वृत्रारिमाराध्य वसुधां गच्छतस्तव
बभूव कल्पद्रुमस्याधः कामधेनुर्न वंदिता ज्ञातस्तस्यास्तदा कोपो दत्तस्ते शाप ईदृशः न वंदिता
हं भवता साम्प्रतं यदि भूपते भविष्यति न ते पुत्रस्तच्छापो न श्रुतस्त्वया न एज येत्वयः पूज्यो
वंद्यान्नैव वंदते न जायते तु कल्याणं पातकैरनुलिप्यते दिलीप उवाच कृतो मयापराधोयं
किं करोमि महामुने संततिर्जायते येन तद्व्रतं वद मे प्रभो वसिष्ठ उवाच अन्यैर्नानाविधैः पु
ण्यैस्तपोभिर्नृप दुःसहैः न जायते तु संतानं गोत्रिरात्रव्रतं विना सपत्नीकः सवत्सां मे धेनुरा
जन्मफलप्रदां आराधयैकाग्रमना गोत्रिरात्रव्रतं कुरु यावदित्थं दिलीपस्य मुनिना कथितं व्रतं
तावच्च नंदिनी धेनुर्वनादावर्त्तते शुभा कुंडोध्नी तिलकं सितं सुकपिला ढ्यांशुचिर्बिभ्रती देवा
नां वरदा शुभोदधिभवा कामप्रदा पाटला गीर्वाणाः सकलाः श्रुतौ वपुषि वै तिष्ठंति यस्यास्तने
संपूर्णापापिनः संपूर्णपापिनः कलां च दधती श्रेयस्करी पूर्णिमा भाद्रे मासि समागतं शुक्ल
पक्षे तु पार्थिव प्रातः स्नात्वा त्रयोदश्यां नियमं तु समाचरेत् समुपोष्य गोत्रिरात्रं भक्तिं कृत्वा
ततस्तव भोत्स्येहनि चतुर्थेहं सौभाग्यं देहि गोर्मम इति नियममंत्रः ततो गाश्च समभ्यर्च्य मं
डले गंधदीपकैः नगरैः शतपत्रैश्च चंपकाद्यैः शुभाननाः गावो ममाग्रतः संतु गावो मे संतु पृष्ठ
तः गावो मे पार्श्वयोः संतु गवां मध्ये वसाम्यहं पंचगावः समुत्पन्ना मथ्यमाने महोदधौ तासां
मध्ये तु या नंदा तस्यै धेन्वै नमो नमः इति पूजामंत्रः फलैर्नानाविधैः पुष्पैर्गंधैरपि स्वशक्ति
तः पूजनीया प्रयत्नेन दद्यादर्घ्यं विधानतः नालिकेरं च कूष्मांडं मातुलिंगं च दाडिमं समिश्रि
तं च नैवेद्यं कारयेद्यवसंयुतं गोत्रिरात्रव्रतार्थाय फलमर्घ्यं करे धृतं सर्वकामप्रदे देवि श
रणार्थिन्नमोस्तु ते इत्यर्घ्यमंत्रः वस्त्रयुग्मं विधानेन दद्याद्वासांसि दक्षिणां सपत्नीकाय गु
रवे स्वशक्त्या च व्रती नरः दिनानि व्रतिभिस्त्रीणि श्रोतव्या च कथा शुभा जितक्रोधैस्ततः सर्वैः
स्त्रीभिर्वा पुरुषैरपि एवं संपूज्य विधिवल्लक्ष्मीयुक्तं तु केशवं चतुर्थे दिवसे प्राप्ते ततो धेनुं-
विसर्जयेत् अथ धेनुं सवत्सां च मंत्रेणानेन पार्थिव दद्याद्विप्राय विदुषे धर्मज्ञे शास्त्रपारगे प
रिपूर्णं व्रतं कृत्वा दत्ता कामानभीप्सितान् विप्राय त्वं मया दत्ता मातर्गच्छ यथासुखं इति दानमंत्रः॥
सर्वदानानि देयानि स्वशक्त्या व्रतिभिर्नरैः विविधैर्भोज्यैर्द्विजेभ्यश्च दक्षिणां च स्वशक्तितः वित्तशा
ठ्यं न कुर्वीत दापयेच्च ततो नरः गृहे यावद्व्रजे तिष्ठेद्गीतवाद्यपुरस्सरं गोपालानां च पाथेयं
व्रजापतिकरं परं यवाये चारितानि तस्य फलैर्नानाविधैः सह भुक्त्वा ये कामधेन्वा च संयुक्ता गोमये
न च पारणं तैः प्रकर्तव्यं सर्वैरिष्टजनैः सह सपत्नीकाय गुरवे दत्वा चान्नं सदक्षिणं कुलद्वा
पवमाराध्य तां धेनुं राजा वै भक्तितत्परः ततः प्रजानामधिपः प्रभाते सुरभिं मुनेः भाद्रे मासि
सिते पक्षे त्रयोदश्यां युधिष्ठिर पूजां कृत्वा विधानेन समोचयत्वारितं सुधिः संध्यायाप्रभृति स्थि
त्वाश्रायये पुनराश्रमं अर्च्यस्तु दक्षिणां कर्तुं नीता च विपिनं हरिं ययौ धेनोः समीपे तु चलिंद
त्वा दिनत्रयं अनुयातस्ततो धेन्वास्तृतीये दिवसे पुनः जगतीगोप्तुरथ सामिवाद्यपि पयोधरा
लताभिश्च ततो राजा पुष्पैर्वर्धापितस्तदा जयशब्दं च भाषंते पक्षिणः सुंदरस्वनाः गीतैश्च
वनदेवीभिः गायमानं यशः स्वकं शुश्राव च ततो राजा भूयां मनसि हर्षितः तद्दिने वै मुनेर्धेनुं
रात्रौ भावं परीक्षितुं विवेश गह्वरं तत्र पार्वत्याश्च पितुर्गुहां कृत्रिमश्च ततः सिंहो मुनेर्धेन्वा भयंकरः

सिंहश्च ददृशे राज्ञा धेनुं कर्षन्बलेन वै दृष्ट्वा राज्ञा तदा धेनुः क्रंदमाना स्वरोल्बणैः ततो धनु
र्धरः सोपि तं मोक्तुमुपचक्रमे तूणात्सिंहवधार्थाय राजा बाणं समाददे उत्पन्नस्तु तदा सोथ
क्रोपयुक्तो बभूव सः धनुष्यारोपयन्बाणं चित्रन्यस्त इव स्थितः हस्तस्य निश्चलत्वेन क्रोधस्तस्य
विवर्धत विस्मयं चापयत्सिंहो राजानं वै युधिष्ठिरः मानवस्य गिरा प्राह दुष्टत्वेन सविस्मितः सिं
ह उवाच बाणं प्रयुक्तो भवता वृथा मयि भविष्यति ततः कष्टेन महता श्रमं माकुरु सर्वथा नमा
रुतस्य वेगो हि पर्वतोन्मूलने क्षमः जायते न महाराज स्यात्केवलमनोःकुले महेश्वरस्य मां
राजन्नाम्ना कुंभोदरं तु वै सेवकानां च सर्वेषां मुख्यं जानीहि भूमिप विलोकयेमं पुरतो देव
दारुं महाद्रुमं सिक्तः स्नेहेन भूपाल शिवयायं सुतः कृतः कदाचिदागतो हस्ती भग्नस्तेन म
हाद्रुमः तस्य संरक्षणार्थाय नियुक्तोयं शिवेन तु कृत्वा शिवेन सिंहत्वं युक्तो हं जीवभोजनः
तद्धीयं खलु गौ राजन्भक्षार्थं समुपागता मत्कालज्ञा निवर्तस्व सुभक्तोसि गुरोर्भवान् श्राप
त्काल इदं वृत्तं तस्याश्च सुभृतो यदि दोषो न जायते तस्य यशो राजन्न गच्छति श्रुत्वा गिरं तु सिंह
स्य राजा चेनमुवाच ह ईश्वरेण समो नान्यो वेत्सि सिंह भवानपि समीपाच्च कथं याति ममधेनु
रियं गुरोः प्रसिद्ध देहं गृह्णीष्व मे च धेनुं सवत्सकां भविष्यति जनन्याश्च वत्सो मार्गं विलोकयन्
सिंह नतु दिलीपाय कथितं वै तदा वचः देहांतरे च दृष्टानि भयकारीणि कुर्वता लोकेन हेतु
ना पार्थ कांतं त्वं चमत्कृतं सर्वस्य जगतो राज्यं वपुरेतन्नवं वयः त्यक्तुमिच्छसि भो राजन्मूर्ख
त्वं कथमीदृशं दृश्यसि च कथं प्राणान्प्रजापालनतत्परः जीवन्नेव महाराज मुनेः कोप
श्च शाम्यति ततो रक्षस्व कं देहं राजं च कुरु भूमिप यावच्चोवाच सिंहो सौ नगेनानुगता गिरः
दिलीपोपि तदा पार्थ बाणं मतामुवाच ह गवा निरीक्षितश्चैवं भूमिपो दीननेत्रया किं भो रा
ज्येन भो सिंह विष्टपे जीवनेन मे यशोगतं च मे सर्वं यदि धेनुं न रक्षिष्यसि यदि सिंह ततश्चाये
सिंहस्य पतितस्तदा यावद्दृश्यं च पतितो मांसस्य पिंडवन्नृप तावत्सिंहो रवं कृत्वाथा वितन्नु
भयंकरः दृष्ट्वा सिंहं निपतितं चंचलो न बभूव ह तावत्सोपरि स्थाच्च पुष्पवृष्टिः पपात वै उत्ति
ष्ठ वत्स भूपाल वाचमित्थं निशम्य सः उत्थितश्च पुनश्चापि ये गां ददर्श न वै हरिं सेवया च गु
रोर्भार्यभक्त्या चाविशेषतः प्रीता कामदुघाहं च वरं याचय नंदवान् योजयित्वा करौ राजा य-
याचे तनयं ततः वंशकर्तां महाप्राज्ञं शिवभक्तं निरंतरं ॥ धेनुरुवाच गोत्रिरात्रव्रतं
राजन्मद्भक्त्या भवता कृतं ततोयं स्यात्सुते देहि नः पुत्रः पौरुषविग्रहः ये चान्येपि करिष्यंति
गोत्रिरात्रव्रतं मम तेषां कामं प्रदास्यामि मनसीष्टं न संशयः इत्युक्त्वा चलिता धेनुर्वसिष्ठ
स्याश्रमं प्रति गामागतां वलिनीत्वाश्रा ययौ तु सुदक्षिणा पूजां कृत्वा विधानेन राजपत्नी-
विशेषतः प्रदक्षिणक्रियां कृत्वा चलिता वै युधिष्ठिर आश्रमेव ततो गत्वा दिलीपोसौ ततः पुनः
गुरोरग्रे च तत्सर्वं वृत्तांतमवदीत्पुनः नंदिनीं च तदा पार्थ दंपती तौ सुकोमलौ पारणं च
ततः कृत्वा प्रस्थितौ नगरं प्रति हुताशं च नमस्कृत्य होतारं गां तथैव च आगतश्च ततो राजा उ
त्पनाकं पुरं प्रति राज्ञा तेन कृशांगेन राज्ञमारोपितं भजे दिनैः कतिपयैरेव गोत्रिरात्रप्रभा
वतः राज्यं च कुर्वतस्तस्य सुतस्तस्य महाबली प्रभाते सुमुहूर्ते च उत्पन्नो रघुसंज्ञया रम्यं गा-
नं तदा सर्वं संजाता निर्मला दिशः आदधे चक्र तं वह्निर्वायवो वीत लावुः मृदंगानां स्वनै
श्च पूर्णं स्वर्गमभूत्तदा प्रजाः सर्वास्तदा पार्थ वदंति च पुनः पुनः गोत्रिरात्रप्रभावेन राज्ञः
पुत्रो बभूव ह पुरंदरस्य [illegible] धर्म [illegible] दिग्विजयस्य यज्ञस्य कर्ता सोपि युधिष्ठिर

यज्ञंदिग्विजयंकृत्वाविप्रेभ्यश्चददौवसु ईदृशश्चाप्ययंसूनुर्गोत्रिरात्रप्रभावतः तदाप्रभृति
वैलोकाःलोकेस्मिन्कुर्वंतेव्रतं देवैःसर्वैःकृतंतत्रसर्वकामार्थसिद्धये सर्वाभिर्देवपत्नीभिः
कृतंचव्रतमुत्तमं गोत्रिरात्रव्रतंपुण्यंविधानेनफलप्रदं कुरुष्वत्वंमहाराजकुरुराजयुधि-
ष्ठिर साक्षादनंतरंमातुःकृतामनसिपार्थिव भाद्रपदेसवत्सांत्वंभक्त्यावाराधयस्वगां यएवं
यःकुरुतेपार्थगोत्रिरात्रव्रतंपुनः सिद्ध्यंतिसर्वकार्याणिसुखंचैवप्रवर्द्धते नजायतेयदा-
पत्यंयस्याःपार्थभुवस्तले भक्तीदंयदिकुर्वीततस्याःस्याच्चनसंशयः तपोभिर्दुष्करैर्विवि
धैस्तीर्थव्रतादिभिः मुक्तोखिलेभ्यःपापेभ्योव्रतमेतद्विधायतु कुर्वंतियेव्रतमिदंजगति
प्रसिद्धंपापापहंसकलचिंतितकामदंच आरुह्यतेवरविमानमनुत्तमंचस्वर्गंप्रयातियमभ्र
त्नभयंविहाय॥ इतिभविष्योत्तरेगोत्रिरात्रव्रतं॥ ॥ ॥

अथोद्यापनम् ॥ युधिष्ठिरउवाच कथयस्वमहापुण्यंगोत्रिरात्रव्रतस्यवै
उद्यापनविधिंकृष्णयेनचीर्णेनतत्फलं॥ श्रीकृष्णउवाच वर्षेचतुर्थेसंप्राप्तेगोत्रिरात्र
व्रतस्यवै उद्यापनविधिंवक्ष्येसर्वेषांव्रतसिद्धये तृतीयेदिवसेस्नात्वामध्याह्नेविधिपूर्वकं
देवान्पितॄन्समभ्यर्च्यशुद्धेचसुगृहेव्रती रात्रौचसर्वतोभद्रंगौरीतिलकमुत्तमं पूरयेत्पंचभि
र्वर्णैःशोभनंचयथोदितं ताम्रस्यकलशंकुर्यात्ताम्रपात्रसमन्वितं मासेनैकेनराजेंद्रलक्ष्मी
नारायणंविभुं नवेसूक्ष्मेशुभेवस्त्रेदेवार्थंपरिकल्पयेत् वंशपात्राणिकुर्वीतसौभाग्यगु
णचिह्नकैः विरूढवस्त्रपक्वान्नैर्नारिकेलादिभिःफलैः विलेपनैश्चपुष्पैश्चधूपैर्दीपैस्तथो
त्तमैः पंचामृतैश्चनैवेद्यैःपूजयेद्विधिपूर्वकं लक्ष्मीनारायणंदेवंगांसवत्सांविशेषतः रात्रौ
जागरणंकृत्वागीतवादित्रकौतुकैः ततःप्रभातसमयेहोमंकृत्वाचवैसवं आचार्यंवरये
त्तत्रवेदवेदांगपारगं तदाज्ञयाचकर्तव्यंसाधुकर्मप्रयत्नतः गोत्रयंचप्रदातव्यमेकाम-
पिसवत्सकां बहुदुग्धांसुशीलांचनानारूपाभरणान्वितां दंपतीपरिधानंचवस्त्रैराभरणैः
शुभैः शय्यांसोपस्करांदद्याद्दानपात्रंकमंडलुं चामरंछत्रपात्रंचतिलपात्रंसदक्षिणं
पात्राणिचसुवर्णंचभोज्याग्र्येनवैद्विजा एवंधेनुंचविप्रायदत्वाचपृष्ठतोव्रजेत् पदेपदे
श्वमेधस्यफलंप्राप्नोत्यसंशयः अवारितान्निदानानिदत्वातंचविसर्जयेत् भूयसींदक्षि-
णांदद्याद्व्रतसंपूर्तिहेतवे गोपालेभ्योपिदद्याच्चशक्त्यादिसकंवलं सर्वंक्षमापयित्वातु
पारणंचततश्चरेत् अनाथैर्व्याधिमुक्तैश्चसीदद्भिश्चकुटुंबकैः गवांभक्तितमन्नंयततु-
ग्येनपरियाचितं तेनान्नेनप्रकर्तव्यादेहस्यशुद्धिमिच्छता एवमुद्यापनंकार्यंव्रतस्यफ
लमिच्छता शाक्तमावेद्विजानुज्ञांगृह्णीयुर्व्रतिनःसदा तयानसंपूर्णतामेतिनान्यथापिकदा-
चन नारीवापुरुषोवापिपुत्रवान्जायतेध्रुवं इहलोकेसुखंभुक्त्वाअंतेगोलोकमाप्नुया
त् कृष्णउवाच एतत्तेकथितंराजन्व्रतस्योद्यापनंशुभम् श्रोष्यंतिवापठिष्यंतितेषां-
सर्वमनोरथाः येकरिष्यंत्यसंदेहंतेषांलोकाश्चशाश्वताः॥ ॥ इतिभविष्योत्तरे-
सोद्यापनंगोत्रिरात्रव्रतम् ॥ ॥ ॥

अथात्रैवप्रसंगाद्शोकत्रिरात्रव्रतंभविष्योत्तरे॥ ॥ श्रीकृष्णउवाच॥ शृणुराज
न्पुराव्रत्तमयोध्यायांव्रतंशुभं वसिष्ठेनमुनींद्रेणसीतायैयन्निवेदितं विधायरावणव
धंयदारामोपुरेभ्यगात् तदासीताप्रणम्याथवसिष्ठंवाक्यमब्रवीत् सीतोवाच भगव
न्दंडकारण्याद्रावणेनहृतापुरा नपश्यामितदाकिंचिदात्मीयंविकलेंद्रिया मासान्दश

सीतातत्र राक्षसेनहृतासती अशोकवृक्षमाश्रिताजाताचिंतापरायणा उक्तंत्रिजटयातत्रवाक्यंहेवर्णसंयुतं अशोकंप्रणमसीते विशोकात्वंभविष्यसि तयैतदुक्तंमय्याव्रतमन्यथोक्तंत्रिजटावचः ततःप्रभृत्यहंशाम्भ्रदशोकव्रतमारभे तेनव्रतप्रभावेनहनुमानम्बनात्मजःशतयोजनविस्तीर्णंतीर्त्वासागरमव्ययं मयादृष्टोद्विजश्रेष्ठसाभिज्ञानोमहाबलः पुनश्चकपालीजातोदग्धालंकामहाबलः ततोमेप्रत्ययोजातोव्रतस्यास्यमहात्तरः अस्यचव्रतराजस्यप्रभावेनामयोहरिः ततःकैश्चिदहोरात्रैर्भर्त्तामेराघवोबली निहत्यरावणंसंख्येमांविशुद्धांगृहीतवान् तदहंभगवन्विप्रपृच्छामित्वांदृढव्रतं अशोकस्यप्रभावंमेवक्तुमर्हस्यशेषतः व्रतस्यास्यपुण्यंतुपुराणोक्तंमहीतले भुवनासुरलोकेषुसुरनारीनिषेवितं ॥वसिष्ठउवाच एवमेतज्जनकजेयथावदस्यसिसुव्रते अशोकस्यप्रभावेनतद्वाक्यमयाधुना शृणुचात्रमयाख्यातं नंदनेदिव्यकानने बृहस्पतिमुखाच्छ्रुत्वायज्जातंपरमाद्भुतं वृत्राभिभूतेनेंद्रेणहतोदैवान्महासुरः विश्वंसत्वाद्बुद्धिहानिस्तस्यधर्मेष्वजायत ब्रह्महत्यामवाप्याथदेवेंद्रोनष्टचेतनः त्रैलोक्यराज्यंत्यक्त्वाशुसमुद्रारिभयार्दितः एतस्मिन्नंतरेदेवनहुषोनृपसत्तमः त्रैलोक्यराज्यंसकलंजग्राहबलदर्पितः ततःशचीप्रव्यथिताहृतराज्यमवेक्ष्यसा नंदनांतरमासाद्यतपस्तेपेसुदुष्करं तांश्रुत्वाधर्मनिरतांबृहस्पतिरुदारधीः आगत्यनंदनेदेवीं वाक्यमाहमहातपः ॥ बृहस्पतिरुवाच किमर्थंतप्यतेदेवितपःपरमदुष्करं त्वयाकिंप्रार्थ्यतेतेनतपसाब्रूहिकारणं ॥शच्युवाच॥ हत्याभिभूतंदेवेंद्रंहृतराज्यंहतत्विषं क्वापिप्रनष्टंतं विप्रनजानेहं।प्रियंपतिं एतस्मात्कारणाद्ब्रह्मन्तपउग्रंसमाश्रिता यथापुनर्निजंराज्यंदेवेंद्रःप्राप्नुयादिति क्वतिष्ठतिसुरश्रेष्ठःसुरराट्प्राप्नुतांपुनः प्रसादंकुरुमेदेवसंयोगंतेनचाप्नुयां ॥ वाक्पतिरुवाच ॥ शृणुपौलोमिदेवेंद्रोयथानष्टोभयातुरः मानसाख्यसरिसंभूतपंकजांतरमाश्रितः ब्रह्महत्याप्रभावेनउद्वेगंगुरुमाश्रितः अभिभूतमिहापश्यन्तोप्युविलयंगतः कामंततःप्रसंगेनसर्वंप्राप्स्यसिसुव्रते बहुकालेसितंयस्मात्तपसालभ्यतेफलं स्त्रीणांपुष्टिप्रदंह्येकंव्रतंशोकक्षयंपुवा सादित्याःपूज्यमानायास्तत्वंकर्तुमिहार्हसि अशोकव्रतमित्येवनाम्नाख्यातंविशिष्टये येनचीर्णेनपौलोमिनारीदुःखंनविंदति हरःस्वयंभवत्येषवृक्षराजेषुमंदने अस्मिंस्तुदेवस्तुष्ट इतिविज्ञायनिश्चितं ॥शच्युवाच पुन्नागनागवकुलचंपकाद्यान्महीरुहान् परित्यज्यकथंचान्यान्हरेणास्मिकृतसन्निधिः वाक्पतिरुवाच हरेणनिर्मितःपूर्वमशोकोयंकृपालुना लोकोपकारकरणे ततोयंशिववल्लभः वसिष्ठउवाच निशम्यवृद्धप्रवरंप्रणम्यभक्त्यार्चयित्वाविधिवच्चधर्मं पप्रच्छदेवीपुनराहनाम्नादेविशृणुत्वंविधिमस्यसर्वं ॥बृहस्पतिरुवाच आरभ्यतद्व्रतंकार्यंत्रिरात्रंसमुपोषणं त्रिरात्रंदेविविख्यातमशोकतरुमूलके कार्यंनारीभिरमलमनोवाक्कायकर्मभिः ततःप्रदक्षिणांदद्यादष्टोत्तरशतंफलैः नारिकेलैश्चखर्ज्जूरैर्गोस्तनीभिर्दिनेदिने मंत्रेणानेनमनसापूजयंतिसदाशिवं अशोकशोकापनुदसर्वकामफलप्रद व्रतेनानेनपूर्णेनयथोक्तफलदोभव इतिप्रदक्षिणामंत्रः ततस्तृतीयेदिवसेसमाप्यार्च्यविधानतः महादेवंवृषयुतंवपापात्राणिकारयेत् अनेनैवविधानेनयःकुर्याद्व्रतमुत्तमं वैधव्यंनाप्नुयान्नारीपुत्रसौख्ययुताभवेत् ॥वसिष्ठउवाच॥ बृहस्पतिमुखाच्छ्रुत्वाशचीचक्रेव्रतोत्तमं यथोक्तविधिनासीत्तेभक्त्यादेवःसमागतः ब्रह्महत्याविनिर्मुक्तोय-

याभवनिवासस्सः तथात्वमपि वां छार्थं व्रतमेतत्समाचर यथामाधीषसुषुप्तीप्रथात्यंजायते त्रितो व्रतमेतत्कृतंलोके ख्याता देवी भविष्यति व्रतमेतदशोकस्य सर्वकामफलप्रदं कृष्णउवाच वसिष्ठस्य वचः श्रुत्वा सीता चक्रे व्रतोत्तमं रामाज्ञां समनुप्राप्य श्रयोध्यायां चकार सा सीता व्रतेकृते तस्मिन् दुःख हीना सदाभवत् ॥ युधिष्ठिर उवाच श्रशोकं व्रतराजस्य पूजां देवविधानतः का देवता तत्र पूज्या नारीभिर्नंदकेशव कृष्णउवाच श्रशोकवृक्षे तिष्ठंति सर्वे देवा युधिष्ठिर पल्लवेषु च शाखासु शिवाद्याः सर्वदेवहि श्रशोकस्सन्निधौ रामः पूजनीयः सलक्ष्मणः सीतया सहितोराजन्विष्णुरीशाय तोमतः पृथक्पूर्वैः पृथक्स्वैः रशोकाख्यायथाक्रमं पूज्याश्च भरतश्रेष्ठ पुराणोक्तविधानतः श्रशोकवृक्ष विहिताः शिवाद्यायेसुरोत्तमाः श्रशोकपूजनेनाशु तैः संतुष्टा भवंतिहि गौर्यालक्ष्म्यानदृहाग्या दमयंत्याचसीतया त्वं समाराधितः पूर्वमशोकफलदो भव इतिपूजामंत्रः ॥ ॥

श्रशोकवनिकामध्ये सीतयात्वं प्रसाधितः श्रशोकसंपन्नफलो गृहाणार्घ्यं कृतं मया इत्यशोकार्घ्यमंत्रः रावणस्यवधार्थाय उत्पन्नस्त्वं महीतले विशोकं शोसि देवेश गृहाणार्घ्यं नमोस्तु ते नातमकृष्णुवे रामं वंदे हं लोकसुंदरं इतिरामार्घ्यमंत्रः ॥ रामभक्तिप्रयुतं भ्रांतं सुमित्रानंदवर्धनं लक्ष्मीवर्द्धनं गौरं लक्ष्मणं पूजयाम्यहं इतिलक्ष्मणपूजा ॥ श्रवनीतलसंभूते सीते सर्वांगसुंदरि गृहाणार्घ्यं मयादत्तं पूजां जनकनंदिनि इतिसीतापूजा ॥ लक्ष्मीस्त्वं सर्वदेवस्य विशोकं शामहीतले श्रवतीर्णा मयादत्तं गृहाणार्घ्यं नमोस्तु ते इतिसीतायाश्चर्घ्यमंत्रः एवं संपूज्य विधिवत्सर्वशोकविनाशनं सर्वपापप्रशमनं सर्वकीर्तिविवर्द्धनं श्रपुत्रयापुरा पार्थ पार्वत्या मंदिराचले श्रशोकः शोकशमनः पुत्रत्वे परिकल्पितः जातकर्मादिकं चास्य श्रशोकस्य महात्मनः कारितं विधिवत्तत्र तेनाशोकोनगोत्तमः याव्रतं कुरुते नारी पुराणोक्तविधानतः श्रशोकस्य प्रभावेन सर्वान्कामानवाप्नुयात् श्रवैधव्यमतुला साप्नुलक्ष्मीसान्निध्यमाप्नुयात् सर्वोपहारं राजेंद्र ब्राह्मणाय निवेदयेत् कथामपि समाकर्ण्य यः कुर्याद्विजपूजनं व्रतस्य फलमाप्नोति सव्रतो हि न संशयः युधिष्ठिर उवाच विशेषं ब्रूहि मे देव श्रशोकतरुपूजने दैर्वार्चितैस्तरौ सर्वं प्राप्यते सकलं फलं श्रीकृष्णउवाच कथयामि नरोराजन्याभिर्व्रतमिदं कृतं मनुष्यदेवगंधर्वनारीभिः पुत्रवृद्धये श्रनसूयपाविपत्न्या श्ररुंधत्या तथैव च देवक्या सीतया चैव द्रौपद्या सत्यभामया दमयंत्या च सावित्र्या तद्व्रतं कृतमुत्तमं श्रशोकः पूजितः एवं यथावच्छृणु पार्थिव श्रशोको राजतश्चैव सो वर्णश्च तथाशिवः तथैव कारयेत्सीतां सौवर्णी रामलक्ष्मणौ पूजयेद्विधिवत्तत्रैः पूर्वोक्तैर्नृपसत्तम श्रशोकं पूजयेद्वृक्षं प्रत्यग्रं शुभपल्लवैः विरूढैः सप्तधान्यैश्च गुणकैर्मोदकैः शुभैः कालोद्भवैः शुभैर्दिव्यैर्नारिकेलैः सदाडिमैः पुष्पादिभिस्तथा धूपैः पूजयेत्तरुसत्तमं श्रशोकः पांडवश्रेष्ठ शोकं नाशयतिस्फुटं पितृमातृपतीनां च श्वशुराणां तथैव च श्रशोकस्त्वं शोकहरो भव सर्वत्र नः कुले इतिश्रीभविष्योत्तरे श्रशोकत्रिरात्रव्रतम् ॥ ॥

श्रथ भाद्रशुक्लचतुर्दशी कृत्यानि नारदीये ॥ भाद्रशुक्लचतुर्थ्यामनंतव्रतमुत्तमं कर्तव्यमेकभक्तं हि गोधूमप्रस्थपिष्टकं विपाच्य शर्करान्याक्तमनंताय निवेदयेत् गंधाद्यैः प्राक्समभ्यर्च्य कार्पासं परजं नुवा चतुर्दशग्रंथियुतं सूत्रं कृत्वा सुशोभनं ततः पुराणसूत्राय सूत्रं तिद्द्मा जलाशये निवश्रीयात्वं वनारी वामे दक्षे भुजे पुमान् विप्राय मिष्टपक्वान्नं प्रदद्याद्दक्षिणान्वितं स्वयं च तन्मितं चाद्यादेवं कुर्याद्व्रतोत्तमं मंडलं सर्वतोभद्रं धान्यवर्णैः प्रकल्प्य च सुशोभनं न्यसेत्तत्र कलशं ताम्रजं मुने तस्योपरि न्यसेद्देवीमनंतप्रतिमां शुभां पीतपट्टांशुकाद्व्यां तत्र तं विधिनायजेत् गणेशं मातृकाः खेटान्लोकपालान्यजेत्पृथक् ततो होमं हविष्येणाष्टोत्तरशतं ह

चरेत् शय्यां सोपस्करां तथैव प्रतिमां च द्विजोत्तम प्रदद्याद्गुरवे भक्त्या द्विजानन्यांश्चतुर्दश संभोज्य
मिष्टपक्वान्नदक्षिणाभिः प्रतोषयेत् एवं यः कुरुते नंतव्रतं प्रसन्नमादरात् स त्वनंतप्रसादे
न जायते भुक्तिमुक्तिभाक् १॥ अथात्रैव कदलीव्रतं ॥ ॥कदलीव्रतमप्यत्र तद्विधानमि
दं शृणु नारी वा पुरुषो वापि त्रिकालीवारं भवनमुपस्थिता स्नात्वा संपूजयेद्गंधपुष्पधान्यांकुरादिभिः
दधिदूर्वाक्षतैर्दीपैर्वस्त्रैः पक्वान्नसंचयैः एवं संपूज्य मंत्रेण ततः संप्रार्थयेद्व्रती अप्सरोमरक-
न्याभिर्नागकन्याभिरर्चिते शारीरारोग्यलावण्यं देहि देवि नमोऽस्तु ते इति संप्रार्थ्य कन्यास्तु चत
स्रो वा सुवासिनीः संभोज्यांशुकसिंदूरकज्जलालक्तकादिभिः नमस्कृत्य निजं गेहं समागत्य व्रतं व्र
जेत् एवं कृते व्रते विपुलं लब्ध्वा सौभाग्यमुत्तमं इह लोके विमानेन स्वर्गलोके व्रजेत्परमिति ॥

अथ भविष्योक्तं भाद्रपदशुक्लचतुर्दश्यामनंतचतुर्दशीव्रतं तत्र चतुर्दश्यौदयिकी ग्राह्या
उदये त्रिमुहूर्तापि ग्राह्यानंतव्रते तिथिरित्युक्तेः दैवकर्मत्वाच्च चतुर्दश्या च पूर्णिमेति युग्मव-
चनात् यथा भाद्रपदस्यांते चतुर्दश्यां सिते द्विज पौर्णमास्याः समायोगे व्रतं चानंतकं चरेदिति भ
विष्योक्तेः मुहूर्तमपि चेद्भाद्रे पूर्णिमायां चतुर्दशी संपूर्णां तां विजानीयात्पूजयेद्विष्णुमव्ययमिति
स्कांदाच्च दिनद्वये पौदयिकत्वे संपूर्णत्वे तु कालतत्त्वविवेचनकृत्परत्नावली निर्णयसिं
धुपृथ्व्यादिषु मतं माधवीये उदयव्यापिन्यां तिथ्यंतरवत् त्रिमुहूर्तेति मुख्यः कल्पः द्विमुहूर्तेत्य
नुकल्प इत्युक्तं निर्णयामृते तु स्वल्पायामप्युदयकालव्यापिन्यां चतुर्दश्यां तु पक्षस्य पूर्णिमा
भावेपि पूजादिकं कार्यं॥ उदयकालव्यापिन्या निषेधे दवान्यस्त ग्रहणत्वविधानात् ॥ तदुक्तं
उपवासव्रतादीनां घटिकैकापि या भवेत् उदये सा तिथिर्ज्ञेया विपरीता तु पैतृके इत्यादि वस्तु
तस्तु मुहूर्तमपि चेद्भाद्रे इति स्कांदवाक्येन संपूर्णत्वाभिधानान्मध्याह्ने भोज्यवेलायामिति क-
थावाक्याच्च पूजनं मध्याह्न एव कर्तव्यं मदनरत्नादिवत् दिवोदासप्रतापमार्तंडयोस्तु मध्या
ह्ने भोज्यवेलायामिति कथावचनान्मध्याह्नव्यापिनी ग्राह्येत्युक्तं ॥ अथानंतपूजनविधिः तत्र
मासपक्षाद्युल्लिख्याखिलपापनिर्मुक्तिपूर्वकोत्तमसिद्धिपुत्रपौत्रधनधान्यसंपत्त्यारोग्यायु-
ष्कपरमगतिकामश्चतुर्दशवर्षावधि यथाविध्यनंतव्रतं करिष्ये इति संकल्प्य कृत्वा मंडलं स
र्वतोभद्रं कृत्वा कुंभं तु विन्यसेत् तत्राष्टदलपद्मे तु पूज्ये विष्णुमव्ययं कुंभे परिपार्श्वे विन्यस्य तद्
पर्यष्टदलं कृत्वा तत्र पूजयेदित्यर्थः कृत्वा दर्भमयं देवं फणासप्तकमंडितं तस्याग्रतो दृढं
सूत्रं कुंकुमाक्तं सुशोभनं चतुर्दशग्रंथियुतमुपस्थाप्य प्रपूजयेत् ततस्तु मूलमंत्रेण नमस्कृ
त्य चतुर्भुजं नवाम्रपल्लवाभासं पिंगलश्मश्रुलोचनं पीतांबरधरं देवं शंखचक्रगदाधरं प्रस
न्नवदनं विष्णुं विश्वरूपं विचिंतयेत् ॥ इति ध्यानम् ॥ अत्र ग्रंथिदेवताः विष्णुरग्निस्तथा
दित्यः ब्रह्मा कालः पितामहः ईशः पिनाकी विघ्नेशः स्कंदः सोमस्तथैव च वरुणः पवनः पृथ्वी वस
वो ग्रंथिदेवता इति तत्रावाह्य पूजयेत् आगच्छानंत देवेश तेजोराशे जगत्पते क्रियमाणां
मया पूजां गृहाण सुरसत्तम सहस्रशीर्षेत्यावाहनं १ नानारत्नसमायुक्तं कार्तस्वरविभूषितं
आसनं देवदेवेश गृहाण पुरुषोत्तम पुरुष एवेत्यासनं २ गंगादिसर्वतीर्थेभ्यो मयाप्रार्थ
नयाहृतं तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यतां एतावानस्येति पाद्यं ३ अनंतानंत देवेश
अनंत गुणसागर अनंतानंतरूपोसि गृहाणार्घ्यं नमोस्तु ते त्रिपादूर्ध्वेत्यर्घ्यं ४ कर्पूरवा-
सितं तोयं मंदाकिन्याः समाहृतं आचम्यतां हृषीकेश त्रैलोक्यव्याधिनाशन ततो विराडित्याच
मनं ५ वांछितं कुरु मे देव दुष्कृतं मा विचारय मधुपर्कं गृहाणेदं त्रैलोक्याभयप्रद इति म

युपर्कं ६ ततः पुनराचमनं पूर्वोक्तमंत्रेण पार्कलमधुसंमिश्रं पयो दधि घृतं तथा पंचामृतेन-
स्नपनं गृहाण जगतां पते आप्यायस्वेउगंध दधिक्राव्ण इति दधि घृतमिमव्योनि घृतं मधु
वाते ति मधु स्वादुपवस्य शर्करा इति पंचामृतं गंगा च गोमती रेवा यमुना च सरस्वती नदीन
दसहस्राणां तोयमेतत्समाहृतं अनंतगुणरत्नाय विश्वरूपधराय च नमो ब्रह्मण्यदेवाय
अनंताय नमो नमः यत्पुरुषेनि स्नानं पीतांबरयुगं देवं सर्वकामार्थसिद्धये मया निवेदितं
भक्त्या गृहाण सुरसत्तम तं यज्ञमिति वस्त्रं दामोदर नमस्तेस्तु त्राहि मां भवसागरात् ब्रह्मसूत्रो
त्तरीयं गृहाण पुरुषोत्तम तस्माद्यज्ञात्सर्वहुतः संभृतमित्युपवीतं कस्तूरीकुंकुमोपेतं कर्पू
रेण च संयुतं गंधं दास्यामि देवेश अनंताय नमो नमः श्रीखंडचंदनं दिव्यं गंधाढ्यं सुमनोहरं वि
लेपनं सुरश्रेष्ठ प्रीत्यर्थं तव गृह्यतां तस्माद्यज्ञात् ऋचः सामानीति गंधं नमः सर्वहितार्थाय ज
गदाधारहेतवे सर्वसंस्थितरूपाय अनंताय नमो नमः मुक्तारत्नाक्षताः श्वेताः कुंकुमाक्तास-
ताः शुभाः वासुदेव जगन्नाथ प्रीत्या मे स्वीकुरु प्रभो अक्षताः माल्यादीनि सुगंधीनि मालत्या
दीनि वै प्रभो मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यतां तस्मादश्वा इति पुष्पाणि अथांगपू-
जा अनंताय नमः पादौ पूजयामि संकर्षणाय गुल्फौ पू० कालात्मने जानुनी पू० विश्व
रूपाय नमः जंघे पू० विश्वरूपाय कटिं पू० विश्वसाक्षिणे मेढ्रं पू० पद्मनाभाय कटिं पू० पद्मना
भाय नमः नाभिं पू० परमात्मने हृदयं पू० श्रीकंठाय कंठं पू० सर्वास्त्रधारिणे बाहू पू०
वाचस्पतये मुखं पू० दामोदराय दंतान् पू० केशवाय ललाटं पू० कमलासनाय शिरः पू०
सर्वात्मने नमः सर्वांगं पूजयामि नमः वनस्पतिरसोद्भूतो गंधाढ्यः सुमनोहरः आघ्रेयः सर्व
देवेश धूपोयं प्रतिगृह्यतां यत्पुरुषं व्यदधुरिति धूपं घृतवर्तिसमायुक्तं वह्निना योजितं मया
दीपं गृहाण देवेश त्रैलोक्यतिमिरापह ब्राह्मणोस्येति दीपं अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वि
तं नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु चंद्रमा मनस इति नैवेद्यं कर्पूरवासितं तोयं म
दाकिन्याः सुशीतलं आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः आचमनं गंधकर्पूरकस्तूरी
समायुक्तं मनोहरं करोद्वर्तनकं देव गृहाण परमेश्वर इति करोद्वर्तनं इदं फलं मया देव स्था
पितं पुरतस्तव तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि नाभ्या आसीदिति फलं पूगीफलं
समायुक्तं सकर्पूरं मनोहरं भक्त्या दत्तं मया देव तांबूलं प्रतिगृह्यतां इति तांबूलं हिरण्यग
र्भगर्भस्थं हेमबीजं विभावसोः अनंतपुण्यफलदमतः शांतिं प्रयच्छ मे इति दक्षिणाद्रव्यं ॥
ततः पुष्पांजलिं दद्यात् मल्लिकामालतीपुष्पैर्नागचंपकसंयुतैः पुष्पांजलिं गृहाणेमं पादाबु-
जयुगार्पितं चंद्रादित्यौ च धरणी विद्युदग्निस्तथैव च त्वमेकः सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यतां
इति नीराजनं ॥ ॥ अथ चतुर्दशग्रंथीनां सशक्तिकापूजा ॥ ॐ मोहिन्यै नमः ॐ अनंता
य नमः ॐ श्रियै नमः ॐ अनंद्याय नमः ॐ पद्मिन्यै नमः ॐ रुक्मिणीकांताय नमः ॐ म-
हाबलायै नमः ॐ गरुडध्वजाय नमः ॐ अंजन्यै नमः ॐ कमठकूर्माय नमः ॐ मंगलायै न-
मः ॐ पृथ्वीधराय नमः ॐ वरदायै नमः ॐ नृसिंहाय नमः ॐ शुभायै नमः ॐ उपेंद्राय
नमः ॐ शिवदूत्यै नमः ॐ जामदग्न्याय नमः ॐ दुर्गायै नमः ॐ रघुनंदनाय नमः ॐ ब्र
ह्मण्यै नमः ॐ कृष्णाय नमः ॐ चित्रमंडलायै नमः ॐ बुद्धरूपाय नमः ॐ हरिसिद्धायै नमः
ॐ मधुसूदनाय नमः ॐ वामनाय मूर्त्यै० १४ ॐ विराजाय नमः ॐ ब्रह्मणे नमः ॐ शाभवे नमः
ॐ कुमाराय नमः ॐ नारदाय नमः ॐ मनवे नमः ॐ आत्रेयाय नमः ॐ कपिलाय नमः ॐ-

व्यासायनमः ॐपद्मायनमः ॐधन्वंतरायनमः ॐपृथिव्यैनमः ॐनारायणायनमः ॐवृष-स्कंधायनमः ॐविल्वेनमः ॐअग्नयेनमः ॐसूर्यायनमः ॐसहस्राक्षयैनमः ॐपितामहाय नमः ॐइंद्रायनमः ॐपिनाकिनेनमः ॐविघ्नेशायनमः ॐस्कंदायनमः ॐसोमायनमः ॐव रुणायनमः ॐपवनायनमः ॐपृथिव्यैनमः ॐवसुभ्योनमः इतिगंधाक्षतपुष्पदूर्वादिभिः पूजयेत् १५ ततः पुनः पुष्पांजलिंदत्वा साष्टांगोयंप्रणामस्तेप्रयत्नेनमयाकृतः दासोयमि तिमांमत्वाप्रसीदपुरुषोत्तम नाभ्याआसीदिति नमस्कारः अनंतकामान्मेदेहि सर्वकामफल प्रद अनंतायनमस्तुभ्यंपुत्रपौत्रप्रवर्द्धनं नमस्तेदेवदेवेशनमस्तेगरुडध्वज नमस्तेपुंडरी-काक्षनमस्तेह्यमरप्रिय नमस्तेकमलाकांतवासुदेवनमोस्तुते द्वौहस्तौमुकुलीकृत्यजानू परिनिधायचेति सप्तास्यासन्निति नमस्कारः यानिकानिचेति प्रदक्षिणीकृत्य मल्लिकामालत्या दि यज्ञेनयज्ञमितिमंत्रपुष्पांजलिः नमःसर्वहितार्थायजगदाधारवक्षसे सर्गस्थित्यंत रूपायगृहाणार्घ्यंनमोस्तुते इतिपुनरर्घ्यंदत्वा प्रार्थना अनंतकामान्मेदेहि पुत्रपौत्रविवर्द्धन अनंतः सर्वकामानामधिपः सर्वकामद व्रतेनानेनसुप्रीतोभवत्विह सदामम अनंतायनम-स्तुभ्यंसहस्रशिरसेनमः नमोस्तुपद्मनाभायनागाधिपतयेनमः अनंतसंसारमहासमुद्रे मग्नंहिमामुद्धरवासुदेव अनंतरूपेविनियोजयस्वअनंतसूत्रायनमोनमस्ते इत्यनंतसूत्र नमस्कारः अनंतंकामदंदेवंसर्वकामफलप्रदं अनंतडोररूपेणपुत्रपौत्रप्रवर्द्धन नम-स्तेदेवदेवेशानमस्तेधरणीधर सूत्रग्रंथिषुसंस्थायअनंतायनमोनमः अथसूत्रग्रहणं संसारगह्वरगुहासुसुखंविहर्तुंवांछंतियेकुरुकुलोद्भवशुद्धसत्वाः संपूज्यचत्रिभुवनेशमनं तरूपंवध्नंतिदक्षिणकरेवरडोरकंते इतिनूतनानंतसूत्रधारणं अथजीर्णानंतसूत्रविसर्जनम् संवत्सरकृतांपूजांसंपाद्यविधिवन्मम व्रजेदानींसुरश्रेष्ठत्वंमनंतफलप्रद तस्यापिषोडशो पचारपूजार्घ्यैः पूर्वोक्तेनविधानेनपूजयेद्विसुरूपिणं पूजयित्वाहरिंदेवमाचार्यंपूजयेत्ततः परिधाप्यसपत्नीकंवस्त्रालंकारभूषणैः मंत्रैः संपूज्यविधिवद्धेनुंदद्यात्प्रयत्नतः सुरभीवै त्ववीमातानित्यंविष्णुपदेस्थिता ग्रासंगृह्णामयादत्तंगोमातस्त्रातुमर्हसि गावोममाग्रतःसंतु गावोमेसंतुपृष्ठतः गावोमेहृदयेसंतुगवांमध्येवसाम्यहं मंत्रेणानेनसंपूज्यआचार्याय-निवेदयेत् गोदानस्यप्रतिष्ठार्थंस्वर्णंदद्याद्यथाविधि ततश्चामंत्रितान्विप्रान्वेदशुश्चचतुर्दश वस्त्रा 'पवीतैः संपूज्यभोजयेदत्रविस्तरैः ततस्तदक्षिणांतेभ्योवित्तशाठ्यविवर्जितः स्व शक्त्यादक्षिणांदद्यादाचार्यंचक्षमापयेत् क्रियाहीनंभक्तिहीनंद्रव्यहीनंतथैवच मंत्रहीनंपठे त्पश्चात्व्रतसंपूर्तिहेतवे अनंतसंसारमहासमुद्रे॰ अनंतरूपायनमोनमस्ते इत्यनंतवि सृज्याथब्राह्मणांश्चतथैवच दीनांथकृपणेभ्यश्चदद्यादन्नादिकंधनं यथोपपन्नेभोक्तव्यं कृत्वामानसमव्ययं आचम्यचशुचिर्भूत्वाध्यायेद्विष्णुंचतद्दिने एवंकृतेनृपश्रेष्ठकर्मणाचज नार्दनः अनंतरूपीभगवान्तुष्टोभवतिसर्वदा व्रतस्यफलमाप्नोतिविष्णुलोकंव्रजेन्नरः इति सोद्यापनम् प्रतिवर्षमनंतपूजनम् ॥

अथकथा भविष्योत्तरे युधिष्ठिरउवाच अहंदुःखीहसंजातोभ्रातृभिः सहकेशव कथं मुक्तिर्भवेदस्माकमनंताद्दुःखसागरात् कंदेवंपूजयित्वावैप्राप्स्यामोराज्यमुत्तमं अथवाकिंव्रतंकृ त्वात्वत्प्रसादाद्ब्रवीहिनः ॥ श्रीकृष्णउवाच अनंतव्रतमस्त्यन्यत्तिथावस्यांयुधिष्ठिर सर्वपापहरंनृ णांस्त्रीणांचैवयुधिष्ठिर शुक्लपक्षेचतुर्दश्यांमासिभाद्रपदेभवेत् तस्यानुष्ठानमात्रेणसर्वपापंव्यपो-

इति॥युधिष्ठिरउवाच कृष्णकोयमनंतेतिप्रोच्यतेयस्त्वयाविभो किंशेषनागआहोस्विदनंतस्तक्षकःस्मृतः
परमात्माथवानंतउताहोब्रह्मगीयते कएषोनंतसंज्ञोवैतथ्यंमेब्रूहिकेशव॥ श्रीकृष्णउवाच॥
अनंतइत्यहंपार्थममरूपंनिबोधतत् आदित्यादिग्रहात्मायोयःकालउपपद्यते लवकाष्ठामुहूर्तादि
दिनरात्रिस्वरूपवान् पक्षमासर्तुवर्षाणियुगकालव्यवस्थया योयंकालोमयाख्यातःसोनंतइतिकी-
र्त्यते सोहंकालोवतीर्णोत्रभूभारोत्तारणायच दानवानांवधार्थायसाधूनांपालनायच अनादिमध्यप
र्यंतंकृष्णंविष्णुंहरिंशिवं वैकुंठंभास्करंसोमंसर्वव्यापिनमीश्वरं विश्वरूपंमहाकालंसृष्टिसंहार-
कारकं प्रत्ययार्थंमयारूपंफाल्गुनायप्रदर्शितं पूर्वमेवमहाबाहोयोगिध्येयमनुत्तमं विश्वरूप
मनंतंचयस्मिन्निंद्राश्चतुर्दश वसवोद्वादशादित्यारुद्राएकादशास्मृताः सप्तर्षयःसमुद्राश्चपर्व
ताःसरितोद्रुमाः नक्षत्राणिदिशोभूमिःपातालंभूर्भुवादिकं माकुरुष्वात्रसंदेहंसोहंपार्थनसंशयः॥
युधिष्ठिरउवाच अनंतव्रतमाहात्म्यंविधिंवद्विदांवर किंपुण्यंकिंफलंचास्यअनुष्ठानवतांनृणां
केंनचादौपुराचीर्णंमर्त्येकेनप्रकाशितं एवंसविस्तरंकृत्वाब्रूह्यनंतव्रतंमम॥ कृष्णउवाच आ
सीत्पुराकृतयुगेसुमंतुर्नामवैद्विजः वसिष्ठगोत्रेचोत्पन्नोसुरूपांचभृगोःसुतां दीक्षानाम्नींचोपये
मेवेदोक्तविधिनानृप तस्याःकालेनसंजाताडुहितानंतलक्षणा शीलानाम्नीसुशीलासावर्धतीपितृवे
श्मनि मातावतस्याःकालेनज्वरदाहेनपीडिता विननाशनदीतीरेययौस्वर्गंपतिव्रता सुमंतुस्ततो
न्यांवैधर्मपुंसःसुतांपुनः उपयेमेविधानेनदुःशीलांनाममनामतः दुःशीलाकर्कशाचंडीनित्यंकलहका
रिणी सापिशीलापितुर्गेहेगृहार्चनपराबभौ कुड्यस्तंभगृहद्वारदेहलीतोरणादिकं वर्णकैश्चित्र-
मकरोन्नीलपीतसितासितैः स्वस्तिकैःपद्मकैःशंखैरर्चयंतीपुनःपुनः ततःकालेवर्द्धमानेकौमारव
शवर्तिनी पित्राहृष्टातदातेनसाचिह्नायौवनेस्थिता कस्मैदेयामयाशीलाविचार्येतिसुदुःखितः
एतस्मिन्नेवकालेतुमुनिर्वेदविदांवरः कन्यार्थीचागतःश्रीमान्कौंडिन्योनाममनामतः उवाचनृप
संपन्नांत्वदीयांतनयांवृणे पिताददौद्विजेंद्रायकौंडिन्यायशुभेदिने स्वगृह्योक्तविधानेनविवाह
मकरोत्तदा निवर्त्योद्वाहिकंसर्वंकर्कशांप्रोक्तवांस्तदा किंचिद्दायादिकंदेयंजामातुःपरितोषकं
तच्छ्रुत्वाकर्कशाक्रुद्धाप्रोत्सार्यगृहमंडलं पेटायांप्रस्तरंबध्वास्वगृहंगम्यतामिति भोज्यावशिष्टचू
र्णेनपाथेयंचचकारसा कौंडिन्योपिविवाह्यैनांपथिगच्छञ्छनैःशनैः शीलांसुमंतादादायनवो
ढांगोरथेनवै मध्याह्नेभोज्य वेलायांसमुत्तीर्यसरित्तटे ददर्शशीलास्त्रीणांतुसमूहंरक्तवाससां
चतुर्दश्यांतदापार्थसर्चयंतंजनार्दनं उपगम्यशनैःशीलापप्रच्छस्त्रीकदंबकं आर्याःकिमेतन्मेब्रू
तकिंनामव्रतमीदृशं ताऊचुर्योषितस्तांवैशीलांशीलविभूषणां अनंतव्रतमेतद्धिव्रतेनंतःप्रपूज्य
ते सात्रवीदहमप्येतत्करिष्येव्रतमुत्तमं विधानंकीदृशंतत्रकिंदानंकोत्रपूज्यते॥ स्त्रियऊचुः॥
शीलेसदन्नप्रस्थस्यपुंनाम्नःसंस्कृतस्यच अर्धंविप्रायदातव्यमर्धमात्मनिभोजनं शक्त्याचदक्षि
णांदद्याद्वित्तशाठ्यविवर्जितं कर्तव्यंसत्सरित्तीरेविधिनानेनभामिनि स्नात्वानंतंसमभ्यर्च्यमंड
लेधूपदीपकैः पुष्पैर्गंधैश्चनैवेद्यैःपीतरक्तैश्चतुःसमैः चतुःसमैःपरिभाषोक्तगंधद्रव्यैः तस्याग्र
तोदृढंसूत्रंकुंकुमाक्तंसडोरकं चतुर्दशग्रंथियुतंवामेकरतलेन्यसेत् अनंतसंसारमहासमुद्रे
मग्नंसमभ्युद्धरवासुदेव अनंतरूपेविनियोजयस्व अनंतसूत्रायनमोनमस्ते अनेनडोरकं
बध्वाभोक्तव्यंस्वस्थमानसैः ध्यात्वानारायणंदेवमनंतंविश्वरूपिणं भुक्त्वाचांतेव्रजेद्गेहमेवंप्रो
क्तमिदंव्रतं॥ कृष्णउवाच एवमाकर्ण्यराजेंद्रप्रहृष्टेनांतरात्मना सापिचक्रेव्रतंशीलाकरेव
धात्सुडोरकं पाथेयमर्धंविप्रायदत्वाभुक्त्वास्वयंततः पुनर्जगामसंहृष्टागोरथेनस्वकंगृहं भर्त्रा-

सहैवधनकैः सम्पयस्तत्क्षणादभूत् तेनानंतव्रतेनास्याव भोगोधनसंकुलं गृहाश्रमं श्रियायुक्तं धन-
धान्यसमाकुलं आकुलं व्याकुलं रम्यं सर्वत्रातिथिभोजनैः साक्षिमाणिक्यकांचीभिर्मुक्ताहारविभूषिता
देवांगवस्त्रसंछन्ना सावित्री प्रतिमा भवेत् कदाचिदुपविष्टायां दृष्टोवद्धस्तु डोरकः शीलाया हस्तमूले
तु तेनोक्तं किमिदं त्वया धृतस्तु डोरकस्त्वेन किमर्थं ब्रूहि तत्वतः यस्य प्रसादात्सकलाधनधान्यादिसं
पदः लभ्यंते मानुषैश्चापि सोनंतोयं मया धृतः शीलायास्तद्वचः श्रुत्वा भर्त्रा तेन द्विजन्मना श्री-
मदांधेन कौण्डिन्य सापेदोस्तोटितो रुषा कोनंत इति मूढेन जल्पता पापकारिणा क्षिप्तो ज्वालाकुले
वह्नौ हाहाकारात्प्रधावती शीला गृहीत्वा ततस्तं वै क्षीरमध्ये समक्षिपत् तेन कर्मविपाकेन सा श्रीस्त
स्य तत्क्षयं गता गोधनं तस्करैर्नीतं गृहं दग्धं धनं गतं यद्यदेवागतं गेहे तत्तदेव पुनर्गतं स्वजनैः
कलहो नित्यं बंधुभिस्तर्जनं तथा अनंताक्षेपदोषेण दारिद्र्यपतितं गृहं न कश्चिद्वदते लो
के तेन सार्द्धं युधिष्ठिर शरीरेण ततिसंतप्तो मनसाप्यतिदुःखितः निर्वेदं परमं प्राप्तः कौण्डिन्यः प्रा
ह तां प्रियां शीले मम दुःखमुत्पन्नं सहसा शोककारकं येनातिदुःखितोस्माकं जातं सर्वधनक्षयं स्वज
नैः कलहो गेहे न कश्चिन्मां प्रपद्यते शरीरे नित्यसंतापः खेदश्च मनसि दारुणः नजानासि दुर्नयः कोत्र
किं कृते सुकृतं भवेत् प्रत्युवाचाथ तं शीला सुशीला शीलमंडिता प्रायोनंतकृताक्षेपपापसंभव-
जं फलं भविष्यति महाभाग तदर्थं यत्नमाचर एवमुक्तः स विप्रर्षिर्जगाम मनसा हरिं निर्वेदाद्वि
जगामाथ कौण्डिन्यः प्रययौ वनं तपसे कृतसंकल्पो वायुभक्षो द्विजोत्तमः मनसा ध्यायमानंतं कदा
द्रक्ष्यामि च तं विभुं तपसे कृतसंकल्पो वायुभक्षो द्विजोत्तमः यस्य प्रसादात्संजातमाक्षेपाद्विधनं गतं
धनादिकं ममातीव सुखदुःखप्रदायकं एवं संचिंतयन्सोथ बभ्राम विजने वने तत्रापश्यन्महावृ
क्षं पुष्पितं फलितं तथा वर्जितं पक्षिसंघातैः कीटकोटिवृतं तथा तमपृच्छत्त्वयानंतः कश्चिद्दृष्टो
महातरो ब्रूहि सौम्य ममातीव दुःखं चेतसि विद्यते सोब्रवीद्द्विज नानंतं कश्चिन्मानामि वा द्विज
एवं निराकृतस्तेन स जगामाथ दुःखितः क्व द्रक्ष्यामीति पश्यन्स गामपश्यत्सवत्सकां तृणमध्ये
प्रधावंतीमितश्चेतश्च पांडव अब्रवीद्धेनुके ब्रूहि यद्यनंतस्त्वयेक्षितः सा चोवाचाथ कौण्डिन्यं नानंतं
वेद्म्यहं द्विज ततो व्रजन्ददर्शाग्रे गोवृषं शाद्वले स्थितं दृष्ट्वापृच्छत् गोस्वामिन्नानंतो वीक्षितस्त्वया गोवृ
षस्तमुवाचेदं नानंतो वीक्षितो मया ततो व्रजन्ददर्शाग्रे रम्यं पुष्करिणीद्वयं अन्योन्यजलकल्लोलवी
चीपर्यंतसंगमं छन्नं किंजल्ककल्हारकमलोत्पलमंडितं सेवितं भ्रमरैर्हंसैश्चक्रैः कारंडवैर्वकैः
ते चापृष्टा द्विजेनानंतो भवद्भिरुपलक्षितः ऊचतुस्ते द्विजश्रेष्ठ नानंतो वीक्षितो द्विज ददर्शाथ वने
तस्मिन्गार्दभं कुंजरं तथा तावपृष्टौ द्विजेनेत्थं नेति ताभ्यां निवेदितं एवं संपृच्छयन्सर्वांस्तत्रैव
निषसाद ह कौण्डिन्यो विह्वलीभूतो निराशो जीवितेन्नृप दीर्घं तु संचनिःश्वस्य पपात भुवि भारत
प्राप्य संज्ञां मनंतेति जल्पन्नुत्थाय स द्विजः नूनं त्यजाम्यहं प्राणानिति संकल्प्य चेतसि उत्थायोद्
बंधनं वृक्षे शिखाबद्धा रज्जुसत्तम कृपयानंतदेवोपि प्रत्यक्षः समजायत वृद्धब्राह्मणरूपेण इत एहि
सुवाच तं प्रगृह्य दक्षिणे पाणौ गुहायां प्रविवेश च तं स्वां पुरीं दर्शयामास दिव्यनारीनरैर्युतां तस्यां नि
विष्टमात्मानं दिव्यसिंहासने शुभे पार्श्वस्थशंखचक्राब्जगदागरुडशोभितं दर्शयामास विप्राय
स्वीयं रूपमनंतकः विभूतिभेदैरनंतैरनंतममितौजसं तं दृष्ट्वानंतरूपं तु समनंतमपराजितं
बोधमानो जगादेदं जय पाहि पुरः सरं पापोहं पापकर्माहं पापात्मा पापसंभवः त्राहि मां पुंडरी
काक्ष सर्वपापहरो भव तच्छ्रुत्वा देवदेवेशः प्राह सुस्निग्धया गिरा मा भैस्त्वं ब्रूहि विप्रेंद्र यत्ते मन-
सि वर्तते कौण्डिन्य उवाच मया मत्वावलिप्तेन त्रोटितो नंत डोरकः तेन पापविपाकेन भ्रांतिर्मे प्रलयं

गता स्वजनैः कलहेनैकेन कश्चिन्मां प्रभाषते निर्वेदाद्भ्रमतोऽरण्ये नवदर्शनकांक्षया कृपया देवदेवेश त्वयात्मा संप्रदर्शितः तस्य पापस्य मे शान्तिं कारुण्याद्वक्तुमर्हसि ॥ कृष्ण उवाच तच्छ्रुत्वानन्तदेवेशस्तमुवाच द्विजोत्तमं भक्त्या संतोषितो देवः किंचिद्दयासमन्वितः ॥ अनन्त उवाच स्वगृहं गच्छ कौण्डिन्य माविलंबं समाचर चरानन्तव्रतं भक्त्या नव वर्षाणि पंच च सर्वपापविशुद्धात्मा प्राप्स्यसे सिद्धिमुत्तमां पुत्रपौत्रान्समासाद्य भुक्त्वा भोगान्यथेप्सितान् अन्ते च स्मरणं प्राप्य मामुपेष्यस्यसंशयं अन्यच्च ते वरं दद्मि सर्वलोकोपकारकं इदमाख्यानकवरं शीलानन्तव्रतादिकं शृणोत्यतिनरो यस्तु कुर्वन्व्रतमिदं शुभं सोचिरात्पापनिर्मुक्तः प्राप्नोति परमां गतिं गच्छ विप्र गृहं शीघ्रं पथा येनागतोह्यसि ॥ कौण्डिन्य उवाच ॥ स्वामिन्पृच्छामि मे ब्रूहि किंचित्कौतूहलं मया अरण्ये भ्रमता दृष्टं तन्न वेद्मि जगद्गुरो सच्चूतवृक्षः कस्तत्र का गौः कोऽत्र वृषभस्तथा कमलोत्पलकह्लारैः शोभितं सुमनोहरं मया दृष्टं सरोयुग्मं किंतत्पुष्करिणीद्वयं कः खरः कुञ्जरः कोऽत्र कोऽसौ वृद्धो द्विजोत्तमः ॥ अनन्त उवाच ॥ स चूतवृक्षो विप्रोसौ वेदविद्याविशारदः सोर्थितोपि न च प्रादाच्छिष्येभ्यस्तरुतां गतः सा गौर्वसुंधरा दृष्टा स्फलाया त्वया द्विज वृषो धर्मस्त्वया दृष्टः शाद्वलं समुपाश्रितः ब्राह्मण्यौ केचिदप्यास्तां भगिन्यौ ते परस्परं धर्मादिधर्मादयः किंचित्त्वन्निवेदयतोऽमिथः विप्राय न क्वचिद्दत्तमतिथौ निर्बलेन तथा भिक्षादत्तानि चार्थिभ्यस्तेन पापेन कर्मणा वीचिकल्लोलमालाभिर्गच्छन्तस्ते परस्परं खरः क्रोधस्त्वया दृष्टः कुञ्जरो मद उच्यते ब्राह्मणोऽसावनन्तोऽहं गुहा संसारगह्वरं इत्युक्त्वा देवदेवेशस्तत्रैवान्तरधीयत स्वप्नप्रायं तु तद्दृष्ट्वा ततः स्वगृहमागतः कृत्वानन्तव्रतं सम्यग्वर्षाणि नव पंच च भुक्त्वा सर्वमनन्तेन यथोक्तं यदनन्तरं अन्ते च स्मरणं प्राप्य ततोऽनन्तपुरं गतः तथा त्वमपि राजर्षे कथां शृणु व्रतं कुरु प्राप्स्यसे चिन्तितं सर्वमनन्तस्य वचो यथा यश्चतुर्दशवर्षे फलं प्राप्तं द्विजन्मना वर्षकेन तदाप्नोति कृत्वोपाख्यानकं व्रतं एतत्ते कथितं भूप व्रतानामुत्तमं व्रतं यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः येपि शृण्वन्ति सततं पठ्यमानं पठन्ति ये तेपि पापविनिर्मुक्ता यान्ति तद्धरेः पदम् संसारगह्वरगुहासु सुखं विहर्तुं वाञ्छन्ति ये कुरुकुलोद्भवशुद्धसत्वाः संपूज्य च त्रिभुवनेशमनन्तदेवं बध्नन्ति दक्षिणकरे वरडोरकं ते इति श्रीभविष्योत्तरे अनन्तव्रतकथा ॥ :: ॥

अथोद्यापनं युधिष्ठिर उवाच देवदेव समासीनव्रतस्यास्य फलं श्रुतं उद्यापनविधिं हित्वा न व्रतस्य फलं लभेत् तस्माद्यथा तथा कुर्यां हित्वा शाठ्यविवर्जितः कृष्ण उवाच मासि भाद्रपदे प्राप्ते परिपूर्णे व्रते ततः शुक्लायां तु चतुर्दश्यां ब्रह्मचारी भवेत्ततः एकभक्तेन नियमं कृत्वा भक्तिसमन्वितः स्नात्वा नद्यादिवापाने तीर्थप्रस्रवणे तथा सर्वौषधैः सर्वगंधैस्तिलकल्कै रथाह्वकैः वेदोक्तविधिना सम्यक्कृतपर्ययेष्पितृदेवताः नवनाभं सुमण्डलं सर्वतोभद्रमेव वा तस्योपरि न्यसेत्कुम्भमव्रणं सुदृढं नवं ताम्रपात्रसमायुक्तं पंचरत्नसमन्वितं सुवर्णडोरकं कृत्वा चतुर्दशग्रंथियुतं स्तत्र मध्यानन्तरूपं च माषकेण सुवर्णस्य रचितेन पिपार्थिव शय्यां सोपस्करां कृत्वा तत्रानन्तं प्रसिद्धजी लक्ष्म्या युतं वासुदेवं मुसलेन हलेन च कुम्भस्यात्र पात्रोपरि स्वर्णनिर्मितमनन्तं शय्योपरि न्यस्तमत्र मयमर्चयेद्दिनिकेचित् तत्र लक्ष्म्या युतमित्यादेरसंगतेः आचार्यं पूजयित्वा च वस्त्राभरणैस्तथा कुंकुमगुग्गुलीपवित्रैश्च भक्त्या तत्र समाहितः ततस्तु पूजयेद्देवमनन्तं विश्वरूपिणं वस्त्रयुग्मं च शुचि यस्माद्वासुदेवस्य वल्लभं अनन्तः प्रीयतामेन पीतवस्त्रेण मे सदा वस्त्रयुग्मसमाच्छन्नं पीतयज्ञो-

पवीतकं चंदनेनसुगंधेनकर्पूरागुरुमिश्रितं लेपयेदनंतवांगानिप्रीयतांमधुसूदनः गंधः
पुनःपुष्पाणिसंगृह्य पूजयेन्नामभिःपृथक् अनंतायनमःपादौगुल्फौसंकर्षणाय नमःकाला
त्मनेजानूजंघेविश्वरूपिणे कटिंवैविश्वरूपायमेढ्रंवैविश्वतेजसे नाभिंतुपद्मनाभायहृदये
परमात्मने कंठंश्रीकंठनाथायवाहूसर्वास्त्रधारिणे वाचस्पतेनमस्तुभ्यंमुखंसंपूजयेद्धरेः
ललाटेकेशवायेतिशिरःसर्वात्मनेनमः लोकात्मासर्वभूतात्मानिमेषब्रह्मसंभवः जन्ममृत्यु
जराव्याधिसंसारभयनाशनः वनस्पतिरसोदिव्योगंधाढ्यःसुमनोहरः आघ्रेयःसर्वदेवानां
धूपोयंप्रतिगृह्यतां आज्यंचवर्तिसंयुक्तंवह्निनायोजितंमया दीपंगृहाणदेवेशत्रैलोक्यति
मिरापहं अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं॥नैवेद्यंतेमयादेवदत्तंतत्प्रतिगृह्यतां पूगीफ
लंसपत्रंचसकर्पूरंमनोहरं पवित्रीकृतमत्यंतंतांबूलंप्रतिगृह्यतां एवंपूजांततःकृत्वा
गत्वाकुंडसमीपतः स्वगृह्योक्तविधानेनकृत्वाग्निस्थापनंतुयः प्रारभेच्चततोहोममश्व
त्थसमिधैस्तिलैः व्रीहिभिर्मिश्रितश्चापिहुतेनतुविधानतः ततःपुरुषसूक्तेनअतोदेवेति
वापुनः इदंविष्णुर्विचक्रमेशतमष्टोत्तरंहुनेत् चरुहोमस्ततःकार्यो मंत्रैरेतैःविचक्षणः
अनंतायचकालायअहोरात्रायवैनमः अर्द्धमासायमासायऋतुभ्यश्चतथापुनः॥मद
नरत्ने जुहुयाद्गुरुरित्यस्याग्रे सर्वंकृत्वेतियथाक्रममित्यंतपाठः सर्वंकृत्वाविधानेनमंत्रै
रेतैर्विचक्षणः एतैर्वक्ष्यमाणैश्चमंत्रैर्जुहुयादितिसंबंधः मंत्राश्चैते अनंतायस्वाहा
कालायस्वाहा अहोरात्रायस्वाहा अर्धमासायस्वाहा मासायस्वाहा ऋतुभ्यःस्वाहा संव
त्सरायस्वाहा ततोव्याहृतिहोमः सर्वप्रायश्चित्तंचदक्षिणा आज्यतिलैःस्विष्टकृतं प्रजा
पतिभ्योजुहुयात् ततोवैलोकपालांश्चग्रहान्पूज्ययथाक्रमं गीतवादित्रनिनदैःकृत्वापूर्णा
हुतींततः पुराणश्रवणैस्तद्वद्रात्रिशेषंनयेद्बुधीति रात्रौहोमोनभवति एतज्जानेएवंदिनेएव
कार्यः अथवा जागरणांते प्रातर्होमःकार्यइतिसंप्रदायानुसारतः एवंप्रोक्तेनविधानेन
पूजयेद्विश्वरूपिणं पूजयित्वाहरिंदेवमाचार्यंपूजयेत्ततः परिधाप्यसपत्नीकं वस्त्राल
कारभूषणैः मंत्रैःसंपूज्यविधिवद्धेनुंदत्वाविधानतः सुरभीदेवमातानित्यंविष्णुपदे
स्थिता ग्रासंगृह्णमयादत्तंगोमातस्त्वनुमर्हसि गावोममाग्रतःसंतुगावोमेसंतुपृष्ठतः गावो
मेहृदयेसंतुगवांमध्येवसाम्यहं मंत्रेणानेनसंपूज्यआचार्यायनिवेदयेत् गोदानस्यवि
धानार्थायदद्यात्स्वर्णंयथाविधि अनंतंसपरीवारमाचार्यायनिवेदयेत् ततआमंत्रि
तान्विप्रान्वैचतुरश्चतुर्दश वस्त्रोपवीतैःसंपूज्यभोजयेद्व्यविस्तरैः ततस्तुदक्षिणांतेभ्यो
वित्तशाठ्यविवर्जितः स्वशक्त्यादक्षिणांदद्यादाचार्यायसमापयेत् क्रियाहीनंभक्तिहीनं
द्रव्यहीनंतथैवच मंत्रहीनंपठेत्पश्चाद्भुतसंपूर्णतांहिनवे दीनानाथकृपणेभ्यश्चदद्याच्चैव
तथान्नं ततोहृष्टैःसमस्तैश्चपुत्रसंबंधिबांधवैः यथोपपन्नंभोक्तव्यंकृत्वामानसम
व्ययं आचम्यचशुचिर्भूत्वाचिंत्योविश्वतनुर्हरिः एवंकृतेनयज्ञेष्टकर्मणासुजनार्दनः अ
नंतरूपीभगवान्तुष्टोभवतिसर्वदा व्रतस्यफलमाप्नोतिविष्णुलोकेमहीयते इतिश्रीहे
माद्रौभविष्येसोद्यापनमनंतव्रतं॥

अथहेमाद्रिमदनरत्नेलिखितभविष्यपुराणानुयायी अनंतव्रतोद्यापनप्रयोगः
व्रतग्रहणादिनादिकचतुर्दशवर्षासमाप्तिदिनेत्रयोदश्यांकृतैकभुक्तस्तदनंतरंशुक्लच
तुर्दश्यां ब्राह्मेमुहूर्तेस्नात्वाउपवासनियमवृतोयथासंभवंप्रायतीर्थादौसर्वौषधितिलकल्का

मलैः स्नात्वा स्नानांगतर्पणांतं नित्यं कर्म निर्वर्त्य गृहमागत्य मृदा वेदिं कृत्वा तत्र नवनाभं सर्वतोभ
द्रं वा विलिख्य पंचवर्णैर्यथासंभवं सस्यधान्यादिभिः संपूज्य सपवित्रपाणिराचम्य मासपक्षाद्यु
ल्लिख्य चरितानंतव्रतपरिपूर्णतायै उत्तरांगमुद्यापनमहं करिष्ये इति संकल्प्य तत्रादौ नि
र्विघ्नतासिद्धये गणपतिं पूजयेत् तत आचार्यमासनवस्त्रदक्षिणाकुंडलादिभिर्वृत्वा पूजयेत्
तत आचार्यो यदत्र संस्थितं भूतं स्थानमाहृत्य सर्वदा स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु अ
पवित्रः पवित्रो वेति पंचगव्येन प्रोक्ष्य सर्वतोभद्रकरणपक्षे तत्र सर्वतोभद्रे देवता आवाह्य
पूजयेत् सर्वतोभद्रनिर्माणप्रकारो देवतापूजादिप्रकारश्च परिभाषायामुक्तः सोऽत्रापि यथासंभ
वमनुष्ठेयः ततो मंडलमध्ये महीद्यौरित्यादिकलशस्थापनमुक्तप्रकारेण कार्य्यं । तत्र ताम्रपू
र्णपात्रयुतं कलशं स्थापयेत् तस्मिन्माषमात्रादिस्वर्णनिर्मितं चतुर्दशग्रंथियुतानंतं स्थापयेत्
तदुत्तरतः सुविस्तृतां शय्यामास्तीर्य तत्रापि स्वर्णडोरकप्रतिमायां श्रीमदनंताय नम इति मंत्रे
णावाहनादि पंचामृतस्नपनानंतरं वार्षिकपूजावत्कुर्यात् ततो वस्त्रयुग्मं शुचिर्यस्माद्वासुदेवां
गवल्लभं अनंतः प्रीयतां तेन वस्त्रयुग्मेन सर्वदा इति मंत्रेण वस्त्रयुग्मं यज्ञोपवीतं च समंत्र
कं समर्प्य चंदनेन सुगंधेन कर्पूरागुरुगंधिनालेपयेदंतवांगानि प्रीयतां मधुसूदन इति चंद
नं समर्प्य माल्यादीनीति पुष्पाणि समर्प्य पुष्पाणि गृहीत्वांगपूजां कुर्यात् अनंताय नमः पादौ पू०
संकर्षणाय नमः गुल्फौ । कालात्मने जानुनी पू० विश्वरूपिणे जघनं । विश्वरूपाय कटिं विश्वसाक्षिणे
मेढ्रं पू० । पद्मनाभाय नाभिं पूजयामि । परमात्मने हृदयं पू० । श्रीकंठाय कंठं । सर्वास्त्रधारिणे बाहू०
वाचस्पतये मु० केशवाय ललाटं पू० सर्वात्मने । शिरः पूजयामि ततः कालात्मा सर्वभूतात्मा निमेषत्रु
टिसंभव जन्ममृत्युजराव्याधिसंसारभयनाशन इति मंत्रेण पुष्पाणि समर्प्य धूपदीपादि दत्वा पू
जासाद्गुण्यार्थं दक्षिणां च दत्वा नीराजनं कुर्यात् ततः कुंभात्पश्चिमभागे कुंडं स्थंडिलं वा निर्माय त
त्र उद्यापनांगभूतं होमं करिष्ये इति संकल्प्य स्थंडिलोपलेपनाद्यग्निप्रतिष्ठापनांतं कृत्वा अन्वादध्यात्
तत्रेत्थं ॐ मद्यास्मिन्नाहितेऽग्नौ जातवेदसमिद्धेन प्रजापतिं चाघारदेवते आज्येन अग्नीषोमौ चक्षुषी
आज्येन प्रधानदेवतामनंतमश्वत्थसमित्तिलव्रीहियवचरुतद्द्रव्यैः प्रत्येकमष्टोत्तरशताष्टाविंशत्यष्टान्य
तमसंख्यया पुनरनंतं कालसंवत्सरर्तुमासार्धमाससंवत्सरं अग्निं वायुं सूर्यं प्रजापतिं च वरुणमे
कैकया आज्याहुत्या ग्रहान्समिदाज्येन चरुद्रव्येण प्रत्येकमष्टोत्तराष्टाष्टान्यतमसंख्यया वा सर्वतोभद्रपी
ठदेवता आज्येनैकैकयाहुत्या स्विष्टकृतं प्रजापतिं चाज्यशेषेण ततस्तिलैः दध्यन्नहवनेन रुद्रमित्यादि सर्व
माज्यभागांतं हुत्वोक्तद्रव्येण पुरुषसूक्तेन अतो देवा इत्यनेन इदं विष्णुरित्यनेन चान्वाधानक्रमेण जुहुयात्
ततः प्रायश्चित्तहोमं समाप्य लोकपालान् ग्रहांश्च पंचोपचारैः संपूज्य बलिदानं च कृत्वा गीतवादित्रनिनदैः
पूर्णाहुतिं जुहुयात् पुराणश्रवणजागरणादिभिर्निशामतिवाह्य परेद्युः कृत्वाह्निको यजमानः पूर्वदिन
स्थापितमनंतं सपरिवारं मंडलांतं पूर्ववत्पूजयित्वा आचार्यं प्रपूजयेत् ततो गावो ममाग्रतः संतु इत्य
नेन धेनुं पूज्य सुरभी वैष्णवी माता इति मंत्रेण तस्यै ग्रासं दत्वा आचार्याय तां धेनुं दद्यात् ततः प्रति
मां शय्याकलशादियुक्तामाचार्याय निवेदयेत् ततः पूर्वनिमंत्रितान् चतुर्दश ब्राह्मणान् वस्त्रयज्ञो
पवीतादिभिः संपूज्य नानाविधेनान्नेनाचार्यसहितान्भोजयित्वा तेभ्यो वस्त्रकलशप्रतिमादिसहितां
अनंतव्रतोद्यापनसामग्रीं दत्वा दक्षिणां च दत्वा आशिषो गृहीत्वा विसर्जयेत् तत आचार्याय दक्षि
णां दत्वा क्षमापयेत् तत्र मंत्रः क्रियाहीनं द्रव्यहीनं भक्तिहीनं तथैव च मंत्रहीनं कृतं यच्च परिपू
र्णं तदस्तु मे इति पठन् क्षमाप्य स्वयं भुंजीत इत्यनंतव्रतोद्यापनप्रयोगः ॥ ॥ ॥ ॥

अथानन्तडोरकप्रायश्चित्तं ॥ युधिष्ठिर उवाच अनन्तव्रतमाहात्म्यं कृत्स्नं कृष्ण त्वयोदितं भग-
वन् डोररूपेण भाग्यदोसि महात्मनां डोरः प्रमादतो नश्येद्यदि स्याद्धि दितं जनैः तदा किंकरणी-
यं स्याद्व्रतं त्रैलोक्यपावनं ॥ कृष्ण उवाच साधु पृष्टं त्वया राजन् वक्ष्यामि व्रतनिष्कृतिं फलं लोक-
स्य सर्वस्य रक्षार्थं शृणु तत्क्रमात् डोरे नष्टे महान्दोषः प्रभवेद्व्रतिनामिह तस्मात्तद्दोषशान्त्यर्थं
प्रायश्चित्तं विधीयते गुरुं प्रदक्षिणीकृत्य नमस्कृत्य समाहितः विज्ञाप्य डोरनाशं च कृत्वा डोरं
व्रती ततः हव्यवाहं प्रतिष्ठाप्य तस्मिन्ध्यात्वा हरिं परं आज्यमन्नावधिश्रित्य दद्याद्धि प्रायवाससं
अष्टोत्तरशतं हुत्वा मूलमंत्रेण वैलवः नाममंत्रेण जुहुयाद्द्वादशार्णयुतेन वा केशवादिस-
कृद्धुत्वा प्रायश्चित्तं तु शक्तितः केशवादिचतुर्विंशतिनामभिर्होमं कृत्वा पूर्णाहुतिं ततो हुत्वा हो-
मशेषं समापयेत् व्रतच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि वचनाद्भूमिदेवानां सर्वं संपूर्णतां व्रजेत्
मंत्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन यत्पूजितं मया देव परिपूर्णं तदस्तु मे आचार्यपूज-
नं कार्यं दक्षिणाद्यैर्नृपोत्तम एवं शांतिविधिं कृत्वा पूर्ववद्व्रतमादिशेत् प्रायश्चित्तमकृत्वा तु
य एवं स्याद्व्रते क्वचित् व्याधिनाग्रसितो देहः श्रिया संत्यज्यते गृहं डोरस्यातिक्रमे चैव चरेत्सर्व-
मिदं बुधः यद्यदं कुरुते पार्थ तस्यायुः पुत्रसंपदः भवंतीति विशेषः इत्यनन्तडोरप्रायश्चित्तं ॥

अथापरमनंतव्रतोद्यापनं ॥ त्वत्प्रसादाच्छ्रुतं कृष्ण मयानंतव्रतं शुभं इदानीं ब्रूहि मेनं-
तव्रतोद्यापनमुत्तमं ॥ श्रीकृष्ण उवाच यदा चित्तस्य वित्तस्य संपत्तिर्जायते शुभा तदा चोद्याप-
नं कुर्यात् शुभलग्ने शुभे दिने संकल्पयेदुपावासं देशकालावनुस्मरन् ततो नदीं तडागं वा गत्वा
सर्वौषधैस्तथा तिलकल्केनामलकैः स्नायान्मज्जनपूर्वकं तीरे मंडपिकां कृत्वा गृहे वापि सुशोभितं
तन्मध्ये उपविश्याथ देशकालौ स्मरेत्ततः गणेशं पूजयित्वाथ पुण्याहं वाचयेद्द्विजैः आचार्यं वरये-
द्धीमान्वेदांगपारगं ब्राह्मणान् ऋत्विजश्चापि चतुर्दश फलादिना सर्वान्वस्त्रालंकरणैर्जलपात्र-
दिनार्चयेत् सौवर्णं राजतं वापि ताम्रजं वापि मृण्मयं कुंभं न्यसेत्तदुपरि सुधाचंदनचर्चितं तस्मि-
न् जलं गंधपुष्पफलपल्लवमृत्तिकाः क्षिप्त्वा रत्नहिरण्यादि वाससावेष्टयेत्ततः सौवर्णं राजतं
ताम्रजं वंशजमेव च पात्रं तदुपरि न्यस्य पट्टकूलादिकं शुभं प्रसार्य तदुपर्यष्टदलं चंदना-
दिना पद्मं विरच्य तन्मध्ये नंतमूर्तिं निधाय च पलेन वा तदर्धेन तदर्धेनापि वा कृतां सौवर्ण-
मयीं शुभां स्वचक्रगदाब्जकां आवाहनाद्युपचारैः पूजयेत्सुसमाहितः पंचामृतेन स्नपये-
त्तत्र वसनद्वयं पट्टकूलादिकं पीतमर्पयित्वार्चयेद्व्रती गंधपुष्पादिभिर्नानाभक्ष्यैर्नानाफलै-
स्तथा एवं संपूज्य विधिवद्दिधिनावार्षिकेण तु पुष्पैः संपूजयेदंगान्यनंतस्य च नामभिः अनं-
ताय नमः पादौ गुल्फौ संकर्षणाय च कालात्मने जानुनी च जघनं विश्वरूपिणे विश्वनाथाय वै गुह्यं
कटिं वै विश्वरूपिणे नाभिं च पद्मनाभाय हृदयं परमात्मने कंठं श्रीकंठनाथाय बाहून्सर्वा-
स्त्रधारिणे मुखं च वाचस्पतये च हृषीकपिलाय च ललाटं केशवायेति शिरः सर्वात्मने नमः
नमः पादौ पूजयामीत्येवमादि प्रपूजयेत् एवं पूजां विधायैवं रात्रौ जागरणं चरेत् गीतवादि-
त्रनृत्यादिपुराणश्रवणान्वितं प्रतिमायां प्रकुर्वीत पूजां गंधादिना हरेः नानाफलानि भक्ष्याणि
चोपवासी निवेदयेत् ततः प्रभातसमये स्नात्वाचार्यादिभिः सह अनंतं पूजयेत्प्राग्वज्जुहुयात्त-
स्मिन्ने ततः कुंडे वा स्थंडिले कुर्यादग्निस्थापनपूर्वकं आज्यभागांतमाचार्यः स्वगृह्योक्तविधान-
तः ततोऽश्वत्थसमिद्भिश्च तद्दलाभेऽन्ययापि वा दधिमध्वाज्यदिग्धाभिस्तिलैर्वा पायसेन च आ-
ज्येन च प्रतिद्रव्यमष्टोत्तरसहस्रकं अष्टोत्तरशतं वाष्टविंशतिं जुहुयात्क्रमात् अनंतो देव इति मंत्रेण

स्त्रीणांवैनाममंत्रतः प्रणवाद्यंचतुर्थ्यंतंनमोंतानंततनामतः नाममंत्रैश्चजुहुयाश्चतुर्दशभिरादरा
त् ओंअनंतायस्वाहा १ कपिलायस्वाहा २ शेषायस्वाहा ३ कलांअनेस्वाहा ४ अहोरात्रायस्वाहा
५ अर्धमासायस्वाहा ६ मासायस्वाहा ७ षड्ऋतुभ्यःस्वाहा ८ संवत्सरायस्वाहा ९ परिव
त्सरायस्वाहा १० उषसेस्वाहा ११ कलायैस्वाहा १२ काष्टायैस्वाहा १३ मुहूर्तायस्वाहा १४
समिदाज्यैरेवंचप्रत्येकंजुहुयात्क्रमात् ततःस्विष्टकृदारभ्यपूर्णापात्रांतमाचरेत् जप्त्वापुरुष
सूक्तंतुस्तुत्वानंतंसुरोत्तमं पूर्णाहुतिंचजुहुयाद्धोमांतेविष्णुमित्यृचा होमशेषंसमाप्याथकु
त्वाग्र्युपस्थानं पूजयित्वाहरिंदेवमाचार्यंपूजयेत्ततः वस्त्रालंकारभूषाद्यैस्ततोधेनुंसम
र्पयेत् पयस्विनींसुशीलांचवस्त्रालंकारभूषितां स्वर्णशृंगींरौप्यखुरांताम्रपृष्ठांसुवाससं कां
स्यदोहांरत्नपुच्छांनिष्ककंठींसवत्सकां गांवामंत्रेणसंपूज्याचार्यायचसमर्पयेत् मंत्रास्तु
गवामंगेषुतिष्ठंति गावोममाग्रतः संतुगावोमेसंतुपृष्टतः गावोमेहृदयेसंतुगवांमध्येवसाम्यहं
मंत्रमेतत्समुच्चार्यवस्त्रालंकारभूषणैः तपत्नीपूजयित्वाथब्राह्मणांस्तोषयेत्ततः ऋत्विजः
पूजयित्वाथतेभ्योदत्वाचदक्षिणां चतुर्दशचकुंभांश्चपक्वान्नपरिपूरितान् वस्त्रोपवीतंद
द्याद्वाप्यनंतःप्रीयतामिति आचार्यादीन्भोजयित्वापूर्णतांवाचयेत्ततः यथानंतंविसृज्यापि
गृह्णीयादाशिषस्ततः भक्तियुक्तोनमस्कृत्यब्राह्मणांस्तान्विसर्जयेत् ततोहृष्टोवंधुयुतो
भुंजीतसुसमाहितः एवंकृतेनंतफलदातानंतोनसंशयः ॥ इतिभविष्योत्तरेअनं-
तव्रतोद्यापनविधिः ॥

अथसंक्षिप्तप्रकारेणानंतव्रतव्रतोद्यापनम् व्रतोद्यापनकौस्तुभे तत्रादौतिथ्यादिसं-
कीर्त्यममजन्मजन्मांतरार्जितनिखिलपापक्षयपूर्वकोत्तमसिद्धिपुत्रपौत्रपरिवृत्त विविधभोगधनधान्यपरमग
तिप्राप्तिकामनयाचतुर्दशवर्षाचरितानंतव्रतोद्यापनंकरिष्ये इतिसंकल्प्यनित्यविधि
विधानात्स्वयंदेवंसंपूज्य ॥ ॥ ततोवृत्ताचार्यः — सर्वतोभद्रेब्रह्मा
दिदेवताआवाह्यतदुपरिकल्पोक्तविधिनाप्रतिष्ठाप्यतत्रयमुनामावाह्यश्रीसूक्तेननाम-
मंत्रेणवासंपूज्य तदुपरिअव्रणपरिपूर्णपात्रंनिधायतत्राष्टदलंविलिख्यतत्रस्वर्णनिर्मि-
तंचतुर्दशग्रंथियुतामनंतप्रतिमांसहस्रशीर्षेतिपुरुषसूक्तेनस्थापयेत् तदुत्तरतःसप्त-
धान्योपरिविस्तृतरौप्यपात्रेस्वर्णनिर्मितलक्ष्मीसहितंहैमंहलमुसलोपेतमनंतंदेवं अनंत
देवेतिमंत्रेणइदंविष्णुरितिमंत्रेणवास्थापयेत् स्वर्णडोरकप्रतिमयोःपुरुषसूक्तेनश्रीमदनं
तायनमः ॥ इतिनाममंत्रेणवापूजावार्षिकवत्कार्या ॥ ।०।

अथग्रंथिदेवताः विष्णुः १ अग्निः २ आदित्यः ३ सहस्राक्षः ४ पितामहः ५ इंद्रः ६
पिनाकी ७ विघ्नेशः ८ स्कंदः ९ सोमः १० वरुणः ११ पवनः १२ पृथ्वी १३ वसवः १४
ततःषाणांप्रतिमायाःशंखचक्रगदापद्मनाममंत्रेण तदहरिनाममंत्रेण अनंतंकपिलं
दक्षंमनुंप्रजापतिं संकर्षणं बालंवनमालिनं त्रिविक्रमं अहोरात्रं अर्धमासं मासं ऋतुं
अयनेसंवत्सरंपरिवत्सरं इडावत्सरं अनुवत्सरं संवत्सरं प्रजाध्यक्षं अजितं सर्वभूत
प्रद्युम्नं अनिरुद्धं श्रीधरं पुरुषोत्तमं पद्मनाभं विश्वरूपं त्रिविक्रमं हंसं अच्युतं तदहरिं-
द्रादीन् तदहरिष्टवसून् तदहरिरेकादशरुद्रान् तदहरिरश्विन्यादिसप्तविंशतिनक्षत्राणि
तदहरिर्ब्राह्म्यादिसप्तमातॄः तदहरिश्चैत्रादिद्वादशमासान् तदहरिर्दीप्तादिशक्तीः दीप्तास
त्मापभाप्रज्ञाविभूतिर्विष्णुतोमुखी अमोघाविद्युताख्यंहरिविष्कुंभादियोगान् आवाह्य

अथानंतडोरकप्रायश्चित्तं ॥ युधिष्ठिर उवाच अनंतव्रतमाहात्म्यं कृष्ण त्वयोदितं भग-
वन् डोररूपेण भाग्यदोसि महात्मनां डोरः प्रमादतो नष्टो यदि स्याद्दिति जनैः तदा किं करणी-
यं स्याद्व्रतं त्रैलोक्यपावनं ॥ कृष्ण उवाच साधु पृष्टं त्वया राजन् वक्ष्यामि व्रतनिष्कृतिं फलं लोक-
स्य सर्वस्य रक्षार्थं शृणु तत्क्रमात् डोरे नष्टे महान्दोषः प्रभवेद्व्रतिनामिह तस्मात्तद्दोषशांत्यर्थं
प्रायश्चित्तं विधीयते गुरुं प्रदक्षिणीकृत्य नमस्कृत्य समाहितः विज्ञाप्य डोरनाशं च कृत्वा डोरं
अनंतं ततः हव्यवाहं प्रतिष्ठाप्य तस्मिन्ध्यात्वा हरिं परं आज्यमग्नावधिश्रित्य दद्याद्विप्राय वाससं
अष्टोत्तरशतं हुत्वा मूलमंत्रेण वैष्णवः नाममंत्रेण जुहुयाद्द्वादशार्णयुतेन वा केशवादिस-
हस्रं वा प्रायश्चित्तं तु शक्तितः केशवादिचतुर्विंशतिनामभिर्होमं कृत्वा पूर्णाहुतिं ततो हुत्वा हो-
मशेषं समापयेत् व्रतच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि वचनाद्भूमिदेवानां सर्वं संपूर्णतां व्रजेत्
मंत्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन यत्पूजितं मया देव परिपूर्णं तदस्तु मे आचार्यं पूज-
नं कार्यं दक्षिणाद्यैर्नृपोत्तम एवं शांतिविधिं कृत्वा पूर्ववद्व्रतमादिशेत् प्रायश्चित्तमकृत्वा तु
पूजयन् स्याद्व्रतं क्वचित् व्याधिना ग्रसितो देहः श्रिया संत्यज्यते गृहं डोरस्यातिक्रमे चैव चरेत्सर्व-
मिदं बुधः यदिदं कुरुते पार्थ तस्यायुः पुत्रसंपदः भवंतीति शेषः इत्यनंतडोरप्रायश्चित्तं ॥

अथापरमनंतव्रतोद्यापनं ॥ त्वत्प्रसादाच्छ्रुतं कृष्ण मयानंतव्रतं शुभं इदानीं ब्रूहि मेऽनं-
तव्रतोद्यापनमुत्तमं ॥ श्रीकृष्ण उवाच यदा चित्तस्य वित्तस्य संपत्तिर्जायते शुभा तदा चोद्याप-
नं कुर्याच्छुभलग्ने शुभे दिने संकल्पयेदुपावासं देशकालावनुस्मरन् ततो नदीतडागं वा गत्वा
सर्वौषधैस्तथा तिलकल्केनामलकैः स्नायान्मज्जनपूर्वकं तीरे मंडपिकां कृत्वा गृहे वापि सुशोभितं
तन्मध्ये उपविश्याथ देशकालौ स्मरेत्ततः गणेशं पूजयित्वाथ पुण्याहं वाचयेद्द्विजैः आचार्यं वरये-
द्धीमान्युतं वेदांगपारगं ब्राह्मणानृत्विजश्चापि चतुरः फलादिना सर्वान्वस्त्रालंकरणैर्जलपात्रा-
दिनार्चयेत् सौवर्णं राजतं वापि ताम्रजं वापि मृण्मयं कुंभं न्यसेत्तदुपरि सुधाचंदनचर्चितं तस्मि-
न्जलं गंधपुष्पफलपल्लवमृत्तिकाः क्षिप्त्वा रत्नहिरण्यादि वाससा वेष्टयेत्ततः सौवर्णं राजतं
ताम्रजं वैणवं एवमेव च पात्रं तदुपरि न्यस्य पट्टकूलादिकं शुभं प्रसार्य तदुपर्यष्टदलं चंदना-
दिना पद्मं विरच्य तन्मध्ये अनंतमूर्तिं निधाय च पलेन वा तदर्धेन तदर्धेनापि वा कृतां सौवर्णीं
मथायुधां शंखचक्रगदाब्जकां आवाहनाद्युपचारैः पूजयेत्सुसमाहितः पंचामृतेन स्नपये-
त्तत्र वसनद्वयं पट्टकूलादिकं पीतमर्पयित्वार्चयेद्व्रती गंधपुष्पादिभिर्नानाभक्ष्यैर्नानाफलै-
स्तथा एवं संपूज्य विधिवद्विधिना वार्षिकेण तु पुष्पैः संपूजयेदंगान्यनंतस्य च नामभिः अनं-
ताय नमः पादौ गुल्फौ संकर्षणाय च कालात्मने जानुनी च जघनं विश्वरूपिणे विश्वनाथाय वै गुह्यं
कटिं वै विश्वरूपिणे नाभिं च पद्मनाभाय हृदयं परमात्मने कंठं श्रीकंठनाथाय बाहू सर्वा-
स्त्रधारिणे मुखं चैव वाचस्पतये चक्षुषी कपिलाय च ललाटं केशवायेति शिरः सर्वात्मने नमः
नमः पादौ पूजयामीत्येवमादि प्रपूजयेत् एवं पूजां विधायैवं रात्रौ जागरणं चरेत् गीतवादि-
त्रनृत्यादिपुराणश्रवणान्वितं प्रतिमायां प्रकुर्वीत पूजां गंधादिनादरैः नानाफलानि भक्ष्याणि
चोपवासी निवेदयेत् ततः प्रभातसमये स्नात्वाचार्यादिभिः सह अनंतं पूजयेत्प्राग्वज्जुहुयात्म-
श्चिमे ततः कुंडे वा स्थंडिले कुर्यादग्निस्थापनपूर्वकं आज्यभागांतमाचार्यः स्वगृह्योक्तविधान-
तः ततोऽष्टसमिद्भिश्च तदलाभे त्वन्यथापि वा दधिमध्वाज्यदिग्धाभिस्तिलैर्वा पायसेन च आ-
ज्येन च प्रतिद्रव्यमष्टोत्तरसहस्रकं अष्टोत्तरशतं वापि शक्तितः ...मात् अतो देवेतिमंत्रेण

स्त्रीणांवैनाममंत्रतः प्रणवाद्यंचतुर्थ्यंतंनमोंतानंतनामतः नाममंत्रैश्चजुहुयाच्चतुर्दशभिराद्रा
त् ओंअनंतायस्वाहा १ कपिलायस्वाहा २ शेषायस्वाहा ३ कालाग्नयेस्वाहा ४ अहोरात्रायस्वाहा
५ अर्धमासायस्वाहा ६ मासायस्वाहा ७ षड्ऋतुभ्यःस्वाहा ८ संवत्सरायस्वाहा ९ परिव
त्सरायस्वाहा १० उषसेस्वाहा ११ कलायैस्वाहा १२ काष्ठायैस्वाहा १३ मुहूर्तायस्वाहा १४
समिदाज्यैरेवंचप्रत्येकंजुहुयात्क्रमात् ततःस्विष्टकृदारभ्यपूर्णपात्रांतमाचरेत् ततःपुरुष
सूक्तंतुस्त्वानंतंसुरोत्तमं पूर्णाहुतिंचजुहुयाद्धोमांतेविश्वमित्यृचा होमशेषंसमाप्याथकृ
त्वाथपुरुषमप्यथ पूजयित्वाहरिंदेवमाचार्यंपूजयेत्ततः वस्त्रालंकारभूषाद्यैस्ततोधेनुंसम
र्पयेत् पयस्विनींसुशीलांचवस्त्रालंकारभूषितां स्वर्णशृंगींरौप्यखुरांताम्रपृष्ठांसुवाससं कां
स्यदोहांरत्नपुच्छांनिष्ककंठींसवत्सकां गांवामंत्रेणसंपूज्याचार्यायचसमर्पयेत् मंत्रास्तु
गवामंगेषुतिष्ठंति गावोममाग्रतःसंतुगावोमेसंतुपृष्ठतः गावोमेहृदयेसंतुगवांमध्येवसाम्यहं
मंत्रमेतत्समुच्चार्य्यवस्त्रालंकारभूषणैः तमत्नीपूजयित्वाथब्राह्मणांस्तोषयेत्ततः ऋत्विजः
पूजयित्वाथतेभ्योदत्वाचदक्षिणां चतुर्दशचकुंभांश्चपक्वान्नपरिपूरितान् वस्त्रोपवीतंद
द्याच्चाथानंतःप्रीयतामिति आचार्यादीन्भोजयित्वापूर्णतांवाचयेत्ततः अथानंतंविसृज्यापि
गृह्णीयादाशिषस्ततः भक्तियुक्तोनमस्कृत्यब्राह्मणांस्तान्विसर्जयेत् ततोहृष्टोवंधुयुतो
भुंजीतसुसमाहितः एवंकृतेनंतफलदातानंतोनसंशयः ॥ इतिभविष्योत्तरेअनं-
तव्रतोद्यापनविधिः ॥

अथसंक्षिप्तप्रकारेणानंतव्रतव्रतोद्यापनम् व्रतोद्यापनकौमुद्यां तत्रादौतिथ्यादिसं-
कीर्त्यात्मनोनिखिलपापक्षयपूर्वोत्तमसिद्धिपुत्रपौत्रपूरित विविधभोगधनधान्यपरमग
तिप्राप्तिकामनयाचतुर्दशवर्षाचरितानंतव्रतोद्यापनंकरिष्ये इतिसंकल्प्यनित्यविधि
विधानास्वयंदेवंसंपूज्य ॥ ॥ ततोवृताचार्य्यः — सर्वतोभद्रेब्रह्मा
दिदेवताआवाह्यतदुपरिकलशंविधिनाप्रतिष्ठाप्यतत्रयमुनामावाह्यश्रीसूक्तेननाम-
मंत्रेणवासंपूज्य तदुपरिअक्षतपरिपूर्णपात्रंनिधायतत्राष्टदलंविलिख्यतत्रस्वर्णनिर्मि-
तंचतुर्दशग्रंथिदुग्धनामनंतप्रतिमांसहस्रशीर्षेतिपुरुषसूक्तेनस्थापयेत् तदुत्तरतःसप्त-
थान्योपरिविस्तृतरौप्यशय्यांस्वर्णनिर्मितलक्ष्मीसहितंहैमंहलमुसलोपेतमनंतंदेवं अनं
देवेतिमंत्रेणइदंविष्णुरितिमंत्रेणवास्थापयेत् स्वर्णडोरकप्रतिमयोःपुरुषसूक्तेनश्रीमदनं
तायनमः ॥ इतिनाममंत्रेणवापूजावार्षिकवत्कार्य्या ॥ १०१
अथग्रंथिदेवताः विष्णुः १ अग्निः २ आदित्यः ३ सहस्राक्षः ४ पितामहः ५ इंद्रः ६
पिनाकी ७ विघ्नेशः ८ स्कंदः ९ सोमः १० वरुणः ११ पवनः १२ पृथ्वी १३ वसवः १४
ततःशय्यायांप्रतिमायाःशंखंचचक्रंगदांपद्मंनाममंत्रेण तद्दक्षिणेनाममंत्रेण अनंतंकपिलं
दक्षंमनुंप्रजापतिं संकर्षणं वालंवनमालिनं त्रिविक्रमं अहोरात्रं अर्धमासं मासं ऋतुं
अयनेसंवत्सरंपरिवत्सरं इडावत्सरं अनुवत्सरं संवत्सरं प्रजाध्यक्षं अजितं सर्वभूतं
प्रद्युम्नं अनिरुद्धं श्रीधरं पुरुषोत्तमं पद्मनाभं विश्वरूपं त्रिविक्रमं हंसं अच्युतं तद्दक्षि-
णादीन् तद्दक्षिणेअष्टवसून् तद्दक्षिणेएकादशरुद्रान् तद्दक्षिणेअश्विन्यादिसप्तविंशतिनक्षत्राणि
तद्दक्षिणेब्राह्म्यादिसप्तमातॄः तद्दक्षिणेचैत्रादिद्वादशमासान् तद्दक्षिणेदीप्तादिशक्तीः दीप्तास
क्ष्माप्रभाप्रज्ञाविभूतिर्विष्णुतोमुखी अमोघाविद्युतानंतहरिर्विष्कुंभादियोगान् आवाह्य

नाममंत्रैरेवपूजाकार्य्या पीठस्य परितः पक्वान्नसहितान् चतुर्दशकुंभान्संस्थाप्य चतुर्दशनामभिः पूजयेत् नाममंत्रा अनंतायनमः १ संकर्षणायनमः २ कालायनमः ३ शेषायनमः ४ वासुदेवायनमः ५ विश्वनाथायनमः ६ विश्वरूपायनमः ७ पद्मनाभायनमः ८ दामोदरायनमः ९ जगन्नाथायनमः १० चतुर्भुजायनमः ११ श्रीकंठायनमः १२ केशवायनमः १३ सर्वात्मनेनमः इतिसर्वेषांपूजा ततोंगपूजा अनंताय पादौपूजयामि १ संकर्षणाय गुल्फौपू० २ कालायजंघेपू० ३ शेषायजानुनीपू० ४ वासुदेवायऊरूपू० ५ विश्वनाथायगुह्यंपू० ६ विश्वरूपायकटिंपू० ७ पद्मनाभायनमः ८ दामोदरायउदरंपू० ९ जगन्नाथाय हस्तौपू० चतुर्भुजायबाहुद्वयंपू० ११ श्रीकंठायनमः कंठंपू० १२ केशवायललाटं पू० १३ सर्वात्मनेनमः शिरः पूजयामि अनंतायनमः सर्वांगंपूजयामि ततोधूपादिमंत्रपुष्पांतसर्वोपचारैः संपूज्य नमस्कुर्यात् नमस्तेदेवदेवेश नमस्तेधरणीधर नमस्तेसर्वनागेंद्र अनंतायनमोनमः इतिनमस्कारः ॥ ॥ ततः प्रार्थना अनंतकामान्मेदेहि सर्वकामफलप्रद अनंतायनमस्तुभ्यं पुत्रपौत्रविवर्द्धन व्रतेनानेनसुप्रीतोभवत्विहसदामम ततः पुराणपाठजागरणादिभिर्निशामतिवाह्य प्रातरग्निंप्रतिष्ठाप्य अन्वादध्यात् तत्रप्रधानंश्रीमदनंतश्चंद्रसमित् तिलव्रीहियववहुतं पापसद्द्रव्यैः प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः पीठदेवताः आवरणदेवताश्चैकैकयाआज्याहुत्याब्रह्मादिदेवताश्चैकैकया [illegible]हुत्वा यष्टव्यस्थापनोक्तनाममंत्रैः सकलोहोमः कार्य्यः केचनतुव्रतदिने एवसर्वहोममिच्छंति प्रातस्तुब्राह्मणभोजनमात्रं ततः पीठंसंपूज्य वस्त्रादिभिराचार्य्यंचसंपूज्य पीठंदद्यात् तत्रमंत्रः प्रतिगृह्णातुविप्रश्रेष्ठ समस्तफलदायकं ब्रह्मसाक्षादहंविप्रविमुच्येभवबंधनात् अनंतःप्रतिगृह्णातिअनंतोवैददातिच अनंतस्तारकोभाभ्यामनंतायनमोनमः ततः पूर्वैरुर्निमंत्रितं चतुर्दशब्राह्मणान्वस्त्रादिभिः संपूज्य स्थापितचतुर्दशकलशान्यक्वान्नादिसहितान् सदक्षिणान्तेभ्योदद्यात् प्रतिगृह्णातुद्विजश्रेष्ठेत्यादिमंत्रौपठेत् व्रतपूर्णतयेगांदत्वासुवर्णदानप्रतिष्ठांदद्यात् ततआशिषोगृहीत्वाक्षमाप्यचविसर्जयेत् क्रियाहीनंभक्तिहीनं द्रव्यहीनंतथैवच मंत्रहीनंकृतंयत्तु परिपूर्णंतदस्तुमे ततोब्राह्मणभोजनपुरःसरंस्वयंभुंजीत इतिव्रतोद्यापनकौस्तुभामनंतव्रतोद्यापनं॥

अथास्यामेवचतुर्दश्यांपालीव्रतम् हेमाद्रौ भविष्योत्तरे ॥ युधिष्ठिरउवाच॥ संपूर्णोतडागेषुसरस्तोयाशयेषुच कस्माद्ध्यसंश्रयध्वंतिकुलैनाः कुलयोषितः॥ श्रीकृष्णउवाच मासिभाद्रपदेप्राप्तेशुक्लभूततिथौनृप तडागपाल्यांदातव्योवरुणायार्घ्यउत्तमः ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैःस्त्रीभिर्विशेषतः तस्मिन्दिनेभक्तिनम्रैरर्घ्यः पांडुनंदन फलैः पुष्पैस्तथावस्त्रैर्दीपालक्तकचंदनैः विरूढैःसप्तधान्यैश्चदधिमिष्टान्नचंदनैः अन्नप्रियकसिद्धान्नैस्तिलतंडुलमिश्रितैः खर्जूरैर्नारिकेलैश्चबीजपूरैःफलैस्तथा द्राक्षादाडिमपूगैश्चपुष्पैश्चापिप्रपूजयेत् आलिख्यमंडलेदेवंवरुणंवारुणीयुतं प्रभासतीर्थसहितंगयापुष्करसंयुतं मंत्रेणानेनराजेंद्र पूजयेद्भक्तिभावतः वरुणायनमस्तुभ्यंनमस्तेयादसांपते अपांपतेनमस्तुभ्यं रसानांपतयेनमः माक्लेदंमाचदौर्गंध्यंवैरस्यंमामुखेमम वरुणोवारुणीभर्तावरदोस्तुसदामम एवंयःपूजयेज्जन्तु पुरुषोवरुणालयं मध्याह्नेसरसिस्नानंनाप्रियकव्रतीनृप चातुर्वर्ण्याचयानारीव्रतेनानेनपांडव निवेद्यब्राह्मणेदेयंतन्वैवे-

घृतकल्पितं एवं यः कुरुते पार्थ पालीव्रतमनुत्तमं तत्क्षणात्सर्वपापेभ्यो मुच्यते नात्र संशयः यथास्य पुत्रदेहो
भीर्य्यजायते नेह कुत्रचित् एवं द्विव्रतिनां रोहे धर्मज्ञ तु न प्राप्यते आयुषा यशसा कीर्त्या सौभाग्येन युतास्सदा
भवंति व्रतमाहात्म्याज्जंतवो नात्र संशयः संरुद्धशुद्धसलिलानि बिलानि विशाला पालीश्च पेयवकभिस्तरुभिः
कृतानि ये पूजयंति वरुणीसहितं समुद्रे तेषां गृहे भवति भूतिरलं युगाद्या इति भविष्योत्तरे पालीव्रतं ॥
अस्यामेव भाद्रशुक्लचतुर्दश्यां रंभाव्रतं भविष्योत्तरे ॥ श्रीकृष्ण उवाच अस्मिन्नेव दिने पार्थ शृणु ब्रह्मसभान्तरे
देवलीं तु पुरा गीतां देवर्षिगणसन्निधौ अप्सरोगणगंधर्वैर्देवैः सर्वैः समर्चितैः संसारासारतां दृष्ट्वा तत्र
स्थां कदलीं ततः शुक्लपक्षे चतुर्दश्यां मासि भाद्रपदे नृप जातीफलैः पूगफलैर्लवंगैर्लवलीफलैः सक-
दलैस्तु रंभायै पूजा चात्र निगद्यते तस्मिन्नहनि दातव्यं स्त्रीभिरन्याभिरप्यलं मंत्रेणानेन वै पार्थ संपूर्णं व्रतराज-
म यथा त्वं कंदलदलैः कदल्ये कामदायिनि शरीरारोग्यलावण्यं देहि देवि नमोस्तु ते इत्थं यः पूजयेद्रंभां पु-
रुषो भक्तिमान्नृप नारी वा नृपपक्षा वा चातुर्वर्ण्ये युधिष्ठिर तस्याः कुलेपि न भवेत्कापि नारी कुलाटनी
दुर्गता दुर्भगा वंध्या स्वैरिणी पापकारिणी विलासिनी वा वृषली पुनर्भूर्भ्रूणहा जरा गणिका स्थविरा छाया वासु
लकर्मकरा खला भर्तृव्रताच्च चलिता न कदाचित्प्रजायते भवेत्सौभाग्यसौख्याढ्या सुतपौत्रश्रियावृता
आयुष्मती कीर्तिमती रमेद्वर्षशतं भुवि एतद्रंभाव्रतं चीर्णं गायत्र्या स्वर्गसंस्थया तथा गौर्य्या च कैलासे इं-
द्राण्या नंदने वने श्वेतद्वीपे तथा लक्ष्म्या रंभया रविमंडले भानुमत्या नागपुरे कृतमेतदनुष्ठितं एतद्व्र-
तं पार्थिवेंद्र मासि भाद्रपदे सति या करोति न सा दुःखैः कदाचिदपि पीड्यते उत्फुल्लकंदलदलां कदलीं
मनोज्ञां याः पूजयंति कुसुमाक्षतधूपदीपैः तासां गृहेषु न भवंति कदाचिदेव नार्य्यस्त्वनार्य्यचरिता-
विधवा विरूपाः इति भविष्योत्तरोक्तं भाद्रशुक्लचतुर्दश्यां रंभाव्रतं ॥ ॥

अथाऽगस्त्यार्घदानव्रतं पद्मपुराणे सृष्टिखंडे ॥ भीष्म उवाच भूर्लोकोथ भुवर्लोकः स्वर्लोको
थ महर्जनः तपः सत्यश्च सप्तैते देवलोकाः प्रकीर्तिताः पर्यायेण तु सर्वेषामाधिपत्यं कथं भवेत
इहलोके शुभं रूपमायुरारोग्यमेव च लक्ष्मीश्च विपुला ब्रह्मन्कथं स्यात्सुरपूजित ॥ पुलस्त्य उवाच
वसिष्ठोयं भवत्यस्मिन्जलकुंभे च पूर्ववत् ततश्चैव बभूवाथ साक्षसूत्रकमंडलुः अगस्त्य इति शांता-
त्मा बभूव ऋषिसत्तमः मलयस्यैकदेशे तु वैखानसविधानतः सभार्यः ससुतो विप्रस्तपश्चक्रे सु-
दुष्करं ततः कालेन महता सुदकादिनिपीडितं जगदीक्ष्य सकोपेन पीतवान्वरुणालयं ततोस्य व-
रदाः सर्वे बभूवुः शंकरादयः ब्रह्मा विष्णुश्च भगवान्वरदानाय जग्मतुः वरं वृणीष्व भद्रं ते यच्चाभीष्टं
त्रतेशुभ ॥ अगस्त्य उवाच यावद्ब्रह्मसहस्राणां पंचविंशतिकोटयः वैमानिको भविष्यामि गगनां-
तरवर्त्मनि मद्विमानोदये कुर्याद्यः कश्चित्पूजनं मम सर्वैः पुण्ययज्ञमायातु वरप्रकाहृतो मया श्राद्धं ये-
वै करिष्यंति पिंडपूर्वं तु भक्तितः तेषां पितृगणैः सर्वैर्मया सार्द्धं दिविस्थिताः सप्तकल्पप्रतिहंतु प-
षपववरो मम एवमस्त्विति तं चोक्त्वा ययुर्देवा यथागतं तस्मादर्घ्यः प्रदातव्यो ह्यगस्त्यस्य सदा बुधैः

अथागस्त्यार्घ्यदानविधिः वीरमित्रोदये मत्स्यपुराणे ॥ कथमर्घ्यप्रदानादि कर्तव्यं तस्य वै
प्रभो विधानं यदगस्त्यस्य पूजने तद्वदस्व मे ॥ ईश्वर उवाच प्रत्यूषसमये विद्वान्कुर्यात्तस्योदये
निशि स्नानं शुक्लतिलैः सह शुक्लमाल्यांबरो गृही स्थापयेदव्रणं कुंभं माल्यवस्त्रविभूषितं पंच-
रत्नसमायुक्तं ताम्रपात्रसमन्वितं अंगुष्ठमात्रं पुरुषं तथैव सौवर्णमत्यायतबाहुदंडं चतुर्भु-
जं कुंभमुखे विनिधाय धान्यानि सप्तांकुरसंयुतानि सकांस्यपात्राक्षतशुक्तियुक्तं मंत्रेण दद्याद्द्विज-
पुंगवाय उत्क्षिप्य लंबोदरदीर्घबाहुमनन्यचेता यमदिङ्मुखस्थः उत्क्षिप्य कुंभमुखान्निःसा-
र्य लंबोदरदीर्घबाहुं पुरुषं मंत्रेण दद्यादित्यर्थः लंबोदरमित्यादि पुन विशेषणं लंबोदरत्ववि-

यानर्घ्यमदिक्नु ख्यस्य इति कुंभस्थापनादौ सर्वत्र संबध्यते प्रयोगांगकर्तृत्वधर्मत्वात् एवं तां च दद्या-
द्यदि शक्तिरस्ति रौप्यैः खुरैर्हेममुखीं सवत्सां येन तु नरः क्षीरवतीं प्रणम्य सवस्त्रघंटाभरणां द्विजाय
हेममुखीं सुवर्णशृंगीमन्यत्र तथादर्शनात् आसन्नराज्ञाउदये अर्घ्यमस्य दातव्यमेतत्सकलं नरे-
ण उदयाद्यमस्येति पाठो हेमाद्रौ यतोऽगस्त्यः यावत्समाः सप्तदशाथवा स्युरथोऽर्घमर्घ्ये वद-
न्ति केचित् ॥ ॥ ॥ अथार्घ्यदानमंत्रः काशपुष्पप्रतीकाश वह्निमारुतसं-
भव मित्रावरुणयोः पुत्र कुंभयोने नमोस्तु ते १ प्रार्थ्य च फलत्यागमेवं कुर्वन्नसीदति त्यजे-
दगस्त्यमुद्दिश्य धान्यमेकं फलं रसं होमं कृत्वा ततः पश्चाद्भजयेन्मानवः फलं अनेन विधिना
यस्तु पुमानर्घ्यं निवेदयेत् इंद्रलोकमवाप्नोति रूपारोग्यसमन्वितः सप्तैव लोकान्नाप्नोति सप्ता-
र्घ्यान्यः प्रयच्छति आसन्नराज्ञादित्यादेरयमर्थः यस्मिन्नंशे अगस्त्योदयः तस्माद्यः प्राग्भूतोऽं-
कः ततः प्रागेकस्मिन्दिनेऽर्घ्यो दातव्यः ॥ अगस्त्योदयकालश्च ब्रह्मपुराणे ॥
अगस्त्यो दक्षिणामाशामाश्रित्य नभसि स्थितः वरुणस्यात्मजो योगी विंध्यवृद्धिविमर्दनः कन्यांशे-
भ्यः पश्चिमेभ्यः षष्ठं प्रारभ्य संख्यया अंशान्द्वाविंशतिर्यावद्भुंक्ते सूर्यस्तु राशिषु विंशतिमिति कल्प-
तरौ पाठः उदितेतावद्भगवानगस्त्यो व्योम्नि तोयप्रभुगिति कन्यांशेभ्य इति एवं दिक्प्रशब्दाभ्याहा-
रे पंचमी पश्चिमेभ्य इति व्यधिकरणं च तेनायमर्थः कन्यांशात्पूर्वेभ्यः सिंहांशाके षष्ठांतिमेभ्यः
षष्ठः प्रारभ्य अगस्त्योदय इति चोदयास्तवस्यापि पश्चिमत्वमित्येकवाक्यार्थः अत एवागमः
कन्यामनागते सूर्ये अर्घ्यो वै सप्तमादिति सिंहांतिमे षष्ठांशके पुत्रार्घ्यं दर्शयति यत्तु आगम-
ज्योतिषयोः अप्राप्ते भास्करे कन्यां त्रिभिर्भागैस्त्रिभिर्दिनैः अर्घ्यं दद्युरगस्त्याय ये वसंति महोद-
ये इति वचनं सप्तविंशांशादिषु ॥ अर्घ्यदानं तत्राशास्त्रपरं न तु पूर्वांशकनिषेधपरं य-
मेणास्य विरोधेन तद्वचनमनादेयमित्युक्ता ब्रह्मपुराणीयपरत्वेनानेन त्याज्यमिति लिखितवतो र-
त्नाकरस्याप्येतदभिप्रेतं समयप्रदीपे तु ज्योतिःशास्त्रात् सप्तविंशे सिंहांशके अगस्त्योदयस्तदनु-
सारि कन्यांशकेष्वर्घ्यदानं आसन्नराज्ञादिनिश्चयणात् आगमे तु कन्यायां समनुप्राप्ते सूर्येऽर्घ्यः सव-
कीर्तित इति कन्यांशकश्रेणीनिषिद्ध इत्युक्तं अर्घ्यद्रव्याणि तु रक्तविल्वादीनि पुष्पैर्दधिदूर्वाक्षतैस्तिलैः
सामान्यः सर्वदेवानामर्घ्योऽयं परिकीर्तित इति सामान्यविधिः रत्नाकरे तु शुक्लेन सितपुष्पाक्षतैः
जलैरर्घ्यो देय इति नृसिंहपुराणे अगस्त्यार्घ्ये तथा दर्शनात् इति दर्शनादिषुक्तं एतत्सकल-
मितिप्रभिरेभिः संपूर्णमित्यर्थः सकलमिति पाठे सकलमर्घ्यमित्यर्थः समावर्हणि वदंत्येवेतीस-
बंधः काशपुष्पप्रतीकाशेति मंत्रः सौवर्णपुरुषदानेप्ययमेवार्घ्यमंत्रः तेनात्रान्नाभिधानात् अ-
स्याणकर्तृक अर्घ्यं तु अगस्त्यः खनमानः खनित्रैः प्रजामपत्यमिच्छमानः उभौ वर्णावृषिरुग्रः पुपो-
सत्यादेवेष्वाशिषो जगामेति वैदिकमंत्रान्वय इति विशेषोऽस्मिन्कल्पे नास्ति पूजनमंत्रस्य विशेषाभा-
भिधानेन चातुर्वर्ण्यगोचरत्वादिति ॥ वीरमित्रोदये प्रत्यक्षमिति अत्र फलत्यागे विशेषः स्म-
त्यंतरे वीजपूरं नारिकेलं रंभां जातीफलं तथा खर्जूरं पनसं दाडिमः फलान्येतानि वर्जयेदिति हो-
मश्च महाव्याहृतिभिराज्येन वैदिकमंत्रेणानाममंत्रेण च स्वयमाचार्यद्वारा वा अत्रायमनु-
ष्ठानक्रमः प्रथमं यथोक्तस्नानं ततो यथोक्तकुंभस्थापनं यथोक्तसौवर्णपुरुषस्थापनं ततो-
ऽगस्त्यपूजानवग्रहपूजायांमानाभावः विधानं यदगस्त्यस्य पूजने तद्दर्शयामि इत्युपक्रमे-
तथाकीर्तनात् अत्रविशेषः यामचतुष्टये पूजा रात्रौ जागरणं लोपामुद्रापूजनं चाचरंति
ततोऽर्घ्यदानं ततो होमः ततः फलत्यागः सौवर्णपुरुषदानं संपन्नो धेनुदानं च हेमाद्रौ च

प्रतिपादयेत् वेदव्यासस्वरूपाय वेदवेदाङ्गवेदिने दानमंत्रः अगस्त्यो मे मनस्यस्तु यथागस्त्यो
सितस्वरक्षितः अगस्त्यो द्विजरूपेण प्रतिगृह्णातु सत्कृतः अगस्त्यः सप्तजन्मोत्थं नाशयित्वाघयो
रघं अतुलं विमलं सौख्यं प्रयच्छतु महामुने ॥ प्रतिग्रहमंत्रः ॥ एवं यः कुरुते भक्त्यात्वगस्त्यव्र
तमादरात् फलमेकं तथा धान्यं रसं चैकं परित्यजेत् संपूर्णे च तथा वर्षे पुनरन्यमुपक्रमेत् अ-
न्यत्फलं रसं धान्यं द्वितीयं गृह्णीत द्वितीयवर्षादावुपक्रमेदित्यर्थः दत्त्वार्घ्यं सप्तवर्षाणि क्रमेणानेन
पाण्डव पुमान्फलमवाप्नोति तद्वदेकाग्रमनाः शृणु ब्राह्मणः स्याच्चतुर्वेदः सर्वशास्त्रविशार
दः क्षत्रियः पृथिवीं सर्वां प्राप्नोत्यर्णवमेखलां वैश्यानां धान्यनिष्पत्तिर्गोधनं विपुलं भवेत्
शूद्राणां धनमारोग्यं सन्मानं चाधिकं भवेत् स्त्रीणां पुत्राः प्रजायन्ते सौभाग्यं गृहमृद्धिमत् विध
वानां हरेत्पापं भर्तृलोकगतिप्रदं कन्या भर्तारमाप्नोति व्याधैर्मुच्येत दुःखितः येषु देशेष्व
गस्त्यार्घ्यं पूजयेयं क्रियते जनैः तेषु देशेषु पर्जन्यः कामवर्षी प्रजायते ईतयः प्रशमं यान्ति न
श्यन्ति व्याधयस्तथा ॥ विष्णुरहस्ये ॥ काशपुष्पमयीं रम्यां कृत्वा मूर्तिं तु वारुणेः प्रदोषे
विन्यसेत्तां तु पूर्णकुम्भे स्वलंकृते ॥ जलपूर्णे कुम्भे ॥ कुम्भस्थं पूजयेत्तं तु पुष्पधूपविलेपनैः
दध्यक्षतबलिं दद्याद्रात्रौ कुर्यात्प्रजागरं प्रभाते तं समादाय यायात्पुण्यं जलाशयं निशाव
साने तं पश्यन् जलान्ते प्रतिमां मुनेः पुष्पैर्मूलैः फलैर्गन्धैर्धूपैरपि सुगन्धिभिः द्राक्षाखर्जूरक
र्कैर्नारिकेलादिभिः शुभैः पंचरत्नसमायुक्ते हेमरूप्यसमन्विते सप्तधान्यभृते पात्रे चंदनेन
समायुते तत्तु ताम्रमयं कृत्वा दद्यादर्घ्यं द्विजातये अगस्त्यः खनमान इति पूर्वोक्तो मंत्रः ॥
अगस्त्यः खनमान इति पठन्मंत्रमिमं मुने यथालाभकृतार्घ्येण सम्यगभ्यर्च्य भक्तितः अर्घ्यं दद्या
दगस्त्याय शूद्रे मंत्रविधिस्त्वयं काशपुष्पप्रतीकाश वह्निमारुतसंभव मित्रावरुणयोः पुत्र कुं
भयोने नमोऽस्तु ते ॥ अथ विष्णुरहस्यानुसारेणागस्त्यार्घ्यदानपद्धतिः ॥
काशपुष्पमयीमगस्त्यप्रतिमां कृत्वा जलपूर्णे पंचपल्लवालंकृतप्रतिष्ठापितकुंभे तन्मंत्रे
ण तां विन्यस्य ॥ पुरुषाकृतिं प्रशान्तं च जटामण्डलधारिणं कमण्डलुकरं शिष्यैर्मृगैश्च परि-
वारितं मृत्युत्रविषदं तारं दर्भाक्षस्रग्धरं मुनिमिति ध्यात्वा अगस्त्यः खनमान इति मंत्रेण तां
संपूज्य पुष्पधूपदीपनैवेद्यादिभिरर्चयित्वा पुष्पमूलफलगंधसुगंधधूपद्राक्षाखर्जूरना-
रिकेलादिफलपंचरत्नहेमरूप्यादिभिः सप्तधान्यैश्चंदनेन च युक्तं ताम्रपात्रं शंखं वा सजलं
पाणिभ्यामादायागस्त्यायार्घ्यं दद्यात् ॥ तत्र मंत्रः विंध्यवृद्धिक्षयकर मेघतोयविषापह रत्न
वल्लभ देवेशालंकावास नमोऽस्तु ते वातापी भक्षितो येन समुद्रः शोषितः पुरा लोपामुद्राप-
तिः श्रीमान्योऽसौ तस्मै नमो नमः येनोदितेन पापानि प्रलयं यान्ति व्याधयः तस्मै नमोऽस्त्वगस्त्याय सशि
ष्याय च पुत्रिणे लंकावासन नमस्तुभ्यमृषीणां प्रवरोत्तम उदितो हारिलंकाया अर्घ्योऽयं मे प्रतिगृ
ह्यतां शंखपुष्पफलं तोयं रत्नानि विविधानि च सुरासुरमुनिश्रेष्ठ अर्घ्योऽयं मे प्रतिगृह्यताम् राज
पुत्रि नमस्तुभ्यमृषिपत्नि नमोऽस्तु ते गृहाणार्घ्यं मया दत्तं लोपामुद्रे शुभानने ॥ इत्यगस्त्या
र्घ्यदानविधिः ॥ अथ भाद्रपदपौर्णमासीकृत्यानि नारदीये प्रौष्ठपद्यां पौर्णमास्यामु-
माहेश्वरं व्रतं एकभक्तः स्वयं स्नातः शिवं संपूज्य भक्तितः कृताञ्जलिः प्रार्थयेत्त्वां करिष्येऽहं व्र
तं प्रभो एवं विज्ञाप्य देवेशं गृह्णीयाद्व्रतमुत्तमं रात्रौ देवाग्निके स्नात्वा त्वमुष्यायां परां त्रिके कृत
मैत्रादिनियमो भस्मरुद्राक्षभृत्ततः पूजयेच्छंकरं सम्यगुपचारैः पृथग्विधैः बिल्वपत्रैः सुगंधा
ढ्यैर्नैवेद्यैर्धूपदीपकैः ततश्चोपवसेद्विद्वान्प्रदोषे विधूदये पुनः संपूज्य तत्रैव रात्रौ जागरणं

चरेत् एवं पंचदशाब्दं तु कृत्वा व्रतमतं द्विजः वर्षे वर्षे तदुत्सर्गं विदध्याद्विधिपूर्वकं उमायाश्च महे-
शस्य सौवर्णं प्रतिमाद्वयं हैमीरौप्यामृण्मयाश्च पदाः पंचदशोत्तमाः तत्रैकस्मिन्घटे स्थाप्यं सौवर्णं प्र-
तिमाद्वयं पंचामृतेन संस्नाप्य जलैः शुद्धैस्ततोर्चयेत् उपचारैः षोडशभिस्ततः पंचदश द्विजान्
भोजयेच्चैव मिष्टान्नैर्दद्यात्तेभ्यश्च दक्षिणां कुंभमेकैकमीशस्य मूर्त्यांश्च गुरवेर्पयेत् एवं कृत्वा व्रत-
मेतदुमामाहेश्वराभिधं जायते भुवि विख्यातो निधानं सर्वसंपदां अथास्मिन्नेव दिवसे प्राक्व्रतम-
पि स्मृतं प्रातः स्नात्वा विधानेन पूजयेत्सुरनायकं गंधाद्यैरुपचारैस्तु नैवेद्यान्नाचराशिभिः ततो-
निमंत्रितान्विप्रान्संभोज्य विधिवत्ततः समागतैस्तथैवान्यान्दीनानाथांश्च भोजयेत् एतच्छक्रव्रतं-
ब्रलकर्तव्यं प्रतिवार्षिकं राज्ञा वा धनिनान्येन धान्यमिष्यतिमिच्छता ॥

अथात्र उमामहेश्वरं व्रतं शिवरहस्ये राजोवाच भगवन्मुनिशार्दूल व्रतमेकं वदस्व मे सांगेय-
स्मिन्व्रते चीर्णे सर्वान्कामानवाप्नुयात् गौतम उवाच उमामाहेश्वरं नाम व्रतमस्ति व्रतोत्तमं
सांगतस्मिन्व्रते चीर्णे सर्वान्कामानवाप्नुयात् मासि भाद्रपदे शुक्ले पौर्णमास्यां प्रयत्नतः तद्व्रतं कार्यम
नघैर्ब्राह्मणाद्यैर्विधानतः भाद्रशुक्ले चतुर्दश्यां प्रातः स्नात्वा विधानतः शिवं ध्यात्वा जगद्वंद्यं सोमं सोमा-
र्द्धशेखरं कृतांजलिपुटो भूत्वा मंत्रमेतं पठेन्नरः श्वः करिष्ये व्रतं यत्नादुमामाहेश्वराभिधं आज्ञां देहि
महादेव सोम सोमार्द्धशेखर इति विज्ञाप्य वै देवं पुनः संपूज्य यत्नतः मध्याह्नेपि शिवं सायं पूजये-
द्विधिपूर्वकं निशा कार्या यथायोगं महादेवस्य सन्निधौ उत्थाय पश्चिमे यामे महादेवं ततः स्मरेत् ततः
शौचादिकं सर्वं निर्वर्त्य प्रीतमानसः स्नानं कुर्याद्यथायोगं यथाशास्त्रं यथाक्रमं परिधाय ततो वस्त्रं
क्षालितं शुक्लमक्षतं उद्धूलनं ततः कार्यं त्रिपुंड्रं भस्मना ततः रुद्राक्षधारणं कार्यं संध्या कार्या तथा पुनः
ततः शिवार्चनं कार्यं बिल्वपत्रादिभिर्नवैः ततो होमोपि कर्तव्यः शिवप्रीत्यर्थमादरात् ततः परं निय-
मं तं प्राणमेत्सोममव्ययं ग्रंथिं कुशैः प्रयुंजीत ततः कार्यासमादरात् भव्यं पंचदशग्रंथिं प्रयुंजीत शि-
वात्मकं संपादनीयं यत्नेन व्रतनिष्ठैरनाकुलैः उमामाहेश्वरं चैव सौवर्णं प्रतिमाद्वयं संपादनीयं
यत्नेन राजतं वा मनोहरं पलार्द्धप्रकर्तव्यं प्रतिमाद्वयमुत्तमं अधिकं चेद्यथाशक्ति कर्तव्यमिति-
यत्नतः सौवर्णं राजतं वापि ताम्रं वा कलशोत्तमं संपाद्य तं प्रयत्नेन प्रयतो व्रततत्परः ततः सद-
र्भं युंजीत वस्त्रयुग्मार्चितं शुभं पृथक्पृथक्स्थापनीयं कलशे प्रतिमाद्वयं आपोहिष्ठादिभिर्मंत्रै-
स्तथान्यैर्वैदिकैरपि अभिषिच्य प्रयत्नेन पूजयेत्प्रतिमाद्वयं ततः प्रयत्नतो गच्छेदलंकृतं शिवा-
लयं शिवस्थानं ततः कुर्यात्तोरणाद्यैरलंकृतं ततः षोडशपत्रेब्जे वेदिरं तत्र गुरुणा अलंकृते
स्वस्तिकाद्यैः स्थापयेत्कलशं नवं ध्यायेत्ततो महादेवमुमादेहार्द्धधारिणं मुक्तामालाहारनागकुंड-
लपरिवेष्टितं पंचाननमुमाकांतमनिलेंदुरवीक्षणं चंद्रार्द्धशेखरं त्र्यक्षं जटामुकुटमंडितं त्रिपुं-
ड्ररेखाविलसद्भालभागमनामयं भस्मोद्धूलितसर्वांगं रुद्राक्षाभरणान्वितं मंदस्मितमनाधारमाधारं
जगतां प्रभुम् देवैरनंतैरनिशं स्तूयमानमनेकधा देवात्मकं देववंद्यं विष्णुब्रह्मादिवंदितम्
विष्णुनीराजिताराक्तपादपंकजमुत्तमं अप्रतिद्वंद्वमद्वंद्वं सर्ववृंदारकार्चितं सर्वोत्तममनाद्यंतं
सर्वदेवनिषेवितं ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलं ऊर्द्धकेशं विरूपाक्षं विश्वरूपं चिदात्मकं
निष्कलं निर्गुणं शांतं निरवद्यं निरंजनं अप्रमेयं जगन्मध्ये सृष्टिसंहारकारकं विश्वबाहुं विश्व-
पादं विश्वाक्षं विश्वसंभवं विष्णुनारायणाराध्यमक्षरं परमं पदं विश्वतः परमं नित्यं विश्वस्येशमनाम-
यं एवं ध्यात्वा महादेवं सर्वदेवोत्तमोत्तमं ध्यायेत्ततः परं गौरीमाद्यां विद्यामनामयां लक्ष्मीसेवि-
तपादाब्जां शचीसेवितपादुकां सरस्वत्यादिभिर्नित्यं स्तूयमानपदांबुजां अधरीक्षाधरीभूतय

कबिंबफलाधरां सुखकांतिकलोपेतपूर्णचंद्राननामयां तिरस्कृतालिमालानामलकावलिभिःस-
दा पीनवक्षोजनिर्धूतचक्रवाकवरांगनां नित्यंतिरस्कृताभोज्यनयनाभ्याममनिंदितां सीतावार्द्ध-
कृताशेषकाममल्लामहर्निशं भ्रूकुल्यूर्द्धीकृताशेषकामचापमनाकुलां वाहुनालकलोद्भूत-
हेमनालांविलासिनीं रोमावलीतिरोभूतभ्रमद्भ्रमरजामिकां नाभिरंध्रतिरोभूतनवनावर्तामुद-
तुलां ऊरुयुग्मतिरोभूतरंभास्तंभांशुभावहां पादयुग्मतिरोभूतनिर्जितारुणपंकजां ब्रह्मेंद्रो-
पेंद्रजननीमहेशार्द्धांगभागिनीं महेशाश्लिष्टवामांगांवरदाभयदांसदा प्रसन्नवदनांशांतांसि-
तसर्वाभिभाषिणीं पूर्णचंद्रडकूलाढ्यांजनाभरणभूषितां स्तूयमानांसदादेवैर्यज्ञैर्दानैश्चको-
टिशः यद्वंध्यात्वा ततः सम्यगुपचारात्मकल्पयेत् ततःपुष्पाणिसंगृह्यशिवमावाहयेच्छिवां
अथआवाहनं महादेव दयासिंधो विल्वब्रह्मादिवंदित आवाहयामिदेवत्वांप्रसीदपरमेश्वर
लक्ष्म्यादिदेववनितापरिसेवितपादके आवाहयामिदेवित्वांप्रसीदपरमेश्वरि इत्यावाहनं
गृहाणसोम विश्वात्मन्नासनंरत्ननिर्मितं अनंतासनविश्वेशकरुणासागरप्रभो उमेसोमथरा-
श्लिष्टेसोमार्द्धकृतशेखरे नानारत्नसमाकीर्णमासनंपरिगृह्यतां इत्यासनं पाद्यंगृहाणगौ-
रीशहेमपात्रस्थितंशुचि गृहाणदेवियाद्यत्वंवेददेवांतसंस्तुते इतिपाद्यं अर्घ्यंगृहाणदे-
वेशसपुष्पगंधसंयुतं शिवानंतगुणग्रामसर्वाभीष्टफलप्रद गृहाणार्घ्यंशिवेनित्यंसर्वा-

वयवशोभने शिवप्रियेशिवाकारेनित्यंभक्तवरप्रदे इत्यर्घ्यं गृहाणाचमनंशंभोशु-
चिभूतंशुचिप्रिय गृहाणाचमनंदेविशुचिभूतेशुचिप्रिये इत्याचमनं मधुपर्कंगृहाणेशस-
र्वदामधुपर्कद मधुपर्कप्रदानेनप्रीतोभवमहेश्वर मधुपर्कमिदंदेविस्वीकुरुप्रियशंकरे
मधुपर्कप्रदानेनसुप्रीताभवशोभने इतिमधुपर्कं शंभोपंचामृतंस्नानंस्वीकुरुष्वकृपानिधे
सर्वतीर्थमयंनित्यंस्नानंशासनपावन शिवेपंचामृतस्नानंस्वीकुरुष्वशिवप्रिये अष्टतीर्थोत्त-
मेशुद्धेतीर्थराजनिषेविते इतिपंचामृतस्नानं शंभोशुद्धोदकस्नानंस्वीकुरुष्वसुरोत्तम प्रसीद
परयाभक्त्यापाहिमांकरुणानिधे शिवेशुद्धोदकस्नानंस्वीकुरुष्वशिवप्रिये प्रसीददेविदीनं
त्वंपाहिमांशरणागतं इतिशुद्धोदकस्नानं सोत्तरीयंगृहाणेदंदुकूलंशंकरप्रिये प्रसीदपाहि
मांदीनमनन्यशरणांशिवे इतिवस्त्रं उपवीतंगृहाणेशशंभोसर्वामरोत्तम उपवीतंगृहाण-
शिशिवसंश्लिष्टविग्रहे इतियज्ञोपवीतं गृहाणचंदनंदिव्यंगंधाढ्येनविराजितं प्रसीदपार्वती-
नाथशरणागतवत्सल गृहाणचंदनंदेविबालचंद्रविराजिते विश्वंविश्वात्मिकेपाहिविश्वना-
थप्रियेसदा इतिगंधं गृहाणाभरणानीशानिराशानियमाश्रय विश्वाभरणविश्वेशारत्ना-
भरणभूषित गृहाणाभरणान्यंबेसर्वाभरणभूषिते सर्वप्रियेजगद्धात्रेजगदानंददेशिवे इत्या-
भरणं गृहाणविल्वपत्राणिसपुष्पाणिमहेश्वर सुगंधीनिनवानीशशिवत्वंकुसुमप्रिय गृहा-
ण विल्वपुष्पाणिमामोदानिशिवप्रिये सुगंधविल्वमंदारमालिकासमलंकृते इतिपुष्पविल्वपत्राणि
दशांगगुग्गुलंधूपंनानागंधमनोहरं गृहाणभक्तवरदेलक्ष्मीदेव्याधिवंदिते इतिधूपम्
कार्पासवर्तिसंयुक्तंगोघृतेनप्रदीपितं गृहाणत्र्यंतसूर्याग्निचंद्रप्रभनमोस्तुते आज्यत्रिवर्तिवि-
स्फूर्तिदीपमीशानवल्लभे गृहाणचंद्रसूर्याग्निमंडलाधिकसुप्रभे इतिदीपम् शंभोगोघृतसंयु-
क्तंपरमान्नंमनोहरं सशर्करंगृहाणांबे परमानंददायिनि इतिनैवेद्यम् शंभोगृहाणगंगा-
द्यमिदमाचमनीयकं शुद्धेशुद्धिप्रदेदेविशिवभूषितविग्रहे इत्याचमनीयं शंभोगृहाणतांबू-
लमेलाकर्पूरसंयुतं प्रसीदभगवन्शंभो सर्व[illegible]म शिवेगृहाणतांबूलंकमुका-

दिफलान्वितं प्रसीदसुस्मिते देवि सोमलिंगार्द्धविग्रहे इति तांबूलं गृहाण परमेशान सरत्नेछ-
त्रचामरे दर्पणं व्यजनं चैव सर्वदुःखविनाशन गृहाणेमेसुराराध्ये सरत्नेछत्रचामरे
दर्पणं व्यजनं चाद्य विद्याधारे नमोस्तु ते छत्रचामरादि प्रदक्षिणनमस्कारान् गृहाण परमे-
श्वर नर्त्तनं च महादेवि शिवमाधप्रिये शिवे इति प्रदक्षिणनमस्काराः ॥

एवं प्रयत्नतः कार्य्यं शिवयोः पूजनं शिवं शिवानीं च प्रयत्नेन पूर्वोक्तमपि पूजनं उक्तमंत्रसमु-
च्चार्य यथापूर्वं यथाक्रमं शिवाय नमः शिवं पूजयामि आवाहंतीति मंत्रस्तु भवान्याः परिकीर्त्तितः
कपर्दिने नमः कपर्दं पूजयामि भाललोचनाय नमः भालं पूजयामि सोमसूर्य्याग्निलोचनाय
नमः नेत्राणि पूजयामि सुश्रोत्राय नमः श्रोत्राणि पूजयामि घ्राणगंधाय नमः घ्राणानि पूज-
यामि स्फातिदंताय नमः दंतान्पूजयामि श्रुतिजिह्वाय नमः जिह्वां पूजयामि कंठकपोलाय
नमः कपोलानि पूजयामि ज्ञानोष्ठाय नमः ओष्ठान् पूजयामि नीलकंठाय नमः कंठान्पू-
जयामि नमः भूरिवक्षसे नमः वक्षांसि पूजयामि हिरण्यबाहवे नमः बाहून् पूजयामि
विश्वोदराय नमः जठरं पूजयामि विश्वनखाय नमः नखान्पूजयामि सर्वात्मकाय नमः
सर्वांगं पूजयामि नमः ॥ अथ गौर्य्याः शिवायै नमः शिरः पूजयामि पृथुवेण्यै नमः
वेणीं पूजयामि सीमंतराजितायै नमः सीमंतं पूजयामि कुंकुमभालायै नमः भालं पूजयामि
सोमसूर्याग्निलोचनायै नमः लोचनानि पूजयामि श्रुतिश्रोत्रायै नमः । श्रोत्राणि पूजयामि
गंधप्रियायै नमः घ्राणं पूजयामि सुभगकपोलायै नमः कपोलौ पूजयामि कोमलदंतायै नमः
दंतान्पूजयामि विद्याजिह्वायै नमः जिह्वां पूजयामि बिंबोष्ठ्यै नमः ओष्ठौ पूजयामि चूतकं-
ठायै नमः कंठं पूजयामि पृथुलकुचायै कुचौ पूजयामि विश्वगर्भायै नमः उदरं पूजयामि
शुभकट्यै नमः कटिं पूजयामि दिव्योरुदेशायै नमः ऊरू पूजयामि वृत्तजंघायै नमः
जंघायुगं पूजयामि लक्ष्मीसेवितपादायै नमः पादौ पूजयामि महेश्वरप्रियायै नमः नखा-
न्पूजयामि शोभनविग्रहायै नमः सर्वांगं पूजयामि अंगपूजां समाप्यैवं डोरकं तु विसर्जये-
त् प्रत्येकं ग्रंथिषु स्वच्छैः स्वच्छैर्बिल्वदलादिभिः प्रथमग्रंथिमारभ्य नमः सोमेति मंत्रतः यथाक्रमेण
संपूज्य ततोथार्घ्यं तु डोरकं तत्रोपचाराः सर्वेपि तेन मंत्रेण सादरं ब्रतिभिर्यत्नतः कार्य्यं कुंकुमा-
क्तं तु डोरकं ततः पंचदशप्रस्थगोधूमास्तंडुलाश्च वा उपायनार्थमानेयाः शुद्धाः कीटाद्यदूषिताः
यद्वा पंचदशाज्याक्ता गोधूमा धूपमंडकाः ततः शिवैकशरणाः शैवाः शिवव्रतप्रियाः पूजनीयाः
प्रयत्नेन गंधपुष्पादिभिः क्रमात् ततः सवस्त्रकलशाः शिवयोः प्रतिमाद्वयं शैवाय देयं यत्नेन
सुवर्णपलसंयुक्तं आदावुपायनं दद्यादेवमेतदतः परं उपायनस्य मंत्रोपि वक्ष्यते च विशेषतः
उमेशः प्रतिगृह्णाति उमेशो वै ददाति च उमेशस्तारको भाभ्यां उमेशाय नमो नमः अनुमंत्रसमु-
च्चार्य्य दक्षिणायै नमेव च तथा शैवाः प्रयत्नेन भोजनीया विशेषतः सुवासिन्योपि यत्नेन भोजनी-
याः शिवप्रियाः शैवानेवं भोजयित्वा स्वयं भुंजीत वाग्यतः अतिथीनपि संतर्प्य द्वारदेशस्थितान्नृप
एवं प्रयत्नतः कार्य्यं प्रतिवत्सरमादरात् नियमेनैव विधिवद्भक्तरीत्या यथाक्रमं ब्राह्मणैर्विद्
कार्य्यं व्रतं संयतमानसैः सर्वाभीष्टप्रदं पुण्यं व्रतमेतच्छिवात्मकं प्राप्ते तु षोडशे वर्षे कार्य्यमुद्या-
पनेन नृप उद्यापनविधानं च वक्ष्ये शृणु यथाक्रमं पौर्णमास्यां भाद्रपदे व्रतोद्यापनमादरात् का-
र्य्यमिति यत्नेन द्रव्यं संपाद्य सादरं हैमीकार्य्या सार्द्धषष्टीप्रतिमा च पलोन्मिता तदर्धेनाथवा-
कार्य्या तदर्धार्धेन वा नृप हजतेनाथवा कार्य्या यथोक्तपलमानतः संपादनीयाः कुंभाश्च हैमाः पं

चतुर्दशोत्तमाः अथवा राजन्नतः कार्य्या यद्वा तान्मया नृप भाद्रशुक्लचतुर्दश्यां शैवा ब्राह्मणपुंगवाः निमंत्रणीया यत्नेन प्रान्तः सप्तदशोत्तमाः ततो गृहं वितानाद्यैरलंकृत्य प्रयत्नतः स्वस्तिकाद्यैरलंकुर्य्यात्तु शिवस्थानमथापि वा ततः सोहं प्रयत्नेन तस्मिन्शंकरमंदिरे पूजनीयाः प्रयत्नेन शिवयोः प्रतिमाः शुभाः पूर्वोक्तेन विधानेन मंत्रैस्तैरेव साधनैः रात्रौ जागरणं कार्य्यं सोपवासं प्रयत्नतः ऋत्विग्भिः सहसोत्साहं पयोमात्राधानेन वा रात्रौ शिवकथाः श्राव्याः श्रोतव्या यत्नतो नृप कर्तव्या यत्नतो रात्रौ पूजा यामचतुष्टये ततः स्थेयं प्रयत्नेन स्नात्वा शंकरसन्निधौ पूजनीयाः प्रयत्नेन शिवो देवः शिवापतिः चतुरस्रं ततः कार्य्यं कुंडमष्टदलान्वितं कंठदघ्नं प्रांतदेशे हस्तद्वयसमन्वितं तत्र वह्निं प्रतिष्ठाप्य विधिवद्गृह्यमार्गतः पंचविंशतिसाहस्रं होमः सोमेति मंत्र ततः प्रयत्नतो राजन् नमः पूर्वसतारकं ततः पूर्णाहुतिं हुत्वा शैवान्संपूजयेत्ततः बिल्वपत्रभस्मना च पूजनीया यथाक्रमं एकैकस्मै प्रदातव्यं शिवयोः प्रतिमाद्वयं कलशोपि प्रदातव्यस्ततो वस्त्रद्वयान्वितः आचार्याय प्रदातव्यं सुवर्णं शतमादरात् ततो यत्नेन शैवेंद्रा भोजनीया घृतव्रतैः सुवासिन्योपि शैवानां भोजनीयाः प्रयत्नतः ततो देया स्वशक्त्या च भोजितेभ्यश्च दक्षिणा ततश्च स्वकृतं कर्म शिवाय विनिवेदयेत् उद्यापनं कृतं शंभो मयैतत्त्वधुना प्रभो इदं संपूर्णतामेतु त्वत्प्रसादान्महेश्वर मंत्रहीनं भक्तिहीनं शक्तिहीनं सुमापते विधिहीनं कृतं कर्म त्वत्प्रसादात्फलप्रद प्रायश्चित्तं वैदिकानां व्यंगानामपि कर्मणां शिवस्मरणमेवेति श्रुतिरप्यस्ति शौनक यतः कृतमिदं प्रोक्तं कर्म व्यंगमपि प्रभो सांगं भवतु विश्वेश तवैव स्मरणात्प्रभो इति संप्रार्थ्य देवेशं सांबं सर्वसुरोत्तमं भुंजीयाद्बंधुभिः सार्द्धं समौनं तिलवर्जितं एवं यः कुरुते सम्यगुमामाहेश्वरं व्रतं स सर्वभोगान्भुक्त्वा ते मोक्षं प्राप्नोति सर्वथा ॥ राजोवाच

गौतमैतद्व्रतं चीर्णं पुरा केन वदस्व मे कस्य काममभूत्सिद्धिर्व्रतस्यास्य प्रभावतः गौतमोवाच पुरा शैववरो राजन्दुर्वासाख्यो मुनीश्वरः कदाचित्संचरल्लोकान्ददर्श कमलापतिं ततः समागतं हरिं दृष्ट्वा दुर्वासा मुनिरंततः बिल्वमालां ददौ तस्मै शंकरेण समर्पितां गृहीत्वा बिल्वमालां तां हरिर्भ्रमनसंभ्रमात् शिरसा पूजनीयां तां गरुडांसे विनिःक्षिपत् तत्र स्तां तां दृष्ट्वा वीक्ष्य दुर्वासाः क्रोधमूर्छितः हरिं शशाप वसुधाधिप गर्जन्निति संवदन् मया शिवार्पिता माला दत्ता तुभ्यं महापद्मा साकथं गरुडस्कंधे विनिःक्षिप्ता त्वया हरे गर्वस्य मूलमत्रेयं तव लक्ष्मीर्विनश्यति लक्ष्मीः पततु दुग्धाब्धौ गरुडोपि विनश्यतु वैकुंठस्याधिकारोपि न वयातु मदाज्ञया निस्तेजस्को वने पृष्ठे संचराथावधिध्रुवं इत्युक्त्वा स तु दुर्वासा ययौ लोकांतरं नृप ततः पपात दुग्धाब्धौ लक्ष्मीर्विलोममनोहरा ततोतिदुःखितो विष्णुः प्रलपन्वनमास्थितः उवास विपिने घोरे स्वकृतं कर्म संस्मरन् ततः कदाचिद्भूपाल मयात्र गतं पुरा तदा मामागतं दृष्ट्वा पूजयामास मां हरिः ततो श्रुपूर्णनयनः कृतांजलिपुटो हरिः जगाद पूर्ववृत्तांतं स्वलक्ष्मीनाशकारणं ततो निःक्रांतचिंताय विस्तवे व्रतमुत्तमं तद्दृष्टेन मया सम्यक्कथितं सादरं मया ततो विलंबं विधिवच्चकार श्रद्धयान्वितं ततः प्रसन्नो भगवान्हरये पार्वतीपतिः ददौ लक्ष्मीं सगरुडां करुणानिधिरव्ययः इदमेव व्रतं चीर्णमिंद्रेणाप्यमितौजसा तेन प्राप्तस्ततः स्वर्गः स्वर्गभोगाश्च शाश्वताः ब्रह्मणापि व्रतं चीर्णमिदमेव पुरा नृप नष्टा वागीश्वरी तेन संप्राप्ता दुर्लभापि सा मुनिभिश्च पुराचीर्णं व्रतमेतन्मुमुक्षुभिः अस्य व्रतस्याचरणान्मुक्तिः प्राप्ता मुनीश्वरैः इदं व्रतं प्रयत्नेन यः करिष्यति भक्तितः अस्य सौभाग्यसंपत्तिर्भविष्यत्येव सर्वथा यस्यास्त्यैश्वर्यभोगेच्छा मादेच्छापि न पाविनी

यस्य सर्वार्थिपत्येच्छा तेन कार्यमिदं व्रतं वैश्यु तेनापि विप्रेण मोक्षार्थमतियत्नतः कृतमेतद्व्रतं पूर्वं सर्वा भीष्टप्रदायकं शारदो नाम विप्रोऽभूद्वेदवेदांगपारगः मोक्षार्थमभियत्नेन तेन चीर्णमिदं व्रतं मुक्तिः प्राप्ता च तेनापि व्रतस्यास्य प्रभावतः यं यं काममभिसमुद्दिश्य व्रतमेतदनुत्तमं यः करिष्यति तं कामं तं त माप्नोति निश्चितं इदं व्रतं महेशेन समाख्यातमुमां प्रति कुमाराय समाख्यातमुमया तद्व्रतं नृप नंदि केशाय कथितं कुमारेण व्रतं ततः नंदिकेशेन कथितं दुर्वाससमुनये ततः दुर्वाससापि कथितमगस्त्याय व्रतोत्तमं व्रतं तत्सागरे मह्यमगस्त्येन महात्मना मयापि तत्क्षिन्नचित्ताय विष्णवे कथितं पुरा तेन चीर्णं व्रतमिदं सर्वसौभाग्यदायकं ब्रह्मणे कथितं पूर्वमिदमेव व्रतं मया तेन चीर्णं व्रतं सांगं वाणी प्राप्त्यर्थमादरात् सूर्यायेंद्राय चंद्राय मयैतत्कथितं व्रतं तैश्च चीर्णं व्रतमिदं सर्वसौभाग्यदायकं कश्यपादिमुनिभ्यश्च कथितं व्रतमुत्तमं तैश्च चीर्णं व्रतं सम्यक् भुक्तिमुक्तिफलप्रदं भूपव्रतानि संत्येव बहूनि विविधानि च तथाप्येतद्व्रतसमं व्रतं नास्त्येव सर्वथा भवानपि कुरुष्वीत्यभ्युपलब्धव्रतमुत्तमं इदं-व्रतं शिवदत्तेयं यः करिष्यति भक्तितः तस्य सर्वार्थं तद्भविष्यति न संशयः ॥ ईश्वर उवाच इत्येतद्वचनं श्रुत्वा सरणाप्रीतमानसः सपुत्रः पूजयामास गोत्तमं पौवपुंगवं ततो धर्मव्रतं चेदमुपदिश्य सगौतमः पुनः संपूजितो राज्ञा स्वाश्रमं प्रति संययौ राजा सपुत्रस्तद्वाक्यादिदं माहेश्वराभिधं व्रतं चकार विधिवद्यथाक्रममतंद्रितः ये मामनन्यहृदयाः सकलामरेशं संपूजयंति सततं धृतभस्मपुंड्रास्ते मामुपेत्य विगताखिलदुःखबंधा मद्रूपमेत्य सुखिनो निवसंति नित्यम् ॥

इति शिवरहस्ये शिवप्रोक्तं भाद्रपदपौर्णमास्यामुमामहेश्वरं व्रतं सोद्यापनम् ॥ ॥

अथैव लोकपालानां पूजाव्रतं तदुक्तं निर्णयामृते ब्रह्मपुराणे ॥ पूर्वां भाद्रपदायोगे पौर्णिमास्यां पितामहः शक्राग्नियमरक्षोंऽभोवायुवित्तेशशंकरान् लोकपालांस्तु रक्षार्थं त्रैलोक्यस्याभिषेचयत् पृथिव्याधारणार्थाय तथानंतं च भोगिनं तस्मात्तत्र लिखित्वा सम्यक् अष्टपत्रं सकर्णिकं कर्णिकायां लिखेत्तत्र सानंतं कमलोद्भवं प्राच्यादिषु च पत्रेषु वाह्ये वायांश्च सायुधान् ततः क्रमेण तेनैव संस्थाप्य कलशान् शुभान् पश्चात्संपूजनीयाश्च भक्त्या ब्रह्मादयः सुरा इति ॥ अथ भाद्रशुक्लचतुर्दश्यां हेमाद्रौ भविष्योक्तं कदलीव्रतं पुण्ये मासि प्रकुर्वीत पूर्णिमायां शुभे दिने इत्युक्त्वा पौर्णिमायां कार्य-उमामहेश्वरपूजायाः कथायामभिधानाच्च यत्प्रसिद्धं समाख्यातं कदलीव्रतमुत्तमं तत्तेऽहं संप्रवक्ष्यामि लोकानुग्रहकारकं नाकपृष्ठे पुरा देवैर्यक्षगंधर्वकिन्नरैः अप्सरोमरकन्याभिर्नागकन्याभिरर्चिता संसारासारतां ज्ञात्वा कदली नंदनस्थिता शुक्लपक्षे चतुर्दश्यां मासि भाद्रपदे नृप देवमर्त्यवरस्त्रीभिः फलैर्नानाविधैस्तथा विरूढैः सप्तधान्यैश्च दीपालीरक्तचंदनैः दधिदूर्वाक्षतैर्वस्त्रैर्नैवेद्यैर्धूपचितैः जातीफलैः पूगफलैः पूजयेद्रत्नमत्सरः तस्मिन्नहनि दानं च स्त्रीभिरन्याभिरेव च मंत्रेणानेन चैवार्घ्यं तस्यै प्रणुष्व नराधिप चिंतयेत्कदलीं नित्यं कदलैः कामदीपितैः शरीरारोग्यलावण्यं देहि देवि नमोऽस्तु ते एवं यः पूजयेद्भामा पुरुषो भक्तिमान्नृप नारी वा नृप काशीत्रीन्मासांश्च तु रोपिता तस्मिन्काले न विधवा क्वापि नारी कुलादिनी दुर्भगा वंध्या स्वैरिणी पापचारिणी भवेत्सौभाग्यसौख्याख्या पुत्रपौत्रश्रिया युता आयुष्मती जीववत्सा जायते हर्षिता तु भुवि इति हेमाद्रौ भविष्ये कदलीव्रतं ॥

अगुर्जराचारश्चात्र कार्तिक्यां माघ्यां वैशाख्यां च कदलीव्रतं तत्र कदलीव्रते पूजनं ॥ ॥

आगच्छ कदलीदेवि सौभाग्यफलदायिनि रूपं देहि यशो देहि जयं देहि सुनिश्चितं आगच्छागच्छ वरदे शंकरेण महेश्वरि करिष्यमाणां पूजां मे गृहाणानुग्रहं कुरु ॥ आवाहनं ॥१॥ कार्तस्वरमयं दिव्यं नानामणिगणान्वितं अर्थितं मया देवि शिवेन सह पार्वति ॥ आसनं ॥२॥ दूर्वाक्षतादिभिर्युक्तं स्वर्ण

पात्रेस्थितंशुभं पाद्यार्थं कल्पितं भक्त्या गृहाण परमेश्वरि॥ पाद्यं॥३॥ अर्घ्यपात्रस्थितं तोयं फलपुष्पस-
मन्वितं अर्घ्यं गृहाण देवि त्वं भक्त्या दत्तं शिवप्रिये॥ अर्घ्यं॥४॥ कर्पूरोशीरसुरभिशीतलं विमलं जलं
गंगायास्तु समानीतं गृहाणाचमनीयकं॥ आचमनं॥५॥ गंगादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतं
स्नानार्थं ते मया तोयं गृहाण परमेश्वरि॥ स्नानं॥६॥ यथा रंभे विवृद्धिस्ते शाखादीनां सदा भवेत् त-
था वर्द्धय मां देवि सेचनात्पार्वतिप्रिये॥ इति सेचनमंत्रः॥७॥ वस्त्रं शुभ्रमिदं शुभ्रं कुंकुमारक्तशोभ-
नं गृहाणाच्छादनं देवि तथा वर्द्धय मां सदा॥ वस्त्रं॥८॥ आचमनीयं पूर्वोक्तमंत्रेण॥ श्रीखंडचं-
दनं दिव्यं घनसारं मनोहरं विलेपनं गृहाणेदं रुद्राणीप्रियवल्लभे॥ चंदनं॥९॥ मालतीचंप-
कादीनि शतपत्रयूथिकानि च सुगंधीनि गृहाण त्वं पूजार्थं सुमनांसि नः॥ पुष्पाणि॥१०॥ अगुरुं गुग्गु-
लं धूपं दशांगं सुमनोहरं गृहाण देवि वरदे घ्राणतृप्तिकरं परं॥ धूपं॥११॥ चक्षुर्दं सर्वलोकानां ति-
मिरस्य निवारणं आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि दीपं॥१२॥ नानापक्वान्नसंयुक्तं रसैः
षड्भिः समन्वितं नैवेद्यं विधिं भक्त्या कल्पितं त्वं गृहाण मे॥ नैवेद्यं॥१३॥ कर्पूरैलालवंगादि नाग-
वल्लीदलान्वितं पूगीफलसमायुक्तं तांबूलं प्रतिगृह्यतां॥ तांबूलं॥१४॥ इदं फलं मया देवि स्थापितं
पुरतस्तव तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि॥ फलं॥१५॥ हिरण्यगर्भगर्भस्थं हेमबी-
जं विभावसोः अनंतपुण्यफलदमतः शांतिं प्रयच्छ मे॥ हिरण्यं॥१६॥ त्वमिंद्राणीप्रिया नित्यं पार्वत्याः प्री-
तिवल्लभा सतीनां कामदा रम्या कामान्मे परिपूरय॥ नीराजनं॥१७॥ आश्रयो देवपत्नीनां पूजि-
ता त्वं श्रियास्त्वयं सौभाग्यारोग्यमक्षय्यं देहि रंभे नमोस्तु ते॥१८॥ प्रार्थना॥ कदल्यै कमलार्थिन्यै
मेधायै ते नमो नमः रंभायै भूतिसारायै सर्वसौख्यप्रदे नमः॥ नमस्कारः॥१९॥ यथा यथा ते प्रसवो
वर्द्धते कदलि ध्रुवं तथा मनोरथानां मे प्रभावो वर्द्धतां स्वयं॥ कदलीदानमंत्रः॥२०॥

अथ कथा॥ युधिष्ठिर उवाच॥ कृष्ण कृष्ण महाबाहो सर्वविद्याविशारद अनाथनाथवि-
श्वात्मन्दीनदैन्यनिकृंतन त्वमस्माकं पुरो बंधुस्त्वमस्माकं परः सखा त्वयाभिरक्षिता नित्यं
विचरामोत्र निर्भयाः किंचित्पृच्छामि देवेश वद त्वं कृपया विभो यत्कृत्वा सर्वधर्मज्ञ कृते यस्मिन्म-
हत्फलं सौभाग्यारोग्यदं पुण्यं धनधान्यविवृद्धिदं अन्नाच्छादनपुत्रादिवर्द्धनं श्रीनिकेतनं त-
न्ममाचक्ष्व भगवन्लोकानामुपकारक॥ श्रीकृष्ण उवाच॥ शृणु राजन्प्रवक्ष्यामि व्रतानामुत्तमं
व्रतं यत्कृत्वा सर्वदुःखेभ्यो नारी मुच्येत संकटात् वस्त्रान्नपानविच्छित्तिर्न भवेत्तु कदाचन पुरा-
मामेत्य कौंतेय रुक्मिणी प्राणवल्लभा प्रणिपत्याब्रवीद्दीना सर्वकामाभये शुभा सौभाग्यं मे कथं
दैव भवेज्जन्मनि जन्मनि सपत्नीनां प्रियं वीक्ष्य स्पृहा मे जायते प्रभो इति प्रियाया वचनं श्रुत्वाहं
तामथाब्रुवं रंभाव्रतं कुरुष्वाशु सौभाग्यप्राप्तये शुभे कृते यस्मिन्व्रते देवि परं सौभाग्यमाप्स्यसि
इति श्रुत्वा वचो देवी रुक्मिणी मामभाषत रंभाव्रतं भवेत्कीदृक्को विधिः किंच पूजनं केन चा-
दौ पुरा चीर्णं मर्त्येषु केन प्रकाशितं रुक्मिणीभाषितं श्रुत्वा पुनरेवाहमब्रुवं रंभाव्रतमिदं वक्ष्ये शृ-
णु देवि यथोदितं गोचर्ममात्रं संलिप्य सर्वतोभद्रमंडलं लिखेत्तत्र तथा वर्णैर्नीलपीतसितासितैः
ब्रह्माद्या देवतास्तत्र स्थापयित्वा प्रपूजयेत् अथवा स्वस्तिकं कुर्यात्पद्ममष्टदलं तु वै ततः सा-
ग्रां सपर्णां हि सस्मितां तु सुशोभनां सफलां कदलीं स्थाप्य पूजयेत्तां यथाविधि उक्तमंत्रैस्तां समा-
नीय सेचयेत्तां समाहिता यथा रंभे विवृद्धिस्ते शाखादीनां सदा भवेत् तथा वर्द्धय मां देवि सेच-
नात्पार्वतीप्रिये यथा यथा ते प्रसवो वर्द्धते कदली नवः तथा मनोरथानां मे प्रसवो भवतु स्वयं एवं
संपूज्य विधिवद्भक्तियुक्तेन चेतसा रात्रौ जागरणं कुर्याद्गीतवादित्रनिःस्वनैः एवं या कुरुते नारी-

व्रतानामुत्तमं व्रतं भुक्त्वा तु विविधान्भोगान्सौभाग्यं विंदते ध्रुवं एवमेतत्त्वया कर्तव्यं कदलीव्रतमुत्तमं त-
स्मात्कुरु विधानेन यथोक्तं फलमाप्स्यसि इति श्रुत्वा विधानेन सा चकार व्रतोत्तमं अवाप सकलं काम-
मनसा यदभीप्सितं अन्यच्च शृणु राजेंद्र यदाश्चर्यकरं नृणां द्यूते पराजिताः पूर्वं कृष्णानीता सभां प्रति दुः-
शासनेन दुष्टेन द्रौपदी मुक्तमूर्द्धजा आकृष्यमाणा वस्त्रेषु चिंतामास स्मरत्तदा हर्गीत जगतो राजन्
द्रौपद्यास्त्राणनाय वै अद्दष्टमाणः कृष्णायै व्रतं समुपदिष्टवान् तदा कर्तुमशक्तोनु व्रतेस्मिन्राजसत्त-
म रुक्मिण्या चरितेनैव यदेतद्व्रतमुत्तमं तस्य पुण्यफलं दत्तं कृष्णायै राजसत्तम तत्कालमेव व-
स्त्राणां समृद्धिरभवत्पुरा दुःशासनेन दुःष्टेन आक्षिप्ते सुक्ष्मकेषु च प्रादुर्भूतानि वस्त्राणि नानाव-
र्णानि भारत विश्रांतो दुःशासनः पापो विरराम अंशुकग्रहात् तावद्बभूवुर्वस्त्राणि कदलीगर्भवन्नृप
इत्थं व्रतप्रभावो यं गुह्योपि कथितो मया कारयस्व विधानेन पूर्णकामो भविष्यसि ॥

अथोद्यापनं ॥ युधिष्ठिर उवाच कस्मिन्मासे तिथौ कस्मिन्नाचरेद्व्रतमुत्तमं कथंभा-
वेन किं कार्यं तन्ममाचक्ष्व केशव ॥ कृष्ण उवाच कार्तिके माघमासे वा वैशाखे त्वितरेषु वा पुण्ये
मासि प्रकुर्वीत पौर्णमास्यां शुभे दिने तिथित्रयं वर्जयेत शुभायां तु समाहितः यस्मिन्देशे न लभ्येत क-
दली राजसत्तम सुवर्णेन शुभां तत्र कृत्वा पूजां समाचरेत् यदि लभ्येत कदलीमारोप्यादौ प्रपूजयेत्
यावत्तस्याः फलं तावत्सिंचेन्नीरेण भूपते फलोद्भूतक्रमेण तस्याः पश्चाद्द्विजान्समाह्वयेत् प्रभाते वि-
मले स्नात्वा नद्यादौ विमले जले अहते वाससी धृत्वा कृत्वा संध्यादिकर्म च अरत्निमात्रं कृत्वा तु स्थं-
डिलं वाग्यतः शुचिः अग्निं संस्थाप्य विधिवत्तत्र होमं समाचरेत् शतमष्टोत्तरं विद्वान् तिलाज्याहुति-
भिस्तथा एकाग्रचित्तः संहृष्टः कृतीव्याहृतिभिः पृथक् ब्रह्मादिभ्यो देवताभ्यो नाममंत्रैः पृथक्पृथक्
आचार्यं च सपत्नीकं वस्त्राद्यैः पूजयेत्ततः धेनुं पयस्विनीं दद्यात्सवत्सां रत्नभूषितां स्वर्णशृंगीं रौप्य-
खुरां कांस्यदोहनिकायुतां ताम्रपृष्ठीं रत्नपुच्छां वस्त्रघंटाविभूषितां अभ्यर्च्य वेदविदुषे आचार्याय
निवेदयेत् पादुकोपानहौ छत्रमलंकाराननेकशः यथाशक्ति प्रदेयानि व्रतस्य परिपूर्तये चतु-
र्विंशद्द्वादश वा नाम युग्मान्याहूय संयतः वस्त्रालंकारगंधाद्यैः पूजयित्वा तु भोजयेत् वायनानि तु
देयानि वंशपात्रैस्तु शक्तितः दद्याच्च दक्षिणां सम्यग्यथाविभवसारतः अन्येभ्योपि यथाशक्ति द-
द्यादन्नं सुसंस्कृतं क्षमापयित्वा तान्देवीं व्रतस्य परिपूर्तये वाचयित्वा यथान्यायमच्छिद्रं च क्षमाप-
येत् दीनानाथांस्तर्पयित्वा स्वयं भुंजीत वाग्यतः एवं यः कुरुते देवि कदलीव्रतमुत्तमं भुक्त्वा तु
विविधान्भोगान्सौभाग्यं विंदते परं तस्मात्कुरु विधानेन यथोक्तं फलमाप्स्यसि एवं नारी नरो वा
पि यः कुर्यात्कदलीव्रतं सर्वान्कामानवाप्नोति स्वर्गलोके महीयते ॥ इति भविष्योत्तरोक्तं कदली-
व्रतं ॥ एतच्च पौर्णमास्यां विहितमपि देशाद्विमतेन चतुर्दश्यां कार्यं ॥

इति भाद्रशुक्लचतुर्दश्यां कदलीव्रतं भविष्योत्तरोक्तमिदं ॥

अस्यां भाद्रपौर्णिमायां सुवासिन्यो नार्यो भर्तुरायुरभिवृद्धये सावित्रीव्रतं कुर्वंति तीर्थमित्रोदये भ-
विष्ये ॥ युधिष्ठिर उवाच स्मरामि च हृषीकेश यच्चोक्तं भवता मम तत्सावित्रीव्रतं ब्रूहि प्रसादसुमु-
खो भव ॥ श्रीकृष्ण उवाच कथयामि कुलस्त्रीणां महिमावर्द्धनं परं यथाचीर्णं तु सा विद्याव्रतं वै राजकन्य-
या आसीन्मद्रेषु धर्मात्मा सर्वभूतहिते रतः पार्थिवोश्वपतिर्नाम पौरजानपदप्रियः सर्वेश्वरेणनपत्य-
श्च सत्यवाक्संयतेंद्रियः स सभार्यो व्रतमिदं चकारापत्यकाम्यया सावित्रीति प्रसिद्धं यत्सर्वकामप्रदा-
यकं तस्य तुष्टा तु सा देवी सावित्री ब्रह्मणः प्रिया उवाच दुहिता ह्येका तव राजन्भविष्यति तस्याः प्रसादा-
त्तु धामेन वसर्वं भविष्यति मत्वाज्ञाः सा च वचः कृत्वा महाकीर्तिमती तु सा भविष्यति महाराज मा शोकं कु-

हुमर्हसि एवमुक्त्वातुसावित्रीजगामादर्शनंतदा कालेनगच्छताजाताडहितादेवरूपिणी सावित्र्याप्रीत-
याद्त्तासावित्र्याजप्तयातथा आदिष्टाचैवसावित्र्यासावित्रीसदृशीयतः सावित्रीत्येवनामास्याश्चक्रुर्वि-
प्रास्तथापिता साश्रीवद्विग्रहवतीव्यवर्द्धतपितुर्गृहे कालेवहुतिथेजाते यौवनस्थावभूवसा तांसुमध्यां
पृथुसुश्रोणींप्रतिमांकांचनीमिव प्राप्तेयंदेवकन्येतिदृष्ट्वातांमेनिरेजनाः सातुपद्मपलाशाक्षीप्रज्वलंतीव
तेजसा चचारचापिसावित्रीव्रतंयद्भृगुणोदितं अथोपोष्यशिरःस्नातासम्यक्संपूज्यदेवताः हुत्वाग्निंविधि-
वद्विप्रान्वाचयित्वेडपर्वणि तेभ्यःसुमनसःशिष्टाः प्रतिगृह्यनृपात्मजा सखीप रिवृताभ्येत्यदेवीश्रीरि-
वरूपिणी साभिवाद्यपितुःपादौविनीताचारुहासिनी कृतांजलिर्वरारोहानृपतेःपार्श्वतःस्थिता तां-
दृष्ट्वायौवनप्राप्तांस्वांसुतांदेवरूपिणी उवाचराजापन्यर्थंसमभ्यस्यसहमंत्रिभिः पुत्रिप्रदानकालोयंन
चकश्चिद्वृणोतिमां विचारयन्नपश्यामिवरंतुल्यमिहात्मनः तथापिदेयासिमयादोषःस्यादन्यथा
मम पठ्यमानंमयापुत्रिधर्मशास्त्रेषुसंश्रुतं पितुर्गेहेतुयाकन्यारजःपश्यत्यसंस्कृता ब्रह्महत्यापि-
तुस्तस्यसाकन्यावृषलीस्मृता अतोर्थंप्रेषयामित्वांकुरुपुत्रिस्वयंवरं वृद्धैरमात्यैःसहिताशीघ्रंगच्छस्व
माचिरं वेदादीनांयथावाच्योनभवेयंतथाकुरु एवमस्त्वितिसावित्रीप्रोक्त्वाशीघ्रंविनिर्ययौ स्यंदनेन
महार्हेणमंत्रिभिःपरिवारिता तपोवनानिरम्याणिराजर्षीणांजगामसा मान्यानांतत्रवृद्धानांकृत्वा
पादाभिवंदनं ततोबभ्रामतीर्थानिपर्वतानांवनानिच देशांश्चविविधान्रम्यानाश्रमान्सुमनोहरान्
एकस्मिन्नाश्रमपदेकृत्यकृत्याबभूवह वरयित्वावरंसातुआजगामस्वमालयं सावित्रीमंत्रिसहिताप-
रितुष्टेनचेतसा तत्रापश्यतदेवर्षिंनारदंपितुरंतिके आसीनमासनेविप्रंप्रणम्यप्रस्मितभाषिणी क-
थयामासतत्सर्वंप्रेमणारण्यंगतासती ॥ सावित्र्युवाच आसीच्छाल्वेषुधर्मात्माक्षत्रियःपृथिवीपतिः द्यु-
मत्सेनइतिख्यातोदैवादंधोबभूवसः तस्यचाप्यभवद्भार्यारुक्मिणीरूपशालिनी तस्यप्रतिहृतंराज्यंवै-
रिभिर्दैवयोगतः साबालापत्ययासार्द्धंभार्ययाप्रस्थितोवनं सचास्यवनसंवृद्धःपुत्रःपरमधार्मिकः
सत्यवान्नामतद्रूपाद्धोभर्त्तेतिमनसावृतः ॥ नारदउवाच अहोकष्टमहोकष्टंसावित्रिकिमिदंकृ-
तं ह्यतस्तेबालभावाद्यतःगुणवान्सत्यवान्नृपः सत्यंवदत्यसौराजासत्यवाक्तेनसःस्मृतः नि-
त्यमश्वाःप्रियास्तस्यकरोत्यश्वान्समृण्मयान् चित्रेपिचलिखत्यश्वान्चित्राश्वस्तेनसोच्यते किंव-
र्णयामितदेवस्यदानादानगुणैःसमः ब्रह्मण्यःसत्यवाग्दत्तःशिविरौशीनरोयथा ययातिरिव
चोदारःसोमवत्प्रियदर्शनः अश्विन्याविवरूपेणद्युमत्सेनसुतोबली एकोदोषोस्तिनान्योस्त्यद्य
प्रभृतिसत्यवान् संवत्सरेणक्षीणायुर्देहत्यागंकरिष्यति॥श्रीकृष्णउवाच नारदादेतदाकर्ण्य
दुहितामाहपार्थिवः पुत्रिसावित्रिगच्छान्यंवरंवरयसत्वरं संवत्सरेणसोल्पायुर्देहत्यागंकरिष्य-
ति॥सावित्र्युवाच सकृज्जल्पंतिराजानःसकृज्जल्पंतिपंडिताः सकृत्प्रदीयतेकन्यात्रीण्येतानिसकृ-
त्सकृत् दीर्घायुर्वापिस्वल्पायुर्निर्गुणःसगुणोपिवा सकृद्वृतोमयाभर्त्तानद्वितीयंवृणोम्यहं मन-
सानिश्चयंकृत्वाततोवाचाभिधीयते क्रियतेकर्मणापश्चादेषधर्मःसनातनः॥ नारदउवाच य-
द्येतदिष्टंदुहितुस्ततःशीघ्रंविधीयतां अविघ्नमस्तुसावित्रीदिष्टंभद्रंकरिष्यति॥श्रीकृष्णउवाच
एवमुक्त्वासमुत्पत्यनारदस्त्रिदिवंययौ उत्पाद्यदुःखमतुलंतस्यराज्ञोयुधिष्ठिर राजापिदुःखसं-
विग्नश्चिरंध्यानपरोभवत् अहोनिदुःखमुत्पन्नमपारंमादृशात्मनो एतद्दुःखमहोदृष्ट्वावरमेव
नपुत्रता सत्यमुक्तंपुराणज्ञैःकन्यादुःखैकभाजनं देव्यायदुक्तंतत्सर्वंव्यलीकंप्रतिभातिमे प-
र्वसंशोच्यवहुधाद्धारात्मानमात्मना देवीसंस्मृत्यसावित्रीमयादत्तोवरःपुरा राजासदुहितुःसर्वंवै-
वाहिकमथाकरोत् स्वयंगत्वातुसामीप्यवनंमुनिनिषेवितं शुभेमुहूर्त्तेपार्थश्रेष्ठब्राह्मणैर्वेदपारगैः

समर्पयित्वाकन्यांतांदत्वादायांश्चपुष्कलान् उवाचेदंमहाभागंस्तुतीतेनांतरात्मना द्युमत्सेनमहाभागश्रृ
णुमेपरमंवचः इयंमेदुहितातातवल्लभाजीवितादपि भर्तास्यस्तुचितोह्यस्याःसत्यवान्सत्यवल्लभः
त्वमप्यस्याःसुचितःश्वशुरोधर्मवत्सलः गतोपराधाःत्वंतव्यावालेयंकार्यवालिशा यदभीष्टंचजामातुर्
वयोर्यदभीप्सितं तदाख्येयमतोस्माकंस्वस्तितेस्तुव्रजाम्यहं ॥श्रीकृष्णउवाच इत्याभाष्यगतोराजानारदो-
क्तैर्वचोन्वितः सावित्र्यपिचतंलब्ध्वापतिंसर्वगुणान्वितं मुमुदेतीवतन्वंगीदिवसान्यार्यगुणपहत पूर्व
तत्राश्रमेतेषांतदानिवसतांसतां कालस्तुव्यथतांकश्चिदतिचक्राममारत सावित्र्यास्तुपायानाथाश्चित
यंत्यादिवानिशं नारदेनयदुक्तंतत्कदाचिन्नापसर्पति ततःकालेबहुतिथेव्यतिक्रांतेकदाचन प्राप्तः
कालेहिमर्तव्यंयत्रसत्यवतानघ ज्येष्ठपादेसितेपक्षेद्वादश्यांरजनीमुखे गणयंत्याश्चसावित्र्यानार
दोक्तंवचोहृदि चतुर्थेहनिमर्तव्यमितिसंचिंत्यभामिनी व्रतंत्रिरात्रमुद्दिश्यसावित्र्याख्यंमहाफलं उ-
पोष्यसंस्थितासाध्वीसावित्रीसापतिव्रता ततस्त्रिरात्रंनिर्वर्त्यस्नात्वासंतर्प्यदेवताः श्वश्रूश्वशुरयोःपादौ
ववंदेचारुहासिनी अथप्रतस्थेपरशुंगृहीत्वासत्यवान्वनं सावित्र्यपिचभर्तारंगच्छंतंपृष्ठतोन्वगात् वा
र्यमाणापिसाभर्त्रा श्वश्र्वाश्वशुराभ्यांचापिभाषिता उवाचश्वश्रूर्भोभद्रेगच्छकंटकितंवनं सुकुमारासिकल्याणि-
वालिसाभूमिपात्मजे अपदत्रापदैर्यातुंकथंशक्ष्यसितद्वनं उपवासात्त्रयस्तेद्यतस्मात्त्वंसुमध्यमे
सावित्र्युवाच नैषधर्मोवरस्त्रीणांयद्भर्तरिबुभुक्षिते स्वयमेवचभोक्तव्यमित्याहुर्धर्मदर्शिनः अपर
कौतुकंमेस्तिवनस्यापिप्रदर्शने भर्त्रासहायायास्यामिमानिषेधंकरिष्यथ भर्त्रासहागमिष्यामिकिंवि
षादेनमाचिरं ततोज्ञाताथसाबालाजगामाथपतिव्रता सावित्र्यनुपदंभर्तुर्वनेतस्मिन्मनोरमे गत्वा
सोहरमधानंजग्राहाथफलादिकं समित्कुशांश्चकुसुमंमार्थयासंवदन्प्रियं काष्ठंकुठारेणततःपाट
यामासलीलया अथपाटयतस्तस्यजाताशिरसिवेदना ततःसंहृत्यतत्सर्वंवटछायामुपाश्रितः सत्य
वान्वेदनाक्रांतःकिंचिद्घूर्णितमानसः वटशाखामुपाश्रित्यसत्यवान्प्राहगद्गदं सावित्रिपश्यशिरसिव
वेदनामांप्रवाधते नचकिंचित्प्रपश्यामिभ्रमतीवहिमेमनः तवोत्संगेक्षणंतावत्स्वप्तुमिच्छामिसुंदरि
सावित्र्युवाच विश्रमस्वमहाबाहोसावित्रीप्राहदुःखिता पश्चादपिगमिष्यामोह्याश्रमंसुसुखोदयं ॥
श्रीकृष्णउवाच यावदुत्संगगंकृत्वाशिरश्चास्तेमहीतले तावत्करालवदनाःशतशोथसहस्रशः
आजग्मुर्यमदूताश्चरौद्राश्चातिभयंकराः नशेकुर्दृष्टिपाताज्जेसावित्र्याःस्थातुमंतिके गत्वाचचख्युस्तत्सर्वं
सावित्र्यास्तुयमंद्रुतं दृष्टिपातेननास्माभिःशक्यतेस्याःप्रबाधितुं दहतीवचनोदेहंदृष्टिपातेनसासती
तत्स्वयंयाहिनास्माभिःसाध्यतेसत्यवान्क्वचित् इत्याकर्ण्ययमःकोपादुत्थायचवरासनात् आरुह्यमहिषंरौद्रं
रौद्रःप्राणहरोबली आजगामत्वरायुक्तोयत्रास्तेसापतिव्रता सावित्र्यपिचसंत्रस्तावीक्षमाणाइतस्ततः
सावधानाकथंकोयंभर्तारंममनेष्यति तावद्ददर्शसाबालापुरुषंकृष्णपिंगलं किरीटिनंपीतवस्त्र-
साक्षात्सूर्यमिवोदितं तमुवाचाथसावित्रीप्रणम्यमधुराक्षरं ॥सावित्र्युवाच कस्त्वंदेवोथवादैत्योमांधर्ष
यितुमागतः नचाहंकेनचिच्छक्यास्वधर्मादवरोपितुं दृष्ट्वापुरुषश्रेष्ठंदीप्तंवह्निशिखामिव यमउवाच
यमःसंयमनश्चाहंसर्वभूतभयंकरः क्षीणायुरेषतेभर्तासन्निधौतेपतिव्रते नशक्यःकिंकरैर्नेतुंततोहं
स्वयमागतः शरीरात्पाशसंयुक्तं एवंभूतंमहाद्युतिं अंगुष्ठमात्रंपुरुषंनिचकर्षयमोबलात् पुनःप्र
यातुमारेभेपंथानंपितृसेवितं सावित्र्यपिवरारोहाकृत्वापादेनमंडलं रक्षार्थंभर्तृकायस्यसख्यावनु-
परंततः पतिव्रतातदाश्रांताध्यायमानानिजंपतिं तच्चितातद्गतप्राणातामुवाचयमस्तदा यमउवाच
निवर्त्यगच्छसावित्रिसुदूरंत्वमिहागता पथमार्गोविशालादिनकेनाप्यनुगम्यते ॥सावित्र्युवाच॥
नश्रमोनचमेग्लानिःकदाचिदपिजायते भर्तारमनुगच्छंत्यास्तवपिश्रेष्ठस्यसन्निधौ सततंसंतोषगतिर्नोव्यासी-

णांभर्त्तासदागतिः वेदावर्णाश्रमाणांचशिष्याणांचगुरुर्गतिः सर्वेषामेवजंतूनांस्थानमस्तिमहीतले मुक्त्वा
भर्त्तारमेकंतुस्त्रीणांनान्यःसमाश्रयः एभिरन्यैःसत्सुचिन्तैर्वाक्यैर्धर्मार्थसंयुतैः तोषितोधर्मराजस्तुसावि
त्रीमिदमब्रवीत् यमउवाच तुष्टोस्मितवभद्रेत्वंवरंवरयसुव्रते साचवव्रेश्वराज्यंचतनयावनतामती
चक्षुःप्राप्तितथाराज्यंश्वशुरस्यमहात्मनः जीवितंचतथाभर्तुर्धर्मसिद्धिंचशाश्वतीं पितुःपुत्रशतंचैव
तथाचव्रतमात्मनः धर्मराजोवरान्दत्वाप्रेषयामासतांततः आजगामाथसातन्वीन्यग्रोधविटपंतदा स-
त्यवान्संगेशिरस्तस्यएवंवन्निषसादच गात्रसंवाहनंचक्रेभर्तुःश्रांतस्यभारत उत्थितश्चेतनांप्राप्यती
रुकृष्णेदमादरात् कथंनबोधितोभद्रेकालोतीवगतोमम किंमांवक्ष्यतिमेतातःकिंवामाताचदुःखि
ता विरुद्धंवाचंसंजातंकालोतीवगतोवने विहायमातापितरौकालेनक्वापिमेयगात् इतिमत्वाविरुद्ध
नेकृतंनेदप्रबोधनं सावित्र्युवाच कथंत्वांबोधयेवीरपीडितंतुशिरोरुजा ममैवात्रविलंबोभूत्
कार्येणतवानघ प्रपश्येत्याथसावित्रीतत्राद्दधारसेंधनं समित्कुशादिकंसोथजगामतुस्वमाश्रमं
ततःपित्रास्वनेत्राभ्यांदृष्टोतीवपरयामुदा आलिंग्यमूर्ध्न्युपाघ्रायपुत्रमंकेनिवेश्यसः उवाचदिष्ट्यापश्यामि
सभार्य्यंत्वांसमागतं विलंबकारणंपृष्टःसमाचष्टेयथातथं देहितार्थोथसंहृष्टःपूजयामासतांसती
अथवाएवंजेर्भुंक्तेराज्यंनिहतकंटकं द्युमत्सेनोमहाभागइयाजक्रतुभिस्तदा ततोश्वपतिरासाद्यपुत्रा
नात्मगुणाधिकान् सावित्र्याश्चेष्टितंज्ञात्वाजामातुर्जीवितंतथा राज्यप्राप्तिंचविपुलांपरांमुदमवापसः
सावित्र्याख्यानकमिदंसर्वपापप्रणाशनं अवैधव्यप्रदंस्त्रीणांस्वर्गमोक्षप्रदायकं सुखसौभाग्यदंचाथश्रा
तर्जप्यमिदंसदा भाद्रपदेपूर्णिमायामाचीर्णंव्रतंत्विदं माहात्म्यमस्यनृपतेकथितंसकलंमया॥
युधिष्ठिरउवाच कीदृशंतद्व्रतंकृष्णसावित्र्यायदनुष्ठितं तस्मिन्भाद्रपदेमासिविधानंतस्यशासमे
कादेवताव्रतेतस्मिन्कोमंत्रःकिंफलंप्रभो एतदाख्याहिमेनाथनहितृप्यामिमाधव श्रीकृष्णउवाच
शृणुत्वंपांडवश्रेष्ठसावित्रीव्रतमादरात् कथयामिकथंचीर्णंतयासम्यग्युधिष्ठिर त्रयोदश्यांभाद्रपदे
तथाव्रतपूर्वकं त्रिरात्रंनियमंकुर्य्यादुपवासस्यभक्तितः अशक्तश्चत्रयोदश्यांनक्तंकुर्य्याज्जितेंद्रियः अ
याचितंचतुर्दश्यांपौर्णमास्यामुपोषितः नित्यंस्नात्वामहानद्यांतडागेनिर्झरेपिवाविशेषतःपौर्णमास्यां
स्नानंसर्षपमृज्जलैः गृहीत्वावालुकांपात्रेप्रस्थमात्रांयुधिष्ठिर अथवाधान्यमादाययवशालितिलादिकं
ततोवंशमयेपात्रेवस्त्रयुग्मेनवेष्टिते सावित्रीप्रतिमांकृत्वाब्रह्मणश्चैवशोभनां सौवर्णीमृण्मयींवापिस्व
शक्त्यारौप्यनिर्मितां ब्रह्मस्वरूपनिर्माणंविष्णुधर्मोत्तरेदितं पद्मपत्रसनस्थश्चब्रह्माकार्य्यश्चतुर्मुखः
पुस्तकंस्वस्तिकंतद्वद्दत्तमालाकमंडलुं सावित्रीतस्यकर्तव्यावामोत्संगगतातथा आदित्यवर्णाथमश्रा
साक्षसूत्रकरातथेति रक्तवस्त्रयुगंदद्यात्सावित्र्याब्रह्मणःसितं सावित्रींब्रह्मणासार्द्धमेवंभक्त्याप्रपूजयेत्
गंधैःपुष्पैश्चनैवेद्यैर्दीपकैर्मोदकैःशुभैः पूर्णकोशातकैःपक्वैःकूष्मांडैःकर्कटीफलैः नारिकेलैःसख
र्जूरैःशाखोटैःपनसैस्तथा धान्याकैर्जीरकैर्हिंग्वैर्गुडेनलवणेनच विरूढैःसप्तधान्यैश्चवंशपात्रप्रक-
ल्पितैः हरिद्रयाकंठसूत्रैःशुभैःकुंकुमकेसरैः अवतारंकरोम्येवंसावित्रीब्रह्मणःप्रिया
अवतारंअवस्थितं तामर्चयेतमंत्रेणसावित्रीब्राह्मणीस्वयं इतरासांतथास्त्रीणांपुराण
क्तोविधिःस्मृतः ॐकारपूर्वकेदेविवीणापुस्तकधारिणी वेदमातर्नमस्तुभ्यमवैधव्यंप्रयच्छमे इ-
त्युक्त्वाद्विजपादेषुसौभाग्यंदेहिदेहिमे एवंसंपूज्यविधिवज्जागरंतत्रकारयेत् गीतवाद्यत्रनिर्घोषैः
हृष्टनारीकदंबकैः पुराणपाठ्यानैश्चविविधैस्तांरात्रिमतिवाहयेत् उत्सवेननयेद्रात्रिंसावित्र्याख्यकथा
नकैः ततःप्रभातसमयेरवावभ्युदितेसति सावित्रींब्राह्मणश्रेष्ठसंनैवेद्यांनिवेदयेत् अथसावित्रिकल्पज्ञे
सावित्र्याख्यानवाचके वेदज्ञेतुस्ववृत्तिस्थेदरिद्रेवाकुटुंबिनि मंत्रेणानेनकौंतेयप्राप्यविधिपूर्वकंहवी

ततस्तिलैर्मिश्रां पूर्वाशाभिमुखोस्थिता शुचिवस्त्रधरे विप्रे ॐकारस्वस्तिपूर्वकं सावित्रीयं मयाद-
त्ता सहिरण्या हिरण्मयी ब्रह्मणः प्रीणनार्थाय ब्राह्मण प्रतिगृह्यतां एवं दत्वा द्विजेंद्राय सावित्रीं तां
युधिष्ठिर नैवेद्यादि च तत्सर्वं ब्राह्मणस्य गृहं नयेत् स्वयं दशपदं गच्छेत्स्ववेश्मनि तथा विधान्
गौरिण्यो भोजयेद्भक्त्या हविष्यान्नेन पाकिताः पुष्पैः कुसुमसिंदूरैः स्तालकैः कंठसूत्रकैः
वासोभिर्भूषणैर्भक्त्या वित्तशाठ्यविवर्जिता तथा भुक्त्वा हविष्यान्नं ब्राह्मणैर्बहुभिः सह विस
र्जयेत्ततस्तां च सावित्री प्रीयतामिति वक्तव्यं ब्राह्मणैः सर्वैस्तुष्टैर्भुक्तवरैर्भृशं सावित्री वरदा-
स्तु तुभ्यं सदा भवतु सुव्रते पुत्री पुत्रस्तथा भर्त्ता परमायुरनामयः पुत्रपौत्रैश्च संवर्द्धं वर्द्धतां तव
सत्कुलं व्रतं च सुव्रतं तदिह द्विविधिनानेन निश्चितम् ॥

इति श्रीभविष्योत्तरोक्तं प्रौष्ठपद्यां सावित्रीव्रतम् ॥

अस्यामेव वारुणव्रतारंभः कार्यः तदुक्तं हेमाद्रौ विष्णुधर्मोत्तरे ॥ मार्कंडेय उवाच ॥ प्रौष्ठपद्यां
तथारभ्य संपूर्णाषाढलक्षणं संपूज्य वरुणं देवं गंधमाल्यान्नसंपदा जलाशयजले देवं ध्यात्वा संव
त्सरावधौ दद्याद्व्रतावसाने तु जलधेनुं द्विजातये छत्रोपानद्युगयुतां वासोयुगविभूषितां प्राप्नोति लो
कं वरुणस्य राजन्सत्रो ष्यकालं सुचिरं मनुष्यः मानुष्यमासाद्य भवत्यरोगो रूपान्वितो वित्तयुतस्त
थैव ॥ इति भाद्रीकृत्यसमाप्तम् ॥

अथास्यां श्रीभागवतपुस्तकदानम् नारदीये प्रौष्ठपद्यां पौर्णमास्यां हेमसिंहासनस्थितं देयं
भागवतायेदं द्विजाय प्रीतिपूर्वकं मदनरत्ने मात्स्ये यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः वृत्रा
सुरवधोपेतं तद्भागवतमुच्यते अष्टादशसहस्राणि पुराणं तत्प्रकीर्तितं लिखित्वा तच्च यो दद्याद्धे
मसिंहसमन्वितं पौर्णमास्यां प्रौष्ठपद्यां स याति परमं पदमिति ॥ अस्यामेव कन्यार्कयुक्तायामयु-
क्तायामपि प्रपितामहात्परान् त्रीनुद्दिश्य श्राद्धं कुर्यात् ॥ ॥ तदुक्तं हेमाद्रौ मार्कंडेयपुराणे
नांदीमुखानां कर्तव्यं कन्याराशिगते रवौ पौर्णमास्यां तु कर्तव्यं वराहवचनं यथेति ॥ नांदीमुख
त्वं चोक्तं ब्राह्मे पिता पितामहश्चैव तथैव प्रपितामहः त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः
तेभ्यः पूर्वतरा ये ते प्रजावंतः सुखैधिताः ते तु नांदीमुखा नांदी समृद्धिरभिधीयते यतश्च नित्यं प्रत्यब्दं
कर्तव्यं प्रत्यब्दमित्युक्तत्वात् अत्र मातामह्याद्यपि कार्याः पूज्यं ते पितरो यत्र तत्र मातामहा अपीति
बौधायनोक्तेः अत्र पितृशब्दस्य जनकपरत्वेन बहुवचनविरोधनिष्ठायां मातृश्राद्धेन दापत्तिः
इष्टापत्तेः अत्र पिंडपातनिषेधापवादः पौर्णमासीषु सर्वासु वर्जयेत्पिंडपातनं वर्जयित्वा प्रौ-
ष्ठपदीं यथादर्शस्तथैव सेति ॥ निर्णयदीपे गार्ग्योक्तेः अथात्र सपिंडकाभ्युदयिकश्राद्धप्रयोगः
सच देशाचारपरिगृहीतस्वगृह्योक्तविधिना कार्यः ॥ सपिंडकाभ्युदयिकश्राद्धम् ॥

अथ प्रयोगः तत्र दक्षिणोत्तरक्रमेण द्वादशस्थानेषु प्रत्येकं आसादितद्रव्यं ज्वालितप्रदीपदे
शमागत्य आचम्य प्राङ्मुख उदङ्मुखो वा उपविशेत् सव्येन सर्वं कर्तव्यं अत्र जव एव कुशाः ति
लकार्ये यवाः कर्तव्याः ॐ अपवित्रः पवित्रो वेत्यादिना पुंडरीकाक्षः पुनात्विति आर्द्रीय वस्त्रं निषिं
चेत् कुशोदकेन ततः कुशयवजलान्यादाय ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामही
नां अमुकामुकदेवीनां नांदीमुखीनां तथामुकगोत्राणां पितृपितामहप्रपितामहानां अमुकामुक
शर्म्मणां नांदीमुखानां तथामुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुक
शर्म्मणां नांदीमुखानाममुकगोत्रस्यामुकस्य कर्तव्यामुककर्मनिमित्तकमाभ्युदयिकश्राद्धम
हं करिष्ये इति संकल्पं कुर्यात् ॥ ततो गायत्रीं देवताभ्य इति त्रिर्जपेत् ॥

ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां नांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा इदमासनं वो नमः ॥ इति कुशत्रयरूपं पवित्रमासनं दक्षिणतः आरभ्य उत्तरेण । एवं यथोत्तरं ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्म्मणां नांदीमुखानामाभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा इदमासनं वो नमः ॐ अद्यामुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्म्मणां नांदीमुखानामाभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा इदमासनं वो नमः ॐ अद्यामुकगोत्रे मातरमुकदेवि नांदीमुखि आभ्युदयिकश्राद्धे इदमासनं ते नमः एवं पितामहीप्रपितामहीभ्यामासनं दद्यात् । ततः ॐ अद्यामुकगोत्र पितरमुकशर्म्मन् नांदीमुखाभ्युदयिकश्राद्धे इदमासनं ते नमः एवं पितामहप्रपितामहयोरपि ॐ अद्यामुकगोत्र मातामहामुकशर्मन् नांदीमुखाभ्युदयिकश्राद्ध इदमासनं ते नमः एवं प्रमातामहवृद्धप्रमातामहयोरपि ततः आवाहनं ॐ विश्वान्देवानावाहयिष्ये इत्युक्त्वा ॐ विश्वेदेवास आगत शृणुता म इमं हवं इदं बर्हिर्निषीदत इत्यावाह्य ॐ यवोसि यवयास्मद्द्वेषो यवयारातीरिति देवपात्रेषु यवान्विकीर्य्य ॐ विश्वेदेवाः शृणुतेमं हवं ये अन्तरिक्षे य उप द्यवि ष्ठ ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वं ॐ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते इति पठित्वा ॥ ततः ॐ पितॄनावाहयिष्ये इत्युक्त्वा ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि ॥

इति पितॄनावाह्य

ॐ अपहता असुरा रक्षांसि वेदिषद इति मात्रादिपात्रेषु यवान्विकीर्य्य ॐ आयन्तु नः पितर इति पठित्वा ततोर्घ्यकरणं तत्र देवपूर्वकं सर्वेषु ॐ शन्नोदेवीरिति मंत्रेण जलं क्षिपेत् ततो देवार्घ्यपात्रेषु ॐ यवोसि इति यवान्विकीर्य्य मात्रादिपात्रेषु ॐ यवोसि सोमदेवत्यो गोसवो देवनिर्मितः प्रयत्नमद्भिः पृक्तः पुष्ट्या नांदीमुखान् पितॄन् लोकान्प्रीणयाहिनः स्वाहा इति मंत्रेण यवान् क्षिप्त्वा ततः प्रत्येकं गंधपुष्पाणि क्षिपेत् ततः प्रथमं देवार्घ्यपात्रं वामहस्ते कृत्वा तत्रस्थ पवित्रं भोजनपात्रे निधाय तदुपरि किंचिदुदकं दत्त्वा ॐ या दिव्या इति पठित्वा कुशयवजलान्यादाय ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां नांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा एष वो हस्तार्घ्यो नमः एवं पित्रादिश्राद्धदेवेभ्यो मातामहादिश्राद्धदेवेभ्योपि दद्यात् ततो मातुरर्घ्यपात्रमादाय पूर्ववत् या दिव्या इति पठित्वा कुशादीन्यादाय ॐ अद्यामुकगोत्रे मातरमुकदेवि नांदीमुखि आभ्युदयिकश्राद्धे एष ते हस्तार्घो नमः एवं पितामहीप्रपितामह्योरपि दद्यात् ततः पितुर्घ्यपात्रमादाय सर्वं पूर्ववत्कृत्वा कुशादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् नांदीमुखाभ्युदयिकश्राद्ध एष ते हस्तार्घो नमः एवं पितामहादिपंचभ्यो दद्यात् ततो वक्ष्यमाणजलपवित्रयुतं प्रथमं देवार्घ्यपात्रमादाय ॐ विश्वेभ्यो देवेभ्यः स्थानमसीति देवासनदक्षिणपार्श्व उत्तानं स्थापयेत् एवमपरदेवार्घ्यपात्रद्वयं तत्तदासनदक्षिणभागे प्रत्येकं स्थापयेत् ततः पितामहीप्रपितामह्यर्घ्यपात्रद्वयस्थितं पवित्रं भोजनपात्रोपरि धृत्वा दक्षिणकरेणादाय ॐ मातृभ्यः स्थानमसीति मात्रासनवामभागे न्युब्जीकुर्य्यात् एवमेव पित्रार्घपात्राणां मेलनं कृत्वा पित्र्यासनवामभागे ॐ पितृभ्यः स्थानमसीति न्युब्जीकरणं ततो गंधादिदानं ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां नांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा एतानि गंधपुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि वो नमः एवं पित्रादिदेवेभ्यो मातामहादिदेवेभ्यश्च दद्यात् ततः ॐ अद्या-

मुकगोत्रपितुरमुकशर्मन्नांदीमुखाभ्युदयिकश्राद्धपत्तानिगंधपुष्पधूपदीपतांबूलयज्ञोपवी-
तवासांसितेनमः एवंपितामहादिपंचभ्योपिदद्यात् ततपात्रमर्घासनसहितंचतुष्कोणमंड-
लंकुर्यात् ततःसजलेपृष्टकादौहस्तेनैवसघृतमन्नमादाय ॐअग्नयेकव्यवाहनायस्वाहा
इत्याहुतिद्वयंजुहुयात् सोमायपितृमतेस्वाहा इत्याहुतिद्वयंजुहुयात् ततोपसव्यंकृ-
त्वादक्षिणामुखःपातितवामजानु·मोदकतिलजलान्यादाय ॐयदमन्नमेतत्स्वामिपितृभ्यो
नमः इतिभूमिनेकिंचिदन्नंदद्यात् पिंडार्थंकिंचिदवशेषयेत् ततोन्यदन्नंयथासंभवंसर्वत्र
परिविष्यघृतंजलंचततोपनीयपात्रमालभेत् तत्रक्रमः उत्तानपाणिभ्यांदेवपात्रंस्पृष्ट्वा
ॐपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेअमृतेअमृतंजुहोमिस्वाहा इतिपठित्वा ॥
ॐइदमन्नंविचक्रमेत्रेधानिदधेपदंसमूढमस्यपांसुरेकृस्वहव्यरक्षमदीयं इतिपठित्वा
इदमन्नमित्यन्ने ॐइमाआपःइतिजले ॐइदमाज्यइतिघृते ॐइदंहविरितिपुनरन्नेद-
क्षिणांगुष्ठमारोप्य ॐयवोसियवयास्मद्द्वेषोयवयारातीरिति यवान्विकीर्य कुशादीन्यादा
य ॐअद्यामुकगोत्राणांमातृपितामहीप्रपितामहीनां अमुकामुकदेवीनांनांदीमुखीना-
माभ्युदयिकश्राद्धसंबंधिनोविश्वेदेवाइदमन्नंसोपकरणंवोनमः यद्येकमेवपात्रंभवति
तदावामेनपाणिनापात्रमत्यजन्नेव ॐइदंविष्णुरित्यादिपठित्वा यवक्षेपपर्यंतंकृत्वा
कुशादीनानादायपित्राद्युल्लेखेनपित्रादिदेवेभ्योपित्रमुत्सृजेत् एवमेवमातामहादिदेवेभ्यः
भिन्नपात्रपक्षेपृथिवीतेपात्रमित्यादीनांसर्वेषामावृत्तिः ततोमात्रपात्रमुत्तानाभ्यामेवपा-
णिभ्यांस्पृष्ट्वा ॐपृथिवीतेपात्रमित्यादि ॐइदंविष्णुरित्यादिपठित्वा ॐकृष्णकव्यमिदंरक्षमदीयं
ॐइदमन्नमित्यन्नेदक्षिणांगुष्ठंनिवेश्य ॐअपहताअसुरारक्षांसिवेदिषद ॥
इमन्नोपरियवान्विकीर्य ॐअद्यामुकगोत्रेमातरमुकदेविनांदीमुखिश्राभ्युदयिकश्रा-
द्धइदमन्नंसोपकरणंतेनमः एवंपात्रालंभनादिकं प्रत्येकंपितामहीप्रपितामहीभ्याम-
पिदद्यात् एवंपितृपात्रमालभ्य ॐपृथिवीतेइत्यादिपठित्वा पूर्ववत्सर्वंकृत्वा ॥
ॐअद्यामुकगोत्रपितुरमुकशर्मन्नांदीमुखाभ्युदयिकश्राद्धइदमन्नंसोपकरणंतेनमः
इतिपित्रेन्नमुत्सृजेत् ॥ एवंपितामहादिपंचभ्योन्नमुत्सृजेत् ततःप्रांजलिः ॥
ॐअन्नहीनंइत्यादिजपेत् दर्भेषूपविश्यगायत्रींत्रिर्जपित्वा ॥ ॐमधुमधुमध्विति मधुवाता
इत्यादिऋचंजपेत् ॥ पितृमंत्रान् ॐउदीरतामवरइत्यादीन् जपेत् अन्यानितुपुरु
षसूक्तादीनिपवित्राणिजपेत् ततःप्रागग्रकुशत्रयंभूमावास्तीर्य्यजलेनप्रोक्ष्यजलप्रोक्षितं
सयवघृतमन्नंकुशादिना अनग्निदग्धायेजीवायेप्रदग्धाःकुलेमम भूमौदत्तेनतृप्यंतुतृप्ता-
यांतुपरांगतिं इतिमंत्रेणकुशोपरि अन्नंविकरेत् ॥
ततआचम्यहरिंस्मृत्वागायत्रींत्रिर्जपेत् चतुरस्रांपिंडयोग्यभूमिंपरिष्कृत्यउत्तरोत्तरक्रमे-
णस्थानत्रयेप्रादेशमात्रंपरिमायतत्रप्रागग्रारेखांदर्भपिंजुलीमूलेन ॐअपहतेत्यादिकुर्या
त् प्रत्येकंरेखात्रयोपरि ॐयेरूपाणिइतिअंगारान् भ्रामयेत् तदुपरिप्रत्येकंकुशत्रयमास्ती
र्य इतिजपित्वाप्रत्येकमवनेजनंदद्यात् ॥ तत्रक्रमः यवजलगंधपुष्पैर्नवपात्राणिपूर-
यित्वाएकंपात्रंवामहस्तेकुशादीन्यादाय ॥ ॥ ॐअद्यामुकगोत्रेमातरमुकदेविनांदीमुखि
आभ्युदयिकश्राद्धपिंडस्थानेअत्रावनेनिक्ष्वतेनमः ॥ इतिसर्वदक्षिणकुशत्रयमूलमात्रे
ऽवनेजनंदद्यात् किंचित्जलमवशेषयेत् एवमेवपात्रांतरमादाय तत्कुशत्रयमध्येपि-

तामह्यै अवनेजनं दद्यात् तत्कुशत्रयाग्रे प्रपितामह्यै अवनेजनं दद्यात् ततश्चतुर्थमादाय ॐअ
द्यामुकगोत्र पितरमुकशर्मन् नांदीमुखाभ्युदयिकश्राद्धपिंडस्थाने अत्रावनेनिक्ष्व तेनमः ॥
इति सर्वदक्षिणकुशत्रयमूलपित्रेऽवनेजनं दद्यात् किंचिज्जलमवशेषयेत् एवं पितामहप्रपि
तामहयोः पिंडस्थाने वनेजनं दद्यात् एवमेव पात्रांतरमादाय ॐअद्यामुकगोत्र मातामहामुक
शर्मन् नांदीमुखाभ्युदयिकश्राद्धपिंडेऽत्रावनेनिक्ष्व तेनमः इत्यपरकुशत्रयमूले मातामहाया-
वनेजनं दद्यात् एवं प्रमातामहवृद्धप्रमातामहयोर्दद्यात् ततो यवदधिबदरद्रव्यमिति मिश्रिता-
न्नेन पिंडान्निर्माय एकपिंडं कुशादौ आदाय ॐअद्यामुकगोत्रे मातरमुकदेवि नांदीमुखि आभ्यु-
दयिकश्राद्धे एष ते पिंडो नमः इति तद्वनेजनस्थाने पिंडं दद्यात् एवमेव पितामहीप्रपितामही
भ्यां द्वितीयावनेजनस्थाने पिंडं दद्यात् ततश्चतुर्थपिंडमादाय ॐअद्यामुकगोत्र पितरमुकशर्मन्
नांदीमुखाभ्युदयिकश्राद्धे एष ते पिंडो नमः एवं पितामहप्रपितामहयोः ततः सप्तमं पिंडमादा
य ॐअद्यामुकगोत्र मातामहामुकशर्मन् नांदीमुखाभ्युदयिकश्राद्ध एष ते पिंडो नमः ॥
इति तद्वनेजनं दद्यात् एवं प्रमातामहवृद्धप्रमातामहयोर्दद्यात् ततो दर्भमूले करं प्रोंछ्य
आचम्य हरिं स्मृत्वा अत्र मातरो मादयध्वं यथाभागमावृषायध्वं इति पठित्वा उदङ्मुखीभूय श्वासं
नियम्य तेनैव यथासुखं परावर्तयन् ॐअमीमदंत यथाभागमावृषायिषत इति जपेत् ॥
एवं अत्र पितरो यथाभागमावृषायध्वं इति जपित्वा ॥
उदङ्मुखीभूय श्वासं नियम्य तेनैव यथासुखं परावर्तयन् ॐअमीमदंत इत्यादि जपेत् ॥
ततोऽवनेजनावशिष्टजलेन प्रत्यवनेजनं दद्यात् ॥ तत्क्रमः ॐअद्यामुकगोत्रे मातरमुक-
गोत्रे नांदीमुखाभ्युदयिकश्राद्धपिंडे अत्र प्रत्यवनेनिक्ष्व तेनमः इति तत्पिंडोपरि दद्यात् ॥
एवं पितामहीप्रपितामहीभ्यां तथा ॐअद्यामुकगोत्र पितरमुकशर्मन् नांदीमुखाभ्युदयिक
श्राद्धे प्रत्यवनेनिक्ष्व तेनमः इति पिंडोपरि दद्यात् एवमेव तत्तत्पिंडोपरि पितामहादिपंचभ्यो दद्या-
त् ततो नीवीं विस्रस्याचम्य हरिं स्मृत्वा सव्यमादाय ॐ नमो वो मातरो रसाय नमो वो मातरो-
मन्यवे नमो वो मातरो नमो वो मातरो गृहान्नो मातरो दत्त सतो वो मातरो देष्म एतद्वासः ॥
इति मात्रादिपिंडत्रयोपरि प्रत्येकं सूत्रं दद्यात् ततः नमो वः पितर इत्यनेन मंत्रेण पित्रादिपिंड-
षट्कोपरि प्रत्येकं सूत्रं दद्यात् ततः कुशजलान्यादाय ॐअद्यामुकगोत्रे मातरमुकदेवि नांदी-
मुखाभ्युदयिकश्राद्धे पिंडे एतत्ते वासो नमः ॥ एवं पितामहीप्रपितामह्योः एवं पितामहादी
नां पंचानां सूत्रमुत्सृजेत् ततो गंधपुष्पधूपदीपतांबूलानि प्रत्येकं पिंडमभ्यर्च्य ॐ शिवा आपः
संत्विति जलं ॐ सौमनस्यमस्त्विति पुष्पाणि ॐ अक्षतं चारिष्टमस्त्विति तंडुलान् प्रत्येकं पात्रे-
षु निक्षिप्य कुशादीनादाय ॐअद्यामुकगोत्रायां मातुरमुकदेव्या नांदीमुख्याभ्युदयिकश्राद्ध-
दत्तैतदन्नपानादिभिः प्रीयतां इत्यक्षय्योदकं दद्यात् एवं पितामह्याः प्रपितामह्याश्चाक्षय्योद-
कं ॐअद्यामुकगोत्रस्य पितुरमुकशर्मणो नांदीमुखस्याभ्युदयिकश्राद्धे दत्तैतदन्नपानादिभिः
प्रीयतां इति पित्रे एवं पितामहादिपंचभ्योऽक्षय्योदकं दद्यात् ॥ ततः ॐअघोरा मातरः सं-
त्विति मातृपिंडोपरि पूर्वाग्रां जलधारां दद्यात् एवं पितामहीप्रपितामह्योः ततः ॐअघोराः पि-
तरः संत्विति पित्रादिपिंडषट्कोपरि जलधारां दद्यात् ततः ॐ गोत्रं नो वर्धतां दातारो नोऽभिवर्धं-
तां वेदाः संततिरेव च श्रद्धा च नो मा व्यगमद् बहुदेयं च नोऽस्त्विति अन्नं च नो बहु भवेदतिथींश्च लभेमहि
याचितारश्च नः संतु मा च याचिष्म कंचन एताः सत्या आशिषः संतु इत्याशीः प्रार्थयन् सपवित्रकुशा

त्रयाणि प्रत्येकं मात्रादिपिंडत्रये मातामहादिपिंडत्रये दत्वा ॐऊर्जं वहंतीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे मातॄः इति मात्रादिपिंडोपरि दक्षिणाग्राजलधारां दद्यात् ततस्तथैव ऊर्जं वहंतीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितॄन् इति पित्रादिपिंडषट्कोपरि दक्षिणाग्रां जलधारां दद्यात् ततः पिंडेनाघ्रायोत्थाप्य पिंडाधारकुशान्चुल्मकं वह्नौ क्षिपेत् अर्घपात्राण्युत्तानीकृत्य दक्षिणां दद्यात् दक्षिणाद्रव्यं च फलमूले फलमूलं वा प्रत्येकं तत्र क्रमः ॐ अद्यामुकगोत्राणां मातृपितामही प्रपितामहीनाममुकामुकदेवीनां नांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिना विश्वेषां देवानां कृते तच्छ्राद्धप्रतिष्ठार्थमिमे फलमूले वनस्पति दैवते यथा नाम गोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजेत् एवं पित्रादिश्राद्धसंबंधिदेवताश्राद्धदक्षिणां मातामहादिश्राद्धसंबंधि विश्वेदेवश्राद्धदक्षिणां दद्यात् ॥ ॥ ॐ अद्यामुकगोत्राया मातुरमुकदेव्या नांदीमुख्याः कृते तदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमे फलमूले वनस्पतिदैवते इत्यादि अद्यामुकगोत्रस्य पितुरमुकशर्मणो नांदीमुखस्य कृते तदाभ्युदयिकश्राद्धदक्षिणां दद्यात् ॐ वाजे वाजे इत्यादिना मात्रादिविसर्जनं विश्वेदेवाः प्रीयंतामिति देवविसर्जनं ततः ॐ देवताभ्य इति त्रिर्जपेत् दीपनिर्वापणम् श्राद्धीयद्रव्य प्रतिपत्तिः ॥

इत्याभ्युदयिकश्राद्धविधिः ॥

इत्याभ्युदयिकश्राद्धविधिः ॥ मध्याह्नस्नानं विधाय संध्यां कृत्वा तर्पणं विधाय ॥

अथ संकल्पश्राद्धं अपराह्णव्यापिन्यां मध्याह्नस्नानं विधाय संध्यां कृत्वा ... श्राद्धस्थले गत्वा दीपं प्रज्वाल्य आचम्य शुक्लांबरधरं विष्णुमिति विघ्नं नमस्कृत्य यं ब्रह्मवेदांतविदो वदंति परं प्रधानं पुरुषं तथान्ये विश्वोद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्नविनाशनाय अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरैरपि सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः स्ववामभागे कमपात्रस्थापनं भूमौ त्रिकोणं चक्रं लिखित्वा आसनं आसने पात्रं पात्रे पवित्रं ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः शन्नो देवीति जलं ॥ ॐ यवोसीति यवान् ॥ ॐ शन्नो देवीरभिष्टय आपो भवंतु पीतये शंयोरभिस्रवंतु नः ॐ यवोसि यवयास्मद्द्वेषो यवयारातीर्दिवे त्वांतरिक्षाय त्वा पृथिव्यै त्वा शुंधंतां लोकाः पितृषदनाः पितृषदनमासीद ॥ तिलोसीति तिलान् तिलोसि सोमदेवत्यो गोसवो देवनिर्मितः प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान् प्रीणाहि नः स्वाहा गंधपत्रिकाक्षतादिन्यूनानि क्षिप्य तेन जलेन आत्मानं प्रोक्ष्य संकल्पश्राद्धसामग्रीः संप्रोक्ष्य प्राणानायम्य पुंडरीकाक्षस्मरणं विधाय अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा यः स्मरेत्पुंडरीकाक्षं स बाह्याभ्यंतरः शुचिः ॐ पुंडरीकाक्षाय नमः ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥ सप्तव्याधा दशार्णेषु मृगाः कालंजरे गिरौ चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे तेपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं गदाधरं मनसा च पितॄन् ध्यात्वा संकल्पश्राद्धमारभेत् अपसव्यं ॐ सोमस्य नीवीरसि विष्णोः शर्मासि शर्म यजमानस्येंद्रस्य योनिरसि सुसस्याः कृधि इति वाक्यात् नीवीबंधनं अथ दिग्बंधनं प्राचीं रक्षंतु मे दिशं तथा बर्हिषदः पांतु याम्यां ये पितरः स्थिताः प्रतीचीमाज्यपाः पांतु उदीचीमपि सोमपाः रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे तिला रक्षंतु दितिजान् दर्भा रक्षंतु राक्षसान् पंक्तिं वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः सव्यं ॐ यद्देवा देवहेडनं देवासश्चकृमा वयं अग्निर्मा तस्मादेनसो विश्वान्मुंचत्वंहसः

हसः १ अदितिर्वायदिमुक्रमेनाथंसिचकिमावयं वायुर्मातस्मादेनसोविश्वान्मुंचतुध्वं हसः २ यदित्यायपदिस्वमपनाथंसिचक्रमावयं सूर्योमातस्मादेनसोविश्वान्मुंचत्वंध्वं हसः गायत्र्या श्रद्धादिदृष्टिदोषनिपातात्याकादीनांपवित्रतास्तु प्रतिज्ञा ॐविष्णु ३ इत्यादिदेशकालौसंकीर्त्य अपसव्यं अमुकनामसंवत्सरेअमुकायनेअमुकऋतौअमुमासेअमुकपक्षेअमुकतिथौअमुकगोत्राणांअस्मत्पितृपितामहानांअमुकशर्मणांसपत्नीकानांवसुरुद्रादित्यस्वरूपाणांतथाअमुकगोत्राणांअस्मन्मातामहप्रमातामहवृद्धप्रमातामहानांअमुकामुकशर्मणांसपत्नीकानांवसुरुद्रादित्यस्वरूपाणांअमुकसंज्ञकविश्वेदेवपूर्वकंसंकल्पश्राद्धंकरिष्येॐकुरुष्व ॥ सव्यम् विश्वेदेवाआसनं यवजलकुशाद्वयंगृहीत्वा अद्येह॰ अमुकगोत्रपित्रादित्रयश्राद्धसंबंधिनां तथामुकगोत्रमातामहादित्रयश्राद्धसंबंधिनां पुरूरवोमाद्रवसंज्ञकानां विश्वेषांदेवानांइदमासनमस्तु ॐभूर्भुवः स्वः इदमासनमास्यतांआस्ये ॥ अपसव्यम् तिलमोटकजलं गृहीत्वा अद्येहअमुकगोत्राणांअस्मत्पितृपितामहप्रपितामहानांअमुकशर्मणांसपत्नीकानांवसुरुद्रादित्यस्वरूपाणांसंकल्पश्राद्धेइदमासनमस्तु ॐभूर्भुवःस्वःइदमासनमास्यतांआसे ॥ अद्येह॰ अमुकगोत्राणांअस्मन्मातामहप्रमातामहवृद्धप्रमातामहानांअमुकशर्मणांसपत्नीकानां वसुरुद्रादित्यस्वरूपाणांइदमासनमस्तु ॐभूर्भुवःस्वः इदमासनमास्यतां आसे ॥ सव्यं विश्वेदेवार्चनविधौ अत्र २ सुगंध नमोस्त्वनंतायेतिपूजनं धूपदीपौ ॥ यवकुशानादाय॰ अद्य॰ अमुकगोत्रपित्रादित्रयः श्राद्धसंबंधिनः तथा अमुकगोत्रमातामहादित्रयश्राद्धसंबंधिनः विश्वेदेवार्चनविधौ इमानिगंधाक्षतपुष्पधूपदीपादीनिनिधाय विभागशोनमः स्वाहा विश्वेदेवार्चनविधेः सर्वंपरिपूर्णम् ॥ अपसव्यं अत्र २ सुगंध पितृभ्योपिपूजनं धूपदीपौतिलामोटकं अद्येहअमुकगोत्राः अस्मत्पितृपितामहप्रपितामहाः अमुकामुकशर्माणः सपत्नीकावसुरुद्रादित्यस्वरूपाः ॥ अथामुकगोत्राः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः अमुकामुकशर्माणः सपत्नीकावसुरुदित्यस्वरूपाः अर्चनविधौ इमानिगंधाक्षतपुष्पधूपदीपादीपयथाविभागशः स्वधा ॥ सव्यं अर्चनविधेः सर्वंपरिपूर्णमस्तु अस्तुपरिपूर्णं गंधादिनादानाचमने स्वयंवाचमेत परिवेषणार्थंभस्मनारेखाकरणं यथाचक्रायुधोविष्णुस्त्रैलोक्यंपरिरक्षति एवंमामंडभस्माकसर्वभूतानिरक्षतु पत्रावलिःसंस्थाप्य ॥ ॐमधु ३ अथोमुखाभ्यांपाणिभ्यांपात्रमालभ्यजपतिपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखे अमृतेअमृतंजुहोमिविष्णोहव्यंरक्षयवान्विकीर्य अपहताअसुरारक्षांसिवेदिषत इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं समूढमस्यपांसुरे अंगुष्ठग्रहणं इदमन्नंइमाआपः इदमाज्यंइदंशाकादिकंसर्वंहविः ततःकुशयवजलान्यादाय अद्येह॰ अमुकगोत्रअस्मत्पित्रादित्रयश्राद्धसंबंधिभिः तथाअमुकगोत्रअस्मन्मातामहादित्रयः श्राद्धसंबंधिभ्यः पुरूरवोमाद्रवसंज्ञकेभ्योविश्वेभ्योदेवेभ्यः अस्मिन्श्राद्धेइदमन्नंमोदकंसोपस्करघृतायुपस्करसहितंयत्परिविष्टपरिवेष्यमाणंब्राह्मणस्यतृप्तिपर्याप्तंअमृतस्वरूपंनिषद्धंब्राह्मणायदीयमानमन्नंचयथाविभागंवानमः विश्वेभ्योदेवेभ्योनमः यथासुखेनभुंजध्वंभुंजयामि ॥

अपसव्यं ॐमधु ३ पात्रमालभ्य उत्तानाभ्यांपाणिभ्यांजपतिपृथिवीतेपात्रंद्यौः विलोकव्यंरक्षतिलान्विकीर्य अपहता॰ इदंविष्णुर्वि॰ अंगुष्ठग्रहणं इदमन्नं एवंव्रत ॥

सर्वे कव्यं अद्येह० अमुकगोत्रेभ्यः अस्मत्पितृपितामहप्रपितामहेभ्यः अमुकशर्मभ्यः सपत्नीकेभ्यो व-
सुरुद्रादित्यस्वरूपेभ्यः अस्मिन्श्राद्धे इदमन्नं० यथाविभागं वः स्वधा पित्रादिभ्यो जपतिष्ठेत्० विसोक-
व्यं रक्ततिलानविकीर्य अपहता० इदंविष्णुर्वि०। अंगुष्ठग्रहणं इदमन्नं सर्वे कव्यं० अद्येह० अ-
मुकगोत्रेभ्यः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहेभ्यः अमुकामुकशर्मभ्यः सपत्नीकेभ्यो-
वसुरुद्रादित्यस्वरूपेभ्यः अस्मिन्श्राद्धे इद० यथाविभागं वः स्वधा मातामहादिभ्यो नमः यथासु-
खेनभुंजयामि सव्यं ॐ येचेह पितरो येचनेह यांश्च विद्मयांच न प्रविद्मत्वं वेत्थ यति तेजातवेदः स्व-
धाभिर्यज्ञं सुकृतं जुषस्व ॥ इति सर्वेभ्यो जलदानं ॥

अपसव्यं ॐ मधुवाता ऋतायते मधुक्षरंति सिंधवः माध्वीर्नः सन्त्वोषधीः मधुनक्तमुतोषसो म-
धुमत्पार्थिवं रजः मधुद्यौरस्तु नः पिता मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्यः माध्वीर्गावो भवं-
तु नः ॐ मधु ३ विकरदानं सर्वान्पाकजातान् एकीकृत्य वारिणाप्लाव्य कुशोपरि विकरेत् यथा
असंस्कृतप्रमीतानां त्यागिनां कुलभागिनां उच्छिष्टभागधेयानां दर्भेषु विकिरासनं अनेन दक्षिणा-
ग्रान्कुशान्निक्षिप्य पाकमादाय अग्निदग्धाश्च येजीवा येप्यदग्धाः कुले मम भूमौदत्तेन तृप्यंतु तृप्ता
यांतु परांगतिम् येषांनपचतेमाता येषांनपचतेपिता उच्छिष्टं येचकांक्षंति तेभ्योन्नं दत्तमक्षयं उ-
च्छिष्टभागधेयेभ्यो नमः इति संपूज्य ॥ सव्यं हस्तौपादौ प्रक्षाल्य आचम्य श्राद्ध-
स्थले गत्वा विकरे द्विराचमनं विश्वेदेवब्राह्मणाय सकृत्सकृत् मधुवाताइतिपठित्वा सव्यम्
भोजब्राह्मणाअस्मिन्पाकमध्ये यत्किंचिद्रोचते तत्प्रतिगृह्यतां तृप्तास्थ तृप्ताःस्मः शेषमन्नं इष्टैः
सह भुज्यतां अपसव्येन अक्षय्योदकदानं अद्येह० अमुकगोत्रस्य अस्मत्पितुः अमुकशर्मणः
सपत्नीकस्य वसुस्वरूपस्य अस्मिन्संकल्पश्राद्धे इदमन्नोदकादि यद्दत्तं तदक्षयमस्तु अस्तु अ-
क्षय्यं तथा अमुकगोत्रस्य पितामहस्य अमुकशर्मणः सपत्नीकस्य आदित्यस्वरूपस्य इदम०
तथा अमुकगोत्रस्य अस्मन्मातामहस्य अस्मिन्मातामहस्य अमुकशर्मणः सपत्नीकस्य वसुरूप-
स्य इदमन्न० अद्येह० अमुकगोत्रस्य प्रमातामहस्य अमुकशर्मणः सपत्नीकस्य रुद्रस्वरूपस्य इद-
मन्नं० तथा अद्येह० अमुकगोत्रस्य अस्मद्वृद्धप्रमातामहस्य अमुकशर्मणः सपत्नीकस्य आदित्य
स्वरूपस्य इदमाचमनं ॥ सव्यं आशीर्ग्रहणं अघोराः पितरः संतु गोत्रं नो वर्द्धतां २ दातारो-
नोवर्द्धंतां २ वेदर्वर्द्धंतां २ संततिर्वर्द्धतु श्रद्धाचनोमाव्यगमत् मागा बहुदेयं च नोअस्तु अन्नं
चनोबहुभवेत् भवतु अतिथींश्चलभेमहि लभध्वं याचितारश्चनः संतु मा च याचिष्म कं च नमा याचेष्म
एताः सत्या आशिषः सत्याः संतु पितॄणांप्रसादोस्तु दक्षिणा देशकालौसंकीर्त्य अद्येह० अमुकगोत्रा-
णां अस्मत्पितृपितामहानां अमुकामुकशर्मणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां तथा अमु-
कगोत्राणां अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानां अमुकामुकशर्मणां सपत्नीकानां वसुरु-
द्रादित्यस्वरूपाणां कृतैतत्संकल्पश्राद्धकर्मणः सांगतासिद्ध्यर्थं इमां रजतनिष्क्रयिणीं दक्षिणां श्राद्ध
भोक्तृभ्यां ब्राह्मणाभ्यां दास्ये ॐ तत्सन्नमम कुशयवानादाय अद्येह० अमुकगोत्रपित्रादित्रयश्रा
द्धसंबंधिनां तथा अमुकगोत्र अस्मन्मातामहादित्रयाणां श्राद्धसंबंधिनां पुरूरवोमाद्रवसंज्ञिकानां
प्रीतये कृतस्यास्य संकल्पश्राद्धार्थं वैश्वदेवकर्मणः सांगतासिद्ध्यर्थं इमां सुवर्णनिष्क्रयिणीं दक्षि-
णां श्राद्धभोक्त्रे ब्राह्मणाय दास्ये ॐ पितरः एवं ॐ स्वस्ति भवंतो ब्रुवंतु तिलकं सत्यानुष्ठानसंपन्नाः
सर्वदाः यज्ञबुद्धयः ॥ पितृमातृपराश्चैव संबंधाः कुलजा नराः देवताभ्यः पितृभ्यश्च मह-
योगिभ्य एव च नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ३ सप्तव्याधा दशार्णेषु मृगाः कालंजरे गिरौ

चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः प्रस्थिता दीर्घम
ध्वानं यूयं किमवसीदथ श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं गदाधरं मनसा च पितॄन्ध्यात्वा संकल्पश्रा-
द्धे विसर्जयेत् इदं मया कृतं संकल्पश्राद्धं विधिहीनं यत्कृतं तत्सुकृतमस्तु यन्न कृतं तत् श्रीविष्णोः
प्रसादाद्विश्वेषां देवानां ब्राह्मणवचनात्सर्वं परिपूर्णमस्तु अस्तु परिपूर्णम् ॥
अपसव्यं उत्तिष्ठेति पितॄन् विप्रासनं उत्थाप्य सव्यं विश्वेदेवाश्रासनं च उत्थाय ॐ उत्तिष्ठ ब्रह्म-
णस्पते देवयन्तस्त्वेमहे उपप्रियं तु मरुतः स्वधा नमः इन्द्राप्राशुर्भवा सचा अपसव्यं आमावाज
स्येति प्रदक्षिणीकृत्य ॐ आमा वाजस्य प्रसवो जगम्यादामा द्यावापृथिवी विश्वरूपे आमा गन्तं पितरं
मातरं चामा सोमो अमृतत्वेन गम्यात् नीवीं विस्रंस्य पाणिना दीपं निर्वाप्य सव्येन आचम्य यस्य
स्मृत्येति चतुर्भिश्च कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मना वा प्रकृतिस्वभावात् करोमि यद्य
त्सकलं परस्मै नारायणायेति समर्पयामि अनेन कर्मणा श्रीभगवान्यज्ञपुरुषः प्रीतोऽस्तु ॥

इति संकल्पश्राद्धम् ॥

अथाशक्ताय आसक्तस्य राजादेः संक्षेपतः संकल्पश्राद्धं तत्रादौ पुंडरीकाक्षः पुनात्विति विष्णुं स्मृत्वा
श्राद्धकाले गयां ध्यात्वेति ध्यानं ॥ गयागदाधराभ्यां नमः ॐ मद्येत्यादि अमुकगोत्रस्य अस्मत्पित्रा-
दित्रयस्यामुकामुकसंज्ञस्य वसुरुद्रादित्यरूपिणो मातामहादित्रयस्य च सपत्नीकस्य विश्वेदेव
पूर्वकं पार्वणश्राद्धं अथवैकोद्दिष्टं वा संकल्पविधिना हं करिष्ये देवताभ्यः पितृभ्यश्चेति जपि
त्वा ॐ मद्यामुकगोत्रस्यात्मपित्रादित्रयस्यामुकगोत्रस्य मातामहादित्रयस्य च मात्रादित्रयस्य मा-
तामह्यादित्रयस्य च संकल्पश्राद्धसंबंधिनां विश्वेषां देवानां श्राद्ध निमित्तं संपत्त्यर्थमिदं सदक्षिणमन्नं सो
पकरणं यथा नामगोत्राभ्यां ब्राह्मणाभ्यां दातुमहमुत्सृजे विश्वेदेवाः प्रीता भवंतु इति सव्येन
अपसव्यं कृत्वा ॐ मद्यामुकगोत्राणामस्मत्पितृपितामहानाममुकामुकशर्मणां तथा च मातृपि
तामही प्रपितामहीनां तथा चामुकगोत्राणां मातामह प्रमातामह वृद्धप्रमातामहानां सपत्नीकाना-
मक्षय्यतृप्तिहेतोः सांवत्सरिकमहालयपार्वणैकोद्दिष्टश्राद्धस्य समग्रफलप्राप्त्यर्थं इदं सिद्धान्नं पक्वा
न्नमामान्नं वा सदक्षिणं यथा नामगोत्रेभ्यो ब्राह्मणेभ्यो दीयमानमक्षय्यमस्तु स्वधा पितृभ्यः स्वधा
यिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः
अक्षन्नपितरोमदन्त पितरः पुत्रार्थं श्रीगयागदाधरौ प्रीयेतां गोत्रं नो वर्द्धतामित्याशीः प्रार्थनं ततः सव्यं
कृत्वा ॐ मद्यास्मत्पित्रादेः कृतस्यास्य संकल्पविधिश्राद्धस्य साङ्गुण्यार्थमिमं दक्षिणाद्रव्यं चंद्रसूर्या-
ग्निदैवतं यथानामगोत्राय ब्राह्मणाय तुभ्यमहं संप्रददे श्रीगयागदाधराभ्यां नमः ॥

इत्यति संक्षिप्तसंकल्पश्राद्धम्

अथ नित्यश्राद्धप्रयोगः आचम्य प्राङ्मुख उपविश्य वा उदङ्मुख उपविष्टः ॐ अपवित्रः पवित्रो वा
सर्वावस्थां गतोऽपि वा यः स्मरेत्पुंडरीकाक्षं स बाह्याभ्यंतरः शुचिरिति पठित्वा ॐ पुंडरीकाक्षः पुना-
त्विति कुशत्रयजलेन श्राद्धीयद्रव्याणि सिंचेत् ततः कुशत्रयतिलजलान्यादाय ॐ मद्यामुकगो-
त्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां नित्यश्राद्धमहं करिष्ये इति संकल्पं कुर्यात्
ततस्त्रिर्गायत्रीं जपित्वा ॐ देवताभ्य इति त्रिर्जपेत् ततोऽपसव्यं कृत्वा दक्षिणामुखः पातितवा-
मजानुर्मोटकतिलजलान्यादाय ॐ मद्यामुकगोत्रपितुरमुकशर्मन्नित्यश्राद्धे इदमासनं ते स्व
धेति तिलजलप्रोक्षितं मोटकरूपमासनं दक्षिणाग्रं पित्रे दद्यात् एवमेव पितामहादिभ्यः

प्रत्येकमासनमुत्सृजेत् ॐअपहताअसुरारक्षांसिवेदिषद इतिश्राद्धदेशे तिलान्विकीर्य
ॐआयंतुनःपितरइतिजपेत् ततः ॐअद्यामुकगोत्रपितरमुकशर्मन्नित्यश्राद्धे एतानिगंधपुष्प
धूपदीपतांबूलानितेस्वधा इतियथासंभवंपित्रेगंधादिकमुत्सृजेत् एवमेवपितामहादिभ्यो
ऽप्युत्सृजेत् ततोजलेनमंडलंचतुष्कोणमन्नपात्रस्यचतुर्दिक्षुकृत्वान्नपरिवेषणंकुर्यात् त-
तो मधुदत्वा ॐमधुवाताऋतायतेइति ॐमधुमधुमधितिमंत्रयेत् ततोन्नपात्रंव्यस्ताभ्या-
मधोमुखाभ्यांपाणिभ्यांस्पृष्ट्वा ॐपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेअमृतेऽमृतंजुहो
मिस्वाहा ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदंसमूढमस्यपांसुरे इतिजपित्वा वामहस्ते-
नान्नपात्रमत्यजन् ॐकृष्णकव्यमिदंरक्षमदीयमितिजपित्वा ॐइदमन्नं ॐइमाआपः
इदमाज्यं ॐइदंहविरिति अन्नघृतजलेषुपुनरन्नेपिदक्षिणांगुष्ठमारोप्य ॐअपहताअ
सुरारक्षांसिवेदिषद इत्यन्नोपरितिलान्विकीर्यमोटकादीन्यादाय ॐअद्यामुकगोत्रपितर
मुकशर्मन्नित्यश्राद्धइदमन्नंसोपकरणंतेस्वधेतिपित्रेन्नमुत्सृजेत् एवंपितामहादिपंच-
भ्योप्युत्सृजेत् ततोदर्भेष्वासीनः गायत्रीमधुवाताइतिऋचं ॐमधुमधुमधितिचजपेत्
ततःकृष्णायाजाइत्यादिऋचंपठेत् ततस्तिलान्भूमौक्षिप्त्वा ॐउदीरतामवरइत्यादिपित्र्यमं
त्रान् ॐसहस्रशीर्षेत्यादिपुरुषसूक्तं ॐआशुःशिशानेत्यादिकंप्रतिरथमन्यानिचपवित्राणि
यथाशक्तिजपेत् ॐनमस्तुभ्यंविरूपाक्षनमस्तेनेकचक्षुषे नमःपिनाकहस्तायवज्रहस्ताय
वैनमः इतिपठेत् ततः ॐअद्यामुकगोत्राणांपितृपितामहप्रपितामहानाममुकामुकशर्म
णांकृतेनित्यश्राद्धप्रतिष्ठार्थमेकाकिनीमूलरजतंचंद्रदैवतंयथानामगोत्रायब्राह्मणायद-
क्षिणांदातुमहमुत्सृजेत् इतिमोटकादिनादक्षिणांदद्यात् ॥ ततःसव्यंकृत्वा ॐदेवता-
भ्यःपितृभ्यः इत्यादित्रिः पठेत् ॐप्रमादात्कुर्वतांकर्म इतिपठित्वा विष्णुंस्मरेत् नित्यश्रा
द्धीयमन्नंब्राह्मणायप्रतिपादयेत् जलेवाक्षिपेत् ॥

इतिनित्यश्राद्धविधिः ॥

स्वस्तिश्रीरणवीरसिंहधरणीपालोवदान्याग्रणीर्नानाशास्त्रविचारसाररसिकस्सद्वृंदसंसेवकः
धर्माधर्मविभागकृद्रघुपतेःपादांबुजार्चारतोजीयात्पुत्रकलत्रमित्रसहितःसंपालयन्-
क्ष्मांचिरम् १ रणवीरसिंहभूपेशाकारितेकृत्यसागरे अभून्नभस्यकृत्यानांरत्नसमुच्च-
यः ॥२॥

इतिश्रीमत्सूर्यवंशावतंसरघुकुलतिलकश्रीरणवीरसिंहमहाराजकारितेकृत्यरत्ना
करेभाद्रपदमासकृत्यरत्नसमुच्चयःसमाप्तः ॥

शुभमस्तुसर्वजगताम्

ॐ श्रीगणेशाय नमः अथाश्विनमासकृत्यनिर्णयः ॥

कन्यार्कसंक्रमणात्पराः षोडशघटिकाः पुण्यकालः शेषं प्राग्वत् संक्रान्तिनिर्णये ज्ञेयं अत्र कृत्यं विष्णुः आश्विने सकले मासे घृतं प्रदायाऽश्विनौ पूजयित्वा रूपवान्भवति वामनपुराणे तिलास्तुरंगं वृषभं दधिताम्रायसादिकं प्रीत्यर्थं पद्मनाभस्य देयमाश्वयुजे नरैः आदिशब्देनाभीष्टद्रव्यपरिग्रहः भविष्यपुराणे कृत्वा वाश्वयुजे मासि विपुलं याम्यपर्वतं सुवर्णवस्त्रगंधाढ्यं सूर्यस्याग्रे निवेदयेत् सर्वैः समहायानैर्वरभोगसमन्वितैः वर्षकोटिसहस्राणि सूर्यलोके महीयते योवाप्याश्वयुजं मासमेकभक्तेन संक्षिपेत् प्रजावान्वाहनाढ्यश्च बहुपुत्रश्च जायते स्कंदपुराणे योपि वाश्वयुजं मासमेकभक्तेन संक्षिपेत् वाणिज्यं तु भवेत्तस्य कृषिपशुगणास्तथा विष्णुधर्मोत्तरे आश्विने घृतदानेन रूपवानभिजायते अत्र घृतग्रहणमुपलक्षणम् देवीपुराणे आश्विने सरघृतं पुण्यं स्नानदानादिकर्मसु नंदिपुराणे अथवाश्वयुजं मासं वर्जयेन्मांसभोजनं मासषट्ककृतं पुण्यं लभते नात्र संशयः मासषट्कं मांसवर्जजन्यं पुण्यं लभत इत्यन्वयः अत्र सौरमास एव ग्राह्यः कन्यास्थार्कस्य फलविशेषश्रवणात् अथ महालयो निर्णीयते स चाश्विनमासस्य कृष्णपक्षः कन्यास्थार्के महापुण्यप्रदः स च श्राद्धकरणे नित्यः कन्यास्थार्कं विनापि नित्य एव मलमाससंभवे कन्यास्थार्कस्य विरहात् तत्र पृथ्वीचंद्रोदये वृद्धमनुः आषाढीमवधिं कृत्वा पंचमं पक्षमाश्रिताः कांक्षंति पितरः क्लिष्टा अन्नमप्यन्वहं जलं अत्र कन्यार्कयोगे पुण्यफलमेवमाह शाकटायनिः कन्यास्थार्कान्वितः पक्षः सोऽत्यंतं पुण्य उच्यते अत्र विशेषमाह वृद्धमनुः मध्ये वा यदि वाप्यंते यत्र कन्यां व्रजेद्रविः स पक्षः सकलः श्रेष्ठः श्राद्धषोडशकं प्रति मार्कंडेयब्रह्मांडपुराणयोः कन्यागते सवितरि यान्यहानि तु षोडश क्रतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत् अत्र हेमाद्रिः षोडशत्वं चैवं व्याचख्यौ तिथिवृद्ध्या पक्षस्य षोडशादिनत्वे श्राद्धवृद्ध्यर्थमियमुक्तिः पूर्वः भाद्रपौर्णिमासहित इति द्वितीयः पक्षः आश्विनशुक्लप्रतिपत्सहितस्तृतीयः पक्ष इति अत्र केचित्षोडशश्राद्धपक्षविषयत्वेन षट्पक्षानाहुः यथा कृष्णप्रतिपदादि शुक्लप्रतिपदंत एकः प्रतिपदादिदर्शांतो द्वितीयः पंचम्यादिदर्शांतस्तृतीयः अष्टम्यादिदर्शांतश्चतुर्थः दशम्यादिदर्शांतः पंचमः एत एव चतुर्दशीवर्जिता दर्शांताः दशसप्तपंचतिथिपक्षा इति केचित् एकतिथिपक्षश्चेति षट् तत्र प्रथममाह शाकटायनिः नभस्यस्यापरे पक्षे तिथिषोडशकस्य यः कन्यागतान्वितश्चेत्स्यात्सकलः श्राद्धकर्मणीति केचिदिति संदिग्धं संदेहवचनं नभस्यस्येत्यमांतमासेन तिथिषोडशकस्यामावास्योत्तरां प्रतिपदमादाय देवलेनोक्तं अहः षोडशकं यत्तु शुक्लप्रतिपदा सह चंद्रक्षयाद्विशेषेण सा विदर्शात्मिका स्मृतेति पंचदशदशसप्तपंचतिथिपक्षविषयो ब्रह्मपुराणे अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने त्रिभागहीनं पक्षं वा त्रिभागं त्वर्धमेव वेति त्रिभागहीनं पंचम्यादि पक्षं प्रतिपदादि त्रिभागं दशम्यादि अर्धं त्वष्टम्यादि अत्र तृतीयो भागः त्रिभागः पक्षस्य तद्धीनत्वाद्यानां चतसृणां चतुर्दश्यभावर्जनं एवमर्धत्रिभागयोरपि चतुर्दशीवर्जनं पक्ष नभस्यस्यापरे पक्षे श्राद्धं कुर्याद्दिने दिने नैव नंदादिवर्जं स्यान्नैव वर्ज्या चतुर्दशीति वचनेन प्रतिपदादिपक्ष एव चतुर्दशीवर्जननिषेधादितरपक्षेषु तद्वर्जनप्राप्तेः नंदादिवर्जनं तु न भवति संख्याहानिप्रसंगात् अथापरपक्षः तत्र गौतमः श्राद्धं पितृभ्यो दद्यात्पंचम्यादिदर्शांतमष्टम्यादि दशम्यादि सर्वस्मिन्नेति एकदिनपक्षो नागरखंडे आषाढ्याः पंचपक्षे कन्यासंस्थे दिवाकरे यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवमिति अस्मिन्पक्षे नंदादिवर्जनमपि भवति अत्र तदपहृतौ करणाभावात् नंदादिवर्जनमाह नारदः नंदायां भार्गवीये

रोहिण्यां च त्रिजन्मसु रेवत्यां च मघायां च कुर्याद्दापरपाक्षिकमिति नंदातिथयः प्रतिपत्षष्ठ्येकादश्यः त्रिजन्म
नक्षत्राणि श्राद्धकर्तुर्जन्मनक्षत्रं दशममेकोनविंशतिनक्षत्राणि जन्मतारासंज्ञानि यत्र कर्तुश्च पुत्रदारा·
णां त्रिजन्मर्क्षाणि वर्जयेदिति क्वचिल्लिखितवचनं तद्यदि सांकर्यं तदेवं व्याख्येयं कर्तुस्तत्पुत्रस्य तद्दाराणां च त्रि
जन्मर्क्षाणि आद्यदशमैकोनविंशनक्षत्राणि यत्र दिने भवंति तद्दिने श्राद्धं वर्जयेदिति अन्यथा त्रिशब्दस्य ब·
हुवचनस्य च वैयर्थ्यापत्तेः केचित्तु त्रिजन्मानीत्यत्र जन्मनक्षत्रतः पूर्वोत्तरतश्च नक्षत्रेण त्रिजन्मनक्षत्राणीति
व्याख्यानं तत्पूर्वोत्तरनक्षत्रयोर्जन्मनक्षत्रवाच्यताभावान्मूललेखनाभावाच्चोपेक्षितं अन्यत्रापि श्राद्धनिषेध·
विषयः नंदास्वकाममत्याराभस्वभिपितृकालभे गंडे वैधृतिपाते च पिंडास्त्याज्याः सुतेप्सुभिरिति अस्येति·
सप्तमी कामेति त्रयोदशी आरो भौमः अभिपितृकालभानि कृत्तिकामघाभरण्याख्यानि नक्षत्राणि अत्रापि
पिंडदानग्रहणं श्राद्धोपलक्षणं एककल्पनालाघवात् अस्यापवादः प्रयोगपारिजातोदाहृतसंग्रहवचने अमा
यां तिभरण्यां च द्वादश्यां पक्षमध्यके तिथिवारं च नक्षत्रं योगं च न विचारयेदिति मासतिथिसमानजातीयाम
पि चतुर्दशी भिन्नायां तिथौ निषेधप्रयोजकयुक्तायामपि यावत्संभवं शिष्टाः महालयश्राद्धमाचरंति आधुनि
केषु ग्रंथेषु वचनान्यपि लिखितानि नागरखंडे आषाढ्याः पंचमे पक्षे कन्यासंस्थे दिवाकरे मृताहनि पितु
र्यो वै श्राद्धं दास्यति मानवः तस्य संवत्सरं यावत्संतृप्ताः पितरो ध्रुवं कात्यायनः या तिथिर्यस्य मासस्य मृताहे
तु प्रवर्तते सा तिथिः पितृपक्षे तु पूजनीया प्रयत्नतः तथा अशक्तः पक्षमध्ये तु करोत्येकदिने यदा निषि
द्धेपि दिने कुर्यात्पिंडदानं यथाविधि इति एतानि वचनानि महानिबंधेष्वदर्शनादनादरणीयानीति तथा
मार्कंडेयः कन्यागते सवितरि दिनानि नव पंच च पार्वणेन विधानेन श्राद्धं तत्र विधीयते यस्तु वैवाहितो मा
सान्सप्त जेष्ठादेशे वर्द्धे सपिंडः पिंडनिर्माणं मौंजीबंधे षडेव हीति विवाहानंतरं पिंडदाननिषेधो ज्योतिः
शास्त्रे पराशरेणोक्तः तस्यापवादः स्मृतिसंग्रहे महालये गयाश्राद्धे मातापित्रोर्मृतेहनि यस्य कस्यापि मर्त्यस्य·
सपिंडीकरणे तथा कृतोद्वाहोपि कुर्वीत पिंडनिर्वपणं सुत इति संन्यासिनां तु महालयश्राद्धं द्वादश्यां कर्त·
व्यं यतीनां च वनस्थानां वैष्णवानां तथैव च द्वादश्यां विहितं श्राद्धं कृष्णपक्षे विशेषत इति पृथ्वीचंद्रोदयोक्तेः
वायुपुराणेपि संन्यासिनोप्याब्दिकादि पुत्रः कुर्याद्यथाविधि महालये तु यच्छ्राद्धं द्वादश्यामेव तद्भवेदिति
इदं तु तेनैव कर्तव्यं मृताहं च सपिंडं च गयाश्राद्धं महालयं आपन्नोपि न कुर्वीत श्राद्धमामेन कर्हिचित्
इति स्मृतिदर्पणे गालवोक्तेः अथात्र देवताः तत्रायं तावत्संग्रहश्लोकः तातांबात्रितयं सपत्नजननी माता
महादित्रयं सस्त्रीस्त्रीतनयादितातजननीस्वभ्रातरः सस्त्रियः ताताम्बात्मभगिन्यपत्यधवयुग्जाया पिता
सद्गुरुः शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे अत्र महालयविधौ एते सपिंडकश्राद्धदानार्हाः
तथैतेषां पार्वणैकोद्दिष्टादि श्राद्धनिर्णयः पितरो यत्र पूज्यंते तत्र मातामहा अपि तथा च अन्वष्टकासु वृद्धौ
च प्रतिसंवत्सरं तथा महालये गयायां च सपिंडीकरणात्पुनः मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह
हेमाद्रौ महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च नवदैवतमत्रेष्टं शेषं षाट्पौरुषं विदुरिति सपत्न
मातुः सहैकतंत्रेणाहि पितृकश्राद्धवत् निगमे महालये गयाश्राद्धे श्राद्धे चान्वष्टकासु च ज्ञेयं द्वादश
दैवत्यं तीर्थे शेषे गयासु च तथा च हेमाद्रौ उपाध्यायगुरुश्वशुरपितृव्याचार्यमातुलाः श्वशुरभ्रातृत
नुजाः आंतिकशिष्याप्तपोषकाः भगिनीस्वामिदुहितृजामातृभगिनीसुताः एकोद्दिष्टविधानेन पू
जनीयाः प्रयत्नतः इति अत्र संबंधप्रत्यासत्त्याक्रमः तत्तल्याभे भरणाक्रमात्तेनार्थनिर्णये पाठक्रमा
दिति बोध्यं अत्र प्रत्येकोद्दिष्टं बालाणाभेद इति मुख्यः पक्षः अशक्तौ तु चतुर्विंशतिमते एकस्मिन्ब्रा
ह्मणे सर्वानाचार्यादीन्प्रपूजयेत् दशद्वादश वा पिंडान्दद्यादेकरणांनतु पार्वणानुष्ठितो विप्रानाद
याज्ञवल्क्यः द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा मातामहानामप्येवं तंत्रं वा वैश्वदेविकं श्राद्धः

देः संपत्तौच दीपिकायांपराशरः संपन्नावप्यपात्राणामेकैकस्यत्रयस्त्रयः पित्रादेर्ब्राह्मणाः प्रोक्ताश्चत्वारो
वैश्वदेविके पात्रालाभेमनुः द्वौदैवेपितृकृत्येत्रीनेकैकमुभयत्रवा भोजयेत्सुसमृद्धोपिनप्रसज्जेतविस्त
रे अत्यशक्तौ हेमाद्रौदेवलः एकेनापिहिविप्रेणषट्पिंडंश्राद्धमाचरेत् षडर्घ्यान्दापयेत्तत्रषड्भ्योदद्यात्त·
याहविः तत्रैववसिष्ठः यद्येकंभोजयेच्छ्राद्धेदैवं तत्रभवेत्कथं अन्नंपात्रेसमुद्धृत्यसर्वस्यप्रकृतस्यच
देवतायतनेकृत्वाततःश्राद्धंसमाचरेत् प्रास्येदग्नौतदन्नंतुदद्याद्वाब्रह्मचारिणे अत्रदेवलः एकेनापि
चविप्रेणषट्पिंडंश्राद्धमाचरेत् षडर्घ्यान्दापयेत्तत्रषड्भ्योदद्यात्तदासनं पिताभुंक्तेविप्रकरेमुखेभुंक्तेपि
तामहः प्रपितामहस्तुतालुस्थःकंठेमातामहस्तथा प्रमातामहश्चहृदयेवृद्धोनाभौतुसंस्थितः एवमप्या
चरेच्छ्राद्धंषड्दैवत्यंमहामुने विलिप्तिंकारयेद्यस्तुपितृहासप्रजायते हेमाद्रौसत्यव्रतः निधायदर्भान्नि·
चयमासनेषुसमाहितः प्रैष्यानुप्रैष्यसंयुक्तंसर्वंतत्रप्रकल्पयेत् मातृश्राद्धेतुविप्रालाभेसुवासिन्योपिभो
जनीया इत्याहापरार्केवृद्धवसिष्ठः मातृश्राद्धेतुविप्राणामलाभेपूजयेदपि पतिपुत्रान्विताभव्यायोषि·
तोष्टौकुलोद्भवाइति विधवायास्तुविशेषः स्मृतिसंग्रहे चत्वारिपार्वणानीहविधवायाःसदैवहि स्वभर्तृ
श्वशुरादीनांमातापित्रोस्तथैवच ततोमातामहानांचश्राद्धदानमुपक्रमेदिति तथा श्वश्रूणांचविशेषेण
मातामह्यास्तथैवचेत्यपिपाठः तस्याःषड्दैवत्येविशेषःस्मृतिरत्नावल्यां स्वभर्तृप्रभृतित्रिभ्यः स्वपितृ
भ्यस्तथैवच विधवाकारयेच्छ्राद्धंयथाकालमतंद्रितेति विधवास्वयंसंकल्पंकृत्वा अन्यद्वाराकारयेदि
ति प्रयोगपारिजातः अत्रचैकपाकः वैश्वदेववदेकतंत्रं पृथग्वाएकोद्दिष्टे एकोद्दिष्टेअग्नौकरणंनक
र्तव्यमितिगृह्यकाराः एकोद्दिष्टस्वरूपमाहयाज्ञवल्क्यः एकोद्दिष्टंदैवहीनमेकार्घ्यैकपवित्रकं आवा
हनाग्नौकरणरहितंत्वपसव्यवदिति अत्रपाणिहोमः पिंडश्चद्विजातिकरइत्याह प्रयोगपारिजाते आ
चार्यः काम्यमभ्युदयेष्टम्यामेकोद्दिष्टमथाष्टकं चतुर्ष्वेषुकरेहोमः पिंडश्चाद्विजातकइति पार्वणै·
कोद्दिष्टयोः समानतंत्रत्वेतु अग्निसमीपएवहोमः अत्रधुरिलोचनौवैश्वदेवौ अपिकन्यागतेसूर्येका·
म्येचधुरिलोचनाविति हेमाद्रावादित्यपुराणवचनं तत्काम्यवृद्ध्याक्रियमाणमहालयश्राद्धविषयमिति
हेमाद्र्यादयः केचित्तुनित्येमहालयश्राद्धेतावदिच्छंति तन्नेननरोचते यतोनात्रमहालयपदंश्रूया·
ते किंतुकन्यागतेसूर्येश्राद्धइत्येव तत्रकिंकन्यागतेसूर्येइत्यधिकरणसप्तमी उतनिमित्तसप्तमी
आद्येकन्यागतत्वाधिकरणेतुवार्षिकादिष्वपिप्रसंगः महालयश्राद्धस्यतन्निमित्तकत्वाभावेतत्रधुरिलो
चनौनस्यातां किंतुपुरूरवामाद्रवनामानौ आषाढीमवधिंकृत्वायःस्यात्पक्षस्तुपंचमः श्राद्धंतत्रप्रकु
र्वीतकन्यागच्छतुवानवा आगतेपिरवौकन्यांश्राद्धंकुर्वीतयत्नतः आषाढ्याः पंचमःपक्षःप्रशस्तः पि·
तृकर्मणीति जातूकर्ण्यजाबालिवचनाभ्यांमहालयश्राद्धस्यकेवलाषाढ्याःपंचमपक्षप्रयुक्तत्वात् त
त्रैव शाकध्वजनिपातांकोयःस्यात्पक्षस्तुपंचमः सविज्ञेयोऽपरःपक्षःश्राद्धंतत्रविधीयते पुत्रानायु
र्यंतथान्यमारोग्यंभूतिमेवच प्राप्नोतिपंचमेदत्वाश्राद्धंदातातथापरात् एतान्यपिहिहिंसंतिपंचयोवैव्य
तिक्रमेत् तस्मान्नातिक्रमेद्विद्वान्पंचमंपितृकंविधिमिति कन्यार्कयोगस्यप्राशस्त्यार्थः नतुतस्यनिमि
त्तत्वं नहिकिंनिमित्तमेतद्वचनमितिचेत् नांदीमुखानांप्रत्यब्दकन्याराशिगतेरवौ पौर्णमास्यांतुकर्त·
व्यंश्राद्धंतत्रविजानता इतिविहितेश्राद्धे कन्यार्कयुक्तपौर्णमास्यानिमित्तत्वेनतत्रकन्यार्कस्यापिनिमित्त
त्वात् तत्रभवेतांधुरिलोचनौ यद्वाकन्यार्कसंक्रांतिश्राद्धेभवेतां नतुकदाचिन्महालयश्राद्धेइति अत्रैवं
प्रतिदिनप्रयोगभेदाद्दक्षिणाभेदः यत्तुहेमाद्रिणाऽभ्यासपक्षे अन्तेदक्षिणादानमित्युक्तं तत्कौर्मेपि
प्रतिदिनंप्रयोगभेदाद्दक्षिणायाश्चप्रयोगांगत्वात्तदुक्तं प्रयोगांगतायाश्चनेनतत्प्रमाणमित्यर्थः एतच्चगु
र्विणीपतिनाजीवत्पितृकेनापिपिंडरहितंकार्यं तथाचदत्तः मुंडनंपिंडनंचैवप्रेतकर्मचसर्वशः न

जीवत्पितृकः कुर्यात्कुर्विणीपतिरेव चेति जीवत्पितृकस्य त्वष्टकावार्षिकादौ वचनाद्भवति नान्यत्रेति ए
तच्च संन्यस्तपितृकादिना जीवत्पितृकेनापि कार्य्यं दृष्टो तीर्थे च संन्यस्ते ताते च पतिते सति येभ्य एव पि
ता दद्यात्तेभ्यो दद्यात्स्वयं सुत इति कात्यायनोक्तेः यत्तु कौण्डिन्यः दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपाक्षिकं
न जीवत्पितृकः कुर्यात्तत्संन्यस्तपितृकादि जीवत्पितृकातिरिक्तविषयं पिंडप्रतिषेधेन तु छागलेयः
पिंडो यत्र निवर्तेत मघादिषु कथंचन संकल्पेन तदा कार्य्यं नियमाद्ब्रह्मवादिभिरिति संकल्पश्राद्धं
कर्तव्यं अशक्त्या पार्वणश्राद्धं यथावत्कर्तुमक्षमः पिंडार्घ्यादिविहीनेन संकल्पश्राद्धमाचरेत् अत्र
हृतर्पणं पक्षश्राद्धे प्रतिदिनं श्राद्धोत्तरं सकृन्महालये तु परेऽह्नि कार्य्यं तदुक्तं नारदीये पक्षश्राद्धं य
दा कुर्य्यात्तर्पणं तु दिने दिने सकृन्महालये चैव परेऽहनि तिलोदकं गार्ग्योऽपि पक्षश्राद्धे हिरण्ये च श्रा
द्धे तु वर्ज्य तिलोदकमिति प्रयोगपारिजातेऽपि गार्ग्यः कृष्णभाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत् पितृ
णां प्रत्यहं कार्य्यं निषिद्धाहेऽपि तर्पणं सकृन्महालयो यः स्यादष्टकासु तथैव हीति निषिद्धदिनेऽपि कार्यं
तीर्थे तीर्थविशेषेषु कार्य्यं प्रेते च सर्वदेति स्मृत्यर्थसारोक्तेः तीर्थे तीर्थविशेषे च गयायां प्रेतपक्षके नि
षिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितमिति स्मृतिरत्नावल्यां वचनाच्च एतच्च मलमासे न कार्यं तदाह
भृगुः वृद्धिश्राद्धं तथा सोमम ग्न्याधेयं महालयं राजाभिषेकं काम्यं च न कुर्याद्भानुलंघिते इति हेमा
द्रौ नागरखंडेऽपि नभो वाथ नभस्यो वा मलमासो यदा भवेत् सप्तमः पितृपक्षः स्यादन्यत्रैव तु पंचमः इ
ति एतच्च पित्रोर्मरणे प्रथमाब्दे कृताकृतं इति त्रिस्थलीसेतौ भट्टाः इदं च नित्यं काम्यं पुत्राद्यायुस्तथा
रोग्यमैश्वर्यमतुलं तथा प्राप्नोति पंचमे दत्वा श्राद्धं काम्यांश्च पुष्कलानिति जाबाल्युक्तेः आषाढ्याः पं
चमे पक्षे यः श्राद्धं न करिष्यति शाकेनापि दरिद्रोऽपि सोऽन्त्यजत्वमुपैष्यति आसनं शयनं भोज्यं स्पर्श
णं भाषणं तथा तेन सार्द्धं करिष्यंति ये ते पापयुता नराः इति नागरखंडोक्तेश्च वृश्चिके समतिक्रांते
पितरो दैवतैः सह निःश्वस्य प्रतिगच्छन्ति शापं दत्वा सुदारुणमिति कार्ष्णाजिनिवचनात् तदतिक्र
मे शयस्थितसुकर्मविधाने उरोक्षस्य मंत्रे च दशावारं द्विमासयोः महालयं यदा नूनं तदा संपूर्णमे
ति तदिति द्विमासयोः कन्यातुलयोर्महालयश्राद्धं यदाहीनमित्यर्थः इदं चाश्विनापरपक्षपार्वणेन नि
श्राद्धं देयं दिने दिने इति फलनिरपेक्षश्रवणात्सर्वथा वंदनवत् सूर्ये कन्यागते श्राद्धं यो न कुर्याद्दिन
दिने धनं पुत्राः कुतस्तस्य पितृनिश्वाससपीडनादिति काम्यमपि पार्वणमिदं तदुक्तं वायुपुराणे प्र
तिपद्धनलाभाय लब्धं चास्य न नश्यति द्वितीयायां तु यः कुर्याद्द्विपदाधिपतिर्भवेत् परार्थिनां तृती
यां तु शत्रुघ्नी पापनाशिनी श्राद्धं चतुर्थ्यां कुर्वाणः शत्रोश्छिद्रं स पश्यति पंचम्यां चैव कुर्वाणः प्राप्नोति
परमं पदं षष्ठ्यां श्राद्धं प्रकुर्वाणो द्विजांस्तु पूजयेत्सुत कुरुते यस्तु सप्तम्यां श्राद्धं तु सततं नरः महा
शत्रुगणाध्यक्षो वर्द्धते प्रजायते महासत्रमवाप्नोति योऽष्टम्यां कुरुते नरः श्राद्धं नवम्यां कर्तव्यमै
श्वर्यं स्त्रीणामिच्छता कुर्वन्दशम्यां तु नरो ब्राह्मीं श्रियमवाप्नुयात् वेदांश्चैवाप्नुयात्सर्वान्विप्राणां कु
रुते तथा एकादश्यां परं दानमैश्वर्यं संततिं तथा द्वादश्यां जयलाभं च राज्यमायुः प्रजा वसु प्रजा
वृद्धिं पशून्मेधां स्वातंत्र्यं पुष्टिमुत्तमां दीर्घमायुरथैश्वर्यं कुर्वाणस्तु त्रयोदशीं अमावास्यां प्रयत्नेन
श्राद्धं कुर्याद्विचक्षणः सर्वान्कामानवाप्नोति स्वर्गं चानंत्यमश्नुते एवं ब्रह्मपुराणेऽपि कालविशेषा
भिधानात् चतुर्दश्यां तु शस्त्रहतानामेव श्राद्धं भवति तथा च ब्रह्मपुराणे जलानशनशस्त्राग्निवि
षोद्बंधगतानां तथा चतुर्दश्यां भवेत्पूजा तृप्त्यर्थमिति निश्चयः इति महालयनिर्णयः अथ महालय
पक्षे प्रतिदिनकृत्यानि तत्रादौ आश्विनकृष्णप्रतिपदायां तिथिपत्राद्भिः प्रजा महालयश्राद्धं च

स्कांदे सेतुखंडे नभस्यकृष्णपक्षे प्रथमायां तिथौ तथा श्राद्धं महालयं कुर्याद्यो नरो भक्तिपूर्वकं द्वि
शकल्पसहस्राणि पितरो यांति तृप्ततां आश्विनकृष्णद्वितीया भरणीयुता तृतीया वा कृत्तिकायुतापि
तृप्तिमतिप्रीतिदा तदुक्तं पृथ्वीचंद्रोदये बृहस्पतिः नभस्यापरपक्षे तु द्वितीया यदि याम्यभे तृतीया
वाग्नितारािभः सहिता प्रीतिदा पितृणामिति स्कांदे सेतुखंडे वेदविद्ब्राह्मणो भुंक्ते द्वितीयायां महालये द्वि
शकल्पसहस्राणि पितरो यांति तृप्ततामिति आश्विनकृष्णतृतीया कृत्तिकायुता महालयश्राद्धे तिथ
यप्रदेति प्रागुक्तं स्कांदे सेतुखंडेपि तृतीयायां तु यो भक्त्या श्राद्धं कुर्यान्महालये तृप्यंति पितरस्तस्य त्रिं
शत्कल्पसहस्रकमिति अस्यामेव हस्तार्कयोगे बृहद्गौरीव्रतं भविष्योत्तरे नारदीयेपि अथान्यद्बृहती
गौरीव्रतं कन्यागते रवौ मासि भाद्रपदे कृष्णतृतीयायां च तद्व्रतं भाद्रेत्र दर्शितः अथ बृहद्गौरीव्रतपूजा
चतुर्भुजां स्वर्णाभां नानालंकारभूषितां हिमेंदुतुहिनाभासां मुक्तामणिविभूषितां पाशांकुशधरां
देवीं ध्यायेत्सर्वार्थसिद्धिदां कमंडलुधरां सम्यक्पानपात्रं च बिभ्रतीं ध्यानं एहि मातर्विशुद्धेंदुविग्र
हे परमेश्वरि आवाहयामि भक्त्या त्वां प्रसन्ना भव सर्वदा आवाहनं हेमरत्नकृतं देवि आसनं ते वि
निर्मितं पाशांकुशधरे देवि आसने स्थापयाम्यहं आसनं अक्षमालांकुशधरे वीणापुस्तकधारिणि
भक्त्या दत्तं मया तोयं पाद्यार्थं प्रतिगृह्यतां पाद्यं अर्घ्यं ददामि ते भक्त्या भक्तानामभयंकरे गृहाण त्वं बृह
द्गौरि नमस्कारोस्तु ते मम अर्घ्यं भक्तानामिष्टदे मातः सर्वालंकारसंयुते आचम्यतां जगन्मातर्बृहद्गौ
रि नमोस्तु ते आचमनं सपंचामृतं स्नानं स्नापयामि जगन्मातस्त्वां सुतीर्थजलेन वै प्रार्थितासि म
या देवि सर्वपापविनाशिनि स्नानं वस्त्रं धौतं मया देवि दुकूलं तव निर्मितं भक्त्या समर्पितं मातर्गृह्यतां
जगदंबिके वस्त्रं अथ सिंदूरहरिद्राकुंकुमादिसौभाग्यद्रव्याणि निवेदयेत् मलयाचलसंभूतं घनसा
रं मनोहरं गंधं गृहाण देवि त्वं बृहद्गौरि नमोस्तु ते गंधं अक्षतानरविंदादिकुंकुमाक्तानखंडितान् गृ
हाण वरदे मातर्नमस्ते सकलेष्टदे अक्षताः चंपकादीनि पुष्पाणि भक्त्या नीतानि मे शुभे पूजार्थं गृह्य
तां देवि जातीपुन्नागमालती पुष्पं धूपोयं गृह्यतां देवि कालागुरुसमन्वितः आग्नेयः सर्वदेवानां दे
वद्रुमरसोद्भवः धूपं दीपं गृहाण देवेशि त्रैलोक्यतिमिरापहं वह्निना योजितं मातर्बृहद्गौरि नमोस्तु ते
दीपं नैवेद्यं गृह्यतां देवि नानारसमनोहरं भक्ष्यभोज्यादिकं स्वादु प्रीयतां परमेश्वरि नैवेद्यं कर्पूरै
लालवंगादिनागवल्लीदलैर्युतं पूगीफलयुतं देवि तांबूलं प्रतिगृह्यतां तांबूलं हिरण्यगर्भगर्भस्थं
हेमबीजं विभावसोः अनंतपुण्यफलदमतः शांतिं प्रयच्छ मे दक्षिणाद्रव्यं हेमसंयत्करे देवि सर्व
सौभाग्यदायिनि सर्वकार्यप्रदे देवि गृहाणार्घ्यं नमोस्तु ते इत्यर्घ्यं धारयिष्यामि भद्रे त्वां त्वद्भक्त्या त्व
त्परायणा आयुर्देहि यशो देहि सौभाग्यं देहि मे शिवे इति डोरकबंधनं गगनांतरसंदीप क्षीराब्धिम
थनोद्भव भाभासितदिगाभोग रमानुज नमोस्तु ते चंद्रायार्घ्यदानमिति पक्वान्नफलसंयुक्तं वंशपा
त्रे सदक्षिणं वायनं ते प्रयच्छामि बृहद्गौरि नमोस्तु ते इति वायनं आहूतासि मया देवि पूजितासि यथा
विधि मम सौभाग्यदानाय यथेष्टं गम्यतां इति विसर्जनं एवं पूजाविधिः अथ कथा भविष्योत्तरे
विजयोवाच अथान्यद्बृहतीगौरीव्रतं वक्ष्यामि कन्यके मासि भाद्रपदे कृष्णे तृतीयायां च तद्व्रतं आन
येद्बृहतीं गौरीं शाखामूलफलैः सह निक्षिप्य देवतावेश्मांत दद्यः सिकताः शुभां न्यसेच्चंद्रोदयं दृष्ट्वा
स्नाता धौतांबरा हृष्टा सखीभिः सहिता सम्यगलंकृत्य प्रपूजयेत् गौरीमावाह्य विधिवत्सिकतामंड
ले शुभे गंधपुष्पाक्षतैर्दिव्यैर्धूपैर्दीपैरनेकशः सर्वोपचारैर्बृहतीं पंचपंचभिरर्चयेत् एवं पूज्य यथा
शक्त्या कृत्वा चैव प्रदक्षिणां डोरकं बंधयेत्पश्चात्तंतुपंचकनिर्मितं बध्नामि डोरकं भक्त्या त्वद्भक्तास्त्य

गयणा आयुर्देहि यशो देहि सर्वसौभाग्यदायिनि सर्वकामप्रदे देवि गृहाणार्घ्यं नमोऽस्तु ते गगनां
गनसद्दीपदीप्तिमध्यनोद्भव भाभासितदिगाभोगरत्नानुजन्म नमोऽस्तु ते डोरकं प्रथमं बध्वा चंद्राया
र्घ्यं प्रदापयेत् कथामेतां च शृणुयाद्गौर्य्यग्रे तन्मनाः सदा ततो गोधूमहं तेन पंचभिः कुडवैः कृतं
पक्वान्नमर्धं विप्राय दत्वा भुंजीत च स्वयं एवं वै पंचवर्षाणि कृत्वा व्रतमनुत्तमं सर्वान्कामानवाप्नोति
नात्र कार्या विचारणा कन्योवाच केन चादौ पुराचीर्णं व्रतं यद्भवतोदितं ईप्सितं को वलेभे वा व्रतस्या
स्य प्रभावतः विजयोवाच शृणुध्वमृषयः सर्वे नैमिषारण्यवासिनः पुराकृतयुगस्यादौ सर्वभूतहि
तैषिणा शंभुना कथितं गौर्य्यै तद्व्रतं कथयाम्यहं कदाचिदुपविष्टं तं पार्वती पर्य्यपृच्छत शंभो त्वां प्र
ष्टुमिच्छामि करुणाकर शंकर सर्वबाधोपशमनं सर्वकामफलप्रदं व्रतानां सर्वदानानामुत्तमं ब्रू
हि तत्ततः आयुरारोग्यदं देव पुत्रपौत्रप्रदायकं तद्व्रतं ब्रूहि देवेश यथाहं तव वल्लभा ईश्वर उवाच शृ
णु देवि परं गुह्यं व्रतं परमदुर्लभं पुराभूद्द्वापरस्यांते पांडोः प्रियवरांगना वर्षषोडशसंपूर्णा संपन्न
नवयौवना अनपत्यात्तु सा कुंती भर्तारमिदमब्रवीत् केन कर्मविपाकेन पुत्रहीनास्मि दुःखिता अ
नपत्यप्रतीकारमिदानीं ब्रूहि तत्त्वतः पांडुरुवाच ऋषिशापोस्ति मे भद्रे यतः सोन भविष्यति भर्तुस्त
द्वचनं श्रुत्वा पितृगेहं जगाम स्वयं पितुर्गेहे वर्तमाना कुंती व्यासं ददर्श ह नमस्कृत्य च तं शह कुंती·
मुकुलितांजलिः कुंत्युवाच तात मे कथयाशु त्वं पुत्रसंतानदायकं सर्वसंपत्प्रदं नृणां व्रतमेकं म
हामुने व्यास उवाच शृणु त्वं बृहद्गौर्य्या व्रतं संतानदायकं भाद्रकृष्णतृतीयायां निशि चंद्रोदये शु
भे स्नानं कृत्वा तु विधिवन्मौनं धृत्वा व्रतं चरेत् सर्वसंपत्करं स्त्रीणां धनपुत्रान्नसौख्यकृत् गोभूहिरण्य
दानानां सर्वेषामधिकं स्मृतं पंचवर्षं विधानं तु अंते तदुद्यापनं चरेत् उद्यापनविधानेन संपूर्णं फल
मश्नुते अंते तु कारयेद्भद्रे सौवर्णीं बृहतीफलं षट्सुवर्चतुर्भिस्तु शुभैर्वीजैर्युतं ततः देव्याः पुर
स्तात्संस्थाप्य पूर्ववत्सति पूजयेत् आचार्य्यं पूजयेद्भक्त्या विप्रान्पंच तथैव च सुवासिन्यः पंचपूज्या व
स्त्रालंकारभूषणैः कंचुकैश्चैव ताटंकैः कंठसूत्रैर्हरिद्रया वंशपात्राणि युग्मानि सूत्रैः संवेष्टितानि
च सिंदूरं जीरकं चैव सौभाग्यद्रव्यसंयुतं गोधूमपिष्टजातं च बृहतीफलपंचकं वायनानि च पंचै
व ताभ्यो दत्वा तु भोजयेत् अर्घ्यं दत्वा वायनानि दत्वा भुंजीत वाग्यता तत्फलं धारयेत्कंठे सर्वकामस
मृद्धये ततः प्रातः समुत्थाय सालंकारां सवीजनैः गीतवाद्ययुतां नद्यां गौरीं तां तु विसर्जयेत् आ·
हूतासि मया देवि पूजितासि मया शुभे मम सौभाग्यदानाय यथेष्टं गम्यतां त्वया एतद्व्रतप्रभावेण
काचिद्ब्राह्मणकन्यका पतिं संपूजयामास निर्भर्त्स्य यमकिंकरान् तस्माच्चर त्वं व्रतमेतदायमा।
युः प्रदं पुत्रसमृद्धिदं ता पुत्रैश्च पौत्रैश्च युता च धन्या गौरीप्रसादाद्भवजीवपुत्रा य इदं शृणुयान्नित्यं·
श्रावयेद्वा समाहितः स भुक्त्वा विपुलान्भोगानंते शिवपदं व्रजेत् ॥ ॥ ॥

इति भविष्योत्तरे बृहद्गौरीव्रतम्

नारदीयेपि उग्रकृष्णतृतीयायां बृहद्गौरीव्रतं चरेत् पंचवर्षविधानेन पूर्वोक्तमिव नारद आचा
र्यं पूजयेद्दत्ते विप्रान्पंच धनादिभिः सुवासिनीः पंचपूज्या वस्त्रालंकारचंदनैः कंचुकैश्चैव ताटंकैः
कंठसूत्रैर्हरिद्रया वंशपात्राणि पंचैव सूत्रैः संवेष्टितानि च सिंदूरं जीरकं चैव सौभाग्यद्रव्यसंयुतं
गोधूमपिष्टजातं च नवाम्रफलादिकं वायनानि च पंचैव ताभ्यो दद्याच्च भोजयेत् अर्घ्यं दत्वा वाय·
नानि च भुंजीत वाग्यता तत्फलं धारयेत्कंठे सर्वकामसमृद्धये ततः प्रातः समुत्थाय सालंका
रां सवीजनैः गीतवाद्ययुतां नद्यां गौरीं तां तु विसर्जयेत् आहूतासि मया देवि पूजितासि यथाविधि

मम सौभाग्यदानाय यथेष्टं गम्यतां त्वया एवं कृत्वा व्रतं नारी द्विजदेवीप्रसादतः भुक्त्वा भोगांस्तु देहा-
न्ते गौरीलोकमवाप्नुयादिति अथ हस्तर्क्षगते सूर्ये रविवारे शुभे हस्तगौरीव्रतं सूत उवाच कुंत्या चत-
दपेतायां हस्तिनापुरमुत्तमे याचितायां नरेन्द्रैश्च तनयैः पंचभिः सह तस्याः कुशलमन्विष्टुमाज-
गाम अथ माधवः अभिनन्द्य सुखासीनं देवदेवं जनार्दनं उवाच कुंती सानंदा प्रगल्भमिदं वचः कुं-
त्युवाच धन्यास्मि कृतकृत्यास्मि सनाथास्मि परंतप साहं संभाविता ह्यस्मि त्वया सर्वजगत्पते यदि मे
सुप्रसन्नोसि तदाचक्ष्व व्रतं विभो येन विधाय सुखं राज्यं प्राप्नुयां तनयैः सह श्रीकृष्ण उवाच शृणु कुं-
ति प्रवक्ष्यामि व्रतानामुत्तमं व्रतं यत्कृत्वा सुखसंतानं धनधान्यसमन्वितं विधूतदुष्कृता पुत्राः सपु-
त्रा राज्यमाप्स्यसि हस्तगौरीव्रतं भद्रे कुरुष्व शुचिमानसा यत्कृत्वा सर्वतः संपल्लभते वाञ्छितं फलम्
कुंत्युवाच यत्त्वयोक्तं व्रतं नाथ विधानं तस्य कीर्तय केन पूर्वं कृतं देव तन्मे ब्रूहि जनार्दन श्रीकृष्ण उ-
वाच कैलासशिखरे देवी हस्तर्क्षे च दिवाकरे दिवाप्रसुप्ता गौरी तु हरसन्निधिमागता सा सुप्ता देवदेवे-
शं स्वप्ने शंभुं ददर्श ह अर्धदेहे वृषारूढस्थमर्धचंद्रकलाधरं किमिदं तन्ममाचक्ष्व तप्यते मानसं मम
ईश्वर उवाच देवि पूर्वं चरुद्धासि हस्तर्क्षगते रवौ न स्वप्तव्यं दिवा तत्र तस्येदं विहितं फलं शृणु दे-
वि त्वया येन खंडितो हं विलोकितः त्वयारब्धं व्रतं देवि मदाराधनकाम्यया अपूर्णोस्मि त्वसन्नोस्मि त
त्वया च समुज्झितं अपूर्णव्रतपातेन दृष्टोहं तादृशस्त्वया तत्कुरुष्वाधुना देवि हस्तगौरीव्रतं शुभं
पार्वत्युवाच आदिश त्वं व्रतं नाथ विधानेन च महेश्वर आरंभोस्य कदा कार्य्यः को विधिः कस्य पूजनं ई-
श्वर उवाच मंडपे स्थापनं कुर्य्यात्सर्वालंकारभूषिते अन्वहं कांचनैः पुष्पैः फलमुक्तासमन्वितैः नै-
वेद्यैः पंचखाद्यैश्च शृणुयास्त्वयहं कथां दिने चतुर्दशे प्राप्ते स्थापयेत्प्रतिमां शुभां पक्वान्नैः सुरसैः शुभ्रैः
सार्धं सार्धत्रयोदश सार्धत्रयोदशदिने नैवेद्यमुपकल्पयेत् फलमूलानि चान्यानि तावंति समुपाह-
रेत् पूजयेच्च सुवर्णस्य पुष्पैश्चान्यैः सुगंधिभिः चंदनैर्धूपदीपैश्च तांबूलैश्च फलादिभिः ध्यायेच्च हृ-
दये गौरीं हरहरेश्वसंयुतां दक्षिणां च ततो दत्वा नत्वा देवीं विसर्जयेत् सार्धत्रयोदश तथा दीपकाश्चोलि-
कान्विताः सुवासिनीभ्यः स्त्रियै दत्वा तावतः स्वयमाहरेत् व्रतं समाददेद्देवि यावद्वर्षत्रयोदश स्वर्णभा-
जनं गौर्य्यादि प्रतिवर्षं विसर्जयेत् पूर्वोक्तविधिना पूज्य वा स्वर्णानि त्रयोदश ततद्वितीयदिवसे सजा-
ते प्रातरुत्थिता कृत्वोपवासनियमं गजे गौरीं प्रकल्पयेत् पक्वान्नं स्वर्णपात्रेषु त्रयोदश विनिःक्षिप-
त् स्त्रीभ्यश्च कंचुकीर्दद्याद्भोजयित्वा विसर्जयेत् एवं देवि व्रतं कृत्वा सर्वान्कामानवाप्नुयात् अश-
क्तौ तु सदा कार्य्या प्रतिमा मृत्तिकामयी पात्राणि वैणवान्येव पीतपुष्पाणि चैव हि श्रीकृष्ण उवाच त-
तश्चक्रे व्रतं गौरी प्राप्ता सा वाञ्छितं फलं त्वमप्येतद्व्रतं कुंति कुरुष्व श्रद्धासमन्विता अथ भक्त्या व्रतं कुंती
सविधानमथाकरोत् गांधारी चापि तच्छ्रुत्वा व्रतं चक्रे यथाविधि तुष्टा सा भक्तिभावेन हस्तगौरी वचो-
ब्रवीत् गौर्य्युवाच कुंति ते परितुष्टास्मि वरं वरय सुव्रते कुंत्युवाच देहि मे सर्वसंपत्तिं सर्वसौख्यं च
सौहृदं प्रयच्छ मम पुत्राणां महद्राज्यमनामयं व्रतमेतत्तु यः कुर्य्यात्स लोकमवाप्स्यति न दारि-
द्र्यं न वैधव्यं न शोको नापि दुष्कृतं कृच्छ्रेणापकृतं ते देवि कदाचित्संभविष्यति तथेत्युक्त्वा ततो गौरी
तत्रैवांतरधीयत एतद्व्रतं सकलदुःखविनाशहेतुं सौभाग्यराज्यफलभाजनमाचरंति या योषितः

सुखमनंतमिहापि राज्यं गौरीपतिव्रतरतास्तु ततो लभंते

इति भविष्योत्तरे हस्तगौरीव्रतम् ॥

आश्विनकृष्णचतुर्थ्यां मासचतुर्थी गणेशव्रतं महालयश्राद्धं स्कांदे सेतुखंडे चतुर्थ्यां तु तिथौ।
मर्त्यो यस्तु कुर्यान्महालयं पितरः कल्पसाहस्रं चत्वारिंशत्प्रहर्षिताः वहन्त्वन्यदा संतति श्राद्धक

मेणितर्पिताः आश्विनकृष्णस्य पंचम्यां महालयश्राद्धं पंचम्यां तु तिथौ मर्त्यो यः करोति महालयं पं
चाशत्कल्पसाहस्रं तृप्यंति पितरस्तदा संततिं चाप्यविच्छिन्नां तस्मै दास्यंति तर्पिताः पार्वतीतंत्र।
सत्रामस्मान्महदैश्वर्यदायिनी एनामथिक्रम्य देवीपुराणे तत्रैव कारयेद्देवीं पितृरूपां महोदयां क
न्यास्थे च रवौ वत्स पूजनीया यथाविधि भोजंगीतिथिमासाद्य यावद्वृश्चिकसंगमे तत्रापि सहतीपूजा
कर्तव्या पितृदैवते कृत्वे पिंडप्रदानं तु ज्येष्ठपुत्री विवर्जयेत् भोजंगीतिथिः पंचमी तेनात्रापि पंच
म्यादयः प्रशस्ता इति पितृदैवतमत्र भरणी नक्षत्रमेवाच अत्र पिंडप्रदाननिषेधविषयं मचाविष
ये वक्ष्यते आश्विनकृष्णस्य षष्ठ्यां महालयश्राद्धं स्कंदपुराणे सेतुखंडे षष्ठ्यां तिथौ तु यो मर्त्यः श्राद्धं कु
र्यान्महालये षष्टिवर्षसहस्राणि पितरो यांति तृप्ततां पुत्रानपि प्रदास्यंति श्रियं च विपुलां तथा अ
स्यामेव रोहिणीव्यतीपातभौमवारयुक्तायां कपिलाषष्ठीव्रतं तदुक्तं वाराहे नभस्य कृष्णपक्षे तु रो
हिणीपातभूसुतैः युक्ता षष्ठी पुराणज्ञैः कपिला सा प्रकीर्तिता नभस्यो भाद्रमासोत्र दर्शांतः व्रतोपवा
सनियमैर्भास्करं तत्र पूजयेत् कपिलां तु द्विजाग्र्याय दत्वा क्रतुफलं लभेत् पुराणसमुच्चये हस्तार्क
योगे नातिशस्तोक्ता भाद्रमासि सिते पक्षे भानौ चैव करे स्थिते पाते कुजे च रोहिण्यां सा षष्ठी कपिला।
स्मृता यदुक्तं निर्णयामृते हेमाद्रौ स्कांदे संयोगतश्चतुर्णां हि निर्दिष्टा परमेष्ठिनेति तत्रैवोक्तं अत्रवि
शेषो हेमाद्रौ स्कांदे देवदारु तथोशीरं कुंकुमैलामनःशिला पत्रकं पद्मकं यष्टीमधु गव्येन पेषयेत्
क्षीरेणालोड्य कल्केन स्नानं कुर्यात्समंत्रकं तत्र मंत्रः आयस्त्वमसि देवेश ज्योतिषां पतिरेव च पापं
शमय मे देव वाङ्मनःकायकर्मजं पंचगव्यकृतस्नानः पंचभंगैस्तु मार्जयेत् पंचभंगैः पंचपल्लवैः
तथा तत्रैव नानाविधैर्युक्तं सौवर्णं कारयेद्रविं शक्तितस्तु पलार्द्धेन तदर्द्धेकर्षतोपि वा सौवर्णमरुणं
कुर्यात्तेजोकां चैव तथाब्दं अल्पवित्तोपि यः कश्चित्सोपि कुर्यादिमं विधिं प्रभासखंडे च स्थापयेदव्र।
णं कुंभं चंदनोदकपूरितं रक्तवस्त्रयुगच्छन्नं ताम्रपात्रेण संयुतं तथा रौक्मपलस्यैव एकचक्रः सवि
त्रितः सौवर्णपलसंयुक्तां मूर्तिं सूर्यस्य कारयेत् ततः सूर्यं च कपिलां पूजयेदुपचारकैः दिव्यमूर्ति
र्जगच्चक्षुर्द्वादशात्मा दिवाकरः कपिलासहितो देवो मम भक्तिं प्रयच्छतु यस्मात्त्वं कपिले पुण्या स
र्वलोकस्य पावनी प्रदत्ता सह सूर्येण मम भक्तिप्रदा भवेति अथ कथा हेमाद्रौ स्कांदे विक्रांत उवा
च नृपसंपदमारोग्यं संततिं चापि पुष्कलां प्राप्नुवंति नरा येन नियतं तद्वदस्व मे अगस्त्य उवाच साधु
साधु महाशास्त्र यत्पृष्टोहं त्वयानघ तत्सर्वं कथयिष्यामि तव श्रेयो भविष्यति शृणु पार्थिव वक्ष्यामि
स्वर्गमोक्षप्रदं नृणां यच्च गुह्यं पुरा राजन् ब्रह्मोपेंद्रादिदेवतैः असुराणां च सर्वेषां राक्षसानां तथैव च
शंकरेण पुरा चैव षण्मुखाय निवेदितं षण्मुखेन समाख्यातं महापातकनाशनं यच्छ्रुत्वा ब्रह्महा।
गोघ्नः स्वर्णचोरो गुरुतल्पगः आगारदाही गरदः सर्वपापरतोपि वा मुच्यते सर्वपापेभ्यः स्वर्गलोकं च।
गच्छति तच्च पुण्यं पवित्रं च नृणां दुःकृतनाशनं उपकाराय लोकानां तथा तव वच्यो मम शृणु भूप म
हापुण्यं षष्ठीमाहात्म्यमुत्तमं श्रेष्ठपद्मसिते पक्षे षष्ठी भौमेन संयुता व्यतीपातेन रोहिण्या सा षष्ठी
कपिला मता द्वितीया तु महापुण्या दुर्लभा द्वृतिनां क्वचित् द्वितीया कपिलाषष्ठीत्यर्थः षष्ठी संवत्स
रांते सा पुनस्तेन संयुता चैत्रे वैशाखयोर्मध्ये सिते पक्षे शुभोदये वैशाखेपि च राजेंद्र द्वारावत्यां पुरा
स्मृता तस्यां चैव हुतं दत्तं यत्किंचित्संतिपादितं तस्य सर्वस्य पुण्यस्य संख्यां वक्तुं न शक्यते यस्मिन् का
ले भवेदेतैर्गुणैः षष्ठी युता तदा पंचम्यामेकभक्तं च कुर्यादत्र विचक्षणः षष्ठ्यां प्रातः समुत्थाय कृ
त्वा दंतधावनं जलपूर्णांजलिं कृत्वा इमं मंत्रमुदीरयेत् निराहारोद्य देवेश तद्भक्तस्त्वत्परायणः
पूजयिष्याम्यहं भक्त्या शरणं भव भास्कर अर्घं दत्वेति संकल्पं कृत्वा यत्नाच्छुचिः स्थितः स्नानं कृत्वा प्रय

त्वेन नद्यां तीर्थोदकेन वा तडागे दीर्घिकायां वा गृहे वा नियतात्मवान् देवदारुं तथोशीरं कुंकुमेलामनः
शिला पद्मकं पत्रकं षष्टिमयुगाब्धेनयेमयेत् क्षीरेणालोड्य कल्केन कुर्यात्स्नानं समंत्रतः आपस्त्वम
सि देवेश ज्योतिषां पतिरेव च पापं नाशय मे देव मनोवाक्कायकर्मजं पंचगव्यकृतस्नानः पंचभंगैस्तु।
मार्जयेत् पंचभंगैः पंचपल्लवैः आनयेन्मृत्तिकां शुद्धां स्नानार्थं चैव यत्नतः मृत्तिके ब्रह्मदत्तासि काश्य
पेनाभिमंत्रिता पवित्रं कुरु मां नित्यं सर्वपापात्समुद्धर मंत्रेणानेन वरुणं पूजयेद्भक्तिमान्नरः पाशाग्र
हस्तं वरुणं सदेवानामीश्वरप्रभो अपां हं प्रार्थयामि त्वां पूतं कुरु सुरेश्वर आदित्यो भास्करो भानू रविः सू
र्यो दिवाकरः प्रभाकरोसि त्वं वीरो देवः सर्वेश्वरो हरिः गोमयेनोपलिप्तायां भूम्यां वै कुंकुमेन तु मंड
ले सर्वतोभद्रमालिखेद्बुद्धिमान्नरः तन्मध्ये लिखेत्पद्ममष्टपत्रं सकर्णिकं पूर्वपत्रे न्यसेत्सूर्यमाग्नेय्यां
भास्करं न्यसेत् सवर्णं रेतसं याम्ये नैर्ऋत्ये विन्यसेद्रविं आदित्यं वारुणे पत्रे वायव्ये च दिवाकरं सौम्ये
प्रभाकरं तत्र सूर्यमीशानपत्रके तीव्ररश्मिमयं चैव ब्रह्माणं चैव विन्यसेत् आधाररूपिणं देवं मध्ये वै चा
रुणं न्यसेत् सहस्ररश्मिं सूर्यं च स्थूलसूक्ष्मगुणान्वितं सर्वांगं सर्वरूपं च मध्ये भास्करमेव च समास्थ
रथमारूढं पद्महस्तं दिवाकरं अक्षसूत्रयज्ञसूत्राणि कुंडलैर्मुकुटेन च रत्नैर्नानाविधैर्युक्तं सौवर्णं तत्र
कारयेत् शक्तितस्तु पलार्द्धं तु तदर्द्धं कर्षतोपि वा सौवर्णं मरुणं कृत्वा नौकां चैव तथापरां समास्थं भू
षितं कृत्वा रथं तस्याग्रतः स्थितं अरुणं विनतापुत्रं गृहीताश्वमनूरुकं एवंरूपं गृहं कृत्वा तस्योपरि
विन्यसेत् तस्योपरि न्यसेद्देवं रक्तवस्त्रविभूषितं रक्तचंदनमाल्यादिमंडितं चातिशोभितं अग्रतः सार
थिं कृत्वा पूजयेदरुणं शुचिः रक्तपुष्पैः सुगंधैश्च तथान्यैरपि शक्तितः विनतातनयो देवः कर्मसाक्षी
तमोनुदः समास्थः सप्तरज्ज्वश्व अरुणो मे प्रसीदतु मंत्रेणानेन संपूज्य सारथिं तदनंतरं देवस्यासनं
कल्प्य प्रभूतादिकपंचकं प्रभूतं विमलं सारमाराध्यं परमं शुभं दीप्तादिशक्तिभिश्चैव ततो भानुं प्रपू
जयेत् दीप्ता सूक्ष्मा तथा भद्रा विभूतिर्विमलानना अमोघा वैद्युता चाथ नवमी सर्वतोमुखी अपवित्रः
पवित्रो वा सर्वावस्थां गतोपि वा यः स्मरेत्पुंडरीकाक्षं स बाह्याभ्यंतरः शुचिः शिखायां भास्करं न्यसेल्ल
लाटे सूर्यमेव च चक्षुर्मध्ये न्यसेद्भानुं मुखे तत्र रविं न्यसेत् कंठे न्यसेद्भानुमंतं पद्मगर्भं हृदिहस्तयोः ति
मिरत्तयकं देवं स्तनयोरेव विन्यसेत् उग्ररूपं गुह्यदेशे तेजोरूपं तु जंघयोः पादयोः सर्वरूपं तु सूक्ष्म
स्थूलगुणान्वितं एवं यथोक्तं विन्यस्य पात्रे गृह्य ततोर्चयेत् करवीरार्ककुसुमै रक्तचंदनपंकजैः पु
ष्पैः सुगंधैर्धूपैश्च कुंकुमेनोपशोभितं मार्तंडं भानुमादित्यं भास्करं तपनं रविं हंसं दिवाकरं चैव भा
करं हरिमेव च सूर्यं च द्वादशात्मानं पूजयेच्च प्रयत्नतः जानुभ्यामवनीं गत्वा सूर्यायार्घ्यं निवेदयेत्
वेदगर्भ नमस्तुभ्यं देवगर्भ नमोस्तु ते अव्यक्तमूर्तये तुभ्यमर्घ्यं गृह्ण नमोस्तु ते ब्रह्ममूर्तिधरस्त्वं च।
चतुर्वक्त्र सनातन सृष्टिस्थित्योः संस्थिताय गृहाणार्घ्यं नमोस्तु ते विष्णुरूपधरो देवः पीतवस्त्रश्चतुर्भु
जः प्रभवः सर्वदेवानामर्घ्यं गृह्ण नमोस्तु ते कालात्मा सर्वभूतात्मा वेदात्मा सर्वतोमुखः जन्ममृत्यु
जराशोकसंसारभयनाशनः दारिद्र्यव्यसनध्वंसी श्रीमान्देवो दिवाकरः सवर्णः स्फटिको भानुः स्व
र्णरेता दिवाकरः हरिदश्वोंशुमाली च अर्घ्यं गृह्ण नमोस्तु ते चतुर्भिर्मूर्तिभिः संस्थ अष्टाभिः परिकीर्त
ते सामध्वनिस्तपोयज्ञ अर्घ्यं गृह्ण नमोस्तु ते अथ गंधं च पुष्पं च तथा धूपप्रदीपकं नैवेद्यं च यथाशक्त्या
प्रार्थयेत्सूर्यदेवतां अग्निमीळे नमस्तुभ्यं नमस्ते जातवेदसे ईशे चैव नमस्तुभ्यमग्रे चैव नमोस्तु ते
शन्नो देवी नमस्तुभ्यं जगच्चक्षुर्नमो नमः आत्मरूपिन्नमस्तुभ्यं विश्वमूर्ते नमोस्तु ते त्वं ब्रह्मा त्वं च वै
विष्णुस्त्वं यातात्वं हुताशनः मुक्तिकाममभीप्यामि प्रार्थयामि सुरेश्वर इति मंत्रैः समुच्चार्य नम
स्कृत्य भास्करं संवर्द्धितेतिपाणिभ्यां तोयेन विसृजेन्मुखे हंसः शुचिषदित्यृचा सूर्यस्यैवावलो

कने उदुत्यं चित्रमित्येतत्सूक्तं सूर्याग्रतो जपेत् प्रशस्तं चैव कोणे च फलकं चैव कारयेत् प्रथमे स्तेशे।
वकोणे इति कौस्तुभे पाठः अष्टशारं भस्ममये पेशान्यामिति तदर्थः फलैः पुष्पै रक्तैश्च भक्ष्यैर्नानाविधै
रपि शय्यां तत्र च देवस्य शुभे देशे प्रकल्पयेत् षड्रस्थां षड्रसं देवं रौप्यं चैव महाप्रभुं पुरुषं खड्गहस्तं च
कारयेच्चैव बुद्धिमान् वस्त्रयुग्मेन संछन्नं लवणो परिवर्जयेत् अनेनैव तु मन्त्रेण स्नानमभ्यङ्गनं ततः
नमस्ते कोपरूपाय खड्गहस्त जितासवे जितासुरकामं त्वां दृष्ट्वा उद्भवः सर्वदेवताः त्वया ध्यानमे मे रूपं दृष्टं
चंद्रभास्करसुप्रभ अतस्त्वां पूजयिष्यामि अर्घ्यं गृह्ण नमोऽस्तु ते स्नपयित्वा ततो रात्रिं गीतवादित्रनिःस्व
नैः ततस्त्वभ्युदिते सूर्ये होमं कुर्यात्स्वशक्तितः पूजयेत्तत्र शक्त्या च विशेषाद्विविधैर्बहु होमार्कस्य स
मिद्भिश्च हुतमिश्रैस्तिलैस्तथा समिद्भिश्चरुकं चैव हुतं चाज्यं जुहुयाद्द्विजः आकृष्णेनेति मन्त्रेण शतमष्टो
त्तरं क्रमात् होमो व्याहृतिभिर्वाथ स्विष्टकृत्तदनन्तरं कपिलां पूजयेद्देवीं सवत्सां पापनाशिनीं वस्त्र
युग्मां सघण्टां च स्वर्णशृङ्गविभूषितां सौवर्णाश्मारौप्यखुरां कांस्यदोहनकान्वितां मन्त्रेणानेन तां दद्याद्ब्रा
ह्मणाय च शक्तितः मन्त्रेणेति तत्तीयेन स्यपूजयेदित्यनेनान्वयः कपिले सर्वदेवानां पूजनीयासि रो
हिणी सर्वतीर्थमयी यस्मादतः शान्तिं प्रयच्छ मे या लक्ष्मीः सर्वदेवानां या च देवेष्ववस्थिता धेनुरूपेण
सा देवी मम शान्तिं प्रयच्छतु देहस्था या च रुद्राणी शंकरस्य च या प्रिया धेनुरूपेण सा देवी मम पापं व्यपोह
तु विष्णोर्वक्षसि या लक्ष्मीः स्वाहा चैव विभावसोः चंद्रार्कानलशक्तिर्या धेनुरूपास्तु मा श्रिये चतुर्मुखस्य
या लक्ष्मीर्या लक्ष्मीर्धनदस्य च लक्ष्मीर्या लोकपालानां सा धेनुर्वरदास्तु मे स्वधा त्वं पितृमुख्यानां स्वाहा य
ज्ञभुजामपि वषट्कारस्त्वं लोके सा धेनुस्तुष्टिदास्तु मे गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः गावो
मे हृदये सन्तु गवां मध्ये वसाम्यहं इति गोपूजामन्त्राः गावः स्पृष्ट्वा नमस्कृत्य यो वै कुर्यात्प्रदक्षिणं प्रद
क्षिणीकृता तेन सप्तद्वीपा वसुन्धरा नमस्ते कपिले देवि सर्वपापप्रणाशिनि संसारार्णवमग्नं मां गोमा
तस्त्रातुमर्हसि गोदानमन्त्रः हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः अनन्तपुण्यफलदमतः शान्तिं प्र
यच्छ मे रक्तवस्त्रयुगं यस्मादादित्यस्य तु वल्लभं प्रदानादस्य मे देवो भास्करो वरदोऽस्तु मे सुवर्णं वस्त्रयु
ग्मं च परिधानं च कारयेत् एभिः प्रकारैः संयुक्तो दद्याद्धेनुं द्विजातये भानोः प्रदक्षिणं दद्यान्मन्त्रेण . नय
न्ततः भास्करो विधितो जातो द्रव्यस्थो भास्करः स्वयं भास्करोऽस्य प्रदाता च तेनैव भास्करो मम इति दानमन्त्रः
भास्करः प्रतिगृह्णाति भास्करो वै ददाति च भास्करस्तारको भाभ्यां भास्कराय नमो नमः इति प्रतिग्रहमं
त्रः ब्राह्मणान्भोजयेत्पश्चात्पायसेन गुडेन च शक्त्या च दक्षिणां दद्यात्तेभ्यश्चैव विशेषतः अल्पवित्तोऽपि
यः कश्चित्सोऽपि कुर्यादिमं विधिं आत्मशक्त्यनुसारेण सोऽपि तत्फलमाप्नुयात् आचार्यस्य ततो भक्त्या सर्वं
यागो विनिःक्षिपेत् गोभूहिरण्यवासांसि याद्रव्यं लवणं तिलाः एतत्सर्वं प्रदत्वा च      कपिलां प्रार्थ
येत्ततः कपिले पुण्यकर्माऽसि निधाय पुण्यकर्मिणि मां समुद्धरदानं वदद्तो ह्यभयं कुरु दिवि वादत्र
शब्देश्च सेव्यासे कपिले सदा तथा विद्याधराः सिद्धा भूतानागगणा ग्रहाः कपिलारोमसंख्याता स्त
त्र देवाः प्रतिष्ठिताः पुष्पवृष्टिं प्रमुञ्चन्ति नित्यमाकाशमास्थिताः ब्रह्मणोत्पादिता देवी अग्निकुण्डात्स
मुद्भवा नमस्ते कपिले पुण्ये सर्वदेवनमस्कृते जय नित्यं महासत्वे सर्वतीर्थादिमंगले दातारं स्वज
नोपेतं ब्रह्मलोकं नयस्व मां ततः प्रदक्षिणं कृत्वा नत्वा ब्राह्मणपुंगवान् आशीर्वादान्वेदयुक्तैः पुत्रपौत्र
धनागमात् आरोग्यं रूपसौभाग्यं सर्वदुःखविवर्जितः अन्ते गोलोकमासाद्य चिरायुः सुखभाग्भवेत्
यदा स्वर्गात्प्रपतति राजा भवति धार्मिकः सप्तद्वीपवतीं भुंक्ते भुक्त्वा राज्यमकंटकम् अहो व्रतं मह
त्पुण्यं सर्वदुःखविनाशनं अतः परं प्रवक्ष्यामि दानस्य फलमुत्तमम् यथा वेदमयं पात्रं सद्दत्ते चाद्य
यं भवेत् तथा सर्वव्रतेष्वेष्टमिदमग्र्यं महाफलम् उद्धरिष्यति दातारं नूनमक्षयमव्ययम् एवं भू

नगणाः सर्वेदेवसंघाः प्रहर्षिताः प्रमोदाः प्रव्रजंतिपुण्यांपस्मिन्दिवसागमे पात्रभूतायजन्हवये श्रोत्रि
यायकुटुंबिने एवंयःकपिलांदद्याद्विधिदृष्टेनकर्मणा सयातिपरमंस्थानंयावन्नच्यवतेपुनः तत्रैव
स्कांदेप्रभासखंडेविशेषः उपलिप्तेशुभेदेशेकुशास्तरविभूषिते स्थापयेदव्रणंकुंभंचंदनोदकपूरि
तं पंचरत्नसमायुक्तंदूर्वापुष्पाक्षतान्वितं रक्तवस्त्रयुगाच्छन्नंताम्रपात्रेणसंयुतं रथोरौप्यमयश्चैव
चतुश्चक्रःसुविचित्रितः सौवर्णपलसंयुक्तांमूर्तिंसूर्यस्यकारयेत् कुंभस्योपरिसंस्थाप्यगंधैःपुष्पैःसम
र्चयेत् आदित्यंपूजयेद्देवंनामभिःस्वैःप्रचोदितैः आदित्यभास्कररवेभानोसूर्यदिवाकर प्रभाकर
नमस्तुभ्यंसंसारान्मांसमुद्धर भुक्तिमुक्तिप्रदोयस्मात्तस्माच्छांतिंप्रयच्छमे प्रार्थनामंत्रः नमोनमः
स्तेवरदऋक्सामयजुषांपते नमोस्तुविश्वरूपायविश्वपावनमोनमः एवंसंपूज्यविधिवद्देवदेवं
दिवाकरं पूजयेत्कपिलांचैवतुवस्त्रमाल्यानुलेपनैः तत्रदानमंत्रः विश्वमूर्तिर्जगच्चक्षुर्द्वादशात्मादि
वाकरः कपिलासहितोदेवोममभुक्तिंप्रयच्छतु यस्मात्त्वंकपिलेपुण्यासर्वलोकस्यपावनी प्रदत्ता
सहसूर्येणममभुक्तिप्रदाभव इतिहेमाद्रौ स्कांदेकपिलाषष्ठीव्रते अथास्याःप्रयोगः कपिलाष
ष्ठीव्रतदिनात्पूर्वेद्युः पंचम्यामेकभक्तंकृत्वा षष्ठ्यांप्रातर्दंतधावनंकृत्वा जलपूर्णमंजलिंकृत्वा नि
राहारोद्यदेवेश त्वद्भक्तस्त्वत्परायणः पूजयिष्यामितेभक्त्याशरणंभवभास्कर इत्युच्चार्यदत्वाप्रणम्य न
द्यादौगत्वा तत्रदेवदारु उशीर कुंकुम मनःशिला पद्मपत्रं यष्टीमधुकं युगपद्द्रव्याणांपेषणंकृत्वा
[illegible]नंकुर्यात् तत्रमंत्रः आपस्त्वमसिदेवेशज्योतिषांपतिरेव पापंनाशय
मेदेवमनोवाक्कायकर्मजं ततःपंचगव्यस्नानं ततःपंचपल्लवैर्मार्जनंकृत्वा विशुद्धांमृत्तिकांगृहीत्वा
स्नायात् तत्रमंत्रः मृत्तिकेब्रह्मदत्तासिकश्यपेनाभिमंत्रिता पवित्रंकुरुमांनित्यंसर्वपापात्समुद्धर
ततोवरुणपूजामंत्रः पाशाग्रहस्तंवरुणसर्ववागीश्वरप्रभो अर्घ्याहंप्रार्थयामित्वांपूतंकुरुसुरेश्वर
ततः स्नात्वाभास्करंप्रणमेत् आदित्योभास्करोभानूरविःसूर्योदिवाकरः प्रभाकरोमित्रोवीरोदेवः
सर्वेश्वरोहरिः ततोगृहमागत्यतिथ्यादिसंकीर्त्यममाशेषपापक्षयपूर्वकरूपसंपदारोग्यविपु
लसंतति स्वर्गलोकप्राप्तिद्वारासर्वाभासक सर्वतेजोमय श्रीसूर्यनारायणप्रीत्यर्थंसोद्यापनं क
पिलाषष्ठीव्रतंकरिष्ये ततःपुण्याहवाचनादिकृत्वा ततोव्रताचार्यः स्वयंगोमयोपलिप्तायांभूमौकुं
कुमेनाष्टदलपद्मंविधायतदुपरिसर्वतोभद्रेकलशोपरिरक्तवस्त्रेष्टपत्रंसकर्णिकंपद्मंकृत्वा तत्र
पूर्वादिक्रमेणदेवताआवाहयेत् सूर्यंभास्करंभानुं सुवर्णरेतसं रविंआदित्यं दिवाकरं प्रभाकरं तीः
त्ररश्मिमयंमध्ये आधाररूपिणंचन्यसेत् तदुपरिसप्ताश्वभूषितंरथम् तस्मात्ततः सौवर्णमरुणंसार
थिंकृत्वा रक्तपुष्पैःसुगंधैश्चपूजयेत्तत्रमंत्रतः विनतातनयोदेवःकर्मसाक्षीसुरेश्वरः सप्ताश्वःस
मरज्जुश्चसोरुणोमेप्रसीदतु एवमरुणंसंपूज्यरथोपरिसूर्यप्रतिमां आकृष्णेनेतिमंत्रेणवाह्यपरि
तोदीप्तादिशक्तीर्न्यसेत् ताश्च दीप्ता सूक्ष्मा जया भद्रा प्रभा विमलानना अमोघा विद्युता मध्ये
सर्वतोमुखींचन्यसेत् ध्यात्वा स्नानं पाद्यं ततःकरवीरार्कपुष्पाणि रक्तचंदनम् सुगंधम् रक्त
पुष्पम् कुंकुमयुतंपात्रेणादाय जानुभ्यामवनींगत्वा अर्घ्यम् निवेदयेत् मंत्राः वेदगर्भनम
स्तेस्तुदेवगर्भनमोस्तुते अव्यक्तमूर्तयेतुभ्यमर्घ्यंगृहाणनमोस्तुते ब्रह्ममूर्तिधरस्त्वंचवेदवेदांगस
नातन सृष्टिस्थितौसंस्थितायअर्घ्यंगृहाणनमोस्तुते विश्वरूपधरोदेवःपंचवक्त्रश्चतुर्भुजः प्रभु
स्त्वंसर्वदेवानामर्घ्यंगृहाणनमोस्तुते कालात्मासर्वभूतात्मावेदात्मासर्वतोमुखः जन्ममृत्युजरा
व्याधिसंसारभयनाशनः दारिद्र्यव्यसनध्वंसी श्रीमान्देवोदिवाकरः हरिदश्वोंशुमालीचअर्घ्यं
गृहाणनमोस्तुते चतुर्भिर्मूर्तिभिःसंस्थामष्टाभिःपरिगीयते सामध्वनि

स्तुयोज्ञेय अर्घ्यं गृहाण नमोस्तु ते ततः पुष्पपूजांते अंगपूजां कुर्यात् भास्कराय नमः शिखां पूजयामि
सूर्याय नमः ललाटं पूजयामि भानवे नमः चक्षुषी पूजयामि रवये नमः मुखं पूजयामि भानुमते
नमः कंठं पूजयामि पद्मगर्भाय नमः हस्तौ पूजयामि तिमिरक्षयकर्त्रे नमः स्तनौ पूजयामि जातवेदसे न
मः नाभिं पूजयामि भानवे नमः कटिं पूजयामि उग्ररूपाय नमः गुह्यं पूजयामि तेजोरूपाय नमः जंघे
पूजयामि स्थूलसूक्ष्मरूपाय नमः पादौ पूजयामि एवं पूजां समाप्य प्रार्थयेत् अग्निमीले नमस्तुभ्यं
नमस्ते जातवेदसे इषेत्वोर्जे नमस्तुभ्यमग्ने चैव नमो नमः आत्मरूपिन्नमस्तुभ्यं विश्वमूर्ते नमो नमः
त्वं ब्रह्मा त्वं च वै विष्णुस्त्वं धाता त्वं हुताशनः मुक्तिकाममभीप्सामि प्रार्थयामि सुरेश्वरेति नमस्कारः त
तः सवर्चं सेति मंत्रेण पाणिभ्यां तोयेन मुखं संपूज्य हंसः शुचिषदित्यृचा सूर्यमालोक्य उदुत्यं चित्रं
देवानामिति सूक्ते देवाग्रतो जपेत् ततः पूर्वोक्तफलपुष्पान्नानां नानाविधैर्भक्ष्यैः फलकं कृत्वा त
त्र शुभदेशे शय्यां प्रकल्पयेत् ततो लवणाचलोपरि रौप्यमयं रविं वस्त्रयुगाच्छन्नं संस्थाप्य पूजयेत्
तत्र मंत्रः नमस्ते क्रोधरूपाय वह्निहस्त जितासवे जितासुकामं त्वां दृष्ट्वा डुढुंडुः सर्वदेवताः त्वयाव्या
प्तमेरुपृष्ठं च द्युभास्कर सुप्रभ अतस्त्वां पूजयिष्यामि अर्घ्यं गृहाण नमोस्तु ते ततस्तां रात्रिं कथादिभिरति
वाह्य अभ्युदिते सूर्ये पुनः स्नात्वा देवं संपूज्य अग्निं प्रतिष्ठाप्य अन्वादध्यात् तत्र प्रधानं सूर्यं अर्कस
मिद्भिः घृताक्ततिलैः सिद्धचरुणा घृतेन च प्रतिद्रव्यं अष्टोत्तराष्टाविंशतिसंख्याकाभिः आकृष्णेनेति
मंत्रेण व्याहृतिभिर्वा पीठावरणादिदेवता ब्रह्मादिदेवताश्चैकैकया [illegible] स्विष्टकृतं एवं
होमं समाप्य ततः सर्वोपस्करसहितां कपिलां गां मुक्तप्रकारेण संपूज्य प्रार्थयेत् कपिले सर्वदेवानां
पूजनीयासि रोहिणी सर्वतीर्थमयी यस्मादतः शांतिं प्रयच्छ मे ततः आचार्यपूजनं कृत्वा तस्मै रुक्मं
गोभूहिरण्यवासोव्रीहिलवणतिलान्दत्वा कपिलां प्रार्थयेत् कपिले पुण्यजन्मासि निष्पापे पुण्यकार्मि
णि मां समुद्धर दीनं च ददतो ह्यभयं कुरु ब्रह्मणोत्पादिता देवी अग्निकुंडात्समुद्भवा नमस्ते कपिले
पुण्ये सर्वदेवनमस्कृते जय नित्यं महासत्वे सर्वतीर्थादिसंगमे दातारं स्वजनोपेतं ब्रह्मलोकं नयाशु
मा ततः प्रदक्षिणां कृत्वा आचार्यहस्ते सोपस्करदक्षिणां गां पीठं च दत्वा प्रार्थयेत् दिव्यमूर्तिर्जगच्चक्षु
र्द्वादशात्मा दिवाकरः कपिलासहितो देवो मम मुक्तिं प्रयच्छतु यस्मात्त्वं कपिले पुण्ये सर्वलोकस्य
पावनि प्रदत्ता सह सूर्येण मम मुक्तिप्रदा भवेति ततोन्यानपि ब्राह्मणान्संपूज्यान्नादिभिः संतर्प्याशि
षो गृहीत्वा स्वयं ससुहृदो भुंजीत इत्युद्यापनकौमुद्यां सोद्यापनं कपिलाषष्ठीव्रतं इयं षष्ठी तत्पुरु
षकल्पादिरिति कल्पादिनिर्णये प्रागुक्तं अथाश्विनकृष्णसप्तम्यां तिथिपत्वेन सूर्यपूजा महालयः
श्राद्धं च कार्यं स्कांदे सेतुखंडे सप्तम्यां यो नरो भक्त्या श्राद्धं कुर्यान्महालये सप्ततिः कल्पसाहस्रं पि
तरो यांति तृप्तितां संततिं चाप्यविच्छिन्नां संपदां विपुलां तथा पुत्रानपि प्रदास्यंति तुष्टाः पितृगणा
स्तदा आश्विनकृष्णाष्टम्यां मासपलायनेन माध्यावर्षसंज्ञकं श्राद्धमुक्तं एतेन माध्यावर्षं प्रोष्ठपद्या
अपरपक्ष इति इदं च सप्तम्यादित्रिष्वपि हस्तकार्यं इति नारायणवृत्तौ हरदत्तस्तु मघायुक्तवर्षा
सुभवं त्रयोदशीश्राद्धमिति व्याचख्यौ पृथ्वीचंद्रोदये त्वस्यामेवाष्टम्यां श्राद्धं गयातुल्यफलं तथा चो
क्तं ब्राह्मांडे आषाढ्याः पंचमे पक्षे गयामध्याष्टमी स्मृता त्रयोदशी गजच्छाया गयावात्तुल्यात पैतृके
इति हेमाद्रौ पाद्मेपि वसुनामा पितामह्योष्टशातपात्रप्रहायच प्रोष्ठपद्यष्टका भूयः पितृलोके भ
विष्यसि आयुरारोग्यदा नित्यं सर्वकामफलप्रदेति एतस्याः पद्मसंज्ञाप्युक्ता तथा च जातूकर्ण्यः
शुक्लशाकरमावास्या क्षीणसोमा द्विजोत्तमाः अष्टका च भवेत्पद्मं तत्र दत्तमथाक्षयं अस्यां महालय
श्राद्धफलं पाद्मे सेतुखंडे योष्टम्यां श्रद्धया श्राद्धं नरः कुर्यान्महालये अशीतिः कल्पसाहस्रं तृप्यं

तिपितरोप्येवं आशीर्भिर्वर्धयंत्येनं विप्रांश्चाप्यपोहति संततिं चाप्यविच्छिन्नां ददुः पितृगणाः सदेति अ
स्यामेवाष्टम्यां विष्णुधर्मोत्तरोक्तं पुत्रीयव्रतं हेमाद्रौ प्रोष्ठपद्यामतीतायां कृष्णपक्षाष्टमीं तया सोपवासी नरस्त्व
स्यां योषिद्धा तनयार्थिनी अश्ववासुदेवपूजनं पुरुषसूक्तेन पायसहुतादि कृत्वा पुत्रार्थी पुंनामभिः फलैः
कन्यार्थी स्त्रीनामभिः प्राश्य संवत्सरं व्रतं कुर्यादिति पुत्रीयं व्रतं अस्यामेवाष्टम्यां महालक्ष्मीव्रतमुक्तं त
त्रनिर्णयामृते पुराणसमुच्चये श्रियो व्रतं भाद्रपदे सिताष्टमीमारभ्य कन्यां भगते च सूर्ये समापयेत्तद्व्रति
यो च यावत्सूर्यं अष्टमीं हृदंगतो युवत्या इति तत्रैव कन्यागते कं मारभ्य कर्तव्यं हि श्रियो र्चनं हस्तशं तदल
स्येकं तद्व्रतं तु समापयेत् पूजनीया गृहस्थानामष्टमी प्राह्णविप्रियः दोषैश्चतुर्भिः संत्यक्ता सर्वसंपत्करा
तिथिः पुत्रसौभाग्यसौख्यायुर्नाशिनी सा प्रकीर्तिता तस्मात्सर्वप्रयत्नेन त्याज्या हस्तगते रवौ विशेषेण
परित्याज्या नवमी दूषिता यदीति दोषचतुष्टयं तत्रैवोक्तं त्रिदिने वावमे चैव अष्टमीं नोपवासयेत् पुत्रहा
नवमीविद्धा स्त्रीघ्नी हस्तगते रवौ त्रिदिनादिलक्षणमुक्तं रत्नमालायां यत्रैकः स्पृशति दिनद्वयावसानं वार
त्रयं च तत्र संबंधवर्जितं दिनयुक्तं द्वयं च नेष्टं यदेते सर्वे निषे
धे दवमदिनं तदुक्तं मार्ये यः स्पर्शी भवति तिथित्रयस्य चाह्नि युग्मं वायमदिने द्वयं च नेष्टं यद्येते सर्वे निषे
याः प्रथमारंभविषयाः मध्ये तु सति संभवे ज्ञेयाः व्रतस्य षोडशाब्दसाध्यत्वेन मध्ये सामान्यवचनात् इयं
चंद्रोदयव्यापिनी ग्राह्या तत्रैव पूजा प्रोक्ता यद्दिने चंद्रोदयाद् ऊर्ध्वं त्रिमुहूर्तव्यापिनी पूर्वैव कार्या अन्य
था पूर्वैव पूर्वा वा परविद्धा वा ग्राह्या चंद्रोदये सदा त्रिमुहूर्तापि सा कार्या परतश्चोर्ध्वगामिनीति मदनर
त्ने निर्णयामृते संगृहीतोक्तेः अर्धरात्रमतिक्रम्य वर्तते यो तरा तिथिः तदा तस्यां तिथौ कार्यं महालक्ष्मीव्रतं
सदेति वचनाच्चेति संक्षेपः इदं व्रतं च भाद्रशुक्लाष्टमीमारभ्याश्विनकृष्णाष्टम्यंतं षोडशदिनसाध्यमई
राव्यापिन्यामष्टम्यां कार्यं प्रारंभस्तस्यां ज्येष्ठायुतायां शुक्लाष्टम्यां कार्यः तथा च स्कांदे मासि भाद्रपदे
सितेशुक्ले ज्येष्ठायुताष्टमी प्रारब्धव्यं व्रतं तत्र महालक्ष्म्यायतात्मभिः समापनं च कृष्णायामष्टम्यामेव तद्व्रते
न चंद्रोदयव्यापिन्यामष्टम्यामेव चंद्रोदयव्रते चैव तिथिस्तात्कालिकी स्मृतेति दिनद्वये चंद्रोदयसत्वे स
ति पूर्वैव परदिने चंद्रोदयोत्तरं चेदष्टमी तदा परैव मदनरत्ने पुराणसमुच्चये पूर्वा वा परविद्धा वा ग्रा
ह्या चंद्रोदये सदा त्रिमुहूर्तापि सा पूज्या परतश्चोर्ध्वगामिनीति अथ व्रतविधिः हेमाद्रौ मदनरत्ने स्कां
दे स्कंद उवाच सौभाग्यजननं स्त्रीणां दौर्भाग्यपरिकृंतनं परमैश्वर्यजननं तद्व्रतं ब्रूहि शंकर ईश्वर उवा
च साधु साधु महाबाहो यत्पृष्टोहं त्वयानघ तत्तेहं संप्रवक्ष्यामि व्रतानामुत्तमं व्रतं येन चीर्णेन न नरो दु
र्गतिं याति कर्हिचित् सुभगा वासपुत्रा वा स्त्रियो न विधुराः अस्ति देव्या व्रतं पुण्यं महालक्ष्म्याः षडानन
नारीणां च नराणां च व्रतं सर्वसुखावहं तथा स्कंद उवाच देव्याश्चरितमाहात्म्यं मर्त्यके न प्रकाशितं विधा
नं कीदृशं ब्रूहि व्रतस्यास्य महाविभो शंकर उवाच देवासुरमभूद्युद्धं पूर्णमब्दशतं हि ते मदिषेसुराणा
मथिये देवानां च पुरंदरे तत्र देवैर्महावीर्यैर्नारायणविलाश्रयात् असुरा निर्जिताः सर्वे पातालतलमा
ययुः केचिल्लंकां गताः केचित्त्वविष्टा वरुणालयं गिरिदुर्गं समाश्रित्य केचित्तस्थुर्महासुराः तत्र कोला
सुरो नाम दुर्जयस्स महाबलः गोमंतदुर्गमं दुर्गं गिरिमाश्रित्य निर्भयः या राजकन्यकालोके रूपवत्योम
हागुणाः आनीय गिरिदुर्गस्थो रमयामास सर्वशः रमयित्वा क्षिपन्नत्र कामरूपी विलेगमः एतस्मिन्नेव
काले त्वागतो मुनिसत्तमो ऋतप्रभावसंपन्नो पुलस्त्यो गौतमस्तथा तीर्थयात्राप्रसंगेन श्रुत्वा वाक्य
जनस्य च कोलासुरेण चरितं कन्याहेतोः शिखिध्वज तावूचतुर्जनं सर्वमगस्त्यो ऽस्ति महामुनिः येन तो
यनिधिः पीतो विंध्याद्रिश्च निवारितः तं व्रजामो वयं सर्वे कोलासुरवधाय ये इत्यामंत्र्य ययुः सर्वे गत्वा
तमभिवाद्य च ऊचुः सर्वे यथा वृत्तं कोलासुरविचेष्टितं तच्छ्रुत्वा भगवानाह मैत्रावरुणिरग्रधीः स्थि
तमभिवाद्य च ऊचुः सर्वे यथावृत्तं कोलासुरविचेष्टितं तत्र पश्यंति ब्रह्मविष्णुमहेश्वराः तिस्रः संध्या मूर्तिमत्य
स्थितिविनाशानां कारणं भक्तवत्सलः राम स्याद्रीत पश्यंति ब्रह्मविष्णुमहेश्वराः

तेषां शुश्रूषणे रताः अथ शतमहालक्ष्मीशक्तिरूपेण संस्थिता सर्वशक्तियुता देवी लोकानां हितकाम्य
या इत्युक्त्वा त्वरितं गत्वा कोलासुरवधाय वै निवेदयित्वाखिलं तेभ्यस्तस्थुः पंकजलोचनाः तच्छ्रुत्वा नि
खिलास्तेभ्यो ब्रह्मविष्णुमहेश्वराः संध्यात्रयं समाहूय वाचं प्रोचुः सुरेश्वराः वंदारुसुरवृंदेभ्यो मौलि
माणिक्यमंडलाः हनिष्यति महालक्ष्मीर्युद्धे कोलासुरं रिपुं भगवत्यो मूर्तिमत्यो दंडशूलादिभिर्वरैः
आयुधैर्विविधैः कृत्वा जयमाप्स्यथ संयुगे युष्माकं च महायोसौ युष्मत्कोपसमुद्भवः भूतनाथोऽभू
तमन्युर्वः सहायो भविष्यति इत्युक्त्वा त्वरितं गत्वा रुरुधुः कोलराक्षसं निरुध्य च पुरीं देव्यो जगर्जुर्ज
लदस्वनाः भिंदंत्यश्च दिशो वृंदं वर्णयंत्यश्च तत्कथां कोलासुरो हि तच्छ्रुत्वा प्रोत्पपात महास्वनः
रोषणः क्रोधताम्राक्षो मेरोरिव मृगांतकः हस्त्यश्वरथपादातैरनंतैरंगवलान्वितः निर्ययौ हतनायो
द्धुं कालिकाया इवाशनिः सकुंडलशिरस्त्राणकवचीभूतवाणधिः वद्धगोधांगुलित्राणः क्रुद्धो द्वव
वापरः ततो राक्षससैन्यं तद्भूतनाथेन संगतं देवनारीमनोसासि युद्धं चक्रे तिभीषणं महारवैर्भीमघोषैर्वा
णकैंकारनिःस्वनैः निःस्वाननिनदैश्चैव लोकः शब्दमयोऽभवत् जयेति वदतां तेषां धावतामितरेतरं व
वृधे समरं घोरं मुष्टामुष्टि कचाकचि उद्धते राक्षसवले भूतनाथो महावलः ममर्द राक्षसानीकं शरवर्षैः
सुदारुणैः हतं दृष्ट्वासुरवलं क्रुद्धः कोलासुरो रणे अभिद्रुत्य गदापाणिस्ताडयामास भैरवं ययौ मूर्छां म
हावीर्यस्तेनाभिहतमस्तकः ततो देव्यो निवेगेन त्वभिद्रुद्रुवुरुद्धतैः त्रिशूलैरभिजघ्नुस्तं पट्टिशैश्च व्यदा
रयन् मुष्टिभिस्ताडयामासुर्नखैश्चैव व्यदारयन् पादाघातैः समाजघ्नुः सिंहाः करिवरं यथा सकुंडलशि
रस्त्राणो दष्टौष्ठो रक्तलोचनः कृतभ्रुकुटिवक्त्रोसौ राक्षसस्ता मुहुर्मुहुः गदया ताडयामास शिरःकंठांसकु
क्षिषु वभंजुस्ता गदाघातास्तु हसंत्यः समहाकुलाः ततो धनुर्धरो भूत्वा वाणजालमवाकिरत् तासां शरी
रमर्माणि भिंदन्वज्रशानैः शितैः ननाद वद्धवैरोसौ हृदयं चाभिनच्छरैः ततः क्रुद्धतरास्तास्तं पादैर्जघ्नु
र्भृशं आकाशे भ्रामयित्वा तं चिक्षिपुर्गगने क्रुधा कोलासुरोपि पतितो यावदुत्थातुमिच्छति तावन्नि
गम्य लक्ष्मीस्तं पादाभ्यां प्रत्यपीडयत् तत्पादपीडितं रक्तो विहून्य नयते भृशं मुक्तकंठः स्वनं कृत्वा ततो
मोहमुपेयिवान् ततो देवाः सगंधर्वा मनुष्या ऋषयोऽस्तुवन् देवनार्यश्च देव्यश्च ननृतुः समदाकुलाः
देवदुंदुभयो नेदुः पुष्पवृष्टिः पपात खात् दिशः प्रसेदुर्मरुतो ववुर्मंदं रवं जगत् सुरासुरशिरोरत्नवं
द्यपादांबुजास्ततः देव्यो दिव्येन यानेन यांति कोलापुरं प्रति आयांतीं पंकजां वीक्ष्य सुमत पादाग्रभूत
लं तुष्टाव परया भक्त्या राजकन्यागणो मुदा पंकजां कमलां राजकन्या ऊचुः हे वंदारुवीरसुरवृंद
किरीटकोटिरोचिर्विदासिकरकल्पितरत्नदीपं देवि त्वदीयचरणं शरणं जनानां सेवामहे सकलमंग
लवर्द्धनाय १ उत्फुल्लकैरवदलायतलोचनायै गंडोल्लसच्चटुलकुंडलमंडितायै राकाशशिप्रतिभटा
ननकोमलायै तस्यै नमः कमललोचनवल्लभायै २ सद्भक्तकल्पलतिका हरकंठभूषा केयूरहेमकट
कोज्ज्वलकंकणांका संसारसागरसुविपततो समायत्वमादपीटकरयष्टिरनन्यमानः ३ दृष्ट्वा देवि ज
नान वाधविविधाव्याधिपरंगताः विषाणेदंतसियाचकारततलालीलाब्जमालाभृते क्लेशाग्निप्रदि
तं त्वदीयचरणं हेत्रसेवारतं कारुण्यामृतसारपूरितदृशा मामयपश्यपेश्वरि ४ मल्लीविकुलकुसु
मोज्ज्वलमध्यभागा धम्मिल्लभारजिततारकचित्रिताभा उन्नमहेमनिकषोज्ज्वलकायकांतिर्लक्ष्मीः स्वयं प्र
णमतां श्रियमातनोतु ५ इति स्तुता महालक्ष्मीर्भक्तानामिष्टदायिनी राजकन्यास्ततः सर्वाः सुखा
त्स्वपुरमाययुः ततः प्रभृति लोके पूज्यास्ताः सर्वकामदाः ताश्चतुःषष्टियोगिन्यो महालक्ष्मीपरिग्र
हात् नृत्यंति निवहैस्तत्र गीतवादित्रनिस्वनैः पुरा देव्या महालक्ष्म्याः करहाटपुरे निशि एवंप्रभावा
सा देवी विप्रराम षडानन व्रतस्यास्य विधानं च शृणु समाहितस्ततः मासि भाद्रपदे शुक्लपक्षेज्ये

शुक्लाष्टमीं प्रारभ्यव्रतंतन्नमहालक्ष्म्यामहात्मभिः करिष्यामिव्रतंदेवित्वद्भक्तस्त्वत्परायणः
तदविघ्नेनमेयातुसमाप्तिंत्वत्प्रसादतः इत्युच्चार्यततोबध्नीयाड्डोरकंदक्षिणेकरे षोडशग्रंथिसहितंगु
णैःषोडशभिर्युतं ततोन्वहंमहालक्ष्मींपूजयेन्नियतात्मवान् गंधपुष्पैःसनैवेद्यैर्यावत्कृष्णाष्टमीदि
नं तस्मिन्दिनेतुसंप्राप्तेकुर्यादुद्यापनंव्रते वस्त्रमंडपिकांकृत्वामाल्यरत्नोपशोभितां त्रिभूमिकांचसु-
स्वच्छांनानादीपैरलंकृतां चतस्रःप्रतिमाःकृत्वासौवर्णीस्तत्स्वरूपिणीः स्नपनंकारयेत्तासांपंचामृत
विधानतः षोडशैरुपचारैश्चधूपदीपादिभिस्तथा जागरंतत्रकर्तव्यंगीतवादित्रनिःस्वनैः ततोनिशी
थेसंप्राप्तेप्युदितेमृतदीधितौ कृत्वातुस्थंडिलेपद्मंषडंगंतत्रपूजयेत् दद्यादर्घ्यंचशशिनेव्रतीतस्मैस-
माहितः क्षीरोदार्णवसंभूतचंद्रलक्ष्मीसहोदर पीयूषधामरोहिण्यासहितोर्घ्यंगृहाणमे जानुभ्याम
वनींगत्वामंत्रेणप्रार्थयेत्ततः क्षीरोदार्णवसंभूतेकमलेकमलालये प्रयच्छसर्वकामान्मेविष्णुवक्ष
स्थलालये पुत्रान्देहियशोदेहिसौख्यंसौभाग्यमेवच कालिकालिमहाकालिविकरालिनमोस्तुते
त्रैलोक्यजननीत्वंहिवरदेभक्तवत्सले एकनाथेजगन्नाथेजमदग्निप्रियेव्यये रेणुकेत्राहिमांदे-
विरामस्मातःशिवंकुरु भूतनाथेजगन्नाथेप्रसीदपुरुषोत्तमे कपालकर्तिकाशूलडमरुव्यग्रह
मस्तके श्रियंकुरुमहालक्ष्मिलक्ष्मिपंचाशुनाशय मंत्रैरेतैर्महालक्ष्मींप्रार्थ्यश्रोत्रिययोषितां श्री
सूक्तेनतथावक्ष्यमाणैर्निजबुद्ध्याशुचिः पायसंचैवबिल्वानितदलाभेपवाहृतं गृहेभ्यश्चैवहोतव्यं
समिच्चरुघृतादिकं चंदनंतालपत्रंचपुष्पतालादिकंतथा नवशूर्पेषुभक्ष्याणित्रिसावद्विविधा-
निच प्रत्येकंषोडशैतानिपूरणानिचैवहि तान्यत्रैनसमादायव्रतीदद्यात्समंत्रकं क्षीरोदार्णव
संभूतालक्ष्मीश्चंद्रसहोदरा व्रतेनानेनसंतुष्टाप्रीयतांविष्णुवल्लभा इंदिराप्रतिगृह्णातिइंदिरावैददा-
तिच इंदिरातारकोभाभ्यामिंदिरायैनमोनमः दत्वार्घ्यंवायनादींश्चश्रोत्रियाणांचयोषितः चतस्रःप्र-
तिमास्तास्तुब्राह्मणायनिवेदयेत् एवंकृत्वासनिर्वर्त्यव्रतीभोजनमाचरेत् इतिव्रतविधानं अथक
था स्कंदउवाच केनेदंस्वीकृतंपूर्वंकथमस्मिन्प्रकाशितं ब्रूहिमेतत्वतोदेवयद्यहंवल्लभस्तव शंकर
उवाच आसीद्राजासार्वभौमोमंगलाह्वइतिश्रुतः कुंडिनेनगरेरम्येतस्यपद्मावतीप्रिया तमागतःकु-
त्रिदेकसेवकोब्राह्मणोत्तमः अज्ञातनामातस्यासौनामचक्रेनृपोत्तमः तवल्लकइतिख्यातोबभूव।
द्विजसत्तमः कदाचिन्मृगयासक्तोभूपालोवनमाविशत् तत्रविद्ध्वावराहादीन्मृगान्हत्वासहस्रशः
क्षुत्तृट्परिहृतःश्रांतोवृक्षमूलमुपागतः उदकान्वेषणेचारान्प्रेषयामाससर्वतः वनेजलंतेनापश्यन्
चिरंश्रांताप्रयत्नतः तेगत्वान्नृपतिंप्रोचुर्नांभोस्तीतिदुःखिताः तवल्लकोपिबभ्रामविपिनंतदनंतरः भ्र
ममाणस्तदापश्यत्कस्मिंश्चिद्वनगह्वरे रम्यंसरोवरंदिव्यंकुमुदोत्पलमंडितं तत्रापश्यद्देवकन्या।
दिव्यरूपामनोरमाः तन्वंगीश्चारुनयनापीनोन्नतपयोधराः हारकंकणकेयूरनूपुरालंकृताःशुभाः
पूजयंतीर्महालक्ष्मीव्रतरूपेणसादरात् तवल्लकोपिपप्रच्छकिमिदंकथ्यतामिति स्त्रियऊचुः महा
लक्ष्मीव्रतमिदंसर्वकामफलप्रदं क्रियतेस्माभिरेकाग्रमनोभिस्तत्रभक्तितः तवल्लकोपितच्छ्रुत्वाव्रतं
जग्राहभक्तिमान् तदनुज्ञांगृहीत्वास्यजलमादायसत्वरं आजगामजलंतस्मैदत्वाप्रांजलिर्नृप
जलंपीत्वानृपस्तस्यदृष्टवान्डोरकंकरे किमिदंडोरकंविप्रकिंव्रतंकृतवानसि राज्ञापृष्टस्तवल्लको
पिकथयामासतद्व्रतं तच्छ्रुत्वाराजशार्दूलोव्रतंजग्राहभक्तिमान् तवल्लकेनैवसहितोराजास्वपुरमा
ययौ पद्मावतीगृहंगत्वानृपारंतुंगतोरहः रममाणाथसादेवीतेनराज्ञाप्रियेणवै तंदृष्ट्वाडोरकंहस्ते
कोपितात्यंतकोपना कथंत्वंवंचितोब्रूहिकयाबद्धंसडोरकं मावादीरन्यथाह्येतल्लक्ष्मीव्रतमनुत्तमं इ
त्युक्तापिप्रियेणासौहस्तेविच्छेदडोरकं ज्वालामालाकुलेवह्नौक्षिप्तवत्यतिकोपना हाहाकष्टमि

दृष्यापं कृतं मूढधिया त्वया इति निर्भर्त्सिता राज्ञा तत्याज वनगह्वरे सा च हानिं ययौ यस्मात् ततो हानिं य
यौ नृपः महालक्ष्म्यपचारेण सारण्ये जलवर्जिते भ्रममाणा वने तस्मिन् कांचिद्भूमिमापन्ना विचरंती
वने तत्र क्षुधया कस्यचिदाश्रमे ददर्श मृगसंकीर्णे शांतसत्त्वसमाश्रिते तत्रापश्यद्वने रम्ये वसिष्ठं मुनि
पुंगवं ववंदे चरणौ तस्य विसंज्ञा दुःखकर्षिता चिरं ध्यात्वा मुनिस्तस्या ज्ञातवान् दुःखकारणं महालक्ष्म्य
पचारेण ज्ञानविज्ञानचक्षुषा तद्व्रतं कारयामास तस्या दुःखोपशांतये तद्दुःखं तत्क्षणादेव विनष्टमभव
त्तदा पुनश्च मृगयासक्तो भूपालो वनमाविशत् कंचिन्मृगं समाविध्य बाणेनैकेन वाजिमान् अन्वगच्छ
त्पदं तस्याः आश्रममुपागमत् वरं मुनिं ददर्शाग्रे वसिष्ठं वीतकल्मषं कृतातिथ्यक्रियो दृष्ट्वाचरंतीं
वदिरंतिकात् हावभावविलासाग्रे हरंतीं हृदयं तु तां तदा निर्गत्य नृपतिः प्रोवाच मधुरं वचः वामोरु
कासि कल्याणि किमर्थं चरसे वने किन्नरी मानुषी वा त्वं यक्षिणी चारुहासिनि किमत्र वद नोक्तेन भ·
जमानं भजस्व मां नृपेणैतेन सा पृष्टा सस्मिता वाक्यमब्रवीत् पुनर्भजामि चाहं त्वां मवेहि मद्विधीत·
व महालक्ष्म्यपचारेण त्वया हीना वराप्यहं मुनींद्रस्याश्रमे रम्ये तरुगुल्मोपशोभिते ममोपरि कृप
विष्टो महालक्ष्मीव्रतोत्तमं कारयामास विधिवत्सर्वविघ्नोपशांतये तयोक्तं वचनं श्रुत्वा सचोत्फुल्लवि·
लोचनः अथ रत्नमादाय प्रियामादाय सत्वरः हृष्टपुष्टजनैर्जुष्टं पताकाध्वजशोभितं प्रविवेश तया
सार्द्धं स पौरैरभिवंदितः महालक्ष्म्या व्रतं भूयस्तया सह चकार ह भुक्त्वेह भोगान्विपुलान्पुत्रैः पौत्रैः स
मावृतः भूपालः सार्वभौमोऽभूत्त्वल्लो मान्यतां ययौ महालक्ष्मीप्रसादेन मंत्रिभिः सर्वसंपदां एवंप्र
भावा सा देवी नराणामिष्टदायिनी सर्वपापहरा देवी सर्वदुःखापहारिणी एवं षोडशवर्षांतं कर्तव्यं
व्रतमुत्तमं या करिष्यति तां भक्त्या स्वयं सिद्धिरुपासते लोकपालाश्च पुष्यंति दासा इव मनोरथान्
नारी वा पुरुषः करिष्यति मुदा भक्त्या व्रतं यत्नतः सेवंते हरिरुद्रपद्मजसुरास्तुष्यंति तस्य प्रियं तत्प
दौ पतिं रंजयंति मनुजा मौलिप्रभामंडले तस्मिन्नेव कुटुंबिनी च वसति लक्ष्मीः स्वयं विष्णुना ये भा
क्त्या चाप्यभक्त्या वा कुर्वंति व्रतमुत्तमं अंतकाले स्वयं विप्राः संसारात्परिरक्षति यद्देहस्थाप्युयान्ति यंत्र
वयेहाममाहितः न संत्यजति तं लक्ष्मीरलक्ष्मीर्नैव तं भजेत् सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते

इति स्कंदोक्तं महालक्ष्मीव्रतम् ॥

अथ भविष्योत्तरं महालक्ष्मीव्रतं युधिष्ठिर उवाच स्वस्थानलाभपुत्रायुः सर्वैश्वर्यसुखप्रदं व्रतमे·
कं समाचक्ष्व विश्वार्थप्रवरोत्तम श्रीकृष्ण उवाच दुर्वारवृत्रदैत्येषु परिश्रांतो हि विष्टपे बलदेवकृतस्या
ङ्गे देवेंद्रः प्राह नारदं तस्य श्रुत्वा ततो वाक्यं स मुनिः प्रत्यभाषत नारद उवाच पुरंदरपुरा पूर्वं पुरमा
सीत्प्रभान्वितं रत्नगर्भमवद्भूरि यत्र रत्नाद्यभूषितैः यत्रांगनाजनापांगभंगलोचनसायकैः त्रैलो·
क्यं स्ववशं चक्रे देवः कुसुमसायकः चतुर्वर्गजनैर्यत्र पत्रविश्वविभूषणं विश्वकर्मापि यद्दृष्ट्वा कंपयन्
निजं शिरः तत्राभवन्महीपालो मंगलो मंगलाश्रयः चिल्लदेवी प्रिया तस्य दुर्भगा काव भूव ह अन्याथ
चोलदेवी वा महिषी साथ यशस्विनी कदाचिन्मंगलो राजा चोलदेवीसहायवान् प्रासादशिखरारूढः स्थ
लीमेकामपश्यत तामालोक्य महीपालः स्मरस्मेरमुखांबुजः चोलदेवीपतिः प्राह दंतद्योतितदिङ्मुख
ं वनादिह तवोद्यानं कांतिनंदितनंदनं कारयामि तवोद्दिष्टं तदोद्यानमकारयत् संपन्नं च तदुद्यानं ना
नाद्रुमलताकुलं अप्यागममहाकोलस्तनुसंप्रष्टनभस्तलः पंकग्राहहृतश्वासमस्तावाद्भितवंचल·
दंष्ट्रातर्जितचंद्रार्कः प्रलयांभोधरस्वनः कचिद्द्रुमप्रहारेण कचिद्दगविचर्षणैः आमूलपतद्वन
न्यर्वात्याद्यानोत्तुंगं नंदन तद्वनकीर्तिविज्ञाय समेत्योद्यानपालकाः सभयास्तस्य ह भीता मुकुलत्त
पते पुरः तदाकर्ण्य ततो राजा कोपकृपितलोचनः आहूय [illegible] तस्य संदिदेशाविलंबनं ततश्च

बालभूपालः स्वगंडगलितैर्गजैः आह्लादयन्महीं सर्वां वाजिवृंदैः हतांबरां चालयन्निखि-
लान् शैलान् स्यंदनौघमरुद्रवैः पत्तिव्रातमहाध्वानैः पूरयन्वनांतिकं तस्याश्वपंपशिर-
श्छेदं विद्धासितेषोरिव तस्य भूपस्य तद्वाक्यं समाकर्ण्य स सूकरः जगामास्यैव मार्गेण
प्राणान्मुष्टितं यथा ततः क्रुद्धो महीपालः कशयाश्वं प्रताड्य च ब्रीडाकलंकितास्यं डमा-
र्गे तस्यैव सोगमत् गत्वाथ विपिनं घोरं सिंहशार्दूलसंकुलं तमालतालहिंतालशाला-
र्जुनलतान्वितं झिल्लीझांकारसंभारवाचालितदिगंतरं तत्रैकचेतसा पश्यन्वक्रं बभ्रा-
म भूपतिः कोलो वेलामवाप्याथ सोभवद्राजसन्मुखः भल्लेन सोवधीत्क्रोडं वज्रेणाद्रिं
यथा भवान् अथ व्योम्नि विमानस्थः स्मरसुंदरविग्रहः कोलरूपं परित्यज्य सोब्रवीन्मं-
गलं नृपं गंधर्व उवाच स्वस्त्यस्तु ते महीपाल त्वया मुक्तिः कृता मम तमाकर्णय वृत्तांतं येनाहं
जात ईदृशः एकदा देवतावृंदैः संवृतः कमलासनः वंद्यमानः सदादिभिः स्तोत्रैः षड्जाद्यैः सप्तभिः स्व-
रैः मंद्रादिभिस्त्रिभिर्गानैर्गीयमानं मया नृप नानास्थानगुणोपेतमभ्यासांगीतमुत्तमं गी-
यमानं च्युतस्थानं ततोहं कर्मणामुना शप्तश्चिरं यस्तेन ब्रह्मणा सृष्टिकर्मणा ब्रह्मोवाच
कोलो भवेति मेदिन्यां मुक्तिस्ते तु यदा तदा निर्जिताखिलभूपालो मंगलस्त्वां हनिष्यति तद-
द्य घटितं सर्वं त्वत्प्रसादान्महीपते तद्गृहाण वरं भूप देवस्यापि सुदुर्लभं महालक्ष्मीव्रतं दि-
व्यं चतुर्वर्गफलप्रदं लभस्व सार्वभौमत्वं गच्छ राज्यं निजं द्रुतं नारद उवाच चित्ररथो यगं-
धर्व उक्त्वेदं भूपतिं प्रति अंतर्धानं गतस्तूर्णं शरत्काल इवांबुदः अथ मंगलभूपालः पार्श्व-
स्थं द्विजमाकुलं विलोक्य वटुकं किंचित्कलानिधिमशंबलं उवाच मधुरां वाचं स्मितपूर्वं
शुचिस्मितः देवस्त्वं दानवस्त्वं वा गंधर्वो वापि राक्षसः सत्यं वद वटो कस्मात्किमर्थं त्वमिहाग-
तः श्रुत्वा वाशिष्यविप्रस्त्वं शाहत्वदेशसंभवः अहं सार्थं त्वया जातस्तदादिश यथोचितं राजा
यतमुवाचेदं त्वं वटो भूतनायकः अयन्याणां विधायाश्वं तूर्णं तोयं च पायय अथ विश्रम्य भूपा-
लं वटुको वटपादपे तथाकृत्य तुरंगं च समारुह्य महामतिः जगाम पत्तिघोषेण यत्रास्ते सुंद-
रं सरः कमलैकविलासेन रथांगाभरणेन च वनमालाश्रयत्वेन दधन्नारायणीतनुं भग्नवा-
युसुमनोयोगमत्तारं विषवर्जितं नाशितागस्त्यतृष्णार्ति प्रसन्नं सागराधिकं पंकेसशोधन-
ग्रामः दृष्ट्वा उत्तीर्य तस्य सः चतुर्दिशं निरीक्ष्याथ तस्यैव सरसस्तटे दिव्यवस्त्रपरीधानं दि-
व्याभरणभूषितं कथयंतं कथां दिव्यां स्त्रीणां सार्थमपश्यत उपसृत्याथ तं सार्थं तद्वृत्तांतं
निवेद्य च कृतांजलिरिति प्राह वटुर्मधुरया गिरा (वटुरुवाच एतत्किं क्रियते सार्थं त्वयाभ-
क्तिपरेण च को विधिः किं फलं चास्य ब्रूहि तन्मे यथातथं श्रुत्वेति तमुवाचेदं सार्थः करुणया-
न्वितः सार्थ उवाच शृणु विप्रैकचित्तेन श्रद्धाभक्तिसमन्वितः या माया प्रकृतिः शक्तिस्त्रैलो-
क्येष्वभिधीयते व्रतमेतन्महालक्ष्म्यास्तस्याः सर्वफलप्रदं आकर्णय विधिं चास्य कथ्यमानं व-
टो मया भाद्रेमासि सिताष्टम्यां प्रारंभोस्य विधीयते प्रातः षोडशहस्तं तत्सूत्रं प्रक्षाल्यांघ्रिकरौ मुखं
नतषोडशसंयुक्तं ग्रंथिषोडशसंयुतं मालतीपुष्पकर्पूरचंदनागुरुचर्चितं लक्ष्म्यै नमोथ मं-
त्रेण प्रतिग्रंथ्यभिमंत्रितं धनधान्यं धरां धर्मं कीर्तिमायुर्यशः श्रियं तुरंगान्ददति नः पुत्रान्म-
हालक्ष्मीः प्रयच्छ मे मंत्रेणानेन बध्नीयाड्डोरकं दक्षिणे करे कांडानि षोडशादाय दूर्वायाश्च
त्तनानि च एकचित्तः कथां श्रुत्वा पूजयेत्तं डोरकं ततस्तु ज्ञातरारभ्य यावत्स्यादसिताष्टमी
नावत्स्नात्वाल्पहस्तैस्तु पादादीनि कथां तथा शृणुयात्त्वन्यहं देवैतत्संख्यैरक्षतादिभिः अ

पक्षस्याष्टमीं प्राप्य नक्तकाले जितेंद्रियः स्नातः शुक्लांबरधरो व्रती पूजागृहं विशेत् तत्रोपवि·
श्य पूर्वास्य आरुह्यासनोपरि श्वेतपट्टे लिखेदष्टदलं कमलमुत्तमं ऐंद्र्यादिशक्तिसंयुक्तं पा·
शुपत्रे सकेसरं कर्णिकायां ततो लक्ष्मीं कर्पूरक्षोदपांडुरां शुभ्रवस्त्रपरीधानां मुक्ताभरणभूषि
तां पंकजासनसंस्थां तां स्मेराननसरोरुहां शारदेंदुकलाकांतिं स्निग्धनेत्रां चतुर्भुजां पद्मयु
ग्मां भयदां वरव्यग्रकरांबुजां अभितो गजयुग्मेन सिच्यमानां करांबुना संचिंत्य विलिखेद्देवीं क
र्पूरागुरुचंदनैः ततस्त्वावाहनं कुर्यान्मंत्रेणानेन सव्रती महालक्ष्मि समागच्छ पद्मनाभपदा
दिह पंचोपचारपूजेयं त्वदर्थं देवि सर्वदा आवाहनं १ आलयस्त्वेह कलितं कमले कमलालये
कमले कमले लक्ष्मि स्थितिं त्वं कृपया कुरु स्थापनं २ गंगादिसलिलाधारं तीर्थमंत्राभिमं
त्रितं दूरयात्राश्रमहरं पाद्यं मे प्रतिगृह्यतां पाद्यं ३ स्नानं तव महालक्ष्मि कर्पूरागुरुवासितं
सुतीर्थेभ्यः समानीतं स्नानं तत्प्रतिगृह्यतां स्नानं ४ मलयाचलसंभूतं नानापन्नगरक्षितं शी
तलं बहुलामोदं चंदनं प्रतिगृह्यतां चंदनं ५ मिलत्परिमलामोदमत्तालिकुलसंकुलं आनं
दिनंदनोद्यानपद्मायै कुसुमं नमः पुष्पं ६ अथांगपूजा चपलायै नमः पादौ पूजयामि चं
चलायै जानुनी पूजयामि कमलवासिन्यै· कटिं पू· शांत्यै· नाभिं पू· मन्मथवासिन्यै· स्तनौ पूज·
ललितायै· भुजद्वयं पू· उत्कंठिन्यै· कंठं पू· मायायै· मुखं पू· श्रियै· शिरसि पू· पद्मायै नमः
सर्वांगं पूजयामि गंधसंभारसंबद्धं पूतं वस्तुसमुद्भवं सुरासुरनरानंदि धूपं देवि गृहाण मे धू
पं ७ श्रियं प्रजावतीं लक्ष्मीं वरदां विष्णुवल्लभां हिरण्यरूपां सुवर्णमालिनीं पद्मवासिनीं पद्म
प्रियां मुक्तालंकारां सूर्यां चंद्रां बिल्वमूर्तिं विश्वभूतिं ऋद्धिं समृद्धिं तुष्टिं पुष्टिं धनेश्वरीं श्रद्धां भो
गिनीं भोगदात्रीं धात्रीमिति मार्तंडमंडलाखंडचंद्रबिंबाग्नितेजसां निधानं देवि दीपोऽयं निर्मि
तस्तव भक्तितः दीपः ८ देवतालयपातालभूतलाधारयात्मजं षोडशाकारसंभारं नैवेद्यं ते·
श्रियै नमः नैवेद्यं ९ स्नानादिकं विधायापि यतः शुद्धिरवाप्यते तदेतदाचमनीयं महालक्ष्मि
विधीयतां आचमनं १० पातालतलसंभूतं वदनांभोजभूषणं नानागुणसमाकीर्णं तांबू
लं देवि ते नमः तांबूलं ११ तंतुसंतानसंबद्धं कलाकौशलनिर्मितं सर्वांगाभरणं श्रेष्ठं व
सनं परिधीयतां वस्त्रं १२ विष्णोर्वक्षसि पद्मे च शंखे चक्रे तथांबरे लक्ष्मि देवि यथासि त्वं स
थि देवि तथा भव प्रार्थना उत्तार्य डोरकं बाह्वोर्लक्ष्मीपार्श्वे निधापयेत् लक्ष्मि देवि गृहाण त्वं
डोरकं यन्मया धृतं कथां श्रुत्वा सुवर्णं वा दत्वाचार्याय दक्षिणां एवं निर्वर्त्य विधिवत्पूजनं वृ
कश्रियः हे वटुकेति संबोधनं चात्र वर्ण्यापि देवाय यथाशक्त्यान्नदक्षिणां दीपान्षोडश पिष्टि
मुगोधूमस्य द्विजातये दत्वा तत्सार्द्धयामभुक्ता रात्रौ जागरणं चरेत् चंद्रोदये च संजाते दद्याद
र्घ्यं ततो व्रती मंत्रेणानेन विप्रेंद्र शंखेनांबुफलादिना नमोऽस्तु ते निशानाथ लक्ष्मीभ्रातर्नमोऽस्तु
ते संपूर्णं तद्व्रतं यातु गृहाणार्घ्यं विधो नमः इति चंद्रायार्घ्यदानं प्रातर्विसर्जयेद्देवीं मंत्रेणा
नेन सुव्रती पंकजे देवि संत्यज्य मम वेश्मनि संविश मातः सपुत्रभृत्योऽहं सुखी स्यां तव प्र
सादतः इति विसर्जनं षोडशाब्दे तु संपूर्णे कुर्यादुद्यापनं व्रती विधिना येन विप्रेंद्र श्रूयतां श्र
द्धासमन्वितः दातव्या धेनुरेका वै स्वर्णशृंगादिसंयुता आचार्याय सुवर्णं च प्रदद्याद्वसना
दिकं सार्थ उवाच एतत्ते कथितं विप्र व्रतानामुत्तमं व्रतं यद्विधानादनायासाल्लभते वांछि
तं फलं कृत्वा व्रतवरं विप्र राजानंतश्चकार य व्रतमेतत्त्वया विप्र देयं श्रद्धावते परं नास्तिका
नां पुरस्तात्तु न प्रकाश्यं कथंचन [illegible] पापिने [illegible] वाजिनं सर्पीणां भस्म

मादाय पद्मिनीपत्रसन्निभं आरुह्य तुरगं विप्रो राजान्तिकमुपागमत् नानाप्रकारसंभारश्चाव
लाबुदकस्य च व्रतप्रभावादभवन् बुभुजे भूभृतां वरः अथाहूय महीपालो बटुमर्घ्याणि तद्गृ
ये तद्व्रतस्य प्रभावेण तूर्णं स्वपुरमागतः तमालोक्य समालोक्य राजानं भूपुरंदरं उत्सवं च
क्रिरे पौरास्तौर्यत्रिकपुरःसराः चलत्पताकाधामानं राजकलशमौक्तिकं पुरन्ध्यदि
वाभाति छत्रदंडोचितैः करैः अथोत्सुकतया द्वाराद्वा वतिस्म वरांगना स्खलन्मुक्ताल
ताजालेष्मृतवक्षमिव कुर्वती काचिद्विमुक्तकेशेव वक्त्रैकनयनांजना काचिन्नितंबभारा
र्ता काचित्पीनपयोधरा अथाविशन्महीपालो बटुना सहितो गृहं पौरनारीजनाक्षिमाला
जैः पूरितविग्रहः अथोत्तीर्य हयात्तस्माद्बटुहस्तावलंबितः जगाम मंगलाख्यातो चोलदे
वीतु यत्र वै दृष्ट्वा तु चोलदेवी सा डोरकं वलिवाहुके विस्मयमनसा क्रुद्धा शंकां चक्रे न्व
पेतिमां आखेटकस्य व्याजेन गतोन्यां वल्लभां प्रति सौभाग्यदायनया वद्धो डोरको दक्षि
णो भुजे तथैव वटुकश्चायं मां द्रष्टुं प्रेषितो ध्रुवं ततो दृष्टैव दुष्टात्मा कोपादाच्छिद्य डोरकं
चिक्षेप च महीपृष्ठे स्वसौभाग्यमदेन ह नवबोधयत्तं राजा शोदयंती च डोरकं सामंतमंत्रिभृत्या
द्यैः कुर्वन्वार्तां वनोद्भवां तद्व्रतस्य विधानार्थं स्वस्वामिन्यै निवेदितं ततो नूतनमादाय चिल्लदेव्या
करोद्व्रतं अथ संवत्सरेऽतीते लक्ष्मीपूजादिने नृपः तौर्यत्रिकस्य निस्वानं चिल्लदेव्या गृहेऽशृणोत्
तदाकर्ण्य महीपालो नूतनं बटुमब्रवीत् बटोऽस्य यदिने लक्ष्म्याः स च तस्य कडोरकः बटोऽ
घविधाः स्वामि महालक्ष्मीव्रतं शुभं इति पृष्टो नृपं प्राह डोरकस्त्रोटितो यथा तच्छ्रुत्वा मंगलो
राजा चोलदेव्यै प्रकुप्य च मया श्वः पूजने कार्यं चिल्लदेवीगृहं प्रति अथ मंगलभूपालो बटुना
हस्तलंबितः चनालकमलार्चायै चिल्लदेवीगृहं प्रति अत्रांतरे महालक्ष्मीर्वृद्धारूपं विधाय च जि
तो सार्थं गृहं तस्याश्चोलदेव्याः समागता गच्छ गच्छाद्य दुष्टे किमिहागत्य करोषि मे तया दुराशु
यात्पर्थं लक्ष्मीः साप्यवमानिता ततः क्रुद्धा महालक्ष्मीश्चोलदेवीमभाषत शशापाद्य महाल
क्ष्मीश्चोलदेवीं पुनः पुनः कोला स्याभवदुष्टे त्वं ययाहमवमानिता चोलदेवी तच्छापात्कोला·
स्या साभवत्तदा कोलापुरमिति ख्यातं तत्स्थितेन तन्मंगलपुरं अथायाता महालक्ष्मीश्चिल्लदेवीनिके
तनं बहुधा चिल्लदेव्या सा लक्ष्मीस्सम्मानितार्चिता वृद्धारूपं परित्यज्य प्रत्यक्षा साभवत्तदा पंचो·
पचारपूजाभिः श्रियं राज्ञी ततोऽर्चयत् अतितुष्टा तदा लक्ष्मीश्चिल्लदेवीमुवाच ह श्रीरुवाच अर्च
नात्ते प्रसन्नास्मि चिल्लदेवि वरं वृणु वव्रे वरं ततो राज्ञी चिल्लदेवी शुभाशया चिल्लदेव्युवाच ये
करिष्यन्ति ते देवि व्रतमेतत्सुरेश्वरि तद्गेहमनत्वया त्याज्यं यावच्चंद्रदिवाकरौ अथारभ्य कथाले
खाभूपसंबंधिनी त्वया ख्यातिं यातु त्वितो देवि भक्तिर्भवतु मे त्वयि सद्भावेन कथामेतां ये श्रो
ष्यंति पठंति च तेषां तु वांछितं सर्वं त्वया सह स देवदि तथेत्युक्त्वा महालक्ष्मीस्तत्रैवांतरधीयत
अथ मंगलभूपालस्तत्रागत्य श्रियोर्चनं चक्रे परमया भक्त्या चिल्लदेव्या समन्वितः अथैषा·
पाडुराचारा चिल्लदेव्या गृहं प्रति चोलदेवी समायाता द्वारस्थैर्वारिता जनैः ततो जगाम विपि
नं यत्रासीदंगिरा मुनिः अथालोक्याद्भुताकारां तत्रानष्टश्रीविचिंत्यतां समुनिः श्रीव्रतादि
कं चोलदेवीमकारयत् कृतव्रता च संजाता चोलदेवी महायशा दास्तिपकेलिलीलादिला
वण्यकनिकेतनं ततः कदाचिदागत्य वनमाखेटके नृपः मुनेर्वैश्रमनि राजा तां ददर्श वा
मलोचनां अथ राजा मुनिं प्राह केयं धन्येति कथ्यतां तद्वृत्तांतं समाख्याय राज्ञे तां प्रददौ मु
निः अथागत्य निजं राज्यं चोलदेवीसमन्वितः चिल्लदेव्या च सहितो बुभुजे मंगलो नृपः वि

ल्लदेवीवरं वव्रे बोलदेवी समागमे समुद्रस्य यथा गंगा यमुने संगते सदा तथा मंगलभूपस्य
संजाते वामलोचने परस्पराधिके तेन प्रिये रक्तो बभूव तः चिल्लदेव्याः समं सोथ बोलदेव्या म-
हाखिला सप्तद्वीपवतीं पृथ्वीं बुभुजे मंगलो नृपः व्रतस्यास्यैव सामर्थ्याद्दुदुकः सोपि नूतनः
अभून्मंगलभूपस्य मंत्री तव यथा गुरुः भुक्त्वाथ सकलान्भोगान्मंगलो भूभुजां वरः स पुनः
स्वर्गमेत्याभून्नक्षत्रे विल्लदैवते नारद उवाच एतन्मे कथितं शक्र व्रतानामुत्तमं व्रतं यत्कथा
श्रवणेनापि लभते वांछितं फलं प्रयागमिव तीर्थेषु देवेषु भगवानिव नदीषु च यथा गंगा
व्रतेषु च यथा व्रतं धर्मं चार्थं च कामं च मोक्षं च यदि वांछसि तदेतद्व्रतं शक्र कुरुष्व श्रद्धासम-
न्वितः श्रीकृष्ण उवाच व्रतमिदमथ शक्रे नारदेनोपदिष्टं सुरपतिरपि यस्माद्वांछितार्थं स लेभे
त्वमपि कुरु तथैतद्धर्मसूनो यथा स्यादभिमतफलसिद्धिः पुत्रपौत्रादिवृद्धिः धनं धान्यं धरां धर्मं
कीर्तिमायुर्यशः श्रियं तुरगान्दंतिनः पुत्रान्महालक्ष्मीः प्रयच्छति ॥

इति भविष्योक्तं महालक्ष्मीव्रतं ॥ ❀ ॥

अस्योद्यापनं व्रतोद्यापनकौस्तुभात् पूर्वोक्तविधिना षोडशवर्षपर्यंतं व्रतं विधायोद्यापनं कार्यमिति
ध्यादि संकीर्त्य ममेनोऽखिलपापक्षयपूर्वसकलदुःखदौर्भाग्यनिरशनधनधान्यैश्वर्यपुत्रपौ-
त्रादिवृद्धिद्वारा श्रीमहालक्ष्मीप्रीत्यर्थमाचरितमहालक्ष्मीव्रतोद्यापनं करिष्ये आचार्यं वृ-
त्वा सर्वतोभद्रपूजान्वितं पूजनं विधाय रात्रौ जागरणं च कृत्वा प्रातरग्निं प्रतिष्ठाप्य अन्वाधाय
न् प्रधानं महालक्ष्मीं श्रीसूक्तेन प्रत्यृचं कमलैः पुनर्घृताक्तपायससहितबिल्वादिद्रव्येण
प्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिर्लक्ष्मीमंत्रेण यक्ष्ये मंडलदेवताः आज्येन एकैकयाहु-
त्या वह्निहोमं कृत्वा आचार्यं संपूज्य पीठं गां शय्यादिकं च दत्वा षोडशमिथुनानि वस्त्रादिभिः
संपूज्य सूर्पं षोडशनानाविधभक्ष्याणि चंदनमालहृततंडुलपत्रपूगपूर्णफलानि च यंत्रि-
तान्यस्रपेणाच्छाद्य दद्यात् क्षीरोदार्णवेत्यादिमंत्रेण वायनं दत्वा ब्राह्मणांस्तर्प्याशिषो
गृहीत्वा भुंजीतेति संक्षेपः अथ महालक्ष्मीव्रतस्यागमपुराणोक्तव्रतविधिः तत्रादौ भा-
द्रशुक्लाष्टम्यां प्रातरुत्थाय प्रातः षोडशकृत्वांजलीकरो मुखं च प्रक्षाल्य स्नानादिकं विधाय
संकल्पं कृत्वा पूजनं कुर्यात् महालक्ष्म्याश्चंदनादिना प्रतिमां विधाय तदग्रे तंतुषोड-
शकं सितं षोडशग्रंथिसंयुतं सूत्रं लक्ष्म्येन मइति मंत्रेण प्रतिग्रंथ्यभिमंत्रितं संस्थाप्य ल-
क्ष्मीपूजनं डोरकपूजनं च कृत्वा हस्ते डोरकबंधनं कुर्यात् तत्र मंत्रः धनं धान्यं धरां हर्म्यं
कीर्तिमायुर्यशः स्त्रियं तुरगान्दंतिनः पुत्रान्महालक्ष्मि प्रयच्छ मे मंत्रेणानेन बध्वा डोरं
दक्षिणे करे कांडानि षोडशादाय दूर्वाया अक्षतानि च एकचित्तः कथां श्रुत्वा पूजये-
त्तद्दोरकं ततस्तत्प्रभृत्यारभ्य यावत्स्यादसिताष्टमी तावत्प्रक्षाल्यत हस्तपादादीनि कथं-
चन तथा शृणुयात्स्वपेत् तावन्न तैलाभ्यंगनादिमिति अथ लक्ष्मीपूजनविधिः तत्राष्टद-
लं विधाय षोडशोपचारैर्लक्ष्मीं पूजयेत् तदुक्तं सारसंग्रहे आवाहनं चासनं स्यादर्घ्यं
पाद्याचमनीयं च मधुपर्काभिषेकौ च वस्त्रालंकारचंदनं पुष्पं धूपं दीपं भोज्यं प्रोक्षासनं
नमश्चापि च एतानि मंत्रविकल्पाः कृत्यं च दशकेन हि अथ प्रयोगः प्रणवेन श्रीबीजेन
वाग्भवेन ह्वामंत्रयं कृत्वा ऋष्यादिस्मरणपूर्वकं संगन्यासं कुर्यात् आनंदकर्दमचिक्लीत-
नयस्तेभ्यो ऋषिभ्यो नमो मूर्ध्नि अनुष्टुप्बृहतीत्रिष्टुप्प्रस्तारपंक्तिछंदोभ्यो नमो हृदि
श्रीविभावसुदेवताभ्यो नमः इति विन्यस्य विनियोगमुक्त्वा हिरण्मया-

येनमोहृदयायनमः चंद्रायैनमःशिरसेस्वाहा रजतस्रजायैनमःशिखायैवषट् सुव
र्णस्रजायैनमःकवचायहुं हिरण्यस्रजायैनमःनेत्राभ्यांवौषट् हिरण्यवर्णायैनमःअस्त्राय
फट् इतिषडंगमंत्रान्हृदयादिपदस्थाने अंगुष्ठादिपदेष्वंगुष्ठादिकरतलांतंकरयोर्न्यास्य
तान् हृदयादिषडंगेषुविन्यस्य हिरण्यवर्णामितिपंचदशभिर्न्यासान्कुर्यात् शिरसिहिर
ण्यवर्णामित्यादि १ नेत्रयोःतांमआवहइति २ कर्णयोः अश्वपूर्वामिति ३ नासायांकां
सोस्मितामिति ४ मुखेमनसइति ५ कर्दमेनेति ६ ऊर्वोःआपःसृजंत्विति ७ जान्वोःआ
र्द्रांसूर्यामिति ८ जंघयोःआर्द्रांचंद्रामिति ९ पादयोः तांमइति एवमेताःप्रणवादिनमोंता
विन्यस्य सरसिजनिलयेइतिध्यात्वा मानसपूजांतेचतुर्द्वारंचतुरस्रत्रयावृतं अष्टदलंक
मलंपूजाचक्रंस्वपुरतोनिधायार्घ्यपात्रस्थापनादिपीठार्चनांतेपीठशक्तीःपूजयेत् ॐविभू
त्यैनमः कांत्यै सृष्ट्यै कीर्त्यै संनत्यै तुष्ट्यै पुष्ट्यै मध्ये अर्थ्यैनमः ततःप्रतिमादौदे
व्यावाहनार्घादि अथवायोगपीठन्यासंकृत्वा मूलमंत्रन्यासंकुर्यात् अस्यातियायामभृगुरृ
षिस्त्रिष्टुप्छंदः श्रीर्देवतान्यासेविनियोगः भृगवेऋषयेनमःशिरसि त्रिष्टुप्छंदसेनमःमुखे
श्रीदेवतायैनमोहृदये श्रींबीजायनमोगुह्ये ह्रींशक्तयेनमःपादयोः रंकीलकायनमोनाभौ
श्रांअंगुष्ठाभ्यांनमः श्रींतर्जनीभ्यांनमः श्रूंमध्यमाभ्यांनमः श्रैंअनामिकाभ्यांनमः श्रौंक
निष्ठिकाभ्यांनमः श्रःकरतलकरपृष्ठाभ्यांनमः श्रांहृदयायनमः श्रींशिरसेस्वाहा श्रूंशि
खायैवषट् श्रैंकवचायहुं श्रौंनेत्रत्रयायवौषट् श्रःअस्त्रायफट् मूलेनव्यापकंकुर्यात् ध्या
ने कांत्याकांचनसन्निभांहिमगिरिप्रख्यैश्चतुर्भिर्गजैर्हस्तोत्क्षिप्तहिरण्मयामृतघटैरासि
च्यमानांश्रियं बिभ्राणांवरमब्जयुग्ममभयंहस्तैःकिरीटोज्ज्वलां क्षौमाबद्धनितंबबिंबल
लितांवंदेरविंदस्थिताम् इतिध्यात्वामनसासंपूज्य मूलमंत्रंजपित्वा गुह्येतिमंत्रेणसमर्प्य
अर्घ्यस्थापनादिकृत्वा बाह्यपूजामारभेत् तत्रतांत्रिकंवैदिकंवाध्यानंकृत्वा प्रतिमादिप्राण
प्रतिष्ठावाहनादिकंकुर्यात् तद्यथा हिरण्यवर्णांहरिणींसुवर्णरजतस्रजां चंद्रांहिरण्मयीं
लक्ष्मीजातवेदोममावह १ महालक्ष्मिसमागच्छ पद्मनाभपदादिह यथोपचारपूजेयंतव
दत्तंदेविनिर्मितेति मूलेनावाहनंकुर्यात् तवायंमहिमेति आलयस्तेहिकथितइतिमूले
नस्थापनंसर्वांतर्यामिनीत्यासनं अस्मिन्वरासनेइतिप्रतिष्ठापनं अनन्यातवेतिसन्नि रोध
नं अज्ञानाद्दुर्मदत्वादितिसंमुखीकरणं इष्टापीपूरयेतिस्थिरीकरणं अभक्त्यावाज्ञानतइ
ति अवगुंठनंततःषडंगेनसकलीकरणं येनमुद्रयाअमृतीकरणं महामुद्रयापरमीक
रणं ततःप्राणप्रतिष्ठांकृत्वाआसनंदद्यात् तांमआवह श्रीलक्ष्म्यैनमःइदमासनं अथ
अर्घ्यः तापत्रयहरमिति अश्वपूर्वांरथमध्यांहस्तिनादप्रमोदिनीं श्रियंदेवीमुपह्वयेश्रीर्मा
देवीजुषतां श्रीरेषतेअर्घ्यःस्वाहा ततःपाद्यं यद्भक्तिलेशेतिकांसोस्मितांहिरण्यप्राकारामा
र्द्रांज्वलंतींतृप्तांतर्पयंतींपद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियं श्रीरेतत्तेपाद्यं अथाचमनी
यं वेदानामपीति चंद्रांप्रभासांयशसाज्वलंतीं श्रियंलोकेदेवजुष्टामुदारां तांपद्मिनीमीं
शरणमहंप्रपद्ये अलक्ष्मीर्मेनश्यतांत्वांवृणोमि मूलेनश्रीरेतत्तेआचमनीयं अथमधुपर्कः
सर्वकालुष्यहीनेतिपठित्वा आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः तस्यफ
लानि तपसानुदंतुमायाअंतरायाश्चबाह्याअलक्ष्मीः श्रीरेषतेमधुपर्कः स्वधा ततःपुनराचम
नीयंस्वधा स्नानं परमानंदबोधाब्धिपइति उपैतुमांदेवसखःकीर्तिश्चमणिनासह प्रादुर्भू।

तोऽस्मि राष्ट्रेऽस्मिन्कीर्त्तिमृद्धिं ददातु मे श्रीरिति ते स्नानं नमः ततः पुनराचमनीयं ततो वस्त्रं मया
विद्वेति यमाश्रित्येति तत्तु संतानमिति च क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहं अभूतिम
समृद्धिं च सर्वान्निर्णुद मे गृहात् श्रीरिति ते वाससे नमः ततो भूषणानि स्वभावसुंदरेति गंधद्वा-
रां दुराधर्षां नित्यपुष्टां करीषिणीं ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियं श्रीरिति ते भूषणं नमः
ततश्चंदनं मनसः काममाकूतिं वाचः सत्यमशीमहि पशूनां रूपमन्नस्य मयि श्रीः श्रयतां य-
शः मलयाचलसंभूतं नानापन्नगसेवितं शीतलं बहुलामोदं चंदनं प्रतिगृह्यतां श्रीरिति ते गंधः
नमोऽक्षताः अक्षताश्च सुरश्रेष्ठे कुंकुमाक्ताः सुशोभनाः गृहाण देवदेवेशि मया दत्तानि भक्तितः
श्रीरिति ते अक्षताः ततः पुष्पाणि नानापरिमलामोदमुक्तालिकुलसंकुलं आनंदिनंदनोद्यानं य-
मापैकुसुमं नमः कर्दमेन प्रजा भूता मयि संभ्रम कर्दम श्रियं वासय मे कुले मातरं पद्ममालि-
नीं श्रीरितानि ते पुष्पाणि वौषट् ततः पंचपुष्पांजलीर्दत्वा पंचावरणपूजां कुर्यात् कर्णिकायां
षडंगानि पूज्यांतः अष्टदले दिग्दलेषु वासुदेवाय नमः संकर्षणाय नमः प्रद्युम्नाय नमः अनि-
रुद्धाय नमः हिमर्पानतमालेरनीलाभान्पीतवाससः शंखचक्रगदापद्मधारिणश्चतुर्भुजान्पूजये-
त् ततो विदिग्दलेषु सनकाय सलिलाय गुग्गुलवे कुरंटकाय इति संपूज्य देव्या दक्षिणे शंख-
निधये वसुधारासहिताय देव्या वामे वसुमतीसहिताय पद्मनिधये तथा च यजेच्छंखनिधिं देव्या
दक्षिणे दयितान्वितं मुक्तामाणिक्यसंकाशौ किंचित्स्मितमुखांबुजौ अन्योन्यालिंगनपरौ शंख-
पंकजधारिणौ वामेऽस्याः पंकजनिधिं प्रियया सहितं यजेत् सिंदूराभौ भुजाश्लिष्टौ रक्तपद्मदला-
क्षितौ निःसरद्रत्नवर्षाभ्यां पद्माभ्यां मूर्ध्नि लांछितौ सुदले पंकजनिभां नत्वा वसुमतीमिति इ-
ति संपूज्य अभीष्टेति संप्रार्थ्य हस्तौ प्रक्षाल्य तृतीयावरणपूजां कुर्यात् बलाकायै नमः विमलायै
नमः कमलायै नमः वनमालिकायै नमः विभीषणायै नमः मालिकायै नमः शांकर्यै नमः व-
सुमालिकायै नमः पंकजधारिण्यै नमः मुक्ताहारसमप्रभाः एताः संपूज्य मूलेन स्वहृदे वं संपूज्य
मूलेन पुष्पांजलिं दत्वा इंद्रादिपूजनं वज्रादिपूजनं कृत्वा पुष्पांजलिं दद्यात् गंधसंभारसन्नद्धं ए-
षुवस्त्रसमुद्भवं सुरासुरनरानंदि धूपोऽयं प्रतिगृह्यतां आपः सृजंतु स्निग्धानि चिक्लीत वस मे गृहे
नि जां देवीं मातरं श्रियं वासय मे कुले लक्ष्म्यै नमः धूपं समर्पयामीति धूपः मार्त्तंडमंडलाखंड
चंद्रबिंबाग्नितेजसां निधानं देवि दीपोऽयं निर्मितस्तव भक्तितः आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेम-
मालिनीं सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममावह इति दीपः देवतालयपातालभूतलाधारधा-
न्यजं षोडशाकारसंभारं नैवेद्यं ते श्रिये नमः आर्द्रां यष्करिणीं यष्टिं पिंगलां पद्ममालिनीं चंद्रां हि-
रण्मयीं लक्ष्मीं जातवेदो ममावह इति नैवेद्यं स्नानादिकं विधायाथ यतः सुखिरवाप्यते एतदाचमनी-
यं मे महालक्ष्मि विधीयतां इत्युत्तरापोशानं इदं फलमिति फलं पातालतलसंभूतं वदनांभो-
जभूषणं नानागुणसमाकीर्णं तांबूलं देवि ते नमः इति तांबूलं हिरण्यगर्भमिति दक्षिणा श्रि-
यं जात इति नीराजनं यानि कानि च इत्येकप्रदक्षिणा ततो नमस्कारः ततः श्रीसूक्तं पठित्वा प्रार्थ-
नां कुर्यात् एवं प्रत्यहं पूजनं विधाय समाप्तिदिने कृष्णाष्टम्यां महापूजां कुर्यात् अथ कृष्णा-
ष्टमीपूजाप्रयोगः नक्तं स्नानं विधाय शुक्लांबरधरः पूजागृहं गत्वा आसनोपरि पूर्वमु-
ख उपविश्य श्वेतवस्त्रेऽष्टदलं विलिख्य तत्कर्णिकायां गजकुंभकुंभस्थसलिलसिच्यमा-
नां लक्ष्मीं संलिख्य पुष्पांजलिदानांतमुक्तपूजनं कृत्वा विष्णोर्वक्षसि या पद्मे शंखचक्रांत-
यां वरे लक्ष्मीर्निमायपामि कंसमाधिनिमातत्वभवेति संप्रार्थ्य उक्तार्घ्यं डोरकं बाहौ लक्ष्मी

पार्श्वे निवेदयेत् लक्ष्मि देवि गृहाणेदं त्वन्मया डोरकं धृतं व्रतं संपूर्णतां यातु कृपा कार्या मयि
त्वयेति ततो वायनकदानं षोडशपिंडान्षोडशदीपांश्च दद्यात् तत्र मंत्रः इंदिरा प्रतिगृह्णाति इं
दिरा वै ददाति च इंदिरा तारकोभाभ्यामिंदिरायै नमो नम इति मूलेनार्घ्यं दत्वा ततस्त्वेवानू गोधू
मचूर्णदीपान् पिंडांश्च दत्वा रात्रौ जागरणं कृत्वा चंद्रोदये फलादियुक्तेन शंखेनार्घ्यं दद्यात् न
मोस्तु ते निशानाथ लक्ष्मीभ्रातर्नमोस्तु ते व्रतं संपूर्णतां यातु गृहाणार्घ्यं त्वमोत्तम ततो नमस्का
रं कृत्वा जानुभ्यामवनीं गत्वा प्रार्थयेत् क्षीरोदार्णवसंभूते कमले कमलालये प्रयच्छ कामान्मे
सर्वान्विष्णोर्वक्षस्थलालये पुत्रान्देहि यशो देहि सौख्यं सौभाग्यमेव च कालि कालि महाकालि
विकरालि नमोस्तु ते त्रैलोक्यजननि त्राहि वरदे भक्तवत्सले एकनाथे जगन्नाथे जमदग्निप्रि
ये व्यये रेणुके त्राहि मां देवि रामामातः शिवं कुरु वैदेहि त्राहि मां सीते प्रसीद पुरुषोत्तमे कपाल
कर्त्रिकाशूलडमरुव्यग्रहस्तके प्रियं कुरु महालक्ष्मि ग्रहपीडां विनाशयेति वंदारुवीरसुरवृंद
किरीटकोटीरोचिष्टुटाग्रपरिकल्पितरत्नदीपं देवि त्वदीयचरणं शरणं जनानां सेवामहे सक
लमंगलवर्द्धनाय उत्फुल्लकैरवदलायतलोचनायै गंडोल्लसत्कुटिलकुंडलमंडितायै एकाश
शिप्रतिमदाननकोमलायै तस्यै नमः कमललोचनवल्लभायै सन्नम्रकल्पलतिकां हरिकंठभू
षांकेयूरहेमकटकोज्वलकंकणांको संसारसागरसुखे पततो ममाद्य देहि त्वदीयकरयष्टिम·
नेरामातः दृष्ट्वा देवि जनाय यापि विविधावलाधिपत्यंगता विष्णोर्वक्षसि याच कातरलाली·
लाञ्जमालाभ्रमं क्लेशान्निग्रहितं त्वदीयचरणद्वंद्वाब्जसेवारतं कारुण्यामृतसारपूरितदृशा
नामसद्यपद्मेश्वरि मल्लीविफुल्लकुसुमोज्वलमध्यभागायमिलभारजिततारकचित्रनाम्रा उत्त
प्तहेमनिकषोज्वलकायकांतिर्लक्ष्मीः स्वयं प्रणमतां श्रियमातनोतु इति महालक्ष्मीस्तवा प्रा
र्थ्य विसर्जयेत् विसर्जनमंत्रस्तु तां म आवह जातवेदो लक्ष्मीमनपगामिनीं यस्यां हिरण्यं प्रभू
तं गावो दास्योश्वान्विंदेयं पुरुषानहं पंकजे देवि संत्यज्य मम वेश्मनि संविश यथा सपुत्रभृ
त्योहं सुखी स्यां त्वत्प्रसादतः इति देवीविसर्जनं याश्रीः पद्मासनस्था विमलकटितटी पद्मपत्रा
यताक्षी गंभीरावर्तनाभिस्तनभरनमिता शुभ्रवस्त्रोत्तरीया लक्ष्मीर्दिव्यैर्गजेंद्रैर्मदजलसलि·
लैः स्नापिता हेमकुंभैर्नित्यं सा पद्महस्ता मम वसतु गृहे दिव्यमांगल्ययुक्ता ॥ अथ नारदी
यपुराणोक्तं महालक्ष्मीव्रतं अथैनां तु समारभ्य व्रतं षोडशवासरं महालक्ष्म्याः समुद्दिष्टं सर्व
संपद्विवर्द्धनं करिष्येहं महालक्ष्मि व्रतं ते त्वत्परायणः तदविघ्नेन मे यातु समाप्तिं त्वत्प्रसादत
इत्युच्चार्य ततो वह्नौ डोरकं दक्षिणे करे षोडशग्रंथिसहितं गुणैः षोडशभिर्युतं ततोन्वहं महा
लक्ष्मीं गंधाद्यैरर्चयेद्व्रती यावत्कृष्णाष्टमी तत्र चरेदुद्यापनं सुधीः वस्त्रमंडपिकां कृत्वा सर्वतोभ
द्रमंडले कलशं संप्रतिष्ठाप्य दीपं प्रज्वालयेत्ततः ऊर्णाख्यं डोरकं वा हैमं कुंभस्याग्रे निवेदयेत्
चतस्रः प्रतिमाः कृत्वा सौवर्णीस्तत्स्वरूपिणीः स्नपनं कारयेत्तासां जलैः पंचामृतैस्तथा उपचा
रैः षोडशभिः पूजयित्वा विधानतः जागरस्तत्र कर्तव्यो गीतवादित्रनिःस्वनैः ततो निशीथे संप्रा
सभ्युदितेमृतदीधितौ कृत्वार्घ्यं चंदनैर्द्रव्यैः श्रीखंडाद्यैर्विधानतः चंद्रमंडलसंस्थायै महाल·
क्ष्म्यै प्रदापयेत् क्षीरोदार्णवसंभूते कमले कमलालये विष्णुवक्षःस्थलस्थे मे सर्वकामप्रदा भ
व एकनाथे जगन्नाथे जमदग्निप्रिये व्यये रेणुके त्राहि मां देवि रामामातः शिवं कुरु मंत्रैरेभिर्म
हालक्ष्मीं प्रार्थ्य श्रोत्रियोषितः सम्यक्संपूज्य सगोधवासोयावककजलैः संभोज्य जुहुयाद·
शो विल्वपत्रकपायसे तदलाभे हुतं विप्रगृहेभ्यः समिधस्तिलान् मन्त्रेण जयाय च पुरं सर्वरोगप्र

शानये चंदनं तालपत्रं च पुष्पमालां तथा तनान् दूर्वाकौसुंभसूत्रं च पूगं श्रीफलमेव च भक्ष्या
णि च नवैस्सूर्पैः प्रतिद्रव्यं तु षोडश समाच्छाद्यान्यसूर्पेण अर्चनीद्यान्मंत्रकं क्षीरोदार्णवसंभूता
लक्ष्मीश्चंद्रसहोदरा व्रतेनानेन संतुष्टा भवताद्विष्णुवल्लभा चतस्रः प्रतिमास्तास्तु श्रोत्रियेभ्यः स
मर्पयेत् ततस्तु चतुरो विप्रान्षोडशाथ सुवासिनीः मिष्टान्नं प्राशयित्वा तु विसृजेत्तान्सदक्षिणा
न् समाप्तनियमः पश्चाद्भुंजीतेष्टैः समन्वितः भुंक्त्वेष्टान्नैहिकान्कामान् लक्ष्मीलोके वसेच्चिरं प
वाशोकाष्टमीचोक्ता यस्यां पूर्णं रमाव्रतं अत्राशोकस्य पूजा स्यादेकभक्तं तथा स्मृतं कृत्वाशोकव्रतं ना
रीस शोका जन्मजन्मनि यत्र क्वापि संजाता नात्र कार्या विचारणेति इति अशोकाष्टमीव्रतं सर्वा
स्वष्टमीषु प्रोक्तमप्याश्विनकृष्णाष्टम्यामेव कार्यं तदुक्तं हेमाद्रावादित्यपुराणे अष्टमीषु च सर्वा
सु पूजनीया त्वशोकिका गंधमाल्यनमस्कारधूपदीपान्नसंपदा तस्मिन्नहनि या भुंक्ते नक्तं पिंडवि
वर्जितं भवत्यथ विशोका सा यत्र यत्राभिजायते अष्टमीषु च सर्वासु न चेच्छक्नोति वै सुने प्रोष्ठपद्याम
तीतायां या स्यात्कृष्णाष्टमी द्विज तत्र कार्यं व्रतं चैतत्सर्वकामफलप्रदं इत्यशोकाष्टमीव्रतं इयं शिवा
ष्टमीति भविष्योत्तरे कन्यागते सवितरि कृष्णपक्षेष्टमी च या सा च पुण्या पापहरा शिवस्यानंददायि
नी स्नानं दानं जपो होमः पितृदेवाभिपूजनं सर्वं प्रीतिकरं स्याच्च प्रीतेन त्रिस्त्रिलोचने आश्विनकृ
ष्णनवम्यां रथनवमीव्रतं भविष्यपुराणे कार्तिवास्वयुजे मासि कृष्णपक्षे नराधिप नवम्यामुपवासं
तु दुर्गां देवीं प्रपूजयेत् पुष्पधूपोपहारैस्तु ब्राह्मणानां च तर्पणैः पूजयित्वा रथं कृत्वा नानावस्त्रोप
शोभितं शोभितं ध्वजमालाभिश्छत्रदर्पणचामरैः कृत्वा स्वर्णमयीं दुर्गां महिषघ्नीं सुशोभितां वि
न्यस्य रथमध्ये तु पूजयेत्कांतलक्षणां नवम्यां भ्रामयित्वा तु जले दुर्गां नयेन्नृप तत्र जागरणं वस्त्रप्रदी
पापुष्पशोभितं प्रभाते स्नपनं कुर्याद्ब्रह्मणानां च पूजनं रथं शोभासमायुक्तं भगवत्यै निवेदयेत्
भुक्त्वा च बांधवैः सार्द्धं प्रणम्यार्थी गृहं व्रजेत् सर्वव्रतानां प्रवरं सर्वपापप्रणाशनं व्रतं रथनवम्याख्यं
सर्वकामार्थसाधकं सर्वयज्ञेषु यत्पुण्यं सर्वतीर्थेषु यत्फलं तत्फलं सकलं विप्रा नवमीव्रतपाल
नात् कल्पकोटिशतं साग्रं विष्णुलोके महीयते ततो भुंजे महीं सर्वां सार्वभौमो भवेदिह रत्नोपकरणै
र्युक्तां कृत्वा दारुमयीं शुभां शय्यां निवेदयेद्यस्तु भगवत्यै नराधिप उक्तलक्षणवस्त्राणां पलसंख्या
तया वती तावद्वर्षसहस्राणि दुर्गालोके महीयते वृषं स्थूलांकितं यस्तु भगवत्यै निवेदयेत् आस
प्तसंततिकुलं गृहत्वेद्यालयं व्रजेत् दत्वोभयमुखीं गां च भगवत्यै सुशोभनां ससद्वीपां धरां दत्वा य
त्फलं तदवाप्नुयात् पादद्वयं शिरो यच्च यावद्वत्सस्य निर्गतं तावद्गौः पृथिवी ज्ञेया दाता स्याच्च म
हीप्रदः इति रथनवमीव्रतं अत्र शय्यादिदानानि स्वतंत्राणीति फलश्रुतेः अथाश्विनकृष्णनव
म्यां महालयश्राद्धं स्कांदे सेतुखंडे नवम्यां यस्तिथौ मर्त्यः कुर्याच्छ्राद्धं महालये नवतिः कल्पसा
हस्रं तृप्यंति पितरो ध्रुवं संततिश्चाप्यविच्छिन्ना दद्युः पितृगणाः सदा अत्रैव नवम्यामन्वष्टकाश्राद्धं
कात्यायनः अन्वष्टकासु नवभिः पिंडैः श्राद्धमुदाहृतं पित्रादिमातृमध्यं च ततो मातामहांतकं हेमा
द्रौ गालवः केवलास्तु तु ये प्रोक्ता वृद्धावादौ प्रकीर्तिताः अन्वष्टकासु मध्यस्थानीयाः कार्यास्तु मातरः
पृथ्वीचंद्रोदये ब्रह्मांडपुराणे पितॄणां प्रथमं दद्यान्मातॄणां तदनंतरं ततो मातामहानां च अन्वष्ट
कोक्रमः स्मृतः दीपिकायामातृश्राद्धमादौ कर्तव्यमित्युक्तं निर्णयामृते मैत्रायणीयगृह्यपरिशिष्टे
अन्वष्टक्यं तु क्रमशो मातृपूर्वं तदिष्यते अत्र शाखाभेदेन व्यवस्थेति पृथ्वीचंद्रोदयः जीवत्पितृकवि
षयमिति निर्णयदीपः इदं च जीवत्पितृकेनापि कार्यं अन्वष्टक्यं गयाश्राद्धे सत्यां यत्र मृतेहनि मा
तुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति यद्यपि जीवत्पितृकस्य पंचाष्टका अवश्यकर्तव्यास्तथाप्य

शक्तस्येयमावश्यकी श्रेष्ठपयष्टका भूयः पितृलोके भविष्यतीति हेमाद्रौ पाद्मोक्तेः यत्तु इयं मातृनव
मीति कथ्यते सर्वासामेव मातॄणां श्राद्धं कन्यागते रवौ नवम्यां हि प्रदातव्यं ब्रह्मलव्यवरायत इति स्मृते
नावश्यकोक्तेश्च अत्र सर्वासामित्युक्तेः मातरि जीवन्त्यामपि सपत्नमात्रादिभ्यो दद्यात् तन्मरणे सति
तस्यै ताभ्यश्च दद्यादित्युक्तं जीवत्पितृनिर्णये सर्वैरप्याचार्यैः अत्र भर्तृमरणोत्तरं माता मृता तस्याः श्रा
द्धं न कार्यमिति केचिदाहुः पठंति श्राद्धं नवम्यां कुर्यात्तु मृते भर्तरि लुप्यत इति तदेतन्निर्मूलत्वान्मूर्ख
प्रतारणमात्रं श्राद्धदीपिकायां ब्राह्मे पितृमातृकुलोत्पन्नाः पुंःकाश्चन मृताः स्त्रियः श्राद्धार्हा मातरो
ज्ञेयाः श्राद्धं तत्र प्रदीयत इति अत्र देशाचाराद्व्यवस्था इदं चानुपनीतेनापि कार्यं तदुक्तं श्राद्धमूलपाणौ
मात्स्ये अमावस्याष्टकाकृष्णपक्षपंचदशीषु चेत्यभिधाय तत्रानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु
श्राद्धं साधारणं नाम सर्वकामफलप्रदं भार्याविरहितोऽप्येतत्प्रवासस्थोऽपि नित्यशः शूद्रोऽपि मंत्रवर्ज्यं कु
र्यादनेन विधिना बुध इति तथाग्निपुराणे अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि अत्र मातुः पृथ
क् श्राद्धमन्यत्र पतिना सहेति यत्तु तमिस्रपक्षे नवमीपुण्या भाद्रपदे हि या चत्वारः पार्वणाः प्रोक्ताः पि
तृपक्षे मनीषिभिरिति तद्देशाचारतो व्यवस्थितं ज्ञेयं इदं च जीवत्पितृकेनापि सपिंडकं कार्यं हेमाद्रौ
विष्णुधर्मोत्तरे अन्वष्टकासु च स्त्रीणां श्राद्धं कार्यं तथैव च तत्र पक्षमध्ये पिंडनिर्वपणं कार्यं तस्यामपि च स
नमेत्सुतत्वात् तस्यामन्वष्टकायामित्यर्थः अपिशब्देन तीर्थमहालयप्रत्याब्दिकानां ग्रहणं तेन गु
र्विणीपतेरप्येतेषु पिंडदानं कार्यं भवति अत्रातिदेशादेव पिंडदाने प्राप्ते गुर्विणीपतित्वादिप्रयुक्तनिषेधं
प्रतिवचनस्य सर्वार्थत्वात् मातृश्राद्धे सुवासिनीपूजनमुक्तं मार्कंडेयपुराणे मातुः श्राद्धे तु संप्राप्ते ब्रा
ह्मणैः सह भोजनं सुवासिन्यै प्रदातव्यमिति शातातपोऽब्रवीत् भर्तुरग्रे मृता नारी सह दाहेन वा मृता त
स्याः स्थाने नियुंजीत विप्रैः सह सुवासिनीं तत्रैव मदालसावाक्यं स्त्रीश्राद्धेषु प्रदेयाः स्युरलंकाराश्च यो
षिते मंजीरमेखलादामकर्णिकाकंकणादयः अत्राशक्तावनुकल्पमाहाश्वलायनः अनुदृष्टो यवस
माहरेत् अग्निना वा कक्षमुपोषेदेषो मेऽष्टकेति न त्वेव नष्टकल्पादिति हेमाद्रौ पितामहः अमावास्याव्य
तीपातपौर्णमास्यष्टमीषु च विद्वान् श्राद्धं न कुर्वाणो नरकं प्रतिपद्यते अकरणे प्रायश्चित्तमुक्तं मत्स्यविधा
ने एभिर्ऋग्भिर्जपेन्मंत्रं शतवारं तु तद्दिने अन्वष्टकं यदा मृत्युं संपूर्णं याति सर्वदेति अस्यामेव नव
म्यां बिल्वशाखायां देवीबोधनमुक्तं देवीपुराणे कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभे दिवा नवम्यां बोध
येद्देवीं गीतवादित्रनिःस्वनैरिति अथ दशम्यादिमहालयपक्षमाह यत्र कृष्णपक्षे दशम्यादौ वर्जयि
त्वा चतुर्दशीं श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतरा इति प्रतिपदादिमहालयपक्षाणामप्रतिकर्षमाह
कात्यायनः अत्रापरपक्षान्तराणामपि नित्यत्वासिद्धेः गौतमादिवचनैकवाक्यतया पंचम्यादिकल्पे सि
द्धे शक्तेन प्रतिपदमारभ्य तदशक्तौ पंचमीमारभ्य दशमीमारभ्य वा तदशक्तावेकस्यामपि तिथौ श्रा
द्धमवश्यं कर्तव्यमिति सिद्धं एतत्करणादेवाश्विनापरपक्षादेषां भेदः तत्र सर्वत्र देशाचारतो व्यवस्था
एकाहपक्षेऽपि मृताहतिथिरावश्यकी यदाहुः आषाढ्याः पंचमे पक्षे कन्यासंस्थे दिवाकरे मृताह
नि पुत्रो यो वै श्राद्धं दास्यति मानवः तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवमिति अत्रैव हस्तादिने
खंजनदर्शनमुक्तं ज्योतिषे हस्तगतेंबुजबंधोपपुष्पे यदि खंजनं नृपो यातं पश्येत्तथा गतस्य च क्षितिपम
हीपतिर्वशं याति १ खंजनको नामायं विहगस्तस्यावलोकने प्रथमे प्रोक्तानि यानि मुनिभिः फला
नि तानि वक्ष्येऽहं २ समंतभद्रस्तदनु प्रभद्रस्ततोऽनुभद्रो निबलादिकश्च एषां चतुर्णामथ खंज
नानामाचक्ष्महे संप्रति लक्षणानि ३ यः कंधरोरःशिरसा समंताद्विभाति कार्ष्ण्येन स समंतभद्रः हा
स्नेन वाथ शिरसोरसा चेत्स तु प्रभद्रः शितिकंठपृष्ठः ४ कंठोरसी यस्य च मेचके स्तः समंततश्चापि

सितोन भद्रः कृष्णो भवेत्कंठगतैकरेखा यस्याथ सोयं बलभद्रनामा ५ एवं चतुर्णामपि कार्यसि
द्धौ योयो भवेत्पूर्वतरः समस्तः स्वल्पोन्नतः कंठकृष्णोजलौकाकारकी भद्रः ६ आकंठमुखात्कृष्णः
संपूर्णः पूज्यमाशाः निंदितानाह आकारभद्रो गलमात्रकृष्णः सितान्ननः कार्यविनाशनाय ७
श्रृंगो हरिद्राद्रवसन्निकाशो गोमूत्रनामा खलु खंजरीटः निरीक्षितः प्राग्दिवसे प्रभूतं दुःखोदयं शं
सति यावदब्दं ८ वराहसंहितायामधिकृत्य अथ सुरभिमधुकुसुमफलपादपसलिलेषु
पूर्णेषु करितुरगभुजगप्रासादोद्यानमूर्ध्नि हर्म्येषु ९ गोगोष्ठसत्समागमयज्ञोत्सवपार्थिव
द्विजसमीपे हस्तितुरगशालाछत्रध्वजचामराद्येषु १० हेमसमीपसितांबरकमलोत्पलपूजि
तोपलिप्तेषु दधिपात्रधान्यकूटेषु दृष्टोऽभीष्टानि तेषु दत्ते विहगः पंकेस्वादुफलानि गोरससंपन्नो गोम
योपलिप्ते शाद्वलके वस्त्राभिः शकटस्थे देशविभ्रमो भवति १२ गृहपटलेषु भ्रंशो वर्ध्रे बंधोऽशुचा
रोगः पृष्ठेष्वजाविकानां प्रियसंगममावहत्याशु १३ महिषीगर्दभास्थिश्मशानगृहकोणशर्क
राद्रिष्टः शाकारशुचिविमलस्तु नियतमसौ मरणदो भयदः १४ यत्नोयुक्तन्न सुभं खादन्नपिबन्वारि
वाहस्थः सूर्योदये प्रशस्तो निष्टकरः खंजनोऽस्तसमये १५ वारिवाहोत्रजलप्रणालिका आगमांतरेपि
आजेषु गोषु गजवाजिमहोरगेषु राज्यप्रदः कुशलदः शुचिशाद्वलेषु भस्मास्थिकाष्ठनखलोमतृणेषु दृ
ष्टः कष्टं ददाति नियतं खलु खंजरीटः अथास्य दर्शने पठनीयो मंत्रः नीलग्रीव शुभग्रीव सर्वकामफल
प्रद पृथिव्यामवतीर्णोसि खंजरीट नमोस्तु ते तत्त्वेऽयुक्तोसुनिपुत्रकस्त्वमदृष्टपतामेविशिखोद्गमे
न वदृष्पसे प्राहृषि निर्गतायां त्वं खंजनाश्चर्यमयो नमस्ते आगमांतरे विप्रं ब्रह्मणि कार्यसिद्धिरग्ने
लाभः कौजे तापो भयं याम्यामग्निभयं स्वरद्धिषिकलिर्लाभः समुद्रालये वायव्यां करवस्त्रमन्नसलिलं
दिव्यांगनाचोत्तरे येशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खंजने तथा कुचेष्टितो यः कुवपुः कुवेषो
निरीक्षितः खंजनकः कदाचित् दृष्टा विशेषाद्यरितोषयेद्वा किं वा तयेत्संचितउच्छूतेन मासं न भुं
जीत शयीत भूमौ स्त्रियं न सेवेत दिनानि सप्त स्नायाज्जपेत्संजुहुयाच्च वह्नौ पेदृष्टमान्खंजनमर्चयेच्च
वराहसंहितायामपि नृपतिरपि शुभप्रदेशे खगमवलोक्य महीतले विदध्यात् सुरभिकुसुमधू
प शुक्लं शुभमभिनंदितमेवसिद्धं अशुभमपि विलोक्य खंजरीटं द्विजगुरुसाधुसुरार्चनेसशुक्तंच
नृपतेरशुभं भवेत्कथंचित् सपदि दिनानि न सप्त मांसभोजी ॥ आश्विनकृष्णदशम्यां
महालयश्राद्धं स्कांदे सेतुखंडे दशम्यां तु तिथौ मर्त्यः श्राद्धं कुर्यान्महालये शतं कल्पसहस्रा
णि तृप्यंति पितरोस्य वै संततिं चाप्यविच्छिन्नां ददुः पितृगणाः सदा ॥ आश्विनकृष्णपक्षे इं
दिरैकादशीव्रतं नारदीये इषासितैकादशीं कृत्वा मिंदिरां समुपोष्य वै शालिग्रामशिलाग्रे तु मध्या
ह्ने श्राद्धमाचरेत् विष्णोः प्रीतिकरं विप्र ततः प्रातर्हरेर्दिने पद्मनाभं समभ्यर्च्य भूदेवान्भोजयेत्सुधीः
विसृज्य दक्षिणां दत्वा तांस्ततोश्नीत च स्वयं एवं कृतव्रतो मर्त्यो भुक्त्वा भोगानिहेप्सितान् पितॄणां कोटि
सहस्रयात्यंते वैष्णवं पदं स्कांदे सेतुखंडेपि एकादश्यां तिथौ यस्तु श्राद्धं कुर्यान्महालये द्विशतं क
ल्पसाहस्रं तृप्यंति पितरोऽत्र ये अथैतस्या एकादश्याः कथा ब्रह्मवैवर्तपाद्मे च युधिष्ठिर उवाच
कथयस्व प्रसादेन ममाग्रे मधुसूदन कृष्णायाश्चाश्विने पक्षे किं नामैकादशी तु सा श्रीकृष्ण उवाच
आश्विने कृष्णपक्षे तु इंदिरा नाम नामतः तस्या व्रतप्रभावेण महापापं प्रणश्यति अधोयोनिगतानां
च पितॄणां गतिदायिनी शृणुष्वावहितो राजन्कथां पापहरां शुभां यस्याः श्रवणमात्रेण वाजपेयफ
लं भवेत् पुरा कृतयुगे राजा बभूव रिपुसूदनः इंद्रसेन इति ख्यातो पुरीं माहिष्मतीं पतिः स राज्यं
पालयामास धर्मेण यशसान्वितः पुत्रपौत्रसमायुक्तो धनधान्यसमन्वितः माहिष्मत्यधिपो राजा

विष्णुभक्तिपरायणः जपन्गोविंदनामानि मुक्तिदानि नराधिपः कालं निनाय विधिवदध्यात्म
चिंतकः एकस्मिन्दिवसे राज्ञि सुखासीने सभासने अवतीर्यागतो धीमान्नंबरान्नारदो मुनिः तमागत
मभिप्रेक्ष्य समुत्थाय कृतांजलिः पूजयित्वार्घ्यविधिना चासने संनिवेशयत् सुखोपविष्टः समुनिः प्र
त्युवाच नृपोत्तमं कुशलं तव राजेंद्र सप्तस्वंगेषु वर्तते धर्मे मतिर्वर्तते ते विष्णुभक्तिरतः सदा राजोवाच
त्वत्प्रसादान्मुनिश्रेष्ठ सर्वत्र कुशलं मम अद्य क्रतुक्रियाः सर्वाः सफलास्तव दर्शनात् प्रसादं कुरु वि
प्रर्षे ब्रूह्यागमनकारणं नारद उवाच श्रूयतां राजशार्दूल मद्वचो विस्मयप्रदं ब्रह्मलोकादहं प्राप्तो यम
लोकं नरोत्तम पूजितो नार्चितो भक्त्या चोपविष्टो वरासने धर्मशीलाः सत्यवंतो भास्करं समुपासते अ
तपुण्यप्रकर्तारो व्रतवैकल्पदोषतः सभार्यः श्राद्धदेवस्य समया दृष्टः पिता तव कथितस्तेन संदेशस्तन्नि
बोध नृपोत्तम इंद्रसेन इति ख्यातो राजा माहिष्मतीप्रभुः तस्याग्रे कथय ब्रह्मन्स्थितं मां यमसन्निधौ के
नापि चांतरायेण पूर्वजन्मभवेन वै स्वर्गं प्रेषय मां पुत्र इंदिराव्रतदानतः इत्युक्तोऽहं समायातः समीपं
तव पार्थिव पितुः स्वर्गगतिं राजन्निंदिराव्रतदानतः राजोवाच कथयस्व प्रसादेन भगवन्निंदिराव्र
तं विधिना केन कर्तव्यं कस्मिन्पक्षे तिथौ तथा नारद उवाच शृणु राजन्हितं वच्मि व्रतस्यास्य वि
धिं शुभं आश्विनस्यासिते पक्षे दशमे दिवसे शुभे प्रातः स्नानं प्रकुर्वीत श्रद्धायुक्तेन चेतसा ततो मध्या
ह्नदिवसे स्नानं कृत्वा बहिर्जले पितृणां तृप्तये श्राद्धं कुर्याच्छ्रद्धासमन्वितः एकभक्तं ततः कृत्वा रात्रौ भू
मौ शयीत वै प्रभाते विमले जाते प्राप्ते चैकादशीदिने मुखप्रक्षालनं कुर्याद्दंतधावनवर्जितं उपवा
सस्य नियमं गृह्णीयाद्भक्तिभावनात् अद्य स्थित्वा निराहारः सर्वभोगविवर्जितः श्वो भोक्ष्ये पुंडरीका
क्ष शरणं मे भवाच्युत शालिग्रामशिलाग्रे तु श्राद्धं कृत्वा यथाविधि पूजयित्वा हृषीकेशं धूपदीपा
दिभिस्तथा बंधुदौहित्रपुत्राद्यैः स्वयं भुंजीत वाग्यतः अनेन विधिना राजन्व्रतं कुरु प्रयत्नतः वि
ष्णुलोकं प्रयास्यंति पितरस्तव भूपते इत्युक्त्वा नृपतिं राजन्मुनिरंतरधीयत यथोक्तविधिना रा
जा चकार व्रतमुत्तमं अंतःपुरेण सहितः पुत्रभृत्यसमन्वितः व्रते कृते तु कौंतेय पुष्पवृष्टिरभूद्दि
वः तत्पिता गरुडारूढो जगाम हरिमंदिरं इंद्रसेनोऽपि राजर्षिः कृत्वा राज्यमकंटकं इंदिराव्रतपु
ण्येन ययौ वैकुंठमेव हि पठनाच्छ्रवणादस्य सर्वपापैः प्रमुच्यते इति ब्रह्मवैवर्तपद्मपुराणयोरिंदिरै
कादशीव्रतं आश्विनकृष्णद्वादश्यां संन्यासिनामपि महालयश्राद्धं पुत्रादिभिः कार्यं तत्पार्वणमेव
तदुक्तं वायुपुराणे संन्यासिनोऽप्योदकादि कुर्यात्पुत्रो यथाविधि महालये तु पक्षे तु द्वादश्यामे
व तद्भवेत् महालये तु यच्छ्राद्धं द्वादश्यां पार्वणेन त्विति पृथ्वीचंद्रोदये संग्रहेऽपि यतीनां च वनस्थानां
वैष्णवानां विशेषतः द्वादश्यां विहितं श्राद्धं कृष्णपक्षे विशेषत इति स्कांदे सेतुखंडेऽपि द्वादश्यां भक्ति
तो यस्तु श्राद्धं कुर्यान्महालये षट्शतं कल्पसाहस्रं तृप्यंति पितरोऽस्य वै आश्विनकृष्णत्रयोदशी श्रा
द्धचंद्रिकायां त्रयोदशी भाद्रपदी मुख्या कृष्णा पितृप्रिया तृप्यंति पितरस्तस्यां वर्षाणामयुतायुतं स्कांदे
सेतुखंडे च पितॄनुद्दिश्य यः कुर्यात्त्रयोदश्यां महालयं सहस्रकल्पसाहस्रं तृप्यंति पितरोऽस्य वै संत
तीश्चाप्यविच्छिन्नां दद्युः पितृगणाः सदा हेमाद्रौ मत्स्ये यत्किंचिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीं त
दप्यक्षयमेव स्याद्वर्षासु च मघासु च यमस्मृतावपि गाथाश्च पितृभिर्गीताः कीर्तयंति पुराविदः अ
पि नः स्वकुले जायाद्यो नो दद्यात्त्रयोदशीं मघासु सर्पिषा युक्तं पायसं दक्षिणायने प्रयोगपारिजाते श्रु
तेः प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीं प्राप्य श्राद्धं प्रकुर्वंति मधुना पायसेन च प्रजामिष्टां यशः
स्वर्गमारोग्यं च धनं तथा नृणां श्राद्धे सदा प्रीताः प्रयच्छंति पितामहाः एतन्नित्यमपि पृथ्वीचंद्रोदयेऽपि
सुधर्मे प्रौष्ठपद्यामतीतायां तथा कृत्वा त्रयोदशी एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः श्राद्ध

मेतेषु कुर्वाणो नरकं प्रतिपद्यते इत्यादिवचनैरेवं त्रयोदश्यां श्राद्धं महाफलं मघायुक्तायां त्वतिप्रशस्तं
मघायुक्तासु तत्रापि शस्ता राजन्त्रयोदशीति वचनात् अत्र मलमासेपि श्राद्धं कार्य्यं अनन्यगतित्वात्
मघात्रयोदशीयोगप्रशस्त्याच्च मघात्रयोदशीश्राद्धं प्रत्यब्दस्थितिहेतुकं अनन्यगतिकत्वेन कर्तव्यं स्या
न्मलिम्लुचे इति काठकगृह्याच्च इदं च युगादिविशेषप्रयुक्तत्वात्पिंडरहितं कार्य्यं अयने द्वितये श्राद्धं विषु
वद्वितये तथा युगादिषु च कर्तव्यं पिंडनिर्वपणादृते अपिंडकश्राद्धे विशेषमाह छागलेयः पिंडो यत्र
निवर्तेत मघादिषु कथंचन सांकल्पं तु तदा कार्य्यं नियमाद्ब्रह्मवादिभिः सांकल्पं तु यदा कुर्यान्न कु
र्य्यात्पात्रपूरणं नावाहनाग्नौकरणं न पिंडं विकिरं न च अशक्त्या पार्वणं श्राद्धं यथावत्कर्तुमक्षमः पिं
डार्घ्यादिविहीनं तु संकल्पश्राद्धमाचरेदिति वचनात् एतच्च पुत्रवता पुत्रान्तरोद्देशेन कार्य्यम् कृष्णपक्षे
त्रयोदश्यां यः श्राद्धं कुरुते नरः पंचत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितमिति वचनात् अत एव यो वांछति
नरो मुक्तिं पितृभिः सह चात्मनः असंतानश्च यस्तस्य श्राद्धे प्रोक्ता त्रयोदशी नागरखंडे तत्रैव अपुत्रप्र
तियः श्राद्धं त्रयोदश्यां करिष्यति कन्यासंस्थे सहस्रांशौ तस्य श्राद्धस्य संततय इति तत्र बहुभिर्वचनैर्बहुला
र्थतया विहितस्यात्यंतनिषेधायोगात् विषयभेदेन वक्तव्ये पिंडदानयुक्तत्वरूपविस्ताररहितत्वरूपस्तावदे
कस्तद्विषयो नागरखंडे उक्तः अतः श्राद्धं विना देयं तद्दिने मधुपायसं खड्गमांसं कालशाकं मांसं वार्ध्रीनस
स्य च तस्याभावेपि दातव्यं क्षीरोदनमतन्द्रितं तस्मिन्नहनि दातव्यं पितॄणां तृप्तये नृप तस्याभावेपि दातव्यं जलं
तिलविमिश्रितमिति अत्र श्राद्धशब्दः पिंडदानपरः तस्यापि पितृदेवतत्वेन श्राद्धशब्दवाच्यत्वात् अन्यथा ब्रा
ह्मणभोजनस्योक्तत्वेन तन्निषेधासंभवात् अन्योप्येकवर्गोद्देश्यैकरूपो निषेधविषयः कार्ष्णाजिनिनोक्तः
श्राद्धं नैवैकवर्गस्य त्रयोदश्यां समाचरेत् अत्र मासे त्रये यस्य प्रजां हिंसंति तस्य ते इति एकवर्गस्य पितृवर्ग
मात्रस्य न कुर्यात् किंतु मातामहवर्गस्यापि कुर्यादिति विधेर्विषयः न च दर्शश्राद्धातिदेशवत् त्रयोदशी
श्राद्धे मातामहवर्गस्याप्राप्तत्वादेकवर्गोद्देश्यकश्राद्धनिषेधानुपपत्तिः दर्शश्राद्ध एव मातामहवर्गस्य श्राद्ध
नावश्यकत्वस्याभिहितत्वादनुपयुक्तत्वात् तदवश्यकत्वे तु त्रयोदश्यामेकवर्गश्राद्धनिषेधो वृद्धिश्राद्धादिषु च बो
ध्यः पितृभ्यः तदनु श्राद्धदानमुपक्रमेदित्यादि मातामहश्राद्धे पुनर्वचनमूलं हेमाद्रावुदाहृतं त्वकेन कुर्व
न्त्रयोदशीश्राद्धं पुत्रवान्यः सुतायुषे एकस्यैव न कुर्याच्च पार्वणं तु समाचरेत् एकस्यैव वर्गस्य पार्वणे पर्वा
पि दर्शे क्रियमाणे अमावास्याश्राद्धेन साध्यं षड्दैवत्यमित्यर्थः केचित्तु नतमास्तत्रयस्येति दोषश्रवणात् पि
त्र्यादीनामपि महालयवत्त्रयोदश्यां श्राद्धं कर्तव्यमिति वदंति तद्दूषणं कालविवेचने द्रष्टव्यं तेन हृ
स्तत्रयोदशीमघायुते बहुद्विजो त्रयोदश्यां बहुपुत्रेच्छया श्राद्धं न कर्तव्यं भाद्रकृष्णत्रयोदश्यां बहुप्रजा इति
वचने पितृवर्गमात्रस्य न कर्तव्यं किंतु मातामहवर्गस्यापि तत्रेदं वचनं पितरो यत्र पूज्यंते तत्र मातामहा
अपि तत्रापि पिंडदानं न कर्तव्यं किंतु ब्राह्मणभोजनमात्रं मधुसर्पिर्घृतपायसादिनेति सामान्यविशे
षरूपविधिनिषेधवचनानां व्यवस्था सिद्धा अस्मिन्पक्षे केवलमघापि श्राद्धकालः तथा च वसिष्ठः पि
ता पितामहश्चैव तथैव प्रपितामहः उपासंते सुतं जातं पिप्पलं शकुना इव मधुमांसैश्च शाकैश्च पय
सा पायसेन च एष नो दास्यते श्राद्धं वर्षासु च मघासु चेति अत्र पिंडदाननिषेधो भविष्यपुराणे संक्रान्त्या
मुपवासेन पार्वणे न च भारत मघायां पिंडदानेन ज्येष्ठपुत्रो विनश्यतीति अन्यत्रापि कृत्ते पिंडप्रदा
नं तु ज्येष्ठपुत्री विवर्जयेत् कृत्ते मघा न तु ज्येष्ठपुत्री विद्यमानज्येष्ठपुत्रकः अयं ज्येष्ठपुत्रिणः श्राद्ध
निषेध एव इति नाशंकनीयं किंतु पिंडदानमात्रे तथापि मघाधिकरणके श्राद्धे पिंडदाननिषेधः
पिंडपदेन श्राद्धाभिधाने लक्षणापत्तेः अन्यथा सपिंडनदिनेपि मघासत्त्वे पिंडपर्युदासापत्तिः किं
तु मघानिमित्तिके तथा च मघापुरस्कारेण ज्येष्ठपुत्रिणा यदि श्राद्धं क्रियते तदा तत्रैव न पिंडरहि

तेकार्य्यमितिशास्त्रार्थः मघाश्राद्धंकाम्यं तत्रपितापितामहश्चेत्यादिवसिष्ठवचनोदाहृतप्रामाण्येन त्रयो
दशीश्राद्धंतुनित्यं तस्यानित्यगुणोपादानात् एवंमघायांत्रयोदश्यांचकेवलायामपिश्राद्धं अनयोस्तुमिलि·
तयोः प्रशस्त्यं तदुक्तंमहाभारते अपिनःसकुलेजायाद्योनोदद्यात्त्रयोदशीं पायससर्पिषायुक्तंमघासुदक्षि
णायने तत्रैवच हस्तार्कयोगेगजच्छाया तदुक्तंब्राह्मे योगोमघात्रयोदश्योः कुंजरच्छायसंज्ञकः भवेन्म
घायांसंस्थेचशशिन्यर्केकरस्थिते अपरार्केवायवीये हंसेहंसस्थितेयातुमघायुक्तात्रयोदशी तिथिर्वैव
स्वतीनामसाच्छायाकुंजरस्यच अन्यत्रापि अपिनःसकुलेजायाद्योनोदद्यात्त्रयोदशीं पायससर्पिषायुक्तं
शकच्छायेकुंजरस्यच यावच्चगजच्छायातावद्ब्राह्मणैर्नभोक्तव्यं सूतकेमृतकेचैवग्रस्तयोश्चंद्रसूर्ययोः
छायायांकुंजरस्यापिभुक्त्वाचनरकंव्रजेत् प्रमादाद्ब्राह्मणोभुक्त्वातत्रचांद्रायणंचरेदिति ब्रह्मपुराणव
चनात् अस्यामेवविष्णुधर्मोक्तंयुगावतारव्रतं ब्रह्मोवाच मासिप्रोष्ठपदेयातुकृष्णपक्षेत्रयोदशी अव
तीर्णायुगंतस्यांत्रेतायांतत्पोधनाः त्रेतायांविनिवृत्तायामेतस्यांतिथौयुगमवतीर्णमितिसंबंधः तेन
द्वापरयुगमत्रलभ्यते अत्रकृत्यं गोमूत्रंगोमयंदूर्वांसमालभ्यचमृत्तिकां स्नायान्नद्यांतडागेवानित्यो
नस्तांसमाहितः स्नात्वासंतर्पयेद्देवपितृभ्यश्चतिलोदकं श्राद्धस्यतर्पणेनैवफलंयुगशतंभवेत् यः
करोतितिलैःश्राद्धंनरस्तस्यांसमाहितः कृतंतेनभवेच्छ्राद्धंगयायांतुनसंशयः युगादौयखिलोकेशंपू
जयेद्गरुडध्वजं हृतस्तीरजलैःपुष्पैःसगन्धैर्दैत्यवैरी स्नापितोथविधिवत्पूजितोथनमस्कृतः
युगादौयुगकर्ताचनृणांमुक्तिप्रदोहरिः अतोवैसर्वयत्नेनयुगादौजगतांपतिः पूजनीयोजनैर्भक्त्यास
र्वदुःखहरोहरिः इतियुगावतारव्रतं अथाश्विनकृष्णपक्षेचतुर्दशीश्राद्धं तत्रमहालयश्राद्धंडमर
णमृतानांकार्यं पृथ्वीचंद्रोदये प्रचेताः वृक्षारोहणलोहाद्यैर्विद्युज्ज्वालाविषादिभिः नखिदंष्ट्रिविप
न्नानांतेषांशस्ताचतुर्दशी ब्राह्मे युवानःपितरोयस्यमृताःशस्त्रेणवाहताः तेनकार्यंचतुर्दश्यांतेषांतृ
प्तिमभीप्सता नागरखंडे अपमृत्युर्भवेद्यस्य शस्त्रमृत्युरथापिवा श्राद्धंतस्यचतुर्दश्यांकर्तव्यंनरा
धिप मरीचिः विषशस्त्रश्वापदादिशस्त्रब्राह्मणघातिनां चतुर्दश्यांक्रियाकार्याअन्येषांतुविगर्हिता
अत्रब्रह्मघातीब्राह्मणेनहतोनतुब्रह्महा तस्यपतितत्वादितिशूलपाणिः येषांशस्त्रहतानांचविषमृ
त्युमुपेयुषां वह्निनाचप्रदग्धानांजलमृत्युमुपेयुषां सर्पव्याघ्रहतानांच शृंगैःस्तहंतनैरपि श्राद्धंतेषां
प्रकर्तव्यंचतुर्दश्यांनराधिपेति मार्कंडेयपुराणात् शृंगैःशृंगिभिः प्रायोनशनशस्त्राद्यैर्विषोद्बंधनिनां·
तथा चतुर्दश्यांभवेच्छ्राद्धमितिब्रह्मपुराणात् प्रायोमहाप्रस्थानं यत्तुशाकटायनः जलाग्निभ्यांविपन्नानां
संन्यासेवागृहेपथि श्राद्धंकुर्वीततेषांवैवर्जयित्वाचतुर्दशीमिति यत्तुयच्छिन्नार्थंजलादिमृतविषयमिति
एतच्चदैवयुक्तमेकोद्दिष्टंकार्यं पित्रादीनामेकोद्दिष्टमेव नतुपार्वणं तथाचगार्ग्यः चतुर्दश्यांतुयच्छ्राद्धं
सपिंडीकरणात्परं एकोद्दिष्टविधानेनतत्कार्यंशस्त्रघातिनां पित्रादिषुशस्त्रहतेषुसर्वेषामेकोद्दिष्टान्येव·
कार्याणि पार्वणविधायकवचनाभावात् यत्रपित्रादयस्त्रयोयस्यशस्त्रपातादिभिर्मृताः सम्भूतेपार्वणांक
र्षादादिकानिपृथक्पृथगितिवचनं तन्मामाणिकग्रंथेष्वदर्शनादनादरं इदंचैकोद्दिष्टंसदैवकंकार्यं
प्रेतपक्षेचतुर्दश्यामेकोद्दिष्टंविधानतः दैवयुक्तंतुतच्छ्राद्धंपितॄणामक्षयंभवेदिति प्रयोगपारिजातोदा
हृतवचनात् यत्तुतस्यामेवचतुर्दश्यांमृतस्तस्यतुयाहनिदिने पार्वणमेवकर्तव्यं अमावास्यायामय
स्यप्रेतपक्षेतुवापुनः पार्वणंतस्यकर्तव्यंनैकोद्दिष्टंकदाचनेतिविज्ञानेश्वरधृतवचनात् चतुर्दश्यांमहा
लयश्राद्धं स्कांदेसेतुखंडे चतुर्दश्यांतिथौयस्तुश्राद्धंकुर्यान्महालये लक्षकोटिसहस्राणिलक्षकोटिश
तानिच कल्पानिपितरस्तस्यतृप्यंत्येवनसंशयः नरकस्थाअपिपितरः स्वर्गंयांतिप्रहर्षिताः संततिमप्य
विछिन्नांदद्युः पितृगणाःसदा ॥ आश्विनस्यामावास्यायामपिगजच्छायायोगमाह अपरार्केयमः हस्तेद

र्यस्थितेयानत्वमावास्याकरान्विता साज्ञेयाकुंजरच्छायाइतिबौधायनोऽब्रवीत् अत्रसर्वलोहवर्णच्छागसान्नि
ध्यानिश्राद्धमुक्तंमहाभारते अजेनसर्वलोहेनवर्षासुनियतव्रत हस्तिच्छायासुविधिवत्कर्णव्यजनवीजितं
श्राद्धंदद्यादितिशेषः अमावास्यायांमहालयश्राद्धंस्कांदेसेतुखंडे अमायांतुनरोभक्त्याश्राद्धंकुर्यान्महाल
ये पितॄणांतस्यतृप्तिःस्यादनंतानात्रसंशयः सुधामासाद्ययातृप्तिःसातृप्तिस्तुपितॄर्भवेत् अनंताहीदृशी
तृप्तिरमावास्यांमहालयात् अमावास्यामहापुण्यापितृदेवनमस्कृता एषातिथिस्तुपरमाशिवस्यपरमा
प्रिया तस्यांमहालयश्राद्धेभोजितेवेदवित्तमे तेनतृप्तिःपितॄणांस्यादनंतातुष्यतेशिवः ब्रह्महत्यादि
काः पंचपातकानाशमाप्नुयुः कृतानस्युर्विधानेनसर्वेयज्ञाःसदक्षिणाः अनुष्ठिताःसुविधिवत्सर्वेधर्माः
सनातनाः योनकुर्यादमावास्यांमहालयमचेतनः ब्रह्मलोकगतास्तस्यपितरोयांतिनारकीं गतिमिति
शेषः संततिश्चास्यमूढस्यविच्छिद्येतैवतत्क्षणात् सएवहिमहानर्थोयदमायांतियोनरः महालयार्थंविप्रे
न्द्राविधिवन्नैवभोजिताः मासिभाद्रपदेपुण्येपितॄणांतृप्तिदायिनी एकैकंभोजयेद्विप्रंप्रत्यहंभक्तिपूर्वकं
समाप्याःकृष्णपक्षस्यप्रारभ्यप्रत्यहंनरः विप्रान्यावदमावास्यांपितृन्स्त्रीनभ्यभोजयेत् आरभ्यद्वादशींविप्रा
न्स्त्रीनवशंतुभोजयेत् अन्यथैश्वर्यहानिःस्यान्महादारिद्र्यभाग्भवेत् भोजयेद्वेदविन्मुख्यांस्तृप्तिस्तेषांय
थाभवेत् तेनब्रह्माहरिःशंभुस्तृप्ताःस्युःसर्वदेवताः अग्निष्वात्तादिपितरउपेंद्राद्याधिदेवताः बहुनात्रकिमु
क्तेनतृप्यत्येवजगत्त्रयं ॥ * ॥ इतिमहालयनिर्णयःसमाप्तः ॥ अथस्त्रीकर्तृक
पार्वणश्राद्धविधिः तस्याःषड्दैवतेविशेषउक्तः स्वभर्तृप्रभृतित्रिभ्यःस्वपितृभ्यस्तथैवच विधिवाकार
येच्छ्राद्धंयथाकालमतंद्रितेतिवचनात् तस्याअयंश्राद्धप्रयोगः तत्रादौविधवास्वयंस्नाताशुचिशुक्ल
वस्त्रयुग्मधरा मध्याह्नेश्राद्धदेशमागत्य पंचगव्योपलेपितंसुसमाहितं ज्वलदंगारशोधितं गोरस्म
त्तिकयाच्छादितंयथासादितश्राद्धीयद्रव्यंज्वलितप्रदीपंविकीर्णगौरसर्षपंकृत्वा तत्रागत्यासनेप्राङ्मु
खीउपविश्यपसिद्धमन्त्रमितिज्ञात्वा ततःअपवित्रःपवित्रोवासर्वावस्थांगतोपिवा यःस्मरेत्पुंडरीकाक्षं
सबाह्याभ्यंतरःशुचिरिति श्राद्धीयदेशंश्राद्धीयसंभारसहितंपरिषिच्य शंखचक्रधरंदेवंद्विभुजंपीत
वाससं प्रारंभेकर्मणांविप्रःपुंडरीकंस्मरेद्धरिम् इतियज्ञपुरुषंप्रणम्यपूजादिकंयथाशक्तिसंपाद्य
श्राद्धकालेगयांध्यात्वाध्यात्वादेवंगदाधरं स्वपत्यादीनृणांध्यात्वाततःश्राद्धंसमारभेत् इतिविप्रमु
खेनाचयित्वा कुशतिलजलान्यादाय अद्यामुकगोत्रामुकदेवी अमुकगोत्राणामस्मद्भर्तृतत्पितृपि
तामहानांस्वपितृपितामहप्रपितामहानांचमहालयनिमित्तंसवैश्वदैविकंपार्वणश्राद्धमहंकरिष्ये दे
वताभ्यःपितृभ्यश्चमहायोगिभ्यएवच नमःस्वधायैस्वाहायैनित्यमेवनमोनमइतिविप्रमुखेनवाचये
त् ततोदक्षिणमुखीपातितवामजानुःसती मोटकतिलजलानिगृहीत्वानमोनम अद्यामुकगोत्राणां
स्वभर्तृतत्पितृपितामहानांस्वस्यचपितृपितामहप्रपितामहानाममुकामुकशर्मणांमहालयनैमित्तिक
श्राद्धसंबंधिनांविश्वेषांदेवाना मिदमासनंवोनमः अस्मद्भर्तृतत्पितृपितामहानांमहालयनैमित्ति
कपार्वणश्राद्धसंबंधिनोविश्वेदेवानावाहयिष्ये ततोऽर्घ्यपात्रेतूष्णींगंधादिनत्रत्तिमा अर्घ्यपात्रंवाम
हस्तेकृत्वा अर्घ्यपात्रस्यपवित्रंभोजनपात्रेनिधाय तदुपरिकिंचिदुदकांतरंसिक्त्वा अर्घ्यपात्रंवामह
स्तेकृत्वा अर्घ्योनमः इतिनमस्कृत्य नमोअद्यामुकगोत्राणांअस्मद्भर्तृतत्पितृपितामहानाममुका
मुकशर्मणां महालयनैमित्तिकपार्वणश्राद्धसंबंधिनोविश्वेदेवाएषहस्तार्घ्योवोनमः अस्मत्पित्रादित्र
यसंबंधिनोविश्वेदेवाएषहस्तार्घ्योवोनमः ततोगंधादिदानंनमोनमः अद्यामुकगोत्राणामस्मद्भर्त्रादि
त्रयपित्रादित्रयपार्वणश्राद्धसंबंधिनोविश्वेदेवा एतानिगंधार्च्चापुष्पधूपदीपनैवेद्यतांबूलयज्ञोपवीत
वासांसिवोनमः देवार्च्यपात्रंदेवानांदक्षिणतःकुशोपरिउत्तानंसंस्थापयेत् देवेभ्यःस्थानमसि ततो

दक्षिणामुखीपातितवामजानुः सती मोदकतिलजलयुतानि भर्त्रादित्रयस्वपित्रादित्रयासनानि गृहीत्वा
नमोनमः अद्यामुकगोत्राणामस्मद्भर्त्रादित्रयाणामस्मत्पित्रादित्रयाणाममुकामुकशर्मणां महालयनैमित्ति
कपार्वणश्राद्धे इमान्यासनानि वो नमः स्वभर्त्रादित्रयं स्वपित्रादित्रयमावाहयिष्यामि इति वाक्येन तिला
न् विकिरेत् ततः स्वभर्त्रादित्रयपात्रेषु स्वपित्रादित्रयपात्रेषु च पवित्राणि दक्षिणाग्राणि धृत्वा तिलजलगं
धपुष्पयुतानि कृत्वा अर्घ्यपात्रं वामहस्ते कृत्वा तत्रस्थपवित्रं भोजनपात्रे दत्वा उदकांतरेणासिक्त्वा मोद
कतिलजलान्यादाय नमोनमः अद्यामुकगोत्रास्मत्पतेऽमुकगोत्रामुकशर्मन् महालयनैमित्तिकपार्व
णश्राद्धे एष हस्तार्घ्यस्ते नमः एवमस्मद्भर्तृपितरमुकशर्मन् महालयनैमित्तिकश्राद्धे अस्मद्भर्तृपि
तामहामुकशर्मन् महालयनैमित्तिकपार्वणश्राद्धे अमुकगोत्रास्मत्पितरमुकशर्मन् महालयनैमित्ति
कश्राद्धे १ अमुकगोत्रास्मत्पितामहामुकशर्मन् महालयनैमित्तिकश्राद्धे २ अमुकगोत्रास्मत्प्रपि
तामहामुकशर्मन् महालयनैमित्तिकपार्वणश्राद्धे एष हस्तार्घ्यस्ते नमः अथवा नमोनमोऽस्मद्भर्तृतत्पि
तृपितामहामुकामुकशर्माणो महालयनैमित्तिकपार्वणश्राद्धे एष हस्तार्घ्यः षोढा विभज्य वो नमः
ततो गंधादिदानं मोदकतिलजलान्यादाय नमोनमः अद्यामुकगोत्रा अस्मद्भर्तृतत्पितृपितामहा अस्म
त्पितृपितामहप्रपितामहा अमुकामुकशर्माण एतानि गंधार्घ्यपुष्पधूपतांबूलवासांसि षोढा विभज्य वो न
मः ततो भोजनपात्रेभ्यः पवित्रादीन्यादायार्घ्यपात्रेषु कृत्वा अस्मद्भर्त्रादिभ्यः स्थानमसि अस्मत्पित्रादिभ्यः
स्थानमसि इति वामपार्श्वे कुशोपरि न्युब्जीकुर्यात् दक्षिणादानपर्यंतं न चालयेत् ततो जलादिना भोज
नपात्राणि प्रदक्षिणावर्तेन वेष्टयेत् ततः श्राद्धदेयान्नाग्रभागमादाय पुटकादिषु जलं दत्वा पूर्वाभिमु
खी सती अग्नये कव्यवाहनाय नमः सोमाय पितृमते नमः इत्याहुतिद्वयमुत्सृजेत् ततो दक्षिणाभिमु
खी सघृततिलव्यंजनमन्नमादाय एतदन्नमेतद्भूमिस्वामिपितृभ्यो नमः ततः पुनः पूर्वाभिमुखी दि
क्षे देवभोजनपात्रेषु देवतीर्थेन पुरुषाहारत्तमं सघृतं सव्यंजनमन्नं परिविष्य जलादिकं चोपनीय म
धुवातेति ऋचं विप्रमुखाच्छ्रुत्वा भोजनपात्रेषु मधु दत्वा नमोनमः अद्यामुकगोत्रास्मद्भर्त्रादित्रयास्मत्पि
त्रादिमहालयश्राद्धसंबंधिनो विश्वेदेवा एतदन्नं सोपकरणं परिविष्टं परिविष्यमाणं च द्विधा विभज्य वो
नमः विश्वोहव्यं रक्षत मदीयमिति यवान् विकीर्य इत्यन्नमुत्सृजेत् ततो दक्षिणामुखी पितृतीर्थेन स्वभर्त्रादित्रय
स्वपित्रादित्रयभोजनपात्रेषु सर्वव्यंजनयुतसघृतमन्नं परिविष्य जलादिकं चोपनीय मधुवातेति ऋचं विप्र
मुखाच्छ्रुत्वा मधु मधु मधु इति स्वयमुक्त्वा भोजनपात्रेषु मधु दत्वा मोदकतिलजलान्यादाय नमोनमः अद्या
मुकगोत्रा अस्मद्भर्तृतत्पितृपितामहा अमुकगोत्रा अस्मत्पितृपितामहप्रपितामहा अमुकामुकशर्माणो
महालयनैमित्तिकपार्वणश्राद्धे एतदन्नं सोपकरणं परिविष्टं परिविष्यमाणममृतरूपेण वो नमः कृष्ण
कव्यं रक्षत मदीयमित्यन्नोपरि तिलान् विकीर्य नमोनमः अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् तत्स
र्वमच्छिद्रमस्तु देवतीर्थेन विश्वेभ्यो देवेभ्य आपोशानं वो नमः पितृतीर्थेन अस्मद्भर्त्रादित्रिभ्यः आपो
शानं नमः अस्मत्पित्रादित्रिभ्य आपोशानं नमः ततः सव्यंजनघृततिलादिसहितं सर्वप्रकारमन्नमा
दाय अनग्निदग्धाश्च ये जीवा ये प्रदग्धाः कुले मम भूमौ दत्तेन तृप्यंतु तृप्ता यांतु परां गतिमिति कुशो
परि सजलमन्नमुत्सृजेत् ततः नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे नमः पिनाकहस्ताय वज्रहस्ता
य वै नमः इति नीलकंठस्तुतिं श्रुत्वा प्राणाय स्वाहेत्यादि स्तोत्राणि च श्रावयेत् ततो हस्तौ प्रक्षाल्याचम्य
पिंडपातनार्थं वेदीं कुर्यात् तत्र दर्भमूलेन प्रादेशमात्रं रेखाद्वयं कृत्वा तद्देशान्यां परित्यज्य ज्वलदंगारं भ्रा
मयित्वा दक्षिणतो निदध्यात् रेखोपरि छिन्नमूलकुशास्तरणं विधाय अवनेजनार्थं पुटकादौ तिलज
लपुष्पाणि क्षिप्त्वा मोटकतिलजलान्यादाय नमोनमः अद्यामुकगोत्रा अस्मद्भर्तृतत्पितृपितामहा अ॰

दृश्यते यात्वमावास्याकन्यान्विता सा ज्ञेया कुंजरच्छाया इति बौधायनोऽब्रवीत् अत्र सर्वलोहवर्णच्छागसन्नि
धानि श्राद्धमुक्तं महाभारते अजेन सर्वलोहेन वर्षासु नियतव्रत हस्तिच्छायासु विधिवत्कर्णव्यजनवीजितं
श्राद्धं दद्यादिति शेषः अमावास्यायां महालयश्राद्धं स्कांदे सेतुखंडे अमायां तु नरो भक्त्या श्राद्धं कुर्यान्महाल
ये पितॄणां तस्य तृप्तिः स्यादनंता नात्र संशयः सुधामासाद्य या तृप्तिः सा तृप्तिस्तु पितुर्भवेत् अनंता हीदृशी
तृप्तिरमावास्यां महालयात् अमावास्या महापुण्या पितृदेवनमस्कृता एषा तिथिस्तु परमा शिवस्य परमा
प्रिया तस्यां महालयश्राद्धभोजिते वेदवित्तमे तेन तृप्तिः पितॄणां स्यादनंता तुष्यते शिवः ब्रह्महत्यादि
काः पंचपातकानाशमायुः कृता अस्य विधानेन सर्वे यज्ञाः सदक्षिणाः अनुष्ठिताः सुविधिवत्सर्वे धर्माः
सनातनाः यो न कुर्यादमावास्यां महालयममेतनः ब्रह्मलोकगताश्चास्य पितरो यांति नारकीं गतिमिति
शेषः संततिश्चास्य मूढस्य विच्छिद्येतैव तत्क्षणात् स एव हि महानर्थो यदमायांति यो नरः महालयार्थं विधि
ज्ञा विधिवन्नैव भोजिताः मासि भाद्रपदे पुण्ये पितॄणां तृप्तिदायिनी एकैकं भोजयेद्विप्रं प्रत्यहं भक्तिपूर्वकं
समस्याः कृष्णपक्षस्य आरभ्य प्रत्यहं नरः विप्रान्यावदमावास्यां पितृन्स्त्रीनभ्यभोजयेत् आरभ्य द्वादशीं विप्रा
न्स्त्रीनवर्षं तु भोजयेत् अन्यथैश्वर्यहानिः स्यान्महादारिद्र्यभाग्भवेत् भोजयेद्वेदविन्मुख्यान्तृप्तिस्तेषां
भवेत् तेन ब्रह्मा हरिः शंभुस्सप्ताः सर्वदेवताः अग्निष्वात्तादिपितर उपेंद्राद्याधिदेवताः बहुनात्र किमु
क्तेन तृप्यत्येव जगत्त्रयं ॥ * ॥ इति महालयनिर्णयः समाप्तः ॥ अथ स्त्रीकर्तृक
पार्वणश्राद्धविधिः तस्याः षड्दैवते विशेष उक्तः स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च विधवा कार
येच्छ्राद्धं यथाकालमतंद्रितेति वचनात् तस्याश्चायं श्राद्धप्रयोगः तत्रादौ विधवा स्वयंस्नाता शुचिशुक्ल
वस्त्रयुग्मधरा मध्याह्ने श्राद्धदेशमागत्य पंचगव्योपलेपितं सुसमाहितं ज्वलदंगारशोधितं गौरमृ
त्तिकयाच्छादितं यथासादितश्राद्धीयद्रव्यं ज्वलितप्रदीपं विकीर्णगौरसर्षपं कृत्वा तत्रागत्यासने प्राङ्मु
खी उपविश्य प्रसिद्धमन्नमिति ज्ञात्वा ततः अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा यः स्मरेत्पुंडरीकाक्षं
सबाह्याभ्यंतरः शुचिरिति श्राद्धीयदेशं श्राद्धीयसंभृतिसहितं परिषिंच्य शंखचक्रधरं देवं द्विभुजं पीत
वाससं प्रारंभे कर्मणां विप्र पुंडरीकं स्मरेद्धरिम् इति यज्ञपुरुषं प्रणम्य पूजादिकं यथाशक्ति संपाद्य
श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं गदाधरं स्वपत्यादीन्नृणां ध्यात्वा ततः श्राद्धं समारभेत् इति विप्रमु
खोद्वाचयित्वा कुशतिलजलान्यादाय अद्यामुकगोत्रामुकदेवी अमुकगोत्राणाममस्मद्भर्तृतत्पितृपि
तामहानां स्वपितृपितामहप्रपितामहानां च महालयनिमित्तं सवैश्वदेविकं पार्वणश्राद्धमहं करिष्ये दे
वताभ्यः पितृभ्यश्च महायोगिभ्य एव च नमः स्वधायै स्वाहायै नित्यमेव नमो नम इति विप्रमुखेन वाचये
त् ततो दक्षिणामुखी पातितवामजानुः सती मोटकतिलजलानि गृहीत्वा नमो नम अद्यामुकगोत्राणां
स्वभर्तृतत्पितृपितामहानां स्वस्य च पितृपितामहप्रपितामहानाममुकामुकशर्मणां महालयनैमित्तिक
श्राद्धसंबंधिनां विश्वेषां देवाना मिदमासनं वो नमः अस्मद्भर्तृतत्पितृपितामहानां महालयनैमित्ति
कपार्वणश्राद्धसंबंधिनो विश्वेदेवानावाहयिष्ये ततोऽर्घ्यपात्रे तूष्णीं गंधादि [illegible] अर्घ्यपात्रं वाम
हस्ते कृत्वा अर्घ्यपात्रस्थपवित्रं भोजनपात्रे निधाय तदुपरि किंचिदुदकांतरं सिक्त्वा अर्घ्यपात्रं वामह
स्ते कृत्वा अर्घो नमः इति नमस्कृत्य नमो अद्यामुकगोत्राणां ओं अस्मद्भर्तृतत्पितृपितामहानाममुका
मुकशर्मणां महालयनैमित्तिकपार्वणश्राद्धसंबंधिनो विश्वेदेवा एष हस्तार्घो वो नमः ततो गंधादिदानं नमो नमः अस्मत्पितृआदित्र
यपित्रादित्रयपार्वणश्राद्धसंबंधिनो विश्वेदेवा एतानि गंधार्च्यपुष्पधूपदीपनैवेद्यतांबूलयज्ञोपवीत
वासांसि वो नमः देवार्घ्यपात्रं देवानां दक्षिणतः कुशोपरि [illegible] स्थापयेत् देवेभ्यः स्थानमसि ततो

दक्षिणामुखीपातितवामजानुः सती मोटकतिलजलयुतानि भर्त्रादित्रयस्वपित्रादित्रयासनानि गृहीत्वा
नमोनम अद्यामुकगोत्राणामस्मद्भर्त्रादित्रयाणामस्मत्पित्रादित्रयाणाममुकामुकशर्मणांमहालयनैमित्ति
कपार्वणश्राद्धइमान्यासनानिवो नमः स्वभर्त्रादित्रयंस्वपित्रादित्रयमावाहयिष्यामि इतिवाक्येनतिला
न्विकिरेत् ततःस्वभर्त्रादित्रयपात्रेषु स्वपित्रादित्रयपात्रेषु चपवित्राणिदक्षिणाग्राणिधृत्वा तिलजलगं
धपुष्पयुतानिकृत्वा अर्घ्यपात्रंवामहस्तेकृत्वा तत्रस्थपवित्रंभोजनपात्रेदत्वा उदकांतरेणासिक्त्वा मोट
कतिलजलान्यादाय नमोनम अद्यामुकगोत्रास्मत्पतेऽमुकगोत्रामुकशर्मन् महालयनैमित्तिकपार्व
णश्राद्धेएषहस्तार्घ्यस्तेनमः एवमस्मद्भर्तृपितरमुकशर्मन् महालयनैमित्तिकश्राद्धे अस्मद्भर्तृपि
तामहामुकशर्मन् महालयनैमित्तिकपार्वणश्राद्धे अमुकगोत्रास्मत्पितरमुकशर्मन्महालयनैमित्ति
कश्राद्धे १ अमुकगोत्रास्मत्पितामहामुकशर्मन् महालयनैमित्तिकश्राद्धे २ अमुकगोत्रास्मत्प्रपि
तामहामुकशर्मन्महालयनैमित्तिकपार्वणश्राद्धेएषहस्तार्घ्यस्तेनमः अथवा नमोनमोऽस्मद्भर्तृतत्पि
तृपितामहाअमुकामुकशर्माणोमहालयनैमित्तिकपार्वणश्राद्धेएषहस्तार्घ्यः षोढाविभज्यवोनमः
ततोगंधादिदानं मोटकतिलजलान्यादाय नमोनमअद्यामुकगोत्रा अस्मद्भर्तृतत्पितृपितामहाअस्म
त्पितृपितामहप्रपितामहाअमुकामुकशर्माणएतानिगंधार्च्यपुष्पधूपतांबूलवासांसिषोढाविभज्यवोन
मः ततोभोजनपात्रेभ्यः पवित्रादीन्यादायार्घ्यपात्रेषुकृत्वा अस्मद्भर्त्रादिभ्यः स्थानमसि अस्मत्पित्रादिभ्य
स्थानमसिइतिवामपार्श्वेकुशोपरिन्युब्जीकुर्यात् दक्षिणादानपर्यंतंनचालयेत् ततोजलादिनाभोज
नपात्राणिप्रदक्षिणावर्तेनवेष्टयेत् ततःश्राद्धदेयान्नाग्रभागमादायपुटकादिषुजलेदत्वा पूर्वाभिमु
खीसती अग्नयेकव्यवाहनायनमः सोमायपितृमतेनमः इत्याहुतिद्वयमुत्सृजेत् ततोदक्षिणाभिमु
खी सघृततिलव्यंजनमन्नमादाय एतदन्नमेतद्भूमिस्वामिपितृभ्योनमः ततःपुनःपूर्वाभिमुखीदि
ष्येदेवभोजनपात्रेषुदेवतीर्थेनपुरुषाहारत्वमंसघृतंसव्यंजनमन्नंपरिविष्य जलादिकंचोपनीय म
धुवातेतिऋचंविप्रमुखाच्छ्रुत्वा भोजनपात्रेषुमधुदत्वा नमोनमअद्यामुकगोत्रास्मद्भर्त्रादित्रयास्मत्पि
त्रादिमहालयश्राद्धसंबंधिनोविश्वेदेवाएतदन्नंसोपकरणं परिविष्टंपरिविष्यमाणंचद्विधाविभज्यवो
नमः विश्वेदेवाइदंरत्नमदीयमितियवान्विकीर्यइत्यन्नमुत्सृजेत् ततोदक्षिणामुखीपितृतीर्थेनस्वभर्त्रादित्रय
स्वपित्रादित्रयभोजनपात्रेषुसर्वव्यंजनयुतसघृतमन्नंपरिविष्यजलादिकंचोपनीयमधुवातेतिऋचंविप्र
मुखाच्छ्रुत्वामधुमधुमधुइतिस्वयमुक्त्वाभोजनपात्रेषुमधुदत्वामोटकतिलजलान्यादाय नमोनमअद्या
मुकगोत्राअस्मद्भर्तृतत्पितृपितामहाअमुकगोत्रा अस्मत्पितृपितामहप्रपितामहाअमुकामुकशर्माणो
महालयनैमित्तिकपार्वणश्राद्धेएतदन्नंसोपकरणंपरिविष्टपरिविष्यमाणममृतरूपेणवोनमः कृत्स
कव्यंरत्नमदीयमित्यन्नोपरितिलान्विकीर्य नमोनम अन्नहीनंक्रियाहीनंविधिहीनंचयद्भवेत् तत्स
र्वमच्छिद्रमस्तु देवतीर्थेनविश्वेभ्योदेवेभ्यआपोशानंवोनमः पितृतीर्थेनअस्मद्भर्त्रादित्रिभ्यः आपो
शानंनमः अस्मत्पित्रादित्रिभ्यआपोशानंनमः ततःसव्यंजनघृततिलादिसहितंसर्वप्रकारमन्नमा
दाय अनग्निदग्धाश्चयेजीवायेप्रदग्धाः कुलेमम भूमौदत्तेनतृप्यंतुतृप्तायांतुपरांगतिमिति कुशो
परिसजलमन्नमुत्सृजेत् ततः नमस्तुभ्यंविरूपाक्षनमस्तेनेकचक्षुषे नमःपिनाकहस्तायवज्रहस्ता
यवैनमइतिनीलकंठस्तुतिंश्रुत्वाप्रणम्य हविष्मवादिस्तोत्राणिचश्रावयेत् ततोहस्तौप्रक्षाल्याचम्य
पिंडपातनार्थंवेदीकुर्यात् तत्रदर्भमूलेनप्रादेशमात्रंरेखाद्वयंकृत्वा तद्देशान्यांपरित्यज्य ज्वलदंगारंभ्रा
मयित्वा दक्षिणतोनिदध्यात् रेखोपरिछिन्नमूलकुशास्तरणंविधाय अवनेजनार्थंपुटकादौतिलज
लपुष्पाणिक्षिप्त्वा मोटकतिलजलान्यादाय नमोनमअद्यामुकगोत्राअस्मद्भर्तृतत्पितृपितामहाअ

मुकामुकशर्माणस्तथाऽस्मत्पितृपितामहप्रपितामहा अमुकामुकशर्माणः महालयनैमित्तिकपार्व
णश्राद्धे पिंडस्थाने अत्राऽवनेनिग्ध्वं वो नमः ततः तिलास्तोयं तथा क्षीरं धूपो दीप बलिस्तथा मधुः सर्पिः
समायुक्तो लक्ष्मीगोपिंडसंभवः इत्यनेन षट्पिंडान्निर्माय प्रथमं पिंडं वामहस्ते कृत्वा दक्षिणेन मोटक
तिलजलान्यादाय नमो नमः अद्यामुकगोत्रअस्मद्भर्तः अमुकशर्मन् महालयनैमित्तिकश्राद्धे एषते पिं
डो नमः १ नमो नमः अद्याऽमुकगोत्रास्मद्भर्तृपितरमुकशर्मन् महालयनैमित्तिकपार्वणश्राद्धे एषते
पिंडो नमः २ नमो नमः अद्याऽमुकगोत्रास्मद्भर्तृपितामहामुकशर्मन् महालयनैमित्तिकपार्वणश्रा
द्धे एषते पिंडो नमः ३ नमो नमः अद्यामुकगोत्रास्मत्पितरमुकशर्मन् महालयश्राद्धे एषते पिंडो नमः
४ नमो नमः अद्यामुकगोत्रास्मत्पितामहामुकशर्मन् महालयनैमित्तिकपार्वणश्राद्धे एषते पिंडो न
मः ५ नमो नमः अद्यामुकगोत्रास्मत्प्रपितामहामुकशर्मन् महालयनैमित्तिकपार्वणश्राद्धे एषते पिंडो
नमः ६ लेपभागभुजस्तृप्यंतु कुशमूलेन करं प्रोंछ्य ततउदङ्मुखीभूत्वा श्वासं नियम्य पुनर्दक्षिणा
मुखीभूत्वा श्वासं त्यजेत् स्वभर्त्रादीन् स्वपित्रादीन् श्रीभास्वरमूर्तीन्ध्यायेत् ततोऽव नेजनावशिष्ट-
जलयुतमवनेजनपात्रमादाय मोटकतिलजलान्यादाय नमो नमोऽद्यामुकगोत्रा स्मद्भर्तृतत्पितृ
पितामहा अमुकामुकशर्माणो महालयनैमित्तिकश्राद्धे पिंडोपरि प्रत्यवनेनिग्ध्वं वः स्वधा ततो नीवीं
विस्रंस्याचम्य दक्षिणामुखी वामेन पाणिना सूत्रमादाय दक्षिणे पिंडोपरि दद्यात् नमो नमोऽद्यामुकगो
त्रा स्मद्भर्तृतत्पितृपितामहा अमुकामुकशर्माणः अस्मत्पितृपितामहप्रपितामहा अमुकामुकशर्मा
णो महालयनैमित्तिकपार्वणश्राद्धे पिंडोपरि एतद्वासो वो नमः ततो गंधादिभिः पिंडानां पृथक्पूजनं कु
र्यात् ततः शिवा आपः संतु इति जलं सौमनस्यमस्तु पुष्पं अक्षतं चारिष्टमस्तु इत्यक्षतान् भोजन
पात्रेषु निक्षिप्य ततो मोटकादीन्यादाय नमो नमोऽद्यामुकगोत्रा स्मद्भर्तृतत्पितृपितामहा अमुका
मुकशर्माणस्तथा अस्मत्पितृपितामहप्रपितामहा अमुकामुकशर्माणः महालयनैमित्तिकपार्व
णश्राद्धदत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतां वो नमः इत्यक्षय्योदकं दत्वा ततः पिंडोपरि अघोरा
अस्मद्भर्तृतत्पित्रादयो अस्मत्पित्रादयश्च संतु इति पूर्वाग्रां वारिधारां दत्वा पूर्वामुखी कृतांजलिर्भूत्वा
नमो नमः गोत्रं नो वर्द्धतां दातारो नोऽभिवर्द्धंतां वेदाः संततिरेव च श्रद्धा च नो माव्यगमत् बहुदेयं
च नोऽस्त्विति अन्नं च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः संतु मा च याचिष्म कंचन एताः
सत्या आशिषः संतु इति प्रार्थयेत् ततो दक्षिणामुखी पिंडानामुपरि सपवित्रं कुशत्रयमास्तीर्य तदुप
रि दक्षिणाग्रां वारिधारां नमो नम इति दद्यात् ततो नम्रीभूय पिंडमाघ्रायोत्थापयेत् पिंडाधारकुशान्
उल्मुकं च वह्नौ क्षिपेत् ततः पूर्वाभिमुखी देवार्घ्यपात्रं संचाल्य दक्षिणामुखीभूत्वा भर्त्रादीनां पात्राण्यु
त्तानी कुर्यात् ततः प्राङ्मुखीभूत्वा कुशत्रययवजलैर्देवेभ्यो दक्षिणां दद्यात् नमो नमः अद्यामुकगोत्रा
णामस्मद्भर्तृतत्पितृपितामहानाममुकशर्मणां तथा अमुकगोत्राणामस्मत्पितृपितामहप्रपितामहा
नाममुकामुकशर्मणां महालयनैमित्तिकश्राद्धसंबंधिनां विश्वेषां देवानां कृतैतत् श्राद्धप्रतिष्ठार्थं इ
दं हिरण्यमग्निदैवतं तन्मूल्यभूतं रजतताम्रादिद्रव्यं यथानामगोत्राभ्यां ब्राह्मणाभ्यां दातुमहमुत्सृजे
इति विश्वेदेवश्राद्धदक्षिणां दत्वा ततो दक्षिणामुखीभूत्वा स्वभर्त्रादीनां श्राद्धदक्षिणां दद्यात् नमो न
मोऽद्यामुकगोत्राणां अस्मद्भर्तृतत्पितृपितामहानां तथा चामुकगोत्राणामस्मत्पितृपितामहप्रपिता
महानाममुकामुकशर्मणां कृतैतन्महालयनैमित्तिकश्राद्धप्रतिष्ठार्थमिदं रजतं चंद्रदैवतं तन्मूल्यभू
तं यथाशक्ति दक्षिणां यथानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे नमो नमः अद्याभिरमंतु भवंत
इति भर्त्रादीन् विसर्जयेत् विश्वेदेवाः प्रीयंतामिति देवान् विसर्जयेत् ततः पूर्वाभिमुखीभूय देवताभ्यः

पितृभ्यश्चेतिपठितंकृत्वा दक्षिणामुखीरत्नादीपंनिर्वाप्य हस्तौपादौप्रक्षाल्याचम्य प्रमादात्कुर्वतांक
र्मप्रच्यवेताध्वरेषुयत् स्मरणादेवतद्विष्णोः संपूर्णंस्यादितिश्रुतिः ततोबलिदानं गोभ्योऽन्नंनमः
श्वभ्योऽन्नंनमः काकेभ्योऽन्नंनमः चंडालेभ्योऽन्नंनमः द्वारपालेभ्योऽन्नंनमः भूमिपालेभ्योऽन्नं
नमः अशेषजीवेभ्योऽन्नंनमः क्षेत्रपालेभ्योऽन्नंनमः यमायधर्मराजायमृत्यवेचांतकायच वैव
स्वतायकालायदध्नायपरमेष्ठिने वृकोदरायभीमायचित्रगुप्तायवैनमः पाशहस्तहतांतायप्रेताधि
पतयेनमः धर्मराजायबलिंनमः ततोस्मद्गोत्रादित्रयअस्मत्पित्रादित्रयाणांकृतस्यमहालयनैमित्तिक
श्राद्धस्यसांगफलप्राप्त्यर्थमिदंदक्षिणाद्रव्यंयथानामगोत्रायब्राह्मणायतुभ्यमहंसंप्रददे इतिदानप्र
तिष्ठांदत्वा श्राद्धीयवस्तूनिब्राह्मणायप्रतिपादयेत्पिंडादिकंगोभ्योदद्यात् अंभसिवाक्षिपेत् इतिस्त्री·
कर्तृकपार्वणश्राद्धविधिः स्मृतिसंग्रहेविधवायास्तुविशेषः चत्वारिपार्वणानीहविधवायाः सदैवहि
स्वभर्तृश्वशुरादीनांमातापित्रोस्तथैवच ततोमातामहानांचश्राद्धदानमुपक्रमेदितितथा स्वसॄ·
णांचविशेषेणमातामह्यास्तथैवचेत्यपिपाठः तस्याः षड्दैवत्येविशेषः स्वभर्तृप्रभृतित्रिभ्यः स्वपितृ
भ्यस्तथैवच विधवाकारयेच्छ्राद्धंयथाकालमतंद्रिता अत्रचैकपाकः विश्वेदेववदेकतंत्रम् विधवा
स्वयंसंकल्पंकृत्वाश्राद्धमन्यद्वाराकारयेदितिप्रयोगपारिजातः ॥ अथस्त्रीकर्तृकैकोद्दिष्टश्राद्ध
प्रयोगः तत्रादौस्त्रीस्नाताशुचिःशुक्लवस्त्रयुगमधरा मध्याह्नेश्राद्धदेशंस्वसमीहितंपंचगव्योपले
पितंज्वलदंगारशोधितंगोमृत्तिकयाब्जादितंयथाप्रदेशंस्यादितिश्राद्धीयद्रव्यंज्वलितप्रदीपैर्विकीर्ण·
गौरसर्षपंकृत्वा तत्रगत्वासनेप्राङ्मुखीचोपविशेत् सिद्धमन्नमितिपाचकीएवंवदेत् ततः अपवित्रः
पवित्रोवासर्वावस्थांगतोपिवा यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिरितिमंत्रेणश्राद्धीयद्रव्याण्या
सिंच्य शंखचक्रधरंदेवंद्विभुजंपीतवाससं प्रारंभेकर्मणांविप्रपुंडरीकंस्मरेद्धरिमितिविष्णुंभगवंतमात्मा ग
यायैनमः गदाधरायनमः ततःकुशतिलजलान्यादाय अमुकगोत्राऽमुकदेवीअहं अमुकगोत्रस्यामुकश
र्मणः पत्युःसांवत्सरिकैकोद्दिष्टश्राद्धमहंकरिष्येइतिसंकल्पंविधाय देवताभ्यःपितृभ्यश्चमहायोगिभ्यए
वच नमःस्वधायैस्वाहायैनित्यमेवनमोनमः इतिविप्रमुखोभूत्वाततोदक्षिणामुखीपातितवाम
जानुः सती नमोनमोऽद्यामुकगोत्रास्मत्पतेः अमुकशर्मणःसांवत्सरैकोद्दिष्टश्राद्धेइदमासनंतेनमः
इतिपितृतीर्थेनमोटकद्वयमासनंदक्षकरांगुष्ठमूलेनदद्यात् ततोअर्घ्यपात्रेतूष्णींतिलान्क्षिप्य प
वित्रजलतिलगंधपुष्पाणिदत्वा अर्घ्यपात्रंवामहस्तेकृत्वा तत्रस्थंपवित्रमुत्तराग्रंभोजनपात्रेधृत्वा तदु
परिकिंचिदुदकांतरंदत्वा मोटकान्यादाय नमोऽद्यामुकगोत्रपतेअमुकशर्मन्सांवत्सरिकैकोद्दिष्टश्रा
द्धएषतेहस्तार्घ्योनमः इत्यर्घ्यपात्रंपवित्रोपरिदद्यादुत्सृजेत् ततोवसिष्ठजलपवित्रसहितमर्घ्यपात्रंमास
नभागेयत्वेस्थानमसीतिन्युब्जीकुर्यात् ततोगंधादिदानंकृत्वा मोटकतिलजलान्यादाय नमोऽमुकगोत्रास्म
त्पते अमुकशर्मन्सांवत्सरिकैकोद्दिष्टश्राद्धेएतानिगंधार्घ्यपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितेनमः
ततोजलेनासनसहितंवेष्टयित्वामंडलंकुर्यात् ततः श्राद्धीयान्नभागसहृतव्यंजनतिलजलान्यादाय
इदमन्नमेतद्भूमिरित्यभ्योनमः इतिभूमावुत्सृजेत् ततोहस्ताभ्यांनाम्नादिपात्रस्थमन्नमादायस्वपतिंध्या
त्वा परिवेष्टयेत् तत्रहुतव्यंजनजलादीन्युपनीय अन्नोपरिमधुदत्वा विश्वहारामधुवातेतिऋचंपठित्वा
मधुमधुमधु इतिचस्वयमुच्चार्यउभाभ्यांव्यस्तहस्ताभ्यांभोजनपात्रमालभ्यतदन्नममृततयाविचिंत्य
इदमन्नं इदमापः इदमाज्यं इदंहवि रित्यन्नादि
कालकव्यंरक्षमदीयमितिपठित्वादक्षिणहस्तमुत्थाप्य मोटकजलादीन्यादाय नमोऽद्यामुकगोत्रास्मत्पते
तु प्रत्येकमंगुष्ठमारोप्यान्नोपरितिलान्विकिरेत् इदमन्नंसोपकरणंतेनमः इत्यन्नमुत्सृजेत् ततोवामहस्तेनान्न
मुकशर्मन्सांवत्सरिकैकोद्दिष्टश्राद्धे इदमन्नं

तिलमुत्थाप्य अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् तत्सर्वमच्छिद्रमस्तु इति पठित्वा भूमौ तिलान्वि
कीर्य दर्भेषूपविश्य नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे नमः पिनाकहस्ताय वज्रहस्ताय वै नम
इति नीलकंठस्तुतिं पठित्वा रुचिस्तवादिकं विप्रद्वारा श्रावयेत् तत उच्छिष्टसन्निधौ वा स्थले कुश-
त्रयं भूमिस्थं तिलजलेन प्रोक्ष्य सतिलजलप्रोक्षितं सव्यंजनमसंस्कृतमन्नमादाय नमो अग्निदग्धाश्च
ये जीवा येऽप्यदग्धाः कुले मम भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिं पठित्वा कुशोपरि कुशादिना
विकिरेत् तत आचम्य हरिं स्मृत्वा दक्षिणामुखी पिंडस्थाने प्रादेशमात्रं परिमाय करद्वयतर्जन्यङ्गु-
ष्ठधृतमूलया दर्भपिंजूल्या तदुल्लिख्य दर्भपिंजूलीमुत्तरतः क्षिपेत् ततस्तत्र ज्वलदंगारं भ्रामयि
त्वा दक्षिणस्यां क्षिपेत् ततस्तत्र रेखोपरि छिन्नमूलकुशत्रयमास्तीर्य प्राङ्मुखी देवताभ्यः पितृभ्य
श्च महायोगिभ्य एव च नमः स्वधायै स्वाहायै नित्यमेव नमो नमः इति विप्रमुखाच्छ्रुत्वा ३ ततो दक्षि
णामुखी पुटके जलतिलगंधपुष्पाणि कृत्वा दक्षकरेण मोटकतिलजलान्यादाय नमोऽद्यामुक-
गोत्रास्मत्पतेऽमुकशर्मन्सांवत्सरिकैकोद्दिष्टश्राद्धे पिंडस्थाने अत्रावनेनिक्ष्व ते नमः इति कुशोपरि अ
वनेजनजलं दद्यात् शेषमवशेषयेत् ततः तिलास्तोयं तथा क्षीरं धूपो दीपबलिस्तथा मधुः सर्पि
स्तमाशुक्लोत्कृष्टं गोपिंडसंभव इति तिलमधुघृतयुतान्नेन पिंडं निर्माय मधुघृताभ्यां पिंडमवदाय
मोटकतिलजलान्यादाय नमोऽद्यामुकगोत्रास्मत्पतेऽमुकशर्मन्सांवत्सरिकैकोद्दिष्टश्राद्धे एष ते पिं
डो नमः इत्यवनेजनकुशोपरि वामान्वारब्धदक्षिणपाणिना पिंडं दद्यात् ततो द्विराचम्य हरिं स्मृत्वा
तत उत्तराभिमुखी आसं नियम्य पतिं ध्यायन्ती दक्षिणाभिमुखी भूयात् ततो दत्तावशिष्टजलयुतमव
नेजनपात्रमादाय मोटकजलादीनि चादाय नमोऽमुकगोत्रास्मत्पतेऽमुकशर्मन्सांवत्सरिकैकोद्दिष्ट
श्राद्धे अत्र प्रत्यवनेनिक्ष्व ते नमः इति प्रत्यवनेजनं दद्यात् ततो नीवीं विस्रस्याचम्य दक्षिणाभिमुखी
वामेन पाणिना सूत्रमादाय दक्षिणेन पिंडोपरि निधाय नमोऽद्यामुकगोत्रास्मत्पतेऽमुकशर्मन्सां
वत्सरैकोद्दिष्टश्राद्धपिंडोपरि एतद्वासस्ते नमः इति मोटकतिलजलेन सूत्रमुत्सृजेत् अथ पिंडे गंधादि
दानं ततः शिवा आपः सन्तु इति जलं सौमनस्यमस्तु पुष्पं अक्षतं चारिष्टमस्त्विति तंडुलानवने
जनपात्रे निःक्षिप्य मोटकादीन्यादाय नमोऽद्यामुकगोत्रास्मत्पतेरमुकशर्मणः सांवत्सरिकैकोद्दि
ष्टश्राद्धे दत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतामित्यक्षय्योदकं दद्यात् ततः पिंडोपरि अघोराः पितरः सन्तु
इति पूर्वाग्रां वारिधारां दद्यात् ततः पूर्वाभिमुखी कृतांजलिः नमो नमः गोत्रं नो वर्द्धतां दातारो नोऽभिव
र्द्धन्तां वेदाः सन्ततिरेव च श्रद्धा च नो मा व्यगमत् बहु देयं च नोऽस्त्विति अन्नं च नो बहु भवेत् अतिथींश्च
लभेमहि याचितारश्च नः सन्तु मा च याचिष्म कंचन एताः सत्याशिषः सन्तु इति प्रार्थयेत् ततो दक्षिणा
मुखी पिंडोपरि सपवित्रं कुशत्रयं दक्षिणाग्रमास्तीर्य तदुपरि दक्षिणाग्रां जलधारां दद्यात् ततो नम्री
भूय पिंडमाघ्रायोत्थापयेत् पिंडाधारकुशानुल्मुकं च वह्नौ क्षिपेत् ततोऽर्घ्यपात्रमुत्तानीकृत्य दक्षिणा
दानं अद्यामुकगोत्रस्यास्मत्पतेरमुकशर्मणः कृतैतत्सांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थं रक्तिकादि
मितं रजतं चंद्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे ततोऽभिरम्यतामिति विसर्जनं
ततः पूर्वाभिमुखी भूय देवताभ्य इति त्रिर्विप्रद्वाराभिः स्मरेत् ततो दक्षिणामुखी हस्ताभ्यां दीपं निर्वापये
त् हस्तौ पादौ प्रक्षाल्याचम्य बलिदानं कुर्यात् गोभ्यो अन्नं नमः श्वभ्योऽन्नं नमः काकेभ्योऽन्नं नमः द्वा
रपालेभ्योऽन्नं नमः वातुलेभ्योऽन्नं नमः अशेषजीवेभ्यो अन्नं नमः क्षेत्रपालेभ्योऽन्नं नमः इति पूर्वामु
खीं दद्यात् ततो दक्षिणामुखी भूत्वा यमाय बलिं नम इति ततः पूर्वाभिमुखी भूत्वा प्रमादात्कुर्वतां कर्म
प्रच्यवेताध्वरेषु यत् स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ततो दानप्रतिष्ठां दत्वा आज्ञीयवस्त्रं ति

विप्राय प्रतिपादयेत् अंभसि वा पिंडादिकं निःक्षिपेत् ततो बंधुयुतः स्वयं भुंजीत इति स्त्रीकर्तृकैकोद्दिष्टश्रा
द्धविधिः ॥ अथ शूद्रस्य पार्वणश्राद्धप्रयोगः स चोपदेष्टृब्राह्मणवशादनियतशाखया कार्य इति स्मृतिकौमु
द्यां मदनपालः तन्न अनियतस्य धर्मत्वायोगात् तेन शूद्रा वाजसनेयिन इति गौडग्रंथे दत्तोक्तेः हरिहरभाष्या
दिसंवादाच्छिष्टाचाराच्च माध्यंदिनशाखयोच्यते तत्र कर्ता पूर्वेद्युर्निरामिषं सकृद्भुक्त्वा प्रदोषे परेद्युः प्रातर्ब्राह्म
णगृहं गत्वा मंडले तमुपवेश्य सव्येन दक्षिणं जान्वालभ्य शूद्रः प्रणतिपूर्वकमिति प्रणम्य देशकालौ संकी
र्त्य मम करिष्यमाणपार्वणश्राद्धे पित्रादित्रयमातामहादित्रयविश्वेदेवार्थं त्वामहं निमंत्रये यद्वा क्षणं कृत्वा भव
द्भिः प्रसादः कार्य इति फलं तांबूलं वा दत्त्वैवमेकं द्वौ वा विप्रौ निमंत्र्य तथा आमंत्रितोऽसीति वा तेनोक्ते अक्रो
धनैः शौचपरैः सततं ब्रह्मवादिभिः भवितव्यं भवद्भिश्च मया च श्राद्धकर्मणि एवं दिने तु सर्वायासविनि
र्मुक्तैः कामक्रोधविवर्जितैः भवितव्यं भवद्भिश्च श्वोभूते श्राद्धकर्मणि इति जपेत् शृणुयाद्वाप्येवमपरम
पित्राक्षणं कृत्वा ततस्तथैवापसव्येन वामं जान्वालभ्य वाच्यः मम करिष्यमाणश्राद्धे पितृस्थाने त्वामहं नि
मंत्रये पूर्ववत्फलं तांबूलं दत्त्वा अक्रोधनैरित्यादि पठेत् एवं पितामहस्थाने प्रपितामहस्थाने मातामहा
दित्रयस्थाने इति षट् विश्वेदेवपक्षे चत्वार इति दश तत्र वैश्वदेवपक्षेऽष्टौ अथवा एको देवतंत्रे पित्रादित्र
ये एको मातामहादौ चैक इति त्रयो वा यद्वा पित्रादिषण्णामेकः देवे चैकः इति द्वौ तदा मातृवत्षोढा विभ
ज्य यद्यपि दर्शे मातृमध्ये नवदैवत्यं मातामहयुतं द्वादशदैवतं वा श्राद्धमुक्तमस्ति तथापि देशाचाराद्व्य
वस्था षट्दैवतमेव तत्र बहुसंमतं सर्वथोक्तपात्रविप्रालाभे दर्भमयान्षट् विधाय श्राद्धं प्रैषप्रश्नोक्तिपूर्वं
कृत्वा तदा मात्रं विप्राय दद्याद् अग्नौ जले वा क्षिपेत् सर्वत्रामंत्रितोऽसीति प्रश्नोक्तिरक्रोधनैरित्यादि जपश्च त
तः परेद्युः कर्ता प्रातः स्नानोपलेपनं कृत्वा सचैलः स्नातः श्राद्धसामग्रीं संपाद्य दिनस्य षण्मुहूर्तानंतरं द्वि
जानाहूय तेषामनिषिद्धदिने श्मश्रु आदिकर्म कारयित्वा स्नानीयजलं तैलामलकोद्वर्तनादि प्रेषयित्वा
मध्याह्ने स्नातानागतान् स्नात्वा जलक्लिन्नपाण्यागतं दृष्ट्वा सुस्वागतमिति तैरुक्ते द्विराचम्य देशकालौ।
स्मृत्वा अस्मत्पितृपितामहप्रपितामहानां काश्यपगोत्राणां अमुकामुकदासानां वसुरुद्रादित्यस्वरूपा
णां तथा चैवं मातामहप्रमातामहवृद्धप्रमातामहानां पार्वणश्राद्धं सदैवतं सपिंडं पार्वणविधिनामेन
हविषा सद्यः करिष्ये इति संकल्प्य गोमूत्रगोमयाभ्यां द्वारेप्रदेशमात्रमुत्तरदक्षिणयोश्चतुरस्रं वृत्तं
च मंडलं कृत्वा तत्र कुशान् देवे यवान् पित्र्ये तिलान् क्षिपेदिति मदनपालः ततस्तत्र शूद्रस्याभ्युक्षणम
मिति वचनादभ्युक्षणं कृत्वोत्तरेउदङ्मुखः सव्येन पुरूरवार्द्रवसंज्ञा विश्वेदेवाः स्वागतमिति पृष्ट्वा
तैर्नोक्ते गंधपुष्पैरर्च्य सव्यं शूद्रायेति वचनात् आदौ सव्यं ततो दक्षिणमिति पादौ संप्रक्ष्य पुरूरवार्द्रव
संज्ञा विश्वेदेवा इदं वः पाद्यमर्घ्यं च नम इति पादयोर्जलं दत्त्वा एवं देवद्वितीयविप्रेऽपि दत्त्वा ततः पित्र्ये वि
प्रे कृतापसव्योऽस्मत्पिता काश्यपगोत्रामुकदासवसुरूपेदं पाद्यमर्घ्यं च नमः एवं पितामहे रुद्ररूप
प्रपितामहे आदित्यरूपेति ज्ञेयं एवमेव मातामहादित्रयेऽपि ज्ञेयं ततो द्विराचांतस्तानाचम्य देवे द्वौ प्रा
ङ्मुखौ देवेभ्यो नमः इदमासनमास्यतां इति वामेनासनं स्पृष्ट्वा दक्षिणे विप्रानुपवेश्य एवं पित्र्येऽपस
व्येनोदङ्मुखानुपवेश्य ततः प्राच्यां मातामहानां चैवमेव तंत्रे कार्यं श्राद्धारंभे वसाने च पादशौचे तथा
र्चने विकिरे पिंडदाने च द्विराचमनमिष्यते ततः कर्मपात्रे सव्येन जलमादाय गंधपुष्पकुशान् क्षिप्त्वा
तज्जलेन अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा यः स्मरेत्पुंडरीकाक्षं स बाह्याभ्यंतरः शुचिः पुंडरीका
क्षाय नमः ॥ इति श्राद्धीयद्रव्यं प्रोक्ष्य तिला रक्षंत्वसुरान् दर्भा रक्षंतु राक्षसान् पंक्तिं वै श्रोत्रियो रक्षेद
तिथिः सर्वरक्षकः इति तिलान्विकीर्य प्रतिद्विजं दीपान् दद्यात् आमान्नादीनां पवित्रतास्तु केचि
त्सप्त व्याधा दशार्णेषु मृगाः कालंजरे गिरौ चक्रवाकाः सरिद्वीपे हंसाः सरसि मानसे तेऽपि जाताः

कुरुक्षेत्रे त्राह्मणा वेदपारगाः प्रस्थिता दूरमध्वानं पूर्वकिमवसीदथ अमूर्तानां समूर्तानां पितॄणां दिव्यतेज·
सां नमस्यामि सदा तेषां ध्यायिनां योगचक्षुषां श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं जनार्दनं वस्वादीन् पितॄन् ध्या
त्वा ततः श्राद्धं प्रवर्तयेत् इति जपेत् ततो निवीतवता अपसव्येन देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च नमः
स्वधायै स्वाहायै नित्यमेव नमो नम इति त्रिर्जप्त्वा ततो देशकालौ स्मृत्वा काश्यपगोत्राणाम् अस्मत्पितृपितामह
प्रपितामहानाममुकामुकदासानां तथा द्वितीयकाश्यपगोत्राणाम् अस्मन्मातामहप्रमातामह वृद्धप्रमाताम।
हानाममुकामुकदासानां सदैवमुपक्रान्तं पार्वणश्राद्धमहं करिष्ये कुरुष्वेति विप्रैरुक्तो दक्षिणजान्वस्य पित्रा
दित्रयमातामहादित्रयपार्वणश्राद्धसंबंधिनः पुरूरवार्द्रवसंज्ञका विश्वेदेवा इदमासनं वो नमः इति कुशपत्र
द्वयमासनं दद्यादिति टोडुरपद्धतौ आसनदाने षष्ठी प्रोक्ता देवे क्षणः क्रियतामिति कुशं दत्त्वा तथेति तेनो
क्ते प्राप्नोमि भवान्नित्याह प्राप्नुवानीति विप्रः एवं द्वितीयदैवेऽपि कृत्वा ततोऽपसव्येन वामजान्वाच्य काश्यप
गोत्रास्मत्पितरमुकदास वसुरूप इदमासनं ते स्वधा नम इति वा षट्ट विभज्यासनं दद्यात् सतिलद्विगुणभुग्नान्
पित्रे दत्त्वा पित्रे क्षणः क्रियतामित्यादि प्राग्वत् एवं पितामहादौ मातामहादौ च सव्येन देवानावाहयिष्ये
इति पृष्ट्वा आवाहयेत्यनुज्ञातः देवद्विजाग्रे पृष्टं गृहीत्वा आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ये यत्र विहि
ताः श्राद्धे सावधाना भवन्तु ते इति मन्त्रेण पुरूरवार्द्रवसंज्ञका विश्वेदेवा आगच्छन्त्वित्युक्त्वा पादादिमूर्धान्तं य
वान्विकिरेत् ततो हस्तोदकं सयवं प्रतिपदार्थं ततोऽपसव्येन काश्यपगोत्रानस्मत्पितृपितामहप्रपितामह
हान् मातामहादीनपि पृथक् आवाह्य काश्यपगोत्रास्मत्पितरमुकदास वसुरूप आगच्छ पितामह रुद्ररूप आग
च्छ प्रपितामहादित्यरूप आगच्छ एवं मातामहादित्रयेऽपि ततो देवाग्रे सव्येनैकपात्रे कुशपवित्रे कृत्वा देव
तीर्थेन देवेभ्यो नम इति जलं नम इति यवान् गंधपुष्पे च क्षिपेत् ततोऽपसव्येन पित्रे राजतताम्रखड्गपालाशा
दिमयपात्रे एकं द्वयोर्वा द्वे द्वे दक्षिणाग्रे पवित्रे कृत्वा अद्भ्यो नम इति जलं तिलेभ्यो नम इति तिलान् गंध
पुष्पाणि च क्षिप्त्वा अर्घ्यपात्राणि संपन्नानीत्युक्त्वा सुसंपन्नानीति विप्रैरुक्तो सव्येन देवकरे पवित्रं दत्त्वा दक्षि
णहस्तेनाच्छाद्य पित्रादित्रयमातामहादित्रयश्राद्धसंबंधि पुरूरवार्द्रवसंज्ञका विश्वेदेवा एष वोऽर्घो नम
नम इति दत्त्वा अद्भ्यो नम इति संस्रवं दर्भमध्ये द्वितीये जलं दत्त्वा पात्रे पवित्रादि दत्त्वा देवेभ्यः स्थानमसि
इत्युत्तरतो न्युब्जं कुर्यात् केचिदेतद्दैवे नेच्छन्ति न्युब्जतानेति टोडुरपद्धतौ ततोऽपसव्येनाऽन्यकरे दक्षि
णाग्रं पवित्रं दत्त्वा काश्यपगोत्रास्मत्पितरमुकदास एष तेऽर्घ्यः स्वधा नम इति पितृतीर्थेन दत्त्वाऽद्भ्यो नम
इति संस्रवानभिमंत्र्य तत्र पवित्रादि धृत्वा एवं पितामहप्रपितामहाभ्यां मातामहादिभ्यश्च दद्यात् ततः
प्रथमे पात्रे संस्रवानेकीकृत्य पितृवामे कर्तुर्दक्षिणे पितृभ्यः स्थानमसि इति न्युब्जं कृत्वा दक्षिणाग्रानोतं
न चालयेत् ततः सव्येन जलं दत्त्वा विश्वेदेवा एष गंधो वो नमः इमानि पुष्पाणि वो नमः एवं धूपदीपाच्छा·
दन यज्ञोपवीतालंकारतांबूलानि दत्त्वा अपसव्येन काश्यपगोत्रास्मत्पितरमुकदास एष ते गंधो नमः एवं
पुष्पधूपदीपाच्छादनालंकारतांबूलानि दत्त्वैवं पितामहप्रपितामहाभ्यां दद्यात् एवमेव मातामहादिभ्योऽपि दद्या
त् ततोऽर्चनपूर्णतां वाचयित्वा देवाग्रे भुवं संमृज्य पालाशादिपत्रावलीन्यस्य गौरमृद्भस्मादिना वा मंडलं कृ·
त्वा आज्ञीयामान्नादग्रे गृहीत्वा अग्नौ करिष्ये इति पंक्तिमूर्द्धन्यं पृष्ट्वा कुरुष्वेत्युक्तो सव्येनाग्निद्विजकरं पर्युक्ष्य द
र्भानास्तीर्य विधानदर्भेण द्विरवदायाग्नये कव्यवाहनाय नमः इति हुत्वेदमग्नये न ममेति त्यक्त्वा पुनरादा·
य सोमाय पितृमते नम इदं सोमाय पितृमते अपसव्ये पक्षे सोमाहुतिः पूर्वं अग्न्याहुतिरुत्तरा इति हुत्वा
हुतशेषं पिंडार्थमवशेषयेत् पितामहादि मातामहादि पात्रेषु तूष्णीं दद्यात् ततो देवेभ्यो हुतशेषमन्नं दत्त्वा
पात्राण्यभिघार्य देवपूर्वं भाजनं चतुरंगुलादि दक्षिणसमं वा दत्त्वा श्रोत्रदैवे दक्षिणजान्वाच्योपवीती दक्षिणोत्ता
नसव्यपाणिभ्यां अंगुष्ठं दत्तानि तिलान्यवान्वा वक्ष्योदकं स्पृष्ट्वा एवं प्रतिपात्रं कृत्वा वामकरेण दैवप

नेधाय दक्षिणेकुशयवजलान्यादायपित्रादिभ्यमातामहादिभ्यश्राद्धसंबंधीपुरूरवार्द्रवससंज्ञकाविश्वे
देवा इदंव आमान्नंसपरिकरंगेयेयंभू गदाधरोभोक्ता अयंच ब्राह्मणगृहीता ब्रह्मब्रह्मरूपमामं नमः स्व
र्णपात्रस्य मन्नयवटछायास्थं पुरूरवार्द्रवसंज्ञकेभ्योविश्वेभ्योदेवेभ्यो वयमन्नयज्ञस्यार्थेसंप्रददे स्वाहा
नमः नमम इदमामं सोपस्करमम तद्रूपेणसंपद्यमानं हव्यं नमः काश्यपं विश्वेभ्यायेदं दत्तमक्षय्यमा।
स्तु गयागदाधरः प्रीतोभवतु ततोपसव्येनदक्षिणाभिमुखःकुशतिलजलान्यादाय वामेनपात्रंस्पृष्ट्वा
वामंजान्वाच्य काश्यपगोत्रास्मत्पितरमुकदासैतत्ते आमान्नंसपरिकरं गयेयं भूरित्यादि रजतपात्रस्थ
मन्नयवटछायास्थंकाश्यपगोत्रायास्मत्पित्रेऽमुकदासायवसुरूपायेदमामं सोपस्करमन्नयज्ञस्यार्थं
संप्रददे स्वधानमः अमृतरूपेणस्वधासंपद्यमानंकव्यंनमः काश्यपामित्यादिप्राग्वत्पठेत् एवंपिताम
ह प्रपितामहयोर्मातामहादिभ्यश्चदद्यात् असंस्कृतप्रमीतेभ्य एषपिंड इति विकिरं दत्वा आमान्नदा
य अग्निदग्धेभ्योऽग्निदग्धेभ्य एषउच्छिष्टपिंडोनम इति सोदकमामंपिंडं दत्वा तिलोदकं प्रदत्वा मधुम
धुमधुरितित्रिर्जपेत् अथपिंडदानं तच्चगुरुपाकेन पायसेन सक्तुभिर्मूलेन फलेन वा कार्यं पिंडाः
र्थं वेदिं कृत्वा वामंजान्वाच्यापसव्येन दर्भमूलेन दक्षिणाग्ररेखांकृत्वैवं द्वितीयांकृत्वाऽपः स्पृष्ट्वा रे
खायेउल्मुकंनिधायोदपात्रेणाथरेखामूलमध्याग्रेषु काश्यपगोत्रास्मत्पितरमुकदासावनेनिक्ष्वैवं
पितामहप्रपितामहयोर्दत्वा द्वितीयरेखायांमातामहादिभ्यस्त्रिभ्योदत्वा सकृदाच्छिन्नकुशान्दक्षि
णाग्रान्रेखाद्वयेनिक्षिप्य मध्वाज्यसर्वव्यंजनोपेतमन्नमशेषकरणशेषसहितंपात्रेकृत्वा षट्पिं
डान्कृत्वा पितृतीर्थेन काश्यपगोत्रास्मत्पितरमुकदासएतत्तेऽन्नंस्वधायएषते पिंडोनम इति वा दत्वा
इदंपित्रे ततःकुशानेतर्षाय काश्यपगोत्रास्मत्पितामहेत्यादिना त्रिभ्योदत्वा लेपभुग्भ्योदर्भमूले।
पुष्करंमार्जयित्वैवंमातामहादित्रिभ्योदत्वा करौप्रक्षाल्याचम्य उदङ्मुखत्वा मंत्रेणप्राणानायम्य वसं
तायनमः ग्रीष्मायनमः वर्षाभ्योनमः शरदेनमः हेमंतायनमः शिशिरायनमइति षट्ऋतून्
सव्येननमस्कृत्वापसव्येनपितृभ्योनम इत्यंजलिंबध्वैव मातामहेभ्योनमइति ततोवामावर्तेनो
दङ्मुखः श्वासंनियम्यपुनरावृत्यपितृभ्योनमः मातामहेभ्योनमइतिनत्वा काश्यपगोत्रास्मत्पित
रमुकदासप्रत्यवनेनिक्ष्वेतिप्राग्वत् षट्सुपिंडेषुप्रत्यवनेजनं दत्वा नीवींविस्रस्य पितृभ्योनमः
मातामहेभ्योनम इतिनत्वा पितृभ्योनम मातामहेभ्योनम इतिप्रतिपिंडंसूत्राणि दत्वा पितृभ्योन
मः मातामहेभ्योनमइतिप्रत्यवने जनशेषंपिंडपात्रक्षालनजलंपितृपिंडेषुनिषिंच्य मातामहे
भ्योनमः ततोदेवताभ्यः पितृभ्यश्चेतिविर्जोत्वा पिंडेषुपित्रादिनाम्ना गंधपुष्पधूपदीपनैवेद्यफल
मूलतांबूलदक्षिणांनिवेद्य कर्मपात्रंसप्रोक्षितमस्तु ततःसव्येनशिवाआपःसंतु इतिजलं सौम
नस्यमस्त्विति पुष्पाणि अक्षतंचारिष्टमस्त्वित्यक्षतान् अपसव्येनपितृभ्योनमः मातामहेभ्योनमः
शिवाआपः संत्वित्यादिदत्वा स्वमूर्ध्नि दीर्घमायुरस्तु पुष्टिरस्तु यच्छ्रेयस्तदस्तु यत्पापंतत्प्रतिह
तमस्तु भूमौद्विपदचतुष्पदेभ्यः शांतिरस्तु अस्त्विति द्विजोक्ते ततः पुरूरवार्द्रवसंज्ञेभ्योविश्वेभ्यो
देवेभ्योयद्दत्तमामान्नादितदक्षय्यमस्तु एवमपसव्येन काश्यपगोत्रस्यपितरमुकदासस्यदत्त
मित्यादि अक्षय्यमस्तु एवंपितामहप्रपितामहयोर्मातामहादीनांचाक्षय्यमस्त्विति विप्रोक्तिः अघोरा
पितरः संतु अघोरामातामहाः संतु गोत्रंनोवर्द्धतां दातारोनोभिवर्द्धतां संततिश्च श्रद्धाचनोमाव्य
गमद्बहुदेयंचनोस्तु अन्नंचनोबहुभवेदतिथींश्चलभेमहि याचितारश्चनः संतु माचयाचिष्मकं
चन एताः सत्याशिषः संतु सन्त्विति विप्राः ततःपित्रादिभ्योमातामहादिभ्यश्चस्वधांवाच्यमा
अस्तुस्वधेतिविप्राः कुशान्पिंडेषुन्यस्यार्घपात्रमुत्तानंकृत्वा देवेस्तुवर्णी पितरे रजतं दक्षिणां दत्वा

नानानामगोत्रेभ्यः आमन्निहिरण्यं वा दत्वा पिंडान्ब्रह्मणस्याघ्राय विश्वेदेवाः प्रीयंतामिति ब्रूहीत्युक्त्वा वाचयित्वा एवं पित्रे कृत्वा सर्वेन स्वस्ति भवंतो ब्रुवंतु स्वस्तीत्युक्ते संपूर्णतां वाचयित्वा कुशैः कृत्वा विष्टरं तु पितरः विश्वेदेवैः सहैत्यु हास्यमंडलेषु दक्षिणी कृत्य विसर्जयेत् ततो वलिं वैश्वदेवादि नित्यं समापयेत् ॥

इति शूद्रकमलाकरोक्तं शूद्रस्य पार्वणश्राद्धम् शुभमस्तु ॥

अथ शूद्रस्यामंत्रकैकोद्दिष्टश्राद्धं तत्रैकोद्दिष्टश्राद्धलक्षणमुच्यते एकोद्दिष्टं देवहीनमेकार्घ्यैकपवित्रकं आवाहनाग्नौकरणरहितं त्वपसव्यवदिति अत्र विशेषनिमंत्रणे विशेषमाह प्रचेताः पादं वै दक्षिणं विप्रः सव्यं वै क्षत्रियस्तथा पादावादाय वैश्यो द्वौ शूद्रः शयानस्तु दर्शकमिति पूर्वेद्युरेव परेद्युर्वा प्रातरेव कर्ता मंत्रवर्जं कृतप्राणायामो वाऽकृतप्राणायामः विसृज्य स्वस्त्यपसव्येन वामं जान्वाच्य काश्यपगोत्रस्यास्मत्पितरमुकस्य श्वः करिष्यमाणैकोद्दिष्टश्राद्धे भवद्भिः क्षणो देय इत्युक्त्वार्घ्यं प्रणिपत्य तांबूलं दत्वा ब्राह्मणं भीवेकशावटुं वा तत्र अक्रोधनैः शौचपरैरित्यादि नियमान् श्रावयेत् ततो मध्याह्नसमये गोमयेन वर्तुलमंडलं विधाय तत्र विप्रमाहूय काश्यपगोत्रस्य पितरमुकदासस्यैकोद्दिष्टश्राद्धे इदं ते पाद्यं एष पादार्घ इति वा पादौ प्रक्षाल्य प्रणम्य वासनोपरि इदमासनं ते नम इत्यासनोपर्युपवेशयेत् ततः श्राद्धसामग्रीं संपाद्य स्वागतं पृष्ट्वा सुस्वागतमिति प्रत्युक्ते द्विराचम्य हरिं स्मृत्वा देशकालौ स्मृत्वास्मत्पितरमुकदासस्य काश्यपगोत्रस्यैकोद्दिष्टश्राद्धं करिष्ये कुरुष्वेति प्रत्युक्ते अपसव्येन देवताभ्यः पितृभ्यश्चेति जप्त्वा काश्यपगोत्रं पितरममुकदासमावाहयिष्ये आवाहयेत्युक्ते मूर्धादिपादांतं तिलान्विकीर्य काश्यपगोत्रास्मत्पितरमुकदासेहागच्छ ततएकस्मिन्पात्रे दक्षिणाग्रपवित्रे धृत्वा अद्योनम इति जलं तिलेभ्यो नम इति तिलान् गंधपुष्पाणि च अर्घपात्रं संपन्नमिति पृष्ट्वा संपन्नमिति प्रत्युक्ते विप्रकरे पवित्रं दत्वा काश्यपगोत्रास्मत्पितरमुकदास एष ते अर्घ्यः स्वधा नमः अद्योनम इति संस्रवानभिमंत्र्य तत्र पवित्रादि दत्वा पित्रे स्थानमसीति न्युब्जं कुर्यात् दक्षिणं तत्र चालयेत् ततो गंधादिदानं काश्यपगोत्रास्मत्पितरमुकदास एष ते गंधः इमानि पुष्पाणि ते नमः एवं धूपदीपाच्छादनालंकारतांबूलादि दद्यात् अर्चनपूर्णतां वाचयित्वा पालाशादिपत्रावलिन्यस्य गौरसर्षपस्य जलादिना मंडलं कृत्वा श्राद्धीयान्नादग्रं गृहीत्वा अग्नौकरणाभावे तत्संसिद्धिजकरे जले वा दत्वा भूस्वामिने अन्नं नम इति दत्वा ततः श्राद्धीयमामान्नं सपरिकरं गायेयं भूः गंगायरोभोक्ता आमं च ब्रह्म ब्रह्मगृहीत्वा ब्रह्मरूपमामं नः संकल्पितं रजतपात्रस्य मत्वयवटकायास्थं काश्यपगोत्रायास्मत्पित्रेमुकदासायेदंमाममममतद्रूपेणाक्षय्यतृप्त्यर्थमहं संप्रददे स्वधा नमः आमजरूपेण संपद्यतां ततो अग्निदग्धेभ्यो नाग्निदग्धेभ्यो नमः इति विकिरं पिंडरूपेण दद्यात् तिलोदकं दत्वा मधुमधुमधि विर्जिता समव्याधादष्टाशीतिद्विजादिजाता पिंडपातनार्थं वेदिं कृत्वा दर्भमूलेन दक्षिणाग्रां रेखां कृत्वा उल्मुकं च स्थापयित्वा रेखायां कुशान्दत्वा अवनेजनं विधाय काश्यपगोत्रास्मत्पितरमुकदासात्रावनेनिक्ष्वेति दत्वा प्रत्यवनेजनार्थमवशेषयेत् ततो गृहपाके न पायसशाकफलमूलादिभिः सतिलं कृतं मधुयुतं पिंडं निर्माय तिलजलकुशानादाय काश्यपगोत्रास्मत्पितरमुकदास एष ते पिंडो नमः स्वधा ततः सव्येनाचम्याय सव्यं कृत्वा श्वासं नियम्योदङ्मुखीभूय पराववृत्य पित्रे नमः पिंडे प्रत्यवनेनिक्ष्वेति प्रत्यवनेजनं दत्वा पिंडे पित्रे नमः इति सूत्रं दत्वा पितृभ्यो नमः ततो देवताभ्यः पितृभ्यश्चेति स्मृत्वा नत्वा च पितृपिंडे गंधादिदानं काश्यपगोत्रायास्मत्पित्रेमुकदासायेति गंधपुष्पधूपदीपनैवेद्यफलतांबूलदक्षिणादीनि नमः कमपात्रे सर्वेशेदितमस्तु शिवा आपः संतु सौमनस्यमस्तु अक्षतं चारिष्टमस्तु दत्तैतदन्नपानादिकमक्षय्यमस्तु अघोराः पितरः सन्तु गोत्रं नो वर्द्धतां दातारो नोऽभिवर्द्धंतामित्याद्याशीः प्रार्थयित्वा श्राद्धदक्षिणां दत्वा अर्घपात्रमुत्तानीकृत्य पिंडमाघ्राय योग्याय पयित्वा पितृभ्यो नम इति नमस्कृत्य विसर्जयेत् ततो वलिं वैश्वदेवादि नित्यकर्मशेषं समापयेत् इति शूद्रस्मृतिकौमुद्युक्तं शूद्रस्यैकोद्दिष्टश्राद्धं अथ श्राद्धकाले पत्नी·

योरुचिस्तवो मार्कंडेयपुराणे मार्कंडेय उवाच इत्यर्षिर्वचनं श्रुत्वा ब्रह्मणोऽव्यक्तजन्मनः नद्या विविक्ते पु-
लिने चकार पितृतर्पणं १ तुष्टाव च पितॄन्विप्र स्तवैरेभिस्तथादृतः एकाग्रः प्रयतो भूत्वा भक्तिनम्रात्म-
को रुचिः २ रुचिरुवाच नमस्येऽहं पितॄन्भक्त्या ये वसंत्यधिदेवतं देवैरपि हि तर्प्यंते ये श्राद्धेषु स्वधोत्तरैः ३
नमस्येऽहं पितॄन्श्राद्धे तर्प्यंते येऽप्यहर्निशं श्राद्धैर्मनोरमैर्भक्त्या भुक्तिमुक्तिमभीप्सुभिः ४ नमस्येऽहं पितॄ-
न्स्वर्गे सिद्धाः संतर्पयंति यान् श्राद्धेषु दिव्यैः सकलैरुपहारैरनुत्तमैः ५ नमस्येऽहं पितॄन्भक्त्या येऽर्च्यंते गु-
ह्यकैर्दिवि तन्मयत्वेन वांछद्भिर्ऋद्धिमात्यंतिकीं परां ६ नमस्येऽहं पितॄन्मर्त्यैरर्च्यंते भुवि ये सदा श्राद्धे-
षु श्रद्धयाभीष्टलोकपुष्टिप्रदायिनः ७ नमस्येऽहं पितॄन्विप्रैरर्च्यंते भुवि ये सदा वांछिताभीष्टलाभाय
प्राजापत्यप्रदायिनः ८ नमस्येऽहं पितॄन्ये वै तर्प्यंतेऽरण्यवासिभिः वन्यैः श्राद्धैर्यताहारैस्तपोनिर्धूतकल्म-
षैः ९ नमस्येऽहं पितॄन्विप्रैर्नैष्ठिकव्रतचारिभिः ये संयतात्मभिर्नित्यं संतर्प्यंते समाधिभिः १० नमस्येऽहं
पितॄन्श्राद्धै राजन्यास्तर्पयंति यान् कव्यैरशेषैर्विधिवल्लोकद्वयफलप्रदान् ११ नमस्येऽहं पितॄन्वैश्यैरर्च्यंते
भुवि ये सदा स्वकर्माभिरतैर्नित्यं पुष्पधूपान्नवारिभिः १२ नमस्येऽहं पितॄन्श्राद्धे ये शूद्रैरपि भक्तितः संतर्प्य-
ते जगत्यत्र नाम्ना ख्याताः सुकालिनः १३ नमस्येऽहं पितॄन्श्राद्धे पाताले ये महासुरैः संतर्प्यंते स्वधाहारास्त्य-
क्तदंभमदैस्तथा १४ नमस्येऽहं पितॄन्श्राद्धैरर्च्यंते ये रसातले भोगैरशेषैर्विविधैर्नागैः काममभीप्सुभिः
१५ नमस्येऽहं पितॄन्श्राद्धे सर्पैः संतर्पितान्सदा तत्रैव विधिवन्मंत्रभोगसंपत्समन्वितैः १६ पितॄन्नम-
स्ये निवसंति साक्षाद्ये देवलोकेऽपि महीतले वा तथांतरिक्षे च सुरादिपूज्यास्ते नः प्रतीच्छंतु मयोपनीतं १७ पि-
तॄ[illegible] परमार्थभूता ये वै विमाने निवसंत्यमूर्ताः यजंति यानस्तमलैर्मनोभिर्योगीश्वराः क्लेशविमुक्तिहे-
तून् १८ पितॄन्नमस्ये दिवि ये च मूर्ताः स्वधाभुजः काम्यफलाभिसंधौ प्रदानशक्ताः [illegible]
क्तिदा येऽनभिसंधितेषु १९ तृप्यंतु तेऽस्मिन्पितरः समस्ता इच्छावतां ये प्रदिशंति कामान् सुरत्वमिंद्रत्व-
मतोऽधिकं वा वस्वात्मजान्त्यामचलां गृहाणि २० सूर्यस्य ये रश्मिषु चंद्रबिंबे शुक्ले विमाने च सदा वसंति
तृप्यंतु तेऽस्मिन्पितरोऽन्नतोयैर्गंधादिना तुष्टिमतो व्रजंतु २१ येषां हुतेऽग्नौ हविषा च तृप्तिर्ये भुंजते विप्र-
शरीरसंस्थाः ये पिंडदानेन मुदं प्रयांति तृप्यंतु तेऽस्मिन्पितरोऽन्नतोयैः २२ ये खड्गमांसेन सुरैरभीष्टैः कृ-
ष्णैस्तिलैर्दैत्यमहोरगैश्च कालेन शाकेन महर्षिवर्यैः संप्रीणितास्ते मुदमत्र यांतु २३ कव्यान्यशेषाण्य-
पि यान्यभीष्टान्यतीव तेषाममरार्चितानां तेषां तु सान्निध्यमिहास्तु पुष्पगंधांबुभोज्येषु मयार्पितेषु २४
दिने दिने ये प्रतिगृह्णतेऽर्चां मासांतपूज्या भुवि येऽष्टकासु ये वत्सरांतेऽभ्युदये च पूज्याः प्रयांतु ते मे पितरोऽत्र
तृप्तिं २५ पूज्या द्विजानां कुमुदेंदुभासो ये क्षत्रियाणां च नवार्कवर्णाः तथा विशां ये कनकावदाता नी-
लीनिभाः शूद्रजनस्य ये वै २६ तेऽस्मिन्समस्ता मम पुष्पगंधधूपादितोयान्ननिवेदनेन तथाग्निहोमेन
च यांतु तृप्तिं सदा पितृभ्यः प्रणतोऽस्मि तेभ्यः २७ ये पूर्वदेवाण्यभितृप्तिहेतोरश्नंति कव्यानि शुभाहृतानि
तृप्ताश्च ये भूतसृजो भवंति तृप्यंतु तेऽस्मिन्प्रणतोऽस्मि तेभ्यः २८ रक्षांसि भूतान्यसुरांस्तथोग्रान्निर्णाशयंतु
त्वशिवं प्रजानां आद्याः सुराणाममरेशपूज्यास्तृप्यंतु तेऽस्मिन्प्रणतोऽस्मि तेभ्यः २९ अग्निष्वात्ता बर्हिष-
दश्चाज्यपाः सोमपास्तथा व्रजंतु तृप्तिं श्राद्धेऽस्मिन्पितरस्तर्पिता मया ३० अग्निष्वात्ताः पितृगणाः प्राचीं र-
क्षंतु मे दिशं तथा बर्हिषदः पांतु याम्यां ये पितरः स्थिताः ३१ प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः
ऊर्द्धतस्त्वर्यमा रक्षेत्कव्यवाडनलोऽप्यधः ३२ विश्वेदेवास्तथा पांतु चोर्द्ध्वं पांतु मरुद्गणाः रक्षोभूतपिशा-
चेभ्यस्तथैवासुरदोषतः ३३ सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे विश्वो विश्वभुगाराध्यो धर्मो धन्यः
सनातनः ३४ भूतिदो भूतिकृद्भूतिः पितॄणां ये गणा नव वरो वरेण्यो वरदः पुष्टिदस्तुष्टिदस्तथा ३५ विश्व-
पाता तथा धाता समेते च गणाः स्मृताः कल्याणः कल्यदः कर्ता कल्यः कल्यतराश्रयः ३६ कल्यताहेतुरनघः

षडिंशेते गणाः स्मृताः महान्महात्मामहितोमहिमावान्महाबलः ३७ सुखदोथनदश्चान्योधर्मदोन्य
श्चभूतिदः पितॄणांकथ्यतेचैवतथागणचतुष्टयं ३८ एकत्रिंशत्पितृगणायैर्व्याप्तमखिलंजगत् ते
मेत्रतृप्तास्तुष्यंतुयच्छंतुचसदाहितं ३९ मार्कंडेयउवाच एवंतुस्तुवतस्तस्यतेजसोराशिरुच्छ्रितः
प्रादुर्बभूवसहसागगनव्याप्तिकारकः ४० तद्दृष्ट्वासुमहत्तेजः समाच्छाद्यस्थितंजगत् जानुभ्यामव
निंगत्वारुचिःस्तोत्रमिदंजगौ ४१ रुचिरुवाच अमूर्तानांसमूर्तानांपितॄणांदीप्ततेजसां नमस्यामित
दात्तेषांध्यानिनांयोगचक्षुषां ४२ इंद्रादीनांचनेतारोदक्षमारीचयोस्तथा सप्तर्षीणांतथान्येषांतान्नम
स्यामिकामदान् ४३ मन्वादीनांचनेतारःसूर्याचंद्रमसोस्तथा तान्नमस्याम्यहंसर्वान्पितृनप्युदधीषु
च ४४ नक्षत्राणांग्रहाणांचवाय्वग्न्योर्नभसस्तथा द्यावापृथिव्योश्चतथानमस्यामिकृतांजलिः ४५ प्र
जापतेःकश्यपायसोमायवरुणायच योगेश्वरेभ्यश्चतथानमस्यामिकृतांजलिः ४६ नमोगणेभ्यःसप्त
भ्यस्तथालोकेषुसप्तसु स्वयंभुवेनमस्यामिब्रह्मणेयोगचक्षुषे ४७ सोमाधाराःपितृगणायोगमूर्ति
धराहिये नमस्यामितथासोमंपितरंजगतामहं ४८ अग्निरूपांस्तथैवान्यान्नमस्यामिपितॄनहं अग्नी
सोममयंविश्वंयतएतदशेषतः ४९ येचतेजसियेचैतेसोमसूर्याग्निमूर्तयः जगत्स्वरूपिणश्चैवतथ
ब्रह्मस्वरूपिणः ५० तेभ्योखिलेभ्योयोगिभ्यःपितृभ्योयतमानसः नमोनमोनमस्तेमेप्रसीदंतुस्वधा
भुजः ५१ मार्कंडेयउवाच एवंस्तुतास्ततस्तेनतेजसोमुनिसत्तम निश्चक्रमुस्तेपितरोभासयंतोदि
शोदश ५२ निवेदितंचयत्तेनपुष्पधूपानुलेपनं तद्भूषितानथसतान्ददृशेपुरतःस्थितान् ५३ प्र
णिपत्यरुचिर्भक्त्यापुनरेवकृतांजलिः नमस्तुभ्यंनमस्तुभ्यमित्याहपृथगादृतः ५४ ततःप्रसन्नाःपि
तरस्तमूचुर्मुनिसत्तम वरंवृणीष्वेतिसतानुवाचानतकंधरः ५५ रुचिरुवाच सांप्रतंसर्गकर्तृत्वमादि
ष्टंब्रह्मणामम सोहंपत्नीमभीप्सामिधन्यांदिव्यांप्रजावतीं ५६ पितरऊचुः अद्यैवसद्यःपत्नीतेभविष्य
तिमनोरमा तस्यांचपुत्रोभवितारुचिरोमुनिसत्तम ५७ मन्वंतराधिपोधीमांस्त्वन्नाम्नैवोपलक्षितः रु
चेरौच्यइतिख्यातिंप्रयास्यतिजगत्त्रये ५८ तस्यापिबहवःपुत्रामहाबलपराक्रमाः भविष्यंतिमहात्मानः
पृथिवीपरिपालकाः ५९ त्वंचप्रजापतिर्भूत्वाप्रजाःसृष्ट्वाचतुर्विधाः क्षीणाधिकारोधर्मज्ञततःसिद्धिम
वाप्स्यसि ६० स्तोत्रेणानेनचनरोयोस्मांस्तोष्यतिभक्तितः तस्यतुष्टावयंभोगान्दास्यामोज्ञानमुत्तमं ६१
शरीरारोग्यमर्थंचपुत्रपौत्रादिकंतथा वांछद्भिःसततंस्तव्याःस्तोत्रेणानेनभक्तितः ६२ श्राद्धेचयइमंभ
क्त्यास्मत्प्रीतिकरंस्तवं पठिष्यतिद्विजाग्र्याणांभुंजतांपुरतःस्थितः ६३ स्तोत्रश्रवणसंप्रीत्यासन्निधा
नेपरेकृते अस्माभिरक्षयंश्राद्धंतद्भविष्यत्यसंशयं ६४ यद्यप्यश्रोत्रियंश्राद्धंयद्यप्युपहतंभवेत् अन्या
योपार्जितवित्तेनयदिवाकृतमन्यथा ६५ अश्राद्धयावाप्युपहृतैर्दंभमाश्रित्ययत्कृतं अस्माकंप्रीतयेश्राद्धंतद
प्येतदुदीरणात् ६६ यत्रैतत्पठ्यतेश्राद्धेस्तोत्रमेतत्सुखावहं अस्माकंजायतेतृप्तिस्तत्रद्वादशवार्षिकी
हेमंतेद्वादशाब्दानितृप्तिमेतत्प्रयच्छति शिशिरेद्विगुणाब्दानितृप्तिंस्तोत्रमिदंकृतं ६८ वसंतेषोडश
समास्तृप्तयेश्राद्धकर्मणि ग्रीष्मेचषोडशैवैतत्पठितंतृप्तिकारकं ६९ विकलेपिकृतेश्राद्धेस्तोत्रेणानेन
वर्षासुतृप्तिरस्माकमक्षयाजायतेरुचे ७० शरत्कालेपिपठितंश्राद्धकालेप्रयच्छति अस्माकमे
तत्पुरुषैस्तृप्तिंपंचदशाब्दिकीं ७१ यस्मिन्गृहेवालिखितमेतत्तिष्ठतिनित्यशः सन्निधानेकृतेतत्रास्माकं
भविष्यति ७२ तस्मादेतत्त्वयाश्राद्धेविप्राणांभुंजतांपुरः श्रावणीयंमहाभागअस्माकंपुष्टिहेतुकं
७३ मार्कंडेयउवाच ततस्तस्मात्नदीमध्यात्समुत्तस्थौमनोरमा प्रम्लोचानामतन्वंगीतत्समीपेवराप्सरा
७४ अप्सरोवाच अतीवरूपिणींकन्यांमत्सुतांवदतांवर जातांवरुणपुत्रेणपुष्करेणमहात्मना ७५
तांगृहाणमयादत्तांभार्यार्थंवरवर्णिनी मनुर्महामतिस्तस्यांसमुत्पत्स्यतितेसुतः ७६ तथेतितेनसा

पुत्रास्तस्मात्तोयाद्युम्नी उज्जहारततः कन्यां मालिनीनाम नामतः ७७ तयाश्च पुलिनेतस्मिन्स मुनिर्मुनिपुङ्गव। सत्तम पाणिं जग्राह विधिवत्समानाय्य महामुनीन् ७८ तस्यां तस्य सुतो जज्ञे महावीर्यो महाद्युतिः रौच्योऽभवत्पितृनाम्ना ख्यातोऽथ वसुधातले ७९ तस्य मन्वन्तरे देवास्तथा सप्तर्षयश्च ये तनयाश्च नृपाश्चैव ते सम्यक्कथिता स्तव ८० धर्मवृद्धिस्तथारोग्यं धनधान्यसमुद्भवः नृणां भवत्यसंदिग्ध मस्मिन्मन्वन्तरे श्रुते ८१ पितृ

स्तवं तथा श्रुत्वा पितृणां च तथा गणान् सर्वान्कामानवाप्नोति तत्प्रसादान्महामुने ८२

इति श्रीमार्कण्डेयपुराणे रौच्यमन्वन्तरे रुचिकृतः पितृस्तवः समाप्तः ॥

अमावास्यां गते सोमे गौर्या बोदयते तु णां दौहित्री सा तु विज्ञेया दौहित्रं तद्धूतं स्मृतं अथ मातृनवम्यां मातृवर्गपूर्वं श्राद्धं कर्तव्यं मातृवर्गश्च श्राद्धदीपिकायां ब्राह्मे पितृमातृकुलोत्पन्नायाः काश्चन मृताः स्त्रियः

श्राद्धार्हा मातरो ज्ञेयाः श्राद्धं तत्र प्रदीयते तत्रादौ मातृमातामही प्र

वृक्षं षड्दैवत्यपार्वणपिण्डदानानि कृत्वा तत्र श्राम्यासां मातृपितृकुल्यानामेकतंत्रमेव कुर्यात् तत्रादौ दत्तिणाग्रकुशत्रयं गृहीत्वा अस्मत्कुले मृता याश्च गतिर्यासां न विद्यते आवाहयिष्ये ताः सर्वा दर्भपृष्ठे तिलोदकैः १ मातामहकुले याश्च गतिर्यासां न विद्यते आवाहयिष्ये ताः सर्वा दर्भपृष्ठे तिलोदकैः २ बंधुवर्गकुले याश्च गतिर्यासां न विद्यते आवाहयिष्ये ताः सर्वा दर्भपृष्ठे तिलोदकैः ३ इति मंत्रत्रयेण अस्तृतदर्भपुञ्जे आवाह्य गंधादिभिरभ्यर्च्य तत्र आब्रह्मस्तम्भपर्यन्तं देवर्षिपितृमानवाः तृप्यंतु मातरः सर्वा मातृमातामहीमुखाः २ पूर्ववदेवांजलिं दत्वा अतीतकुलकोटीनां सप्तद्वीपनिवासिनां आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकं २ पूर्ववदेवांजलि २ अतीतकुलकोटीनां सप्तद्वीपनिवासिनां आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकं २ पूर्ववदेवांजलि

दानपूर्वकं मात्राद्यावाहनं विधाय पुनरपि मात्रादिभ्यो यथासंबंधनामगोत्रग्रहणपूर्वकं संकल्पेन पिंडान्दत्वा ततः षोडशपिंडान्दद्यात् अस्मत्कुले मृता याश्च गतिर्यासां न विद्यते तासामुद्धरणार्थाय मातृपिंडं ददाम्यहं १ बंधुवर्गददाम्यहं २ मातामहकुले याश्च गतिर्यासां न विद्यते तासामुद्धरणार्थाय मातृपिंडं ददाम्यहं ३ अजातदंता याः काश्चिद्याश्च गर्भे कुले याश्च गतिर्यासां न विद्यते तासामुद्धरणार्थाय मातृपिंडं ददाम्यहं ४ अग्निदग्धाश्च याः काश्चिन्नाग्निदग्धास्तथापराः विद्युत्पीडिताः तासामुद्धरणार्थाय मातृपिंडं ददाम्यहं ४ अग्निदग्धाश्च याः काश्चिन्नाग्निदग्धास्तथापराः आत्मोपघातनिहता दुश्चौरहता याश्च ताभ्यः पिंडं ददाम्यहं ५ दावदाहे मृता याश्च सिंहव्याघ्रहताश्च याः भूतप्रेतपिशाचाद्यैस्ताभ्यः पिंडं ददाम्यहं ६ अरण्ये वर्त्मनि वने त्तयपात्तयघातताः रौरवे चांधतामिस्रे ताभ्यः पिंडं ददाम्यहं ७ रौरवे चांधतामिस्रे

७ उद्बंधनमृता याश्च विषशस्त्रहताश्च याः दंष्ट्रिभिः शृंगिभिश्चैव ताभ्यः पिंडं ददाम्यहं ८ अनेकयातनासंस्थाः प्रेतलोकं च या गताः तासामुद्धरणार्थाय पिंडमेनं ददाम्यहं ९ असिपत्रे कालसूत्रे च याः गताः तासामुद्धरणार्थाय पिंडमेनं ददाम्यहं ९ अनेकयातनासंस्थाः यानीतायमकिंकरैः तासामुद्धरणार्थाय पिंडमेनं ददाम्यहं १० नरकेषु समस्तेषु यातनासु च याः स्थिताः तासामुद्धरणार्थाय पिंडमेनं ददाम्यहं ११ जात्यंतरसह

१२ पशुयोनिं गता याश्च याश्च पक्षिसरीसृपाः अथवा वृक्षयोनिस्थास्ताभ्यः पिंडं ददाम्यहं १३ दिव्यंतरिक्षभूमिस्थाः पितरो बांधवादयः मृता असंस्कृता याश्च ताभ्यः पिंडं ददाम्यहं १४ येषु भ्रमन्त्यः स्वेन कर्मणा मानुष्यं दुर्लभं यासां ताभ्यः पिंडं ददाम्यहं १५ याः काश्चित्प्रेतरूपेण वर्तन्ते मातरो मम ताः सर्वास्तृप्तिमायान्तु पिंडदानेन सर्वदा १६ याबांधवाबांधवा या याश्चान्यजन्मबांधवाः तासां पिंडो मया दत्तो ह्यक्षय्यमुपतिष्ठतु १७ पितृवंशे मृता याश्च मातृवंशे च या मृताः गुरुश्वशुरवंधूनां याश्चान्या बांधवा मृताः १८ ये मे कुले लुप्तपिंडाः पुत्रादिपरिवर्जिताः क्रियालोपगता याश्च जात्यंधाः पंगवस्तथा विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम तासां पिंडो मया दत्तो ह्यक्षय्यमुपतिष्ठतां १९ आब्रह्मणो याः पितृवंशजाता मातुस्तथा वंशभवा मदीयाः वंशद्वये या मम दासभूता भृत्यास्तथैवाश्रितसेवकाश्च मित्राणि शिष्याः पशवश्च वृक्षा दृष्टा

ह्यदृष्टाश्चकृतोपकाराः जन्मांतरेयेममसंगतास्तेभ्यः स्वधापिंडमहंददामि १९ उच्छिन्नकुलजाता
या यासांदाताकुलेनहि धर्मपिंडोमयादत्तोस्तुतेषामुपतिष्ठतां २० आब्रह्मस्तंभपर्यंतंब्रह्मांडंसचराचरं जग
त्तृप्यतुपिंडेनभक्त्यादत्तेनसर्वदा २१ इत्येकविंशतिपिंडान्दत्वा अवनेजनावशिष्टंप्रत्यवनेजनंदत्वा वस्त्रं
दत्वा गंधादिभिः संपूज्य अक्षय्योदकसंकल्पंकृत्वा सव्येन पिंडेषुपूर्वाग्रांवारिधारांदद्यात् अघोरामात
रः संतु ततोपसव्येनपिंडेषुकुशयवितादिकंदत्वा ऊर्जंवहंतीतिमंत्रेण सतिलमधुक्षीरनीरधारांदत्वा
दक्षिणांदत्वा पिंडान्विसृज्य बलिदानादिकंकृत्वा प्रमादादितिविष्णुस्मरणपूर्वकंनत्वा यथासुखंविह
रेत् इतिमातृनवमीश्राद्धंमातृषोडशीश्राद्धंच अथासंताशक्तस्यात्यावश्यकंमहालयश्राद्धमेकाहपक्ष
माश्रित्यलिख्यते तथाच नागरखंडे सेतुमाहात्म्ये आषाढ्याः पंचमेपक्षेकन्यासंस्थेदिवाकरे योवैश्रा
द्धंनरःकुर्यादेकस्मिन्नपिवासरे तस्यसंवत्सरंयावत्तृप्ताःस्युःपितरोध्रुवं चतुर्विंशतिमते एकस्मिन्ब्रा
ह्मणेसर्वान्पित्रादीन्परिपूजयेत् दशद्वादशवापिंडान्कुर्यादकरणंनहीति तत्राप्यविज्ञातमातृपित्रा
दिमृतदिनमासालब्ध्यामावास्यायामेकाहपक्षश्राद्धं तच्चकतिपयदेशीयसदाचारपरिगृहीतंपिंड
दानमात्रमेवतस्यायंप्रयोगः आचम्य प्राणानायम्य ॐपुंडरीकाक्षायनमः इतिश्राद्धीयवस्तून्यासिंच्य
श्राद्धकालेगयांध्यात्वाध्यात्वादेवंगदाधरं स्वात्मपितॄन्मनसाध्यात्वाततःश्राद्धंसमाचरेत् देवताभ्यः पि
तृभ्यश्चमहायोगिभ्यएवच नमःस्वधायैस्वाहायैनित्यमेवनमोनमः ॐमद्येत्यादिदेशकालौसंकीर्त्या
मुकगोत्राणांपितृपितामहप्रपितामहानांमातामहप्रमातामहवृद्धप्रमातामहानांमातृपितामहीप्र
पितामहीनांमातामहीप्रमातामहीवृद्धप्रमातामहीनामन्येषांचास्मदीयसमगोत्रांतर्गतैकविंशति।
कुलोत्पन्नसमस्तसंबंधिनांमहालयामावास्याश्राद्धमहंकरिष्ये ततःपितृपक्षीय विश्वेदेवब्राह्मणायन
मोमातृपक्षीयविश्वेदेवब्राह्मणायनमः इदमासनंवोनमः आगच्छंतुमहाभागाइत्यावाह्यगंधादिभिर
भ्यर्च्य एतानिगंधार्घ्यपुष्पादीनिविश्वेदेवब्राह्मणायनमः ततः अपसव्यं पितृमतेब्राह्मणायनमः
मातृमतेब्राह्मणायनमः इदमासनंस्वधापितॄनावाहयिष्यामि मातॄरावाहयिष्यामियथाप्राप्तिगंधा
दिभिरभ्यर्च्य एतानिगंधादीनिपितृभ्यःस्वधा मातृभ्यःस्वधा सव्यंकृत्वा विश्वेदेवब्राह्मणेभ्यइदमन्नं
सोपकरणंद्विधाविभज्यवोनमः मधुवाताइतिपाठंकृत्वा पृथिवीतेपात्रंकृत्वा ततोपसव्यंकृत्वा पितृ
भ्योमातृभ्यश्चइदमन्नंस्वधा इत्येवंयथाशक्तिश्राद्धविधिंसंक्षेपेनकृत्वा ततःपिंडपातनार्थंवेदिकांकृत्वा
पिंडदानंकुर्यात् तत्रवेदिकायां अपहताअसुराइतिमंत्रंपठित्वा कुशमूलेनरेखाकरणं येरूपाणीति
पठित्वा ततःसव्यं देवताभ्यःअपसव्यं ॐमद्यामुकगोत्राअस्मत्पितृमात्रादयः समस्तसंबंधिनः
पिंडस्थानेअत्रावनेनिक्ष्वःस्वधा ॐमद्यामुकगोत्रास्मत्पितरमुकशर्मन्नेषतेपिंडःस्वधा एवंपित्रा
दिभ्यः मातामहादिभ्यः मात्रादिभ्यः मातामह्यादिभ्यः प्रत्येकंगोत्रनामोच्चारणपूर्वकं द्वादशपिंडा
न्दत्वाशेषसंबंधिभ्योपिदद्यात् तत्रायंक्रमः तातांबात्रितयंसपत्नजननीमातामहादित्रयं सस्त्रिस्त्री
तनयादितातजननीस्वभ्रातरस्सस्त्रियः तातांबात्मभगिन्यपत्यधवयुग्जायापितासद्गुरुः शिष्याप्ताः
पितरोमहालयविधौतीर्थेतथातर्पणे इत्येवंपिंडान्दत्वा प्रत्यवनेजनपूर्वकंसूत्रदानंगंधादिदानंचय
दंशजनंविधाय सव्येनपूर्वाग्रांवारिधारांदत्वा ऊर्जंवहंतीति दक्षिणादानांतंकृत्वा विश्वेदेवविसर्जनांतं
चकृत्वा ततःषोडशीक्रमेणपिंडदानंकुर्यात् ऊनविंशतिपिंडदानार्थंवेदिकांविधाय तत्रकुशा
नास्तीर्य मोदकतिलजलान्यादाय अस्मत्कुलेमृतायेचगतिर्येषांनविद्यते आवाहयिष्येतान्सर्वान्द
र्भपृष्ठेतिलोदकैः बंधुवर्गकुलेयेचगतिर्येषांनविद्यते आवाहयिष्ये· २ मातामहकुलेयेचगतिर्येषां
नविद्यते आवाहयिष्येतान्सर्वान्दर्भपृष्ठेतिलोदकैः ३ इत्यावाह्यगंधादिभिरभ्यर्च्य आब्रह्मस्तंबय।

यंतु देवर्षिपितृमानवाः तृप्यंतु पितरः सर्वे मातृमातामहादयः अतीतकुलकोटीनां सप्तद्वीपनिवासिनां
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकं इति तिलांजलिदानं प्रथमावाहनं कृत्वा पिंडदानं कुर्यात् पिता
पितामहश्चैव तथैव प्रपितामहः माता पितामही चैव तथैव प्रपितामही मातामहस्तत्पिता च प्रमातामहका
दयः तेषां पिंडो मया दत्तो ह्यक्षय्यमुपतिष्ठतां इति द्वादशभ्य एकमेव पिंडं दत्वा षोडशीक्रमेण पिंडान्दद्या
त् अस्मत्कुले मृता ये च गतिर्येषां न विद्यते तेषामुद्धरणार्थाय इमं पिंडं ददाम्यहं १ मातामहकुले ये च गति
र्येषां न विद्यते तेषामुद्ध० इमं पिंडं० २ बंधुवर्गकुले ये च गतिर्येषां न विद्यते तेषामु० इमं पिंडं० ३ अजात
दंता ये केचिद्ये च गर्भे प्रपीडिताः तेषामु० इमं पिंडं० ४ अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथापरे विद्युच्चौर
हता ये च तेभ्यः पिंडं ददाम्यहं ५ दावदाहे मृता ये च सिंहव्याघ्रहताश्च ये दंष्ट्रिभिः शृंगिभिश्चैव तेभ्यः पिंडं
६ उद्बंधनमृता ये च विषशस्त्रहताश्च ये आत्मोपघातिनो ये च तेभ्यः पिंडं द० ७ अरण्ये वर्त्मनि जले क्षुधया
तृषया हताः भूतप्रेतपिशाचाश्च तेभ्यः पिंडं द० ८ रौरवे चांधतामिस्रे कालसूत्रे च ये गताः तेषामु० पिंडमेनं द०
९ अनेकयातनासंस्थाः प्रेतलोकं च ये गताः तेषामु० पिंडमेनं द० १० अनेकयातनासंस्था ये नीता यमसादनं
तेषामु० पिंडमेनं द० ११ नरकेषु समस्तेषु यातनायां च ये स्थिताः तेषामु० पिंडमेनं द० १२ पशुयोनिं गता ये
च पक्षिकीटसरीसृपाः अथवा वृक्षयोनिस्थास्तेभ्यः पिंडं द० १३ जन्मांतरसहस्रेषु भ्रमंतः स्वेन कर्मणा मा
नुष्यं दुर्लभं येषां तेभ्यः पिंडं द० १४ दिव्यंतरिक्षभूमिस्थाः पितरो बांधवादयः मृता असंस्कृता ये च तेभ्यः पिंडं
द० १५ ये केचित्प्रेतरूपेण वर्तंते पितरो मम ते सर्वे तृप्तिमायांतु पिंडदानेन सर्वदा १६ ये बांधवा बांधवा ये येऽन्य
जन्मनि बांधवाः तेषां पिंडो मया दत्तो ह्यक्षय्यमुपतिष्ठतु १७ पितृवंशे मृता ये च मातृवंशे च ये मृताः गुरुश्व
शुरबंधूनां ये चान्ये बांधवा मृताः विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम तेषां पिंडो मया दत्तो ह्यक्षय्यमुप
तिष्ठतां १८ त्रिभिरेकोयं पिंडः आब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः वंशद्वये ये मम दास
भूता भृत्यास्तथैवाश्रितसेवकाश्च मित्राणि शिष्याः पशवश्च वृक्षा दृष्टाश्चादृष्टाश्च कृतोपकाराः जन्मांतरे ये मम
संगताश्च तेभ्यः स्वधा पिंडं सह ददामि १९ पिता माता च भार्या च भगिनी दुहिता पतिः पितृष्वसा मातृष्वसा सम
गोत्राणि चैव हि उच्छिन्नकुलगोत्रा ये येषां दाता कुले न हि धर्मपिंडो मया दत्तो ह्यक्षय्यमुपतिष्ठतां ततः पिंड
पूजनं दक्षिणादानादिकं यथाविधि कार्यं ॥ इति पितृषोडशीक्रमः महालयश्राद्धमाहात्म्यं स्कंदपुराणे ब्र
ह्मखंडे पूर्वभागे सेतुमाहात्म्ये सूत उवाच धनुष्कोटेस्तु माहात्म्यं भूयोपि प्रब्रवीम्यहं दुराचाराभिधो यज्वा
मुक्तो बभूव ह इत्युपक्रम्य दत्तात्रेय उवाच महापातकिसंसर्गात् दुराचारकृतात्पुरा ब्राह्मण्यं नष्टमभवद्धेना
लस्तं ततो गृहीत् स च भाद्रपदे मासे कृष्णपक्षे महालये पार्वणेन विधानेन पितॄणां नाकरोत्सदा तैरेव पितृभिः
शप्तो वेतालत्वमगादयं सोपि चास्य धनुःकोटेरवलोकनमात्रतः वेतालत्वं विहायैव विष्णुलोकमवाप्तवान्
अतो भाद्रपदे मासे कृष्णपक्षे महालये उद्दिश्य स्वपितॄन्ये तु न कुर्वंति हि लोभतः महापापयुतास्ते तु वेतालाः
स्युर्न संशयः तस्माद्भाद्रपदे मासे कृष्णपक्षे महालये पितॄनुद्दिश्य ये भक्त्या ब्राह्मणान्वेदपारगान् भोजयेयुर्म
हाप्राज्ञास्ते न विंदंति दुर्गतिं यस्तु भाद्रपदे मासि कृष्णपक्षे महालये स्वशक्त्यान्नं महाविप्रानेकं द्वौ त्रीन्न किंचन
भोजयेदस्य दौर्गत्यं भवेदस्य कदाचन अयं भाद्रपदे मासि पितॄणामनपायनात् वेतालतां ययौ विप्रयस्त्वाजश्रा
हपापिनं मासो भाद्रपदः कालस्तत्रापि हि विशिष्यते कृष्णपक्षो विशिष्टः स्यात्तत्र श्राद्धं प्रशस्यते तस्माच्छुभेच्छु
ष्णपक्षे प्रथमायां तिथौ तथा श्राद्धं महालयं कुर्याद्यो नरो भक्तिपूर्वकं तस्य प्रीणाति भगवान्पावकः सर्वभावनः
स वह्निलोकमाप्नोति वह्निना सह मोदते तस्मै प्रज्वलितो देवः सर्वैश्वर्यं ददात्यपि प्रथमायां तिथौ यस्यां यो न
कुर्यान्महालयं वह्निर्गृहं दहेत्तस्याप्रियं तेजादिकं तथा वेदविद्ब्राह्मणो भुंक्ते प्रथमायां महालये दशकल्पस
हस्राणि पितरो यांति तृप्ततां १ द्वितीयायां तु यो भक्त्या कुर्याच्छ्राद्धं महालये तस्य प्रीणाति भगवान्भवानीपः

तिरीश्वरः सकैलासमवाप्नोतिशिवेनसहमोदते विपुलांसंपदंतस्यप्रीतोदद्यान्महेश्वरः द्वितीयायांतिथौ
मर्त्योयोनकुर्यान्महालयं तस्यवैकुपितःशंभुर्नाशयेद्ब्रह्मवर्चसं रौरवंकालसूत्राख्यंनरकंचास्यदास्यति
वेदविद्ब्राह्मणोभुंक्तेद्वितीयायांमहालये विंशत्कल्पसहस्राणिपितरोयांतितृप्ततां अनुग्रहात्पितॄणांतसं
ततिश्चास्यवर्द्धते २ तृतीयायांनरोभक्त्याश्राद्धंकुर्यान्महालये तस्यप्रीणातिभगवान्लोकपालोधनाधिपः
महापद्मादिनिधयोवर्त्ततेतस्यवैवशे तस्यानुगास्त्रयोदेवाब्रह्मविष्णुमहेश्वराः तृतीयायांतिथौमर्त्योयोनकु
र्यान्महालयं धनलोभवशात्तस्यसंपदंहरतिक्षणात् दारिद्र्यंहिसदातस्यवर्द्धदुःखसमाकुलं तृतीयायां
तुयोमर्त्यश्श्राद्धंकुर्यान्महालये तृप्यंतिपितरस्तस्यत्रिंशत्कल्पसहस्रकं चतुर्थ्यांतुनरोभक्त्याश्राद्धंकु
र्यान्महालये तस्यप्रीणातिभगवान्हेरंबःपार्वतीसुतः तस्यविघ्नानिनश्यंतिगजवक्त्रप्रसादतः चतु
र्थ्यांतुतिथौमर्त्योयोनकुर्यान्महालयं विघ्नेशोभगवांस्तस्यसदाविघ्नंकरोतिहि चंडकोलाहलाख्येतुनरके
चपतत्ययं चतुर्थ्यांतुतिथौमर्त्योयःकरोतिमहालयं पितरःकल्पसाहस्रंचत्वारिंशत्प्रहर्षिताः बहून्पुत्रान्
प्रदास्यंतिश्राद्धकर्तुर्निरंतरं ४ पंचम्यांचतिथौभक्त्याश्राद्धंकुर्यान्महालये तस्यलक्ष्मीर्भगवतीप्रीणातिह
रिवल्लभा गृहक्षेत्रकलत्रादितस्यनृप्यतिसर्वदा कीर्तिश्चवर्धतेतस्ययावदाचंद्रतारकं पंचम्यांतुतिथौमर्त्यो
योनकुर्यान्महालयं तस्यलक्ष्मीर्भगवतीपरित्यजतिमंदिरं अलक्ष्मीकलहद्वारानस्याश्रमवेद्गृहे पंचम्यां
तुतिथौमर्त्योयःकरोतिमहालयं पंचाशत्कल्पसाहस्रंतृप्यंतिपितरस्तदा संततिंचाप्यविच्छिन्नांतस्मैदास्य
तितर्पिता पार्वतीचप्रसन्नास्यान्महदैश्वर्यदायिनी ५ षष्ठ्यांतिथौनरोभक्त्याश्राद्धंकुर्यान्महालये तस्यप्री
णातिभगवान्षण्मुखःपार्वतीसुतः तस्यपुत्राश्चपौत्राश्चषण्मुखस्यप्रसादतः षष्ठ्यांतिथौनरोयस्तुनकु
र्याच्चमहालयं तस्यस्कंदोमहासेनोविमुखःस्यान्नसंशयः गर्भान्निर्गममात्रेणप्रजास्तस्यविनश्यति भूत
नादिग्रहगणैर्बाध्यतेचनिरंतरं वह्निज्वालाप्रवेशाख्येनरकेचपतत्ययं षष्ठ्यांतिथौतुयःश्राद्धंकुर्यान्मर्त्यो
महालये षष्टिवर्षसहस्रंतुपितरोयांतितृप्ततां पुत्रानपिप्रदास्यंतिश्रियंचविपुलांतथा ६ सप्तम्यांतुति
थौमर्त्यःश्राद्धंकुर्यान्महालये हिरण्यपाणिर्भगवानादित्यस्तस्यतुष्यति आरोग्यंदृढगात्रंस्याद्भास्करस्यप्र
सादतः हिरण्यपाणिर्भगवान्हिरण्यानवरत्नवयं महालयश्राद्धकर्त्रेददातिप्रीतमानसः सप्तम्यांतुति
थौमर्त्योयोनकुर्यान्महालयं व्याधिभिःक्षयरोगाद्यैर्बाध्यतेसदिवानिशं तीक्ष्णधारास्त्रशय्याख्येनरके
चपतत्ययं सप्तम्यांयोनरोभक्त्याश्राद्धंकुर्यान्महालये सप्ततिःकल्पसाहस्रंपितरोयांतितृप्ततां पुत्रान
पिप्रदास्यंतिसंपदंविपुलांतथा संततिंचाप्यविच्छिन्नांदद्युःपितृगणाःसदा ७ अष्टम्यांतुतिथौमर्त्यःश्रा
द्धंकुर्यान्महालये मृत्युंजयःकृत्तिवासास्तस्यप्रीणातिशंकरः करस्थंतस्यकैवल्यंशंकरस्यप्रसादतः म
हालयेनश्राद्धेनतुष्टःसाक्षात्त्र्यंबकः चतुर्दशसुलोकेषुदुर्लभंतस्यकिंभवेत् महालयंनकुर्याद्यस्त्वष्टम्यां
मूढचेतनः संसारसागरेघोरेसदामज्जतिदुःखितः कदाचिदपितस्येष्टंनसिद्ध्यतिकदाचन वैतरिण्याख्ये
नरकेपतत्याचंद्रतारकं योष्टम्यांश्रद्धयाश्राद्धंनरःकुर्यान्महालये अशीतिःकल्पसाहस्रंतृप्यंतिपितरो
स्यवै आशीर्भिर्वर्द्धयंत्येनंविघ्नांश्चास्यव्यपोहति संततिंचाप्यविच्छिन्नांदद्युःपितृगणाःसदा नवम्यांतुति
थौमर्त्यःश्राद्धंकुर्यान्महालये दुर्गादेवीभगवतीतस्यप्रीणातिशांभवी क्षयापस्मारकुष्ठादीन्दुष्टप्रेतपि
शाचकान् नाशयत्यस्यसंतुष्टादुर्गामहिषमर्दिनी ९ नवम्यांतुतिथौचैवयोनकुर्यान्महालयं अपस्मा
रेणपीड्यतेतथैवब्रह्मराक्षसैः आक्रांतश्चाभिचारैश्चयातिनित्यंनिरंतरं नवम्यांयस्तुतिथौमर्त्यःश्राद्धंकुर्यान्
महालये नवतिःकल्पसाहस्रंतृप्यंतिपितरोस्यवै संततिंचाप्यविच्छिन्नांदद्युःपितृगणाःसदा ९ दश
म्यांतुतिथौयश्चकुर्यात्श्राद्धंमहालये तस्यमृगधरश्चंद्रःषोडशात्माप्रसीदति ओषधीनामधीशोसौन
श्राद्धेनानेनतोषितः व्रीह्यादीनितथान्यानिदद्याद्देशादिकंतथा योनकुर्याद्दशम्यांतुमहालयमतंद्रितः

ओषध्यो निष्फलास्तस्य कृषिश्चास्य निष्फला दशम्यां तु तिथौ मर्त्यः श्राद्धं कुर्यान्महालये शतकल्पसहस्रा-
णि तृप्यंति पितरोऽस्य वै संततिं चाप्यविच्छिन्नां दद्युः पितृगणाः सदा ९ एकादश्यां तु यो भक्त्या श्राद्धं कुर्यान्महा-
लये संहर्ता सर्वलोकस्य तस्य रुद्रः प्रसीदति रुद्रस्य सर्वसंहर्तुः प्रसादेन जगत्पतेः शत्रून्पराजयत्येष श्राद्ध-
कर्ता निरंतरं ब्रह्महत्यायुतं वापि तस्य नश्यति तत्क्षणात् अग्निष्टोमादियज्ञानां फलं प्राप्नोत्यनुत्तमं एकादश्यां
नरो भक्त्या यो न कुर्यान्महालयं तस्य वै विमुखो रुद्रो न कदाचित्प्रसीदति सर्वदा वर्धमानं तं बाधते च तथा यदि
अग्निष्टोमादियज्ञाश्च कृताश्च बहुदक्षिणाः निष्फला एव तस्य स्युर्भस्मन्यस्तहव्यवत् ब्रह्मघातकतुल्यश्च
श्राद्धाकरणदोषतः एकादश्यां तिथौ यस्तु श्राद्धं कुर्यान्महालये द्विशतं कल्पसाहस्रं तृप्यंति पितरोऽस्य वै ११
द्वादश्यां तु तिथौ मर्त्यः श्राद्धं कुर्यान्महालये तस्य लक्ष्मीपतिः साक्षात्प्रसीदति जनार्दनः प्रसन्ने सति देवेशे त-
स्मिन्सति जनार्दने चराचरं जगत्सर्वं प्रीतमेव न संशयः भूमिर्हरिप्रिया चास्य सस्यान्येव वर्धयत्यलं लक्ष्मीश्च वर्ध-
ते तस्य मंदिरे हरिवल्लभा गदा कौमोदकी नाम नारायणकरस्थिता अपस्मारादिभूतानि नाशयत्येव सर्वदा
तीक्ष्णधारं तथा चक्रं शत्रूनस्य दहत्यपि यातुधानान्पिशाचादीन्नृशंसांश्चास्य यो हति एवं सर्वात्मना देवो
नाशयत्यस्य केशवः महालयं न कुर्याद्यो द्वादश्यां मनुजाधमः तस्य क्षेत्राणि संपच्च विनश्यंति न संशयः
अपस्मारादिभूतानि शत्रवश्च महाबलाः यातुधानाश्च बाधंते तं वै विष्णुपराङ्मुखं पात्यते नरके चासौ च स्थिम-
देन नामके द्वादश्यां भक्तितो यस्तु श्राद्धं कुर्यान्महालये षट्शतं कल्पसाहस्रं तृप्यंति पितरोऽस्य वै संततीश्चा-
प्यविच्छिन्नाः पितरोऽस्य ददत्यमी १२ त्रयोदश्यां नरो भक्त्या श्राद्धं कुर्यान्महालये प्रसीदत्यस्य भगवान्कंदर्पो
रतिनायकः संक्रंदनादयो देवा ललनाश्च मनोरमाः कामदेवप्रसादेन तस्य सिद्ध्यंति सर्वदा २ आजन्मम-
रणं तं च सुखमेव स विंदति यो न कुर्यात्त्रयोदश्यां नरः श्राद्धं महालये कामदेवोऽस्य विमुखः स्त्रियो भोगांश्च ना-
शयेत् अंगारशय्याभ्रमणे नरके पातयत्यमुं पितॄनुद्दिश्य यः कुर्यात्त्रयोदश्यां महालयं सहस्रकल्पसा-
हस्रं प्रीणाति पितरोऽस्य वै संततीश्चाप्यविच्छिन्ना दद्युः पितृगणाः सदा चतुर्दश्यां नरो भक्त्या श्राद्धं कुर्यान्म-
हालये तस्याभीष्टप्रदानाय जागर्ति भगवान्शिवः उपदिष्टप्रशिवज्ञाने स्वसाम्राज्यं ददात्यसौ सुरापानायु-
तं चापि स्वर्णस्तेयायुतं तथा नश्यंति तत्क्षणादेव चतुर्दश्यां महालयात् चंडालवृषलस्त्रीणां संगदोषादि
नश्यति अश्वमेधसहस्राणि पौंडरीकायुतस्य च पुष्कलाफलसिद्धिः स्याच्चतुर्दश्यां महालयात् यो न कु-
र्याच्चतुर्दश्यां नरः श्राद्धं महालये संसारांधमहाकूपपतनस्यास्य न निष्कृतिः अचोरयित्वा कनकमपीत्वा-
पि सुरासवं सुरापानादिभिर्दोषैर्लिप्यते स विमूढधीः कृताश्चापि विधानेन यज्ञाः सुनिष्फलास्तथा च-
तुर्दश्यां तिथौ यस्तु श्राद्धं कुर्यान्महालये लक्षकोटिसहस्राणि कल्पकोटिशतानि च कल्पानि पितरस्त-
स्य तृप्यंत्येव न संशयः नरकस्थाश्च पितरः स्वर्गं यांति प्रहर्षिताः संततीश्चाप्यविच्छिन्नाः दद्युः पितृगणास्त सुधामासाद्य-
या १४ अमायां तु नरो भक्त्या श्राद्धं कुर्यान्महालये पितॄणां तस्य तृप्तिः स्यादनंता नात्र संशयः अमावास्या महापुण्या पितृदेवत-
या तृप्तिः सा तृप्तिस्तु पितृर्भवेत् अनंता हीदृशी तृप्तिरमावास्यां महालयात् अमावास्या महापुण्या पितृदेवत-
मस्कृता एषा तिथिस्तु परमा शिवस्य परमा प्रिया तस्यां महालये श्राद्धे भोजिते वेदविन्मे तेन तृप्तिः पितॄणां
स्यादनंता तुष्यते शिवः ब्रह्महत्यादिकाः पंच पातकानाशमाप्नुयुः कृताश्चास्य विधानेन सर्वे यज्ञाः सदक्षि-
णाः अनुष्ठिताः सुविधिवत्सर्वे धर्माः सनातनाः यो न कुर्याद्दमावास्यां महालयमचेतनः ब्रह्मलोकग-
ताश्चास्य पितरो यांति नारकं संततिश्चास्य मूढस्य विच्छिद्येतैव तत्क्षणात् स एव हि महानर्थो यदमायां तिथौ
नरैः महालयार्थं विप्रेंद्रा विधिवन्नैव भोजिताः मासि भाद्रपदे मायां तु ध्यायंति पितृदेवताः अस्मानुद्दिश्य स
ज्जना भोजयेद्युदि ब्राह्मणान् तेन नो नरकक्लेशो न भविष्यति दारुणः ग्रामश्च सर्वलोकाः स्युः यावदा चंद्रता-
रकं मासि भाद्रपदे प्रमे पितॄणां तृप्तिदायिनि एकैकं भोजयेद्विप्रं प्रत्यहं भक्तिपूर्वकं पितृमातृकुलोद्भ

पितरस्तृप्तिमायान्तु कृष्णपक्षे विशेषेण भोजयेद्ब्राह्मणान्सुधीः घृतसूपादिभिर्भक्ष्यैस्तैलाभ्यंगपुरस्स
रं यथाशक्त्यानिपितरस्तस्यकल्पं प्रहर्षिताः समस्याः कृष्णपक्षस्य प्रारभ्य प्रत्यहं नरः विप्रान्यावदमावा·
स्यां पितृस्त्रीनभ्यभोजयेत् आरभ्य द्वादशीं विप्रांस्त्रीनवश्यं तु भोजयेत् अन्यथैश्वर्य्यहानिः स्यान्महद्दारि
द्र्यभाग्भवेत् अतिलाभं परित्यज्य विप्रान्सूपघृतादिभिः पयसापायसान्नेन घृतापूपादिभिस्तथा सूपैर्ले·
ह्यैश्चोष्यैश्च भक्ष्यैश्च विविधैरपि भोजयेद्वेदविन्मुख्यांस्तृप्तिस्तेषां यथा भवेत् तेन ब्रह्मा हरिः शंभुस्तृप्ता
स्युर्नात्र संशयः अग्निष्वात्तादिपितर उपेन्द्राद्यधिदेवताः बहुनात्र किमुक्तेन तृप्यन्ते वै जगत्त्रयं पार्वणेन वि
धानेन कुर्य्याच्छ्राद्धं महालये नरो महालये श्राद्धं पितृवंश्यान्मितृप्यति मातृवंश्यानपि पितॄन्भोजयेच्छ्रे
यसे मुदा दक्षिणां च यथाशक्ति दद्याद्वित्तानुसारतः अस्मिन्महालये श्राद्धे वित्तशाठ्यं न कारयेत् दक्षि·
णा सर्वयज्ञानां कथितेयं पुरोगवा अतः पुरोगरहिता धिष्ण्यमध्वरिवेत्रिया अदक्षिणास्तथा चायं पितृ·
यज्ञोपलिप्यते तस्माद्यज्ञेषु दातव्या दक्षिणा स्यापि जानता विधवाभिरपि स्त्रीभिरपुत्राभिर्महालये भ
र्तुरुद्दिश्य कर्तव्यं भूरिभोजनकर्मणां अन्यथाधर्महानिः स्यान्नरके च महद्भयं मासे भाद्रपदे प्राप्ते यो न
कुर्य्यान्महालयं तत्कालेशायमाप्नोति ब्रह्महत्यां च विंदति महालये च कुर्वंति श्रद्धावंतः पितॄनपि नते
षां संततिच्छेदो भवेत्संपद भंगुरा आलयस्त्वास्पदं प्रोक्तं महत्कल्याणमुच्यते कल्याणस्यास्पदत्वाच्च म
हालयमितीर्य्यते तस्मान्महालयं मर्त्यः कुर्य्यात्कल्याणसिद्धये अमंगलं भवेत्तस्य न कुर्य्याच्चेन्महा·
लयं कर्तुं महालयं श्राद्धं यदि शक्तिर्न विद्यते याचित्वापि नरः कुर्य्यात्पितॄणां तु महालयं ब्राह्मणेभ्यो वि·
शिष्टेभ्यो याचेत धनधान्यकं पतितेभ्यो न गृह्णीयाद्धनं धान्यं कदाचन ब्राह्मणेभ्यो न लभ्येत यदि धान्यध·
नादिकं याचयेत्क्षत्रियश्रेष्ठान्महालयचिकीर्षया दातारश्चेन्न भूपाला वैश्येभ्योपि च याचयेत् वैश्याश्च
पि हि दातारो यदि लोके न संति वै दद्याद्भाद्रपदे मासे गोग्रासं पितृतृप्तये अथवा रोदनं कुर्य्याद्वहिर्निर्ग
त्य कानने पाणिभ्यामुदरं स्वीयं पीडयन्नश्रूणि च पातयेत् अथवारण्यदेशेषु उच्चैर्वै रोदनेन नरः शृण्वंतु पि
तरः सर्वे मत्कुलीना वचो मम अहं दरिद्रः कृपणो निर्लज्जः पापकर्मकृत् प्राप्ते भाद्रपदे मासे पितृप्री·
तिविवर्द्धनं कर्तुं महालयं श्राद्धं न च मे शक्तिरस्ति वै याचित्वापि महीं कृत्स्नां न वै किंचित्तु लभ्यते अतो
महालयश्राद्धं न युष्माकं करोम्यहं क्षमध्वं मम तद्यूयं भवंतोपि दयापराः उच्चैर्वै रोदनं कुर्य्याद्वनदेशे
षु दुःस्थितः तस्य रोदनमाकर्ण्य पितरस्तत्कुलोद्भवाः दृष्ट्वा तृप्तिं प्रयांत्येव अमरत्वेनैव निर्ज्जराः महालया
र्थविप्राद्यैर्भक्तितस्तृप्तिर्यथा भवेत् गोग्रासार्पणरुदितैः पितृतृप्तिस्तथा भवेत् मासि भाद्रपदे विद्वान्भवेच्चे
त्सूतकादिना गतेषु सूतकाहस्सु तत्कुर्य्याद्वृश्चिकावधि अतो महालयार्थं हि ब्राह्मणान्वृणु·
यात्सुधीन् द्विजमेकं तु वृणुयात्पितामहकृतेऽथवा प्रपितामहमुद्दिश्य तथैकं वृणुयाद्द्विजं तथा माता
महार्थमेकैकं वृणुयाद्द्विजं एकैकं वृणुयादेवं मातुश्च प्रपितामहं तथैव वैश्वदेवार्थं वृणुयाद्द्वौ द्विजोत्त·
मौ विश्वार्थं ब्राह्मणं चैकं वृणुयाद्वेदवित्तमं एवं महालये श्राद्धे ब्राह्मणान्वृणुयान्नव अथवा पितृवर्गार्थं व
रयेद्विप्रमेककं मातामहादींश्चोद्दिश्य वरयेद्विप्रमेककं वैश्वदेवार्थमेकैकं विश्वार्थं च तथापरं एवं वै वृण·
याद्विप्रान् चतुरस्तु महालये ब्राह्मणान्वेदसंपन्नान्सुशीलान्वरयेत्सुधीः दुःशीलान्वरयेद्यस्तु स वै श्राद्धस्य
घातकः मासि भाद्रपदे प्राप्ते कृष्णपक्षे विशेषतः कुर्य्यान्महालये श्राद्धं यो नरः श्रद्धया सह सुस्नातः सर्व
तीर्थेषु अब्दावारान्महामते अग्निष्टोमादयो यज्ञाः शतशोप्यमुना कृताः तुलापुरुषमुख्यानि दानान्यपि·
कृतानि वै चांद्रायणादिकृच्छ्राणि कृतान्येव न संशयः चतुर्णां सांगवेदानां पारायणफलं लभेत् महालय
समं पुण्यं प्रभूतं नास्ति महीतले ब्रह्मविष्णुमहेशानां लोकप्राप्तिर्महालये महालयादिकं श्राद्धं नित्यं का·
म्यं हि शिष्यते तस्मादकरणे तस्य प्रत्यवायो महद्भवेत् करणादिष्टसिद्धिश्च भविष्यति न संशयः महा

लयस्यकरणाद्भूतवेतालकादयः अपस्मारग्रहाश्चापि शाकिनीडाकिनीगणाः यातुधानाः पिशाचाश्च वेता-
लाश्च भयानकाः नश्यंति तत्क्षणादेव भूतान्यन्यानि वै तथा महालयस्य करणाद्धि पुलांश्रियमश्नुते पुरा दश-
रथो राजा वसिष्ठस्योपदेशतः मासि भाद्रपदे शर्मे कृत्वा श्राद्धं महालये रामादींश्चतुरः पुत्रान्प्राप्तवान् लोकस-
म्मतान् विश्वातिशायिनीं लक्ष्मीं प्रपेदे किं त्वनुत्तमां महालयस्य करणात् ययातीराजसत्तमः यदुमुख्यान्महाभा-
गान्प्रपेदे वंशवर्द्धनान् अनन्यदुर्लभं स्वर्गं प्रपेदे श्राद्धपुण्यतः दुष्यंतो भरतं लेभे महालयविधानतः महालयवि-
धानेन दमयंतीपतिर्नलः कृच्छ्रं महत्तरं तीर्त्वा पुनर्लेभे महीमिमां निजग्राहकलिं घोरं पुष्करं चाप्यरातिनं इंद्र-
सेनाभिधानं च पुत्रं लेभे तु धार्मिकं हरिश्चंद्रो महाराजा महालयविधानतः लेभे चंद्रमतीं भार्यां लोहिताश्वं सु-
तं पुनः महालयविधानेन कृतवीर्यसुतो बली अष्टादशानां द्वीपानां भूपत्वं समवाप्तवान् रामोपि दंडकारण्ये
महालयविधानतः हत्वा तु रावणं संख्ये सीतां पुनरवाप्तवान् महालयप्रभावेन धर्मराजो युधिष्ठिरः दुःख-
सागरमुत्तीर्य यातो राष्ट्रानुजश्चानघ महालयस्य करणाद्वसिष्ठो मुनिसत्तमः अत्रिर्भृगुः क्रतुश्चैव गौतमश्चांगि-
गिरांस्तथा कश्यपश्च भरद्वाजो विश्वामित्रश्च कुंभजः पराशरो मर्कंडुश्च ये चान्ये मुनिसत्तमाः विधाय विधिव-
च्छ्राद्धं महालयमनुत्तमं अणिमाद्यष्टसिद्धीनां व्रतानां तपसां तथा निवासभूताः संजातास्तथा श्राद्धप्रभावतः
जीवन्मुक्ता अभवन्सर्वे ह्यभवन्मुनिसत्तमाः अहो महालयं श्राद्धं कर्तव्यं भूतिमिच्छता अतो योपि दुराचारो न कुर्य्या-
द्धि महालयं भूतवेतालपूतेभ्यो भूयात्तस्य महद्भयं महालयस्याकरणाद्वेतालत्वमवाप्तवान् तथातिष्ठमिदं।
ग्रामं विप्रस्त्वं पूर्वजन्मनि नाम्ना वेदनिधिः पुण्यभारद्वाजस्य वंशजः कुशाख्यल्पभिधाने च वसन्ग्रामे महाम-
नाः न च कार(?)विधानेन श्राद्धमेतन्महालये ततोयं पितृणां शापाद्वेतालत्वमवाप्तवान् तस्माद्भाद्रपदे मासि द्रु-
राचारः पितृन्प्रति ब्राह्मणान्भोजयेदेव पायसेन सभक्तिकं दारिद्र्यं तेन तेन स्यात्त्वयीचैव भवान्भवेत् ॥

इति स्कंदपुराणे ब्रह्मखंडे पूर्वभागे सेतुमाहात्म्ये महालयश्राद्धमाहात्म्यं

जातमात्रोपि दौहित्रो हेमाद्रौ संग्रहे च
अथाश्विनशुक्लप्रतिपदि मातामहस्य महालयश्राद्धं दौहित्रेण कार्य्यं इयं प्रतिपत्संगवव्यापिनी ग्राह्येति प्रतिपद्या
जीवत्यपि च मातुले कुर्य्यान्मातामहं श्राद्धं प्रतिपद्याश्विने सिते जातमात्रोपि दौहित्रो जीवत्यपि चा-
श्विने मासि दौहित्रस्यैकपार्वणं श्राद्धं मातामहं कार्य्यं सपिता संगवे सदेति स्पष्टमास विशे-
मातुले प्रातःसंगवयोर्मध्ये आचार्य्य प्रतिपद्भवेत् अत्र मूलं मृग्यं इदं च मलमासे न कार्य्यं शिष्टाचारात्सपिंडं कार्य्य-
षाध्यं विहितं वर्जयेन्मले इति निषेधात् इदं च जीवत्पितृकेनापि कार्य्यमिति शिष्टाः नजीवत्पितृकः कु-
मिति केचित् पिंडरहितं तत्कुर्य्यमिति केचिद्वदंति मंडनं पिंडदानं च पितृकर्मं च सर्वशः विशेषवचनाभावाति
र्य्यात्तिलैस्तर्पणमेव चेत्यनेन वचनेन जीवत्पितृकं प्रति पिंडदाननिषेधादन्वष्टकावर्जं किंतु दर्श-
उरहितं कार्य्यमिति केचिद्वदंति अन्ये तु वदंति नजीवत्पितृकं प्रति पिंडदानमात्रमनेन न निषिध्यते इत्या-
श्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकं नजीवत्पितृकः कुर्य्यात्तिलैः कृष्णैश्च तर्पणं पित्र्यं जीवत्पितुर्नेष्टं ॥
दिवचनैकवाक्यतया श्राद्धमेव निषिध्यते एवं च तत्र विशेषवचनप्राप्तं श्राद्धं सपिंडमेव भवति

इति महालयश्राद्धनिर्णयः समाप्तः

रणवीरसिंहभूपेशकारितेकृत्यसागरे अयमस्ति
स्वस्ति श्रीरणवीरसिंहधरणीपालो वदान्याग्रणीरित्यादि १ रणवीरसिंहभूपेशकारितेकृत्यसागरे अथाश्व
हालयश्राद्धकृत्यानां रत्नसंग्रहः २ अथाश्विनशुक्लप्रतिपदायां अशोकव्रतं नवरात्रव्रतारंभश्च ना-
दीये आश्विने सितपक्षस्यां कृत्वाशोकव्रतं नरः व्रतांते द्वादशे वर्षे मूर्त्तिं चाशोकशाखिनः समर्प्य गुरवे भक्त्या
शिवलोके महीयते अस्यामेव प्रतिपदि नवरात्रं समारभेत् पूर्वाह्णे स्थापयेद्देवीं घटस्थापनपूर्वकं अंकु-
रारोपणं कृत्वा यवैर्गोधूममिश्रितैः ततः प्रतिदिनं कुर्य्यादेकभक्तमयाचितं उपवासं यथाशक्ति पूजा यात्रादिकं न-
पादिकं मार्कंडेयपुराणोक्तं चरितत्रितयं तथा पठनीयं नवदिनं भुक्तिमुक्तिमभीप्सिता कुमारीपूजनं न

त्प्रशस्तभोजनादिभिः एवंकृत्वाव्रतंतत्रसर्वसिद्ध्यान्वितोनरः जायतेभुविदुर्गायाःप्रसादान्नात्रसंशयः अ
त्रादावशोकपूजाव्रतंभविष्योत्तरे अश्वयुक्शुक्लपक्षस्यप्रथमेऽह्निदिनोदये अशोकंपूजयेत्तत्रप्ररूढंन
वपल्लवं प्ररूढैः समथान्यैश्चतंतभिर्मोदकैःशुभैः फलैःकालोद्भवैर्दिव्यैर्नारिकेलैःसदाडिमैः धूपदीपा
दिनातद्वत्पूजयेत्तद्दिनेनग सनरःपांडवश्रेष्ठशोकंनाप्नोतिकुत्रचित् पितृभ्रातृपतिश्वश्रूसुतानांचत
थैवच अशोकशोकशमनीभवसर्वत्रनःकुले इत्युच्चार्यततोदद्यादर्घ्यंश्रद्धासमन्वितः पताकाभिरलंकृ
त्यप्रच्छाद्यचसुवाससा दमयंतीयथास्वाहायथावेदमतीसती यथाशोकाव्रतादस्माज्जायतेपतिवल्लभा व
नेव्रजंत्यासायथामैथिलीतयासंप्रदर्शितं दृष्ट्वाशोकंवनेपार्थपल्लवालंकृतंनग कृत्वासमीपेभर्तारंदेवरंचति
लाक्षतैः दीपालक्तकनैवेद्यैर्धूपस्रक्फलार्चनैः अर्चयित्वाभ्यर्थिसौरक्ताशोकोयुधिष्ठिर मैथिलीप्रांज
लिर्भूत्वामृगवनोराघवस्यच चिरंजीवतमेवृद्धःश्वशुरःकोशलेश्वरः भर्तामेदेवरश्चैवजीवंतुपितृकादयः
कौशल्यामपिजीवंतीपश्येयमितिमैथिली ययाचेयंमहाभागाद्रुममभ्यर्च्ययाचितं प्रदक्षिणामुपाहृत्यप्री
तास्तेनचययुस्ततः एवमन्यापिभक्त्यायापूजयेद्युवतीनग तिलतंडुलसंमिश्रैर्यवगोधूमसर्षपैः क्षमाप्य
वंदयेन्मूलेपादयंरक्तपल्लवं मंत्रेणानेनकौंतेयप्रणम्यस्त्रीपतिव्रता महावृक्षमहाशाखमकरध्वजमंदि
र प्रार्थयेत्वांमहाभागवनोपवनभूषण एवमाभाष्यतंवृक्षंदत्वाविप्रायदक्षिणां सखीभिःसहितासाध्वी
ततःस्वभवनंव्रजेत् याःशोकनाशनमशोकतरुंतरुण्यः संपूजयंतिकुसुमाक्षतधूपदीपैः ताःप्राप्य
सौख्यमतुलंभुविभर्तृजातंगौरीवनंदमुदिताःपुनराप्नुवंति ॥ अथव्रतस्वरूपंनिर्णय
सिंधौभविष्योत्तरे एवंचविंध्यवासिन्यांनवरात्रोपवासनं एकभक्तेननक्तेनस्वशक्त्याया
चितेनवा पूजनीयाजनैर्देवीस्थानेस्थानेपुरेपुरे गृहे [illegible] क्षपरैर्ग्रामैर्ग्रामेनरैर्नरैः स्नातैः
प्रमुदितैर्हृष्टैर्ब्राह्मणैःक्षत्रियैर्नृपैः वैश्यैःशूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्चमानवैः स्त्रीभिश्चकुरु
शार्दूलतद्विधानमिदंशृणु देवीपुराणेऽपि कन्यासंस्थेरवौशुक्लामाश्विनेप्राप्यनंदिकां अया
चिताशीचैकाशीनक्ताशीवाथवाब्दः भूमौशयीतचामंत्र्यकुमारीर्भोजयेन्मुदा वस्त्रालंकार
दानाद्यैःसंतोष्यप्रतिवासरं बलिंचप्रत्यहंदद्यादोदनंमाषमांसवत् त्रिकालंपूजयेद्देवींजप
स्तोत्रपरायणइति अत्रदेवीपूजैवप्रधानंव्रतं उपवासादिकंमंग पूजयित्वाश्विनेमासिविशो
कोजायतेनरः एवमन्यैरपिसदादेव्याःकार्यंप्रपूजनं विभूतिमतुलांलब्धुंचतुर्वर्गप्रदायिका
मित्यादौपूजायाएवफलसंबंधात् मार्कंडेयपुराणेऽपिमहापूजाविधानमत्रैवोक्तंशरत्कालेम
हापूजाक्रियतेयाचवार्षिकीति वार्षिकीपूजानवरात्रव्रतविधानेनकर्तव्यातयाप्रोक्ता ॥ *

अथनवरात्रारंभः तन्निर्णयस्तुनिर्णयामृतेदेवीपुराणे सुमेधाउवाच शृणुराज
न्वक्ष्यामिचंडिकापूजनक्रमं आश्विनस्यसितेपक्षेप्रतिपत्सुशुभेदिने पुण्याहवाचनंकृत्वा
कन्यामावाहयेत्ततः कृत्वास्वर्णमयींदेवींपलमात्रात्मिकांशिवां भैरवाष्टकसंयुक्तांन्यसेदुद्यान
पीठके पंचप्रणवमुच्चार्यपश्चाद्देवींसमर्चयेत् शुद्धेतिथौप्रकर्तव्यंप्रतिपच्चोर्ध्वगामिनी आद्यास्त
नाडिकास्त्यक्त्वाषोडशद्वादशापिवा अपराह्णेप्रकर्तव्यंशुद्धसंततिकांक्षिभिः इदंचापराह्णयो
गित्वाःशशस्यद्वितीयदिनेप्रतिपदोभावेज्ञेयं तथातत्रैवदेवीवचनं अमायुक्तानकर्तव्याप्रति
पत्पूजनेमम मुहूर्तमात्राकर्तव्याद्वितीयादिगुणान्विता आद्याःषोडशनाड्यस्तुलब्ध्वायःकुरु
तेनरः कलशस्थापनंतत्रअरिष्टंजायतेध्रुवं वर्जनीयाप्रयत्नेनअमायुक्तातुपार्थिव द्वितीयादि
गुणोपेताप्रतिपत्सर्वकामदा शरत्कालेविधातव्यमेवंवामाश्रित्ययत्नतः पूजनंगंधपुष्पाद्यैर्नाना

मस्पसमन्वितैः देवीवचनं यो मां संपूजयेन्नित्यं द्वितीयादिगुणान्विते प्रतिपच्छरदि त्वान्वा सोऽश्नु-
ते सत्वमव्ययं यदि कुर्याद्मायुक्ता प्रतिपत्स्थापनं मम तस्य संवृद्धिनाशः स्याज्ज्येष्ठः पुत्रो विनश्यति
अमायुक्ता न कर्तव्या प्रतिपच्चंडिकार्चने उदये द्विमुहूर्तापि ग्राह्या सोदयगामिनी रुद्रयामले अमा-
युक्ता सदा चैव प्रतिपन्निंदिता सदा तत्र चेत्स्थापयेत्कुंभं दुर्भिक्षं जायते ध्रुवं प्रतिपत्सद्वितीया स्यात्
कुंभारोपणकर्मणि यत्तु कैश्चिदुक्तं नदर्शकलयेत्यादिशानयत्तफलप्रदमित्यंतान्यमायोगनिषेध-
कानि यानि च द्वितीयाशेषसंयुक्ता प्रतिपच्चंडिकार्चने मोहाद्यथोपदेशाद्वा कृता पुत्रविनाशकृत्
आरंभे नवरात्रस्य द्वितीयात्रुटिसंयुता न केवलं तिथिं हंति वेधात्साप्युत्रसंपद इत्यादीनि द्वितीया-
योगनिषेधकानि तान्युभयविधान्यपि सर्वाणि निर्मूलानि समूलत्वेपि वा परस्परं सत्वात्प्रतिपक्षत्वाद्निर्णा-
यकानीति तस्योक्तिर्वादमात्रं प्रत्युत तो देवीपुराणे सर्वेषामेवोपलंभात् वाक्योपपत्तिरपीत्थं कर्तव्या
नदर्शकलयेत्यादिवाक्यानि प्रतिपदः खंडत्वे पूर्वविद्धानिषेधकानि द्वितीयाशेषसंयुक्तेत्यादिवाक्या-
नि तु यदामाविद्धा प्रतिपत्परदिने नास्ति तदा विद्धापि ग्राह्येति तत्पराणि एतद्विषयाण्येव अमायुक्तैव क-
र्तव्या प्रतिपच्चंडिकार्चन इत्यादीनि नृसिंहप्रसादोदाहृतानीति अत्रेदं तत्त्वं यत्पूर्वदिने षष्टिदंडा भूत्वा
परदिने त्रिमुहूर्तापि सा अमायोगाभावात्सर्वैव ग्राह्या पूर्णत्वात् आदित्योदयवेलायामारभ्य षष्टिनाडिकाः
तिथिस्तु सा हि शुद्धा स्यात्सार्वतिथ्योऽप्ययं विधिरिति नारदीयात् यानि च द्वितीयायोगनिषेधकानि वचना-
नि तान्यपि शुद्धाधिकनिषेधपराणि परदिने प्रतिपदोऽत्यंतासत्वे तु प्रतिपदप्यमावास्येति युग्मवाक्याद्द-
र्शयुतैव ग्राह्येति तदाह लल्लः तिथिः शरीरं तिथिरेव कारणमित्यादि कालतत्त्वविवेचनकारैरुक्तदनु-
सारिभिश्च माधवहेमाद्र्युक्तनक्तव्रतानुरोधेन खंडा प्रतिपत्प्रदोषव्यापिनी ग्राह्येत्युक्तं नक्तव्रतं च न न-
क्तभोजनत्वं तस्य पाक्षिकत्वादंगत्वाच्च किंतु पूजारूपस्य प्रधानस्य नक्तकालसाध्यत्वात् तच्च निशि भ्रमं-
ति भूतानि शामयः मूलभयत इत्यादिसामान्यवचनात् आश्विने मासि मेघांते महिषासुरमर्दिनी नि-
शास्त्रपूजयेद्भक्त्या सोपवासादिकं क्रमात् तथा आश्विने मासि मेघांते प्रतिपद्या तिथिर्भवेत् तस्यां नक्तं प्र-
कुर्वीत नवरात्रे विशेषतः सं[illegible] वडगांचनक्तं कुर्यात्समाहितः नक्तं नक्तं न भोजनमिति यात्रिक नक्त-
भोजनपरामर्शः तथा रात्रिव्रतमिदं देवि सर्वपापप्रणाशनं सर्वकामप्रदं नॄणां सर्वशत्रुनिवर्हणं न
या रात्रिव्रतमिदं तस्य रात्रौ कर्तव्यतेष्यत इत्यादि देवीपुराणादिवचनेभ्यश्चावगम्यते एवं च पूजारूपस्य
प्रधानस्य रात्रिकालत्वे स्थिते कर्मणो यस्य यः काल इति वचनात् प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते स-
दा तिथिः शरीरमित्यादि नक्तव्रते चेत्यादिवचनाच्च प्रदोषव्यापिनी प्रतिपन्नवरात्रव्रते ग्राह्या अयमेव·
निर्णयो द्वितीयादिषु रात्रिपूजने द्रष्टव्यः कौलस्तंभेप्येवमेव तत्र पूर्वदिन एव प्रदोषव्याप्तौ पूर्वा एतद्विषयाण्ये-
व अमायुक्तैव कर्तव्येत्यादि नृसिंहप्रसादोदाहृतवचनानि द्वितीयाशेषसंयुक्तेत्यादिलल्लसंहितावच-
नानि च तथा द्वितीयादिकलोपेता प्रतिपच्चंडिकार्चने वर्जनीया प्रयत्नेन विषलेशो यथांभसि धवल-
निबंधे देव्युवाच प्रतिपच्छेषसंयुक्तद्वितीयायां ममार्चनं कृतं धनं नाशयति संततिं पुत्रपौत्रिकीं प
मायुक्तैव सा ग्राह्या प्रतिपच्चंडिकार्चने अन्यथा करणे तावद्राज्यभंगः प्रजायत इत्यादीनि च दिनद्वयेन।
यामावुत्तरा दिनद्वये तद्व्याप्त्यभावप्रयुक्तैव सायाह्नरूपगौणकालव्याप्तिलाभात् एतद्विषयाण्येव द्विती-
यायुक्तविधायकान्यमायुक्तनिषेधकानि वचनानि द्विमुहूर्तापीत्यपिशब्देन कैमुत्यन्यायप्रदर्शनात्क-
त्वादिशब्दा अविरुद्धाः यत्र आद्यास्तु नाडिकास्त्याज्याः षोडश द्वादशापि वा अपराह्णे च कर्तव्यमुद्
संततिकांक्षिभिरिति वचनं तदा षोडशनाड्यस्तु लंघ्याः कुरुते नरः कलशस्थापने तत्र अरिष्टं जाय-
ते ध्रुवमिति वचनांतरैकवाक्यतया कुलाचारप्राप्तकलशस्थापनविषयं एवं द्वितीयाविद्धप्रतिपद्द्विधा

कापीतिदानेनच्चात्तुणपद्धिनाशन चामुंडावलिरूपायवलेतुभ्यंनमोस्तुते यत्रार्थंवलयः सृष्टाः स्वयमे
वस्वयंभुवा अतस्त्वांघातयाम्यद्यतस्माद्यज्ञेवधोऽवधः ऐंह्रींश्रीमितिमंत्रेणतंवलिमंत्रयित्वामृ चिंत
यित्वाग्रसेत्तुभ्यंमूर्ध्नितस्यतभैरव ततोदेवींसमुद्दिश्यकाममुद्दिश्यचात्मनः अभिषिच्यवलिंपश्चात्क
रवालंचपूजयेत् अथमंत्रक्रमः वलिमभिषिच्यचंदनादिभिः संपूज्याद्येत्यादिदशवर्षावच्छिन्नदुर्गा
प्रीतिकामइमंछागवलिंवह्निदैवतंभगवत्यैदुर्गादेव्यैतुभ्यमहंघातयिष्यइतिसंकल्प्यखड्गंपूजये·
दिति कुंसपिनाकपाणिंचकालरात्रिस्वरूपिणं उग्ररक्तास्यनयनं रक्तमाल्यानुलेपनं रक्तांवरधरंवै
वपाशहस्तंकुटुंविनं पिवमानंचरुधिरंभुंजानंक्रव्यसंचयं रसनात्वंचंडिकायाः सुरलोकप्रसादक
इतिध्यात्वाह्रींह्रींखंखड्गायनमः इतिचंदनपुष्पधूपदीपनैवेद्यतांवूलानिदद्यात् तिथितत्वेत ऐंह्रीं
श्रीखड्गइतिमंत्रेणधृत्वाखड्गंपूजयेत् ततःकृतांजलिःपठेत् असिर्विशसनःखड्गस्तीक्ष्णधारो
दुरासदः श्रीगर्भोविजयश्चैवधर्मधारनमोस्तुते इत्यष्टौतवनामानिस्वयमुक्तानिवेधसेत्यादि पूज
यित्वाततःखड्गंआंह्रूंफडितिमंत्रकैः गृहीत्वाविमलंखड्गंछेदयेद्वलिमुत्तमं पंचाष्टलक्षणोपेतंगंधपु
ष्पसमन्वितं विधिवत्कालिकालीतिजप्त्वाखड्गेनघातयेत् ॐकालिकालिकालियज्ञेश्वरिलोहदंडा
यैनमः इतिमंत्रः तदुत्थंरुधिरंमांसंगृहीत्वापूतना। देषु आदिशब्दाच्चरकीविदारीपापराक्षस्यः
नैर्ऋतेभ्यःप्रदातव्योमहाकौशिकमंत्रतः ॐऐंह्रींकौशिकीरुधिरेणाप्यायतामिति तस्याग्रतोन्त्यः
स्नायात्कृत्वाप्रागुक्तपैष्टिकं खड्गेनघातयित्वातद्दद्यात्स्कंदविशाखयोः स्थानेनियोजयेद्रक्तंशिरश्चम
प्रदीपकं एवंदत्वावलिंपूर्णफलंप्राप्नोतिसाधकः वलिदानेतुदुर्गायाःसर्वत्रायंविधिःस्मृतइति अथ
महिषवलिदानमंत्रः यथावाहंभवान्द्वेष्टियथावाहसिचंडिकां तथाममरिपून्हिंसभभवेद्दला·
लायक यमस्यवाहनत्वंतुपशुरूपधराव्यय आयुर्वित्तंयशोदेहिकामरायनमोस्तुते विस्तरस्तु।
तिथितत्वेद्रष्टव्यः इतिसंक्षिप्तवलिदानं अत्रचतिथिद्वासेतत्रेणोपवासःनिषिद्धइतिनिमित्तंपूजादिम
हालयश्राद्धदेकदिनआहृत्यकार्यं वृद्धौतद्देवाहृतिरितिनिर्णयसिंधौ एककालकर्तव्यत्वेनो·
पवासवत्पूजापितद्वेणाकार्येतिकालतत्वविवेचने स्वस्याशक्तावन्येनपूजादिकारयेत् स्वयंवाप्य·
न्यतोवापिपूजयेत्पूजयीतवोक्तत्वात् इदंचदेवीपूजनंशुक्रास्तादावपिकार्यं तदुक्तंधर्मप्रदीपे नष्टे
शुक्रेतथाजीवेसिंहस्थेचवृहस्पतौ कार्याचैवस्वदेव्यर्चाप्रत्यव्दंकलिधर्मतइति मलमासेतुवचनाभा
वान्नभवति अत्रदुर्गायाश्चोक्ताशिवरहस्ये तत्रैवदुर्गाविमलातिष्ठत्यमललोचना सर्वदुर्गहरानित्यं
स्वभक्ताभयदायिनी तत्राश्विनेशुक्लपक्षेप्रतिपत्प्रभृतिक्रमात् नवमीदिनपर्यंतंपूजाकार्याप्रयत्न·
तः सासर्वार्तिहरानित्यंदेवीकाशिनिवासिनां पूजिताभक्तवरदाभवत्येवनसंशयइति इतिप्रतिपत्पू
जनं प्रतिपदादिषुविशेषोदुर्गाभक्तितरंगिण्यां भविष्ये केशसंस्कारद्रव्याणिप्रदद्यात्प्रतिपद्दिने
पट्टडोरंद्वितीयायांकेशसंयमहेतवे दर्पणंचतृतीयायांसिंदूरालक्तकंतथा मधुपर्कंचतुर्थ्यांतुति·
लकंनेत्रमंडनं पंचम्यामंगरागंचशक्त्यालंकरणानिच षष्ठ्यांविल्वतरौवोधंसायंसंध्यासुकारयेत्
सप्तम्यांप्रातरानीयगृहमध्येप्रपूजयेत् उपोषणमथाष्टम्यामुग्रचंडावलिंतथा कुमारीपूजनीयाच·
भूषणीयाचभूषणैः संपूज्यप्रेषणंकुर्याद्दशम्यांशावरोत्सवैः अनेनविधिनायस्तुदेवीप्रीणयतेनरः
स्कंदवत्पालयद्देवीतंपुत्रधनकीर्तिभिः कृष्णनवार्णवेलिंगे कन्यायांकृष्णपक्षेतुपूजयित्वार्द्रभेपि
वा नवम्यांवोधयेद्देवींमहाविभवविस्तरैः शुक्लपक्षेचतुर्थ्यांतुदेवीकेशविमोक्षणं प्रातरेवतुपंच·
म्यांस्नापयेत्शुभैर्जलैः षष्ठ्यामायंप्रकुर्वीतविल्ववृक्षेधिवासनं सप्तम्यांपत्रिकापूजाअष्टम्यांचाप्यु
पोषणं पूजाचजागरश्चैवनवम्यांविधिवद्वलिः विसर्जनंदशम्यांतुक्रीडाकौतुकमंगलैः प्रत्यहंतथा

ग्रंथांतरमप्युक्तं देवीपुराणे नारिकेलिफलादीनि नवकं नवकं प्रिये तान्यन्यपात्राणि सधयोसितये
वद वंशपात्राणि वस्त्राणि भक्ष्यभोज्यान्वितानि च यदि वा तिलपात्राणि मन्यान्यथवा पुनः अथवावा
न्यपात्राणि पंचामृतभृतानि च सौभाग्यपात्राण्यथवा कुंकुमादिभृतानि च दुर्गादेवीप्रीयतां मइत्युक्त्वा
विधिवद्दद्यात् दुर्गादेवीप्रसन्नास्यादिति अत्रस्त्रीव्रतेविशेषः परिभाषायां ज्ञेयः अथाशौचे विशेषो नि
र्णयामृते दिव्यरूपनिबंधे आश्विनस्यसितेपक्षे प्रारब्धे नवरात्रके आशौचे समनुप्राप्ते क्रियाः कार्याः
कथं बुधैरिति प्रश्ने सूतकं वर्तमाने च समुत्पन्नं यदा भवेत् देवीपूजा प्रकर्तव्या पशुपतिविधानतः अ
त्र नवरात्रे वर्तमाने सूतकं यदोत्पन्नं भवेदित्यन्वयः तथा सूतके पूजनं देव्याः दानं चैव विशेषतः दे
वीमुद्दिश्य कर्तव्यं तत्र दोषो न विद्यत इति गौडनिबंधे तिथितत्त्वेप्युक्तं आश्विनकृष्णनवम्यादि शुक्ल
प्रतिपदादि षष्ठ्यादि सप्तम्यादि चैकं कर्म अतएव मध्ये अशौचपातेपि न दोषः संकल्पो व्रतसत्रयोः
रिति विष्णूक्तेः आरब्धं स्वयमेव कार्यं अनारब्धं त्वन्येन कारयेदिति दिवोदासीये रजस्वला त्वन्येन
कारयेत् सूतकादिवद्विशेषवचनाभावात् अत्र निर्णयामृतादौ यदाशौचेपि नवरात्रपूजादिकं
स्वयमेव कर्तव्यमित्युक्तं तन्मूलं शिवार्चनचंद्रिकाग्रंथलिखितनारदादिपंचरात्रग्रंथविरोधात् त
थाचतत्त्वसागरसंहितायां आतुरीसौतिकीचैवत्रासीदौर्वीथिकीतथा साधनाभाविनीचेतिपंच।
धाभिधीयते पुनः यदि लंघनपर्यंतो व्याधिरात्मनि दृश्यते तदा पूजा न कर्तव्या स्थंडिले प्रतिमासु च
न स्नानं दंतकाष्ठं वा कुर्याद्धोममथापि वा रविमंडलमालोक्य प्रतिमामथवा पुनः मूलमंत्रं सकृज्ज
प्त्वा पुष्पांजलिं तु निक्षिपेत् आतोव्याधिभिरस्पृष्टैः ज्ञानवृद्धोपवासकैः निजसामयिकैर्वापि स्वकर्त
व्यं समापयेत् स्नात्वा देवमथाग्नींश्च गुरून्विप्रांश्च पूजयेच्च एतदन्यकालविच्छिन्ना पूजा गुरुप्रसा
दतः न दोषोस्तीति संप्राप्य पुनः पूर्ववदाचरेत् यस्तु रोगवशान्मोहवशाद्दोषउपागतः जपेन
लालनीयः स्याद्दानेन हवनेन चेत्यादि अथ सूतकिनः पूजां वदाम्यागमबोधितां स्नात्वा नित्यं च नि
र्वर्त्य मानस्या क्रियया तु वै बाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत् यदि कामी न चेत्कामी नित्यं
पूर्ववदाचरेत् आमितो वस्तु तेपूजा यथैवागमबोधिता लब्धं वा यदि वा लब्धमित्यादि सर्वालाभे
तु पूजोदकेन कर्तव्या न चेत्तोयं च विद्यते तदा संपूजयेद्देवं भावनाकुसुमादिभिः दौर्वीथिकीं प्र
वक्ष्यामि पूजामागमबोधितां मूर्खस्त्रीबालवृद्धाद्या दौर्वीथा इति भाषिताः मूलमूर्तिषडंगानि तेषां
पूजाविधीयते अन्येषामपि सर्वेषां प्रोक्ता संक्षेपकर्मणीति यानि तु विष्ण्वादिवचनानि यज्ञव्रत
विवाहेषु श्राद्धे होमार्चने जपे प्रारब्धे सूतकं न स्यादनारब्धे च सूतकं प्रारंभो वरणं यज्ञे संकल्पो व्र
तसत्रयोः नांदीमुखं विवाहादौ श्राद्धे पाकपरिक्रियेति जपो देवार्चनविधिः कार्यो दीक्षान्वितैर्न
रैः नास्ति पापं यतस्तेषां सूतकं वा यतात्मनामिति देवीयामलवचनम् सूतके मृतके चैव बहुमो
ज्ञादिके तथा जप्यं चार्च्यं तथा कुर्यान्मंत्रन्यासपरः सरमिति मृडानीतंत्रवचनं अर्च्यायद्ग्रहणापूजो
पलक्षणं शिवविस्वर्चने दीक्षा यस्य चाग्निपरिग्रहः ब्रह्मचारी यतीनां च शरीरे नास्ति सूतकमिति
विष्णुयामलवचनं सूतके मृतके चैव नित्यं विष्णुयमस्य च सात्वतानस्य विप्रेंद्र सद्यः शुद्धिः प्रजा
यत इति नारदपंचरात्रवचनम् उपासनेन विप्राणां मंत्रशुद्धिः प्रजायत इति पाराशरवचनम्
सूतके मृतके वापि न त्याज्यं शिवपूजनमिति लिंगपुराणवचनमेतानि सर्वाणि ब्राह्मणपराणि
व विप्राणामित्युक्तेः ब्राह्मणस्यैव पूज्योहं शुचेरप्यशुचेरपि पूजांशक्त्याभिशूद्रस्य पुनः स्वाचारव
र्तिन इति शिववचनाच्च अत्र शूद्रस्येत्युपलक्षणं क्षत्रियवैश्ययोरपि विप्राणामपि नोच्चिकनित्य
पूजायामेवाधिकारः यत्तु [illegible] कालिकीमतेति वचनेनाग्निहोत्र

दादेवसुद्धाभिधानात् तात्कालिकीयावनाकमेसिद्धानि नैमित्तिककाम्यतोविपूजायांतत्तेषामप्यन
धिकारः सूतकेमृतकेचापिवर्तमानेतुनारद कामतः पूजितेमंत्रैःशांतिकादौचकुत्रचित् जपेन्मंत्रश
तेमंत्रीसिद्धमंत्रस्यभक्तितः शतत्रयमकामाद्वाशयष्ठितविधौ जपेदितिनारदपंचरात्रवचनात् कृ
त्यरत्नावल्यामपिमात्स्ये अंतरातुरजोयोगेपूजामन्येनकारयेत् एवमाशौचेति सूतकाद्याक्रमात
व्यमनेकाहंतुयद्व्रतं कायकंतत्प्रकुर्वीत नतद्दानार्चनंजपं सूतकाहेत्वपर्यांविद्यानामंतरितंभवे
त् सूतकानंतरेत्वक्तितत्कर्तव्यमतंद्रितैरिति तस्मात्सूतकिभिः पूजनंनकार्यंइतिनिषिद्धारात्।
कार्यमेव दीक्षितीयेष्वेव अतएवसूतकेशिष्टैः पूजनंनक्रियतइत्याचारोपीत्यलंविस्तरेण इति
नवरात्रसूतकादिनिर्णयः ॥ आश्विनशुक्लद्वितीयायांदानस्यानंतफलं वचनंतुद्वितीयाप्रकर
णेवक्ष्यते आश्विनशुक्लपंचम्यामुपांगललिताव्रतंदाक्षिणात्येषुप्रसिद्धं तदुक्तंस्कांदे शुक्लायुत
स्यपंचम्यामाश्विनेमासिचरेद्व्रतमित्यादि अत्रपंचमीरात्रिव्यापिनीग्राह्येतिकेचित् मध्याह्नव्यापिनीग्रा
ह्येत्यपरे वचनानितुपंचमीप्रकरणेवक्ष्यंतेकथापूजनादिकमपितस्मिन्नेवप्रकरणेबोध्यं इति
पंचमीकृत्यम् आश्विनशुक्लपक्षेमूलनक्षत्रेसरस्वतीस्थापनाकार्या यथोक्तंनिर्णयामृतेदेवीपु
राणे मूलेषुस्थापनंदेव्याः पूर्वाषाढासुपूजनं उत्तरासुबलिंदद्याच्छ्रवणेनविसर्जयेत् रुद्रयाम
लेपि मूलर्क्षेचसराथीशपूजनीयासरस्वती पूजयेत्प्रत्यहंदेवयावद्वैष्णवमृक्षकं नाध्यापयेन्नैव
लिखेन्नाधीयीतकदाचन पुस्तकेस्थापितांदेवीं विद्याकामोद्विजोत्तमः मूलस्याद्यपादेआवाहन
मितिशिष्टाः श्रवणाद्यपादेचविसर्जनं आदिभागेनिशायांतुश्रवणस्ययदाभवेत् संप्रेषणंत
दादेव्यादशम्यांचमहोत्सवइतिचिंतामणौब्रह्मांडपुराणात् अथषष्ठीकृत्यंनिर्णयामृते आश्वि
नशुक्लपंचम्यांस्थापितायादेव्याः सप्तम्यांपूजार्थंषष्ठ्यांनक्षत्रयुक्तायामसंभवेकेवलायामपिबि·
ल्ववृक्षनिमंत्रणंकार्यं कालिकापुराणे बोधयेद्बिल्वशाखायांषष्ठ्यांदेवीफलेषुचेत्यादि अत्रस
र्वत्रतिथिनक्षत्रयोगादरोमुख्यःकल्पः तदभावेतुतिथिरेवग्राह्या तिथिःशरीरंदेवस्यतिथिर्न
क्षत्रमाश्रितं तस्मात्तिथिंप्रशंसंतिनक्षत्रंनतिथिंविनेतिविद्यापतिलिखितवचनात् देवलः ति
थिनक्षत्रयोर्योगेद्वयोरेवानुपालने योगाभावेतिथिर्ग्राह्यादेव्याःपूजनकर्मणीति अत्रचषष्ठीसा
यंकालव्यापिनीग्राह्या षष्ठ्यांबिल्वतरौबोधंसायंसंध्यासुकारयेदितिभविष्यवचनात् पत्रीप्रवे
शात्पूर्वेद्युःसायंकालेषष्ठ्यभावेतत्पूर्वदिनेधिवासनंकार्यंकालेप्यतासत्वेत्वधिवासनलोपः षष्ठ्यां
सायंप्रकुर्वीतबिल्ववृक्षेधिवासनमितिवचनादितिकल्पतरुः सायंकृतिःफलानिप्राधमाआर्थी
वत्तकर्मंतोपरत्याचार्यचूडामणिकृत्यरत्नावल्याकालतत्वविवेचनेचैवमेव आमंत्रणंतुपत्रीप्र
वेशाव्यवहितपूर्वदिनेकार्यं पत्रीप्रवेशनंरात्रौनकार्यं पत्रीविसर्जनंरात्रौनकार्यं पत्रीविसर्ज
नंरात्रौप्रवेशंसकरोतियः तस्यराज्यविनाशःस्यात्प्रजाचविकलाभवेत् अस्तयोगानुरोधेनरात्रौ
पत्रीप्रवेशनात् विसर्गंवाचरेद्यस्तुसराष्ट्रंसपतिर्नश्यतीतिनिषेधात् तेनचपत्रीप्रवेशनस्याष्टमी।
विद्धायांसप्तम्यांप्रातः कर्तव्यत्वात्तद्व्यवहितपूर्वदिनएवसायाह्नेषष्ठ्यभावेप्यामंत्रणंकार्यं पत्री
प्रवेशात्पूर्वेद्युःसायाह्नेबिल्ववासिनीं चंडीमामंत्रयेद्विद्वान्नवषष्ठीपुरस्त्रियेतिब्रह्मांडपुराणवच
नात् मत्स्यसूक्तेपि ज्येष्ठाचाप्यथवाषष्ठीकायंकालेनचेद्भवेत् सायमेवतथापिस्याद्बिल्वशाखा
भिमंत्रणं पूर्वाषष्ठीसनक्षत्रासायंप्राप्तामपिप्रपूजेत् यदातुपत्रिकापूजानपरेद्युर्भविष्यति संनिकृष्ट
यत्पूर्वंपत्रिकादिवसस्यतु तद्दिनेवरणंकृत्वापरेशाखाप्रवेशयेदिति तत्रपूजनक्रमः बिल्वाभ्या·
र्णंगत्वाबिल्ववृक्षायनमइतिबिल्वतरुंसंपूज्य बिल्ववृक्षेजयंतीमंत्रेणदुर्गेइहागच्छेतिहेतिदुर्गां

मावाह्य षोडशभिः पंचभिर्वोपचारैस्तत्रैव संपूज्य गीतवाद्यघोषपुरःसरं तत्रैव देवीं बोधयेत् तत्रा
मंत्रः रावणस्य वधार्थाय रामस्यानुग्रहाय च अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा अहमप्या
श्विने षष्ठ्यां सायाह्ने बोधयाम्यतः ततो बिल्वतरुमामंत्रयेत् मेरुमंदरकैलासहिमवच्छिखरे गिरौ जा
तः श्रीफलवृक्ष त्वमंबिकायाः सदाप्रिय श्रीशैलशिखरे जातः श्रीफल श्रीनिकेतन नेतव्योसि मया गच्छ
पूज्यो दुर्गास्वरूपतः इति एवं देवीमधिवास्य स्वगृहमागच्छेदिति षष्ठीकृत्यं ततः परदिने सप्तम्यां मूल·
युक्तायां केवलायां वा पूर्वदिनामंत्रितबिल्वतरुसमीपं गत्वा पुनस्तं संपूज्य गृहं प्रवेशयेत् तदुक्तं हेमा·
द्रौ लैंगे मूलाभावे तु सप्तम्यां केवलायां प्रवेशयेत् युग्माभ्यां नवबिल्वस्य फलाभ्यां शाखिकां तथा
तथैव पत्रिकां देव्याः स्नानार्थं तु प्रवेशयेत् अत्र चोपवासपूजादावौदयिकी सप्तमी ग्राह्या न तु यु·
ग्मवाक्यात्पूर्वा युग्माद्यावर्धैहि सप्तमी पार्वतीप्रिया रवेरुदयमीक्षंते न तत्र तिथियुग्मतेति कृ
त्यतत्त्वार्णवोदाहृतवचनात् भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः तिथावुदयगामिन्यां सर्वा
स्ताः कारयेद्बुध इति निर्णीतत्वे नंदिकेश्वरपुराणाच्च दुर्गाभक्तितरंगिण्यामप्येवम् तत्रापि घटि
कान्यूनत्वेऽपि न कार्या व्रतोपवासनियमे घटिकैकापि या भवेदिति देवलोक्तेरिति गौडाः दा
क्षिणात्यास्तु पूर्वामेव कुर्वंति पत्रिकापूजा च पूर्वोक्तैव कार्या तत्र मूलारोधात्कथ्यन्हादाविति
कृत्यतत्त्वार्णवे उक्तः ज्योतिषेऽपि पूर्वाह्णे न च पत्रिका शुभकरी संग्राममथारावहा सायाह्ने वधबं
धनादिकलहं सर्वं तनते सर्वदा सप्तम्यामस्तगायां यदि विशति गृहं पत्रिका श्रीफलाद्या राज्ञः स
माग राज्यं जनस्तु खमखिलं हंति मूलानुरोधात् तस्मात्सूर्योदयस्थां नरपतिशुभदां सप्तमीं प्राप्य·
देवीं भूपालो वेशयेत्तां सकलजनहितां राक्षसर्क्षं विहायेति अथ सप्तम्यादिदिनत्रयविहितं प
त्रिकापूजनं तत्कृत्यं चोच्यते नित्यविधिं निर्वर्त्य पूर्वनिमंत्रितबिल्वसमीपं गत्वा संपूज्यागच्छ वर
दे देवीति पूर्वोक्तमंत्रं पठित्वा प्रार्थयेत् बिल्ववृक्ष महाभाग सर्वदा शंकरप्रिय गृहीत्वा तव शाखां
तु दुर्गापूजां करोम्यहं शाखाच्छेदोद्भवं दुःखं न च कार्यं त्वया प्रभो इति ततः फलद्वययुक्तां शोभना
मपराजितादिगतामेकां शाखां छेदयेद्वानस्पत्येन मंत्रेण मंत्रस्तु वनस्पते शतवल्शो विरोह
सहस्रवल्शा वि वयं रुहेम यं त्वामयं स्वधितिस्तेजमानः प्रणिनाय महते सौभगायेति कचित्तु छिं
धि फट् ॐ हुं फट् स्वाहेति मंत्रः ततस्तां शाखामानीय गृहांगणे पीठे संस्थाप्य बिल्वशाखायै नम इ
त्यादिभिः पूजयित्वा बिल्वशाखायां मृन्मयप्रतिमायां च देवीमावाहनपुरःसरं तथैव पूजयित्वा·
माषभक्तादिबलिं च दत्वा दोलादिना शाखां प्रतिमां च पूजागृहद्वारदेशमानीय तत्रैव स्थापयि।
त्वा पूजागृहस्थितानि भूतेभ्यो नम इति गंधादिभिः संपूज्य भूताः प्रेताः पिशाचाश्च ये वसंत्यत्र भूत
ले ते गृह्णंतु मया दत्तो बलिरेष प्रसाधितः पूजिता गंधपुष्पाद्यैर्बलिभिस्तर्पितास्तथा देशादस्मा
द्विनिःसृत्य पूजां पश्यंतु मत्कृतां भूतेभ्य एष माषभक्तबलिर्नम इति सपुष्पजलोत्सर्गेण बलिं ते·
भ्यो दत्वा अपसर्पंतु ते भूता ये भूता भूमिपालकाः भूतानामविरोधेन पूजाकर्म करोम्यहमिति प
दित्वा फडिति तान्यपसारयेत् सर्षपादींश्च विकिरेत् तदकरणे दोषश्रवणात् तथा च कालिकापुरा
णे स्थितेषु तत्र भूतेषु नैवेद्यं मंडलं तथा विलुंपंति महालुब्धा न च गृह्णंति देवताः तस्माद्यत्नेन·
कर्तव्यं भूतानामपसारणमिति शारदातिलके विकिरान्विकिरेत्तत्र सप्तसप्तानुशराणुना ला·
जा चंदनसिद्धार्थफलपुष्पकुशाक्षताः विकिरा इति संप्रोक्ताः सर्वविघ्नविनाशना इति शराणुः फ
डित्यस्त्रमंत्रः स चाभिमंत्रणे विकिरणे च ततः पुनः शाखायां प्रतिमायां देवीं संपूज्य श्रीशैलेत्या·
दिनेतव्योसि मया गच्छ पूज्यो दुर्गास्वरूपत इति दुर्गास्वरूपतया शाखां ध्यात्वा गीतवाद्यादिघोषेण

प्रतिमासहितां तां पूजागृहं प्रवेश्य आरोपितासि दुर्गे त्वं मन्मये श्रीफलेपि च स्थिरा नित्यं तत्र भूत्वा मे गृ
हे त्वं कामदा भवेति पूजास्थाने शोभनपीठोपरि स्थिरीकृत्य पूर्वोक्तप्रकारेण प्राणप्रतिष्ठां कृत्वा प्राण
प्रतिष्ठामंत्रेण प्रतिष्ठाप्य सपुष्पाक्षतानादाय आवाहयाम्यहं देवीं मन्मये श्रीफले तथा कैलासशिख
राद्देवि विंध्याद्रेर्हिमपर्वतात् आगत्य बिल्वशाखायां चंडिके कुरु सन्निधिं भगवति दुर्गे इहागच्छे
त्यावाह्य स्थापितासि मया देवि श्रीफले मन्मयेपि च आयुरारोग्यमैश्वर्यं देहि देवि नमोस्तु ते
भगवति दुर्गे इह तिष्ठेति स्थापयित्वा कृतांजलिः दुर्गे दुर्गे स्वरूपासि सुरतेजो महाबले सदानंदक
रे देवि प्रसीद मम सिद्धये एह्येहि भगवत्यंब शत्रुक्षयजयप्रदे भक्तितः पूजयामि त्वां दुर्गे देवि सुरा
र्चिते पल्लवैश्च फलोपेतैः पुष्पैश्च सुमनोहरैः पल्लवैः संस्थिते देवि पूजये त्वां प्रसीद मे दुर्गे देवि इ
हागच्छ सान्निध्यमिह कल्पय यज्ञभागान्गृहाण त्वं योगिनीकोटिभिः सहेति पठेत् ततो जयंती
त्यादिमंत्रेणानुलेपनांतं पूजयित्वा पुष्पांजलित्रयं दद्यात् दुर्गायै नम इत्यादिहोमेन ततः अमृतोद्भ
वः श्रीवृक्षः शंकरस्य सदा प्रियं बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि इति बिल्वपत्रं ब्रह्मविष्णुशि
वादीनां द्रोणपुष्पं सदा प्रियं ततो दुर्गे प्रयच्छामि सर्वकामार्थसिद्धये इति द्रोणपुष्पं च निवेद्य जयं
तीत्यादि इमानि पुष्पाणि दुर्गायै नम इति जातीचंपकादिसुगंधिपुष्पाण्यपि दत्वा तथैव धूपदीपनाना
नैवेद्यपुनराचमनीयतांबूलानि दत्वा पूजासांगुण्यार्थं किंचिद्दक्षिणां च दत्वा स्तुतिभिः स्तुत्वा प्रणम्य ब
द्धांजलिः प्रार्थयेत् महिषघ्नि महामाये चामुंडे मुंडमालिनि द्रव्यमारोग्यमैश्वर्यं देहि देवि नमो
स्तु॰ [illegible] कुंकुमेन समालब्धे चंदनेन विलेपिते बिल्वपत्रकृतापीडे दुर्गेहं शरणं गतः सर्वमंगलेति
रूपं देहीति च श्लोकद्वयं पठेत् ततः कदल्यादिपत्रिकास्वपूजा [illegible]
ल्वदाडिमौ अशोको मानकश्च धान्यादिनवपत्रिका इति कृत्यतत्वार्णवे उक्ताः तत्र कदल्यां ब्रह्मा
णीं दाडिमे रक्तदंतिकां धान्ये लक्ष्मीं हरिद्रायां दुर्गां माने चामुंडां कच्वीं कालिकां बिल्वे शिवां अशोके
शोकरहितां जयंत्यां कीर्तिं चावाह्य पूजयेत् कौस्तुभे तु बिल्वालाभे पत्रिकांतरेपि बोधनं कार्यं दु
र्गाभक्तितरंगिण्यां भादीनामपि तत्समत्वेनाभिधानादिति ध्येयं ततो बलिं दद्यात् दुर्गा शिवामित्या
दि च पठेत् कालतत्वविवेचने पत्रिकापूजा प्रतिपत्प्रतिष्ठापितदेवीप्रतिमासमीप एव यदा प्रति
मापूजायामपि सप्तम्यादिपक्षस्तदा पत्रिकायैव सह प्रतिमाया अपि देव्यर्थकृतगृहप्रवेशादि विस
र्जनांतं कर्तव्यमिति दुर्गाभक्तितरंगिण्यामिति एवमेवाष्टमीनवमीदशमीदिनेष्वपि पूजा बोध्या
इति सप्तमीपूजाविधिः अथाष्टमी सा च पूर्णा चेत्सैव खंडा चेन्नवमीविद्धा ग्राह्या सप्तमीविद्धाया
निषिद्धत्वात्सर्वथा नवमीविद्धैव ग्राह्या वचनानि तु अष्टमीप्रकरणे वक्ष्यंते अत्र कृत्यमुक्तं निर्ण
यामृते भविष्योत्तरे तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी प्रादुर्भूता महाघोरा योगिनीकोटिभिः
सह अतोर्थं पूजनीया सा तस्मिन्नहनि मानवैः उपोषितैर्वस्त्रमाल्यधूपरत्नानुलेपनैः आमिषैर्विवि
धैः शाकैर्होमैर्ब्राह्मणतर्पणैः बिल्वपत्रैः श्रीफलैश्च चंदनेन हुतेन वा पशुभिः पानकैर्दीपै रात्रौ जाग
रणेन वेति अयं च केवलाष्टम्युपवासः पुत्रवतो निषिद्धः उपवासं महाष्टम्यां पुत्रवान्न समाचरे
त् यथा तथा वा पूजान्मान्नवमीं देवीं प्रपूजयेदिति कालिकापुराणोक्तेः अहन्नीति श्रवणाद्धि पूजा प्रती
यते निशायां पूजिता देवीत्यनेन प्रागुक्तवचनेन कन्यासंस्थे रवावित्यादिना चाष्टम्यां रात्रावपि पूज
नं कर्तव्यमित्युक्तं विशेषतोपि पूजनं तत्र कर्तव्यमित्यन्यत्र पुनः पूजां तथाष्टम्यां विशेषेण स
माचरेत् जागरं च स्वयं कुर्याद्बलिदानं महानिशीति कालतत्वविवेचने देवीपुराणे पश्चात्तः प्र
कर्तव्यो गावयाजवयस्तथा देवीं तु पूजयित्वा ये अर्द्धरात्रेष्टमीषु च घातयंति पशून्भक्त्या ते भवंति म

हावलाः बलिं च ये प्रयच्छन्ति सर्वभूतविनाशने तेषां तुष्यते देवी कल्पकालं तु शंकर इत्यादि भविष्यो-
त्तरे तस्मात्सदा पूजनीया चामुण्डा मुण्डमालिनी तस्यां ये त्वपयुज्यन्ते प्राणिनो महिषादयः सर्वे ते स्वर्गतिं या-
न्ति घ्नतां पापं न विद्यते यावच्च चाल्यते ज्ञात्वा पशुस्तावन्न हन्यते ततया बलिदानेन पुष्पधूपविलेपनैः य-
था संतुष्यति मे शीघ्रं महिषे विन्ध्यवासिनी बलिदानं च मांसेन मद्येन सहितौदनं सप्तम्यां पत्रिकापूजाष्ट-
म्यां वाप्युपोषणं पूजा च जागरश्चैव नवम्यां विधिवद्बलिरिति अत्र नवरात्रेषु स्वातिनक्षत्रे सास्यस्याश्व-
पूजनमुक्तं देवीपुराणे अश्वयुक्शुक्लप्रतिपत्स्वातियुक्ते शुभे दिने पूर्वमुच्चैःश्रवा नाम प्रथमं श्रिय-
माहरत् तस्मात्साश्वैर्नरैः सोत्र पूज्योसौ श्रद्धयान्वितैः पूजनीयास्तुरगा नवमीयावदेव हि शान्तिः
स्वस्त्ययनं कार्यं तदा तेषां दिने दिने धान्यं भल्लातकं कुष्ठं वचा सिद्धार्थकास्तथा पंचवर्णेन सूत्रेण ग्रं-
थितेषां तु बन्धयेत् वायव्यैर्वारुणैः सौरैः शाक्रैर्मंत्रैः सवैस्तवैः वैश्वदेवैस्तथाग्नेयैर्होमः कार्यो दिने
दिने अत्र वायव्यैरित्यादिबहुवचनेभ्यः प्रत्येकं कपिंजलाधिकरणन्यायेन मंत्रत्रित्वं लभ्यते तुर-
गा रक्षणीयास्तु पुरुषैः शस्त्रपाणिभिः न च ताड्याः क्वचित्तेन च वाह्याः कथंचनेति एतदुत्तरकृत्यं
भविष्योत्तरे जयाभिलाषी नृपतिः प्रतिपत्प्रभृतिक्रमात् लोहाभिसारिकं कर्म कारयेद्यावदष्ट-
मीमिति लोहाभिसारिकविधानं तत्रैवोक्तं प्रागुदक्प्रवणे देशे पताकाभिरलंकृतं मंडपं कार-
येद्दिव्यं नवसप्तकरं वरं षोडशहस्तप्रमाणमित्यर्थः आग्नेय्यां कारयेत्कुंडं हस्तमात्रं सुशोभनं
मेखलात्रयसंयुक्तं योन्याश्वत्थदलाभया राजचिह्नानि सर्वाणि शस्त्राण्यस्त्राणि यानि च आनीय मंड-
पे तानि सर्वाण्यत्राधिवासयेत् ततस्तु ब्राह्मणाः स्नाताः शुक्लाम्बरधराः शुचिः ओंकारपूर्वकैर्मंत्रैस्तल्लिंगै-
र्जुहुयाद्धुतं लोहनामाभवत्पूर्वं दानवः सुमहाबलः स देवैः समरे क्रूरो बहुधा शकलीकृतः
तदंगसंभवं सर्वं लोहं संदृश्यते क्षितौ शस्त्रास्त्रमंत्रैर्होतव्यं पायसं घृतसंयुतं हुतशेषं तुरंगाणां
राजा तमुपहारयेत् लोहाभिसारिके कर्मणि तेनैतद्विधिभिः स्मृतं हुतपल्ययणं तस्माद्राजाश्वसम-
लंकृतान् भ्रामयेन्नगरे नित्यं वंदिघोषपुरस्कृतान् प्रत्यहं नृपतिः स्नात्वा संपूज्य पितृदेवताः पू-
जयेद्राजचिह्नानि फलमाल्यविलेपनैः हुतशेषप्रदानं च मेघनादनिके गजे तस्याभिसारणा-
द्राज्ञो विजयः समुदाहृतः पूजामन्त्रान्प्रवक्ष्यामि पुराणोक्तान् हितान्वयैः पूजिताः प्रयच्छन्ति कीर्तिमा-
युर्यशो बलमिति शालिहोत्रे नीराजिते तु तुरगैः कृते च लोहाभिसारिके सगजे अभिषिक्ते राजा-
श्वे ततो नृपाणां भवेद्यात्रा अश्वयुक्शुक्लतिथौ द्वितीयादिके समरात्रे तु वडवान्नृपेणोक्ता स्वातिः
सूर्यस्य वहति रथं सा भारेणाक्रान्ताश्वपाद्गिरीन्ततेभीत्या तेषां तेजः सत्वबलं च गृह्णाति माव-
डवा तस्मात्स्वात्युत्पातान् वाजिनो पीडा च भवति एवं च समरात्रे स्वातेः संपातप्रतिषिद्धः तत्र दि-
वाकरकिरणैः स्पृष्टा वाजिनो रक्ष्याः अथ प्रयोगः षोडशहस्तप्रमाणं मंडपं पताकोपशोभितमीशा-
नपूर्वाणदेशे विधाय तदाग्नेय्यां हस्तमात्रं मेखलमश्वत्थदलाभयोनियुक्तं मनोहरं कुंडं विधाय
मंडपेशानदेशे राजचिह्नानि शस्त्राणि स्थापयेत् अश्वशालां च गोमयलिप्तां सर्वतो वेष्टनेन जनसं-
चारवर्जितां नानापुष्पफलाद्यलंकृतां धूपितां कृत्वा तत्रास्यां सुदपान्नागोवस्नापितानलंकृतान्निर्जलपु-
ष्पमालाभिरलंकृतांस्तुरगान्सूर्यकरस्पर्शवर्जं शस्त्रपाणयः पुरुषाः समाहृत्य रक्षेयुः तेषां कंठदेशे
गुग्गुलामलकीधान्यभल्लातककुष्ठवचापामार्गबीजलोहघ्नेतसर्षपाणां पंचवर्णसूत्रेण वस्त्रपोट-
लिकां कृत्वा बध्नीयात् प्रतिपदः स्वातियोगाभावे यस्यां तिथौ स्वातियोगः भवति तामारभ्य नवमी-
पर्यन्तमश्वपूजा कार्या अश्वयुक्शुक्लपक्षे तु स्वातियोगे शुभे दिने इति प्रक्रम्य शालिवाजिनीराजन-
विधिरिति संप्रदायविदः अस्मिन्नेव सप्तमसप्तम्यामपि त्वाष्ट्र्यां प्रतिपदि चित्रावैधृतियोगे द्वितीयायां प-

चम्यां वा स्वपूजारंभः वाजिनीराजनं पश्चाद्दिवा चित्रां च वैधृतिमित्यस्य शास्त्रोक्तेरित्याहुः द्वितीयाति
थिश्च व्यवहारोच्चये आश्वयुजे शुक्लपक्षे तिथौ द्वितीयादि सप्तरात्रं तत्र दिवाकरकिरणैरस्पृष्टा-
वाजिनो रत्नाः गुग्गुलं हिंगुलं चैव वचा यामार्गं तंडुलान् लोहं सिद्धार्थकं चैव बध्नीयाद्वाजिकंटके
ग्रहहोमश्च कर्तव्यो ग्रहाणामर्चनं तथेति तृतीयापंचम्योरपि विधीरहस्ये गोविंदार्णवे स्वात्यादित्रये
तृतीयादौ समाहृत्याश्विने सिते श्लोकं वाहयानां तु शांत्या नीराजयेत्तत इति भूपालवल्लभे कार्त्ति
केमासि पूर्णिमायामष्टम्यां द्वादशीदिने आश्विने शुक्लपंचम्यां हयनीराजनं स्मृतमिति अत्र पंचम्यन्तो
क्तकालेषु देवान्नदनारंभे गौणकालत्वेनाष्टमीद्वादशीपूर्णिमास्यो विहिता इति बोध्यं सौगंधिकपुष्पं
सूर्यवल्लीदर्शनं तु प्राणानं कारयेत् दृष्ट्वा पुष्पद्वयं वाहा न लभन्ते शुभां गतिं तस्मात्सौगंधिकं
पुष्पं सूर्यवल्लीं च वर्जयेदिति हयशारीरवचनात् सौगंधिकं तु कल्हारमित्यमरः सूर्यवल्ली इत्यु
क्ति प्रसिद्धा ततो यजमानः देशकालौ संकीर्त्य सकलशत्रुजयसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं लो
हाभिसारिकं यज्ञं वाजिनीराजनसहितं करिष्य इति संकल्प्य गणेशपूजादि आचार्यवरणांतं कुर्या
त् ततः आचार्यः प्रत्यक्षाश्वपूजनात्पूर्वं प्रतिमादौ उच्चैःश्रवः पूजां विधाय एवं तत्पूजनं कुर्यात् एवं
तत्स्वरूपं मार्कंडेयपुराणे उक्तं सोमस्यैवं ततः स्वच्छीपल्लीत उद्भवान् अश्वात्रुच्छ्रवः समुत्पन्नो वारुणात्
णसमन्वितः तत्र मंत्रः शालिहोत्रे नमो देवाधिदेवाय तुरंगबलचारिणे सूर्यपुत्राय देवाय तुरंग
सहिताय च तुरंगपरिवारस्य नृगजोपरि यावति अश्वारूढं महातेजः सनिहस्तं महाबलं अश्वारि
हृहृदं देवं देवं तं हयवल्लभं सूर्यपुत्र नमस्तेस्तु नमस्ते पंचवक्त्रक नमो गांधर्वदेवाय रेवंताय नमो
नमः सूर्यपुत्रं हयारूढं पंचवक्त्रं दशांकं रक्तवर्णकशाहस्तं रेवंतं द्विभुजं स्मरेत् सान्वमस्याधि
पं रक्तशरण्यं सोत्रज्ञामहमिति सूर्यपुत्र महाबाहो छायाहृदयनंदन शांतिं कुरु तुरंगाणां रेवंता
य नमोस्तु ते इति वा सारसिंधौ कुंकुमागरुकर्पूरचंदनाद्यनुलेपनैः पत्रपुष्पादिधूपैश्च दधिमो
दकपायसैः ये पूजयंति रेवंतं तेषां श्रीरनपायिनीति ततः प्रत्यक्षाश्वपूजनानंतरं नीराजनं च कृत्वा ।
सिंहासनान्तं पूजां कुर्यात् वक्ष्यमाणमंत्रैः कदाचिदेतां पूजां स्त्रीकर्तृकत्वप्रसक्तौ वा यदि रेवंतपू
जां स्त्री न कुर्यात् अश्वांहे एवं भूपस्य पत्न्या रेवंतपूजने सूत्रनाशः ततो नारीं न नियोज्यात् दर्चने रवेः इति
गोविंदार्णवे सारसिंधुवचनात् सर्वपूजान्ते कुंडे गृह्योक्तविधिना अग्निस्थापनादि ततो ग्रहाणामावा
हनादि ततो गृह्योक्तविधिना वायव्यादिलिंगैर्मंत्रैरेकविंशतिमाज्याहुतीर्जुहुयात् ॐकारपूर्वकैर्मं
त्रैस्तल्लिंगैर्जुहुयाद्धुतमिति भविष्ये वायवायाहीति तिसृणां मधुच्छंदो वैश्वामित्रो वायुर्गायत्री
वाजिनीराजनप्रधानहोमे विनियोगः ॐ वायवायाहि दर्शतेमे सोमा अरंकृताः तेषां पाहि श्रु
धी हवं स्वाहा वायव इदं ॐ वायउक्थेभिर्जरंते त्वामच्छा जरितारः सुतसोमा अहर्विदः स्वाहा वा
यव इदं ॐ वायो तव प्रपृंचती धेना जिगाति दाशुषे उरूची सोमपीतये स्वाहा वायव इदं तत्त्वायामीति
तिसृणामाजीगर्तिर्वरुणस्त्रिष्टुप् वाजिनीराजनप्रधानहोमे विनियोगः ॐ नहि ते क्षत्रं न सहो न
मन्युं च यस्य नाम... आयुः नेमा आपो अनिमिषं चरंती न ये वातस्य प्रमिनंत्यभ्वः स्वाहा वरु
णायेदं ॐ अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः नीचीनाः स्थुरुपरि बुध्न एषामस्मे अंतः
निहिताः केतवः स्युः स्वाहा वरुणायेदं ॐ उरुं हि राजा वरुणश्चकार सूर्याय पंथामन्वेतवा उ
अपदे पादा प्रतिधातवेकरुतापवक्ता हृदयाविधश्चित् स्वाहा वरुणायेदं उदुत्यमिति तिसृणां
प्रस्कण्वः सूर्यो गायत्री वाजिनीराजनप्रधानहोमे विनियोगः ॐ उदु त्यं जातवेदसं देवं वहंति के
तवः दृशे विश्वाय सूर्यं स्वाहा सूर्यायेदं ॐ अप त्ये तायवो यथा नक्षत्रा यंत्यक्तुभिः सूराय विश्वचक्षसे

से स्वाहा सूर्यायेदं उक्थमिंद्राय शंस्यं वर्द्धनं पुरुनिःषिधे शक्रो यथा सुतेषु णो रारणत्सख्येषु च
तस्मिन् सखित्वईमहे तं राये तं सुवीर्ये स शक्र उत नः शकदिंद्रो वसु दयमानः स्वाहा इंद्रायेदं ओं ज्ये
ष्ठेन सोतरिंद्राय सोमं वीराय शक्राय भरा पिबन्नर्याय स्वाहा इंद्रायेदं अतो देवेति तिसृणां मेधातिथि
र्विष्णुर्गायत्री वाजिनीराजनप्रधानहोमे विनियोगः ओं अतो देवा अवंतु नो यतो विष्णुर्विचक्रमे पृथि
व्याः सप्तधामभिः स्वाहा विष्णव इदं ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पांसुरे स्वा
हा विष्णव इदं ओं त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः अतो धर्माणि धारयन् स्वाहा विष्णव इ
दं ओमास इति तिसृणां मधुच्छंदा विश्वेदेवा गायत्री वाजिनीराजनप्रधानहोमे ओं ओमासश्चर्ष
णीधृतो विश्वे देवास आगत दाश्वांसो दाशुषः सुतं स्वाहा विश्वेभ्यो देवेभ्य इदं ओं विश्वे देवासो अप्तु
रः सुतमागंत तूर्णयः उस्रा इव स्वसराणि स्वाहा विश्वेभ्यो देवेभ्य इदं ओं विश्वे देवासो अस्रिध एहिमा
यासो अद्रुहः मेधं जुषंत वह्नयः स्वाहा विश्वेभ्यो देवेभ्य इदं अग्निमीळे इति तिसृणां मधुच्छंदो अग्निर्गा
यत्री वाजिनीराजनप्रधानहोमे ओं अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजं होतारं रत्नधातमं स्वा
हा अग्नय इदं ओं अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत स देवां एह वक्षति स्वाहा अग्नय इदं ओं अग्नि
ना रयिमश्नवत्पोषमेव दिवे दिवे यशसं वीरवत्तमं स्वाहा अग्नय इदं इति सकृत् शाखिनो अथ यजुः शा
खिनां यजमानोपेतिनां सव्याख्यायमंत्रा लिख्यंते पीवो पीनो अन्नां रयीत्यस्य रायेन्नयमिति आनो नियुद्भि
रिति तिसृणां वसिष्ठ ऋषिः वायुर्देवता त्रिष्टुप्छंदः वाजिनीराजनप्रधानहोमे विनियोगः एवमग्रेपि
विनियोगो ज्ञातव्यः ओं पीवो अन्नां रयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्रीः ते वायवे समनसो
वितस्थुर्विश्वेन्नरः स्वपत्यानि चक्रुः स्वाहा रायेन्नयं जज्ञतू रोदसीमे राये देवी धिषणा धाति देवं अध
वायुं नियुतः सश्चत स्वा उत श्वेतं वसुधितिं निरेके स्वाहा आनो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरु
पयाहि यज्ञं वायो अस्मिन्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः स्वाहा इदं वायवे न मम इति तिसृ
णां त्यागः उरुं हि राजा इमं मे तत्त्वा यामीति तिसृणामचोशुनःशेफो वरुणः आद्यंतयोस्त्रिष्टुप् मध्य
मायां गायत्री उरुं हि राजा वरुणश्चकार सूर्याय पंथामन्वेतवा उ अपदे पादा प्रतिधातवेकरुतापव
क्ता हृदयाविधश्चित्स्वाहा इमं मे वरुण श्रुधी हवमद्या च मृडय त्वामवस्युराचके स्वाहा तंत्वा यामि ब्र
ह्मणा वंदमानस्तदाशास्ते यजमानो हविर्भिः अहेडमानो वरुणेह बोध्युरुशंस मान आयुः प्रमोषीः
स्वाहा ३ इदं वरुणाय उद्वयं तमुदुत्यमिति द्वयोः प्रस्कण्वः सूर्यः क्रमेणानुष्टुप्गायत्री चित्रमिति
कुत्स आंगिरसः सूर्यस्त्रिष्टुप् उद्वयं तमसस्परि स्वः पश्यंत उत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमं
उदुत्यं जातवेदसं देवं वहंति केतवः दृशे विश्वाय सूर्यं २ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरु
णस्याग्नेः आप्रा द्यावापृथिवी अंतरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा इदं सूर्याय त्रातारमित्यस्य
गर्गः इंद्रः सुत्रामा नस्य वयश्चनयोः प्रजापत्यविश्वामित्रऋषय इंद्रो देवता त्रिष्टुप् त्रातारमिंद्रमवितार
मिंद्रं हवे हवे सुहवं शूरमिंद्रं ह्वयामि शक्रं पुरुहूतमिंद्रं स्वस्ति नो मघवा धात्विंद्रः स्वाहा इंद्रः सु
त्रामा स्ववाउ अवोभिः सुमृडीको भवतु विश्ववेदाः बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम
स्वाहा तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम स सुत्रामा स्ववां इंद्रो अस्मे आराच्चिद्द्वे
षः सनुतर्युयोतु स्वाहा ३ इदमिंद्राय इदं विष्णुरित्यस्य मेधातिथिऋषिर्विष्णुर्गायत्री इरावतीत्यस्य
वसिष्ठो विष्णुः त्रिष्टुप् उरु विष्णो इत्यस्य प्रजापतिर्विष्णुः अनुष्टुप् इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं स
मूढमस्य पांसुरे स्वाहा इरावती धेनुमती हि भूतं सूयवसिनी मनवे दशस्ये व्यस्तभ्ना रोदसी विष्ण
वेते दाधर्थ पृथिवीमभितो मयूखैः उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि घृतं घृतयोने पिब प्रप्रयज्ञपतिं

रतिःस्वाहा ३ इदंविश्वेभ्योनमम ओमासइतिमधुच्छंदाविश्वेदेवासइत्यस्यगृत्समदः विश्वेदेवादेवताःगा
यत्रीविश्वेदेवासइत्यस्याःसुहोत्रादयोविश्वेदेवाःत्रिष्टुप् ओमासश्चर्षणीधृतोविश्वेदेवासआगतदाश्वां
सोदाशुषःसुतंस्वाहा विश्वेदेवासोअप्तुरःसुतमागंततूर्णयः उस्राइवस्वसराणिस्वाहा विश्वेदेवाः
शृणुतेम हवंमेये अंतरिक्षेयउपद्यविष्ठ येअग्निजिह्वाउतवायजत्रा आसद्यास्मिन्बर्हिषिमादयध्वं
स्वाहा इदंविश्वेभ्योदेवेभ्योनमम अग्नेनयेत्यस्यअगस्त्यऋषिः अयन्नइतिप्रजापतिऋषिः अग्नि
र्देवतात्रिष्टुभौ यमग्नइतिमधुच्छंदाअग्निर्गायत्री अग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानि
विद्वान् युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेमस्वाहा अयन्नोअग्निर्वरिवस्कृणोत्वयंमृधःपु
रएतुप्रभिंदन् अयंवाजंजयतुवाजसातावयंशत्रूञ्जयतुजर्हृषाणःस्वाहा यमग्नेपृत्सुमर्त्यमवावाजे
षुयंजुनाः सयंताशश्वतीरिषःस्वाहा इदमग्नयेनमम शस्त्रास्त्रमंत्रैःइतिमंत्रमष्टोत्तरशतमष्टाविंशति
र्वाऽष्टौवाहुत्वापायसाज्याहुतीर्जुहुयात् होमशेषंतुरंगगजेभ्योदद्यादिति इतिकातीयानां इतिप्रयोगः अ
थसमलंकृतान्सपत्न्यश्वगजान्स्वान्नृपान्राजाश्ववाद्यघोषपुरस्सरंनगरेभ्रमणंभ्रामयेत् ततोराजाकृतमं
गलस्नानःपितृदेवताःसंपूज्यविजयारोग्यादिवृद्ध्यर्थंछत्रादिपूजनमहंकरिष्यइतिसंकल्प्य छत्रा
यनमइत्यादिमंत्रेणगंधादिभिःसंपूज्यइतिपठेत् यथांबुदश्छादयतिशिवायेमांवसुंधरां तथाच्छाद
यराजानंविजयारोग्यवृद्धये अथचामरमंत्रः शशांककरसंकाशक्षीरडिंडीरपांडुर प्रोत्सारयाशुदुरितं
चामरामरदुर्लभ अथखड्गमंत्रः असिर्विशसनःखड्गस्तीक्ष्णधारोदुरासदः श्रीगर्भोविजयश्चैवधर्मपा
लस्तथैवच इत्यष्टौतवनामानिस्वयमुक्तानिवेधसा नक्षत्रंकृत्तिकातेतुगुरुर्देवोमहेश्वरः हिरण्यंचश
रीरंतेधातादेवोजनार्दनः पितापितामहोदेवत्वंमांपालयसर्वदा नीलजीमूतसंकाशस्तीक्ष्णदंष्ट्रः
कृशोदरः भावशुद्धोमर्षणश्चअतितेजास्तथैवच इयंयेनधृताक्षोणीहतश्चमहिषासुरः तीक्ष्णधाराय
शुद्धायतस्मैखड्गायतेनमइति अत्रकेचिन्मंत्रामहानिबंधेष्वदृष्टाअपिपठंतिदृष्टात्लिख्यंते अथकटा
रमंत्रः रक्षमानिगजान्रक्षरक्षवाजिधनानिच ममदेहंसदारक्षकटारकनमोस्तुते अथछुरिका
मंत्रः सर्वायुधानांप्रथमंनिर्मितासिपिनाकिना शूलायुधाद्विनिष्कृष्यकृत्वामुष्टिग्रहंशुभं चंडिका
याःप्रदत्तासिसर्वदुष्टनिबर्हिणी तयाविश्वाद्रिताचासिदेवानांप्रतिपादिता सर्वसत्वांगभूतासि सर्वा
शुभनिबर्हिणी छुरिकेरक्षमांनित्यंशांतिंयच्छनमोस्तुते अथचर्ममंत्रः चंडिकायाःप्रदत्तासिसर्वदु
ष्टनिबर्हणी त्वयानिस्तारितादेवाःसप्रतिष्ठपितामहैः अतस्त्वयिबलंसर्वैर्विन्यस्तंदेवसत्तमैः तस्मा
दायोधनेरक्षशत्रून्नाशयसर्वदा अथचापमंत्रः सर्वायुधमहामात्रसर्वदेवारिसूदन चापमांसमरेर
क्षसाकंशरवैरिह धृतःकुलेनरक्षार्थंसंहारायहरेणच त्रयीमूर्तिगतंदेवंधनुरस्त्रंनमाम्यहं ८ अ
थशक्तिपूजा शक्तिस्त्वंसर्वदेवानांगुहस्यचविशेषतः शक्तिरूपेणदेवित्वंरक्षांकुरुनमोस्तुते अथ
कुंतमंत्रः शासपातयशत्रूंस्त्वमनयानाकमायया गृहाणजीवितंतेषांममसैन्यंचरक्षय ९ अथाग्नेयास्त्र
मंत्रः अग्निशस्त्रनमस्तेस्तुहरतःशत्रुनाशन शत्रून्दहदहिशीघ्रंत्वंशिवंमेकुरुसर्वदा अथपाशमंत्रः
पाशत्वंनागरूपोसिविषपूर्णोविषोद्भवः शत्रवोहित्वयाबध्यानागपाशनमोस्तुते अथपरशुमंत्रः पर
शोत्वंमहातीक्ष्णसर्वदेवारिसूदन देव्याहस्तेस्थितोनित्यंशत्रुक्षयनमोस्तुते अथध्वजमंत्रः शक्रकेतो
महावीर्यसुपर्णस्त्वमुपाश्रितः पक्षिराजनमस्तेस्तुतथानारायणध्वज काश्यपेयारुणभ्रातर्नागारे
विष्णुवाहन अप्रमेयदुराधर्षरणेदेवारिसूदन गरुत्मान्मारुतगतिस्त्वयिसन्निहितोयतः साश्वच
र्मायुधान्योधान्रक्षत्वंचरिपून्दह १४ अथपताकामंत्रः हुतभुग्वसवोरुद्रावायुःसोमोमहर्षयः ना
गकिन्नरगंधर्वयक्षभूतगणग्रहाः प्रमथाद्याःसदादित्याभूतेशोमातृभिःसह शक्रःसेनापतिस्कं

देवरूपाआश्रितस्त्वयि प्रदहंतरिपून्सर्वान्नृराजाविजयमवाप्नुत यानिप्रयुक्तान्यरिभिरायुधानि
समंततः पतंतुपरिशत्रूणांहतानितवतेजसा हिरण्यकशिपोर्युद्धेयुद्धेदेवासुरेतथा कालनेमि
वधेयुद्धेयद्वत्त्रिपुरघातने. शोभितासितथैवाद्यशोभयास्मांश्चसंस्मर नीलश्वेतामिमांदृष्ट्वानश्यं
त्वाशुनृपारयः व्याधिभिर्विविधैर्घोरैःशस्त्रैश्चयुधिनिर्जिताः सद्यःस्वस्थाभवंत्वस्मात्त्वहातेनापम
र्जिताः पूतनारेवतीनाम्नाकालरात्रिश्चयास्मृताः दहत्वाशुरिपून्सर्वान्पताकेत्वंमयार्चिता १५
अथकनकदंडमंत्रः प्रोत्सारणायदुष्टानांसाधुसंरक्षणायच ब्रह्मणानिर्मितश्चासिव्यवहारप्रसिद्ध
ये यशोदेहिसुखंदेहिजयदोभवभूपतेः ताडयस्वरिपून्सर्वान्हेमदंडनमोस्तुते १६ अथडुंडुभिमंत्र
डुंडुभेत्वंसपत्नानांघोरोहृदयकर्षणः तथास्तुतवशब्देनहर्षोस्माकंमुदावहः भवभूमिपसैन्या
नांतथाविजयवर्द्धनः यथाजीमूतघोषेणप्रहृष्यंतिचबर्हिणः तथास्तुतवशब्देनहर्षोस्माकंमु
दावहः यथाजीमूतशब्देनस्त्रीणांत्रासोभिजायते तथैवतवशब्देनत्रस्यन्त्वस्मद्विषोरणे १७ अ
थशंखमंत्रः पुण्यस्त्वंशंखपुण्यानांमंगलानांचमंगलं विष्णुनाविधृतोनित्यमतःशांतिप्रदो
भव १८ अथसिंहासनमंत्रः विजयोजयदोजेतारिपुहंताशुभंकरः दुःखहादुर्मदःशांतःस
र्वारिष्टविनाशनः एतेवैसन्निधौयस्मात्तवसिंहामहाबलाः तेनसिंहासनेतित्वंवेदैर्मंत्रैश्चगीयसे
त्वयिस्थितःशिवःशांतस्त्वयिशक्रःसुरेश्वरः त्वयिस्थितोहरिर्देवस्त्वदर्थंतप्यतेतपः नमस्तेस
र्वतोभद्रभद्रदोभवभूपतेः त्रैलोक्यजयसर्वस्वसिंहासननमोस्तुते अथाश्वसंपूजनंतद्दक्षिणक
र्णेजपेत् कुलाभिजनजातस्त्वंबलतोर्ध्वजनोत्तमैः भर्तारमभिरक्षस्वशिवंतवभवेदिति कश्य
पानमधिष्ठानंसमस्वतरगोत्तम ततोश्वस्यायमंत्रंदत्वा अश्वराजपुरोधास्तुविष्णुस्तेपुरतःस्थि
तः वरुणःपाशहस्तस्त्वांपृष्ठतःपरिरक्षतु वैवस्वतकुवेरौचपार्श्वयोरभिरक्षतां चंद्रादित्यौपृ
ष्टवंशाउदरंपृथिवीधरः रक्षंतुवक्त्रंगंधर्वाबलमिंद्रोददातुते हविःशेषमितिप्राश्यविजयार्थं
महीपतेः ततश्चाचमनीयंदत्वामंत्रमिपठेत् गंधर्वकुलजातस्त्वंमाभूयाःकुलदूषकः ब्रह्म
णःसत्यवाक्येनसोमस्यवरुणस्यच प्रभावाच्चहुताशस्यवर्द्धयत्वंतुरंगमान् तेजसाचैवसूर्य
स्यमुनीनांतपसातथा रुद्रस्यब्रह्मचर्येणपवनस्यबलेनच स्मरत्वंराजपुत्रत्वंकौस्तुभंचम
णिंस्मर यथास्तैर्मथ्यमानक्षीरोदादमृतादिभिः जातउच्चैःश्रवाःपूर्वंतेनजातोसितस्मर
यागानिब्रह्मदाराग्नेन्यासहापितृहातथा भूमिहानृतवादीचक्षत्रियश्चपराङ्मुखः सूर्याचंद्रमसौ
वायुर्यावत्पश्यंतिदुष्कृतं व्रजाश्चतांगतिंक्षिप्रंतत्पापंभवेत्तव विकृतिंयदिगच्छेथाःयुद्धाध्व
नितुरंगम रिपुंविजित्यसमरेसहभर्त्रासुखीभव २० ततःसुखमानसिध्यर्थंशिबिकांपूज
येत् तत्रमंत्रः महेंद्रनिर्मितेदिव्येदेवराजादिसेविते शिबिकेरत्नमांनित्यंसदावासत्रियोंभ
व निर्मितासिकुवेरेणवाल्मीनिद्रासुखार्थिना शिबिकेपाहिमांनित्यंशांतिंदेहिनमोस्तुते रिपु
क्षयकामोरथंपूजयेत् तत्रमंत्रः शास्त्रास्त्रधारणार्थायनिर्मितोविश्वकर्मणा रथनेमिस्वनेनवै
रिपोर्हृदयकंपनः २१ युद्धेजयप्राप्त्यर्थंगजंपूजयेत् तत्रमंत्रः कुमुदैरावणौपद्मः पुष्पदं
तोवामनः सुप्रतीकोंजनोनीलएतेष्टौदेवयोनयः तेषांपुत्राश्चपौत्राश्चवनान्यष्टौसमाश्रि
ताः मंदोभद्रोमृगश्चैवगजसंकीर्णएवच वनेवनेप्रसूतास्तेस्मरयोनिमहागज पांतुत्वांवस
वोरुद्राआदित्याःसमरुद्गणाः भर्तारंरक्षनागेंद्रस्वामीवत्प्रतिपाल्यतां अवाप्नुहिजयंयुद्धेगमनेस्व
स्तितोव्रज श्रीस्तेसोमाद्बलंविष्णोस्तेजःसूर्याज्जवोनिलात् स्थैर्यंमेरोर्जयंरुद्राद्यशोदेवात्पुरंदरात्
युद्धेरक्षंतुनागास्त्वांदिशश्चसहदैवतैः अश्विनौसहगंधर्वैःपांतुत्वांसर्वतःसदा इतिराजविह

पूजनं तथैवकर्मविद्धानिपूज्यानिस्वानिशिल्पिभिः लोहाभिसारिकंकर्मकृत्वैवंमंत्रपूर्वकं एवंकृत्वातथाष्टम्यां
पूर्वाह्णेस्नानमाचरेत् दारुणाविचित्रतोरणाविन्यस्तेशोभनेस्थाने पुरतोविन्यस्तमणिविचित्रगृहमध्यगांस्ना
तां कुंकुमचंपकचंदनचंद्रसमैः शैलपिष्टैश्च चर्चितगात्रांचंडीकुसुमैरभ्यर्चयेद्दृढभिः कुमुदैः सपत्रकुसु
मैः सदीपधूपैः सनैवेद्यैः मांसैर्वल्युपहारैर्मंगलशब्दैः समुच्चलितैः विहितवृत्तैर्यतिनैः स्पंदनशितशस्त्र
धारिजनलोकैः तुष्टैर्वरवस्त्रादितुनिवेद्यसर्वमेवभगवत्यै जयंतीत्यादिपूजामंत्रः विल्वपत्रमंत्रस्तु श्री
मनोऽद्भवंवीरवृक्षमित्यादि दुर्गासापूजनीयातुतद्दिनेद्रोणपुष्पकैरित्युक्त्वा द्रोणपुष्पंसमर्पये
तत्रमंत्रोब्रह्मविष्णुशिवादीनामित्यादिसप्तमीप्रकरणेद्रष्टव्यः ततःपुष्पांजलिंदद्यादिति इत्यष्टम्यां
महःकृत्यं अत्रराजाविजयकामोऽर्धरात्रेविशेषपूजापूर्वकंबलिंदद्यात् तदर्थयामिनीशेषेविजयार्थं
नृपोत्तमः पंचाब्दलक्षणोपेतंगंधधूपस्रगर्चितं विधिवत्कालिकालीतिजप्त्वाखड्गेनघातयेदितिदेवी
पुराणात् अत्रनैमित्तिकपूजोत्तरंराजोचितःषष्टियोगिनीपूजाकार्यातन्नामानितु विजयायैनमः १
मंगलायैनमः २ ॐभद्रायैनमः ३ ॐधृत्यैनमः ४ ॐशांत्यैनमः ५ ॐक्षमायैनमः ६ ॐशिवायै
नमः ७ ॐसिद्ध्यैनमः ८ ॐउमायैनमः ९ ॐश्रियैनमः १० ॐरत्यैनमः ११ ॐदीप्तायैनमः १२
ॐकांत्यैनमः १३ ॐयशस्विन्यैनमः १४ ॐलक्ष्म्यैनमः १५ ॐईश्वर्यैनमः १६ ॐवृद्ध्यैनमः १७ ॐ
साध्यैनमः १८ ॐजयायैनमः १९ ॐब्राह्म्यैनमः २० ॐजयंत्यैनमः २१ ॐअपराजितायैनमः २२
ॐजितायैनमः २३ ॐमानस्यैनमः २४ ॐश्वेतायैनमः २५ ॐदित्यैनमः २६ ॐमायायैनमः २७
ॐमहामायायैनमः २८ ॐमोहिन्यैनमः २९ ॐरतिलालसायैनमः ३० ॐतारायैनमः ३१ ॐवि
मलायैनमः ३२ ॐगौर्यैनमः ३३ ॐशरण्यायैनमः ३४ ॐकौशिक्यैनमः ३५ ॐमत्यैनमः ३६
ॐदुर्गायैनमः ३७ ॐक्रियायैनमः ३८ ॐअरुंधत्यैनमः ३९ ॐघंटायैनमः ४० ॐकर्ण्यैनमः
४१ ॐकापालिन्यैनमः ४२ ॐरौद्र्यैनमः ४३ ॐकाल्यैनमः ४४ ॐमायूर्यैनमः ४५ ॐत्रिनेत्रायै
नमः ४६ ॐसमरूपायैनमः ४७ ॐबहुरूपायैनमः ४८ ॐरिपुघ्नायैनमः ४९ ॐअंबिकायैनमः
५० ॐचर्चिकायैनमः ५१ ॐसुरपूजितायैनमः ५२ ॐवैवस्वत्यैनमः ५३ ॐकौमार्यैनमः ५४ ॐ
महालक्ष्म्यै० ५६ ॐकार्तिक्यैनमः ५७ ॐशिवदूत्यैनमः ५८ ॐचामुंडायैनमः ५९ ॐब्रह्माण्यैन-
मः ६० ॐमाहेश्वर्यैनमः ६१ ॐवैष्णव्यैनमः ६२ ॐवाराह्यैनमः ६३ ॐइंद्राण्यैनमः ६४ ततः
खड्गंनमस्कृत्यशत्रूणांवधसिद्धये इच्छेतविजयंराज्यंसंभवंचात्मनोनृपः ततःपुनःप्रणम्याथसं
स्मरन्हृदयेशिवां ततोजयंजयालायैःस्तवैःकुर्यादिमंततः सर्वमंगलमंगल्येशिवेसर्वार्थसाधिके
उमेचत्र्यंबिकेगौरिनारायणिनमोस्तुते कुंकुमेनसमालब्धेचंदनेनविलेपिते विल्वपत्रकृतापी
डेदुर्गेहंशरणंगतः सर्वंकृत्वेतिकौरव्यअष्टम्यांजागरंनिशि नटनर्तकगीतैश्चकारयेच्चमहोत्स
वं एवंहृष्टेनिशांनीत्वाप्रभातेचारुणोदये घातयेन्महिषान्मेषान्रटतोनककंधरान् शतमर्द्ध
शतंचापितदर्द्धंवायथेच्छया सुरासवभृतैःकुंभैस्तर्पयेत्परमेश्वरीं कापालिकेभ्यस्तद्देयंदीना
नाथेभ्यएवच दासीदासजनेदेयंतद्भक्तेभ्यस्तथैवच सर्वंविभज्यकौंतेयसुहृत्संबंधिबंधुषु ततो
पराह्णसमयेनवम्यांवैरथस्थितां भवानींभ्रामयेद्राष्ट्रेस्वयंराजास्वसैन्यवान् आदिष्टैःपुरुषैर्वापि
रथयुक्तैः सुशिक्षितैः शनैःशनैरत्ननयेज्ज्वलद्भिःदीपहस्तकैः आकृष्टखड्गैर्योधैश्चधानुष्कैश्चप्रग·
ल्भितैः नदद्भिःशंखपटहैर्नृत्यद्भिर्बहुवारणैः कश्चित्कोपोषितोवीरोविधृतोन्येनखड्गवान् भूतेभ्य
श्चबलिंदद्यान्मंत्रेणानेनसामिषं सरक्तंसजलंचान्नंगंधपुष्पाक्षतैर्युतं ॐस्त्रीन्वारान्सशूलेनदि·
ग्विदिक्षुकरेद्बलिं मंत्राश्च बलिंगृह्णंत्विमंदेवाआदित्यावसवस्तथा मरुतश्चाश्विनौरुद्राः सुपर्णा

णाः पन्नगाग्रहाः असुरा यातुधानाश्च पिशाचोरगराक्षसाः डाकिन्योपस्त्वेतालायोगिन्यः पूतनाः शिवाः जं
भकाः सिद्धगंधर्वा माला विद्याधरा नगाः दिक्पाला लोकपालाश्च येच विघ्नविनायकाः जगतां शांतिक
र्तारो ब्रह्माद्याश्च महर्षयः मा विघ्नं मा च मे पापं मा संतु परिपंथिनः सौम्या भवंतु तृप्ताश्च भूतप्रेताः सु
खावहा इति महिषघ्नि महामाये इत्यादि दुर्गां शिवां शांतिकरीमित्यादि पठेत् अष्टम्यां च चतुर्दश्यां नव
म्यां चैकचेतसः इति मार्कंडेयपुराणवचनात् चंडीपाठोपि विशेषतः कार्यः अत्र गौरीतृतीयावत्कर्मका
लव्यापिशास्त्रबाधित्वान्नवमीयुतायामेव रात्रावसत्यामष्टम्यां नवमीपूजया सहतंत्रेणाष्टमीपूजोपप
साऽनुचितादिति कालतत्वविवेचने कौस्तुभे तु नवमीविद्धायां तु तस्यां पूजाद्वयस्याप्येककालप्रसक्तौ
अष्टमीपूजां नवमीपूजां तत्संधिपूजां च तंत्रेण करिष्य इति संकल्पः अष्टमीनवमीपूजयोः पूर्वोत्तरदि
नगतयोः प्रातःकालस्थयोः पृथक्संभवे संधिकालस्य च ततः पृथक्त्वाभे संधिपूजापि दिवा रात्रौ वा
पृथगेव कार्या अष्टमीनवमीसंयोगरत्नीयावल्लकथ्यते तत्र पूज्या त्वहं पुत्र योगिनीगणसंयुतेति का
लिकापुराणे देवीवाक्ये तत्तीयसंधिपूजाविधानात् अस्याश्च कालविशेषेण फलतारतम्यं मत्स्यसू
क्ते अष्टमीनवमीयोगे रात्रियोगो विशिष्यते अर्द्धरात्रे दशगुणं संध्यायां त्रिगुणं भवेदिति संधिश्च
तिथ्योरंत्याद्यदंडात्मकः अष्टम्याः शेषदंडश्च नवम्याः पूर्व एव च तत्र या क्रियते पूजा विज्ञेया सा महा
फलेति कामरूपीयनिबंधोक्तेः यदा पूर्वनिबंधस्थित षष्टिदंडाष्टम्यां नवमीदिनशेषो भवति तदाऽष्टमी
पूजा पूर्वेद्युरेव संधिपूजा च नवमीपूजया सह परत्र कार्येत्युक्तं इत्यष्टमीकृत्यम् अथ नवमीकृत्य
म् इयं च नवमी दुर्गापूजायामष्टमीविद्धा ग्राह्या सायंत्रिमुहूर्तयोगे पूर्वा नवमी श्रावणी दुर्गनवमी
ति वचनात् दशमीविद्धानिषेधात् त्रिमुहूर्तस्पर्शाभावे तु निषिद्धापि परैव कार्येति निर्णयसिंधौ मदन
रत्ने तु बल्यादौ परा कार्या अश्वयुक्शुक्ल नवमी मुहूर्तं वा कला यदि सा तिथिः सकला ज्ञेया लक्ष्मी
विद्याजयार्थिभिरिति सौरपुराणात् सूर्योदये परं रिक्ता पूर्णा स्यादपरा यदि बलिदानं प्रकर्तव्यं तत्र
देयं शुभावहं बलिदाने कृतेऽष्टम्यां पुत्रभंगो भवेन्नृपेति देवीपुराणाच्च उपवासे पूर्वेति निर्णयदी
पे महानवमी परदिनेऽपराह्णव्यापिनी परा अन्यथा पूर्वेति वचनानि तु नवमीप्रकरणे वक्ष्यंते का
लतत्वविवेचने यदा तु नवम्यष्टमीविद्धा भूत्वा द्वितीयदिनेपि कियती भवति तदा नवमीप्रयुक्तस्य पू
जादेः पूर्वदिनेऽनुष्ठानेपि महाबलिदानमात्रं द्वितीयदिने कर्तव्यं प्रभूतबलिदानं तु दीयते तत्र मा
नवैः तदा ह्रनाशमायाति मरकोपद्रवैः किलेति भविष्यवचनात् नवप्रयुक्तं बलिदानं सर्वथा
नवमीमध्य एव कार्यं न तु दशम्यां अत्र केचित् पूर्वाषाढायुताष्टम्यां पूजाहोमाद्युपोषणमिति का
लिकापुराणवचनादष्टम्यां होममाहुः कौस्तुभे तु शुंभासुरवधार्थाय रक्तबीजो महासुरः अष्टम्यां
निहतो देव्या रात्रौ चैवारुणोदये ततः प्रभृति विंध्याद्रौ स्थिता पूजाप्रवर्तिका शास्त्रास्त्रमंत्रैर्होतव्यं
पायसं घृतसंयुतं मांसानि तत्र होमार्थं मेषाद्यानि च सर्वशः अजस्त्वेको हि होतव्यो रक्तवर्णो विशेष
तः हंसवर्णस्तु होतव्यो गौरसिंहनिरपवा रोहितमत्स्यमांसं च होतव्यं जयमिच्छतेत्यादिवचना
होमस्याष्टमीकृत्यत्वेनैव प्रतीतेस्तत्रैव होमः कार्य इत्युक्तं अन्ये तु नवम्यां बलिदानं तु कर्तव्यं वैय
थाविधि जपहोमं च विधिवत्कुर्यात्तत्र विभूतय इत्यादिवचनेन नवम्यामेवारभ्य नवम्यां होमं समापय
दित्याहुः अपरे तु अष्टम्यामारभ्य नवम्यां समापयंति तत्र मूलं शिष्टाचार एव वस्तुतस्तु अष्टमीहो
मवचनानि लोहाभिसारकर्मपराणि लोहाभिसारिकं कर्म कारयेद्यावदष्टमीति भविष्योत्तरपुराणे
ष्टमीपर्यंतमेव तस्योक्तत्वात् नवमीहोमवचनं नवरात्रव्रतविषयं इति न काप्यनुपपत्तिः अथवा
ष्टमीनवमीहोमवचनान्यष्टरात्रनवरात्रपक्षयोर्व्यवस्थया होमविधायकानि यत्तु निर्णयसिंधौ

समुच्चयपक्ष एवयुक्त इतितदेतेनपरास्तं यदपिरुद्रयामलेविकल्पउक्तस्तन्निर्मूलमितिप्रौढिवादमात्रंयाम
लस्यैवमूलत्वात् अथतस्यैवनिर्मूलत्वमित्यभिप्रायस्तत्र तंत्राणामपिवेदमूलकतयानारदपंचरात्रादि
श्रुतत्वात् दुर्गाभक्तितरंगिण्यांशिरोडग्रंथेष्वपिनवम्यांहोमउक्तः अत्रडामरतंत्रेविशेषः पायसंसर्पि
षायुक्तंतिलैःशुक्लैर्विमिश्रितं होमयेद्विधिवद्भक्त्यादशांशेननृपोत्तमः रुद्राध्यायेयथाहोमोमंत्रेणै
केनसाध्यते तथास्तोत्रंजपेद्धोमंश्लोकेनैकेनसाधयेत् यद्वासप्तशतीजप्येहोमेमंत्रेणवाक्षरः ऐं
ह्रींक्लींचामुंडायैविच्चे इतिपूर्वोक्तः कल्पतरुरत्नावल्यांदेवीपुराणे पूजयेत्तिलहोमैश्चदधिक्षीरघृतादिभि
रिति मंत्रश्च जयंतीत्यादिः अनेनैवतुमंत्रेणजपहोमादिकारयेत् देवीपुराणात् दुर्गाभक्तितरंगि
ण्यामप्येवं केचित्तुमार्कंडेयपुराणगतसप्तशतीस्तवेनप्रतिश्लोकंस्वाहांतेनतिलमिश्रपायसेनहो
मंकुर्वंति प्रतिश्लोकंचजुहुयात्पायसंतिलसर्पिषेतिरहस्यग्रंथवचनात् पुरश्चरणकार्येतुबिल्वपत्रयुतैस्तिलै
रितिवचनाद्बिल्वपत्रयुक्ततिलैर्होमइतिस्मार्ताः यत्तुनिर्णयसिंधौमानाभावादितिस्मार्तमतेदूषणमभि
हितं तत्तुच्छंपूर्वोक्तवचनस्यमानत्वात् यदिचैतद्वचनस्यनवरात्रसंबंधिहोमांगत्वेनबिल्वपत्रयुततिल
विधायकत्वेमानाभावइत्यभिप्रायस्तर्हिभ्रांतानवबोधः नवरात्रसंबंधिकाम्यपुरश्चरणांगहोमाभिप्रा
येणतथाभिधानात् तिथितत्वेनवरात्रप्रकरणेकालिकापुराणेपिपुरश्चरणकार्येषुबिल्वपत्रयुतैस्ति
लैः सार्द्रैःसघृतैर्वापिशिवामुद्दिश्ययत्नतः जुहुयादनलेदग्धंसंस्कृतेकार्यसिद्धये रुद्रयामलेपि प्र
धानद्रव्यमुद्दिष्टंपायसान्नंतिलैस्तथा रक्तचंदनखंडैश्चगुग्गुलैश्चमनोहरैः प्रतिश्लोकंतुजुहुयात्स
र्वद्रव्याणिचक्रमादितिनवाक्षरेणवाहुत्वानमोदेव्याइतीतिचेति एवंनवम्यांहोमकुमारीपूजनब्राह्म
णभोजनादिकृत्वाद्दक्षिणांचाचार्यायनिवेदयेत् नवम्यांपूर्ववत्पूजांकृत्वाभूतिमिच्छता दक्षिणांव
स्त्रयुग्मंचआचार्यायनिवेदयेत् इतिमत्स्यसूक्तात् पूर्ववत्तत्पदादीनिकालतत्वविवेचने तत्रैवभ
विष्योत्तरे कृताभिषेकावरदाशुक्लेचाश्वयुजस्यच तस्मात्स्नात्वातुसंपूज्यनवम्यांचंडिकांबुधैरिति इ
तिनवमीकृत्यम् विसर्जनंतुदशम्यामेवकार्यं संपूज्यप्रेषणंकुर्याद्दशम्यांसावरोत्सवैरितिभविष्यपु
राणात् रुद्रयामले दशम्यामभिषेकंचकृत्वामूर्तिविसर्जयेदिति तत्रदशम्याः पूर्णतिथित्वेप्रातस्तत्कृ
त्वात्तदुत्तरंपारणोत्तरमपराजितापूजनमितिक्रमो न किंसंदिग्धमेव यत्तुनवम्युत्तरमपराह्णेदशमीप्र
वृत्त्याउत्तरदिनेश्रवणाभावश्च तत्रविसर्जनव्रतपारणापराजितापूजनंक्रमेभवतिसंदेहः पारणोत्तर
कर्तव्यस्यतत्रैवापराह्णेशिष्टैः क्रियमाणस्यापराजितापूजनस्य विसर्जनंविनानुपपत्तेः अत्रोच्यते नव
मीदशमीपारणविधायकवचनद्वैविध्येनपारणायाअनियतकर्तव्यत्वेपि संप्रेषणंतुकर्तव्यंदशम्यां·
सावरोत्सवैः प्रातरावाहयेद्देवींप्रातरेवविसर्जयेदित्यादिवचनैर्विसर्जनस्य दशम्यांप्रातःकर्तव्यत्वेन
निर्णीतत्वात्पूर्वेद्युर्नवम्यांदशम्यांवायथाचारंपारणंकृत्वाऽपराह्णेऽपराजितापूजनंविधायप्रातर्दशम्यांविस
र्जनंकर्तव्यमिति तथाचरुद्रयामले अष्टम्यांजागरंकुर्यान्नवम्यांपारणंतथा दशम्यांचविसर्गःस्यादि·
तिपक्षनिर्णये तत्रविशेषः अंत्यपादेदिवाभागेश्रवणस्ययदाभवेत् संप्रेषणंतदादेव्यादशम्यांतुपुनर्दि
वेति दिनद्वयेदशमीसत्वेपूर्वेदशम्यांश्रवणांत्यभागयोगेतत्रैवविसर्जनं तत्रतद्योगाभावेतुपरत्रदश
म्यामेवतत् पूर्वदिनेनक्षत्रयोगानुरोधेनक्रियमाणविसर्जनेनपूर्वोक्तादरइत्याशयेनोक्तंराजमार्तंडे नि
र्माल्यत्यागेनदेवीविसर्जनमुपलभ्यते कल्पतरावपि नक्षत्रेश्रवणेतिथौचदशमीसंज्ञकेसंप्रेषये
दिति रूपनारायणीयेतुदशम्यांप्रातः संप्रेषयेदितिवचनात्प्रातःकालस्यैवप्राशस्त्यमित्युक्तंकौस्तुभे अ
थनवरात्रपारणनिर्णयः तत्रद्विविधानिवचनानि कानिचिन्नवमीपारणविधायकानिदशमीनिषेधका·
निच कानिचिद्दशमीपारणविधायकानिनवमीनिषेधकानिच तत्रयथाकालाचारंव्यवस्थावचनानितद

दशासीप्रकरणोक्तस्यांते नवरात्रव्रतेपारणादेरप्यपि सूतकेपारणाकार्यं तदुक्तं रुद्रयामले सूतकेपारणंकु
र्यान्नवम्यांहोमपूर्वकं तदंतेभोजयेद्विप्रान्दानंदद्याच्चशक्तितः इति तदंतेसूतकांते माधवीये कौर्मेपि का
म्योपवासप्रक्रांतेत्वंतरामृतसूतके तत्रकाम्यव्रतंकुर्याद्दानार्चनविवर्जितमिति व्रतयज्ञविवाहेषुश्रा
द्धेहोमेर्चनेजपे प्रारब्धेसूतकंनस्यादनारब्धेतुसूतकमितिविष्णुवचनमपि अशौचमध्येतत्कर्तव्यता
मवगमयति प्रारंभस्तुतेनैवोक्तः प्रारंभोवरणंयज्ञे संकल्पोव्रतसत्रयोः नांदीमुखंविवाहादौश्राद्धेपा
कपरिक्रियेति स्त्रियास्तुरजोदर्शनमध्येपिपारणाकार्या तदाहसत्यव्रतः प्रारब्धदीर्घतपसांनारी
णांयद्रजोभवेत् नतत्रापिव्रतस्यस्यादुपरोधःकदाचनेति निर्णयसिंधौ यत्तु नियमस्थायदानारी
पुष्पंपश्येद्रजः उपोष्यव्रतमारात्रीःस्नात्वाशेषंचरेद्व्रतमित्यंगिरोवचनं यच्चहारीतवचनं निय
मस्थायदानारीरजःपश्येत्कथंचन त्रिरात्रंतदिनेदूर्ध्वंव्रतशेषंसमापयेदिति तद्विधवोपवासविष
यं तासांतत्रभोजननिषेधादितिकेचित् वयंतुप्रागुक्तसत्यव्रतवचनेदीर्घतपसामितिविशेषोपादा
नाद्द्वादशीव्यतिरिक्तसकलैकाहोपवासविषयोयंनिषेधः त्रिरात्रनवरात्रादिदीर्घव्रतेषुतुरजोम
ध्यएवपारणेतिब्रूमइति अशौचमध्येतुसर्वापिपारणाभवति प्रागुक्तकौर्मवचनादितिस्थितं
पारणायांविधिनिषेधयोः सत्वादाचारतोव्यवस्थेतिकेचित् ममत्वेतत्सत्यव्रतवचनंनसधवाप
रं किंतुविधवापरंविधवायास्तुतत्रत्रिरात्रमध्येभोजननिषेधादित्यन्ये तत्रनिषेधस्यरागप्राप्तभो
जनगोचरत्वेनवैधपारणाविषयत्वायोगात् वस्तुतस्तु रजस्वलायाविधवायास्त्रिरात्रमध्येभोज
ननिषेधएवावधृत्यायमाणाइतिकृत्यरत्नावल्यांतु अत्रनवरात्रहोमस्यपूजाङ्गत्वेनप्रधानत्वात्त
स्यचानन्यसाध्यत्वेनाशौचेऽसंभवात्तद्दानार्चनजपमितिनिषेधात्तत्समाप्तिंविनाचनियमरूपो
पवाससमाप्त्यसंभवादाशौचांतेहोमादिपूर्वकंपारणंकर्तव्यं प्राचीनशिष्टाचारोप्येवमेव दृष्टस्तद्धो
मोनक्रियतेतेषांपारणंभवत्येवेतिस्थितं इतिनवरात्रमध्येअशौचरजोदर्शनप्राप्तेपारणानिर्णय
दुर्गाभक्तितरंगिण्यां देवीपुराणे ततःप्रातःपूजयित्वादशम्यांविधिपूर्वकं संप्रेषणंतुकर्तव्यंगीत
वादित्रनिःस्वनैरित्यादि तत्रक्रमः प्रातःपूजांबलिदानरहितांविधायनीराजनांतंकृत्वादुर्गेशिवामि
तिरूपंदेहीतिमहिषघ्नीत्यादिचपठित्वापुष्पांजलिंदत्वाकर्तव्यंसमापयेत् विधिहीनंक्रियाहीनंभ
क्तिहीनंयदर्चितं पूर्णंभवतुतत्सर्वंत्वत्प्रसादान्महेश्वरीतिप्रसाद्यतन्मस्तकेकंपुष्पंॐदुर्गायैना
मइतीशान्यांनिःक्षिपन्विसर्जेत् महिषघ्निमहामायेशुभांपूजांप्रगृह्यच कुरुष्वममकल्याणम
ष्टाभिःशक्तिभिःसह कुत्रचित् उत्तिष्ठदेविचंडेशिशिपादः उत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वमहे उ
पप्रयंतुमरुतःसुदानवइंद्रप्राशूर्भवासचा अभ्यारमिदद्रयोनिषिक्तंपुष्करेमधु अवतस्यविसर्ज
ने यांतुदेवगणाःसर्वेपूजामितिपठित्वा गच्छगच्छपरंस्थानंस्वस्थानेदेविचंडिके व्रजस्रोतोज
लंवृद्ध्यैतिष्ठगेहेचभूतये इत्युत्थापयेत् ततोगीतवाद्यघोषपुरःसरंस्नातोजलसमीपंनीत्वा उ
त्तिष्ठदेविजगन्मातःस्वस्थानंगच्छपूजिते संवत्सरेव्यतीतेतुपुनरागमनायवै इमांपूजांमया
देवियथाशक्त्योपपादितां रक्षार्थंत्वंसमादायव्रजस्वस्थानमुत्तममिति जलेप्रवाहयेत् ततोगृ
हमागत्यशांतिकलशोदकेनब्राह्मणैरभिषिक्तोदुर्गापूजाप्रतिष्ठासिद्ध्यर्थंब्राह्मणेभ्योदक्षिणांद
त्वाब्राह्मणान्भोजयित्वाबंधुभिः सहभुंजीतेतिदेवीपूजनोपकल्पितद्रव्यादिकंब्राह्मणायदेयं त
दुक्तंमत्स्यसूक्ते देवेदत्तानिदानानिदेवेदद्याच्चदक्षिणां तत्सर्वंब्राह्मणेदद्यादन्यथाविफलंभवेदिति इ
तिदशमीकृत्यं इयमेवविजयदशमीत्युच्यते साचश्रवणयोगवतीग्राह्या पूर्वदिवसेचेत्पूर्वाद्वितीये
श्रवणयोगेएकादशीयुतापिग्राह्या उभयदिनेश्रवणयोगाभावेपरातुयोगवतीदशमीग्राह्या

दिनद्वयेपराह्णयोगवतीपूर्वादिनद्वये॰ पराह्णयोगाभावेनत्तत्रयोगिनीग्राह्या वचनानितुदशमीप्र॰
प्रकरणेवक्ष्यंते तस्यामेवदशम्यांगोपथब्राह्मणोक्तः प्रस्थानविधिः कर्तव्यः मूलवचनानिदशमीप्रक
रणेवक्ष्यंते तत्रराजास्वलंकृतः वीणादिमंगलशब्दान्कृत्वएवन्होमसंभारानुपकल्प्य मैत्रेमुहूर्तेऽग्निप्र
तिष्ठापनंकुर्यात् मैत्रमुहूर्तस्तुप्रातःकालेतृतीयमुहूर्तः ततःशांतिप्रतिसरंकारयित्वावोढ्वारंतेनाभि
षिंचेरन् ऋत्विजःशांतिशेषैः यजमानंवस्त्रादिभिरलंकृत्यसमीपउपवेश्याचार्यो॰ भयैरपराजितैःपुष्पैः
स्वस्त्ययनैः शर्मवर्मभिर्जनवेदनैश्चहुत्वापार्थिवस्येतिमाप्रगामेतिचहुत्वाआगच्छतागतस्येतीद्रस्था
लीपाकेनेष्ट्वा यातिष्टजिस्त्वरन्तत्रराजावत्रतिपंथानमास्थायजपेदिमोपादोयतरंदेवानारमिंद्रमा
नोविदत्रभयंसोमाबृहस्पतिर्नः परिपातुपश्चादितित्रीन्विष्णुक्रमान्क्रांत्वेत्यादि मंत्रास्तु आथर्वणेरा
ज्याभिषेकप्रकरणेद्रष्टव्याः अथापराजितादशम्यांपूर्वोक्तविजयमुहूर्तेउक्ते प्रास्थानिकमित्युपक्र॰
म्यतद्व्येतेश्लोकाः अलंकृतोभूषितभृत्यवर्गः परिष्कृतोत्तुंगतुरंगनागः वादित्रनादप्रतिनादिता॰
शः सुमंगलाचारपरंपराशीः राजानिर्गत्यभवनात्पुरोहितपुरोगमः प्रास्थानिकविधिंकृत्वाप्र
तिष्ठेत्पूर्वतोदिशि गत्वानगरसीमांतंवास्तुपूजांसमारभेत् संपूज्यवायदिक्पालान्पूजयेत्पथिदेव
ताः मंत्रैर्वैदिकपौराणैःपूजयेच्चशमीतरुं अमंगलानांशमनींउक्तंतस्यचनाशिकां दुःस्वप्नशम॰
नींधन्यांप्रपद्येहंशमींशुभां ततः कृताशीः पूर्वस्यांदिशिविष्णुक्रमानुक्रमेत् द्विषोःप्रतिकृतिंकृत्वा।
कृत्वाचमनसाचतं शरेणस्वर्णपुंखेनविध्येत्हृदयमर्मणि दिशांविजयमंत्राश्चपठितव्याःपुरोधसा॰
एवमेवविधिंकुर्याद्दक्षिणादिदिशास्वपि पूज्याद्विजांश्चसंपूज्यसांवत्सरपुरोहितौ गजवाजिपदा॰
तीनांश्चैत्रांकौतुकमाचरेत् जयमंगलशब्देनततः स्वभवनंविशेत् नीराज्यमानःपुण्याभिर्गणिका
भिःसुमंगलं एवंयःकुरुतेराजावर्षेवर्षेसुमंगलं आयुरारोग्यमैश्वर्यंविजयंचाधिगच्छति ना॰
पयोव्याधयस्तस्यभवंतिनपराजयः श्रियंपुण्यमवाप्नोतिविजयश्चसदाभवेदित्यादिपुराणसमुच्चये
ज्योतिर्निबंधे आश्विनस्यसितेपक्षेदशम्यांतारकोदये सकालोविजयोज्ञेयःसर्वकार्यार्थसिद्धये
रत्नकोशे ईषत्संध्यामतिक्रांतःकिंचिदुद्भिन्नतारकः विजयोनामकालोयंसर्वकार्यार्थसाधकः इष
स्यदशमीशुक्लापूर्वविद्धांनकारयेत् श्रवणेनापिसंयुक्तांराज्ञांपट्टाभिषेचने नारदः सूर्योदयेयदा॰
राजन्दृश्यतेनवमीतिथिः आश्विनेमासिशुक्लांतुविजयांतांविदुर्बुधाः अथविजयदशम्यांपूर्वभा॰
जिप्रयत्नात्क्षितिपतिरपराह्णेपूजयेदीशकोणे निखिलभुवनवंद्यांचंडिकामिष्टसिद्ध्यैश्रवणभस॰
हिताचेत्साऽपराह्णप्रशस्ता तथाचस्कांदे मार्तंडस्योदयेपूर्णावर्ततेदशमीतिथिः आश्विनेशुक्लप
क्षेतुसाभवेज्जयदानृणां निषिद्धमपिकर्तव्यंतैलाभ्यंजनमादरात् अस्नानामपिकर्तव्यंतैलस्नानं
नदीजले तूर्यघोषसमायुक्तान्पुरंप्रवेशयेद्धयान् पुष्पमालापरीतांस्तान्हयांश्चंदनभूषितान्
संपूज्यविधिवद्राजानमस्कुर्यात्प्रयत्नतः भक्ष्यंभोज्यंस्वहस्तेनभोजयेदनुगान्नृपः वाहाधिकारिणः
सर्वान्दानमानैस्तुतोषयेत् तथैववारणान्राजापूजयेच्चक्रमेलकान् नानामंत्रेणविधिवच्चतत्रार्च्य
तेनमंत्रवित् कृत्वाभ्यंगोमहाघोषैस्तूर्याणांशुभलब्धये ततश्चपूजयेद्देवान्गंधपुष्पादिकैरलं आ
हूयब्राह्मणान्सर्वान्वाचयेत्स्वस्तिमंगलं ततस्तुरगमारुह्यतूर्यघोषसमन्वितः वंदिभिस्तूयमानस्तु
सन्मानःशाकुनैर्व्रजेत् ज्योतिःशास्त्रोदितांकाष्ठांसुहृद्भिःपरिपूरितः संप्राप्तस्तुशमीवृक्षमश्मंतक
मथापिवा अवतीर्यमथोवाहाद्द्विजान्सहपुरोधसा सनिवासःशमीमूलंविदध्यात्स्वस्तिवाचनं कार्यं
देशानुजानैःसाकंप्रयोगकुशलैर्वदन् ततःपौरप्शमीमूलभूमिंभूमिपतिर्भवं उद्धृत्यमृत्तिकांतां
उपक्षिपेत्तंदुलान्शुभान् संपूर्णांहेमपात्रायात्त्राभावेतारमुनम ततःप्रदक्षिणांकुर्यात्तस्यवृक्षस्यभूप

त्तिः तत्रमंत्रः शमीशमयतइत्यादि अश्मंतकमंत्रः अश्मंतकमहावृक्ष महादोषनिवारण इष्टानां
दर्शनंदेहिकुरुशत्रूणांचविनाशनं ततः अश्मंतकस्यउभयोः पत्राणिगृहीत्वातस्यामृदंतंडुलपूजादिषु।
क्षिप्यगोलकंवध्वासर्वकार्यसिध्यर्थंगृह्णातितेनु हस्तेनमस्कृत्यदिग्लिंगैर्मंत्रैः प्राचीपूर्वादिजयं
गृहीत्वेक्षुःकरोति एवंचतुरःपादक्रमेणतत्सर्वदिग्विजयंकृत्वाशत्रवोजिताइतिब्रूयात् इंद्रा
दीन्देवान्विप्रांश्चनमस्कृत्यस्वपुरंविशेत् ततःप्रविष्टःसमहाद्वारसमीपेपुण्यस्त्रीभिर्नीराजितो।
द्वारिन्यस्तेषुतूलिकोपरितंडुलैः कृतमूर्तिषुशत्रुषुपादंकृत्वालब्धविशात्रुतःनिषण्णोभूत्वाऽस्यव
स्त्रंतांबूलादिदद्यात् एवंकृत्वाविसर्ज्यापिसर्वान्पौरान्निजालयात् प्रतिवर्षंकृतंचैवसर्वकार्यपरो
भवेत् एवंसर्वैश्चचोरैश्चविधिरेषःसनातनः निष्पादितोयथाधर्मविद्यातिष्ठिप्रियेस्तवं एवंकृ
तेविधानेनतत्रहिदेशेहिदेवेन्द्राणां सर्वैःपौरजनैःसार्द्धंविजयंप्राप्नुयान्नरःइति अस्यामेवचापराजि
तापूजोक्तानिर्णयामृते दशम्यांपूजयित्वातुमन्त्रयींचापराजितां कालेशीतोयसंपूर्णांजयंतीय।
द्रुत्वाततो चतुर्वर्णोस्तदायाज्ञासाधयेत्साधनेनच दशम्यांचवलंराजापूजयित्वापराजितां दशदि
क्षुमनोयोगान्यात्राकृत्वाथवेनृपः नीराजनेस्वस्तिकृत्वाततोनाराजयेद्बलमिति अथपूजन।
क्रमः आश्विनशुक्लदशम्यांक्षेमसिद्ध्यर्थंवास्तुपूजनदिक्पालपूजनमार्गदेवतापूजनमपराजि
तापूजनविष्णुपूजनशमीपूजनानिकरिष्यइतिसंकल्प्यपूगीफलादिषुचंदनादिलिखिताष्टद
लमध्येमृन्मयप्रतिमायांवा ॐअपराजितायैनमइत्यपराजितांतद्दक्षिणतः ॐक्रियाशक्त्यैनम
इतिजयां तद्वामतः ॐउमायैनमइतिविजयांप्रतिष्ठाप्यवाहनाद्युपचारैः संपूज्यप्रणम्यप्रार्थये
त् चारुणामुखपद्मेनविचित्रकनकोज्ज्वला जयादेवीभवेभक्त्यासर्वकामान्ददातुमे कांचने।
नविचित्रेणकेयूरेणविभूषिता जयप्रदामहामायाशिवभावितमानसा विजयाचमहाभागा द
दातुविजयंमम हारेणसुविचित्रेणभास्वत्कनकमेखला अपराजितारुद्ररताकरोतुविजयं।
ममेति एवंसंप्रार्थ्यहरिद्रारक्तवस्त्रेदूर्वायुक्तसिद्धार्थकान्प्रदक्षिणंवलयाकारेणवध्वा सदा
पराजितेयस्मात्वंलतासूत्तमास्मृता सर्वकामार्थसिद्ध्यर्थंतस्मात्वांधारयाम्यहं भवापराजितेदेवि।
समसर्वसमृद्धये पूजितायांत्वयिश्रेयोममास्तुदुरितंहतमितितद्वलयमभिमंत्र्य जयदेवरदेदे
विदशम्यामपराजिते धारयामिभुजेदक्षेजयलाभाभिवृद्धये वलमायेहिवलयमयिपुत्रोपराज
यं तद्धारणाद्देवेशु मे धनधान्यसमृद्धयइतिमंत्रेणबाहौधारयित्वा इमांपूजांमयादेवियथाशक्ति
निवेदितां रक्षार्थंतुसमादायव्रजस्वस्थानमुत्तममितिविसर्जयेदिति सर्वेचजनास्तस्यांग्रामसीमा।
नमुल्लंघ्यापराजितांपूजयेयुः तथाचपुराणसमुच्चये दशम्यांचजनैःसम्यक्पूजनीयापराजिता
ऐशानीदिशमाश्रित्यचापराह्णेप्रयत्नतइति भविष्येपि शमीसलक्षणोपेतामीशानाशांप्रतिष्ठि।
तां संप्रार्थ्यतांचसंपूज्यवत्सरंससुखीभवेत् शमीमंत्रस्तुहेमाद्रौगोपथब्राह्मणे अमंगलानांश
मनींशमनींदुष्कृतस्यच दुःस्वप्ननाशिनींधन्यांप्रपद्येहंशमींशुभां तथाभविष्ये शमीशमयते।
पापंशमीलोहितकंटका धारिण्यर्जुनबाणानांरामस्यप्रियवादिनी करिष्यमाणयात्रायांयथाका
लंसुखंमम तत्रनिर्विघ्नकर्त्रीत्वंभवश्रीरामपूजिते इतिततोरिपोःप्रतिकृतिंहत्वेत्यादिकंतत्रपूर्व
मेवोक्तं ततःशमीमूलमृदंगृह्णीयात् तदुक्तं गृहीत्वासाक्षतामार्द्रांशमीमूलगतांमृदं गीतवादित्र
निर्घोषैरानयेत्स्वगृहंप्रति ततोभूषणवस्त्रादिधारयेत्स्वजनैःसहेति अथवलनीराजनमुक्तं तत्र
मंत्रः चतुरंगबलंमह्यंनिरिष्टंव्रजतिद्रुह सर्वत्रविजयोमेस्तुत्वत्प्रसादान्महेश्वरीति ज्योतिषे कृ
त्वानीराजनंराजावलवृद्ध्यैयथाक्रमं शोभनंखंजनंपश्येज्जलगोगोष्ठसन्निधाविति तत्रमंत्रस्तिथि

नत्वेनीलग्रीवसर्वकामफलप्रद पृथिव्यामवतीर्णोसिखंजरीटनमोस्तुते वसंतराजे त्वंयोगयुक्तोसु
निपुत्रकस्त्वमदृश्यतामेषिशिखोद्गमेन संदृश्यसेप्राहृषिनिर्गतायां त्वंखंजनाश्चर्यमयोनमस्ते द
र्शनफलंतिथितत्वे अब्जेषुगजवाजिमहोरगेषुराज्यप्रदः कुशलदः शुचिशाद्वलेषु भस्मास्थिके
शनखलोमतुषेषुदृष्टोदुःखंददातिबहुशः खलुखंजरीटः तत्रैव चिंतवल्लाणिकार्यसिद्धिरतुलाश
क्रोकृताशेभयंयाम्यामग्निभयंसुरद्विषिकलिर्लाभः समुद्रालये वायव्यांवरवस्त्रगंधसलिलंदिव्यं
गनाचोत्तरेपैशान्यांमरणांफ्वनिगादितंदिग्लक्षणंखंजने इदंतुसर्वंत्रनवरात्रप्रसंगादत्रलिखि
तंरामार्चनचंद्रिकायांतु आश्विनस्यसितेपक्षेदशम्यांश्रवणार्क्षगे कर्तव्यःस्वजनैःसार्द्धंसर्वत्रविज
यार्थिभिः हनुमद्वाक्यमाकर्ण्यहृष्टेतिजनकात्मजा आनंदपूर्णैःकपिभिर्विज्ञापितमुपस्थितं र
घमारोप्यदेवंशंसर्वालंकारभूषितं सासितूणधनुर्बाणपाणिंनक्तंचरांतकं स्वलीलयाजगत्रात
माविर्भूतमजंविभुं रथैरश्वैर्गजैःपद्भिःससौमित्रिहरीश्वरैः युतंरामंहृदिध्यायन्शमीवृक्षेप्रपूजये
त् विस्तुधर्मोक्तमार्गेणयात्रानिर्विघ्नसिद्धये शमीविल्वर्चनंकुर्वन्निति संकल्प्यपूजयेत् सीताकांतस
मुग्धक्तंभक्तानामभयंकरं अर्चयित्वाशमीवृक्षमर्चयेत्ततःपुनः शमीशमयतेपापंशमीलोहित
कंटका धारिण्यर्जुनबाणानांरामस्यप्रियवादिनी करिष्यमाणयात्रायांयथाकालंसुखंमया तत्र
निर्विघ्नकर्त्रीत्वंभवश्रीरामपूजिते गृहीत्वासाक्षतांमार्द्रांशमीमूलगतांमृदं गीतवादित्रनिर्घोषैर्गृ
होदेवगृहंनयेत् केचिद्दृहेस्तत्रभात्यकोशलेंद्रस्यतुष्टये निर्जिताराक्षसादैत्यावैरिणोजगतीतले
रामराज्यंरामराज्यंरामराज्यमितिब्रुवन् आनीयस्थापयेत्स्वस्थंदिव्यसिंहासनेविभुं ततोनीराज्यदेवे
शंप्रणमेदंडवद्भुवि देवोपभुक्तवस्त्रादिधारयेत्स्वजनैःसह ॥ इतिविस्तुधर्मोत्तरोक्तोविजयप्र
स्थानोत्सवः ॥ अथदुर्गाशतनामस्तोत्रं ईश्वरउवाच शतनामप्रवक्ष्यामिशृणुष्वकमलानने
यस्याःप्रसादमात्रेणदुर्गाप्रीताभवेत्सती ॐसतीसाध्वीभवप्रीताभवानीभवमोचिनी आर्यादुर्गाजया
याचत्रिनेत्राशूलधारिणी पिनाकधारिणीचित्राचंडघंटामहातपा मनोबुद्धिरहंकाराचित्तरूपाचिता
चितिः सर्वमंत्रमयीनित्यासत्यानंदस्वरूपिणी अनंतभाविनीभव्याभाव्याभव्यासदागतिः शांभवी
देवमाताचिंतारत्नप्रियासदा सर्वविद्यादक्षकन्यादक्षयज्ञविनाशिनी अपर्णानेकवर्णाचपाटलापा
टलावती पट्टांबरपरीधानाकलमंजीररंजिनी अमेयाविक्रमाक्रूरासुंदरीपुरसुंदरी वनदुर्गाचमातं
गीमातंगमुनिपूजिता ब्राह्मीमाहेश्वरीरौद्रीकौमारीवैष्णवीतथा चामुंडाचैववाराहीलक्ष्मीःश्रीपुरु
षाकृतिः विमलोत्कर्षिणीज्ञानाक्रियासत्याचवाक्प्रदा बहुलाबहुलप्रेमासर्ववाहनवाहना निशुंभ
शुंभहननीमहिषासुरमर्दिनी मधुकैटभहंत्रीचचंडमुंडविनाशिनी सर्वासुरविनाशीचसर्वदानव
घातिनी सर्वशास्त्रमयीसत्यासर्वास्त्रधारिणीतथा अनेकशस्त्रहस्ताचअनेकास्त्रादिधारिणी कुमारी
चैवकन्याचकिशोरीयुवतीयतिः अप्रौढाचैवप्रौढाचवृद्धमाताबलप्रदा यइदंपठतेनित्यंदुर्गानामश
ताष्टकं नासाध्यंविदितंकिंचित्त्रिषुलोकेषुपार्वति धनंधान्यंसुताजायाहस्तीहस्तिन्यएवच चतुर्वर्गंतथा
चांतेलभेन्मुक्तिंचशाश्वतीं कुमारींपूजयित्वाचध्यात्वादेवींसुरेश्वरीं पूजयेत्परयाभक्त्यापठेन्नामशताष्ट
कं तस्यसिद्धिर्भवेद्देविसर्वैःसुरवरैरपि राजानोदासतांयांतिराज्यश्रियमवाप्नुयात् गोरोचनालक्तककुं
कुमेनसिंदूरकर्पूरमधुत्रयेण विलिख्यमंत्रंविधिवद्विधिज्ञोभवेत्सदाधारयतेपुरारिः भौमावास्या
निशाभागेचंद्रेशतभिषग्गते विलिख्यप्रलपत्स्तोत्रंसभवेत्संपदांपदम् ॥
इतिविश्वसारोक्तंदुर्गानामशताष्टकंस्तोत्रंसमाप्तम् ॥
अथनवरात्रव्रतोद्यापनविचारः नवरात्रव्रतं प्रतिवर्षंसदाकर्तव्यंतथानित्यं तत्रवचनानिनवरात्रनि

नामेष्वकरणे प्रत्यवायपराण्यपि वचनानि च तत्रैवोक्तान्यतो नित्यमुद्यापननिरपेक्षमिति अथ च फल
निर्देशात्काम्यमप्यतइदं नित्यं काम्यं चेति काम्यत्वादुद्यापनसापेक्षमतएवास्योद्यापनं महानवम्यावि
धेयमेव तत्रानुक्रमणिका आदौ मंडपं वेदिकां वा ध्वजपताकादिभिस्तोरणाद्यैरुपूर्वकं विधाय
तत्र संभृतसंभारो व्रती तत्र गोमयोपलिप्तायां वेदिकायां सर्वतोभद्रं लिंगतोभद्रं वा पंचवर्णैर्धान्यै
र्वा परिकल्प्य तस्मिन्यथाशक्त्या कलशं यथाविधि आचार्यवरणगणेशादिपूजादिपूर्वकं प्रतिष्ठा
प्य ताम्रादिपात्रे चतार्गलयंत्रं कुंकुमादिना विलिख्य ब्रह्मादिकाश्विरवर्णांश्च यथाविधि कृत्वा तत्रे
वापरमंडले ग्रहान्लोकपालादिसंस्थाप्य संपूजयेत् चतार्गलयंत्रे सावरणां देवीं प्रतिष्ठाप्य सर्वोप
चारैः संपूज्य चतुष्षष्टिकोष्ठमंडले चतुष्षष्टियोगिन्यः प्रतिष्ठाप्य पूज्याः तथैव नवसंख्याकं कुंभे
षु नवदुर्गाख्या नवमूर्तीः प्रतिष्ठाप्य पूजयेत् यथाशक्ति देवीमाहात्म्यपाठादिस्तवनं विधाय रात्रौ
जागरणं कृत्वा प्रातश्चैकृतनित्यक्रियः सन्देवीपूजादिकं विधाय अग्निं स्वगृह्योक्तविधिना प्रतिष्ठाप्य।
होमं कुर्यात् अन्वाधानान्तमग्निकार्यं विधाय ततः प्रधानं श्रीदुर्गां सावरणां देवीसूक्तदेवीमाहात्म्य
नवदुर्गाचतुष्षष्टियोगिनीमंत्रैराज्याक्तपायसतिलैर्बिल्वपत्रादिसमिद्भिर्हुत्वा ब्रह्मादिमंडलदेवतानव
ग्रहान्दिक्पालांश्चार्कादिसमिच्चर्वादिभिः शेषेण प्रायश्चित्तं स्विष्टकृद्धोमं विधाय होमान्ते देवतापू
जान्ते बलिदानं पूर्णाहुतिमभिषेकं संपाद्य देव्याः प्रार्थनां विधायाचार्यं संपूज्य प्रधानप्रतिमां सदक्षि
णामाचार्याय नवविप्रेभ्यो नव सदक्षिणाः प्रतिमाः प्रतिपादयेत् सुवर्णदानप्रतिष्ठां दत्वा प्रतिमा
दानमंत्रेणाचार्यं प्रार्थयित्वा कन्यकापूजनं सुवासिनीपूजनं च कुर्यात् ततः पंचाशद्ब्राह्म।
णान् मधुसर्पिष्पायसादिना संतोष्य तेभ्यो दक्षिणां दद्यात् ततश्चर्त्विग्भ्यो दक्षिणां दत्वा भूयसीं
दापयेत् ततः सघृततिलपात्रं च दद्यात् शय्याश्वरथादिदानानि दद्यात् शय्यादिदानाशक्तौ सु
वर्णं सदक्षिणमन्नदानं च दद्यात् ततो ब्राह्मणेभ्यः सतिलकमभिषेकं कारयित्वाऽऽशिषो गृहीत्वा।
देवेशं पूजयित्वा व्रतस्याछिद्रावधारणं कृत्वा व्रतपारणं कुर्यात् इति नवरात्रव्रतोद्यापनं ॥

इति श्रीमन्महाराजाधिराजश्रीरणवीरसिंहकारितहव्यरत्नाकरे नवरात्रप्रकरणम्

अथात्र महालक्ष्मीपूजाविधानमुक्तं तच्चाथर्वणे लक्ष्मीहृदये

यथाश्विने मासि च शुक्लपक्षे रमोत्सवे सन्निहिते क भक्त्या पठेन्नचैकोत्तरवारवृद्ध्या लभेत सौवर्ण
मयीं सुवृष्टिमिति अस्य श्रीआद्यादिश्रीमहालक्ष्मीहृदयस्तोत्रमंत्रस्य भार्गवऋषिः नानाविध
छंदांसि आद्यादिश्रीमहालक्ष्मीर्देवता श्रीं बीजं ह्रीं शक्तिः ऐं कीलकं आद्यादिश्रीमहालक्ष्मीप्र
सादसिद्ध्यर्थे जपे विनियोगः इति व्यापकं कुर्यात् श्रीं वित्तानाय नमः १ ह्रीं ऐश्वर्याय नमः २
ऐं शक्त्यै वषट् श्रीं बलाय हुं ह्रीं तेजसे वौषट् ऐं वीर्याय फट् इति करषडंगन्यासः ॐ भूर्भुवः स्व
रोमिति दिग्बंधः ॐ ह्रीं ॐ सौं ॐ क्लीं लक्ष्मि कमलपत्रधारिणि सिंहवाहिनि स्वाहा ॐ श्रीं महाल
क्ष्म्यै नमः ॐ श्रीं ह्रीं ऐं ध्यानं वंदे लक्ष्मीं परशिवमयीं शुद्धजांबूनदाभां तेजोरूपां कनकवसनां स
र्वभूषोज्ज्वलांगीं बीजापूरं कनककलशं हेमपद्मं दधानामाद्यां शक्तिं सकलजननीं विष्णुवामांक
संस्था १ ॐ श्रीं श्रीमत्सौभाग्यजननीं स्तौमि लक्ष्मीं सनातनीं सर्वकामफलावाप्तिसाधनैकसुखा
वहां २ स्मरामि नित्यं देवेशि त्वया प्रेरितमानसः त्वदाज्ञां शिरसा धृत्वा भजामि परमेश्वरीं ३ सम
स्तसंपत्सुखदां महाश्रियं समस्तकल्याणकरीं महाश्रियं समस्तसौभाग्यकरीं महाश्रियं भजाम्य
ज्ञानकरीं महाश्रियं ४ विज्ञानसंपत्सुखदां सनातनीं विचित्रवाग्भूतिकरीं मनोहरां अनंतसं।
मोदसुखप्रदायिनीं नमाम्यहं भूतिकरीं हरिप्रियां ५ समस्तभूतांतरसंस्थिता त्वं समस्तभोक्त्रीश्व

रिविश्वरूपे तन्नास्ति यत्वद्व्यतिरिक्तवस्तु तत्पादपद्मं प्रणमाम्यहं श्रीः ५ दारिद्र्यदुःखौघतमोपहन्त्रि त्वत्पादपद्मं मयि सन्निधत्स्व दीनार्तिविच्छेदनहेतुभूतैः कृपाकटाक्षैरभिषिंच मां श्रीः ६ अंब प्रसीद करुणासुधयार्द्रदृष्ट्या मां त्वत्कृपाद्रविणगेहमिमं कुरुष्व आलोकय प्रणतहृद्गतशोकहंत्रि त्वत्पादपद्मयुगमं प्रणमाम्यहं श्रीः ७ ओं श्रीं ह्रीं शांत्यै नमोस्तु शरणागतरक्षणायै कांत्यै नमोस्तु कमनीयगुणाश्रयायै क्षां त्यै नमोस्तु दुरितक्षयकारणायै धात्र्यै नमोस्तु धनधान्यसमृद्धिदायै ८ शक्त्यै नमोस्तु शशिशेखरसंस्तुतायै रत्यै नमोस्तु रजनीकरवल्लभायै भुक्त्यै नमोस्तु भवसागरतारणायै मत्यै नमोस्तु मधुसूदनवल्लभायै ९ लक्ष्म्यै नमोस्तु शुभलक्षणलक्षितायै सिद्ध्यै नमोस्तु शिवसिद्धसुपूजितायै धृत्यै नमोस्त्वमितदुर्गतिनाशनायै गत्यै नमोस्तु वरसद्गतिदायकायै १० देव्यै नमोस्तु दिविदेवगणार्चितायै भूत्यै नमोस्तु भुवनार्तिविनाशनायै दांत्यै नमोस्तु धरणीधरवल्लभायै पुष्ट्यै नमोस्तु पुरुषोत्तमवल्लभायै ११ ओं ह्रीं ऐं सुतीव्रदारिद्र्यविडंबहंत्र्यै नमोस्तु ते संचितपापहंत्र्यै श्रीविष्णुवक्षःस्थलसंश्रितायै नमो नमः सर्वविभूतिदायै १२ ओं ऐं श्रीं जयतु जयतु लक्ष्मीलक्षणालंकृतांगी जयतु जयतु पद्मा पद्मसद्माभिवंद्या जयतु जयतु विद्या विष्णुवामांकसंस्था जयतु जयतु सम्यक्सर्वसंपत्करी श्रीः १३ जयतु जयतु देवी देवसंघाभिवंद्या जयतु जयतु भद्रा भार्गवी भाग्यरूपा जयतु जयतु नित्या निर्मलज्ञानवेद्या जयतु जयतु सत्या सर्वभूतांतरस्था १४ पदबीजं ओं आं ईं यं रं लं लं हं जयतु जयतु रम्या रत्नगर्भांतरस्था जयतु जयतु शुद्धा शुद्धजांबूनदाभा जयतु जयतु कांता कांतिसद्भासितांगी जयतु जयतु शांता शीघ्रमागच्छ सौम्ये १५ ओं क्लां क्लीं यैं ग्रां व्यां पां नां स ओं श्रीं क्लीं यस्याः कलायाः कमलोद्भवाद्या रुद्राश्च शक्रप्रमुखाश्च देवाः जीवंति सर्वेपि च शक्तयस्ते प्रभुत्वमाप्ताः परमायुषस्ते १६ लिलेखनिटिले विधिर्मम लिपिं विसृज्यांतरे त्वया विलिखितव्यमेतदिति तत्फलावाप्तये तदंतरफले स्फुटं कमलवासिनी श्रीरिमां समर्पय समुद्रिकां सकलसौख्यसंसूचिकां १७ तदिदं लिखितं भाले स्फुटं कमलवासिनी श्रियं समुद्रजां देहि सर्वभाग्यस्य सूचिकां १८ कलया ते यथा देवि जीवंति सचराचराः तथा संपत्करी लक्ष्मीः सर्वदा संप्रसीद मे १९ यथा विष्णुर्ध्रुवं नित्यं स्वकलां संनिवेशयत् तथैव स्वकलां लक्ष्मि मयि सम्यक्समर्पय २० सर्वसौख्यप्रदे देवि भक्तानामभयप्रदे अचलां कुरु यत्नेन कलामात्मनि वेशितां २१ मुदास्तां मत्कालेपरमपदलक्ष्मीः स्फुटकला सदा वैकुंठे श्रीर्निवसतु कलामे नयनयोः नयनबीजं ओं क्रां क्रीं क्रूं क्रैं क्रौं क्रः वसेत्सत्यलोके मम वचसि लक्ष्मीर्वरकला श्रियः श्वेतद्वीपे निवसतु कला मे स्तु करयोः २२ तावन्नित्यं ममांगेषु क्षीराब्धौ श्रीकला वसेत् सूर्याचंद्रमसौ यावद्यावल्लक्ष्मीपतिः श्रिया २३ सर्वमंगलसंपूर्णा सर्वैश्वर्यसमन्विता आद्यादि श्रीर्महालक्ष्मीस्त्वत्कला मयि तिष्ठतु २४ अज्ञानतिमिरं हंतुं शुद्धज्ञानप्रकाशय सर्वैश्वर्यप्रदा मेस्तु त्वत्कला मयि संस्थिता अलक्ष्मीं हरतु क्षिप्रं तमः सूर्यप्रभा यथा वितनोतु मम श्रेयस्त्वत्कला मयि संस्थिता २६ ऐश्वर्यमंगलोत्पत्तिस्त्वत्कलायां निधीयते अहं तस्मात्कृतार्थोस्मि पात्रमस्मि स्थिराभव २७ भवदावेशभाग्यार्हो भाग्यवानस्मि भार्गवि त्वत्प्रसादात्पवित्रोहं लोकमातर्नमोस्तु ते २८ निधिबीजं क्रां क्रीं क्रूं क्रैं क्रौं क्रः पुनासु मां त्वत्कलयैव यस्मादतः समागच्छ ममाग्रतस्त्वं परं पदं श्रीर्भव सुप्रसन्ना मय्यच्युतेन प्रविशादि लक्ष्मि २९ ओं श्रीं ह्रीं श्रीवैकुंठस्थिते लक्ष्मि समागच्छ ममाग्रतः नारायणेन सह मां कृपादृष्ट्यावलोकय ३० सत्यलोकस्थिते लक्ष्मि त्वं समागच्छ सन्निधिं वासुदेवेन सहिता प्रसीद वरदाभव ३१ श्वेतद्वीपस्थिते लक्ष्मि शीघ्रमागच्छ सुव्रते विष्णुना सहिते देवि जगन्मातः प्रसीद मे ३२ क्षीरांबुधिस्थिते लक्ष्मि शीघ्रमागच्छ सुव्रते विष्णुना सहिते देवि जगन्मातः प्रसीद मे ३२ क्षीरांबुधिस्थिते लक्ष्मि स

मागच्छ समाधवे त्वत्कृपादृष्टिसुधया सततं मां विलोकय ३३ रत्नगर्भस्थिते लक्ष्मि परिपूर्णहिर
ण्मये समागच्छ समागच्छ स्थित्वाशु पुरतो मम ३४ स्थिरा भव महालक्ष्मि निश्चला भव निर्मले प्र
सन्नकमले देवि प्रसीद वरदा भव ३५ श्रीधरे श्रीमहाभूमे त्वदंतस्थं महानिधिं शीघ्रमुद्धृत्य पुरतः
प्रदर्शय समर्पय ३६ वसुंधरे श्रीवसुधे वसुदोग्ध्रि कृपामये त्वत्कुक्षिगतसर्वस्वं शीघ्रं मे संप्रद
र्शय ३७ विष्णुप्रिये रत्नगर्भे समस्तफलदे शिवे त्वद्गर्भगतहेमादीन् संप्रदर्शय दर्शय ३९ आ
विर्भव मनोवेगे शीघ्रमागच्छ मे पुरः मा वत्स भीरिहेत्युक्त्वा कामं गौरिव रक्ष मां ४० देवि शीघ्रं समा
गच्छ धरणीगर्भसंस्थिते मातस्त्वद्भृत्यभृत्योऽहं मृगये त्वां कुतूहलात् ४१ उत्तिष्ठ जागृहि त्वं मे स
मुत्तिष्ठ सुजागृहि अक्षयान् हेमकलशान् सुवर्णेन सुपूरितान् ४२ निक्षेपान्मे समाकृष्य समु
द्धृत्य ममाग्रतः समुन्नतानना भूत्वा सम्यग्देहि धरांतरात् ४३ तत्सन्निधिं समागच्छ मदाहितकृपाव
शात् प्रसीद श्रेयसां दोग्ध्री लक्ष्मि मे नयनाग्रतः ४४ अत्रोपविश लक्ष्मि त्वं स्थिरा भव हिरण्मये
सुस्थिरा भव सुप्रीता प्रसन्ना वरदा भव ४५ समानीतांस्त्वया देवि निधीन्मे संप्रदर्शय अद्य क्षणेन
सहसा दत्वा संरक्ष मां सदा ४६ मयि तिष्ठ तथा नित्यं यथेंद्रादिषु तिष्ठसि अभयं कुरु मे लक्ष्मि महा
लक्ष्मि नमोस्तु ते ४७ समागच्छ महालक्ष्मि शुद्धजांबूनदस्थिते प्रसीद पुरतः स्थित्वा प्रणतं मां वि
लोकय ४८ लक्ष्मि भुवंगमा भासि यत्र यत्र हिरण्मयी तत्र स्थिता त्वं मे देवि स्वरूपं संप्रदर्शय
४९ क्रीडंति बहुधा भूमौ परिपूर्णकृपामये मम मूर्द्धनि ते हस्तमविलंबितमर्पय ५० फलभाग्योद
ये लक्ष्मि समस्तपुरवासिनि प्रसीद मे महालक्ष्मि परिपूर्णमनोरथे ५१ अयोध्यादिषु सर्वेषु न
गरेषु समास्थिते वैभवैर्विविधैर्युक्ता समागच्छ मुदान्विता ५२ समागच्छ समागच्छ ममाग्रे भ
व सुस्थिरा करुणारसनिष्यंदनेत्रद्वयविलासिनि ५३ सन्निधत्स्व महालक्ष्मि त्वत्पाणिं मम मस्त
के करुणासुधया मां त्वमभिषिंच स्थिरं कुरु ५४ सर्वराज्यगृहे लक्ष्मि समागच्छ बलान्विते स्थि
त्वाशु पुरतो मेऽद्य प्रसादेनाभयं कुरु ५५ सादरं मस्तके हस्तं मम त्वं कृपयार्पय सर्वराज्य
गृहे लक्ष्मि त्वत्कला मयि तिष्ठतु ५६ आद्यादि श्रीमहालक्ष्मि विष्णुवामांकसंस्थिते प्रत्यक्षं कु
रु मे रूपं रक्ष मां शरणागतं ५७ प्रसीद मे महालक्ष्मि सुप्रसीद महाशिवे अचला भव सुप्रीत्या
सुस्थिरा भव मद्गृहे ५८ यावत्तिष्ठंति वेदाश्च यावत्त्वन्नाम तिष्ठति यावद्विष्णुश्च यावत्त्वं तावत्कुरु
कृपां मयि ५९ चांद्री कला यथा शुक्ले वर्द्धते सा दिने दिने तथा तव दया नित्यं वर्द्धतां मयि वर्द्धतां
६० यथा वैकुंठनगरे यथा वै क्षीरसागरे तथा मद्भवने तिष्ठ स्थिरा श्रीविष्णुना सह ६१ योगिनां हृ
दये नित्यं यथा तिष्ठसि विष्णुना तथा मद्भवने तिष्ठ स्थिरा श्रीविष्णुना सह ६२ नारायणस्य हृदये
भवती यथास्ते नारायणोऽपि तव हृत्कमले यथास्ते नारायणस्त्वमपि नित्यमसौ तथा तौ संतिष्ठ
तां हृदि ममापि दयावती श्रीः ६३ ॐ श्रीं ऐं क्लीं विज्ञानवृद्धिं हृदये कुरु श्रीः सौभाग्यवृद्धिं कुरु
मे गृहे श्रीः दयासुवृद्धिं कुरुतां मयि श्रीः सुवर्णवृद्धिं कुरु मे करे श्रीः ६४ नमाम्यजे यथाश्रित
कल्पवल्लि सकलकाचिंतामणिकामधेनो विश्वस्य मातर्भव सुप्रसन्ना गृहे कलत्रेऽपि च पुत्रवर्गे
६५ आदिबीजं ॐ आं ईं ऊं ऐं औं अः आद्यादिमाये त्वमजांडबीजं त्वमेव साकारनिराकृतिस्त्वं त्व
या धृताश्चाजभवांडसंघाश्चित्रं चरित्रं तव देवि विष्णोः ६६ ब्रह्मरुद्रादयो देवा वेदाश्चापि न शक्नु
युः महिमानं तव स्तोतुं मंदोऽहं शक्नुयां कथं ६७ अज्ञत्वदत्तवाक्यानि सूक्ष्मासूक्ष्माणि यानि च
नानि स्वीकुरु सर्वज्ञे दयालुत्वेन सर्वशः ६८ भगवंतीशरणागत्वा कृतार्थाश्च पुरातनाः इति सं
चिंत्य संचिंत्य त्वामहं शरणं व्रजे ६९ अनंतानि सुनामानि न स्वज्ञकाल्पपारायणाः इति वंदे प्रसादा

र्थं देवि त्वां शरणं भजे ७० त्वत्प्रतिज्ञा मद्वाक्यान्न नश्यंतीत्यपि कांचित् इति संचिंत्य मनसा शरणं त्वां प्र याम्यहं ७१ त्वदधीनस्त्वहं मातस्त्वत्कृपा मयि विद्यते यावत्संपूर्णकामः स्यां तावद्देहि दयानिधे ७२ क्षणमात्रं न शक्नोमि जीवितुं त्वत्कृपां विना न जीवंतीह जलजा जलं त्यक्त्वा जलाश्रयाः ७३ यथा हि पुत्रवात्सल्याज्जननी प्रस्नुतस्तनी वत्सं त्वरितमागत्य संप्रीणयति वत्सला ७४ यदि स्यां तव पुत्रोहं माता त्वं यदि मामकी दयापयोधरस्तन्यसुधाभिरभिषिंच मां ७५ मृग्यो न गुणलेशोपि मयि दोषैकमंदिरे पांसूनां वृष्टिबिंदूनां दोषाणां च न मे मितिः ७६ पापिनामहमेवाग्र्यो दयालूनां त्वमग्रणीः दयनीयो मदन्योस्ति तव कोत्र जगत्त्रये ७७ विधिनाहं न सृष्टश्चेन्न स्यात्तव दयालुता आमयो वा न सृष्टश्चेदौषधस्य वृथोदयः ७८ कृपा मदग्रजा किं ते अहं किं वा तदग्रजः विचार्य देहि मे वित्तं तव देवि दयायनं ७९ माता पिता त्वं गुरुः सद्गतिः श्रीस्त्वमेव संजीवनहेतुभूता अन्यं न मन्ये जगदेकनाथे त्वमेव सर्वं मम देवि सत्यं हृदयबीजं ओं श्रां श्रीं हः फट् कुरु स्वाहा आद्यादिलक्ष्मीर्भव सुप्रसन्ना विशुद्धविज्ञानसुखैकदोग्ध्री अज्ञानहंत्री त्रिगुणातिरिक्ता प्रवालनेत्रे भव सुप्रसन्ना ८१ अशेषवाग्जाड्यमलापहारिणी नवं नवं स्पष्टसुवाक्यदायिनी ममेह जिह्वाग्रसुरंगनर्तकी भव प्रसन्ना वदने च मे श्रीः ८२ समस्तसंपत्सुविराजमाना समस्ततेजःसु विभासमाना विष्णुप्रिये त्वं भव दीप्यमाना वाग्देवता मे भव सुप्रसन्ना ८३ सर्वप्रदे त्वं सकलार्थदे त्वं प्रभासुलावण्यफलास्वदोग्ध्री सुवर्णदे त्वं सुमुखी भव श्रीर्हिरण्मयी मे नयने प्रसन्ना ८४ सर्वार्थदा सर्वजगत्प्रसूतिः सर्वेश्वरी सर्वभयापहंत्री सर्वोन्नता त्वं सुमुखी भव श्रीर्हिरण्मयी मे नयने प्रसन्ना ८५ समस्तविघ्नौघविनाशकारिणी समस्तभक्तोद्धरणे विचक्षणा अनंतसौभाग्यसुखप्रदायिनी हिरण्मयी मे नयने प्रसन्ना ८६ देवि प्रसीद दयनीयतमाय मह्यं देवाधिनाथभवदेवगणाभिवंद्ये मातस्तथैव भव सन्निहिता दृशोर्मे पत्या समं मम मुखे भव सुप्रसन्ना ८७ यावत्सभीरभयदानकरोर्पितसि मौलौ मम मतिं मयि दीनदयानुकंपे मातः समर्पय सदा करुणाकटाक्षं मांगल्यबीजमहिमानमज्जमातः ८८ ओं श्रां श्रीं श्रूं श्रैं श्रौं श्रः कटाक्ष इह कामधुक्त्वमतस्तु चिंतामणिः कारः सुरतरुः सदा नवनिधिस्त्वमेवेंदिरे भवेत्तव दयारसो रसरसायनं चान्वहं मुखे तव कलानिधिर्विविधवांछितार्थप्रदं ८९ यथा रसस्पर्शनतोयसश्चात्सुवर्णता स्यात्कमले तथा ते कटाक्षसंस्पर्शनतो जनानाममंगलानामपि मंगलत्वं ९० देहीति नास्तीति वचः प्रवेशाद्भीतो रमे त्वां शरणं प्रपद्ये अहं तदा सोस्त्वभयप्रदा त्वं सहैव पत्या मयि सन्निधेहि ९१ कल्पद्रुमेण मणिना सहिता सुरम्या श्रीस्ते कला मयि रसेन रसायनेन आस्तां यतो मम च हृत्करपाणिपादाः स्पृष्टाः सुवर्णवपुषः स्थिरजंगमाः स्युः ९२ आद्यादिविष्णोः स्थिरधर्मपत्नी त्वमेव पत्या मयि सन्निधस्व आद्यादिलक्ष्मीस्तदनुग्रहेण पदे पदे मे निधिदर्शनं स्यात् ९३ आद्यादिलक्ष्मीहृदयं पठेद्यः स राज्यलक्ष्मीमचलां तनोति महादरिद्रोपि भवेद्धनाढ्यस्तदन्वये श्रीः स्थिरतां प्रयाति ९४ यस्य स्मरणमात्रेण हृष्टा स्याद्विष्णुवल्लभा तस्याभीष्टं ददात्याशु तं पालयति पुत्रवत् ९५ इदं रहस्यं हृदयं सर्वकामफलप्रदं जपः पंचसहस्रं तु पुरश्चरणमुच्यते ९६ त्रिकालमेककालं वा नरो भक्तिसमन्वितः यः पठेच्छृणुयाद्वापि स याति परमां श्रियं ९७ महालक्ष्मीं समुद्दिश्य निशि भार्गववासरे इदं श्रीहृदयं जप्त्वा पंचवारं धनी भवेत् ९८ अनेन हृदयेनान्नं गर्भिण्या अभिमंत्रितं ददाति तत्कु [illegible] यते श्रीपतिः स्वयं ९९ नरेण वाथ नार्या वा लक्ष्मीहृदयमंत्रिते [illegible] जायते १०० य आश्विने मासि च [illegible]

त्वमेतसौवर्णमयीसदृष्टिं ११ यएकभक्तोन्वहमेकवर्षंपठेतभक्त्यायतचित्तवृत्तिः समंदभाग्यो
पिरमाकटाक्षाद्भवेत्सहस्राक्षशताधिकश्रीः २ श्रीशांघ्रिभक्तिंहरिदासदास्यंप्रपन्नमंत्रार्थइहैक
निष्ठं गुरोःस्मृतिंनिर्मलबोधबुद्धिंप्रदेहिमेत्वंपरमंपदश्रीः ३ पृथ्वीपतित्वंपुरुषोत्तमत्वंविभूति
वासंविविधार्थसिद्धिं वपुःस्थिरत्वंललनासुभोगंपुत्रादिलब्धिंसकलार्थसिद्धिः ४ सुवर्णवृद्धिं
कुरुमेगृहेश्रीःसुधान्यवृद्धिंकुरुमेगृहेश्रीः कल्याणवृद्धिंकुरुमेगृहेश्रीर्विभूतिवृद्धिंकुरुमेगृहे
श्रीः ५ ध्यायेल्लक्ष्मीप्रहसितमुखींकोटिबालार्कभासां विद्युद्वर्णांबरवरधरांभूषणाढ्यांसुशोभां
बीजापूरंसरसिजयुगंबिभ्रतीस्वर्णपात्रं भर्त्रायुक्तांमुहुरभयदांमह्यमप्यच्युतश्रीः ६

इत्यथर्वणरहस्योक्तंलक्ष्मीहृदयंसंपूर्णम्

ॐनमोनारायणाय ॐश्रीमन्नारायणोज्योतिरात्मानारायणःपरः नारायणःपरंब्रह्मनारायण
नमोस्तुते १ नारायणपरोध्याताध्यानंनारायणःपरं नारायणःपरोध्येयोनारायणनमोस्तुते
नारायणःपरोज्ञाताज्ञानंनारायणःपरं नारायणःपरंधामनारायणनमोस्तुते ३ नारायणःपरो
वेदोविद्यानारायणःपरा विश्वंनारायणःसाक्षान्नारायणनमोस्तुते ४ नारायणाद्विधिर्जातो
जातोनारायणाच्छिवः जातोनारायणादिंद्रोनारायणनमोस्तुते ५ जातंनारायणात्तेजःश्चंद्रो
नारायणोमहान् वह्निर्नारायणःसाक्षान्नारायणनमोस्तुते ६ नारायणोह्युपास्यःस्याद्गुरुर्नारा
यणोपरः नारायणःपरोबोधोनारायणनमोस्तुते ७ नारायणःफलंमुख्यंसिद्धिर्नारायणःसु
खं सर्वंनारायणःशुद्धोनारायणनमोस्तुते ८ इतिश्लोकाष्टकंचाथप्रार्थनादशकंशृणु नारा
यणत्वमेवासिमहादिहृदयस्थितः प्रेरकःप्रार्थ्यमानानांत्वयाप्रेरितवाहनं १ त्वदाज्ञांशिरसाधृत्वा
जपामिपावनंजपः नामोपासनमार्गेणत्वंवैहृदयबोधकः १० भावार्थहृज्ञावहितोभवसोप्य
प्रदोमम त्वन्मायामोहितंविश्वंत्वयैवपरिकल्पितं ११ त्वदधिष्ठानमात्रेणमायासर्वार्थकारि
णी त्वमेवतांपुरस्कृत्यममकामान्समर्पय १२ नमेत्वदन्यःशास्तास्तित्वदन्यंनहिदैवतं त्व
दन्यंनहिजानामिपालकंपुण्यवर्धकं १३ तावत्सांसारिकोभावोमानसेभावनात्मके यावत्सि
द्धिर्भवेन्नैवसर्वथासर्वदाप्रभो १४ पापिनामहमेकोग्र्योदयालूनांत्वमग्रणीः दयनीयोमदन्यो
स्तितवकोत्रजगत्त्रये १५ त्वयाप्यहंनसृष्टश्चेन्नस्यात्तवदयालुता ममोपरिस्वसृष्टस्यदयालोकिं
नजायते १६ पापेनसंपरिक्रांतःपापात्मापापरूपधृक् त्वदन्यःकोत्रपापेभ्यस्त्रातामेजगतीतले
त्वमेवमातापिताच त्वमेवत्वमेवबंधुश्चसखात्वमेव त्वमेवविद्याद्रविणंत्वमेवत्वमेवसर्वंममदेव
देव १८ प्रार्थनादशकंचैवमूलाष्टकमिदंद्वयं यःपठेच्छृणुयान्नित्यंतस्यलक्ष्मीःस्थिराभवेत् १९
नारायणस्यहृदयंसर्वाभीष्टफलप्रदं लक्ष्मीहृदयसंवासंविष्णुसायुज्यदंनृणां २०

इतिश्रीनारायणहृदयंसमाप्तम्

अथलक्ष्मीसूक्तपूजाविधानंविधाणवि नत्राष्टदिनंयावत्प्रत्यहंत्रिसमन्याहुतिः सूक्तस्यकार्या
अनंतरंदिनत्रयेद्विसमन्याहुतिःप्रयत्नकार्या तेनद्वादशसाहस्रसंख्याचामाहुतिर्भवतीति श्रीसमि
द्भिर्बिल्वसामिद्भिर्होमःकार्यः तथा कुंदमंदारकमुदमालतीपद्मकेसरं नेयावर्तीकयंजातीकुं
ल्हारचंपकंतथा रक्तोत्पलादिपुष्पाणिलक्ष्म्याश्चातिप्रियाणिवै स्नानकालेचनेसूक्तै रभिषिंचे
भिःसुधीः यावज्जपेद्दविश्वरक्षणंयेनावदेवहि पूर्वोक्तविधिनासम्यकपूजयेत्परमेश्वरीं त्रिवारं
[illegible]यथाविधि षण्मासंयःकरोत्येवसाक्षाल्लक्ष्मीपतिःस्वयं विकचन्मात्रपवा
[illegible]नरालंके सुसमिद्धेनलेनचसप्तद्रु

नेत्सुधीः अथ भविष्योत्तरखण्डे जपयज्ञभगवासरे चत्वारिंशद्भिरस्यस्मान्महालक्ष्मीरचंचला तरी
यर्चाचजुहुयादेतेनैकादशाहुतीः एवंकुर्वतएवास्य षण्मासान्महदिंदिरा अथानतर्पणंतेच·
संतर्प्याः शक्तयस्त्विमाः श्रावायाहृदंताश्च श्रीलक्ष्मीवरदायकाः विष्णुपत्नीववसुधाहृपास्या
पिहिरण्यतः स्वर्णमालिन्यपिपराचेतनारजतस्रजाः सुवर्णाख्यगृहास्वर्णप्रकारापद्मवासिनी
पद्महस्ताप्रियामुक्तालंकारासूर्यकापरा चंद्राविष्णुप्रियेष्यर्योमुक्तिश्चापितथाभक्तिप्रद विभूदे
ह्रिः समृद्धिश्चतुष्टिः पुष्टिर्धनार्थदाः भुवनेशीचशुद्धासायोगिनीभोगदानता धात्रीविधा·
त्री द्वाविंशत्शक्तयः समुदीरिताः द्वात्रिंशद्भिश्चपूजांते मंत्रीमंत्रैर्बलिंहरेत् मंत्रैर्नाममंत्रैर्यथा
श्रीरेषते बलिर्नमइत्यादि श्रीमंत्रजापिनांकेचिड्वच्यंतेनियमायह तैलाभ्यक्तश्चनाश्रीयान्न
स्तोयेनसंविशेत् अशुचिर्नस्वयेत्कापिद्वाभ्यांस्यादशुचिर्भवेत् लवणंतिलसंभूतंनाश्रीयात्तै
वलंसुधीः लिंपेद्धरिद्रांनोवृक्षेनान्तंप्रवदेत्कचित् कदाचिन्मलिनोनस्याद्भुवंनैवालिखेद्भुवा
श्रीफलांबुजसद्रोणान्नमूर्द्धनिचधारयेत् तथाचनिर्मलाचारः शुक्लः शुद्धमनाभवेत् शुद्ध
माल्यानुलेपश्च शुद्धाभरणभूषितः श्वेतवस्त्रपरीधानः शुद्धदेहः स्वलंकृतः उत्कृष्टगंधानुले
पः शुद्धदंतश्चसन्नखः विष्णुभक्तश्चविमलोऽभ्यस्तूपोभवेत्सुधीः निंदितान्वयसंभूतां दुष्टांचकल
हप्रियां दुष्टयोनिमनिष्टांचरोगग्रस्तनिवेषितां अन्यासक्तामशुद्धांचकृशांगींस्तब्धहस्तां अति·
ह्रस्वातिदीर्घांचविरसांभोगलोलुपां अन्यपुरुषलोलांचकाकांतीराजयोषितं रजस्वलामेकवा·
रांयोषितंनस्पृशेदपि शांतः स्मितः शुचिर्वाग्मीमधुरालापवान्भवेत् दयार्द्रचित्तआचार्यदेवति·
ध्यार्चनारतः गुर्वग्निपूजानिरतः पुण्यशीलोदृढव्रतः नित्यस्नायीपश्चिमाशामुखशायीशीलवान्भ
वेत् वर्णाश्रमरतःस्वीयदाररतश्चाल्पभाषणः एतादृशोऽत्रनियमैर्युक्तोलक्ष्मींलभेतसः नारय·
णीये नाजिघ्रेन्नाक्रमेच्चान्यंनहीजंनचभक्षयेत् तस्मान्मलिष्टोन्नोद्विधाबिल्वभूमौशयीतन ल
वणमलके वर्ज्ये नागादित्यतिथौक्रमात् नागादित्यतिथीपंचमीसप्तम्यौ पंचम्यामन्तरेस्त्रीच·
वर्ज्याप्रसङ्गनोशने बिल्वैर्नमार्जयेद्दंतान्त्रिसंध्यंप्रणमेच्चतान् प्रातर्भक्ष्यास्तिलास्तेचधार्याल
ल्मीचभक्षयेत् धारयेन्मूर्ध्निनोपुष्पमन्तरेमधुरान्नभुक् पायसंबिल्वबीजंचभक्षयेच्छुक्लपर्वणि
शुक्लपर्वणिपूर्णिमायां शारदातिलके शयीतशुद्धशय्यायांतरुणपासहनान्यथा मलिनोनभ
वेज्ञात्कुत्सितान्नंनभक्षयेत् द्रोणपंकजबिल्वानिपद्माजातनलंघयेत् सहदेवीमित्रवल्ली।
श्रीदेवीविष्णुवल्लभा कंमांजेवृषवालंचधारयेन्मूर्ध्निसर्वदा श्रीदेवीश्रीललिता विष्णुव।
लभाअपराजिता कन्याकुमारी प्रयोगसारे धान्यगोगुरुहुताशनराणांनक्षयेदपरिताप्यनु
वंशं नोत्तरापरशिराणनचनग्नोनार्द्रपाणिशरणः श्रियमिच्छन् अथयंत्रोद्धारः यंत्रसारे श्री
बीजसाध्यसंयुक्तंकर्णिकायांसमालिखेत् वसवादिन्यष्टसंख्यापत्रेष्वपियथाक्रमं श्रीसूक्त
स्याद्यर्द्धमर्द्धमृचामालिख्यतद्बहिः यः शुचिः प्रयतोभूत्वेत्यृचामातृकयापिच मंत्रेण

ह्रोपहूयेश्रियमिमंतमृचामर्द्धमर्द्धमालिख्य तद्वहिर्द्वादशदलकमलंकृत्वा तद्दलेषुस्वाद्यादिप्रदक्षि
णेन चंद्रांप्रभासामित्यारभ्यमयिश्रीःश्रयतांयशइत्यंतमृचामर्द्धमालिख्य तद्वहिःषोडशदलान्विते
षु कर्द्दमेनप्रजाभूतेत्यादिऋकत्रयस्यार्द्धमर्द्ध गौरीमिमाय ११ द्विपदी १२ अष्टापदी १३ सहस्राक्ष
रा १४ प्रणोदेवी १५ धीनामवित्र्यवतु १६ तद्वहिर्वृत्तत्रयंकृत्वातत्राभ्यंतरवीथ्यां यःशुचिःप्रयतो
भूत्वाजुहुयादाज्यमन्वहं श्रियःपंचदशर्चंचश्रीकामःसततंजपेत् इतिऋचासंवेष्ट्य वहिर्वीथ्यां।
मातृकयासंवेष्ट्यतद्वहिश्चतुरस्रंविलिख्य तत्कोणेषुश्रीवीजमालिखेत् एतद्यंत्रमुक्तफलदंभव।
ति अथाश्विननवरात्रेवेदोक्तप्रकारेणमहालक्ष्मीपूजनंवक्ष्यते तत्र ब्राह्मेमुहूर्तेउत्थाय स्वगुरु।
स्मरणकुंडलिनीस्मरणादिशातः कृत्यादिकंकृत्वादंतधावनस्नानसंध्यानित्यतर्पणादिकृत्वा पूजा
स्थानमागत्यदिग्बंधनादिपूर्वकभूतशुद्धिप्राणप्रतिष्ठादियोगपीठांतंकृत्वा मूलेनप्राणायामंकृत्वा गण
पतिकुलदेवतादिस्मरणांते·ब्राह्मणादीन्नमस्कृत्य ॐसुमुखश्चैकदंतश्च· शुक्लांवरधरंविष्णुं· अभीप्सि
तार्थसंसिद्ध्यै· यत्रयोगेश्वरःकृष्णो· अनन्याश्चिंतयंतोमां· स्मृतेःसकलकल्याणभाजनं· सर्वेष्वारंभ
कार्येषुनास्तितेषाममंगलं· येषांहृदिस्थोहरिः तदेवलग्नंसुदिनंतदेवताराबलंचंद्रबलंतदेव विद्या
बलंदैवबलंतदेवलक्ष्मीपतेतेंघ्रियुगंस्मरामि इतिमंगलाचरणं अथास्मिन्मासि· श्रीमहाकालीम।
हालक्ष्मीमहासरस्वतीप्रीतिपूर्वकडरितनिवारणार्थंमेसर्वापद्रोगपैश्वर्यादिवृद्धिकामःप्रतिपदमा
रभ्यनवमीपर्यंतमिष्टदेवता स्वरूपिण्याश्रीमहालक्ष्म्याःषोडशोपचारपूजांश्रीसूक्तचंडीपाठानां य
थोक्तसंख्यायास्तद्दशांशहोमादिकमहंकरिष्येइतिसंकल्प्य तत्रनिर्विघ्नतार्थंगणपतिपूजनंकरि।
ष्ये ततोरक्ताक्षतादिभिर्भूमावष्टदलपीठं तत्रमहागणपतयेसिद्धिबुद्धिसहितसवाहनसायुधस·
परिवारएह्येहिआगच्छागच्छ हेरंबत्वमेह्येहिअंविकात्र्यंवकात्मज सिद्धिबुद्धिपतेत्र्यक्षलक्षलाभ
पितःपितः नागास्यनागहारत्वंगणराजचतुर्भुज भूषितःस्वायुधैर्दिव्यैःपाशांकुशपरश्वथैः आ
वाहयेत्वांपूजार्थंरक्षार्थंचममप्रभो इहागत्यगृहाणत्वंपूजांकर्तुंचरक्षमे आवाह्येवंगणेशानंषू·
जाद्रव्यैःप्रपूजयेत् गणानांत्वागणपतिंहवामहे प्रियाणांत्वा· निधीनांत्वा· वसोममआह· गणानांत्वा
गणपतिंत्वाहवामहे कविंकवीनाम् आवाहनं स्वागतं पाद्यं अर्घ्यं आचमनीयं मधुपर्कंपुनराच
मनीयं स्नानंवस्त्राभरणानिगंधंपुष्पंधूपंदीपंनैवेद्यं तांबूलंदक्षिणानमस्कारान्विधाय हस्तद्वये
ननारिकेलाद्यर्घ्यपात्रस्थजलंसपुष्पंगृहीत्वोत्थायप्रार्थयेत् रक्षरक्षगणाध्यक्षत्र्यक्षत्रैलोक्यरक्ष
क भक्तानामभयंकर्तात्राताभवभवार्णवात् हैमातुरकृपासिंधोषण्मातुराग्रजप्रभो वरदत्वंवरंदे
हिवांछितंवांछितार्थद अनेनफलदानेनफलदोस्तुभवान्मम इतिफलंदत्वाप्रार्थयेत् विघ्नेश्व
रायवरदायसुरप्रियायलंबोदरायसकलायजगद्धिताय नागाननायश्रुतियज्ञविभूषितायगौरी
सुतायगणनाथनमोनमस्ते भक्तार्तिनाशनपरायगणेश्वरायसर्वेश्वरायशुभदायसुरेश्वराय वि
द्याधरायविकटायचवामनायभक्तप्रसन्नवदनायनमोनमस्ते नमस्तेब्रह्मरूपायविष्णुरूपायते
[illegible]ायनमस्तेब्रह्मचारिणे भक्तप्रियायदेवायनमस्तुभ्यंविनायक इतिनम·
[illegible]मावदेतिवलप्रदेति विद्याप्रे

नीयाग्रय लाइतिफलंद्विधा परिव्राजयतीतिपंचरत्नप्रदोषः हिरण्यगर्भः समवर्ततागेइतिदक्षिण
द्रव्यं प्रवासुवास इतिवस्त्रेणाच्छाद्य रक्तवस्त्रेणसूत्रेणचवेष्टनं तत्त्वायामिब्रह्मणावन्दमान इतिवरुण
वाहनं ब्रह्मांडोदरतीर्थानिकरैःस्पृष्टानितेरवे ओंमित्यंकुशमुद्रयातीर्थान्यावाह्य गंगेचयमुनेचै
व· सर्वेसमुद्राःसरितः इत्यावाह्यचंदनादिभिः कलशमलंकृत्य कलशस्यमुखेविष्णु· तत्प्रसादा·
दिमंयत्नं सान्निध्यं प्रसन्नोभवसर्वदा इतिकलशस्थापनं ततोमूलेनप्राणायामत्रयंकृत्वा श्रीसू·
क्तन्यासंकुर्यात् अस्यश्रीसूक्तस्यानंदकर्दमचिक्लीतश्रीपुत्रेभ्योऋषिभ्योनमः शिरसि मुखे अनुष्टु
प्बृहतीत्रिष्टुप्प्रस्तारपंक्तिछंदोभ्योनमो हृदि श्रीविभावसुदेवताभ्यांनमः ममसकुटुंबस्यमेस्या
धारोग्यपुष्टैश्वर्याभिवृद्ध्येविनियोगः इतिकृतांजलिरुक्त्वा हिरण्यायैनमः हृदयायनमः चंद्रायैन
मः शिरसेस्वाहा रजतस्रजायैशिखायैवषट् हिरण्यस्रजायैकवचायहुं हिरण्मय्यायैनमः नेत्रत्रया
यवौषट् हिरण्यायैनमः अस्त्रायफट् एवंकरांगुलिन्यासोपि· शिरसिहिरण्यवर्णां १ नेत्रयोःताम्म
आवह २ कर्णयोःअश्वपूर्णां· ३ नासिकायांकांसोस्मितां· ४ मुखेचंद्रांप्रभासां· ५ गलेआदित्यव
र्णां· ६ बाह्वोःउपैतुमां· ७ हृदिक्षुत्पिपासां· ८ नाभौगंधद्वारां· ९ गुह्येमनसःकामं· १० गुदेकर्द
मेन· ११ ऊर्वोः आपस्सृजंतु· १२ जान्वोः आर्द्रांसूर्यां १३ जंघयोःआर्द्रांचंद्रां १४ पादयोःतामआवह १५
ततः आंश्रींसूंश्रेंश्रौंअः इत्येवंषडंगानिविन्यस्य प्राग्वत्करीन्योर्ध्वकमलेदेवींध्यायेत् अरुणकमल
संस्थातद्रजः पुंजवर्णाः करकमलधृतेष्टाभीतियुग्मांबुजाच मणिमुकुटविचित्रालंकृताकल्पजालैर्भ
ववतुभुवनमातासर्वदाश्रीःश्रियेनः इतिध्यात्वामानसोपचारैराराध्यअर्घ्यादिस्थापनांते ओंह्रींश्रींहंसः
सोहंस्वाहाइतिमंत्रेणात्मपूजांविधायपीठपूजामारभेत् ओंमंडूकायनमः कालाग्निरुद्रायनमः
मूलप्रकृत्यैनमः आधारशक्त्यै· कूर्माय· अनंताय· वराहाय· पृथिव्यै· सुधासमुद्राय· श्वेतद्वीपा
य· स्वर्णपर्वताय· नंदनोद्यानाय· कल्पवृक्षवनाय· स्वर्णप्राकाराय· करुणामयपरिखायै· रत्न·
मणिमंडपाय· पूर्वद्वारश्रियै· इंद्राय· ब्रह्मणे· सत्वाय· ऋग्वेदाय· आत्मनेकालतत्वाय· अंबिकायै·
इंद्राण्यै· वेदमात्रे· शैलपुत्र्यै· ब्रह्मचारिण्यै· चंडघंटायै· कूष्मांडायै· कात्यायिन्यै· कालरात्र्यै· महा
गौर्यै· १ ततोदक्षिणद्वारे द्वारश्रियैनमः यमाय· शांत्यै· सिद्धायै· क्षमायै· विष्णवे· यजुर्वेदाय· र
जसे· विद्यातत्वाय· जगन्मात्रे· मायायै· शिवायै· शांत्यै· ह्रींकारायै· क्लींकारायै· मायाशक्त्यै· वीरा·
यै· प्रवीरायै· अनंतरात्मने· दंडधराय· २ ततःपश्चिमद्वारे· द्वारश्रियै· वरुणाय· रुद्राय· सामवेदा
य· आदित्याय· वारुण्यै· शंखायुधायै· हंसवाहिन्यै· जगज्जीवायै· जगद्बीजायै· षोडशकलायै· पूर्णा
णकलशाय· विश्विण्यै· चित्रमालायै· चित्रायै· चामुंडायैनमः ३ ततउत्तरेद्वारे द्वारश्रियै· कपालधा
रिण्यै· भक्तवत्सलायै· हूंकारायै· ह्रांकारायै· विमलरूपायै· ईशानाय· पार्वत्यै· ब्रह्मणे· अथर्व·
णवेदाय· धात्रे· ज्योत्स्नायै· कल्याण्यै· शर्वाण्यै· चंद्रकलायै· चंद्रवदनायै· विभूत्यै· परविभूत्यै· भ
क्ष्यधारिण्यै· पावनायै· गंगायै· भगीरथ्यै· गोदावर्यै· प्रवरायै· प्रणतायै· क्लींकारायै· क्रींकारायै·
क्रौंकारायै· सर्वबीजात्मने· बीजप्रवाहिन्यै· ४ [illegible]
[illegible] श्चर्याय· [illegible]

ॐश्रद्धायै· उन्नत्यै· कांत्यै· हृष्ट्यै· कीर्त्यै· सन्नत्यै· व्युष्ट्यै· उत्कृष्ट्यै· मत्यै· ऋद्ध्यैनमः इतिसंपूज्य
ॐश्रीसर्वशक्तिकमलासनायनमः इतिसमस्तपीठंसंपूज्य मूलमुच्चार्य श्रीलक्ष्मीमूर्तिंपरिकल्पया
मिनमः इतिकलशोपरिमूर्तिंपरिकल्प्य घंटामजकरांलक्ष्मीदुर्गांदेवींव्यवस्थितां स्थापयामिमहादे
वींसर्वसौभाग्यदायिनी इतिसंस्थाप्य स्वहृत्कमलेप्रागवद्देवींध्यात्वादेव्यास्तेजोदीपाद्दीपांतरमिव
वहन्नासापुटाग्रनापुष्पांजलावानीय एह्येहिदेवदेवेशिपरिवारसमन्विते यावत्त्वांपूजयिष्यामितां
वत्त्वंचइहावह महापद्मवनांतस्थेकारणानंदविग्रहे सर्वभूतहितेमातरेह्येहिपरमेश्वरि इत्यावा
हनादिदशमुद्राः प्रदर्श्यध्यायेत् लक्ष्मींक्षीरसमुद्रराजतनयांश्रीरंगधामेश्वरीं दासीभूतसमस्त
देवनिकरांलोकैकदीपांकुरां श्रीमन्मंदकटाक्षलब्धविभवब्रह्मेंद्रगंगाधरां त्वांत्रैलोक्यकुटुं
बिनींसरसिजांवंदेमुकुंदप्रियां इतिध्यात्वा मूलमंत्रेणादीपिन्यामालिन्यार्घोदकेनच त्रिवारंप्रो
क्षयित्वा प्राणप्रतिष्ठांविधायपुष्पांजलिंगृहीत्वा ॐदुर्गेकात्यायनीदेविशांभविशंकरप्रिये भक्त्या
मयाकृतांपूजांगृहाणत्वंसुरेश्वरि हिरण्यवर्णां· जातवेदसे· नमोदेव्यैमहालक्ष्म्यै· आवाहनंप
रिकल्पयामि इतिदद्यात् तप्तकांचनवर्णाभंमुक्तामणिविराजितं अमलंकमलंदिव्यमासनंप
तिगृह्यतां तामआवह १ जातवेदसे· नमोदेव्यै· महासरस्वत्यै· श्रीरतन्नेस्वासनंनमः ॐस्वाग
तंकुशलंतेस्तु महादेविमहेश्वरि स्वागतंत्वयाभद्रेकृपयाभक्तवत्सले तामआवह· २ जातवेद
से· नमोदेव्यै· महासरस्वत्यै· श्रीरतन्नेस्वागतंनमः गंगादितीर्थसंभूतंगंधपुष्पाक्षतैर्युतं पाद्यं·
ददाम्यहंतुभ्यंनमस्तेकमलालये· अश्वपूर्णां ३ जातवेदसे· नमोदेव्यै· श्रीरतन्नेपाद्यंनमः अष्ट
गंधसमायुक्तंस्वर्णपात्रेप्रपूजितं अर्घ्यंददाम्यहंतुभ्यंप्रसीदत्वंसुरेश्वरि कांसोस्मितां ४ जातवेद
से· नमोदेव्यै· लोकमात्रे· श्रीरतन्नेऽर्घ्यंस्वाहा सर्वलोकस्ययामातायामातालोकपावनी ददाम्याच·
मनंतस्यैमहालक्ष्म्यैप्रयत्नतः चंद्रांप्रभासां· ५ जातवेदसे· नमोदेव्यै· भक्तप्रियायैश्रीरतन्ने· आ
चमनीयंतथा कपिलादधिकुंदेंदुधवलंमधुसंयुतं स्वर्णपात्रस्थितंदेविमधुपर्कंगृहाणमे आदि
त्यवर्णे· ६ जातवेदसे· नमोदेव्यै· भक्तप्रियायै· श्रीरतन्नेस्नानीयंनमः एह्येहिपादुकयादेविस्नाना
र्थंस्नानमंडपं स्नानवारिंगृहीत्वात्वंस्नानासनसमागता सुगंधितैलगंधादिपंचामृतजलादिकं
सुगंधामलचूर्णांवतयोद्वर्तनकादिकं नानातीर्थोद्भवंतोयंस्नानीयंचगृहाणमे आदित्यवर्णे· जा
तवेदसे· नमोदेव्यै· भक्तप्रियायै· श्रीरतन्नेस्नानीयंनमः आपोहिष्ठेतिमलापकर्षणस्नानं पयो
दधिघृतंचैवशर्करामधुसंयुतं पंचामृतंमयानीतंगृहाणपरमेश्वरि आदित्यवर्णे ८ जातवेद
से· नमोदेव्यै· भद्रायैनमः श्रीरतन्नेपंचामृतस्नानं पुरुषसूक्तेनशुद्धोदकेनस्नानं जातवेदसे·
पुनराचमनं दिव्यांबरंनवंश्वेतंक्षौमंजातिमनोहरं त्रैलोक्यजननीदेविदीयमानंगृहाणमे· उपै
तुमां· ७ जातवेदसे· नमोदेव्यै· श्रीलक्ष्म्यैनमः श्रीरतन्नेवासोयुग्मंनमः देहिदेविविभूषार्थंने

हाणहरिवल्लभे जातवेदसे· नमोदेव्यै· हरिप्रियायैनमः श्रीरेतन्नेहारिद्रं कुंकुमंशोभनंदिव्यं
सर्वदामंगलप्रदं मयानीतंमहादेवितुभ्यंदास्यामिसुंदरि जातवेदसे· नमोदेव्यै· मंगलायैनमः
श्रीरेतत्कुंकुमंनमः सिंदूरंशुभदंनित्यंमहाशक्तिप्रियंसदा प्रयच्छामिमहादेविसर्वसौभाग्यदा।
यिनि जातवेदसे· नमोदेव्यै· महादेव्यै· श्रीरेतत्सिंदूरंनमः मालतीमल्लिकादीनिनवानिकु
सुमानिच एकनाथेप्रयच्छामिपुष्पाणिप्रतिगृह्यतां मनसःकामं ९· जातवेदसे· नमोदेव्यै·
एकनाथायैश्रीरेतानिपुष्पाणिवौषट् रक्तैःश्वेतांबुजैःपुष्पैर्मल्लिकादिविचित्रितैः नानापुष्पैः
कृतांमालांगृहाणहरिवल्लभे श्रीरेतांमालांसमर्पयामि पुष्पमालांनमः सुगंधंशीतलंशुभ्रंना।
नागंधसमन्वितं प्रीत्यर्थंतवदेवेशि सुचूर्णंप्रतिगृह्यतां जातवेदसे· नमोदेव्यै सुभगायैनमः श्रीरे·
तत्परिमलद्रव्यंनमः अथांगपूजा चंचलायैनमः पादौपूजयामि· एवं· चपलायै· गुल्फौपूजया·
कांत्यै· जानुनीपूजया· मंगलायैजंघेपू· भद्रकाल्यैउरूपू· कमलिन्यैकटिंपू· शिवायैनाभिंपू·
क्षमायैउदरंपू· गौर्यै· सिंहवाहिन्यैस्तनद्वयंपू· स्कंदमात्रे· काममात्रेभुजद्वयं· कंबुकंठायै· कं
ठंपूजया· सरस्वत्यैमुखंपू· सुवासिन्यैनासिकांपू· स्वर्णकुंडलायै· कर्णद्वयंपू· चंडिकायैनेत्रद्व
यंपू· शिवायैललाटंपू· कुमार्यै· शिरःपू· सर्वरूपायैनमः सर्वांगंपूजयामि इतिसंपूज्य ततोऽ
ष्टोत्तरशतनामभिःपूजयेत् ॥ ओंअस्यश्रीमहालक्ष्म्यष्टोत्तरशतनाममालामंत्रस्य ब्रह्माऋषि
रनुष्टुप्छंदः श्रीमहालक्ष्मीर्देवता श्रीमहालक्ष्मीप्रीत्यर्थं श्रीमहालक्ष्मीमष्टोत्तरशतनामभिःपूज
यिष्ये इतिविनियोगः ततःश्रीबीजषट्केनषडंगन्यासंकृत्वा लक्ष्मींसमुद्रराजतनयामित्यादिध्या।
त्वा पुष्पैरक्षतैर्वापूजयेत् तद्यथा ओंमहालक्ष्म्यैनमः महाकाल्यै· महासरस्वत्यै· महाकन्यायै·
महागौर्यै· महादेव्यै· भक्तानुग्रहकारिण्यै· स्वप्रकाशात्मरूपायै· महामायायै· माहेश्वर्यै·
वागीश्वर्यै· जगद्धात्र्यै· कालरात्र्यै· त्रिलोचनायै· भद्रकाल्यै· कपालिन्यै· महागौर्यै· त्रिलो
कात्मिकायै· सिद्धलक्ष्म्यै· क्रियालक्ष्म्यै· लोकमनुप्रदायिन्यै· अरूपायै· स्वरूपायै· विश्वरू·
पिण्यै· पंचभूतात्मिकायै· देवमात्रे· सुरेश्वर्यै· दारिद्र्यध्वंसिन्यै· वीणापुस्तकधारिण्यै· सर्व·
प्रात्यै· ब्रह्मात्मिकायै· अष्टांगरूपिण्यै· नवदुर्गात्मिकायै· अष्टभैरव्यै· गंगायै· शारदायै·
वेण्यै· सर्वशास्त्रधारिण्यै· समुद्रवसनायै· ब्रह्मांडमणिमेखलायै· अवस्थात्रयनिर्मुक्तायै· गु
णत्रयविवर्जितायै· योगध्यानैकसंन्यासिन्यै· योगध्यानैकपरायणायै· देवत्रयविशोकायै· वे
दांतज्ञानरूपिण्यै· पद्मावत्यै· विज्ञानलक्ष्म्यै· नागयज्ञोपवीतिन्यै· सूर्यचंद्रार्द्धमासायै· ग्रहनक्षत्र
रूपिण्यै· वेदिकायै· वेदरूपिण्यै· गिरिसंभवायै· कैवल्यदायै· विशृंखलायै· सूर्यमंडलसंस्थि
तायै· सोममंडलमध्यस्थायै· वायुमंडलसंस्थितायै· वह्निमंडलसंस्थितायै· चक्रिकायै· चक्र
मध्यस्थितायै· चक्रमार्गप्रदायिन्यै· सिद्धांतमार्गदायिन्यै· षड्वर्गवर्जितायै· प्रत्यक्षादिप्रमाह्व।
नायै· विद्यामूर्तायै· त्रैलोक्यमोहिन्यै· विद्यायै· वर्मदायै· रक्षायै· ब्रह्मस्थापितरूपायै· कैवल्य
ज्ञानगोचरायै· करुणायै· वरुणायै· मधुकैटभमर्दिन्यै· अचिंत्यलक्षणायै· गोप्त्र्यै· सदाभक्ता
घनाशिन्यै· महारंभायै· परमेश्वर्यै· सुसिद्धलक्ष्म्यै· महाकालिन्यै· सद्योजातायै· वामदेवा
यै· अघोरायै· तत्पुरुषायै· ईशानरूपिण्यै· एकाक्षरदेव्यै· योगिन्यै· योगध्यानपराक्रमायै·
श्रीसिद्धलक्ष्म्यै· श्रियै· कमलायै· कमलालयायै· पद्मायै· नलिनयुग्मकरांबुजायै· शैलपु·
त्र्यै· ब्रह्मचारिण्यै· चंडघंटायै· कूष्मांडायै· स्कंदमात्रे· कात्यायिन्यै· कालरात्र्यै· महागौर्यै·
सिद्धिदायै· सर्वात्मिकायैनमः इतिसंपूज्य कर्णिकायां· श्रांहृदयायनमः श्रींशिरसेस्वाहा श्रं

लायैवषट् ॐ कवचायहुं ॐ नेत्रत्रयायवौषट् ॐ अस्त्रायफट् ततोष्टदलेषुपूर्वादिक्रमतः पद्मास
यैनमः पद्मवर्णायै पद्मसंस्थायै आर्द्रायै तर्पयंत्यै तृप्तायै ज्वलिन्यै स्वर्णप्रकारायै ततोद
लाग्रेषु ब्राह्म्यै माहेश्वर्यै कौमार्यै वैष्णव्यै वाराह्यै इंद्राण्यै चामुंडायै महालक्ष्म्यै ततोभूपु
पूर्वादिक्रमेण इंद्रायसांगायसपरिवारायसशक्तियुतायनमः एवंअग्नये यमाय निर्ऋतये
रुणाय वायवे कुबेराय ईशानाय ब्रह्मणे अनंतायनमः तद्बहिः वज्रायनमः शक्तयेनमः
ायनमः खड्गाय पाशाय अंकुशाय गदायै शूलाय पद्माय चक्रायनमः इतिसंपूज्य पुष्पां
लिंदत्वा दशांगंगुग्गुलधूपंचंदनागुरुसंयुतं मयादत्तंमयादेविप्रसीदत्वंसुरेश्वरि कर्दमेन ११
तवेदसे नमोदेव्यै भद्रकाल्यै श्रीरेषतेधूपोनमः कर्पूरवर्तिसंयुक्तंगोघृतेनसमन्वितं दीपंगृ
णदेवेशिमहालक्ष्मिनमोस्तुते आपःसृजंतु १२ जातवेदसे नमोदेव्यै श्रीमहालक्ष्म्यैनमः
रेषतेदीपोनमः नैवेद्यंगृह्यतांदेविभक्ष्यभोज्यसमन्वितं षड्रसैरन्वितंदिव्यंघृतेनपरिपूरितं आ
पुष्करिणींसूर्यां १३ जातवेदसे नमोदेव्यैपद्ममालिन्यै श्रीरेतत्तेनैवेद्यंनमः मध्येपानीयं उ
रापोशानं पुनराचमनीयं कर्पूरचंदनोन्मिश्रंदिव्यंगंधसमन्वितं करोद्वर्तनकंरम्यंगृहाणपर
मेश्वरि जातवेदसे नमोदेव्यै पिंगलायैनमः श्रीरेतत्तेकरोद्वर्तनकंनमः पूगीफलैःसकर्पूरै
नागवल्लीदलैर्युतं कर्पूरचूर्णसहितंतांबूलंप्रतिगृह्यतां आर्द्रां चंद्रां १४ जातवेदसे नमोदेव्यै
गलायैनमः श्रीरेतत्तेतांबूलंनमः जातवेदसे नमोदेव्यै देव्यैनमः श्रीरेतत्तेसुवर्णपुष्पंनमः
इदंफलंमयादेविस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि जातवेदसे न
मोदेव्यै सिद्धिदायैनमः श्रीरेतत्तेफलंनमः वह्निचंद्रसूर्यरत्नानिविद्युदग्निस्त्वमेवहि नीराजनंम
यादत्तंगृहाणपरमेश्वरि ताम्म आवह १५ जातवेदसे नमोदेव्यै यमुनाद्विनिवासिन्यैनमः
श्रीरेतत्तेनीराजनंनमः गौरीमिमाय जातवेदसे नमोदेव्यै प्रणोदेवी समस्तंश्रीसूक्तं नमो
देव्यै महालक्ष्म्यै महाकाल्यै महालक्ष्म्यै महासरस्वत्यै श्रीरेतत्तेमंत्रपुष्पंनमः सर्वस्वरूपे
तवेदसे नमोदेव्यै महाकाल्यैनमः श्रीरेतानि प्रदक्षिणानिनमः सर्वतःपाणिपादंते यः
वःप्रयतइत्यादिसमस्तं नमस्तेस्तुमहादेव्यैनमस्तेस्तुहरिप्रिये नमस्तेस्तुजगद्धात्रिनमस्तेपि
लमे जातवेदसे नमोदेव्यै महामायायैनमः श्रीरेतानिचंदनानिनमः पद्मप्रिये यासाप
मन यामानामधुकैटभप्रमथिनी मांपातुविश्वेश्वरी जातवेदसे नमोदेव्यै श्रीरेतत्तेप्रार्थ
नि ततःश्रीसूक्तं चंडीपाठं लक्ष्मीहृदयादिकंपठित्वा गुह्यातिगुह्यगोप्त्रीत्वंइत्यादिनाजपंसम
र्पयेत् इतिश्रीलक्ष्मीपूजाविधानम् ॥

सूक्तमाहात्म्यविष्णुधर्मोत्तरे रामउवाच एकंमंत्रंसमाचक्ष्वदेवलक्ष्मीविवर्द्धनं प्रतिवेदंजगन्ना
थदोषाणांनृपात्मज पुष्करउवाच श्रीसूक्तंप्रतिवेदंचज्ञेयंलक्ष्मीविवर्द्धनं अस्मिंल्लोकेपरेवापि
ाकामद्विजसत्तम रामउवाच प्रतिवेदंसमाचक्ष्वश्रीसूक्तंपुष्टिवर्द्धनं श्रीसूक्तस्यतथासर्वंफलं
भृतांवर पुष्करउवाच हिरण्यवर्णांहरिणीमृचःपंचदशद्विज श्रीसूक्तंकथितंपुण्यमृग्वेदेपु
र्द्धनं रथेअक्षेषुवाजेतिचतस्रस्तत्तथाऋचः श्रीसूक्तंतुयजुर्वेदेकथितंपुष्टिवर्द्धनं आतीयंच
सामसामवेदेप्रकीर्तितं श्रियंदातमयिदेहिप्रोक्तमाथर्वणेतथा श्रीसूक्तंयोजपेद्भक्त्यातस्य ल
ल्लीनपति जुहुयाद्यस्तथैतत्तुहविषेणाविशेषतः श्रीसूक्तेनतुपद्मानांहुतानांनाम्भसूत्तम अयुतं
येषस्तुवक्ष्योभक्तियुतोनरः पद्महस्तद्वयालक्ष्मीर्नरंतमुपतिष्ठति दशायुतंतुपद्मानांजुहुया
यानलेनापैतितत्कुलाल्लक्ष्मीविष्णोर्वक्षस्थलायथा हुतानांनांतुबिल्वानांकुत्वारामायुतंतथा

बहुवित्तमवाप्नोतिसयावन्मनसेच्छति बिल्वानांलक्षहोमेनकुलंलक्ष्मीमुपाश्नुते पद्मानामपिबिल्वानां
कोटिहोमंसमाचरेत् अद्वयानंसमाप्नोतिदेवेंद्रत्वमपिध्रुवं संपूज्यदेवींवरदांयथावत्पद्मैःसितैर्वा
कुसुमैस्तथान्यैः क्षीरेणधूपैःपरमान्नभक्ष्यैर्लक्ष्मीमवाप्नोतिविधानतश्च ॥ इतिविष्णुधर्मोत्तरे
द्वितीयकांडेश्रीसूक्तविधानम् ॥ अथश्रीसूक्तं ॐहिरण्यवर्णांहरिणींसुवर्णरजतस्रजां चंद्रांहिर
ण्मयींलक्ष्मींजातवेदोममावह १ तांमआवहजातवेदोलक्ष्मीमनपगामिनीं यस्यांहिरण्यंविंदेयंगा
मश्वंपुरुषानहं २ अश्वपूर्वांरथमध्यांहस्तिनादप्रमोदिनीं श्रियंदेवीमुपह्वयेश्रीर्मादेवीजुषतां
कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीं पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियं ४ चं
द्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदारां तांपद्मनेमींशरणमहंप्रपद्येअलक्ष्मीर्मेनश्य
तां त्वांवृणोमि ५ आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः तस्यफलानितपसानुदंतु
मायांतरायाश्चबाह्याअलक्ष्मीः ६ उपैतुमांदेवसखःकीर्तिश्चमणिनासह प्रादुर्भूतोस्मिराष्ट्रेस्मिन्कीर्तिमृद्धिं
ददातुमे ७ क्षुत्पिपासामलांज्येष्ठामलक्ष्मींनाशयाम्यहं अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् ८
गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ९ मनसःकाममा
कूतिंवाचःसत्यमशीमहि पशूनांरूपमन्नस्यमयिश्रीःश्रयतांयशः १० कर्दमेनप्रजाभूतामयि
संभवकर्दम श्रियंवासयमेकुलेमातरंपद्ममालिनीं ११ आपःसृजंतुस्निग्धानिचिक्लीतवसमेगृहे
निचदेवींमातरंश्रियंवासयमेकुले १२ आर्द्रांपुष्करिणींपुष्टिंसुवर्णांहेममालिनीं सूर्यांहिरण्म
यींलक्ष्मींजातवेदोममावह १३ आर्द्रांपुष्करिणींयष्टिंपिंगलांपद्ममालिनीं चंद्रांहिरण्मयींलक्ष्मींजा
तवेदोममावह १४ तांमआवहजातवेदोलक्ष्मीमनपगामिनीं यस्यांहिरण्यंप्रभूतंगावोदास्योश्वान्विंदे
यंपुरुषानहं १५ इतिश्रीसूक्तं गौरीमिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी अष्टापदी
नवपदीबभूवुषीसहस्राक्षरापरमेव्योमन् १६ प्रणोदेवीसरस्वतीवाजेभिर्वाजिनीवती धीनामवित्र्य
वतु १७ यःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहं श्रियःपंचदशर्चंचश्रीकामःसततंजपेत् १८
पद्माननेपद्मऊरूपद्माक्षिपद्मसंभवे तन्मेभजस्वपद्माक्षियेनसौख्यंलभाम्यहं १९ अश्वदायीगोदा
यीधनदायिमहाधने धनंमेजुषतांदेवीसर्वकामार्थसिद्धये २० पुत्रपौत्रधनंधान्यंहस्त्यश्वाजगवेर
थं प्रजानांभवतीमाताआयुष्मंतंकरोतुमां २१ चंद्राभांलक्ष्मीमीशानांसूर्याभांश्रियमीश्वरीं चंद्रसू
र्याग्निसर्वाभांमहालक्ष्मीमुपास्महे २२ धनमग्निर्धनंवायुर्धनंसूर्योधनंवसुः धनमिंद्रोबृहस्पतिर्वरु
णोधनमश्नुते २३ वैनतेयसोमंपिबसोमंपिबतुवृत्रहा सोमंधनस्यसोमिनोमह्यंददातुसोमिनी २४
नक्रोधोनचमात्सर्यंनलोभोनाशुभामतिः भवंतिकृतपुण्यानांश्रीसूक्तंजपतांसदा २५ वर्षंतुतेवि
भावरिदिवोअभ्रस्यविद्युतः रोहंतुसर्ववीजान्यवब्रह्मद्विषोजहि २६ पद्मप्रियेपद्मिनिपद्महस्तेपद्मा
लयेपद्मदलायताक्षि विश्वप्रियेविष्णुमनोनुकूलेत्वत्पादपद्मंमयिसन्निधत्स्व २७ यासापद्मासनस्था।
विमलकटितटीपद्मपत्रायताक्षी गंभीरावर्तनाभिस्तनभरनमिताशुभ्रवस्त्रोत्तरीया लक्ष्मीर्दिव्यैर्गजें
द्रैर्मणिगणखचितैःस्नापिताहेमकुंभैर्नित्यंसापद्महस्ताममवसतुगृहेदिव्यमांगल्ययुक्ता २८ लक्ष्मीं
क्षीरसमुद्रराजतनयांश्रीरंगधामेश्वरीं दासीभूतसमस्तलोकवनितांलोकैकदीपांकुरां श्रीमन्मंदक
टाक्षलब्धविभवांब्रह्मेंद्रगंगाधरांत्वांत्रैलोक्यकुटुंबिनींसरसिजांवंदेमुकुंदप्रियां २९ सिद्धलक्ष्मीर्मोक्ष
लक्ष्मीर्जयलक्ष्मीसरस्वती श्रीलक्ष्मीवरलक्ष्मीश्चप्रसन्नाभवदाभव ३० श्यामांविचित्रांशुकरत्नभूषितां
पद्मासनांतांगपयोधरान्वितां इंदीवराक्षीमुरुवसारमंजरीशुभांदयानांवसुदांभजामहे ३१ श्रियेजा
तःश्रियआनिर्याय श्रियंवयोजरितृभ्योददाति श्रियंवासानाअमृतमायुर्भवंतिसत्यासमिधावितद्रो

श्रियएवमेताच्छ्रियमादधाति संततमृजावषट्कृत्यैसंतत्यैसंधीयातेप्रजयापशुभिर्यएवंवेद ३३ पुत्र
गौरीमिमाय प्रणौदेवी ३५ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु न्यूनंसंपूर्णतांयातिसद्योवंदेत·
मच्युतं ३६ मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वरि यत्पूजितंमयादेविपरिपूर्णंतदस्तुमे ३७ ॥ इति
श्रीसूक्तपाठः ॥ सरसिजनयनेसरोजहस्तेधवलतरांशुकगंधमाल्यहस्ते भगवतिहरिवल्लभेप्र
सीदत्रिभुवनभूतिकरीप्रसीदमह्यं ३८ सौवर्णपद्मपद्मामलकमलकृतंप्रग्रमशः पाणियुग्मे विभ्रं
तीशोभयोयाहितजलधिजलोद्भवगाङ्गीविधात्री वाङ्हंद्ववसभयाई हृदयाभक्तप्रियोल्लासिनी ल
क्ष्मीर्मेभवनेवसतुदिनंचेन्द्रादिरम्यापि ३९ ॥ अथाववसिष्टमाश्विनशुक्लपक्षकृत्यम्

आश्विनशुक्लद्वितीयायांदानस्यानंतफलमुक्तं स्कांदेनारदीयेच आश्विनेमासिवैशुणा
द्वितीयाशुक्लपक्षगा दानेप्रदत्तमेतस्यामनंतंफलमुच्यते आश्विनशुक्लतृतीयायामपिबृहद्गौरी
व्रतमुक्तंनारदीये इषशुक्लतृतीयायांबृहद्गौरीव्रतंचरेत् पंचवर्षविधानेनपूर्वोक्तेनैवनारद आचा
र्यंपूजयेदत्तेविप्रान्संचयनादिभिः सुवासिनीः पंचपूज्यावस्त्रालंकारचंदनैः कंचुकैश्चैवताटंकैःकं
ठसूत्रैरहरप्रिया वंशपात्राणिपंचैवसूत्रैःसंवेष्टितानिच सिंदूरजीरकंचैवसौभाग्यद्रव्यसंयुतं गोधू
मपिष्टजातंचनवापूपफलादिकं वायनानिचपंचैवतासांदद्याच्चभोजयेत् अर्घ्यंदत्वावायनानिप
श्चाद्भुंजीतवाग्यतः तत्फलंधारयेत्कंठेसर्वकामसमृद्धये ततःप्रातःसमुत्थायसालंकाराःसखीजनैः
गीतवाद्ययुतानद्यांगौरींतांतुविसर्जयेत् आहूतासिमयाभद्रेपूजितासियथाविधि ममसौभाग्यदाना
ययथेष्टंगम्यतांत्वया एवंकृत्वाव्रतंभक्त्याद्विजदेवीप्रसादतः भुक्त्वाभोगांस्तदेहांतेगौरीलोकमवाप्नुया
त् इदंव्रतमाश्विनशुक्लतृतीयायांप्रागुक्तंदेशाचारव्यवस्थयाविधेयम् ॥ आश्विनशुक्लचतुर्थ्यांकप
र्दिविनायकव्रतं नारदीये इषशुक्लचतुर्थ्यांतुकपर्दीशंविनायकं पौरुषेणचसूक्तेनपूजयेदुपचारकैः
एकाग्नमुहिरणितांस्तंदुलान्सकपर्दकान् विप्रायवटवेदद्यात्तंथपुष्पार्चितायच तंदुलाविप्रदेवत्या
हरदेवंत्वमिष्यिताः कपर्दीगणनाथोसौप्रीयतांतैःसमर्पितैः अथव्रतविधिः तिथ्यादिस्मृत्वाममच
तुर्विधपुरुषार्थसिद्ध्यर्थंकपर्दीश्वरगणेशव्रतमहंकरिष्ये मूलमंत्रेणकरषडंगन्यासंकृत्वापूजामार
भेत् तत्रादौपीठपूजा ॐनमोभगवतेसकलगुणात्मशक्तियुतायानंताययोगपीठायनमः अष्ट
दलकेसरेषुतीव्रायैनमः ज्वालिन्यैनमः नंदायैनमः ॐनंदिन्यैनमः कामरूपिण्यैनमः उग्रायैन
मः ॐतेजोवत्यैनमः ॐसत्यायैनमः ॐमध्येविघ्ननाशिन्यैनमः अथध्यानं एकदंतंमहाकायंलं
बोदरंगजाननं विघ्ननाशकरंदेवंहेरंबंप्रणमाम्यहं इमांपूजांगृहाणेशकपर्दिन्गणनायक आग
च्छागच्छदेवेशसमागच्छामरार्चित विनायकनमस्तुभ्यमुमांगमलसंभव इमांमयाकृतांपूजांगृह्ण
णस्वरसत्तम ॥ सहस्रशीर्षेत्यावाहनं अलंकारसमायुक्तंमुक्तामणिविभूषितं स्वर्णसिंहासनंचा
रुप्रीत्यर्थंप्रतिगृह्यतां पुरुषएवेदमासनं गौरीसूनोनमस्तेस्तुशंकरप्रियकारक भक्त्यापाद्यंमया
दत्तंगृहाणप्रणतप्रिय एतावानितिपाद्यं व्रतमुद्दिश्यविघ्नेशगंधपुष्पादिसंयुतं गृहाणार्घ्यंमया
दत्तंसर्वसिद्धिप्रदायक त्रिपादूर्ध्वेत्यर्घ्यं गणाधिपनमस्तुभ्यंगौरीव्रतगजानन गृहाणाचमनीयंत्वं
सर्वसिद्धिप्रदायक तस्माद्विराडित्याचमनं अनाथनाथसर्वज्ञगीर्वाणपतिपूजित स्नानंपंचामृतं
देवगृहाणगणनायक आप्यायस्व दधिक्राव्णो घृतवती मधुवाता स्वादुपवस्येति पंचामृत
स्नानं गंगाजलसमायुक्तमानीतंकृपयामम स्नानंस्वीकुरुदेवेशकपर्दिगणनायक यत्पुरुषेणेति
स्नानं हरिद्रसहृदयंदेवदेवांगवसनोपमे भक्त्यादत्तंगृहाणेशलंबोदरहरात्मज तंयज्ञमितिवस्त्रं ना
नालंकारसंयुक्तंनानारत्नविभूषितं अनेकदिव्याभरणंप्रीत्यर्थंप्रतिगृह्यतां इत्याभरणं राजतंब्रह्मसू

त्रैवकांचनचोत्तरीयकं भालचंद्रनमस्तुभ्यंगृहाणवरदोभव नमस्ते यज्ञादितियज्ञोपवीतं· गंधंकर्पूरसंयु
क्तंदिव्यंचंदनमुत्तमं विलेपनंसुरश्रेष्ठप्रीत्यर्थंप्रतिगृह्यतां नमस्ते यज्ञात्सर्वेतिमंत्रं· अक्षतान्धवलान्दे·
वसिद्धगंधर्वपूजित भक्त्यादत्तान्गृहाणेमान्सर्वसिद्धिप्रदोभव इत्यक्षताः सुगंधीनिचपुष्पाणिवर·
सिद्धिप्रदायक कपर्दिगणनाथायमेतत्पुष्पंददाम्यहं तस्मादश्वेतिपुष्पं· अथांगपूजा कपर्दिग·
णनाथायनमः पादौपूजयामि गणेशायनमः जानुनीपूजयामि गणनाथायनमः ऊरूपूजयामि
गणक्रीडायनमः कटिंपूजयामि वक्रतुंडायनमः हृदयंपूजयामि लंबोदरायनमः कंठंपूजयामि
गजाननायनमः स्कंधौपूजयामि हेरंबायनमः हस्तौपूजयामि विकटायनमः मुखंपूजामि वि
घ्नराजायनमः नेत्रेपूजयामि धूम्रवर्णायनमः शिरःपूजयामि कपर्दिनेनमः सर्वांगंपूजयामि आ
वरणपूजामारभेत् गां हृदयायनमः गींशिरसेस्वाहा गूंशिखायैवषट् गैंकवचायहुं गौंनेत्रत्रया
यवौषट् गः अस्त्रायफट् इतिप्रथमावरणं १ ब्राह्म्यैनमः माहेश्वर्यैनमः कौमार्यैनमः वैष्णव्यै
नमः वाराह्यै· इंद्राण्यै· चामुंडायै· महालक्ष्म्यैनमः इतिद्वितीयावरणं २ इंद्रायनमः अग्नयेनमः
यमाय· निर्ऋतये· वरुणाय· वायवे· कुबेराय· ईशानाय· अनंताय· ब्रह्मणेनमः इतिचतुर्थावर
णं ४ वज्रायनमः शक्तये· दंडाय· खड्गाय· पाशाय· अंकुशाय· गदायै· त्रिशूलाय· चक्राय·
पद्मायनमः इतिपंचमावरणं ५ दशांगंगुग्गुलंधूपंचंदनागुरुसंयुतं उमासुतनमस्तुभ्यंगृहाण
वरदोभव यत्पुरुषंव्यदधुरितिधूपं· गृहाणमंगलंदेवघृतवर्तिसमन्वितं दीपंज्ञानप्रदंचारुरुद्रप्रि
यनमोस्तुते ब्राह्मणोस्येतिदीपं· अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृ
ह्यतां चंद्रमामनसइतिनैवेद्यं· इदंफलंमयादेवस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनि
जन्मनि इतिफलं· पूगीफलसमायुक्तंनागवल्लीदलैर्युतं चूर्णकर्पूरसंयुक्तंगृहाणगणनायक ना·
भ्याआसीदितितांबूलं· हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफलदमतः शांतिंप्रयच्छ
मे समास्यासन्निति दक्षिणा· गणाधिपनमस्तेस्तुनमस्तेस्तुगजानन लंबोदरनमस्तेस्तुनमस्तेस्त्वी·
प्सितप्रद यज्ञेनयज्ञेतिमंत्रपुष्पांजलिः प्रदक्षिणंत्रदेवेशसर्वकार्येषुसर्वदा कपर्दिगणनाथस्त्व
मीप्सितार्थप्रदायक इतिप्रदक्षिणा नमस्करोमिदेवेशसर्वविघ्नहरोभव शीघ्रंममवरंदेहिपरत्रच
परांगतिं इतिनमस्कारः अथब्रह्मचारिपूजा अकणान्मुष्टिगणितान्तंदुलान्सवराटिकान् विप्रा
यवटवेदद्याद्गंधपुष्पार्चितायच तंदुलावैश्वदेवस्यापाकेनान्नेनशोभनाः कपर्दिगणनाथोसौप्रीय
तांतंदुलैःसदा ततःकथांश्रुत्वाविसर्जयेत् अथकथा कदाचिदुपविष्टश्चपार्वत्यासहशंकरः इति
प्राहप्रियांतांकिंघूतेब्धारतिरस्तिते पणःप्रकल्पनीयोसौपश्चाद्द्यूतंप्रवर्तितां दरोदरमिषाजेतंवांछि
तंप्रत्युवाचसा ममापितस्मिन्सास्त्येवयाचयादीयतेपणः एतच्छ्रुत्वाशिवाप्राहमहादेवउवाचतां तव
किंकिमभीष्टंतद्दास्यामिपरमेश्वरि लोकत्रयंचयाचस्वकिमन्यैर्वचनैर्वृथा उमोवाच पृच्छामिपश्चादेत
न्मेदातव्यमितिनोच्यते यदिज्ञात्वातदानीतविश्वासोनास्तिमेत्वयि वाक्यमेवंविधंश्रुत्वाशर्वःप्रोवाच
तामुमां नविश्वासयितुंकेनशक्यसेकिंपुनर्मया सोलुंठनेनकिंदेविद्यूतेछास्तितवेवचेत् पणःप्र
कल्प्यक्रियतांपणोतिष्ठाम्यहंसदा भावंसंचिंत्यपार्वत्यांपणमाकल्पयत्ततः त्रिशूलंत्रिदशान्सर्वान्
सात्पर्यंचडरोदरे तस्मिन्कर्मणितंजित्वापणमप्यग्रहीच्छिवा एवंडमरुकादीनिनान्ययाप्यजयत्स·
यकः दीनोभूत्वामहादेवोभवानीमब्रवीदिति शार्दूलचर्मतन्मध्येप्रयच्छगिरिजेमम उमोवाच नचै
वंवक्तमुचितंकिंदेवःप्रीतिमानिह दास्यामिसततिकिंएहेसर्वंस्मरसिकिंनहि अविचिंत्यब्रवीषित्वंजग
दीशकृपानिधे इतिश्रुत्वाकृतपणोदेवकोन्योयथामया आद्वादशदिनंदेविनकरिष्यामिभाषणं न

चेत्युक्त्वा महादेवस्तत्क्षणाच्चतिरोदधे क्वस्तत्र गच्छामि किं जीवनमतः परं इति संचिन्त्य सान्वेष्टुमुद्या-
नं प्रत्यपद्यत गिरिजा तत्र वनितावृंदं दृष्ट्वाब्रवीदिदं किमर्थमागताः सर्वाः किमेतत्क्रियतेऽधुना कप-
र्दिगणनाथस्य व्रतं कर्तुमिहागताः पूजैषा तस्य चेदानीमस्माभिः क्रियते तथा किमर्थं तद्व्रतं नार्यो
युष्माभिः क्रियते वने फलमस्त्यथवा नास्ति पार्वती प्राह ता इति पृष्टव्यं किं त्वया देवि नरैर्नारीभिरंबिके
अभीष्टसिद्धिरस्मात्तु लभ्यते भुवनत्रये उमोवाच मत्तः कुपितो गतवान्निष्ठुरपस्तु महेश्वरः तस्य संदर्श-
नायैव तत्करिष्ये व्रतोत्तमं व्रतस्यैतस्य किं दानं विधानं कीदृशं मम सर्वं विचिंत्य मनसा कथयंतः स्त्रियांग-
नाः कालो विधानं दानं च व्रतस्यास्य फलानि च तत्सर्वं सावधानेन वक्ष्यामः शृणु पार्वति स्त्रिय ऊचुः मो-
क्षादिदोषरहिते चतुर्थ्यां भानुवासरे मासे कार्यं व्रतं सम्यग्गणेशार्पितमानसैः तैलतांबूलभोगादी-
न्वर्जयित्वा शिवप्रिये मंदवारे च भुंजीयादेकवारं मितं यथा प्रातःकाले शुचिर्भूत्वा स्नानं कुर्याद्विधान-
तः नद्यां तडागे कूपे वा शुद्धैः शुक्लतिलैः सह संध्यादिकं यथान्यायं सर्वं निर्वर्त्य यत्नतः अर्चनागा-
रमासाद्य गोमयेनोपलिप्य च गोचर्ममात्रं तन्मध्ये कुर्यात्कुंकुमेन मंडलं तन्मध्ये ह्यष्टदलं पद्मं तन्मध्ये ग-
णनायकं पूजयेत्स्वर्णकुसुमैर्हरिद्रामिश्रिताक्षतैः गां गीं गूं गैं गौं गः अंगन्यासं कृत्वा ततः परं मंत्रे-
णानेन कुसुमैर्देवमावाह्य निःक्षिपेत् अथवा गणनाथस्य प्रतिमामथ पूजयेत् ततस्तद्गतचित्तात्मा ध्यानं
कुर्याद्विधानतः एकदंतं महाकायं लंबोदरगजाननं विघ्ननाशकरं देवं हेरंबं प्रणमाम्यहं इमां पूजां
गृहाणेश कपर्दिगणनायक आगच्छेति त्रिरुच्चार्य कुर्यादावाहनादिकं ततस्तत्कालिकैर्मंत्रैर्गंध-
पुष्पाक्षतादिभिः इंद्रादिलोकपालांश्च पूजयेद्देवसन्निधौ लंबोदर नमस्तेस्तु नमस्ते चांबिकासुत ए-
कदंत नमस्तेस्तु नमस्तेस्त्वीप्सितप्रद कपर्दिगणनाथस्य सर्वसंपत्प्रदायिनः पूजाप्रकारः कथितस्त-
वेनाद्य तच्छुचिस्मिते अकणान्मुष्टिगणितान्व्रीहिविध्वंव्रीहितंडुलान् स्वच्छान्यत्नेन संपूज्य चूर्णीकु-
र्यान्महेश्वरि शिवे तच्चूर्णं प्रथमे भानुवारेऽर्धचंद्रवत् कुर्याद्द्वितीयं संपूर्णचंद्रवत्पिष्टकाष्टकैः तृ-
तीये पायसान्नं च दद्यादन्नं चतुर्थके आनीयाष्टौ शाकं सम्यग्देवं संपूज्य भक्तितः कल्पितान्नानि विधिव-
द्विधेयानि यानि च तेषां तेषामष्टमांशं तस्मै सम्यक्समर्पयेत् ततः शुद्धाय वटवे दद्यादेकोवटाटि-
के पुष्पान्वितांस्तंडुलांश्च भुंजीयाद्ग्राससप्तकं यत्कामयंते ये भक्त्या पूजां ते प्राप्नुवंति हि इत्युक्त्वा
भवानीतः स्त्रियो विगतकल्मषाः नासां तद्वचनं श्रुत्वा तदोमाप्यकरोद्व्रतं ततः क्षणाद्धि विश्वेशः प्र-
त्यक्षं समजायत त्रिलोकनाथ देवेश करुणाकर शंकर दीनामनन्यगतिकां भक्तवत्सल पाहि मां
तुष्टश्च शंकरः प्राह किमेतद्धि त्वया कृतं कपर्दिगणनाथस्य माहात्म्यात्किं न सिध्यति उमोवाच व्र-
तस्यैतस्य माहात्म्यं ज्ञातं च भवता स्वयं उद्दिश्यागमनं विष्णोरकरोत्तद्व्रतं शिवः तदा च गरुडारूढः
समागम्यैनमब्रवीत् मदागमनिमित्तं हि किं कृतं शंकर त्वया ममापि ज्ञापनीयं तदित्युक्तो ज्ञा।
पयच्छिवः अथैतदकरोद्विष्णुरुद्दिश्यागमनं विधेः आगतश्च विधिः शीघ्रं ममाज्ञापय माधव प्रयो-
जनं नास्ति विधे त्वदागमनकारणे एकदंतव्रतं त्वेतद्भवत्येव न संशयः इंद्रागमनमुद्दिश्य तदानीं
तेन तत्कृतं आगत्य सहसा प्राह मामाज्ञापय विश्वसृक् हेरंबव्रतमाहात्म्यं दृष्टमेवं कृतं मया
ममापि ज्ञापनीयं तदित्युक्तो विधिनोदितं विक्रमादित्यमुद्दिश्य वज्री तदकरोद्व्रतं आगत्याह मनुष्य-
स्त्वमिंद्रो मत्तः किमीप्सितं कपर्दिहस्तिवदनव्रतमाहात्म्यमीदृशं इति ज्ञातं ममाभीष्टमेतल्लब्धुं त।
दाब्रवीत् विधानं तस्य माहात्म्यं ज्ञापनीयं त्वयेति मे पप्रच्छ विक्रमादित्यं प्राह तस्मै पुरंदरः पुरंदर।
श्रुत्वा ज्ञात्वा तत्सर्वं स्वपुरीं प्रति प्रहृष्टः प्रययौ राजा पराक्रमपरायणः कपर्दीशव्रतं कृत्वा महिष्या
पुरतोऽब्रवीत् जेष्ठामिसकलान्राज्ञः कृत्स्नामेवं महाव्रतं तस्मात्तस्य किं दानमिति सा प्राह विक्रमं

प्रत्युवाचप्रियामकौंदद्यादेकंवराटकं एवंचेत्तत्वकर्तव्यमन्नदेयंत्वयाक्वचित् इत्यादिदोषणादासाक्रुद्धा
व्याधिमवापसा नश्यात्वयंत्वयाद्येतिसर्वराज्यंविनश्यति अकस्माद्वचनंश्रुत्वाकृष्णाश्रममवापसा प
रिचर्यावशात्तस्यास्तस्याःसर्वेमुनीश्वराः निश्चित्ययोगमार्गेणसर्वेतामब्रुवन्सती कपर्दीशव्रताभावा
देवशांतंत्वयेत्सुत कुरुष्वैतद्व्रतंसम्यक्सर्वसिद्धिर्भविष्यति ऋषीणामाज्ञयाकृत्वाकपर्दीशव्रतंमहा
न् भवानीराजमहिषीदिव्यदेहमवापसा एतस्मिन्नंतरेकालेभवान्यासदृशंकरः दृष्टुंययौदृष्टवान्
च्छोभुवनानिचतुर्दश मध्येमार्गेद्विजेंद्रस्यरोदनंभयवर्द्धनं श्रुत्वाब्राह्मणमाहेदंकिमर्थंतवरोदनं
नकिमप्यस्तिमेदेवदारिद्र्येदेवकेवलात् एवंयदिभवेद्विप्रकपर्दीशव्रतंकुरु एतत्कर्तुंव्रतंदेवसाम
र्थ्यंनास्तिमेधुना विक्रमार्कपुरेसर्वंवैश्योदास्यतितत्कुरु कपर्दीशव्रतेनैवमित्रत्वंप्राप्स्यसिध्रुवं
दारिद्र्यमोचनंसम्यग्भविष्यतिनसंशयः गृहंप्रतिसमागच्छद्गृहीत्वातंडुलान्द्विजः वैश्याद्गृहीत्वात
त्सर्वंतदानीमकरोद्व्रतं तस्मिन्नर्कपुरेविप्रस्तन्मंत्रित्वमवाप्तवान् आज्ञापयत्कपर्दीशव्रतंवैश्यस्यता
त्क्षणात् अकरोत्सस्वतांदृष्टौविक्रमःपतिरक्षिति व्रतप्रभावादादित्यउपयेमेविशांसुतां व्रतेनैवविवा
हेनपरांप्रीतिमवापसा एवमंतरितेकालेमृगयार्थंप्रविश्यसः गहनंत्वतृषार्तःसन्ययौमुनिवराश्रमं उ
पचारैःश्रमंनीत्वातेषामकौंमनोरमां रमणीमाश्रमेतस्मिन्दर्शयामासविक्रमं इतिपप्रच्छनृपऋषीन्सर्वा
न्दानवैषाममांगना तवेयंमहिषीत्युक्त्वानयेत्येनांसमर्पयन् समंमहिष्यासपुरींदिव्यनारीनरैर्यु
तां हृष्टःसन्विक्रमादित्यःपुरुषान्प्राहभूपतिः कपर्दीगणनाथस्यव्रतंकुर्वन्तुमयासह अजयद्विक्र
मादित्यःसकलान्शत्रुमंडलान् गणनाथव्रतेनैवपुत्रपौत्रवृतस्त्वसः धनधान्यादिसंपन्नःसुखेनन्य
वसद्भुवि एतद्व्रतंयेकुर्वंतियेकेचनविधानतः चतुरःपुरुषार्थांस्तेनियतंप्राप्नुवंतिहि हयमेधस्य
विघ्नेतुसंजातेसगरःपुरा एतदेवव्रतंकृत्वापुनरश्वंसलब्धवान् इमांकथांपंचवारंप्रथमेभाद्रवास
रे द्वितीयेचतृतीयेचश्रद्धयाशृणुयाद्व्रती एकार्द्धमेतदेकोनाशीतिश्लोकप्रकाशिनी संक्षिप्तेमेऽन्य
याकृत्वागतिंयातियथेप्सितां ॥ इतिस्कांदेकपर्दीविनायकचतुर्थीव्रतं

अथाश्विनशुक्लपंचम्यामुपांगललिताव्रतम् नारदीये आश्विनेशुक्लपंचम्यामुपांगललिताव्रतं
तस्यांस्वर्णमयींमूर्तिंशक्त्यानिर्मायनारद उपचारैःषोडशभिःपूजयेत्तांविधानतः पक्वान्नंफलसं
युक्तंसघृतंदक्षिणान्वितं द्विजवर्यायदातव्यंव्रतसंपूर्तिहेतवे सवाहनाशक्तियुतावरदापूजिताम
या मातर्मामनुगृह्याथगम्यतांनिजमंदिरमिति अत्रदाक्षिणात्यशिष्टाचारएवमानं पूजैवप्रधानमिति
तत्पूजयानिजगृहेपरामृद्धिमवाप्स्यसीतिकथायांदृश्यमाणःफलसंबंधात् फलवत्सन्निधानफलंतदंग।
मितिन्यायेनजागरणपारणादानवटकादिभक्षणादेस्तदंगत्वात् तत्पूजनंमध्याह्नव्यापिन्यांकार्यं
पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनीतिथिरितिमाधवीयेहारीतोक्तेः दिनद्वयेतद्व्याप्तावव्याप्तौवापूर्वा
युग्माग्नियुगभूतानामितिवाक्यात् एतेनजागरणमंगभूतंजागरणंनक्तेचंद्रार्घ्यव्रतेतथा नानाव्र
तेषुसर्वेषुरात्रियोगोविशिष्यते इतिहेमाद्रिलिखितवचनाद्रात्रिव्यापिनीग्राह्येतिकस्यचिदुक्तिरुपेक्षणी
या अंगानुरोधेननिर्णयस्याप्यदृष्टत्वात्तद्वचनंतुजागरणप्रधानकेष्वेवावकाशमिति अथव्रतवि
धिः आचम्य प्राणानायम्य मासपक्षाद्युल्लिख्यपुत्रपौत्रधनवृद्धिविघ्नरोगनिवृत्तिसर्वभोगविजयपु
ष्टादिकामः स्त्रीत्वंवैधव्यसौभाग्यादिकामा उपांगललिताप्रीत्यर्थंयथामिलितोपचारैरुपांगललिता
व्रतेनतत्पूजनमहंकरिष्ये इतिसंकल्प्यपूजांकुर्यात् अथपूजाविधानंचकुर्यादेकाग्रमानसः सौवर्णी
प्रतिमांकृत्वामंत्रैःशक्त्याप्रपूजयेत् ध्यानम् नीलकौशेयवसनांहेमाभांकमलासनां भक्तानांवर
दांनित्यंललितांचिंतयाम्यहं निजासनेस्वपुत्रैश्चसहितेभक्तवत्सले उपांगललितेमातर्देहिमेव्रतक

मणिं हिरण्यवर्णामित्यावाहनं ॥ आगच्छ ललिते देवि नानागणगणार्चिते अनेकशक्तिसंयुक्तमा
सनं परिगृह्यतां नाम्ना आवहेत्यासनं गंगादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतं तोयमेतत्सुखस्पर्शं पाद्या
र्थं प्रतिगृह्यतां अश्वपूर्णामिति पाद्यं निधाने सर्वरत्नानां त्वमनर्घ्यगुणाश्रया त्वया विभक्त्या ललिते गृ
हाणार्घ्यं नमोऽस्तु ते कांसोस्मितामित्यर्घ्यं पाटलोशीरकर्पूरसुरभि स्वादु शीतलं तोयमाचमनीयार्थं
ललिते प्रतिगृह्यतां चंद्रां प्रभासामित्याचमनं पंचामृतं मयानीतं पयो दधि घृतं मधु शर्करामधुसंयुक्तं
स्नानार्थं देवि गृह्यतां पंचमंत्रैः पंचामृतं मंदाकिन्याः समानीतं हेमांभोरुहवासितं स्नानाय ते मया भ
क्त्या गंगांसी क्रियतां जलं आदित्यवर्णेति स्नानं सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे मयोपपा
दिते तुभ्यं वाससी प्रतिगृह्यतां मलयाचलसंभूतं नानागंधरसान्वितं शीतलं बहुलामोदं चंदनं प्रतिगृ
ह्यतां उपैतु मां देवसखेति गंधं अक्षतान् रविंदाक्षि कुंकुमादिभिरंजितान् गृहाण ललिते देवि प्रसी
द परमेश्वरि क्षुत्पिपासामित्यक्षताः मिलत्परिमलामोदं मत्तालिकुलसंकुलं आनंदिनंदनोद्यानपुष्पं
ते ललिते नमः कर्दमेन प्रजेति पुष्पं गंधसंभारसन्नद्धं पृथुवस्तुसमुद्भवं सुरासुरनरानंदि धूपं दे
वि गृहाण मे आपः सृजंत्विति धूपं मार्तंडमंडलाखंडचंद्रबिंबाग्नितेजसं निधानं देवि दीपोऽयं निर्मि
तस्तव भक्तितः आर्द्रां पुष्टिं इति दीपः देवतालयपातालभूतलाधारधान्यजं षोडशाकारसंभारं
नैवेद्यं ललिते नमः आर्द्रां यः करिणीं चंद्रामिति नैवेद्यं स्नानादिकं विधायाद्य यतः शुद्धिरवाप्यते
एतदाचमनीयं मे ललिते देवि ते नमः इत्याचमनं पातालतलसंभूतं वदनांभोजभूषणं नानागुण
समाकीर्णं तांबूलं देवि ते नमः इति तांबूलं हिरण्यगर्भगर्भस्थमिति दक्षिणा अत्र पुष्पांजलिं ते अष्ट
चत्वारिंशन्मितान् दूर्वांकुरान् हस्तेनादाय वर्द्धयेद्देवि संतानमालिकां पश्येयं ललिते दृ
ष्टवीतधामेष्टमनोरथाः इति मंत्रेण समर्पयेत् प्रदक्षिणानमस्कारान् शक्तितश्च समाचरेत् अथवा
यणामादाय वटकोडुंबरादिभिः करुम्यादिकमंत्रेण करंदंकोदादित्यादि आचार्याय निवेदयेत् प
क्वान्नफलसंयुक्तं सघृतं दक्षिणान्वितं द्विजवर्याय दास्यामि व्रतसंपूर्तिहेतवे उपांगललितादेव्या व्र
तसंपूर्तिकारकं वायनं द्विजवर्याय सहिरण्यं ददाम्यहं इति वायनमंत्रः ततः कथां समाकर्ण्य बांध
वांश्च संख्यया स्वयमेव तद्देवान्नं वाग्यतः सहबांधवैः रात्रौ जागरणं कुर्याद्गीतवादित्रमंगलैः
प्रभाते पूजयेद्देवीं ततः कुर्याद्विसर्जनं सवाहना शक्तियुक्ता वरदा पूजिता मया मातर्मामनुगृह्याद्य
यथेष्टं गच्छ मंदिरं इति पूजा अथ कथा कैलासशिखरे रम्ये सुखासीनं षडाननं कथयंतं कथां
दिव्यामिदमूचुर्महर्षयः ऋषय ऊचुः महासेन महादेवनंदनानंतविक्रम आख्यानानि सुपुण्या
नि श्रुतानि त्वत्प्रसादतः कथास्त्वद्वदनाद्देव प्रसन्ना भूरिभूतयः न तृप्तिमधिगच्छामः पायं पायं सु
धामिव शुश्रूषवो वयं देव्या व्रतं तत्कथयस्व नः मनोभिलषितार्थाय सिद्धिर्यस्मिन्कृते भवेत् स्कं
द उवाच साधु पृष्टं महादेव्या माहात्म्यं मुनिपुंगवाः तस्मात्सर्वविधानेन तच्छृणुध्वं जगद्धितं मधु
रायांकिल पुरा विप्रोऽभूद्गौतमाभिधः श्रुतिस्मृतिपुराणज्ञो धनी च बहुबांधवः अनपत्यस्य तस्याथ ज
तौ जरतः सुतौ श्रीपतिर्गोपतिश्चैव नामतो विदितौ तयोः अचिरेणैव कालेन स पंचत्वमगाद्द्विजः तौ
बालौ धनवंतौ तत्साधर्मचारिणी सती विवेश दहनं स्वपतिं पतिना सह अथ तद्बांधवाः सर्वे हा
कष्टमिति चुक्रुशुः निंदंतो दुःखिता भ्रातृसत्क्रियां पारलौकिकीं पितृव्यस्तद्दिने चैव सर्वं चहृतवा
धनं अथ तस्य सपत्नोऽभूद्राजा सत गृहं धनं आक्रोशतोश्च तौ गेहं निजमानीय संपदः नाशिच कै
तेसर्वं तायोर्न किंचिन्न्यवेदयत् ततो मौंजीधरौ बालौ बंधुभिः कथितं वचः यथा च तत्पितृव्यं ते दृष्टिनी
द्रविणं दिनत् सतां बहुचेगतं द्रव्यं बालकेन प्रतारितो निर्गच्छतां मम गृहादित्याह परुषं वचः

तद्दृष्वोभिनिविसौबालौश्रीपतिगोपती वभाषतुर्मिथःकष्टंयिगहोपितृहीनता यावोदेशान्तरंयत्रस्वज
जनोनास्तिकश्चन अनाभाष्यैवसुहृदोजग्मतुर्दिशमुत्तरां भिक्षाचारौवहून्देशान्वनानिसरितोगि
रीन् समतिक्रम्यययतुर्विशालांनामतांपुरीं कासारसीत्तांचक्रान्तेनतोसाससन्निधौशुभं पुंडरीक
वनाकीर्णंरत्नसंख्याविभूषितं संध्याभ्रकपिशंचारुयथातारकितंनभः श्रान्तौपथिगतौवालौ[illegible]
विश्रम्यतत्तटे आचम्यशिशिरंतोयंसस्नतुश्चयथाविधि गताध्वखेदौविश्वम्पुरींप्राविशतां ततःवी
यीचत्वपथयुतांचारुगोपुरमंडितां देवतागाररुचिरांसौधराजिविराजितां नानावीथीरतिक्रम्य
विशावासमवापतुः कस्यचित्त्वथविप्रस्यक्षुत्पिपासार्दितौगृहं ईयतुर्वैश्वदेवान्तेउपविष्टोऽत्रमातृ
रौ स्वामीततोस्यगेहस्यविवेकइतिविश्रुतः आयातौवैश्वदेवान्तेसददर्शातिथीहितौ अनाथस्वा
नयोःशीलंतथाचकुलनामनी ऋषिवत्पूजयामाससस्मरन्धर्मसनातनं अतिथीभोजयामाससद
त्तेसहचात्मना तौब्रह्मचारिणौविप्रौसपर्य्यातांविलोक्यच देशवंधुपरित्यागखेदशून्यौवभूवतुः अ
थापृच्छन्कृपालुस्तौकौयुवांकुतआगतौ किमर्थमल्पवयसौनिर्गतौस्वगृहादिति तद्विवेकस्यवः
चनमाकर्ण्यश्रीपतिस्तदा आनुपूर्व्येणसकलंवृत्तांतममभाषतां पितृहीनौचतौस्तात्वायत्तौवंधुजनेनच
आश्वास्यस्थापयामासस्वगृहेवहुवासरं प्रचक्रमेचशिष्येसहाध्यापयितुंकृतिं वभूवतुश्चतौवालौ
गुरुशुश्रूषणेरतौ गुरोर्गेहेन्यवसतामागताविमलाशरत् फुल्लपद्मविशालाक्षीप्रसन्नेंदुशुभानना
तस्यांसशिष्यमाचार्य्यंचरंतंव्रतमुत्तमं पप्रच्छतुर्भोकिमिदमावाभ्यामपिकथ्यतां उपांगललितादे
व्याव्रतंदेवर्षिपूजितं सर्वकामकरंन्नृणामस्माभिःसमुपास्यते विद्याकामेनकर्तव्यंतथैवधनकाम्य
या सुतार्थिनाचकर्तव्यंव्रतमेतदनुत्तमं विद्याकामौचतौवालौव्रतमाचरतुस्तदा भक्तितोगुरुदत्ता
नौ यथाशक्तियथाविधि तौतत्प्रसादात्सकलशास्त्रवेदाङ्गपारगौ अस्मिन्नब्दायनेभक्त्यादिवाह
थ्यं प्रचक्रतुः श्रीपतिर्गोपतिश्चैवव्रतमेतत्तपोधनाः अचिरेणैवकालेनमाघेमासितयोर्गुरुः स्वांविवा
होचितांकन्यांनाम्नागुणवतीमिति विनीतायव्रतवतेप्रादाच्छ्रीपतयेतदा विचार्य्यवांधवैःसाकंददौप्र
एपद्धवासरे पाणिर्दहेवहुमुदा प्रादाद्दुहितृवत्सलः विवेकोपिमुदंलेभे साधुसंगौविलोक्यतौ अन्या
न्वेद्युनरेतत्तुव्रतंदेव्याः प्रचक्रतुः आजग्मतौनिजंदेशंवांछतौचधनादिकं प्रथयान्येद्युनिकस्मिंश्चिमा
वुपाध्यायमूचतुः स्वामिंस्तुष्यत्प्रसादेनलव्याविद्यातथावसु अनुजानीहिगच्छावोनिजदेशंमित
पुनः इत्याकर्ण्यसमालोक्यशुभसरमादृतः स्वयंप्रापयितुंतातौविप्रोकन्यांचनिर्ययौ अथदेव्याःप्र
सादेनपितृव्यस्यतयोःकिल अन्वेषणमतिर्जाताकुतःश्रीपतिगोपती निर्गतौक्वगतौदेशंवसतःक्व
त्यविंनयत् कश्चित्सनगरंप्रायद्द्विजोवालौगवेषयत् तदेवनगरंप्रापोविवेकाख्योद्विजोत्तमःसशि
ष्यःकन्ययासार्द्धंक्रमन्मार्गंशनैःशनैः तत्रतेषांसमजनिसंगमोमुनिपुंगवाः विदांचकारतौकं
न्यान्मध्यमेवयसिस्थितौ तौमूर्ध्न्याघ्रायपरमांमुदंलेभेस्ततोतदा अश्रुक्लिन्नमुखंदवक्रंप्रेमवद्धदया
गिरा पादानतौगुणवतींविवेकेनप्रणोदितां आशीर्भिर्वर्द्धयित्वास्नेहंपांसमयोजयत् विवेक
ल्लुतदातत्रसंविभाष्यपरस्परं सुतावेतौमयाविप्रपालितौपाठितौतच संप्रापयितुंयातोस्मिभव
तायामसुत्तमं इतिसंभाष्यमाणास्तेभगृहेतेययुस्तदा ज्ञातिभिःसहसंगम्यकृत्वाविद्धिस्तद्विचेष्टितं स्व
पितृव्यगृहेकांश्चिद्दवसित्वादिवसांस्तथा लव्धापितृधनंगेहंसर्वंश्रीपतिगोपती ईयतुस्तदनुज्ञातौ
विवेकःस्वांपुरींययौ श्रीपतिर्गोपतेस्तत्रविवाहमकरोत्तदा तावेकचित्तावेकत्रचक्रतुर्देवतार्पणं
श्रीपतिःश्रद्धयायुक्तःकनीयानवशंकिनः विचार्य्यभार्य्ययासाकंविभक्तश्रीपतेरभूत् सभोगान्वि
विधान्भुंजन्समादीवहुसंपदा तद्देव्याराधनंचक्रेगोपतिःखललंपटः अथस्वल्पेनकालेननष्टंत

स्पर्शनैधने अकिंचनो गतश्रीं तां भार्यया साकं स्थितस्तदा तव भ्रातृगृहे विप्रा भुंजते बहवः सदा गच्छावोऽत्र
दिने कांत तत्र भोक्तुमुभावपि एवं भोजनवेलायामागत्यागत्य तद्गृहं भुंजन्भुंजन्निजगृहं गतौ तावनुवा
सरं कदाचिदागतो यावद्गोपतिर्भार्यया सह उपविष्टेषु विप्रेषु भोक्तुं नाविंददासनं अथात्र राशेरभ्या
शे भोजनाय त्वथान्तरः उपविष्टः श्रीपतेश्च भार्यया स निवारितः अस्माद्दुत्तिष्ठ वै त्वां नमुत्तिष्ठं करिष्य
सि तिष्ठ तिष्ठ त्वां चैव पश्चाद्भुंक्ष्वेति माब्रवीत् गोपतिः कांतया दृष्टस्ततो विमनसावुभौ अभुक्त्वा चैव
निष्क्रांतौ जग्मतुर्निजमंदिरं ततः स्वजायां प्रोवाच निजमार्गं विचिंतयत् आवां वयोः समं वित्तं संवि
भक्तमपि प्रिये दुर्गतोऽहं धनोन्मत्तः श्रूयतामत्र कारणं पुरावाभ्यां गुरुकुले व्रतमाचरितं शुभम् उ
पांगललितादेव्या विद्यादि सकलं ततः प्राप्तं मया तत्सकलं परित्यक्तं प्रमादतः ज्येष्ठ आचरते नित्यं त
स्माद्वृद्धिस्तस्य वर्तते तस्मादहं तदाभोऽस्येपदाद्द्यामि तां शिवां इत्युक्त्वा निर्गतस्तस्माद्गृहाद्दत्तभो
जनः तद्भार्या चिंतयाविष्टा सापि तस्यावनाशिनी भुक्त्वा वत्सभ्रातृगृहे श्रीपतिः पर्यपृच्छत क्व गतो
गोपतिरिति तच्छ्रुत्वा सोऽपि दुःखितः पंचमे वासरे प्राप्ते क्षुत्पिपासार्दितो वने अलब्धदर्शनो देव्या दुःखि
तो बहुशोऽभ्रमत् एवं स पथिकान्मार्गे स देव्याः पदमभ्यगात् तं कृच्छ्रगतमालोक्य भवानी भक्तवत्सला
कृतापराधमपि तमनुजग्राह दैवतदा गतमूर्छः समुत्थाय दिगंतान्प्रविलोकयन् ददर्श दूरतो गोपं
चारयंतं गवां गणं तं दृष्ट्वा किंचिदाश्वस्तो ययौ तस्यांतिकं शनैः अपृच्छत्त्वं भवाञ्जातः कुत्रत्यः कुत आ
गतः कोऽयं देशः कः भूपालः किं पुरं नाम तद्वद निशम्य वचनं तस्य वक्तुं गोपः प्रचक्रमे गोप उवाच उ
पांगं नाम नगरमुपांगो नाम भूपतिः तत्रस्थोऽहं समायातः पुरस्तत्र व्रजाम्यहं उपांगललितादेव्या वि
द्यते तत्र मंदिरं इत्याकर्ण्य वचस्तस्य विप्रः समुदितोऽभवत् स गोपसहितः सायं विवरं प्रविवेश ह दू
राद्ददर्श भवनं परमध्ये तपोधनाः उपांगललितादेव्याः स्फटिकं गगनंलिहं सौवर्णेन विचित्रेण क
लशेनोपशोभितं यथोदयाचलः शैलो दधानो भानुमंडलं त्वरितो गोपमामंत्र्य प्रासादं स ययौ मु
दा प्रणम्य च बहुमोदद्बद्धांजलिपुटस्तदा उपांगललितां देवीमथ स्तोतुं प्रचक्रमे गोपतिरुवाच
नमस्ते भुवनाराध्ये भक्तानां हितकारिणि जगद्भीतिविनाशिन्यै सर्वमंगलमूर्तये हत्वा निशुंभम
हिषप्रभृतीन्सुरारीनिंद्रादयो निजपदेषु यया भिषिक्ताः लोकत्रयावनगृहीतमहावतारे मातः प्रसी
द सततं कुरु मेऽनुकंपां त्वामुक्तये मुनिजनाः कुटिलीकृतांगीं गौरीं निजे वपुषि कुंडलिनीं भजंति
मुक्त्यै च देवमनुजाः कनकारविंदवृंदासनामविरतं कमला स्तुवंति सापराधोऽस्मि शरणं प्राप्तस्त्वां ।
जगदंबिके इदानीमनुकंप्योऽहं यद्यहं सिकृपयतत् इति स्तुत्वा वरारोहां प्रणिपत्य मुहुर्मुहुः कृ
तसंध्याविधिस्तत्र शेते स्म कृतभोजनः स्वप्ने मूर्तिमती देवी द्विजमेनं समाविशत् गोपते वत्स गच्छ
सि गच्छोपांगमहीपतिं मत्पूजनकरंडस्य प्रार्थयस्व पिधानकं तत्पूजयन्निजगृहे परामृद्धिमवा
प्स्यसि स्वप्न इत्यादेशः प्रभाते गोपतिस्तदा राजदर्शनवेलायां नृपद्वारं समभ्यगात् स विप्रो
ऽन्नृपसभां द्वारेण निवेदितः राज्ञा संमानितस्तत्र निविष्ट आसने शुभे पृष्टागमनहेतुश्च यथा चेन्न
द्विजपुंगवं देव्यर्चनकरंडस्य पिधानं देहि भूपते इत्यर्थितो सो विप्रेण ज्ञातादेशो नृपो ददौ पिधानकं
नमस्कृत्य तस्मै चाभ्यर्चनादिकं आशीर्भिरभिनंद्याथ तमामंत्र्य च भूपतिं उपांगललितादेव्याः प्र
सादं पुनरागतः प्रणिपत्यांबिकां विप्रस्त्वरितो निर्ययौ पुरात् पूजयित्वा पिधानं तद्धृदये पारणं
ततः पूज्यमाराध्यमानस्तु समसमृद्धोऽभवत्पुनः सोऽपि मंत्रं स्मारे भेदि जाग्रो वद्वासरं अथैतस्या
भवत्यालिलिता नाम सुंदरी सा पिधानकमादाय विहर्तुं याति सर्वदा प्रसन्नमात्रि धृत्वा च पित्
अन्वारिता कदाचित्स्ववयस्याभिः स्नातुं गंगाजले शुभे
कौ दर्शनो येनीलमानं कलेवरं पिधा

नहस्नात्वासासिंचदत्यंतांजलिभिस्तदा ससर्पदष्टउत्तस्थौततोदेव्याःप्रसादतः साविप्रांतद्विजंदृ।
ष्ट्वामनसाचिंतयत्यति जुहावाभ्यवहारायजनकस्यनिवेशने मार्गेचपरिपप्रच्छकुलंशीलंचत
स्यसा सोपिसर्वंसमाचख्यौगुणाशीतिनामतः ललितामंत्रयामासगुणराशिमितिद्विजं परिदि
ष्टेशुचात्रेप्रपित्रवेश्मनिमेद्विज गृहीत्वायोग्यनोभूत्वाभार्यार्थेमांत्वमर्पय मयानुमोदितस्तातःस
मातभ्यंप्रदास्यति यथोक्तोगुणराशिस्तत्तथासर्वंचकारह गोपतिर्भार्ययाप्रात्रासमालोच्यस्ववां
धवैः परीक्षितायविप्रत्वेविद्यायांकुलशीलयोः प्रतिजज्ञेततःकन्यांललितांगुणशालिने शुभेमु
हूर्तेचतिथौविवाहंकृतवान्प्रभुः वरायप्रात्सलोभ्यप्रदत्तेवहुधनंतदा विदधेचतयोर्गेहंनातिदूरेत्स्व
वेश्मनः तत्रोषतुःसानुरागौमिथस्तौदंपतीचिरं पिधानकंतयानीतंनिजंललितयागृहं शनैःर·
थयनंसर्वंगोपतेरगमद्गृहात् गुणराशिर्धनीजातोमहादेव्याःप्रसादतः करंडस्यपिधानंतुजनन्या
वहुवासरं याचितापिनवेशादात्ललिताप्रजितंगृहे अथसागोपतेर्जायात्तसेवानचेनाकृते इत्थं
विचिंत्यचायाताजामातरमयाचत समिधार्थंवनेयातः स्वयंतद्गेहमाययौ शोचंतीकिलतांकन्यांस·
तद्देव्याःप्रसादतः उत्थायविपिनादेत्यश्रांतःशेतेस्वकेगृहे पादसंवाहनंतस्यकुरुतेललितानच
नेदृष्ट्वादुःखिताभूमौप्रणिपत्यपुनःपुनः लज्जिताकृच्छ्रतःपृष्टानिजमाहसपातकं गुणराशि
रदात्तस्याःप्रायश्चित्तंतदावहु स्वात्मानेवहुकालेनपूतंकृच्छ्रैश्चकारह श्रीपतेस्त्वचलालक्ष्मीसमा
लोक्यतपोधनाः गोपतिस्तमथापृच्छज्ज्ञातस्त्ववर्तसेकथं किमाचरसिकल्याणितपनः धीरया।
यिनी इतितस्यवचःश्रुत्वाश्रीपतिर्विस्मितःपुनः अस्माभिस्तद्व्रतंदेव्यायत्कृतंगुरुमंदिरे सो
पिभक्त्यापुनश्चक्रेव्रतंभ्रात्रोपदर्शितं लेभेसपरमामृद्धिंपुत्रांश्चमुदितोभवत् उपांगललितादे·
व्याःप्रसादेनाभवत्सुखी एवमेतत्पुराहृत्तंमाहात्म्यंकथितंमया कृतमन्यैश्चवहुभिस्तेपिलब्ध
मनोरथाः विधानंतस्यवक्ष्यामितच्छृणुध्वंतपोधनाः शुक्लपक्षेतुपंचम्यामिषेमासिचरेद्व्रतं गा
जिंतंसप्ययोस्याज्यंदिनहद्विच्चयेत्तया निर्वर्त्यावश्यकंकर्मशुचीरागविवर्जितः चत्वारिंशत्तया·
शौचकल्पितानिविधानतः दंतकाष्ठमुपादायतडागंवानदींव्रजेत् आयुर्वलंयशोवर्चःप्रजाःप·
शुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते दंतधावनपूर्वाणिमज्जनानिसमाचरेत् ततो
यथाविधिस्नात्वाशुक्लवासागृहंव्रजेत् उपचारैःषोडशभिर्मंत्रैःसमाहितः कुर्यात्पूजांप्रयत्नेन
दूर्वाभिश्चविशेषतः शुचौदेशेमंडपंचकृत्वातीवमनोहरं सौवर्णीप्रतिमांशक्त्याकल्पयेत्तत्रपूर्व
कं द्विजायवायनंदद्याद्विंशमावटकादिभिः ततःकथांसमाकर्ण्यवायनात्तस्यसंख्यया स्वयमद्या
त्देवान्नंवाग्यतःसहवंधुभिः रात्रौजागरणंकुर्याद्गीतनृत्यादिमंगलैः प्रभातेपूजयेद्देवींततःकुर्या
द्विसर्जनं सवाहनाशक्तियुतावरदापूजितामया मातर्मामनुगृह्याथयाहित्वंनिजमंदिरं तामर्चांगु
रवेदद्यात्रिशिवाप्यादिसर्जनं व्रतमेवंतुयःकुर्यात्पुत्रवान्धनवान्भवेत् विद्यावान्रोगनिर्मुक्तःस्त
वीगोमांश्चजायते अवैधव्यंचलभतेस्त्रीकन्यावरमुत्तमं विजयःपुष्टिमारोग्यंयच्चान्यदपिवांछितं
न्येतद्व्रतमाहात्म्यंसेतिहासंमहर्षयः शृण्वन्नपिनरोभक्त्यासुखमाप्नोतिनिश्चितं ॥

इतिस्कांदेउपांगललितापंचमीव्रतं अथास्यप्रयोगोव्रतोद्यापनेकोमुख्यो

प्रातर्दंतधावनपूर्वकं नद्यादौस्नात्वाशुक्लवासःपरिधाय मंडपादिकंविधायतिथ्यादिसंकीर्त्य
त्मनः पुत्रपौत्रविद्यारोग्यसुखगोधनविजयपुष्ट्यादिकामनया स्त्रीत्ववैधव्यसौभाग्यादिकामनया
उपांगललिताप्रीत्यर्थंमहावर्षाचरितोपांगललितापंचमीव्रतोद्यापनंकरिष्ये आचार्यंकृत्वा एक
लिंगोभवेत्कलशोपरिसौवर्णीललिताप्रतिमांपूजयेत् पौराणिकैर्मंत्रैः श्रीसूक्तेनवध्यानं नी।

लकौशेयवसनां हेमाभां कमलासनां भक्तानां वरदां नित्यं ललितां चिंतयाम्यहं पूर्वोक्तपौराणिकश्रीसू
क्तमंत्रैः षोडशपूजांतं विधाय अंगपूजां च विधाय धूपदीपादिकं कृत्वा पुष्पांजल्यंते अष्टचत्वारिंशन्म
दिमितान् दूर्वांकुरान्हस्तेनादायानेन मंत्रेण समर्पयेत् वंशप्ररोहास्तत समस्ताद्धरितालिका यथे
यं ललिते मातस्तथा मेस्तु मनोरथाः इति दूर्वामंत्रः वंशप्ररोहा दूर्वेयं यथेयमस्तालिका ललि
ते त्वत्प्रसादेन तथा मेस्तु मनोरथाः इति मंत्रेण समर्पयेत् एवमेवाष्टचत्वारिंशन्वारं तर्पयेत् ततः
प्रदक्षिणानमस्कारान्कुर्यात् कथाश्रवणादिना रात्रौ जागरणं कृत्वा प्रातः स्नात्वा नित्यकर्म निर्वर्त्य दे
वीं पुनः संपूज्य अष्टौ वटकान्समर्प्य अग्निं प्रतिष्ठाप्य अन्वादध्यात् तत्र प्रधानं ललितां गौरीमिमामे
ति मंत्रेण अष्टोत्तरशतदूर्वात्रिकाहुतिभिः नमो देव्या इति मंत्रेणाष्टोत्तरशताहुतीस्तिलसर्पिःपंचखाद्य
युताज्याहुतिभिः ब्रह्मादिदेवताभ्य एकैकयाहुत्या पक्षे सर्वं होमं समाप्य अष्टौ ब्राह्मणान्वस्त्रादिभिः सं
पूज्य तेभ्यः पक्वान्नपूरितान्दक्षिणासहितान् अष्टौ कलशान्दत्वा ततश्चाचार्यं वस्त्रालंकरणादिभिः सं
पूज्य विंशतिवटकसहितं वायनं दद्यात् मंत्रः पक्वान्नफलसंयुक्तं सघृतं दक्षिणान्वितं उपांगललि
ताप्रीत्यै ब्राह्मणाय ददाम्यहं सवाहना शक्तियुता वरदा पूजिता मया मातर्मामनुगृह्याथ गम्यतां निज
मंदिरं एवं विसृज्य सोपस्करं पीठं गां वा वायनं दत्वा ब्राह्मणान्सदन्नेन भोजयित्वा आशिषो गृहीत्वा स्वयं
विंशतिवटकान्भुंजीत ॥ इति ललितापंचमीव्रतोद्यापनम् ॥

अथास्यामेव शांतिपंचमीव्रतम् तत्र शचीसहितान्कुशमयान्नागान् घृतसहितैस्तिलैर्दुग्धेन च
स्नापयित्वा संपूज्य क्षीरसिक्तगोधूमान्नं नैवेद्यं दद्यात् तदुक्तं हेमाद्रौ भविष्योत्तरे सुमंतुरुवाच त
था चाश्वयुजे मासि पंचम्यां कुरुनंदन कृत्वा कुशमयान्नागानिंद्राण्या सह पूजयेत् अनंतं वासुकिं शं
खं पद्मं कंबलमेव च तथा कर्कोटकं नागं नागमश्वतरं तथा धृतराष्ट्रं शंखपालं कालियं तक्षकं
तथा शची द्विवाहुः संतानमालाहस्ता गजस्थिता घृतोदकाभ्यां पयसा स्नापयित्वा विशांपते गो
धूमैः पयसा सिक्तैर्भक्ष्यैश्च विविधैस्तथा ध्यात्वा देवीं विधिवन्नागान्कुर्वीत समाहितः पूजयेत्कुरु
शार्दूल तस्य शेषादयो नृप नागाः प्रीता भवंतीह शांतिमाप्नोति वै विभो सशांतिलोकमासाद्य मोद
ते शाश्वतीः समाः अत्रायं कथ्यते मंत्रः सदा विघ्ननिषेधकः ओंकुरुकुले हुंफट् स्वाहा ॥ इति शां
तिपंचमीव्रतं ॥ अथाश्विनशुक्लपक्षे मूलनक्षत्रे सरस्वतीस्थापना कार्या निर्णयामृते दे
वीपुराणे मूलेषु स्थापनं देव्याः पूर्वाषाढासु पूजनम् उत्तरासु बलिं दद्याच्छ्रवणेन विसर्जयेदित्या
दि नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन पुस्तके स्थापिता देवी विद्याकामो द्विजोत्तम इति नवरा
त्रेषु प्रपंचितं आश्विनशुक्लषष्ठ्यां देवीनिमंत्रणं नवरात्रप्रकरणोक्तेयं कात्यायनीपूजांतं ना
रदीये अथैषशुक्लषष्ठ्यां तु पूज्या कात्यायनी द्विज गंधाद्यैर्मंगलैर्द्रव्यैर्नैवेद्यैर्विविधैस्तथा ततः क्षमा
प्य देवेशीं प्रणिपत्य विसर्जयेत् पूज्यात्र मेकती मूर्तिर्यद्वा द्विज सती मुदा वस्त्रालंकरणैर्भक्ष्यैः कात्या
यन्याः प्रतुष्टये कन्यावरं प्राप्नुयाच्च वांछितं लभते नरः कात्यायनीप्रसादो हि नात्र कार्या विचारणा
अत्र षष्ठ्यां बिल्वशाखायां देव्या बोधनमुक्तं नवरात्रप्रकरणे तत्रादौ बिल्ववृक्षनिमंत्रणादिकृत्य
मपि नवरात्रेषु प्रपंचितं आश्विनशुक्लसप्तम्यां शुभसप्तमीव्रतं नारदीये आश्विने शुक्लपक्षे तु सप्त
मी शुभसप्तमी तस्यां कृतस्नानपूजान्वाचयित्वा द्विजोत्तमान् आरभ्य कपिलां गां च संपूज्य येद्यथाविधि
ततः त्वामहं दद्मि कल्याणि प्रीयतां वर्द्धयस्व मां पालयन्तं जगत्कृत्स्नं यतोसि ब्रह्मसंभवा इत्युक्त्वा वे
दविदे दत्वा च वरदक्षिणां नमस्कृत्य विसृज्यैनां त्याशयेद्गव्यकं व्रतं चेत्यं विधायात्र स्थो भूते च द्वि
जोत्तमान् भोजयित्वा यवाद्यन्नं यदन्नमवशेषितं कृत्वा येन दत्तं विप्रसभाव्य श्रद्धयान्वितः देवदेव

प्रसादेन भुक्तिमुक्तिमवाप्नुयात् अत्र विशेषो हेमाद्रौ पाद्मे शुक्लायामाश्विने मासि कृतस्नानजपः शुचिः वा
चयित्वा ततो विप्रानारभेच्छुभसप्तमीं ताम्रकपिलां गां गंधादिभिः संपूज्य प्रार्थयेत् नमामि सूर्यसंभूता
मशेषभुवनात्मिकां त्वामहं सर्वकल्याणशरीरां सर्वसिद्धये इति ततस्ताम्रपात्रे वस्त्रवेष्टितं सौवर्णं वृ
षभं तिलप्रस्थोपरि संस्थाप्य घृतपायसादियुतं अर्यमा प्रीयतामित्युक्त्वा ब्राह्मणाय दद्यात् स्वयं पंचगव्यं प्रा
शयित्वा द्वितीयेऽह्नि ब्राह्मणान् संभोज्य स्वयमपि भुंजीत एवं सप्तवर्षपर्यंतं व्रतं कृत्वा तदंते रुद्रदंडान्वि
तं शयनादि दद्यात् उद्यापने विशेषः शेषं सामान्योद्यापनवदिति शुभसप्तमीव्रतं अस्यामेव सप्तम्यां दे
वीत्रिरात्रव्रतमुक्तं हेमाद्रौ प्रतिपदादितिथिषूपवासादिकरणासामर्थ्ये सप्तम्यादिदिनत्रये कुर्यात् त
दाह धौम्यः आश्विने मासि शुक्ले तु कर्तव्यं नवरात्रकं प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् त्रिरात्रं
वापि कर्तव्यं सप्तम्यादि यथाक्रममिति अथवा नवरात्रं च सप्त पंच त्रिकं दिवा एकभक्तेन नक्तेन अयाचि
तेन उपोषणेन च यथाक्रमं कुर्यात् द्विवेति शब्देनैकरात्रमप्युक्तं तथा च गोविंदार्णवे देवीपुराणे
नवरात्रव्रते शक्तस्त्रिरात्रं चैकरात्रकं व्रतं चरति यो भक्त्या तस्मै दास्यामि वांछितमिति तत्रापि सप्तम्याः
पूर्वोक्तो निर्णयः अत्र योगपद्ये तंत्रेणोपवासः तिथिद्वयनिमित्तं पूजादिकं तिथिभेदेन कर्तव्यं आश्विन
शुक्लाष्टमी महाष्टमी अत्र कृत्यं नारदीये आश्विने शुक्लपक्षे तु प्रोक्ता विप्र महाष्टमी तत्र दुर्गार्चनं प्रोक्तं स
र्वैरप्युपचारकैः उपवासं चैकभक्तं महाष्टम्यां विधाय तु सर्वतो विभवं प्राप्य मोदते देववच्चिरं इयमेव मूलन
क्षत्रे नवमीयुता चेन्महानवमी प्रोच्यते अश्वयुक्छुक्लपक्षे या अष्टमी मूलसंयुता सा महानवमी प्रोक्ता त्रैलो
क्येऽपि सा तु दुर्लभा इयं च शुक्लपक्षस्थत्वादुपवासादौ परयुता ग्राह्येत्युक्तं शुक्लपक्षेऽष्टमी चेति व्रलैवैवर्तात्
वस्तु पूर्वयोरिति पुराणवाक्याच्च षष्ठ्येकादश्यमावास्येति पूर्वानिषेधाच्च तथा नाष्टमी सप्तमीयुक्ता सप्तमी
नाष्टमीयुता नवम्या सह कार्या स्यादष्टमी सर्वदा बुधैः अष्टमी नवमीयुग्मे महोत्साहे महोत्सवे इति उ
मोत्सवे प्रतिपद्याहरत्खड्गं द्वितीयायां धृतं धनुः तृतीयायां करीशं च चतुर्थ्यां चर्म निर्मलं पंचम्यामादद
त्शूलं षष्ठ्यां च परशुं तथा गदां च बिभ्रत्सप्तम्यामष्टम्यां शुक्तिमुत्तमां नवमी च सदा देव्या मूर्तिर्दैत्यविना
शिनी अतएव हि पूज्या स्यादष्टमी नवमीयुतेति पद्मपुराणेऽपि अष्टमी नवमीविद्धा नवम्या चाष्टमीयु
ता अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिरिति सप्तमीयुक्ता तु सति संभवे सर्वथा वर्जनीया तत्र महादो
षश्रवणात् पुत्रान्हंति पशून्हंति हंति राष्ट्रं सराजकं हंति जातानजातांश्च सप्तमीसंयुताष्टमी तस्मात्स
र्वप्रयत्नेन सप्तमीवेधसंयुता वर्जनीयाष्टमी चाथ भुवो राज्यमभीप्सुभिरिति मदनरत्ने स्मृतिसमुच्चये
प्रारब्धमहाष्टमी पूज्या नवमीसंयुता सदा सप्तमीसंयुता नित्यं शोकसंतापकारिणी तथा जंभेन सप्तमीयु
क्ता पूजिता तु महाष्टमी इंद्रेण निहतो जंभस्तदा दानवपुंगवः तस्मात्सर्वप्रयत्नेन सप्तमीमिश्रिताष्टमी
वर्जनीया हि सततं मनुजैः शुभकांक्षिभिः सप्तमीशल्यसंविद्धां मोहाद्दत्त्वा नतोऽपि वा महाष्टमीं प्रकुर्वाणो
नरकं प्रतिपद्यते सप्तमीकलया यत्र परतश्चाष्टमी भवेत् तेन शल्यमिदं प्रोक्तं पुत्रपौत्रधनक्षयकृदिति निर्ण
यामृते भोजराजीये भीमपराक्रमेऽपि न दिवा न निशापि च विद्धिहता न च सप्तमिशल्यलवोपहता यदि
वाष्टमिशेषयुता नवमी विबुधैरपि पुण्यतमा कथितेति निर्णयसिंधावपि घटिकामात्राप्यौदयिकी ग्रा
ह्येत्युक्तं गौडा अप्येवं व्रतोपवासनियमे घटिकैकापि या भवेदिति देवलोक्तेः अष्टमी नवमीयुक्ता नवमी
चाष्टमीयुतेति पाद्मवचनाच्च रूपनारायणधृतदेवीपुराणेऽपि सप्तमीवेधसंयुक्ता यैः कृता तु महाष्टमी
पुत्रदारधनैर्हीना भ्रमंतीह पिशाचवत् अत्र वेधो न त्रिमुहूर्तात्मकः किंतु कलामात्रात्मकोऽपि तथा सप्त
मीशल्यसंविद्धा वर्जनीया सदाष्टमी स्तोकापि सा तिथिः पुण्या यस्यां सूर्योदयो भवेदिति इयमष्टमी नवम्या
भौमवारेण च युक्तातिप्रशस्ता तदुक्तं अष्टम्यां तु दिने सूर्ये दिनांते नवमी भवेत् कुजवारो भवेत्तत्र पूज

नीयाश्रयत्वात्तस्याइति इयं मूलनक्षत्रेणपूर्वाषाढानक्षत्रेणवायुक्तामहानवमीत्युच्यते तदुक्तं आश्वयुक्शु
क्लपक्षेतुयाष्टमीमूलसंयुता पूर्वाषाढयावापिनक्षत्रद्वययुताथवा सामहानवमीनाम त्रैलोक्येपिसुदु
र्लभेति हेमाद्रौस्कांदात् निर्णयामृतेभविष्ये कन्यागतेसवितरिशुक्लपक्षेष्टमीतथा मूलनक्षत्रसंयु
क्तासामहानवमीस्मृता कालतत्वविवेचनेदेवीपुराणे प्रावृट्कालेविशेषेणआश्विनेत्वष्टमीषुच म
हाशब्दोनवम्यांचलोकेख्यातिंगमिष्यति मूलनक्षत्रयुक्तापिसप्तमीलेशसहितादुष्टैव तदुक्तंदु
र्गोत्सवे मूलेनापिहिसंयुक्तासदात्याज्याष्टमीबुधैः लेशमात्रेणसप्तम्याअपिस्याद्यदिदूषितेति तथा
मूला पूर्वाषाढयोरेवपूजायशस्ता उत्तराषाढायांतुनिषिद्धा तदुक्तंनिर्णयामृते नृपनारायणीये
मूलेनपूजयेद्देवींतथासलिलदैवतः वैश्वदेवेतुनक्षत्रेपूजितादुःखदाभवेत् उत्तराषाढानिषेधस्तु
सतिसंभवेज्ञेयः नसर्वथा तदुक्तं दुर्गोत्सवेमूलाभावेतुकर्तव्याअष्टमीतिथिसंयुता विश्वयुक्तापिक
र्तव्याअष्टमीनवमीयुतेति अत्रपूर्वोक्तविशेषवचनैर्गौरीतृतीयावत्कर्मकालव्यापिन्याःस्वबाधित्वानव
मीयुतायामेवरात्रावसत्यामष्टम्यानवमीपूजायासहतंत्रेणाष्टमीपूजोचिता अतएवकामरूपीया
दिनिबंधेषुवचनं अष्टम्याःशेषदंडश्चनवम्याःपूर्वएवच तत्रयाक्रियतेपूजाविज्ञेयासामहाफलेति
अष्टमीनवमीसंधौतृतीयावत्तुकथ्यते तत्रपूज्याभवेद्दुर्गायोगिनीगणसंयुतेति कालिकापुरा
णोक्ततृतीयासंधिपूजाप्यष्टमीनवमीपूजासंतंत्रेणैवसिध्यति उपोषितोद्वितीयेह्निपूजयेत्तुनरेवता
मित्यष्टम्युपवासपरदिनविहितात्नवमीपूजाशात्तवर्तमानायांनवम्यांकर्तृशक्यैव विसर्जनात्पूर्व
मितितदनुरोधेनापिसप्तमीयुतामष्टम्यामुपवासादिमदनरत्ने यत्तु महाष्टम्याश्विनेमासिशुक्लाक
ल्याणकारिणी सप्तम्यापियुताकार्यामूलेनतुविशेषतः तथा अहंभद्राचभद्राहमावयोर्नांतरंक्व
चित् सर्वसिद्धिप्रदास्मिभद्रायामर्चितान्वहं भद्रायांभद्रकाल्याश्चमध्येस्यादर्चनक्रिया तस्माद्वै
सप्तमीविद्धाकार्यादुर्गाष्टमीबुधैरित्यादीनिपूर्वविद्धाविधायकानिपरदिनेअष्टम्यभावविषयाणिपूर्वो
दाहृतवचनविरोधात् यत्तुनिर्णयामृते महाष्टम्यांभगवतीभद्रायामपिपूजिता ददातिचायुरारोग्यं
यशोभद्रास्वरूपिणीतिवचनं अत्रभद्राशब्देनसप्तमीवचनः यानितु सप्तम्यामुदितेसूर्येपरतश्चा
ष्टमीभवेत् तत्रदुर्गोत्सवंकुर्यान्नकुर्यादपरेहनि तथा यदाष्टमीतुसंप्राप्यअस्तंयातिदिवाकरः
तत्रदुर्गोत्सवंकुर्यादपरेहनिवर्जयेत् दुर्भिक्षंतत्रजानीयान्नवम्यांयत्रपूज्यते इत्यादीनि परदिने
ष्टमीलाभेपिसप्तमीविद्धाविधायकानितानिसूर्योदयकालेनवम्यभावविषयाणि तदुक्तं स्मृतिसं
ग्रहे यदासूर्योदयेनस्यान्नवमीचापरेहनि तदाष्टमींप्रकुर्वीतसप्तम्यासहितांनृपेति दुर्गोत्सवेपि
उत्तरास्तिथयोयत्रक्षयंयांतिनराधिप पूर्वाष्टमींतदाकुर्यादन्यथानशुभंभवेदिति निर्णयामृते है
माद्रौतु सप्तम्यामुदितेसूर्येइत्यादिवचनमाश्विनकृष्णाष्टमीविषयं कृष्णपक्षेष्टमीचेत्पूर्वविद्धा।
याः कृष्णपक्षलवशाशत्वात् कृष्णाष्टम्यांपूजनंचकृष्णपक्षेनवम्यांक्रियमाणादेवीप्रबोधनांगं कन्या
यांकृष्णपक्षेचबोधयित्वाष्टमीदिने नवम्यांबोधयेद्देवींगीतवादित्रनिःस्वनैरितिदेवीपुराणात् म
हाष्टमीपूर्वेद्युः पूर्वाह्णव्यापिनीपूर्वान्यथापरैवेति निर्णयदीपमतमिति निर्णयसिंधौ अत्रकल्प
मुक्तं कन्यासंस्थेरवावीश शुक्लाष्टम्यांप्रपूजयेत् सोपवासोनिशार्द्धेतुमहाविभवविस्तरैः देवीपुरा
णे कन्यासंस्थेरवौवीरशुक्लाष्टम्यांप्रपूजयेत् द्रोणपुष्पैश्चबिल्वैश्चजातिपुन्नागचंपकैरिति अत्र
विशेषउक्तोमदनरत्नेविष्णुधर्मोत्तरे आश्विनेशुक्लपक्षस्यअष्टम्यांप्रयतःशुचिः तत्रैवायुधवर्माद्यं
ध्वजंवस्त्रंचपूजयेत् राजलिंगानिसर्वाणितथाशस्त्राणिपूजयेत् रात्रौजागरणंकुर्यात्तत्रैववसुधाधि
पः उपोषितोद्वितीयेह्निपूजयेत्तुनरेवतां आयुधायंचसकलंपूजयेद्वसुधाधिपः विस्तरेणाष्टमीदि

ऽनवरात्रप्रकरणएवोक्तमतोनेहप्रपंच्यते इत्याश्विनशुक्लाष्टमीनिर्णयः

आश्विनशुक्लनवम्यामपिमहानवमीविधानंनारदीये

आश्विनेशुक्लनवमीमहापूर्वाप्रकीर्तिता अपराह्णेशमीपूजाकार्यास्यांप्रागदिशिद्विज ततोनिशायां
आप्यमेवरूपंधनुरिषून्गदां शूलंशक्तिंचपरशुंक्षुरिकांचर्मखेटकं छत्रंध्वजंगजंचाश्वंगोवृषंपुस्तकंत
लं दंडपाशंचक्रंशंखोगंधाद्यैरुपचारकैः संपूज्यमहिषंतत्रभद्रकाल्यैसमालभेत् एवंबलिविधाया
यभुक्तापक्वान्नमेवच द्विजेभ्योदक्षिणांदत्वाव्रतंतत्रसमापयेत् एवंयःपूजयेद्दुर्गांनृणांदुर्गतिनाशि
नीं इहभुक्त्वावरान्भोगानंतेस्वर्गतिमाप्नुयात् ॥ इयंदुर्गाव्रतपूजादौपूर्वाग्राह्या युग्मवाक्यात् भविष्योत्त
रेपि अश्वयुक्शुक्लपक्षेतुअष्टमीमूलसंयुता सामहानवमीनामत्रैलोक्येपिसुदुर्लभेति कन्यागतेसवित
रिशुक्लपक्षेष्टमीयुता मूलनक्षत्रसंयुक्तासामहानवमीस्मृतेति अत्रमूलग्रहणंमूलादिनक्षत्रत्रयोपलक्ष
णं तदुक्तंलिंगपुराणे दुर्गापूजास्तुनवमीमूलाद्यृक्षत्रयान्विता महतीकीर्तितातस्यांदुर्गामहिषवाहिनी
चंडिकासुप्रहारैस्तुपूजयेद्राज्यवृद्धयइति अस्यांपूजाहोमादिप्राग्वत्कृत्वा बलिदानंकार्यं प्रभूतबलि
दानंचनवम्यांविधिवच्चरेदिति कालिकापुराणात् यदातुनवम्यष्टमीविद्धाभूत्वाद्वितीयेदिनेपिकियती
भवति तदानवमीप्रयुक्तस्यपूजादेःपूर्वदिनेनुष्ठापितबलिदानमात्रंद्वितीयदिनेकर्तव्यं अष्टम्यास्तु
दितेसूर्येदिनांतेनवमीभवेत् प्रभातेबलिदानेतुकियन्मात्रापिलभ्यते नवम्यांतत्रसंपूज्यादुर्गांदु
र्गतिनाशिनीतिवचनात् मदनरत्नेपि बल्यादौपराकार्याउपवासेतुपूर्वैवेति प्रतापमार्तंडेपि
द्वितीयेदिनेनवम्याअलाभेतुपूर्वेद्युरेवनवमीमध्येकार्यं दशम्यांबलिदानंतुदीयतेयत्रमानवैः त
द्राष्ट्रंनाशमायातिमरकोपद्रवैःस्फुटमिति भविष्येनवमीप्रयुक्तस्यबलिदानस्यदशम्यांकरणेदो
षश्रवणात् नंदायांज्वलतेवह्निःपूर्णायांपशुघातनं भद्रायांगोकुलक्रीडातत्रराज्यंविनश्यति नव
म्यामपराह्णेतुबलिदानंप्रशस्यते दशमीवर्जयेत्तत्रनात्रकार्याविचारणेति नंदायांदर्शनेरक्ताव
लिदानंदशासुच भद्रायांगोकुलक्रीडादेशनाशायजायतेइतिमदनरत्ने धानित्र नकार्यादश
मीविद्धानवमीतुसदाबुधैः नवमीदशमीविद्धायेकुर्वंतिविमोहिताः हृषातेषांभवेत्सर्वंबलिपूजा
विधानकमित्यादीनिवाक्यानितानिशुद्धाधिकानिषेधपराणि अन्यथापूर्वोदाहृतसूर्योदय
परित्यक्तेतिवाक्यविरोधप्रसंगाइति अत्रनिर्णयसिंधुकाराः वेधश्चत्रिमुहूर्तात्मकः यद्यपिहेमाद्रिम
तेमुहूर्तद्वयात्मकोपिवेधोस्ति तथापिसूर्योदयएवसः सायंतुत्रिमुहूर्तएव तदुक्तंदीपिकायां
त्रिमुहूर्तस्पृगेवतिथिःसकलासायमिति माधवोपि सायंभूतयातद्व्यापिन्यपातुनविध्यतइतितेनत्रिमुहूर्त
योगेपूर्वानवमीतिपूर्वोक्तवचनात् नकुर्यान्नवमींतातदशम्यांतुकदाचनेतिस्कांदेपरानिषेधाच्च त्रि
मुहूर्तयोगाभावेतुपरैवकार्येतिनिष्कर्षइत्याहुः निर्णयदीपेतु महानवमीपरदिनेऽपराह्णव्यापित्वे
पराअन्यथापूर्वैवेत्युक्तं आवर्तनात्सर्वकालेनवमीस्यात्परेहनि दुर्गापूजात्रपूर्वेद्युःपूर्वोक्ताष्टमीय
देतियोग्यवचनात् अश्वशारदनवमीविषयत्वेसमूलत्वेच प्रमाणाभावाद्धिमरूपमेतत् नवम्यामे
व दुर्गापूजनहोमबलिदानादिउपक्रम्यसमापनीयमितिराजमार्तंडः नवम्यांचजपंहोमंसमाप्य
विधिवद्बलिमितिवचनात् ब्रह्मवैवर्तेपि प्रजापराह्णिकेकालेबलिदानंप्रशस्यते दशमीवर्जयेत्त
त्रनात्रकार्याविचारणेतिदेवीपुराणेपि सूर्योदयेपरिक्षीणापूर्णास्यादपरायदि बलिदानंप्रकर्तव्यंत
त्रदेव्याःशुभावहं बलिदानेकृतेपूर्वस्यांराष्ट्रभंगोभवेन्नृपेति नवम्यांचजपंहोमंसमाप्यश्रवणेपिचे
तिसंग्रहोक्तेः व्रतंचजागरश्चैवनवम्यांविधिवद्बलिरितिदेवीपुराणाच्च इदंबलिदानंनवमीप्रयुक्त
अष्टमीप्रयुक्तस्याष्टम्यामेवकर्तव्यत्वात् इयंचनवम्युपवासादिष्वपिप्रशस्ता तदुक्तंभविष्योत्तरे न

स्मादियं महापुण्या नवमी पापनाशिनी उपोष्या सुप्रयत्नेन सततं सर्वपार्थिवैरिति हेमाद्रौ देवीपुराणे
ऽपि आश्विने नवमी शुक्ला तस्यां कोटिगुणं फलं तथा आश्विनस्य तु मासस्य नवमी शुक्लपक्षगा जाय
ते कोटिगुणितं दानं तस्यां नराधिपेति इयं मन्वादिरपि इति महानवमीनिर्णयः ॥ अस्यामेव वि
ष्णुधर्मोत्तरोक्तं भद्रकालीव्रतं राम उवाच विधिना पूजयेत्केन भद्रकालीं नराधिप नवम्यामाश्विने ।
मासि शुक्लपक्षे नरोत्तम पुष्कर उवाच पूर्वोत्तरे तु दिग्भागे शिववास्तु मनोहरे भद्रकालीगृहं कुर्या
च्चित्रवस्त्रैरलंकृतं भद्रकालीपदं कृत्वा तत्र संपूजयेद्द्विज अत्र मंत्र आगमोक्तः यद्वा जयंती मंग-
ला काली भद्रकाली कपालिनी दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते इति पौराणिकमंत्रो
वा भद्रकालीस्वरूपं तु विष्णुधर्मोत्तरे अष्टादशभुजा कार्या भद्रकाली मनोहरा आलीढस्थानसं
स्थाना चतुःसिंहरथे स्थिता अक्षमालां त्रिशूलं च खड्गं चर्म च यादव बाणचापे च कर्तव्ये पद्मं शंखं तथै
व च स्रुक्स्रुवौ च तथा कार्यौ तथा वेदिकमंडलुं दंडशक्ती च कर्तव्ये तथा शक्तिहुताशनौ हस्तानां
भद्रकाल्या भवेच्छांतिकरं करं एकश्चैव महाराज रक्षणाय त्रयो भवेदिति आश्विने शुक्लपक्षस्य अ-
ष्टम्यां प्रयतः शुचिः तत्रैवायुधवर्माणि छत्रं वस्त्रं च पूजयेत् राजलिंगानि सर्वाणि तथा शस्त्राणि पूजये
त् पुष्पैर्गंधैः फलैर्भक्ष्यैर्भोज्यैश्च सुमनोहरैः बलिभिश्च विचित्रैश्च प्रेक्षादानेन तथैव च रात्रौ जागरणं
कुर्यात्तत्रैव वसुधाधिपः उपोषितो द्वितीयेऽह्नि पूजयेत्तु नरेवतां आयुधाद्यं च सकलं पूजयेद्वसुधाधि
पः एवं संपूजयेद्देवीं वरदां भक्तवत्सलां कात्यायनीं कामगमां बहुरूपां वरप्रदां पूजिता सर्वकामैः
सा युनक्ति वसुधाधिपं एवं हि संपूज्य जगत्प्रथानां यात्रा तु देया वसुधाधिपेन प्राप्नोति सिद्धिं परमां
महीशो जनस्य चान्योऽपि स्वभक्तिशक्त्या इति भद्रकालीव्रतं ॥ अथ महानवम्यामुत्सवविधानं भ-
विष्योत्तरेऽपि श्रीकृष्ण उवाच पुण्या महानवम्येषा तिथीनामुत्तमा तिथिः अनुष्ठेया नरैः सर्वैः प्रजा-
पालैर्विशेषतः भवानीतुष्टये पार्थ संवत्सरसुखाय च भूतप्रेतपिशाचानां प्रीत्यर्थमुत्सवाय च यु-
धिष्ठिर उवाच कस्मात्कालात्प्रवृत्तेयं नवमी महशब्दिका किमाद्या वपि कृष्णासीत्सा भवान्याः प्रि-
या तिथिः यशोदागर्भसंभूत कुत्रस्था त्वप्रवर्तिता उताहो पूर्वमेवासीत्कृतत्रेतायुगादिषु ये चान्ये
प्राणिनः सर्वे वध्यंते यानि यानि च हतानां प्राणिनां तेषां का गतिः पारलौकिकी स्वयं ज्ञानं ज्ञातयंती मनुमो-
दयतां तथा एतन्मे संशयं सर्वं छेत्तुमर्हसि केशव श्रीकृष्ण उवाच पार्थ या परमा शक्तिरनंता लोकपू-
जिता आद्या सर्वगता शुद्धा भवगम्या मनोहरा अर्द्धाष्टमीकालकाली सुभगा सर्वमंगला मायाका-
त्यायनी दुर्गा चामुंडा शंकरप्रिया ध्यायंति यां योगरता सा देवी परमेश्वरी रूपभेदैर्नामभेदैर्भवानी ।
पूज्यते शिवा अष्टम्यां तु नवम्यां तु देवदानवराक्षसैः गंधर्वैरुरगैर्यक्षैः पूज्यते किन्नरैर्नरैः अन्यैरा ।
पि युगादौ तु महे पूर्वप्रवर्तिता पूजितेयं पुरा देवैस्तेभ्यः पूर्वैर्नरैः शुभैः अश्वयुक्छुक्लपक्षे तु अ-
ष्टमी मूलसंयुता सा महानवमी नाम त्रैलोक्येऽपि सुदुर्लभा कन्यागते सवितरि शुक्लपक्षे तथाष्ट-
मी मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता अष्टम्यां च नवम्यां च जन्ममोक्षप्रदायिका पूजयित्वा ।
श्विने मासि विशोको जायते नरः मत्तं जयंतीं दुःकौरैर्विद्धो चान्यान्तकान्परान् नवम्यां पूजिता देवी द-
दात्यनुपमं फलं सा पुण्या सा पवित्रा च सा धर्मसुखदायिनी तस्यां सदा पूजनीया चामुंडा मुंडमालि-
नी तस्यां ये तु प्रयुज्यंते प्राणिनो महिषादयः सर्वे ते स्वर्गतिं यांति घ्नतां पापं न विद्यते न तथा बलिदा-
नेन पुष्पधूपविलेपनैः यथा संतुष्यते मेषैर्महिषैर्विंध्यवासिनी उद्दिश्य दुर्गां हन्यंते विविधा यत्र
जंतवः स्वर्गतिं यांति कौंतेय घातयंतोऽपशस्विनः भवानीप्रीणणे प्राप्ता ये यांति युधिष्ठिर तेषां
स्वर्गे तु लोका वासौ वीरा स्वेसार सौप्रियाः मन्वंतरेषु सर्वेषु कल्पेषु कुरुनंदन तेषु सर्वेषु पूज्यासी-

न्नवमीयं सुरार्चिता प्रसिद्धानादिनिधनावर्षेवर्षेयुधिष्ठिर भूयोभूयोवतारेश्च भवानीपूज्यतेसुरैः
अवतीर्णापतीर्णाचभुविदैत्यनिबर्हिणी स्वर्गपातालमर्त्येषुकुरुतेस्थितिपालने सैवकालीमहादे
वीयशोदागर्भसंभवा कंसासुरस्योत्तमांगेपदंदत्वागताबियत् ततःप्रभृतिदैत्यघ्नीयशोदानंदिनी·
मया विंध्याचलेस्थापयित्वापुनःपूजाप्रवर्तिता पूर्वंप्रसिद्धोपिपुनर्भगिन्यामहिमाकृतः भुविस·
त्वोपकारायसर्वोपद्रवशांतये एवंचविंध्यवासिन्यांनवरात्रोपवासिनः एकभक्तेननक्तेनस्वशक्त्या·
याचितेनच पूजनीयाजनैर्देवीस्थानेस्थानेपुरेपुरे गृहेगृहेशक्तिपरैर्ग्रामेग्रामेवनेवने स्नातैःप्र
मुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृप वैश्यैःशूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्चमानवैः स्त्रीभिश्चकुरुशार्दूल
तद्विधानमिदंशृणु एतदनंतरंजयाभिलाषीनृपतिरित्यादि· भूताःसुखावहाइत्यंतोग्रंथोष्टमी।
कृत्येलोहाभिसारप्रकरणोक्तेयः इत्येवंभ्रामयेद्देवींदुर्गांदेवींरथेस्थितां नरयानेनवापार्थततो·
विघ्नंसमापयेत् अथोत्पन्नेषुविघ्नेषुभूतशांतिंसमाचरेत् येनविघ्नानजायंतेयात्रासंपूर्णतांव्रजे
त् एवंयेकुर्वतेयात्रांराजानोन्येपिमानवाः महानवम्यांनंदायाःप्रचिकाहृष्टमानसाः तेसर्वेपाप
निर्मुक्तायांतिभागवतींपुरीं नतेषांशत्रवोनाग्निर्नचौरानविनायकाः विघ्नंकुर्वंतिराजेंद्रयेषांतु
ष्टामहेश्वरी इत्येतत्तेसमाख्यातोदुर्गादेव्यामहोत्सवः एतत्तांशृण्वतांचैवसर्वाशुभनिबर्हणः
शूलाग्रभिन्नमहिषासुरपृष्ठपीठमध्यस्थितांसहरिविरांगदबाहुदंडां अभ्यर्च्यपंचवदनानुगतांन
वम्यांदुर्गांतदुर्गगहनानितरंतिमर्त्याः इतिमहानवमीदुर्गोत्सवः ॥

आश्विनशुक्लनवम्यामेवभविष्यत्पुराणोक्तं रथनवमीव्रतम् सुमंतुरुवाच कृत्वैवाश्वयुजेमा·
सिशुक्लपक्षेनराधिप नवम्यामुपवासंतुदुर्गांदेवींप्रपूजयेदिक्षुपक्वान्नवस्त्रादिशोभितेनवेरथे।
कृत्वा कन्यास्वर्णमयींदुर्गांमहिषासनशोभितां दुर्गास्वरूपं आलीढस्थानसंस्थानातथाराजेन्द्र
तद्भुजा अष्टादशकरादेवीशूलखड्गधरातथा चतुर्थ्यष्टकरस्तस्यास्तथाकार्यस्तुसामिष इति
यमध्येतांविन्यस्यतंरथंराजमार्गेभ्रामयित्वादुर्गालये संस्थाप्यप्रभातेपुनःपूजांकृत्वाब्राह्मणा
न्संभोज्यस्वयंभुंजीतेत्युक्तं अत्रभगवतीप्रीत्यर्थंशय्यादानं शूलांकितवृषदानमुभयतोमुखी·
दानंचकर्तव्यं तदुक्तंरत्नोपकरणैर्युक्तां दंतदारुमयींशुभां शय्यांनिवेदयेद्यस्तुभगवत्यैनरा·
धिप संपूज्यगंधपुष्पाद्यैर्विधिवच्चंडिकांनृप दुकूलवस्त्रतूलानांयावत्संख्यातयावती तावद्व
र्षसहस्राणिदुर्गालोकेमहीयते वृषंशूलांकितंयश्चभगवत्यैनिवेदयेत् आसप्तमंसतुकुलंमहा
देवालयंव्रजेत् यश्चोभयमुखींगांचभगवत्यैसुशोभनाम् सप्तद्वीपांधरांदत्वायत्फलंतदवाप्नुया
त् एतद्द्वयंशिरोर्द्धंचयावद्वत्सस्यनिर्गतम् तावद्द्यौःपृथिवीत्तेयाततदातात्स्यान्महीप्रदः इति
रथनवमीव्रतम् अस्यामेवारभ्यंब्रह्मपुराणोक्तंशौर्यव्रतं अगस्त्यउवाच अतःपरंप्रवक्ष्यामिशौ
र्यव्रतमनुत्तमम् येनभीरोरपिमहच्छौर्यंभवतितत्क्षणात् मासिचाश्वयुजेशुद्धांनवम्यामुपो
षितः सप्तम्यांकृतसंकल्पःस्थित्वाष्टम्यांनिरोधतः नवम्यांप्राशयेत्पिष्टंप्रथमंभक्तितोनृप ब्रा·
ह्मणान्भोजयेद्भक्त्यादेवींचैवतुपूजयेत् दुर्गांदेवींमहाभागांमहामायांमहाप्रभाम् एवंसंवत्स
रंयावदुपोष्यतुविधानतः व्रतांतेभोजयेद्धीमान्यथाशक्तिकुमारिकाः इतिशौर्यव्रतं ॥

अथास्यामेवाश्विनशुक्लनवम्यामुल्कानवमीव्रतं श्रीकृष्णउवाच उल्काख्यानवमीराजन्कथ·
यामिनिबोधतां पाकशपपेनकथितातारकास्यार्तिनाशिनी आश्वयुक्शुक्लपक्षेयानवमीलो
कविश्रुता तस्यांस्नात्वासमभ्यर्च्यपितॄन्देवान्समाधिना पश्चात्संपूजयेद्देवींचामुंडांभैरवप्रि
यां पुष्पैर्धूपैःसनैवेद्यैर्मांसमत्स्यसुरासवैः पूजयित्वास्त्वंकार्योमंत्रेणानेनमानवः समारो

प्रांजलिर्मूर्द्धिजानुभ्यामवनीगतः महिषघ्नि महामाये चामुंडे मुंडमालिनि द्रव्यमारोग्यविजयं देहि दे
वि नमोस्तु ते कुमारीर्भोजयेद्भक्त्या नवतानीलकंचुकैः परिधानैर्भूषणैश्च भूषयित्वा तु तोषयेत् सम
समपंचतथैकावा वाचितवित्तानुसारतः श्रद्धया तुष्यते देवी इति धीरानुशासनं अथ हृद्यमंडलं कृ
त्वा गोमयेन शुचिस्ततः तत्रासने चोपविशेत्पात्रं च पुरतो न्यसेत् ततः संसिद्धमन्नं यत्तत्सर्वं परिवे
षयेत् सद्घृतं वायसेभ्यश्च दत्वान्नं पात्रसन्निधौ तृणानां मुष्टिमादाय गृह्णीयाद्दृष्टमात्रकं प्रज्वालये
त्ततो भोज्यं यावज्ज्वलति पावकः प्रशांते भोजनं त्यक्त्वा समाचम्य प्रसन्नधीः चामुंडां हृदये ध्यात्वा गृह
कृत्यपरो भवेत् अनेन विधिना सर्वं मासि मासि समाचरेत् ततः संवत्सरस्यांते भोजयित्वा कुमारि
काः वस्त्राभरणैः पूज्य प्रणिपत्य क्षमापयेत् सुवर्णं शक्तितो दद्याद्गां च विप्राय शांतये एवं कुरु
ते पार्थ पुरुषो नवमीव्रतं न तस्य शत्रवो नाग्निर्न राजानो न तस्कराः भूताः प्रेताः पिशाचाश्च जनयंति भ
यं गृहे समुद्यतेषु शस्त्रेषु हंता तस्य न विद्यते रक्षते तं सदा युक्ता सर्वावस्थापन्न चंडिका नरो वा यदि
वा नारी व्रतमेतत्समाचरेत् उल्कावत्तस्य पत्नानां ज्वलन्नास्ते सदा हृदि संशुष्ककोटराक्षी च उ
ग्रदंष्ट्रा कापालिनी समवलंबित मुंडमाला उल्काव्रतेन पुरुषो नवमीषु चंडीं संपूज्य कस्य हृदयं
न चमत्करोति इति भविष्योत्तरे उल्कानवमीव्रतं

आश्विनशुक्लदशमी विजयादशमी नारदीये आश्विने शुक्लदशमी विजया सा प्रकीर्तिता द
श गोमयपिंडांस्तु शान्त्यैस्य गृहांगणे चक्रवालस्वरूपेण न्यसेद्रामलक्ष्मणौ तथा भरतशत्रु
घ्नौ संपूज्याश्वत्थरोपिह सापिधानासु पालीषु गोमयस्य च तत्सु क्लिन्नं धान्यं सरौप्यं तु यत्नाच्छु
क्लांबरावृतः पितृमातृभ्रातृपुत्रजायाभृत्यसमन्वितः संपूज्य गंधपुष्पाद्यैर्नैवेद्यैश्च विधानतः
नमस्कृत्याथ भुंजीत द्विजान्संभोज्य पूजितान् एवं कृत्वा विधानं तु नरो वर्षं सुखान्वितं धनधा
न्यसमृद्धश्च निश्चिंतो जायते द्विज अथापराह्णसमये नवम्यां संनिमंत्रिता पूर्वदिक्स्थां शमीं वि
प्र गत्वा तन्मूलमृत्तिकां गृहीत्वा स्वगृहं प्राप्य गीतवादित्रनिस्वनैः संपूज्य तां विधानेन सजीवकृ
त्य निजं वलं निर्गत्य पूर्वद्वारेण ग्रामाद्बहिरनाकुलः ततः शत्रुप्रतिकृतिं निर्मितां पत्रिकादिभि
मनसा कल्पितां वापि स्वर्णपुंखशरेण वै विध्येदति प्रशंसितः प्राप्नुयात्स्वगृहं निशि एवं कृत्वा वि
धिं वापि गच्छेद्वा शत्रुनिग्रहे एषैव दशमी विप्र विधिनाचरिता सदा धनंजयं सुतान्नाश्वराज्य।
संवाप्य जाविकं दद्यादिह शरीरांते स्वर्गतिं चापि नारद ॥ इयं च तारकोदयव्यापिनी ग्राह्येति
सामान्यनिर्णयः तदुक्तं चिंतामणौ आश्विनस्य सिते पक्षे दशम्यां तारकोदये सकालो विजयो ना
म सर्वकार्यार्थसाधकः रत्नकोशेपि ईषत्संध्यामतिक्रांतः किंचिदुद्भिन्नतारकः विजयो नाम
कालोयं सर्वकार्यार्थसाधकः दिनद्वये तद्व्याप्तावव्याप्तौ वा अपराजितापूजायां पूर्वैव तदुक्तं हेमा
द्रौ स्कांदे दशम्यां तु नरैः सम्यक्पूजनीयापराजिता ईशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः
या पूर्णा नवमीयुक्ता तस्यां पूज्यापराजिता क्षेमार्थं विजयार्थं च पूर्वोक्तविधिना नरैः नवमीशेष
संयुक्ता दशम्यामपराजिता ददाति विजयं देवी सा पूजिता जयवर्द्धिनी तथा आश्विने शुक्ल
पक्षे तु दशम्यां पूजयेन्नरः एकादश्यां न कुर्वीत पूजनं चापराजितमिति अत्र यात्रायामेकादशे
मुहूर्ते कार्या तथा च भृगुः आश्विनस्य सिते पक्षे दशम्यां सर्वदा विभुः सायंकाले शुभा यात्रा
यदि वा विजयक्षणे एकादशो मुहूर्तो यो विजयः स प्रकीर्तितः तस्मिन्सर्वैर्विधातव्या यात्रा वि
जयकांक्षिभिरिति दिनद्वये एकादशमुहूर्तव्याप्तौ अव्याप्तौ वा पूर्वा तथा च हेमाद्रौ मदन
रत्ने कश्यपः उदये दशमी किंचित्संपूर्णैकादशी यदि श्रवणर्क्षं यदा काले सा तिथिर्विजया

या श्रवणर्क्षेतु पूर्णायां काकुत्स्थः प्रस्थितो यतः उल्लंघयेयुः सीमानं तद्दिनर्क्षे ततो नरा इति काले परा
ह्णयोगाभावे तु सर्वपक्षेषु पूर्वैव मदनरत्नेप्येवं ज्योतिर्निबंधे रत्नकोशे च नारदः ईषत्संध्यामतिक्रांतः किं
चिदुद्भिन्नतारकः विजयो नाम कालोयं सर्वकार्यार्थसाधकः इषस्य दशमी शुक्ला पूर्वविद्धां न कारयेत्
श्रवणेनापि संयुक्तां राज्ञां पट्टाभिषेचनं सूर्योदये तदा राजन् दृष्टा दशमी तिथिः आश्विने मासि शुक्ले च
विजयां तां विदुर्बुधाः अत्रायं निर्गलितार्थः अपराह्णो मुख्यः कालः तत्रैव पूजायुक्तं प्रदोषो गौणः त
त्र दिनद्वये प्यपराह्णव्यापित्वे च पूर्वा प्रदोषव्याप्तेराधिक्यात् दिनद्वये प्रदोषव्यापित्वे परा अपराह्ण
व्याप्तेराधिक्यात् श्रवणस्तु रोहिणीवत्प्रयोजकः दिनद्वयेऽपराह्णसत्त्वे पूर्वा तत्रापि अपराह्णे
श्रवणसत्त्वे परैवेति अत्रापराजितापूजादिकं पूर्वविद्धाविधायकं नवरात्रप्रकरणे लिखितं शमी
पूजादिकमपि तत्रैव नवरात्रपारणनिर्णयोपि तत्रैवाभिहितः अथात्र प्रस्थानादिविधानं तत्र दि
शां विजयमंत्राश्च पठितव्याः पुरोधसेति आशादशमीपूजाव्रतवदत्र विधानं अस्यां गोपथब्राह्मणे वि
वाहमुद्दिश्योक्तं प्रस्थानविधिं कुर्यात् तद्यथा अथ प्रस्थानं व्याख्यास्यामः जन्येषु गच्छत्सु पार्थिवात त्र
त्याडुंडुभेर्वीणा वादयेरन् हृष्टालंकृताश्रुवदनं उदगयने पुण्ये नक्षत्रे केशश्मश्रुरोमनखानि वाप
यित्वा संभारानुपकल्प्य मैत्रे मुहूर्ते समुपसमाधाय शांतिप्रतिसरं कारयित्वा कर्तान्वालभ्य जुहोत्य
भयैरायुष्यैः स्वस्त्ययनैः शर्मवर्मभिर्जनवदनैर्हुत्वा पार्थिवस्येति मा प्रगामेति च हुत्वा आगच्छ
नागतस्वेतींद्रस्थालीपाकेनेष्ट्वा विष्णुन्तराक्रमज्जव इति पंथानमास्थाय जयेदिमो पाशीयत रद्वंतार
मिंद्रमानो विंदत्वभयसोमो बृहस्पतिर्नरः परियातु पश्चादिति त्रीन् विष्णुक्रमान्क्रांत्वेत्यादि अपरा
जिता पूजनादिकं नवरात्रवशात्तत्रैवोक्तं दिशां विजयमंत्राश्च पठनीयाः पुरोधसेति शास्त्रोक्तं तत्र मंत्राः आ
शादशमीव्रतोक्ताः भविष्योत्तरे त्वयि सन्निहितः शक्रः सुरासुरनमस्कृतः पूर्वस्त्वं भुवनस्यास्य ऐंद्रदि
ग्देवते नमः परिगृह्य दिशो शांतं त्वमाग्नेयीति पठ्यसे तेजोरूपा पराशक्तिराग्नेयी जयदा भव २ धर्मराजं
समाश्रित्य लोकान्संयमयत्यसौ तेन संयमनी चासि याम्ये मत्कामदा भव ३ खड्गहस्तातिविकृता नि
र्ऋतिस्थानमाश्रिता तेन नैर्ऋतिनामासि त्वमाशां पूरयस्व मे ४ त्वय्यास्ते भुवनाधारो वरुणो यादसां
पतिः कामार्थं मम धर्मार्थं वारुणि प्रवणा भव ५ अधिष्ठितासि यस्मात्त्वं वायुना जगदायुना वायव्ये
त्वमनःशांतिं नित्यं यच्छ समानघे ६ धनदेनाधिष्ठितासि प्रख्याता त्वमिहोत्तरा निरुत्तरा भवास्मासु
दत्वासयोमनोरथं ७ ईशाभिमतदेशेन शंभुना त्वमलंकृता पूरयित्वाशु मे देवि वांछितानि नमोस्तु
ते ८ भुजगाष्टकुलेन त्वं सेवितासि यतोधुना नागांगनाभिः सहिता हिताय भव मेनघे ९ सर्वलो
कोपरिस्थिता सर्वदा त्वं शिवाय च सनकाद्यैः परिहृता सर्वदा पाहि मां भयात् १० नक्षत्राणि च योगाश्च ग्र
हा राशयस्तथा नक्षत्रमातरो याश्च भूतप्रेतविनायकाः सर्वे मे भीष्टसिद्ध्यै तु भवंतु प्रवणाः सदेति
अथात्र खंजरीटपूजनं दर्शनमपि वदंति तस्य मंत्रो ज्योतिःशास्त्रे तिथितत्त्वे कृत्वा नीराजनविधिं वि
धिप्रोक्तं यथाक्रमं शोभनं खंजनं पश्येज्जलगोष्ठादिसन्निधौ नीलग्रीव शुभग्रीव सर्वकामफलप्र
द पृथिव्यामवतीर्णोसि खंजरीट नमोस्तु ते वसंतराजेपि तयोरायुक्तो मुनिपुत्रकस्त्वमदृश्यतामे
षिशाखोद्गमेन खंटप्रसेप्राक्षिनिर्गताथां खंजनाय धर्मयोनमस्ते ॥ अस्य पूजनं दृष्टादित्ये
महालयप्रकरणोक्तमिति विजयादशमीविधानं आश्विनशुक्लैकादशी पापांकुशा तदुक्तं नारदी
ये एकादशी मिषे शुक्ला विख्याता पापांकुशाह्वया उपोष्य विधिवद्विष्णोर्दिने विष्णुं समर्चयेत् ततः सं
संभोज्य विप्रान्दत्वा तेभ्यश्च दक्षिणां भक्त्या प्रणम्य विसर्जयेदश्नीयाच्च स्वयं ततः एवं यः कुरुते भक्त्या
नरः पापांकुशाव्रतं सम्यक्कोह्वरा[illegible]यान्ति विष्णोः सलोकतां अथ कथा वाराहपुराणे भवि

ख्यायोः युधिष्ठिर उवाच कथ्यतां देवदेवेश ह्यनादिस्त्वं जगत्प्रभो धाता त्वं च विधाता च कर्त्ता हर्त्ता त्वमेव
च इषस्य शुक्लपक्षे तु का वा एकादशी भवेत् किं नाम को विधिस्तस्याः तद्विस्तरतो वद श्रीकृष्ण उ-
वाच शृणुष्व त्वं महाराज कथां पापप्रणाशिनीं इषस्य शुक्लपक्षे या तस्या नाम वदामि ते पापांकु-
शेति विख्याता पापकुंजरभीतिहा आश्विने मासि देवेशं पद्मनाभमनामयं पूजयेच्चैव मां राजन् स्वर्गमो
क्षप्रदायकं तुलसीमंजरीभिश्च पुष्पैस्तत्तत्संभवैः तपस्तप्त्वा नरस्तीव्रं समवाप्नोति तत्फलं तत्फलं स
मवाप्नोति पूजयित्वा जनार्दनं कृत्वा च सुमहत्पापं यो नरो हरिमर्चयेत् न याति नरकं घोरं यतः पापहरो ह
रिः पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च तानि सर्वाणि चाप्नोति विष्णोर्नाममात्रकीर्त्तनात् देवं शार्ङ्ग
धरं विष्णुं ये प्रपन्ना जनार्दनं न ते यमपुरं यांति यांति लोकं च शाश्वतं उपोष्यैकादशीमेतां प्रसंगेनापि
मानवः न याति यातनां यामीमिति वैवस्वतात् श्रुतं हरिनिंदापरा राजन् हरिपूजापराङ्मुखाः न यांति वै
स्वर्लोकं नरकं यांति दारुणं न दृश्यं पावनं किंचित् त्रिषु लोकेषु विद्यते सर्वपापविनाशाय यादृशो
हरिवासरः तावत्पापानि देहेस्मिन् वसंति मनुजाधिप यावन्नोपोषितं मर्त्यैः पद्मनाभदिनं महत् अश्व
मेधसहस्राणि राजसूयशतानि च एकादश्युपवासस्य कलां नार्हंति षोडशीं एकादशेंद्रियैः पापं य
त्कृतं मानवैः सदा एकादश्युपवासेन तत्सर्वं शांतिमाव्रजेत् एकादशीसमं किंचित्पुण्यं लोके न वि
द्यते व्याजेनापि कृता यैस्तु न ते पश्यंति भास्करिं स्वर्गमोक्षप्रदा पुंसां शरीरारोग्यदायिनी सुकलत्र
प्रदा चैषा धनदा पुत्रदा सदा न गंगा न गया चैव न काशी न च पुष्करं यमुना चंद्रभागा च नैव तुल्या कदाच
न आयासवर्जं व्रतिनः प्राप्नुवंति हरेः पदं तर्पणं तु हरेः कुर्यान्नित्यं बुद्धिप्रमानवः दशैव पितृपक्षे-
च मातृपक्षे तथा दश भार्यायां दश पक्षे च पुरुषानुद्धरेद्व्रती ते हि संमोहनिर्मुक्ताः सर्वे गरुडवाहनाः
स्रग्विणः पीतवस्त्राश्च प्रयांति हरिमंदिरं किरीटिनः कुंडलिनो घनश्यामाश्चतुर्भुजाः शंखचक्रग
दापद्मधारिणो वनमालिनः बालत्वे यौवने वापि वार्द्धके च नृपोत्तम उपोष्यैकादशीं मर्त्यः सत्यं ना।
प्नोति दुर्गतिं यथोक्तविधिना राजन् कृत्वा सत्तीर्थमज्जनं दत्वा हेमाश्वभाराणि मर्त्यो यत्फलमश्नुते
तत्फलं समवाप्नोति कृते चैकादशीव्रते संक्षेपेण नृपश्रेष्ठ विधिमस्या वदामि ते यथाशक्त्या च दा
नं तु कुर्यात्स्वहितकाम्यया उपानच्छत्रवस्त्रादिकं दमूलं फलं जलं न वंध्यं तु दिनं कार्यं प्राणि
मात्रेण केन चित् इह लोके यशः प्राप्य स तो मोक्षमवाप्नुयात् कर्त्तारो नैव पश्यंति दारुणं यमशास
नं दीर्घायुषो धनाढ्याश्च भवंतीह पुनः पुनः किमत्र बहुनोक्तेन न ते गच्छंति दुर्गतिं आरोहंति न
राः सर्वे दिवं देवैः सुपूजिताः इति ते कथितं राजन्नेकादश्याः कथानकं ये पठंति नरा राजन् ये शृ।
ण्वंति तथैव च तेषां पापानि नश्यंति मत्ता मोक्षं व्रजंति ते ॥ इति वाराहपुराणे पाद्मे च पापांकुशा
श्विन शुक्लैकादशीव्रतकथानकम् ॥ अथाश्विनशुक्लैकादशीमारभ्य कार्त्तिकस्नानादि
कार्त्तिकव्रतारंभ इति दाक्षिणात्याः आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत् कार्त्तिकस्य व्रता
नीह तस्यां वै प्रारभेत्सुधीरिति पाद्मोक्तेः भार्गवार्चने च आरभ्यैकादशीं शुक्लामाश्विनस्य तु मानवः
प्रातःस्नानं प्रकुर्वीत यावत्कार्त्तिकभास्करः इति विष्णुरहस्योक्तेः प्राच्यास्तु तुलार्कमारभ्य कुर्वंतीति
तत्रैव प्रपंच्यते ॥ आश्विनशुक्लैकादशीमारभ्य त्रिंशद्दिनपर्यंतं मासोपवासव्रतं हेमाद्रौ विष्णुरह
स्ये नारद उवाच भगवन् श्रोतुमिच्छामि व्रतानामुत्तमं व्रतं विधिं मासोपवासस्य फलं चास्य यथो
दितं यथा विधिर्नरैः कार्यो व्रतचर्या यथा भवेत् आरभ्यते यथा पूर्वं समाप्या हि यथाविधि याव
त्संख्याहिकं तत्वं तद्ब्रूहि प्रपितामह व्रतमेतत्सुरश्रेष्ठ विस्तरेण समानघ ब्रह्मोवाच साधु नारद य
त्त्वं पृष्टं वरतपोधन यादृङ्मतिमतां श्रेष्ठ तच्छृणुष्व ब्रवीमि ते सुराणां च यथा विष्णुस्तेजसां च य।

यारविः मेरुःशिखरिणां यद्वद्वैनतेयस्तु पक्षिणां तीर्थानां तु यथा गंगा प्रजानां तु यथा वणिक् श्रेष्ठः सर्व
व्रतानां तु तथा मासोपवासकं सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु यद्भवेत् सर्वदानोद्भवं वा तु लभेन्मासोपवा
सकृत् अग्निष्टोमादिभिर्यज्ञैर्विधिवद्भूरिदक्षिणैः न तत्पुण्यमवाप्नोति यन्मासपरिलंघनात् तेन दत्तं
हुतं जप्तं तपस्तप्तं सुखाकृतं यः करोति विधानेन नरो मासचतुष्टयं प्रविश्य वैष्णवं यज्ञं तत्राभ्यर्च्य जना-
र्दनं गुरोराज्ञां ततो लब्ध्वा कुर्यान्मासोपवासकं वैष्णवानि यथोक्तानि कृत्वा सर्वव्रतानि च द्वादश्यादी-
नि पुण्यानि ततो मासमुपावसेत् अतिकृच्छ्रं पराकं च कृच्छ्रं चान्द्रायणं ततः मासोपवासं कुर्वीत ज्ञात्वा
देहबलाबलं वानप्रस्थो यतिर्वापि नारी वा विधवा मुने मासोपवासं कुर्वीत गुरुं विज्ञापयेत्ततः आ-
श्विनस्यामले पक्षे एकादश्यामुपोषितः व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनाविधि वासुदेवं समुद्दि-
श्य कार्तिकं सकलं नरः मासं चोपवसेद्यस्तु स मुक्तिफलभाग्भवेत् अच्युतस्यालये भक्त्या त्रिकालं
कुसुमैः शुभैः मालतीन्दीवरैः पद्मैः कमलैस्तु सुगंधिभिः कुंकुमोशीरकर्पूरैर्विलिप्य वरचंदनैः नै
वेद्यैर्धूपदीपाद्यैरर्चयेत्तु जनार्दनं मनसा कर्मणा वाचा पूजयेद्गरुडध्वजं कुर्यान्नरस्त्रिषवणं दृढ-
भक्तिर्जितेंद्रियः नाम्नामेव जपालापं विष्णोः कुर्यादहर्निशं भक्त्या विष्णोः स्तुतिर्वाच्या मृषावादं विवर्ज-
येत् सर्वसत्त्वदयायुक्तः शांतवृत्तिरहिंसकः सुप्तो वाप्यासनस्थो वा वासुदेवं प्रकीर्तयेत् स्मृत्यालोक
नगंधादिस्वादनं परिकीर्तितं अन्नस्य वर्जयेत्सर्वं ग्रासानां चाभिकांक्षितं गात्राभ्यंगं शिरोभ्यंगं तांबू-
लं सविलेपनं व्रतस्थो वर्जयेत्सर्वं यच्चान्यच्च निराकृतं व्रतस्थो न स्पृशेत्कंचिद्विकर्मस्थान्न चालयेत्
देवतायतने तिष्ठेन्न गृहस्थो व्रतं चरेत् कृत्वा मासोपवासं तु यथोक्तविधिना नरः नारी वा विधवा साध्वी
वासुदेवं समर्चयेत् अन्यूनाधिकमेवं तु व्रतं त्रिंशद्दिनैरिदं कृत्वा मासोपवासं तु संयतात्मा जितेंद्रि-
यः ततोर्चयेन्महद्भक्त्या द्वादश्यां गरुडध्वजं पूजयेत्पुष्पमालाभिर्गंधधूपनिवेदनैः वस्त्रालंकार
वाद्यैश्च तोषयेदच्युतं नरः स्नापयेत्तु हरिं भक्त्या तीर्थचंदनवारिभिः चंदनेनानुलिप्तांगं पुष्पधूपैरलं-
कृतं वस्त्रदानादिभिश्चैव भोजयेत्तु द्विजोत्तमान् दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य क्षमापयेत् क्षमा-
पयित्वा विशेषं च विसृज्याभ्यर्च्य भोज्य च एवं वित्तानुसारेण भक्तियुक्तेन चेतसा एवं मासोपवासं तु कृ-
त्वाभ्यर्च्य जनार्दनं भोजयित्वा द्विजांश्चैव विष्णुलोके महीयते एवं मासोपवासांस्तु द्विसप्तकं कृत्वा त्रयो-
दश समापयेत्ततः शक्त्या विधिना येन तच्छृणु कारयेद्वैष्णवं यज्ञमेकादश्यामुपोषितः पूजयि-
त्वा च देवं तमाचार्य्यानुज्ञया हरिं अर्चयित्वा ततो भक्त्या अभिवाद्य गुरुं तथा भोजनीयान्यास-
नानि वस्त्रसूत्राणि चैव हि दत्वा चैव द्विजाग्रेभ्यः पूजयित्वा प्रणम्य च ततो न कल्पयेद्भक्त्या श-
य्यां या कीर्तयंति वै ये प्रयच्छंति विप्राय ते तरंति भवार्णवं आनंदार्णवमग्नश्च दुःखसंसारबंध-
नैः न बाध्यते नरो नित्यं वासुदेवमनुस्मरन् स्थावरे जंगमे सत्त्वे स्थले सूक्ष्मे शुभाशुभे विष्णुं प-
श्यति सर्वत्र यः स विष्णुः स्वयं नरः एवं विष्णुमयं ज्ञात्वा त्रैलोक्यं सचराचरं यस्य शांता मतिस्तेन पू-
जितो गरुडध्वजः इति कल्पानुकल्पानां व्रतानां सूत्तमस्य च विष्णुलोकमवाप्नोति प्रसादाच्चक्रपा-
णिनः विधिर्मासोपवासस्य यथावत्परिकीर्तितः तव स्नेहान्मुनिश्रेष्ठ सर्वलोकहिताय च कृ-
त्वा कृत्वा तु यो भक्त्या नरो विष्णुपुरीं व्रजेत् नाभक्ताय प्रदातव्यं न देयं दुष्टचेतसे इति विष्णुरह०।

स्मोक्तं मासोपवासव्रतम्

अथास्य प्रयोगः तिथ्यादि संकीर्त्य ममाशेषपापक्षयपूर्वकचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीम-
हाविष्णुप्रीत्यर्थं मासोपवासव्रतं करिष्ये तत्र प्रत्यहं त्रिकालस्नानं विष्णुमंत्रजपः विष्णुपूजनं।
तुलसीदलसहितपुष्पादिसमर्पणं निषिद्धालापवर्जनं पुराणपठनं श्रवणं च ब्राह्मणपूजनं

यथाशक्तिदानं एवमादिनियमैर्व्रतं यथाशक्ति समाप्यांते शुक्लैकादश्यामुद्यापनं कुर्यात् उक्तप्रकारे
णाचार्यं हुत्वा सर्वतोभद्रकलशे हैमं लक्ष्मीनारायणं सहस्रशीर्षेत्यादिपुरुषसूक्तेन मंत्रेण द्वादशात्
रमनुनावासं स्थाप्य पूजयित्वा कथाश्रवणादिना रात्रिमतिवाह्य प्रातः स्थंडिलेग्निं प्रतिष्ठाप्य अन्वाद
ध्यात् तत्र प्रधानं लक्ष्मीनारायणं पायसद्रव्येण सहस्रसंख्याकाहुतिभिः ब्रह्मादिदेवताभ्यश्चैकैक
याज्याहुत्या यजेत् एवं होमं समाप्य पीठं गां चाचार्याय दत्वा वेदशास्त्रसंपन्नान् त्रिंशत् ब्राह्मणान् वस्त्रान्न
दानभूषणादिभिः संपूज्य त्रिंशत् गौरन्नमौल्यं वा दक्षिणात्वेन दत्वा सोपस्करां शय्यां ताम्रनादिगुण
वते द्विजाय दत्वा सदन्नेन ब्राह्मणान् संतोष्याशिषो गृहीत्वा विष्णुलोकगमनार्थं द्विजान्प्रार्थयेत् भो
द्विजा अनुमोदध्वं भवतां कृपयाधुना सर्वपापविनिर्मुक्तो विष्णुलोकं व्रजाम्यहम् ततो द्विजानां प्रति
वचनं व्रज व्रज नरश्रेष्ठ विष्णुलोकमनामयं विमाने वैष्णवे दिव्ये सपर्यापरिकल्पिते तेन विष्णुप
दं याहि सच्चिदानंदरूपिणं ततो दीनानाथादीन् भूरिदक्षिणया संतोष्य स्वयं मौनी भुंजीत अशक्त
शाकेन कंदमूलफलादिना मासोपवासव्रतशेषं विप्रानुमत्या समापनीयं एवं कृत्वा सर्वपापवि
मुक्तो भवति एवमेव चातुर्मास्यव्रतोद्यापनमपि विधेयम् ॥ इति विष्णुरहस्योक्तमासोपवासव्र
तोद्यापनं अथाश्विनशुक्लद्वादशीकृत्यं नारदीये द्वादश्यामिषशुक्ले गां दत्वा नत्वा विसर्जयेत्
गंधाद्यैरुपचारैस्तां तदग्रे भोजयेद्द्विजान् मधुरान्नेन वस्त्राभ्यां सौवर्णीं दक्षिणां ददेत् व्रतेनाने
न संतुष्टः पद्मनाभो द्विजोत्तम श्वेतद्वीपगतिं दद्यादिह भोगांश्च शाश्वतान् आश्विनशुक्लैकाद
श्यामुपवासजागरणादिकं कृत्वा द्वादश्यादिषु विष्णुपूजादिकं कुर्यात् तदुक्तं ब्रह्मपुराणे
सोपवासैश्च कर्तव्य एकादश्यां प्रजागरः द्वादश्यां वासुदेवश्च पूजनीयश्च सर्वदा यात्रोत्सव
श्च कर्तव्यस्त्रयोदश्यां तु वैष्णवैः उपवासस्त्रयोदश्यां पौर्णमास्यां हरिं व्रजेत् अथ पद्मनाभद्वा
दशीव्रतं हेमाद्रौ धरणीव्रतेषु वाराहे दुर्वासा उवाच तद्वदाश्वयुजे मासि द्वादशी सितपक्षि
णी संकल्प्याभ्यर्चयेद्देवं पद्मनाभं सनातनं पद्मनाभाय वै पादौ कटिं वै पद्मयोनये उदरं स
र्वदेवाय पुष्कराक्षाय वै उरः अव्ययाय तथा बाहू प्राग्वदस्त्राणि पूजयेत् प्रभवाय शिरः पूज्य प्रा
ग्वदग्रे घटं न्यसेत् तमेव देवं संपूज्य गंधपुष्पादिभिः क्रमात् प्रभातायां तु शर्वर्यां ब्राह्मणाय
निवेदयेत् प्रीयतां पद्मनाभो मे पद्मनाभस्वरूपक इति मंत्रः ॥ इति पद्मनाभद्वादशीव्रतं
अस्यां विष्ण्वालये दीपदानं महापुण्यकरं आसीत्कृतयुगे राजा भद्राश्वो नाम वीर्यवान् त
स्य नाम्ना भवद्वर्षं भद्राश्वं नाम नामतः तस्यागस्त्यः कदाचित्तु गृहमागत्य भूपतेः उवाच पंचरा
त्रं वसामि भवतो गृहे तं राजा शिरसा नत्वा स्थीयतामित्यभाषत तस्य कांतिमती नाम्ना भार्या
परमशोभना नामागतास्तथा दृष्ट्वा नृपतेजोचितां शुभां सपत्न्यश्च भयात्तस्याः कुर्वत्यः कर्मशो
भनाः साधु साधु जगन्नाथ स्त्रीशूद्राः साधु साध्विति एवमुक्तानन्तैर्द्विरगस्त्यो राजसन्निधौ किं
हर्षकारणं ब्रह्मन्नो नैवं नृत्यते भवान् अगस्त्य उवाच इयं राज्ञी त्वदीया भूद्दासी वैश्यस्य वैदिशे नगरे
हरिदत्तस्य तमस्याः पतिरेव च तस्यैव कर्मकारोभूच्छूद्रो विंध्येति नामतः स वैश्योश्वयुजे मासि द्वाद
श्यां नियतः शुचिः स्वयं विष्ण्वालयं गत्वा गंधपुष्पादिभिर्हरिं समभ्यर्च्य गृहं प्रायाद्भवंतौ रक्षपालकौ
स गृहे स्थाप्य दीपानां ज्वलनार्थं गृहागते गते तस्मिन्भवंतौ तद्दीपप्रज्वालने स्थितौ यावन्न भाता र
जनी निःशाखेन नरोत्तम ततः कालेन महता मृतौ द्वावपि दंपती तेन पुण्येन तज्जन्मप्रियपुत्रगृहे
भवत् इयं च पत्नी तज्जाता या वैश्यपरिचारिका पारक्यस्यापि दीपस्य ज्वालितस्य हरेर्गृहे इयं व्युष्टिः
पुरा जाता भक्तिपुत्रस्य ते पुरा स्वेन यः पुनरर्थेन विष्णुमभ्यर्च्य दीपकं ज्वालयेत्तस्य यत्पुण्यं संख्या

तेनैवनशक्यते ॥ इतिवाराहेश्वरणीव्रतेषुपद्मनाभद्वादशीव्रतेदीपदानमाहात्म्यं अस्यामेवभवि·
ष्योत्तरोक्तं पुत्रप्राप्तिव्रतं युधिष्ठिरउवाच ऋणैस्त्रिभिः परिहृतः पुरुषोजायतेकिल ऋणत्रयात्प्रमु·
च्येतसपुत्रः पुत्रदर्शनात् पुंनाम्नोनरकाद्यस्मात्पितरंत्रायतेसुतः तस्मात्पुत्रइतिप्रोक्तः स्वयमेवस्व
यंभुवा दिगंबरंगतव्रीडंजटिलंधूलिधूसरं पुण्यहीनानपश्यंतिगंगाधरमिवात्मजं तस्मात्सपुत्रला
भाययज्ञंतत्तदुदीरय श्रीकृष्णउवाच एकादश्यांचाश्वयुजेशुक्लायांपक्षेर्चयेद्धरिं गंधाद्यैःपूजयेद्भक्त
सवत्सांगांगवाह्निकं अपरेह्णितथाभ्यर्च्यनिशिभुंजीतवाग्यतः अपराजितोऽजातशत्रुपराकृतपुरं
दरः वर्द्धमानःसुरेशश्चमहाबाहुःप्रभुर्विभुः सभूतिःसमनाश्चैवसुप्रचेताइतीरयेत् एवंद्वादशभि
र्वर्षैर्मासैर्वापारयेद्व्रतं व्रतांतेजुहुयादेभिर्नामभिर्हुतपायसं ब्राह्मणान्भोजयेत्पश्चाद्धितान्नमासकैः
त्वया मासेमासेयथाशक्तिदानंप्रार्थनमेवच यथादितेभवान्पुत्रःशाश्वतश्चाव्ययोच्युतः तथाभव
तुमेदेवपुत्रोजन्मनिजन्मनि लक्ष्मीर्वैसावित्रीदेवीब्रह्मणादेवपूजिता गृहाणेमंमयादत्तंपिंडसतृण
मूलकं वस्त्राभरणगोदानैर्ब्राह्मणान्प्रीणयेद्गुरुं ॥ इतिभविष्योत्तरोक्तंपुत्रप्राप्तिव्रतं अथाश्विनशु
क्लद्वादश्यांविशोकद्वादशीव्रतंभविष्योत्तरे पुण्यमाश्वयुजेमासिविशोकद्वादशीव्रतं दशम्यांलघु
भुग्विद्वानारभेन्नियमेनतु उदङ्मुखःप्राङ्मुखोवादंतधावनपूर्वकं एकादश्यांनिराहारः समभ्यर्च्य
चकेशवं श्रीशंचाभ्यर्च्यविधिवद्भोक्ष्यामितुपरेहनि एवंनियमकृत्सुप्त्वाप्रातरुत्थायमानवः स्नात्वा
सर्वौषधियुतेपंचगव्यजलेनतु शुक्लांबरधरस्तद्वत्पूजयेत्श्रीशमुत्पलैः विशोकायनमःपादौजंघे
चवरदायच श्रीशायजानुनीतद्वदूरूचजलशायिने कंदर्पायनमोगुह्यंमाधवायनमःकटिं दामो
दरायेत्युदरं पार्श्वेचविपुलायवै नाभिंतुपद्मनाभायहृदयंमन्मथायच श्रीधरायविभोर्वक्षःकरौ
मधुनिघ्नेनमः चक्रिणेवामबाहुंचदक्षिणंगदिनेनमः वैकुंठायनमःकंठमास्यंयज्ञमुखायच ना
सामशोकनिधयेविष्णुमित्रायचक्षुषी ललाटंवामनायेतिरामायेतिपुनर्भ्रुवौ अलकान्माधवायेति
किरीटंविश्वरूपिणे नमःसर्वात्मनेतद्वत्शिरइत्यभिपूजयेत् एवंसंपूज्यगोविंदंफलमाल्यानुलेप
नैः ततस्तस्याग्रतोभक्त्यास्थंडिलेकारयेत्सदा चतुरस्रंसमंताच्चरत्निमात्रमुदक्प्लवं नदीवालुक
यासर्वलक्ष्म्याःप्रतिकृतिंन्यसेत् स्थंडिलेसूर्पमारोप्यलक्ष्मीमित्यर्चयेन्नरः नमोदेव्यैनमःशांत्यैनमो
लक्ष्म्यैनमःश्रियैः नमःपुष्ट्यैनमस्तुष्ट्यैविशोकायैनमोनमः विशोकवास्तुसंपत्त्यैविशोकेसर्वसि
द्धये ततःशुक्लांबरैःसूर्पंवेष्ट्यसंपूज्यसत्फलैः भक्ष्यैर्नानाविधैस्तद्वत्स्वर्णकमलेनच रजनी
षुचसर्वासुपिबेद्दर्भोदकंबुधः सर्वासुरजनीष्वतोक्तदिवसानांविधिरयं ततस्तुगीतनृत्यादि
कारयेत्सकलांनिशां यामत्रयेततोजातेसुप्त्वाभ्युत्थायमानवः अभिगम्यचविप्राणांमिथुनानितदा·
र्चयेत् शक्तितस्त्रीणिचैकंवावस्त्रमाल्यानुलेपनैः शयनस्थानिपूज्यानिनमोस्तुजलशायिने तत
स्तगीतनृत्यैस्तेरात्रिजागरणेकृते प्रभातेविमलेस्नानंकृत्वादांपत्यमर्चयेत् भोजनंतुयथाशक्त्यावि
त्तशाठ्यविवर्जितः भुक्त्वाश्रुत्वापुराणंतुतद्दिनंचातिवाहयेत् अनेनविधिनासर्वंमासिमासिसमाच
रेत् व्रतांतेशयनंदद्याद्गुडधेनुसमन्विते सोपधानकविश्रामंचस्वास्तरावरणान्वितं यथानलक्ष्मीदे
वेशानांपरित्यज्यगच्छति तथासुरूपतारोग्यमशोकत्वंचमेसदा यथादेवेनरहितानलक्ष्मीर्जाय·
तेकचित् तथाविशोकतामेस्तुभक्तिरग्र्याचकेशवे मंत्रेणानेनशयनंगुडधेनुसमन्वितं सूर्पंचल
क्ष्म्यासहितंदातव्यंभूतिमिच्छता उत्पलंकरवीरंचबाणमम्लानपंकजं केसरंसिंदुवारंचमल्लिका
शोकपाटलाः कंदंबकुब्जकंजातिशस्तान्येतानिपूजने युधिष्ठिरउवाच गुडधेनोर्विधानंचसमाच
क्ष्वयज्जायते किंरूपंकेनमंत्रेणदातव्यमिहोच्यतां श्रीकृष्णउवाच गुडधेनुविधानस्ययद्रूपमिह

यत्फलं तदिदानीं प्रवक्ष्यामि सर्वपापप्रणाशनं कृष्णाजिनं चतुर्हस्तं प्राग्ग्रीवं विन्यसेद्भुवि गोमयेनानुलिप्तायां दर्भानास्तीर्य्य सर्वतः तद्वेणाजिनं तद्वद्धस्तत्वे परिकल्पयेत् प्राङ्मुखीं कल्पयेद्धेनुमुदक्पादां सवत्सकां उत्तमा गुडधेनुः स्यात्सदा भारचतुष्टयं वत्सं भारेण कुर्वीत भाराभ्यां मध्यमा मता अर्द्धभारेण वत्सः स्यात्कनिष्ठा भारकेण तु चतुर्थांशेन वत्सः स्याद्गृहवित्तानुसारतः धेनुवत्सौ घृतास्यौ तु सितसूक्ष्माम्बरावृतौ शुक्तिकर्णाविक्षुपादौ शुचिमुक्ताफलेक्षणौ सितसूत्रसिरालौ तु सितकम्बलकम्बलौ ताम्रगडुकपृष्ठौ तु सितचामररोमकौ विद्रुमभ्रूयुगोपेतौ नवनीतस्तनाविमौ क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ इत्येवं रचयित्वा तु धूपदीपैरथार्चयेत् या लक्ष्मीः सर्वभूतानां या च देवे व्यवस्थिता धेनुरूपेण सा देवी मम पापं व्यपोहतु विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसौ चन्द्रार्कशक्रशक्तिर्या धेनुरूपास्तु सा श्रिये चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च या लक्ष्मीर्लोकपालानां सा धेनुर्वरदास्तु मे स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां यतः सर्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छ मे एवमामन्त्र्य तां धेनुं ब्राह्मणाय निवेदयेत् विधानमेतद्धेनूनां सर्वासामिह पठ्यते यास्तु पापविनाशिन्यः पठ्यन्ते दश धेनवः तासां स्वरूपं वक्ष्यामि नामानि च नराधिप प्रथमा गुडधेनुः स्याद्घृतधेनुस्तथापरा तिलधेनुस्तृतीया स्याच्चतुर्थी जलसंज्ञिका क्षीरधेनुश्च विख्याता मधुधेनुस्तथापरा सप्तमी शर्कराधेनुर्दधिधेनुस्तथाष्टमी रसधेनुश्च नवमी दशमी स्यात्स्वरूपतः कुम्भाः स्युर्द्रवधेनूनामितरासां तु राशयः सुवर्णधेनुमप्यत्र केचिदिच्छन्ति सूरयः नवनीतेन रत्नैश्च तथान्ये महर्षयः एतदेव विधानं स्यात्त एवोपस्कराः मताः मन्त्रावाहनसंयुक्ताः सदा पर्वणि पर्वणि यथाश्रद्धं प्रदातव्या भुक्तिमुक्तिफलप्रदाः गुडधेनुप्रसंगेन सर्वास्तव मयोदिताः अशेषयज्ञफलदाः सर्वाः पापहराः शुभाः व्रतानामुत्तमं यस्माद्विशोकद्वादशीव्रतं तदङ्गत्वेन चैवैषा गुडधेनुः प्रशस्यते अयने विषुवे चैव व्यतीपातेऽथवा पुनः गुडधेन्वादयो देया उपरागादिपर्वसु विशोकद्वादशी चैषा सर्वपापहरा शुभा यामुपोष्य नरो याति तद्विष्णोः परमं पदं इहलोके तु सौभाग्यमारोग्यायुष्यमेव च वैष्णवं पदमाप्नोति मरणे स्मरणं हरेः नृत्यगीतपरो नित्यं सोऽपि तत्फलमाप्नुयात् इति नरवर इत्थं यः शृणोति हि मर्त्यो मधुमुरनरकारेरर्चनं वाथ पश्येत् मतिमपि च नराणां यो ददातीह लोके वसति स विष्णुलोके पूज्यमानः सदैव ॥ इति विशोकद्वादशीव्रतम्

अथाश्विनशुक्लत्रयोदश्यामशोकत्रिरात्रव्रतं नारदीये इषशुक्लत्रयोदश्यां त्रिरात्राशोककव्रतम् हैमं त्वशोकं निर्माय पूजयित्वा यथाविधि उपवासपरा नारी नित्यं कुर्य्यात्प्रदक्षिणं अष्टोत्तरशतं विप्र मन्त्रेणानेन सादरं हरेण निर्मितः पूर्वं त्वमशोक कृपालुना लोकोपकारकरणं त्वमस्माद्दारिद्र्यविप्रियै ततस्तृतीये दिवसे प्राप्ते तस्मिन्वृषध्वजं समभ्यर्च्य विधानेन द्विजं संपूज्य दापयेत् एवं कृतव्रता नारी वैधव्यं नाप्नुयात्क्वचित् पुत्रपौत्रादिसहिता भर्तुः स्यादतिवल्लभा ॥ आश्विनशुक्लचतुर्दश्यां धर्मराजप्रतिमादानं नारदीये इषशुक्लचतुर्दश्यां धर्मराजं द्विजोत्तम गन्धाद्यैः सम्यगभ्यर्च्य सौवर्णं भोज्यवाडवं दद्यात्तस्मै धर्मराजः प्रीयतामिति नारद एवं यः कुरुते धर्मप्रति[illegible]दानमुत्तमं स भुक्त्वेह वरान्भोगान्दिवं यमालयं व्रजेत् ॥ आश्विनपौर्णमासीकृत्यान्युच्यन्ते तत्रादौ सस्वर्णघृतपूर्णकांस्यपात्रदानं मत्स्यपुराणे आश्विने पंचदश्यां तु यो दद्याद्धेमसंयुतं परां सिद्धिमवाप्नोति पुनरावृत्तिदुर्लभां हेमसंयुतं घृतपूर्णं कांस्यपात्रं दद्यादित्यर्थः तथा च विष्णुधर्मोत्तरे आश्वयुज्यां कांस्यपात्रं घृतपूर्णं द्विजातये ससुवर्णं तथा दत्वा दीप्ताग्निस्त्वभिजायते अत्राश्विनीयोगो न विवक्षितः तथा चानन्तरं पौर्णमासीषु सर्वासु मासर्क्षसहितासु च एतेषामेव दानानां फलं दशगुणं भवेत् महत्सर्वासु चैतासु फलमक्षयमश्नुते महत्सर्वासु दृश्येते सहितौ चेन्दुगीष्पती तत्र दानोपवासादि चाक्षय्यं परिकीर्तितमिति विष्णुवचनेन लक्षितो

सहितो माससंज्ञनिमित्तत्वेगो एतच्च पौर्णमासीसाधारणमेव बोध्यं अथैतस्मिन् शुक्लपक्षे दशम्यादिपौ
र्णमास्यंततिथिषु नवान्नेष्टिविधानं तत्राश्विनाधिकारे ब्रह्मपुराणे शुक्लपक्षे नवधान्ये पक्के ज्ञात्वा सु
शोभने सुतिथौ च सुनक्षत्रे मुहूर्ते च शुभे सति गत्वा क्षेत्रे विधानेन नृत्यवाद्यपुरःसरः तत्रैवं वह्निं
प्रज्वाल्य धान्यैः संस्तीर्य शास्त्रवित् स्वगृह्योक्तविधानेन प्रजां कुर्याद्विचक्षणः होमं कृत्वा ततः पश्चा
न्नयेद्धाम्यं विभूषिते पुष्पैर्वस्त्रैः फलैर्मूलैर्हस्त्यश्वरथसंयुतैः तेन देवान् पितॄंश्चैव सन्तर्पयित्वा यथाक्र
मं विभज्यान्नं यथाशक्त्या देवताः सस्यरक्षिणाः नववस्त्रावृतः स्रग्वी स्वनुलिप्तः स्वलंकृतः स्थितः पु
त्रैः सुबन्धुभिर्ब्रह्मघोषपुरःसरः शृण्वन् ब्रह्मवरं हृष्टो मंगलालम्भमादिमान् शाम्भीया दधिसंयुक्तं
नवं विप्राभिमंत्रितं पितॄनिति व्रीहिपाकसमये व्रीहिभिः श्राद्धं कुर्यादित्यर्थः हारीतोप्याह गृहमेधी
दृसेन यो व्रीहियवाभ्यां यजेत वनी वर्षासु श्यामाकैः गृही गृहस्थः वनी वानप्रस्थः वर्षासु श्रावणशु
क्लपक्षे इदं च श्राद्धं पार्वणं नित्यं व्रीहियवपाकौ चेति विष्णुना नित्यप्रकरणे पठनात् इदं च न वै व्रीहि
भिस्तदभावे पुरातनैस्तदभावे चान्नान्तरैरनिषिद्धैरवश्यं कार्यमिति गोभिलसूत्रटीकायां इदमानीस्व·
कर्मोक्तमाश्वलायनेन अथाश्वयुज्यामाश्वयुजीकर्मेति तत्र पूर्वाह्णव्यापिनी ग्राह्या दैवकर्मत्वात् आ
ग्रयणं तत्पर्वणि कार्यं शरद्याग्रयणं यत्पर्वणि स्यात्तदुच्यते इति शौनकोक्तेः तत्रापि शेषपर्वणि का
र्यमिति शास्त्रोक्तं तच्च दर्शस्य पौर्णमासस्य च प्राग्भवति दर्शस्य पूर्वमुक्तमाग्रयणं शाकपौर्णमा·
स्यां च तत् इति दीपकोक्तेः तत्राग्रयणं त्रेधा व्रीह्याग्रयणं यवाग्रयणं श्यामाकाग्रयणं चेति यथाका
लः श्रुतौ गृहमेधी व्रीहियवाभ्यां शरद्वसंतयोर्यजेत श्यामाकैर्नीवारैर्वर्षास्वापकालं विनान्नवान्नेन
पुराणैर्वेति तत्रापि श्यामाकाग्रयणमनित्यमितरेत्वनाहिताग्नेर्नित्ये यवाग्रयणं च कर्तव्यमिति
स्मार्तानां ज्ञातायुक्तत्वात् सूत्रे व्रीहियवदेवतासंबंधानामेव मंत्रेणाम्नातत्वाच्च आहिताग्नेस्तु यवाग्रय
णस्याप्यतिनियतं अपि वा क्रिया यवेष्विति सूत्रात् यद्वा व्रीह्याग्रयणेन समानतंत्रता श्यामाकैस्तु प्र
स्तरं कुर्यात् यवाग्रयणं यदि वा तदपि समानतंत्रमित्यादिनाग्रयणास्ततो परिश्रमवतां सलभमि
न्यत्र ॥ इदं च पर्वाभावे देवनक्षत्रे कृत्तिकाविशाखान्ते कार्यमिति समयप्रदीपसारे उक्तं बौधायनीयके
शावस्वामिनाप्येवमुक्तं यदाश्विनपौर्णमास्यां क्रियते तदेककालत्वादाश्वयुजीकर्मणोस्य च समानतंत्र
ताभवति तदेतद्धृतिकृता पक्वबर्हिरिध्माज्येति सूत्रे स्पष्टमुक्तं एतत्प्रकरणे प्रायश्चित्तमुक्तं चंद्रिका·
यां कात्यायनः नित्ययाज्यात्यये चैव वैश्वदेवाहुयस्य च अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा वैश्वान
रायकर्तव्यश्चरुर्वैश्वानरो भवेत् कारिकायां अकृत्वाग्रयणं चैव नवान्नं यदि वा नरः वैश्वानराय कर्त
व्यश्चरुः पूर्णाहुतिस्तु वेति कृषिविधाने तु समिदारण्यमंत्रं च वर्षे वर्षे जपेच्च तं आग्रयणं यदाशून्यं
तदा संपूर्णमिति तदित्युक्तं एतच्चापदि मलमासे च कर्तव्यमन्यथा नेति शास्त्रोक्तं अन्योप्याहिताग्नेरादि·
विशेषः शौनकादेर्ज्ञेयः ब्रह्मपुराणे आश्वयुज्यां बालुकायां निकुंभो बालकार्णवात् आयाति सेन
यासार्द्धं कृत्वा युद्धं सुदारुणं तस्मात्तत्र नरैर्मार्गाः स्वगृहस्य समीपगाः शोभितव्याः प्रयत्नेन भूषित·
व्याश्च मंडलैः पुष्पार्घ्यफलधूपान्नसर्षपप्रकरैस्तथा वेश्मानि भूषितव्यानि नानारंगैश्च सर्वतः स
स्नातैरनुलिप्तैश्च नरैर्भाव्यं सबालकैः दिवा तत्र न भोक्तव्यं मानुषैश्च विवेकिभिः स्त्रीवृद्धमूर्खबालैश्च
भोक्तव्यं पूजितैः सुरैः पूज्यश्च सफलैः पात्रैस्तथा द्वारोर्ध्वभित्तिभिः द्वारोपांते प्रदीपाश्च संपूज्यो हव्य
वाहनः यवाक्षतहुतनोपेतैस्तंडुलैश्च सुतर्पितः संपूज्यतव्यः पूर्णेन्दुः पयसा पायसेन च रुद्रः सभा
र्यः स्कन्दश्च तथा नन्दीश्वरो मुनिः गोमद्भिः सुरभिः पूज्या नागा वह्निर्हुताशनः डोरभवह्निर्वरुणो राज
वह्निर्विनायकः पूज्यः साध्वेश्वरेवंतो महाविभवविस्तरैः ततः पूज्यो निकुंभस्तु समाषैस्तिलतंडुलैः स

गंधैर्मिर्हूतोपेतैः कृशरान्नैश्च भूरिभिः ब्राह्मणान्भोजयित्वा तु भोक्तव्यं मांसवर्जितं ततः प्रभातसमये
अनुलिप्तैः स्वलंकृतैः मंगलालंभनं कार्यं वह्निसंपूजनं तथा भोक्तव्यं ब्राह्मणैः सार्द्धं क्रीडितव्यं यथासुखं
तस्यां रात्र्यां व्यतीतायां द्वितीयायां समनंतरं प्रभाते कर्दमैस्तैस्तु क्रीडितव्यं पिशाचवत् निर्जलैश्चाथ सर्वत्र
रुद्रवत्सर्ववेश्मसु आनीय चाथ मित्राणि लेपनीयानि कर्दमैः कामाग्निजनकैर्नानावैः स्त्रीपुंलिंगानुवादिभिः
वाचा पैशाचमाचारं कीर्तयद्भिरितस्ततः तस्मिन्नहनि पूर्वाह्णे निर्भयस्यानुयायिनः क्रांतवेषाः पिशाचाश्च
प्रविशंति नरांश्च तान् अपराह्णे ततः स्नात्वा सम्यक्स्नागाव्हे निर्वधुवत् दर्पाभिमानदोषेण तत्र ये नागतान
राः न पूजयंति मोहेन क्रीडनं नैव कुर्वते तान्निर्दहंति ते कोपात्पिशाचा रौद्रदर्शनाः ततः स्नातैर्नरैः पूज्यो
देवो दामोदरो हरिः संपूज्य विप्रान्भोक्तव्यमनुलिप्तैः स्वलंकृतैः बंधुमित्रकलत्रैश्च सह भृत्यैर्यथाक्रमं त
तः प्रभृति षण्मासान्स्वेषु वेश्मसु मानवैः अग्निः सन्निहितः कार्यो रात्रौ सिद्धालकस्तथा मासं समग्रं देय।
प्रदीपो निःसंपृहा द्विरिति ॥ अस्यामेव पौर्णमास्यां कोजागरव्रतं ॥ नारदीये आश्विने मासि पू
र्णिमायां व्रतं कोजागराभिधं तत्र स्नातो विधानेन सोपवासो जितेंद्रियः लक्ष्मीमभ्यर्च्य सौवर्णीं च टेश्चाप्याथ
ताम्रजे मृण्मये वा सवस्त्रां नानोपचारैः पृथग्विधैः ततः सायंतने काले प्रदिते तारकाधिपे हैमानरौ
प्यान्मृण्मयान्वा घृतदीपान्प्रदीपयेत् लक्षं तदर्धमयुतं सहस्रं शतमेव वा घृतशर्करसंमिश्रं विपाच्य ब
हुपायसं वंशपात्रेषु संस्थाप्य कौमुद्यां शीतदीधितेः याममात्रेण तेनाथ लक्ष्म्यै तद्द्विनिवेदयेत् ततः संभो
जयेत्तेन विप्रान्भक्त्या शनैः शनैः सहैव जागरं कुर्यान्नृत्यगीतशुभंगलैः ततोऽरुणोदये स्नात्वा तां मूर्तिं
गुरवे र्पयेत् अस्यां रात्रौ महालक्ष्मीर्वराभयकरांबुजा निशीथे चरते नित्यं कोजागर्ति महीतले यस्मै वित्तं
प्रयच्छामि जाग्रते पूजकाय वै वर्षे वर्षे कृतं चैतद्व्रतं लक्ष्मीप्रतोषणं समृद्धिमेहि कीदृयाद्देहांते पारलौ
किकीमिति ॥ तथा च महार्णवे लैंगेपि आश्विने पौर्णमास्यां तु चरेज्जागरणं निशि कौमुदी सा समाख्या
ता कार्या लोकैर्विभूतये कौमुद्यां पूजयेल्लक्ष्मीमिंद्रमैरावणस्थितं सुगंधिभिर्भक्त्यद्यै रात्रौ जागरणं च
रेत् तथा निशीथे वरदा लक्ष्मीः कोजागर्तीतिवादिनी यस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां करोति यः
नारिकेलैश्च पिष्टकैः पितृदेवान्समर्चयेत् बंधूंश्च प्रीणयेत्तेन स्वयं तदशनी भवेत् मदनरत्ने नारिकेलो
दकं पीत्वाक्षैर्जागरणं निशि तस्मै वित्तं प्रयच्छामि यो जागर्ति महीतले इदं कोजागरव्रतं परदिने पूर्णिमा
प्रदोषे निशीथे चोभयव्यापिनी तद्दिने कार्या यदा तु पूर्वेद्युर्निशीथव्यापिनी तदा पूर्वा नक्तादिव्रतवद्रहो
रात्रयोगो विशिष्यते इति परेद्युः नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते इति वचनात् लक्ष्मीपूजामंत्र
स्तु नमस्ते सर्वभूतानां वरदासि हरिप्रिये या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात् इंद्रपूजामंत्रस्तु
विचित्रैरावतस्थाय पौलोम्यालिंगिताय च भास्वत्कुलिशहस्ताय सहस्राक्षाय ते नमः यवाक्षतघृतोपे
तैरित्यत्र यवानां पृथगुपादानात् अक्षतपदं तंडुलविशेषपरं एवमन्यत्राप्यनुसंधेयं लक्ष्मीद्व्यतिरिक्ता
र्थमित्यादि सुरपूजनं पूर्वोक्ते स्त्री वृद्धपालकैस्तु भोक्तव्यं पूजितैः सुरैरित्यत्र पूर्वाह्णस्य पूर्वाह्ण एव कुर्वीत
इत्यादिवाक्यात् पूजाकर्तव्यव्रते भोजनस्य तदुत्तरस्य च ततः शरीरस्रोतोभ्यो मलपिस्यंदवित्त्वात् अ
न्नादीनां प्रवेशाच्चास्मादशुचिर्विशेषत इति वाक्यादाचाराच्च शातैः दिवा तत्र न भोक्तव्यमित्यादि निषिद्ध।
दिवाभोजनस्त्रीशूद्रादिगोचरत्वात् दिवा नक्तमात्रविधौ वाक्यैकवाक्यत्वं च अन्यथा दिवोद्गमित्यादि पू
जने दिवा न पूजोत्तरकालीनभोजनं च विधेयमिति वाक्यभेदे विशिष्टविधौ विधिगोचरत्वलक्षणायाः प्र
संगात् न च कालांतरदीपदानस्य रात्रिकर्तव्यत्वविरोधः युगवत्तत्र कर्तव्या द्वादशैते महोत्सवा इत्यने
नैयोगपद्यविधानात् अन्येपि रात्रिकर्तव्या एवेति वाच्यं तत्रेति पदं तत्रेति पूर्वप्रक्रांतानामयुजे मात्रेय
रामर्शस्यावश्यकत्वे तत्रेति पदं तदुपस्थापकमेव लाघवात् एवमाकांक्षाविच्छेदं शांखवायैरवो।

नित्यैर्वृत्यगीतैश्च शालिना वह्निपार्श्वगतेनैवाक्षस्य सन्निसाहचर्य्यात् रात्रिकालीनत्वेनोक्तं य
लुक्तं संभवतद्दर्श्यं रात्रौ निकुंभादिपूजादर्शनोद्भवनेन तत्रानुपयुक्तमेवेति स्कांदेपि आश्विनकोजा
गरं नाम व्रतं नाम्नुत्तमं व्रतं यत्कृत्वा समवाप्नोति जंतुर्लोकाननुत्तमान् पूर्णिमाश्वयुजे मासि कौमु
दी परिकीर्त्तिता तत्राराध्य महालक्ष्मीमिंद्रं चैरावतास्थितं उपवासं प्रकुर्वीत दीपान्दद्याच्च भक्तितः
लक्षं तदर्धमयुतं सहस्रं शतमेव वा घृतेन दीपयेद्दीपांस्तिलतैलेन वा व्रती रात्रौ जागरणं कुर्य्यान्नृ
त्यगीतपुरःसरं यथाविभवतो देयाः पुरवीथिषु दीपिकाः देवतायतने चैव आरामेषु गृहेषु च ततः
प्रभाते सुस्नातः संपूज्य च शतक्रतुं ब्राह्मणान्भोजयेत्क्षीरघृतशर्करपायसैः वासोभिर्दक्षिणाभि
श्च सवस्त्रान्पूजयेद्द्विजान् यथाशक्ति च दातव्या दीपाः स्वर्णविनिर्मिताः एवं निर्वर्त्य विधिवद्व्रतपार
णमाचरेत् व्रतस्यास्य प्रभावेन कल्पानेवाप्यसंख्यकान् अप्सरोभिः परिवृतः स्वर्गलोके महीयते
इह चायुष्यमारोग्यं पुत्रपौत्रादिसंपदः लभते व्रतमाहात्म्यात्कुलश्रेष्ठं गणोत्तरं निशीथे वरदा ल
क्ष्मीः कोजागर्तीति भाषिणी जगत्यभ्रमते तस्यां लोकचेष्टावलोकिनी नालिकेरोदकं पीत्वा अक्षक्री
डां समाचरेत् तस्मै वित्तं प्रयच्छामि कोजागर्ति महीतले ॥ इति स्कांदे आश्विन्यां पौर्णमास्यां कोजाग
रव्रतम् ॥ अस्योद्यापनं तिथ्यादि संकीर्त्य आत्मनः सकुलस्य च अखंडितलक्ष्मीप्राप्तिपूर्वकसु
खादिप्राप्तये श्रीमहालक्ष्मीमहेंद्रयोः प्रीत्यर्थमाचरितकोजागरव्रतोद्यापनं करिष्ये तत्रादावाचार्य्य
वरणादिविधानं कृत्वा गणेशपूजादिमंडलपूजांतं विधाय ततो लक्ष्मीपूजनमिंद्रपूजनं च विधा
य परितो दीपान् घृतेन तिलतैलेन लक्षमयुतं सहस्रं तदर्धं शतं वा दीपान्यथाशक्ति वीथिषु चतुष्प
थे वा प्रज्वाल्य नारिकेलोदकं प्राश्य अक्षैर्दीव्येत् एवं रात्रिमुत्सवेन नीत्वा प्रातः अग्निं प्रतिष्ठाप्य अन्वा
दध्यात् ध्यानं लक्ष्मीमिंद्रं च प्रत्येकं सहस्रसंख्याहुतिभिः ब्रह्मादिदेवताग्रहान् लोकपालांश्चैकैक
याहुत्या यथाशक्ति हुत्वा आचार्य्यं संपूज्य सौवर्णं राजतं वा दीपं सुवर्णवर्तिसहितं सदक्षिणं दत्वा
प्रतिमामप्याचार्याय दत्वा घृतशर्करादिना ब्राह्मणान्संतर्प्य तेभ्यो दक्षिणां दत्वा आशिषो गृहीत्वा
प्राय्यादिकं यथाशक्ति दत्वा भूयसीं दक्षिणां दत्वेष्टजनैः सह भुंजीत ॥ इति जागरव्रतोद्यापनं ॥
अत्राश्वयुज्यां गजनीराजनं कार्य्यं तच्च वाजिनीराजनवदिति संप्रदायात् ॥ अथाश्विनपौर्णमास्यां
नारदीयपुराणदानमुक्तं माहात्म्ये पंचविंशतिसाहस्रं नारदीयमथोच्यते व्रतीषपंचदश्यां तु दा
पाढेनु समन्वितं परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभात् नारदीये यस्त्वेतदिषपूर्णिमायां धेनूनां
समकान्वितं प्रदद्याद्द्विजवर्याय स लभेन्मोक्षमेव चेति तुलसंक्रांतौ वामनपुराणदानं नारदीये
एवं परंपराप्राप्तं पुराणं वामनं शुभं लिखित्वैतत्पुराणं तु यः शारद्विषुवे र्पयेत् विप्राय वेदविदुषे घृ
तः धेनुसमान्वितं स समुद्धृत्य नरकात्पितॄन्स्वर्गं नयेत्स्वकान् देहांते भुक्तभोगो सौ याति विष्णोः प
रं पदम् ॥ इति नारदीयवामनपुराणयोर्दानं ॥ स्वस्ति श्रीरणवीरसिंहधरणीपालो वदान्या
ग्रणीः १ रणवीरसिंहभूपेशकारिते कृत्यसागरे अभूदाश्विनकृत्यानां रम्यो रत्नसमुच्चयः २
इति श्रीमत्सूर्यवंशावतंसरघुवंशतिलकश्रीरणवीरसिंहमहाराजकारिते कृत्यरत्नाकरे आश्वि
नमासकृत्यरत्नसमुच्चयः ॥ संवत् १९ २५ आश्विनप्रविष्टे २७

॥ ॐ अथ कार्त्तिकमासकृत्यनिर्णयः तत्रादौ तुलासंक्रमे प्राक्परा दश घटिकाः पुण्यकालः मध्या
विषुवतावुक्तौ इति सामान्यवचनात् रात्रौ संक्रमे तु पूर्वोक्तसंक्रमनिर्णयो ज्ञेयः कार्त्तिकमासस्य स्नानदानव्रतादा
वति प्राशस्त्यमुक्तं नारदीये एकतः सर्वतीर्थानि सर्वे यज्ञाः सदक्षिणाः अन्यतः कार्त्तिको मासः सर्वपुण्याधि
को मतः सुवर्णमेरुतुल्यानि सर्वदानानि चैकतः एकतः कार्त्तिको मासः सदा दामोदरप्रियः अव्रतेन क्षिपेद्य
स्तु मासं दामोदरप्रियं तिर्यग्योनिमवाप्नोति सर्वधर्मबहिष्कृतः अत्र विष्णुव्रतप्रशंसा तत्रैव व्रतानामिह स
र्वेषामेकजन्मानुगं फलं इह विष्णुव्रतानां हि फलं जन्मशताधिकं यतिश्च विधवा चैव विशेषेण वनाश्रमी
कार्त्तिके नरकं याति स्नानदानव्रतैर्विना तथा जन्मप्रभृति यत्पुण्यं विधिवत्समुपार्जितं भस्मीभवति तत्स
र्वमकृत्वा कार्त्तिके व्रतं कार्त्तिके नार्चितो विष्णुर्भक्तियोगेन यैर्नरैः नरकांस्ते गमिष्यन्ति यमदूतैः प्रपीडि
ताः अथ कार्त्तिकस्नानं तुलामकरमेषेषु प्रातःस्नानं विधीयते हविष्यं ब्रह्मचर्यं च महापातकनाशनं
अत्र सौरमास उक्तः प्राच्यास्त्वेतदेवाद्रियन्ते दाक्षिणात्यास्तु आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत् का
र्त्तिकस्य व्रतानीह तस्यां वै प्रारभेत्सुधीरिति पाद्मोक्तेः भार्गवार्चने प्रारभ्यैकादशीं शुक्लामाश्विनस्य तु मा
नवः प्रातःस्नानं प्रकुर्वीत यावत्कार्त्तिकभास्करः इति विष्णुधर्मोक्तेः हेमाद्रावादित्यपुराणे च पूर्णेवाश्व
युजे मासि पौर्णमास्यां समाहित इत्युक्त्वा मासं समग्रं हरिणा च समाप्यते कार्त्तिकपौर्णमास्यामिति पौर्ण
मास्यां समापयेदित्याह मदनपारिजाते विष्णुः कार्त्तिकं सकलं मासं प्रातःस्नायी जितेन्द्रियः जपन्ह
विष्यभुग्दान्तः सर्वपापैः प्रमुच्यते विष्णुः कार्त्तिकोऽग्निदैवत्योऽग्निर्देवानां मुखं तस्मात्कार्त्तिके मासि बहिःस्ना
यी गायत्रीजपनिरतः सकृदेव हविष्याशी संवत्सरकृतात्पापात्पूतो भवति अत्र प्रातःकालो नोक्त इत्यतो मध्या
ह्नस्नानेपीदं फलं बहिर्ग्रामाद्गृहाद्वा कार्त्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः जपन्हविष्यभुक् शान्तः स
र्वपापैः प्रमुच्यते नित्यस्नानं प्रातःस्नानमिति शङ्खोक्तेः आचाराच्च सकलमासमित्यनेनैव प्रत्याह्निके प्रा
प्ते नित्यपदवैयर्थ्यापत्तिः अत्र स्नानं प्रधानं हविष्यभोजनादिकमङ्गमिति संप्रदायः अत्र देशविशेषः का
र्त्तिकं प्रक्रम्य कुरुक्षेत्रे कोटिगुणो गंगायामपि तत्समः दुर्लभः कार्त्तिको विप्र मथुरायां नृणामिह यत्रार्चितः
स्वकं रूपं भक्तेभ्यः संप्रयच्छतीति इदं च स्नानं काशीस्थपंचनद्यामतिप्रशस्तं शतं समा यैस्तु स्नानैर्यत्प्रा
प्यते फलं तत्कार्त्तिके पंचनदे सकृत्स्नानेन लभ्यते कार्त्तिके बिन्दुतीर्थे यो ब्रह्मचर्यपरायणः स्नास्यत्यनु
दिते भानौ भानुजातस्य भीः कुत इति तथा च काशीखण्डे कार्त्तिके मे बिन्दुयात्रा कृता यैर्भक्तितत्परैः बिन्दुती
र्थकृतस्नानैस्तेषां मुक्तिर्न दूरतः भानुजो यमः स्नानमंत्रस्तत्रैव कार्त्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्द
न प्रीत्यर्थं तव देवेश दामोदर मया सह मया सह श्रिया सहेत्यर्थः इमं मंत्रं समुच्चार्य मौनी स्नायाद्व्रती नर इति
अर्घ्यमंत्रोपि तत्रैव व्रतिनः कार्त्तिके मासि स्नातस्य विधिवन्मम गृहाणार्घ्यं मया दत्तं दनुजेन्द्रनिषूदन नित्यनै
मित्तिके कृष्ण कार्त्तिके पापनाशन गृहाणार्घ्यं मया दत्तं राधया सहितो हरे इमौ मंत्रौ समुच्चार्य यो नरोऽर्घ्यं प्रयच्छ
ति सुवर्णरत्नपुष्पाणां पूर्णांशेनैव पुण्यवान् सुवर्णरत्नपृथिवी तेन दत्ता न संशय इति एवं संपूर्णस्नानाशक्तौ
त्र्यहं स्नायात् वाराणस्यां पंचनदे त्र्यहं स्नातस्तु कार्त्तिके अमी हि पुण्यवपुषः पुण्यभाजोऽतिनिर्मलाः अथ
मालाधारणं स्कान्दे द्वारिकामाहात्म्ये निवेद्य विष्णवे मालां तुलसीकाष्ठसंभवां वहते यो नरो भक्त्या तस्य नै
वास्ति पातकं न जह्यात्तुलसीमालां धात्रीमालां विशेषतः महापातकसंहर्त्रीं धर्मकामार्थदायिनीं विष्णुध
र्मे स्पृशेत् यानि लोमानि धात्रीमालाकलेवरं तावद्वर्षसहस्राणि वैकुण्ठे वसतिर्भवेत् मालायुग्मं।

तयोर्नित्यं धात्रीतुलसिसंभवं वहते कंठदेशे यः कल्पकोटिं दिवं वसेत् तुलसीकाष्ठमालामंत्रः ॥ तुलसीका
ष्ठसंभूते माले हरिजनप्रिये बिभर्मि त्वामहं कंठे कुरु मां कृष्णवल्लभं एवं संप्रार्थ्य विधिवन्मालां कृष्णगलेऽर्पितां
धारयेत्कार्तिके मासि स गच्छेद्वैष्णवं पदमिति अत्र मूलं चिंत्यं। अथ पुष्पनिवेदनं। भार्गवार्चनदीपिकायां। नृसिंह
पुराणे ॥ अगस्त्यकुसुमैर्देवं योऽर्चयेच्च जनार्दनं दर्शनात्तस्य देवस्य नरकं नाप्नुते नरः विहाय सर्वपुष्पाणि मु
निपुष्पेण केशवं कार्तिके योऽर्चयेद्भक्त्या वाजपेयफलं लभेत् स्कांदे कार्तिकमाहात्म्ये ॥ मालतीमालया वि
ष्णुः केतक्या चैव पूजितः समाः सहस्रं संप्रीतो भवेद्वै मधुसूदनः तथा। कार्तिके केशवीपूजा येषां नाम्नां स्मृतेः कृ
ता तेनिर्भर्त्स्य रवेः पुत्रं वसंति त्रिदिवे सदा तथा च। तुलसीदलशतेन कार्तिके योऽर्चयेद्धरिं पत्रे पत्रे मुनिश्रे
ष्ठ लभते मौक्तिकं फलं तथा च स्कांदे। कार्तिकमाहात्म्ये। धात्रीफलविलिप्तांगो धात्रीफलविभूषणः धात्रीफ
लकृताहारो नरो नारायणो भवेत्। तच्छायायां तु यः कुर्यात् पिंडदानं महामुने ॥ मुक्तिं प्रयांति पितरः
प्रसादान्माधवस्य तु धात्रीछायां समाश्रित्य योऽर्चयेच्चक्रधारिणं पुष्पे पुष्पेऽश्वमेधस्य फलं प्राप्नोति मानवः तथा
स्कांदे। कार्तिके मासि विप्रेंद्र धात्रीवृक्षोपशोभिते वने दामोदरं विष्णुं चित्राद्भिस्तोषयेद्विभुं मूलेन पायसेनाथ होमं कु
र्यात् द्विजसत्तमः ब्राह्मणान्भोजयेद्भक्त्या स्वयं भुंजीत बंधुभिरिति पद्मपुराणे। इत्येवं च यो दद्यात्कार्तिके मासि पार्थिव
सर्वान्कामानवाप्नोति नित्यं स्वर्गतिभाग्भवेत् अथ कार्तिके वर्ज्यान्याह ॥ पाद्मे कार्तिकमाहात्म्ये। राजिकामाद
कं चैव नैवाद्यात्कार्तिके व्रती द्विदलं तिलतैलं च तथान्नमतिदूषितं स्कांदेपि। कार्तिके वर्जयेत्तद्वद्द्विदलं बहुबी
जकं माषमुद्गमसूराश्च चणकाश्च कुलत्थकाः निष्पावा राजमाषाश्च आढक्यो द्विदलं स्मृतं नूतनान्यपि जीर्णा
नि सर्वाण्येतानि वर्जयेत् अत्र उत्पत्तिसमये दलद्वयं भवति। तस्य तत्पूर्वगत्वाद्द्विदलशब्दार्थ इत्याहुः उदाहरंति
च ॥ बीजमेव समुद्भूतं द्विदलं चांकुरं विना दृश्यते यत्र सस्येषु द्विदलं तन्निगद्यत इति। अन्ये तु लक्षणायां मानाभा
वात्वचनं तस्य निर्मूलत्वात् द्विदलात्मकं यस्य स्वरूपं तदेव वर्जयेदित्याहुः तथा नारदीये ॥ कार्तिके वर्जयेत्तैलं का
र्तिके वर्जयेन्मधु कार्तिके वर्जयेत्कांस्यं कार्तिके शुक्तसंस्थितं। कांस्यं कांस्यपात्रभोजनं शुक्तं पर्युषितलव
णकशाकाः तथा च ॥ निष्पावान्राजमाषांश्च सुप्ते देवे जनार्दने ये भक्षयंति राजेंद्र चांडालादधिका हि ते कार्तिके
तु विशेषेण राजमाषांस्तु भक्षयेत् निष्पावान्राजशार्दूल यावदाभूतनारकी कदंबानि पटोलानि वृंताकसहिता
नि च न त्यजेत्कार्तिके मासि यावदाभूतनारकी एतानि भक्षयेद्यस्तु सुप्ते देवे जनार्दने शतजन्मार्जितं पुण्यं दह
ते नात्र संशयः इति भविष्योत्तरादिष्टं तथा ॥ कार्तिके कृच्छ्रसेवी यः प्राजापत्यपरोऽथवा एकांतरोपवासी वा त्रि
रात्रोपोषितोऽपि वा षड्द्वादशपक्षं वा मासं वा वरवर्णिनि एकभक्तेन नक्तेन तथैवायाचितेन च उपवासेन भै
क्षेण व्रजते परमं पदमिति। अन्येपि नियमाः प्राक्तानुमासपारंभोक्तास्ते कार्तिके यथाशक्तिरवश्यं सेव्याः
अत्र यथाहमुक्तं स्कांदे ॥ व्रीहयो यवगोधूमाः प्रियंगुतिलशालयः एते हि सात्विकाः प्रोक्ता भोगमोक्षप्रदायकाः काशी
खंडे। ऊर्जे यवान्नमश्नीयादेकान्नमथवा पुनः वृंताकं सूरणं चैव शूकशिंबिं च वर्जयेत् एषीचंद्रोदये। अव्रतेन द्वि
ये यस्तु मासं दामोदरप्रियं तिर्यग्योनिमवाप्नोति नात्र कार्या विचारणा मांसवर्जनं महाभारते। मासि मास्यश्वमेधेन।
यो यजेत शतं समाः न खादयति यो मांसं सममेतद्युधिष्ठिर यस्तु वर्षशतं पूर्णं तपस्तप्येत्सुदारुणं तथैकं वर्जये
न्मांसं समं स्यात्तु युधिष्ठिर कौमुदे तु विशेषेण शुक्लपक्षे नराधिप वर्जयेदत्र मांसानि धर्मो ह्यत्र विधीयते नंदि
पुराणे। यो नरः कार्तिके मासे मांसं तु परिवर्जयेत् संवत्सरस्य लभते फलं मांसविवर्जनात् तथा च। तथा जन्मस
हस्रैस्तु मानुष्यं प्राप्य दुर्लभं कार्तिके नार्चयेद्विष्णुं तस्य स्याद्यमयातना गवां कोटिप्रदानस्य स्वर्णकोटिश्च यत्फ
लं तत्फलं कोटिगुणितमेकाहं केशवार्चनात् ददाति वैष्णवान्पुत्रान्भक्तिं चाव्यभिचारिणीं यः करोति नरो
भक्त्या कार्तिके पत्रभोजनं न दुर्गतिमवाप्नोति यावदिंद्राश्चतुर्दश भोजनं ब्रह्मपत्रेषु महापातकनाशनं
कार्तिके मुक्तिदं प्रोक्तं ब्रह्मपत्रेषु भोजनं ब्रह्मपत्रं पलाशपत्रं। वाराहपुराणे। न शूद्रे कार्तिकं कुर्याद्विशेषेण·

तु कार्त्तिकी तीर्थे तु कार्त्तिकं कुर्य्यात्सर्वयत्नेन भावित इति अत्र युद्धत्मभिह्यत्र देवीपुराणे ॥ कार्त्तिके शुक्ले
श्रेष्ठं गंगायमुनसंगमे अथ कार्त्तिके दीपदाने भविष्यपुराणे ॥ यः कुर्यात्कार्त्तिके मासि शोभनां दीपमालि-
कां चंडिकायतने भक्त्या स दिसूर्योपमो व्रजेत् चंडिकायतनं मञ्जोपलक्षणं। विष्ण्वादीनामप्यायतने शु
कार्त्तिके दीपदानं कार्य्यं तथा ॥ ददाति कार्त्तिके यस्तु भगायतने दीपकं जातिस्मरत्वं शक्तत्वं प्राज्ञत्वं सर्व-
ज्ञत्वं अथवा इतेन्द्रियत्वं च समाप्नोति न संशय इति विष्णुधर्मोत्तरे कार्त्तिके दीपदानेन सर्वज्ञोज्ज्वल्यमा-
प्नुयात् ब्रह्मोवाच दीपं प्रयच्छति नरः सूर्यस्यायतने तु यः तेजसा रविसंकाशः सर्वयज्ञफलं लभे-
त् कार्त्तिके तु विशेषेण कौमुदे मासि दीपकं दत्वा यत्फलमाप्नोति न तदन्येन लभ्यते कार्त्तिके तु वि-
शेषेण कौमुदे मासि दीपकं दत्वा तु सूर्यायतने न याति नरकं नरः एषः प्रभावो दीपस्य कार्त्तिके मा-
सि सुव्रत अर्कायतनदीपस्य एतद्गुद्ववचो यथा ॥ स सर्वकालं च तस्मान्मेधावी दीपदो नरः त्रायते
नरकं नापि न मस्संज्ञं न पश्यति षष्ठीवाष्टममीवापि प्रतिपद्यं तु यो नरः दीपं ददाति हत्वा च यत्फलं तन्नि-
बोधत कार्बुरं मणिमुक्ताढ्यं मनोज्ञमतिशोभनं दीपमालाकुलं दिव्यं विमानमधिरोहति कार्बुरं कां-
चनमित्यर्थः। तस्माद्दायतने भानोर्दीपं दद्यात्सदाच्युत। तैलप्रदत्तं न द्विसेन न कुर्यान्नैलवर्जितं। कुर्याच्च
दीपं हत्वा च मूषकोंऽथ संजायते तस्माद्दूयान्न च हरेच्छ्रेयोर्थी दीपकं नरः तथा च गौडाः। उच्चैः प्रदीप-
माकाशे यो दद्याद्धिमवे नरः स सर्वकुलमुद्धृत्य विष्णुलोकमवाप्नुयात् कार्त्तिकप्रकरणात्। यश्च के-
शवमुद्दिश्य दीपं दद्याच्च कार्त्तिके आकाशस्थं ज्वलंतं च शृणु तस्यापि यत्फलं धनधान्यसमृद्धश्च पुत्रवानी-
श्वरो भवेत् लोचने च शुभे तस्य विज्ञानं पि प्रजायते तथा। तुलायां तिलतैलेन सायं संध्यासमागमे आकाशदीपं यो
दद्यान्मासमेकं निरंतरं श्रीकामो यः श्रीपतये सश्रिया न वियुज्यते महतीं श्रियमाप्नोति रूपसौभाग्यसंपदमिति
। तत्तिथिश्चादित्यपुराणे। दिवाकरेस्ताचलमौलिभूते गृहांगणे तु पुरुषप्रमाणं यूपाकृतिं यज्ञियवृक्षजातामा-
रोप्य भूमावथ तस्य मूर्ध्नि कृत्वा च तत्सोष्टदलाकृतीस्तु याभिर्भवेदष्टदिशानुचारी तत्कर्णिकायां तु महाप्रका-
शो दीपः प्रदेयो दलगास्तथाष्टौ निवेद्य धर्माय हराय भूम्यै दामोदरायाप्यथ धर्मराज्ञे प्रजापतिभ्यस्त्वथवापि-
तृभ्यः प्रेतेभ्य एवाथ च तः स्थितेभ्यः अपरार्के त्वो मंत्रः। दामोदराय नभसि तुलया लोलया सह प्रदीपं ते प्रय-
च्छामि नमोऽनंताय वेधसे अत्रैकभक्तव्रतं। महाभारते। कार्त्तिकं तु नरो मासं यः कुर्यादेकभोजनं शूरश्च बहु-
भार्य्यश्च कीर्त्तिमांश्चैव जायते भविष्यपुराणे। एकभक्तेन या नारी कार्त्तिकं तु क्षिपेद्यदि क्षमाहिंसादिनियमैः
संयता व्रतचारिणी गुडादिमिश्रं शाल्यन्नं भास्कराय निवेदयेत् पत्तयोरुभयोः स्नात्वा श्रद्धया परया विना प्र-
ख्याणिकरवीराणि गुग्गुलुं साज्यमाददात् सप्तम्यां वाथ षष्ठ्यां वा उपवासरतिर्भवेत् इंद्रनीलप्रतीकाशैरालो-
कैः सर्वकालिकैः नारीयुगशतैः सार्द्धैः सूर्यलोके महीयते तस्मादागम्य लोकेस्मिन्यथेष्टं विंदते पतिम् इत्ये-
वं सर्वधर्मज्ञ विधिस्तुल्यः प्रकीर्त्तितः एकभक्तोपवासस्य फलं तु सदृशं भवेत् स्कंदपुराणे। यो नरः कार्त्तिकं
मासमेकभक्तेन तिष्ठति सोश्वमेधफलं प्राप्य वह्निलोके महीयते कार्त्तिकमासोऽग्निदैवत्य इति विष्णुना का-
र्त्तिकस्याग्निदैवतमुक्तं विष्णुधर्मोत्तरे। द्विजवेश्मनि यो दद्यात्कार्त्तिके मासि दीपकं अग्निष्टोमफलं तस्य प्रवदं-
ति मनीषिणः भविष्यपुराणे। यः कुर्यात्कार्त्तिके मासि शोभनां दीपमालिकां सप्तम्यामथवाषष्ठ्याममावस्या-
मथापि वा भास्करायुतसंकाशस्तेजसाभासयन्दिशः दिव्याभरणसंपन्नः कुलमुद्धृत्य सर्वशः दीपहस्तं
समुद्धृत्य भास्करस्यालये शुभे सर्वलोकमये वीरवीरलोके महीयते भविष्यपुराणे। हुतदीपप्रदानेन शि-
वाय शतयोजनं विमानं लभते दिव्यं सूर्यकोटिसमप्रभं यः कुर्यात्कार्त्तिके मासि शोभनां दीपमालिकां हु-
ते न च चतुर्दश्याममावस्यां विशेषतः यावद्दीपस्य संख्या वै घृतेनापूर्य्य बोधिता तावद्युगसहस्राणि हरलोके
महीयते इति शिववाक्यं स्कंदपुराणे ॥ प्रदीपमालां यः कुर्यात्कार्त्तिके मासि वैमम अवसाने तु दीपानां आल-

णान्मोजयेत्सुविः प्राजापत्यंचलभते दीप्यतेचरविर्यथा यः कुर्यात्कार्तिके मासि शोभनां दीपमालिकां चंडिका यतने भक्त्या सूर्यायतनके पुनः हुतेनक्रकृशार्दूलश्रमावसांतभक्तितः विशेषतो नवम्यां च भक्तिश्रद्धासमन्वितः यावंतो दीपसंघास्तु तैलेनापूर्य बोधिताः तावद्वर्षसहस्राणि दुर्गालोके महीयते अथ विष्णुपुराणोक्तं कार्तिककृत्यं ॥ मैत्रेय उवाच कार्तिकः खलु मासोयं सर्वदेवमयो महान् यानि कृच्छ्राणि चोक्तानि सर्वपापहराणि वै कृतानि मुनिभिस्तानि मनुजाधिप सर्वशः देवपितृमनुष्येभ्यो दत्तं हुतमथ स्तुतं तत्रानंतमक्षयंप्रोक्तं ब्रह्मणा लोककर्तृणा समभ्यर्च्य हरिं भक्त्या दीपं दद्याद्दिवानिशं सर्वपापविशुद्धात्मा नरो यात्यभवं नृप इति विष्णुधर्मोक्तं कार्तिककृत्यं । अथादित्यपुराणोक्तं दीपदानं ॥ सनत्कुमार उवाच दामोदरस्य वाक्यं तु श्रुत्वा प्रश्नं चकार सः केनोपायेन भगवन्नरश्चैत महन्नमः नाकलोकसमं सौख्यं प्रेतलोके भवेत्कथं भगवन्देवकीपुत्रस्तदा वाक्यस्योत्तरं ददौ रहस्यं परमं गुह्यं मनोरथफलप्रदं भोः शृणुष्व महाबुद्धे यत्त्वं वक्ष्यामि तेनघ पूर्णायामाश्वयुजे मासि पौर्णमास्यां समाहितः प्रथमे च निशारंभे मनोवाक्कायसंयतः नमः पितृभ्यः प्रेतेभ्यो नमो धर्माय विष्णवे नमो यमाय रुद्राय कांतारपतये नमः दद्यादनेन मंत्रेण दीपश्राद्धं समाहित इत्यादि अनेन दीपेन मनोरथानां संप्राप्तिरस्तीति न संशयोत्र । एतानि चोक्त्वा कतिचिद्वचांसि दामोदरश्चांतरितो बभूवेत्यादित्यपुराणोक्तं प्रदीपव्रतं अथात्र जयावाप्तिव्रतं विष्णुधर्मोत्तरे ॥ वज्र उवाच भगवन्कर्मणा केन सर्वत्र जयमाप्नुयात् व्यवहारे रणे द्यूते विवादे च द्विजोत्तम जयावाप्तेः परं नास्ति सौख्यं लोकेषु सत्तम जयावाप्तिप्रदं सौख्यं तदस्मिन्व्रतमुच्यतां मार्कंडेय उवाच अस्य पुण्यामतीतायां प्रतिपत्प्रभृतिक्रमात् पूर्ववत्पूजयेद्देवं लोकनाथं त्रिविक्रमं त्रिरात्रांते तु कार्तिक्यां दद्याडत्ताणमुत्तमं सर्वसस्यधरं कृत्वा शक्त्या रत्नैरलंकृतं कृत्वा व्रतं मासमिदं यथोक्तं प्राप्नोति लोकं सुचिरं नृवीर उपोष्य कालं सुचिरं नृवीरः प्राप्नोति सर्वत्र जयं च लोके इति विष्णुधर्मोक्तं जयावाप्तिव्रतं नृपावाप्तिवदत्र पूजा अथ कृच्छ्रव्रतं ॥ सुपुण्ये कार्तिके मासि देवर्षिपितृसेविते क्रियमाणे व्रते नृणां स्वल्पेपि स्यान्महाफलं कृत्स्नः संवत्सरः पुण्यस्तस्माद्वर्षाः सुपूजिताः वर्षाभ्यः कार्तिकः पुण्यः कार्तिकाद्भीष्मपंचकं नैवेद्यं पुष्पधूपं च अर्चितं सुविलेपनं निवेद्य कार्तिके विष्णोः फलं सांवत्सरं फलं अतः कार्तिकमासाद्य सदैव शुभकांक्षिभिः हरिमुद्दिश्य कर्तव्यं स्वशक्त्या सुकरं व्रतं कार्तिकस्यासिते पक्षे वा शुभदा चतुर्दशी समुपोष्य नरो भक्त्या पूजयेद्गरुडध्वजं उपवासस्तु कर्तव्यो वारिमध्ये स्थितेन च जलकृच्छ्रमिदं कृत्वा विष्णुलोकं व्रजेन्नर इत्यादि । यथोक्तेन विधानेन कृच्छ्राणि समुपाचरेत् व्रतोपवासनियमैर्युक्तास्ते मुक्तिभागिनः इति विष्णुधर्मोत्तरे कृच्छ्रव्रतानि अथात्रैव देवीव्रतं ॥ ब्रह्मोवाच दीनाशी कार्तिके यस्तु देव्या भक्तिरतो नरः शाकयावकमेकाशी प्रातःस्नायी शिवारतः पूजयेत्तिलहोमस्तु मधुक्षीरघृतादिभिः कार्यस्तु देवीमंत्रेण शृणु पुण्यफलं हरे महापातकसंयुक्तो युक्तो वाप्युपपातकैः मुच्यते नात्र संदेहो यस्मात्सर्वगता शिवा इति देवीपुराणोक्तं कार्तिके देवीव्रतं वामनपुराणेपि ॥ रजतं कांचनं दीपान्मणिमुक्ताफलादिकं दामोदरस्य प्रीत्यर्थं प्रदद्यात्कार्तिके नरः अथ मासोपवासव्रतं कार्यं तदाश्विनशुक्लैकादशीमारभ्य कर्तव्यमासात्तत्रैव लिखितं अथ कार्तिकप्रतिपदायां कार्तिकमासव्रतनियमादीनामारंभः कार्यः तिथीशत्वाद्वह्निपूजाद्यपि कर्तव्यं नान्यदत्र विशेषकृत्यं एवं द्वितीयायामपि तिथीशत्वाद्ब्रह्मणः पूजाश्विनोर्यमस्यापि पूजादिकं कार्यं तृतीयायां गौरीपूजा व्रतादिकं यथाविहितं कार्यमिति दिक् कार्तिककृष्णचतुर्थ्यां कृत्यविशेषः संवत्सरप्रदीपे ॥ आश्विने कृष्णपक्षस्य चतुर्थ्यां रात्रियोगतः गणमेयेवस्थितः पूज्यो राजा दशरथस्तथा दुर्गा च तत्र संपूज्या सर्वसौख्यविवृद्धये अथाश्विनोत्थचांद्रेणेति तत्रैवोक्तं इयं प्रदोषव्यापिनी ग्राह्या उभयत्र तथात्वे पूर्वैवेति तत्रैवोक्तं अस्यामेव करकचतुर्थीव्रतं सा च चंद्रोदयव्यापिनी ग्राह्या उभयत्र तथात्वे संकल्पकालसत्त्वात्परा अत्र स्त्रीणामेवाधिकारः ।

तासामेवफलमुत्तेः अथव्रतविधिः मासपक्षाद्युल्लिख्यात्मनःसौभाग्यसौख्यपुत्रपौत्रादिसुस्थिरश्रीप्राप्तयेकरक
चतुर्थीव्रतंकरिष्ये गोमयोपलिप्तभूमौवटंपिप्पलंवोल्लिख्यतदधस्ताच्छिवंगणेशंषण्मुखयुक्तांगौरींचालिख्य
षोडशोपचारैःपूजयेत् तत्रमंत्रः॥ नमःशिवायैशर्वाण्यैसौभाग्यंसंततिंशुभां प्रयच्छभक्तियुक्तानांनारीणांहरवल्लभे
ततोनमोन्तमंत्रेणशिवषण्मुखयोःपूजाकार्या ततःसंपन्नान्नान्दशकरकान्ब्राह्मणेभ्योदद्यात् ततःपिष्टकनैवेद्यभो
जनंसर्वंनिवेदयेत् ततःचंद्रोदयोत्तरंचंद्रायार्घ्यंदद्यात्॥ क्षीरसागरसंभूतचंद्रलक्ष्मीसहोदर गृहाणार्घ्यंशशांके।
शरोहिणीसहितःप्रभो अथकथा। मांधातोवाच अर्जुनेतुगतेजेतुमिंद्रलोकगतिंप्रति विषण्णमानसास्तुद्रौप
दीसमन्वितंवत् अहोकिरीटिनाकर्मसमारब्धंमहत्तरं विघ्नप्रवणमेतद्धिबहवःपरिपंथिनः चिंतयित्वेतिसा
देवीकृष्णंसर्वहितंसंजगद्गुरुं भर्तुःप्रियंचिकीर्षंतीसापृच्छद्विघ्नवारणं द्रौपद्युवाच कथयस्वजगन्नाथव्रतमेकंसुदु
र्लभं यत्कृत्वायांतिविघ्नानिविजयस्तेजसःश्रियः श्रीकृष्णउवाच एतदेवमहाभागेपृष्टःशंभुःपुराकिलोमया यत
त्पृष्टंदेविपूर्वंपार्वत्याशंकरंप्रति तस्यास्तद्वचनंश्रुत्वाप्राहदेवोमहेश्वरः शृणुदेविवरारोहेवक्ष्यामित्वांमहेश्वरि य
तिविघ्नहरीत्याहकरकाख्याचतुर्थिका पार्वत्युवाच भगवन्कीदृशीप्रोक्ताचतुर्थीकरकाभिधा विधानंकीदृशंप्रोक्तं
केनेयंचपुराकृता ईश्वरउवाच शक्रप्रस्थपुरेरम्येविद्वज्जनसमाकुले स्वर्णरौप्यसमाकीर्णेरत्नप्राकारशोभिते दि
व्यनारीजनालोकवशीकृतजगत्त्रये वेदध्वनिसमायुक्तेस्वर्गादपिमनोरमे वेदधर्माद्विजस्तत्रवसन्वेदविदांव
रः पत्नीतस्यैवविप्रस्यनाम्नालीलावतीशुभा सास्वयंजनयामासपुत्रान्सप्तमितौजसः कन्यांवीरवतींनाम्नासर्व
लक्षणसंयुतां नीलोत्पलाभनयनांपूर्णेंदुसदृशाननां ततःकालेशुभदिनेविधिवत्तांद्विजोत्तमः ददौवेदवि
दुषेविप्रायविधिपूर्वकं अत्रांतरेतुसंप्राप्ताचतुर्थीकरकाभिधा वीरवत्यासमारब्धंव्रतंकामप्रदंशुभं क्रडा।
वोपिद्धुमंचक्रेगौरींतस्यतलेलिख्य शिवेनविघ्ननाथेनषण्मुखेनसमन्वितां गंधपुष्पाक्षतैर्गौरींपूजयामा
समंत्रतः नमःशिवायैशर्वाण्यैसौभाग्यंसंततिंशुभां प्रयच्छभक्तियुक्तानांनारीणांहरवल्लभे तस्याःपार्श्वेम
हादेवंविघ्ननाथंषडाननं पुनःपुष्पाक्षतैर्धूपैरानर्चवपृथक्पृथक् पक्वान्नान्दशसंपन्नान्सदीपान्करका
न्दश तथापिष्टकनैवेद्यंभोज्यंसर्वंन्यवेदयत् प्रतीक्षंतिस्थिताःसर्वाश्चंद्रायार्घ्यपरायणाः साबालाविक
लादीनात्तत्क्षुधापरिपीडिता निपपातमहीपृष्ठेरुरुदुर्बांधवास्तदा समाश्वास्यचतांतेवैमुखमभ्युक्ष्यवारि
णा तद्भ्रातात्वविचिंत्यैवमारुरोहमहावटं हस्तेनोल्कांसमादायज्वलंतींस्नेहपीडितः भगिन्यैदर्शयामासचं
द्रंप्राजोदितंतदा तद्दृष्ट्वाचातिमुत्सृज्यक्षुभुजेसुमनास्तदा चंद्रोदयंसमासाद्यअर्घ्यंदत्वाविधानतः तद्दोषे
णमृतस्तस्याःपतिर्धर्मसुदूषितः पतितंयाविधिंदृष्ट्वाशिवमभ्यर्च्यसापुनः व्रतंनिरशनंचक्रेयावत्संवत्स
रोगतः चक्रेःसंवत्सरेतीतेव्रतंतद्भ्रातृयोषितः पूर्वोक्तेनविधानेनसापिचक्रेशुभानना तदायाताशचीकन्या
सखीभिःपरिवारिता एतदेवव्रतंकर्तुमागताःस्वर्गलोकतः वीरवत्यातदाप्याप्तमगमज्ञापतःस्वयं दृष्ट्वा
तोमानुषीदेवीपप्रच्छसकलंशची तयापृष्टावीरवतीप्रोवाचविनयान्विता अहंपितृगृहेप्राप्तामृतोयंमेपतिः
प्रभुः नजानेकर्मणःकस्यफलंप्राप्तंमयाधुना ममभाग्यवशाद्देविप्रागतासिमहेश्वरि अनुगृहीष्वमांमात
जीवयाशुपतिंमम इंद्राण्युवाच त्वयापितृगृहेपूर्वंकृतंवैकरकाव्रतं दृष्टैवार्घ्यंत्वयादत्तोविनाचंद्रोदयंशुभे
तेनैवव्रतदोषेणपतिर्लोकांतरंगतः इदानींकुरुयत्नेनकरकाव्रतमुत्तमं पतिंतेजीवयिष्यामिव्रतस्यास्य
प्रभावतः कृष्णउवाच तस्यास्तद्वचनंश्रुत्वाव्रतंचक्रेविधानतः प्रसन्नाभवद्देवीशक्रस्यप्राणवल्लभा तया
व्रतेकृतेदेवीजलेनाभ्युक्ष्यतत्पतिं जीवयामासचेंद्राणीदेववद्बभूवसः ततश्चागाद्गृहंस्वीयंरेमेसापतिना
सह धनंधान्यंसुपुत्रांश्चदीर्घमायुश्चलब्धवान् तस्मात्त्वयापियत्नेनव्रतमेतद्विधीयतां सूतउवाच द्वैपाय
नवचःश्रुत्वाचकारद्रौपदीव्रतं तद्व्रतस्यप्रभावेणजित्वातान्कौरवान्रणे लेभिरेराज्यमतुलंधनधान्यसमा
मन्वितं अथोद्यापने आचम्य मासपक्षाद्युल्लिख्यात्मनःसौभाग्यपुत्रपौत्रादिसुस्थिरश्रीप्राप्तयेसपरिवारष

षण्मुखगणेशशिवसहितगौरीप्रीत्यर्थमाचरितकरकचतुर्थीव्रतोद्यापनं करिष्ये तत्रादावाचार्यं वृत्वा सर्वतो
भद्रे लिंगतोभद्रे वा कलशस्थापनं विधाय तत्र ताम्रादिपात्रे हैमीं गौरीशिवषण्मुखगणेशसहितां वटवृक्षतल
स्थितां संस्थाप्य षोडशोपचारैः पूजयेत् पूजामंत्रः॥ नमः शिवायै शर्वाण्यै सौभाग्यं संततिं शुभां प्रयच्छ भक्ति
युक्तानां नारीणां हरवल्लभे ॐ नमः शिवायै गणेशस्कंदहरसहितायै नमः। एताभ्यामेव मंत्राभ्यां सर्वोपचार
पूजां कुर्यात् रात्रौ गीतवाद्यादिभिर्जागरणं कुर्यात् प्रातः पुनः पूजां विधाय स्वगृह्योक्तविधिनाग्निप्रति
ष्ठाप्यान्वादध्यात् तत्र प्रधानं गौरीशिवस्कंदगणेशांश्च पायसाज्यतिलवटादिसमिद्भिः प्रत्येकमष्टो
त्तरसहस्राहुतिभिरष्टोत्तरशतसंख्याकाभिर्वा हुत्वा ब्रह्मादिदेवताननवग्रहदिक्पालादीनेकैकयाहुत्या
चरुसमिद्भिर्हुत्वा स्विष्टकृद्धोमान्ते आचार्यं संपूज्य प्रतिमासहितकलशं दत्वा ततः॥ करकं क्षीरसंपूर्णं तोय
पूर्णमथापि वा ददामि रत्नसंयुक्तं चिरंजीवतु मे पतिरिति सदक्षिणकरकान्दश सुवासिनीभ्यो यथाशक्ति द
द्यात् ततो व्रतसंपूर्त्यै शय्यादिदानं यथाशक्ति दत्वा सदन्नेन ब्राह्मणान्परितोष्याशिषो गृहीत्वा भूयसीं दक्षि
णां दद्यात् अशक्तौ चैकमेव करकं दद्यात्। घृतपूर्णं च करकं क्षीरपूर्णमथापि वा ददामि रत्नसंयुक्तं चिरंजी
वतु मे पतिः इति मंत्रेण करकान्दद्याद्द्विजसत्तमे सुवासिनीभ्यो दद्याद्वा दद्यात्ताभ्य एव च एवं व्रतं या
कुरुते नारी सौभाग्यकाम्यया सौभाग्यं पुत्रपौत्रादीन्लभते नात्र संशयः॥ इति श्रीवामनपुराणोक्तकरका
चतुर्थीव्रतोद्यापनं कार्तिकशुक्लपंचम्यां तिथित्वेन शेषादयो नागाः पूज्याः तथा चोक्तं पक्षद्वयगतास्
सर्वास्तु पंचमीषु तिथित्वेन। नागाः शेषादयः पूज्याः पंचम्यां पूजने भवेदिति अत्र षष्ठ्यां स्कंदपूजा तथा च
पक्षद्वयगतासु सर्वासु षष्ठीषु तिथित्वेन स्कंदं संपूजयेत् तदुक्तम् षष्ठ्यां पूजा गुहस्य चेति कार्तिकशुक्ल
सप्तमी वैकुंठकल्यादिः अत्रादिकल्यादिकल्योक्तकृत्यं तिथित्वेनादित्यपूजा तथा चोक्तं सप्तमीनिर्णये पक्ष
द्वयगतासु सर्वासु सप्तमीषु तिथित्वेनादित्यः पूज्यः सप्तम्यां भास्करस्येत्युक्तेः अस्यामेवाष्टम्यां दांपत्याष्टमीव्रतं
हेमाद्रौ भविष्योत्तरे॥ कार्तिके मासि विप्रेंद्र पुत्रकामो नरो मुने अष्टम्यां शुक्लपक्षस्य पूजयेद्विधिवन्नरः उमया स
हितं देवं कृत्वा दर्भमयं विभुं अस्यामेव मथुरावासिभी राधाकुंडे स्नानमरुणोदये सूर्योदये कार्यमिति मथुरासेतौ
ज्ञेयम् कार्तिककृष्णाष्टमी करकाभिधा सा महाराष्ट्रेषु प्रसिद्धा सापि चंद्रोदयव्यापिनी ग्राह्या अस्या विधानं करकच
तुर्थीवदिति अस्यामेव कार्तिककृष्णाष्टम्यां अहोयीदेवीव्रतं पद्मपुराणे कार्तिकमाहात्म्ये॥ पृथुरुवाच देवर्षिवद
तांश्रेष्ठ सर्ववेदार्थपारग तेनाहं प्रष्टुमिच्छामि त्वत्तः संदेहछेदक तादृशं व्रतमाख्याहि यत्पुत्रजयवर्द्धनं नारद उवा
च महाविद्या महामाया महामेधा महास्मृतिः महामोहा भगवती महादेवी महेश्वरी अहोयी चेति विख्याता सैव सर्वे
श्वरी तस्या व्रतं महापुण्यं सर्वलोकहितप्रदं पृथुरुवाच अहोयी नाम सा देवी कथं जाता च नारद तस्या व्रतं तिथौ
कस्यां को विधिश्च वद स्फुटं नारद उवाच आसीत्पुरा कृतयुगे कालस्तत्रैव नराधिप ततो नराश्च वै देवः पक्षिणश्च
क्षयं गताः तदा जनपदाः सर्वे क्षयं याताश्च भूरिशः बीजमात्राणि भूतानि तदाभूवन्नृपाधिप तदा सर्वे समागम्य ब्रा
ह्मणान्वेदपारगान् पप्रच्छुर्विनयोपेताः किं कार्यं वदत द्विजाः ब्राह्मणा वेदविद्वांसो विचार्य वसुकृच्छ्रकं शा
स्त्राण्यालोक्य तत्त्वज्ञाः कालमृत्योः शमाय च अहोयाश्च महादेव्या आराधनमकुर्वत कार्तिके कृष्णपक्षस्य सप्त
म्यां ध्यानतत्पराः ततः प्रदोषसमये भूवन्सर्वे पितुः स्थिताः अथागच्छत्तदा तत्र काचिद्दिव्यवरयोषिता सोवाच ब्राह्म
णान्सर्वान्किमर्थं व्रतमासत तऊचुस्तां नरश्रेष्ठ कालमृत्युलयाय च शोकाच्च सत्यमित्येवं सापि तत्र समासदत्
ततः सर्वाः प्रजा विप्राः सा पृथ्वीवरयोषिता अहोयाश्च महादेव्या भूय आराधनं दधुः एतस्मिन्नेव काले तु देवी सा
तादृष्टपूर्वा चामुंडा मुंडहस्ता च कराला कृष्णवर्णका कालिकेति समाख्याता अहोयी तत्र विश्रुता एकाक्षे व
प्रसन्नत्वादहोयीनाम ते ब्रुवन् सापि तत्र समासीनान्ब्राह्मणानभ्यभाषत अद्देहदर्शनं(?)
समन्विता विहारार्थं समायाता विप्रपापमवेत्य च अद्य विप्रा वेदवीनादामिकानिरयत्रपाः अरक्ताः तत्त्

याश्च वैश्यशूद्राश्च पादजाः स्त्रियः पतिप्रतीपाश्च स्वेच्छाचारसमन्विताः एताः समीक्ष्य पापस्य गतिं घोरां भयावहां ति
र्यक्कांश्च निर्यत्नान्निर्ह्रीमान्निर्जपांस्तथा आगतांस्वगणैः शार्ङ्दविस्माभावाय केवलं अथैव कार्तिके मासि व्रतादिफ·
लकोटिभिः सप्तम्यां च विशेषेण पूजिता यो द्विजोत्तमाः प्रसादमागता विश्वा वरं हृणुत माचिरं ततः सकललोकाश्च प्रा
र्थयंति स्मतान्नृप दुर्भिक्षं न भवेद्देवि नोत कश्चिभवेत्क्वचित् न कालमृत्युर्न व्याधिर्न चापुत्रत्वमेव च नारद उवाच
ततोब्रवीन्महादेवी शृणुध्वं वै द्विजोत्तमाः कार्तिके कृष्णपक्षे तु अष्टम्यां च विशेषतः तारानक्षत्रे चैकभक्तमथवाप्य
प्रभूतकैः कर्तव्यं च विशेषेण सप्तम्यां वा व्रतं मम चंद्रनक्षत्रे च सप्तम्यामष्टम्यां चैव नक्तके अवश्यं द्विव्रतं कार्यं न
रैर्नारीभिरेव च दिवा चाश्नन्न भोक्तव्यं बालवृद्धातुरैर्विना सायं प्रपूजयेन्मां वै होयीत्येव च मां सुधीः कर्तव्या द्विश
यत्नेन मदीया प्रतिमा नरैः तत्र कुड्ये च स्तंभे वा मंडपे मे समाचरेत् च तद्वर्णैश्च सर्वान्नैः श्यामपीतसितासितैः मू
लकाभिस्तथा स्कंदैरिक्षुदंडादिभिस्तथा एवं कृत्वा नरैः सर्वैः सर्वं सुखमवाप्यते तत्र मां पूजयेद्भक्त्या चंद्रिकामंडवर्व
रैः संयावसनपुष्पैश्च धूपदीपैस्तथैव च यतो नया पूजया स्यात्तस्मात्स्वर्गणैः समं तथेत्युक्त्वा ततः सर्वे जगृहुर्व्रत·
मुत्तमं ततस्तु प्रांजलिर्भूत्वा साहथीवरयोषिता महादेवीं च देवेशि पायस्मान्स्त्रीच यो निजान् ततोब्रवीन्महादेवी
अहोयी विश्रुता च या एहि त्वं मम भक्तासि प्रसन्नातेन संशयः त्वयाप्यहं सदा पूज्या पूर्वोक्तेन विधानतः पूजावसा
ने भवती सहितां पूजयेत्तु यः तस्य पूजादि सफला विपरीतमतोन्यथा तथा पूज्याः कुमार्यश्च मालिनी च तंदेवद्दि
नारद उवाच एवं प्रोच्य ततः पश्चात्तत्रैवांतरधीयत ततः सर्वे गृहीत्वा तद्व्रतमेतन्न संशयः अद्य नाते मया प्रोक्तं तव स्नेह
स्य कारणात् गृहस्थवासिभिर्जीवैरावश्यकमिदं व्रतं ये कुर्वंति तमेतद्धि तेषां सौख्यं भवेद्ध्रुवं न कालमृत्युर्न व्या·
धिर्न भयं नृप शत्रुतः सप्तमी वाष्टमी वापि तिथिरस्य व्रतस्य हि सप्तमे चंद्रनक्षे च तारानक्षे तु चाष्टमी उभावेव समा
नौ हि व्रते तस्मिन्नृप भयेन्दय नारद उवाच एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि अहोयाश्च व्रतं जन्म प्रसादश्च वि
धिस्तिथिः फलं चैव महाराज किं भूयः श्रोतुमिच्छसि कार्तिकस्यैव माहात्म्यं यदेकाद्गाप्रसाधिता जनैरहोयी दे
व्याभिर्न कार्तिकसमं शुभं एकादशीस्मरणादेव कालमृत्योर्विनाशियत् अहोयी तन्मया देवी तत्कार्तिकप्रभाव
तः कार्तिकेन समो मासो न भूतो न भविष्यति ॥ इति पाद्मे कार्तिकमाहात्म्ये कार्तिककृष्णाष्टम्यां अहोयीव्रतं का
र्तिककृष्णनवम्यां सर्वास्वपि नवमीषु सरस्वती दुर्गापूजा कार्या सरस्वत्या नवम्यां चेत्युक्तं नवमीनिर्णये दश·
म्यां च धर्मराजपूजा दशम्यां मंतकस्य चेति दशमीनिर्णयोक्तवचनात् कार्तिककृष्णैकादशी रमा तस्याः कथा ब्र
ह्मवैवर्ते पद्मपुराणे च ॥ युधिष्ठिर उवाच कृपयस्व प्रसादेन मम स्नेहस्य कारणात् कार्तिके कृष्णपक्षे तु का नामैका
दशी भवेत् किं नाम को विधिस्तस्या एतन्मे वद विस्तरात् यस्मिन्मासे हरिर्देवी निद्रां त्यजति माधवः श्रीकृष्ण उवाच शृणु
त्वं राजशार्दूल कथां पापप्रणाशिनीं कार्तिकस्यासिते पक्षे रमा नामेति विश्रुता तस्या उपोषणाद्राजन्वैकुंठं लभते नरः
पुरा त्रेतायुगे राजन्नयोध्यानगरे नृप मुचुकुंद इति ख्यातो न्यवसद्धर्मतत्परः इंद्रेण सह यस्यैव सख्यं श्रेष्ठं प्रवर्तते
हरिवासरसंधारी हरिभक्तिपरायणः तस्मिन्नृपतिश्रेष्ठे भूतधात्रीं प्रशासति दुहिता चंद्रभागाख्या जाता तस्य गृहे
नृप जामाता तस्य चैवासीत् शोभनो नाम नामतः चंद्रसेनस्य राज्ञस्तु पुत्रो धर्मपरायणः श्वशुरस्य गृहे सोथ समाया
तो नृपात्मजः कियतो दिवसांश्चैव चंद्रभागा विचिंतयत् किं भविष्यति तत्राद्य मम भर्तातिदुर्बलः समागतं व्रतं चैव
देवानामपि दुर्लभं एकादशीदिने पुण्ये समायाते नृपोत्तम क्षुधया पीडितो भर्ता पितृशासनमुत्तमं न भोक्तव्यं
न भोक्तव्यं संप्राप्ते हरिवासरे इति श्रुत्वा वसततं पटहं दारुणं किल व्रतस्य महिमानं वै ज्ञात्वा चैव प्रयत्नतः चिंतया
मास तत्रैव शोभनश्च प्रतापवान् किं करोमि महाप्राज्ञे क्षुधया पीडितोस्म्यहं पप्रच्छ वल्लभां स्वां स किं करिष्यामि·
शोभने चंद्रभागोवाच पितृवेश्मनि मे कांत भोक्तव्यं नैव केनचित् वाजिवर्णपादिकैश्चैव वल्पहृवर्षायिकैस्तथा ग·
जैरुष्ट्रैस्तथैवाश्वैः पशुभिः पक्षिभिस्तथा तृणमन्नं तथा नीरं भुज्यते नैव शोभन मानवैश्च तथा भर्तः भुज्यते नैव
वासरे यदि चेद्भुज्यते कांत तर्हिं ते गर्हयत्यसौ इति संचिंत्य भो कांत स्वहृदं धैर्यमानसं कुरु नह्यन्यत्र हरिं गंतव्यं भोज·

नार्येन्नृपात्मज शोभन उवाच सत्यं चैतत्त्रिये नाहं करिष्यामि व्रतं शुभं दैवेन विहितं चैव तत्तथैव भविष्यति इ
त्येवं समतिक्रान्ते क्षुद्दुःखपीडितः पुनः स्मृत्वा पुनः स्मृत्वा तथा च विवशोऽभवत् अन्नेन यार्यते प्राणाश्चान्ने सर्वं प्र
तिष्ठितं अन्नमेव परित्यज्य कथं प्राणावलंबनं शोभनश्चिंतयामास का गतिर्मे भविष्यति इति चिंतयतस्तस्य रवि
रस्तमयं गतः वैष्णवानां जनानां तु सा निशा पुण्यवर्द्धिनी श्रीकृष्णपूजनेनैव तथा जागरणेन च शोभनस्य तु त
स्यैव सा निशा दुःखदायिनी अन्नहीनस्य तस्यैव तथैव तु स्थितस्य च अतीव दुःखतमस्य रविश्चैवोदयं गतः तस्मिन्
काले तु राजेंद्र पंचत्वं शोभनो गतः दाहयामास राजा तं राजयोग्यैश्च दारुभिः चंद्रभागा नात्मदेहं ददाह पतिना सह
कृत्वौर्द्धदैहिकं तस्य तस्थौ जनकसद्मनि शोभनेन नृपश्रेष्ठ रमाव्रतप्रभावतः प्राप्तं देवपुरं रम्यं मंदराचलमू
र्द्धनि और्द्धदेहं कृतं तस्य क्रियाश्च विधिवत्कृताः चिंतयामास सा तत्र चंद्रभागा यशस्विनी किं करोमि क गच्छा
मि साहं दुःखेन पीडिता पातिव्रत्यं करिष्येऽहं काष्ठभक्षणमेव च इति संचिंत्य सा पश्चाद्दनुबंधं चकार सा एका
दशीव्रते नैव जीर्यते जीर्यते स्वयम् इति बुद्धिं समास्थाय सतीनां धुरिकीर्तिता कश्चिद्विप्रो वसन् तत्र नगरे ना
गरस्तदा सोमशर्मेति विख्यातो धनहीनो दरिद्रकः साधुकार्यं तथा विप्रः कुरुते शाणरक्षणं भ्रमते तत्र सर्व
त्र सोऽर्थार्थी द्विजसत्तमः एवं भ्रमन् स देशांश्च कुटुंबं परिपालयन् एकस्मिन् दिवसे मार्गे सूर्योऽस्तं च तदागतः
आरुरोह द्विजो वृक्षं सिंहव्याघ्रभयाकुलः चिंतयानस्ततस्तस्य समीपं तु मृगादयः श्वापदाः सूकरास्तत्र पुर
तस्तु समागताः पुरं तत्राभवद्देवदेवेन विहितं पुरा अनूपममतिहृद्यं पुण्यवद्भिर्निषेवितं द्वितीयमिंद्रलो
कं वै अप्सरोगणसेवितं ललितगानसंयुक्तैर्गंधर्वैरुपशोभितं नारायणादिदेवानां प्रासादैरुपशोभितं धन
धान्यसमाकीर्णं चातुर्वर्ण्यविराजितं विद्वद्भिः सेवितं भव्यं कमनीयं कलायुतं किमत्र बहुनोक्तेन गुणैः
सर्वैः समन्वितं तुलसीविटपाकीर्णं भूषणैरतिभूषितं ईदृशं नगरं दृष्ट्वा विप्रो विस्मयमागतः सहर्षेणांबरे
पूर्णं प्रविवेश पुरं तदा दृष्ट्वा समस्तं नगरं राजवेश्मनि वै गतः राजवेश्म मनोहारि स्वर्णस्तंभविराजितं स्फाटि
कोपलसंमिश्रनानारत्नैरलंकृतं स्वमनोमत्तललितं तत्र हर्म्यं वर्तते सदा स विप्रस्तत्र हर्म्ये दृष्ट्वा राजानं च ददर्श ह
सिंहासनसमारूढं छत्रचामरशोभितं केयूरैः कुंडलैश्चैव किरीटेन विराजितं इंद्रतुल्यं सदस्यैश्च तत्र तत्रोपशो
भितं राजानं च तदा दृष्ट्वा विप्रोऽसौ शोभनं तदा नृपजामातरं ज्ञात्वा तत्समीपं जगाम सः शोभनोऽपि तदा ज्ञात्वा सो
मशर्माणमागतं आसनादुत्थितस्तूर्णं नमस्कृत्य द्विजोत्तमं चकार कुशलप्रश्नं श्वशुरस्य तु पश्यतो कांतायाश्चं
द्रभागायास्तथैव नगरस्य तु सोमशर्मोवाच कुशलं वर्त्तते राजन् श्वशुरस्य गृहे तव चंद्रभागा कुशलिनी स
र्वतः कुशलं पुरे परं तु कथ्यतां राजन्नेतदाश्चर्यकं तथा प्राप्तं त्वया पुरं रम्यं किं व्रतस्य प्रभावतः पुरं विचित्रं राजेंद्र
न दृष्टं केनचित्क्वचित् एतदाचक्ष्व मे सर्वं कस्मात्प्राप्तं पुरं तव शोभन उवाच कार्तिकस्यासिते पक्षे रमानामेति
विश्रुता तामुपोष्य मया प्राप्तं द्विजेंद्र पुरमध्रुवं ध्रुवं भवति येनैतत्तत्कुरुष्व द्विजोत्तम सोमशर्मोवाच कथ
य ध्रुवमेतद्धि कथं भवति तद्ध्रुवं तत्कथय राजेंद्र त्वत्करिष्यामि नान्यथा शोभन उवाच मयैतद्विहितं विप्र
श्रद्धाहीनं द्विजोत्तम तेनाहमध्रुवं मन्ये ध्रुवं भवति तच्छृणु मुचुकुंदस्य दुहिता चंद्रभागास्तु शोभना तस्यै कथ
य वृत्तांतं ध्रुवमेतद्भविष्यति इति श्रुत्वा वचस्तस्य गतो विप्रः स्ववेश्मनि कथयामास वृत्तांतं राजकन्याग्रतो द्विजः श्रुत्वा
सा द्विजवचो विस्मयोत्फुल्ललोचना प्रत्यक्षमथवा स्वप्नमस्त्येतत्कथ्यते द्विज सोमशर्मोवाच प्रत्यक्षं दयितः कांतस्त
व दृष्टो मया शुभे देवतुल्यमनाधृष्यं दृष्टं तस्य पुरं मया अध्रुवं तेन तत्प्रोक्तं ध्रुवं भवति तत्कुरु चंद्रभागोवाच नय मां
त्र विप्रेंद्र पतिदर्शनलालसां आत्मनो व्रतपुण्येन करिष्यामि ध्रुवं पुरं आवयोर्द्विज संयोगो यथा भवति तत्कुरु
प्राप्नुहि त्वं महापुण्यं कृत्वा योगं वियुक्तयोः इति श्रुत्वा वचस्तस्याः सोमशर्मा जगाम ह आश्रमं वामदेवस्य मंद
राचलसन्निधौ वामदेवोऽशृणोत्सर्वं वृत्तांतं कथितं तयोः अभ्यषिंचच्चंद्रभागां वेदमंत्रैरयोजितैः ऋषिमंत्रप्र
भावेन विष्णुवासरसेवनात् दिव्यदेहा बभूवासौ दिव्यां गतिमवाप च पत्युः समीपमगमत्त्वहर्षोत्फुल्ललोचना

जहर्ष शोभनोतीव दृष्ट्वा कांतां समागतां समागम्य स्वके वामपार्श्वे तां समुपवेशयत् अथोवाच प्रियां हर्षाद्वर
भागशुभं वचः शृणु कांते हितं वाक्यं पुण्यं विश्वतमयि अष्टवर्षाधिका जाता यदाहं पितृवेश्मनि ततः श्रा
भ्रात्रैव मया कृतमेकादशीव्रतं यथोक्तविधिना युक्तं श्रद्धापूतेन चेतसा तस्याः पुण्यप्रभावेन पत्रं भवतवे ध्रुवं
सर्वकामसमृद्धं च यावदाभूतसंप्लवम् किमत्र बहुनोक्तेन दत्तं पुण्यं मयाखिलं श्रीकृष्ण उवाच एवं चन्द्रप्रभा
ईलसारे मे पतिना सह दिव्यभोगा दिव्यरूपा दिव्याभरणभूषिता शोभनोपि तया सार्द्धं रमते दिव्यविग्रहः रमा
व्रतप्रभावेन मंदराचलमूर्द्धनि चिंतामणिसमा ह्येषा कामधेनुसमाथवा रमाभिधानान्नृपते तवाग्रे कथिता·
मया एकादशीव्रतानां च पक्षयोरुभयोरपि यथा शुक्ला तथा कृष्णा विभेदं नैव कारयेत् सेवितैकादशी नृणां
भुक्तिमुक्तिप्रदायिनी धेनुः शुक्ला तथा कृष्णा तूभयोः सदृशं पयः तथैव तुल्यफलदं स्मृतमेकादशीद्वयं ए
कादशीव्रतानां च माहात्म्यं शृणुते नरः सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ इति श्रीब्रह्मवैवर्ते पद्मपुरा
णे च कार्तिककृष्णा रमैकादशीव्रतकथा कार्तिककृष्णद्वादशी गोवत्ससंज्ञा सा प्रदोषव्यापिनी ग्राह्या दिनद्वयेत
या सत्वे पूर्वैव निःयुग्मवाक्यात् तथाच । वत्सपूजाविधिश्चैव कर्तव्यः प्रथमेहनीति निर्णयामृतेभिधानात् हेमाद्रौ
भविष्ये ॥ कार्तिकः खलु मासो वै सर्वदेवमयो महान् कृष्णपक्षे विशेषेण नवम्यादिदिनानि तु पुण्यानि तेषु यद्दत्त
मक्षय्यं सर्वकामिकमिति । नारद उवाच आश्विने कृष्णपक्षे तु द्वादश्यादिषु पंचसु तिथिषूक्तः पूर्वराजो नृणां ।
नीराजनाविधिः नीराजयेयुर्देवांश्च विप्रांश्चैव तुरंगमान् ज्येष्ठाज्येष्ठांस्तदन्यांश्च मातृमुख्याश्च योषितः । अत्राश्वि
ने ग्रहणं शुद्धचांद्राभिप्रायेण अत्र विशेषो मदनरत्ने भविष्ये सवत्सां वा सवत्सां च शीलिनीं गां पयस्विनीं चंदना
दिभिरालभ्य पुष्पमालाभिरर्चयेत् अर्घ्यं ताम्रमये पात्रे कृत्वा पुष्पाक्षतैस्तिलैः पादमूले तु दद्याद्वै मंत्रेणानेन पांड
व क्षीरोदार्णवसंभूते सुरासुरनमस्कृते सर्वदेवमये मातर्गृहाणार्घ्यं नमोस्तु ते तद्दिने तैलपक्वं च स्थालीपक्वं यु
धिष्ठिर गोक्षीरं गोघृतं चैव दधि तक्रं च वर्जयेत् अथान्योपि प्रकारः । नरो वा यदि वा नारी नक्तं संकल्प्य चेतसौम्प
कम्प । माषान्नं कामतोश्नीयाद्वौ विगतमत्सरः प्रतीक्षेतागमं भक्त्या गवां गोष्ठान्ततत्परः । इति गोष्ठागता हुसं·
ध्यायां गोपूजाविधानाच्च वत्सस्य पूजा शिवरात्रिरेषा यराविनिद्वेतित्नृपंसराष्ट्रमिति । माता रुद्राणां दुहिता वसू
नां स्वसादित्यानाममृतस्य नाभिः प्रनुवोचं चिकितुषे जनाय ॥ मा गामनागामदितिं वधिष्ट स्त्रीशूद्राणां मह्ना ।
वाहो मंत्रः पौराणिको यथा क्षीरोदार्णवसंभूत इत्यादि ॥ ततो माषादिसंसिद्धान्वटकांश्च निवेदयेत् पंच सप्त
दशैकं वा यथाविभवमात्मनः तत्र मंत्रः । सुरभिस्त्वं जगन्मातर्नित्यं विष्णुपदे स्थिता सर्वदेवमये ग्रासं मयाद
त्तमिमं ग्रस ततः प्रार्थना । सर्वदेवमये देवि सर्वरत्नैरलंकृते मातर्ममाभिलषितं सफलं कुरु नंदिनि । इति ।
गोवत्सद्वादशीव्रतं अथ कथा ॥ युधिष्ठिर उवाच अक्षौहिण्यो दशाष्टौ च मम स्वार्थे क्षयं गताः तेन पापेन चित्तं मे
जुगुप्सातीव जायते तत्र ब्राह्मणराजन्या वैश्याः शूद्रादयो हताः भीष्मद्रोणकलिंगादिकर्णशल्यमुखा हताः
तेषां वधेन यत्पापं तन्मे मर्माणि कृंतति पापप्रक्षालनं किंचिद्ब्रूहि जनार्दन श्रीकृष्ण उवाच महापुण्यव्रतं ।
स्त्रीणां गोवत्सद्वादशीव्रतं अस्त्यत्र भुवने पार्थ महापातकनाशनं गोरूपिणी पुरा देवी पूजिता ब्रह्मवादिभिः सव
त्सा कार्तिके मासि कृष्णपक्षे युधिष्ठिर द्वादश्यां भक्तियुक्तैस्तैर्नंदिनीनामनामतः ततः प्रभृति राजेंद्र प्रथिता पृथि
वीतले उत्तानपादेन तदा व्रतं चीर्णं महाफलं उत्तानपादनामासीत्क्षत्रियः क्षितिभूषणं तस्य भार्याद्वयं चासीत्
सुरुची रुचिरा त्वेकम् सुरुच्यां तु ध्रुवः पुत्रो बालः पादचरो यदा रुच्यै समर्पितः स्वच्छ्या बालोयं रक्षतामिति
अहं करिष्ये शुश्रूषां शुचिस्तद्गतमानसा रुचिः सौभाग्यमासाद्य स्वच्छमास्ते गृहे सदा करोति भर्त्तुः शुश्रूषां ।
सा तु नित्यं पतिव्रता कदाचित्क्रोधमासाद्य सापत्न्यं जनितं मया स्वयं रुच्या निहत्यासौ पार्थ खंडदलीकृतः प
क्वः सुसंस्कृतः स्थाल्यामाहारार्थं नृशंसया ततो भोजनवेलायां दत्तोसौ नृपतेः स्वयं तस्याथ भोक्तुकामस्य ध्रुवो ।
जीवनमाप्तवान् ततः पलायितो राजन्मातुरुत्संगगो भवत् तद्दृष्ट्वा महदाश्चर्यं सुरुची प्रश्रब्धविस्मिता किमेत

ह्रदि स्थितं तदस्य येन दुःखितरूपा मा किं त्वया चरितं भद्रे व्रतं दानं तपस्तथा सत्यं कथय मे त्वं येन ते जीवितः सु-
तः मयायं समवाप्तस्तु निहतः शाकलीकृतः पक्वः सुसंस्कृतः स्थाल्यां भोजने व्यंजनैः सह पात्रे दत्तः पुनश्चैव जी-
वत्येव दृहिते सुतः किं ते सिद्धा महाविद्या मृतसंजीवनी तव मणिर्मंत्रमहायंत्रमथवांजनमौषधं कथयस्व महा-
भागे वेपथुर्हृदये मम श्रीकृष्ण उवाच एवमुक्ता तु रुक्मिण्या सा तु प्रोवाच यशस्विनी भद्रे न दत्तं न हुतं न तपस्तप्तं मया।
तथा सिद्धा न काचिद्विद्यास्ति न मंत्रौषधवेदिनी किंतु चीर्णं मया भद्रे गोवत्सद्वादशीव्रतं व्रतस्यास्य प्रभावेन पुन-
र्जीवति मे सुतः वत्सो मे वत्सवेलायामत्रैव क्रियते सदा समागमश्च भवति पुत्रपौत्रशतैरपि यथा वत्से समाख्या-
तं त्वमप्येतत्समाचर तव वाप्य विनाशो न भविष्यति यथा मम एवमुक्ते व्रतं चीर्णं रुक्मिण्या पुत्रवर्धनं त्वया अवाप।
सोऽत्र मे पुत्रं मनुवंशविवर्धनं युधिष्ठिर उवाच कथं गोद्वादशी नाम विधानं तत्र कीदृशं कथमेषा समुत्पन्ना क-
स्मिन्काले जनार्दन एतत्सर्वं व्रतं ब्रूहि त्राहि मां नरकार्णवात् श्रीकृष्ण उवाच पुराकृतयुगे पार्थ मुनिकोटिः
समागता तपश्चकार विपुलं नानाव्रतपरा गिरौ ईर्षणमहता विष्णुदेवदर्शनकांक्षया जंबूमार्गे महापुण्ये ना-
नातीर्थविभूषिते पारिमात्रे सिद्धपात्रे रम्ये तंडलिकाश्रमे पंचाग्निरीति विख्याता उत्तमे शिखरे नृप तापसारण्य-
मत्तले दिव्यकाननभूषिते वसिष्ठशुक्रगिरसकत्वदत्तादिभिर्वृते वल्कलाजिनसंवीते शिरोरामसमंडले ना-
नामृगगणोद्घुष्टशाखामृगगणैर्युते प्रशांतसिंहहरिणवक्रसर्पगणाकुले गहनैर्निर्झरै रम्ये लतासंतानसंकुले
सिंहव्याघ्रगजैश्चैव हरिणैः शंबरैः शशैः वाराहैः रुरुभिश्चैव समंतादुपशोभिते तपस्यतां ततस्तेषां मुनीनां दर्श-
नार्थिनां व्याजं चक्रे महीनाथ द्वादशार्धदलोचनः बभूव ब्राह्मणो वृद्धो जटापांडुरमूर्द्धजः श्लथचर्मतनुः कुब्जो य-
ष्टिपाणिः सवेपथुः उमापि चक्रे गोरूपं सुरूपं तत्र पार्थ कीदृशं क्षीरोदतोयसंभूता या पुरामृतमंथने पंच गावः शु-
भाः पार्थ सर्वलोकस्य मातरः नंदा सुभद्रा सुरभी सुशीला बहुला अपि एता लोकोपकाराय लोकानां तर्पणाय
च जमदग्निभरद्वाजवसिष्ठासितगौतमाः जगृहुः कामदाः पंच गावो दत्ताः सुरैस्तदा गोमयं रोचना मूत्रं क्षीरं
दधि घृतं गवां षडंगानि पवित्राणि यामो सिद्धिकराणि च गोमयादुत्थितः श्रीमान् बिल्ववृक्षः शिवप्रियः तत्रा-
स्ते पद्महस्ता श्रीः श्रीवृक्षस्तेन स स्मृतः बीजान्युत्पलपद्मानां पुनर्जातानि गोमयात् गोरोचना च मांगल्या पवित्रा स-
र्वसाधिका गोमूत्राद्गुग्गुलुर्जातः सुगंधिः प्रियदर्शनः आहारः सर्वदेवानां शिवस्य च विशेषतः यद्बीजं जगतः किं-
चित्तज्ज्ञेयं क्षीरसंभवं दध्नः सर्वाणि जातानि मंगलान्यर्थसिद्धये घृतादमृतमुत्पन्नं देवानां तृप्तिकारकं ब्राह्मणा-
श्चैव गावश्च कुलमेकं द्विधा कृतं एकत्र मंत्रास्तिष्ठंति हविरेकत्र तिष्ठति गोषु यज्ञाः प्रवर्तंते गोषु देवाः प्रतिष्ठिताः
गोभिर्वेदाः समुत्कीर्णाः सषडंगपदक्रमाः शृंगमूले गवां नित्यं ब्रह्मा विष्णुश्च संस्थितौ शृंगाग्रे सर्वतीर्थानि
स्थावराणि चराणि च शिरोमध्ये महादेवः सर्वकारणकारणं ललाटे संस्थिता गौरी नासाग्रे च षडाननः कंब-
लाश्वतरौ नागौ नासापुटसमुपाश्रितौ कर्णयोरश्विनौ देवौ चक्षुर्भ्यां शशिभास्करौ दंतेषु वायवः सर्वे जिह्वायां
वरुणः स्थितः सरस्वती च हुंकारे यमः कृतौ च गंडयोः संध्याद्वयं तथैवोष्ठे ग्रीवायां च पुरंदरः रक्षांसि ककुदि
द्यौश्च पार्श्वेषु संव्यवस्थिताः चतुष्पात्सकलो धर्मो नित्यं संध्यासु तिष्ठति खुरमध्ये तु गंधर्वाः खुराग्रेषु च पन्न-
गाः खुराणां पश्चिमे भागे राक्षसाः संप्रतिष्ठिताः रुद्रा एकादश पृष्ठे वसवः सर्वसंधिषु श्रोणीतटस्थाः पितरो
रोमकूपेषु मातरः श्रीरपाने गवां नित्यं स्वाहा लांगूलमाश्रिता आदित्यरश्मयो बालाः पिंडीभूय व्यवस्थिताः
साक्षाद्गंगा च गोमूत्रे गोमये यमुना स्थिता उदरे पृथिवी सर्वा सशैलवनकानना चत्वारः सागराः प्रोक्ता गवां ये
तु पयोधराः पर्जन्यः क्षीरधारासु मेघा विंदुष्ववस्थिताः जठरे गार्हपत्योऽग्निर्दक्षिणाग्निर्हृदेशे स्थितः मुखे चाह-
नीयोऽग्निस्त्रेताग्निस्तालुसंस्थितः अस्थिष्वेव स्थिताः शैला मज्जायां क्रतुसंस्थितिः ऋग्वेदोऽथर्ववेदश्च सामवेदो यजु-
स्तथा सितरक्तपीतकृष्णा गवां वर्णेषु संस्थिताः तासां रूपाण्युपन्यस्य सुरभीणां युधिष्ठिर संस्थाप्य तत्स्वरूपाणि
दिव्या महाप्रीततरे आत्मनो विदधे देवी यमराजस्य पूजितां षडूनतो पंचवर्षिण्यां मंडूकाक्षीमबालधीं ताम्रस्तनीं रक्तां

कंठीसुखुरांस्तमुखीसिता सुगतिश्च सुशीला च स्नेहदीरयपयोधरा गोरूपिणीमुमां दृष्ट्वा तां च धेनुं सवत्सकां प
र्यायप्रश्नरां दृष्ट्वा महादेवः स्वचेतसि शनैः शनैर्ययौ पार्थ विप्ररूपी तमाश्रमं गत्वा कुलपतेः पार्श्वे भृगोः स्वां गां न्यवेद
यत् तपःस्थितां च सर्वेषां मुनिकोटिषु पांडव न्यासरूपां ददौ धेनुं रक्षध्वं नंदिनीमम यावत्स्नात्वा तत्तीर्थाज्जंबू
मार्गात्प्रयाम्यहं रक्षिष्यामः प्रतीक्षामो वयं तु सुरभीमिमां अंतर्हितो महादेवः पुनर्व्याघ्रो बभूव ह वक्रक्रूरनखोद
ग्रीज्वलत्पिंगललोचनः दंष्ट्राकरालवदनो जिह्वालांगूलदारुणः संप्राप्याश्रमपदं तां च धेनुं सवत्सकां त्रासया
मास नादेन सर्वे नादेन कंपिताः ऋषयोपि समाहूता आर्तनादं प्रचक्रिरे हाहेत्युच्चैः केचिदूर्ध्वं ईकारांश्च तथापरे ता
लस्फोटान्ददुः केचिद्व्याघ्रं दृष्ट्वातिभैरवं सापि दृष्ट्वा भारवं चक्रे गौरुत्सुकमना सवत्सका तस्या व्याघ्रभयार्तायाः कपि
लायाः युधिष्ठिर पलायंत्याः शिलामध्ये खुरचतुष्टयं व्याघ्रवत्सकयोस्तत्र वंदितं सुरकिन्नरैः दृश्यतेतीवस्
चकं तदद्यापि वत्सपदं सजलं शिवलिंगं च शंभोस्तीर्थं तदुत्तमं यस्तं स्पृशति राजेंद्र स गोहत्यां व्यपोहति तत्र स्ना
त्वा महातीर्थे जंबूमार्गे नराधिप ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः ततस्ते मुनयः क्रुद्धा ब्रह्मदत्ता महास्वना
जघ्नुर्दंडांस्तैर्दंडैर्गिरिकंदरपूरिणी तेन शब्देन व्याघ्रोपि मुक्त्वा तां गां सवत्सकां विप्रैस्तैस्ताडितो नाम तदा गिरिरिति
श्रुत तत्र पश्यंति ये पार्थ दृष्ट्वा स्नात्वा नात्र संशयः अथ प्रत्यक्षतां यातस्तेषां देवो महेश्वरः शूलपाणिस्त्रिपुरहा कामहा
वृषभे स्थितः उमासहायो वरदः सस्वामी सविनायकः सनंदी समहाकालः सभृंगी सगणो हरः सवीरभद्रश्चामुं
डो घंटाकर्णादिभिर्वृतः मातृभिर्गौः सवत्सा च पूजिता ब्रह्मचारिभिः कार्तिके कृष्णपक्षे तु द्वादश्यां नंदिनीव्रतं ततः
प्रभृति राजेंद्र अवतीर्णा महीतले उत्तानपादेन तथा व्रतं चीर्णमिदं शृणु यावंति गात्रे रोमाणि गवां कौरवनंदन ता
वद्वर्षसहस्राणि गोलोके वसते नरः मेरोः पर्वतपृष्ठे रम्यमिंद्राग्नियमरक्षसां वरुणानिलयक्षाणां रुद्रस्य च युधि
ष्ठिर तासामुपरि गोलोकस्तत्र याति स गोव्रती ऊर्जेऽसिते द्विदशमेऽह्नि गां वत्सां संपूजयंति कुसुमैर्वटकैश्च
पूपैः ताः सर्वकामसुखभोगसमृद्धिभाजो भक्त्या वसंति सुचिरं भुवि जीववत्साः ॥ इति श्रीभविष्योत्तरे का
र्तिककृष्णगोवत्सद्वादशीव्रतं अस्यामेव कार्तिकद्वादश्यां नीराजनद्वादशीव्रतं ज्योतिर्निबंधे ॥ नारद उवाच आ
श्विने कृष्णपक्षे तु द्वादश्यादिषु पंचसु तिथिषूक्ताः पूर्वरात्रे नृणां नीराजनाविधिः नीराजयेयुर्देवांश्च विप्रान्गा
श्चतुरंगमान् ज्येष्ठान् श्रेष्ठान् जघन्यांश्च मातृमुख्याश्च योषित इति। अत्राश्विनो मासश्चांद्रमासाभिप्रायेणामांतो
ग्राह्यः अथ कार्तिककृष्णत्रयोदशीकृत्यं निर्णयामृते स्कांदे ॥ कार्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे यमदी
पं बहिर्दद्यादपमृत्युर्विनश्यति । अत्र यमदैवतत्वाद्दक्षिणमुखेन दीपदानं कार्यं आचाराद्दीपपूजनमपि अत्र त्र
योदशी प्रदोषव्यापिनी ग्राह्या निशामुख इति वाक्यात् परा कृष्णपक्षस्थत्वात् मंत्रश्च ॥ मृत्युना पाशदंडाभ्यां तल
यालोलयासह त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतामिति अथ गोत्रिरात्रिव्रतकथा । स्कंद उवाच देवदेव महा
देव परब्रह्म महेश्वर आयुर्यशोर्थपुत्रश्च धर्मसत्कुलकारकं व्रतं ब्रूहि महेशान सर्वशोकप्रणाशनं जाताः पुत्रा
प्रजायंते अरोगाः सुखिनस्तथा तेषां पुत्राश्च वध्वश्च दृश्यंते ये च शोभनाः सौभाग्यं चात्र लभ्याप्य सपत्नी नैव जायते
येन सर्वसुखं भुक्त्वा वैकुंठभवनं व्रजेत् ईश्वर उवाच व्रतानामुत्तमं स्कंद तव वक्ष्ये सनातनं येनैव चीर्णमात्रेण
सर्वयज्ञफलं लभेत् यत्कृत्वा सर्वदानस्य फलमाप्नोति मानवः गोत्रिरात्रमिति ख्यातं सर्वपापप्रणाशनं नारी
वाथ नरो वाथ त्रिरात्रव्रतमाचरेत् प्रातः स्नात्वा त्रयोदश्यां कृत्वा वै दंतधावनं त्रिरात्रं नियमं कुर्याद्गोविंदे भक्ति
भावतः गोविंद जगतीनाथ गोवर्धनधरानघ गोत्रिरात्रं करिष्यामि शरणं मे भवाच्युत नियममंत्र। गोष्ठे वा
गोपथे वाथ कृत्वा भूमिगृहं शुभं अष्टहस्तं चतुर्हस्तं चतुरस्रं सुशोभनं वितानं पुष्पमालाभिः फलैर्नानाविधैर
पि मध्ये वेदिं ततः कृत्वा मंडलं तत्र कारयेत् सर्वतोभद्रमथवा नमनाभमथापि वा तन्मध्ये विन्यसेद्देवं गोवर्द्धन
धरं हरिं रुक्मिणीमित्रविंदा च सत्याजांबवती तथा वामभागे तु देवस्य पूज्या वै भक्तिभावितः सत्यभामा सुलक्ष्म
णां च शैब्यां नाग्निजितीं तथा दक्षिणे चैव पूज्यास्तु नंदं च प्रथमं यजेत् बलभद्रं यशोदां च पृष्ठतः पूजयेत्सुभाः सु

रभीं वत्सं नंदां च सुभद्रां कामधेनुकां एताश्च वत्सा देव्यश्च कृष्णस्य पुरतो न्यसेत् सुवर्णमाषकैः कार्याः षोडश
प्रतिमाः शुभाः गोवर्द्धनश्च कर्त्तव्यो राजतः पलसम्मितः छत्राकारो महावृक्षैः शोभितः पक्षिभिर्वृतः गोपीगोप
समाकीर्णो महाहृदसमन्वितः एवं संस्थाप्य यत्नेन ततः पूजां समाचरेत् आगच्छ भगवन्कृष्ण गोपीगोपसम
न्वित रुक्मिण्यादिभिरासीन मम पूजां गृहाण च । इत्यावाहनमंत्रः । नमः कृष्णाय पादौ च हरये जानुनी नमः उ
रौ बलदेवाय मुकुंदाय नमः कटिं चक्रिणे च भुजौ पूज्यौ कंठं श्रीवत्सधारिणे मुखं पद्मभुवायेति गोविंदाय नमः शि
रः प्रणवादिनमोंतैश्च श्रेष्ठांगं पूजयेद्धरेः । रुक्मिण्यै नमः मित्रविंदायै नमः शैव्यायै नमः जांबवत्यै नमः सत्यभामायै नमः
सुदेवायै नमः सत्यायै नमः नाग्नजित्यै नमः यशोदायै नमः बलभद्राय नमः नंदाय नमः सुरभ्यै नमः सुनंदायै नमः सुभद्रायै नमः का
मधेन्वै नमः । गोवर्द्धनधराधार गोकुलत्राणकारक कृष्णबाहुकृतोच्छ्राय पूजयामि नमो नमः एवं संपूज्य विधिवत्पश्चा
दर्घ्यं प्रदापयेत् गवामाधार गोविंद रुक्मिणीवल्लभ प्रभो गोपीगोपसमोपेत गृहाणार्घ्यं नमोस्तु ते एवं पूजां समाप्यैव
भक्तिभावपुरःसरं गवामर्घ्यः प्रदातव्यस्तासां चैव तु दिनत्रयं मंत्रेणानेन विधिवद्विंशतीनां स्वशक्तितः रुद्राणां चैव या
माता वसूनां दुहिता च या आदित्यानां च भगिनी सा नः शांतिं प्रयच्छतु इत्यर्घ्यमंत्रः । नमो गोभ्यः श्रीमतीभ्यः सौरभेयी
भ्य एव च नमो धर्मसुताभ्यश्च पवित्राभ्यो नमो नमः इति पूजामंत्रः । सुरभी वैष्णवी माता नित्यं विष्णुपदे स्थिता प्रतिगृह्णा
तु मे ग्रासं सुरभी मे प्रसीदतु गोग्रासमंत्रः । गावो मे अग्रतः संतु गावो मे संतु पृष्ठतः गावो मे हृदये संतु गवां मध्ये वसाम्यहं
न वियोगोस्तु मे पुत्रैर्भृत्यैश्च सह बांधवैः त्वत्प्रसादेन मे भक्तिर्निश्चलास्तु सदा त्वयि प्रार्थनामंत्रः । एवं संपूज्य गाश्चैव गो
विंदं च विशेषतः पुष्पैर्गंधैश्च धूपैश्च दीपैश्च विविधैस्तथा नैवेद्यैर्घृतपक्वैश्च फलैर्नानाविधैरपि समयान्यैर्विरूढैश्च
वंशपात्रस्थितैः शुभैः सुवासिन्यस्तथा पूज्या नित्यं तांबूलकुंकुमैः कंठसूत्रैस्तथा पुष्पैस्तथा वायनकादिभिः एवं
संपूज्य विधिवद्गोविंदं तद्दिनत्रयं उपवासत्रयं चैव चतुर्थे दिवसे पुनः प्रातः शुचिः समुत्थाय कृत्वा स्नानं प्रयत्नतः
प्रणम्य गुरुमाचार्येण होमं तत्रैव कारयेत् तिलैरष्टोत्तरशतं गायत्र्या होममाचरेत् ततो विसृज्य देवेशं गुरवे प्रतिपा
द्य च गाः पुच्छे समालंब्य पुरस्कृत्य द्विजर्षभान् हृष्टेन मनसा स्कंद गृहमागत्य सत्कृतः मिथुनानि द्वादशाष्टौ भू
षणाच्छादनादिभिः संपूज्य भोजनं दत्वा गोदानि च दापयेत् गुरोर्दांपत्यमर्चित्वा वासोभूषणसंयुतं भक्त्या गोवर्द्धनं
कृष्णं गोपगोपीसमन्वितं गृहोपकरणैर्युक्तं यथाशक्त्या च भक्तितः गुरौ संपादयेद्देवं दक्षिणासहितं हरिं क्षमाप्य च
गुरुं तत्र भुंजीत शुचिसंस्कृतं इष्टैः शिष्टैः समासीनो वाग्यतो विस्मृतत्वरः दीपोत्सवे व्रतमिदं शुचिमानसेन कृत्वा न
रः सकलसंततिवृद्धिकारि भुक्त्वा स भोगनिचयं सुखसंप्रयुक्तश्चांते प्रयाति भुवनं मनुजो मुरारेः ॥ इति स्कंदपुरा
णोक्तं कार्त्तिककृष्णत्रयोदश्यां गोत्रिरात्रिव्रतम् अत्र त्रयोदशी सौदयिकी ग्राह्या दिनद्वयेप्युदयव्यापिनी कृष्णप
क्षस्थत्वेन परा कार्या पक्षाष्टमी ह्यमावस्या कृष्णपक्षे त्रयोदशी एताः परयुताः कार्याः पराः पूर्वयुतास्तथेत्यादिवाक्य
सत्वात् अथ कार्त्तिककृष्णचतुर्दश्यां चंद्रोदये अभ्यंगस्नानं कार्यं तदुक्तं हेमाद्रौ भविष्ये ॥ कार्त्तिके कृष्णपक्षे तु
चतुर्दश्यामिनोदये तिलतैलेन कर्त्तव्यं स्नानं नरकभीरुभिरिति मदनरत्ने कालादर्शे च विधूदय इति पाठः निर्ण
यामृते दिनोदय इति पाठः मधूवित्तु इनोदय इति इनः सूर्यस्तस्योदय इति व्याख्यातं अत्र च यथाचारं व्यवस्थेति
केचित् ॥ इनः सूर्ये प्रभौ राज्ञि मृगांकेपि च कीर्त्तित इत्यभिधानात् ब्रह्मपुराणेपि तैले लक्ष्मीर्जले गंगा दीपावल्याश्च
तुर्दशी प्राप्ते निशेषः प्रातः स्नानं तु यः कुर्याद्यमलोकं न पश्यतीति अपामार्गमथो तुंबीं प्रपुन्नाडमथापरं भ्रामयेत्
स्नानमध्ये तु नरकस्य क्षयाय वै प्रपुन्नाडश्चक्रमर्दकः तथा अपामार्गस्य पत्राणि भ्रामयेन्मस्तकोपरि ततश्च तर्पणं
कार्यं धर्मराजस्य नामभिः नारदसंहितायामपि ॥ इषासितचतुर्दश्यामिंदुक्षयतिथावपि नागाख्ये स्वातिसंयुते
तदा दीपावली भवेत् तैले लक्ष्मीर्जले गंगा दीपावलितिथौ वसेत् अलक्ष्मीपरिहारार्थमभ्यंगस्नानमाचरेत् कुर्या
त्संलग्नमेतद्दीपोत्सवदिनत्रयमिति । इह त्रयेपि संक्रांतावार्कस्याते दिनत्रये तत्राभ्यंगो न दोषाय प्रातः पापापनुत्तये इ
ति । अत्र इषः अमांतमासेन ग्राह्यः येन । अरुणोदयतोन्यत्र रिक्तायां स्नाति यो नरः तस्याब्दिकभवो धर्मो नश्यत्येव न

संशय। इतिदिवोदासीये भविष्यवचनं तन्मुख्यकालेचतुर्दश्यभावेऽपितत्रैवस्नातव्यमित्येवपरं यद्यपिकार्त्तिक
व्रतिना तैलाभ्यंगवर्जनमपिनियमेषूक्तं। तैलाभ्यंगंतथाशय्यांपरान्नंकांस्यभाजनं कार्त्तिकेवर्जयेद्यस्तु परिपूर्ण्णं।
पूर्णव्रतीभवेदितिपाद्मेतथापि अत्रतैलाभ्यंगःस्नानेऽपिकार्य्यो नरकस्यचतुर्दश्यांतैलाभ्यंगंचकारयेत् अन्य
त्रकार्त्तिकस्नायीतैलाभ्यंगंविवर्जयेत् इतितत्रैवप्रतिप्रसवश्रुतेः इयंचचतुर्दशीप्रातःकालव्यापिनीग्राह्याविधूदय
इतिपूर्वोक्तत्वात् कृत्यरत्नावल्यांतु दिनोदयप्रातःशब्दयोः समानार्थत्वात् प्रातःकालव्यापिनीग्राह्येत्युक्तं दिनद्व
येचंद्रोदयव्याप्तौचपूर्वाग्राह्या॥पूर्वविद्धाचतुर्दश्यांकार्त्तिकस्यसितेतरे पक्षेप्रत्यूषसमयेस्नानंकुर्यात्प्रयत्नत इतिनि
र्णयामृतोक्तवचनात् दीपिकायांतु दिनद्वयेचंद्रोदयेचतुर्दश्यभावे अभावेचचतुर्दश्यारात्रितुर्ययामेस्नानमिति
निर्णयसिंधावपि चतुर्थ्यामगामिनीग्राह्येत्युक्तं अतएवसर्वज्ञनारायणः। तथाकृष्णचतुर्दश्यामाश्विनेऽर्कोदयात्पु
रा यामिन्याःपश्चिमेभागेतैलाभ्यंगोविशिष्यतइति कालादर्शेऽपि।मृगांकोदयवेलायांत्रयोदश्यांयदाभवेत् दर्शोवामं
गलस्नानंदुःखशोकभयप्रदमितित्रयोदशीनिषेधः मदनरत्ने तु दिनद्वयेचंद्रोदयव्याप्त्यभावेपूर्वैवगौणकालेसत्वात् अ
त्रचंद्रोदयोमुख्यः सूर्योदयोगौणः उत्तरभावित्वात् स्वकालादुत्तरोगौणःकालःसर्वस्यकर्मणइतिवचनात् अतएवपू
र्वोक्तोद्विविधोऽपिपाठःसंगच्छते तिथ्यादौतुभवेद्यावान्ह्रासोवृद्धिःपरेऽहनि इतिवाक्येनत्रयोदश्यांतेचतुर्दशीग्रासरू
पेणचंद्रोदयेपारिभाषिकचतुर्दशीसद्भावात् अतएवचंद्रप्रकाशे त्रयोदशीयदाप्रातःक्षयंयातिचतुर्दशी रात्रि
शेषेत्वमावास्यातदाभ्यंगेत्रयोदशीति एवंदिवोदासीयेऽपि अत्रविभूतिकामैः सुगंधितैलेनस्नानंकार्य्यं तदुक्तं
स्मृतिदर्पणे।चतुर्दशीयाश्वयुजस्यकृष्णास्वात्यर्कयुक्ताचभवेत्प्रभाते स्नानंसमभ्यर्च्यनरैस्तुकार्य्यंसुगंधितैलेन
विभूतिकामैरिति इदंचस्नानंचतुर्दशीमारभ्यदिनचतुष्टयंप्रत्यहंकार्य्यं तदुक्तंपृथ्वीचंद्रोदयेब्राह्मे इषेभूतेचद
र्शेचकार्त्तिकेदशमेदिने यदास्वातीतदाभ्यंगस्नानंकुर्य्याद्दिनोदये ऊर्जेशुक्लद्वितीयायांतिथौवलक्षभेदिने मा
नवोमंगलस्नायीनैवलक्ष्म्याविमुच्यते दीपैर्नीराजनादत्रसैषादीपावलीस्मृतेति।अथस्नानविधिः तत्रादौदंतधाव
नादिकृत्वा ओमद्ययमलोकदर्शनाभावकामोऽभ्यंगस्नानंकरिष्ये इतिसंकल्प्यतैलेनाभ्यंगंकृत्वोदकेनस्नायात्
ततःस्नानमध्येसीतालोष्ठसहितानि अपामार्गपत्राणिसतुंबीकानिप्रपुन्नाडंचमस्तकोपरिवक्ष्यमाणमंत्रे
णभ्रामयेत् अत्रमंत्रः।सीतालोष्ठसमायुक्तसकंटकदलान्वित हरपापमपामार्गभ्राम्यमाणःपुनःपुनरिति त
तोयमतर्पणं तत्प्रकारस्तुमदनरत्नेस्कंदपुराणे॥दक्षिणाभिमुखोभूत्वातिलैःसव्यसमाहितः देवतीर्थेनदेव
त्वात्तद्रूपमाणोऽथनामभिः यमायधर्मराजायमृत्यवेचांतकायच वैवस्वतायकालायसर्वभूतक्षयायच औदुंब
रायदध्नायनीलायपरमेष्ठिने वृकोदरायचित्रायचित्रगुप्तायवैनमइति यज्ञोपवीतिनाकार्य्यंप्राचीनावीतिना
थवा देवत्वंचपितृत्वंचयमस्यास्तिद्विरूपतेति अत्रचहेतूक्तिबलाच्छुक्लकृष्णतिलैःसकृत्त्रिराहत्यादिरूपदेव।
पित्र्यधर्मविकल्पोद्रष्टव्यः इदंचयमुनायामतिप्रशस्तं।तदुक्तंकृत्यतत्वार्णवे यांकांचित्सरितंप्राप्यकृष्णपक्षे
चतुर्दशी यमुनायांविशेषेणनियतस्तर्पयेद्यममिति इदंचतर्पणंजीवत्पितृकेणापिकार्य्यंजीवत्पितापिकु
र्वीततर्पणंयमभीष्मयोरितिपाद्मोक्तेः।अस्यामेवप्रदोषेदीपदानंकार्य्यं तदुक्तंदिवोदासीयेब्राह्मे।अमावस्या
चतुर्दश्योःप्रदोषेदीपदानतः यममार्गांधकारेभ्योमुच्यतेकार्त्तिकेनरः इतितथा।ततःप्रदोषसमयेदीपान्द
द्यान्मनोरमान् ब्रह्मविष्णुशिवादीनांभुवनेषुमठेषुच प्राकारोद्यानवीथीषुप्रतोलीनिष्कुटेषुच मंदुरासुवि
विक्तासुहस्तिशालासुचैवहीति लैंगे।ततःप्रेतचतुर्दश्यांभोजयित्वातपोधनान् विप्रांश्चैवांस्तथापरान्शिव।
लोकेमहीयतेदानंदत्वातुतेभ्यस्तुयमलोकंनपश्यति माषपत्रस्यशाकेनभुक्त्वातत्रदिनेनरः प्रेताचतुर्दशी
कालेसर्वपापैःप्रमुच्यते अत्रनरकोद्देशेनचतुर्वर्त्तियुक्तदीपदानंकार्य्यं तत्रपूर्वाभिमुखोभूत्वादीपंसंपूज्य
दीपदानंकुर्य्यात् तत्रमंत्रः।दत्तोदीपश्चतुर्दश्यांनरकप्रीतयेमया चतुर्वर्त्तिसमायुक्तःसर्वपापापनुत्तयइति
पश्चाद्गृहानपिदीपान्दद्यात् ज्योतिर्ग्रंथे।तुलासंस्थेसहस्रांशौप्रभूतेभूतदर्शयोः उज्वलज्योतिषादेहंदहेयंव्यो।

मवर्त्मनेति तद्दाने मंत्रः अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम उज्वलज्योतिषा दग्धास्ते यान्तु परमां गतिम्
नदि सर्जने मंत्रः ॥ यमलोकं परित्यज्य आगता ये महालये उज्वलज्योतिषा वर्त्म प्रपश्यन्तो व्रजंतु ते इति अस्या
मेव नक्तभोजनमुक्तं लैंगे। नक्तं प्रेतचतुर्दश्यां यः कुर्याच्छिवतुष्टये न तस्य तु शतेनापि शक्यन्ते पुण्यमीदृश
मिति। पूर्वदिने प्रदोषचतुर्दशी स्नानयोगे चोत्तरदिने चेत्तदा पूर्वदिने प्रदोषे दीपदानादि कृत्वा परेद्युः स्नानं का
र्यं क्रमानुरोधेन कालव्याप्त्या न्याय्यत्वात् कृत्यतत्त्वार्णवे भविष्ये। कार्त्तिके भौमवारे तु चित्रा शुक्ला चतुर्दशी
अस्यामाराधितः स्थाणुर्नयेच्छिवपुरं ध्रुवं अतो भौमवारचित्रानक्षत्रयोगे चेयं महाफलेति तत्रैव व्याख्यातं
निर्णयामृते तु इयं भौमवारयुक्ता चित्राख्या इत्युक्ता पुष्करपुराणे त्विदमेव वचनं किंचित्पाठांतरेणालिखितं
तस्य पूर्वार्द्धं तु पूर्ववत् उत्तरार्द्धं तु। तस्यां भूतेशमभ्यर्च्य गच्छेच्छिवपुरं नर इति अस्यां कार्त्तिककृष्णचतुर्द
श्यां हनुमज्जन्मदिनं तदुक्तं। आश्विनस्यासिते पक्षे भूतायां च महानिशि भौमवारेंऽजनीपुत्रं हनुमंतमजीजन
त् इति कार्त्तिककृष्णचतुर्दशीकृत्यानि अथ कार्त्तिकस्यामावास्या दीपावलीति प्रसिद्धा तत्र प्रातरभ्यंगस्ना
नं कुर्यात् तदुक्तं कालादर्शे। प्रत्यूषे चाश्वयुग्दर्शे कृताभ्यंगादिमंगलः भक्त्या प्रपूजयेद्देवीमलक्ष्मीविनि
वृत्तये अत्रादिपदेन पंचत्वगुदकस्नानादेरुपसंग्रहः तदुक्तं पुष्करपुराणे। स्वातिस्थिते रवाविंदुर्यदि स्वाति
गतो भवेत् पंचत्वगुदकस्नायी कृताभ्यंगविधिर्नरः नीराजितो महालक्ष्मीमर्चयन्श्रियमश्नुते भविष्योत्तरे
पि एवं प्रभातसमये त्वमावास्यां नराधिप स्नात्वा देवान्पितॄन्सम्यक्संपूज्याथ प्रणम्य चेति। नारदेनापि तिथि
त्रये दीपावलित्वेनाभिधानात् तत्र तैले लक्ष्मीरित्यादिमंत्रेणाभ्यंगस्नानमुक्तं पूर्वं चाश्वयुग्दर्शशब्दः प्रत्यू
षे स्वातियुक्तपरः तदुक्तं ब्राह्मे। ऊर्जे शुक्लद्वितीयायां तिथिषु स्वातिऋक्षगे मानवो मंगलस्नायी नैव लक्ष्म्या वि
युज्यते इषे दर्शे च भूते च कार्त्तिके प्रथमे दिने यदि स्वाती तदाभ्यंगस्नानं कुर्याद्दिनोदये कश्यपसंहितायां
मपि दीपावलिप्रकरणोक्तं इंदुक्षयेऽपि संक्रांतौ रवौ पाते दिनक्षये तदाभ्यंगो न दोषाय प्रातः पापापनुत्तये। अतो
त्र स्वातियोगं विनाप्यभ्यंगस्नानमुक्तं मात्स्येपीयं दीपावल्युक्ता दीपैर्नीराजनादत्र सैषा दीपावली स्मृतेति
आदित्यपुराणोक्तं दीपावल्यमाकृत्यं। सनत्कुमार उवाच अमावास्यां तु देवेशात् कार्त्तिके मासि केशवात्
अभयं प्राप्य संसुप्ताः सुखं क्षीरोदसानुषु लक्ष्मीर्दैत्यभयान्मुक्ता सुखं सुप्तांबुजोदरे अतोऽर्थं विधिवत्कार्या म
नुष्यैः सुखसुप्तिका दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमं
दीपवृक्षास्तथा कार्याः शक्त्या देवगृहेषु च चतुष्पथे श्मशाने च नदीपर्वतसानुषु वृक्षमूलेषु गोष्ठेषु चत्वरे
षु गृहेषु च वस्त्रैः पुष्पैर्भूषितव्याः क्रयविक्रयभूमिकाः दीपमालापरिक्षिप्ते प्रदोषे तदनंतरं ब्राह्मणान्भोज
यित्वा तु संभोज्य च बुभुक्षितान् अलंकृतेन भोक्तव्यं नववस्त्रोपशोभिना स्निग्धैर्मुग्धैर्विदग्धैश्च बांधवैर्निहितैः
सहेति। भविष्योत्तरे तु चतुर्दशीकृत्यमभिधायामावास्याकृत्यमुक्तं। एवं प्रभातसमये त्वमावास्यां नराधिप
स्नात्वा देवान्पितॄन्भक्त्या संपूज्याथ प्रणम्य च कृत्वा तु पार्वणं श्राद्धं दधिक्षीरघृतादिभिः भक्ष्यैर्नानाविधैः सम्य
ग्भोजयित्वा क्षमापयेत् ततोऽपराह्णसमये घोषयेन्नगरे नृपः अद्य राज्यं बलेर्लोका यथेष्टं चेष्टतामिति लोक
श्चापि पुरे हृष्टः सुधाधवलिताजिरे कृतचंदनमालाभिरलंकृतगृहे पुरे तथा पानरजोद्विग्ननरनारीमनो
हरे नृत्यवादित्रसंघुष्टे प्रज्वालितप्रदीपके अन्योन्यप्रीतिसंहृष्टे दत्ततालकरे जने तांबूलहृष्टवदने कुंकु
मक्षोदचर्चिते दुकूलपटनेपथ्यस्वर्णमाणिक्यभूषिते अद्भुतोत्कृष्टशृंगारप्रदर्शितकुतूहले युवतीजन
संकीर्णे वस्त्रोज्वलविहारिणि दीपमालाकुले रम्ये विधुतध्वांतबंधने प्रदोषे दोषरहिते शस्ते वंदिजनैर्युते
यात्राविहारसंचारजयजीवेतिवादिभिः दुष्टोपसर्गरहिते राजचौरभयोज्झिते मित्रस्वजनसंबंधिसुहृत्प्रेमा
भिरंजिते ततोऽर्द्धरात्रसमये स्वयं राजा व्रजेत्पुरं अवलोकयितुं रम्यं पद्भ्यामेव शनैः शनैः महता तूर्यघोषे
ण ज्वलद्भिर्हस्तदीपकैः सदृष्टो यातु संपश्यन्कृतरत्नः स्वकैर्नरैः तदृष्ट्वा महदाश्चर्यं समृद्धिं चैवात्मनः शुभां

बलिराज्यप्रमोदश्च ततः स्वगृहमाव्रजेत् एवं गते निशीथे तु जने निद्रार्धलोचने तावन्नगरनारीभिः सूर्प-
डिंडिमवादनैः निःक्राम्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहांगणादिति। कृत्यरत्नावल्यां तु सूर्पडिंडिमैरिति पाठः अ-
स्यामेव रात्रौ कौमुदीमहोत्सव इति निर्णयामृते हेमाद्रौ तु चतुर्दशीमारभ्य प्रतिपदंतं कौमुदीव्रतमुक्तं कौमु-
दीशब्दव्युत्पत्तिरपीत्थं कृता॥ कौ मोदंति जना यस्यां नानाभावैः परस्परं हृष्टास्तुष्टाः सुखायत्तास्तेनेयं कौमुदी।
स्मृतेति। अत्रैव वह्निपुराणे पंचदिनसाध्यमपि कौमुदीव्रतमुक्तं॥ मैत्रेय उवाच कार्त्तिकः खलु मासो वै सर्वदे-
वमयो महान् कृष्णपक्षे विशेषेण तत्र पंच दिनानि तु पुण्यानि तेषु यद्दत्तमक्षयं सर्वकामदं एकादश्यां पायपैर्दत्तं
दीपं प्रज्वाल्य मूषिका मानुष्यं दुर्लभं प्राप्य परां गतिमवाप सा लुब्धकोपि चतुर्दश्यां पूजयित्वा जनार्दनं निर्भ-
क्तिः परसंगत्या विष्णुलोकं जगाम सः श्वपाकोपि त्रयोदश्यां दीपान्दत्वा परैः कृतान् वेश्या लीलावती भूत्वा जगा-
मपदमक्षयं गोपः कश्चिदमावस्यां पूजां दृष्ट्वा च शार्ङ्गिणः मृत्युर्जातः प्रजापालो राजराजेश्वरोभवत् तस्माद्दीपाः
प्रदातव्या रात्रावस्तमिते रवौ गृहेषु सर्वगोष्ठेषु चैत्येष्वायतनेषु च देवानां चैव रथ्यासु श्मशानेषु सरस्सु च ना-
केशीनाशभार्याय कार्यं पंचदिनानि तु पापिनः पितरो ये च लुप्तपिंडोदकक्रियाः चतुर्दश्याममावस्यां पितरः श्रा-
मुवंतिते दिवमिति शेषः॥ तत्र श्रीः पूजनीया तु मनुष्यैश्च प्रयत्नतः श्रीकामैस्तत्र तैः सर्वैः क्रीडितव्यं प्रयत्नतः
बंधुभिः सहितैर्यत्नान्नीतव्यं प्रजागरैः यो हि हर्षप्रयातीह तस्य संवत्सरं जयः द्यूते तु क्रीडिते ह्यत्र विजयः स्या-
जयेध्रुवं सुखं प्रीतिः सुलाभः स्यात्तस्माद्द्यूतं प्रवर्तयेत् गौर्याजितः पुरा शंभुस्तया द्यूते विनिर्जितः तेनासौ शंक-
रो दुःखी सर्वदो मासं सुखान्विता श्रिया सार्द्धं जगद्योनिः शेते विष्णुः सुखान्वितः तस्यां सत्रौ जनानां तत्र तोर्थसुख-
सुप्तिका। इति सुखसुप्तिकाव्रतं तत्र दीपदानं अमावास्या प्रदोषव्यापिनी ग्राह्या तस्यां कर्म्मकालेऽस्पृष्टेः दिन-
द्वये प्रदोषव्याप्तौ परैवा दंडैकरजनीयोगो दर्शस्य स्यात्कदाचन तदा विहाय पूर्वेद्युः परेद्युः सुखसुप्तिकेति ति-
थितत्वे ज्योतिर्निबंधवचनात् उभयदिने प्रदोषव्याप्त्यभावे अर्द्धरात्रव्यापिनी ग्राह्या तस्यां लक्ष्म्यागमनकाल-
लाभात् दिवोदासीये तु प्रदोषस्य कर्मकालत्वात्॥ अर्द्धरात्रे भ्रमत्येव लक्ष्मीराश्रयितुं गृहान् अतः स्वलंकृता
लिप्ता दीपैर्जाग्रज्जनोत्सवाः सुधाधवलिताः पुष्पमालाज्वालोपशोभिता इति ब्राह्मोक्तेश्च प्रदोषार्द्धव्यापिनी मु-
ख्या एककालव्याप्तौ परैव प्रदोषस्य मुख्यत्वादर्धरात्रे तु स्थेयाभावाच्चेति पूर्वेद्युरेव प्रदोषव्यापिन्यमावास्या श्रा-
द्धयोग्या परदिने न यदि तदा पूर्वेद्युरेव प्रदोषे लक्ष्मीं संपूज्य दीपदानं कर्त्तव्यं श्राद्धं तु परदिनेऽपराह्णे कार्य्यं य-
त्र॥ अप्यशक्तैः प्रकर्त्तव्यं श्राद्धं पितृपरायणैः प्रदोषसमये राजन्कर्त्तव्या दीपमालिकेति क्रमः संपूर्णतिथ्य-
भिप्रायेणानुवादो न विधिः तत्कर्मकालव्याप्तेर्बलत्वात्संपूर्णतिथौ प्रामाण्यं खंडतिथ्यां तु व्याप्त्यादिविध्यनुवादानुवा-
द्विरोधाच्च अत्र चामामात्रे रात्रिभोजननिषेधेपि रात्रिभोजनं कार्य्यं निषेधस्य रागप्राप्तभोजनविषयत्वात् वि-
धिस्पष्टेन निषेधानवकाशाच्च अथात्र कृत्यं तत्र संध्यासमये लक्ष्मीपूजनमुक्तं लक्ष्म्यै नम इति नाममंत्रेण कार्य्यं
॥ महालक्ष्म्यां तु लक्ष्मीं पिंडिकां कांचनं तथा वर्जयेदिति पूजनानंतरं लक्ष्मीसूक्तं पठित्वा लक्ष्मीं प्रार्थयेत्। नमस्ते
सर्वदेवानां वरदासि हरिप्रिये या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात्। तथा चात्रैंद्रकुबेरयोरपि पूजा विधेया त-
योः पूजामंत्रौ। ऐरावतसमारूढो वज्रहस्तो महाबलः शतयज्ञाधिपो देवस्तस्मा इंद्राय ते नमः इति कुबेरस्य पूजा-
यांत्र। धनदाय नमस्तुभ्यं निधिपद्माधिपाय च भवंतु त्वत्प्रसादेन धनधान्यादिसंपदः इति अथ लक्ष्मीपूजाप्रयो-
गः देशकालौ संकीर्त्य अस्यां दीपावल्याममावस्यायां मम अलक्ष्मीनिवृत्तिपूर्वकस्थिरलक्ष्मीसर्वसौख्यसौभाग्यप्रा-
वाप्तये सर्वांगसंपन्नलक्ष्मीपूजनं करिष्ये इति संकल्पं विधाय स्वस्त्ययनपूर्वकं गणपतिपूजनं विधाय लक्ष्मीं
पूजयेत्॥ या श्रीः पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी गंभीरावर्त्तनाभिस्तनभरनमिता शुभ्रवस्त्रोत्तरीया
लक्ष्मीर्दिव्यैर्गजेंद्रैर्मणिगणखचितैः स्नापिता हेमकुंभैः नित्यं सा पद्महस्ता मम वसतु गृहे दिव्यमांगल्ययुक्ता॥
इति ध्यात्वा ॐ भूर्भुवः स्वर्लक्ष्मीरिहागच्छ इह तिष्ठ। महालक्ष्मि समागच्छ पद्मनाभगृहादिह नानोपचारपूजेयं त

दर्थं परिकल्पितं इत्यावाहनं। एह्येहि देवि जननि कमले कमलालये कमलेऽस्मिन्स्थितिं देवि सदा त्वं कृपया कुरु
इत्यासनं। गंगादिसलिलाधारं नानामन्त्राभिमन्त्रितं हृद्याद्यं मया दत्तं पाद्यं मे प्रतिगृह्यतां इति पाद्यं। रत्नाकरसमु
द्भूते रत्नभूषाभिभूषिते निधीनामधिपे त्वं हि गृहाणार्घ्यं नमोऽस्तु ते इत्यर्घ्यं। शीतलं जलमानीतं कर्पूरैलासुगंधि
तं एतदाचमनीयार्थं सलिलं प्रतिगृह्यतां इत्याचमनं। स्नानं तव महालक्ष्मि कर्पूरागुरुवासितं सुतीर्थेभ्यः समा
नीतं स्नानं तत्प्रतिगृह्यतां इति स्नानं। तंतुसंतानसंनद्धं कलाकौशल्पनिर्मितं सर्वांगाभरणश्रेष्ठं वसनं परिगृह्य
तां इति वस्त्रं। मलयाचलसंभूतं नानापन्नगसेवितं शीतलं बहुलामोदं चंदनं परिगृह्यतां इति गंधं। अक्षतानरविं
दाक्षि रत्नेशसहोदरे माणिक्यपद्मान्यवादि गृहाण त्वं मयार्पितान् इत्यक्षताः। मिलन्परिमलामोदमत्तालिकु
लसंकुलं नंदनोद्यानसंभूतं पद्मायै कुसुमं नमः इति पुष्पं। गंधसंभारसंनद्धं एष्युवल्लसमुद्भवं सुरासुरनरा
नंदि धूपं देवि गृहाण मे इति धूपं। मार्तंडमंडलाकारं चंद्रबिंबाग्नितेजसं निर्यानं देवि दीपोयं निर्मितस्तव भक्ति
तः इति दीपं। देवतालयपातालभूतलाधारसंभवम् षोडशाकारसंभारं नैवेद्यं ते श्रियै नमः इति नैवेद्यं। स्ना
दिकं विधायापि यतः सिद्धिरवाप्यते एतदाचमनं दत्तं महालक्ष्मि प्रगृह्यतां इति पुनराचमनं। पातालतलसं
भूतं वदनांभोजभूषणं नानागुणसमाकीर्णं तांबूलं देवि ते नमः इति तांबूलं। नारिकेलसनारंगकदलीमातु
लिंगकं देशकालोद्भवं पद्मे गृहाण फलमुत्तमं इति फलं। स्वर्णप्रदपदांभोजे समर्पितमिदं वसु यथाशक्त्या
गृहाण त्वमनंतफलसिद्धये इति दक्षिणाद्रव्यम्। अथांगपूजा। अचलायै नमः पादौ पूजयामि चंचलायै नमः
जानुनी पूजयामि कमलायै नमः कटिं पूजयामि हरिवल्लभायै नमः उदरं पूजयामि ललितायै नमः भुजौ पूज
यामि कमलायै नमः हृदयं पूजयामि उत्कंठितायै नमः कंठं पूजयामि अमलायै नमः मुखं पूजयामि श्रियै नमः शि
रः पूजयामि रमायै नमः सर्वांगं पूजयामि॥ ततः कुबेरपूजा ॐ भूर्भुवः स्वः कुबेर इहागच्छ इति कुबेरमावाह्य
कुबेराय नमः इति मंत्रेण पाद्यादिभिर्दक्षिणांतैः संपूज्य प्रार्थना। कुबेराय नमस्तुभ्यं निधिपद्माधिपाय च भ
वंतु त्वत्प्रसादेन धनधान्यादिसंपदः ततोऽगस्त्यपूजा। ॐ भूर्भुवः स्वः अगस्त्य इहागच्छ अगस्त्याय नमः इति
पाद्यादिभिर्दक्षिणांतैः संपूज्य प्रार्थना। काशपुष्पप्रतीकाश वह्निमारुतसंभव मित्रावरुणयोः पुत्र कुंभयो
ने नमोऽस्तु ते अथेंद्रपूजनं। ॐ भूर्भुवः स्वरिंद्र इहागच्छ इत्यावाह्य। ॐ इंद्राय नम इति पाद्यादिभिः संपूज्य
प्रार्थनां कुर्यात्। विचित्रैरावणस्थाय पौलोम्यालिंगिताय च भास्वत्कुलिशहस्ताय सहस्राक्षाय ते नमः इ
ति संपूज्य। श्रीसूक्तपाठं कुर्यात्। ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजां चंद्रां हिरण्मयीं लक्ष्मीं जातवेदो
ममावह १ तां म आवह जातवेदो लक्ष्मीमनपगामिनीं यस्यां हिरण्यं विंदेयं गामश्वं पुरुषानहं २ अश्वपूर्वां
रथमध्यां हस्तिनादप्रमोदिनीं श्रियं देवीमुपह्वये श्रीर्मा देवी जुषतां ३ कांसोस्मितां हिरण्यप्राकारामा
र्द्रां ज्वलंतीं तृप्तां तर्पयंतीं पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियं ४ चंद्रां प्रभासां यशसा ज्वलंतीं श्रि
यं लोके देवजुष्टामुदारां तां पद्मनेमिं शरणं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणोमि ५ आदित्यवर्णे तपसो
ऽधिजातो वनस्पतिस्तव वृक्षोथ बिल्वः तस्य फलानि तपसा नुदंतु मयांतरा याश्च बाह्या अलक्ष्मीः उपैतु
मां देवसखः कीर्तिश्च मणिना सह प्रादुर्भूतोस्मि राष्ट्रेस्मिन्कीर्तिमृद्धिं ददातु मे ७ क्षुत्पिपासामलां ज्ये
ष्ठामलक्ष्मीं नाशयाम्यहं अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ८ गंधद्वारां दुराधर्षां नित्यपुष्टां करीषि
णीं ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियं ९ मनसः काममाकूतिं वाचः सत्यमशीमहि पशूनां रूपमन्न
स्य मयि श्रीः श्रयतां यशः १० कर्दमेन प्रजाभूता मयि संभव कर्दम श्रियं वासय मे कुले मातरं पद्ममा
लिनीं ११ आपः सृजंतु स्निग्धानि चिक्लीत वस मे गृहे निजां देवीं मातरं च श्रियं वासय मे कुले १२ आर्द्रां पु
ष्करिणीं पुष्टिं सुवर्णां हेममालिनीं सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममावह १३ आर्द्रां पुष्करिणीं यष्टिं पिं
गलां पद्ममालिनीं चंद्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह १४ तां म आवह जातवेदो लक्ष्मीमनपगा-

मिनी यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहं १५ इति सूक्तं पठित्वा। पुष्पांजलिं समर्पयेत् ततो
नीराजनं। सुरासुरशिरोरत्नप्रभानीराजितक्रमे तव सौभाग्यसंसिद्ध्यै कुर्वे नीराजनं रमे इति नीराजनम्। दक्षि
णादक्षिणाकरे स्वभक्तानां वरप्रदे करोमि ते सदा भक्त्या विष्णुकान्ते प्रदक्षिणां इति प्रदक्षिणां कृत्वा प्रणामं कुर्यात्
ततः सर्वत्र दीपान्प्रज्वाल्य॥ दीपदत्ताः स्थापयेद्यथाशक्त्या देवगृहेषु च गोपुरोद्यानचैत्येषु नदीपर्वतवेश्मसु वृक्षमूलेषु
गोष्ठेषु चत्वरेषु गृहेषु च मंदुराकरिशालायां क्रयविक्रयभूमिषु वस्त्रैः पुष्पैर्भूषितव्याः क्रयविक्रयभूमिकाः सर्वत्र
दीपदाने मंत्रः अग्निर्ज्योती रविर्ज्योतिश्चन्द्रो ज्योतिस्तथैव च उत्तमो ज्योतिषां ज्योतिर्दीपज्योतिर्नमोऽस्तु ते एवं दीपदानं
कृत्वा महालक्ष्मीं प्रार्थयेत्। नमस्ते सर्वलोकानां वरदासि हरिप्रिये या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात् या
लक्ष्मीर्दिवसे पुण्ये दीपावल्यां च भूतले गवां गोष्ठेषु कार्त्तिक्यां सा लक्ष्मीर्वरदा मम इति वारत्रयं पठित्वा। या स्वाप
माऽऽसनस्था विपुलकटितटी पद्मपत्रायताक्षी गंभीरावर्त्तनाभिस्तनभरनमिता शुभ्रवस्त्रोत्तरीया लक्ष्मीर्दिव्यैर्ग-
जेन्द्रैर्मणिगणखचितैः स्नापिता हेमकुम्भैर्नित्यं सा पद्महस्ता मम वसतु गृहे दिव्यमाङ्गल्ययुक्ता सर्वमंगलमांग
ल्ये शिवे सर्वार्थसाधिके शरण्ये त्र्यंबके गौरि नारायणि नमोऽस्तु ते अथ विज्ञप्तिः। रूपं देहि यशो देहि भाग्यं भगवति
देहि मे पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे इति लक्ष्मीपूजनं कृत्वा ततो दीपश्राद्धं कुर्यात्। तद्यथा ओमद्ये।
स्वभार्य्यास्मत्पितापितामहप्रपितामहानाममुकशर्म्मणां तथा मातृपितामहीप्रपितामहीनां तथा च मातामह
प्रमातामहवृद्धप्रमातामहानां सपत्नीकानां विश्वेदेवपूर्वकं दीपश्राद्धं करिष्ये इति संकल्प्य। ततः अस्मत्पि
त्रादित्रयमातामहादित्रयाणां सपत्नीकानां दीपश्राद्धसंबंधिनो विश्वेदेवा एते दीपास्तेभ्यो नमः ओं मयास्मत्पितापि
तामहप्रपितामहा मातृपितामहीप्रपितामह्यो मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका एते दीपा वो
नमः इति देवतीर्थेनैव दद्यादिति ततो दानप्रतिष्ठां दत्वा। भूयसीं दक्षिणां दद्यात् एवं दीपदानादि कृत्वा ततो नेत
रकृत्यं कुर्यात्। ब्राह्मणान्भोजयेद्भक्त्या संभोज्य च बुभुक्षितान् अलंकृतेन भोक्तव्यं नववासोपशोभिना स्नि
ग्धैर्मुग्धैर्विदग्धैश्च निर्दिष्टैर्बंधुभिः सहेत्यादित्यपुराणात् स्वयमलंकृतो नववस्त्रावृतो बंधुसुहृद्भृतोमि·
ष्टप्रधानमन्नं भुंजीत अत्रान्यदपि कृत्यं भविष्योत्तरे ततोऽपराह्णसमये घोषयेन्नगरे नृपः अद्य राज्यं बलेर्लो।
का यथेष्टं चेष्टतामित्यादि कथां प्रक्रम्य एवं गते निशीथे तु जने निद्रार्द्धलोचने तावन्नगरनारीभिः सूर्प्प·
डिंडिमनिस्वनैः निष्कास्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहांगनादिति अतोऽनंतरमन्यदपि कृत्यं तत्रैव सुखरात्रेरु
षःकाले प्रदीपोज्वलितालये सर्वान्वधूनबंधूंश्च वाचा कुशलयाऽर्चयेत् प्रदीपवंदनं कार्य्यं लक्ष्मीमंगलहेतवे
गोरोचनाक्षतं चैव दद्याद्गोषु सर्वतः तत्र मंत्रः। विश्वरूपस्य भार्य्यासि पद्मे पद्मालये शुभे महालक्ष्मि नम।
स्तुभ्यं सुखरात्रिं कुरुष्व मे पर्वकाले महाघोरे यस्मा पाडक्कृते कृतं सुखरात्रिप्रभावेण तेनो लक्ष्मीर्व्यपोहतु या रा।
त्रिः सर्वभूतानां या च देवेष्ववस्थिता संवत्सरप्रिया या च सा ममास्तु सुमंगला माता त्वं सर्वदेवानां देवानामदितिसंभवा
आख्याता भूतले देवि सुखरात्रि नमोऽस्तु ते इति दीपावलिकृत्यं अस्यां भानुभौमार्किवारस्वातिनक्षत्रायुष्मद्योगास·
हितामावास्या स्वातिसंपातयोग उक्तो ज्योतिःशास्त्रे॥ भानुभौमार्किवारेषु कार्त्तिके डत्तयो भवेत् आयुष्मान्स्वातिसंयुक्तो
न्यनाशः पशुक्षयः अस्योपपत्तिः शालिहोत्रे प्रश्नयुक्कृत्पदेतिथौ द्वितीयादिके समरात्रे बडवा हयेणीकास्ता।
तिनाग वडवारूपेण सूर्य्यस्य वहति रथं सा भारेण क्रांता क्रुद्धा अश्वान्निरीक्षते भीता तेषां तेजः सत्वबलं च हृष्ट्वा हाति
तस्मात् स्वातियुक्तामावास्या साऽश्विपानामश्वानां महती पीडा भवति एवं च समरात्रे स्वातेः संपात एव निर्दिष्टः तत्र दि
वाकरकिरणैः स्पृष्टा वाजिनो रक्ष्याः॥ पूर्वोक्तारिष्टशंकापहृतये नवरात्रप्रकरणोक्ता वाजिनीराजनाविधिर्बृह
मत्वे न सहिता कार्य्या विष्णुधर्मोत्तरोक्तं स्वातिस्नानमपि कार्य्यं कृत्स्नं च तद्दशपादिपुस्तकद्वितीयातद्दिने च तत्र ये
पंचभंगस्नानमर्घ्यं च पूर्वकं महालक्ष्मीनीराजनसहितं विधेयमेवं कृते पूर्वोक्तारिष्टशंकानिवृत्तिर्भवतीति
अस्यामेव कार्त्तिकामावास्यायां पद्मपुराणे पातालखंडोक्तं केदारगौरीव्रतं दाक्षिणात्याः समाचरंति तत्रायं विधिः ओं

मद्येषगुणविशेषविशिष्टायामस्यांतिथौ मनोवांछिताविच्छिन्नसंपत्प्राप्त्यर्थं दारिद्र्यदुःखदुःस्वप्नादिप्रशमनार्थं
पुत्रपौत्राभिवृद्ध्यर्थं आयुरारोग्याभिवृद्ध्यर्थं श्रीकेदारगौरीप्रीत्यर्थं यथाशास्त्रज्ञानेन यथामिलितोपचारैः पुरुष
सूक्तसहितपुराणोक्तमंत्रैः श्रीकेदारगौरीव्रतांगभूतंतत्पूजनमहंकरिष्ये तत्रादौ प्रथमाब्देनिर्विघ्नतासिद्ध्यर्थं
गणपतिपूजनं स्वस्तिपुण्याहवाचनं च करिष्ये इंद्रंवोमंत्रस्य मधुच्छंदऋषिरिंद्रोदेवता गायत्रीछंदः इंद्रावाहने
विनियोगः ओं इंद्रोविश्वतस्परिहवामहेजनेभ्यः जनेभ्यअस्माकमस्तु केवलः इंद्र इहागच्छेत्यावाह्य पूजयेत्
अग्निंदूतमिति काण्वोत्रमेधातिथिर्ऋषिरग्निर्देवता गायत्रीछंदः अग्न्यावाहने विनियोगः अग्निंदूतंवृणीमहे होता
रंविश्ववेदसंअस्ययज्ञस्यसुक्रतुं अग्निः अग्ने इहागच्छ· यमायसोममित्यस्य यमऋषिर्यमोदेवता त्रिष्टुप्छंदः यमा
वाहने विनियोगः यमायसोमंसुनुत यमाय जुहुताहविः यमंहयज्ञोगच्छत्यग्निदूतोअरंकृत यम इहागच्छ मोषुणइ
त्यस्य गौरकण्वोऋषिः निर्ऋतिर्देवता गायत्रीछंदः निर्ऋत्यावाहने विनियोगः मोषुणःपरापरा निर्ऋतिर्दुर्हणा वधा
त् यदीदस्यावसद्ध निर्ऋते इहागच्छ· तत्वायामीत्यस्य शार्केऋषिः वरुणोदेवता त्रिष्टुप्छंदः वरुणावाहने विनियोग
तत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः अहेडमानोहवोध्युरुशंसमानआयुःप्रमोषीः वरुण इ
हागच्छ· तववायोमंत्रस्य विश्वपांगिरसऋषिः वायुर्देवता गायत्रीछंदः वायोरावाहने विनियोगः॥ तववायवृत
स्पतेत्वष्टुर्जामातरद्भुतः अवांस्यावृणीमहे वायो इहागच्छ· आप्यायस्वेति गौतमऋषिः सोमोदेवता गायत्रीछंद
सोमावाहने विनियोगः आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यंभवावाजस्यसंगथे सोम इहागच्छ· तमीशानमिति
गौतमऋषिः ईशानोदेवता जगतीछंदः ईशानावाहने विनियोगः तमीशानंजगतस्तस्थुषस्पतिं धियंजिन्वमवसे
हूमहेवयं पूषानोयथावेदसामसद्वृधे रक्षितापायुरदब्धः स्वस्तये ओं ईशान इहागच्छ ममपूजांगृहाण एवंसम
स्तलोकपालानामासनादिपूजां कुर्यात् ततोनंदिकेश्वरगणेशपूजनं च पंचोपचारैः कुर्यादिति प्रथमवर्षे द्विती
यादौतु तिथ्यादिसंकीर्त्य मम सकलाभीष्टसिद्ध्यर्थं केदारगौरीव्रते तत्पूजनमहं करिष्ये ततोध्यानंपठेत्। त्रिलो
चनंचतुर्बाहुं चंद्रार्धकृतशेखरं गौर्यालिंगितवामांगं वृषभोपरिसंस्थितं १ गौरीसहितायकेदारायनमः ध्यानं
समर्पयामिनमः॥ सहस्रशीर्षापुरुष· आगच्छदेवदेवेश उमयासहितप्रभो केदारनामकस्वामिन्सर्व
कामफलप्रद आवाहनं। पुरुषएवेदं सिंहासनमिदंदिव्यं तप्तकांचनसन्निभं ददामितेभवानीश संसारार्णव
तारक गौरीसहितायकेदारायनमः आसनं। एतावानस्य· गांगजलंसमानीतं सुवर्णकलशेस्थितं पाद्यंगृहाण
देवेश सर्वदेवनमस्कृत इतिपाद्यं। त्रिपादूर्ध्व· मंदाकिन्याःसमानीतं सुशीतलमिदंजलं मयोपपादितंदेवगृहा
णाचमनीयकं इत्याचमनं। ततोविराडजायत· अर्घ्यंगृहाणदेवेश गंधपुष्पाक्षतैर्युतं मुक्तारत्नादिसंयुक्तं हि पया
जगदीश्वर इत्यर्घ्यं। यत्पुरुषेण· स्नानंपंचामृतैः सम्यग्विधायसुसमन्वितं मयादत्तंगृहाणेश सर्वकामफल
प्रद इति पंचामृतस्नानं। आप्यायस्वेत्यादि वेदोक्तमंत्रैः पंचब्रह्मादिभिर्मंत्रैरर्चितंजाह्नवीजलं ममो परिहृ
पांहत्वागृहाण परमेश्वर इति शुद्धोदकस्नानं। तंयज्ञं· सूक्ष्माणि वस्त्राणि दुकूलानि मयाप्रभो आनीता
नित्वदर्थंतु गृहाण सुरसत्तम इतिवस्त्रं। तस्माद्यज्ञात्· संभृतं· कार्पासकृततंतून्नासंयुक्तं विधिनाततं: म
यात्वदर्थमानीतं गृहाण सुरसत्तम इतियज्ञोपवीतं। अनर्घ्यहेमसंयुक्तं मुक्तामणिविभूषितं अनर्घ्याभर
णंदिव्यंगृहाणपरमेश्वर इत्याभरणं। तस्माद्यज्ञात्सर्वहुतऋचः सामानि· श्रीगंधागुरुकर्पूरकुंकुमेनसम
न्वितं कस्तूरीचंदनाढ्यं च गंधंतेर्पितमीश्वर इतिचंदनं। तस्मादश्वा· अक्षतानन्यवलान्देवशालितंडुलसंभवा
न् गृहाण पार्वतीनाथकृपया परमेश्वर इत्यक्षतं। तंयज्ञमिति· कमलंसेवतीपुष्पंबिल्वपत्राणिशंकर म
यार्पितानितेनाथ गृहाण सुरसत्तम इतिपुष्पं। अथांगपूजा· शंभवेनमः पादौपूजयामि शिवायनमः गुल्फौ
पूजयामि रुद्रायनमः जानुनीपूजयामि भीमायनमः जंघेपूजयामि अभीष्टदायिनेनमः ऊरूपूजयामि सर्व
ज्ञायनमः कटिंपूजयामि पशुपतयेनमः नाभिंपूजयामि उमापतयेनमः हृदयंपूजयामि नीलकंठायनमः

कं पूजयामि सर्वास्त्रधारिणे नमः मूर्द्धानं पूजयामि सदाशिवाय नमः सर्वांगं पूजयामि। वनस्पतिरसोद्भूतः द
शांगगुग्गुलं धूपं कालागुरुसमन्वितं धूपं गृहाण देवेश मनःशोकविनाशन धूपं। ब्राह्मणोस्य गोघृतेन स
माश्रितं कार्पासकृतवर्त्तिकं दीपार्थं ते मया दत्तं वह्निना योजितं प्रभो इति दीपं। चंद्रमा मनसः शर्करा घृतसंयु
क्तं कर्पूरैलासमन्वितं मया निवेदितं देव नैवेद्यं प्रतिगृह्यतां इति नैवेद्यं। नाभ्या आसीत् इदं फलं मया देव।
स्थापितं पुरतस्तव तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि इति फलं। सप्तास्यासन् दक्षिणार्थं तु यत्नेन स्व
र्णरजतव्रजं मया निवेदितं तुभ्यं व्रतसांगुण्यहेतवे इति दक्षिणा। नानारत्नसमायुक्तं नानाचित्रोपशोभि
तं मया निवेदितं भक्त्या आर्त्तिकं प्रतिगृह्यतां इति नीराजनं प्रदक्षिणा। नमः केदारदेवाय नमस्ते शूलपाणये
नमः सर्वात्मने तुभ्यं भक्तानां वांछितप्रद इति नमस्कारान्। अज्ञानाज्ज्ञानतो वापि यद्व्रतं तु मया कृतं न्यूना
तिरिक्तं तत्सर्वं संपूर्णं कुरु शंकर इति प्रार्थना। नंदीश्वराय यवान् दत्वा वडीश्वराय तंडुलान् दद्यात्। व्रतं करो
मि देवेश त्वद्भक्तस्त्वत्परायणः गौरीकेदार भवतु समाप्तं त्वत्प्रसादतः डोरकबंधनं आचार्यपूजनं उद्यापनदा
नमंत्रश्च ॥ प्रातः पूर्वक्रियोपेतान् फलतांबूलमिश्रितान् उद्यापनं गृहाण त्वं केदार वरदो भव नमस्ते देवदेवेश
नमस्ते जगतां पते गौरीपते नमस्तुभ्यं त्राहि मां परमेश्वर इति क्षमापनं। इति गौरीकेदारव्रतपूजनं अथ कथा। पु
रा ऋषयः सर्वे नैमिषारण्यवासिनः शौनकाद्या महात्मानः सर्वशास्त्रविशारदाः तीर्थयात्राप्रसंगेन गंगाद्वारमु
पागमन् तत्र स्नाताः कृतजपा विधिवद्दक्षिणादडः॥ यावत्तत्रोपविष्टास्ते हर्षनिर्भरमानसाः अद्रक्षुस्त
त्र सूतं शास्त्रार्थकोविदं ददर्श सोपि तांस्तत्र ऋषीन् विगतकल्मषान् नत्वा दंडवद्भक्त्या तैश्चापि परिपूजितः
तेषां चक्रुस्तथातिथ्यं कुशलप्रश्नमेव च सुखोपविष्टं तं सूतं पप्रच्छुरिदमादरात् ऋषय ऊचुः सूत सूत महा
प्राज्ञ चिराद्दृष्टोसि सुव्रत कस्मिंस्तीर्थे वा देशे कालोयं विहितस्त्वया त्वद्दर्शनेनाति सौख्यं प्राप्तं हि परमं महत्
किंविहितं त्विच्छामस्त्वत्तः शृणुष्व महामते त्वयोक्ता विविधा धर्मास्तथा नानाविधाः कथाः व्रतानि च विचित्राणि
मनोरथकराणि च इदानीं वद नः सूत व्रतं परमपावनं यत्कृत्वा सर्वसिद्धिः स्यान्नराणां वांछितप्रदा सूत उवाच
साधु पृष्टं मुनिवरा व्रतं देव्या महाद्भुतं ममापि कथितं हर्षो जायते नात्र संशयः अस्ति केदारगौरीति व्रतं परमका
मदं विस्तरात्कथितं लक्ष्म्यै लक्ष्म्या चैतत्तथैव च ऋषय ऊचुः केन प्रकाशितं मर्त्ये विधानं तस्य कीदृशं देवता का
च पूज्या स्यात्सर्वं विस्तरतो वद सूत उवाच आंध्रदेशे पुरा कश्चिद्द्विजो भूच्छास्त्रकोविदः नाम्ना भास्करशर्मेति।
स्वकर्मपरिनिष्ठितः अकिंचनोपि सद्वृत्तः कुटुंबं परिपालयन् सत्यव्रतीति तस्यासीद्भार्या परमशोभना क
न्याद्वयं सुतश्चैकः स्कंदशर्मेति विश्रुतः कमला विमला चेति नाम नीतिं तयोः पृथक् नैकदाचिद्वनं याते इंधनार्थं
तपोधनाः अमंत्र्यौ च वने तस्मिन्क्रीडंत्यौ च परस्परं तावत्सौगंधिको वायुस्तयोरंतिकमागमत् क्रांतोयं वायुरायाति चिंतयंत्यौ
पुनः पुनः प्रयाते तेन मार्गेण यत्रोत्पन्नः स चानिलः ददृशाते गणेशं वै पुरतो द्वारपालकं गणेशोपि तदा प्राह वच
नं द्विजकन्यके वनमेतद्दुर्विलंघ्यं सदेवासुरमानवैः विशेषतो महेशेन देव्या चापि सुरक्षितं अतः परं न गंतव्य
मीदृशाबलीयसी स्थीयतां तावदत्रैव नियमाद्गम्यते मया देव्यै देवाय च मया युवाभ्यामागतं त्विति गणेशोपि त
दा गत्वा मातरे सर्वं न्यवेदयत् श्रुत्वा वाक्यं गणेशस्य देवी प्राह गिरेः सुता गच्छानय द्विजसुते पश्येतां मम पूजनं इति
श्रुत्वा गणेशेनागच्छतं द्विजकन्यके सहैवेंधनभारेण कंदमूलफलादिना शरीराच्छादनं चैव तयोः किंचिन्न दृश्य
ते कौपीनमात्रमेवासीत्केवलं गुह्यगुप्तये तथैव ते गृहीत्वा तु मातुरंतिकमागमन् देव्यापि दृष्टं तद्युग्ममतिदीनं च
यान्तं र एतस्मिन्नंतरे चैव ते कन्ये शुभलक्षणे चक्राते दंडवद्भूमौ प्रणामं चोचतुस्तथा कन्ये ऊचतुः मातः कमलपत्रा
क्षि किमिदं क्रियते त्वया कृपया वद देवेशि सर्वज्ञासि न संशयः अद्य नौ सफलं जन्म जीवितं च सुजीवितं देवि त्वद्द
र्शनाद्देव यन्नौ तौ पितरौ च नौ न स्नातं शक्तिरस्माकं भक्तिका विज्ञातं मये पार्वत्युवाच व्रतं केदारगौर्याख्यं क्रिय
ते यम या शुभे यस्यानुष्ठानमात्रेण लभ्यंते सर्वसिद्धयः इदं साक्षात्महेशेन कथितं कृपया मम यस्मिन्कृते सर्वसिद्धिस्त

द्दिं क्रियते मया कन्येऊचतुः वद मातः कथं कार्य्यं व्रतं परमपावनं कस्मिन्दिने च वा मासे देवताका च पूजये
त् देव्युवाच आश्विनस्यासिते पक्षे ह्यमावास्या यदा भवेत् तस्यां व्रतमिदं कार्य्यं यथोक्तं शंभुना पुरा प्रथमेऽब्दे
यदा कार्य्यं तद्वदामि तपोधने कृत्वा कार्पाससूत्राणि दशैव च प्रयत्नतः कृत्वा नि च कुमार्य्या च प्रवृत्तान्यविमलो
दकैः तत्संख्यया च पत्राणि क्रमुकस्य फलानि च तत्संख्ययान्यपूपाश्च कर्त्तव्या वै प्रयत्नतः नानाविधानि द्र
व्याणि ऋतुकालोद्भवानि च सूर्पं वंशमयं चैकं सौभाग्यद्रव्यसंयुतं श्रद्धाम एकं नारिकेलं नैवेद्यं कालसंभवं
एवं संभृत्य संभारान् ततः पूजां समाचरेत् सौवर्णी प्रतिमा कार्य्या शिवस्यांबिकया सह तस्याग्रे सूत्रदशकं विन्यसे
च्च सुशोभनं पूजनं विधिवत्कार्य्यं धूपदीपादिभिः क्रमात् दक्षिणा च यथाशक्त्या दद्याद्देवस्य तुष्टये विप्रः पुरुष
सूक्तेन पूजयेत्स्त्री पुराणजैः एवं संपूज्य विधिवद्भोजयेद्द्विजदंपती साप्यज्ञानेव कस्यापि दद्याद्विप्राय दक्षिणां
नैवेद्यं स्वयमश्नीयात्तांबूलं च विशेषतः वर्षमध्ये कार्यसिद्धिर्भवत्येव न संशयः वर्षे द्वितीये तत्सर्वं द्विजाय प्रतिपा
दयेत् एकविंशति सूत्राणि सपर्णानि फलानि च अपूपाश्चैव कर्त्तव्या एकविंशति संख्यया विधिनानेन कर्त्त
व्यं व्रतं परमपावनं सूत उवाच इति श्रुत्वा वचो देव्यास्ते कन्ये शुभलक्षणे स्वयाचतुर्व्रतं देव्या भक्त्या परमया
मुदा तयोस्तु ज्ञातदा देवी कारुण्यपूतमानसा ददौ तयोर्विधानेन यथोक्तं सूत्रपाणिनं न्यग्रोधस्य च मूला
नि फलानि च दलानि च आनीय सत्वरं तत्र प्रत्येकं दशसंख्यया अपूपाश्च फलान्यत्र समग्राम याः शुभलक्षणाः
मात्याभावे हृत्वाश्च कुसुमैः पूजनं कृतं कुसुमानां केसराणि तेषां चैवाहृतास्तथा एवं संपूज्य विधिवद्गौरी
पुनरूवाच ते बध्नीतां स्वकरे सूत्रं नैव त्याज्यं कदाचन इममिंधनभारं च कंदमूलफलानि च गृहीत्वा गम्यतां
सर्वं पश्चान्नैव विलोकयेत् तथेत्युक्त्वा च ते कन्ये प्रयाते स्वगृहं प्रति तत्सर्वं व्रतसामर्थ्याद्दिव्यं सममवत्तदा
अपूपाश्चैव संजाता दिव्याः षड्रससंयुताः तानि सर्वाणि वासांसि रक्षणात्कौशेयतां ययुः स एवेंधनभारस्तु
स्वर्णभारस्तदाभवत् मात्रा दृष्टं तु तत्सर्वं हर्षिता विस्मिता भवत् मातापोवाच ते कन्ये किमिदं भात्यपूर्वव
त् किं कृतं किं हुतं जप्तं युवाभ्यां किं तपः कृतं इति मातुर्वचः श्रुत्वा ते कन्ये प्रोचतुस्तदा कन्येऊचतुः न जप्तं न हुतं
किंचिन्नैव किंचित्तपः कृतं भवानीशंकरौ विप्रो नान्यं देवं कदाचन ताभ्यां दत्तं व्रतमिदं प्रसन्नाभ्यां मनोरमं तेना
भूत्सर्वसंपत्तिरियं मातर्न संशयः त्वमप्येव व्रतमिदं कुरुष्व यतमानसा सूत उवाच तदा सत्यव्रता चक्रे व्रतं क
न्योपदर्शितं तथैव तत्कुलं जातं यन्न यात्यसमाकुलं अथ ते कन्यके जाते विवाहार्थं यथोचिते राजानौ द्वौ समाया
तौ पद्माकरसुधाकरौ दक्षिणापतिरेकश्च उत्तरेशस्तथापरः ताभ्यां कन्याद्वयं दत्तं व्रतस्यास्य प्रभावतः पद्माकरेण
कमला नीता स्वसदनं प्रति सुधाकरेण विमला प्रमानीय स्तु संभ्रमात् ताभ्यां तत्क्रियते नित्यं व्रतं परमभक्तितः
एकदा तत्प्रविष्टा सा स्वगृहे स्त्रीगणैर्युता स्त्रीभिस्ताभिस्तत्र दृष्टं तद्धस्ते तत्सुडोरकं ताऊचुः किमिदं भद्रे डोरकं स्व
विभूषणं किं तेन मंत्रिरे कमाणि भूषिणा निश्चविस्मिते नानाविधानि रत्नानि तवहस्ते किल सुंदरि आकर्ण्य सत्यव्र
तया स्त्रीभिरीरितमाशु तत् निष्कास्य सूत्रं तद्देवाज्ञाविनोदस्य गौरवात् नैव चास्य फलं पुण्यं कदाचिद्दृश्यते पुरा स
त्यव्रतायास्तत्र आगं तक्षणात्क्षीणतां ययौ यथापूर्वमभूत्सर्वं भाग्यं विलयतां गते शाकवल्लीफलैर्नित्यं क्रियते भोज
नादिकं अथ भोक्तुं यदा नैव किंचित्सा सुतमब्रवीत् भगिन्यौ ते चंद्रशर्मन्नू वर्त्तते नृपतेर्गृहे तयोः समीपं गत्वा च
किंचिद्द्रव्यार्थमानय मातुर्वचनमाकर्ण्य चंद्रशर्मा द्विजोत्तमः पद्माकरस्य नृपतेर्नगरं प्रथमं ययौ भगिनी
कमला यत्र वर्त्तते पतिदेवता स तन्नगरमासाद्य नदीतीरे बहिःस्थितः दास्यस्तत्र समानीतार्थमागताः श्रुतश्च सदा
तं चंद्रशर्मागतं दृष्ट्वा प्रत्युवाच द्विजर्षभः युष्माकं स्वामिनी या हि मम सा भगिनी शुभा भ्राता हि चंद्रशर्मेति तस्याः
वनिवेद्यतां ता स्तत्र स्योपट्टा मंत्र वस्त्रं नानाविधं तदा भ्रातृस्नेहवशोऽपि सिपरवैभवमात्मनः तन्मध्येनाभवत्त्वेका
शुभाचारा सुलक्षणा द्विजवर्यमहाभागा तवादेशं ब्रवीम्यहं सा समागम्य तत्सर्वं कमलायै न्यवेदयत् तत्समाक
र्ण्य कमला तं समानीय सत्वरं अकिंचनाकृतिं दृष्ट्वा आनर्घ्यं शाडुवेले तस्याश्चैव भवं दृष्ट्वा सोऽपि लज्जान्ननन्तः

नीत्वा तं गृहमध्ये तु बहुसन्मानपूर्वकं दिवसान्यथ समाष्टौ समास्थाय प्रयत्नतः ततः पंचदशाहे तु कृत्वा पाथेयमुत्तमं
हिरण्येन समायुक्तं दत्वा तस्मै विसर्जयेत् पाथेयं तद्गृहीत्वा स व्रतस्थो द्विजपुंगवः गच्छन् तेन स मार्गेण तृषया परि
पीडितः तावद्ददर्श विमलां द्विजः पुष्करिणीं शुभां तटे विन्यस्य पाथेयं स्वयं जलमथाग्रहीत् तावत्तज्जलवीचीभि
र्हृतं भक्ष्यं क्षणेन हि पुनः प्रायाच्चंद्रशर्मा भगिनीसदनं प्रति निवेदयामास तदा यद्वृत्तं पथि कौतुकं श्रुत्वा सा पुन
रेवान्यद्धिरण्यं प्रददौ तथा पादत्राणे हिरण्यं स गृहीत्वा स प्रययौ द्विजः पादत्राणं च मार्गे तत्पंके मग्नं क्षणेन हि पुनरेव
समायातो भगिनीं प्रति स द्विजः तद्वृत्तं सर्वमाचष्ट भगिन्यै ब्राह्मणर्षभः तन्निशम्याथ विमला पुनरेव यष्टिं ददौ
निक्षिप्य यष्टिमध्ये तु द्रव्यं यष्टिं प्रतस्थिवान् यावन्मार्गे समागच्छन् यष्टिमादाय सत्वरः तावत्कश्चित्समायातः पुनर्यष्टि
मपाहरत् पुनः प्रयातो भगिनीं चंद्रशर्मा महामतिः उवाच पथि यद्वृत्तं निशम्याथ सुविस्मिता मात्रा न क्रियते भ्रातर्व्र
तं परमपावनं नेति सोऽप्याह वचनं चंद्रशर्मा पुनः पुनः कमलोवाच तावदत्रैव तिष्ठ त्वं भ्रातः पंचदिनावधि षष्ठाह्
न्याश्विनस्याथ अमावास्या भविष्यति व्रतं केदारगौर्याख्यं तस्याः कृत्वा यथाविधि ततो गच्छ स्वभवनं कृतकृत्यो भविष्य
सि तथेत्युक्त्वा स्थितस्तत्र व्रतं चक्रे यथाविधि तां समामंत्र्य भगिनीं प्रययौ स्वगृहं प्रति आगतस्तेन मार्गेण यत्र पुष्क
रिण्यभूत् पुनरेव तृषाक्रांतस्तज्जले स्वगृहे ततः जलांतर्गतपाथेयं द्विजहस्ते तदाभवत् ततो जगाम पुरतः पा
दत्राणं च लब्धवान् यष्टिं च पुरुषः प्रादात् दैवायत्ताद्बलात् एवं सर्वं पुनर्लब्धं व्रतस्यास्य प्रभावतः गृहं समा
गम्य ततो मात्रे सर्वं न्यवेदयत् श्रुतं पुत्रमुखात्सर्वं विस्मितं व्रतमादरात् तदेव सूत्रं संगृह्य यथोक्तं पूर्वमेव च यथो
क्तेन विधानेन चकारातीव भक्तितः पुनरेव यथा पूर्वं धनधान्ययुताभवत् तदारभ्य व्रतमिदं मर्त्यलोके प्रका
शितं सर्वाभिलषितार्थानां सद्यः प्रत्ययकारकं सूत उवाच इदं केनापि न ज्ञातं विना शंभुं मुनीश्वराः शंभुनापि
स वेदत्वं रमायै विष्णुनार्पितं लक्ष्म्या वदन्निदं द्राक् इंद्राणी बहुलीकृतं तदारभ्य व्रतमिदं क्रियते मानवैर्भुवि
यस्याराधनमात्रेण प्राप्यंते सर्वसिद्धयः भूमौ व्रतानि चान्यानि संति नानाविधानि च परमेतस्य सर्वाणि कलां नार्हं
ति षोडशीं इति पूर्वं मया दृष्टं पुराणे मुनिपुंगवाः तदद्य कथितं विप्राः किमन्यच्छ्रोतुमिच्छथ॥ इति पाद्मे केदार
गौरीव्रतम् अन्यदप्युक्तं भविष्योत्तरे॥ यो यादृशेन भावेन तिष्ठत्यस्यां युधिष्ठिर हर्षदैन्यादिरूपेण तस्य वर्षं प्रया
ति हि रुदिते रोदनं वर्षं हृष्टे वर्षं प्रहृष्यति भुक्ते भोगी भवेद्वर्षं स्वस्थे स्वस्थं भविष्यति तस्माद्धृष्टैस्तुष्टैश्च कर्त
व्या कौमुदी नरैः वैष्णवी दानवी चेयं तिथिः पैत्री युधिष्ठिर अन्यच्चात्रैव। प्रभातसमये राजा तोषणीयाः सुहृज्जनाः
सुवासिनीभ्यो देयानि वस्त्राण्याभरणानि च सन्मानेनैव संतोष्या भोजनेन द्विजोत्तमाः भोजयेत्पूजयेद्रत्नैरतः
पुरविलासिनीः स्वजातिवनितातोष्यादानेन च तथा द्विजाः वस्त्रैस्तांबूलदानैश्च नैवेद्यैः कुसुमैः शुभैः स्वना
मांकैः स्वयं राजा तोषयेत्स्वजनान्पृथक् तथा गणाधिपत्यांश्च तथा मल्लान्भटान्नरान् वृषभान्महिषांश्चैव युद्ध्य
मानान्नरैः सह गजानश्वांश्च योधांश्च पदातीन्समलंकृतान् मंचारूढः स्वयं पश्येन्नटनर्त्तकचारणान् कुद्दाप
येत्रासयेच्च गोमहिष्यादिकं तथा दृष्यान्मोचयेत्तेभिरुक्तिप्रत्युक्तिवादिभिरिति। अस्यां संक्षेपकृत्यं नारदीये
॥ ऊर्जामायां दीपदानं देवागारगृहेषु च नद्यारामतडागेषु चैत्यगोष्ठापणेषु च समर्चनं तथा लक्ष्म्याः स्वर्णरौप्यकृ
ताकृतेः द्यूतं च वर्षफलदं जये चापि पराजये गवां पूजात्र विहिता शृंगाद्यंगानुरंजनैः पायसान्नादिदानैश्च नम
स्कारप्रदक्षिणैः॥ अथ दीपावलीकथा भविष्योत्तरे॥ श्रीकृष्ण उवाच पुरा वामनरूपेण याचयित्वा त्रिमाधराम्
बलेर्यज्ञे हरिः सर्वं क्रांतवान्विक्रमैस्त्रिभिः इंद्राय दत्तवान् राज्यं बलिं पातालवासिनं कृत्वा दैत्यपतेर्वंशं महो
त्सवं पुनर्नृप एकमेव हि भोगार्थं बली राज्येऽभिषेचितः रहस्यं हितदेतत्ते कथयामि नरोत्तम कार्त्तिके कृष्णपक्षस्य
पंचदश्यां निशागमे यथेष्टचेष्टा दैत्यानां राज्यं तेषां महीतले युधिष्ठिर उवाच विशेषेण हृषीकेश कौमुदी
वद मे प्रभो किमर्थं दीयते दानं तस्यां का देवता भवेत् किं च तेषां भवेद्देयं केभ्यो देयं जनार्दन प्रहर्षः कौतनि
र्दिष्टः क्रीडा कात्र प्रकीर्तिता श्रीकृष्ण उवाच कार्त्तिके कृष्णपक्षे तु चतुर्दश्यां दिनोदये अवश्यमेव कर्त्तव्यं स्ना
नं नरकभीरुभिः अपामार्गस्य पत्राणि भ्रामयेन्मस्तकोपरि ततश्च तर्पणं कार्यं धर्मराजस्य नामभिः यमाय

यमराजाय मृत्यवे चांतकाय च नरकाय प्रदातव्यो दीपः संपूज्य देवताः ततः प्रदोषसमये दीपान्दद्यान्मनोर
मान्। ब्रह्मविष्णुशिवादीनां भवनेषु विशेषतः कूटागारेषु चैत्येषु सभासु च नदीषु च तडागोद्यानवापीषु प्रतो
लीनिष्कुटेषु च सिद्धार्थबुद्धचामुंडाभैरवायतनेषु च मंदुरासु विविक्तासु हस्तिशालासु चैव हि एवं प्रभा
तसमये त्वमावास्यां नराधिप स्नात्वा देवान्पितॄन्भक्त्या संपूज्याथ प्रणम्य च कृत्वा तु पार्वणं श्राद्धं दधिक्षीरघृ
तादिभिः भोज्यैर्नानाविधैर्विप्रान्भोजयित्वा क्षमाप्य च ततोऽपराह्णसमये घोषयेन्नगरे नृपः अद्य राज्यं बले
र्लोकोऽयथेष्टं चेष्टतामिति लोकश्चापि गृहे हृद्ये सुधायाधवलिताजिरे हृद्यचंदनमालाद्यैश्चर्चिते च गृहे गृहे द्यू
तपानरतोद्रिक्तनरनारीमनोहरे नृत्यवादित्रसंतुष्टसंप्रज्वलितदीपके अन्योन्यप्रीतिसंहृष्टदत्तालक
रजने तांबूलहृष्टवदने कुंकुमचंदनचर्चिते दुकूलपटनेपथ्यस्वर्णमाणिक्यभूषिते युवतीजनसंकीर्णे
दीपोज्ज्वलविहारिणि अद्भुतोद्भासितागोष्ठसंदर्शितकुतूहले दीपमालाकुले रम्ये विध्वस्तध्वांतसंचये प्रदो
षे दोषरहिते ह्यस्तदोषागमे शुभे आशीःपूर्णमुखाभिश्च कन्याभिः क्षिप्ततंडुले नीराजनं प्रकर्तव्यं वृक्षशाखा
स्थदीपकैः भ्राम्यमानास्ततो मूर्ध्नि मनुजानां नराधिप योजनानामरदस्त्रीहर्षात्प्रचरते जनं वृक्षशाखांत
दीपानां निश्चयो दर्शनाद्भवेत् नीराजनं तत्तमसः प्रोच्यते विजयप्रदे तस्माज्जनेन कर्तव्यं रक्षोदोषभयावहं
यात्राविहारसंचारे जयजीवेतिवादिभिः तुष्टोपसर्गरहिते राजकोपभयोज्झिते मित्रस्वजनसंबंधिसुहृत्सं
मानुरंजिते ततोऽर्धरात्रसमये स्वयं राजा व्रजेत्पुरं अवलोकयितुं रम्यं पद्भ्यामेव शनैः शनैः महता तूर्यघोषे
णज्वलद्भिर्हस्तदीपकैः हट्टशोभायुतं पश्यन्कृतरक्षः स्वकैर्जनैः तद्दृष्ट्वा महदाश्चर्यं मूर्ध्नि चैवात्मनः प्रभो ब
लिराज्यप्रसादं च ततः स्वगृहमाव्रजेत् एवं गते निशीथे तु जने निद्रार्द्धलोचने तावन्नगरनारीभिर्मडुडिंडिमवाद
नैः निष्कास्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात् ततः प्रबुद्धे सकले जने जाते महोत्सवे माल्यदीपकहस्ते च स्ने
हनिर्भरवत्सले वेश्याविलासिनीसार्थस्वस्तिमंगलकारिणि गृहाद्गृहं व्रजति तु पादहंभप्रदायिनि पिष्ट
कोद्वर्तनपरे गुरुशुश्रूषणाकुले द्विजाभिवादनपरे सुखरागादिवादिनि सुवासिनीभिश्च यन्नंदीयमाने यदृ
च्छया तथा प्रभातसमये यथार्हमानयेज्जनान् सद्भावेनैव संतोष्य देवान्स्वगुरुषद्विजान् अन्नदानान्नपानैर्वा
वाक्यदानेन पंडितान् वित्ततांबूलदानैश्च अर्थिनः सामंतपार्थिवान् पदातिजनसंलग्नान्ग्रैवेयकटकादिभिः
स्वनामांकैः स्वयं राजा तोषयेत्स्वजनान्पृथक् यथार्हं तोषयित्वा तु ततो मल्लभटान्नरान् वृषभान्महिषांश्चै
व युध्यमानान्यैः सह राजानश्चाश्वयोधांश्च पदातीन्समलंकृतान् मंचारूढः स्वयं पश्येन्नटनर्तकचारणान् उदी
पयेत्त्रासयेच्च गोमहिष्यादिकं ततः वृषान्धर्षापयेन्नोभिर्युक्तिमत्सूक्तिकावदेत् ततोऽपराह्णसमये पूर्वस्यां दि
शि भारत मार्गपालीं प्रबध्नीयात्तुंगस्तंभेऽथ पादपे कुशकाशमयीं दिव्यां लंबकैर्बहुभिर्वृतां वीक्षयित्वा वाजिग
जान्स्ताईयामत्रयेगाते गावो वृषाश्च माहिष्यो मंडिताश्चदितोत्कटाः कृते होमे द्विजेंद्रैश्च गृहीत्वा मार्गपालिकां
राष्ट्रमंत्रेण वा राजन्सहस्रेण शतेन च स्वशाक्यपेतया वापि गृहीयाद्ग्राम्यभोजनैः मातुः कुलं पितृकुलमात्मा
नं सह बंधुभिः संतारयेच्च सततं मार्गपालीं ददाति यः नीराजनं च तत्रैव कार्यं राज्ञो जयप्रदं मार्गपालीं ततो लं
घयंतु गावो गजा वृषाः राजानो राजपुत्राश्च ब्राह्मणाः शूद्रजातयः मार्गपालीं समुल्लंघ्य नीरुजः स्यात्सुखी
नदा हत्वैवं सर्वभावेन रात्रौ दैत्यपतेर्बलेः पूजां कुर्यान्नृपः साक्षाद्भूमौ मंडलके कृते बलिमालिख्य दैत्येंद्रं व
र्णकैः पंचरंगकैः सर्वाभरणसंपन्नं विंध्यावल्या सहासितं कूष्मांडबाणजंभाद्यसुरदानवसंयुतम् संपूर्ण
हृष्टवदनं किरीटोत्कटकुंडलं द्विभुजं दैत्यराजानं कारयित्वा नृपः स्वयं गृहस्य मध्ये शालायां दत्त्वार्घ्यादि ततोऽर्च
येत् भ्रातृमंत्रिजनैः सार्धं संतुष्टो वंदिभिस्ततः कमलैः कुमुदैः पुष्पैः कल्हारै रक्तकोमलैः गंधधूपान्ननैवेद्यैः
नैर्गुडपूपकैः मद्यमांससुरालेह्यदीपमाल्योपहारकैः मंत्रेणानेन राजेंद्र समंत्री सपुरोहितः बलिराज नमस्तु
भ्यं विरोचनसुत प्रभो भविष्येंद्र सुराराते पूजेयं प्रतिगृह्यतां एवं पूजां नृपः कृत्वा रात्रौ जागरणं ततः कारये

वेत्रणीयादिनटनृत्यकथानकैः लोकश्चापि गृहस्यांते शय्यायां शुक्लतंडुलैः संस्थाप्य बलिराजानं फलैः पुष्पैः
प्रपूजयेत् बलिमुद्दिश्य दीयंते दानानि कुरुनंदन यानि तान्यक्षयाण्याहुर्मयैवं संप्रदर्शितं यदस्यां दीयते दा
नं स्वल्पं वा यदि वा बहु तदक्षयं भवेत्सर्वं विष्णोः प्रीतिकरं परं विष्णुना वसुधा लब्ध्वा तुष्टेन बलये पुनः उपका
रकं दत्तमसुराणां महोत्सवं ततः प्रभृति राजेंद्र प्रवृत्ता कौमुदी शुभा सर्वोपद्रवविद्रावा सर्वविघ्नविनाशिनी
लोकशोकहरी काम्या धनपुष्टिसुखावहा कुशब्देन मही ज्ञेया मुदो हर्षे ततो द्वयं धातुज्ञैर्निगमज्ञैश्च तेनैषा
कौमुदी स्मृता एकमेवमहोरात्रं वर्षे वर्षे विशांपते दत्तं दानवराजस्य चादर्शमिव भूतले यः करोति नृपो राष्ट्रे
तस्य व्याधिभयं कुतः कुतो वैरिभयं तत्र नास्ति मृत्युकृतं भयं सुभिक्षं क्षेममारोग्यं संपदां पदमुत्तमं निरुजश्च
जनाः सर्वे सर्वोपद्रववर्जिताः कौमुदीकरणाद्राजन्भवंतीह महीतले योयादृशेन भावेन तिष्ठत्यस्यां युधिष्ठि
र हर्षदैन्यादिरूपेण तस्य वर्षं प्रयाति हि रुदिते रोदनं वर्षं हृष्टे वर्षं प्रहृष्यति भोगे भोक्ता भवेद्वर्षं स्वस्थः स्वस्थो
भवेदिति तस्मात्प्रहृष्टैस्तुष्टैश्च कर्त्तव्या कौमुदी नरैः वैष्णवी दानवी चेयं तिथिः प्रोक्ता युधिष्ठिर उपशमितमेघना
दं प्रोद्दलितदशाननं रामं रामायणमिव सुभगं दीपदिनं हरतु वो दुरितं कुष्मांडवाणारंभं कुवलयखंडैश्चये
नृपाभद्रं शरदिव हृतविगतनिद्रं दीपदिनं हरतु वो दुरितम् दीपोत्सवे जनितसर्वजनप्रमोदं कुर्वंति ये सुमन
यो बलिराजपूजां दानोपभोगसुखबुद्धिशतानि चैव हर्षेण वृद्धिमिव पार्थिव यांति तेषां नष्टश्च दोषो न सुरे
ज्यदोषस्ताराबलं चंद्रबलं न शुद्धं विवाहिताया नवकन्यकाया दीपोत्सवे सिद्धिकरः प्रवेशः ॥ इति श्री भवि
ष्योत्तरे दीपावल्यां कौमुदीकथा इति कार्त्तिकामावास्याकृत्यम् अथ कार्त्तिकशुक्लप्रतिपदाकृत्यम् अत्र द्यूता
दि कर्त्तव्यं तथा हेमाद्रौ आदित्यपुराणे ॥ शंकरस्तु पुरा द्यूतं ससर्ज सुमनोहरं कार्त्तिके शुक्लपक्षे तु प्रथमेऽहनि
सत्यवान् जितश्च शंकरस्तत्र जयं लेभे च पार्वती अतोऽर्थे शंकरो दुःखी उमा नित्यं सुखोषिता तस्माद्यूतं प्रकर्त्त
व्यं प्रभाते तत्र मानवैः तस्मिन्द्यूते जयो यस्य तस्य संवत्सरं जयः पराजये विरुद्धं तल्लब्धनाशस्ततो भवेत् श्रोत
व्यं गीतवाद्यादिस्तुतिभिः स्वलंकृतैः दीपमालापरिक्षिप्तं तथा धूपेन धूपितं दयिताभिश्च सहितैर्नेया सा च भवे
न्निशा नववस्त्रैश्च संपूज्या द्विजसंबंधिबांधवाः इति अत्रान्यदपि कृत्यं तत्रैव ततः प्रवृत्ते सकले जने ग्राममहोत्स
वे माल्यदीपकहस्ते च स्नेहनिर्भरवत्सले वेश्याविलासिनीसार्थस्वस्तिमंगलचारिणि गृहाद्गृहं व्रजति च पाद
भ्यंगप्रदायिनि पिष्टकोद्वर्त्तनपरे गुरुशुश्रूषणाकुले द्विजातिवंदनपरे सुखरात्र्यादिवादिनि प्रभातसमये
राज्ञा तोषणीयास्ततो जनाः सुवासिनी प्रमोदे यानि वस्त्राण्याभरणानि च सद्भावेनैव संतोष्यादानेन च तथा द्वि
जाः वस्त्रैस्तांबूलदानैश्च पुष्पकर्पूरकुंकुमैः भोजयेत्पूजयेद्द्रव्यैः ततः पुरविलासिनीः पदातिजनसंघातान्सै
वेषैः कंकणैः शुभैः स्वनामांकैः स्वयं राजा तोषयेत्स्वजनान्पृथक् तथा गणाधिपत्यांश्च तथा मल्लान्भटान्व
रान् वृषभान्महिषांश्चैव युध्यमानान्परैः सह गजानश्वांश्च योधांश्च पदातीन्समलंकृतान् मंचारूढः स्वयं रा
पश्येन्नटनर्तकचारणान् क्रीडापयेच्च सर्वत्र गोमहिष्यादिकांस्ततः वृषान्धर्षापयेद्गोभिरुक्तिप्रत्युक्तिवादि
भिः ततोऽपराह्णसमये पूर्वस्यां दिशि भारत मार्गपालीं प्रबध्नीयात्तुंगस्तंभेऽथ पादपे कुशकाशमयीं दिव्यां ल
बकैर्बहुभिर्वृतां दीक्षयित्वा गजानश्वान्सार्थया मंत्रयोगतः गावो वृषाः समहिषा मंडिता घंटिकोत्कटाः कृते
होमे द्विजेंद्रैस्तु बध्नीयान्मार्गपालिकां दुर्गामंत्रेण होमस्तु हूमेनाष्टोत्तरं शतं नमस्कारं ततः कुर्यान्मंत्रेणा
नेन सुव्रतः मार्गपालि नमस्तुभ्यं सर्वलोकनमोस्तुते विधेयैः पुत्रदाराद्यैः पुनरेहि व्रजस्व भो नीराजनं च कं
नैव्यत्तत्रैव राष्ट्रवर्द्धने मार्गपालीतले नैव नेया गावो गजा वृषाः राजानो राजपुत्राश्च ब्राह्मणाः शूद्रजातयः मार्गो
पालिं समुल्लंघ्य नीरुजः स्युः सुखान्विताः योयादृशेन भावेन तिष्ठत्यस्यां युधिष्ठिर हर्षदैन्यादिरूपेण तस्य वर्षं
प्रयाति हि रुदिते रोदिते वर्षं हृष्टे वर्षं प्रहृष्यति भुक्तौ भोक्ता भवेद्वर्षं स्वस्थः स्वस्थो भविष्यति तस्मात्प्रहृष्टैस्तु
ष्टैस्तु कर्त्तव्या कौमुदी नरैः वैष्णवी दानवी चेयं तिथिः पैत्री युधिष्ठिरेति ॥ इति कार्त्तिकशुक्लप्रतिपदायां कौमु

दीपमहोत्सवेः कौमुदीमहोत्सवः शक्तेन दिनद्वये कार्य्यः अशक्तेनैकदिन एव अथास्या निर्णयः इयंच बलिपूजने
गोपूजनादौ च पूर्वविद्धा ग्राह्या तथाच बृहद्यमः ॥ श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी पूर्वविद्धैव कर्तव्या शिवरा
त्रिर्बलेर्दिनमिति । तथाच प्रतिपद्दर्शसंयोगे गोपूजनं तु गवां मतं परविद्धेषु यः कुर्यात्पुत्रदारधनक्षयः याकुहूःप्रति
पन्मिश्रा तत्र गाः पूजयेन्नृपः पूजने त्रीणि वर्द्धन्ति प्रजा गावो महीपतिरिति देवलवचनाच्च माधवोपि । बल्यर्चनं च
पूर्वेद्युरुपवासवदाचरेदिति । दिनद्वये सायाह्नव्याप्तौ तु परैव ग्राह्या तदुक्तं निर्णयामृते पुराणसमुच्चये ॥ वर्द्धमा
नतिथौ नंदा सार्द्धयामत्रिका यदा द्वितीया वृद्धिगामित्वादुत्तरे तत्र चोच्यते तत्र गोपूजनादौ स्यात्त्यंतरेपि ॥ त्रियाम
गा दर्शतिथिर्भवेच्चेत्सार्द्धत्रियामा प्रतिपद्धि वृद्धौ दीपोत्सवे ते मुनिभिः प्रदिष्टेत्यतोन्यथा पूर्वयुते विधेये । इति
त्रियामगात्वेनेन चंद्रदर्शनाभाव उक्तः द्वितीयायाः पंचधाविभक्तदिनचतुर्थांशरूपापराह्ने दी[illegible]भावे चंद्रदर्श
नासंभवात् अत्र दीपोत्सवपदेन गोपूजनादिकमेव गृह्यते कालानुरोधात् ननु बलिपूजादिकालस्य संभवात्
चंद्रदर्शनाभावप्रयोजकसार्द्धयामोक्तिसामर्थ्याद्बलिपूजायां दीपदानसत्वेन दीपोत्सवपदस्य उभयत्र संभवाच्च
अमावास्यायामपि स्त्रियः क्रीडंत्यमायां च गावो नंदासु कार्त्तिके इति वचनोक्तेः स्त्रीक्रीडनं दीपसंबंधान्नत्रापि दी
पोत्सवपदस्य संबंधात् यामिनु ॥ भद्रायां गोकुलक्रीडा सद्देशो वै विनश्यति भद्रायां द्वितीयायां तथा प्रतिपद्य
थिकरणं द्वितीयायां तु गोर्चनं पत्रच्छेदं च कुरुते विघ्ननाशं कुलस्य च मित्यादीनि निषेधवाक्यानि पूर्वदिने
प्रतिपदः सायाह्नव्यापित्वे द्वितीयादिने चंद्रदर्शनसंभवे ज्ञेयानि यद्यपि पूर्वोक्तिक्रीडने गवां । चंद्रोदये तु नैव
पूजयेत्सुरभीस्तथेत्यादिवचनाच्च प्रातःकालव्यापिन्यां नैव गोक्रीडनादौ प्रतिभाति तथापि गवां क्रीडादिने य
त्रादौ दृश्येत चंद्रमाः सोमो राजा पशून्हंति सुरभेः पूजकांस्तथेति देवलेन प्रतिषिद्धत्वात्सा न तत्र ग्राह्या नी
राजनमंगलपालिके तु तस्यामेव कार्य्ये तथाच मदनरत्ने ब्रह्मपुराणे ॥ कार्त्तिके शुक्लपक्षे तु विधानं द्वि
तयं भवेत् नारीनीराजनं प्रातः सायं मंगलपालिका अथ चेत्प्रतिपत्स्वल्पा नारीनीराजनं भवेत् द्वितीया
यां तदा कुर्यात्सायं मंगलपालिकामिति लभ्यते यदि वा प्रातः प्रतिपद्घटिकाद्वयं तस्यां नीराजनं कार्य्यं सा
यं मंगलपालिकेति भविष्यपुराणाच्च देवीपुराणेपि ॥ प्रातर्वा यदि लभ्येत प्रतिपद्घटिकाद्वयं द्वितीयायां त
दा कार्या सायं मंगलपालिका आश्विनांते यदा दर्शे नारीनीराजनं भवेत् नारीणां तत्र वैधव्यं देशे दुर्भिक्षमेव च
कार्त्तिके शुक्लपक्षादौ अमावास्या घटीद्वयं देशभंगभयान्नैव कुर्यान्मंगलपालिकामिति इयं प्रतिपत्तैलाभ्यं
गे तु पूर्वविद्धैव ग्राह्या बलिराज्ये तस्योक्तेः बल्युत्सवे च पूर्वेद्युरिति वचने बल्युत्सवे पूर्वविद्धाया एव पूर्वं ग्रा
ह्योक्तिः यत्तु तिथ्यर्के नंदायामुदयेभ्यंगं कृत्वा नीराजनं ततः सुवेषः सत्कथागानैर्दानैश्च दिवसं नयेदिति
ज्योतिर्निबंधधृतवचनादभ्यंगे तु उत्तरविद्धा ग्राह्येत्युक्तं तन्न एतद्वचनस्य हेमाद्र्यादिसकलनिबंधकारैरलि
खनान्निर्मूलं ॥ अत्र तैलाभ्यंगो नित्यः । वत्सरादौ वसंतादौ बलिराज्ये तथैव च तैलाभ्यंगमकुर्वाणो नरकं प्र
तिपद्यत इति वृद्धवसिष्ठवचनात् । अत्र स्नानादिनित्यकर्मानंतरं गोवर्द्धनपूजादिकार्य्यं तदुक्तं भविष्योत्तरे
हेमाद्रौ ॥ प्रातर्गोवर्द्धनः पूज्यो द्यूतं चापि समाचरेत् भूषणीयास्तथा गावः पूज्याश्चावाहदोहना इति गोवर्द्धन
पूजामंत्रः ॥ गोवर्द्धनधराधार गोकुलत्राणकारक विष्णुबाहुकृतोच्छ्राय गवां कोटिप्रदो भव गोवर्द्धनः प्रकर्त्त
व्यो राजतः पलसम्मितः कृत्वाकारो महावृक्षैः शोभितः पक्षिभिर्वृतः गोपगोपीसमाकीर्णो महावृक्षसमन्वि
त इत्यादि । कार्त्तिकशुक्लत्रयोदश्यां गोत्रिरात्रिव्रतोक्तं सविस्तरं गोवर्द्धनपूजादिकं सर्वं विधेयं अथ गोपूजन
मंत्रः ॥ लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता घृतं वहति यज्ञार्थे मम पापं व्यपोहतु अग्रतः संतु मे गावो
गावो मे संतु पृष्ठतः गावो मे हृदये संतु गवां मध्ये वसाम्यहमिति ततोऽपराह्ने मार्गपाल्युल्लंघनादि कार्य्यं तद्वि
धिः पूर्वमुक्तः सचेत्थं ततोऽपराह्नसमये पूर्वस्यां दिशि भारत मार्गपालीं प्रबध्नीयात्तुंगे स्तंभेऽथ पादपे कुशका
शमयीं दिव्यां लंबकैर्बहुभिर्वृतां वीक्षयित्वा गजानश्वान्तस्यास्तलेन नयेत् गावो वृषाः समहिषाः मंडिता

चंडिकोक्तदाः कृतो होमे द्विजेंद्रस्त्वभीयान्मार्गपालिकां दुर्गामंत्रेण होमस्तु हुतेनाष्टोत्तरं शतं दुर्गामंत्रोत्र जातवे
दसे इत्यादिर्वैदिकः ॐ दुर्गे रक्षिणी स्वाहेत्यागमोक्तो वा ॥ नमस्कारं ततः कुर्यान्मंत्रेणानेन सुव्रतः मार्गपालि नम
स्तेस्तु सर्वलोकसुखप्रदे विधेयैः पुत्रदाराद्यैः पुनरेहि व्रजस्व मे नीराजनं च तत्रैव कर्तव्यं राष्ट्रवृद्धिदं मार्गपा-
लीतले चैव यांति गावो गजा वृषाः राजानो राजपुत्राश्च ब्राह्मणाः शूद्रजातयः मार्गपालीं समुल्लंघ्य नीरुजः सु-
खाविनाः अत्र शेषश्चादित्यपुराणे। कुशकाशमयीं कुर्याद्यष्टिकां सुदृढां नवां तामेकतो राजपुत्रा हीन
वर्णास्तथान्यतः गृहीत्वा कर्षयेयुस्तां यथासारं मुहुर्मुहुः जयोत्र हीनवर्णानां जयो राज्ञो नवत्सरं जयचि-
ह्नमिदं राजा विदृथीत प्रयत्नतः। ततो बलिपूजाविधानं। कृत्वैतत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः पूजां कृत्वा
नृपः साक्षाद्भूमौ मंडलके शुभे बलिमालिख्य दैत्येंद्रं वर्णकैः पंचरंगकैः सर्वाभरणसंपूर्णं विंध्यावल्या सहोषितं कू
ष्मांडबाणजंभोरु मुरुदानवसंवृतं संपूर्णं हृष्टवदनं किरीटोत्कटकुंडलं द्विभुजं दैत्यराजानं कारयित्वा नृपः स्वयं
गृहस्य मध्ये शालायां विशालायां ततोर्चयेत् भ्रातृमातृजनैः सार्द्धं संतुष्टो बंधुभिस्ततः कमलैः कुमुदैः पुष्पैः क
ल्हारैः कुमुदोत्पलैः गंधपुष्पान्ननैवेद्यैरक्षतैर्गुडपूपकैः मद्यमांससुरालेह्यदीपवस्त्रुपहारकैः मंत्रेणानेन रा
जेंद्र समंत्री सपुरोहितः बलिपूजामंत्रः। बलिराज नमस्तुभ्यं विरोचनसुत प्रभो भविष्येंद्र सुराराते पूजेयं प्रतिगृ
ह्यतां एवं पूजां नृपः कृत्वा रात्रौ जागरणं ततः कारयेत्प्रेक्षणीयादि नटनर्तकनाटकैः लोकश्चापि गृहस्यांतः शय्या
यां शुक्लतंदुलैः संस्थाप्य बलिराजानं फलैः पुष्पैश्च पूजयेत् बलिमुद्दिश्य दीयंते दानानि कुरुनंदन यानि तान्य
क्षयाण्याहुर्मयैतत्संप्रदर्शितं। अत्र वत्सद्देशे नदीप्रदानमप्युक्तं वामनपुराणे वामनकर्तृवरदानव्याजेन वीर।
प्रतिपद्यप्यत्र भावी महोत्सवः तत्रत्वां नरशार्दूल हृष्टास्तुष्टाः स्वलंकृताः अर्च्चीदीपप्रदानेन अर्चयिष्यंति मा
नवाः॥ इति ब्रह्मपुराणे एवं पूजां नृपः कृत्वा रात्रौ जागरणं ततः इति इति कार्तिकशुक्लप्रतिपदांतर्कौमोदकीम-
होत्सवः कार्तिकशुक्लद्वितीयायमद्वितीया सा च पराह्णव्यापिनी ग्राह्येत्युक्तं निर्णयामृतादौ मध्याह्नव्यापिनी
पूर्वविद्धा चेति हेमाद्रिः इयं यामकर्मकालव्यापिनी सैव ग्राह्या दिनद्वये कर्मकालव्याप्त्यभावे व्याप्तौ वा द्वितीया सा
मान्यनिर्णये द्रष्टव्येति मदनः अष्टधाविभक्तदिनपंचमभागव्यापिनी ग्राह्येति स्मार्ताः अपराह्णशब्देन त्रिधा
विभक्तदिनोत्तरविभागो ग्राह्य इति तत्त्वमिति कृत्यरत्नावल्यां अत्र कृत्यमुक्तं स्कांदे॥ ऊर्जे शुक्लद्वितीयायाम
पराह्णेर्चयेद्यमं स्नानं कृत्वा भानुजायां यमलोकं न पश्यति ऊर्जे शुक्लद्वितीयायां पूजितस्तर्पितो यमः महिषासन
मारूढो दंडमुद्गरधारिभिः वेष्टितः किंकरैर्हृष्टैस्तस्मै यच्छति वांछितं। यमुनायां स्नानं कृत्वा यमं संतर्पयेत् अ
स्यां भगिनीभिर्भ्रातृपूजनं कार्यं तथा च लिंगपुराणे। कार्तिके तु द्वितीयायां शुक्लायां भ्रातृपूजनं या न कुर्याद्दिन
श्यंति भ्रातरः सप्तजन्मसु तस्मा इति शेषः भविष्योत्तरेपि। कार्तिके शुक्लपक्षे तु द्वितीयायां युधिष्ठिर यमो यमु
नया पूर्वं भोजितः स्वगृहे स्वयं अतो यमद्वितीया सा प्रोक्ता लोके नराधिप अस्यां निजगृहे पार्थ न भोक्तव्यमतो बुधैः
यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनं दानानि च प्रदेयानि भगिनीभ्यो विशेषतः स्वर्णालंकारवस्त्रादिपूजास
त्कारभोजनैः सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः प्रतिपन्नकाः प्रतिपन्नभगिनीत्वेन व्यवहृता इत्यर्थः
पितृव्यभगिन्य इति हेमाद्रिः मित्रभगिन्य इत्यपि हेमाद्रिः ब्रह्मांडे तु॥ या तु भोजयते नारी भ्रातरं युग्मके तिथौ
अर्चयेच्चापि तांबूलैर्न सा वैधव्यमाप्नुयात् भ्रातुरायुःक्षयो राजन्न भवेत्तत्र कर्हिचित् चित्रगुप्तस्य पूजां तु कुर्या
ज्ज्ञानविवृद्धये मषीपात्रं लेखनीं च संपूज्य च प्रयत्नतः सर्वान्कामानवाप्नोति यमलोकं न पश्यति। गौडग्रंथे
तु यमं च चित्रगुप्तं च यमदूतांश्च पूजयेत् अर्घ्यश्चात्र प्रदातव्यो यमाय सहजद्वये। भ्रातृभगिनीभिरित्यर्थः अत्रार्घ्य
दानमंत्रः॥ एह्येहि मार्तंडज पाशहस्त यमांतकालोकधरामरेश भ्रातृद्वितीयाकृतदेवपूजां गृहाण सर्वां(?) भगवन्न
मस्ते। पूजानंतरं प्रणाममंत्रः धर्मराज नमस्तेस्तु नमस्ते यमुनाग्रज पाहि मां किंकरैः सार्द्धं सूर्यपुत्र नमोस्तु ते
यमुनापूजामंत्रः॥ यमस्वसर्नमस्तेस्तु यमुने लोकपूजिते वरदा भव मे नित्यं सूर्यपुत्रि नमोस्तु ते कविद्धात्(?)।

भोजनदानेऽपि मंत्रः ॥ भ्रातस्तवानुजाताहं भुंक्ष्व भक्तमिमं शुभं प्रीतये यमराजस्य यमुनाया विशेषतः। ज्येष्ठा
भगिनी चेत्तदा भ्रातस्तवाग्रजाताहमिति पठेत् इति हेमाद्र्यादिषु प्रोक्तं यमद्वितीयाकृत्यं अथ भविष्योत्तरोक्तं यम
द्वितीयाकृत्यं ॥ श्रीकृष्ण उवाच संत्येतास्तिथयः पार्थ द्वितीयायाश्च विश्रुताः मासैश्चतुर्भिश्च ततः प्रावृट्काले म
लापहाः गोपितास्ताः सदा पार्थ न प्रोक्ताश्च मया क्वचित् प्रकाशयामि ताः सम्यक् शृणुष्व सर्वाः समाहितः प्रथमा
श्रावणे मासि तथा भाद्रपदे परा तृतीयाश्वयुजे मासि चतुर्थी कार्त्तिके भवेत् श्रावणे कलुषा नाम तथा भाद्रे तु
गीर्मला आश्विने प्रेतसंचारा कार्त्तिके याम्यका मता युधिष्ठिर उवाच कस्मात्सा कलुषा नाम कस्मात्सा गीर्मला
मता कस्मात्सा प्रेतसंचारा कस्माद्याम्या प्रकीर्तिता श्रीकृष्ण उवाच पुरा वृत्रवधे वृत्ते प्राप्तराज्ये पुरंदरे ब्रह्महत्या
पनोदार्थमश्वमेधे प्रकीर्त्तिते क्रोधादिंद्रेण वै ब्रह्महत्या सा विनिषूदिता षड्विधा सा हि तेनोक्ता प्राक् वृक्षे तोये महीत
ले नार्यां वह्नौ ब्रह्महनि संविभज्य यथाक्रमं तस्मात् श्रावणे शुक्ले द्वितीयायां दिनोदये नारीवृक्षनदीभूमिवह्नि
ब्रह्महनं तथा निर्मलीकरणं जातं यतः सा कलुषा मता मधुकैटभयोरक्तैः पुरा मग्ना तु मेदिनी अष्टांगुलापवि
त्रा सा स्त्रीणां तु रजोमलं नद्यो जलमलाः सर्वा वह्नेर्धूमशिखामलं कलुषा विचरंत्यस्यां तेन सा कलुषा मता कृत
प्रायश्चित्तान्परित्यज्य अकृतप्रायश्चित्तान् गृहीत्वा विचरंति अत एव तस्यां प्रतिवर्षं प्रायश्चित्तं कर्तव्यमित्यर्थः ॥ गी
र्गिरा भारती वाणी गीर्नाम मेधा सरस्वती गीर्मलं वा हते यस्माद्द्वितीया गीर्मला मता देवर्षिपितृधर्माणामिदं कानास्ति
काः खलाः तेषां सा वाङ्मलं व्यूहाद्द्वितीया गीर्मला मता अन्यथा ये तु शास्त्राणि पाठयंति पठंति च शाब्दिकास्तार्कि
काः श्रोतारस्तेषां ये शब्दज्ञाः स्मृताः मलाव्यूहाद्द्वितीयायां ततोऽर्था गीर्मला मता अतस्तेषां सरस्वतीपूजा कार्येत्यर्थः
॥ प्रेतास्तु पितरः प्रोक्तास्तेषां तस्यां तु संचरः द्वितीयायामतो लोके तेन सा प्रेतसंचरा अग्निष्वात्ता बर्हिषद आज्यपाः
सोमपास्तथा पितामहादयः सर्वे ये चान्ये प्रेतसंचराः पुत्रैः पौत्रैश्च दौहित्रैः स्वधामंत्रैश्च पूजिताः श्राद्धदानमखैस्त
ता यांत्यतः प्रेतसंचराः अतस्तस्यां पथि श्राद्धं कार्यमित्यर्थः ॥ कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर यमो यमुन
या पूर्वं भोजितः स्वगृहे तदा द्वितीयायां महोत्सर्गे नारकीयाश्च तर्पिताः पापेभ्योपि विनिर्मुक्तास्ते मुक्ताः सर्वबंधनात्
अशिताश्चापि संतुष्टाः स्थिताः सर्वे यदृच्छया तेषां महोत्सवो वृत्तो यमराष्ट्रसुखावहः अतो यमद्वितीया सा प्रोक्ता लो
के युधिष्ठिर अस्यां निजगृहे पार्थ न भोक्तव्यमतो बुधैः स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनं दानानि च प्रदेया
नि भगिनीभ्यो विधानतः स्वर्णालंकारवस्त्राणि पूजासत्कारभोजनैः सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः
पितृव्यभगिनीहस्तात्प्रथमायां युधिष्ठिर पितृव्यभगिनी पितृव्यसुतेत्यर्थः। मातुलस्य सुताहस्ताद्द्वितीया
यां तथा नृप पितृर्मातुः स्वसुः कन्ये तृतीयायां तयोः करात् भोक्तव्यं सहजायाश्च भगिन्या हस्ततः परं सर्वासु
भगिनीहस्ताद्भोक्तव्यं बलवर्द्धनं सर्वासु सर्वद्वितीयास्वित्यर्थः। धन्यं यशस्यमायुष्यं धर्मकामार्थसाधकं आ
ख्यातं सकलं पार्थ सरहस्यं मया तव यस्यां तिथौ यमुनया यमराजदेवः संभोजितश्च भवति स्वसृसौहृदेन तस्यां स्व
सुः करतलादिह यो भुनक्ति प्राप्नोति वित्तमथ भोगचयं तदेव ॥ श्रावणशुक्लद्वितीयायां भाद्रशुक्लद्वितीयायामा
श्विनशुक्लद्वितीयायां कार्त्तिकशुक्लद्वितीयायां चेदं यमद्वितीयाकृत्यं यथासंभवमनुष्ठेयम् इति भविष्योत्तरोक्तं
कार्त्तिकशुक्लयमद्वितीयाव्रतं समाप्तं शुभं कार्त्तिकशुक्लतृतीयायां विष्णुगौरीव्रतं नारदीये ॥ ऊर्जशुक्लतृतीया
यां विष्णुगौरीव्रतं चरेत् पूजयेन्मां जगद्वंद्यामुपचारैः पृथग्विधैः सुवासिनीर्भोजयित्वा मंगलद्रव्यपूजिताः वि
सर्जयेत्प्रणम्यैतां विष्णुगौरीप्रतुष्टये कार्त्तिकशुक्लचतुर्थ्यां नागव्रतं स्कांदे कार्त्तिकशुक्लपक्षमधिकृत्य ॥ ति
थौ युगाह्वयायां तु समभ्यर्च्य यथाविधि शंखपालादिनागानां शेषस्य च महात्मनः पूजा कार्या पुष्पगंधदीपाद्या
यनपूर्विकेति मदनरत्ने क्रमपुराणे नारदीये ॥ ऊर्जशुक्लचतुर्थ्यां तु नागव्रतमुदाहृतं प्रातः कृत्वा तु संकल्पं
येत् शृंगजलैः शुचिः पीत्वा स्नात्वाथमध्याह्ने शंखपालादिपन्नगान् शेषं चाह्वानपूर्वैस्तु पूजयेदुपचारकैः क्षीरा
णाप्यायनं कुर्याद्देतन्नागव्रतं स्मृतं एवं कृते तु विषदंष्ट्रा दुर्नागव्रतेः अस्य विषाणि न प्रभवंति चिरान्नपदं शांतिय

नगा इति एतच्च मध्याह्नव्यापिन्यां कर्त्तव्यं तथा च स्कंदपुराणे ॥ शुभे मध्यंदिने यत्र नत्वोपोष्य फणीश्वरान् वि
षाणि तस्य न शंसंति न हि हिंसंति पन्नगाः इति नागव्रतं कार्त्तिकशुक्लपंचम्यां जयापंचमीव्रतं नारदीये ॥ कार्त्तिकि
शुक्लपंचम्यां जयाव्रतमनुत्तमं कर्त्तव्यं पापनाशाय श्रद्धया द्विजसत्तम पूजयित्वा जयां विप्र यथाविधि समाहि
तः उपचारैः षोडशभिस्ततः शुचिरलंकृतः विप्रैकं भोजयित्वापि तस्मै दद्याच्च दक्षिणां विसर्जयेत्ततः पश्चात्स्वा
यं भुंजीत वाग्यतः यस्तु वै भक्तिसंयुक्तः स्नानं कुर्याज्जयादिने नश्यंति तस्य पापानि सिंहाक्रांता मृगा यथा यदश्व
मेधावभृथे फलं स्नानेन कीर्त्तितं तत्फलं प्राप्यते विप्र वंध्या गर्भं च विंदति रोगी रोगात्प्रमुच्येत बद्धो मुच्येत बं
धनात् इति नारदीयपुराणे। चतुर्थपादे कार्त्तिकशुक्ला जयापंचमी अथ कार्त्तिकशुक्लपंचम्यां जयापंचमी
व्रतं भविष्योत्तरे॥ श्रीकृष्ण उवाच माहात्म्यमपि वक्ष्यामि पंचम्यास्तव भारत जयेति या च विख्याता व्रतिनां पा
पनाशिनी परिपूर्णा कृता येयस्याः सा ज्ञेया जयपंचमी जया च विजया चैव जयंती पापनाशिनी जया कार्त्तिकशु
क्लायां पंचमी ॥ केशवो भगवान्ब्रह्मा गंगाद्याः सरितस्तथा प्रभासाद्यानि तीर्थानि जंबूद्वीपसरांसि च प्रयागं
पुष्करं चैव कुरुक्षेत्रं गया तथा एतान्यन्यानि तीर्थानि व्रतिनः स्नापयंत्युत तस्मात्सर्वप्रयत्नेन स्नानं कुर्याज्ज
यादिने स्वदेहेनोद्वर्त्तनेनैव द्विजान्संस्नापयेद्बहून् तीर्थप्रस्रवणो गत्वा स्थापयेत्स जयं हरिं जयासहितं स ज
यमित्यर्थः। शंखचक्रगदापाणिं वामभागे जया स्थिता वरदाभयहस्तां च श्वेतां हंसोपरि स्थितां पूजयेद्विवि
धैः पुष्पैर्धूपनैवेद्यजातिभिः एभिर्मंत्रैस्ततं देवं जयां च प्रतिपूजयेत् पादौ वै पद्मनाभाय जानुभ्यां माधवा
य च ऊरू वै नारसिंहाय मेढ्रं वै मन्मथाय च दामोदरायोदरं च वक्षः श्रीवत्सधारिणे श्रीवत्सायेति कंठं च
बाहू सर्वास्त्रधारिणे मुखं पद्ममुखायेति शिरः सर्वात्मने नमः अनेन विधिना चैव पूजयेद्गरुडध्वजं अनंत
रं तां देवीं वंशपात्रोपरि स्थितां जातीलताये भागस्थां तां देवीं प्रतिपूजयेत् नमः पुष्ट्यै पादयुग्मे जानुभ्यां तु
ष्ट्यै नमः नंदायै कटिदेशे च विजयायै च वक्षसि शिरः सर्वार्थदायिन्यै सर्वांगे विजयां तथा विधिनानेन संपू
ज्य पूजयेद्द्विजयाहरी जयाय जयरूपाय जयगोविंदरूपिणे जयदामोदरायेति जय सर्व नमोस्तु ते अर्घ्य
मंत्रः। वेणुपात्राणि सर्वाणि सप्तधान्यव्रतानि च रक्तसूत्रेण संसूत्र्य सफलानि निवेदयेत् सूत्रेण संवेष्ट्य
। यथा वेणुदलं दृष्ट्वा तुष्यते मधुसूदनः तथा मेस्तु शुभं सर्वं वेणुपात्रप्रदानतः वेणुपात्रदानमंत्रः। अने
न विधिना चैव दत्वा पात्राणि गोसुरे ब्रह्मांडपुराणे। रक्षाबंधं ततः कुर्यात्स्वहस्ते स्वजनबांधवैः अक्षताः सर्षपा
दूर्वा रक्षामध्ये च रोचनाः येन बद्धो बली राजा दानवेंद्रो महाबलः तेन त्वामनुबध्नामि रक्षे मा चल मा चल इति
रक्षामंत्रः। रक्षाबंधं नरो यस्तु कुर्याद्भक्तिसमन्वितः न तस्य ग्रहपीडा स्यान्न च मृत्युभयं तथा भूतवेतालयक्षाद्यैः
पिशाचैर्नाभिभूयते रक्षायां बंधनं कृत्वा संग्रामं प्रविशेन्नरः जयते स रिपून्सर्वाञ्जीयते न च केन चित् तस्मा
त्सर्वप्रयत्नेन रक्षाबंधं तु कारयेत् यस्तु वै भक्तिभावेन स्नानं कुर्याज्जयादिने कृतं तस्य सैव पापानि माघमासस्ना
वे यथा यथाश्वमेधावभृथं तादृशं कारयेद्बुधः जलांजलिस्तु विधिना क्षिप्यते यत्र मूर्द्धनि ब्रह्महत्यादिपापेभ्यो
मुच्यते नात्र संशयः अपुत्रो लभते पुत्रान्वंध्या गर्भं च विंदति रोगी रोगैर्विमुच्येत प्रयाति हरिमंदिरं ॥ इति भवि
ष्योत्तरोक्तं कार्त्तिकशुक्लपंचम्यां जयापंचमीव्रतम् कार्त्तिकशुक्लषष्ठ्यां भौमवारयुतायां वह्निसंपूज्य महोत्स
वं कुर्यात् तदुक्तं नारदीये ॥ कार्त्तिके शुक्लषष्ठ्यां तु षण्मुखेन महात्मना देवसेना महाभागा लब्धा सर्वसुराचि
तः अतस्तस्यां सुरश्रेष्ठान् देवसेनां च षण्मुखं संपूज्य निखिलैरेवमुपचारैर्मनोहरैः प्राप्नुयादत्तलाभसिद्धिमनो
भीष्टां द्विजोत्तम अत्रैव वह्निपूजोक्ता तां च सम्यक् समाचरेत् विविधैर्द्रव्यहोमैश्च वह्निपूजाप्रसरं मत्स्यपुरा
णे। वृश्चिकार्के शुक्लषष्ठी भौमवारयुता स्थिता महाषष्ठीति सा प्रोक्ता सर्वपापहरा तिथिः तस्यां स्वपिति वै व
ह्निः पूर्वं चोपोष्य वै दिने षष्ठ्यां वह्निं समभ्यर्च्य कृत्वा वह्निमहोत्सवं। वृश्चिकार्के कार्त्तिके मासि तिथिकालादर्शे
सर्वास्तु षष्ठी प्रविशेषात्कार्त्तिके कृत्यविशेषो भविष्योत्तरेपि ॥ षष्ठ्यां फलाशनो राजन्विशेषात्कार्त्तिके नृप

राज्यच्युतो विशेषेण स्वराज्यं लभते चिरात् दत्वार्घं कार्त्तिकेयाय स्थित्वा वेददक्षिणामुखः दध्याज्यतोयैः पुष्पै
र्मंत्रेणानेन सुव्रत सप्तर्षिदारज स्कंद सेनाधिप महाबल रुद्रोमाग्निज षड्वक्त्र गंगागर्भ नमोस्तु ते प्रीयतां देवसे
नानीः संपादयतु हृद्गतं दत्वा विप्राय चात्मान्नं यच्चान्यदपि वर्त्तते पश्चाद्भुंक्ते तु सो रात्रौ भूमिं कृत्वा तु भाजनमिति
॥ एवमब्दपर्यंतं षष्ठीषु राजन् स्कंदं संपूज्य विप्राय दद्यादिति दिवोदासः ॥ इति कार्त्तिकशुक्लषष्ठीकृत्यं कार्त्ति
कशुक्लसप्तम्यां शाकसप्तमीव्रतं ॥ ** नारदीये अथ कार्त्तिकशुक्लायां शाकाख्या सप्तमीव्रतं तस्यां तु सप्तशा
कानि सुवर्णकमलानि च प्रदद्यात्सप्तविप्रेभ्यः शाकाहारस्ततः परं द्वितीयेह्नि द्विजान्भोज्य दद्यात्तेभ्योथ दक्षिणां
विसृज्य बंधुभिः सार्द्धं स्वयं भुंजीत वाग्यत इति कार्त्तिकशुक्लाष्टमी गोपाष्टमी तत्र गोपूजा कार्या तदुक्तं निर्णयामृ
ते कूर्मपुराणे ॥ शुक्लाष्टमी कार्त्तिके तु स्मृता गोपाष्टमी बुधैः तत्र कुर्याद्गवां पूजां गोग्रासं गोप्रदक्षिणं गवानुग
मनं कार्यं सर्वान्कामानवाप्नुयात् नारदीयेपि । गोपाष्टमी तु सा प्रोक्ता कार्त्तिके धवले दले तत्र कुर्याद्गवां पूजां
गोग्रासं गोप्रदक्षिणं गवानुगमनं दानं वाञ्छन्सर्वाश्च संपदः भविष्योत्तरेपि । गोपाष्टम्यां गवां पूजा गोग्रासं गो
प्रदक्षिणं गवानुगमनं दानं सर्वपापप्रणाशनमिति । अत्र गोपूजादिकं गोदानविधिना कार्यम् इयं च कंद
र्पकल्पादिः कल्पादिप्रकरणोक्तं श्राद्धादिकमपि कार्यम् कार्त्तिकशुक्लनवमी कृतयुगादिः तदुक्तं वैशा
खमासस्य तु या तृतीया नवम्यसौ कार्त्तिकशुक्लपक्ष इत्यादि युगादिनिर्णये इयं च ॥ पूर्वाह्णव्यापिनी ग्राह्या
शुक्लपक्षस्थत्वात् निर्णयस्तु पूर्वमेवोक्तः तदुक्तं हेमाद्रौ देवीपुराणे । शुक्लपक्षे नवम्यां यः कार्त्तिक
स्य समाहितः स्नायाद्ध्यायन्नमस्कुर्याद्दद्यत्तं यं लभते फलमिति अत्र श्राद्धं कर्त्तव्यं तथा च कृत्यतत्त्वार्णवे ॥ कार्त्ति
के नवमी शुक्ला पितृणां तृप्तिदा सदा तस्यां स्नानं तथा दत्तमनंतफलसाधकमिति ब्रह्मांडपुराणे । आषाढ्याम
थ कार्त्तिक्यां माघ्यां मन्वंतरादिषु युगादिषु च दुःस्वप्ने जन्मर्क्षे ग्रहपीडिते श्राद्धं प्रयासितपक्षे श्राद्धं कुर्वीत यत्
नतः । अस्यां गोदानादिकमुक्तं विष्णुपुराणे । अस्मिंश्च गोभूमिहिरण्यवस्त्रदानेन सर्वं प्रविहाय यत्पापं सूर्यत्वमि
दस्य सहस्रमेति मर्त्याधिपत्यं लभते मनुष्य इति अस्यामेव कूष्मांडदानाचारः तथा च सनत्कुमारसंहितायां
कार्त्तिकमाहात्म्ये ॥ बालखिल्या ऊचुः कार्त्तिके शुक्लनवमी त्रेतायुगा परं युगं पूर्वापराह्णगा ग्राह्या कूष्माण्डदानो
पवासयोः अत्र कूष्मांडको नाम दानो दैत्यस्तु विष्णुना तद्रोमभिः समुद्भूताः वल्यः कूष्मांडसंभवाः तस्मात्कूष्मां
डदानेन फलमाप्नोति निश्चितं अत्र कूष्मांडदानविधिः । तत्र कर्त्ता शुचिर्भूत्वा प्राङ्मुख उपविश्याचम्य कूष्मांडं
सुवर्णगर्भितं वस्त्रेणावेष्ट्य देयब्राह्मणं संपूज्य ओं मम कार्त्तिकशुक्लनवम्यां युगादितिथौ ब्रह्महत्यादिसक
लपापक्षयपूर्वकसर्वारिष्टशांतिकाम इदं कूष्मांडफलं ससुवर्णं वस्त्रसंवेष्टितं विष्णुदैवतं यथानामगोत्राय
ब्राह्मणाय दातुमहमुत्सृजे सुवर्णदानदक्षिणां दत्वा मंत्रं पठेत् ॥ ब्रह्महत्यादिपापानां ब्रह्मणा निर्मितं पुरा
कूष्मांडं बहुबीजाढ्यमतः शांतिं प्रयच्छ मे पापानामिह नेतारं त्वयार्थमिति शेषः अत्रैव मथुरा सेन्त्र प्रोक्ता म
थुरादिनगरप्रदक्षिणा तथा चोक्तं पाद्मे ॥ नारद उवाच प्रदक्षिणोद्भवं पुण्यं न भूतं न भविष्यति कार्त्तिके शुक्ल
पक्षे तु नवमीयां महेश्वर तस्याः प्रदक्षिणीकृत्य सर्वपापात्प्रमुच्यते तथा सत्ययुगादिश्च नवमी कार्त्तिके सिता
अत्र द्वापरकृतयुगयोर्युगादिदिनत्वं कल्पभेदेन ज्ञेयं । तस्यां स्नानं हुतं दत्तमनंतफलदं भवेत् कुमुदस्य तु
मासस्य मथुरायां नृपोत्तम प्रदक्षिणे नवम्यां तु पूतो भवति पातकात् । क्रमतः पादविन्यासा यावंतः सर्व
तो दिशा तावंतः कुलसंभूता लोके तिष्ठति शाश्वते मथुरा हरसंख्या च तद्दद्यात्तु महीपुरी अभावे यत्र संख्या
कुर्यात्तस्याः प्रदक्षिणाः तदशक्तो विप्रहरि गोगृहाणां प्रदक्षिणं । शालिग्रामस्य देवस्य तुलस्याश्च प्रदक्षिणा
लिग्रामस्य देवस्य तुलस्याश्च प्रदक्षिणा तत्समा भूपतिश्रेष्ठ न भूता न भविष्यति सप्तद्वीपवती भूमिः सर्वतो व
यि सागरा तस्याः प्रदक्षिणा पुण्यं शालिग्रामप्रदक्षिणात् कृत्वा प्रदक्षिणा येन शालिग्रामस्य शार्ङ्गिणः तेन
कृताः पंचकोश्याः शतशश्च प्रदक्षिणाः गोकोटिदानेन तु यत्फलं वा स उत्तमः अस्य मे धायुतं पुण्यं शालिग्रा

मप्रदक्षिणात् गवां च ब्राह्मणानां च तथा संन्यासिनामपि देवालयानां सर्वेषां सालिग्रामसमा मता सालग्रामा-
दिकानैव कस्यापि वप्रदक्षिणा तस्मात्त्वमप्यमूर्जे तु कर्तव्या तत्प्रदक्षिणा यतोनेका द्विजा गावो देवालयमठाश्र-
यः तुलसीवनान्यनेकानि सालिग्रामास्त्वनेकशः देशांतरागताः पुण्यायोगिनः साधवस्तथा वैरागिनश्चयुक्ता-
श्च गृहस्थाः पुण्यशालिनः पुराणानि च वेदाश्च उपवेदा गृहेषु च देवतानां च प्रतिमाः संति ग्रामपुरादिषु अतः
प्रदक्षिणा कार्या तेषां सर्वेषां नमो नमः तत्र कल्यमभ्युत्थाय शुचिस्तद्गतमानसः स्नानं कृत्वा नोपानत्कः कमंडलुयु-
तः पुरा बहिर्गत्वा जपन्स्तोत्रं मंत्रं नामानि वा हरेः प्रदक्षिणां चरेद्विद्वान्सर्वपापापनुत्तये अष्टाक्षरं जपन्मंत्रम-
थवा द्वादशाक्षरं षडक्षरं जपन्मंत्रं कुर्याद्विद्वान्प्रदक्षिणां यावल्लोकाः स्थिताश्चांतर्गावो वै मंदिरेषु च तावत्पु-
रस्य ग्रामस्य पुण्याः प्रोक्ताः प्रदक्षिणाः एका तिस्रश्चतस्रो वा पुरग्रामप्रदक्षिणाः यावत्सूर्योदयो नैव यावन्ना-
स्तंगतः पुनः तावत्प्रदक्षिणा कार्या पुरग्रामाद्बहिर्नरैः एका तिस्रश्चतस्रो वा अतः शीघ्रं द्विजा गृहयात् सूर्यो-
दयानंतरतः पुरग्रामप्रदक्षिणां तत्र देवालये वाथ स्वगृहे तुलसीवनं सालिग्रामं महापुण्यं कुर्याद्विद्वान्प्रद-
क्षिणां अथ द्विजांस्तु संपूज्य भोजयित्वा च पायसैः प्रदक्षिणां प्रकुर्वीत दत्वा तेभ्यश्च दक्षिणां इति प्रदक्षिणाध्या-
यं ये पठंति द्विजोत्तमाः शृण्वंति चैव ये भक्त्या तेपि यांति परां गतिम् सुधन्वोवाच अहमासं पुरा शक्र गृध्रः पाप-
विशेषतः व्याधेन चातितो बाणैः प्रातर्विष्णुगृहांगणे मयि कंठगतप्राणे भक्षको मांसलोलुपः जग्राह मांस-
वक्त्रेण श्वभिरन्यैरनुद्रुतः वहन्मांसं समुखेनैव भीतोन्यैर्भक्षकैस्तथा गतः प्रदक्षिणाकारं विष्णोस्तन्मंदिरे
प्रभोः तेनैव तुष्टिमापन्नस्त्वंतरात्मा जगन्मयः मम चापि श्वानां चैव ददत्त्वात्परमं पदं प्रदक्षिणाकारतया ग-
तस्यापीदृशं फलं मम प्राप्तं विबुधश्रेष्ठ किं पुनः सम्यगर्चनादिति कार्तिकशुक्लनवम्यां प्रदक्षिणामाहात्म्यं अ-
स्यामेवाश्वत्थतर्पणादिकमुक्तं नारदीये ॥ कार्तिके शुक्लनवमी या त्वया साप्रकीर्तिता तस्यामश्वत्थमू-
ले तु तर्पणं सम्यगाचरेत् देवानां च ऋषीणां च पितॄणामपि नारद स्वशाखोक्तैस्तथा मंत्रैः सूर्यायार्घ्यं ततोर्प-
येत् ततो द्विजान्भोजयित्वा मिष्टान्नेन मुनीश्वर स्वयं भुक्त्वा च विहरेद्द्विजेभ्यो दत्वा दक्षिणां एवं यः कुरुते भक्त्या जप-
दानं द्विजार्चनं होमं च सर्वमक्षय्यं भवेदिति विधेर्वचः भविष्योत्तरे । कार्तिकामलपक्षस्य नवमी भूमिहृद्वये पु-
ष्टां तु जगद्धात्रीं पूजयेद्दीपमालया मासैश्चतुर्भिर्यत्पुण्यं विधिना पूज्य चंडिकां तत्फलं प्राप्यते वीर नवम्यां कार्ति-
कस्य तु । अत्रैव तुलसीविवाह उक्तः पद्मपुराणे । कार्तिके शुक्लनवमीमवाप्य विजितेंद्रियः हरिं विधाय सौवर्णं
तुलस्या सहितं विभुं पूजयेद्विधिवत्तत्र व्रती भक्त्या दिनत्रयं एवं यथोक्तविधिना कुर्याद्वैवाहिकं विधिमिति । अथ
तुलसीविवाहविधिः विष्णुयामले । आदावारोप्य तुलसीं वने वा स्वगृहेपि वा मासत्रयेण संवर्ध्य ततः पूजां समारभे-
त् सौम्यायने प्रकर्तव्यं गुरुशुक्रोदये तथा अथवा कार्तिके मासि भीष्मपंचदिनेपि वा वैवाहिके शुभे लग्ने पूर्णि-
मायां विशेषतः मंडपं कारयेत्तत्र कुंडं वेदीं विवाहवत् ब्राह्मणांश्च शुचीन्दांतान्वेदवेदांगपारगान् ब्रह्माणं दैशिकं
चैव चत्वारश्च तथर्त्विजः गृह्य यत्नं पुरस्कृत्य मातृणां पूजनं तथा कृत्वा नांदीमुखं श्राद्धं सौवर्णं स्थापयेद्धरिं कृत्वा
वरौ च तुलसीं लग्ने त्वस्तमिते रवौ ज्योतिःशास्त्रप्रसिद्धे गोधूलिकलग्न इत्यर्थः । संपूज्यालंकृतानां च प्रदद्याद्विधि-
ना हरेः अथ षष्ठीचतुर्थ्यर्थे वाससः श्रुतेन मंत्रेण वस्त्रयुग्मेन वेष्टयेत् यथावन्मंत्रिमंत्रेण कंकणं पाणिपल्लवे कौ-
दादिमादिमंत्रेण करग्राहो विधीयते आचार्यो वेदिकाकुंडे जुहुयात्तु नवाहुतीः । तत्र व्याहृतिभिः ॐ भूः स्वाहा
ॐ भुवः स्वाहा ॐ स्वः स्वाहा ॐ भूर्भुवः स्वः स्वाहा पंचाहुतयः त्वन्नो अग्ने इत्यादिकाः पंच कर्तव्यास्ततो होमो विशेषा-
द्विधिपूर्वकं ॐ नमो भगवते वासुदेवाय नमः स्वाहा ॐ नारायणाय स्वाहा माधवाय स्वाहा गोविंदाय स्वाहा ॐ
विष्णवे स्वाहा ॐ मधुसूदनाय स्वाहा ॐ त्रिविक्रमाय स्वाहा ॐ वामनाय स्वाहा ॐ श्रीधराय स्वाहा ॐ हृषीकेशाय
स्वाहा ॐ पद्मनाभाय स्वाहा ॐ दामोदराय स्वाहा ॐ वासुदेवाय स्वाहा ॐ अनिरुद्धाय स्वाहा ॐ अच्युताय स्वाहा ॐ
अनंताय स्वाहा ॐ गदिने स्वाहा ॐ चक्रिणे स्वाहा ॐ विष्वक्सेनाय स्वाहा ॐ वैकुंठाय स्वाहा ॐ जनार्दनाय स्वाहा ॐ

शुक्लंदायनमः स्वाहा ॐ अयोनिजाय नमः स्वाहा ॥ यजमानः सपत्नीकः सहामात्यैश्च गोत्रजैः प्रदक्षि
णां प्रकुर्वीत च नित्यं विष्णुना सह तुलस्या इत्यर्थः। पठेयुः शांतिकाध्यायं तथा वै मित्रसंहितां गायं
ति मंगलं नार्यो भेरीतूर्यादिनिस्वनैः गांपदं च तथा शय्यामाचार्याय प्रदापयेत् ऋत्विग्भ्यो दापयेद्द
क्षिणामन्येषां चैव दक्षिणां ब्राह्मणान्भोजयेत्पश्चात्सर्पिःक्षीरैः सशर्करैः एवं प्रतिष्ठिता देवी विष्णवे च स
मर्पयेत् आजन्मोपार्जितं पापं दर्शनाद्देव नश्यति ॥ इति विष्णुयामलोक्तस्तुलसीविवाहः अथ तुल
सीविवाहकथा सनत्कुमारसंहितायां कार्तिकमाहात्म्ये ॥ बालखिल्या ऊचुः कार्तिके शुक्लनवमी।
त्रेताभूद्द्वापरे युगम् पूर्वापराह्णगा ग्राह्या क्रमाद्दानोपवासयोः अत्र कूष्मांडको नाम हतो दैत्यस्तु विष्णु
ना तद्रोमभिः समुद्भूता वल्ल्यः कूष्मांडसंभवाः तस्मात्कूष्मांडदानेन फलमाप्नोति निश्चितम् अस्यामेव
नवम्यां तु कुर्यात्कुशलेनैव यो नरः स्वशाखोक्तेन विधिना तुलस्याः करपीडनं कन्यादानफलं तस्य जायते ना
त्र संशयः कार्तिके शुक्लनवमीमवाप्य विजितेंद्रियः हरिं विधाय सौवर्णं तुलस्या सहितं शुभम् पूजये
द्विधिवद्भक्त्या व्रती तत्र दिनत्रयम् एवं यथोक्तविधिना कुर्याद्वैवाहिकं विधिम् ग्राह्यं त्रिरात्रमत्रैव नवम्या
मनुरोधतः मध्याह्नव्यापिनी ग्राह्या नवमी पूर्ववेदिता यात्र्यस्याथो वपकत्रलापयित्वा समुद्वहेत् न नश्यते त
त्पुण्यं कल्पकोटिशतैरपि अत्रैवोदाहरंतीममितिहासं पुरातनम् बभूव विष्णुकांच्यां तु क्षत्रियः कनकाभि
धः धनाढ्यो वैश्यपद्धतिश्च वैस्त्रवो राजपूजितः बहुकालो गतस्तस्य विनापत्यं मुनीश्वराः ततो नानाव्रतैर्जा
ता कन्या कमललोचना स्वरूपलक्षणोपेता नानागुणसमन्विता पिता तस्या नाम चक्रे किशोरीति च विश्रु
तम् एकदा तद्गृहे यातो जन्मपत्रीनिरीक्षकः दर्शयित्वा जन्मपत्रीं कथं कन्या भवेदियं ततस्तेन क्षणं ध्यात्वा क
नकं शृणु मे वचः यदि ब्रवीमि सत्यं चेत्तव दुःखं भविष्यति यद्यसत्यमहं ब्रूयां मिथ्यात्वं मम जायते तस्मा
त्सत्यं वदिष्यामि यद्योचितं तथा कुरु योस्याः करग्रहं कुर्यादसौ वज्रान्मरिष्यति इति तद्वचनं श्रुत्वा कनको
दुःखितोभवत् न च कारि विवाहोस्याः सा च ब्राह्मणपूजने नियुक्ता त्वगमत्तेषां नानेयामन्नुत्वाग्रतः दृष्ट्वा
मां रूपसंपन्नां दुःखमेवाथयिष्यति स्थिता यस्मिन्गृहे सा तु द्विजातिथ्यमचीकरत् कदाचिद्दैवयोगेन तत्रागा
द्द्विजपुंगवः यात्रार्थं विष्णुकांच्यां स वै श्रावणे मासि शंकरः हेमको विप्रशुश्रूषी तातात्रैव समागतः आगत्यांग
णमध्ये तु उपविष्टो द्विजोत्तमः किशोर्यागत्य चातिथ्यं शंकरस्य कृतं तदा दृष्ट्वा तां तरुणीं नाम्ना सवेशांवि
न्विताम् अजातकरपीडां च संवीक्ष्याप्युवाच सः शंकर उवाच चंदने वदसी त्वं किशोरी न विवाहिता
किमत्र कारणं जाता तरुणी कामरूपिणी इति तद्वचनं श्रुत्वा चंदना सर्वमब्रवीत् तदा कृपालुनानेन तस्मित्र
गुनिवेदितं अस्यै मंत्रं प्रयच्छामि श्रीविष्णुद्वादशाक्षरम् करोतु वर्षत्रितयं जपं तस्य सुलोचना प्रातःस्नानव
ती नित्यं तुलसीवनपालिका कार्तिकस्य सिते पक्षे नवम्यां विष्णुना सह सौवर्णेन तुलस्याश्च विवाहं कारयेत्
यम् तेन व्रतप्रभावेन वैधव्यं न भविष्यति तस्मिन्नापितथेत्युक्ते प्रायश्चित्तं सदत्तवान् किशोर्यै वै स्ववृंदं यर्मस
मग्रं चादिदेश सः तेन द्विजेन यत्प्रोक्तं किशोर्यापि तथाकरोत् वर्षत्रयं यथाशास्त्रं किशोर्या नद्धतेकृत वत
कार्तिके मासि किशोरी स्नपनाय च प्रातःकाले गता बाला दृष्ट्वा मार्गे विलेपिना तत्रियेणापराहृष्टा प्राय मोह
जडात्मकः दृष्टे तस्यास्तु संलग्नो भावयंस्तामनिंदिताम् केचिन्मोदंह शुद्धं राज्ञो केचित्प्रपश्यंति शुभ्रतः स्त्रियो पितां
प्रपश्यंति पुरुषाणां तु का कथा यथा द्वितीयाचंद्रस्य दर्शने वै त्वका जनाः तथा रात्रौ प्रतीक्षंति तिलद्वारे समकला
जनाः निमेषमात्रमप्येकं दृष्ट्वा स्थितां तु कालिका अथिके किं वर्णनीयं तत्सौंदर्यं मुनीश्वराः केचिद्वदंति दे
वीयं नागकन्येति चापरे रुद्रसंमोहनार्थाय जाता सा मोहिनीति च सा न पश्यति लोकांश्च न मार्गं न सखीगणान्
ध्यायंती हृदये विष्णुं तुलसीदेविरूपिणीम् तां गृहीतमनश्चैकेविलेपी द्रव्यवान्खली नानाभेदाः कृतास्तेन न
लेभे वांतरं क्वचित् माला कार्या गृहं गत्वा तस्यै स्वं प्रयच्छतः येन केन प्रकारेण किशोर्या सह संगमः यथा स्यात्ति

पत्नो भद्रे देयमस्माच्चतुर्गुणम् तथाच बहवोपायाः कृतास्तत्र दृष्टस्तायत्र नददर्शयदोपायमवदत्सावि।
लेपिनम् नदृश्यते मयोपायस्त्वयायत्नोच्यतेधुना मत्तातदेवकर्त्तव्यंद्रव्यग्रहणसिद्धये विलेप्युवाच तव-
कन्यात्वभूत्वाहं तथासिक्तस्त्वमानिच अग्रेयज्ञाविभवत्तु गृहाणान्क्लिशतेशतम् तयापिवतयेत्युक्तं सतन्यानि।
श्रयः कृतः अष्टम्यां सागता तत्र किशोरीतामुवाचह मालाकृते स्वोनवमीतत्तस्याः पाणिपीडनम् तिष्ठात्रेवत्व
यानेयामुक्तदाःपुष्पसंभवाः मालिन्युवाच मत्पुत्रीचागता ग्रामान्नानाकौतुककारिणी यद्यस्त्रोकं त्वयाबाले
सा समानयतित्वरा तयाप्यापितयेत्युक्ता मालिनीस्वगृहं ययौ कथितः सर्ववृत्तांतो विलेप्याग्रेततो भवत् ग्रामा
मर्मेंद्रपदवीत्येवं सत्वमवापसः मालिन्यारचिताराज्ञो मुकुंदाविविधास्तदा विसकांच्यातदाराजाजयसेनो
बभूवह तस्यपुत्रो मुकुंदो भूत्सूर्यभक्तिपरायणः किशोर्यास्तत्सुता नेनवात्तेयमतिसुंदरी तदातेन मुकुंदेन
संकल्पः कृत एवहि किशोरी यदि भार्या मे भविष्यति दिवाकर तदात्वमहमस्या मित्यन्यथामेमृतिर्भवेत्
कर्त्तव्यमत्तसंकल्पमुपवासान्स्वचक्रमे सप्तमेहनि सूर्योसौस्वमेवचनमब्रवीत् किशोर्यादि वधवायोगो वर्त्तते
तेकथं भवेत् राजपुत्रप्रदास्यामिते त्वयापद्मायतेक्षणात् मुकुंद उवाच यदिदेवप्रसन्नोसि विघ्नं तं हजासिप्र
भो बालवैधव्ययोगंच हंतुं किंनत्तमोह्यसि इतितस्यवचः श्रुत्वा सांत्वना वहुलाकृता नमन्यत्वमुकुंदो सौत
येत्युक्त्वागतोरविः तुलसीव्रतमाहात्म्याद्विधवात्वंगमिष्यति रात्रौस्वप्नः किशोर्यास्तुतस्यामेवाभ्यजायत
आगताकन्यकाकाचिद्वह्निसदृशविस्मिता भर्त्तारंवदतिस्वप्ने मममाता किशोरिका तद्वचोयितयेत्युक्तं प्रदा
सेवलिमुत्तमं एतद्वलेनपश्चात्तु विवाहोस्याभविष्यति श्रुत्वावलिप्रदानं सा स्वप्ने चिंतातुराभवत् कश्चादशा
त्तरीविप्राक्वेदंविप्रसमर्च्चनं नरकद्वारमूलंहिमहत्वान्यसुमारणम् एवंमातुसमुत्थाय स्वप्नोयमितिनि
श्चितम् भावयित्वासमाहूयचन्दनंवाक्यमब्रवीत् निवेदयदृष्टस्वप्नंतु कीदृशंस्यात्फलंवद चंदनोवाच फलं
तु सम्यक्कल्याणंनवानिष्टं विनश्यति विवाहोभविताशीघ्रं तुलसीव्रतकारणात् इत्थंस्वप्नफलंश्रुत्वानादा
त्वाक्रूटनिस्वनं श्रुत्वासासहसोत्थायस्नानोद्योगमचीकरत् यावद्याति सा स्नानं कृत्वा गेहे किशोरिका ताव-
द्विलेपीमालिन्याःपुत्रीभूत्वासमाययौ कृत्वाकेशांश्चगोपुच्छैःश्मश्रुचोत्पाटितंबलात् अंतरेशाटिकांगृह्यानि
म्नीभ्यांचस्तनौकृतौ सर्वालंकारशोभाढ्या कटाक्षयतिचापरान् नत्वातो सौतु केनापि पुमान्स्त्रीरूपधारकं
ध्यानंकृत्वातयाहस्तौप्रसार्यैतेयदातदा दृष्ट्वैवविलेपीपुष्पाणि चित्तेचिंतयतिस्थितः कथमस्याममस्पर्शोभविष्य
तिविचिंतयन् एवंदिनत्रयात्तस्यप्रभातेतुमुनीश्वराः तस्मिन्नहनिसंजातः कनकः शोकपीडितः किंकार्यमद्य
नास्माभी राजपुत्रोमरिष्यति एवंचिंतयतस्तस्य प्रातःकालोबभूवह राजलोकाः समायाता गृहीत्वावस्त्रवाहनम्
अथांतरे समागत्य मंत्रीवचनमब्रवीत् गृहेस्तितव कन्यैका मुकुंदार्थं प्रदीयतां माविवाहोस्तुभवनेन्रपात्तापरि
पाल्यताम् कनकेनतथेत्युक्तं ममभाग्यमुपस्थितम् महाराजकुमारस्यवधूःकन्याभविष्यति ततःप्रोवाचमं
त्रीतंद्वादश्यांलग्नमुत्तमम् राज्ञोतिहृतिपुग्माख्ये रविः षष्ठे विधुस्त्वये भवेभौमोगुरुर्धर्मेपंचमेबुधभार्गवौ शनि
स्तृतीयेखेराहुर्विवाहसमयःस्मृतः उभौसंमंतुसंभारावुभावपिधनान्वितौ द्वादश्यामाययौसायंराजपुत्रःससै
निकः अब्रवीत्तत्रकनकंतेकीराजपुरोहितः तेकुवाच अथोनिरोधः क्रियतांकिशोर्यास्तनृपात्मया भविष्य
तिमहादेवीनोदृश्यापुरुषैःक्वचित् इतितद्वचनंश्रुत्वापुरुषास्तुनिराकृताः नारीरूपोविलेपीतुदेवात्तत्रैवसं
स्थितः ततोर्द्धरात्रवेलायांमुकुंदोभ्यंतरंययौ तस्याग्रेस्थिताबालाकिशोरीसंस्मरन्हरिम् ततस्तदाचटशब्दस्तु
मुलःसमपद्यत महावायुर्ववौतत्रप्रशांताः सर्वदीपिकाः विद्युल्लताससनानिस्साश्चथीभूतोखिलोजनः मिथ्यान
भास्करवचोमुकुंदोचिंतयन्हृदि अन्यैःप्रतर्कितंलोकैर्वैधव्यस्यतुकारणम् भीतोमुकुंदोहृदयेयावद्ध्यायति
भास्करम् तस्यामसौयोद्युतंतस्याःकरपद्मंविलेपिना तस्याः करस्यसंस्पर्शात्खड्गाद्दत्तं यथानह नीतस्तेनविलेपी
त्वतन्कालयममंदिरं वात्याश्चासीत्कलकलोमुकुंदोयं मृतस्त्विति तावदेवततोज्ञातं मालाकारसुतामृता तत

तयोर्विवाहोभूद्राज्यंप्रापकिशोरिका किशोर्यास्तुसमुत्पन्नाभ्रातरस्तुलसीव्रतात् आदेशाद्वेत्सत्यमासीत्ततोदे
वोदिवाकरः तुलसीव्रतमाहात्म्यात्कथंनस्युर्मनोरथाः सौभाग्यार्थंधनार्थंचविद्यार्थंहरिहृष्टये संतत्यर्थंच
कर्त्तव्यंतुलस्याःपाणिपीडनम् ॥ इतिश्रीसनत्कुमारसंहितायांकार्त्तिकमाहात्म्येतुलसीविवाहोनामैकोन
नवतितमोऽध्यायः ॥ इतिकार्त्तिकीशुक्लनवमीकृत्यं ॥ अथकार्त्तिकशुक्लदशम्यांसार्वभौमव्रतं वाराहपु
राणे ॥ सार्वभौमव्रतंचान्यत्कथयामिसमासतः येनसम्यक्कृतेनाशुसार्वभौमोभवेन्नृपः कार्त्तिकस्यतुमासस्य
दशमीशुक्लपक्षगा तस्यांनक्ताशनोनित्यंदिक्षुशुद्धबलिंहरेत् शुद्धबलिःपवित्रद्रव्यैःपूजोपहारइत्यर्थः ॥
विचित्रैःकुसुमैर्भक्ष्यैःपूजयेच्चद्विजांस्तथा सर्वाभवन्त्यःसिद्ध्यन्तुममजन्मनिजन्मनि भवन्त्योदशदिशइत्यर्थः
एवमुक्त्वाबलिंतासुदत्वाशुद्धेनचेतसा ततोरात्रेभुंजीतदध्यन्नंचसुसंस्कृतं पूर्वंपश्चाद्यथेष्टंचएवंसंवत्सरं
नृपः यःकरोतिनरोनित्यंतस्यदिग्विजयोभवेत् इदमेवव्रतंनारदीये ॥ दशम्यांकार्त्तिकेशुक्लेसार्वभौमव्रतं
चरेत् कृतोपवासश्चैकाशीनिशीथेपूपकादिभिः दशदिक्षुबलिंदद्याद्गृहाद्वापिपुराद्बहिः मंडलेनदलेल्ले
नेगोविट्कृतिमयरातले मंत्रैरेभिर्द्विजश्रेष्ठगणेशादिकृतार्चनः योमेपूर्वगतःपाप्मापापकेनेहकर्म्मणा त
मिन्द्रोदेवराजोयंनाशयत्वखिलेष्टदः योमेवह्निगतःपाप्मापापकेनेहकर्म्मणा तेजोराजोऽयवह्निस्तंनाशय
त्वखिलेष्टदः २ योमेदक्षगतःपाप्मापापकेनेहकर्म्मणा तंयमःप्रेतराजोमेनाशयत्वखिलेष्टदः ३ योमेनैर्ऋ
तगःपाप्मापापकेनेहकर्म्मणा तंराक्षसेन्द्रोनिर्ऋतिर्नाशयत्वखिलेष्टदः ४ योमेपश्चिमगःपाप्मापापकेनेह
कर्म्मणा यादःपतिस्तंवरुणोनाशयत्वखिलेष्टदः ५ योमेवायुगतःपाप्मापापकेनेहकर्म्मणा वायुस्तंमरुतां
राजानाशयत्वखिलेष्टदः ६ योमेसौम्यगतःपाप्मापापकेनेहकर्म्मणा सोमस्तमत्तयक्षेशोनाशयत्वखिलेष्टदः
योमईशानगःपाप्मापापकेनेहकर्म्मणा ईशानोभूतनाथस्तंनाशयत्वखिलेष्टदः ८ योमऊर्ध्वगतःपाप्मापा
पकेनेहकर्म्मणा ब्रह्माप्रजापतीशस्तंनाशयत्वखिलेष्टदः ९ योमेवाधोगतःपाप्मापापकेनेहकर्म्मणा अ
नंतोनागराजस्तंनाशयत्वखिलेष्टदः १० इत्येवंदिक्षुदशसुबलिंदत्वासमाहितः क्षेत्रपालायतद्बाह्येदिशेद्ब
लिमतंद्रितः एवंकृतविधिःशेषांनिशांतांनिनयेत्सुधीः गीतैःसुमंगलैर्नृत्यैःस्तवपाठादिभिर्जपैः प्रातः
स्नात्वासमभ्यर्च्यलोकपालान्द्विजोत्तमान् द्वादशाभ्यर्च्यसंभोज्यशक्तितोदक्षिणांददेत् इत्थंकृत्वाव्रतंविप्र
भोगान्भुक्त्वैहिकान्शुभान् युगंस्वर्गसुखंभुक्त्वासार्वभौमोनृपोभवेत् ॥ अथकार्त्तिकमासमारभ्यशुक्ल
दशम्यांविधेयंराज्यावाप्तिव्रतं ॥ मार्कंडेयउवाच क्रतुर्दक्षोवसुःसत्यःकालःकामोधुनिस्तथा कुरुवान्म
नुजोविशेरामसारस्वतेदश । कुरुवान्मनुजएकः । विश्वेदेवाःसमाख्याताःदशात्माकेशवोविभुः तस्यसं
पूजनंकार्यंसितपक्षेनराधिप आरभ्यकार्त्तिकान्मासाद्दशम्यांमुनिपुंगव मंडलेषथपुण्येषुयदिवार्चास्वथा
देव गंधमाल्यनमस्कारधूपदीपान्नसंपदा । अर्चाप्रतिमा । व्रतांतेकनकंदद्याद्यथाशक्तिद्विजातये कृत्वाव्रतं
केवलमेतदिष्टंप्राप्नोतितेषांसविधंतुलोकान् ततोन्यकालेपुरुषत्वमेत्यराजाभवेद्ब्राह्मणपुंगवोवा इतिवि
ष्णुधर्मोत्तरोक्तंराज्यावाप्तिव्रतं अथवाशुक्लदशमीमात्रसाध्यंब्रह्मावाप्तिव्रतंतत्रैव ॥ मार्कंडेयउवाच आत्मा
श्वायुर्मनुर्दक्षोमदःप्राणस्तथैवच हविष्मांश्चगविष्ठश्चदत्तःसत्यश्चतेदश देवाअंगिरसोनामदशम्यांपूजये
न्नरः सोपवासःपूर्वपक्षेपूर्वोक्तविधिनानरः पूर्वपक्षेशुक्लपक्षे पूर्वोक्तविधिनानिरंतरोक्तविधिना कृत्वाव्रतंके
वलमेतदिष्टंप्राप्नोतितेषांसविधंतुलोकानित्यादि इतिब्रह्मावाप्तिव्रतं अथकार्त्तिकशुक्लैकादशीहरिबोधिनी
नारदीये ॥ ऊर्जस्यशुक्लैकादश्यांसमुपोष्यप्रबोधिनीं केशवंबोधयेद्रात्रौसुमंगीतादिमंगलैः ऋग्यजुःसामम
न्त्रैश्चवाद्यैर्नानाविधैरपि द्राक्षेक्षुदाडिमैश्चान्यैरंभाशृंगाटकादिभिः समर्पणैस्ततोरात्र्यांव्यतीतायांपरेहनि स्नात्वा
नित्यक्रियांकृत्वाराधादामोदरंयजेत् उपचारैःषोडशभिःसूक्तैःपौरुषवैदिकैः संभोज्यविप्रान्विसृजेद्दक्षिणा
भिर्व्रतोषितान् ततस्तांप्रतिमांहैमींसमर्पयेद्गुरवे एवंयःकुरुतेभक्त्याबोधिनीव्रतमादृतः समुक्तोहरवा

न्भोगान्वैष्णवं लभते पदं ॥ अथेमां प्रक्रम्य भविष्योत्तरेऽस्याः कथा ॥ युधिष्ठिर उवाच कृष्णकृष्ण महाशान्त सर्वलो
कहितावह कथयस्व प्रसादेन शुक्लां कार्तिकसंभवां किंनामको विधिस्तस्याः एतद्विस्तरतो वद त्वद्दासदासदा
सोऽहं नात्र कार्या विचारणा श्रीकृष्ण उवाच कार्तिकस्य सिते पक्षे नाम्ना चैव प्रबोधिनी शृणु तस्याश्च माहात्म्यं।
पापघ्नं पुण्यवर्द्धनं अश्वमेधादिकं पुण्यं समवाप्नोति मानवः तावद्गर्जति राजेंद्र गंगा भागीरथी क्षितौ यावन्ना
याति पापघ्नी कार्तिके हरिबोधिनी अश्वमेधसहस्राणि राजसूयशतानि च एकेनैवोपवासेन पापं दहति बोधनी
दशम्यां नियमैः स्थित्वा क्रोधमानविवर्जितः एकादशे दिने प्राप्ते तस्मिन् सर्वं नियमो भवेत् स्नात्वा विसर्जनं पंकं कृत्वा
पूजयित्वा रमापतिं मंत्रेणानेन राजेंद्र देवमुत्थापयेद्धरिं यामार्द्धे ततो रात्रौ भ्रामयेत्स्यंदनोपरि उत्थितं देव
देवेशं नगरे पार्थिवः स्वयं दीपोद्योतकरे मार्गे नृत्यगीतजनाकुले देवं दामोदरं पश्येद् उत्थितं धरणीधरं स्वयं
चप्रणमेकृत्वो रात्रौ मुक्तो त्रयः शुचिः स्वदेशे राजराजेंद्र सवै मोक्षाय कल्पते रात्रौ जागरणं कार्यमेकादश्यां
सुरालये प्रभाते विमले स्नात्वा द्वादश्यां विष्णुमर्चयेत् होमयेद्धव्यवाहं च हविर्द्रव्यैर्घृतादिभिः ततो विप्रान्सु
विः स्नात्वा भोजयेदन्नविस्तरैः दधिक्षीरघृतक्षौद्रकर्पूरागुरुमोदकैः अर्चयेच्चंदनैः पूगैः पुष्पगंधैर्द्विजोत्तमा
न् शास्त्रोक्तविधिना राजन्भोजयेद्भगवद्भक्तान् विप्रेभ्यश्च ततो दद्यात्स्ववाचा याचितेप्सितं गावो हिरण्यं वासां
सि मधन्नं च चतुर्विधं फलं मूलं तथा कंदं पत्रं पुष्पफलादिकं चतुरो वार्षिकान्मासान्नेवं कृत्वा तिथिं तु यः सन
रः पापनिर्मुक्तो मोक्षं तु फलमाप्नुयात् अवश्यमेव राजेंद्र वासुदेवपुरं ब्रजेत् एवं यः कुरुते राजन्प्रबोधिन्या
व्रते शुभे विष्णुतुल्यः स विज्ञेयो नात्र कार्या विचारणा शृणोति ध्यायति स्तौति जुहोति श्रावयते प्रभो हरिभक्तिक
रः पार्थ स गच्छेद्वैष्णवं पदं धर्मार्थकाममोक्षाणां सर्वेषां सं गतिर्व्रतानां दुग्धाब्धिभोगशयनो भगवाननंतो
यस्मिन्दिने स्वपिति चाप्यवबुध्यते च तस्मिन्ननन्यमनसा उपवासभाजां पुंसां ददाति सुगतिं गरुडांगसंगी
॥ इति भविष्योत्तरे प्रबोधिन्या माहात्म्यं पाद्मे कार्तिकमाहात्म्ये ब्रह्मनारदसंवादे ॥ ब्रह्मोवाच अश्वमेध
सहस्राणि वाजपेयशतानि च एकेनैवोपवासेन प्रबोधिन्यां भवंति हि पूर्वजन्मसहस्रेषु यत्पापं समुपार्जितं जा
गरेण प्रबोधिन्या दह्यते तूलराशिवत् प्रबोधिन्याश्च माहात्म्यं पापघ्नं पुष्टिवर्द्धनं मुक्तिदं तत्त्वबुद्धीनां शृणुष्व मुनि
सत्तम यत्फलं सर्वतीर्थेषु सर्वदानेषु यत्फलं तत्फलं कोटिगुणितं प्रबोधिन्याः प्रजागरे न तथा तुष्यते यज्ञै
र्दानैस्तीर्थनिषेवणैः यथा शास्त्रकथालापैः कार्तिके मधुसूदनः जागरे वासुदेवस्य कर्पूरेण तु दीपकं प्रज्व
लयति कोटीनां कपिलानां लभेत्फलं आरार्तिकं हरेर्यस्तु सकर्पूरं तु जागरे कुरुते सोऽश्वमाप्नोति कुलायुतस
मन्वितः जागरे तु हरेर्धूपं सकर्पूरं सकेसरं कुंकुमागमदेनापि स गच्छेद्वैष्णवं पदं स्नानं कारयते विष्णोर्द
धिक्षीरघृतांबुभिः रात्रौ जागरणे विष्णुमुक्तिभागी भवेन्नरः दिव्यांबराणि यो दद्याज्जागरे समुपस्थिते मन्वंतरा
णि वसेन्मानवस्तत्र तत्संख्यया दद्यादाभरणं विष्णोः पूर्वं रत्नसंभवं सदाकल्याणवसतिः सोऽत्यर्थं विष्णुवेश्मनि
शंखस्थितेन तोयेन यः स्नापयति केशवं कपिलाशतदानस्य फलं प्राप्नोति मानवः हरिद्रूपं पुंड्रवेनाम नैवेद्यमु
देरहरेः पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः एकादश्यां च शुक्लायां कार्तिके मासि केशवं प्रसन्नं भोजयेद्वि
पः श्रद्धाभक्तिसमन्वितः नृत्यैर्गीतैस्तथा वाद्यैर्ऋग्यजुःसाममंगलैः वीणापणवशब्दैश्च पुराणश्रवणेन च वा
सुदेवकथाभिश्च स्तोत्रैरन्यैश्च वैष्णवैः पुष्पैर्धूपैः सनैवेद्यैर्दीपकैः सुशोभनैः ब्रह्मेंद्ररुद्राग्निकुबेरसूर्यसोमादि
भिर्वंदितपादपद्म बुध्यस्व देवेश जगन्निवास मंत्रप्रभावेण सुखेन बुद्धः उत्तिष्ठोत्तिष्ठ गोविंद त्यज निद्रां जगत्प
ते त्वयि सुप्ते जगत्सुप्तमुत्थिते चोत्थितं जगत् गता मेघा वियच्चैव निर्मलं निर्मला दिशः शारदानि च पुष्पाणि गृहा
ण केशव प्रभो समुत्थिते ततो देवे क्रियाः सर्वाः प्रवर्त्तते निशि स्वापो दिवोत्थानं संध्यायां परिवर्तनं विष्णुभक्तः सु
चिर्दांतः कुर्यादेकादशीदिने एकादश्यां व्यतीतायां द्वादश्यामरुणोदये आदावुद्वर्त्तनं विष्णोः स्नानं पंचामृतैः
नव गोरोचनेन तिलकं सुवस्त्रैर्लिंपेत्स्वलंकृतं सुवाससं पूजयेद्वस्त्रमनोभिः सकुंकुमैः धूपदीपैः सनैवेद्यैर्हरिं।

मेन पायसस्य च एवं संपूज्य गोविंदं ब्राह्मणान्भोजयेत्ततः वासोभिर्भूषणै रत्नैः पायसेन च भूरिणा कुंकुमैश्च फलैः पुष्पैर्गोभिरश्वैः सदक्षिणैः चातुर्मासिकमासेषु नियमो येन यः कृतः कथयित्वा द्विजेभ्यश्च दद्याद्भक्त्या सदक्षिणां दत्वा विसर्जयेद्विप्रान् ततो भुंजीत च स्वयं ॥ इति पद्मपुराणे प्रबोधिनीकथा ॥

अथ कार्तिकशुक्लैकादशीकथा ब्रह्मोवाच बोधिन्याश्चैव माहात्म्यं पापघ्नं पुण्यवर्द्धनं मुक्तिप्रदं सुबुद्धीनां शृणुष्व मुनिसत्तम १ तावद्गर्जंति तीर्थानि आसमुद्रसरांसि च यावत्प्रबोधिनी विष्णोस्तिथिर्नायाति कार्तिके २ तावद्गर्जंति विप्रेंद्र गंगाभागीरथी क्षितौ यावन्नायाति पापघ्नी कार्तिके हरिबोधिनी अश्वमेधसहस्राणि राजसूयशतानि च एकेनैवोपवासेन बोधिन्यां कुरुते नरः ४ यद्दुर्लभं यद्दुःप्राप्यं त्रैलोक्यस्य न गोचरं यद्यप्यप्रार्थितं पुत्र ददाति हरिबोधिनी ५ मेरुमंदरमात्राणि पापान्युग्राणि यानि तु एकेनैवोपवासेन दहते पापहारिणी ६ पूर्वजन्मसहस्रेषु यत्नदुःकर्मसंचितं जागरेण प्रबोधिन्यां दहते तूलराशिवत् ७ यथोक्तं कुरुते यस्तु विधिवत्सुकृतं नरः स्वल्पं मुनिवरश्रेष्ठ मेरुतुल्यं भवेत्फलं ८ उपवासं प्रबोधिन्यां यः करोति स्वभावतः विधिवन्मुनिशार्दूल यथोक्तं लभ्यते फलं ९ विधिहीनं तु यः कुर्यात्सुकृतं मेरुमात्रकं अणुमात्रं न चाप्नोति फलं धर्मस्य नारद १० ये ध्यायंति मनोवृत्त्या करिष्यामि प्रबोधिनीं वसंति पितरो हृष्टा विष्णुलोके महीयते ११ विमुक्ता नारकैर्दुःखैर्यांति विष्णोः परंपदं कृत्वा तु पातकं घोरं ब्रह्महत्यादिकं नरः १२ कृत्वा तु जागरं विष्णोर्धौतपापो भवेन्नरः दुःप्राप्यं यत्फलं विप्र अश्वमेधादिभिर्मखैः १३ प्राप्यते तत्सुखेनैव प्रबोधिन्यां तु जागरे आस्नात्य सर्वतीर्थेषु दत्वा गाः कांचनं महीं १४ नरस्तत्फलमाप्नोति यत्कृत्वा जागरं हरेः जातः स एव सुकृती कुलं तेन वै पावितं १५ कार्तिके मुनिशार्दूल कृता येन प्रबोधिनी यथा ध्रुवं नृणां मृत्युर्धननाशस्तथा ध्रुवं १६ इति ज्ञात्वा मुनिश्रेष्ठ कर्तव्यं वैष्णवं दिनं यानि कानि च तीर्थानि त्रैलोक्ये संभवंति च १७ तानि तस्य गृहे सम्यक् यः करोति प्रबोधिनीं सर्वकृत्यं परित्यज्य तुष्ट्यर्थं चक्रपाणिनः १८ उपोष्यैकादशी सम्यक्कार्तिके हरिबोधिनी किं तस्य बहुभिः पुण्यैः कृता येन प्रबोधिनी १९ परलोकप्रदा ह्येषा कार्तिके हरिबोधिनी सत्स्नानी स च योगी च स तपस्वी जितेंद्रियः २० भोगमोक्षं तु तस्यास्ति उपास्य हरिबोधिनीं विष्णोः प्रियतरा ह्येषा धर्मसारसहायिनी २१ यः करोति नरो भक्त्या मुक्तिभाक्स भवेन्नरः प्रबोधिनीमुपोष्यैव नागर्भे न विशते नरः २२ सर्वधर्मान्परित्यज्य तस्मात्कुर्वीत नारद कर्मणा मनसा वाचा पापं यत्समुपार्जितं २३ तत्क्षालयति गोविंदः प्रबोधिन्यां तु जागरे स्नानं दानं जपो होमः समुद्दिश्य जनार्दनं २४ नरैर्यत्क्रियते वत्स प्रबोधिन्यां तदक्षयं यत्कर्म क्रियते वत्स प्रबोधिन्यां तदक्षयं २५ ये चैव यंति नरास्तस्यां भक्त्या देवं च माधवं समुपोष्य प्रमुच्यंते पापैः शतजन्मजैः महाव्रतमिदं पुत्र महापापौघनाशनं २६ प्रबोधवासरं विष्णोर्विधिवत्समुपोषयेत् व्रतेनानेन देवेशं परितोष्य जनार्दनं विराजयन्दिशः सर्वाः प्रयाति हरिमंदिरं कर्तव्यैषा प्रयत्नेन नरैः कीर्तिधनार्थिभिः २८ बाल्ये यद्वार्जितं वत्स यौवने वार्द्धके तथा शतजन्मकृतं पापं स्वल्पं वा यदि वा बहु २९ तत्क्षालयति गोविंदस्तस्यामभ्यर्चितः खलु धनधान्यवहा पुण्या सर्वपापहरा शुभा ३० तामुपोष्य हरेर्भक्त्या दुर्लभं न भवेत्क्वचित् चंद्रसूर्योपरागे च यत्फलं परिकीर्तितं ३१ तत्सहस्रगुणं प्रोक्तं प्रबोधिन्यां प्रजागरे स्नानं दानं जपो होमः स्वाध्यायोऽभ्यर्चनं हरेः ३२ तत्सर्वं कोटिगुणितं प्रबोधिन्यां तु यत्कृतं जन्मप्रभृति यत्पुण्यमर्जितं कृतिभिर्भवेत् ३३ वृथा भवति तत्सर्वमकृत्वा कार्तिके व्रतं अकृत्वा नियमं विष्णोः कार्तिकं यः क्षिपेन्नरः जन्मार्जितस्य धर्मस्य फलं नाप्नोति नारद कार्तिके विष्णुतत्परः ३५ परान्नवर्जनाद्वत्स चांद्रायणफलं लभेत् न तथा तुष्यते यज्ञैर्न दानैर्वा गजादिभिः ३६ यथा शास्त्रकथालापैः कार्तिके मधुसूदनः कुर्वंति ये कथां विष्णोर्ये शृण्वंति समाहिताः ३७ श्लोकार्द्धं श्लोकपादं वा कार्तिके गोशतं फलं सर्वधर्मान्परित्यज्य कार्तिके केशवाग्रतः ३८ शास्त्राणां वाचनं कार्यं श्रोतव्यं च महामुने श्रेयसा लोभबुद्ध्या वा यः करोति हरेः कथां ३९ कार्तिके मुनिशार्दूल जंतूनां तारयेच्छतं नियमेन नरो यस्तु शृणुते वैष्णवीं कथां ४०

कार्त्तिके तु विशेषेण गोसहस्रफलं लभेत् प्रबोधवासरे विष्णोः शृणुते यो हरेः कथां ४१ सप्तद्वीपावनीदानफलं
स लभते मुने कृत्वा भुवि कथां विष्णोर्यच्चर्ययेत्तिकथाविदं ४२ स्वशक्त्या मुनिशार्दूल तेषां लोकोऽक्षयः स्मृतः गीतवा-
द्यविनोदेन कार्त्तिके यो नयेन्नरः ४३ ततस्य पुनरावृत्तिर्मया दृष्टा कलिप्रिय एकादश्यां तु निपुणा वेश्या देवांगनोप
मा ४४ गीतेन मोहिता लोकास्तया स्तुस्ते विचेतसः नेत्रांतविषयायातं नृत्याद्यन्तु हृतं तया ४५ यदा तस्या भवेद्वारो
नृत्यस्य हरिसन्निधौ विशेषतः समायांति जनाः शून्यं भवेत्पुरं ४६ यत्तं प्रलोभ्य सर्वेषां हृतं किमिति वर्ण्यते यत्से
माणं गुरुत्सस्यां दधार धरणीधरः ४७ कदाचित्कार्त्तिके मासि प्रबोधिन्यां प्रजागरे ननर्त्त सविशेषेण पश्यंती प्रति
मां हरेः ४८ तत्र कृष्णस्य सान्निध्ये रूपं शृंगारमोहिता कृष्णे भवत्प्रीतिमती चित्ते नैतद्विचिंतयत् ४९ श्रुत्वं नारायणः
साक्षाद्त्यंताद्भुतभोगवान् मया सहैव नृत्येत कथं संभावितेति विदं ५० रम्यरागांगहारश्च कीदृशः संविभाव्यते
रूपेणैव हि यस्याहं सुप्रचित्तास्मि रागिणी ५१ बह्वीश्चन्यासु नारीषु मय्येवाधिकप्रीतिमान् नृत्येन तोषमथवा सांगं
कटाक्षेणादिभावकृत् ५२ इत्थं मनोरथं बालाकुर्वती नृत्यमुत्सुका हरिप्रीत्या च सर्वांतो रात्रिमेवात्यवाहयत् ५३
ततः प्रातश्च तत्पुण्यं जागरस्यन्ययोजयत् तस्मिन्मनोरथे काम्ये यच्च कारातिनृत्यके ५४ ततः सा कतिभिर्वर्षैस्त्य-
क्त्वा कलेवरं विनं ह्रित्वाखिलं स्वर्गं गत्वा देवांगनाभवत् ५५ तत्रापि गीतनिपुणा नृत्याभिनयकोविदा रेमेर
म्भे विमानाग्रे रूपयौवनशालिनी ५६ कदाचित्स्फाटिके कुड्ये स्वरूपं ददृशे गना चिंतयामास मे रूपं पुंसो यो-
ग्येन कस्यचित् ५७ इत्युदीरितमात्रेण पूर्वजन्ममनोरथं सस्मार साप्तिचार्वंगी कृष्णेन सह वर्त्तनं ५८ नृपतिं
कामये कंचिद्ब्रह्मचर्ये स्थिता सदा तामेव मूर्त्तिं ध्यायंती चंद्रकांतिवरानना ५९ श्रीकृष्णगाथां गायंती रोमांचोद्ब
दलक्षणा अस्मिन्नन्वंतरे प्रीत्या श्रीकृष्णप्रियवार्त्तया ६० एतदंतरएवासौ भूमिर्भारप्रपीडिता तदर्थं वासुदेव
श्चावतितीर्षुरभूदिह ६१ कृष्णक्रीडार्थमादिष्टा ब्रह्मणा सुरयोषितः वासुदेवावतारे स्य त्वेकं भार्याव्रतं मदत् ६२
आसीत्तथा च तत्प्रीत्यै संभवंतु सुरस्त्रियः कैशोरी गोपकन्याख्या यो वने राजकन्यकाः ६३ भूत्वा देवांगनाः सर्वाः
जनयंतु हरेर्मुदं इत्याज्ञप्ता सुता स्वेषा चंद्रकांतिरुवाच तं ६४ पूर्वजन्मोद्भवो नूनं मम ह्येको मनोरथः भूमौ ग
तायाः पूर्येत तत्प्रसादात्पितामह सतीष्वन्यासु नारीषु जगन्मोहनरूपधृक् मय्येवातिप्रीतिमांश्च नृत्यतो भग
वान्मया इमं मनोरथं तस्याश्रुत्वोवाच पितामहः देवांशानवतारायस्तथा मम्यस्तथा दिशत् वृषभानुरिति ख्या
तो गोपो नंदब्रजे वसत् तस्य कन्या वरारोहा सुधानाम्न्यभवत्सुरा ६७ या चंद्रकांतिरित्यासीदित्येतत्कथितं म
या प्रबोधिनीजागरपुण्यवैभवात्स सनत्रईशो विधिवाक्यमत्यकृत् चकार रासोत्सवनर्तने सदा हि दावनेन्या
भिरपीहराधया ६९ सा नृत्यमानाद्भुतगोपरूपिणा कृष्णेन जन्मांतरवांछितेन राधा महाप्रेमजवाकुलेंद्रिया
निन्ये न्यलोकैकयया कृतार्थतां ७० तस्मात्प्रबोधिनी कृत्वा रात्रौ कृत्वा तु जागरं सुप्तोत्थितं हरिं दृष्ट्वा कामान्संसा
रजाह्विजाः ७१ मथुरायां तु संवासे जागरे हरिसन्निधौ कार्त्तिके बोधिनीं प्राप्य ततः श्रेयः परं न हि ७२ गीतनृ
त्यं च वाद्यं च नानाविष्णुकथा मुने यः करोति च पुण्यात्मा त्रैलोक्योपरि संस्थितः ७३ बहुपुष्पैर्बहुफलैः कर्पूरा
गुरुकुंकुमैः हरेः पूजा विधातव्या कार्त्तिके बुधवासरे ७४ वित्तशाठ्येन कर्त्तं [illegible] संप्राप्ते हरिवासरे यस्मात्पुण्यम
संख्यातं प्राप्यते मुनिसत्तम ७५ पुष्पैर्नानाविधैर्दिव्यैः प्रबोधिन्यां तु जागरे शंखतोयं समादाय अर्घ्यो देयो जना
र्दने ७६ यत्फलं सर्वतीर्थेषु सर्वदानेषु यत्फलं तत्फलं कोटिगुणितं दत्त्वार्घ्यं बुधवासरे ७७ गुरुपूजा ततः का
र्या भोजनाच्छादनादिभिः दक्षिणाभिश्च देवर्षे तुष्ट्यर्थं चक्रपाणिनः ७८ भगवंतमभिध्यायन् पुराणं प्रपठेन्न
रः प्रत्यक्षं च भवेत्तस्य कपिलादानजं फलं ७९ कार्त्तिके मुनिशार्दूल मद्भक्तो देवलवे व्रतं यः करोति यथोक्तं तु श्र
क्तिस्तस्य सुनिश्चयात् ८० केतक्याः पत्रेण पूजितो गरुडध्वजः समाः सहस्रं संप्रीतो जायते मधुसूदनः ८१ अ
गस्त्यकुसुमैर्देवं पूजयेद्यो जनार्दनं दर्शनात्तस्य देवर्षे नरकाग्निः प्रणश्यति ८२ मुनिपुष्पार्चितो विष्णुः कार्त्तिके
पुरुषोत्तमः ददात्यभिमतान्कामान् शशिसूर्यस्थितीयथा ८३ विहाय सर्वपुष्पाणि मुनिपुष्पेण केशवं कार्त्ति

केयोर्चयेद्भक्त्या वाजिमेधफलं लभेत् ८४ तुलसीदलपुष्पाणि यो यच्छति जनार्दने कार्त्तिके सकलं वत्स पापं जन्मायुतं दहेत् ८५ दृष्टा स्पृष्टाथवा ध्याता कीर्त्तिता नमिता स्तुता रोपिता सिंचिता नित्यं पूजिता तुलसी शुभा नवधा तुलसीभक्तिं ये कुर्वन्ति दिने दिने युगकोटिसहस्राणि तन्वन्ति सुकृतं मुने यावत् शाखाप्रशाखाभिर्बीजपुष्पफलैर्मुने रोपिता तुलसी पुंभिर्वर्द्धते वसुधातले तेषां वंशे तु ये जाता ये भविष्यन्ति ये गताः आकल्पयुगसाहस्रं तेषां वासो हरेर्गृहे यत्फलं सर्वतीर्थेषु सर्वदानेषु नारद तुलसीदलेन चैकेन कार्त्तिके प्राप्यते तु तत् संप्राप्ते कार्त्तिके दृष्ट्वा नियमेन जनार्दनः पूजनीयो महाविष्णुः कोमलैस्तुलसीदलैः दृष्ट्वा क्रतुशतैरेवं दानानि दत्त्वाप्यनेकशः तुलसीदलैस्तु तैरेव प्राप्यते केशवार्चनात् ॥ इति श्रीस्कांदपुराणे कार्त्तिकशुक्लपक्षीयप्रबोधनीमाहात्म्यं संपूर्णम् ॥ ॥

अथ वाराहपुराणोक्तं कार्त्तिकशुक्लैकादशीव्रतं ॥

अगस्त्य उवाच शृणुष्व भक्तितो राजन्कार्त्तिकैकादशीं तथा उपोष्य विधिनानेन सर्वां संप्राप्नुयात्फलं १ प्राग्विधानेन संकल्प्य तद्वत्स्नानं समाचरेत् विलोमेनार्चयेद्देवं नारायणमकल्मषं २ नमः सहस्रशिरसे शिरः संपूज्य वै हरेः पुरुषायेति वै भुजौ कंठं वै विश्वरूपिणे ३ ज्ञानास्त्रेणेति वा साक्षाच्छ्रीवत्साय तथा उरः जठरं प्रविश्ववे वोदरं दिव्यमूर्तये ४ कोटिसहस्रपादाय पादौ देवस्य पूजयेत् अनुलोमेन देवेशं पूजयित्वा विचक्षणः नमो दामोदरायेति सर्वांगं पूजयेद्धरेः एवं संपूज्य विधिना तस्याग्रे चतुरो घटान् ६ स्थापयेद्रत्नगर्भांस्तु सितचंदनचर्चितान् स्रग्दामबद्धग्रीवांस्तु सितवस्त्रावगुंठितान् ७ स्थगितांस्ताम्रपात्रैस्तु तिलपूर्णैः सकांचनैः चत्वारः सागराश्चैते कल्पिता द्विजसत्तम ८ तन्मध्ये प्राग्विधानेन सौवर्णं स्थापयेद्धरिं षोडशारे रथांगे तु रजोभिर्बहुभिःकृते ९। रथांगेचक्रे योगेश्वर योगनिद्राप्रशायिने पीतवाससे तमप्येवं तु संपूज्य जागरं तत्र कारयेत् १० कुर्यात्तद्वैष्णवं योगमंते योगेश्वरं हरिं एवं कृत्वा प्रभाते तु ब्राह्मणान्पंच भोजयेत् ११ चत्वारः कलशा देयाश्चतुर्णां पंचमस्य तु योगीश्वरं तु सौवर्णं प्रदद्यात्स्वयतः शुचिः १२। प्रीयतां दामोदरो योगीश्वररूपीति मंत्रतः वेदाढ्ये समं दत्तं तद्विदे द्विगुणं तथा आचार्ये पंचरात्रज्ञानां सहस्रगुणितं भवेत् यस्त्विमं सरहस्यं च समंत्रं चोपपादयेत् विधानं तस्य भक्त्या वै दत्तं कोटिगुणोत्तरं योग्येतिष्ठति यस्त्वन्यमासन्नं पूजयेत्कुधीः सद्गतिमवाप्नोति दत्तं तस्य च निष्फलं एवं दत्त्वा विधानेन नत्वा तं विष्णुमच्युतं विप्राणां भोजनं दद्याद्यथाशक्त्या सदक्षिणं धरणीव्रतमेतद्धि पुराचीर्णा प्रजापतिः प्रजां लेभे तथा मुक्तिं ब्राह्मण्यं अविचालितं युवनाश्वश्च राजर्षिरेतेन विधिना पुरा मांधातारस्तं लेभे परं ब्रह्म च शाश्वतं तथा हैहयदायादः कृतवीर्यो नराधिपः १९ कार्त्तवीर्यसुतं लेभे परं ब्रह्म च शाश्वतं शकुंतलाप्येवमेव व्रतं चीर्त्वा महामुने २० लेभे शाकुंतलं पुत्रं ऊर्जयं चक्रवर्तिनं अनेन विधिना प्राप्तं चक्रवर्तित्वमुत्तमं २१ धरण्याप्रपि पाताले मग्नया तत्कृतं पुरा व्रतमेतत्ततो नाम्ना धरणीव्रतमुच्यते २२ समाप्तेस्मिन्व्रते देवी हरिणा क्रोडरूपिणा उद्धृता याऽपि तुष्टेन धारिता नौरिवाम्भसि य इदं शृणुयाद्भक्त्या यश्च कुर्यान्नरोत्तम सर्वपापविनिर्मुक्तो विष्णुसालोक्यतां व्रजेत् २४ आपन्निहरते चैका राज्यमेकैव यच्छति किं पुनर्द्वादशी नाम्नी येनेष्टा न ददुः परं २५ ॥ इति वाराहपुराणोक्तं योगीश्वरद्वादशीव्रतं समाप्तम् ॥

अथ प्रबोधैकादशीकृत्यं तदुक्तं मदनरत्ने ॥ ब्रह्मोवाच एकादश्यां तु शुक्लायां कार्त्तिके मासि केशवं प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः इति नृत्यैर्गीतैस्तथा वाद्यैर्ऋग्यजुस्साममंगलैः वीणापणवशब्दैश्च पुराणश्रवणेन च २ वासुदेवकथाभिश्च स्तोत्रैरन्यैश्च वैष्णवैः सुभाषितैरिंद्रजालैर्भूतःशोभाभिरेव च पुष्पैर्धूपैश्च नैवेद्यैर्दीपवृक्षैः सुशोभनैः होमैर्भक्ष्यैरपूपैश्च फलैः शार्करपायसैः ४ इक्षुविकारैर्मधुरैर्द्राक्षाक्षोटैः सदाडिमैः कुवेरकस्य मंजर्या मालत्या कमलेन च ५ कुवेरकः पर्णाशः कृष्णतुलसीति केचित् हृद्याभ्यां श्वेतरक्ताभ्यां चंदनाभ्यां च सर्वदा ६ कुंकुमालक्तकाभ्यां च रक्तसूत्रैः सकंकणैः नव्यैर्नानाविधैः पुष्पैर्दिव्यैर्वीरकपाहृतैः ७ वीरकयोतिकयंत [illegible] मानोभिर्हितं मूल्यप्रदानात्क्रियमाणाक्रयः त

स्यां रात्रौ व्यतीतायां द्वादश्यामरुणोदये आदौ हृतेनैतत्त्वेण मधुना स्नापयेत्ततः ८ दध्ना क्षीरेण च ततः पंचगव्येन शास्त्रवित् उद्वर्त्तनं माषचूर्णामसूरामलकानि च ९ सर्षपाश्च प्रियंगुश्च मातुलिंगरसैस्तथा सर्वौषध्यः सर्वगंधः सर्वबीजानि कांचनं १० मंगलानि यथाकामं रत्नानि च कुशोदकं एवं संशोध्य देवेशं दद्याक्षौरोदकं शुभं ततस्तु कलशान्देयाद्यथाशोभाः स्वलंकृताः जातीपल्लवसंयुक्ताः सफलाश्च सकांचनाः पुण्याहवेदशब्देन वीणावेणुरवेण च एवं संस्नाप्य गोविंदमनुलिप्तं स्वलंकृतं सुवाससं तं संपूज्य सुमनोभिः सुकुंकुमैः दीपैर्धूपैर्मनोज्ञैश्च पायसेन च भूरिणा पात्रैश्च पानदानैश्च होमैः पुष्पैः सदक्षिणैः वासोभिर्भूषणै रत्नैर्गोभिरश्वैर्मनोजवैः ब्राह्मणाः पूजनीयाश्च विष्णोरीशाश्च मूर्त्तयः यत्नशिष्टा मतपश्चाज्जोक्तव्यं ब्राह्मणैः सहेति १८ ॥

अथ रामार्चनचंद्रिकोक्तप्रकारेण बोधिनीविधिः ॥ शयन्युक्तप्रकारेण रथमारोप्य माधवं विधाय महतीं पूजां विष्णोरभ्यर्च्य वैष्णवान् वाद्यघोषेण महता देवं नीत्वा जलाशयं धौतांघ्रिपाणिः कुर्वीत संकल्पं वैष्णवैः सह

एवंगुणविशिष्टायां बोधिन्यामिंदिरापतेः कुर्वे प्रबोधनं विष्णोर्वराहोक्तमनूच्चरेत् भविष्योत्तरेऽपि । कार्त्तिके शुक्लपक्षे तु एकादश्यां तथा सुत मंत्रेणानेन राजेंद्र देवमुत्थापयेद्द्विजः ॥ मंत्रः ब्रह्मेंद्ररुद्राग्निकुबेरसूर्यकीनाशसोमादिभिर्वंदनीय बुध्यस्व देवेश जगन्निवास मंत्रप्रभावेण सुखेन देव १ इयं तु द्वादशी देव प्रबोधाय विनिर्मिता त्वयैव सर्वलोकानां हितार्थं शेषशायिना त्वयि सुप्ते जगन्नाथ जगत्सुप्तं भवेदिदं उत्थिते चेष्टते सर्वमुत्तिष्ठ माधव ३ इदं विष्णुरनेनैव तस्मादुत्थापयेत्प्रभुं हिरण्यगर्भ इति च प्राजापत्यं पठेत्तथा गायत्रं वैष्णवं सूक्तमतो देवा अवंतु इति। श्रीसूक्तं हृदयं तु हिरण्यगर्भ दशर्चस्य सूक्तस्य हिरण्यगर्भ ऋषिः प्राजापत्यो देवता त्रिष्टुप्छंदः जपे विनियोगः ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम १ य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम २ यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ३ यस्येमे हिमवंतो महित्वा यस्य समुद्रं रसया सहाहुः यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ४ येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं येन नाकः यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ५ यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ६ आपो ह यद्बृहतीर्विश्वमायन् गर्भं दधाना जनयंतीरग्निं ततो देवानां समवर्त्ततासुरेकः कस्मै देवाय हविषा विधेम ७ यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयंतीर्यज्ञम् यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम ८ मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान यश्चापश्चंद्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ९ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां १० ॥ उत्तिष्ठोत्तिष्ठ देवेश योगनिद्रां विहाय वै अनेन मंत्रेणोत्थाप्य घंटावादित्रनिःस्वनैः तीरे समुपवेश्येशं महापूजां समर्चयेत् सोऽसौ वदन्नकरुणो भगवान्सहस्रशीर्षोऽमितेन नयनोरुसहस्रविजृंभमान् उत्थाय विश्वविजयाय च नो विषादं माध्वीगणं पतयतात्सुरपुंगवाः इति पुष्पांजलिं दत्वा सूक्तं माधवं जपेत् तच्चोक्तमृग्वेदसर्वानुक्रमणिका या ओषधीस्त्र्यधिकाथर्वणो भिषगोषधिस्तुतिरानुष्टुभं या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा मनै नु बभ्रूणामहं शतं धामानि सप्त च शतं वो अंब धामानि सहस्रमुत वो रुहः अधा शतक्रत्वो यूयमिमं मे अगदं कृत ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे सनेयमश्वं गां वास आत्मानं तव पूरुष अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता गोभाज इत्किलासथ यत्सनवथ पूरुषं ९ यत्रौषधीः समग्मत राजानः समिताविव विप्रः स उच्यते भिषग्रक्षोहामीवचातनः अश्वावतीं सोमावतीमूर्जयन्तीमुदोजसं आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते धनं सनिष्यं...

र्त्तीनामात्मानं तत्त्वपूरुषः २ इष्कृतिर्नाम वो माता थो यूयस्थ निष्कृतीः सीराः पतत्रिणीः स्थन यदामयति नि। ष्कृथ अतिविश्वाः परिष्ठास्तेन इव व्रजमक्रमुः ओषधीः प्राचुच्यवुर्यत्किंचतन्वो रपः २ यदिमा वाजयन्न। हमोषधीर्हस्त आदधे आत्मायक्ष्मस्य नश्यति पुरा जीवगृभो यथा यस्यौषधीः प्रसर्पथांगमंगं परुष्परुः ततो यक्ष्मं विबाधध्व उग्रो मध्यमशीरिव साकं यक्ष्म प्रपत चाषेण किकिदीविना साकं वातस्य ध्राज्या साकं नश्य तिहाकया अन्या वो अन्यामवत्वन्यान्यस्या उपावत ताः सर्वाः संविदाना इदं मे प्रावता वचः याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ३ अवपतन्तीरवदन्दिव ओषधयस्परि यं जीवमश्नवामहै न स रिष्याति पूरुषः याओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः तासां त्वमस्युत्तमारं कामाय शं हृदे या ओ षधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु बृहस्पतिप्रसूता अस्यै संदत्त वीर्यं ओषधयः समवदन्त सोमेन सह राज्ञा यस्मै कृणोति ब्राह्मणस्तं राजन्पारयामसि नक्षत्रमासोषधेन वह्नेर्लाजपुलकः उपरि दत्तेन साकं यो अस्मा अभियासति एवमाथर्वणसूक्तं जपित्वा पुनः पुष्पांजलिं दद्यात् नानामेघाविघ्नैर्वनिर्मलो निर्मलादिशः शा रदानि च पुष्पाणि गृहाण मम केशवेति समर्पयित्वा ततो विलोकिताः सर्वाः प्रवर्तयेत् स्नापयेद्वा सर्वं पंचामृतैः पुरुषसूक्तेन नीराज्यमंत्रं विन्यस्य वस्त्रालंकारचंदनैः स्रग्धूपदीपदिव्यान्नैस्तांबूलैस्तोषयेत्ततः पुष्पांजलिमा दाय प्रांजलिर्गृहीत्वा सात्ततं जलं व्रतिमासव्रतान्मुक्तोस्य व्रतस्य निवेदयेत् व्रतसमापनमंत्रस्तु सनत्कुमारेण क्तः इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दनेति प्रकुर्विते मे यानाना वा तु मासव्रतैः प्रभुः प्रभूतपातकध्वांतेराघवः प्रीयतां मम व्रतारंभस्त्वस्मात् मासि पक्षतथौतद्दर्ढके वासरके वा उपे एकादशीद्वादशीपूर्णिमादर्कसंक्रान्तिवासरव्याप्तिमित्यर्थः तथोपदव्यादानानि तत्त्रशयनीप्रकरणोदवान्यानि ए वं व्रतान्यर्पयित्वा "स्वीतपरमाहताः कृतिस्त्वयावेदवादेलोक्यमातारमापतिं स्तुतिस्तु दक्षेण वि धमविहतकटाक्षपातसंजातनक्रमकरीमयशीर्णमोक्षः सिंधुः शिरस्यहंतुपरिगृह्य तु पीयादारविंदमयगम्य वभावष्टम नवाववयं जडधियोरुविरामभूतं नन्दाटव्यमाद्युरूपजगतामधीशं यत्सन्नितः सरणा रज सः प्रजेशाश्चान्ये चभूतपतयः सभवान्युगेशः २ कामं प्रयाहि जहि विश्रवसोमनमेदं त्रैलोक्यरावणमवाप्नुहि वीरपत्नी बध्नीयसेतु मह तेयशसो वितत्यै गायंति दिग्विजयिनो यमुपेत्य भूपाः ३ स्वस्य स्तुतिस्वस्तु एवल म चीदनं यथां चत्वानि शिवं प्रियोधिया मतश्च मदंभजनादथो हजेमावेश्यतां नोमतिरप्यहेतुकीध इत्यादि श्रुः समभ्यर्च्य गीतवाद्यघोषाः स्तनैः देवं रथोपरिस्थाप्य जयघोषवर्द्धनस्सरं महातूर्यरवैरायोभ्रामयेतस्यंदनारूप ते अयि मंदेववदे देशं नगरे पार्थिवः स्वयं शुभ्रः शेत्यादिवा हेमरकतस्तुरणत्किंकिणीजालमाला रत्नाद्यैर्मौक्ति कानामविरलमणिभिः संभृतैश्चैव हारैः हैमैः कुंभैः पताकाशिखरचितिभिर्भूषितः केतु शुक्लैश्चित्रैर्बलिशोभं यो उरिहरहरे पातुजेशोरथोवः १ वक्त्रं नीलोत्पलरुचिलसत्कुंडलाभ्यां समेत चंद्राकारं रचिततिलकं चंद नेनातिनैष्णु गत्वालीलाजनस्तवकं रीवेक्षणेनामरतोषं पद्मावासः सततसुरमाधारयन्पातुविष्णुः २ मोदं तां स्वजनानखिर्दिन्तथि यस्य कामविलोपदवाः स्वस्याः स्वस्थिरउदयः प्रतिहतामित्रारमंतां स्तवे दैत्यागिरिग हन्तानि शहना त्याग व्रजं धर्मया दैत्यारिर्भगवानयं नरहरियानं समारोहति ३ पलायध्वं पलायध्वं रे रे दनुज दानवाः सरत्नायलोकानां रथारूढोन्नृकेसरी ॥ इत्यादि विस्तृयमीकमंत्रैः सतोष्य सादरं प्रसादमालां दृष्ट्वा णीयाद्भक्तिभावतः जयदेव महादेव वरदेव देवाखिलेश्वर वरदेशाखिलेविश्वं शक्ता रमापते नत्यो वी यैर्भगवतैर्घंटावाद्यजयस्वनैः भ्रामयन् स्यंदनं विष्णोः पुरमध्ये समंततः ८ रथस्याकर्षणं पूर्वं कृतं देत्य नायकः मनःसुराः सिद्धसंघाश्च मुनिगंधर्वमानवाः ७ यावत्पदानि कुरुते स्वरथस्याकर्षणं नरः कोटि वि नभिस्तानि तुल्यानि नरनायक ८ रथेनारूढं ... ह्रतीयजः महाविष्णुसमास्थेनेभवं य वि भवा

अपि ४ श्रीकृष्णरथशोभायै प्रकुर्वंति वदंति च जपंति च पुनर्ये वै ते मान्या लोकाः सनातनाः १० रथस्थितो रथे यैस्तु पूजि-
तो मधुसूदनः ददाति वांछितं तेषामंते च परमां गतिम् ११ दोलायमानं गोविंदं मंचस्थं मधुसूदनं रथस्थं वामनं दृष्ट्वा।
पुनर्जन्म न विद्यते १२ रथस्थं येन गच्छंति प्रसन्नमाणं जनार्दनं विप्रा वेदविदस्तेपि विज्ञेयाः श्वपचाधमाः १३ येषां गृ-
हागतो याति रथस्थः श्रीनृकेसरी पूज्यते तैः प्रकर्त्तव्या वित्तशाठ्यविवर्जितैः १४ अनर्चितो यदा याति प्रमादात्स गृ-
हाद्धरिः पितरस्तस्य विप्रुल्वा यावत्संवत्सरं नृप १५ स्त्रियोपि मुक्तिमायांति रथयात्रापरायणाः सशैलवनस-
सागरा तेन दत्ता वसुंधरा १६ इति पौरजनैः सार्द्धं ग्रामं विचार्य रथं गृहं गत्वा नीराज्य देवेशं शायीत वैसलवं स्मरन् १७
॥ वैसलवं मंत्रनाम चेत्यर्थः इति रथोत्सवमाहात्म्यं शायीनेति द्वादश्यभिप्रायेणैकादश्यां तु रात्रौ जागरणं
कार्यादेकादश्यां सुरालये इति वचनात् रात्रिजागरणमप्यस्यावश्यकं इयमेकादशी सोमवारोत्तराभाद्रप-
दयोगे महापुण्येत्युक्तं मदनरत्ने वराहपुराणे शुक्लपक्षं प्रक्रम्य ॥ एकादशी सोमयुक्ता कार्त्तिके मासि भामिनि
उत्तराभाद्रयोगेन सुनंदा सा प्रकीर्त्तिता तस्यां यत्क्रियते भद्रे सर्वमानंत्यमश्नुते अनंतपुण्यफलदा तेनोक्ता मता ।
सत्तां प्रियइति । अथ वराहपुराणे बोधिनीएकादशीविधिः एकादश्यां रात्रौ कुंभे घृतपात्रोपरि हैमं माषमितं।
मत्स्यं पंचामृतेन संस्नाप्य कुंकुमपीतवस्त्रयुगपुष्पाद्यैः समभ्यर्च्य मत्स्यरूपो जगद्योनिः प्रीयतां मे जनार्दन इति
दत्वा ॥ दक्षिणां दत्वा ब्राह्मणान् भोजयेदिति ॥ इति कार्त्तिकशुक्लैकादशीकृत्यं समाप्तम् अथ प्रबोधका-
लनिर्णयः निशि स्वापो दिवोत्थानं संध्यायां परिवर्त्तनमिति ब्रह्मपुराणवचने रात्रौ स्वपमित्याचार्यचूडामणिः
वराहपुराणे तु द्वादश्यां प्रबोधोत्सव उक्तः इयं चरेदन्यतादि युक्ता प्रबोधनीये प्रशस्ता आभाकासितपक्षेषु मे।
त्रश्रवणरेवती आदिमध्यावसानेषु प्रस्वापावर्त्तनोत्सवाः नारदीयेपि मैत्रायपादे स्वपतीह विष्णुः श्रुतेश्च म।
ध्ये परिवर्त्तमेति पौष्णावसाने च सुरारिहंता प्रबुध्यते मासचतुष्टयेनेति यदा तु द्वादशी युतन्न नक्षत्रभागो।
नास्ति तदा द्वादशीनक्षत्रयोगोपि रात्र्यादिगतो ग्राह्यः पादयोगो यदा न स्यात्तेनापि तदा भवेदिति वराहपु-
राणात् विष्णुर्दिवा न स्वपिति न च रात्रौ प्रबुध्यते द्वादश्यामृक्षसंयोगे पादयोगो न कारणमिति विष्णुधर्मात्
राच यदा तु द्वादशीयुतानि नक्षत्राणि न संत्येव किं त्वेकादशीयुतानि तदा तान्यपि तत्र दृक्षभाग एव निशादिवेला
नादरेण प्रस्वापादि कार्यं अप्राप्ते द्वादशीमृक्षे उत्थानं शयनं हरेः पादयोगेन कर्त्तव्यं अहोरात्रं विचिंतयेदिति जी-
मूतवाहनवचनात् पादयोगादन्यतिथौ द्वादश्यामृक्षसंगमादिति वचनाच्च द्वादश्या नक्षत्रसंयोगस्य रात्र्या-
दावभावेपि तत्रैव कार्य्यमित्यर्थः अत एव वराहोपि द्वादश्यां संधिसमये नक्षत्राणामसंभवे आभाकासित
पक्षेषु शयनावर्त्तनादिकमिति संधिसमप्युसायं संध्येव प्रबाधापि तत्रैव कार्य्यः तदुक्तं रेवत्यंते यदा रात्रौ द्वा-
दश्याच समागमः तदा विबुध्यते विष्णुर्दिवा चेत्प्राग्रेवतीमिति । जीमूतवाहनधृतवचनात् विष्णुधर्मोत्तरे
तु एकादश्यादिषु पंचस्वपि प्रस्वापबोधोत्सवाउक्तौ कचित्पौर्णमास्यामेव रामार्चनं चंद्रिकायां तु । पारणा-
हे पूर्वरात्रे चैटादीन्वादयेन्मुहुरिति अत्र च बहुषु वचनेषु चतुर्थभागवाचिपादग्रहणात् चतुर्थीविभक्तयो
रुद्रराधारेवतीन्यायेन त्रेधाविभाग एव अत एव मध्यभागग्रहणे न विशेषश्रवणादश्रुतत्वादिति न्यायेन त्रेधा
विभाग एव अत एव मध्यग्रहणमप्युपपद्यत इति वाच्यं वचनांतरेषु पादग्रहणे न विशेषश्रवणादिश्रुतित्वा-
दिति हेतोरसिद्धेः श्रवणस्य तु त्रेधाविभक्तस्य मध्यभाग एव ग्राह्यः । अथ प्रबोधमंत्रो वाराहे। ब्रह्मेंद्ररुद्रादि।
कुबेरसूर्येत्यादिकथासूक्तः इयं तु द्वादशी देव प्रबोधार्थं विनिर्मिता त्वयैव सर्वलोकानां हितार्थं शेषशायिना
त्वयि सुप्ते जगन्नाथे जगत्सुप्तं भवेदिदं उत्थिते चेष्टते सर्वमुत्तिष्ठोत्तिष्ठ माधव उत्तिष्ठोत्तिष्ठ गोविंद त्यज निद्रां जग-
त्पते इत्यादि मेघा गताः शारदपूर्णचंद्र शारद्यपुष्पाणि मनोहराणि अहं ददानीति च पुण्यहेतोर्जागृष्व जागृष्व
च लोकनाथ एवं प्रबोध्य पुष्पांजलिदानं इदं विष्णुरिति शेषो मंत्रः अध्यायनेहरेरिति तत्र मंत्रः गता मेघा इत्यादिः
वीक्षः वाराहे एवं कर्माणि कुर्वंति द्वादश्यां ये यशस्विनि मद्भक्ताश्च नरश्रेष्ठास्ते यांति परमां गतिं एवं वैशारदं कर्म

निखिलं कथितं मया मोदते देवसंसारे मम भक्तः सुखावहः इति । इति हरिप्रबोधोत्सवविधानं अथात्रैकादश्या
दि पूर्णिमांतं पंचदिनात्मकं भीष्मपंचकव्रतविधानं दीपदानं च ॥ पाद्मकार्त्तिकमाहात्म्ये ब्रह्मनारदसंवादे ॥ अ
तः परं प्रवक्ष्यामि मुने हं भीष्मपंचकं यथा वर्षसहस्रेषु समभ्यर्च्य जनार्दनं पुराप्राप्तं व्रतं चैतत्सर्वयज्ञफलप्रदं
यथा च भगवे प्रोक्तं भगुनोशनसे तथा ततस्त्वन्यैर्गृहीतं तत्पारंपर्यसमागतं एकादश्यां तु शुक्लायां कृतं पंचदिना
त्मकं व्रतीस्नाया विधानेन देवादीनां च तर्पणं मौनवत्सत्रमौनी च हरिमर्च्य जितेंद्रियः भूमिशायी तथा खंडदी
पं पंच सहस्रं च ओं नमो वासुदेवाय जपेदष्टोत्तरं शतं पूजांते चार्घ्यमावेद्य जुहुयात्तिलसंयुतान् यवान्ब्रीहींस्ता
यसं च मंत्रेणाष्टाक्षरेण च पूजाविधिविशेषेण दिनेष्वेवं हि पंचसु प्रथमे दिवसे पद्मैर्हरेः पादौ प्रपूजयेत् द्वि
तीये बिल्वपत्रैश्च जानुनी संप्रपूजयेत् तृतीये पूजयेन्नाभिं तुलस्या च चतुर्थके जातीपुष्पादिभिः स्कंधौ माल
त्या पंचमे शिरः एकादश्यामथाभ्यर्च्य मंत्रवद्गोमयं पिबेत् द्वादश्यां च गवां मूत्रं त्रयोदश्यां च गोपयः चतुर्दश्यां
गोहृतं च पूर्णिमायां तथा दधि पंचस्वपि दिनेष्वेवं विधिवत्स्नानपूजने नैदायां कांचनं दद्याद्द्वादश्यां वस्त्रयुग्
मं गोदानं च त्रयोदश्यां रिक्तायां घृतपायसं सितासिततिलैः स्नानं पूर्णिमायां विशेषतः यात्रीक्षाया कृतं स
र्वं पौर्णिमास्यां विशेषतः भीष्मपंचदिनेषु दद्याद्भीष्माय चांजलिं संवत्सरकृतं पापं तत्क्षणादेव नश्यति स
त्यव्रताय शुचये गांगेयाय महात्मने भीष्माय वै ददाम्यर्घ्यमाबालब्रह्मचारिणे वसूनामवताराय शंतनोरा
त्मजाय च अर्घ्यं ददामि भीष्माय सोमवंशोद्भवाय च वैयाघ्रपदगोत्राय सांकृत्यप्रवराय च अनपत्याय भीष्मा
य तस्मै दद्याज्जलांजलिं सव्येनानेन मंत्रेण तर्पणं सार्ववर्णिकं प्रतिपद्दिवसे विप्रान्भोजयेत्पायसेन च पू
र्णायामेव अथवा ब्राह्मणान्भोजयेद्व्रती विप्रशेषान्नभोक्ता यो मुक्तिस्तस्य करे स्थिता ॥ इति पाद्मे कार्त्तिक
माहात्म्ये भीष्मपंचकव्रतविधानं अथ भविष्योत्तरोक्तं भीष्मपंचकव्रतं ॥ श्रीकृष्ण उवाच कार्त्तिके शुक्ल
पक्षस्य शृणु धर्मसुतातनं एकादश्यां समारभ्य विज्ञेयं भीष्मपंचकं दुस्तरं भीष्ममित्याहुरशक्यं तदिहोच्य
ते दारुणं भीषणं भीष्ममित्यभिधानात् । यस्तत्करोति राजेंद्र तेन सर्वं कृतं भवेत् वसिष्ठभृगुगर्गाद्यैश्चीर्णं
कृतयुगादिषु अंबरीषादिभिर्वैश्यैः शूद्रैरन्यैः कलौ युगे दिनानि पंच पुण्यानि चीर्णमेतन्महाव्रतं ब्राह्मणैर्ब्र
ह्मचर्येण जपहोमक्रियादिभिः क्षत्रियैश्च तथा वैश्यैः सत्यशौचपरायणैः पापर्द्धिः परिहर्तव्या ब्रह्मचर्येण नि
ष्ठया मद्यमांसं परित्याज्यं मैथुनं पापभाषणं शाकाहारेण कर्तव्यं कृष्णार्चनपरैर्नरैः स्त्रीभिर्वा भर्तृवाक्येन
कर्तव्यं सुखवर्धनं विधवाभिश्च कर्तव्यं पुत्रपौत्राभिवृद्धये सर्वकामसमृद्ध्यर्थं मोक्षार्थमपि पांडव नित्यं स्ना
नेन दानेन कार्त्तिकीं यावदेव तु वैश्वदेवश्च कर्तव्यो विष्णुध्यानपरायणैः पापस्य प्रतिमा कार्या रौद्रवक्त्रातिभी
षणा खड्गहस्ता च विकृता सर्वलोहमयी नृप तिलप्रस्थोपरि स्थाप्या कृष्णवस्त्राभिवेष्टिता करीरकुसुमापी
डावलत्कांचनकुंडला संपूज्य परया भक्त्या धर्मराजस्य नामभिः इममुच्चारयन्मंत्रं गृहीतकुसुमांजलिः यद
न्यजन्मनि कृतमिह जन्मनि वा पुनः पापं प्रशममायातु तत्सर्वं तव पूजनात् ब्राह्मणाय ततो देयं कृष्णो मे प्रीय
तामिति अन्येषामपि दातव्यं स्वशक्त्या वांछितं वसु कृतकृत्यः स्थिरो भूत्वा विरक्तः संगतो भवेत् शांतचित्तो निर
वाधः परमं पदमाप्नुयात् नीलोत्पलदलश्यामश्चतुर्वक्त्रश्चतुर्भुजः अष्टपाच्चैकनयनः शंकुकर्णो महास्वनः
जटी द्विजिह्वस्ताम्राक्षो मृगराजतनुच्छदः चिंतनीयो महादेवो यस्य रूपं न विद्यते इदं भीष्मेण कथितं शरतल्प
गतेन च तदेतत्ते समाख्यातं दुष्करं भीष्मपंचकं धन्यं पुण्यं पापहरं तद्युधिष्ठिर महाव्रतं यच्चीर्णं ब्रह्महा गोघ्नः स
र्वपापैः प्रमुच्यते यद्भीष्मपंचकमिति प्रथितं पृथिव्यामेकादशीप्रभृति पंचदशीनिरुद्धं उत्पन्नभोजनपरस्य
नरस्य तस्मिन्नित्यं फलं ददाति पांडव शार्ङ्गधन्वा ॥ इति भविष्योत्तरे भीष्मपंचकव्रतं अथ भीष्मपंचकव्रत
माहात्म्यं पाद्मे कार्त्तिकमाहात्म्ये ॥ पृथुरुवाच व्रतं यज्जगति ख्यातं देवर्षे विष्णुतोषणं भीष्मपंचकमित्ये
वं ज्ञातः ख्यातं तन्नदाख्यया नारद उवाच एतत्परंपराप्राप्तमकाले न हि तिरोहितं द्वापरे पुनरेवेदं श्रीकृष्णेन प्रभो

शितं भीष्माय कथितं कस्मात्तेनादौ कृतमित्युत अत स्तदाख्यया लोके कथितं भीष्मपंचकं पृथुरुवाच कदास्य
संगतिस्तस्य गांगेयस्य महात्मनः कृष्णेन सह देवर्षे कदा दृष्टश्च केशवः नारदउवाच यदागतो दैत्यविद्यौ कृष्णः
स्वकृष्णः पृथासूनुभिः प्रेरितश्च गृहं गतो विदुरस्यातिथेयं चकार गोप्यात्मनिस्तत्रमोदं मन्येन जातिर्न च पंडि
तत्वेन वा धनित्वेन न च शूरताच सर्वे गुणास्तस्य न तोषकारणं भक्त्यैव कारुण्यनिधिः प्रतुष्यते उपविष्टं कृताति
थ्यं श्रुत्वा भीष्मो महामनाः जगाम कृष्णसान्निध्यं दर्शनानंदनिर्हृतः भीष्ममागतमाज्ञाय प्रीत्यासौ यदुनंदनः
समुत्थायाभिवाद्याथ बाहुभ्यां परिरभ्य च उपविश्यासने स्वे स्वे कृष्णभीष्मौ परस्परं पप्रच्छतुः शिवं प्रीतो भी-
ष्मः पुनरपृच्छत भीष्मउवाच यद्भ्रूविलासचलकुंडलमतित्रिधेयं स्वर्गं सृजत्यवति हंति गुणैश्च माया ब्रह्मा
दयो यमिह वेदितुमीश्वरा नो सोयं पृथोतनयहृतविधिं करोति इदं विचित्रं भगवन् विचित्रे मे परिवर्तते साम्येन व
र्तमानो पि जीवानां त्वं सुहृत्सखा अथान्यान्स्वेव मानांश्च त्यक्त्वा वै पांडवेष्वथ बंधुत्वं च सहत्वं च गुरुत्वं सत्कराश्र
यं पितृत्वं कार्यकारित्वं पांडवेष्वेव नंदन किमेतेषां तथा कर्म तवाराधनमीश्वर यथते पुंचकाशक्तिर्वशीकर
णम हुतं यथा त्वमीश्वरो मायी बलाज्जीतश्च वश्यतां कारणं कथ्यतां विस्मयेत स्त्वद्वश्यतां गतः श्रीकृष्णउवा
च गंगात्मज महाभाग न प्रष्टव्यमिदं त्वया गोपनीयमिदं मेद्य भक्तियोगस्तु वश्यकृत् मत्तः प्रचरितं लोके य
द्वतं जनतां नयत् भक्तियोगेन मे लोकः सर्वो मुक्तो भविष्यति भीष्मउवाच त्वदाराधनधर्माश्च मुनिभिर्बहु
बोधिताः ईश वश्यकरं धर्मं त्वमेवाख्यातुमर्हसि श्रीनारदउवाच तेनैवमभ्यार्थितो यदा हरिः पृष्टस्तु लो
कस्य हितायनूनं संसारिणां जन्ममृतादिदुःखविद्वान् दयासिंधुरुवाच भीष्मं श्रीकृष्णउवाच श्रृंवंति सभ
वाः पंच पूर्वकल्पे द्विजोत्तमाः कविः शुचिर्हरिश्छंदो नो हंसो नामतः पृवत्ते संगीतकं पाठयंतः कंठैः किन्नरव
त्स्वराः तेनेकपरिषत्सु परिभ्रमंतो देशांतरेषु विविधं दृष्टश्वरित्रं विनंतदाप्य बहुवस्त्रविभूषणादि
साडंबरं व्ययमकार्षुरभुद्धततत्वाः ते कदाचित्तु वीरस्य राज्ञो मधुपुरीं ययुः श्रुत्वा संगीतव्यसनं सभातस्य
दिदृत्सवः अहो अभाग्यं लोकस्य न पीतं यमुनाजलं गोविंदो गोपिकासंगी यत्र क्रीडति कं सदा यथास्य
र्शमणिस्पर्शाल्लोहं याति सुवर्णतां तथा कृष्णाजलस्पर्शात्पातकं याति पुण्यतां स्नात्वा तीर्थे तदोपोष्य स्थित्वा
दिमचतुष्टयं पप्रच्छु राजचरितमवरोधविदं जनं विचार्य मनसा प्राह सज्जनोतिविचक्षणः राज्ञ एका भो
गपत्नी नाम्ना कादंबिनी वरा संगीतविद्यानिपुणा रागे कंठे च किन्नरी स्त्रियं एव हितं वालानर्तयति नृपाग्र
तः दृष्टुं न प्राप्यते तस्यानृत्यमन्येन केनचित् एतच्छ्रुत्वा विचार्याथ निश्चयं चागमन्निदं यत्तत्कृपतेवा
यं नृत्यमालादिकध्वनिः तस्य लप्राप्यतस्य स्मै राज्ञो दर्शनकांक्षिणः श्रुत्वा सम्यग्धनि विप्राः पप्रच्छुः कृप
जीविनः विप्राऊचुः अहो वतात्र सान्निध्ये राज्ञो नास्ति च कोविदः संगीतज्ञो यतो वाद्येन नृत्ये वापि न मुद्यता तं
नीहर्षं तव शिथिलं किन्नरैर्वाद्यते परं तालं चापस्थितं दत्तमित्यवाचं समा सदा तच्छ्रुत्वा राजसान्निध्यगवारा
तेन्यवेदयन् तच्छ्रुत्वा वचनं राजा प्रतीहारं समादिशत् गत्वानयेहतान्विप्रान् गुणदोषविचक्षणान् इ
ति राज्ञो वचः श्रुत्वा स सद्यस्तान् समाहूयत प्रविष्टास्तत्र यत्रासौ राजा कादंबिनीवरा राज्ञे चाशिषमावेद्य वि
विष्टास्तदासने तेषां च साज्ञाय विशेषवित्तां विशेषतश्चारभतायनर्तने यत्गीतलास्याभिनयैर्मनोहरैः
कृतानतदेकाग्रमनाः सभासदिला साच क्रेण यदा तालं ददं तीतै निवारिता त्यक्त्वा चक्रे पुनर्गीतं तालेना भूत्स
त्वडिमः इत्येवमालोक्य नदीयमद्भुतं नृपं गुणांस्तेगुणिनो पि मोदिताः सा चापि तेषां गुणवित्ततां परां नृपम
नोहारिवज्ञात हृच्छया उत्थिते राज्ञितं वापि कृष्णदासौ गृहाहृदिः गता सापि चलज्जेती वीक्षंती विरहातुरा
राजभीत्या गृहं तेः स्याब भूव विमनाभृशं ततः सत्वादि वचनैराहतान्स न मः प्रियान् एकैको मे रहो विधां ह
ह्यादर्शीयत स्वको नगरस्योत्तरे कोणे यमुनाया स्तटे महत् अनंततीर्थं विख्यातं यत्र देवालयो हरेः तत्रा
गतो रम्य निर्जने वनदेहि ते तत्रागच्छेद्भवन्त्वेको यास्ये हं बलवेषधृक् वीणारागस्य नृत्यस्य दर्शयिष्या

मिकौतुकं भवतोपि विज्ञाप्य नाथ दर्शयंतु स्वकं गुणं सा गता तत्र चाज्ञाता राज्ञो गेहादिहैकला भवतो कोपि ग-
च्छेनेत्यनंतदद्भुतदीपितं श्रीकृष्णउवाच मथुरामाश्रित वने कश्चित्तिष्ठत्यहर्निशं नैष्ठिको ब्रह्मचारी समदारा
यनतत्परः भिक्षार्थमपि नायाति पुरे ऽ संगशंकितः भीष्मपंचदिनेष्वेषु तस्मिन्देवालये शुभे ममपूजां प्र
कुर्वाणो व्रतमेतच्चकार सः तेषु पंचसु विप्रेषु कविर्नाम जगाम सः एकादश्यां सहस्तस्माद्रूपरागादिहेतया आ
द्यागतो ऽनेः पार्श्वे कृविर्दृष्ट्वा विधिं ततः पूजयामास तेनैव विधिनापि समाहितः ततः क्षणात्समायाता रामा
कादंबिनी शुभा मुनिं नत्वाथ पूजादिं दृष्ट्वा वीणां समग्रहीत् मत्प्रीतियुक्ता चित्तेन सविशेषं जगौ च सा क्रत
याम्लमेमायां स्वरस्वरभूषितां मृदुमनो नाभवत्क्षोभः स्त्रीसंगाद्विजितात्मनः मुनेः संगतिमासाद्य महः
तो पितयोस्तदा मनः शुद्धमभूत्कामो मन्नम्यापर्य्यपूजयत् रात्रौ जागरणं नृत्यं चक्रे कादंबिनी कविः वी
णां च वादयन्नेमे ग्रहकचित्तो जहर्ष तः गोमयाचमनं तेन दृष्ट्वा तन्मुनिना कृतं कविनापि कृतं पश्चात्प्रातः सा
यान्नृपालयं कविरागात्य नगरं स्वयं नेभूषणानि च द्वादश्यामददात्सर्वं विरक्तो भक्तिवृद्धये द्वितीये दिवसे
प्राग्वच्छुचिस्तस्मादिहेतया द्वादश्यां प्रातरेवासावासीनं ददर्श मुनिं तेनापि पूजितोहं वै शुचिना मुनिसंग
तः तत्क्षणादागतां तत्र ददर्शेनां मनोरमां सा तस्य ददर्श नृत्यं गीतं पश्चात्स्वयं तया चक्रे स्वकीयं लावण्यं
तत्सर्वं शुचये र्पयत् तथैव गीतनृत्याभ्यां भक्तिरस्याप्यजायत मुनिस्संप्राश्य गोमूत्रं रात्रौ भक्तिपरायणः
पूजनान्मे व्रतस्यापि मुनिसंगात्ततः शुचिः विरक्त इंद्रियार्थेभ्यः सर्वस्वमददात्ततः इदं प्रोवाच वचनं मन्नत्या
स जितेंद्रियः अहो मोहस्य माहात्म्यं विषयासक्तचेतसां यत्सेवया महानंदरसमग्ना विंदंति न संसारं दुः
खदावं च नोपेतं ते यं ज्ञे स्तुवं ते हरिं हृदयस्थं च त्यक्त्वान्यां मृगतृष्णिकां धावंतो हि ततः किं नु महादुःख
करं परं तथापि तादृशी बाला नृत्यगीतमनोहरा दृष्ट्वापि नाभवत्क्षोभो महानंदद्विजो मुनेः तस्मात्संत्यज्य
संसक्तिं सर्वतो जगदीश्वरे कुर्यात्प्रेमभरां भक्तिमेकएवाचरेत्त्विति इत्युक्त्वा ताननदृष्ट्वैव गतस्तीर्थांतरं प्र
ति एवमेव त्रयोदश्यां दृढो गतो दिहेतया मुनिना सह संगम्य तथैवापूजयद्धमां गोपयः प्राशितं तेन
दृढः प्राश्य सत्रयीः तस्या नृत्यं च गीतं च दृष्ट्वा रागविवर्जितः दृढस्तद्वचनेश्चोच्य गतस्तीर्थांतरं प्रति द
त्वा सर्वस्वदानेन मम भक्तिपरायणः चतुर्दश्यां गतो दांतो मुनिसंगात्ततस्ततः नृत्यगीतोत्सवं कृत्वा मत्स
नोंच विशेषतः मुनिशेषं घृतं प्राश्य शुद्धसत्वो भवत्क्षणात् तस्या गुणांश्च रूपं च दृष्ट्वा सम्यग्विरक्तिवान्
तथैवोक्त्वा यादत्वा दानं सर्वस्वमात्मनः निष्किंचनो भक्तियुक्तो गतस्तीर्थांतरं प्रति पौर्णमास्यां गतो द्रष्टुं सो
दृष्ट्वासीनं महामुनिं ततास्नात्वा तटे नद्यां धात्रीछायां समाश्रितः सस्मार पूर्णिमां पुण्यां पितॄणां श्राद्धमाच
रत् धात्रीछायां समाश्रित्य स्नानं दानं च कार्तिके मत्पूजनं भोजनं च कोटियज्ञसमं स्मृतं कार्तिके पावनी
धात्रीस्पर्शने भक्ताणो तथा तेभ्यस्तदृष्टिकं जाते संयोगान्मुनिसन्निधौ तथैव मुनिसंगात्या मत्पूजागीतन
तेने स चक्रे तां ददर्शाथ ततया मोहितोप्यभूत् दधि प्राश्याथ मुनिना सहैवाभूद्विरक्तिमान् दत्वा सर्वस्व
मत्रैव गतस्तीर्थांतरं प्रति कादंबिन्याश्च ते रात्रागमनं विष्णुमंदिरे निगृहीता पुनर्नैय गता देवालये व्रतात्
क्रमेण पंचभिर्विप्रैर्व्रतमेकं कृतं मम मथुरायां च गांगेय तैरेवं मुनिसंगतः श्रुत्वा त एषा मुनिवल्लभासीत्
कादंबिनी सा गुणरूपमूर्तिः व्रतेन पूजाविधिना च गीतनृत्यादिना राज्यमवाप्तमेभिः प्रीतिर्ममात्यंत परा
परोयजाता तथैषां वशगोप्यभूवं धात्रीछायाकृतं श्राद्धं कार्तिके तेन कर्मणा तन्मध्ये सार्वभौमोयं जातोहं
सो युधिष्ठिरः एकादश्यां विशेषाच्च जागरे सोमदंप्राकः नरोभूदर्जुनो मित्रं मत्सहायोतिवल्लभः सहदेवः श्रु
तिदीनो नकुलोभून्महाभुजः दृढ एष महावीर्यो भीमसेनो व्यजायत एवमेतैः पुराचीर्णं व्रतं परमतोषणं
तेनासि वशगो हि यो दास्यामि पदमव्ययं तया कृतं व्रतं पश्चादाख्यातं भीष्मपंचकं ये तत्र कर्मभूमौ मे करि
ष्यंति महाव्रतं मथुरायां तु गांगेय तेषां भुक्तिः करे स्थिता सार्वभौमं च स्वर्लोकं ब्रह्मलोकं सनातनं योगासि

भीष्ममुक्तिं वा भीतो यच्छामि सर्वथा दुर्लभो भक्तियोगो मे मम वश्यविधायकः कार्तिके मथुरायां च व्रतेनानेन
लभ्यते नारद उवाच श्रुत्वैव व्रतमाहात्म्यं भीष्मः परमविस्मितः प्रसन्नं च चकारेदं ततः ख्यातं तदाख्यया भी-
ष्मस्यैव माहात्म्यात्ततः शरपंजरे भीष्मस्तदग्रतो निषण्णो हि सोपि च तत्र भुजः यावद्देहं जहौ भीष्मस्तावदा-
स्थो स्वयं हरिः यदीच्छेत्कृष्णसायुज्यं तद्भक्तिं च तथांजसा पूर्वोक्तविधिना कुर्यात्कार्तिके भीष्मपंचकं अशक्त-
श्चेन्नरो राजन्कुर्यादेवं विधं व्रतं उपवासं तदा कुर्यात्तद्दिने ब्रह्मकूर्चके त्रिषष्ट्यत्र फलाहारमखंडं दीपमादि-
शेत् पंचभीष्मव्रताभावे कुर्याद्विष्णुप्रबोधिनीं ब्रह्मकूर्चव्रतं चापि सोपि तत्पुण्यमाप्नुयात् एकादश्यां हि
प्रजागरं कुर्याज्जागरं सर्वान्कामानवाप्नोति ब्रह्महत्यादिकं दहेत् विष्णुप्रीतिकरैः स्तोत्रैः कथायाः श्रवणे-
न च नृत्यैर्गीतैश्च संवाद्यैर्वैष्णवानां समागमैः प्रबोधं च प्रकुर्वीत सर्वस्यां निशि पार्थिव तस्य पुण्यस्य संख्यां च
ब्रह्मा कर्तुं न शक्नुयात् ब्रह्मकूर्चव्रतं धृत्वा स्नात्वा संपूजनं महत् तुलसीपूजनं चैव षोडशैरुपचारकैः धा-
त्रीं संपूजयेद्वै वटं विप्रभक्तं च दापयेत् रुद्रदानं प्रकुर्वीत मूलकादानमेव च सद्वेणावेहयेद्धात्रीमश्वत्थं प्र-
यत्नतः महत्पुण्यमवाप्नोति यस्य संख्या न विद्यते पौर्णमास्यां चरेद्वा इदं दद्यात्स्वर्णं वृषोत्तमं रजतं तद्वा-
शक्त्वापि दीपानां दर्शनं चरेत् तेषामथान्यसेत्पूजां यथाविभवविस्तरं भीष्मदीपोज्वालनेन पूजनं लोकरी-
तितः ॥ इति श्रीपद्मपुराणे कार्तिकमाहात्म्ये भीष्मपंचकव्रतोपाख्यानं इदं व्रतं तिथिपंचकसाध्यं वृद्धो-
दिराहतिं तत्वये तानि तिथिद्वयकृत्यमेकत्र अथ कार्तिकद्वादश्यां ध्वजारोपणव्रतं पाद्मे कार्तिकमाहात्म्ये

॥ अन्यद्व्रतं प्रवक्ष्यामि ध्वजारोपणसंज्ञिकं सर्वपापहरं पुण्यं विष्णुप्रीणनकारकं ब्राह्मणक्षत्रिय-
विशां शूद्राणां च द्विजोत्तमाः संपूज्यते दिवि व्याघैः किमन्यैर्बहुभाषितैः हेमभारसहस्रं तु यो ददाति कुटुंबिने
तत्फलं तस्य मात्रं स्यात् ध्वजारोपणकर्मणि ध्वजारोपणतुल्यं स्याद्गंगास्नानमनुत्तमं अथवा तुलसीसेवा शिव-
लिंगप्रपूजनं कार्तिकस्य सिते पक्षे द्वादश्यां प्रयतो नरः स्नानं कुर्यात्प्रयत्नेन दंतधावनपूर्वकं नित्यकर्माणि
निर्वर्त्य पश्चाद्विष्णुं प्रपूजयेत् धातारं च विधातारं पूजयेत्संभके ह्यये हरिद्राक्षतगंधाद्यैः शुक्लमाल्यैर्विशेषतः
विंशतिहस्तमात्रे वै स्थंडिलं चोपलिप्य च आधाराग्निं स्वगृह्योक्तं चाज्यभागादिकं क्रमात् जुहुयात्पायसं चै-
व हुतमष्टोत्तरं शतं ततो मंगलवाद्यैश्च सूक्तपादैश्च शोभनैः नृत्यैश्च तत्र पठनैर्नयेद्विष्णवालयं ध्वजं देवेश-
द्वारदेशे वा शिखरे वा मनोरमे भक्ष्यभोज्यादिभिः शुक्लैर्नैवेद्यैश्च हरिं यजेत् नमस्ते पुंडरीकाक्ष नमस्ते विश्व-
भावन नमस्तेस्तु हृषीकेश महापुरुषपूर्वज येनेदमखिलं जातं सर्वं यत्र प्रतिष्ठितं लयमेष्यति यत्रैव तं प्रप-
न्नोस्मि माधवं यन्मुखाद्ब्राह्मणा जाता बाहुभ्यामभवन्नृपाः वैश्या यस्योरुतो जाताः पद्भ्यां शूद्रा अजज्ञिरे मा-
यासंगममात्रेण वदंति पुरुषं त्वयं स्वभावनिर्मलं शुद्धं निर्विकल्पं निरंजनं सच्चिद्भवन्तं तं देवं भक्तिगम्यं
जनार्दनं निर्गुणं परमं सूक्ष्मं प्रपन्नोस्मि पुनः पुनः इति स्तुत्वा नमेद्विष्णुं ब्राह्मणान्भोजयेत्ततः आचार्यं पूज-
येत्पश्चाद्दक्षिणाच्छादनादिभिः पुत्रमित्रकलत्राद्यैर्बंधुभिः सह वाग्यतः कुर्वीत पारणं विप्र विष्णुव्रतप-
रायणः य एवमेतत्प्रकुर्वीत ध्वजारोपणमुत्तमं तस्य पुण्यफलं वक्ष्ये शृणुध्वं मुनिपुंगवाः पटो ध्वजस्य विप्रें-
द्रा यावच्चलति वायुना तावद्वै पापजालानि नश्यंत्येव न संशयः महापातकयुक्तोपि युक्तो वाप्युपपातकैः
ध्वजे विष्णुगृहे कृत्वा सर्वपापैः प्रमुच्यते सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् यावद्दिनानि वसति ध्व-
जो विष्णुगृहे स्थितः तावद्युगसहस्राणि विष्णुसारूप्यमश्नुते आरोपितं ध्वजं दृष्ट्वा ये भिनंदंति धार्मिकाः ते-
पि सर्वे प्रमुच्यंते महापातककोटिभिः ॥ अथैतस्य विधिः । कार्तिके शुक्लपक्षस्य दशम्यां नियमान्वितः
एकादश्यां यथाविध्युपोषितः विष्णुगाथाश्रवणादितत्परः द्वादश्यां यथाविधि स्नात्वा नित्यकर्म निर्वर्त्य सं-
कल्पं कुर्यात् तिथ्यादि संकीर्त्य ममाशेषपापक्षयोत्तरसकलाभीष्टसिद्धिपूर्वकविष्णुसारूप्यकामः विष्णु-
द्वारे ध्वजारोपणं करिष्ये इति संकल्प्य ॥ पुण्याहवाचनस्वस्तिवाचनादि कृत्वा आचार्यमृत्विजश्च कृत्वा

सहदेवालये विष्णोः पौरुषसूक्तेन संपूज्य ततस्तच्च ध्वजस्तंभाग्राय आरोप्य ध्वजयुक्तौ तौ कृत्वा ततः सूर्यदैवतेनैतेयं
द्विमोञ्च धातारं च नाममंत्रैः संपूज्य ध्वजोद्धरितात् ततः गंधपुष्पादिभिः संपूज्य शुद्धभूमौ स्थंडिलेऽग्निं प्रतिष्ठाप्य अ
न्वाद्धात् अत्र प्रधानं विष्णुमष्टोत्तरं पायसहुतादिभिः सूर्यदैवनतेयं द्विमोञ्च धातारं च विधातारं अष्टाष्ट संख्य
यापायसाहुतिभिः शेषेण स्विष्टकृतमित्यादि होममंत्राः षोडशर्चं पौरुषसूक्तं विष्णोर्नुकं वीर्याणि प्रवोचं
यः पार्थिवानि विममे रजांसि यो ऽस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवित्वा इ
रावती धेनुमती हि भूतं सूयवसिनी मनवे दशस्या व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वा
हा इत्यादिभिः इति द्रव्यं अष्टादशभिर्मंत्रैः षडाहुत्या होमः उदु त्यं जातवेदसमिति सूर्यस्य मामध्वनिशीरं
स्तमिति गरुडस्य सोमो धेनुं सोमो अर्वंतमाशुं सोमो वीरं कर्मण्यं ददाति सादन्यं विदथ्यं सभेयं पि
तृश्रवणं यो ददाशदस्मै इति द्विमांशोः धाता धाता ददातु नो रायमीशानो जगतस्पतिः स नः पूर्णेन वव
न विधातु यो नः ततो ग्रह्यासृजाता इति ततः सौरमंत्रान् शांतिसूक्तानि च पठित्वा जागरणादिना रात्रिं नि
येत् ततो देवं संपूज्य ततः सूक्तपाठैः स्तोत्रपठितैः नृत्यमंगलवाद्यघोषैः सह देवं प्रदक्षिणीकृत्य देवा
लयं ध्वजावानीय देवस्य द्वारदेशे शिखरे वा सुस्थिरीकृत्वा ध्रुवसूक्तं पठित्वा तौ संपूज्य पुनर्देवं विशेषेण सं
पूज्य नमस्ते पुंडरीकाक्ष नमस्ते विश्वभावन नमस्तेस्तु हृषीकेश महापुरुष पूर्वज येनेदमखिलं जातं
यत्र सर्वं प्रतिष्ठितं लयमेष्यति यत्रैव तं प्रपन्नोऽस्मि केशवं न जानंति परं भावं यस्य ब्रह्मादयः सुराः योगिनो
यं न पश्यंति तं वंदे ईशरूपिणं यन्मुखाद्ब्राह्मणा जाता यद्बाहू रभवन्नृपाः वैश्या यस्योरुतो जाताः पद्भ्यां शू
द्रा अजज्ञिरे मायासंगममात्रेण वदंति पुरुषं तु यं स्वभावनिर्मलं शुद्धं निर्विकारं निरंजनं एको विष्णुर्महद्
भूतं पृथग्भूतानि सर्वशः त्रींल्लोकान्व्याप्य विश्वात्मा भुंक्ते विश्वभुगव्ययः यो देवः सर्वभूतानामंतरात्मा
जगन्मयः निर्गुणः परमानंदः स मे विष्णुः प्रसीदतु यश्चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पंचभिरेव च हूयते च पुनर्द्वा
भ्यां तस्मै यज्ञात्मने नमः यः परेशः परानंदः परात्परतरः प्रभुः चिद्रूपश्चित्परिज्ञेयः स मे विष्णुः प्रसीदतु ज्ञा
निनां कर्मिणां चैव तथा शक्तिमतां नृणां गतिर्दाता च गम्यश्च स मे विष्णुः प्रसीदतु य इदं कीर्तयेन्नित्यं स्तो
त्राणामुत्तमोत्तमं सर्वपापविनिर्मुक्तः परं सायुज्यमाप्नुयादिति ततो द्वादश ब्राह्मणान्सदन्नेन भोजयित्वा
दक्षिणादिना परितोष्याशिषो गृहीत्वा भुंजीत एवमेव शिवादिदेवतानां देवालयेषु ध्वजारोपणं कार्यं तत्र
गरुडस्थाने वृषभं संपूजयेत् अन्यत्समानं सर्वत्र होमे तु पौरुषसूक्तं त्र्यंबकं कद्रुद्रायेत्यादि मंत्राः यथा
संभवं ज्ञेयाः इति ध्वजारोपणव्रतम् अथ भीष्मपंचकव्रतविधिः तत्रादौ पूजार्थं दीपस्थापनार्थं च स्थ
ण्डिनिवीत स्थापने रत्नार्थं सन्मंदिरं विधाय ततो व्रतकर्ता सुविराचम्य ओमद्येत्यादि देशकालौ संकीर्त्य
मम समस्तपापक्षयपूर्वक श्रीराधादामोदरप्रीत्यर्थं भीष्मपंचकव्रतं करिष्ये तस्य पूर्वांगत्वेन स्वस्तिवा
नाचार्यादिवरणसहितं पंचपांडवभीष्मपूजनसहितं श्रीराधादामोदरपूजनं दीपदानं च करिष्ये अथ आ
वाहनं आगच्छागच्छ देवेश शंखचक्रगदाधर व्रतपूजाविधानार्थं राधिकासहित प्रभो ओं भूर्भुवः स्वः राधा
दामोदर इहागच्छ २ शांतनोः सुत गांगेय रणविद्याविशारद वैयाघ्रपद्गोत्र त्वं मूर्तीवत्र स्थिरो भव ओं भूर्भु
वः स्वः भीष्म इहागच्छ २ भवंति मम गाः पंचपूर्वकल्पे हि जो नमाः कविः शुचिर्दांतो हंसो नारीमनो
हरा ओं भूर्भुवः स्वः पंचपांडवा द्रौपदीसहिता इहागच्छत आवाहयिष्यामि धर्मराजं युधिष्ठिरं अजात
शत्रो प्रत्येहि सर्वधर्मभृतां वर १ आवाहयिष्यामि भीमसेनं महाबलं भीमसेन त्वमभ्येहि सर्वशत्रुनिब
र्हण २ आवाहयिष्यामि पार्थं रिपुनिसूदनं अर्जुनाभ्येहि मे शीघ्रं लक्ष्यीकृतवसुंधर ३ आवाहयिष्ये
नकुलं रूपेणाप्रतिमं भुवि नकुल त्वमिहागच्छ खड्गचर्मधराच्युत ४ आवाहयिष्यामि सहदेवं रणाग्रिणं
सहदेव त्वमभ्येहि रूपद्रविणसंयुत ५ आवाहयिष्यामि याज्ञसेनीं यशस्विनीं द्रौपदि त्वमिहागच्छ प्रति

माघं सुशोभने ८ अथमावाहयिष्यामि जीवं सर्वगतं विभुं पंचधावस्थितं देहे परमात्मानमव्ययं इत्यावाह्य जीवा दानं कृत्वा ॐनमोस्त्वनंताय सहस्रमूर्तये इतिमंत्रेण श्रीराधादामोदरायनमः इति षोडशोपचारैः संपूज्य ॐभीष्मायनमः ॐयुधिष्ठिरायनमः ॐभीमसेनायनमः ॐअर्जुनायनमः ॐनकुलायनमः ॐसहदेवायनमः ॐयाज्ञसेन्यैनमः इतिनाममंत्रैः सर्वेषां पूजाकार्या ततोभीष्मतर्पणं वैयाघ्रपदगोत्राय सांकृतिप्रवरायच वसूनामवताराय शंतनोरात्मजायच आत्मनिष्ठाय सुनये आबालब्रह्मचारिणे अनपत्याय भीष्माय तस्मायेदं तिलोदकम् इति भीष्माय तिलोदकं कृत्वा ततो दीपं प्रज्वाल्य दीपायनमः इति संपूज्य यस्मिन्लोके निरालोके न सूर्यो नैव चंद्रमा तं देशं तर्तुमिच्छामि दीपं दत्वा जनार्दनं यत्रास्ति मातान पिता न बंधुर्भ्राता पिनो यत्र सुहृज्जनश्च नज्ञायते यत्र दिनेन रात्रिस्तत्रापि दीपं शरणं प्रपद्ये इतिदीपप्रार्थनं कृत्वा पूजाफलसाद्गुण्यार्थमाचार्याय दक्षिणां दद्यात् एकादश्यादिपूर्णिमांतं व्रतमेवं चरेदिति इत्थं इदं कूष्मांडादिकं यथाचारम् अत्र भीष्मपंचकव्रतविधिनाविधेयं पूजांते उद्यापनं तत्र स्थंडिले अग्निं प्रतिष्ठाप्य अन्वादध्यात् अत्र प्रधानं विष्णुं इदं विष्णुर्मनो देवेति मंत्राभ्यां प्रत्येकमष्टोत्तरशताज्याहुतिभिः भीष्मपंचपांडवान्द्रौपदीसहितान् प्रत्येकं नाममंत्रैरष्टाष्टाहुतिभिः प्रायश्चित्ताहुतिभिः शेषेण स्विष्टकृदाद्याहुत्यादेयत्ते एवं होमं समाप्य ततो भीष्मादिमूर्तिकलशानां दानं शय्यागोदानादिकं कृत्वा पूर्णाहुतिमभिषेकं विधाय अच्छिद्रावधारणं इत्युद्यापनं कार्तिक्यां वाकुर्यात् अथ कार्तिकशुक्लाद्वादश्यां विशेषकृत्यं नारदीये द्वादश्यामूर्जशुक्लायां देवदेवं दामोदरं विभुं समभ्यर्च्योपचारैस्तु गंधाद्यैः सुसमाहितः तदग्रे भोजयेद्विप्रान्पक्वान्नेनार्कसंख्यया ततः कुंभानपः पूर्णान्वस्त्राच्छन्नान्समर्चितान् सहदामोदकैः पूर्णान्धीमांस्तेभ्यः समर्पयेत् एवं कृते क्रियायोगे विष्णुः प्रीयते खिलभोगभाक् देहांते विष्णुसायुज्यं लभते नात्र संशयः नीराजनव्रतं चात्र गदितं तन्निबोध मे सुप्तोत्थितं जगन्नाथमलंकृत्य निशागमे अलंकृतो भवेद्वह्निसत्याद्याभ्यर्च्य यत्नतः कृत्वात्र सुदीप्तरोप्यदीपकया मुने गंधपुष्पार्चितं तज्जनैर्नीराजयेद्धरिं तदैवानुगताल्लक्ष्मीब्रह्माणं चंडिकां तथा आदित्यं शंकरं गौरीयक्षं गणपतिं तथा मातृपितृजनान्मान्यान्सर्वान्नीराजयेत्क्रमात् नीराजनं गजाश्वादेर्महिष्यादेश्च मंडनं नमो जयेति शब्दश्च घंटाशंखादिनिस्वनैः सिंहनालिमृदंगाणां विचित्रगानांच वर्णकैः गवां कोलाहलैर्हृन्ने नीराजनमहोत्सवे नरगां लक्षणोपेतान् राजाश्वमदविस्तृतान् राजचिह्नानि सर्वाणि छत्रादीनि च नारद राजा प्ररोधसा सार्द्धं मंत्रिभृत्यपुरःसरं पूजयित्वा यथान्यायं नीराज्य स्वयमादरात् शंखतूर्यादिघोषैश्च नानारत्नविनिर्मिते सिंहासने नवे रम्ये तिष्ठेत्सम्यगलंकृतः ततः सुमंगलैर्युक्ता वेश्या वाथ कुलांगना शीर्षोपरि जनैर्दृश्यं तथा नीराजयेत्क्रमैः एवमेषा महाशांतिः कर्तव्या प्रतिवत्सरं राज्ञा विप्र वतान्येन स्वेषामारोग्यमिच्छता एषाराष्ट्रे पुरे ग्रामे क्रियते शांतिरुत्तमा नीराजनाभिधा विप्र क्षेमाय रोगा यांति संक्षयम् भविष्योत्तरे श्रीहरिरुवाच पुरा बभूव राजर्षिरजापाल इति श्रुतः प्रार्थितः स प्रजाभिश्च सर्वदुःखोपशांतये दुःखापनोदं हि कुरु व्याधितानां नरेश्वर एवमुक्तो धियं ध्यात्वा कृत्वा व्याधिनिवारणं व्याधिनिवारणं नीराजविधिनेति शेषः पालयामास मेदिनीं प्रजापालस्ततोभवत् तेनैषा निर्मिता शांतिर्नाम्ना नीराजना जने तस्मात्तु पांडवश्रेष्ठ लक्षणं वच्मि तच्छृणु राज्ञा प्ररोधसा सार्द्धमजाष्टया विधानतः तस्मिन्काले बभूवाथ रावणो राक्षसेश्वरः लंकास्थितः सुरगणान्निगृह्य योजस्वकर्मसु अखंडमंडलं चंद्रमातपत्रं चकार ह इंद्रं सेनापतिं चक्रे वायुं पांसुप्रमार्जकं वरुणं देतिकर्मस्थं धनदं धनरक्षकं यमं संयमने रीणां युयुजे मंत्रणे मनुं मेघाः सिंचंति लिंपंति सलिलेनाजिरं द्रुमाः पुष्पाणि चिक्षिपुः सर्वे मुनयः शांतिपाठकाः ऋग्यजुःसाममंत्रैश्च ब्रह्मणा सह संस्थिताः नागाद्यास्तस्य कन्यायां गंधर्वा गीततत्पराः प्रेक्षणीयैः सुरोद्वृंदैः वाद्यैर्विधाय राट्ततः गंगाद्याः सरितः पाने ग्राहपत्यध्रुताश्च नः विश्वकर्मा तु संस्कारे यमः शल्यप्रयोजने तिष्ठंति पार्थिवाः सर्वे परसेवाविधायिनः दृष्ट्वैते भास्करा रात्रैः प्रसन्नं

तोविभूषणैः तान्दृष्ट्वा रावणः प्राह प्रहस्तं प्रतिहारकं सेवां कर्त्तुं मम स्थाने ब्रूहि कोऽत्र समागतः उवाच स प्रणा
म्याग्रे दंडपाणिर्निशाचरः एष राजा समायातो युष्मारोनलोञ्जनः ययातिर्नहुषो भीमो गाधिर्वीर्यो विदूरथः एते चा
न्ये च ददृशे राजानस्तव शासने सेवाकारास्तव स्थाने नाजपाल इहागतः रावणः कुपितः प्राह शीघ्रं हत्वा विम
र्दय दुर्मुखः प्रहितो हतो धूम्राक्षो नाम राक्षसः धूम्राक्ष गच्छ ब्रूहि त्वमजापालं ममाज्ञया सेवां कुरु समागत्य कु
रु वा यच्च पार्थिव अन्यथा चेद्धासे न त्वां करिष्ये विकंधरं रावणेनैवमुक्तस्तु धूम्राक्षो गरुडो यथा संप्राप्तस्तां
पुरीं रम्यां नत्वा राजकुलं गतः ददर्श पतिमेकांतमजापालमजाहृतं मुक्तकेशं मुक्तकच्छं मुक्तपट्टकरद्वयं
ग्रहीत्वा वैरिणां भूतैर्व्याधिभिः परिवारितं निहतामिव शार्दूलं सर्वोपद्रवनाशनं महामालिन्यनामानि नि
र्द्दंतं विद्विषां गणं स्नात्वा भुक्त्वा शुभस्थाने कृतकृत्यमतं यथा दृष्ट्वा हृष्टमनाः प्राह धूम्राक्षो रावणोदितं सा
दैवमजपालोऽपि श्रुत्वा कारणोत्तरं प्रेषयामास धूम्राक्षं ततः कृत्यं समाददे ज्वरमाकारयित्वा तं प्रोवाचेदं
महीपतिः गच्छ लंकाधिपस्थानमाचरस्व यथोदितं नियुक्तस्त्वजपालेन ज्वरो राजन्नृजगाम ह गत्वा स कंप
यामास रावणं सानुसेश्वरम् रावणस्तं विदित्वा तु ज्वरं परमदारुणं प्रोवाच तिष्ठ त्वं स तत्र मे न प्रयोज
नं ततः स विज्वरो राजन्नभूद्वचनदानुजः तेनैषा निर्मिता शांतिः सर्वोपद्रवनाशिनी कार्त्तिके शुक्लपक्षे
तु द्वादश्यां रजनीमुखे समोपस्थिते विनिद्रे तु देवे दामोदरे तदा वेधांतो रणमालाभिर्युक्तायामनुलिप्तके
ज्वालयित्वा नववह्निं कृत्वा मंत्रैर्यथोदितैः वर्द्धमानतरूयाभिः समिद्भिः सहुतैस्तिलैः ततः कृत्वा हरेः पूजां
हरिं नीराजयेद्वद्वैः पुष्पैरभ्यर्च्य देवेशं समालभ्य च चंदनैः वस्त्रैः कदंबैश्चैव त्वपुष्पैरित्तुभिस्तथा गंध
धूपैरलंकारैर्वस्त्रैरन्नैश्च भूषितं तस्यैवानुगतां लक्ष्मीं ब्रह्माणं चंडिकां तथा आदित्यं शंकरं गौरीं यक्षं गण
पतिं ग्रहान् मातॄः पितॄंस्तथा नागान्सर्वान्नीराजयेत्ततः गवां नीराजनं कुर्य्यान्महिष्यादेश्च मंडनम् अ
मयेन्नाशयेद्वद्वैर्घण्टावादनभाजनैः गावो वत्सादृता यांति मापीडस्तवकांगदाः सिंदूरकृतशृंगाग्राः र
भारवाः सवत्सकाः अनुयांति सगोपालाः काल्यंतो ललिताकृते सेदानुलिप्तसर्वांगा रक्तपीतसितावराः
एवं कोलाहले वृत्ते गवां नीराजनोत्सवे तुरगान्लक्षणैर्युक्तान्हिरदांश्च सुपूजितान् राजचिह्नानि सर्वाणि
उद्धृत्य स्वगृहांगने राजा पुरोधसा सार्द्धं मंत्रिभृत्यपुरःसरः सिंहासनोपविष्टश्च शंखतूर्यादिनिःस्वनैः पूजयेद्
धकुसुमैर्वस्त्रैर्दीपैर्विलेपनैः ततः स्त्रीलक्षणैर्युक्ता वेश्या वा यदि कुलांगना शीर्षोपरि नरेन्द्रस्य भ्रामयेद्दीप
वार्त्तिकं शांतिसमुच्चरद्भिश्च द्विजैर्वंदिजनैः सह ततो नीराजयेत्सैन्यं हस्त्यश्वरथसंकुलम् एवमेषा मह
शांतिः ख्याता नीराजने जने येषां राष्ट्रे पुरग्रामे क्रियते पाण्डुनंदन तेषां रोगाः क्षयं यांति सुभिक्षं वर्द्धते
सदा शांतिर्नीराजना लोके सर्वान्रोगान्व्यपोहति लोकानंददा यस्मात्पुरजापालवचो यथा एवं रोगा
दिपीडासु लोकानां हितमिच्छता वर्षे वर्षे प्रयोक्तव्या शांतिर्नीराजनाभिधा नीराजयंति नवमेघनिभं ह
रिं ये गोब्राह्मणानथ गजाश्च नरेंद्रचिह्नैः ते सर्वरोगरहिता विजिता नरेंद्रैर्दिदश भासु विभवंत्यजपालवा
क्यात् ॥ इति श्रीभविष्योत्तरे कार्त्तिकशुक्लद्वादश्यां नीराजनाख्या महाशांतिविधिः ॥
इयं शांतिः कार्त्तिकस्य द्वादश्यामपि सूचिता स्वात्यादित्ये सति यथासंभवे कार्य्या भानुभौमार्कवारेषु द
प्रयोगेपीयं कार्य्या अत्र चातुर्मास्ये समानां मासानां समादिष्टा शांतिरप्युक्ता तदुक्तं महाभारते ॥ चतुर्थांगस्य
वैचीर्णचातुर्मास्यव्रतैर्नरैः कार्त्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत् लघुनारदीयेपि चातुर्मास्यव्रतानां
तु समाप्तिः कार्त्तिके स्मृता मंत्रमुनिर्णयामृते इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो न्यूनं संपूर्णतां यातु त्व
त्प्रसादाज्जनार्दन भविष्योत्तरेपि चातुर्मास्ये हि यत्त्यक्तं भक्ष्यभोज्यादिकं नरैः चतुरो वार्षिकान्मासान्नि
यमेन यः कृतः कथयित्वा द्विजेभ्यस्तद्दद्यात्तेभ्यः सदक्षिणं नत्वा विसर्जयेद्विप्रं ततो भुंजीत च स्वयं अत्र
वराहोक्तो बोधिनीविधिरप्युक्तः एकादश्यां तु ... निर्मितं मत्स्यमत्स्यायप्य

मपीतवस्त्रैः पद्माद्यैः संपूज्य मन्त्रादिदशावतारान्संपूज्य जागरणं कृत्वा प्रातर्देवमाचार्यं च वस्त्राद्यैः संपू-
ज्य प्रार्थयेत् जगदात्मा जगद्रूपो जगदादिरनादिमान् जगदादिर्जगद्योनिः प्रीयतां मे जनार्दनः इति दक्षिणां
दत्त्वा ब्राह्मणान्भोजयेदिति तथा च पाद्मे शंखचक्रधरं वै राज्ञो भ्रामयेत्स्यन्दने स्थितं उत्थिते देवदेवेशे नगरे पार्थिवः
स्वयं चरेद्वार्षिकान्मासान्नियमे यत्कृतं तत्प्रदद्यात् इदं शुक्लास्वादावपि सदा कार्यम् अशौचादौ पूजा मन्त्रेण
कारयेदिति संक्षिप्तप्रकारः अत्र द्वादश्यां रेवत्यन्तपादयोगे पारणं न कार्यम् सुप्तिप्रबोधपरिवर्तनमेव वर्ज्यमि-
ति शार्ङ्गलिखितत्वात् सनत्कुमारसंहितायामपि रेवत्यन्तचरणे द्वादशीसंयुते नरः न कुर्यात्पारणं कुर्वन्
व्रतं निष्फलतां व्रजेदिति इयं च द्वादशी मन्वादितिथिः कार्तिके शुक्लचतुर्दश्यां शिवपूजनव्रतमुक्तं नारदी-
ये ऊर्जे शुक्लचतुर्दश्यामेकभोजी द्विजोत्तमः पुनः स्नात्वा प्रदोषे तु वाग्यतः सुसमाहितः प्रदीपानां सहस्रे-
ण शतेनाप्यथवा द्विज प्रदीपयेच्छिवं वापि द्वात्रिंशद्दीपमालिकाम् घृतेन दीपयेद्दीपान् गन्धाद्यैः पूजयेच्छि-
वं फलैर्नानाविधैश्चैव नैवेद्यैरपि नारद ततः स्तवीत देवेशं शिवनाम्नां शतेन च तानि नामानि कीर्त्यन्ते सर्वा-
भीष्टप्रदानि वै ॐ नमो रुद्राय भीमाय नीलकण्ठाय वेधसे कपर्दिने सुरेशाय व्योमकेशाय ते नमः दिगम्ब-
राय भर्गाय उमाकान्ताय वर्मिणे तपोमयाय व्याप्ताय शिपिविष्टाय ते नमः व्यालप्रियाय व्यालाय व्यालानां प-
तये नमः महीधराय व्याघ्राय पशूनां पतये नमः त्रिपुरान्ताय सिंहाय शार्दूलर्षभचर्मिणे मिताय मितनाथा-
य सिद्धाय परमेष्ठिने वेदगीताय गुप्ताय वेदगुह्याय ते नमः दीर्घाय दीर्घरूपाय दीर्घार्थाय महाय च नमो जग-
त्प्रतिष्ठाय व्योमरूपाय वै नमः कल्याणाय विशिष्टाय शिष्टाय परमात्मने गजकृत्तिधरायाथ अन्धकासुर-
भेदिने नीललोहितशुक्लाय चण्डमुण्डप्रियाय च भक्तिप्रियाय देवाय यज्ञान्ताय अव्ययाय च महेशाय नम-
स्तुभ्यं महादेवहराय च त्रिनेत्राय त्रिवेदाय वेदांगाय नमो नमः अर्थायार्थस्वरूपाय परमार्थाय वै नमः विश्व-
रूपाय विश्वाय विश्वनाथाय ते नमः शंकराय त्रिकालाय कालावयवरूपिणे अरूपाय विरूपाय सूक्ष्मसूक्ष्मा-
य वै नमः श्मशानवासिने तुभ्यं नमस्ते कृत्तिवाससे शशांकशेखरायाथ रुद्रभूमिश्रिताय च दुर्गाय दुर्गपारा-
य दुर्गावयवसाक्षिणे लिंगाय लिंगरूपाय लिंगिनां पतये नमः नमः प्रभावरूपाय प्रभावार्थाय वै नमः हराय
बहुरूपाय प्रसन्नाय नमो नमः योगाय योगगम्याय योगिनां पतये नमः नमस्ते निष्कलंकाय नीरूपायामि-
तात्मने ज्ञानाय ज्ञानगम्याय परंज्योतिस्वरूपिणे नमो नमः कारणकारणाय मृत्युंजयायात्मभवस्वरूपिणे त्रियंब-
काय शितिकण्ठ भर्गाय गौरीयुजे मंगलहेतवे नमः नाम्नां शतमिदं विप्र पिनाकिगुणकीर्तनम् पठेत्स दक्षिणी-
कृत्य प्रयाति शिवकेतनम् एवं कृत्वा व्रतं विप्र महादेवप्रसादतः भुंक्ते ह भोगानखिलानन्ते शिवपदं लभेत्
कार्तिकशुक्लचतुर्दशी वैकुण्ठचतुर्दशी सा च निशीथव्यापिनी ग्राह्या दिनद्वयेऽव्याप्तौ निशीथप्रदोषोभय-
व्यापिनी ग्राह्या तदुक्तं हेमाद्रौ भविष्ये ॥ कार्तिकस्य चतुर्दश्यां शुक्लपक्षे नराधिप सोपवासस्तु संपूज्य हरिं
रात्रौ जितेन्द्रियः तथा च नारदीये ब्रह्मकूर्चव्रतं चात्र कर्तव्यं शुद्धिमिच्छता सोपवासः पंचगव्यं पिबेद्रात्रौ
जितेन्द्रियः कपिलायास्तु गोमूत्रं कृष्णाया गोमयं तथा श्वेतायाः क्षीरमुदितं शुक्लायाश्च तथा दधि गृहीत्वा
कर्बुरायाश्च घृतमेकत्र मेलयेत् कुशाम्बु च ततः प्रातः स्नात्वा संतर्प्य देवताः ब्राह्मणान्भोजयित्वा तु भुंजीया-
द्वाग्यतः स्वयं ब्रह्मकूर्चव्रतं त्वेतत्सर्वपातकनाशनम् यच्च बाल्ये कृतं पापं यौवने वार्द्धकेपि वा ब्रह्मकूर्चो-
पवासेन तत्क्षणादेव नश्यतीति ॥ अत्र सनत्कुमारसंहितायां काशीविश्वेश्वरपूजाविधानमुक्तं ॥ वर्षे वै-
हेमलम्बाख्ये मासे श्रीमति कार्तिके शुक्लपक्षे चतुर्दश्यामरुणाभ्युदयं प्रति महादेवेति यो ब्राह्मे मुहूर्ते म-
णिकर्णिके स्नात्वा विश्वेश्वरो देव्या विश्वेश्वरमपूजयत् ॥ देव्या सह विश्वेश्वरः स्वयं विश्वेश्वरलिंगमपूजय-
दित्यर्थः ॥ सलेपं ज्योतिर्वस्त्रस्य प्रतिष्ठां व्यतदाकरोत् स्वयमेव स्वमात्मानं चरन्पाशुपतं व्रतं भस्मो-
द्धूलितसर्वांगो नानाव्रतमहाव्रतः जयन्वै शतरुद्रीयं पूजयंस्तमहर्निशं ॥ अत्र पूजाकृतोपवासैः कार्या।

ततः प्रभाते विमले कृत्वा पूजां महाद्भुतां दंडपाणे महाधाम्नि व्रतेऽस्मिन्कृतपारणाः इति तत्रैवोक्तेः अत्र परकृतिरूपेणार्थवादेन कृतोपवासेन स्नात्वा विश्वेश्वरं पूज्य इति कल्प्यते इयं चतुर्दशी खंडत्वे यदि पूर्वदिने पराह्णे वर्तेत तदोपवासे पूर्वा ग्राह्या पूजाव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिरिति वचनात् पूजादावरुणोदयव्यापिनी ग्राह्या कर्मणो यस्य यः काल इति वचनात् केचित्तु खंडतिथौ वा अखंडतिथौ वा पूर्वदिने कृतोपवासाः परदिने अरुणोदये पूजादिकं कुर्वंति अत्र काश्यां विशेषः यात्रा ज्ञेया काशीखंडे कार्तिकस्य चतुर्दश्यां विश्वेशं यो विलोकयेत् स्नात्वोत्तरवाहिन्यां न तस्य पुनरागतिरिति शिवरहस्येपि । पुरात्र कार्तिके मासि चतुर्दश्यां सुराः शिवे सायंकाले समागत्य पूजां कृत्वा स्थिता मुदे त्वसक्ता ततः परे ऋषिगणाः सर्वेपि मदनुग्रहात् संपूज्य निशि यत्नेन चक्रुर्जागरणं शिवे कार्तिकस्य चतुर्दश्यां बिल्वैश्च कनकाह्वयैः द्रोणपुष्पैश्च पूजां च चक्रुर्मामिमहेश्वरे रात्रिं नीत्वा प्रयत्नेन मत्कथाश्रवणादिभिः ततो ह्यरुणोदये जाते स्नात्वा स्नात्वा च भस्मना त्रिपुण्ड्रधारणं कृत्वा कृत्वा रुद्राक्षधारणं संध्यां समाप्य विशेषं समभ्यर्च्य यथाविधि मद्भक्तान्भोजयामासुर्ऋषयो बुभुजुस्तथा ऊर्जशुक्लचतुर्दश्यामुपोष्य प्रयतः शिवे मामर्चयति विश्वेशं समुक्तो भवति ध्रुवं मल्लिंगपूजनं पुण्यं सर्वदा सर्वकामदम् ऊर्जशुक्लचतुर्दश्यामर्चितं बहुपुण्यदं तथान्यत्रापि ऊर्जशुक्लचतुर्दश्यां काश्यां विश्वेश्वरं प्रभुम् समर्चयित्वमिंद्राद्यैर्गम्यते स्वामिनादरात् ॥ अस्यामेव रात्रौ विष्णुपूजा कार्या तदुक्तं हेमाद्रौ भविष्ये ॥ कार्तिकस्य सिते पक्षे चतुर्दश्यां नराधिप सोपवासस्तु संपूज्य हरिं रात्रौ जितेंद्रिय इति अत्र चतुर्दशी रात्रिव्यापिनी ग्राह्या रात्रौ पूजाविधानात् दिनद्वये तद्व्याप्तौ निशीथप्रदोषोभयव्यापित्वात्पूर्वैव इयं पूजोपवासादिभिर्विष्णुप्रीतिकरणाद्वैकुंठलोकप्रदाः तदेवेयं वैकुंठचतुर्दशीति प्रसिद्धा इति वैकुंठचतुर्दशीनिर्णयः अस्यामेव पाषाणचतुर्दशीव्रतं तदुक्तं निर्णयामृते देवीपुराणे ॥ कार्तिके शुक्लपक्षे तु या पाषाणचतुर्दशी तस्यामाराधयेद्गौरीं नक्तं पाषाणभक्षकः ऐश्वर्यसौख्यसौभाग्यरूपाणि प्राप्नुयान्नर इति हेमाद्रौ तु पाषाणभक्षणैरिति पाठः पाषाणाकारपिष्टपक्वान्नैरिति व्याख्यातं नारदीयेपि पाषाणव्रतमथ वक्ष्ये तच्छृणु नारद सोपवासो दिवा नक्तं पाषाणाकारपिष्टकं प्राश्य गंधादिभिर्गौरीं हृतपक्वसुधाहरेत् व्रतमेतच्चरित्वा तु यथोक्तं द्विजसत्तम इति पाषाणचतुर्दशीव्रतं अथ कार्तिके पौर्णमासीकृत्यनिर्णयः नारदीये । कार्तिक्यां पौर्णमास्यां तु कुर्यात्कार्तिकदर्शनं विप्रत्वं लभ्यते भूयः सर्वशास्त्रजपाय च अत्रैव दीपदानेन विधेयस्त्रिपुरोत्सवः निशामुखे द्विजश्रेष्ठ सर्वजीवसुखावहः कीटाः पतंगा मशकाश्च वृक्षा जले स्थले ये विचरंति जीवाः दृष्ट्वा प्रदीपान्नहि ते न जन्मनः पुनश्च मुक्तिं हि लभंत एव अत्रैव चंद्रोदये विप्राः संपूज्याः कृत्तिकाश्च षट् कार्तिकेयस्तथा खड्गी वरुणश्च हुताशनः गंधपुष्पैस्तथा धूपैर्दीपैर्नैवेद्यविस्तरैः परमान्नैः फलैः शाकैर्वह्निब्राह्मणतर्पणैः एवं देवान्समभ्यर्च्य दीपो देयो गृहाद्बहिः दीपोपांते तथा गर्तश्चतुरस्रो मनोहरः चतुर्दशांगुलः कार्यः सिक्तश्चंदनवारिणा गवां क्षीरेण संपूर्णो हेमं तत्र विनिःक्षिपेत् मुक्तानेत्रसमायुक्तं मत्स्यं सर्वांगशोभनम् महामत्स्याय च नम इति मंत्रं समुच्चरन् गंधाद्यैस्तत्र संपूज्य द्विजाय प्रतिपादयेत् क्षीरसागरदानं ते मयोक्तं द्विजसत्तम दानस्यास्य प्रभावेण मोदते हरिसन्निधौ एवं नारद रुद्रलोकमवाप्नोति नात्र कार्या विचारणेति अत्र कार्तिकव्रतोत्सर्गो व्रतमाहात्म्ये । वरान्दत्वा ययौ विष्णुर्मत्स्यरूपी भवत्ततः तस्माद्दत्तं हुतं जप्तं तदक्षयफलं स्मृतमिति अस्यां च कल्पभेदेन मत्स्यावतार उक्तः यामे कार्तिकमासमतुलसीपूजनं पद्मपुराणे । नारद उवाच गोप्यते येन विधिना तुलसी पूज्यते सदा तन्माचक्ष्व महादेव मम दत्तगृहकारणात् महादेव उवाच शुभे पक्षे शुभे वारे शुभे नक्षत्रे शुभोदये केशवाग्रे शुभांशे च रोपयेत्तुलसीं मुने गृहांगणमध्ये वा गृहस्योपवनेपि वा शुभदेशे च तुलसीमर्चयेद्भक्तितत्परः मूले च वेदिकां कुर्याद्दलवालसमन्विताम् प्रातः संध्याविधिं कृत्वा स्नानपूर्वं दिने दिने गायत्र्या प्राशनं जपात्तुलसीं पूजयेन्नरः

प्राङ्मुखोदङ्मुखोवापि स्थित्वा प्रयतमानसः ध्यायेत्तु तुलसीदेवीं श्यामांकमललोचनां प्रसन्नांपद्मकल्हारवरा
भयचतुर्भुजां किरीटहारकेयूरकुंडलादिविभूषितां धवलांशुकसंयुक्तां पद्मासननिषेदुषीं इति ध्यानम् दे
वि त्रैलोक्यजननि सर्वलोकैकपावनि आगच्छ भगवत्यत्र प्रसीद तुलसि प्रिये इत्यावाहनम् सर्वदेवमये दे
वि सर्वदा विष्णुवल्लभे हैमं रत्नमयं दिव्यं गृहाणासनमुत्तमम् इत्यासनम् सर्वदेवमयाकारे सर्वदेवनमस्कृ
ते इदं पाद्यं गृहाणेदं तुलसि त्वं प्रसीद मे इति पाद्यम् सर्वतीर्थमयाकारे सर्वागमनिषेविते इदमर्घ्यं गृहाण
त्वं देवि दैत्यांतकप्रिये इत्यर्घ्यम् सर्वलोकस्य रक्षार्थं सदा सन्निधिकारिणि गृहाण तुलसि प्रीत्या दत्तमाचम
नीयकम् इत्याचमनीयम् गंगादिभ्यो नदीभ्यश्च समानीतमिदं जलं स्नानार्थं तुलसि स्वच्छं प्रीत्या तत्प्रति
गृह्यतां इति स्नानम् क्षीरोदमथनोद्भूते चंद्रलक्ष्मीसहोदरे गृह्यतां परिधानार्थमिदं क्षौमांबरं शुभं इति व
स्त्रम् श्रीखंडकुंकुमं दिव्यं कर्पूरागुरुमिश्रितं कल्पितं ते महादेवि प्रीत्यर्थं प्रतिगृह्यतां इति गंधम् नीलो
त्पलसकल्हारमालत्यादीनि शोभने पद्मानि गंधवंतीनि पुष्पाणि प्रतिगृह्यतां इति पुष्पम् धूपं गृहाण दे
वेशि मनोहारि सगुग्गुलं आज्यमिश्रं तु तुलसि भक्ताभीष्टप्रदायिनि इति धूपम् अज्ञानतिमिरांधस्य ज्ञा
नदीपप्रदायिनि तुभ्यं तुलसि प्रीत्या दीपोयं प्रतिगृह्यतां इति दीपम् नमस्ते जगतां नाथे प्राणिनां प्रियद
र्शिने यथाशक्त्या मया दत्तं नैवेद्यं प्रतिगृह्यतां इति नैवेद्यम् नमो भगवति श्रेष्ठे नारायणि जगन्मये तुलसि
त्वरया देवि पानीयं प्रतिगृह्यतां इति पानीयम् अमृते अमृतसंभूते तुलस्यमृतरूपिणि कर्पूरादिसमायुक्तं
तांबूलं प्रतिगृह्यतां इति तांबूलम् दक्षिणो दक्षिणाकारे त्वं भक्तानां प्रियंकरे करोमि ते सदा भक्त्या विष्णुकांते प्र
दक्षिणां इति प्रदक्षिणाम् हिरण्यगर्भेति दक्षिणाद्रव्यं नमो नमो जगद्धात्र्यै जगदाद्यै नमो नमः नमो नमो जग
न्मूर्त्यै नमस्ते परमेश्वरि इति नमस्कारः प्रसीद मम देवेशि कृपया परया सदा अभीष्टफलसिद्धिं च कुरु मे माध
वप्रिये इति प्रार्थना इत्येवमर्चयेन्नित्यं प्रातरेव शुचिर्नरः मध्याह्ने वाथ सायाह्ने पूजयेत्प्रयतो नरः सर्वोपचारै
रथवा चातुर्मास्ये विशेषतः पूजयेत्तुलसीदेवीं सपूपफलपायसैः एकादशी यदा स्वल्पा तदोपोष्य व्रती नरः तदा
चैव कुर्वीत तुलसीपूजनं सदा इदं तु तुलसीपूजामाहात्म्यं शृणुयान्नरः सकृद्वापि पठेन्नित्यं स गच्छेद्वैष्णवं प
दं इति तुलसीपूजाविधिः अथ तुलसीविवाहप्रयोगः तत्रादौ तिथ्यादि संकीर्त्य ममाखिलविधपातकशमन
पूर्वकाभीष्टसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं तुलसीविवाहं करिष्ये इति संकल्पः तदंगत्वेन स्वस्तिवाचन
पूर्वकं ग्रहयज्ञं कृत्वा आचार्यर्त्विगादिवरणं कृत्वा तुलस्या आलवालात्परितो मंडपं च कृत्वा विवाहवत्तत्र तु
लस्याः पुरतो देवीं कृत्वा तुलस्या हरिद्रारोपणादि मंगलं कृत्वा वेद्यां सर्वतोभद्रे हैमं विष्णुमिदं विष्णुरिति मंत्रेण
रौप्यमयीं तुलसीं तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे नमस्ते नारदनुते नारायणमनःप्रिये इति
मंत्रेण संस्थाप्य संपूज्य वस्त्रविभूषणादिभिर्भूषयित्वा गोधूलीलग्ने मध्ये अंतःपटं धृत्वा विवाहवत्सर्वमंग
लं मंगल्यइति मंगलानि पठित्वा अंतःपटं निस्सार्य ओंप्रणवेन कन्यासंकल्पपूर्वकं सालंकारां विवाहवत् वस्त्र
युग्मेन वेष्टयित्वा हरये तुलसीं प्रतिपाद्य यदाबध्नंति मंत्रेण उभयोः कंकणं बध्वा गोजं ददादिति मंत्रेण करग्र
हणं कृत्वा आचार्यो वेदिकायां गृह्यसूत्रविधानेन अग्निं प्रतिष्ठाप्य तुलसीविवाहहोमे देवतापरिग्रहार्थं मन्वा
धानं करिष्ये इति संकल्पः अत्र प्रधानं विष्णुं द्वादशाक्षरेण वा मनुना वाज्याहुतिपर्यंते शेषेण स्विष्टकृदिति त
तो यजमानश्च तत्त्वः प्रदक्षिणाः कृत्वा शांतिपाठादि कृत्वा तूर्यघोषपूर्वकं यथाविभवं तुलसीं च संपूज्य पीठ
गोवाचार्याय दत्वा ब्राह्मणान्भोजयेदिति अथात्र संक्षेपपूजाप्रकारः संकल्पं विधाय ध्यायेच्च तुलसीं देवीमिति
ध्यात्वा भगवत्यै तुलस्यै नमः आवाहनम् विष्णुवल्लभायै आसनं सर्वदेवमयायै पाद्यं सर्वतीर्थमयायै अर्घ्यं
दैत्यांतकप्रियायै आचमनं सर्वलोकहितायै स्नानं लक्ष्मीसहोदरायै वस्त्रं महादेव्यै गंधं रमावासायै पुष्पं
अभीष्टप्रदायै धूपं पापहारिण्यै दीपं भगवत्यै नैवेद्यं अमृतसंभूतायै तांबूलं अमृतरूपिण्यै दक्षिणा जगद्धात्र्यै

नीराजनं सदक्षिणायैप्रदक्षिणा परमेश्वर्य्यैनमस्कारः अभीष्टदायैनमः प्रार्थना ततस्तुलसीमंत्रमष्टोत्तर
शतंजपेत् अस्यश्रीतुलसीमंत्रस्य नारदऋषि रनुष्टुप्छंदः श्रीतुलसीभगवतीदेवता अभीष्टसिद्ध्यर्थेपाठेवि
नियोगः तुलसि श्रीसखि शुभेपापहारिणि पुण्यदे नमस्तेनारदनुतेनारायणमनःप्रिये इतिकरषडंग
न्यासः ध्यायामितुलसींदेवीमित्यादिध्यानं ततःस्कांदोक्तंतुलसीकवचंपठेत् ॐअस्यश्रीतुलसीकवचस्तो
त्रस्य विष्णुऋषिः अनुष्टुप्छंदः श्रीतुलसीभगवतीदेवता अभीष्टसिद्ध्यर्थेपाठेविनियोगः ॐतुलसीमे
शिरःपातुभालंपंकजधारिणी दृशौमेपद्मनयनाश्रीसखीश्रवणौमम घ्राणंपातुसुगंधामेपातुमुखंचसुमुखी
मम जिह्वांमेपातुशुभगाकंठंविष्णुप्रियामम स्कंधौकल्हारिणीपातुभुजौमेपापहारिणी करौपद्मकरा
पातुहृदयंविष्णुवल्लभा पुण्यदामध्यमंपातु नाभिंसौभाग्यदायिनी कटिंकुंडलिनीपातुऊरूनारदवंदिता
ज्वालिनीजानुनीपातुजंघेसकलवंदिता नारायणप्रियापादौसर्वांगंसर्वरक्षका संकटेविषमेदुर्गेभयेवा
देमहाहवे नित्यपक्षिसंध्ययोःपातुतुलसीसर्वतःसदा इतीदंपरमंदिव्यंतुलस्याःकवचामृतं तुलसीका
ननेतिष्ठन्नासीनोवाजपेदिदम् सर्वान्कामानवाप्नोतिविष्णुसायुज्यमृच्छति ॥ इतिपद्मपुराणेतुलसीमा
हात्म्येतुलसीकवचम् अथविष्णुधर्मोत्तरोक्तं धात्रीपूजाव्रतं ॥ तत्राश्विनपौर्णिमामारभ्य कार्त्तिकपौर्णि
मापर्य्यंतंकर्त्तव्यं तत्राशक्तौ कार्त्तिकोत्तमदिनत्रयंकर्त्तव्यं तत्राप्यशक्तौकार्त्तिक्यामेवकार्य्यं तत्रादौतिथ्या
दिसंकीर्त्य ममाखिलपातकक्षयपूर्वकचतुर्विधपुरुषार्थसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं धात्रीमूले धा
त्रीपूजान्वितंश्रीविष्णुपूजनंकरिष्ये इतिसंकल्पः धात्रीमूलेआलवालंकृत्वा तन्मूलेपंचरंगोयेनंवेदि
कांकृत्वा तत्राष्टदलपद्मोपरिश्रीविष्णुमूर्त्तिसंस्थाप्य शांताकारंभुजगशयनमितिध्यात्वा पुरुषसूक्तेन
षोडशोपचारैः श्रीदामोदरंपूजयेत् पुष्पपूजांते अंगपूजांकुर्य्यात् ॐदामोदरायनमःपादौपूजयामि स
हस्राक्षायनमोमध्यंपूजयामि सर्वेश्वरायनमोमुखंपूजामि विष्णवेनमःशिरःपूजयामि त्रिविक्रमायन
मःसर्वांगंपूजयामि नमस्कारांते विशार्घ्यंश्रीफलयुतंदद्यात् तत्रमंत्रः नमःसहस्रशीर्षायसहस्रा
क्षायतेनमः सहस्रपादहस्तायपुरुषायनमोस्तुते सहस्रनाम्नेदेवेशप्रसीदत्वंममाच्युत अर्घ्यंगृहाण
भगवन्सर्वकामप्रदोभव ततःप्रार्थना भगवन्देवदेवेशलोकनाथनमोस्तुते अक्षयासंततिर्मेस्तुदा
मोदरनमोस्तुते ततोधात्र्यैनमः इतिनाममंत्रेण तुलसीपूजोक्तषोडशोपचारमंत्रैः धात्रींसंपूज्य अथ
वाषोडशनामभिः षोडशोपचारपूजांकुर्यात् शांत्यैनमः कांत्यैनमः मेधायैनमः धृत्यैनमः विष्णव
त्यैनमः महालक्ष्म्यैनमः रमायैनमः कमलायैनमः इंदिरायैनमः कल्याण्यैनमः कमनीयायैनमः
सावित्र्यैनमः गायत्र्यैनमः भक्त्यैनमः अव्यक्तायैनमः पुष्पपूजांते अंगपूजा विश्वरूपायैनमःकटिंपू
जयामि अब्धिसंभवायैनमोहृदयंपूजयामि लोकधात्र्यैनमोमुखंपूजयामि धात्र्यैनमःशिरःपूजयामि इति
संपूज्य ततःअष्टदिक्षु दीपावलींदत्वा धात्र्यैनमइतिमंत्रेण अष्टकृत्वासूत्रेणवेष्टयित्वा अष्टकृत्वाप्रदक्षि
णा नमस्कारांश्चकृत्वाप्रार्थयेत् धात्रिदेविनमस्तुभ्यंसर्वपापक्षयंकरी वर्द्धस्वकुरुमानित्यंनवनंततथा
कुरु पुत्रान्पौत्रान्बलंप्रज्ञांदेहिमेजगदीश्वरि संवत्सरकृतंपापंहरीकुरुममाक्षये ततोधात्रीमूले सव्येनै
वपितृतर्पणंकुर्यात् पितापितामहश्चैवतथैवप्रपितामहः मातापितामहीचैवतथैवप्रपितामही माता
महस्तत्पिताचतथैवप्रपितामहः तेपिबंतुमयादत्तंधात्रीमूलेक्षयंपयः मातृवंशेपितृवंशेअत्रामायेच
गोत्रिणः तेपिबंतुमयादत्तंधात्रीमूलेक्षयंपयः पितामाताचभार्याचभगिनीदुहितापतिः पितृष्वसामामातृ
ष्वसासमगोत्राणितर्पयेत् चतुर्विंशाश्चविंशाश्चषोडशद्वादशैवहि रुद्राश्चवसवश्चैवकुलमेकोत्तरंशतं
तेपिबंतुमयादत्तंधात्रीमूलेक्षयंपयः तेसर्वेतृप्तिमायांतुधात्रीमूलेनिषेचनात् एवंप्रत्यहंमासपर्यंतंतर्पं
त्वा अंतेतदुद्यापनंकुर्यात् सर्वतोभद्रमंडले सौवर्णींधात्रीं तन्मूलेहैमंविष्णुं पूर्वोक्तमंत्राभ्यांसंपूज्य मंड

लपूजांते अग्निंप्रतिष्ठाप्य वैष्णवमंत्रेण धात्रीनाममंत्रैश्च मंडलदेवतामंत्रैश्चाष्टोत्तरशतान्याज्याहुतीर्हुत्वा
आचार्याय पीठं व्रतपूर्त्तये गां च दत्वा सर्वसंपूर्णतासिद्धये सुवर्णयुक्तं घृतपूरितं कांस्यपात्रं दद्यात् तत्र
मंत्रः कांस्यं बलमयं प्रोक्तमाज्यं भोज्यं दिवौकसां सुवर्णं चाग्निदैवत्यमतः शांतिं प्रयच्छ मे ततो ब्राह्मणा
न्द्विजान्सदन्नेन संभोज्य तेभ्यो दक्षिणां दत्वा आशिषो गृहीत्वा स्वयं भुंजीत इति धात्रीपूजोद्यापने अथ
पद्मपुराणीयसृष्टिखंडोक्तं धात्रीवृक्षमाहात्म्यं ॐ नमः श्रीपरदेवतायै स्कंद उवाच अपरस्यापि वृक्ष-
स्य फलसंपूजनान्नरोः सर्वलोकहितार्थाय वद नो भवनाशन ईश्वर उवाच पावनं वासुदेवस्य फलं
प्रीतिकरं शुभं यस्य भक्षणमात्रेण मुच्यते सर्वकल्मषात् भक्षणे च भवेदायुः पाने वै धर्मसंचयः अ
लक्ष्मीनाशनं स्नानं सर्वैश्वर्यमवाप्नुयात् यस्मिन्गृहे महासेन धात्री तिष्ठति सर्वदा तस्मिन्गृहे न तिष्ठंति
प्रेता दैत्याश्च राक्षसाः न गंगा न गया चैव न काशी न च पुष्करं एकैव पावनी धात्री संप्राप्ते हरिवासरे ए
कादश्यां शुभे पक्षे धात्रीस्नानं करोति यः सर्वपापाः क्षयं यांति विष्णुलोके महीयते धात्रीफलैर्महासेन
भक्षणं स्नानमेव च नियते पारणे विष्णोः स्नानमात्रं हरेर्दिने संप्राप्ते पारणे चैव धात्र्येकस्पर्शने नरः भा
ग्यात् लंघयेद्यस्तु एकादश्यां सितासिते एकेनैवोपवासेन कृतेन तु षडानन सप्तजन्मकृतात्पापान्मु
च्यते नात्र संशयः अक्षयं लभते स्वर्गं विष्णुसायुज्यतां व्रजेत् तस्मात्सर्वप्रयत्नेन चरेत् धात्रीव्रतं नरः धात्री
द्रवेण स्नातस्य यस्य केशाः सुरंजिताः न पिवेत्स पुनर्मातुः स्तनं कश्चित्षडानन धात्रीदर्शनसंस्पर्शान्ना
म उच्चारणेपि च वरदः संमुखो विष्णुः संतुष्टो भवति प्रियः धात्रीफलं तु यत्रास्ति तत्र तिष्ठति केशवः तत्र
ब्रह्मा स्थिरा पद्मा तस्मात्तद्गृहे न्यसेत् अलक्ष्मीर्नश्यते तत्र यत्र धात्री प्रतिष्ठति संतुष्टाः सर्वदेवाश्च ना
न्पूजंति क्षणं मुदा धात्रीफलेन नैवेद्यं यो ददाति महाधनं तस्य तुष्टो भवेद्विष्णुर्नान्यैः क्रतुशतैरपि स्नात्वा धात्री
फलैरेव पूजयेद्यस्तु माधवं सोऽभीष्टफलमाप्नोति यद्यन्मनसि वर्त्तते तथैव लवणेस्तनापूजयित्वा फलेन तु
सुवर्णशतसाहस्रं फलमेति नरोत्तमाः या गतिर्ज्ञाननिष्ठानां मुनीनां योगसेविनां गतिं तां समवाप्नोति धात्री
सेवारतो नरः तीर्थसेवाभिगाह्येषु व्रतैश्च विविधैस्तु या सा गतिर्लभते पुंसां धात्रीफलस्य सेवया प्रीतिश्च स
र्वदेवानां मातृणां नो गणस्य च संमुखा वरदा स्नाने धात्रीफलनिषेवणे ग्रहाः दुष्टाश्च ये केचिदुग्राये दैत्यरा।
क्षसाः सर्वे निर्दुष्टतां यांति धात्रीफलस्य सेवनात् सर्वेषु यज्ञकार्येषु पुण्यं प्रोक्तं तथामले सर्वदेवतपूजायां
वर्जयित्वा रवेर्दिनं तस्माद्रविदिने तात सप्तम्यां च विशेषतः धात्रीफलानि सातत्यं दूरतः परिवर्जयेत् यस्तु
स्नाति तथाक्रांत्वा धात्रीं चरविवासरे आयुर्वित्तं कलत्रं च सर्वं तस्य विनश्यति संक्रांत्यां भृगुवारे च षष्ठ्यां प्रतिप
दि ध्रुवं नवम्यां चाप्यमायां च धात्रीं दूरात्परित्यजेत् नासिकाकर्णतुंडेषु मस्तकाचिकरेषु च तिष्ठेद्धात्रीफलं य
स्य याति विष्णुमंदिरं धात्रीस्पर्शनमात्रेण नरो यात्यच्युतालयं सर्वपापक्षयस्तस्य स्वर्गं याति रथेन तु धा
त्रीपत्रं करे कृत्वा यस्तु स्नानं समाचरेत् पदे पदेश्वमेधस्य फलं प्राप्नोति धार्मिकः अस्य दर्शनमात्रेण ये वै
पापिष्ठजंतवः सर्वे ते च पलायंते ग्रहा दुष्टाश्च दारुणाः पुरैकः पुल्कसः स्कंद मृगयार्थं वनं गतः मृगपक्षि
गणान्हत्वा क्षुधया परिपीडितः तथा मलकीवृक्षं प्राचीनफलान्वितं दृष्ट्वा संहृत्य सहसा च स्वादफल
मुत्तमं ततो दैवात्स वृक्षाग्रात्पपात धरणीतले वेदनामनुसंबद्धः पंचत्वमगमत्तदा ततः प्रेतगणाः सर्वे
रतो भूतगणास्तथा तं नेतुं मुदा सर्वे ये वैशमतसेवकाः न शक्नुवंति चंडालं मृतं तं दृष्ट्वा महाबलाः अ
न्यं विग्रहस्तेषां ममायमिति जल्पतां गृहीतं च विनेतुं च न शक्तास्ते परस्परं ततस्ते तु समालोक्य गतास्तु नि
गणान्प्रति किमर्थं तु न यो थीराश्चंडालं पापकारिणं प्रेषितं तु न वयं शक्ता न चापि यमसेवकाः म्रियंते धाति
नायेच स्थिरे ग्रहात्पलायिताः साहसैश्चीतिता भीता वृक्षाग्निकाष्ठपीडिताः सिंहव्याघ्रहतामर्त्या व्याघ्रैर्बाज
लंजंतुभिः जलसेवमृताः प्रेता वृक्षपर्वतपाततः पशुपक्षिहतायेच कारागारे गोरैर्मृताः आत्मघातमृ

नायेव श्राद्धादिकर्मवर्जिताः शूद्रकर्मरतायेतु गुरुविप्रनृपद्विषः पाखंडाः कौलिकाः क्रूरा गरदाः कूटसा
क्षिणः अशौचान्नस्य भोक्तारः प्रेतभोग्या न संशयः ममायमिति भाषंतो नेतं तेच नशक्नुमः आदित्य इवद्वः प्रेत
किं वा कस्य प्रभावतः प्रेता ऊचुः अनेन भक्षितं प्रेताः पक्वामलकीफलं तत्संगाद्यातितस्यैव फलानि श्रु
तानि च तेनैव कारणेनायं द्वः प्रेत्यो भवतामयं हत्वा यात्यति न श्रायं प्राणान्नूवेदान्द्राग्सजत नैवोच्चारेण मंत्र
स्य नवान्येनापि कर्मणा धात्रीभक्षणमात्रेण पापान्मुक्तो व्रजद्दिवं वः पृच्छामः सविप्रा नान्नवयं निंदकाश्च यः
विष्णुलोकाद्विमानेन यावन्नैवागच्छति प्रेता ऊचुः उषित्वा तु निशामेकां लावोढुं तमनसि स्थिरं यावद्विजान
घोषंति वेदमंत्रादिकल्पितं घोषं ते यत्र वेदाश्च मंत्राणि विविधानि च पुराणस्मृतयो यत्र ज्ञात्वा स्यात्तं न शक्नुमः
यत्र होमजपस्नानं देवतार्चनकर्मणां प्रवर्तो नैव तिष्ठामस्तत्रांतिच समुद्विग्नो किं वा कृत्वा प्रेतयोनिं लभंते द्वि
नराद्विजाः श्रोतुमिच्छामहे सम्यक्कथ्यमानमिदं वचः द्विजा ऊचुः शीतवातातपक्लेशैः क्षुत्पिपासाविशेषकैः
अन्यैरपि बहुः दैर्ष्यपीडिताः कूटसाक्षिणः बधबंधप्रमीतायेप्रेतास्ते निरयं गताः छिद्रान्वेषपरा येच द्विजानां क
मंत्रातिनः तथैव च गुरूणां च ते प्रेताश्चापुनर्भवाः दीयमानं द्विजाग्रेतु दातारं प्रतिषिद्धति चिरं प्रेतत्वमाश्रि
त्य नरकान्नर्वसंतिते परगामात्मगांचैव कन्यापिंडं नदीयते न पालयंति ये मूढास्ते प्रेताः कर्मजा भुवि हीन
प्रतिज्ञाः संन्यस्तास्तथा भग्नव्रता नराः नलिनीदलभोक्तारस्ते प्रेताः कर्मजा भुवि विक्रीणाति श्रुतिं शूद्राः स्वियं
साध्वीमकंटकां पितृव्यमातुलादींश्च प्रेतास्ते कर्मजा भुवि त्यजंतीति शेषः एते चान्ये च बहवः प्रेतास्ते कर्मजा
भुवि प्रेता ऊचुः न भवंति कथं प्रेताः कर्मणा केन वा द्विजाः हिताय वदतां नूनं सर्वलोकहितं परं द्विजा ऊचुः
येन चैव कृतं स्नानं जलतीर्थस्य धीमता नमस्कृतं परं लिंगं न प्रेतो जायते नरः एकादश्यामुपोष्यैव द्वादश्यां तु
विशेषतः पूजयित्वा हरिं मर्त्यः प्रेतत्वं न व्रजंति ते वेदांतरप्रसूतैश्च स्तोत्रमंत्रादिभिस्तथा देवानां पूजने रतान
दैप्रेता भवंति ते श्रुत्वा पौराणिकं वाक्यं दिव्यां च धर्मसंहितां पाठयित्वा पठित्वा च पिशाचत्वं न गच्छति वनैश्च वि
विधैः पूता रुद्राक्षाभरणास्तथा तथा रुद्राक्षमालायां प्रेतत्वं नैव गच्छति धात्रीफलद्रवैः स्नाता नित्यं तद्भक्षणे रता
तथा विष्णुसंस्मरणं गच्छंति पिशाचतां प्रेता ऊचुः सतां संदर्शनात्स्वप्नमिति पौराणिका विदुः तस्माद्वो दर्शनं
जातं हितं कर्तुमिहार्हथ प्रेतभावाद्यथा मुक्तिः सर्वेषां नो भविष्यति श्रुत्वोपदेशकं धीरा युष्माकं शरणं गताः
ततो दयालवः सर्वे तानूचुर्द्विजसत्तमाः धात्रीणां भक्षणं शीघ्रं कुर्वतां मुक्तिहेतवे प्रेता ऊचुः धात्रीणां दर्शनेवि
शाचयं स्यात्तं न शक्नुमः कथं तेषां फलानां च शक्ता वै भक्षणेधुना द्विजा ऊचुः अस्माकं वचनेनाद्य धात्रीणां भक्ष
णे शिवं अथ ते तु वरं लब्ध्वा धात्रीवृक्षपिशाचकाः समारुह्य फलेशाग्य भक्षितं ते लीनघातदा ततो देवालयान्नूं
रथं पीतं सुशोभनं आगतं तं समारुह्य सचंडालपिशाचकाः गतास्ते त्रिदिवं पुत्र वंतेर्यंत्रैः सुदुर्लभं स्कंद उवाच
धात्रीभक्षणमात्रेण पुण्यमस्तादिवं गताः कथं तद्भक्षिणः स्वर्गं न गच्छंति नरादयः ईश्वर उवाच एवं यंत्र नत्यो
भावं न जानंति हिताहितं उच्छिष्टैश्चाभिरुन्मृष्टैश्च पक्षकृतं तवा मत्या च मोहिताश्चेष्टप्रेता दंति सदैव हि स
कच्छौ व जलं वा नवलिमूषकमर्कटैः सूतके मृतके जप्यं न त्यक्तं येन केन चित् तस्मान्नैव जलं भुक्तं प्रेतास्ते व स
देव हि दुर्दीना शुद्धिलीयस्याश्च शुचिः संयमवर्जिता गुरुनिःसारिता दुष्टाः संति प्रेताश्च ते च वै अपुंगवाः कुलेजा
ताः बलोत्साहविवर्जिताः बधिरांधकृशादीनां पिशाचाः कर्मजातयः ह्रणं च मंगले नास्ति दुःखदैन्ययुता भृशं
तेनैव विकृताकाराः सर्वभोगविवर्जिताः नास्तिकारोगसंतप्ता मृत्वाऽत्र मलीमसाः एते चान्ये च बहवः स्वार्ताः स दे
वप्रेतजातयः तेन कर्मविपाकेन जायंते कर्मतो दृशाः पितृमातृगुरूणां च देवनिंदापराश्च ये पाखंडाः कौलिका
ताः पतिताश्चैव पापरोगास्त्वजाश्च ये अन्त्यजैर्याति ता युद्धे तेप्रेता निश्चिता भुवि महापातकसंयुक्ता विवादेश्च वर्द्धि
कृताः चौराः साहसिका येच पितॄणां द्रोहचिंतकाः दानाध्ययनहीनाश्च ब्रह्मदेवार्चनादिभिः अमंत्राः स्नानहीना

अगुरुस्त्रीगमनेरताः तथैवचांत्यजस्त्रीषु दुर्गतास्तु च संगताः महाक्रूरोपवासेन म्लेच्छदेशे स्थितास्तथाः म्लेच्छभा
षायुताः शूद्रास्तथा म्लेच्छोपजीविनः अनुवर्तंति ये म्लेच्छान्स्त्रीयं ये रूपजीविनः स्त्रियश्चैव नरास्तेतु ते प्रेता नात्र सं
शयः तथा संतप्तदेहं तु श्रांतं विप्रं गृहागतं शुश्रूषणातिथिं त्यक्त्वा पिशाचत्वं व्रजंति ते विक्रीणंति च वै याश्च कन्या
दिशुल्कवाशिषु प्रेतलोके चिरं स्थित्वा ते च यांत्यपुनर्भवं अशौचाभ्यंतरे ये च जाताश्चापशवो मृताः चिरं प्रेताः पिशाचाश्च
मृताजाताः पुनः पुनः जातकर्मसु वेश्यैव संस्कारैर्ये विवर्जिताः एकैकस्याप्यसंस्कारे प्रेतत्वं परिदीयते स्नानसंध्या
सुरार्चाभिर्वेदपत्रव्रतादरैः आजन्मवर्जिताः पापास्ते प्रेता ह्यपुनर्भवाः भोजनोच्छिष्टपात्राणि या विदेहमलानि
च ये पातयंति स्वतीर्थे ते प्रेता नात्र संशयः दानमानार्चनैर्विप्रान्नैवेद्यैर्न वतर्पिताः पितरो गुरवश्चैव प्रेतास्ते कर्म
जा भुवि पतीन्नूत्यक्त्वा वयानार्यो वसंति चेतरे जने प्रेतलोके चिरं स्थित्वा जायंते चांत्ययोनिषु पतीश्च वंचयित्वा या।
विषयेंद्रियमोहिताः मिष्टं खादंति या पापास्ताः प्रेताश्चिरं भुवि विण्मूत्रभक्तकाये च ब्रह्मस्वहरणे रताः अभ
क्ष्यभक्ताश्च ते ते प्रेता ह्यपुनर्भवाः बलाद्येपरवस्तूनि गृह्णंति च दहंत्यपि अतिथीनवमन्यंते प्रेता निरयमास्थि
ताः नैनरैः कर्मजं भुक्तं सर्वं वा दुःखमेव वा तस्मादामलकीमूले स्नानात्स्वदेवणात् सर्वपापविनिर्मुक्तो विष्णुलो
के महीयते तस्मात्सर्वप्रयत्नेन सेवयामलकीं शिवां यश्चेदं शृणुयान्नित्यं पुण्याख्यानमिदं शुभं श्रावयेत्सततं।
लोके वैष्णवेषु विशेषतः स याति विष्णुभवनमिति पौराणिका विदुः॥ इति श्रीपद्मपुराणे उत्तरखंडे धात्रीफलमा
हात्म्ये षष्टितमोध्यायः अथ कार्तिकीकृत्यं इयं मन्वादिः सा पूर्वाह्णव्यापिनी ग्राह्या शुक्लपक्षत्वात् अत्र विशे
षोहेमाद्रौ ब्राह्मे॥ पुण्या महाकार्तिकी स्याज्जीवेंद्वोः कृत्तिकास्थयोः याम्ये विशाखासु यदा भानुः कृत्तिकासु च चंद्र
मा सयोगः पद्मको नाम पुष्करे त्वतिदुर्लभः पद्मके पुष्करे माघां कपिलां यः प्रयच्छति स हित्वा सर्वपापानि वैष्णवं।
लभते पदं यमः कार्तिक्यां पुष्करे स्नातः सर्वपापैः प्रमुच्यते अन्यत्रापि आग्नेये यत्र यदा ऋक्षं तु कार्तिक्यां भवति क्वचि
त् महती सा तिथिर्ज्ञेया स्नानदानेषु चोत्तमा यदा याम्यं तु भवति ऋक्षं तस्यां तिथौ क्वचित् तिथिः सापि महापुण्या मु
निभिः परिकीर्तिता प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप सा महाकार्तिकी प्रोक्ता देवानामपि दुर्लभेति अस्यामे
वसायंकाले मत्स्यावतारो जात इत्युक्तं पाद्मे कार्तिकमाहात्म्ये वरान्दत्वा यतो विष्णुर्मत्स्यरूपोभवत्ततः तस्यां दत्तं
हुतं जप्तं तदक्षय्यफलं स्मृतमिति अत्रैव त्रिपुरोत्सव उक्तो भविष्ये पौर्णमास्यां तु संध्यायां कर्तव्यस्त्रिपुरोत्सवः दद्याद
नेन मंत्रेण प्रदीपांश्च सुरालये कीटाः पतंगा मशकाश्च वृक्षे जले स्थले ये विचरंति जीवाः दृष्ट्वा प्रदीपं न हि जन्मभागि
नस्ते मुक्तरूपा हि भवंति तत्रेति अत्र पौर्णमासी संध्याकालव्यापिनी ग्राह्या पूर्वोक्तभविष्यवाक्ये संध्याभिधानात्
अत्र कार्तिके यद्दर्शनं कार्यं तदुक्तं काशीखंडे कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनं सप्तजन्म भवेद्विप्रो ध
नाढ्यो वेदपारग इति अस्यां क्षीरसागरदानमुक्तं निर्णयामृते ब्रह्मपुराणे पौर्णमास्यां तु संपूज्यो भक्त्या दामोदरः
सदा ततश्चंद्रोदये पूज्यास्तापसाः कृत्तिकास्तु षट् शिवसंभूतिनामा च प्रीतिसंततिरेव च अनसूयाक्षमा चैव षडेताः
कृत्तिका मताः इति कार्तिकेयस्तथा खड्गी वरुणश्च हुताशनः धान्यैः सशूकैर्द्वारोर्ध्वे भूषितस्सनिशागमे माल्यैर्धूपै
स्तथा दीपैर्भक्ष्यैरन्नाद्यैस्तथा परमान्नैः फलैः शाकैर्वह्निब्राह्मणतर्पणैः एवं देवांस्तु संपूज्य दीपो देयो गृहाद्बहिः दी
पो यांते तथा गर्तश्चतुरस्रो मनोहरः चतुर्विंशांगुलः कार्यः सिक्तश्चंदनवारिणा गवां क्षीरेण संपूर्णः स
र्वतः परिरक्षितः तत्र हेममयो मत्स्यो मुक्तानेत्रो मनोहरः प्रक्षेप्तव्यो विधानेन नमो ब्रह्महरये पदन् ब्राह्मणाया
य योगणाय दद्यात् क्षीरसागरमिति अत्र विधानेनेत्यस्य दद्यादित्यनेनान्वयः अस्यां दामोदरं संपूज्य नक्तं कार्यं
तदुक्तं कृत्यतत्त्वार्णवे ब्रह्मपुराणे पौर्णमास्यां तु संपूज्य भक्त्या दामोदरं सदा तस्मिन्नहनि यत्नेन कर्तव्यं नक्त
भोजनं तथा कार्तिके पौर्णमास्यां तु सोपवासोर्चयेद्धरिम् अग्निष्टोमफलं विंदात्सूर्यलोकं च विंदति अस्यामेव वृष।
दानं कार्यं तदुक्तं मदनरत्ने विष्णुधर्मोत्तरे कार्तिक्यां चंद्रवर्णाभमन्यवर्णमथापि वा रत्नैर्गंधैस्तथा धान्यै।
र्बीजैर्वस्त्रैस्तथैव च यत्नेन पूज्यमिति शेषः कृत्वा चोक्तमथोत्थाप्य दत्वा दीपं समंततः चंद्रोदये तदा दद्यात् सर्वपापै

प्रमुच्यते कान्तारे यममार्गे तु तेनासौ व्रजते सुखं प्राप्नोति पुत्रपौत्रांश्च सूर्यलोकं च गच्छतीति अत्रैव का-
म्यवृषोत्सर्गः कार्यः तदुक्तं निर्णयामृते भविष्योत्तरे कार्त्तिक्यां तु वृषोत्सर्गो विवाहः पुण्यलक्षणः कार्यः कु-
रुकुलश्रेष्ठ हरेर्नीराजनं तथा गजाश्वरथदानं च घृतधेन्वादयस्तथा प्रदेयाः पुण्यकृद्भिस्तु तस्यां संकल्प्य देव-
तां इति मात्स्येपि कार्त्तिक्यां तु वृषोत्सर्गं कृत्वा नक्तं समाचरेत् शैवं पदमवाप्नोति शैवव्रतमिदं स्मृतमिति
अत्रैव ब्रह्मपुराणे नीलवृषदानमुक्तं नीलं वृषभं दद्याच्च तत्र वत्सतरीयुतं सर्वसस्यवरं रम्यं सर्वगंधसम-
न्वितं सुवाससं ब्राह्मणाय महाकान्तारतारणं यावंति तस्य रोमाणि शरीरे संति संख्यया तावद्युगसहस्रा-
णि स्वर्गे वसति तत्प्रदः पूजयित्वा ततो विप्रं स्रक्माल्यानुलेपनैः भोक्तव्यं गोरसप्रायं स्वप्तव्यं स्थंडिले तत इ-
ति नीलवृषलक्षणं त्वाह हरिहरः लोहितो यस्तु वर्णेन मुखे पुच्छे च पांडुरः श्वेतः खुरविषाणाभ्यां स वृषो
नील उच्यते तथान्यत्र चरणाश्च मुखं पुच्छं यस्य श्वेतानि गोपतेः लाक्षारससवर्णश्च तं नीलमिति निर्दिशेत्
भूमौ कर्षति लांगूलं प्रलंबस्थूलवालधिः पुरस्तादुन्नतो नीलो वृषभस्य प्रशस्यते अन्यत्रापि श्वेतोदरः कृष्ण-
पृष्ठो ब्राह्मणस्य प्रशस्यते स्निग्धवर्णेन रक्तेन क्षत्रियस्य प्रशस्यते कांचनाभेन वैश्यस्य कृष्णः शूद्रस्य शस्यते य-
स्य शृंगगायते शृंगे भ्रूमुखाभिमुखे सदा सर्वेषामेव वर्णानां स वै सर्वार्थसाधक इति अस्यामेव भविष्योत्तरो-
क्तं संतानव्रतं कार्यं तदुक्तं हेमाद्रौ ॥ श्रीकृष्ण उवाच कार्त्तिक्यामुपवासं यः कन्यां दद्यात्स्वलंकृतां स्वकी-
यां परकीयां वा नदीसंगमके शुभे एतत्संतानकं नाम व्रतं सुगतिदायकमिति अस्यामेव राशिव्रतं तदुक्तं
हेमाद्रौ भविष्योत्तरे। श्रीकृष्ण उवाच कार्त्तिक्यां नक्तभुग्दद्यान्मेषं हेमविनिर्मितं मार्गशीर्षे वृषं चैव पुष्ये मिथुनं
तथैव हि एवं क्रमेण यो दद्याद्राशीन्वस्त्रविभूषितान् पौर्णमास्यां तु कौंतेय सुवस्त्रान्बहुदक्षिणान् एतद्रा-
शिव्रतं नाम ग्रहोपद्रवनाशनं सर्वाशापूरकं तद्वत्सोमलोकप्रदायकमिति ॥ अस्यामेव कृत्तिकाव्रतं कार्यं
तदुक्तं हेमाद्रौ भविष्ये॥ श्रीकृष्ण उवाच अथातः शृणु भूपाल कृत्तिकाव्रतमुत्तमं राज्ञी च भद्रलिंगाख्या पुरा
यस्य प्रभावतः अतीव महतीं लब्ध्वा श्रियं जातिस्मराभवत् योगेनानेन तेनान्यका परे ब्रह्मणि लीयत युधिष्ठिर उ-
वाच कीदृशं तद्व्रतं कृष्ण मंत्र एव तु कीदृशः विधानं कृत्तिकानां च तं च कालं वदस्व मे श्रीकृष्ण उवाच कार्त्तिक्यां पौ-
र्णमास्यां तु गृह्णीयात्कृत्तिकाव्रतं षण्मासान्वा व्रतं यावदिदं संचिंत्य चेतसीत्यादि सौवर्णा रौप्या नवनीतसिद्धाः ब-
हुकृत्तिकाश्चणकपिष्टमयाश्च कृत्वा पात्रे निधाय कुसुमाक्षतधूपदीपैः संपूज्य जन्मगहनं न विशंति मर्त्या इति
इति कृत्तिकाव्रतं अथैव मनोरथपूर्णिमाव्रतमारंभणीयं तदुक्तं हेमाद्रौ भविष्योत्तरे ॥ कार्त्तिक्यां तु समारभ्य संपू-
र्णशशलक्षणं पूजयेदुदये राजन्सदा नक्ताशनो भवेदित्यादि जनाभिरामश्च शशांकवत्स्याद्धनाधिपो लक्ष्म त-
थैव लक्ष्म्या शक्रेण तुल्यश्च तथैव शक्त्या मानुष्यमासाद्य भवेत्स राजेत्यंतेन। इति मनोरथपूर्णिमाव्रतं अत्रैव सौ-
भाग्यव्रतं कार्यं तदुक्तं हेमाद्रौ विष्णुधर्मे कार्त्तिके पौर्णमास्यां तु पूर्णं शिशिरदीधितिं पद्मे षोडशपत्रे तु कृत्तिका-
यां तु पूजयेदित्यादि सौभाग्यदं रूपविवर्द्धनं च लावण्यदं स्त्रीरतिभोगदं च कार्यं प्रयत्नेन नरेंद्र पुंसां नार्या तथा।
स्त्रीभिरदीनसत्वेत्यंतेन। इति विष्णुधर्मोक्तं सौभाग्यव्रतं अस्यामेवानुष्ठेयं कार्त्तिकव्रतोद्यापनप्रसंगात् का-
र्त्तिकस्नानविधिर्लिख्यते तत्र पृथ्वीचंद्रोदये विष्णुस्मृतिपद्मयोः ॥ तुलामकरमेषेषु प्रातःस्नानं विधीयते हवि-
ष्यं ब्रह्मचर्यं च महापातकनाशनमिति सौरमास उक्तः प्राच्यास्त्वेतदेवाद्रियंते दाक्षिणात्यास्तु ॥ आश्विनस्य तु
मासस्य या शुक्लैकादशी भवेत् कार्त्तिकस्य व्रतानीह तस्यां वै प्रारभेत्सुधीरिति पाद्मोक्तेः भार्गवार्चने च आरभ्यै-
कादशीं शुक्लामाश्विनस्य तु मानवः प्रातःस्नानं प्रकुर्वीत यावत्कार्त्तिकभास्कर इति विष्णुरहस्योक्तेः हेमाद्रौ च आदित्य-
पुराणे ॥ पूर्णमाश्वयुजे मासि पौर्णमास्यां समाहितः इत्युक्त्वा मासं समग्रं परया च भक्त्या समाप्यते कार्त्तिकपौर्णमास्यामित्यं-
तेनाभिधानादाश्विनशुक्लैकादश्यां पौर्णमास्यां वा समापयेदित्याहुः मदनपारिजाते विष्णुः। कार्त्तिकं सकलं मासं नित्य-
स्नायी जितेन्द्रियः जपन्हविष्यभुक् शांतः सर्वपापैः प्रमुच्यते। अत्र देशविशेषः पाद्मे कार्त्तिकं प्रक्रम्य कुरुक्षेत्रे कोटि-

गुणोत्तरा याम्यपि तत्समः ततोधिकः पुष्करे स्नानाद्वारवत्यां च भार्गव पुण्याः पुर्यश्च सप्तैव तत्र नयो मथुराधिका । दुर्लभः
कार्त्तिको विप्र मथुरायां नृणामिह यत्रार्चितः स्वकं रूपं भक्तेभ्यः संप्रयच्छतीति इदं च स्नानं काशीस्थ पंचनदेप्यति
प्रशस्तं ॥ शतं समास्तपस्तप्त्वा कृते यल्लभ्यते फलं तत्कार्त्तिके पंचनदे सकृत्स्नानेन लभ्यते कार्त्तिके विंदुतीर्थे यो ब्रह्म
चर्यपरायणः स्नास्यते नु दिते भानौ भानुजातस्य भीः कुतः इत्यादि काशीखंडोक्तेः संपूर्णस्नानाशक्तौ ब्रह्मपुराणे का
र्त्तिकमधिकृत्य ॥ एकादश्यादिषु तथा तत्र पंचसु रात्रिषु दिने दिने च स्नानं यः शीतलासु नदीषु च वर्जितव्रातथाहि
सामां समतणामेव चेति काशीखंडे वाराणस्यां पंचनदे त्र्यहं स्नातास्तु कार्त्तिके अमीतिपुण्यवपुषः पुण्यभाजो ति-
निर्मला इति कार्त्तिके मासि वै यात्रार्थैः कृता भक्तितत्परैः विंदुतीर्थकृतस्नानैस्तेषां मुक्तिर्न दूरत इति ॥ मुहूर्त्ता-
वशेषितायां रात्रौ तीर्थादौ गत्वा प्रत्यहं स्नानं कार्यं नाडीद्वयावशिष्टायां रात्रौ गच्छेज्जलाशयमित्यादि पाद्म वचनात्
अत्रैव प्रसंगात्संक्षेपेण नित्यनैमित्तिकस्नानविधिरुच्यते अंगिराः विना दर्भैश्च यत्स्नानं यच्च दानं विनोदकं
असंख्यातं च यज्जप्तं तत्सर्वं निष्फलं भवेत् अन्यत्रापि कुशहीनं तु यत्स्नानं मंत्रहीना च या क्रिया दानं च दक्षि-
णाहीनं च यत्तन्निष्फलं भवेत् योगियाज्ञवल्क्यः अरुणादिवाचरेत्स्नानमध्याह्नात्प्राग्विशेषतः प्रयतो मृदमादा
य दूर्वामार्द्रं च गोमयं अरुणानांतरः विशेषत इति वचनात् अपराह्नेप्यभ्यनुज्ञायते ॥ स्थापयित्वा तथाचम्य त-
तः स्नानं समाचरेत् प्रक्षाल्य हस्तौ पादौ च शिखाबंधं समाचरेत् अत्र कुशदूर्वादिकं स्वयमेवानयेत् न तु नद्यादौ कं-
चिन्मार्थयेत तदुक्तं स्मृतिसागरे ॥ जलांते तिलदर्भांस्तु योनुष्ठानाय याचते नानुष्ठानफलं तस्य दातारेव हि तत्फ-
लं मनुः स्नानोपकरणं सर्वं तस्य दक्षिणभागतः एवं यः कुरुते स्नानं श्रेयो महदवाप्नुयात् संग्रहे जले देवगृ-
हे चैव शयने च द्विजालये निर्णिक्तपादः प्रविशेन्नानिर्णिक्तः कथंचनेति । अतः स्नाने मललेपसंभवे शारीरम-
लक्षालनस्य जलमध्ये निषेधादुद्धृतोदकेन बहिरंगं प्रक्षाल्य नद्यादौ प्रविशेत् शिखाबंधनप्रकारमाह व्यासः
स्मृत्वोंकारं च गायत्रीं निबध्नीयाच्छिखां ततः पुनराचम्य हृदयं बाहू स्कंधौ च संस्पृशेत् कात्यायनसूत्रे च ॥ अ-
थातो नित्यस्नानमित्युपक्रम्य प्रक्षाल्य पाणिपादं कुशोपग्रहो बद्धशिखी यज्ञोपवीत्याचम्य जपेदुक्तं कुशास्तु उ-
पग्रहोस्य उपगृह्यतेनेनेत्युपग्रहो हस्तः अत्र सदोपवीतिना भाव्यं सदा बद्धशिखेन च इत्येवं नित्यतया शिखादि-
धारणे सिद्धेपि पुनर्विधानं कर्मांगत्वसंपत्त्यर्थं नित्यं हि तद्धारणं पुरुषार्थं सदापदाने नैवेवाहि नष्टेपि यज्ञो-
पवीते तदुत्पाद्य स्नानमिति सिद्धमिति श्रीदत्तचंडेश्वरादयः तच्चिंत्यं विशिखोप्युपवीतश्च यत्करोति न त-
त्कृतमित्यस्मरार्द्देन कर्मांगताया अपि बोधनात् केवलपुरुषार्थत्वे हि शिखोपवीतयोः कर्मार्थितयानि
त्यप्राप्तत्वात्तदर्थविधानमुपपद्यते यदपि पुरुषार्थविधिप्राप्ते यज्ञोपवीतीति द्वितीयवस्त्रवारणार्थमिति
कात्यायनभाष्यं तदपि चिंत्यं परिसंख्याप्रसंगात् तस्मादेवोत्तरीयासंपत्तौ तदर्थमधिकमेकं यज्ञोपवीतं
विधीयते अत एवोक्तं तृतीयमुत्तरीयार्थं वस्त्राभावे तदिष्यत इति एवमनियतकेशवेषा इति स्नाने केशमो-
क्षश्च वर्णाच्छिखामोक्षोपि शंक्यते नित तद्वारणार्थं पुनः शिखाबंधवचनं यद्यपि मुक्तशिखो वर्जमिति तत्रा-
स्तितथापि प्रमादनिवृत्त्यर्थं दोषभूयस्त्वार्थं वचनमिति कथंचिद्व्याख्येयं वामनपुराणे ॥ निषिच्य तीरे कु-
शाग्रेषु स्नानि पूर्वं नराधिप मृदं न्यसेच्च प्रक्षाल्य पादौ च सदेव कंठे यज्ञोपवीतं च जलं पिबेत्त्रिः कंठे कृत्वा
निवीतं कृत्वा प्रक्षालयेदित्यर्थः यमः कराभ्यां धारयेद्दर्भान्छिखां बध्वा विधाय च प्राणायामं तथा कुर्यात्
कालज्ञानं तथाविधि कालज्ञानं तात्कालिकतिथिनक्षत्रादिस्मरणं विधायेत्यर्थः मनुः प्रक्षाल्य पादौ ह-
स्तौ च शुचिराचम्य वाग्यतः तिथिवारादिकं ज्ञात्वा स संकल्पो यथाविधि अत्रादिपदेन वारयोगसंक्रांत्यादेर-
पि संग्रहः तत्र तत्र दृष्टस्य श्रवणात् तत्र तिथिनक्षत्रादीनि तात्कालिकान्येव स्मर्तव्यानि तदुक्तं आचारसारे
जन्मात्माभ्यंगपानादिस्नानदानक्रियासु च तिथिस्तात्कालिकी ज्ञेया पारणे त्वेवमेवेति वारेषु तु देशांतर
वियोगाभ्यां क्वचित उदयात्प्रागूर्ध्वं वारप्रवृत्तिः तदुक्तं रत्नमालायां वारप्रवृत्तिमुनयो वदंति सूर्योदयाद्दशवा-

राजधान्याः ऊर्ध्वं तथाधोप्यपरत्र तस्माच्चरार्द्धदेशांतरनाडिकाभिः लंकायां सूर्योदयादूर्ध्वमेव वारप्रवृत्तिः
अन्यदेशे देशांतरचरवशेन तस्मात्सूर्योदयादूर्ध्वमधो वा वारप्रवृत्तिः इदमेव स्फुटीकृत्याह चरार्द्धदेशां
तरयोर्वियोगयोगात्समानीयपलैश्च सम्यक् सूर्योदयादूर्ध्वमधोथ नेयो वारप्रवृत्तिं मुनयो वदंति अयम
र्थः स्फुटगणितद्वारा स्फुटचरमानीय देशांतरमथानयेत् तदोभयोरेकयोर्द्धनत्वे ऋणत्वे च योगः का
र्यः वैजात्ये चाधिके ऋणे शेषे ऋणांके सति तावद्घटिकाभिर्वारप्रवृत्तिः धनांके तु प्रागिति एवं स्थि
ते तूषसि स्नानविधानादेर्वारादेरुदयोत्तरं प्रवृत्तौ तन्निमित्तकस्नानादौ चार्वाक् शनिवासरः कीर्तनीयः
रविवारस्नाने तु सोमवासरेऽरुणोदयात्कार्यमेव तदुत्तरमपकर्षे इति प्राप्ते न चैतन्याय्यं आचारविरोधात्
अत्राहुः एतद्देशांतरवियोगयोगाभ्यां वारप्रवृत्त्यभिधानं तत्प्रयुक्तकार्येषु गुणदोषप्राबल्याप्राबल्यबो
धनपरं पातंगवारस्य दिनाधिपत्यमित्याधिपत्याभिधानवत् अतएवैकस्मिन्नपि वासरेऽनेकवार
प्रवृत्त्यभिधानं यात्रादौ गुणदोषाभावप्रतिपादकमेव एवं च नित्या वारप्रवृत्तिरर्कबिंबदर्शनादेव म
मान्यशास्त्रसिद्धत्वात् एवं च नित्यस्नानादौ प्रत्यूषः काले उपरितनो वारो नास्ति तथापि तस्य तिथि
वशात्तात्कालिकत्वस्मरणाद्भाविनोपि कीर्तनं किंच अस्नातस्य क्रियाः सर्वा भवंतीत्यफला यतः प्रातः स
माचरेत्स्नानं तच्च नित्यमिति स्मृतमिति मार्कंडेयवचनेन प्रातःस्नानस्याहः कर्तव्यकर्मांगतायावबो
धितत्वात् तदहः कर्तव्यकर्मोद्देशके स्नाने तदहस्तिथिवारादि च कीर्तयितुमुचितम् तिथ्योक्तवचनाद्वा
यः नचैतद्दोषेऽस्त्विति अत एव संध्यायां भेदेनोपादानमित्यन्यत्र विस्तरः एवं च तदहर्वर्तितरणिकिरणा
वच्छिन्नेपि काले स एव वार उत्कीर्तनीय इति सिद्धम् यत्तु नवीरयोगसाम्येतं नैमित्तिकमर्द्धोदयादिस्ना
नेन तदानीं न भवति अर्कवारादेर्वस्तुतस्तदभावात् अहःकर्मांगत्वाच्च न तदनुरोधेन तदुत्तरयनम
पीति एवं मलापकर्षणस्नानेपि न तदार्कवारादिप्रयुक्तो निषेधः महाजनाचारोप्येवमेव अतएव
काम्यमपि सूर्यार्द्धबिंबदर्शनादूर्ध्वमेव भवति काम्येप्यख्यकालस्यैवांगत्वात् यदि तु काम्येपो धार्क
स्नानादावनुदितको विधिरपि तत्र वचनादेव भाविनोप्यर्कवारादेः कीर्तनं कार्यमिति वस्तुतस्तु
रविवासरनिमित्तकस्नाने शनिवासरान्वितायामस्यां तिथौ करिष्य इत्येव संकल्पयितुमुचितम्
कालविशेषस्य वासरस्य सप्तम्यधिकरणेनोत्कीर्तितस्य विद्यमानस्यैवाधिकरणत्वसंभवेनाविद्यमा
नस्याधिकरणत्वेनोत्कीर्तनासंभवात् एवं व्यतीपातादियोगादेरपि विद्यमानस्यैव संकल्पादावुत्की
र्तनं बोध्यम् न च तिथौ तत्कालिकत्ववचनादविद्यमानस्यापि वारादेः संकल्पादावुत्कीर्तनासंभव
इति वाच्यम् तिथौ तात्कालिकीत्ववचनस्य त्रिदोषपरिसंख्याविधित्वप्रसंगेन यां तिथिमित्यादि-
साकल्यबोधकवचनप्रसक्तसाकल्येन वारादौ तात्कालिकव्यवच्छेदकत्वासम्भवात् यद्यपि नि
मित्तस्य स्वस्मिन्स्वत्ववशानुष्ठापकस्य विद्यमानस्यैवोद्देश्यत्वं युक्तं तथापि ग्रंथादौ मंगलाचरणे निमि
त्तस्यादृष्टत्वेनाविद्यमानस्यापि रविवासरादेररुणोदयकाले विधायकवचनवशादरुणोदयकाले
नुष्ठीयमाने रविवासरसंबंधिक्रियांगं प्रातःस्नानं प्रति निमित्तत्वं युक्तं नचाचारविरोधः आचारानु
रोधेन शास्त्रार्थस्याव्यवस्थापयितुमशक्यत्वादिति कृतं वृद्धयोर्विवादाकुर्वन्तित्यलम् इदं च प्रातःस्नानं सं
ध्यांगत्वात्कार्यं तेन विनेतरकर्मानधिकारादिति वर्द्धमानः यद्यपि प्रातःसंध्यायाः सूर्योदये समाप्तिरस्त्यापि
वचनबलादनुदितहोमवद्भविष्यतीति निर्णयसिंधौ वस्तुतस्तु प्रातःस्नानोत्तरं प्रातःसंध्यायाः पूर्वमेव
कार्तिकादिस्नानविधानमुचितं प्रातःसंध्यायाः सूर्योदयोत्तरं समाप्यत्वेनानुदिते भानौ विहितस्य स्ना
नस्य प्रातः पश्चादनुष्ठेयत्ववचनत्वेव कार्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन प्रीत्यर्थं तव देवेश दामो
दर मया सह ध्यात्वाहं त्वां च देवेश जलेऽस्मिन्स्नातुमुद्यतः तव प्रसादात्पापं मे दामोदर विनश्यतु इमो मं

हे समुद्रार्यमोनीब्लायाक्रतीनर इति अर्घ्यमंत्रावयितत्रैव व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम गृ
हाणार्घ्यं मयादत्तं धनुस्ते दनुनिषूदन नित्ये नैमित्तिके कृच्छ्र कार्तिके पापनाशने गृहाणार्घ्यं मयादत्तं रा
धया सहितो हरे इमौ मंत्रौ समुद्रार्घ्ययोर्घ्यमर्घं प्रयच्छति सुवर्णरत्नपुष्पाम्बुपूर्णशंखेन पुण्यवान्
सर्वापूर्णा पृथिवी तेन दत्ता न संशयः इति अन्योपि स्नानगतो विशेषः पाद्मे स्नात्वा भागीरथी विष्णुशि·
वसूर्यजले विशेत् नाभिमात्रे जले तिष्ठन् व्रती स्नायाद्यथाविधि तिलामलकचूर्णेन गृहे स्नानं समाच
रेत् वनस्थानां यतीनां च तुलसीमूलमिश्रितमिति स्नानसाधनमिति शेषः सप्तमी दर्शनवमी द्विती·
या दशमी च त्रयोदश्यां च न स्नायाद्धात्रीफलतिलैः सहेति पाद्मे कार्तिके नार्चितो येस्तु कमलैः क
मलेक्षणः जन्मकोटिषु विप्रेंद्र न तेषां कमला गृहे नारसिंहे विहाय सर्वपुष्पाणि मुनिपुष्पेण के·
शवं कार्तिके योर्चयेत् कृत्वा वाजपेयफलं लभेत् ॥ कार्तिके तुलसीमाहात्म्यं पाद्मे तुलसीकाननं
राजन् गृहे यस्यावतिष्ठते तद्गृहं तीर्थरूपं तु न यान्ति यमकिंकराः रोपणात्पालनात्स्पर्शान्नृणां पाप·
दहेत्तथा तुलसी दहते पापं वाङ्मनःकायसंभवं तुलसीमंजरीभिर्यः कुर्याद्धरिहरार्चनं न स गर्भगृ
हं याति मुक्तिभागी न संशयः इति तुलसीविपिनस्य च्छाया यत्र यत्र भवेन्नृप तत्र श्राद्धं प्रकुर्वीत पितॄणां
दत्तमक्षयमिति तुलसीदललक्षेण कार्तिके योर्चयेद्धरिं पत्रे पत्रे मुनिश्रेष्ठ लभते मौक्तिकं फलं स्कां
दे कार्तिकमाहात्म्ये ॥ मालतीमालया विष्णुः केतक्या चैव पूजितः समाः सहस्रं संप्रीतो भवते मधुसू
दनः तथा कार्तिके केशवीपूजा येषां नाम्ना रुतैः कृता ते निर्भर्त्स्य रवेः पुत्रं वसंति त्रिदिवे सदा
तथा स्कांदे द्वारिकामाहात्म्ये ॥ निवेद्य केशवे मालां तुलसीकाष्ठसंभवां वहते यो नरो भक्त्या तस्य।
नास्ति हि पातकं न जह्यात्तुलसीमालां कार्तिके तु विशेषतः महापातकसंहर्त्री धर्मकामार्थदायिनी
स्पृशंति यानि लोमानि धात्रीमाला कलौ नृणां तावद्वर्षसहस्राणि वैकुंठे वसतिर्भवेत् मालां नित्यं नरो भ
क्त्या धात्रीतुलसिसंभवां वहते कंठदेशे तु कल्पकोटिं दिवं वसेत् तुलसीकाष्ठसंभूते माले कृष्णप्रियंक
रि बिभर्मि त्वामहं कंठे कुरु मां कृष्णवल्लभं एवं संप्रार्थ्य विधिवन्मालां कृष्णगलेर्पितां धारयेत्कार्ति
के यो वै स गच्छेद्वैष्णवं पदमिति स्कांदे कार्तिकमाहात्म्ये ॥ धात्रीतले तु यः कुर्यात्पिंडदानं महामते मु
क्तिं प्रयांति पितरः प्रसादान्माधवस्य तु धात्रीफलविलिप्तांगो धात्रीफलविभूषितः धात्रीफलकृताहा
रो नरो नारायणो भवेत् धात्रीच्छायां समाश्रित्य योर्चयेच्चक्रपाणिनं पुष्पे पुष्पेश्वमेधस्य फलं प्राप्नोति
मानवः तीर्थानि मुनयो देवा यज्ञाः सर्वेपि कार्तिके नित्यं धात्रीं समाश्रित्य तिष्ठंत्यर्के तुलास्थिते इति
श्चैव धात्रीपूजनं कृत्वा प्रार्थयेत् ॥ धात्रि देवि नमस्तुभ्यं सर्वपापक्षयंकरि पुत्रान्देहि महाप्राज्ञे य।
शो देहि बलं च मे इति तथा च स्कांदे। कार्तिके मासि विप्रेंद्र धात्रीवृक्षोपशोभिते वने दामोदरं विष्णुं चित्रा
न्नैस्तोषयेद्धरिं मूलेन पायसेनाथ होमं कुर्याद्विचक्षणः ब्राह्मणान्भोजयेद्भक्त्या स्वयं भुंजीत वै फ·
भिरिति अथ जागरणविधिः पाद्मे ॥ जागरं कार्तिके मासि यः कुर्यादरुणोदये दामोदराग्रे सेनान्य·
गोसहस्रफलं लभेदित्यादि कार्तिके द्विदलव्रतं प्रागुक्तं कार्तिके द्विदलं त्यजेदिति पाद्मे कार्तिकमाहा
त्म्ये ॥ राजिकां मादकं चैव नैवाद्यात्कार्तिके व्रती द्विदलं तिलतैलं च तथा मांसं विवर्जितं स्कांदेपि का
र्तिके वर्जयेत्तद्वद्द्विदलं बहुबीजकं माषमुद्गमसूराश्च चणकाश्च कुलत्थकाः निष्पावराजमाषाश्च आ
ढकी द्विदलं स्मृतं नूतनान्यपि जीर्णानि सर्वाण्येतानि वर्जयेत् अत्र केचित् तन्त्रिसमये दलद्वयं यस्य भ
वति तत्कृतमेवं गम्याद्विदलमुच्यते इत्याहुः उदाहरंति च बीजमेव समुद्भूतं द्विदलं चांकुरं विना दृश्यते
यत्र सस्ये तु द्विदलं तन्निगद्यते अन्ये तु लक्षणयोमानाभावाद्वचनस्य च निर्मूलत्वाद्विदलात्मकं यस्य स्व
रूपं तदेव वर्जयेदित्याहुः अन्यान्यपि वर्ज्यान्युक्तानि पाद्मे ॥ पलांडुं लशुनं हिंगुं छत्राकं गृंजनं तथा ना

लिकां मूलकं शिग्रुं वर्जयेत्कार्तिके व्रती अलाबूं वापि वृंताकं कूष्मांडं बृहतीफलं कलिंगं च कपित्थं च व
र्जयेद्वैष्णवो व्रती कार्तिके तु विशेषेण राजमाषान्न भक्षयेत् निष्पावांस्तु निशाचूर्णं यावद्भूतनारकीति प
टोलान्यपि न भक्षयेदित्यादि लघुनारदीये ॥ कार्तिके वर्जयेत्तैलं कार्तिके वर्जयेन्मधु कार्तिके वर्जयेत्कांस्यं
कार्तिके शुक्तसंधितं कांस्ये तन्मात्रभोजनं। कार्तिके यत्यादिर्मासोपवासं कुर्यान्न तु गृहस्थः ॥ वानप्रस्थोप
तिर्वापि नारी वा विधवा मुने मासोपवासं कुर्वीत गुरोर्विप्राज्ञया यतः आश्विनस्यामले पक्षे एकादश्यामुपो
षितः व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनानि तु इति प्रवृत्यन गृहस्थस्यापरे व्रतमिति पाद्मोक्तेः। संधितं लव
णशाकः यत्स्वयमम्लं केवलकालपरिवासेन द्रव्यांतरसंसर्गकालपरिवासाभ्यां वाम्लीभवति तत्
शुक्तमिति मितात्सरायाम् तथा कार्तिके हंससेवीयः प्राजापत्यपरोऽथवा। एकांतरोपवासी वा त्रिरात्रो
पोषितोपि वा षड्द्वादशपक्षं वा मासं वा वरवर्णिनि एकभक्तेन नक्तेन तथैवायाचितेन च उपवासेन भै
क्ष्येण व्रतमेतत्परं पदं तथा कार्तिके आकाशदीप उक्तो निर्णयामृते पुष्करपुराणे ॥ तुलायां तिलतैलेन
सायंकाले समागते आकाशदीपं यो दद्यान्मासमेकं हरिं प्रति महतीं श्रियमाप्नोति रूपसौभाग्यसंपदमि
ति तद्विधिश्च हेमाद्रौ आदित्यपुराणे ॥ दिवाकरेस्ताचलमौलिभूते गृहाददूरे पुरुषप्रमाणं यूपाकृति
यज्ञियवृक्षदारु मारोप्य भूमौ वपतस्य मूर्ध्नि पंचांगुलच्छिद्रयुतामष्टमध्ये द्विहस्तदीर्घामथ पट्टिकां च
कृत्वा च तस्याष्टदलाकृतीस्त्वयाभिर्भवे दष्टदिशानुसारी तत्कर्णिकायां तु महाप्रकाशो दीपः प्रदेयो
दलगास्तथाष्टौ निवेद्य धर्माय हराय भूम्यै दामोदरायाथ च धर्मराज्ञे प्रजापतिभ्यस्त्वथ सत्पितृभ्यः प्रे
तेभ्य एवाथ तमःस्थितेभ्य इत्यादिविस्तरस्तत्रैव बोध्यः अपरार्के भविष्योत्तरे तु ॥ विष्णोरायतने य
स्तु सहस्रं यदि दीपकान् प्रज्वालयत्यनुदिनं दिवारात्रमनिर्वृतः तस्मिन्सम्यक्प्रकृप्यते शुक्लपक्षे तु
कार्तिके सयाति भवनं विष्णोस्तेजोमयवपुः पुमान् दीपदाने मंत्र उक्तः यथा दामोदराय नभसि तु
लायां दोलया सह प्रदीपं ते प्रयच्छामि नमोऽनंताय वेधसे इति अन्यदपि स्कांदे। व्रीहयो यवगोधूमाः प्रि
यंगुतिलशालयः एते हि सात्विकाः प्रोक्ताः स्वर्गमोक्षफलप्रदाः काशीखंडे ऊर्जे यवान्नमश्नीयाद्देवा
न्नमथवा पुनः वृंताकं सूरणं चैव शूकशिंबीश्च वर्जयेत् पृथ्वीचंद्रोदये पाद्मे, नोर्जे वंध्यो वियातव्यो
व्रतिनां कर्जे न चिन्त्यो वित्त अव्रतेन क्षिपेद्यस्तु मासं दामोदरप्रियं तिर्यग्योनिमवाप्नोति नात्र कार्या विचा
रणा अथ व्याप्यपि तां तूलतैलकशाककर्मादिवर्जनं सकलस्य रूपाणि प्रागुक्तानि अत्रैव प्रसंगात् भीष्म
पंचकव्रतं लिख्यते नारदीयपुराणे ॥ नारद उवाच यदेतद्वैष्णवं पुण्यं व्रतानां परमं व्रतम् कर्तव्यं का
र्तिके मासि प्रख्याता भीष्मपंचकं विधानं तस्य विस्पष्टं फलं च सुरसत्तम कथयस्व प्रसादान्मे जनानां
हितकाम्यया ब्रह्मोवाच प्रवक्ष्यामि महापुण्यं व्रतं व्रतवतां वर भीष्मेणैतद्यतः प्राप्तं व्रतं पंचदिनात्म
कं सकाशाद्वासुदेवस्य तेनोक्तं भीष्मपंचकं व्रतस्यास्य गुणान्वक्तुं कः शक्तः केशवादृते व्रतं चैतन्म
हापुण्यं महापातकनाशनं अतो नरैः प्रयत्नेन कर्तव्यं भीष्मपंचकं कार्तिकस्यामले पक्षे स्नात्वा सम्य
क् यतव्रतः एकादश्यां तु गृह्णीयात् व्रतं पंचदिनात्मकं प्रातः स्नात्वा विधानेन मध्याह्ने च तथा व्रती
नद्यां निर्झरगर्ते वा समालभ्य च गोमयं यवव्रीहितिलैः सम्यक्पितॄन्संतर्पयेत्क्रमात् स्नात्वा मौनं ततः स्थि
त्वा धौतवासा दृढव्रतः ततः संपूजयेद्देवं सर्वपापहरं परं स्नापयेच्चाच्युतं भक्त्या मधुक्षीरघृतेन च त
थैव पंचगव्येन गंधचंदनवारिणा चंदनेन सुगंधेन कुंकुमेनाथ केशवं कर्पूरोशीरमिश्रेण लेप
येद्गरुडध्वजं अर्चयेद्रुचिरैः पुष्पैर्गंधधूपसमन्वितैः गुग्गुलं घृतसंयुक्तं दहेद्दत्तं च भक्तिमान् दीप
कं तु दिवारात्रौ दद्यात्पंचदिनानि तु नैवेद्यं देवदेवस्य परमान्नं निवेदयेत् एवमभ्यर्च्य देवेशं स्मृत्वा ध्या
त्वा प्रणम्य च ॐ नमो भगवते वासुदेवायेति जपेदष्टोत्तरं शतं जुहुयाच्च घृताभ्यक्तान् तिलव्रीहींस्ततो व्रती

षडक्षरेणा मन्त्रेण स्वाहाकारान्वितेन च ॐ नमो विष्णवे इति षडक्षरः उपास्य पश्चिमां संध्यां प्रणम्य गरुड
ध्वजं जपित्वा पूर्ववन्मन्त्रं क्षितिशायी भवेन्नरः सर्वमेतद्द्वितयं अनन्तकार्यं पंचदिनेष्वपि विशेषोक्तं व्रते चास्मि·
न्यदन्यत्तं शृणुष्व तत् विशेषोक्तं दिनविशेषपुरस्कारेणोक्तं ॥ प्रथमेऽह्नि हरेः पादौ पूजयेत्कमलैर्नरः द्वि
तीये बिल्वपत्रेण जानुदेशं समर्चयेत् पूजयेच्च तृतीयेऽह्नि नाभिं भृंगारकेण तु बाणबिल्वजपाभिश्च ततः स्क
न्धौ समर्चयेत् ततो नु पूजयेन्मूर्ध्नि मालत्या चक्रपाणिनः कार्तिक्यां देवदेवस्य भक्त्या तद्गतमानसः पूज
येज्जपमन्त्रेण गन्धपुष्पं निवेदयेत् अर्चयित्वा हृषीकेशमेकादश्यां समाहितः त्रिः शकृद्गोमयं सम्यग्गण एका
दश्यामुपावसेत् गोमूत्रं मन्त्रवद् भूयो द्वादश्यां प्राशयेद्व्रती क्षीरं चैव त्रयोदश्यां चतुर्दश्यां तथा दधि संप्राश्य
कायशुद्ध्यर्थं लंघनीयं चतुर्थकं प्राशनं होममन्त्रेण कर्तव्यं भूतिमिच्छता पंचमे तु दिने स्नात्वा विधिवत्सम्पू
ज्य केशवं भोजयेद्ब्राह्मणान् भक्त्या तेभ्यो दद्याच्च दक्षिणां ततो नक्तं समश्नीयात् पंचगव्यपुरस्सरं एवं सम्य·
क्समाप्य स्याद्यथोक्तं व्रतमुत्तमं जन्मप्रभृति यन्मांसं त्यक्त्वा पुण्यमवाप्नुयात् तत्फलं समवाप्नोति त्यक्त्वा·
सौ भीष्मपंचके मद्यपो यस्तु जन्माद्यं जन्मतो मरणान्तिकं तद्भीष्मपंचके त्यक्त्वा संप्राप्नोत्यधिकं फलं भ
विष्योत्तरे । श्रीकृष्ण उवाच कार्तिके शुक्लपक्षस्य शृणु धर्मं पुरातनं एकादश्यां समारभ्य विज्ञेयं भीष्मपंच
कं दुष्करं सत्त्वहीनानामशक्यं बालचेतसां वरिष्ठैः परिहर्तव्यं ब्रह्मचर्येण निष्ठया मद्यमांसमसत्यं च वर्ज
येत्पापभाषणं शाकाहारेण मुन्यन्नैः कृष्णार्चनपरैर्नरैः स्त्रीभिर्वा कन्यकैर्वा कर्तव्यं स्वपतेः पुण्यवर्द्धनं विधवा
भिस्तु कर्तव्यं पुत्राणां शुभवृद्धये सर्वकामसमृद्ध्यर्थं मोक्षार्थं चैव पाण्डव नित्यं स्नानेन दानेन कार्तिके
यावदेव तु वैश्वदेवस्तु कर्तव्यो विष्णुध्यानपरायणैः वैश्वदेवः सर्वदेवताहोमः ततश्च विभूतिनेन भावना
याः यमस्य प्रतिमा कार्या रौद्रवक्त्रातिभीषणा द्विसहस्रातिविकृता लोहदंष्ट्राकरालिनी तिलप्रस्थोपरि
स्थाप्या कृष्णवस्त्रेण वेष्टिता रक्तपुष्पकृतापीडा ज्वलत्कांचनकुंडला संपूज्य परया भक्त्या धर्मराजस्य नाम
भिः इममुच्चारयेन्मन्त्रं गृहीतकुसुमांजलिः यदन्यजन्मनि कृतमिह जन्मनि वा पुनः पापं मे शममायातु
तव पादप्रसादतः एवं संपूज्य विधिवत्प्रतिमां च सकांचनां सकांचना सुवर्णदक्षिणायुक्ता ॥ वाचकाय प्रदातव्या
धर्मो मे प्रीयतामिति तद्वच्च देवदेवस्य कृष्णस्याक्लिष्टकारिणः तद्वदिति यमप्रतिमादेव यत्कृता पूजा यथाशक्त्या
विप्राणां वेदवेदिनां दद्याद्धिरण्यं गां चैव कृष्णो मे प्रीयतामिति ॥ कृतकृत्यः स्थिरो भूत्वा विरक्तः संयतो भवेत् शा
न्तचेता निराबाधः परं पदमवाप्नुयात् नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः अष्टपादैकनयनः शंकुकर्णो म
हास्वनः जटी द्विजिह्वस्ताम्रास्यो मृगराजतनुच्छदः चिंतनीयो महादेवो यस्य रूपं स विद्यते व्रतदेवतायां महावि
ष्णोरिदं रूपं विचिन्त्य पूज्यं द्वितीयं च मृगराजतनुच्छदः शार्दूलसिंहवल्कलः पायेत ॥ स्नात्वा मौनेन नरः कृत्वा धौतवासा
दृढव्रतः भीष्मायोदकदानं च अर्घ्यं चैव प्रयत्नतः दद्यादिति शेषः । एतद्भीष्मस्य कर्तव्यादानं दद्यात्प्रयत्नतः पंच
रत्नविशेषेण दद्याद्विशेषप्रयत्नतः अर्घ्योदकदानमन्त्रौ भीष्माष्टमीप्रकरणे द्रष्टव्यौ इदं भीष्मेण कथितं शरतल्प
गतेन मे तदेतन्मे मयाख्यातं दुष्करं भीष्मपंचकं धन्यं पुण्यं पापहरं युधिष्ठिर महाव्रतं यच्चीर्त्वा ब्रह्महा गोघ्नः सर्वपा·
पैः प्रमुच्यते यद्भीष्मपंचकमिति प्रथितं पृथिव्यामेकादशीप्रभृति पंचदशीनि रुद्ध मुक्तान्नभोजनपरस्य नरस्य तस्मि
न्निष्फलं दिशति पाण्डवशार्ङ्गधन्वा इति भीष्मपंचकव्रतं अथ कार्तिकोद्यापनविधिः ॥ अथोर्जव्रतिनः सम्यगुद्या
पनविधिं नृप वक्ष्ये शृणुष्व मयाख्यातं सविधानं विशेषतः ऊर्जशुक्लचतुर्दश्यां कुर्यादुद्यापनं व्रती व्रतसंपूर्णतार्थं
य विष्णुप्रीत्यर्थमेव च तुलस्याः उपरिष्टात्तु कुर्यान्मंडपिकां शुभां द्वारे तु द्वारपालांश्च पूजयेन्नामतः पृथक् पुण्यशी
लं सुशीलं च जयं विजयमेव च तुलसीमूलदेशे तु सर्वतोभद्रमेव च पंचभिर्वर्णकैः सम्यक् शोभाढ्यं समलंकृतं
सर्पिर्दानं चोपरिष्टात्पंचरत्नसमन्विते महाफलेन संयुक्तं कुंभं तत्र निधाय च पूजयेत्तत्र देवेशं शंखचक्रगदा·
धरं कौशेयपीतवसनं प्रमोजलशायिकन्यया इंद्रादिलोकपालांश्च मंडले पूजयेद्व्रती द्वादश्यां प्रतिबुद्धोऽसौ त्र

योदर्शयतः स्वैः दृष्टश्चैव तथा तद्दर्शनात्तस्मात्पूज्यस्तथाविह तस्मात्पुण्यमेवं त्वया शांतः प्रयतमानसः पूजयेद्देवदेवेशं सौवर्णं ध्रुवं तु त्वया उपचारैः षोडशभिर्नानाभक्ष्यसमन्वितैः रात्रौ जागरणं कुर्याद्गीतवाद्यादिमंगलैः ततस्तु पौर्णमास्यां च सपत्नीकान्द्विजोत्तमान् त्रिंशन्मितांस्तथा वैकं स्वशक्त्या वा निमंत्रयेत् अतो देवाउतिहोमं कृत्वा तिलपायसं त्र्यंबं देवदेवस्य देवानां च पृथक्पृथक् दक्षिणां च यथाशक्ति प्रदद्यात्प्रणमेत्ततः गुरुं व्रतोपदेष्टारं वस्त्रालंकारणादिभिः सपत्नीकं समभ्यर्च्य तांश्च विप्रान्क्षमापयेत् युष्मत्प्रसादाद्देवेशः प्रसन्नो मम केशवः पापं प्रणाशमायातु स्थिरमेवास्तु संततिः मनोरथाश्च सफलाः संतु लिंगं तवार्चतान् देहांते वैष्णवं स्थानं प्राप्नुयामतिदुर्लभं इति क्षमापयित्वा विप्रांश्च सायं च विसर्जयेत् तामर्चां गुरवे दद्याद्व्रतयुक्तां तदा व्रती ततो गां कपिलां दद्याद्दुग्ध्वां सोपस्करां ततः स्वहस्तेन घृतं साज्यं स्वयं भुंजीत भक्तिमान् कार्त्तिके वा यत्र पयसि विधिरेवं वियोमतः इति कपिलाधेनुदानं मदनरत्ने व्यासः। रुक्मशृंगीं रौप्यखुरां सवत्सां कांस्यदोहनां सवत्सां कपिलां दत्वा वंशान्सप्त समुद्धरेत् यावंति चास्या रोमाणि सवत्साया भवंति हि सुरभीलोकमासाद्य रमते तावतीः समाः अस्या दानमंत्रो मत्स्यपुराणे। कपिले सर्वभूतानां पूजनीयासि रोहिणी तीर्थदेवमयी यस्मादतः शांतिं प्रयच्छ मे यमः रुक्मशृंगीं रौप्यखुरां मुक्तालांगूलभूषितां कांस्योपदोहनां धेनुं वस्त्रच्छन्नामलंकृतां दत्वा द्विजेंद्राय नरः स्वर्गलोके महीयते दशधेनुप्रदानेन तुल्यैका कपिला तथा आदित्यपुराणे सहस्रं योगवां दद्यात्कपिलां वापि सुव्रत सममेव पुरा प्राह ब्रह्मा ब्रह्मविदां वर कूर्मपुराणे दशसौवर्णिके शृंगे खुराः पंचपलान्विताः पंचाशत्पलिकं ताम्रं कांस्यं वैतावदेव च वस्त्रं तु द्विगुणं येन्वा दक्षिणा च चतुर्गुणा एतैरलंकृतां धेनुं घंटाभरणभूषितां कपिलां विप्रमुख्याय दत्वा मोक्षमवाप्नुयात् द्विगुणोपस्करोपेता महती परिकीर्तिता दत्वा सा विप्रमुख्याय स्वर्गमोक्षफलप्रदा सप्तजन्मकृतात्पापान्मुच्यते दशसंयुतः दशसंयुतः दशभिः पुत्रादिभिः पुरुषैः संयुतः यान्यान्प्रार्थयते कामांस्तांस्तान्नाप्नोति मानवः अंते स्वर्गापवर्गौ वफलमाप्नोत्यसंशयं वस्त्रदक्षिणयोस्त्रैगुण्यादिकं गोदानसामान्योपकल्प्यं वस्त्राद्यपेक्षयेति ज्ञातव्यं विधिस्तु गोदानप्रकरणे वक्ष्यते इयमेव वर्णभेदेन दशधोक्ता वराहपुराणे॥ सुवर्णकपिला पूर्वा द्वितीया गौरपिंगला तृतीया चैव रक्ताक्षी चतुर्थी गुडपिंगला नवमी पाटला ज्ञेया दशमी पुच्छपिंगला एता दशसमाख्याताः कपिलास्तावरानने सर्वा ह्येता महाभागास्तारयंति न संशयः सर्वा एव प्रशस्तास्तु सर्वपापप्रणाशनाः अतिदाननिरूपणं भविष्यत्पुराणे। त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती नरकादुद्धरंत्येता जपवापनदोहनैः तत्र गोदाननिरूपणं महाभारते। दानानामिह सर्वेषां गवां दानं विशिष्यते गावः श्रेष्ठाः पवित्राश्च पावना जगदुत्तमाः ऋते दधिघृताभ्यां च नेह यज्ञः प्रवर्तते तेन यज्ञावशेषं च गोमूलं सम्प्रचक्षते लिंगपुराणे। यान्यान्नानि विशाणां देवतायतनानि च दृश्यंते शक्रतां यासां किं देयमधिकं ततः हारीतः बहुक्षीरां गां वयोगां वै ब्राह्मणायोपपादयेत्। उत्तारयेत्स आत्मानं सदा सप्तकुलानि च देवलः सुशीलां लक्षणवतीं युवतीं वत्ससंयुतां वराश्चाप्सरसो यत्र तत्र गच्छंति गोप्रदाः तथा यावंति रोमाणि भवंति धेन्वास्तावंति वर्षाणि महीयते दिवि स्वर्गाच्च्युतस्यापि ततो लोके कुले समुत्पत्स्यति गोमतां सः जाबालिः होमार्थमग्निहोत्रस्य यो गां दद्याद्याचितां सवितृप्रोक्ता पृथिवी तेन दत्ता न संशयः आत्रेयः अकुलीनाय मूर्खाय लुब्धाय पिशुनाय च हव्यकव्यव्यपेताय गौर्न देया कथंचन ब्रह्मपुराणे पीतोदकां रोगवतीं दुग्धदोहां निरिंद्रियां उन्मत्तामंगहीनां च मत्तवत्सां महाशनां केशवालपुरीषास्थिकव्यादां संधिनीं बलां प्रदद्येत्तु सवलक्षणां नित्यं प्रस्रवणस्तनी न दद्याद्ब्राह्मणेभ्यश्च सदोषं वृषभं तथा पीतोदकां जग्धतृणां मितिदुग्धोपलक्षणाम् दुग्धदोहां स्वकीयस्तनपायिनी। प्रदद्येत्तु बालवत्सां वा गर्भिणी। व्यासः नष्टशृंगां पापवत्सां वा वंध्यां रोगान्वितां तथा नव्यंगां न परिश्रांतां दद्याद्गां ब्राह्मणाय च विश्वामित्रः नैकशृंगां चलच्छृंगां स्फुटितां तीचलत्खुरां न दद्यात्क्लिन्नां नीचे

वगांशुभामेव दापयेत् महाभारते अंतर्जाताः सक्रयाज्ञानलब्धाः प्राणक्रीता निर्जिताः स्वौकजाश्च कृच्छ्रोत्सृ-
ष्टाः पोषणाभ्यागताश्च द्वारैरेतैर्गोविशेषाः प्रशस्ताः अंतर्जात गर्भिण्यः ज्ञानं विद्या प्राणक्रीता पुत्रादिना स्वौकजा
गृहजाताः कृच्छ्रोत्सृष्टा इत्यादिव्याध्याक्रांतास्त्यक्ताः स्थानात्यक्ताः स्वयं पोषणं कृत्वा लब्धाः तत्रैव एकां गां दश
गुर्दद्याद्दश दद्याच्च गोशती शतं सहस्रगुर्दद्यात्सर्वास्तुल्यफलान्विताः नंदिपुराणे विधिना तु यदा दद्यायोऽत्रेधे-
नुः सदक्षिणां तदा तारयते जंतुः कल्पानामयुतैः शतैः अथ गोदानविधिः विश्वामित्रः। प्राङ्मुखीं गामव-
स्थाप्य सवत्सां तां सुपूजितां पुच्छदेशे तु दाता वै स्नातो बद्धशिखो भवेत् उदङ्मुखस्तु विप्रः स्यात् स्नात्वा लक्षणल-
क्षितः आज्यपात्रं करे कृत्वा कनकेन समन्वितं निक्षिप्य पुच्छं तस्मिंस्तु कृतदिग्बंधस एव च सतिलं विप्रपाणि
तु शृंगाग्रं तु नियापयेत् सतिलं सकुशं चापि गृहीत्वा दानमाचरेत् अनेनैव तु मंत्रेण पात्रहस्ते जलं क्षिपेत् य-
ज्ञसाधनभूता या विश्वस्याघप्रणाशिनी विश्वरूपधरो देवः प्रीयतामनया गवा अनुब्रज्य च तां येत्र ब्राह्मणेन सम-
न्वितां गोमतीं तु ततो विद्यां जपेत्प्रयतः शुचिः उद्दिश्य वासुदेवं च प्रीयतामिति वाचनं पात्रं मनसि संचिंत्य तोय-
मप्सु विनिःक्षिपेत् जलशायी ब्रह्मपिता पद्मनाभः सनातनः अनंतभोगशयनः प्रीयतां परमः पिता गोमती
विद्या महाभारते दर्शिता ॥ गावो मामुपतिष्ठंतु हेमशृंग्यः पयोमुचः सुरभ्यः सौरभेय्यश्च सरितः सागरं यथा
गा वै पश्याम्यहं नित्यं गावः पश्यंतु सर्वदा गावोऽस्माकं वयं तासां यतो गावस्ततो वयं तथा यमेनापि गावः सु-
रभयो नित्यं गावो गुग्गुलुगंधिकाः गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् अन्नमेव परं गावो देवानां
हविरुत्तमम् जीवनं सर्वभूतानां रक्षंति च वहंति च हविषा मंत्रपूतेन तर्पयंत्यमरान्दिवि ऋषीणामपि
होतॄणां गावो होमे प्रतिष्ठिताः सर्वेषामेव भूतानां गावो मंगलमुत्तमं गावः सर्वस्य लोकस्य गावो धन्याः स-
वाहनाः नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ब्राह्मणाश्चै-
व गावश्च कुलमेकं द्विधा कृतं एकत्र मंत्रास्तिष्ठंति हविरन्यत्र तिष्ठतीति अत्र दक्षिणामाह वसिष्ठः सुवर्णं
दक्षिणा परा। सुवर्णं पावनं प्राहुः परिमाणं परं तथा अत्र परिमाणं परं तथेत्यत्रापि सुवर्णशब्दसंबंधात्परि-
माणविशेषावगतेरैच्छिकपरिमाणसुवर्णदक्षिणादानं व्यावर्त्यते तच्च शक्तविषयं अशक्तः शक्त्या तु यज-
मानस्ततो दद्याद्यथाशक्त्या तु दक्षिणामिति ब्रह्मवैवर्तवाक्येन ततोऽप्यल्पाया अपि दक्षिणाया अभ्यनुज्ञानात्
गोदानमात्रप्रार्थनामंत्रमाह वसिष्ठः घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः घृतनद्यो घृतावर्तास्ता मे सं-
तु सदा गृहे घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितं घृतं मे सर्वतश्चैव गावां मध्ये वसाम्यहं इति गोदानविधिः
अथ कार्त्तिकोद्यापनविधिः। एवं चातुर्मास्यव्रतोद्यापनमपि कार्यं अथात्रैव भीष्मपंचकोद्यापनम् तत्रै-
कादश्यां कृतस्नापनपूजनांते अग्निं प्रतिष्ठाप्य अन्वादध्यात् अत्र प्रधाने विष्णुं इदं विष्णुः अतो देवा इति मं-
त्राभ्यामष्टाक्षरद्वादशाक्षरविद्याभ्यां प्रत्येकमष्टोत्तरशताहुतिभिश्च भीष्मपंचपांडवद्रौपदीनां नाममंत्रैः ब्रह्मा-
दिमंडलदेवताग्रहादींश्च पायसचर्वाज्यैः प्रत्येकमेकैकयाहुत्या प्रायश्चित्तांते स्विष्टकृद्धोमेनाहं यद्वा ततो
भीष्मादिमूर्तिं शय्यागोदानादि कृत्वा पूर्णाहुतिमभिषेकं च कृत्वा अच्छिद्रावधारणम् अच्छिद्रावधारणा-
मंत्राः व्रतच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि एकमासं द्विमासं वा त्रिमासं वा चतुष्टयम् दिनानि दशपं-
चादिदिनमेकं दिनद्वयं यत्किंचिन्नियमं चापि शाकपत्रादिभोजनम् मूलिकामत्स्यमांसादि वृंताकादि फ-
लानि वा तत्सर्वं पूर्णतां यातु निष्ठे भीष्मपंचके सर्वम् व्रतवाच्छिद्रं ब्राह्मणानां प्रसादतः ब्राह्मणा यानि भाषं-
ते तानि मन्यंते देवताः उपवासो व्रतं तीर्थस्नानदानफलं च यत् विप्रैः संपादितं यस्य संपूर्णं तस्य तद्भवेत्
ब्राह्मणा जंगमं तीर्थं निर्मलं सर्वकामिकम् येषां वाक्योदकेनैव शुद्ध्यंति मलिना जनाः यद्ब्राह्मणास्तुष्टतमा
वदन्ति तद्देवताः कर्मभिराचरन्ति तुष्टेषु तुष्टास्तु नयो वदन्ति प्रत्यक्षदेवेषु परोक्षदेवान् व्यासवाल्मीकच्यव-
नात्रिपराशरवसिष्ठयोः नारदस्य भृगोरत्र्यास फलं कृतमस्तु ते मंत्रार्थाः सफलाः संतु सफलाः संतु वो मखाः

शत्रूणां वृद्धिनाशोऽस्तु मित्राणामुदयोऽस्तु वः इत्यच्छिद्रावधारणं सर्वव्रतेषु तेज्ञेयं ततस्त्रिंशच्च नामानि पूजयेच्च यथाविधि विष्णुं विष्णुं महाविष्णुं हरिं कृष्णमधोक्षजं केशवं माधवं रामं चाच्युतं पुरुषोत्तमं गोविंदं वामनं श्रीशं श्रीकंठं विश्वसाक्षिणं नारायणं मधुरिपुमनिरुद्धं त्रिविक्रमं वासुदेवं जगद्योनिं शेषतल्पगामं तथा संकर्षणं च प्रद्युम्नं दैत्यारिं विश्वतोमुखं जनार्दनं धराधारं श्रीधरं च समर्चयेत् इति त्रिंशन्नामानि मासोपवासवत्तु मासादिव्रतेषु विष्णुपूजने विप्रपूजने च यथासंभवमूह्यानि अथ कार्त्तिक्यां मार्कंडेयपुराणादानमुक्तं नारदीये मार्कंडेयाभिधं वत्स लभेत्स परमां गतिं यस्त्वप्याकुरुते चैतत्स्वेवं स लभते पदं तस्य यस्त्विह लिखितायः सौवर्णाक्षरैः संयुतं कार्त्तिक्यां द्विजवर्याय स लभेद्ब्रह्मणः पदमिति मार्कंडेयपुराणदानं ॥ स्वस्ति श्रीरणवीरसिंहधरणीपालो वदान्याग्रणी नानाशास्त्रविचारसाररसवित्सद्धर्मरक्षकः धर्माधर्मविभागकृद्गुणपतेः पादाब्जचारी रतो जीयात्पुत्रकलत्रमित्रसहितः संपालयन्क्ष्मां सदा १ रणवीरसिंहभूपेशकारिते कृत्यसागरे अभूत्कार्त्तिककृत्यानां रम्यो रत्नसमुच्चयः ॥ इति श्रीकृत्यरत्नाकरे कार्त्तिकमासकृत्यरत्नसमुच्चयः ॥ * ॥ * ॥ * ॥ * ॥ * ॥

॥ ॐ ॥ अथ मार्गशीर्षमासकृत्यं ॥ * ॥ वृश्चिकसंक्रमणात्पूर्वाः षोडश घटिकाः पुण्यका-
लः देवीपुराणे मार्गे रसोत्तमं दद्यात्कृतं पौषे महाफलं तिलान्माघे तु निर्दिष्टं समयान्यानि फाल्गुने विवि-
धानि च वस्त्राणि चैत्रे दद्याद्द्विजोत्तमे वैशाखे यवगोधूमान् ज्येष्ठे तोयभृतं घटं आषाढे वंदनं देयं सकर्पूरं
महाफलं नवनीतं नभोमासि छत्रं प्रौष्ठपदे स्मृतं गुडशर्करसर्पींष्यानलडुकानाश्विने शुभे दीपदानेन म-
हापुण्ये कार्त्तिके यः प्रयच्छति सर्वान्कामानवाप्नोति क्रमेणेति तदुदाहृतं व्रतान्ते गां शुभां दद्यात्सवत्सां कांस्य-
दोहनां स्वभावशुद्धे विधिवत्पूजयित्वा द्विजोत्तमे दातव्या वीतरागे च कामक्रोधविवर्जिते अयाचके सदा-
चारे विनीते विनयान्विते गोदानाल्लभते कामान्नो लोके सुमनोहरान् इति मार्गमाससमारभ्य वर्षमात्रसाध्यं
एकवत्सरनिर्वाह्यं प्रतिवर्षमेकैकमासक्रमेण द्वादशवर्षसाध्यमपि क्रमेणोदसुदाहृतमिति व्यर्थत्वप्र-
संगात् द्वादशवर्षसमाप्तिरिति इति मार्गादिव्रतं अस्मिन्मासे विष्णुपूजाव्रतं वाराहे ये यजंति वराहे मार्गे
मासि तेवै द्विजाः तान्सर्वाननुगृह्णामि हव्यकव्यपथि स्थितान् यजेति मामिति शेषः अन्नदानविशेषो दा-
नसागरे खरोष्ट्राश्वतरीनागान्सकलान्सुज्यजाविकान् केशवप्रीणनार्थाय मासि मार्गशिरे नरैः भुंजीत प्रग-
ल्भो रथ इति दानसागरः अजः छागः अविर्मेषः एतान्मार्गशिरे देयानाह अन्नलवणदाने मार्गे रसोत्तमं द-
द्यात् रसोत्तमे लवणं विष्णुधर्मोत्तरे लवणं मार्गशीर्षे तु दत्वा सौभाग्यमश्नुते अथ व्रतानि महाभारते मार्गशी-
र्षं तु यो मासमेकभक्तेन संक्षिपेत् भोजयेद्ब्राह्मणान्भक्त्या मुच्यते सोपि किल्बिषैरिति स्कांदे एकभक्तेन यो मर्त्यो
मार्गमासं तु संक्षिपेत् स तेन कर्मणा युक्तः सुभगो भवति सदा अथ तीर्थविशेषः ग्रहणमुपक्रम्य देवीपुराणे
मार्गशीर्षे तु देविकेति पद्मपुराणे षष्टितीर्थसहस्राणि षष्टिः कोट्योर्धकोटिकाः आयांति देविकातीर्थं मार्गशीर्षे
न संशयः स्नापयित्वा व्रतिंचयं प्रयांति निजलेखया मार्गकृष्णप्रतिपद्गंगायोगविशेषमुक्तो भविष्योत्तरे रोहिणी
प्रतिपद्युक्ता मार्गे मासि सितेतरा कृष्णा प्रतिपदित्यर्थः गंगायां यदि लभ्येत सूर्यग्रहशतैः समा मार्गकृष्णद्वितीया-
यां कृत्यविशेषाभावात् तिथिपत्वेन ब्रह्मणोर्चनादिव्रतं द्वितीयासामान्यनिर्णये भिहितं मार्गतृतीयामारभ्य
सौभाग्यसुंदरीव्रतं कर्णाटेषु प्रसिद्धं तत्र चतुर्थीविद्धायां कार्य्यं न द्वितीयाविद्धायां द्वितीयावेयद्दिता तृतीया या-
सिता भवेत् चतुर्थी योगिनी किंचिल्लुद्धावापि यदा भवेदिति कथायामुक्तेः व्रतार्के नारद उवाच भगवन्ते प्रजाः
सृष्टा नानावर्णास्तथा गुणाः स्वेदजाश्चांडजाश्चैव उद्भिज्जाश्च जरायुजाः देवासुराः सगंधर्वाः सयक्षोरगराक्षसाः
एके सद्रूपाः सुभगा बलिनश्चापरे तथा तथान्ये दुःखसंयुक्ताः काणमूकाश्च पंगवः दुःशीला दुर्भगा दीनाः परक-
र्मकराः पराः एतन्मे हृदि संताप संशयं छेत्तुमर्हसि ब्रह्मोवाच शृणु वत्स प्रवक्ष्यामि त्वं भक्तोसि प्रियोसि मे कर्म-
बीजप्ररूढं हि शरीरं पांचभौतिकं येदत्तदाना जायंते सद्रूपाः सात्विका नराः तपःप्रभावाज्जायंते बलिनः सुभगास्त-
था अदत्तदाना जायंते परकर्मपराः सदा परापवादवक्तारः परद्रव्यापहारिणः हंतारः प्राणिनां चैव विश्वस्तानां च
भक्तकाः क्रमशो नरकान्भुक्त्वा जायंते कुत्सिता नराः दरिद्राः पंगवो मूकाः काणा दुर्भगाः कृशाः नानादेवं स्वक-
र्मकैर्नरा नार्य्यश्च दुःखिताः नारद उवाच उपायं ब्रूहि भगवन्येन कर्मक्षयो भवेत् तपो दानं व्रतं तीर्थं शरीरस्य च
शोषणं दुःखसंतापतप्तानां जीवानां तात मे वद ब्रह्मोवाच शृणु नारद यत्नेन व्रतानामुत्तमं व्रतं सर्वदुःखप्रश-
मनं व्याधिदारिद्र्यनाशनं सर्वसौभाग्यजननं पुत्रपौत्रप्रदायकं सद्रूपदं च सौभाग्यकारणं कामदं तथा नारीणां
च विशेषेण सर्वसौभाग्यदायकं वसिष्ठाय पुरा प्रोक्तमृषीणां च समागमे कैलासशिखरे रम्ये शंकरेण महात्मना
नारद उवाच कस्मात्प्रोवाच भगवान्कृपा कस्मादजायत एतन्मे ब्रूहि भगवन् शंकरो लोकशंकरः ब्रह्मोवाच दृष्ट्वा
दुर्नेच सौभाग्यमरुंधत्या जगत्प्रभुः तथा रूपं च शीलं च सौभाग्यमतुलं तथा कृत्वा शिरःप्रकंपं च जहास मुदु शंक-
रः पृष्टवान्कारणं देवं वसिष्ठः स्मितकारणं ईश्वर उवाच अनेन व्रतस्य माहात्म्याद्रूपतास्मि सममाः पुराजन्म-
नि शूद्रस्य दास्यकर्मकरी सदा उच्छिष्टभोजना नित्यमुच्छिष्टशयना सदा कुरूपा दुर्भगा दीना रत्नगद्गदभाषिणी नाम्नामेध

वती ख्याता ऽदर्शवृन्मशुभा एकदा पेषणार्थं सा गता ब्राह्मणसन्निधौ कृतं व्रतं च नारीणां वाच्यमानं द्विजन्म
ना सौभाग्यसुंदरी नाम तृतीया सर्वकामदा ज्ञानचौरागमे शास्त्रे प्रार्थितो नेहमया तथा चीर्णा तासां प्रसंगेन मे
तव व्यापितद्व्रतं कुत्सितं चैव नैवेद्यं दत्तं दानं न किंचन हविष्यं च तयोच्छिष्टं विहितं पारणे तथा केवलं च
व्रतं चीर्णं श्रद्धापूतेन चेतसा श्रद्धया धार्यते धर्मो बहुभिर्नार्थराशिभिः ऋषयश्चक्रिरे धर्मं श्रद्धापूतेन चे
तसा तेन कर्मविपाकेन निषधाधिपतेः सुता सद्रूपा च सुशीला च सर्वलक्षणसंयुता संपूर्णावयवा शो
नातस्या देव्याः प्रभावतः उच्छिष्टभोजना जाता निषदानां वयोनिषु अदत्तदाना संजाता नानायसी भोगवर्जिता
व्रतप्रभावाज्जायंते सद्रूपाश्च पतिव्रताः महासौभाग्यसंयुक्ता साक्षाल्लक्ष्मीरिवापरा सर्वकामप्रदा देवी नं
दिनी वसते गृहे तद्व्रतं वाक्ति देवर्षे सर्वकामफलप्रदं नारद उवाच व्रतस्यास्य विधिं ब्रूहि को विधिः किं च पू
जनं कस्मिन्मासे प्रकर्तव्यं देवता का प्रकीर्तिता किं पुष्पं किं च नैवेद्यं ध्यानं कस्य च पूजनं ब्रह्मोवाच व्रतस्या
रंभणं कार्यं मार्गशीर्षे यथा चके द्वितीया वेधरहिता तृतीया या सिता भवेत् चतुर्थी योगिनी किंचिद्युक्ता वापि य
दा भवेत् उपवासं प्रकुर्वीत दंतधावनपूर्वकं अपामार्गेण कुर्वीत दंतशुद्धिं तदा व्रती उमे देवि नमस्तुभ्यं शंक
रस्यार्द्धहारिणि प्रसीद श्रीमहेशानि करिष्ये व्रतमुत्तमं सान्निध्यं कुरु मे देवि व्रतेस्मिन्हरवल्लभे इति नियम
मंत्रः सौभाग्यसुंदरी नाम वशिनी सा प्रकीर्तिता सर्वकामप्रदा देवी सर्वसत्ववशंकरी तस्या दर्शनमात्रेण सदा
संजायते जगत् द्रोणपुष्पैश्च संपूज्या दाडिमैश्चार्घ्यहेतवे नैवेद्यं मोदकान्दद्यात्कर्पूरं प्राशयेत्ततः वत्सपौष
सिते पक्षे तृतीयायां व्रतं भवेत् मल्लिकादंतकाष्ठं च मत्रकेण च पूजयेत् राज्यसौभाग्यदां नाम सुंदरीं पूजये
त्ततः धात्रीफलं ददेदर्घ्यं कंकोलं प्राशयेन्निशि नैवेद्यं वटकान्दद्याद्घृतशर्करयान्वितान् कंकोलं तु व
दा प्राश्यं राज्यसौभाग्यहेतवे घृतेन बोधयेद्दीपं रात्रौ जागरणं सदा सर्वकामप्रदा देवी सर्वदुःखहरा परा
सर्वैश्वर्यप्रदा देवी सर्वपापहरा परा एकापि बहुधात्मानं नामरूपविभेदतः माघमासे तु संप्राप्ते वद
दंतधावनम् प्रातः कुर्वीत नियमं रूपसौभाग्यहेतवे अपराह्णे ततः स्नाता सर्वाभरणभूषिता घृतपुष्पै
श्च संपूज्या रूपसौभाग्यसुंदरी नारिकेलार्घ्यदानं च नैवेद्यं शष्कुलीस्मृतं प्राशनं चैव कस्तूरी रूपसौभाग्यसंयु
ता पूजयेन्मासा सर्वकामसौभाग्यसुंदरी फाल्गुनस्यासिते पक्षे शतनियमसंयुता सौभाग्यसुंदरी बिल्व
दंतकाष्ठं तु कारयेत् स्नानं कृत्वा तथा नारी कोचनौरैश्च पूजयेत् नैवेद्यं सक्तवस्तत्र घृतशर्करयान्विताः य
क्षकर्दमजो लेपो धूपश्चागुरुसंभवः सर्वासु च तृतीयासु विधिरेष उदाहृतः बीजपूरार्घ्यदानं च प्राशनं चंद
नोदकम् प्राशनस्य प्रभावेन सर्वान्कामानवाप्नुयात् पारणं च प्रकर्तव्यं सहसर्वैश्च बांधवैः चैत्रे मासि
प्रकर्तव्या तृतीया पापनाशिनी प्रयत्नेन च कर्तव्या सुखसौभाग्यसुंदरी दंतकाष्ठं प्रकुर्वीत जंबूवृक्षसमु
द्भवम् पूजा दमनकैः प्रोक्ता अर्घ्यं बिल्वफलं स्मृतम् नैवेद्यं मंडकाः प्रोक्ताः शर्करा घृतसंयुताः सुखसौभा
ग्यसिद्ध्यर्थं प्राशनं वज्रधारिणः वैशाखस्यासिते पक्षे तृतीयायामुपोषयेत् मालतीदंतकाष्ठं च नियमग्र
हणं ततः पतिसौभाग्यदां देवीं सुंदरीं पूजयेत्ततः पद्मैः सितैः सुरभैश्च मल्लिकाभिश्च पूजनम् दधिभक्तं
सकर्पूरं शर्करा घृतसंयुतम् नैवेद्यं कल्पयेद्देव्या अर्घ्यं चाम्रफलं भवेत् हेमोदकं च संप्राश्य पुष्टिसौभा
ग्यमाप्नुयात् ज्येष्ठमासि तृतीयायामुपवासपरा भवेत् पृथिकादंतकाष्ठं च लावण्यसुभगाशिनी म
ल्लिकाकुसुमैः पूज्या यक्षकर्दमचर्चितैः लावण्यसुभगां देवीं सुंदरीं पूजयेत्ततः कदलीफलार्घ्यदानं च
नैवेद्यं घृतपूरिकाः मौक्तिकांबु ततः पीत्वा लावण्यसुभगो भवेत् आषाढे च ततो मासि पक्षे सौभाग्यसुंदरी म
दंतकाष्ठं प्रकुर्वीत प्रातस्त्वाशोकवृक्षजं नियमं च प्रगृह्णीयात्तृतीयायां प्रयत्नतः बिल्वपत्रैश्च कोमलैश्च
पतिसौभाग्यसुंदरी जंबूफलार्घ्यदानं च नैवेद्यं पायसं स्मृतं सपत्नीनां सुखं नैव सा पश्यति कदाचन श्रा
वणे मासि संप्राप्ते तृतीयायामुपोषयेत् विभीतं दंतकाष्ठं च [illegible] पूजनं सर्वैश्वर्यं च सौभाग्यसु

दंरीं पूजयेत्ततः नैवेद्यं शुभ्रकासारं धूपदीपादिकं तथा कदलीफलार्घ्यदानं च शशाङ्केनाग जंतपयः गजाश्वरथदासी
नां हेमरत्नादिवाससां ईश्वरी सर्वलोकानां भगवत्याः प्रसादतः मासि भाद्रपदे प्राप्ते पूज्या सौभाग्यसुंदरी दंतकाष्ठं तु
कर्तव्यं मातुलिंगसमुद्भवं उत्पलैः पूजयेद्देवीमर्घ्यं कर्कटकीफलं नैवेद्यं शोकवर्त्तिं विधिवन्माणिक्यं जं पयः क
र्पूरागुरुकस्तूरी शुचदेशे सुगंधिता आश्वयुज्यसिते पक्षे तृतीयायां व्रतं चरेत् दंतकाष्ठं प्रकर्तव्यं लक्षहस्तसमुद्भ
वं पूजयेत्परया भक्त्या पूज्या सौभाग्यसुंदरी उत्पलैः शतपत्रैश्च पूजा कार्या प्रयत्नतः नारंगमर्घ्यदानं च कूष्मांडं
वा प्रकल्पयेत् नैवेद्यं च गणकांश्च श्वानघृतशर्करयान्वितान् औदुंबरपयः प्राश्य सुंदरी प्रीयतां मम पुत्रपौत्र
समायुक्ता सुखं सौभाग्यसुंदरी कार्तिके मासि संप्राप्ते तृतीयामुपवासतः औदुंबरं दंतकाष्ठं कृत्वा व्रतमुपाचरेत्
केतकीभिश्च सौभाग्यनाम्ना संयोगसुंदरी निवेदयेद्घृतपूर्णांश्च सुगंधाञ्छालिसंभवान् शृंगाटं चार्घ्यदाने च लवं
गं प्राशयेत्ततो सावियोगं न चाप्नोति पितृमातृसुतादिभिः एवं चीर्णे व्रते कुर्यादुद्यापनविधिं ततः सर्वशास्त्रमयी
यानं सर्वागमविशारदं आचार्यं प्रार्थयेत्स्नातं मार्गशीर्षे यथाविधि चीर्णव्रतानां महाचार्य उद्यापनविधिं मम व्रत
वैकल्यनाशाय यथाशास्त्रं समाहितः सुंदरीमंडलं कार्यं गौरीतिलकमेव च उमामहेश्वरं देवं सौवर्णं तत्का
रयेत् व्रतारंभे यथाशक्त्या राजतं वापि कारयेत् वित्तशाठ्यं न कुर्वीत सम्यक्द्ध्येफलार्थिनी वर्षं प्रपूज्य तां मूर्ति
मामेवं मंडलेर्चयेत् सर्वोपहारैर्गंधैश्च पुष्पैर्नानाविधैरपि एकैव सा जगन्माता बहुरूपैर्व्यवस्थिता रूपैर्द्वाद
शभिश्चैव पूज्या सौभाग्यसुंदरी ततः पद्मनिभां देवीं रक्तवस्त्रोपशोभितां रक्ताभरणशोभाढ्यां रक्तकुंकुमच
र्चितां ध्यात्वा त्वेवं विधां देवीं पूजयेदेकमानसा मंदारमालाकुलितालकायै कपालमालांकितशेखराय
दिव्यांबरायै च दिगंबराय नमः शिवायै च नमः शिवाय । इति सर्वोपचारपूजामंत्रः ततः सर्वाणि पुष्पाणि नै
वेद्यानि फलानि च अर्घ्यार्थं परिकल्प्यानि सर्वकामार्थसिद्धये उमे देवि नमस्तुभ्यं शंकरस्यार्द्धहारिणि प्रसी
द श्रीमहेशानि गृहाणार्घ्यं नमोस्तु ते रात्रौ जागरणं कार्यं गीतवादित्रनिस्वनैः ततः प्रभाते विमले स्नात्वा हो
मविधानतः कुसुंभकुसुमैर्होमं किंशुकैर्वापि कारयेत् अष्टोत्तरशतं पूर्णं मधुनाज्ययवं सेयुतं तदभावे
तु कर्तव्यं शतपत्रैर्विधानतः आसनेन च मंत्रेण पौर्णमुख्यं समाचरेत् भोजयेच्च प्रयत्नेन चत्वार्यष्टौ प्रय
त्नतः मिष्टान्नेन सपत्नीकान्भुक्त्वा वै परिधापयेत् वस्त्रालंकरणैश्चैव यथाशक्त्या प्रपूजयेत् सौभाग्यवस्त्र
वैकैकं नारीणां चैव दापयेत् ततो हस्ते प्रदातव्यं कुंकुमं लवणं गुडं नारिकेलं जपावल्ली दर्वीं सिंदूरकज्जलं
मंगलाष्टकमेतद्धि दत्वा सौभाग्यमाप्नुयात् आचार्यं च सपत्नीकं वस्त्रालंकरणैः शुभैः परिधाप्य यथाश
क्त्या मंडलं तत्समर्पयेत् प्रार्थयेच्च ततो देवीं सर्वसौभाग्यसुंदरी पूजितासि मया देवि सर्वसौभाग्यसुंदा
रि दत्वा मत्प्रार्थितान्कामान्गच्छ देवि यथासुखं । मूर्तिदानांते आचार्यं प्रार्थयेत् मूर्तिं च मंडलं देव्याः उप
हारांश्च सर्वशः गुरो गृहाण सर्वं त्वं सुंदरी प्रीयतामिति त्वत्प्रसादान्मया चीर्णं व्रतमेतत्सुदुर्लभं त्वमत्र विप्रश्रा
देलप्रसादसुमुखो भव एवं चीर्णव्रता नारी कृतकृत्या भवेत्सदा येनेदं च कृतं वत्स संप्राप्तं जन्मनः फलं नातः
परतरं किंचिद्व्रतं सौभाग्यकारकं देहांते शिवलोके तु भोगान्भुंक्ते यथेप्सितान् ॥ इति व्रतार्के मा
र्गकृष्णसौभाग्यसुंदरीतृतीयाव्रतं मार्गकृष्णचतुर्थ्यां विशेषव्रतानुक्तेः तिथिपत्रे गणेशपूजाव्रतं संकष्ट
चतुर्थीविधिना कार्यम् एवं मार्गशीर्षपंचम्यामपि विशेषकृत्याभावे एतद्द्वयगतासु सर्वासु पंचमीषु तिथि
पत्रे नशेषादयो नागाः पूज्याः उक्तं च शेषादीनां फणीनां च पंचम्यां पूजनं भवेदिति पंचमीसामान्यनिर्णयोक्तेः
अथ मार्गकृष्णषष्ठ्यादि सर्वासु षष्ठीषु स्कंदषष्ठीव्रतं भविष्योत्तरे ॥ कृष्णपक्षे प्रयत्नेन कृत्वा ना
कं यथाविधि मासि मार्गशिरस्यादावेकभुक्तानि पूजयेत् विधिवत्प्राश्य गोमूत्रं मनाहारो निशि स्वपेत् अति
रात्रस्य यज्ञस्य फलं प्राप्नोति मानवः पौषे चैवं समुद्दिश्य भानुमंत शुशंति च वाजपेयफलं तस्य हुतं प्राप्य
लभन्नरः उपांतिवदंतीत्यर्थः माघे दिवाकरं नाम कृष्णषष्ठ्यां नियोजयेत् निशि पीत्वा तु गोशृंगं गोमेयफल

मश्नुते मार्तंडं फाल्गुने मासि पूजयेद्दत्वा तिलान् राजसूयस्य यज्ञस्य फलं पुण्यमवाप्नुयात् चैत्रे तु हंसनामानं कृष्णषष्ठ्यां प्रपूजयेत् शृंगोदकं पिबेन्नरः प्राप्नुयाद्धयमेधफलं लभेत् वैशाखे कृष्णनामानं कृष्णषष्ठ्यां प्रपूजयेत् पीत्वा कुशोदकं पुण्यं जितक्रोधो जितेंद्रियः महाश्वमेधयज्ञस्य वै न तेयफलं लभेत् ज्येष्ठे दिवस्पतिं पूज्य गवां शृंगोदकं पिबेत् गवां कोटिप्रदानस्य निखिलं फलमाप्नुयात् आषाढे त्वर्कनामानमिष्ट्वा प्राश्य पंचगोमयं प्रयात्यर्कसलोकत्वं वर्षाणामयुतं विभो श्रावणे यमनामानं पूजयित्वा पयः पिबेत् वर्षाणामयुतं साग्रं मोदते भास्करालये मासि भाद्रपदे षष्ठ्यां भास्करं नाम पूजयेत् प्राशनं पंचगव्यस्य सर्वयज्ञफलं लभेत् मासि चाश्वयुजे षष्ठ्यां भगाख्यं नाम पूजयेत् दूर्वांकुरं समक्ष्याश्य राजसूयफलं लभेत् कार्तिके मासि षष्ठ्यां तु भगाख्यं नाम पूजयेत् गोमूत्रमथ प्राश्नीयादश्वमेधफलं लभेत् वर्षांते भोजयेद्विप्रान्सूर्यभक्तिसमन्वितान् पायसं मधुसंयुक्तमाज्येन सुपरिप्लुतं शक्त्या हिरण्यवासांसि भक्त्या तेभ्यो निवेदयेत् सूर्याय गां च कृष्णां च संप्रदद्यात्पयस्विनीं वर्षमेकं चरेदेवं नरं तत्पूर्णायो नरः कृष्णषष्ठीव्रतं भक्त्या तस्य पुण्यफलं शृणु सर्वपापविनिर्मुक्तः सर्वकामसमन्वितः मोदते सूर्यलोके तु स नरः शाश्वतीः समाः ॥

इति श्रीभविष्योत्तरे मार्गादिकृष्णषष्ठीव्रतं मार्गकृष्णसप्तम्यामप्येवं व्रतं कार्यं सप्तम्याः सूर्यदैवतत्वादिति। सप्तमीकृत्यं मार्गकृष्णाष्टम्यां कालभैरवोत्पत्तिः तस्यामुपवासादि कार्यं तदुक्तं काशीखंडे ॥ मार्गशीर्षासिताष्टम्यां कालभैरवसन्निधौ उपोष्य जागरं कुर्वन् सर्वपापैः प्रमुच्यते विश्वलिंगेऽपि तो । कृत्वा च विविधां पूजां महासंभारविस्तरैः नरो मार्गासिताष्टम्यां वार्षिकं विघ्नमुत्सृजेत् आविरासीत्तदा लोकान्भीषयन्निखिलानपी। ति तत्रैवोक्तेः नारदीयेऽपि यत्किंचिदशुभं कर्म कृतं मानुष्यजन्मनि तत्सर्वं विलयं याति कालभैरवदर्शनादिति अत्र पूजोपवासजागरणानि प्रधानानि एतेनोपोषणस्यांगभूतमर्घ्यमिहस्मृतं तथा जागरणं रात्रेरुपजायामवतष्ट्यमिति वचनादुपोषणस्यैव प्राधान्यमिति प्रत्युक्तं वाक्यांतरविरोधेनोपोषणस्यांगभूतमिति तस्योत्तरार्द्धेऽनुषंगात् इयं पूर्वविद्धा ग्राह्या कृष्णपक्षगतत्वात् दुर्व्रतत्वात्कालव्याप्तिलाभाच्च यत्तु केचिन्मध्याह्नस्याविर्भावकालत्वान्मध्याह्नव्यापिनी ग्राह्येत्युक्तं तदुक्तं आविर्भावकालव्यापिन्याः कर्तव्यत्वेनानभिधानात् वस्तुतस्तु आविर्भावोऽपि न मध्याह्न एव मध्ये वर्तमानकृत्याभिधानात् अतः सूर्यास्तमुपागमदित्यभिधानात् अस्यामेवाष्टम्यामनघाष्टमीव्रतं हेमाद्रौ भविष्ये कृष्णाष्टम्यां मार्गशीर्षे दीपसंदर्भनिर्मिते अनघं चानघं च कुशैः समन्वितं स्थापयित्वा शुभे देशे गोमयेनानुलेपिते पूजयेदिति शेषः इदं व्रतं वर्षमात्रं कर्तव्यं इत्यनघाष्टमीव्रतं इयं मार्गकृष्णाष्टमी लक्ष्मीकल्पादिः कल्पादिकृत्यं श्राद्धदानाद्यत्तयफलं भवतीत्युक्तं अस्यामेवाष्टम्यां शैवव्रतारंभो भविष्यपुराणे। कृष्णाष्टम्यां प्रयत्नेन कृत्वानक्तं प्रयत्नतः मासि मार्गशिरे वीरं शंकरं देवमर्चयेत् पीत्वा शक्त्या च गोमूत्रमनाहारं निशि स्वपेत् अतिरात्रस्य यज्ञस्य फलमष्टगुणं भवेत् एवं पौषे तु संपूज्य शंभुमीशानमीश्वरं कृष्णाष्टम्यां हुतं प्राश्य वाजपेयफलं लभेत् माघे महेश्वरं देवं कृष्णाष्टम्यां प्रपूजयेत् निशि पीत्वा च गोमूत्रं गोमेधफलमश्नुते फाल्गुने च महादेवं संपूज्य प्राशयेत्तिलान् राजसूयस्य यज्ञस्य फलमष्टगुणं भवेत् चैत्रे च स्थाणुनामानं कृष्णाष्टम्यां प्रपूजयेत् यवांश्च भर्जितान्प्राश्य सोमाश्वमेधफलं लभेत् वैशाखे शिवनामानं पूजयित्वा प्रयत्नतः रात्रौ कुशोदकं पीत्वा सर्वमेधफलं लभेत् ज्येष्ठे पशुपतिं पूज्य गवां शृंगोदकं पिबेत् गवां कोटिप्रदानस्य यत्फलं तदवाप्नुयात् आषाढे चोग्रनामानमिष्ट्वा प्राश्य पंचगोमयं वर्षाणामयुतं साग्रं शिवलोके महीयते श्रावणे मासि पूजार्कं प्राशयेन्निशि गोरसं गोसवस्य तु यज्ञस्य फलं प्राप्नोति मानवः त्र्यंबकं भाद्रपदे कृष्णाष्टम्यां प्रपूजयेत् संप्राश्य बिल्वपत्रं च वाजपेयफलं लभेत् मासि चाश्वयुजे प्रोक्तं प्राशनं तंदुलोदकं नाम्ना मैशं यजेद्देवं पुंडरीकफलं लभेत् मासे तु कार्तिके ह्यष्टम्यामीशानाख्यं प्रपूजयेत् पंचगव्यं समश्नीत पीत्वा पंचयज्ञफलं लभेत् वर्षांते भोजयेद्विप्रान् शिवभक्तिपरायणान् पायसं मधुसंयुक्तं घृतेन सुपरिप्लुतं निवेदये

तरुणाय कृष्णां गां तु पयस्विनीं वर्षमेकं तथा कुर्यान्नैरंतर्येण यो नरः कृष्णाष्टमीव्रतं भक्त्या तस्य पुण्यफलं शृ-
णु सर्वपापविनिर्मुक्तः सर्वैश्वर्यसमन्वितः वसेच्छिवपुरे नित्यं न चेहायाति नाकतः तदेतयोः षष्ठ्यष्टमीस्कंदव्रत-
योः कृत्वा नक्तमिति नक्तं व्रतं संकल्प्येत्यर्थः न तु नक्तभोजनानंतरं रात्रावेव पूजेति बोद्धव्यं एवं पौषेपीति प्राशनं
तदनंतरमनाहारत्वं चातिदिश्यते एवं मासांतरेष्वपि विहितद्रव्यविशेषं निशि प्राश्यानाहारः स्वपेत् यत्रापि विशि-
ष्य तिथिर्निशा च न श्रुता तत्रापि मासे कृष्णाष्टम्यां निशि पूजेति बोध्यं पूर्वापरपरामर्शात् तदेतयोर्व्रतयोः प्रतिमा-
सं प्राशनफलं गुणरीत्या संवत्सरफलं चाधिकारविशेषणमिति समंजसमिति केचित् अन्ये तु तत्प्रयोगमा-
त्रे समानानां लघुतासामर्थ्यैकतया प्रकरणप्रकृत्या यथोपजीव्यत्वेन तथात्वं अनंतफलश्रुतेरविशेषादधिका-
रसंबंधे प्रयोगापेक्षायां तेनाल्पापरप्रयुक्त्युपजीवितमिति न गुणफलरीतिः किंतु प्रतिमाससंवत्सरयोः फ-
लश्रुतेरविशेषान्नियोगभेदः इच्छाभेदाद्वानुष्ठानव्यवस्थेति ॥ इति भविष्योत्तरोक्तं मार्ग-
शीर्षाष्टमीव्रतं मार्गकृष्णनवम्यां कृत्यविशेषाभावात्सामान्यनिर्णयोक्तं विधेयमिति मार्गकृष्णैकादशी उ-
त्पत्त्याख्या महाभारते ॥ अर्जुन उवाच एकादश्युपवासस्य नक्तभक्तस्य वै तथा एकभक्तव्रतस्या-
पि फलं ब्रूहि जनार्दन श्रीकृष्ण उवाच हेमंते चैव संप्राप्ते मासे मार्गशिरे तथा कृष्णपक्षे तथा पार्थ एकादश्युपो-
षणात् नक्तं चैव तथाज्ञाय दशम्यां नियतः सदा दिवसस्याष्टमे भागे मंदीभूते दिवाकरे दशम्यां चैकभक्तं
च शुचिः शांतो दृढव्रतः ततः प्रभाते संजाते नियमं तु व्रतस्य च मध्याह्ने च ततः पार्थ स्नानं शुचिसमाहितः
स्वगृहे प्रथमं स्नानं वापीकूपेषु मध्यमं उत्तरं पुष्करिण्यां तु नदीनां तु तमोत्तमं नदीनां ब्राह्मणानां तोयं तडागे त-
त्रियोदकम् वैश्यं कूपगतं तोयम् गृहपात्रेषु शूद्रकं क्रोधलोभौ परित्यज्य मिथ्यावादं तथैव च ये
धर्मनिंदां कुर्वंति तेषां संगं परित्यजेत् वर्जयेत्तद्दिने पार्थ निद्राहंकारमैथुनं धर्मशास्त्रविनोदेन तद्दिनं
गमयेत्सदा केशवं पूजयित्वा तु नैवेद्यं भक्तिपूर्वकम् गंधमाल्यं तथा धूपं दीपं चैव प्रदापयेत् रात्रौ जागर-
णं कार्यं कथां श्रुत्वा हरेः प्रियं विप्रेभ्यो दक्षिणां दत्वा प्रणिपत्य क्षमापयेत् यथा शुक्ला तथा कृष्णा भेदं चैव
न कारयेत् विकल्पं यदि कुर्वीत विष्ठायां जायते कृमिः एवं यः कुरुते पार्थ शृणु तस्यापि यत्फलम् वाराण-
स्यां स्थितिः पार्थ षष्टिवर्षसहस्रकैः एकादश्युपवासस्य कलां नार्हति षोडशीं वैधृत्यामपि दानस्य लक्षमे-
कं तु यत्फलम् संक्रांतौ यदि दानानि लक्षसंख्यानि पांडव एकादश्युपवासस्य कलां नार्हति षोडशीं प्रभा-
से चैव यत्पुण्यं सोमपर्वसहस्रके एकादश्युपवासस्य कलां नार्हति षोडशीं कुरुक्षेत्रे च यत्पुण्यं रविलद्ग्र-
हे स्मृतं एकादश्युपवासस्य कलां नार्हति षोडशीं वैशाखी कार्तिकी माघी स्नाने दाने कृते यदि एकादश्युप-
वासस्य कलां नार्हति षोडशीं यदि लक्षं गृहे यस्य भुनक्ति च दिने दिने एकादश्युपवासस्य कलां नार्हति षोड-
शीं गंगासरस्वतीसूर्यतनयास्नानदानकं एकादश्युपवासस्य कलां नार्हति षोडशीं तपोयोगशतदानानि नष्ट-
ज्ञानं च भावना एतद्व्रतसमं पुण्यं न भूतं न भविष्यति गोसहस्रेण यत्पुण्यं वेदवेदांगपारगे तस्माद्दशगुणं पुण्यं
ब्रह्मचारिणि पांडव ब्रह्मचारिसहस्रस्य दाने लक्षशताधिकं तस्मादपि सहस्रस्य भूमिदानं महाफलं भूमेर्द-
शगुणा कन्या सर्वरत्नोपशोभिता कन्यादशगुणा विद्या लभते नात्र संशयः विद्यादशगुणं चान्नं यो ददाति बु-
भुक्षिते अन्नदानात्परं दानं न भूतं न भविष्यति भूमिस्थायेन तृप्यंति स्वर्गस्थाः पितृदेवताः अन्नाच्छतगुणं पु-
ण्यं गोमेधे च मखे कृते गोमेधाद्दशगुणमश्वमेधे कृते सति अश्वमेधसहस्रेण नरमेधेन तत्फलम् नरमे-
धसहस्राणि केदारोदकपानतः केदारमुदकं पीत्वा मंत्रपूताश्च ये नराः तेषां देहे त्रयो देवा ब्रह्मविष्णुमहेश्व-
राः केदारमुदकं पीत्वा पुनर्जन्म न विद्यते तथैवैकादशी पुण्या गर्भवासक्षयंकरी एवं तव मयाख्यातं यद-
न्यैरपि दुर्लभम् पुण्यसंख्यां न जानामि यत्त्वं पृच्छसि पांडव एतस्य चार्धपुण्यं स्यात् नक्तभोजनतो
न च नक्तस्य चार्धपुण्यं स्यादेकभक्ते तथैव च ते नराः पुण्यकर्माणो ये तां भक्त्या प्रकुर्वते अर्जुन उवाच ॥

उत्पन्नासाकथंदेवकथंपुण्याधिकाशुभा कथंदेवपवित्राचकथंदेवतवप्रिया श्रीकृष्णउवाच एकादशी
यदापार्थभानुवारेप्रजायते अश्वमेधसमंपुण्यंकोटिहत्याविनश्यति पुरासत्ययुगस्यादौमुरोनामासदा
नवः महाघोरोमहाभीमःसर्वदेवभयंकरः बलाड्यापितस्तेननिजस्थानात्पुरंदरः आदित्याद्याग्रहाः
सर्वेवायुरग्निस्तथैवच नैवप्रतिष्ठितस्तत्रदेवानांकश्चिदर्जुन देवतानिर्जिताःसर्वास्तेनोग्रेणदानवे
ना देवतास्तागताः सर्वायत्रदेवोमहेश्वरः उपायंब्रूहिनोदेवस्वर्गगामस्यकागतिः ईश्वरउवाच गच्छ
न्तुदेवताःसर्वेयत्रदेवोजनार्दनः शरणागतदीनार्तःपरित्राणपरायणः ईशस्यवचनंश्रुत्वागताःस
र्वेसवासवाः त्रिदशास्तत्रसंतस्थुर्यत्रदेवोजनार्दनः तत्रैवसजगन्नाथःप्रसुप्तोजलमध्यगः जलम
ध्येमहायोगीदेवदेवोजगत्पतिः इंद्रउवाच नमस्तेदेवदेवेशमहासुरविमर्दन दैत्यारेपुंडरीकाक्ष
त्राहिनोमधुसूदन त्रिदशाश्चागताःसर्वेभयार्ताः पुरुषोत्तम रक्षनोदेवदेवेशत्वंगतिःसर्वदेहिनाम्
देवाःसर्वेजगन्नाथभयार्तास्त्वांसमागताः शरणंभवदेवेशदेवानांत्वंभवान्गतिः त्वंमातासर्वलोका
नांत्वमेवजगतःपिता त्वंसृष्टिस्त्वंस्थितिश्चैवत्वंचसंहारकारकः त्वंस्वाहात्वंस्वधादेववषट्कारस्त्वमे
वच ओंकारोदेवदेवेशत्वमेवगरुडध्वज त्वंशिवस्त्वंतथाब्रह्मात्वंसूर्यस्त्वंचचंद्रमाः त्वमग्निर्देवदेवेशवा
युराकाशमेवच नत्वयारहितंकिंचित्त्रैलोक्येसचराचरं स्थावरंजंगमंचैवत्वयिसर्वंप्रतिष्ठितं दान
वैर्निर्जिताःदेवाःस्वर्गस्थानान्निराकृताः रक्षमांदेवदेवेशशरणागतवत्सल इंद्रस्यवचनंश्रुत्वाहरि
र्वचनमब्रवीत् श्रीभगवानुवाच कीदृशोदानवःशक्रनामकिंकीदृशंबलं किंस्थानंतस्यदैत्यस्य
सर्वंब्रूहिममाग्रतः इंद्रउवाच सर्वंजानासियोगीशब्रह्मवंशसमुद्भवः तालजंघस्तुनामासीदसु
रोवैमहासुरः महाबलोमहावीर्योब्रह्मवीर्येणगर्वितः तस्यपुत्रोतिविख्यातोमुरोनाममहाबलः पु
रीचंपावतीनामतस्यामेववसत्यसौ पुरंदरमुखादेवाःस्वर्गात्तेननिराकृताः रक्षास्मान्देवदेवेशप्रपन्ना
न्गरुडध्वज अन्यइंद्रःकृतस्तेनचान्यस्तेनहुताशनः सचंद्रग्रहनक्षत्रराशपादिसहितंचयत् सर्वम
न्यत्कृतंतेनसत्यंसत्यंगदाधर इतिश्रुत्वावचस्तेषांप्रोवाचगरुडध्वजः हनिष्येदानवंदुष्टंसर्वदेव
भयंकरं त्रिदशैःसहितोदेवोगतश्चंपावतींपुरीं दृष्ट्वादेवान्समायातान्गर्जमानोमहासुरः असंख्या
नांसहस्राणिदिव्यप्रहरणायुधाः असुरास्ताडयामासुःपुनर्देवान्बलाधिकाः हन्यमानास्ततेदेवाउ
ड्डुवुःसर्वतोदिशः ततस्तेनिर्गताःसर्वेभयभीतादिशोदश हरिस्तमसुरंतत्रतिष्ठतिष्ठेत्युवाचह चक्रं
निरीक्षयामासक्रोधादरुणलोचनः हेदानवदुराचारममबाहून्निरीक्षय ततस्तडुन्तुवंसर्वेपतिता
दानवर्षभाः एकोयंदानवोतिष्ठन्नसुयोधसहारिणा युद्धंकृत्वादानवेननिर्जितोमधुसूदनः नि
र्जितोदेवदेवेशोबाहुयुद्धमयाचत बाहुयुद्धंकृतंतेनदिव्यवर्षसहस्रकं बाहुयुद्धमभूत्पार्थसर्वलोकभ
यंकरं विष्णुःसंत्रासितस्तेनयुद्धभूमेर्विनिर्गतः दानवःपृष्ठतश्चापिगतोवदरिकाश्रमे गुहासिंहावती
नामतत्रसुप्तोजनार्दनः योजनद्वादशमध्येएकद्वारेधनंजय तत्रप्रसुप्तोदेवेशोभयभीतोजनार्दनः दान
वःपृष्ठतोलग्नःप्रविष्टस्तांमहागुहां प्रसुप्तंसहरिंदृष्ट्वादानवेंद्रःप्रहर्षितः सुप्तोमयाहरिर्दृष्टः प्रविष्टःसं
कटेकथं मारयामिनसंदेहोदानवानांभयंकरं निर्गताकन्यकातस्यशरीरान्माधवस्यच तेजस्विनीचशोभा
ढ्यादिव्यप्रहरणायुधा विष्णोस्तेजःसमुद्भूतामहाबलपराक्रमा तयासंमोहितोदैत्योमुरोनामेतिपांडव
युद्धंकृतंतयातेनदानवेंद्रेणकौंतिनं साकन्यायुध्यततदाकोपादरुणलोचना तस्याःकोपेनकौंतेयभस्मी
भूतःसदानवः बहवोदानवास्तत्रसबंधुसपरिग्रहाः निहतेदानवेतत्रगतोदेवःप्रबोधितः पतितंदानवं
दृष्ट्वाहरिर्विस्मयमागतः केनायंनिहतोदैत्यअजस्योममवैरकृत् अन्यद्भुतेकृतंकर्ममकीर्तिहरंवद
नदेवोनगंधर्वोयोजद्यानतदानवं सविस्मयोहरिर्जातोवागुवाचाशरीरिणी मयाविनिहतोदैत्यःसर्व

देवभयंकरः देवाश्चभयभीताश्चयेनस्वर्गान्निराकृताः हरिंप्रसन्नंदृष्ट्वातुदैत्यान्दृष्ट्वामदोद्धतान् ग
ताश्चशरणंसर्वेदृष्ट्वादैत्यंनिपातितं तस्मात्तद्वचनंश्रुत्वाहरिर्वचनमब्रवीत् निहतोदानवोदृष्टः स
र्वदेवभयंकरः अहंचनिर्जितस्तेनकथंसोपिनिपातितः विस्मितस्तद्वचनंश्रुत्वावाचावचनमब्रवीत्
एकादशीह्यहंदेवसर्वपापभयंकरी हीयमानंहरिंदृष्ट्वाप्रहृष्टंदानवेश्वरं त्रिलोकेषुभयंकुर्वाद
त्तग्रश्चैषदानवः मयाकुपितयादेवकिमाश्चर्यंतवप्रभो ममकोपेनदेवेशत्रैलोक्यंविलयंव्रजेत्
श्रीभगवानुवाच तुष्टोहंतवदेवेशिवांछितंचददामिते अत्यद्भुतंकृतंभद्रेउपकारस्त्वयानघे निह
तेदानवेदृष्ट्वासंतुष्टाःसर्वदेवताः प्रहृष्टितंवरंभद्रेयत्तेमनसिवर्त्तते ददाम्यहंनसंदेहोयद्देवैरपिदु
र्लभं एकादश्युवाच जगत्त्रयेषुदेवेशसंचरामीहसुव्रत अहंतवप्रियाशक्तिस्तादृशीकुरुमांप्रभो
अहंतिथिप्रधानास्यांसर्वविघ्नविनाशिनी सर्वपापक्षयकरीत्वायुर्बलविवर्द्धिनी उपोष्यमांचयेभक्ता
स्तवभक्तिपरायणाः सर्वसिद्धिर्भवेत्तेषांयदितुष्टोसिमेप्रभो उपवासेनयत्पुण्यंतस्यार्द्धंनक्तभोजने न
क्तार्थेनपुण्येनएकभक्तंविशिष्यते दिवसस्याष्टमेभागेमंदीभूतेदिवाकरे इतितंनक्तमित्याहुर्नन
क्तंनिशिभोजनं ददामिवैस्तवंस्थानंकल्पकोटिशतान्यपि गर्भवासोनभवतिनादृशंमेफलंप्रभो श्री
भगवानुवाच यत्त्वंवदसिकल्याणितत्सर्वंवैभविष्यति धर्मार्थकाममोक्षाणांसिद्धिंप्राप्स्यंतिमानवाः म
मभक्ताश्चयेलोकास्तवभक्तास्तथापिच चतुर्युगेषुविख्यातात्रिषुलोकेषुवैपरं तेचभक्तामदंमन्येएका
दश्यांव्रतेस्थितं ममपूजांकरिष्यंतिएकादश्यांनसंशयः सर्वतिथ्युत्तमाचत्वंमत्प्रसादाद्भविष्यसि एवमु
क्त्वाततःसातत्रैवांतरधीयत पुराकैटभकेदेशेकांचीकानगरोत्तमे काशीसेतुहरिराजर्षिर्न्यवसद्बुद्धिमा
न्द्विजः ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैश्चैवानुमोदितः नतुभिक्षांनदारिद्र्यंराष्ट्रेतस्मिन्स्थितेप्रभो राष्ट्रस्यकश्च
नाप्युर्वीविधवाचनविद्यते पुत्रदुःखंपिताक्वापिनपश्यतिचकुत्रचित् एतादृशेमहाराजेप्रजाःशासतिचा
प्रभौ धनहीनोद्विजःकोपिदत्तात्मोविपदांगतः कुटुंबभरणेशक्तःकृच्छ्रंतदनुवर्त्तते सुदामानामविप्र
र्षिर्भार्य्यासाध्वीचतत्समा भर्त्तुःशुश्रूषणेसक्तासदाचारेगृहस्यच रहःपृच्छतिभर्त्तारंम्लायतीवदनेनसा
स्वामिन्यापेक्षतेपूर्वंधनहीनस्तुजायते धर्महीनेधनेनास्तिधनहीनेक्रियानहि तस्मात्त्वेनाप्युपायेन
धर्मस्यजननंकुरु एतस्मिन्नंतरेपार्थदेवर्षिःसमुपागतः दंपतीउत्थितौतत्रमधुपर्कायआदरात् आस
नेनिषण्णोस्वामिंस्त्वंद्विजातिरभाषत अद्यमेसफलंजन्मअद्यमेसफलाःक्रियाः अद्यमेसफलंसर्वंभवतांद
र्शनेनच अस्मिन्गेहेत्वहेस्वामिन्सर्वैवैस्वदिनोजनाः अहंतुधनहीनस्तुमहादुःखेनपीडितः कथयस्वप्र
सादेनधनाढ्योभवितास्मिच धनहीनस्यलोकेस्मिन्तृष्णा सर्वेमनोरथाःएतच्छ्रुत्वातुवचनंद्विजंतंनार
दोब्रवीत् नारदउवाच मार्गशीर्षासितेपक्षेउत्पत्तिर्नामनामतः तदुपोषणमात्रेणधनाढ्योजायतेध्रुवं
तथापापानिनश्यंतिएतत्सत्यंवचोमम सर्वसौख्यकरोनृणांहरिवासरउत्तमः गतेतुनारदेपश्चाद्व्रतेहात्वा
प्रयत्नतः तद्व्रतस्यप्रभावेणसुप्रसन्नोजनार्दनः स्वयमेवश्रियातस्मिन्नवात्सीद्विजमंदिरे भोगान्सविपुला
न्भुक्त्वागतोवैहरिसन्निधौ एतस्मात्कारणात्पार्थकर्त्तव्योहरिवासरः अंतरंनैवकर्त्तव्यंसमस्तव्रतकारिभिः
तिथिरेकाभवेत्सर्वापक्षयोरुभयोःसमा अतऊर्ध्वप्रपंचकमंकितंवैस्वदष्टैः त्रिमंविष्णुधर्मोक्तंविस्पष्
टाश्चस्याविरोधादतोनुमीयते एकादश्युदयेस्वल्पाअंतेचैवत्रयोदशी मध्येचद्वादशीपूर्णात्रिस्पृशासाहरे
र्प्रिया एकाद्युपोष्यलभतेसहस्रैकादशीफलं सहस्रगुणितंदानादेकादश्यास्तुपारणे अष्टम्येकादशी
षष्ठीतृतीयाचचतुर्दशी पूर्वविद्धानकर्त्तव्याकर्त्तव्यापरसंयुता एकांतूपोषयेन्नोवद्वादशीविष्णुवल्लभां द
शमीवधसंयुक्तांहंतिपुण्यंपुराकृतं एकादशीअहोरात्रंप्रभातेचघटिकाभवेत् सकलापरिकर्त्तव्याउ
पोष्याद्वादशीयुता एवंविधामयाशीक्षापक्षयोरुभयोरपि एकादश्यांप्रकुर्वंतिउपवासंनसंशयः तेषां

तिपरमंस्थानंयत्रास्तेगरुडध्वजः यन्मास्तेमानवालोकेविष्णुभक्तिपरायणाः एकादश्यास्तुमाहात्म्यंव्रत
कालेनयःपठेत् गोसहस्रफलंतस्यपुण्यंभवतिभारत दिवावायदिवारात्रौयःशृणोतीहभक्तितः कुल
कोटिसमायुक्तोविष्णुलोकेवसेद्ध्रुवं एकादश्याश्चमाहात्म्यंपठ्यमानंशृणोतियः ब्रह्महत्यादिपापानिनश्यं
तेनात्रसंशयः विष्णुनामसमंनास्तिगीतायाश्चधनंजय एकादशीसमंनास्तिसर्वपापप्रणाशनं ॥

इतिश्रीभविष्योत्तरेमार्गकृष्णोत्पन्नैकादशीव्रतंमाहात्म्यं

अस्यामेवमार्गकृष्णैकादश्यांवैतरिणीव्रतं ॥ हेमाद्रौभविष्ये शरतल्पगतंभीष्मंपर्यपृच्छद्युधिष्ठि
रः व्रतेनयेनपुण्येनयमलोकोनदृश्यते नारीवापुरुषोवापियमंनैवचपश्यति तत्समाचक्ष्वधर्मज्ञ
पितामहकृपांकुरु भीष्मउवाच एकादशींवैतरिणींतांकृत्वातुसुखीभवेत् यमलोकंनपश्येच्चशोकंचै
वनपश्यति युधिष्ठिरउवाच केनतातविधानेनकर्तव्यासामहाफला पितामहसमाख्याहितत्त्वदानंम
मप्रभो भीष्मउवाच एकादशीतिथिःकृष्णामार्गशीर्षगताभवेत् तामासाद्यनरःसम्यग्गृहीत्वानिय
मंशुचिः एकादशीमार्गकृष्णानाम्नावैतरिणीशुभा साव्रतेनसदाकार्य्यावर्षनक्तोपवासिना मध्याह्ने
तुनरःस्नात्वानित्यानिर्वर्त्यसत्क्रियाः रात्रौसुरभिमादायकृष्णांसर्वांयथाविधि पूर्वोक्तासाविधातव्याह्य
स्यागोर्भूतलेशुभे अग्रपादौसमारभ्यपश्चात्पादद्वयावधि गोपुच्छंतुसमासाद्यकुर्य्याद्धापितृतर्पणं पि
तापितामहश्चैवतथैवप्रपितामहः मातापितामहीचैवतथैवप्रपितामही मातामहस्तत्पितावप्रमा
तामहकादयः तेसर्वेमेप्रगृह्णंतुगोपुच्छोदकतर्पणं पितामाताचभार्य्याचभगिनीदुहितापतिः पि
तृष्वसामातृष्वसासप्तगोत्राणितर्पयेत् ततःपूजाप्रकर्तव्याशास्त्रदृष्टाविधानतः गांचैवश्रद्धयायुक्त
श्चंदनेनानुलेपयेत् गंधतोयेनचरणौशृंगेप्रक्षाल्यभक्तितः ततोनुपूजयेद्भक्त्यापुष्पगंधानुलेपनैः
मंत्रैःपुराणसंप्रोक्तैर्यथास्थानंयथाविधि अथगोपूजा गोअग्रपादाभ्यांनमः इत्यादिपूजाक्रमोगोदान
प्रयोगेज्ञेयः स्थानेष्वेतेषुपाद्यादीन्दद्यात्पिपठन्निमानसः पश्चात्संदापयेद्धूपंगोर्धूपःप्रतिगृह्यतां अस्मि
न्नादिकंचोरंनदींवैतरिणींतथा प्रसादात्तेतरिष्यामिगोमातस्तेनमोनमः सुखेनतीर्यतेयस्मान्नदी
वैतरिणीध्रुवं यस्मादेकादशींकृत्वातस्माद्वैतरिणीस्मृता आनंदकृत्सर्वलोकेदेवानांचसदाप्रिया गो।
स्त्वपादिजगन्नाथेदीपोयंप्रतिगृह्यतां आच्छादनंगवेदद्यात्सम्यक्शुद्धंसुनिर्मलं सुरभीवस्त्रदानेनप्री
यतांपरमेश्वरः मार्गशीर्षादिकेभक्त्यायावन्मासचतुष्टयं अन्यमासचतुष्कंहियावकाशनमेवच नैवे
द्यंहिमयादत्तंसुरभिप्रतिगृह्यतां द्वितीयंगुरवेदद्यात्तृतीयंस्वयमेवच यावन्मासंप्रकुर्वंतिमासद्वादश
कंव्रतं उद्यापनंततःकुर्य्यात्पूर्णेसंवत्सरेतथा शय्यांसतूलिकांकृत्वादंपत्योःपरिधानकं सवत्साकृ
ष्णवर्णातथैवधेनुःकार्य्यापयस्विनी सौवर्णांसुरभिंकृत्वास्थापयेत्तूलिकोपरि ततस्तांपूजयेन्मंत्रैःपूर्वोक्तै
भक्तिसंयुतः ततस्तांगुरवेदद्यात्सर्वंदत्वाक्षमापयेत् यमद्वारेमहाघोरेघोरावैतरिणीनदी तांततुंका
मोददाम्येतांवैतरिणींत्वमां नारीवापुरुषोवापिव्रतस्यास्यप्रभावतः राज्यंबहुविधंभुक्त्वास्वर्गलो
केमहीयते मारोलोहस्यदातव्यःकार्पासोद्रोणसंयुतः वैतरिण्याःसमाप्त्यर्थंब्राह्मणायकुटुंबिने ॥

इतिभविष्योत्तरेमार्गकृष्णैकादश्यांवैतरिणीव्रतं ॥

मार्गकृष्णद्वादश्यांकृत्यविशेषाभावाद्धरिदेवत्याद्उभयोर्दैवतंहरिरित्युक्तैरेकादशीकृत्यमेवात्रकार्य्यं ॥

मार्गकृष्णत्रयोदश्यांतूभयपक्षगतत्रयोदशीप्रदोषव्रतवत् प्रदोषव्रतंकार्य्यं मार्गकृष्णचतु
र्दश्यांदेविकातीर्थावतारउक्तः पाद्मेदेविकामाहात्म्ये मार्गशीर्षेकृष्णपक्षेचतुर्दश्यांदिनोदये अष्टादशो
द्धापरांतेप्रादुर्भूतामहानदीति ॥ अतोस्यांचतुर्दश्यांदेविकायात्राकार्या युधिष्ठिरेहरिद्वारेपुष्करेत्र
र्थयोः इंद्रवाटसमारभ्यामरतीर्थंमहाफलं प्रभासेसंगमांतेचस्नात्वासंपूज्यशंकरं दत्वादानान्यनेक

नियत्फलं लभते नरः तत्फलं कोटिगुणितं पूजनाद्देविकातटे अन्नदानानि दानानि फल्गुमात्राण्यपि कानिचित्
सर्वाण्यक्षयतां यांति कल्पकोटिशतेष्वपि अन्यपात्रेषु यद्दत्तं तदनंतफलं स्मृतं कदाचिन्नस्य चांतं स्याद्देविका
तीरवासिने विप्रवर्याय यद्दत्तं तस्यांतं नैव विद्यते स्वर्णं वसनं शय्यां गां वा योन्नं रजतं मही पुस्तकं मंदिरं गे
हं दासीदासांश्च भूषणं देविकायाः कथां चापि दत्वा तत्त्वयं फलं लभेदित्यादि प्रतिपुराणेषु सविशेषमुक्तमत्र।
विस्तरभयात्सूचितमेव मार्गमायां पितृपूजोक्ता नारदीये, मार्गमायां पितृपूजा श्राद्धैर्ब्राह्मणभोजनैः ब्रह्म
चर्यादिनियमैर्जपहोमार्चनादिभिरिति अस्यामेव मार्गमायां गौरीतपोव्रतं सूतसंहितायां तथा च हेमा
द्रौ कालिकापुराणे महापापहरनामधेयं गौरीतपोव्रतं सूत उवाच इंद्राणी प्रांजलिर्भूत्वा स्वपतिं वाक्यम
ब्रवीत् एकं व्रतं समाचक्ष्व पुत्रपौत्रसुखप्रदं इति वाक्यं तदाकर्ण्य प्रोवाच वचनं वृषः शृणु चार्वंगि स•
कलं यन्मया सुकृतं कृतं बृहस्पतेस्तु जनकः पृष्टः प्राह गिरां सुधीः तद्व्रतं कथयाम्यद्य सद्यः सुख•
करं परं पतिपुत्रसुखावाप्तिर्जायते जगति स्थिता गौरीप्रीत्यर्थमेवादौ स्त्रीभिर्यत्क्रियते तपः गौरीतप
इति ख्यातं तस्मात्तद्व्रतमुत्तमं तस्मात्स्त्रीभिस्तपोभिश्च तोषणीया शिवप्रिया आदौ मार्गशिरोमासि त्व
मावास्याशुभेदिने गृह्णीयान्नियमं तत्र दंतधावनपूर्वकं उपवासस्य नक्तस्य गौरीप्रीतये मुदा ईशा
ह्रींगह्वरे देवि करिष्येहं व्रतं तव पतिपुत्रसुखावाप्तिं देहि देवि नमोस्तु ते इति नियममंत्रः ततो मध्या
ह्नसमये स्नानादिके व्रती सूर्यायार्घ्यं ततो दद्याद्दत्वा गौरीमहेश्वरं अहं देव व्रतमिदं कर्तुमिच्छा
मि शाश्वतं तवाज्ञया महादेव तत्र निर्वहणं कुरु उक्त्वैवं नियमं गृह्य वर्षाण्येव तु षोडश गृहमागत्य पू
जार्थमुपहारान्प्रकल्पयेत् शिवालयं ततो गत्वा शिवं संपूजयेत्सुधीः गौरीमभ्यर्चयेत्पश्चाद्विधिना येन
तच्छृणु पार्वती त्वत्तः पादौ जान्वोर्हैमवतीति च जंघयोरंबिकेत्येवं गुल्फे गिरिशवल्लभे नाभिं गंभीरनाभी
ति चापर्णेत्युदरं पुनः महादेवीति हृदयं कंठे श्रीकंठकामिनी मुखं षण्मुखमातेति ललाटे लोकमोहि
नी मेनिकाकुचिरत्नेति शिरस्समभ्यर्चयेत्ततः दक्षिणे गणपः पूज्यो वामे स्कंदस्सवाहनः धूपदीपादि
नैवेद्यं नत्वा कृत्वा प्रदक्षिणं फलेनार्घ्यं ततो दद्याद्ध्यात्वा देवीं महेश्वरीं कृत्वा ताम्रमयं पात्रं मृण्मयं च स
भाजनं अष्टतंतुमयीं वर्त्तिं तस्मिन्पात्रे निवेशयेत् घृतेनापूर्य गव्येन तत्पात्रं विमलेन च दीपं प्रज्वालये•
त्पश्चाद्यावत्सूर्योनरे स्थितः एवं संक्षिप्य तां रात्रिं जागरेण समन्विता ब्राह्मे मुहूर्ते चोत्थाय पूजयेद्द्विजदं
पती कुर्याद्द्वौ भाग्यदलिनीयां काचिद्यामिनी तदा एकांते न गुडान्नाद्यैः पूर्णां पूर्णफलप्रदां घृतस्मैवे
फलैश्चैव पूपपिष्टाफललड्डुकैः सौभाग्याष्टकसंयुक्तं पात्रं कुर्याच्च यथा तु जं तस्योपरि गतं दीपं भ्रामयेत्त्रि
शिनामभिः सुवासिनी वचो याचं दीपं सूर्याय दर्शयेत् यावत्कलकलाशब्दं कुर्वंत्येव ककाः काकाः ताव
स्वरक्षाकर्तव्यमिदमेवादरात्प्रभो उत्तिष्ठंते च दिनगा विहंगाश्चारुलोचने तदाकर्णनमात्रेण सौभाग्य
वजति स्त्रियः अत एतद्व्रतं नारी पश्चादुद्यापयेच्च तान् तिथिमेकां समाप्यैवं दंपती भोज्य शक्तितः परिधा
प्याप्यलंकृत्य वासोभिर्भूषणांजनैः माल्यैः सुगंधैर्विविधैः फलैः सिंदूरकुंकुमैः संतोष्य समनुज्ञाप्य स्वा
यं भुंजीत बंधुभिः एवं द्वितीये वर्षे च प्रतिपत्प्रभृति प्रचरेत् वर्षे वर्षे क्रमादेवं द्वितीयादिषु चाचरेत् एवं षोड
शवर्षाणि कृत्वा चैव तु वत्सरं पश्चादुद्यापनं कुर्याद्व्रतसंपूर्तिहेतवे मार्गशीर्षे प्रसंप्राप्ते मासे गौरीश्वरो•
प्रिये पौर्णमास्यादिने रम्ये निमंत्र्य ह्यष्टदंपतीन् मध्याह्नेष्टदलपद्मे मौनी नारीः समर्चयेत् यथोक्तेन वि
धानेन पुष्पधूपादिभिस्तथा सोहालिकाभिः कासारैः पूपापूपैश्च भामिनि पायसेन घृतेनापि शर्करामो•
दकैस्तथा पूरयित्वाष्टसंख्याकान्यात्र मृण्मयसंपुटान् दंपती भोजयित्वा तु तेभ्यो दद्याद्यथाविधि अलं
कृत्य यथाशक्त्या गौरी मे प्रीयतामिति गुरवे दक्षिणोपेतां गौरीं कनकनिर्मितां दद्याद्धेनुं सवस्त्रां सव
त्सां च सदक्षिणां अन्यान्यपि यथाशक्ति दद्याद्दानानि भामिनी यद्यदिष्टतमं लोके तत्तद्देयं द्विजन्मने चा

ता आचम्य देवदेव महादेव पार्वत्या सहित प्रभो नमस्तेऽस्तु व्रते देव सान्निध्यं कुरु मे सदेति नमस्कृत्य
गृहमागत्य उत्तराशागतमष्टांगुलमौदुंबरं बिल्वकाष्ठं वा दंतधावनं प्राङ्मुखीभूत्वा भक्षयेत् द्विती-
यायां रात्रौ भूमौ स्वपेत् तृतीयायां ब्राह्मे मुहूर्ते उत्थाय पंचगव्यसर्वौषधिजलैः स्नात्वा अहते शुक्ले वा-
ससी परिधाय शालिपिष्टमये स्त्रीपुंसोः प्रतिमे विधाय वेणुमये पात्रे संस्थाप्य षोडशोपचारपूजां
कुर्यात् तत्रादौ देशकालौ संकीर्त्य अद्याहं सर्वपापक्षयपूर्वकभर्त्रवियोगावैधव्यपुत्रपौत्रादिसु-
खसिद्धिद्वारा श्रीउमामहेश्वरप्रीत्यर्थमवियोगतृतीयाव्रतं करिष्ये पूजासंभारं दिवा परिकल्प्य सोप-
वासा पाखंडालापवर्जिता तिष्ठेत् ततो दिनांते स्नाता शुक्लांबरा तस्मिन्पुत्रिकाद्वयं पूजयेत् ॐ मंदार-
मालाकुलितालकायै कपालमालांकितशेखराय दिव्यांबरायै च दिगंबराय नमः शिवायै च नमः
शिवायेति मंत्रेण षोडशोपचारपूजां गौरीव्रतविधिना पूजयेत् ततः सपत्नीकमाचार्यं संपूज्य रात्रौ
कथागीतवादित्रादिभिर्जागरणं कुर्यात् प्रभाते स्नात्वा गौरीमहेश्वरपूजां विधाय यथाशक्ति द्विजमि-
थुनानि गौरीशप्रीतये संपूज्य भोजयेत् आचार्यस्तु गौरीश्वरप्रतिमे कुतस्तस्य यतो गाये जले क्षिपे-
त् ततो व्रतफलभूयस्त्वायान्यानपि शिवभक्तादीन्दक्षिणान्नदानादिभिः परितोष्य स्वयं मिष्टान्नादि भु-
जीत तत्र प्रतिमासं नामपूजाप्रकारो यथा मार्गशीर्षे शंकराय नमः गौर्यै नमः पौषे गौरीशाय न-
मः पार्वत्यै नमः माघे भवाय नमः भवान्यै नमः फाल्गुने महादेवाय नमः उमायै नमः चैत्रे त्रिलो-
चनाय नमः ललितायै नमः वैशाखे स्थाणवे नमः लोलनेत्रायै नमः ज्येष्ठे रुद्राय नमः रुद्राण्यै
नमः आषाढे पशुनाथाय नमः सत्यायै नमः श्रावणे श्रीकंठाय नमः सुभगायै नमः भाद्रपदे भी-
माय नमः कालरात्र्यै नमः आश्विने शिवाय नमः गंगायै नमः कार्तिके ईशानाय नमः शिवायै न-
मः मार्गे इति प्रतिमासं पूजानामानि अथ पुष्पाणि नीलोत्पलं रक्तोत्पलं करवीरं बिल्वपत्रं किंशुकं
कुब्जमल्लिकां पाटलां कुंदं चंपकं तगरं द्रोणं मालतीं क्रमेणार्पयेत् वर्षांते उद्यापनं तत्र व्रतदि-
ने पंचगव्यप्राशनं सर्वतोभद्रलिंगतोभद्रं वा विधाय आचार्यादिवरणं सर्वतोभद्रमंडलादिपू-
जा अग्निस्थापनमन्वाधानं कृत्वा होमं कुर्यात् राजतीमुद्राद्वये हैमी गौरीशप्रतिमे संपूज्य सौव-
र्णं पंकजं निवेद्य वितानं ध्वजं च निवेद्य दीपवस्त्रयुग्मं च निवेदयेत् नीराजनं कृत्वा रात्रौ जागरणं
विधाय चतुरस्त्रं त्रिकोणं च भूषणद्वयं चतुष्षष्टिमौक्तिकप्रवालान्वितं गौरीशप्रीत्यर्थं सपुष्परा-
गाणि दद्यात् अशक्त्या तन्मौल्यं देयं एतत्सर्वमाचार्याय दत्वा व्रतिनो विप्राणां मिथुनानि संपूज्य हि-
रण्यशय्यागोदानादि दत्वा चत्वार्यष्टौ वा कुंभान्सोपानहछत्रयुतान्दद्यादिति ॥ एवमेव काली-
पुराणोक्तमप्यवियोगव्रतं ॥ तण्डिरुवाच येनावियोगमासाद्य व्रतेन नियमेन च सदा नारी सु-
खैश्चैव व्रजेद्येन पदं च तत् विधवा परलोके तु भर्त्रा न वियुज्यते सुखेनापि सदा ब्रह्मन्वद येन तने।
न च शिलाद उवाच उमया चरितं यच्च भवान्या ललिताव्रतं बाल्ये हिमवतो जन्मा दक्षकोपाद्विमुक्त-
या महासौभाग्यसंदोहं दृष्ट्वा देव्या महात्मना अरुंधत्या वसिष्ठेन कथितं तद्व्रतं शृणु वसिष्ठ उवाच
अरुंधति शृणुष्वेदं सर्वसौभाग्यवर्द्धनं अवैधव्यप्रदं स्त्रीणामवियोगव्रतं शृणु मार्गशीर्षे सिते पक्षे
स्नाता शुक्लांबरप्रिया दृष्ट्वा चंद्रं द्वितीयायां नक्तं भुंजीत वाग्यता आचम्य च शुचिर्भूत्वा दंडवत् शंकरं न-
मेत् सदान्विता नमस्कृत्य विज्ञाप्य परमेश्वरं उदुंबरमयं काष्ठं ग्राह्यमष्टांगुलं शुभं उत्तराशागतं
साग्रं सत्वचं निर्व्रणं दृढं वाग्यता प्राङ्मुखीभूत्वा भक्षयेद्दंतधावनं द्वितीयायां ततः स्वप्याद्भूमौ तद्ग-
तमानसा तृतीयायां समुत्थाय मुहूर्ते ब्राह्मणः शुभे कृतकार्या च सुस्नाता शुक्लमाल्यांबरा ततः शा-
लिपिष्टमये कृत्वा स्त्रीपुंसोः प्रतिमे शुभे वेणुपात्रे तु संस्थाप्य पूजयेद्भक्तितत्परा उपवासं च कुर्वी-

तं सर्वभोगविवर्जितं पाखंडादिभिरालापं त्यक्त्वा स्नानादि विवर्जयेत् ततो निशायां संप्राप्ते कृतपू
जाकृतोत्सवा कृत्वा वादित्रनिर्घोषं जागरं तत्र कारयेत् विधिवत्पूजयित्वा तु पीठं तत्पुत्रिकाद्वयं
सुप्रभाते द्विजाग्र्यांश्च पूजयित्वा प्रदापयेत् यथाशक्त्या महाभागे वित्तशाठ्यं विवर्जयेत् उमामा·
हेश्वरं लेख्य कल्पयित्वा स्वचेतसि ब्राह्मणोपि जले गाधे पीठं तन्मिथुनं क्षिपेत् एवं कृतस्य स्तपय
नमिथुनानि तु भोजयेत् शिवभक्त्या द्विजान्भोज्य मिष्टान्नेन स्वशक्तितः प्रतिमासं प्रकुर्वीत विधा·
नेन सुसंयुतं मार्गशीर्षे पुनर्मासि कार्त्तिकांते समापयेत् नामानि ते प्रवक्ष्यामि प्रतिमासं क्रमेण तु
तु पूजाजपनिमित्तं च सिद्ध्यर्थं चिंतितस्य च शंकरं मार्गशीर्षे तु नाम गौर्या समन्वितं गौरीशं पार्व
तीं चैव पुष्यमासे तु पूजयेत् भवं चैव भवानीशं माघमासे प्रपूजयेत् फाल्गुने तु महादेवं सुम·
यासहितं यजेत् चैत्रे त्रिलोचनं देवं ललितां च प्रपूजयेत् स्थाणुं वैशाखमासे तु लोलनेत्रासमन्वि
तं रुद्राण्या सहितं रुद्रं ज्येष्ठे मासि यजेत वै आषाढे पशुनाथं च सत्या सार्द्धं शुचिस्मिते श्रीकंठं श्रावणे
देवं सुभगां परमेश्वरीं भीमं भाद्रपदे तद्वत्कालसत्या समन्वितं शिवमाश्वयुजे मासि गंगया सहितं य।
जेत् ईशानं कार्त्तिके मासि शिवादेवीयुतं विभुं प्रतिमासं विना नाम्ना व्रतसिद्धिर्न विद्यते प्रतिमासं त
पुष्पाणि यानि पूजासु योजयेत् तानि ते संप्रवक्ष्यामि सद्यः प्रीतिकराणि वै आदौ नीलोत्पलं योज्यं तदभा
वे पराण्यपि पवित्राणि सुगंधीनि योजयेद्भक्तितोर्चने करवीरं बिल्वपत्रं किंशुकं कुंकुमं मल्लिका पाटला
कुंदं चंपकं तगरं द्रोणमालतीः भक्त्या योज्यानि शंभोः रुद्रदेवस्य प्रियकाम्यया तथा च पंचगव्यस्य प्राशनं प्र
तिमासकं न चान्यत्प्राशनं किंचित्पंचगव्यात्परं स्मृतं एवं व्रतं कृतं भद्रे शिवभक्तिसमन्विता वत्सरांते
वितानं च ध्वजं किंकिणीमालिनं दीपं च वस्त्रयुग्मं च शिवे भक्त्या निवेदयेत् स्नापयित्वा विलिप्याच सौव
र्णमूर्तिं पंकजं यथाविभवतो देयं देवदेवस्य तुष्टये रौप्यं च रूपयुगलं देवस्य पुरतो न्यसेत् बहुप्र·
कारैर्नैवेद्यं गीतवाद्यसमन्वितं कुर्याद्वीरराजन् शंभोस्ततो गच्छेत्स्वकं गृहं चत्वरस्थं महा·
देवं युग्मं चैव त्रिकोणकं ध्यात्वाचार्याय तद्युग्मं मुक्तिकादियुतं ददेत् कर्षैकैकप्रमाणं च शातकुंभ
मयं शुभं उमामहेश्वरं चैव कारयित्वा सुशोभनं मौक्तिकानि चतुःषष्टिस्तावंतोपि प्रवालकाः तावंति
पुष्परागाणि ताम्रपात्रोपरि न्यसेत् वस्त्रेणावेष्टयित्वा तु गंधपुष्पैः समर्चयेत् एतत्सर्वं सारयुक्तमा।
चार्याय निवेदयेत् व्रतिनां ब्राह्मणानां तु मिथुनानामथापि वा अशक्त्या निष्क्रयं दद्याद्वित्तशाठ्यविवर्जि
ता दत्वा हिरण्यवासांसि प्रणिपत्य क्षमापयेत् चत्वारिंशत्तथाष्टौ च कुंभानन्नमुपानहौ सहिरण्यान्न
नान्सर्वान्दद्यान्मिष्टोदकान्वितान् दीनांधबधिरादीनां तद्दिने चानिवारितं कल्पयेदन्नपानं च सुमिष्टंम
ध्यमात्मनः न्यूनाधिकं न कर्तव्यं स्वस्ववित्तानुसारतः संपूजयेत्कल्पनया यदि वित्तं न विद्यते अवि
योगकरं चैतद्रूपसौभाग्यवित्तदं आयुःपुत्रप्रदं काम्यं शिवलोकप्रदायकं

इति कालिकापुराणोक्तमवियोगव्रतम् मार्गशुक्लतृतीयायामारभ्यं भविष्योत्तरोक्तं रंभाव्रतं ॥
मार्गशीर्षे शुभे मासि तृतीयायां नराधिप शुक्लायां प्रातरुत्थाय दंतधावनपूर्वकं उपवासस्य नियमं गृ
ह्णीयाद्भक्तिभावितः सौभाग्यार्थं पुरा चीर्णं रंभया राजसत्तम तेन रंभातृतीयेयं परं सौभाग्यवर्द्धिनीति ३
यपूर्वा ग्राह्या हृद्गतयास्तथा स्तथा रंभा सावित्री वटपैतृकी कृष्णाष्टमी च भूता च कर्तव्या संमुखी तिथीति।
स्कादात् रंभातृतीयां वक्ष्यामि सर्वपापप्रणाशिनीम् सर्वसौभाग्यफलदां सर्वामयनिवारिणीम् सर्वदुः
खहरां पुण्यां पुत्रपौत्रप्रदां तथा सपत्नीदर्पदलनीं रूपैश्वर्यकरीं शुभां शंकरेण पुराख्यातां पार्वत्यै प्रियका।
म्यया तामिमां शृणु भूपाल भूतानां परमं हितम् मार्गशीर्षे शुभे मासि तृतीयायां नराधिप शुक्लायां प्रातरुत्था
य दंतधावनपूर्वकं उपवासस्य नियमं गृह्णीयाद्भक्तिभाविता देवि संवत्सरं यावत्तृतीयायामुपोषिता प्रति

मासं करिष्यामि पारणं चापरेऽहनि तदविघ्नेन मे यातु समाप्तिं व्रतमुत्तमम् शरणं त्वां प्रपन्नास्मि दौर्भाग्यादुद्धरस्व माम् एवं संकल्प्य विधिवत्कौंतेय कृतनिश्चया भक्त्या नारी ध्यानपरा स्नानं कृत्वा जितेंद्रिया नद्यां तडागे वाप्यां वा गृहे वा नियतेंद्रिया पूजयेत्पार्वतीं नाम्ना रात्रौ प्राश्य कुशोदकम् प्रभाते भोजयेद्विप्राञ्छिवभक्तान्विशेषतः सहिरण्यं च लवणं दद्यात्तेषां च दक्षिणाम् गौरिणीश्च यथाशक्त्या भोजयेत्प्रयताः सतीः अनेन विधिना राजन्या कुर्यात्पार्वतीव्रतम् सा कुलानां शतं साग्रं तारयेन्नात्र संशयः इह लोके सुखं भुक्त्वा शिवलोके महीयते पौषे मासि तृतीयायां गिरिजां नाम पूजयेत् गोमूत्रं प्राशयेद्रात्रौ प्रभाते भोजयेद्द्विजान् हिरण्यं जीरकं चैव स्वशक्त्या दापयेत्ततः शक्रलोके वसेत्कल्पं ततः शिवपुरं व्रजेत् माघमासे तृतीयायां सुदेवीं नाम पूजयेत् गोमयं प्राशयेद्रात्रौ स्वपेद्रात्रौ यतव्रता सहिरण्यं कुसुंभं तु दिवा दद्याद्द्विजातये विष्णुलोके चिरं स्थित्वा प्राप्नोति शिवमंदिरम् गौरीति फाल्गुने नाम गोक्षीरं प्राशयेन्निशि प्रभाते भोजयेद्विप्रान्यथाशक्त्या सुवासिनीः कुसुंभसूत्रं कनकं तेभ्यो दत्वा विसर्जयेत् वाजपेयातिरात्राणां फलं प्राप्य दिवं व्रजेत् चैत्रे मासि विशालाक्षीं पूजयेद्भक्तितत्परा दधि प्राश्य स्वपेद्रात्रौ दद्याद्धेम सकुंकुमं शुभसौभाग्यसंपन्ना मृता शिवपुरं व्रजेत् वैशाखस्य तृतीयायां श्रीमुखीं नाम पूजयेत् घृतं च प्राशयेद्रात्रौ पुनर्दद्याद्द्विजातये कनकं शर्करां चैव पूजयित्वा क्षमापयेत् सर्वान्कामानवाप्नोति मृता शिवपुरं व्रजेत् ज्येष्ठे नारायणीं नाम पूजयेत्कुसुमैः शुभैः प्राशयेल्लवणं रात्रौ ततश्चैकाकिनी स्वपेत् शिवभक्तान्द्विजान्प्रातर्भोजयित्वा यथेप्सितम् सुवासिनीर्यथाशक्त्या भक्ष्यभोज्यैश्च भोजयेत् तांबूलं कनकं दद्यात्प्रणिपत्य क्षमापयेत् अंतकाले सुखं याति यत्र देवो महेश्वरः आषाढे माधवीं नाम प्राशयीत तिलोदकम् प्रभाते भोजयेद्विप्रान्हेमपुष्पं गुडं ददेत् सर्वसंपत्सुखं भुक्त्वा देव्याश्चानुचरी भवेत् श्रावणे तु श्रियं पूज्य पिबेच्छृंगजं जलम् प्रभाते ब्राह्मणान्भोज्य दद्याद्धेमतिलैः सह भोगान्भुक्त्वा महीपृष्ठे गोलोकमधिगच्छति अथ भाद्रपदे मासि सुभद्रां नाम पूजयेत् बिल्वपत्रं च संप्राश्य स्वपेत्तु ब्रह्मचारिणी प्रभाते विप्रमुख्याय दद्याद्धेमफलैः सह सर्वलोके वशीभूत्वा भुक्त्वा भोगाननेकधा प्राप्नोति ब्रह्मसदनं व्रतस्यास्य प्रभावतः आश्विनस्य तृतीयायां पूजयित्वा शिवप्रियाम् प्राशयेत्तंडुलं शान्तस्तथा विप्रांश्च भोजयेत् दक्षिणां चात्र दद्यात्तु चंदनं च सकांचनम् सर्वयज्ञफलं प्राप्य गौरीलोके महीयते पद्मोद्भवां कार्त्तिके च पंचगव्यं पिबेन्निशि वादित्रैर्जागरं कृत्वा प्रभाते भोजयेत्तदा उमामहेश्वरं हैमं समाप्ते कारयेच्छुभम् ॥

उमामहेश्वरस्वरूपं विष्णुधर्मोत्तरेऽभिहितं ॥

वामार्धे पार्वती कार्या शिवः कार्यश्चतुर्भुजः अक्षमालात्रिशूलं च डमरुं चांबरं दधत् एकवक्त्रस्त्रिनेत्रश्च वामे च दयितातनुः यथाविभवसारेण वितानं पंचवर्णकम् शय्या चात्र विनिर्दिष्टा सर्वोपस्करसंयुता सवत्सां शीलसंपन्नां गां च दद्यात्पयस्विनीम् आसनं मंडले दद्यात् श्वेतच्छत्रं कमंडलुम् पादुकोपानहौ दिव्ये वस्त्रयुग्मं च पांडुरम् पीतं यज्ञोपवीतं च पट्टसूत्रसमुद्भवम् शैवशक्तिसमोपेतं दर्पणं च समुज्ज्वलम् रक्तं च कटकं देयं स्त्रियाश्च परिधानकं उमामहेश्वरः स्थाप्यासने तान्पूजयेन्नृप पूजां विरचयेद्भक्त्या ध्यायमाना महेश्वरम् नानाविधैः सुगंधैश्च पत्रैः पुष्पैः फलैस्तथा चूतपक्वैश्च नैवेद्यैर्दीपमालाविभूषितैः कूष्मांडैर्नारिकेलैश्च दाडिमैर्बीजपूरकैः जीरकैर्लवणैश्चैव कुसुंभैः कुसुमैस्तथा रसपात्रैः सुमिष्टैश्च गीतवाद्यैरनेकधा पूजयेद्देवदेवेशं सपत्नीकं क्षमापयेत् ततो द्विजं समाहूय वेदवेदांगपारगम् वेदध्वनिसमायुक्तमुपवेश्य शुभासने सपत्नीकं नृपश्रेष्ठ दिव्यं चंदनचर्चितम् परिधाप्य स्वलंकृत्य सर्वं तस्मै निवेदयेत् एवं कृते फलं यत्स्यात्तच्छृणु त्वं मयेरितम् सर्वांगफलसंयुक्ता सर्वदेवैः सुपूजिता ज्ञानाज्ञाना महाकल्पे सर्वान्कामानवाप्नुयात् तदंते शिवसायुज्यं नारी प्राप्नोत्यसंशयम् पुरुषो वा नृपश्रेष्ठ शिवभक्तश्च सुव्रतः सोऽपि तत्

समाप्नोति नान्यथा शिवभाषितम् सौभाग्यार्थं पुरा चीर्णं रंभया राजसत्तम तेन रंभातृतीयेयं परं सौभाग्यदायिनी सोऽहं स एव भूतेशो गौरी सैवीन संशयः इति मत्वा महाभाग शरणं व्रज पार्वतीम् एवाद्विमाद्विडदितर्दयितात्तीयारंभाभिधानमभवद्भुवि तत्कृतेति संशशंसे रुचिरनामयुतामुपोष्य प्नोति वांछितफलान्यबला बहूनि ॥

इति रंभातृतीयाव्रतम् मार्गशुक्लचतुर्थ्यां हरिगणपतिव्रतं वर्षचतुष्टयसाध्यमिदमुक्तम् ॥ नारदीये मार्गशुक्लचतुर्थ्यां तु वर्षं यावन्मुनीश्वर नयेदेकभक्तेन नक्तेनाथ द्वितीयकं अयाचितोपवासाभ्यां तृतीयकचतुर्थके एवं क्रमेण विधिवद्व्रतार्थ्यद्वानिमानवः समाप्य च ततश्चांते हितस्नातो महाव्रती कारयेत्स्वर्णघटितं भूभागे मौषकं रथं अशक्तो वर्णकैरेव रथं शुभ्रं सपुत्रकं तस्योपरि घटं स्थाप्य ताम्रपात्रेण संयुतं पूरयेत्तंडुलैः शुभ्रैस्तस्योपरि गणेश्वरं श्रीमूषकरथारूढं गणेशं स्थापयेद्द्विज न्यसेद्वस्त्रयुगाच्छन्नं गंधाद्यैः पूजयेद्व्रतं नैवेद्यं मोदकैः कल्प्यं गणेशः प्रीयतामिति जागरं गीतनृत्याद्यैः पुराणाख्यानकैश्चरेत् प्रभाते विमले स्नात्वा होमं कृत्वा विधानतः तिलव्रीहियवश्वेतसर्षपाज्यैः सखंडकैः गणो गणाधिपश्चैव कूष्मांडस्त्रिपुरांतकः लंबोदरैकदंतौ च रुक्मदंष्ट्रश्च विघ्नपः ब्रह्मा यमोथ वरुणः सोमसूर्यहुताशनः गंधमाली परमेष्ठी त्येवं षोडशनामभिः प्रणवाद्यैर्नमोंतैश्च प्रत्येकं दहनेहुनेत् वक्रतुंडेति डेंतेन चमंतेनाष्टयुक्शतं ततो व्याहृतिभिः शक्त्या हुत्वा पूर्णाहुतिं चरेत् दिक्पालान्पूजयित्वाथ ब्राह्मणान्भोजयेत्ततः चतुर्विंशतिसंख्याकान्मोदकैः पायसेन च सवत्सां गां ततो दद्यादाचार्याय सदक्षिणां अन्येभ्योपि यथाशक्ति भूयसीं च ततो ददेत् प्रणम्य दक्षिणीकृत्य विसृज्य च द्विजोत्तमान् बंधुभिः सह भुंजीत स्वयं च प्रीतमानसः एतद्व्रतं नरः कृत्वा भुक्त्वा भोगानिहोत्तमान् सायुज्यं लभते विष्णोर्गणेशस्य प्रसादतः केचिद्धरिव्रतं नाम प्राहुरेतस्य नारद विधानमेतदेवापि फलं चापीह तत्समम् ॥

इति नारदीये पूर्वभागे तुर्यपादे हरिगणपतिव्रतम् अथ भविष्यपुराणोक्तं गणेशचतुर्थीव्रतं ब्रह्मोवाच गणेशः पूजितः कुर्याच्चतुर्थ्यां सर्वकर्मसु अविघ्नं स्वर्लोके च गतिमिष्टां प्रयच्छति कर्मस्वविघ्नो विघ्नं कुर्याच्चैव न संशयः अविघ्नं कर्मकाले स्मरणमकुर्वतां तैरप्यवश्यं स्मर्तव्यः पूज्यश्च ॥ पूजामंत्राः स्वसंज्ञाभिरागमज्ञैः प्रकीर्तिताः अभ्यर्च्याभिलिख्येत्यष्टांकुमेनाष्टपत्रकं कुंकुमस्याप्यभावे तु रक्तचंदनमिष्यते अथ तत्पद्ममध्यस्थः कर्तव्यः सतिधीश्वरः तिथीश्वरो च गणेशः गंधपुष्पोपहारैश्च यथाशक्ति प्रपूजयेत् चत्वारः करकाः कार्या भक्ष्यभोज्यसमन्विताः तंडुलैस्तु षष्टिशालीये पद्मरागैश्च संयुताः चतुष्कोणेषु तान्कृत्वा फलानि विविधानि च गंधमाल्यादिकं सर्वं तथैव विनिवेदयेत् पूजायां विघ्नशांतये नक्तेनापि न फलप्रदा आज्यधानासमिद्भिश्च दधिक्षीरान्नमाक्षिकैः पूर्वोक्तफलदो होमः कृतः शांतेन चेतसा नरसिंहपुराणेपि सूत उवाच चतुर्थ्यां तु न भुंजीत स्नात्वा नद्यां नृपोत्तम रक्तांबरधरो भूत्वा रक्तगंधानुलेपनः रक्तवस्त्रो गणाधीशं विनायकमथार्चयेत् रक्तचंदनलेप्येन स्नानपूर्वं विधानतः विलिप्य रक्तगंधेन रक्तपुष्पैरथार्चयेत् ततोस्मै चाग्रकं धूपमाज्ययुक्तं सचंदनं नैवेद्यं चैव हारिद्रं गुडखंडसमन्वितं एवं संवत्सरं पूज्य विनायकमथोस्तुवन् नमस्कृत्य महादेवं स्तोष्ये हं तं विनायकं महागणपतिं शूरमजितं जयवर्धनं एकदंतं द्विदंतं च चतुर्दंतं चतुर्भुजं त्र्यक्षं त्रिशूलहस्तं च रक्तनेत्रं वरप्रदं आंबिकेयं शंकुकर्णं प्रचंडं तुंदंडनायकं आरक्तं दंडिनं चैव वह्निवक्त्रं हुतप्रियं अनर्चितो विघ्नकरः सर्वकार्येषु यो नृणां तं नमामि गणाध्यक्षं भीमसुग्रमुमासुतं मदमत्तं विरूपाक्षं भक्तविघ्नसमुद्भवं सूर्यकोटिप्रतीकाशं भिन्नांजनसमप्रभं शुद्धं सुनिष्कलं शांतं नमस्यामि विनायकं नमोस्तु ब्रह्मरूपाय विष्णुरूपाय ते नमः नमोस्तु गजरूपाय गणानां पतये नमः मत्तमंदररूपाय नमः कैलासवासिने नमो विघ्नविनाशाय नमस्ते ब्रह्मचारिणे नमस्तेनाय

देवायनमस्तुभ्यंविनायक त्वयापुरावैसर्वेषांदेवानांकार्यसिद्धये गजरूपंसमास्थायत्रासिताः सर्व
दानवाः ऋषीणांदेवतानांचकृताः सर्वेमनोरथाः तेनत्वंतुसुरैःसर्वैःपूज्यसेत्वंभवात्मज त्वामारा
ध्यगणाध्यक्षंसर्वज्ञंकामरूपिणं कामार्थरक्तकुसुमैरक्तचंदनवारिभिः रक्तांबरधरोभूत्वाचतुर्थ्या
मर्चयेज्जपेत् त्रिकालमेककालंवानियतोनियताशनः राजानंराजपुत्रंचराजमंत्रिणमेवच राज्यं
वासर्वविघ्नेशवशीकुर्यात्सराष्ट्रकं अविघ्नंतपसामह्यंकुरुविघ्नविनाशक मयात्वंसंस्तुतोभक्त्या
पूजितश्चविशेषतः यत्फलंसर्वतीर्थेषुसर्वयज्ञेषुयत्फलं तत्फलंसर्वमाप्नोतिस्तुत्वादेवंविनाय
कं विषमंनभवेत्तस्यनसगच्छेत्पराभवं नचविघ्नोभवेत्तस्यजातोजातिस्मरोभवेत् यइदंपठति।
स्तोत्रंषड्भिर्मासैर्वरंलभेत् संवत्सरेणसिद्धिंचलभतेनात्रसंशयः

इतिनृसिंहपुराणेगणेशस्तोत्रं ॥ अस्यामेवमार्गशुक्लचतुर्थ्यां कृच्छ्रचतुर्थीव्रतम् ॥

स्कंदउवाच केनभोगानवाप्नोतिनिर्विघ्नंपुरसूदन पुत्रपौत्रांस्तथारोग्यंव्रतेनाप्नोतिशंकर ईश्वर
उवाच पुरादेवासुरेयुद्धेअसुरैर्निर्जितारणे शक्राद्यादेवताःसर्वास्त्रिपुरवासिभिर्जिताः तदाविव
र्णवदनास्तेसर्वेमामुपागताः त्राहित्राहिवदंतस्तेमयाप्याश्वासितास्तदा विघ्नैरुपहतानांचतद
दिष्टंव्रतंमया तत्कृतंतैस्तदास्कंदतेनतुष्टोगणाधिपः गणेशेनतुतुष्टेनविघ्नानांसंक्षयःकृतः
स्कंदउवाच विधिनाकेनदेवेशव्रतमेतन्महाफलं कृतंभवतिदेवेशतन्मेब्रूहिवृषध्वज ईश्वरउ
वाच मार्गशीर्षेशुभेमासिशुक्लपक्षेतथैवच चतुर्थ्यांनियमंगृह्यविघ्नेशंपूजयेत्ततः पुष्पैर्गं
धैश्चनैवेद्यैर्लड्डुकैश्चसुसंस्कृतैः पललोडेरकैश्चैवतथासोहालिकैःशुभैः पललंतिलपिष्टं
उडेरकाःपिष्टादिमयावर्तुलाकाराः पूजयित्वाविधानेनप्रार्थयेत्तंचमानवः त्वत्प्रसादेन देवेश
व्रतंवर्षचतुष्टयं निर्विघ्नेनतुमेयातुप्रमाणंमूषकध्वज प्रमाणंसमाप्तिः प्रमाणंहेतुमर्यादाशास्त्रेयत्त
प्रमात्रृषुइत्यभिधानकोशात् संसारार्णवदुस्तारंसर्वविघ्नसमाकुले तस्माद्दीनंजगन्नाथत्राहिमांगण
नायक एवंप्रार्थ्यगणाध्यक्षंभुंजीयाद्धायतस्ततः एवंक्रमेणसंपूज्यएकभक्तोनरोत्तमः गणेशंमन
साध्यायंस्ततोरात्रौस्वपेद्बुधः एवंसंवत्सरंयावच्चतुर्थीप्रतिमासकं ततोमार्गशिरेमासिविधिनानेन
पूजनं नक्ताशीचभवेत्तद्वद्यावत्संवत्सरंपुनः मार्गशीर्षेपुनःप्राप्तेतथैवायाचितोभवेत् अयाचितेना
ब्दमेकंततोमार्गशिरेपुनः आरभ्योपवसेदब्दमेकंतद्वच्चपूजनं एवंक्रमेणविधिवच्चतुर्थ्यब्दानिमा
नवः समाप्यचततश्चांतेजलस्नातोमहाव्रती कारयेद्धेमघटितंस्वशक्त्याखुरथंशुभं आखुरथंगणे
शं कारयेद्वर्णकैःशुभ्रैररविंदंसुपत्रकं तस्योपरिघटंस्थाप्यताम्रपात्रेणसंयुतम् पूजयेत्कुंभशाले
यैस्तंडुलैरेवषण्मुख तस्योपरिन्यसेद्देवंवासोभिर्वेष्टितंततः पूजयेत्स्वच्छपुष्पाद्यैर्नैवेद्यैर्विविधैस्तथा
मोदकैश्चततःशुभ्रैःपक्वान्नैर्घृतपाचितैः नैवेद्यंकल्पयेत्तत्रगणेशःप्रीयतामिति जागरंकारयेद्दिव्य
नृगीतवादित्रनिस्वनैः पुराणाख्यानकैश्चैवतांरात्रिंनयेद्बुधः प्रभातेविमलेस्नातोहोमकर्माणि।
कारयेत् तिलव्रीहियवैश्चैवतथासिद्धार्थकैःशुभैः होमश्चैतैर्मंत्रैःकार्यः ॐगणायस्वाहा गणाधि
पतयेस्वाहा मेघवर्णायस्वाहा कूष्मांडायस्वाहा त्रिपुरांतकायस्वाहा एकदंतायस्वाहा रुक्मदंष्ट्रायस्वा
हा विघ्नेश्वरायस्वाहा ब्रह्मणेस्वाहा इंद्रायस्वाहा यमायस्वाहा सोमायस्वाहा सूर्यायस्वाहा गणेशायस्वा
हा अष्टोत्तरशतंहुत्वाततोव्याहृतिभिर्हुनेत् यावद्व्यस्तामहाव्याहोततोहोमःसमाप्यते ततस्तुपूजये
द्विद्वानाचार्यंभक्तिभावतः वस्त्राभरणैर्दिव्यैःपूजयित्वाक्षमापयेत् तत्पत्नींपुरुषोभक्त्यावस्त्रैराभर
णैरपि शय्यांदद्यात्ततस्तस्मैसोपधानांसगंडुकां गांसवत्सांततोदद्यात्सर्वालंकारभूषितां प्रीयतांगण
नाथोत्रइतिमंत्रमुदीरयेत् ब्राह्मणान्भोजयेद्भक्त्याचतुरोवैकमेववा तेभ्यस्तुकरकान्दद्यात्तिलपात्रसं

समन्वितान् अनेनविधिनायस्तुकरोतिव्रतमुत्तमं नविघ्नैरभिभूयेतगणनाथप्रसादतः यंकरोतिसमा
रंभंनिर्विघ्नंतत्फलप्रदं पूर्वंतथाकृतंसर्वैरिंद्राद्यैस्त्रिदशैर्विभो रुद्रेणब्रह्मणाचैवविष्णुनाचकृतंपुरा
अन्यैश्चैवउमापुत्रराजभिर्बहुभिःकृतं एतदेवव्रतंचीर्णंमानुषैर्भूतलेसुत अनेनक्रियमाणेननविघ्नै
रभिभूयते स्वर्गलोकात्परिभ्रष्टस्ततोयातिपरांगतिम्

इतिस्कंदपुराणोक्तंसौभाग्यपंचकृच्चतुर्थीव्रतं अस्यामेववर्षचतुष्टयसाध्यं सर्वार्थसाधकं
वरचतुर्थीव्रतं स्कंदपुराणे चतुर्थ्यांमार्गशीर्षेतुशुक्लपक्षेनरोत्तमैः आरभ्यप्रतिमासंचवरचतुर्थ्यांगण
नायकं संपूज्यविधिनाकुर्यादेकभक्तंसमाहितः अक्षारलवणंत्वेवंपूर्णेसंवत्सरेततः द्वितीयेवत्सरे
नक्तंप्रतिमासचतुर्थिके कुर्याद्गणेशमभ्यर्च्यतृतीयेयाचितंतथा एवमेवप्रकुर्वीतचतुर्थेस्याडुपोष
णं ततश्चतुर्थेसंपूर्णेतदुद्यापनमाचरेत् इदंवरचतुर्थ्याख्यंव्रतंसर्वार्थसाधकमिति ॥ इदंस्कंद
पुराणोक्तंवरचतुर्थीव्रतं अत्रप्रथमवर्षेएकभक्तंतत्स्वरूपंतुदिनार्द्धसमयइत्यादिनापूर्वमेवोक्तंय
त्तुकेनचिदुक्तं भोजनेतुविधिप्रामेद्वात्रिंशद्ग्राससम्मिते नैकभक्तेएकोनत्रिंशद्ग्रासाइतिफलितोर्थ
इतितत्तुच्छभिक्षुकस्यैकभक्तेकदाचित्स्वल्पभिक्षाप्राप्तावेतन्नियमस्यासंभवाद्वचनाभावाच्च स्वल्प
भिक्षावतएकोनत्रिंशद्ग्रासासादनासंभवाच्च नन्वष्टौग्रासामुनेर्भक्ष्याःषोडशारण्यवासिनः द्वात्रिंश
तंगृहस्थानाममितंब्रह्मचारिणइतिवचनमस्तीतिचेत्सत्यं एतद्वचनस्यपरिगृहीतनियतग्रासप्रातरा
शुदेयशणाग्निहोत्रविषयत्वात् एतद्वचनस्यतद्विषयत्वंचबौधायनसूत्रेस्पष्टं ग्रासलक्षणं कुक्कुटा
ण्डसमोग्रासोयथावामुखमाविशेदिति यावदेवग्रसितुंशक्यमिति याज्ञवल्क्यधर्मशास्त्रेअपरार्केरुक्तंत
स्मान्न्यूनेग्राससत्रयेणत्रितिसग्रासत्रयेशब्दोन्यूनत्वोपलक्षणार्थः

इतिमार्गशुक्लचतुर्थीव्रतानि ॥ अथमार्गशुक्लपंचम्यांनागपूजोक्ता स्कांदे ॥
शुक्लामार्गशिरेपुण्याश्रावणेयाचपंचमी स्नानेदानेबहुफलानागलोकप्रदायिनी इयंचोत्तरार्थाख्या पंच
मीनागपूजायांकार्याषष्ठीसमन्विता तस्यांतुतूषितानागाःपूजनीयागृहांगणे नारदीये मार्गशुक्लेतुपं
चम्यांनागानिष्ट्वाविधानतः नागेभ्यस्त्वभयंलब्ध्वामोदतेसहबांधवैः इयंश्रीपंचमी अत्रश्रीपंचमीव्रतं
कार्यं श्रीपंचमीव्रतकथा युधिष्ठिरउवाच कथंसाप्राप्यतेलक्ष्मीर्दुर्लभायानरैरपि दानेनतपसावा
पिव्रतेनापिवदस्वतत् जपहोमनमस्कारैःसंस्कारैर्वापृथग्विधैः एतद्वदयदुश्रेष्ठसर्वविन्मतोम
म श्रीकृष्णउवाच भृगोःख्यात्यांसमुत्पन्नापूर्वंश्रीःश्रूयतेशुभा वासुदेवायदत्तासामुनिनासासमुद्भवे
वासुदेवोपितांप्राप्यपीनोन्नतपयोधरां पद्मपत्रविशालाक्षींपूर्णेंदुनिभाननां भाभासितदिगंतांतां
तारामिवतडित्प्रभामिव नितंबाडंबरवतींमत्तमातंगगामिनीम् रेमेसहतयाराजन्विभ्रमोद्भ्रांतचेत
या साचविश्वंजगज्जित्वापतिंप्राप्यजगत्पतिं प्राप्ताकृतार्थमात्मानंमेनेमानयशोधरा नष्टकंटकंजग
त्सर्वंमयावद्धारितंमया लक्ष्म्याचपालितंसर्वंसहृष्टेवमहीतले सुभिक्षंक्षेममारोग्यमकामानंदमना
मयं हूयतेब्राह्मणैर्वह्निर्भुज्यतेत्रिदशैर्दिवि चातुर्वर्ण्यसमाकीर्णंपाल्यतेपार्थिवैरपि विरोचनादि
भिःसर्वैर्दृष्ट्वैवंबलवत्तरैः तपस्तप्तमघोरंचसमर्थमाश्रित्यसंयतैः सोमसंस्थाहविःसंस्थापाकसंस्था
दिभिर्मखैः सदाचारैःसमारब्धंयष्टमक्लिष्टकारिभिः एवंधर्मप्रधानैस्तुदैत्यैर्दारुणतात्मभिः जगदा
सीत्समाक्रांतंविक्रमेणबलेनच लक्ष्मीविलासप्रभवोदेवीनांचमहामदः शीलंसत्यंचशौचंचसमपोली
नमभूद्गृहे सत्यशौचविहीनांस्तान्देवान्संत्यज्यचेंदिरा जगामदानवकुलेकुलदेवानुरागतः लक्ष्मी
प्रभावमदतःपुनरुद्धतमानसैः व्यवहर्तुंसमारब्धमन्यायेनमदोद्धतैः वयंदेवावयंयज्ञावयंविप्रा
वयंजगत् ब्रह्मविष्णुशिवशक्राद्यावयंसर्वेदिवौकसः अहंकारविमूढानामान्नातादानवसत्तमान्

सागरे संविवेशाथ भ्रान्तचित्ताभ्रमतोः सता क्षीराब्धिमध्यगतया लक्ष्म्या क्षीणार्थसंचयं निरानंदं गतश्री-
कमभवद्भुवनत्रयं गतश्रीकमथात्मानं मत्वाथ बलसूदनः पप्रच्छांगिरसं विप्रं ब्रूहि किंचिद्व्रतं मम ये
न संप्राप्यते लक्ष्मीर्लब्धा न चलते पुनः निश्चलापि सहर्षं मित्रभोग्या भवति साधुने न सा श्रीरपि मंतव्या
या कन्यापाल्यते गृहे प गर्थे या सुहृन्मित्रभृत्यैर्नैवोपभुज्यते सुहृद्बंधुजनाः सर्वे यां भुंजंति सदा शुभाः
शक्रस्यैतद्वचः श्रुत्वा बृहस्पतिरुदारधीः कथयामास संचिंत्य शुभं श्रीपंचमीव्रतं यत्पुरा कस्यचिन्नोक्तं
व्रतानामुत्तमं व्रतं तदिदं कथयामास सरहस्यमशेषतः तच्छ्रुत्वा कर्तुमारब्धं शुभं तदमरैः सह देवदा
नवगंधर्वैर्यक्षैरक्षीणकल्मषैः सिद्धैः प्रसिद्धचरितैर्विष्णुना प्रभुविष्णुना ब्राह्मणैर्ब्रह्मतत्त्वज्ञैः समर्थैः पा
र्थिवैः सह कैश्चित्सात्त्विकभावेन राजसेनापरैरपि तामसेन तथा कैश्चित्कृतं व्रतमिदं तथा व्रते समाप
भूयिष्ठे निष्ठया परया प्रभो देवानां दानवानां च बुद्धिरासीद्यथोद्यता निर्मथ्य भुजवीर्येण सागरं सरितां पतिं
समाहरामो लक्ष्मीं तं हिताय त्रिदिवौकसां इत्थं ते समयं कृत्वा ममंथुर्वरुणालयं मंथानं मंदरं कृत्वा नेत्रं कृ
त्वा तु वासुकिं मथ्यमानजलाज्जातश्चंद्रः शीतांशुरुज्ज्वलः अनंतरं समुत्पन्ना लक्ष्मीः क्षीराब्धिमध्यगा त
या चालोकिताः सर्वे दैत्यदानवसत्तमाः आलोक्य तान् जगामाशु विष्णोर्वक्षःस्थलं शुभं विधिना विष्णुना ची
र्णव्रते तेनाब्धिसंभवा शरीरस्था बभूवास्य विभ्रमोद्भ्रांतलोचना किंच राजसभावेन शक्रेणैतत्कृतं यतः
ततस्त्रिभुवनैश्वर्यं प्राप्तं तेन महर्द्धिमत् तमसा यत्कृतं चीर्णं तैस्तु संचीर्णं दैत्यदानवैः तेन तेषामथैश्वर्यं द
ष्टनष्टमभूत्किल एवं सश्रीकमभवत्सदेवासुरमानुषं जगच्च जगतां श्रेष्ठव्रतस्यास्य प्रभावतः युधिष्ठि
र उवाच कथमेतद्व्रतं कृष्ण क्रियते मनुजैः कदा प्रारभ्यते प्राप्य जेच सर्वमेव जनार्दन श्रीकृष्ण उवाच
यदिदं देवगुरुणा चीर्णं श्रीविष्णुना पार्थिव श्रीसमृद्धिकरं तद्धि शृणु श्रीपंचमीव्रतं मार्गशीर्षे सिते पक्षे पंच
म्यां पन्नगोत्सवे उपवासस्य नियमं कुर्यात्पंचम्यां हृदि स्मरन् स्वर्णरौप्यां यथाशक्त्या ताम्रां मृत्काष्ठजामथ
चित्रपट्टगतां देवीं लक्ष्मीं स्नापालकारयेत् पद्मासनां पद्महस्तां लक्ष्मीं पद्मदलेक्षणां दिग्गजेंद्रैः स्नाप्य
मानां कांचनैः कलशोत्तमैः ततो यामत्रये जाते निम्नगायां गृहेऽथवा स्नानं कुर्यादसंभ्रांतः शाक्रवक्रोपवा
रतः देवान्पितॄन्प्रसंतर्प्य ततो देवगृहं व्रजेत् तत्रस्थां पूजयेद्देवीं पुष्पैस्तत्कालसंभवैः चपलायै पुनः
पादौ चंचलायै च जानुनी कटिं कमलवासिन्यै नाभिं ख्यात्यै नमो नमः स्तनौ मन्मथवासिन्यै ललितायै भु
जद्वयं उत्कंठितायै कंठं च माधव्यै मुखपंकजं नमः श्रियै शिरः पूज्य दद्यान्नैवेद्यमादरात् फलानि च य
थालाभं विरूढं धान्यसंचयं ततः सुवासिनीः पूज्याः कुसुमैः कुंकुमेन च भोजयेन्मधुरान्नेन प्रणिप
त्य विसर्जयेत् ततस्तंडुलप्रस्थं घृतपात्रेण संयुतं ब्राह्मणाय प्रदातव्यं सा श्रीर्मे प्रीयतामिति ॥ एतद्वि
ष्णुना सह वर्तते इति सा विष्णुसहिता श्रीरित्यर्थः निवर्त्यैतदशेषेणाह्नो भुंजीत वाग्यतः मासानुमासं क
र्तव्यं विधिनानेन भारत श्रीर्लक्ष्मीः कमला संपच्छ्रीर्नारायणी प्रिया तथा भूतिः स्मृतिस्तुष्टिः पुष्टिः सि
द्धिः तमाक्रमात् मासानुमासं राजेंद्र प्रीयतामिति कीर्तयेत् ततो द्वादशके मासि संप्राप्ते पंचमीदिने व
स्त्रमंडपिकां कृत्वा पुष्पगंधादिवासितां शय्यायां स्थापयेल्लक्ष्मीं सर्वोपस्करसंयुतां सौभाग्याष्टकसंयुतां
तप्रद्वहतसक्तीं सप्तधान्यसमोपेतां रसधान्यसमन्वितां पादुकोपानहच्छत्रभाजनासनसत्कृतां देवीं सं
प्रदद्याद्विधिवद्ब्राह्मणाय कुटुंबिने ब्राह्मणाय वेदविदुषे यस्मै वा रोचते स्वयं ब्राह्मणाय व्यासप्रणीतपुराणशास्त्र
ज्ञाय सोपस्करां सवत्सां च धेनुं दत्वा क्षमापयेत् क्षीराब्धिमथनोद्भूते विष्णोर्वक्षःस्थलालये सर्वकामप्र
दे देवि कृपां दियच्छ नमोऽस्तु ते ततः सुवासिनीः पूज्य वस्त्राभरणैः शुभैः भोजयित्वा स्वयं पश्चाद्भुंजीत स
ह बंधुभिः एवं कृते पार्थ भक्त्या श्रीपंचमीव्रते नरस्य श्रीर्भवने भाति कुलानामेकविंशति नारी या कु
रुते यात्तदाप्यानुज्ञा स्वभर्तृतः सुभगा दर्शनीया च वपुत्रा च जायते यः पंचमीव्रतमिदं दयितं मुरारेः

त्वा समाचरति पूज्यमशोकलग्नं राज्यश्रियं समुपविभज्य जनोपभोग्यां भुक्त्वा प्रयाति भुवने मधुसूदनस्य ॥
इति भविष्योत्तरोक्तं श्रीपंचमीव्रतम्. मार्गशुक्लषष्ठ्यां मल्लारिपूजोक्ता
सा चोत्तरविद्धायां कार्या षण्मुन्योरिति युग्मवाक्यात्. तदुक्तं ब्रह्माण्डपुराणे मल्लारिमाहात्म्ये मार्गशीर्षविशे-
षेण प्रतिपत्षष्ठिकांतरे पूजार्चनं कृतं भक्त्या तदत्ययमसंशयं यत्तथात्मास्यये त्वादिदासीदासगृहादिकं
मल्लारिप्रीतये देयं विशेषान्मार्गशीर्षके चंपाषष्ठ्यां स्कंदषष्ठ्यां तथा सर्वेषु पर्वसु चैत्रे श्रावणपौषे शुचौ नो
मल्लारिरर्चितः अत्र चंपाषष्ठीयोगः मासि मार्गशिरे शुक्ले षष्ठी च ध्रुवसंयुता रविवारेण संयुक्ता सा चंपेति
प्रकीर्तिता इयमेव स्कंदषष्ठी तदुक्तं नारदीये मार्गशीर्षशुक्लषष्ठ्यां निहतस्तारकोऽसुरः स्कंदेन स
क्तितः शस्त्राद्यलाद्यैः परिकल्पिता ततो संपूजयेत्स्कंदं गंधपुष्पाक्षतैः फलैः वस्त्रैराभरणैर्वापि नैवेद्यै
र्विविधैस्तथा रविवारेण संयुक्ता तथा शतभिषान्विता यदि वेत्सा समुद्दिष्टा चंपाह्वा मुनिसत्तम तस्यां वि
श्वेश्वरो देवो द्रष्टव्यः पापनाशनः पूजनीयो वंदनीयः स्मर्तव्यः सोऽत्र मिक्षता स्नानदानादिकं चात्र सर्वम-
क्षय्यमुच्यत इति इमां षष्ठीमारभ्य वर्षपर्यंतं राजन्स्कंदं विधाय संपूज्य च विप्राय दद्यात्. तत्र मंत्रः सेनावि
नायक स्कंद महासेन महाबल हरोमाग्निजषड्वक्त्र गंगागर्भ नमोऽस्तु ते भविष्योत्तरे श्रीकृष्ण उवाच येयं
मार्गशिरोमासि शुक्ला षष्ठी च भारत पुण्या पापहरा धन्या शिवा शांता गुहप्रिया स्नानदानादिकं कर्म तस्या
मक्षयमुच्यते ये तां पश्यंति गांगेयं दक्षिणापथमाश्रितं गांगेयं स्कंदं ब्रह्महत्यादिपापैस्ते मुच्यंते नात्र सं
शयः तस्मात्तस्यां सोपवासः कुमारं स्वर्णसंभवं राजन्वा महाराज स्मरणं यं वापि कारयेत् अपराह्णे ततः स्ना
त्वा समाचम्य यतव्रती पद्मासनस्थो गांगेयं ध्यायं स्थितेत्समाहितः ब्राह्मणस्तु ततो विद्वान्गृहीत्वा करकं न
वं पातयेत्तस्य शिरसि पितृसंवेदक्षिणामुखः चंद्रमंडलसंभूत भव भूतिपवित्रित गंगाकुमार धारेयं पा
तिता तव मस्तके एवं स्नात्वा समभ्यर्च्य भास्करं भुवनाधिपं पुष्पपूजार्पणात्पश्चात्पूजयेत्कृत्तिकासुतं देव
सेनापते स्कंद कार्तिकेय भवोद्भव अपार गुण गांगेय शक्तिहस्त नमोऽस्तु ते एभिर्नामपदैः स्तुत्वा नैवेद्यं त
न्निवेदयेत्. फलानि दाक्षिणात्यानि चंदनं मलयोद्भवं पार्श्वस्थो पूजयेच्छागं कुक्कुटौ स्वामिवल्लभौ सक
लायं मधुरं च प्रत्यग्रं हेमजं तथा चंद्रकारांजितं पार्श्वे संपूज्य स्कंदवल्लभं व्रीहिभिः सयवैर्होमः कार्यः साज्यै-
स्तिलैस्ततः एवं निर्वर्त्य विधिवत्फलमेकं युधिष्ठिर भक्षयित्वा स्वपेद्भूमौ स्वामिने दर्भसंस्तरे नारिकेलं मातु
लिंगं नारंगं पनसं तथा जंबीरं दाडिमं द्राक्षां ह्याम्रमन्यत्र फलानि च श्रीफलामलकं तद्वत्त्रपुसं कदलं फलं क्र
मादेतानि मासेषु भक्षयेन्नियतो व्रती अभावे बिल्वकालोत्थं फलमथादं तद्द्वितः प्रयत्नो हेमघटितश्छागो
वा कुक्कुटोऽथवा प्रातर्दद्याद्द्विजायोच्चैः सेनानीः प्रीयतामिति सेनानीः शरसंभूतः क्रौंचारिः षण्मुखो गुहः
गांगेयः कार्तिकेयश्च स्वामी बालग्रहाग्रणीः छागप्रियः शक्तिधरः कुमारो द्वादश स्मृताः प्रीयतामिति सर्वे
षु मासेषु परिकीर्तयेत् ब्राह्मणान्भोजयित्वादौ पश्चाद्भुंजीत वाग्यतः एवं संवत्सरस्यांते कार्तिके मासि शोभ
ने कार्तिकेयं समभ्यर्च्य वासोभिर्भूषणैस्तथा प्रतिमासं समाश्रित्य सर्वं देवेदमाचरेत् संवत्सरविधिं कृत्वा
पूजाहोमपुरःसरम् दद्याद्द्विजाय राजेंद्र वाचकाय विशेषतः वित्ता विप्राः स्मृता दिव्या भौमाश्चान्ये द्विजातयः
पारितेऽस्मिन्व्रते पार्थ तीर्णः स्याद्भवसागरः एवं यः कुरुते भक्त्या नरो योषिदथापि या संप्राप्येह शुभान्कामान्
गच्छंतीद्रसलोकतां सदैव पूजनीयस्तु कार्तिकेयो महीपते कार्तिकेयाटने नाम्यो गतापूज्यः प्रचक्षते संग्रा
मं गच्छमानो यः पूजयेत्कृत्तिकासुतं स सर्वं जयति वीरो यथेंद्रो दानवान्रणे तस्मात्सर्वप्रयत्नेन पूजयेच्छंक
रात्मजं पूजयानस्तु तं भक्त्या सर्वान्कामानवाप्नुयात् षष्ठ्यां नरः पूजां कुर्याद्भरतसत्तम सर्वपापविनि
र्मुक्तो गांगेयस्य पदं व्रजेत् त्रिः कृत्वा दक्षिणां वासो दत्वा श्रद्धासमन्वितः प्रणमेद्देवदेवेशं यः स गच्छेच्छिवमंदिरं
यः पूजयेच्छरवनोद्भवमादिदेवं शंभोः सुतं सदयितं गिरिजात्मजं च स्वर्गे निरर्गलसुखान्यनुभूय भूयः सेना

पतिर्भवतिपांडुपुरंयवीसो ॥

इतिभविष्योत्तरेमार्गशुक्लेकार्तिकेयषष्ठीव्रतं स्कंदपुराणेचंपाषष्ठीव्रतम् ॥

स्कंदउवाच धर्मराज्येततराजानंधर्मपुत्रंयुधिष्ठिरं कदाचिदागतोद्रष्टुं दुर्वासामुनिसत्तमः तंपप्रच्छमहा
तेजाधर्मसूनुः कृतांजलिः तद्व्रतंश्रोतुमिच्छामिकर्तव्यंचमुनिसत्तम दुर्वासाउवाच शृणुराजन्महाभाग
व्रतानामुत्तमंव्रतं षष्ठीह्युपचीर्णमात्रेसर्वकामांस्तुपूरयेत् भविष्योत्तरे श्रीकृष्णउवाच शृणुपांडवय
त्नेनफलषष्ठीशुभातथा यामुपोष्यनरःपापाद्विमुक्तःस्वर्गभाग्भवेत् मार्गशीर्षेशुभेमासिपंचम्यांनि
यतव्रतः षष्ठीमुपोष्यकमलंकारयित्वासकांचनं शर्करासंयुतंदद्याद्ब्राह्मणायकुटुंबिने रूपंचकांच
नेकृत्वाफलस्यैकस्यधर्मवित् दद्यात्प्रातःकृतस्नानोभानुर्मेप्रीयतामिति भक्त्यातुविप्रान्संपूज्यसप्तम्यां
क्षीरभोजनं कृत्वाकुर्यात्फलत्यागंयावत्स्यात्कृष्णसप्तमी पुनस्तामुपोष्यविधिवद्दनेनैवक्रमेणतु तद्वद्धै
मफलंदत्वासुवर्णकमलंतथा रक्तचंदनपुष्पैश्चरक्तवस्त्रसमन्वितं भानुरर्कोरविर्ब्रह्मा सूर्यःशक्रोह
रिःशिवः श्रीमान्विभावसुस्त्वष्टावरुणःप्रीयतामिति प्रतिमासंचसप्तम्यामेकैकेनामकीर्तयेत् प्रति
पक्षेफलत्यागमेतत्कर्मसमाचरेत् व्रतांतेविप्रमिथुनंपूजयेत्स्वविभूषणैः शर्कराकलशंदद्याद्धैमं
पद्मफलान्वितं यथावैसफलाःकामास्त्वद्भक्तानांसदारवेः तथानंतफलावाप्तिरस्तुजन्मनिजन्मनि इ
मामनंतफलदांफलषष्ठींकरोतियः सर्वपापविनिर्मुक्तः सूर्यलोकेमहीयते सुरापानादिकंकिंचिद्य
द्वाप्यन्यत्कृतं तत्सर्वंनाशमायातिसूर्यलोकंसगच्छति भूतान्भव्यांश्चपुरुषांस्तारयेदेकविंशतिं शृ
णुयाद्यापठेद्वापिसोपिकल्याणभाग्भवेत् हैमंफलंसकमलंसुसितंसितायांषष्ठीमुपोष्यविधिवद्धि
तपुंगवाय दत्वासुरासुरशिरोमणिघृष्टपादंभानुंप्रणम्यफलसिद्धिमुपैतिमर्त्यः

इतिभविष्योत्तरेफलषष्ठीव्रतं ॥ मार्गशुक्लसप्तम्यांमित्रसप्तमीव्रतम् ॥

नारदीये मार्गस्यसितसप्तम्यांमित्रव्रतमुदाहृतं यद्विष्णोर्दक्षिणंनेत्रंतद्देवाकृतिमानिह अदित्यांकश्यपा
ज्जातोमित्रोनामदिवाकरः अतोस्यपूजनेतस्यांयथोक्तविधिनाद्विज कृत्वाद्विजान्भोजयित्वासमेवमधुरा
दिना सुवर्णदक्षिणांदत्वाविसृज्याथमितैःस्वयं उपोष्यभानुंत्रिसंध्यंसमभ्यर्च्यधराशयः क्षीरसिक्तान्नसं
वंहमोदकंप्रस्थसम्मितं द्विजायदत्वाभोज्यानिसमाप्यप्रदक्षिणाः पृथग्गावःसुवर्णाद्याविसृज्याथप्रीत
चस्वयं प्रभयाख्यव्रतंचैतत्सर्वस्याभयदंस्मृतं मार्तंडाख्यंव्रतनामकथयंतिद्विजाःपरे एकमेवेतिचश्री
तमेकदेवंतथापुरैः इयंपूर्वाकार्या पुनःपूर्वयुतायदा इतिवचनात् कृत्यतत्वार्णवेपि अदितेःकश्य
पाज्जातोमित्रोनामदिवाकरः मार्गशीर्षस्यमासस्यशुक्लपक्षेशुभेतिथौ सप्तम्यांतेनसाख्यातालोकेस्मि
न्मित्रसप्तमी तत्रोपवासःकर्तव्योभक्त्याएषफलानिचेति अस्यविधिर्निर्णयामृते तत्रपूर्वदिनेउपोष्य
कृतवपनः स्नात्वा रविं सर्वोपचारैः संपूज्यब्राह्मणान्भोजयेत्ततः स्वयंमधुप्लुतंमिष्टान्नंभुंजीत तदुक्तंव
ह्निपुराणे यद्विष्णोर्दक्षिणंनेत्रंतद्देवाकृतिमत्पुनः अदित्यांकश्यपाज्जातोमित्रोनामदिवाकरः सप्तम्यां
तेनसाख्यातालोकेस्मिन्मित्रसप्तमी षष्ठ्यांतस्य पर्वकार्यंतस्मैमित्रायभानवे तत्रोपवासःकर्तव्योभ
क्त्याएषफलानिच रात्रौजागरणंकार्यंगीतनृत्यपुरस्कृतं सप्तम्यांवपनंकार्यंस्नात्वासंपूजयेद्रविं नाना
कुसुमसंभारैर्भक्ष्यैःपिष्टमयैःशुभैः मधुनासंप्लुतेनैवहोमोजाप्यंसमाधिना ब्राह्मणान्भोजयेत्पश्चाद्दीना
नाथांश्चमानवान् अष्टम्यांसंविभज्याथतथाचनदर्वीकान् दिनद्वयेचभोक्तव्यंमिष्टान्नंमधुनाप्लुतं दिन
द्वयेनसप्तम्यामष्टम्यांच अत्रमित्ररविरूपंवीरमित्रोदये शूलंवामकरेतस्यदक्षिणेसोमपद्मं मित्रनामा
त्रिनयनःकुशेशयविभूषितः विष्णुधर्मोत्तरेविशेषः मार्गशीर्षस्यमासस्यशुक्लपक्षेनराधिप सोपवा
सस्तुसप्तम्यामित्यादि ततःकमलैरविं रक्तचंदनपुष्पैश्चसंपूज्य तद्वैःप्रणामैःपूजयेदितिप्रकारांत

रेण मित्रसप्तमीव्रतं अस्यामेव कापुंवालोलार्कयात्रोक्ता काशीखंडे मार्गशीर्षस्य सप्तम्यां षष्ठ्यां वा रविवा
सरे विधाय वार्षिकीं यात्रां नरः पापाद्विमुच्यत इति ॥ इयं मार्गशुक्लसप्तमी चित्रसप्तमी सत्कुलजन्मा
रोग्यधनप्रदत्वात् तत्र कृत्यं हेमाद्रौ यो मार्गशीर्षे सितसप्तमीदिने हस्तर्क्षयोगे जगतः प्रसूतिं संपूज्य
भानुं विधिनोपवासी स्वर्गं यथापूर्णफलोपहारैरिति एवं संवत्सरं संपूज्य तदंते छत्रसुवर्णादिकं दद्या
दिति चित्रसप्तमी इयमेव नंदासप्तमी भविष्यत्पुराणे यात्र मार्गशिरोमासि शुक्लपक्षे च सप्तमी नं
दा सा कथिता वीर सर्वानंदकरी शुभेति अत्रापि सूर्यपूजादि पूर्ववत्कार्यमिति मार्गशुक्लसप्तमीव्रता॰
नि अथ कालभैरवयात्रोक्ता नारदीये मार्गशीर्षसिताष्टम्यां कालभैरवसन्निधौ उपोष्य जागरं कृत्वा स
र्वपापैः प्रमुच्यते यत्किंचिदशुभं कर्म कृतं मानुषजन्मनि तत्सर्वं विलयं याति कालभैरवदर्शनादि॰
ति कृष्णाष्टम्यामपि मार्गकृष्णाष्टम्यां कालभैरवजयंतीव्रतं शिवरहस्ये कालाष्टमीति विज्ञेया कार्त्ति
कस्यासिताष्टमी दर्शांतमासाभिप्रायेणायं कार्त्तिककृष्णाष्टमी तस्यामुपोषणं कार्यं तथा जागरणं नि
शि भैरवस्य तु कर्तव्या पूजा यामचतुष्टये कार्यं शिवकथालापैर्निशि जागरणं सदा जागरं चोपवासं॰
च कृत्वा कालाष्टमीदिने प्रयतः पापनिर्मुक्तः शैवो भवति शोभन इति रात्रौ यामचतुष्टये जागरणं
शिवपूजादि काशीवासिनां नित्यं यो दैवि भैरवाष्टम्यामुपवासं प्रयत्नतः न करिष्यति मोहेन यास्य॰
त्येव हि यातनामिति शिवरहस्यवचनात् काशीखंडेपि मार्गशीर्षासिताष्टम्यां कालभैरवसन्निधौ उ
पोष्य जागरं कुर्वन्महापापैः प्रमुच्यते यत्किंचिदशुभं कर्म कृतं मानुषजन्मनि तत्सर्वं विलयं याति का
लभैरवदर्शनात् अनेकजन्मनियुतैर्यत्कृतं जंतुभिस्त्वघं सर्वं विलयमायाति कालभैरवजागरात् त
च दर्शने स्नात्वा कर्तव्यमित्युक्तं तत्रैव तीर्थे कालोदके स्नात्वा कृत्वा च पितृतर्पणम् विलोक्य कालरा॰
जानं निरयादुद्धरेत्पितॄन् कृत्वा च विविधां पूजां महासंभारविस्तरैः नरो मार्गासिताष्टम्यां वार्षिकं वि
घ्नमुत्सृजेदिति उपोष्य जागरं कुर्वन्सर्वपापैः प्रमुच्यत इति च उपोषणं गतेनार्घ्यदानं कार्यमित्यु
क्तं शिवरहस्ये उपोषणान्यासभूतमर्घ्यदानमिदं स्मृतं अर्घ्यमंत्राश्च पितत्रैव भैरवार्घ्यं गृहाणेदं भी
मरूपाव्ययानघ अनेनार्घ्यप्रदानेन तुष्टो भव शिवप्रिय सहस्राक्षिशिरोबाहो सहस्रचरणाजर गृहा
णार्घ्यं भैरवेदं सपुष्पं परमेश्वर पुष्पांजलिं गृहाणेश वरदो भव भैरव पुनरर्घ्यं गृहाणेश सपुष्पं यातना
पह अत्र पूजोपवासजागरणानि प्रधानानि फलसंबंधात् अस्मिन्व्रते उपवासजागरणयोः प्रधान
योरहोरात्रसाध्यत्वेनाहोरात्रयुताष्टमी ग्राह्या अहोरात्रव्रतं यच्चेति स्मृतेः यदा तु पूर्वदिने सायाह्नेत
दुत्तरस्मिन्नपि प्रदोषे तु स्यात्तदापि पूर्वैव कृष्णपक्षगतत्वात् तत्कालस्यापि लाभाच्च रुद्रव्रतेषु सर्वेषु क॰
र्तव्या संमुखी तिथिरिति वचनाच्च दिनद्वये शतो रात्रिव्याप्तावुत्तरैव तत्रैव भैरवोत्पत्तेः प्रदोषकाली
नत्वादिति केचित् तत्र शिवरहस्ये मध्याह्ने भैरवोत्पत्तिश्रवणात् तथा च तत्रैवं नित्ययात्रादिकं कृत्वा म
ध्याह्ने संस्थिते रवौ विश्वपकस्य ब्रह्मणो रुद्रे जाते उक्तं तदोग्ररूपादनघान्मतः श्रीकालभैरवः आविरा
सीत्तदा लोकान्भीषयन्निव लालनपीति तस्मान्मध्याह्नव्यापिनी ग्राह्येत्यपरे अन्येत्वे तदपि नादियंते आ
विर्भावकालिम्नाः कर्तव्यत्वेनानभिधानात् आविर्भावोपि मध्याह्न एव शिवरहस्ये मध्याह्नो मरं कृ मिवा
से स्मरे प्रापुर्देवा विश्वादिसाधना इत्यादिना मध्ये बहूक्त्याभिधानात् अंते सूर्यो व्यस्तमुपागमदित्यभि
धानाच्च निष्यकें च सिंधुकारः ज्येष्ठे रुक्तं भैरवसन्निधावित्युक्ते जागरणोपवासादिकं काश्यामेव कर्तव्यमि
ति तस्य मानाभावादुपेक्ष्यमिति तदीयादेयं मार्गशीर्षासिताष्टम्यामित्यत्र निवाक्ये कालभैरवसन्निधा
वित्यस्योपात्तत्वेनाविवक्षितत्वे प्रमाणाभावात् यत्तु निर्णयसिंधौ मार्गकृष्णाष्टमी कालाष्टमीत्युक्तं तद्
भ्रमात् कालाष्टमी भाद्रकृष्णाष्टमीति हेमाद्र्युक्तेः तल्लक्षणमपि तत्रैव भाद्रकृष्णाष्टमीनिर्णये दृष्टव्यं

इतिकालभैरवाष्टमीव्रतनिर्णयः मार्गशुक्लनवमीनंदिनीनवमी नारदीयेपि मार्गेतुशुक्लानव
मीनंदिनीपरिकीर्तिता तस्यामुपोषितोविश्वजगदंबांप्रपूजयेत् गंधाद्यैः सोश्वमेधस्यफलभाक्स्यान्नसं
शयः मदनरत्नेभविष्ये मासिमार्गशिरेवीरशुक्लपक्षेतुयाभवेत् सानंदिनीमहापुण्यानवमीपरि
कीर्तिता यस्तस्यांपूजयेद्देवींत्रिरात्रोपोषितोनरः सोश्वमेधमवाप्येहविष्णुलोकेमहीयते ॥

इतिमार्गशुक्लनवमी अथमार्गशुक्लदशम्यांव्रतविशेषाभावादत्रदशमीमात्रे

सर्वदानुष्ठेयमारोग्यदशमीव्रतं गरुडपुराणे सनत्कुमारउवाच अथत्वंशृणुदेवर्षेदशमीव्रतमुत्तमं
सर्वरोगार्तिशमनंसर्वपुष्टिप्रदंशुभं व्रतमेतन्महाबुद्धेकार्य्यमारोग्यमिच्छता सर्वदाकार्य्यमेतद्धिलि
प्सताचिरजीवितं उपवासश्चकर्तव्योनवम्यामपिसुव्रत दशम्यांचकृतस्नानोमंगलायतनेहरिं देव
मिंदिरयासार्द्धंध्यायेत्तुजगतांपतिं वैनतेयभुजासक्तंनवमालाविभूषितं शंखचक्रगदापद्मशार्ङ्गासि
धरमच्युतं फलैश्चमधुरैःपुष्पैःपायसेनसमर्चयेत् अग्रतःस्थापयेत्कुंभंतीर्थतोयेनपूरितं तस्मिन्ना
वाहयेत्सचचक्रादीन्यायुधानिच चक्रगदामुशलधनुःखड्गानीतिहेमाद्रिः पूजयेद्गंधपुष्पैस्तुगुडान्ने
नसमाहितः द्रोणमात्रतिलैरत्नंकारयेद्दजिनोपरि तस्मिन्नष्टदलंपद्मंसौवर्णंहिनिधायच मनःषु
ष्ठानीन्द्रियाणिप्राणबुद्धिदलेष्वथ कर्णिकायांतथाकालंक्रमेणैवंसमर्चयेत् मनःश्रोत्रंचत्वक्चक्षुर्जि
ह्वाघ्राणप्राणबुद्धिरितिक्रमात् अनामयानितिष्ठंतुप्राणाश्चचिरसंस्थिताः अनाकुलाचमेबुद्धिःसर्वे
स्युर्निरुपद्रवाः मनसाकर्मणावाचामयाजन्मनिजन्मनि संचितंक्षपयत्वेनःकालात्माभगवान्
हरिः एवंसंप्रार्थ्यगुरवेसदक्षिणंसुपस्करं दत्वाविप्रान्भोजयित्वाआचार्यःकुंभवारिणा सायकं
स्नापयेद्विष्णोर्गुर्वनुज्ञापुरःसरं बांधवैःसहभुक्त्वातुनियमांस्तुत्सृजेत्पुनः एवंकृतेक्षिप्रमारो
ग्यंभवति ॥ इतिगरुडपुराणोक्तमारोग्यदशमीव्रतं ॥ नारदीये मार्गशुक्लदशम्यांतुचरेदारोग्य
कंव्रतम् गंधाद्यैरर्चयेद्विप्रानस्तन्नच्चरणोदकं पीत्वाचदक्षिणांदत्वाविसर्जेदेकभोजनः एतत्कृ
त्वाव्रतंविप्रश्चस्यामेवपदार्थदशमीव्रतारंभोविष्णुधर्मोत्तरे ॥ मार्गशीर्षादथारभ्ययावत्संवत्सरंभ
वेत् गंधमाल्यनमस्कारैर्धूपदीपान्नसंपदा दिगीशपूजनंकार्यंतथैवेंद्रादयोदश वत्सरांतेद्विजें
द्रायगांप्रदद्यात्पयस्विनीं पदार्थसिद्धिमाप्नोतियात्राकालेवणिग्जनः वाणिज्यकामस्यनरस्यपूर्णं
राज्यस्यार्थीविजिगीषतश्च विद्यार्थिनोवैरिपुनाशनार्थंहितंपदार्थव्रतमेतदुक्तम् ॥

इतिपदार्थदशमीव्रतं ॥ मार्गशुक्लैकादशीमोक्षदा ॥ नारदीये

मार्गशुक्लैकादशींवैमोक्षदांसमुपोष्यवै द्वादश्यांप्रातरभ्यर्च्यदनंतंविश्वरूपिणं सर्वैरेवोपचारै
स्तुविप्रान्संभोज्यवैव्रती विसर्ज्यदक्षिणांदत्वास्वयंभुंजीतबांधवैः एवंकृत्वाव्रतंविप्रभुक्त्वाभोगा
निहेप्सितान् दशपूर्वान्दशपरान्समुद्धृत्यहरिंव्रजेत् ॥ अथब्रह्मांडपुराणोक्तंमार्गशीर्षशुक्लैका
दशीव्रतं युधिष्ठिरउवाच वंदेविष्णुंप्रभुंसाक्षाल्लोकत्रयसुखप्रदं विश्वेशंविश्वकर्तारंपुराणंपुरुषो
त्तमं १ वदमेदेवदेवेशसंशयोस्तिमहान्मम लोकानांचहितार्थायपापानांक्षयकारणं २ मार्गशी
र्षसितेपक्षेद्वादशीचैवकाभवेत् किंनामकोविधिस्तस्याःकोदेवस्तस्यपूज्यते ३ एतदाचक्ष्वमेस्वा
मिन्विस्तरेणयथातथं श्रीकृष्णउवाच साधुसम्यक्चैवभोराजन्साधुतेविमलंयशः कथयिष्यामिरा
जेंद्रहरिवासरमुत्तमं उत्पन्नावासितेपक्षेद्वादशीममवल्लभा ५ मार्गशीर्षेसमुत्पन्नामेमदेहसमुद्भ
वा मुरस्यचवधार्थायउत्पन्नाराजवल्लभा कथिताचमयासावैत्वदग्रेराजसत्तम एवमेकादशी
राजन्त्रैलोक्येसचराचरे ७ मार्गशीर्षासितेपक्षेउत्पत्तिरितिनामतः अतःपरंप्रवक्ष्यामिमार्गशीर्ष

सितेतथा ८ यस्याः श्रवणमात्रेण वाजपेयफलं लभेत् प्रसिद्धा मोक्षनाम्नीति सर्वपापहरा परा ९ देवं दा
मोदरं चैव पूजयेच्च प्रयत्नतः तुलस्या मंजरीभिश्च धूपैर्दीपैः प्रयत्नतः १० तत्रापि पूजनं चैव गीतैर्नृत्यैस्त
थापरैः शृणु राजेंद्र वक्ष्यामि कथां पौराणिकीं शुभां ११ अधोयोनिगताः सर्वे पितृमातृसुतास्तथा अ
स्याः पुण्यप्रभावेण स्वर्गं यांति न संशयः १२ एतस्मात्कारणादस्या महिमानं शृणुष्व तत् पुरा तु नगरे रम्ये
कौशलेष्ववसन्नृपः १३ वैखानसेति राजर्षिः पुत्रवत्पालयन्प्रजाः द्विजाश्चान्ये वसंस्तत्र चतुर्वेदपराय
णाः १४ ऋद्धिमंतस्तु वै तस्य वैखानसस्य महात्मनः एवं स राज्यं कुर्वाणो रात्रौ स्वप्नमपश्यत १५ ददर्श
पितरं स्वं तु अधोयोनिगतं नृपः दृष्ट्वा दृष्ट्वा तु तं तत्र विस्मयोत्फुल्ललोचनः १६ कथयामास वृत्तांतं द्विजा
ग्रे स्वप्नसंभवं राजोवाच मया तु स्वपिता दृष्टो नरके पतितो द्विजाः १७ तारयस्वेति मां तात अधोयोनिगतं
त्वितः इति ब्रुवाणः स तदा मया दृष्टः पिता स्वयं १८ तदाप्रभृति भो विप्रा नो गशर्म लभामहे एतद्राज्य
सुखं मह्यं न सुखाय मतं तथा १९ अश्वा गजा रथाः सर्वे मामेते रोचयंति न कोशोऽपि न सुखायेति न किं
चित्सुखदं मम २० न दारा न सुता मह्यं रोचयंति द्विजोत्तमाः किं करोमि क गच्छामि शरीरं मे तु दह्यते
दानं व्रतं तपो योगं येन वै मम पूर्वजाः मोक्षं यांति च येनैव तद्देव कथयंतु मे किं तस्य जीवितं लोके सुपु
त्रस्य बलीयसः पिता तु यस्य नरके तस्य जन्म निरर्थकं २३ ब्राह्मणा ऊचुः पर्वतस्य मुनेरत्र आश्रमो
निकटे नृप गम्यतां राजशार्दूल भूतं भव्यं विजानतः २४ तेषां श्रुत्वा ततो वाक्यं वैखानो राजसत्तमः ज
गाम तत्र यत्रासावाश्रमे पर्वतो मुनिः २५ ब्राह्मणैर्वेष्टितस्तत्र प्रजाभिश्च समंततः आश्रमो विपुलस्तस्य
मुनिभिः संनिषेवितः २६ ऋग्वेदैश्च यजुर्वेदैः सामाथर्वणकोविदैः वेष्टितो मुनिभिस्तत्र द्वितीय इव
पद्मजः २७ दृष्ट्वा तु मुनिशार्दूलं राजा वैखानसस्तदा जगाम चावनीं मूर्ध्ना दंडवत्प्रणिपत्य च २८ पप्रच्छ
कुशलं तत्र सप्तस्वंगेषु सो मुनिः राज्ये निःकंटकत्वं च राजसौख्यसमन्वितं २९ राजोवाच तव प्रसादाद्ब्रो
विप्रकृपालेंगसप्तके भवनेषु तु कुशलं कोशलेष्वप्यविघ्नता ३० मया स्वप्ने च यद्दृष्टो जनको दुर्गतिं ग
तः केनापि व्रतदानेन मोक्षो भवति तस्य वै ३१ एवं मे संशयो ब्रह्मन् हृदोलां समुपागतः एतच्छ्रुत्वा नृप
वचः पर्वतो मुनिसत्तमः ३२ ध्यानस्तिमितनेत्रोऽसौ भूतं भव्यं विचिंतयत् मुहूर्तमेकं ध्यात्वा च प्रत्युवाच नृ
पोत्तमं ३३ मुनिरुवाच जानेऽहं तस्य राजेंद्र पितुस्ते पूर्वकर्मणः तवाद्यजन्मनि पिता क्षत्रियस्तु समाहि
तः ३४ कामासक्तेन कस्याश्चिद्रतिभंगः कृतः स्त्रियः त्रायस्वेति जल्पंत्या ऋतुदानान्नराधिप ३५ तेनै
वनवपित्रो वै भग्नं तद्दत्तदानकं कर्मणा तेन सततं नरके पतितस्त्वयं ३६ राजोवाच केनैव व्रतदानेन।
मोक्षस्तस्य महामुने निरयात्पापसंस्थानात्तन्ममाचक्ष्व पृच्छतः ३७ मुनिरुवाच मार्गशीर्षे सितेपक्षे
मोक्षानामेति नामतः सर्वैस्तु तद्व्रतं कृत्वा पित्रे पुण्यं प्रदीयतां ३८ तस्याः पुण्यप्रभावेण मोक्षस्तस्य भ
विष्यति मुनेर्वाक्यं ततः श्रुत्वा नृपः स्वगृहमागतः ३९ आग्रहायणिकः शुक्लः प्राप्तो भरतसत्तम अंतःपु
रचरैः सर्वैः पुत्रदारैस्तथा नृपः ४० व्रतं कृत्वा विधानेन पुण्यं दत्तं नृपेण यत् तस्मिन्दत्ते तदा तत्र पुष्पवृष्टि
रभूद्दिवः ४१ वैखानसपिता तत्र गतः स्वर्गं ततो गणैः राजानमंतरिक्षाच्च विमलोऽप्यभ्यभाषत ४२ स्व
स्ति स्वस्तीति पुत्र त्वमित्युक्त्वा स दिवं गतः एवं यः कुरुते राजन्मोक्षामेकादशीमिमां ४३ तस्य पापं क्षयं या
ति मृतो मोक्षमवाप्नुयात् नातः परतरा काचिन्मोक्षदा विमला शुभा ४४ पुण्यसंख्यां तु राजेंद्र न जानेऽहं
परंतप पठनाच्छ्रवणात्तस्या वाजपेयफलं लभेत् चिंतामणिसमा ह्येषा स्वर्गमोक्षप्रदायिनी ४५ ॥

इति ब्रह्मांडपुराणे मार्गशीर्षशुक्लपक्षे मोक्षैकादशीमाहात्म्यं समाप्तम् ॥

अस्यामेवैकादश्यां वह्निपुराणोक्तं सुनामद्वादशीव्रतं हेमाद्रौ अंबरीषउवाच कथं सुनामभिर्देवो ह्य
दश्यां मुनिसत्तम पूजितः केशवो मर्त्यैर्मुक्तिकामफलार्थिभिः वसिष्ठउवाच शृणुष्वैकमना भूप सुना

द्वादशीं शुभां सर्वपापहरां स्वर्ग्यां भुक्तिमुक्तिप्रदायिकां मनसापि चिकीर्षन्ति द्वादशीं ये नरोत्तमाः तेऽपि घोरं न पश्यन्ति पुनः संसारसागरं आद्यं सर्वव्रतानां तद्वैष्णवानां नृपोत्तम नरैः स्त्रीभिश्च कर्तव्यं विष्णोस्तुष्टिकरं परं मार्गशीर्षे शुभे मासि शुक्लपक्षे धृतव्रतः प्रथमं चैव गृह्णीयाद्द्वादशीविधिना नरः मनोवाक्कायचेष्टाभिः सुविशुद्धो जितेन्द्रियः दशम्यां नियतः स्नात्वा प्रणिपत्य जनार्दनं हविष्यान्नकृताहारः शुचिर्भूत्वा भवेद्व्रती उपलिप्ते शुचौ देशे भक्त्या देवं तथा वने उपोष्यैकादशीं सम्यक् पूजयित्वा जनार्दनं सुनामद्वादशी देवग्रहं भोक्ष्ये परेऽहनि एवं संकल्प नियमं प्रणम्य गरुडध्वजं दशम्यामेकभक्ताशी संयतः संवसेन्निशि एकादश्यां ततः प्रातरेकचित्तः समाहितः पूर्वं संपूजयेत्सूर्यं ततो देवं प्रपूजयेत् देवं विष्णुं नमस्ते देवदेवेश नमस्ते भक्तवत्सल भास्कराय नमस्तुभ्यं रवये कीयभानवे नमः सूर्याय देवाय नमस्ते सप्तसप्तये एकस्मै हि नमस्तुभ्यं एकचक्ररथाय च ज्योतिषां पतये नित्यं सर्वतेजोहराय च दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते एवं संपूज्य विधिवत्पुष्पधूपानुलेपनैः दीपैर्वस्त्रैः सुनैवेद्यैस्ततो विष्णुगृहं व्रजेत् नैवेद्यं हरये दद्यात्फलमोदकपाणिभिः गीतवाद्यैर्हरिं हृष्टः प्रणम्य च पुनः पुनः एवं पूजां हरेः कृत्वा द्विजं ज्ञानप्रदायकं पूजयेदन्तरं नास्ति विप्रकेशवयोरपि ततो व्रणं समालभ्य चंदनेन नवं घटं सुवर्णं तोयपूर्णं च न्यसेद्देवस्य सन्निधौ सुनीलं मौक्तिकाढ्यं च वज्ररत्नं सुवर्णकं न्यस्य गर्भे सवस्त्रं तत्पूजयेत्तत्र केशवं यस्य रोम्णि स्थिता मेघाः सर्वे सविषपन्नगाः सागराः कुक्षिदेशस्थाः सोऽत्रायातु जगत्पतिः वनस्पतिरसो दिव्यः सर्वगंधेषु चोत्तमः हुतेन देवसंमिश्रो धूपोऽयं प्रतिगृह्यतां केशव केशिहा दुष्टकंसदैत्यनिषूदनः सर्वकामप्रदो देवः स मे पापं व्यपोहतु एवमभ्यर्च्य देवेशं प्रणिपत्य क्षमापयेत् द्वादश्यां गंधतोयेन स्नापयित्वेह माधवं सर्वपापविनिर्मुक्तो वैष्णवीं लभते तनुं कृत्वाभिषेकं प्रयतात्मा सम्यगभ्यर्च्य केशवं नवसूत्रांतयाथेनं ब्राह्मणायोपपादयेत् केशवः प्रीयतां देवः कंसकेशिहंता महाद्युतिः स तु मे भगवान्प्रीत इष्टान्कामान्प्रयच्छतु एवं प्रदक्षिणां कृत्वा शृणु तस्यापि यत्फलं त्रिंशदब्दकृतं पापं हित्वा स त्रिविधं नरः षष्टिवर्षसहस्राणि स्वर्गे मोदति देववत् यदा कालादिहायाति स धर्मव्रतवान्भवेत् अभावाद्धेनूनां तन्मात्रां कल्पयेत्ततः तत्फले हि विनिर्दिष्टं यथाशक्त्या तु दक्षिणा भक्त्यैव फलमाप्नोति भक्तिरेवात्र कारणं पौषे चैव तु मासे च कुर्याद्देवं नरोत्तमः समाहितमना भूत्वा रसयेत्तु प्रदायकः आपो नारा इति प्रोक्ता आपो वै नरसूनवः अयनं तस्य तत्प्रोक्तं तेन नारायणः स्मृतः नारायणः प्रीयतां मे देवदेवो नरः सदा इष्टकामप्रदो नित्यं स मे पापं व्यपोहतु ततः प्रदक्षिणां कृत्वा ब्राह्मणान्भोजयेत्ततः एवं हि क्रियमाणस्य तस्य पुण्यफलं शृणु षष्टिवर्षकृतं पापं स्वल्पं वा यदि वा बहु हित्वा स्वर्गमाप्नोति वर्षाणामयुतं शुभं माघस्यैव तु मासस्य द्वादशीं शुक्लपक्षतः यः क्षिपेद्धि शुचिर्भूत्वा एकचित्तः समाहितः स्नापयेत्पूजयेन्नित्यं ब्राह्मणानां च तर्पणं प्रदानेन नृपशार्दूल इमं मंत्रमुदीरयेत् माललक्ष्मीश्च पुरा जेपी भगिनी शशिनोऽनुजा धनस्त्वमसि तस्यास्तु सर्वकामद माधव प्रीयतां देवदेवो मे मधुकैटभसूदनः कंसहा केशिहंता च मम पापं व्यपोहतु एवं यः कुरुते नित्यं तस्य पुण्यफलं शृणु यावज्जन्मकृतं पापं हित्वा सर्वमशेषतः दिव्यवर्षसहस्राणि स्वर्गे वसति षोडश गुडधेनुप्रदो माघे इहायातः सदा सुखी भवेद्राजा निरातंकः सर्वैश्वर्यसमन्वितः तत्र विष्णुपरो भूत्वा क्रमान्मोक्षमवाप्नुयात् फाल्गुनामलपक्षस्य द्वादश्यां नियतः शुचिः पूजयित्वा विधानेन गंधपुष्पादिना हरिं तिलधेनुं ततो दद्याद्रूपं वापि सभक्तितः मंत्रेणानेन राजेंद्र गोविंदः प्रीयतामिति गवां भक्तोऽसि गोस्वामी गोवासो गोकृतालयः सर्वकामप्रदो नित्यं स मे पापं व्यपोहतु ततः प्रदक्षिणीकृत्य शृणु पुण्यं यथा तथा बलीवर्दसहस्राणां दशानां धुरवाहिनां दत्वा तत्फलमाप्नोति द्वादश्यां यद्भवेत्तु दिव्यवर्षसहस्राणि स्वर्गे तिष्ठति देव

वत् चैत्रस्यद्वादशीशुक्लासमुपोष्यनृपोत्तम स्नात्वासंपूजयेद्विष्णुंजगतीतरचारिणं पूर्वोक्तविधिनास्नात्वागो
मूत्रैर्गोमयेनवा स्नापयित्वास्नतश्चैवपंचभिर्गंधसंयुतैः जलैःपश्चात्पूजयेद्देवंगंधधूपविलेपनैः पुष्पवासोभि
रैवेद्विमंत्रेणानेव बुद्धिमान् व्यापकस्त्वंहिभगवान्स्थूलोरत्नणायच दुर्हृत्तांश्चविनिर्जेतुमसिविश्वगतोह
रिः विश्वंभरव्रतमेप्रीतोजिष्णुर्देवः सनातनः सर्वपापविनाशायविष्णुर्मेप्रीयतामिति मधुयेनौरभावाच्चश
क्तितः पात्रमेवच दत्वायत्फलमाप्नोतितदिहैकमनाःशृणु पात्रंमधुयुतंपूर्वमिहजन्मनिसांप्रतं वर्तते
सकलंहित्वास्वर्गलोकेमहीयते वैशाखस्यतुमासस्यपूजयेन्मधुसूदनं मासस्यद्वादश्यांप्रकरणात् पू
र्वोक्तविधिनाराजन्सौवर्णमधुसूदनं जलकुंभेतुसंस्थाप्यमंत्रेणानेनपूजयेत् एकार्णवेजलेयातुर्हृत
वेदाःपुराहरे मधुनानिहतःसोपितेनासिमधुसूदनः इतयेनुमथोदत्वाब्राह्मणान्भोजयेत्ततः ततःप्रदक्षि
णांकुर्याद्विप्रंदत्वातथैवगां एवंतुक्रियमाणस्यतस्यपुण्यफलंशृणु कपिलायाःसहस्रस्यसम्यग्दत्तस्यपु
ष्करे यत्फलंतदवाप्नोतिभक्तियुक्तोनसंशयः यावदिंद्रोवसेत्स्वर्गेतावद्देवस्तिष्ठति ज्येष्ठस्यैवतुमासस्य
शुक्लपक्षेतुद्वादशी पूजयेद्विधिवद्भक्त्यासमुपोष्यत्रिविक्रमं जलधेनुमथोदत्वाविप्रायनियतःशुचिः य
ज्ञभागभुजोदेवान्सन्निहत्यक्रमैस्त्रिभिः त्रैलोक्यमाहृतंतस्मात्वेनासित्वंत्रिविक्रमः त्रिविक्रमंत्रिलोके
शंप्रीणयामित्रिविक्रमं ततःप्रदक्षिणांकृत्वाब्राह्मणेभ्यश्चदक्षिणां दत्वासंभोजयेत्तांस्तुशृणुतस्यापिय
त्फलं वाजपेयस्ययज्ञस्यसम्यगिष्टस्यपार्थिव तत्फलंलभतेमर्त्यःपरत्रचसुखीभवेत् वामनंतुतथाषा
ढेसमुपोष्यप्रयत्नतः उदिष्टेतिशेषः द्वादश्यांनियताहारोवामनंतत्रपूजयेत् द्विजायसर्वदेवानामादि
त्यःकामदोयथा तथात्वंभवमेदेववामनोबलिबंधनः तिलधेनुंततोदद्यात्वामनःप्रीयतामिति तद
भावातथापात्रंयथाशक्त्यासदक्षिणं पात्रंतिलपात्रे पूर्वजन्मकृतंपापमिहजन्मकृतंचयत् तत्सर्ववि·
निहन्त्याशुपरत्रेवशुभानिच श्रावणस्यतुमासस्यद्वादश्यांशुक्लपक्षतः यःक्षितेनियतोभूत्वासमुपोष्य
जनार्दनं समर्चयेद्यथाशक्तिपूर्वोक्तविधिनाततः धेनुंसर्वगुणोपेतांब्राह्मणायनिवेदयेत् मंत्रेणानेनरा
जेंद्रपुराणविहितेनच समासाद्ययतोलक्ष्मीलोकेभ्यःक्षीरसागरे स्वपितिश्रावणेमासिश्रीधरोसिजगत्प
ते श्रावणेश्रीधरोदेवःश्रीवत्सःश्रीनिकेतनः प्रीयतांहिश्रियःकांतोगतिमिष्टांददातुमे गवांदशसहस्रे
णपात्रदत्तेनयत्फलं सकलंलभतेमर्त्योभक्तियुक्तोनसंशयः स्वर्गेसुविपुलान्भोगान्भुनक्तिसुरराडिव
तेनैवविधिनाराजन्मासेभाद्रपदेतथा समुपोष्यनरोभक्त्याहृषीकेशंप्रपूजयेत् गुडधेनुंततोदद्याद्व·
त्वाविभवविस्तरात् हृषीकाणींद्रियाण्याहुस्तेषामीशोजगत्पतिः करोतिकर्तृभूतोसौहृषीकेशोभवांस्ततः
देवदेवंहृषीकेशंभूतेशप्रभवाव्ययं प्रीणयामिसुसंप्रीतोममपापंव्यपोहतु एवंप्रदक्षिणंकृत्वाशृणुत
स्यापियत्फलं इहजन्मकृतंपापंपूर्वजन्मकृतंचयत् सर्वंनश्यसमात्कृत्वाविष्णुलोकेमहीयते द्वादश्यांस
मुपोष्यैवंपद्मनाभंतथाश्विने पूजयेद्विधिवद्भक्त्यागंधधूपविलेपनैः गंधधेनुंततोदद्यात्कर्पूरागुरुचंदनैः
कुंकुमेनहिराजेंद्रवित्तशाठ्यंविवर्जयेत् एकार्णवेगतेलोकेस्वपतोयस्यवेधसः निवासायाभवन्नाभ्यांपद्म
नाभोसिहेच्युत प्रीयतांपद्मनाभोमेदुष्कृतंचोपशाम्यतु इत्युक्त्वातंसमभ्यर्च्यदद्याद्धेनुंद्विजातये इत्येवंक्रिय
माणस्यतस्यपुण्यमतःशृणु सप्तजन्मकृतंपापंस्वल्पंवायदिवाबहु दग्ध्वातत्सकलंभूपविष्णुलोकंसगच्छ
ति कार्तिकस्यतुमासस्यएकादश्यामुपोषितः प्रसुप्तंबोधयेद्देवंश्रद्धाभक्तिसमन्वितः नृत्यैर्गीतैस्तथावा
द्यैर्ऋग्यजुःसाममंगलैः वीणापणवशब्दैश्चपुराणश्रवणेनच वासुदेवकथाभिश्चस्तोत्रैरन्यैश्चवैष्णवैः सु
भाषितैरिंद्रजालैर्भूमिशोभाभिरेवच पुष्पैर्धूपैश्चनैवेद्यैर्दीपवृन्दैश्चशोभनैः होमैर्भक्ष्यैरपूपैश्चफलैःशा
कैश्चपायसैः इक्षोर्विकारैर्मधुनाद्राक्षाखारैःसदाडिमैः अक्षोटंमदनफलाकारस्निग्धंमधुरफलं अक्षोट
इतिप्रसिद्धं कुठेरकस्यमंजर्यामालत्यालवणेनच कुठेरकार्जकः हृद्याभ्यांश्वेतरक्ताभ्यांचंदनाभ्यांचसर्व

दा कुंकुमालक्तकाभ्यां च रक्तसूत्रैः सकंकणैः तथा नानाविधैः पुष्पैर्द्रव्यैर्वा विक्रयाहृतैः तस्यां रात्र्यां व्य
तीतायां द्वादश्यामरुणोदये स्नात्वा नदीजलैः शुभैः प्रतिमां स्नापयेत्ततः उष्णितां च परां रम्यां ताम्रीं रौप्यां
सुवर्णजां वै सर्वां प्रतिमां यत्र चेद्भवेत् वित्तलोभं विना तत्र स्नानादिपूजा च वेद्यां कार्या च वैष्णवे आदौ घृतेन
तैलेन मधुना तदनंतरं दध्ना क्षीरेण च तथा पंचगव्येन शास्त्रवित् उद्वर्तनं माषचूर्णैर्मसूरदलकान्वि
तं कालीयकं चैव तगरं वर्णकं तथा कालीयकं पीतचंदनं वर्णकं कुंकुमं सर्षपाश्च प्रियंगुश्च मातुलुं
गरसस्तथा सर्वौषध्यः सर्वगंधाः सर्वबीजानि कांचनं मंगलानि यथालाभं रत्नानि बहुशोदकं हस्ति
दंतोद्धृता मृच्च वृषशृंगोद्धृता तथा नदीतीराद्धृता स्थानाद्वल्मीकात्संगमाद्ध्रदात् इंद्रस्थानाच्च सरसस्त
था पर्वतमस्तकात् इंद्रस्थाने यत्रैंद्रयष्टिरारोपिता एताभिः स्नाप्य देवेशं दद्याद्गोरोचनां शुभां त
था च कलशा देया यथाशास्त्रमलंकृताः जातीपल्लवसंयुक्ताः सफलाश्च सकांचनाः पुण्याहवेदशब्दे
न वीणावेणुरवेण च शब्देन मधुरेणैव सूतमागधवंदिनां एवं संस्नाप्य गोविंदं सानुलिप्तं स्वलंकृतम्
सुवाससं पूजयेत्तु मनोभिश्च कुंकुमैः दीपैर्धूपैर्मनोज्ञैश्च पायसेन तु भूरिणा मात्रारत्नप्रदानैश्च हृद्यैमैः
पुष्पैः सदक्षिणैः वासोभिर्भूषणैर्हृद्यैर्गोभिरश्वैर्गजैरपि ब्राह्मणाः पूजनीयाश्च विष्णोः राधाः स्वमूर्तय
विष्णोरात्रौ प्रसुप्तस्य दामोदरगतं यतः ब्रह्मांडमस्य तेनासि दामोदर इति स्मृतः दामोदर इमां येन तु गृह्णा
तु स्वयमेव हि द्विजरूपेण ते विष्णोः प्रकृत्यैषा सनातनी विभक्तिलोपश्चार्षः इत्येवं पृथिवीदानफलं
प्राप्नोति नरः सुवर्णस्य महार्घस्य तु दत्वा नृपवरोत्तम हृत्वा पापान्यशेषाणि शतजन्मांतराणि वै वै
ष्णवं लोकमाप्नोति मानवः क्षीणपातकं सुवर्णस्य महार्घस्य तु दत्वा नृपवरोत्तम हृत्वा पापान्यशेषाणि
शतजन्मांतराणि वै वैष्णवं लोकमाप्नोति यावदिंद्राश्चतुर्दश सम्यगत्र व्रते चीर्णे सप्तजन्मानुगं फलं द
दाति भगवान्विष्णुः क्रमान्मोक्षं नरेश्वर ब्राह्मणान्भोजयेद्भक्त्या भक्ष्यैरुच्चावचैरपि उच्चावचमनेकवि
धं ततः प्रदक्षिणां कृत्वा यथाशक्त्या च दक्षिणां कलशान्वै द्वादशभ्यो ब्राह्मणेभ्यः प्रदापयेत् वस्त्रेण वेष्टि
तग्रीवान्हेमगर्भोपशोभितान् दधिक्षीरयुतांश्चैव सगुडान्नपभूरिशः भक्तिर्यथा तथा दद्याद्भक्तिरेवात्र
कारणं प्रसंगेनापि यो राजन् सुनामद्वादशीं नरः करोति पुण्यभागी स यथा दैत्यो भवद्बलिः एवं यः
कुरुते राजन् सुनामद्वादशीं नरः राजसूयस्य यज्ञस्य फलं समधिकं भवेत् सर्वदानेषु यत्पुण्यं यच्च
पुण्यं तपोवने सर्वतीर्थेषु यत्पुण्यं तत्सर्वं समवाप्नुयात् गावो द्वादश दातव्या वस्त्रयुग्मानि कांचनं
अलाभे चैव गामेकां पात्रं वा स्वर्णसंयुतं समासेन तथाप्येवं चंचले जीविते यतः बहुविघ्नानि धर्मस्य क
स्मिंश्चिद्द्वंद्वं प्रजायते एतज्ज्ञात्वा तु मेधावी व्रते युज्येत यत्नतः न तस्य विघ्नलोभोस्ति भक्तिर्यस्यास्ति केशवे
अनेन विधिना यस्तु द्वादशीं प्रतिवत्सरं कृत्वा नरः परं याति विष्णुलोकमनामयं सुनामद्वादशी चैषा
व्रतानामुत्तमा नृप आख्यानैस्तु कर्त्तव्या तोषयद्भिर्जनार्दनं यश्चैनां कीर्त्तयेत्पुण्यां शृणुयाद्वा द्वादशीं नरः
तावुभौ गच्छतः स्वर्गं कर्त्ता विष्णुपुरं व्रजेत्

इति वह्निपुराणोक्तं सुनामद्वादशीव्रतं अथैकादशीव्रतोद्यापनं तदुक्तं हेमाद्रौ भविष्यो
त्तरे नारद उवाच भगवन्देवदेवेश पुराणपुरुषोत्तम किंचित्पृच्छामि संदेहं कारुण्यात्कथय प्रभो अ
खंडद्वादशी यासौ पुराणे कथिता त्वया सा सर्वव्रतखंडानां पूरणाय किमुच्यते यया सर्वव्रतानां तु वैक
ल्यं पूर्यते प्रभो तस्या उद्यापनविधिर्न सम्यक् कथितस्त्वया न तद्व्रतस्य वक्तास्ति त्वत्तो नान्योऽपि सुदुर्लभः
विष्णुरुवाच मार्गशीर्षे शुभे मासि शुक्लपक्षे शुचिव्रती दशम्यां केशवं पूज्य हविष्यान्नकृताशनः नि
र्वर्त्य पश्चिमां संध्यां गृह्णीयाद्व्रतं तथा वनं उपस्पृश्य यथान्यायं मंत्रमेतदुदीरयेत् कृष्ण विष्णो हृषीकेश
केशव क्लेशनाशन करिष्येऽहं व्रतारंभं भवेयावद्दिनत्रयं इति संप्रार्थ्य गोविंदं मंत्रेणानेन ततः स्वपेत् व्र

तग्रहणमंत्रः ततःप्रभातेचोत्थाययथोक्तंव्रतमाचरेत् चतुर्भिःपारणंयामैःकथितंयद्विजोत्तम तत्पात्र-
दानविधिनाभिद्यतेनहिपारणं एवंद्वादशनिर्वर्त्यद्वादशीःपद्मजोद्भव उद्यापनंततःकुर्य्याद्विधिमंत्र
पुरस्कृतं एकादश्यांशुचिःस्नातःशुद्धांबरधरोव्रती सर्वतीर्थेषुयत्स्नानंसर्ववेदेषुयत्फलं तत्पादप
यतोयेनसर्वंमेभवतुप्रभो इतिस्नानमंत्रः स्नानंकृत्वाततोदेवंपूजयेद्गरुडध्वजं एकत्रमूर्त्तिसंप
न्नंलक्ष्मीनारायणंप्रभुं यथाशक्त्याथकुर्वीतसौवर्णंरत्नभूषितं सहस्रशीर्षामंत्रेणस्नापयेद्यवा
रिणा मधुवातादिभिर्मंत्रैर्मधुनास्नापयेद्धरिं आप्यायस्वेतिमंत्रेणपयसास्नापयेत्ततः दधिक्राव्णोति
मंत्रेणदध्नातस्नापयेत्ततः तेजोसीतिचमंत्रेणस्नापयेत्सर्पिषाप्रभुं मधुवातेतिमंत्रेणमधुनास्नापये
त्पुनः स्वादुःपवस्वमनुनाततःशर्करयापिच एकीकृत्यततःसर्वंशर्कराखंडसंयुतैः स्नापयेत्परयाभ
क्त्याजयशब्दादिमंगलैः माषकर्णादिभिश्चूर्णैर्निर्घृष्टांप्रतिमांततः चंदनोशीरकर्पूरकुंकुमादिभिर
र्चयेत् नैर्विलिप्यहरिंभक्त्याततोमंत्रमुदीरयेत् यथाशक्त्यामयादेवस्नापितश्चविलेपितः न्यूनाति
रिक्तंतत्सर्वंलक्ष्मीनारायणःक्षमेत् अनुलेपनमंत्रः ततोवस्त्रयुगंश्रेष्ठमानीयपरिधापयेत् पीतंवालो
हितंवापिश्वेतंनानाविचित्रितं परिधानंयथाशक्त्यातवदेवमयार्पितं न्यूनातिरिक्तंतत्सर्वंलक्ष्मीनाराय
णःक्षमेत् परिधानमंत्रः परिधाप्यततोदेवंपुष्पैर्नानाविधैःशुभैः संछाद्यपुष्पमालाभिर्मंत्रमेतमुदी
रयेत् पुष्पैरपियथाशक्त्यापूजितोसिजनार्दन न्यूनातिरिक्तंतत्सर्वंलक्ष्मीनारायणःक्षमेत् पुष्प
मंत्रः एवंकृत्वाविधानेनशय्यांचविनिवेदयेत् तूलीपर्यंकयुक्तांतुश्वेतप्रच्छदगंडकैः प्रतिपादसमा
नांवैचतुष्पादप्रतिष्ठितैः निवेश्यतत्रदेवेशंलक्ष्मीनारायणंप्रभुं नैवेद्यानिनिवेद्यानिनानाभक्ष्ययुता
निच लेह्यान्यप्यवहार्याणिचोष्याणिचर्व्याणिच पानकानिचवैयन्नाद्यस्मिन्देशेयथातथा तानि
सर्वाण्युपादायदेवायविनिवेदयेत् फलानिचसुगंधीनिपक्वानिचनिवेदयेत् एवंनिवेद्यतत्सर्वंभ
क्त्यामंत्रमुदीरयेत् यथाविध्युपसंयुक्तंमयातवनिवेदितं लक्ष्मीनारायणविभोभक्त्यातत्प्रतिगृह्यतां
इतिनैवेद्यमंत्रः देवस्यतुशिरःपूर्वंपादौपश्चात्प्रकल्पयेत् शिरःस्थानेततःकुंभंवारिपूर्णंमनोहरम्
स्थापयेत्कर्करीयुग्मंसरत्नंवस्त्रभूषितं कर्करीगलंतिका स्थापयित्वाततःकुंभंततोमंत्रमुदीरयेत्
यावत्पूजासमारब्धावाचंचस्वंवर्जयेत्सदा भुक्त्वापीत्वातथाचम्यतोयेनानेनकेशव मद्भक्त्यापूजितोदेव
स्वपत्वंसुखंस्वयं इतिस्वापनमंत्रः शय्योपचारेयत्किंचित्सर्वंवैनिवेदयेत् शय्योपचारंसुगंधादि
यावत्पूजासमारब्धास्नानादिशयनांतता सहूतंगुग्गुलुंतावद्दहेद्देवाग्रतोनिशि ततोविप्रंसमानीय।
भार्ययासहितंशुभं सर्वडलैर्दत्तौहीनंसांगोपांगसमन्वितं वेदविद्याव्रतस्नातंपूजितंसकलोद्भवैः दे
वस्याग्रेततोविप्रंभार्ययासहितंन्यसेत् प्राङ्मुखंविमलंशुद्धंभक्त्यातंपूजयेत्ततः बहुनाकिंप्रलापेनक
थितेनेहनारद देवःसंपूजितोयद्वत्तद्वद्विप्रंप्रपूजयेत् विष्णुब्राह्मणयोर्भेदंनकदाचिद्विकल्पयेत् इति
येषांहृदिसदातेपूज्याश्चयतीश्वराः द्वादशान्यान्नवान्कुंभान्पूर्णान्शुद्धेनवारिणा स्थापयेद्देवपर्यंके
परितः शुद्धचेतसा द्वादशैवतथागावःसवत्साःकांस्यदोहनाः क्षीरवत्यःसुशीलाश्चस्थापयेद्देवसन्निधौ
अथवावित्तवैकल्येकुर्य्याज्जीवितयंनरः दद्यात्समस्तमुक्तायतवाशक्तिमतोमता एकाप्यनुत्तमगुणा
तस्यस्याद्द्वादशाधिका स्ववित्तशक्त्यायत्किंचिद्दानंशुभंस्पृहतेनरः तत्सर्वंद्विजदेवाभ्यांसन्निधौसंप्रकल्प
येत् उपस्कराणिदिव्यानिछत्रोपानत्सुपादुकाः गोसंख्यादिकृतंसर्वंदानंतस्मिन्प्रकल्पयेत् यदा
दानेनगौरेकाकल्प्याशक्तिप्रपूर्वकं सासंपूर्णालंकृताच्छावत्सेनसहपूजिता सुवर्णशृंगीरौप्यखुरा
घंटाभरणभूषिता तद्वर्णवस्त्रसंवीतावत्सेनसहपूजयेत् एवंनिर्दिष्टविधिनादानपूजादिनासमं देव
ब्राह्मणयोर्भक्त्याततोविप्रंक्षमापयेत् एतद्गृहाणमेविप्रभार्ययासहितःप्रभो एतेनावाप्यतंविप्रेंद्र।

स्मिन्सर्वं निवेदयेत् प्रतिगृहीता दाता च व्रती विष्णुर्यथा तथा मया दत्तमिदं सर्वं गृहाण त्वं द्विजोत्तम दाता च
विष्णुर्भगवानंतः प्रतिगृहीता च स एव विष्णुः तस्मात्त्वया दत्तमिदं च सर्वं प्रतिगृहीतं च मया शुभाय ब्राह्म
णप्रतिग्रहमंत्रः अन्येभ्योपि यथाशक्त्या तस्मिन्काले प्रदीयते दीनांधकृपणादिभ्यस्तद्दत्तमक्षयफलं भवेत्
वित्तशाठ्यं न कुर्वीत सम्यक् फलमाप्नुयात् इत्यखंडव्रतस्योद्यापनविधिः सूतः कथितस्ते मया वत्स त
स्य पुण्यफलं शृणु यावज्जगज्जलधिशैलचरादिमत्स्यात्तावज्जनो भवति पुण्यफलोपभोक्ता तावद्धवि
स्तु भवनान्न परिवर्तते सावंते लयं स परमात्मनि याति विष्णौ

इति भविष्योत्तरोक्तमखंडद्वादशीव्रतोद्यापनविधिः अथ भविष्योत्तरोक्तं धरणीव्रतं

युधिष्ठिर उवाच यदेतत्परमं गुह्यं सर्ववेदेषु पठ्यते स देवः पुंडरीकाक्षः स्वयं नारायणो हरिः स यज्ञैर्वि
विधैरिष्टैर्दानैर्देवैश्च सत्तमः प्राप्यते परमो देवो वासुदेवः सनातनः बहुवित्तेन भगवान्नृषिभिर्वेदपा
रगैः प्राप्यते तु सहायैश्च काचिद्यज्ञाः सुदुष्कराः वित्तेन च महादानं दातुं कृष्ण न शक्यते विद्यमानेपि न
मतिः कुटुंबासक्तचेतसः तस्मात्त्वं कथं कृष्ण सर्वथा दुर्लभो हरे अल्पायासेन लभ्येत येन देवः सना
तनः तन्मे सामान्यतो ब्रूहि सर्ववर्णेषु यद्भवेत् श्रीकृष्ण उवाच कथयामि परं गुह्यं रहस्यं देवनिर्मितम्
धरण्यापि कृतं पूर्वं मज्जन्त्या वसुधातले पृथिव्यां पार्थिवो भावः सलिलेनाति वाहिता तस्मिन्सलिलसं
ग्ने मही प्रायाद्रसातलं साभूत धात्री धरणी रसातलगता शुभा आराधयामास विभुं देवं नारायणं परम्
उपवासव्रतैर्देवी नियमैश्च पृथग्विधैः कालेन महता तस्याः प्रसन्नो गरुडध्वजः उज्जहार स्थितो चैमा
स्थापयामास सोच्युतः युधिष्ठिर उवाच कोसौ धरण्या संचीर्ण उपवासो यदूत्तम कानि व्रतानि च तथा त
न्मे त्वं वक्तुमर्हसि श्रीकृष्ण उवाच मासे मार्गशिरे राजन्दशम्यां नियतात्मवान् स्नात्वा देवार्चनं कृत्वाग्नि
कार्यं यथाविधि शुचिर्वासाः प्रसन्नात्मा हव्यमन्नं सुसंस्कृतं भुक्त्वा पंच पदं गत्वा पुनः शौचं च पादयोः कृ
त्वाष्टांगुलिमात्रं तु क्षीरवृक्षसमुद्भवं भक्षयेद्दंतकाष्ठं तु ततश्चाचम्य यत्नतः स्पृष्ट्वा खानि सर्वाणि चिं
तयित्वा जनार्दनं शंखचक्रगदापाणिं पीतवाससमच्युतं प्रसन्नवदनं देवं सर्वलक्षणलक्षितं ध्यात्वा
पुनर्जलं हस्ते गृहीत्वा तु जनार्दनं स्मृत्वार्घ्यं पादयोस्तस्य करतोयेन मानवः एवमुच्चारयेद्वाचं तस्मिं
न्काले महामते एकादश्यां निराहारः स्थित्वाहमपरेहनि भोक्ष्यामि पुंडरीकाक्ष शरणं मे भवाच्युत एव
मुक्त्वा ततः पश्चात्सुप्रभाते विमले तथा स्नानार्थं संगमे गत्वा नदीं प्राप्य समुद्रगां तडागं वाथ गृहे
वापि यतात्मवान् आनीय मृत्तिकां शुद्धां मंत्रेणानेन मानवः धारणं पोषणं त्वत्तो भूतानां देवि सर्वदा
तेन सत्येन मां पाहि पापान्मोचय सुव्रते इति मृत्तिकामंत्रः ब्रह्मांडोदरतीर्थानि करैः स्पृष्टानि ते रवे भवं
ति भूतानि सत्तां मृत्तिकामालभाम्यतः इति सूर्यप्रार्थनामंत्रः त्वयि सर्वे रसा नित्यं स्थिता वरुण सर्व
दा तेन मां मृत्तिकां प्लाव्य पवित्रं कुरु सर्वदा एवं दत्त्वा मृदं तोये प्रसाद्यात्मानमालिपेत् निष्ठुष्या पूर्व
मृदया कुंडमालिख्य वै जले ततः स्नात्वा नरः सम्यक् संध्यामावर्त्य वाग्यतः आचम्यावश्यकं कृत्वा पुनर्देव
गृहं व्रजेत् ततो राध्य महायोगं देवं नारायणं प्रभुं केशवाय नमः पादौ कटिं दामोदराय च ऊरू युग्मं
नृसिंहाय उरः श्रीवत्सधारिणे कंठं कौस्तुभनाथाय वक्षः श्रीपतये तथा त्रैलोक्यविजयायेति बाहू
सर्वात्मने शिरः रथांगधारिणे चक्रं शंकरायेति वारिजं गंभीरायेति च गदां अभयं शांतिमूर्तये एवमभ्य
र्च्य देवेशं देवं नारायणं प्रभुं ततस्तस्याग्रतः कुंभांश्चतुरः स्थापयेद्बुधः जलपूर्णान्समाल्यांश्च सितचंदन
चर्चितान् चतुर्भिर्जलपात्रैश्च स्थगितान्रत्नसंयुतान् चत्वारस्ते समुद्राश्च कलशाः परिकीर्तिताः तेषां
मध्ये सप्तपीठं स्थापयेद्वस्त्रसंयुतं तस्मिन्सुवर्णरौप्यं वा ताम्रं वा दारवं तथा पात्रं तोयभृतं कृत्वा तस्य म

येत्ततोन्यसेत् सौवर्णमत्स्यरूपेण कृत्वा देवं जनार्दनं वेदवेदांगसंयुक्तं श्रुतिस्मृतिविभूषितं भक्ष्यैर्बहु
विधैराजन्फलैः पुष्पोपशोभितैः गंधैः पुष्पैर्मंत्रवरैरर्चयित्वा यथाविधि रसातलगता वेदा यथा देव त्वया
हृताः मत्स्यरूपेण तद्वन्मां भवादुद्धर केशव एवमुच्चार्य तस्याग्रे जागरं तत्र कारयेत् यथाविभवसारे-
ण प्रभाते विमले पुनः चतुर्णां ब्राह्मणानां च चतुरो दापयेद्घटान् पूर्वं तु ऋग्वेदयाच्छंदोगे दक्षिणे तथा
यजुःशाखान्विते दद्यात्पश्चिमं चाथ सत्तमं उत्तरं कामतो दद्यादेष एव विधिक्रमः ऋग्वेदः प्रीयतां पूर्वैः
सामवेदस्तु दक्षिणः यजुषः पश्चिमो नाम्नाथर्वा णोत्तरं तथा ताम्रपात्रैस्तु सलिलैः स्थापितान्कार
येद्घटान् ततस्तं जलपात्रस्थं ब्राह्मणाय कुटुंबिने तं सौवर्णमत्स्यं दद्यादित्यर्थः दद्याद्देवं महाभागा
ततः पश्चात्तु भोजयेत् ब्राह्मणान्पायसेनाग्र्यान्ततः पश्चात्स्वयं नरः भुंजीत भृत्यसहितो वाग्यतः संय-
तेंद्रियः अनेन विधिना यस्तु द्वादशीं तर्पयेन्नरः तस्य पुण्यफलं चाथ शृणु सत्यवतां वर यदि वक्त्रस
हस्राणां सहस्राणि भवंति हि आयुश्च ब्रह्मणस्तुल्यं भवेद्यदि महाव्रत तदा तस्य फलं संख्या कर्तुं शक्यं
न वा भवेत् यः सकृद्द्वादशीमेनामनेन विधिना नृप सब्रह्मलोकमाप्नोति तत्कालं चैव तिष्ठति द्वादश
द्वादशीशब्दो व्रतेष्वेकादशीपरः तत्कालं ब्रह्मायुःकालमित्यर्थः ततस्तु लयकाले तु प्रलयस्तिष्ठ
ते चिरं प्रलयः ब्रह्मणा सह अविलोलये कालेतिष्ठतीत्यर्थः पुनः सृष्टौ भवेद्देवो वैराजं नाम तत्स्था
नः करोति ब्रह्मणो लोकं समाप्नोति न संशयः ब्रह्महत्यादि पापानि जन्मांतरकृतानि च अकामतः
कामतो वा तानि नश्यंति तत्क्षणात् इहलोके दरिद्रो वा राज्यभ्रष्टोथवा पुनः उपोष्य तु विधानेन मे।
स्वरो राज्यभाग्भवेत् मेश्वरो लक्ष्मीस्वरः वंध्या नारी भवेद्यात्तु अनेन विधिना शुभा उपोषति भवेत्त।
स्याः पुत्रः परमधार्मिकः अगम्यागमनं येन ज्ञानताज्ञानतापि कृतं स इमं विधिमास्थाय तस्मात्पापात्
प्रमुच्यते ब्रह्मक्रियायालोपेन बहुवर्षकृतेन वा उपोष्येमां सकृज्जन्मा वेदसंस्कारमाप्नुयात् किं चात्र
बहुनोक्तेन न तदस्ति जगत्त्रये अप्राप्यं व्रतराजेन सत्यं सत्यं न संशयः इह जन्मनि चारोग्यं धनधान्यं च

स्त्रियः भवंति विविधा यस्तु उपोषति विधानतः

इति श्रीभविष्योत्तरे धरणीव्रतेषु मत्स्यद्वादशीव्रतम् ॥ नारदीये द्वादश्यां

मार्गशुक्लायां साध्यव्रतमनुत्तमं भानुर्भौमस्तथा प्राणो नरोयामश्च वीर्यवान् निमिर्हयो नयश्चैव हंसो
नारायणस्तथा विभुश्चापि प्रभुश्चापि साध्या द्वादश कीर्तिताः पूजयेद्गंधपुष्पाद्यैस्तांस्तंदुलकल्पितान्
ततो द्विजाग्र्यान्संभोज्य द्वादशान्सदक्षिणान् दद्याद्धेनुं च विसृजेत्प्रीयतां नारायणस्त्विति एतस्यामेव निर्दि-
ष्टं द्वादशादित्यसंज्ञितं व्रतं तत्रार्चयेद्धीमानादित्यान्द्वादशापि च धाता मित्रोर्यमा पूषा शक्रोंशो वरुणो
भगः त्वष्टा विवस्वान्सविता विष्णुर्द्वादश ईरिताः प्रतिमासं तु शुक्लायां द्वादश्यामर्चयेत्ततः वर्षं नयेद्व्रतां-
ते तु प्रतिमा द्वादशापि च हैमीः संपूज्य विधिवद्भोजयित्वा द्विजोत्तमान् मधुरान्नैस्तु संपूज्य प्रत्येकं प्रार्च-
येद्व्रती एवं व्रतं नरः कृत्वा द्वादशादित्यसंज्ञकं सूर्यलोकं समासाद्य भुक्त्वा भोगांश्चिरं नरः जायते भुवि ध-
र्मात्मा मानुषो रोगवर्जितः ततो व्रतस्य चीर्णस्य पुनरेतद्व्रतं लभेत् तत्स्वर्णेन रवेर्भित्वा मंडलं च द्विजोत्त
म मूर्तिं निधाय सौवर्णीं जनार्दनसमाहृयां अभ्यर्च्य गंधपुष्पाद्यैस्तदग्रे भोजयेद्द्विजान् द्वादश प्रतिमा-
सं तु नक्ताशी स्याज्जितेंद्रियः ततः समाप्ते तां मूर्तिं समभ्यर्च्य विधानतः गुरवे धेनुसहितां दत्वा संप्रार्थयेत्ततः
सप्तजन्मसु यत्किंचिन्मया खंडं व्रते कृतं भगवंस्त्वत्प्रसादेन तदखंडमिहास्तु मे ततः संभोज्य विप्राग्र्या-

न्सखंडाज्यैस्तु पायसैः सौवर्णेन विमानेन याति विष्णोः परं पदं

इति नारदीये मार्गशुक्लद्वादश्यां साध्यव्रतं द्वादशादित्यव्रतं अखंडद्वादशीव्रतं च

अथास्यामेव तारकद्वादशीव्रतं भविष्योत्तरे युधिष्ठिर उवाच अहमागस्करः पापः पृथिवीलयकारकः

परिपृच्छामि गोविंद त्वां नमस्कृत्य पादयोः श्रुत्वा ह्युत्तरं ब्रूहि व्रतं किंचिदनुत्तमं तरामि येन पापौघं भीष्म-
द्रोणार्णवं यथार्णवं श्रीकृष्ण उवाच आसीत्पुरा नृपो नाम्ना विदर्भायां कुशध्वजः सोऽतः पुरस्तनोपेतश्चक्रे राज्य-
मनंदितः जघान तापसं सोऽथ प्रमादान्मृगयां गतः मृगहत्यां महारण्ये ब्राह्मणं दैवमोहितः तेन कर्मवि-
पाकेन देहान्ते रौरवं गतः तत्रासौ यातनाघोरामनुभूयातिपीडितः तस्माद्दिष्टागतो मर्त्ये रौद्रो विषधरो
ऽभवत् अदशन्सोऽपि राजेंद्र ब्राह्मणं चरणे रुषा लगुडाहतः सर्पत्वं जगाम द्विजसूनुतः विपन्नश्च ततः
सिंहो द्वितीये भून्महादारुणः विदारितश्च तेन हिंस्रो नानासत्वभयंकरः जघानासौ पुनः श्रेष्ठ राजन्यं मृग-
यां गतं ततोऽसौ बहुभिः शस्त्रै राजलोकैर्निपातितः पुनर्व्याघ्रो बभूवासौ तृतीयेपि भवांतरे नीत्वा पादत-
त्राणेर्व्यापादितमृगान्वयः तेनापि वैष्णवो निधनं नीतः कश्चिद्दिनांतरे स नीतः कृमिराशित्वं लोकैस्त्व-
तनिपातनात् स जातश्चतुर्थे ग्राहो नवराहतजंतुभुक् जघान बालं चंडालादसौऽस्त्रमवाप भवान् पं-
चमे मकरो जातः समुद्रेतिभयंकरः स्त्रियं जघान तरुणीं भर्तृकामामयागतां प्रभासे शंकरस्याग्रे श-
शांकग्रहणे निशि तत्रापि बडिशं दत्वा जालैः प्राणैर्वियोजितः पुनः षष्ठे भवे जातः पिशाचः पिशिता-
शनः क्रूरश्छिद्रमतिः त्वद्दोनृणां प्राणवियोजकः सोऽवतीर्णो नरस्यांगे शोकयामास कस्यचित् मंत्रे-
णानूपसिद्धेन बीतिकेन व्यसर्जितः सप्तमे तु भवे जातो डाकिनीस्वबपुर्भ्रंशं नीत्वा दंष्ट्राकरालास्यो
मांसशोणितभोजनः दिवा सामरभूमीषु पापिष्ठो ब्रह्मराक्षसः सराद्वंगौर्जरंस्तु त्वं सर्वे वक्रेवयादि-
षु आक्रम्य भीमसेनेन राज्ञा राक्षसशत्रुणा समारोप्य धनुः सज्ये ब्रह्मास्त्रेण निपातितः भूयो भव द्वा-
दशमः स्याजन्मन्यष्टमेतु सः वनेचरो द्विरत्नस्यां गोब्राह्मणौ निधनं गतः नवमे जंबुको जातः स च दी-
नस्समांसभुक् लौल्यात्तु निधनं प्राप्तः श्मशाने चितिवह्निना दशमेऽप्यभवद्गृध्रस्तीक्ष्णतुंडोऽजोम-
हान् प्रतिमासवसाहारो दुष्टदृष्टिः सदारुणः सितरक्तासितवपुः कटुरो लोकनिंदितः स हतस्ती-
क्ष्णभल्लेन मातंगेन धनुष्मता एकादशे तु चांडालो यवमध्यातिभीषणः ऊर्द्धकेशोऽतिरक्ताक्षो जातः
कृशतनुर्दृढः पापोऽयमध्वजो भक्त्वो देवतामाल्यभक्षकः स दंडपाशकेनोच्चैर्हत्वाग्रे च विलंबितः
द्वादशे तु पुनर्जातः पुक्कसः क्लेशभोजनः पुक्कसो वारिवल्गनो व्याधिना विनिपातितः तेन चासी-
त्केन पूर्वं तारकद्वादशीव्रतं तस्य प्रभावाज्जातोऽसौ दुष्टयोनौ पुनः पुनः अवाप शीघ्रं पंचत्वं संसारभ-
वसागरे पुनरेवाभवद्राजा विदर्भायां सधार्मिकः भूयश्चोपोषितानेन तारकद्वादशी शुभा पश्यता-
व्रतमाहात्म्यं जातो जातो पुनः पुनः तस्याव्रतप्रभावेन भुक्त्वा राज्यमकंटकं प्रायविष्णुपुरे स्थानं यावदा-
भूतसंप्लवं युधिष्ठिर उवाच कथमेतद्व्रतं कृष्ण कर्तव्यं पुरुषोत्तमैः स्त्रीभिर्वा भर्तृवाक्येन स्नानदानज-
पादिकं श्रीकृष्ण उवाच मार्गशीर्षसितेपक्षे गृहीत्वा द्वादशीव्रतं अकृत्रिमे जले स्नानमपराह्णे समाच-
रेत् प्राणप्रभास्करायादौ कृत्वा देवार्चनं यथा होमं च तावत्स्यात्कं यावदस्तमितो रविः ततो मुक्ताफ-
लैः पुष्पैर्गंधधूपविलेपनैः सजलैः शीतलैः कृत्वा सहिरण्यैः शुभैः फलैः रम्यैस्ताम्रमये पात्रे जा[illegible]
णीगतः सर्वं गुलैः प्रदोषाग्रे मूर्ध्नि कृत्वार्घ्यभाजनं भूमौ मंडलकं कृत्वा गोमयेन सतारकं चंदनेन।
समालिख्य अथ वै द्विगरानोन्नवैः सहस्रशीर्षा मंत्रेण भूमौ भक्त्या शनैः शनैः तारकाणां कुरुश्रेष्ठ दद्याद-
र्घ्यमतंद्रितः पंचदशपुष्पधूपस्तु नित्यं दद्याद्विशायदत्तिर्णां क्रमेण सर्वं निर्वर्त्य भोज्यं भोज्यं निशागमे मा-
र्गशीर्षे खंडखाद्यैः पौषे सोहालिकैः शुभैः माघे तिलानां कृसरैः फाल्गुने तिलपूपकैः वसंते मोदकैर्दि-
व्यैश्च विलडवेष्टकैः ज्येष्ठे सक्तुभक्तैः पौत्रेराषाढे गुडपूपकैः श्रावणे मधुशीर्षैश्च नभस्ये पायसेन च द्वि-
तरौणी राज्ययुजे कासारैः कार्तिके प्रमान् एभिर्द्वादशभिर्भक्ष्यैः भोजयित्वा द्विजान् स्वयं भुंजीत भक्त्या राजेंद्र
पश्चाद्व्रतं समापयेत् समाप्ते तु व्रते कार्याद्राजतं तारकागणं पैष्टं वा पूर्वविधिना पूजयित्वा हिमाद

कुंभाद्वादशदातव्याः सोदकामोदकान्विताः ब्राह्मणाः परिधानंचपद्मरागंसकुंकुमं ब्राह्मणस्यतुगां
दद्याद्धव्यांपुष्पोपशोभितां चोलकंचोपवीतंवपुष्पंदत्वाक्षमापयेत् एवंचविधिनाराजन्यःकरोतिव्र
तंनरः नारीवाभरतश्रेष्ठभक्तिभाव पुरःसरं नक्षत्रलोकंव्रजतिविमानेनार्कवर्चसा अप्सरोगणगं
धर्वयक्षविद्याधरादिभिः सहभर्त्रास्वर्गलोकेपूज्यमानादिवौकसः वसेत्कल्पाशतंयावत्पुनर्विष्णुपुरं
व्रजेत् एतद्व्रतंपुराचीर्णंशच्याराज्ञ्याप्रियोमया सरस्वत्यापुनःस्वर्गेउर्वश्यादेवदत्तया अन्याभिरपि।
नारीभिःपुरुषैश्चपृथग्विधैः चीर्णमेतद्व्रतंपार्थसर्वपापभयापहं जन्मांतरेष्वपिकृतानिदहत्यघानि
यासंदधात्यहरहस्सुखतोपयोगात् साद्वादशीजगतितारकनामधेयातन्नास्तियन्नविदधातिकृतामनु

इतिभविष्योत्तरेतारकद्वादशीव्रतं अथास्यामेवमल्लद्वादशीव्रतम् ॥ ष्यैः

युधिष्ठिरउवाच शंखचक्रगदापाणेश्रीवत्सगरुडध्वज ब्रूहिमेमल्लद्वादश्याविधानंदेवकीसुत
श्रीकृष्णउवाच यदाभांडीरन्यग्रोधेरमामियमुनातटे गोपालमध्येगोवत्सैरष्टवर्षोस्मिलीलया कंसास्
रवधार्थायमथुरोपवनेतथा अवालोबालरूपेणगोपमल्लैर्वलोत्कटैः नएवमल्लगोपाश्चबलेनसह
कानने आस्फोटयंतिनृत्यंतिदिविदेवाइवादिशाइव सुभद्रोमंडलोभद्रोरंगवर्द्धनगोभटाः यक्षेन्द्रमल्ल
इत्यादितेषांनामानिगोकुले गोपीनामपिनामानिप्रधानानिनिबोधमे गोपालीपालिकाधन्याविः
शाखीचधनिष्ठिका राधानुराधासोमाभातारकादशमीतथा इत्येवमादिभिरहमुपविश्यवरासने
पूजितोस्मिसुभैर्मांपैर्दधिडग्याक्षतैस्तथा शतानित्रीणिषष्टीनिमल्लानांपूजयंतिमां मालिताश्चस्रग
मांसैरंगजागरनर्तकैः मल्लयुद्धैर्बहुविधैर्वाद्यैर्मल्लभेदैःशुभैः भक्ष्यैर्भोज्यैस्तथापानैर्दधिडग्यह्य
ताशनैः गोदानैर्हेमदानैश्चस्पर्द्धयाविप्रपूजनैः गोष्ठीप्रबंधैर्वैधूनांस्नेहसंभाषणैर्मिथः एवंद्वाद
शद्वादश्योगृहीतव्यायथेच्छया संचरंतिक्रमेणैवमल्लानांताःपृथक्पृथक् पूजयंतिक्रमेणैवमा
सेमासेतथैवमम मार्गशीर्षात्कार्तिकांतंभक्त्याद्वादशनामभिः मिष्टान्नंपारणेदद्यान्मल्लिकानिद्विजा
तये॥ केशव १ नारायण २ माधव ३ गोविंद ४ विष्णु ५ मधुसूदन ६ त्रिविक्रम ७ वा
मन ८ श्रीधर ९ हृषीकेश १० पद्मनाभ ११ दामोदरनमोनमः १२ इति गंधैःपुष्पैस्तथाधूपैर्दी
पैर्जागरणेनिशि गीतवाद्यैर्नैवेद्यैर्मल्लक्ष्वेडांगयुद्धकैः घृतदानैःक्षीरदानैःकृष्णोनःप्रीयतामिति
एवमेवविधिःप्रोक्तःशैशवेयोमयाकृतः द्वादशीयंममाद्यापिमनसःप्रीतिवर्द्धिनी मल्लैःप्रवर्तिता
यस्मादतोयंमल्लद्वादशी तेषामपरमल्लानांमद्भक्तानांयुधिष्ठिर गोष्ठेचभूवस्त्रशय्यांगोमहिष्याद्यजा
विकं अरण्यस्थैर्यथाभोज्यंनर्तकैस्तुपरस्परं क्रमेणश्राम्यतेयस्मात्तेनैषाक्रमद्वादशी मत्प्रसादा
द्वंतेपुत्रानबलंकीर्तियशोधनं एवमन्येपिपुरुषाअबलामल्लद्वादशी करिष्यंतिव्रतंभक्त्यातेषांदा
स्यामिदृढंतेआरोग्यंबलमैश्वर्यंविपुलंलोकंचशाश्वतं भांडीरपादपतलेमिलितैर्महद्भिर्मल्लैरनाचलि
तवाद्यबलाद्विशिष्टैः संपूजितःसपदियत्रविधूतपापासाद्वादशीभुविमतावतमल्लसंज्ञा ॥

इतिभविष्योत्तरेमार्गशुक्लायांमल्लद्वादशीव्रतं अथास्यामेवारण्यद्वादशीव्रतं

भविष्योत्तरे युधिष्ठिरउवाच भगवन्ब्रूहिमेसम्यगरण्यद्वादशीव्रतं सोपवासंसमुत्सर्गंसरहस्यंस
मंत्रकं श्रीकृष्णउवाच कौंतेययत्पुराचीर्णंसीतयावनसंस्थया व्रतंराघववाक्येनअगस्त्येनप्रदर्शितं
लोपामुद्रालयेसाध्व्योमुनिपत्न्योवहुप्रजाः भोजितास्तर्पिताःसर्वाआहारैःसर्वकामिकैः पद्मिनीप
त्रविस्तीर्णैःसोपदंशैर्यथानवैः भक्ष्यैर्भोज्यैस्तथालेह्यैश्चोष्यैश्चापियथेच्छया तामिहैकमनाःपार्थशृ
णुआरण्यद्वादशी मार्गशीर्षेसितेपक्षेएकादश्यांदिनोदये स्नात्वानरःसोपवासःकृत्वापूजांजनार्दने
गंधपुष्पान्नधूपैश्चदीपजागरणेनिशि नीत्वाप्रभातेगत्वाचवेदवेदांगपारगं भोजयित्वाफलप्रायंस्व

यंभुंजीतवाग्यतः पंचगव्यंप्राशयित्वापूर्णिमेवाथतद्दिने वर्षमेकंतुसंपूर्णपारयित्वायुधिष्ठिर श्रा
वणेकार्तिकेमाघेचैत्रेवासमुपोषयेत् प्रदीपकान्तुसंपूर्णान्मंडलानूछतपूरितान् अन्नंपश्चाचस
स्निग्धंखंडखाद्यकसंयुतं कटुतिक्तमधुरैसैर्लवणैःसुरसीकृतंअशोकवर्त्तिलावण्यपूरितपूर्ण।
करंबकः सोपदंशैःपत्रशाकैस्तिलशष्कुलकादिभिः सूपापूपैःखंडवटैश्चरितैःसहकेसरैः पूली।
मुखैरल्पफलैःस्वादुकोकरसैःशुभैः शीतलैस्तर्पयेद्विप्रान्सर्वपुष्पैःसमालकैः दधिक्षीराज्यफल
कैश्चांतर्जीवकसंस्कृतैः कर्पूरनखविद्धैश्चमधुरैःपानकोत्तमैः वस्त्रयुक्तंवनंगत्वासुस्वादुसलिलं
शिवं सुखासनेषूपविष्टान्सुदयमुखान्मुनीन् भोजयेद्दशवाह्येचमुनीनारण्यवासिनः एकदं
डीत्रिदंडीचगृहस्थानपिसुव्रतान् ब्राह्मण्योऽविधवाःसमपकपत्न्यःपतिव्रताः चार्वंगपश्चार्चिताः
स्नाताःसर्वावयवसुंदराः सवस्त्राकुंकुमाक्रांताःसुगंधकुसुमार्चिताः सर्वैवेयाभोजनीयास्तास्ता
श्चोद्दिश्यदेवताः वासुदेवजनार्दनदामोदरमधुसूदन पद्मनाभविष्णोगोवर्धन त्रिविक्रम श्रीधर
हृषीकेश पुंडरीकाक्षवराहादिवराह यभिर्द्वादशभिर्मंत्रैर्नमस्कारांतयोजितैः गंधचंदनसुगवस्त्रधू
पंदत्वापृथक्पृथक् भोजयित्वाशुभान्नानिस्वाचांतांस्तान्सदक्षिणान् प्रणम्यप्रेषयेद्भक्त्याविष्णुर्मे
प्रीयतामिति ततोभुंजीतसहितोभक्तैःपोष्यजनेनतु अमात्यानुगतैर्लोकैःसुहृत्संबंधिभिस्तथा
एवंकौंतेयकुरुतेयोरण्यद्वादशीनरः सदेहांतेविमानस्थोदिव्यकन्याशतावृतः यातितत्रातिसमायु
क्तःश्वेतद्वीपेहरेःपद यत्रलोकाःपीतवस्त्राःश्यामदेहाश्चतुर्भुजाः शंखचक्रगदापद्मव्यग्रहस्ता
सकौस्तुभाः गरुडासनाःसाभरणामुकुटोज्वलकुंतलाः नीलोत्पलदलोद्दामपद्ममालांकितोर
सः लक्ष्मीधवामेघवर्णाःकेयूरांगदभूषणाः तिष्ठंतिविष्णुसामान्यायावदाभूतसंप्लवं तस्माद्दि
सुपुरादेत्यपृथिव्यांनृपपूजिताः मर्त्यलोकेकीर्तिकराःसंभवंतिनरोत्तमाः ततोयांतिपरंस्थानंमोक्ष
मार्गपरंशिवं यत्रगत्वानशोचंतिसंसारेभवनिर्भरे येद्वादशीमुपवसंतिसिताम्रारण्यनाम्नीवनेद्वि
जवरानपिभोजयंति साध्व्यःस्त्रियःसुचरिताभरणाश्चतेषांविष्णुप्रसादमुपलभ्यददातिमोक्ष

इतिभविष्योत्तरोक्तमरण्यद्वादशीव्रतम्

मार्गशुक्लत्रयोदश्यामनंगत्रयोदशीव्रतम्

मार्गशुक्लत्रयोदश्यामनंगत्रयोदशीव्रतम् नारदीये मार्गशुक्लत्रयोदश्यामनंगविधिमाचरेत् त्रि
कालमेककालंवाशिवासंगमसंभवं गंधाद्यैःसोपचारैस्तुपूजयित्वाविधानतः घटेसमर्चयेद्देवान्भो
जयेद्द्विजदंपती ततस्तुदक्षिणांदत्वास्वयमेकाशनंचरेत् एवंकृतेचविधिवद्व्रतेसौभाग्यभाजनं
जायतेभुविविप्रेंद्रमहादेवप्रसादतः ॥ भविष्योत्तरेप्येवं श्रीकृष्णउवाच शृणुपार्थव्रतंश्रेष्ठंनाम्नानंग
त्रयोदशी याशिवायैपुराप्रोक्ताप्रसन्नेनेंदुमौलिना गौर्युवाच पुरसौभाग्यकरणीख्यातानंगत्रयोद
शी तस्याव्रतंमहादेवममाधिकथयप्रभो कस्मिन्मासेप्रकर्तव्यंसपूर्णंचकथंभवेत् पुण्यानिकानि
नामानिविधिनाकेनवैमत दुर्भगानांचनारीणांसौभाग्यकरणंशुभं वंध्यानांपुत्रजननंधनधान्य
विवर्द्धनं एतद्व्रतंमहादेवप्रसादाद्वक्तुमर्हसि ईश्वरउवाच कथयामिनसंदेहोमहापुण्यंमहाफलं
चीर्णेनयेनदेवेशिसर्वंसंपद्यतेसुखं नारीणांचनृणांचैवविधातव्यंप्रयत्नतः हेमंतेहिमार्गशीर्षमा।
सिमार्गशिरेशुभे शुक्लपक्षेत्रयोदश्यामुपवासंसमाचरेत् मल्लिकादंतकाष्ठंचपूजाचप्राणवेणतु
रंगेणार्च्यदानंतुनैवेद्यंफेणिकातथा गंधैःपुष्पैस्तथाधूपैरर्चयेच्चयथाविधि अत्ततेश्चफलैश्चैवप।
काद्यहृदयस्थितः सम्यग्जितेंद्रियोभूत्वाअनंगंहृदिकल्पयेत् पश्चात्प्रदक्षिणीकृत्यअर्घ्यंचैवनिवेद
येत् नमस्कुर्यादनंगंचमंत्रेणानेनभामिनि नमोस्त्वनंगदेवायशर्वसंगनिवासिने हृदयस्थायति
स्थायसूक्ष्मायपरमेष्ठिने स्वर्गेचैवतुपातालेमर्त्यलोकेतथैवतु सर्वव्यापितनंगत्वंगृहाणार्घ्यंनमो

स्तुते इत्यर्घ्यमंत्रः पूजयेत्स्वस्थचित्तेन मधुं च प्राशयेन्निशि रंभातुल्या भवेन्नारी सौभाग्य मतुलं भवेत्
नश्यन्ति सर्वपापानि सप्तजन्मकृतानि च लावण्यमतुलं चैव रूपैश्वर्य्यसमन्वितं अश्वमेधस्य यज्ञस्य फ
लं प्राप्नोति मानवः पौषस्य व्रतमासस्यौडुंबरं दंतधावनं जातीपुष्पैः पूजनं च दाडिमेनार्घ्यदानकम्
अशोकवर्त्तिकास्निग्धा नैवेद्यं च प्रकल्पयेत् ॐ नमो नाट्येश्वराय ईश्वराय नमो नमः नमस्ते भुवने-
शाय गृहाणार्घ्यं नमोस्तु ते इत्यर्घ्यं व्रतस्थः स्वस्थचित्तेन चंदनं प्राशयेन्निशि सर्वपापविशुद्धात्मा
सौभाग्यमतुलं लभेत् माघस्य व्रतमासस्य विष्णुकांतारदार्दनं रदार्दनं दंतकाष्ठं कुंदपुष्पैः समभ्य
र्चयेदर्घ्यं चैव बीजपूरकैः नैवेद्यं शर्करादेया देवो योगेश्वरस्तथा ॐ नमो योगेश्वराय योगाजंतनिवासिने
गृहाणार्घ्यं मया दत्तं योगेश्वर नमोस्तु ते इत्यर्घ्यं मौक्तिकं प्राशयेद्रात्रौ वाजपेयफलं लभेत् फाल्गुन
स्य व्रतमासस्य बदरीदंतधावनं कंकोलेन च देवेशं वीरेशं नाम पूजयेत् सर्वाभिलाषसिद्ध्यर्थं वीरेशं
नाम पूजयेत् ॐ वीरेश्वर वीरभद्र उमाकांत सुरेश्वर हिममध्यनिवासीन्न गृहाणार्घ्यं नमोस्तु ते इत्य
र्घ्यं सीतातुल्या भवेन्नारी कंकोलं प्राशयेन्निशि चैत्रस्य व्रतमासस्य नवमल्लीरदार्दनं दमनेनार्चयेद्दे
वं पाद्यार्घ्यं च प्रकल्पयेत् नैवेद्यं खंडकान्दद्याद्विश्वरूपं तु पूजयेत् नमस्ते विश्वरूपाय स्वरूपाय महात्म
ने गृहाणार्घ्यं मया दत्तं विश्वरूप नमोस्तु ते इत्यर्घ्यं उमातुल्या भवेन्नारी कर्पूरं प्राशयेन्निशि वैशाखस्य
व्रतमासस्यापामार्गदंतधावनं पूजा च मल्लिकापुष्पैराम्रस्यार्घ्यं तु दापयेत् नैवेद्यं वटकान्दद्यान्महारू
पं तु पूजयेत् नमस्ते महारूपाय सर्वविज्ञानरूपिणे गृहाणार्घ्यं मया दत्तं महारूप नमोस्तु ते ततः शुद्धम
ना स्नात्वा नक्तं जातीफलाशने अश्वमेधस्य यज्ञस्य फलमष्टगुणं भवेत् ज्येष्ठस्य व्रतमासस्य सहदेवीरदार्द
ने पूजा बकुलपुष्पैस्तु श्रीफलेनार्घ्यकल्पना नैवेद्यं मंडकान्दद्याल्लवंगं प्राशयेन्निशि प्रद्युम्नं पूजये
द्देवं सर्वपापप्रणाशनं नमस्ते पशुपतये प्रद्युम्न भुवनेश्वर गृहाणार्घ्यं मया दत्तं प्रद्युम्न परमेश्वर इत्य
र्घ्यं सुवर्णशतदानस्य फलमष्टगुणं भवेत् आषाढस्य व्रतमासस्य नारंगी दंतधावनं कदंबैः पूजयेद्देवं
नारिकेलार्घ्यकल्पना नैवेद्यं दधि तक्रं चोमापतिं परिपूजयेत् प्राशयेत्तिलबीजानि निशि स्वस्थेन चेतसा
उमापते महाबाहो कामस्ते कामदाहक गृहाणार्घ्यं चंद्रमौले उमाकांत नमोस्तु ते वाजपेयस्य यज्ञस्य
फलमाप्नोति मानवः श्रावणस्य व्रतमासस्य जातीभिर्दंतधावनं पूजयेत्पद्मपुष्पैश्च जंबूभिरर्घ्यकल्पना
नैवेद्येक्षुरसं दद्याच्छूलपाणिं तु पूजयेत् प्राशयेद्गंधतोयं तु रात्रौ चैव समाहितः ॐ नमः शक्तिधराय च
भक्तिभावेन शूलिने गृहाणार्घ्यं मया दत्तं शूलपाणे नमोस्तु ते सौत्रामण्याख्ययज्ञस्य फलमष्टगुणं लभे
त् भाद्रपदस्य मासस्य अंकोलं दंतधावनं अर्चयेच्चंपकैः पुष्पैर्नैवेद्यं घृतपूरिका अर्घ्यं पूगीफलं दद्यात्
सद्योजातं तु पूजयेत् ततः स्वस्थमना भूत्वा अगुरुं प्राशयेन्निशि त्रिदशेश्वरदेवाय सद्योजाताय ते नमः
गृहाणार्घ्यं मया दत्तं सद्योजात नमो नमः दशानामश्वमेधानां फलं प्राप्नोति मानवः आश्विनस्य तु मास
स्य कंकनीदंतधावनं अर्चयेत्करवीरैस्तु अर्घ्यं कर्कटिकाफले पूजयेत्त्रिदशाधीशं नैवेद्यं शुभमंडिका
प्राशयेत्कानकं तोयं निशि देवं प्रपूज्य च ॐ त्रिदशाधिपदेवेश उमाकांत महेश्वर त्रिधारूपमयस्त्वं हि अर्घ्यं
मे प्रति गृह्यतां चातुर्मास्यस्य यज्ञस्य फलं दशगुणं भवेत् कार्तिकस्य तु मासस्य कादंबं दंतधावनं रक्तो
त्पलैः पूजनं च कूष्मांडार्घ्यं प्रदापयेत् नैवेद्यं पूरिका दद्यात्पूजयेज्जगदीश्वरं प्राशयेच्चंदनफलं निशि चैव
समाहितः नमस्ते जगदीशाय व्यापिने शूलपाणये गृहाणार्घ्यं महेशान जगदीश नमोस्तु ते अर्घ्यं प्र
जाते जागरं कुर्याद्गीतवाद्यमहोत्सवैः अर्द्धनारीश्वरं कुर्यात्सौवर्णं रौप्यमेव च वस्त्रयुग्मेन संवेष्ट्य शय्यायां
विनिवेशयेत् एवं कृत्वा तु देवेशं शोभां तु कारयेत् श्वेतपुष्पैस्तु संपूज्य श्वेतचंदनचर्चितं धूपं सुगं
धिं संदीप्य सवत्सां गां प्रदापयेत् श्वेतवस्त्रपरीधानां घंटाभरणभूषितां सुरूपं वस्त्रयुगलमाचार्याय नि·

वेदयेत् तथैव दक्षिणां दद्यादासनं पादुके तथा छत्रं च मुद्रिकां चैव कर्णयोश्चैव भूषणं वस्त्राद्यं दिव्यं प्रदेयाच्च तूल्याच्छादनसंयुता गृहोपस्करसंयुक्ता भक्तिसंयुक्तचेतसा तत्रोपवेश्य चाचार्यं मुपवासव्रती ततः पादौ मूर्ध्नि समारोप्य प्रणिपत्य वचो वदेत् भगवन् त्वत्प्रसादेन व्रतं संपूर्णतां मम एवमस्त्विति संब्रूयात् व्रतद्रष्टोक्त शंकरः ईश्वर उवाच एवं कृत्वा प्रयत्नेन दंपती चैव पूजयेत् तयोश्च भोजनं दद्यात् दंपत्योः परितोषकं अनेन विधिना तथ्यामर्हं युक्तस्त्वयानघे तेभ्यो दत्तं च यत्किंचिदक्षयं नात्र संशयः आचार्यमयुतः कृत्वा तस्यादेशं तु कारयेत् नत्वाचार्यसमं तीर्थं नत्वाचार्यसमं तपः तस्मादेकाग्रमास्थाय धर्मसिद्धिं नयेद्ध्रुवं तेनैवाचार्यमानेन सर्वं भवति चाक्षयं एतद्व्रतोत्तमं श्रेष्ठं शुल्याच्च त्वन्तरं परं राज्यमर्थान्सुतान्सिद्धिमवैधव्यं च यच्छति रूपं धनं धान्यमायुरारोग्यं च प्रदापयेत् इष्टलाभं च सौभाग्यं वर्द्धयेद्वरानने त्रयोदशीव्रतात्सम्यक्ति सौभाग्यकरणं परं ॥

इति भविष्योत्तरेऽनंगत्रयोदशीव्रतम्

अथापरमनंगत्रयोदशीव्रतं भविष्योत्तर एव युधिष्ठिर उवाच भगवन्भूतभव्येश संसारार्णवतारक यत्तं कथय किंचिन्मे रूपसौभाग्यदायकं अनंगः प्रीयते येन प्रीतो यच्छति केशव आत्मवद्रूपसौभाग्यं तन्मे विस्तरतो वद श्रीकृष्ण उवाच अनंगः श्रूयते देवः शूलपाणिः पिनाकधृत् तस्मिंस्तु पूजिते पार्थ किं नाप्नोति नरो भुवि तेन ते कथयिष्यामि शूलपाणिव्रतं त्विदं यन्न कस्यचिदाख्यातं व्रतानामुत्तमं व्रतं चीर्णं भक्त्या नरो मर्त्ये यद्यदिच्छति पांडव तत्तदाप्नोत्यसंदिग्धमनंगाख्यत्रयोदशी किं व्रतं बहुभिः पार्थ उक्तमात्रफलप्रदैः त्रयोदशीनियं पुण्या सर्वव्रतफलप्रदा तस्मात्कार्या प्रयत्नेन बहुपुण्यमभीप्सता त्रयोदशी ह्यनंगाख्या सर्वाघौघविनाशिनी सर्वदुष्टोपशमनी सर्वमंगलवर्द्धिनी अतुल्यरूपसौभाग्यरूपलावण्यदायिनी पुराद्ध्येन कामेन त्रिनेत्रनयनाग्निना भस्मीभूतेन लोकेस्मिन्

संकल्पस्थेन पांडव अनंगेन कृता ह्येषा तेनानंगत्रयोदशी प्रसिद्धिं समनुप्राप्ता नित्यं सर्वफलप्रदा मार्गशीर्षसिते पक्षे त्रयोदश्यां समाहितः स्नात्वा नद्यां तडागे वा गृहे वा कूपतोयतः कृत्वाभ्यर्च्य तोयतो पयोदधिघृतस्तौद्रैः मंत्रपूतैर्जलान्वितैः शर्करा घृतसंयुतैः पश्चात्स्नापयेद्गंधवारिणा धूपदीपादिनैवेद्यैः पुष्पैस्तत्कालसंभवैः फलैर्नानाविधैर्भक्ष्यैर्गीतवादित्रनिःस्वनैः पूजयेदिति शेषः शंभुनामान्यथोच्चार्य होमः कार्यस्तिलाक्षतैः अक्षतैर्यववा अन्यजातीनारंगपायसैर्मधुना पिच अक्षय्यादीनि माहृतकाष्ठफलं नैवेद्यप्राशनानि च एवमुत्तरमासेष्वपि अनंगं पूजयेदादौ मधुमत्या समन्वितं यादौ आदिममासे मार्गशीर्षमासे अनंगनाम्ना संपूज्य मधु प्राश्य स्वपेन्निशि मधुप्राशनयोगेन जायते मधुरध्वनिः अश्वमेधस्य यज्ञस्य फलं प्राप्नोति भक्तिमान् पौषे चोडुंबरकरवीरदाडिममोदकैः चंदनेन च योगीशं हेमवर्णाद्युतं यजेत् स्नाप्य क्षीरादिभिः पार्थ पूजयित्वा विधानतः योगेश्वरेति संस्मृत्य चंदनं प्राशयेन्निशि सौम्यः प्रीतः सुगंधश्च चंदनप्राशनाद्भवेत् राजसूयस्य यज्ञस्य सम्यक्फलमाप्नुयात् माघे न्यग्रोधमत्कुंदमातुलिंगसुहालिकैः मुक्ताभोभिरनाद्येशं सुंदर्या सहितं यजेत् नाद्येश्वरेति संस्मृत्य प्राशयेन्मौक्तिकोदकं प्राशनस्य प्रभावेन निर्मलाक्षीः प्रजायते रूपाढ्यं च वपुः स्त्रीणां मनोनयनंदनं मुक्तावर्णोपमे नेत्रे यस्य प्रजायते शुभे बहुस्वर्णप्रदानस्य प्राप्नोत्यविकलं फलं फाल्गुने बदरीकाचनारजंबीरगोरसैः कंकोलेन च देवेशं सशांतं निशि पूजयेत् वीरनाम जपेद्रात्रौ कंकोलं प्राशयेन्निशि तेनास्य सुरभिर्गंधो जायते कायवक्त्रयोः तथा गुणगणावासो द्रुतकांचनसन्निभः गोमेधस्य फलं प्राप्य शक्रलोके महीयते चैत्रे करंजमदनद्राक्षावटकशीतलैः शीतलैः कर्पूरैः देवं सुरूपनामानं यजे

सुभगायासह पूर्वोक्तविधिनापार्थ कर्पूरेणशयेन्निशि कर्पूरवत्प्रियोलोके गंधगौरवसंयुतः चंद्रवत्स
र्वलोकानांलोचनाह्लादकारकः जायतेसनरःपार्थयःकरोतीहभक्तितः नरमेधफलावाप्तिर्जायतेना
त्रसंशयः वैशाखेसहकाराकैःपुष्पाम्रफलसक्तिभिः जातीफलैर्महारूपमिंद्राण्यासहितंयजेत् प्राश
येद्रात्रिसमयेजातीफलमनुत्तमम् अस्यप्राशनयोगाच्चजातिंप्राप्नोत्यनुत्तमां सफलास्तस्यसर्वाशा
भवंतिभुविभारत गोसहस्रफलंप्राप्यरुद्रलोकेमहीयते ज्येष्ठेजंबूविल्वपत्रैःश्रीफलैःपूपकैस्तथा
लवंगेनाथसंपूज्यप्रद्युम्नंललितान्वितं लवंगंप्राशयेद्रात्रौलावण्यंपतेनवाप्नुयात् वाजपेयफलंलब्ध्वा
मोदतेदिविभारत आषाढेपामार्गनीपनालीयककदंबकैः नीपकदंबौवृक्षविशेषौ तिलैरुमापतिं
रात्रोपूजयेच्चतिलोत्तमं उमापतिंयजेन्मासःप्राशयेच्चतिलोदकं तिलोत्तमेवभवतिरूपसंपदनुत्तमा
प्राप्नोतिपुंडरीकस्यफलंकुरुकुलोद्वह श्रावणेसुमनोभोजकदलीफलमंडितैः सुमनामालती गंधतो
येःशूलपाणिंसुभवासोन्वितंयजेत् गंधोदकंप्राश्यस्वपेद्रात्रौविगतमत्सरः सुगंधसर्वसौख्याढ्यश्चिराय
श्चोपजायते अग्निष्टोमस्ययज्ञस्यप्राप्नुयात्फलमुत्तमं भाद्रेपलाशवांपेयकर्कव्याज्यपूरैस्तथा आज्यपूरोद्
नपूरः यजेनागुरुणासयोजातंगौर्यासमन्वितं अगुरुंप्राशयित्वातुगुरुर्भवतिभूतले तुलापुरुषदान
स्यहेमस्यफलमाप्नुयात् आश्विनेकुंदबाणापामार्गकर्कंधुमंडकैः स्वर्णाभोभिःसुवर्णंचत्रिदशाधिपतिंय
जेत् हेमोदकंचसंप्राश्यहेमवर्णःप्रजायते वाजपेयस्ययज्ञस्यसकलंफलमश्नुते ऊर्जेकदंबकद्रोणकू
ष्मांडलवणेनतु फलैश्चविद्याधिपतिंयजेन्मदनयायुतं फलैरमृतफलाख्यैर्लवणमंतेतुनैवेद्यं लवणंप्राश
येन्नरश्रद्धयापरयान्वितः रूपलावण्यसंयुक्तःप्राशनादस्यजायते वाजपेयस्ययज्ञस्यफलंप्राप्नोतिनि
श्चितं आद्यमाद्यंदंतकाष्ठंकुसुमंतत्परंफलं नैवेद्यप्राशनंनामक्रमान्मासेषुकीर्तितं अलाभेदंतकाष्ठा
नांतुवादिरंस्याच्छिवप्रदं पुष्पाणामप्यलाभेतुतत्पत्रैर्दीर्घकोमलैः अलाभेतत्फलानांचबीजपूरंप्रशस्यते
नैवेद्यानामप्यलाभेहविष्यान्नंप्रकल्पयेत् इत्युक्तिश्लोकंदंतधावन कुसुमनैवेद्यप्राशनानांयथाक्रम
विहितानांतस्यतस्याभावेअयमनुकल्पउक्तः सर्वेषुपारणेष्वत्रभोजयित्वाद्विजोत्तमान् सदक्षिणांस्ततोश्नी
याद्बंधुभिःसहितोवशी व्रतविघ्नंयदाचस्यात्सूतकेमृतकेथवा उपोष्यचैवोपविशेत्तद्दिनेअपरेपुनः
तदह्नि उपोष्यअपरेऽग्रिममासांतर्गततद्दिनेपूर्ववत्प्रोक्तंभवति एवंसंवत्सरस्यांतेशक्त्यारत्नाद्यलंकृतं
उमामाहेश्वरंहैममधिवास्यततोनिशि पुष्पैर्धूपैस्तथागंधैर्नैवेद्यैःकुसुमैःफलैः ततःप्रभातसमयेकृत
होमवलिक्रियः वक्ष्यमाणमिदंसर्वंप्रदद्याच्चद्विजातये लिंगाकारमनंगंचसौवर्णंकारयेच्छिवं ताम्रपात्रोप
रिस्थाप्यकलशोपरिविन्यसेत् शुक्लवस्त्रेणसंछाद्यनैवेद्यपुष्पपूजितं ब्राह्मणायप्रदातव्यंशिवभ
क्तायसुव्रत द्वादशात्रप्रकर्तव्याःसचंदनविभूषिताः सितपक्वान्नसंपन्नाब्राह्मणेभ्योनिवेदयेत् देव
स्यैवप्रदातव्याःकुंभाद्वादशलड्डुकाः वितानंपंचवर्णंचध्वजंकिंकिणिनादितं घंटांचसुस्वरांभक्त्याशिव
भीयाच्छिवमंदिरे तस्मिन्नेवदिनेपार्थध्यात्वात्मानंसमर्चयेत् आत्मानंपरमात्मानं देवदेवंत्रिविधैः
शंपुष्पनैवेद्यदीपकैः गीतवादित्रनृत्यादिप्रेक्षणैर्विविधैरपि दानान्यत्रप्रदेयानिस्ववित्तस्यानुसा
रतः सूर्योपरागसदृशो यतःसदिवसोमतः भोजनंचयथाशक्त्यामधुरंसमधुरोत्तरं प्रदद्याच्छिवभ
क्तानांवस्त्राणिचविशेषतः अर्थितोनावमन्येतनाप्रियंपरुषंवदेत् यथाशक्त्याप्रदद्याच्चबहुधाम
धुरंवदेत् एवंतदुत्सवंकृत्वाशिवयज्ञमनुत्तमं द्विजेभ्योभोजनंदद्याच्छर्करान्यपरिप्लुतं पश्चात्स्वयं
तुभुंजीयाद्भृत्यवर्गसमन्वितः शांतवागेकनिष्ठस्तुहृदिदेवंनिवेश्यच पूजांनिर्वर्त्यविधिवद्ब्राह्मणान्
परितोषयेत् एवंकृत्वानरःसम्यग्भक्तिभावेनभावितः मुच्यतेसर्वपापेभ्यःब्रह्महत्यादिकैरपि इहसौ
ख्यमवाप्योचेहमृतःस्वर्गेमहीयते पुण्यशेषादिहागत्यसार्वभौमोनृपोभवेत् व्रतस्यास्यप्रभावेनमूर्तिः

मान्मदनोभवेत् सौभाग्यधनसौख्याढ्यः शांतचित्तोजितेंद्रियः पुत्रपौत्रैः सुसंपूर्णोजीवेच्च शरदां शतम्
शिवभक्तिपरोभूत्वा शिवैकगतमानसः अंतकाले शिवंस्मृत्वा शिवसायुज्यतां व्रजेत् कामेन याकिल पुरास
मुपोषितासीच्छुद्धातिथिस्त्रिदशदेहपराप्तिहेतोः तेशाशाने रुदितनामयुतंतदुपोष्य दिव्यं प्रयाति परमंपद मिंदुमौलेः
इतिभविष्योत्तरोक्तामयपरमनंगत्रयोदशीव्रतम् ॥

अथ प्रदोषव्रतानि तत्रादौ प्रदोषमहिमा स्कांदे ब्रह्मोत्तरखंडे सत्यंब्रवीमिपरलोकहितंब्रवीमि सारंब्र
वीम्युपनिषद्धृदयंब्रवीमि संसारमुल्बणमसारमवाप्य जंतोः सारोयमीश्वरपदांबुरुहस्य सेवा येनार्च
यंति गिरिशंमहितं प्रदोषे येभ्यर्चितंशिवपदंशरणंमतिर्नान्ये येतत्कथांक्षति पुटैर्नपिबंतिमूढास्ते
जन्मजन्मनि भवंति नरादरिद्राः येवैप्रदोषसमये परमेश्वरस्य कुर्वंत्यनन्यमनसोंघ्रिसरोजसेवां नि
त्यंप्रवृद्धधनधान्यकलत्रपुत्रसौभाग्यसंपदधिकास्तइहैवलोकाः कैलासशैलभुवने त्रिजगज्जनित्रीं गौ
रींनिवेश्यकनकांचितरत्नपीठे नृत्यंविधातुमभिवांछति शूलपाणौदेवाः प्रदोषसमयेनुभजंति सर्वे
वाग्देवीधृतवल्लकीशतमखोवेणुंदधत्पद्मजस्तालोन्निद्रकरोरमाभगवतीगेयप्रयोगान्विता विष्णुः सां
द्रमृदंगवादनपटुर्देवाः समंतात्स्थिताः सेवंतेतमनुप्रदोषसमये देवंमृडानीपतिं गंधर्वयक्षपतगोरग
सिद्धसाध्याविद्याधरामरवराप्सरसांगणाश्च येन्येत्रिलोकनिलयाः सहभूतवर्गाः प्राप्तेप्रदोषसमये
हरपार्श्वसंस्थाः तस्मात्प्रदोषसमये शिवएकएवपूज्योथनान्येहरिपद्मजाद्याः तस्मिन्महेशविधिने
ज्यमाने सर्वेप्रसीदंतिसुराधिनाथाः ॥ इति प्रदोषमहिमा अथास्यनिर्णयः हेमाद्रौ विष्णुधर्मे प्रदो
षोस्तमयादूर्ध्वं घटिकात्रयमुच्यते इति गौडग्रंथेषु दंड द्वयात्मक एव प्रदोष उक्तः प्रदोषोस्तमयादूर्ध्वं घ
टिकाद्वयमिष्यते इति वत्सोक्तेः यत्तु त्रिमुहूर्तः प्रदोषः स्याद्रवावस्तंगते सतीति स्कंदपुराणवचनं तत्पू
र्णप्रदोषकालपरं विष्णुधर्मवाक्योपात्तघटिकात्रयात्मकमुख्यकालाधिककालबोधकत्वात् अत
एवमाधवाचार्यैरपि नक्तप्रकरणे भोजने घटिकात्रयमुत्तमः कालः घटीषट्कंमध्यमः कालः एतदेवा
भिप्रेत्य स्मर्यते ॥ प्रदोषोस्तमयादूर्ध्वमिति त्रिमुहूर्तः प्रदोषः स्यादिति च निशीथपर्यंतो जघन्यः कालः
नक्तं कुर्वीत राजाविति सामान्येनाभिधानादिति अत्रशिवपूजा नक्तभोजनात्मकं प्रदोषव्रतं तत्रप्रदोषव्यापि
नीत्रयोदशीग्राह्या ॥ तथा च स्कंदपुराणे एवं वत्सरपर्यंतं प्रतिपक्षं त्रयोदशी प्रदोषे शिवमभ्यर्च्य नक्तंभो
क्ष्यामि शंकरेति पूजारंभकालोपि तत्रैव ततस्तु लोहितेभानौ स्नात्वा सनियमोव्रती पूजास्थानं ततोग
त्वा प्रदोषे शिवमर्चयेदिति ब्रह्मोत्तरखंडेतु घटिकात्रयमस्तमयात्पूर्वमुपक्रमकाल उक्तः पक्षद्वयेत्र
योदश्यांनिराहारोभवेद्दिवा घटीत्रयादस्तमयात्पूर्वं स्नानं समाचरेदिति मुख्यतरः पूजाकालस्तु सूर्या
स्तादिनक्षत्रोदयांतः प्रदोषोरजनीमुखमिति कोशबलात् केचित्तु त्रिमुहूर्तात्मकएव मुख्यः कालः प्रदो
षकालः कृतः तेषामाधवोक्तउत्तममध्यमविभागोनुपपन्नः द्वयोरपि मुख्यकालत्वस्वीकारात् तत्रान्यतर
दिनेप्रदोषव्याप्तौ तत्स्पर्शे वा सैवग्राह्या दिनद्वयेसाम्येप्रदोषव्याप्तौ तदेकदेशस्पर्शे वा उत्तरा प्रातःसंक
ल्पयेद्विद्वानुपवासव्रतादिकमिति संकल्पकालमारभ्यसत्वात् दिनद्वयेप्रदोषव्याप्त्यभावेतु पूजो
पक्रमकालव्यापिनीग्राह्या कर्मोपक्रमकालगा तु कृतिभिर्ग्राह्यानयुग्मादर इति वचनात् यत्तु केचिदु
क्तं दिनद्वयेप्रदोषव्याप्तौ पूर्वैवग्राह्या त्रयोदशीतु कर्तव्या द्वादशीसहिता मुने इति सुमंतुवचनादिति
तत्तुच्छं अस्य सामान्यवचनत्वेनाहोरात्रसाध्योपवासादिप्रसावकाशत्वेन कालविशेषसाध्यप्रदोषव्र
तनिर्णायकत्वात् अधिकंवनक्तप्रकरणेद्रष्टव्यं अथपक्षप्रदोषविधिः ब्रह्मोत्तरखंडे शांडिल्यउवाच प
क्षद्वयेत्रयोदश्यांनिराहारोभवेद्दिवा घटीत्रयादस्तमयात्पूर्वंस्नानंसमाचरेत् शुक्लांबरधरोभूत्वा वा
ग्यतोनियमान्वितः कृतसंध्याविधिस्ततः शिवपूजांसमाचरेत् देवस्यपुरतः सम्यगुपलिप्यनवांभसा वि

यागमंडपं रम्यं यौतनवस्त्रादिभिर्ध्वजैः वितानाद्यैरलंकृत्य फलपुष्पनवांकुरैः विचित्रपद्मसुहृद्यवर्णै
पंचकरंजित तत्रोपविष्टः सुसमे सूपविष्टः स्थिरासने सम्यक्संपादिताशेषपूजोपकरणः शुचिः
आगमोक्तेन मंत्रेणानेनागमेन च मंत्रवित् ततः कृत्वात्मशुद्धिं च भूतशुद्धिमनुक्रमात् प्राणायामत्रयं कुर्या
द्बीजमंत्रैः समंत्रकैः मातृकान्यासविधिवद्ध्यात्वातो देवतां परां समाप्य मातृकां भूयो ध्यात्वा देवं परं
शिवं वामभागे गुरुं नत्वा दक्षिणे गणपं यजेत् अंसयोरूर्ध्वगयोर्मा अन्यसेन्नाभौ च पार्श्वयोः अधर्मादी
ननंतादीन्हृदि पीठमंत्रं न्यसेत् आधारशक्तिमारभ्य ज्ञानात्मानमनुक्रमात् उक्तक्रमेण विन्यस्य हृ
दये साधुभाविते नवशक्तिमये रम्ये ध्यायेद्देवमुमापतिं चंद्रकोटिप्रतीकाशं त्रिनेत्रं चंद्रभूषणं आ
पिंगलजटाजूटं रत्नमौलिविराजितं नीलग्रीवमुदारांगं नागहारोपशोभितं वरदाभयहस्तं च हरिणं
च परश्वथं दधानं नागवलयं केयूरांगदमुद्रिकं व्याघ्रचर्मपरीधानं रत्नसिंहासने स्थितं ध्यात्वा तद्वाम
भागे च चिंतयेद्गिरिकन्यकां भास्वज्जपाप्रसूनाभामुदयार्कसमप्रभां विद्युत्पुंजनिभां तन्वीं मनोनयन
नंदिनीं बालेंदुशेखरां स्निग्धनीलकुंचितकुंतलां भृंगसंघातरुचिरनीलालकविराजितां मणिकुंड
लविद्योतत्स्वमंडलविभ्रमां नवकुंकुमपंकांककपोलतलदर्पणां मधुरस्मितविभ्राजदरुणाधरप
ल्लवां कुंकुमकंठीपिशावासयक्तचपंकजकुंडलां पाशांकुशाभयवरैर्विलसंतीं चतुर्भुजां अनेकरत्नवि
लसत्कंकणांगदमुद्रिकां मध्यनिवलयां हृद्यां हेमकांचीगुणान्वितां दिव्यमाल्यांबरधरां दिव्यचंदन
चर्चितां दिक्पालवनितामौलिसन्नतांघ्रिसरोरुहां रत्नसिंहासनारूढां सर्पराजपरिच्छदां एवं ध्या
त्वा महादेवं देवीं च गिरिकन्यकां न्यासक्रमेण संपूज्य देहे गंधादिभिः क्रमात् पंचभिर्ब्रह्मभिः कुर्यात्तद्यो
मस्थानेषु वा हृदि पृथक्पुष्पांजलिं दद्यान्मूलेन च हृदि त्रिधा पुनः स्वयं शिवो भूत्वा मूलमंत्रेण साधकः
ततः संपूजयेद्देवं बाह्यपीठे पुनः क्रमात् संकल्प्य पूजयेत्तत्र पूजारंभे समाहितः कृतांजलिपुटो भूत्वा चिंत
येद्धृदि शंकरम् ऋणपातकदौर्भाग्यदारिद्र्यविनिवृत्तये अशेषाघविनाशाय प्रसीद मम शंकर दुःख
शोकाग्निसंतप्तं संसारभयपीडितं बहुरोगाकुलं दीनं पाहि मां वृषवाहन आगच्छ देवदेवेश महादे
व भयंकर गृहाण सह पार्वत्या तव पूजां मया कृतां इति संकल्प्य विधिवद्बाह्यपूजां समारभेत् गुरुं
गणपतिं चैव यजेत्सव्यापसव्ययोः क्षेत्रेशमीशकोणे च वह्नौ कात्यायनीं यजेत् धर्मं ज्ञानं च वैराग्यमैश्व
र्यं च नमोंतकैः स्वैरग्न्यादिकोणेषु पीठपादाननुक्रमात् दिक्षु विंडविसर्गाभ्यामधर्मादींस्तु पूजयेत्
मंत्ररूपांस्तद्दिक्षु मध्येनंतं सतारकं सत्त्वादींस्त्रिगुणांस्तत्र पूजापीठे प्रविन्यसेत् अत ऊर्ध्वच्छदे माया
विद्यालक्ष्मीशिवे नव तदंते चांबुजं भूयः सकलं मंडलत्रयं पत्रकेसरकिंजल्कव्याप्तं तारान्तैः क्रमात्
आत्मत्रयं समभ्यर्च्य मध्ये मंडलमादरात् ज्येष्ठां लक्ष्मीं च रौद्रीं च सुभगाद्यैर्दिक्षु पूजयेत् वामाद्यान नवशक्ती
न नवस्वरयुतान्यजेत् हृदि बीजत्रयाद्येन पीठमंत्रेण चार्चयेत् आवृत्तिः प्रथमा गौरस्त्वयं च विभूतिशक्ति
भिः विशक्तिमूर्तिभिश्चान्यानि विद्वय समन्वितैः अनंताद्यैः परात्वन्यामातृभिश्च वृषादिभिः सिद्धिभिश्चा
णिमाद्याभिरिंद्राद्यैश्च तदायुधैः वृषभक्षेत्रचंडीशो दुर्गा च स्कंदनंदिनौ गणेशः सैन्यपश्चैव स्वस्वलक्ष
णलक्षिताः अणिमा महिमा चैव गरिमा लघिमा तथा ईशित्वं च वशित्वं च प्राप्तिः प्राकाम्यमेव च अष्टैश्वर्या
णि शोक्तानि तेजोरूपाणि केवलं पंचभिर्वह्निभिः पूर्वं हृल्लेखाद्याभिरप्यतु अंगैरुपाद्यैरिंद्राद्यैः पूर्वोक्ता
युनिभिस्तथैः उमामहेश्वरौ पश्चात्पूजयेदुन्नवादितः यथा माणवकेषु क्तेजोरूपं सदाशिवं उमया।
सहितं देवमुपचारैः प्रपूजयेत् सुप्रतिष्ठितशांखमध्ये तीर्थैः पंचामृतैरपि अभिषिंचेन्महादेवं रुद्रसूक्तैः
समाहितः कल्पयेद्विधिवन्मंत्रैरासनाद्युपचारकान् तैरेवाचमनं दद्यान्मधुपर्कं मधूत्तरं पुनराचम
नं दद्यात्स्नानमंत्रैः प्रकल्पयेत् आसनं कल्पयेद्देवं स्वागते विहितांजलिः अर्घ्यमष्टगुणोपेतं पाद्यं तु।

शुद्धोदकेन तु उपवीतं तथा वासो भूषणानि निवेदयेत् गंधमष्टांगसंयुक्तं सफलं विनिवेदयेत् ततश्च बिल्वमं दारकल्हारसरसीरुहं धत्तूरं कर्णिकारं च द्रोणपुष्पं च मल्लिकां कुशापामार्गतुलसीमाधवीबकुलान्वितान् द्रूतीकरवीराणि यथालब्धानि साधकः निवेदयेत्सुगंधीनि माल्यानि विविधानि च धूपं कालागुरुयुतं दीपं च विविधं शुभं अथ पायसनैवेद्यं संहृतं सोपदंशकं मोदकापूपसंयुक्तं शार्करं गुडसंयुतं मधुनाक्तं दधियुतं जलपानसमन्वितं तेनैव बहुविधा वस्त्रौजश्च धान्यं तु भावितः आगमोक्तेन विधिना गुरुवाक्यनियंत्रितः नैवेद्यं शंभवे भूयाद्दत्वा तांबूलमुत्तमं धूपं नीराजनं रम्यं छत्रं दर्पणमुत्तमं समर्पयित्वा विधिवन्मंत्रैर्वैदिकतांत्रिकैः यथाशक्त्या स्तवैर्नित्यैः स्तोत्रैर्यथाविधिसमर्चयेत् भक्त्या दत्तेन गौरीशः पुष्पमात्रेण तुष्यति अथांगभूतान्सकलान्गणेशादीन्प्रपूजयेत् सर्वैर्नानागुणैः स्तुत्वा साष्टांगं प्रणमेद्बुधः ततः प्रदक्षिणीकृत्य वृषचंडेश्वरादिकान् पूजां समाप्य विधिवत्प्रार्थयेद्गिरिजापतिं ॥ अथैतदनुसारिपद्धतिक्रमः तत्रादौ स्नानं कृत्वा भूतशुद्धिप्राणप्रतिष्ठामातृकान्यासादिकान्कृत्वा हृदयकमले शिवं ध्यात्वा मानसोपचारैः संपूज्य यथाशक्ति मंत्रं जप्त्वा पंदेवाय समर्प्य मूलेन स्वदेहपुष्पांजलिं दत्वा स्वात्मानं शिवरूपं ध्यात्वा कृतांजलिपुटो भूत्वा ऋणपातकदौर्भाग्यदारिद्र्यविनिवृत्तये अशेषाघविनाशाय प्रसीद मम शंकर दुःखशोकाग्निसंतप्तं संसारभयपीडितं बहुरोगाकुलं दीनं पाहि मां वृषवाहन आगच्छ देवदेवेश महादेवाभयंकर गृहाण सह पार्वत्या तव पूजां मया कृतां इति संकल्प्य विधिवद्बाह्यपूजां समाचरेत् शंखादिस्थापनं कृत्वा योगपीठादि पद्मासनांतं संपूज्य सर्वशक्तिमयेरम्ये इत्यादि पूर्वोक्तप्रकारेण महादेवं देवीं च ध्यात्वा न्यासक्रमेण संपूज्य देहगंधादिभिः क्रमात् ततो वहन्नासापुटेन करस्थपुष्पेषु स्वाभीष्टां देवतामागतां विभाव्य पुरस्थितलिंगे मूर्तौ वा प्रक्षिपेत् ततः देवेश भक्तिसुलभ सर्वाभरणसंयुत यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरो भवेत्यादि प्राणप्रतिष्ठां कृत्वा भवानीशंकराभ्यां नमः इति मंत्रेण अक्षतचंदनपुष्पादिभिः संपूज्य आवरणपूजां कुर्यात् तत्र अंगैः प्रथमं १ पंचमूर्तिशक्तिभिर्द्वितीयं २ विशक्तिमूर्तिभिर्हरिविधिभ्यां च तृतीयं ३ अनंताद्यैश्चतुर्थं ४ मातृभिः पंचमं ५ कुसादिभिः षष्ठं ६ अणिमादिभिः सप्तमं ७ इंद्राद्यैरष्टमं ८ वज्राद्यैर्नवमं ९ ततो नीराजनांतानुपचारान्कृत्वा प्रदक्षिणीकृत्य पूजां समाप्य विधिवत्प्रार्थयेद्गिरिजापतिं जय देव जयाजय जय शंकर शाश्वत जय सर्वसुराध्यक्ष जय सर्वसुरार्चित जय सर्वगुणातीत जय सर्ववरप्रद जय नित्य निराधार जय विश्वंभराव्यय जय विश्वैकवंद्येश जय नागेंद्रभूषण जय गौरीपते शंभो जय चंद्रार्धशेखर जय कर्पूरसंकाश जयानंतगुणाकर जय रुद्रविरूपाक्ष जयाचिंत्य निरंजन जय नाथ कृपासिंधो जय भक्तार्तिभंजन जय दुस्तरसंसारसागरोत्तारण प्रभो प्रसीद मे महादेव संसारार्तस्य खिद्यतः सर्वपापक्षयं कृत्वा रक्ष मां परमेश्वर महादारिद्र्यमग्नस्य महापापहतौजसः महाशोकनिविष्टस्य महारोगातुरस्य च ऋणभारपरीतस्य दह्यमानस्य कर्मभिः ग्रहैः प्रपीड्यमानस्य प्रसीद मम शंकर दरिद्रः प्रार्थयेद्देवं पूजांते गिरिजापतिं अर्थाढ्यो वापि राजा वा प्रार्थयेद्देवमीश्वरं दीर्घमायुः सदारोग्यं कोशवृद्धिर्बलोन्नतिः ममास्तु नित्यमानंदः प्रसादात्तव शंकर शत्रवः संक्षयं यांतु प्रसीदंतु मदेतयः सर्वसस्यसमृद्धिश्च भूयात्सुखमयादिशः एवमाराधयेद्देवं प्रदोषे गिरिजापतिं १२ ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिश्च तोषयेत् सर्वपापक्षयकरी सर्वदारिद्र्यनाशिनी शिवपूजेयमाख्याता सर्वाभीष्टफलप्रदेति

इति स्कांदे ब्रह्मोत्तरखंडे प्रदोषव्रतम्

अथ केदारखंडोक्तशनिप्रदोषव्रतम् ॥

शनिप्रदोषव्रतम् देवा ऊचुः शुक्रेकेन विधानेन कीदृशेन व्रतेन च आराधनीयो गौरीशोऽस्माभिर्जयकांक्षुकैः न हृदस्मद्गुरावार्यं तं हि नः परमा गतिः बृहस्पतिरुवाच कार्तिके शुक्लपक्षे तु मंदवारे त्रयोदशी कार्तिके चांद्रमासे वा मार्गशीर्षे वा समागता यदि लभ्येत शर्व प्राप्त्ये न संशयः तस्यां प्रदोषसमये

तिलामलकसंयुते शिवस्यचार्चनंकुर्य्याद्गंधपुष्पफलादिभिः प्रदोषवेलायांस्थावरंलिंगमर्चये
त् स्वयंभुंस्थापितंवापिपौरुषेयमपौरुषं जनेवाविजनेवापिअरण्येवातपोवने तल्लिंगमर्चयेद्भक्त्या।
विधिदृष्टेनकर्मणा ग्राममध्येतुयल्लिंगंस्वयंभुमपिवानघ तल्लिंगंपूजयेद्भक्त्याप्रदोषेतुविशेषतः ग्रा
माद्बहिःस्थितेलिंगेग्रामाच्छतगुणंफलं वाह्याच्छतगुणंपुण्यंलिंगमारण्यमुत्तमं वन्याच्छतगुणंपुण्यं
लिंगंपार्वतमुच्यते पार्वताच्चैवलिंगाच्चफलंचायुतसंज्ञितं तपोवनाश्रितेलिंगेपूजितेवामहाफलं काश्या
दिसंस्थितेलिंगेपूजितेस्यादनंतकं तस्माद्देतद्विभागेनशिवपूजार्चनंबुधैः कर्तव्यंनिपुणत्वेनतीर्थस्नाना·
दिकंतथा पंचपिंडानथुद्धृत्यवाप्यांस्नानंसमाचरेत् नस्नायात्परवारिण्यांतत्पापपादः कूपस्नानंप्रकुर्वीत
उद्धृतेनविशेषतः तडागेदशपिंडानामुद्धृत्यस्नानमाचरेत् ततःप्रदोषेसमलस्नानंमौनीसमाचरेत् प्र
दीपानांसहस्रेणदीपनीयःसदाशिवः तथादीपशतेनापिद्वात्रिंशद्दीपमालया घृतेनदीपयेद्दीपान्शिव
स्यपरितुष्टये तथाफलेश्चदीपैश्चनैवेद्यैर्गंधधूपकैः पूज्यःप्रदोषवेलायांनृभिःसर्वार्थसिद्धये प्रद·
क्षिणंप्रकुर्वीतशतमष्टोत्तरंतथा नमस्कारान्प्रकुर्वीततावत्संख्यान्प्रयत्नतः प्रदक्षिणनमस्कारैः पूज·
नीयःसदाशिवः नाम्नांशतेनरुद्रोसौस्तवनीयोयथाविधि ॐनमोरुद्रायभीमायनीलकंठायवेधसेक
पर्दिनेसुरेशायव्योमकेशायवैनमः वृषध्वजायसोमायसोमनाथायवैनमः दिगंबरायभर्गायउमाकां
तकपर्दिने तपोमयायव्यामायशिपिविष्टायवैनमः व्यालप्रियायव्यालायव्यालानांपतयेनमः महीध
रायव्याघ्रायपशूनांपतयेनमः त्रिपुरांतकायसिंहायशार्दूलर्षभचर्मणे सितायसितनाथायसिद्धा
यपरमेष्ठिने कामांतकायबुद्धायबुद्धीनांपतयेनमः कारणायविशिष्टायशिष्टायपरमात्मने वेदा
यवेदबीजायवेदगुह्यायवैनमः दीर्घायदीर्घरूपायदीर्घार्थायमहौजसे नमोजगत्प्रतिष्ठायव्योमरूपा
यवैनमः गर्भक्रतुमहादैत्यअंधकासुरभेदिने नीललोहितशुक्लायचंडमुंडप्रियायच भक्तिप्रिया·
यदेवायज्ञातज्ञानाव्ययायच महेशायनमस्तुभ्यंमहादेवहरायच त्रिनेत्रायत्रिवेदायवेदांगायनमो
नमः अर्थायअर्थरूपायपरमार्थायवैनमः विश्वरूपायविश्वायविश्वनाथायवैनमः शंकरायच।
कालायकालावयवरूपिणे अरूपायचसूक्ष्मायसूक्ष्मसूक्ष्मायवैनमः श्मशानवासिनेतुभ्यंनमस्ते
कृत्तिवाससे शशांकशेखरायैवरुद्रभूमिशयायच दुर्गायदुर्गसारायदुर्गावयवसाक्षिणे लिंगरूपायलिंगा
यलिंगानांपतयेनमः नमःप्रणवरूपायप्रणवार्थायवैनमः नमोनमःकारणकारणायमृत्युंजयायात्म·
भवस्वरूपिणे त्रियंबकायशितकंठभर्गगौरीपतेमंगलहेतवेनमः बृहस्पतिरुवाच नाम्नांशतंमहेशस्य
उच्चार्यवर्तिनातदा प्रदक्षिणनमस्कारैरेतत्संख्यैःप्रयत्नतः कार्य्यःप्रदोषसमयेपूजेयंशंकरस्यच एवंव्र
तंसमुद्दिष्टंतवशक्रमहामते शीघ्रंकुरुमहाभागपश्चाच्छुद्धिंकुरुप्रभो शंभोःप्रसादात्सर्वंतेभविष्यति
जयादिकं शक्रउवाच वृत्रःपुरामहेशानंसमाराध्ययदादरात् कथंशापवरंब्रह्मन्सुराकश्चाभवद्द्विज
बृहस्पतिरुवाच वृत्रःस्वयंमहातेजाउग्रेणतपसापुरा शिवंप्रसादयामासपर्वतेगंधमादने नाम्नाचित्र
रथोराजावनेचित्ररथस्यतत् एतज्जानीहिभोशक्रतवपुर्य्याःसमीपतः यस्मिन्वनेमहाभागनसंतिम
हद्द्रुमयः तस्माच्चैत्ररथंनामवनंपरममंगलं तस्यराज्ञःशिवेनैवयानंचपरमाद्भुतं कामगंकिंकिणी
युक्तसिद्धचारणसेवितं गंधर्वैरप्सरोयक्षैःकिन्नरैरुपशोभितं ततोतेनैवयानेनपृथिवीपर्य्यटन्सुरा
तथागिरीशमुख्यांश्चद्वीपांश्चविविधांस्तथा एकदापर्य्यटन्राजानाम्नाचित्ररथोमहान् कैलासमाग
तस्तत्रसददर्शपराद्भुतं तथासभांमहेशस्यगणैश्चैवविराजितां अर्द्धांगलग्नयादेव्याशोभितंचमहेश्वरं
निरीक्ष्यदेव्यासहितंसदाशिवंन्यायान्वितंवाक्यमिदंबभाषे वयंचशंभोविषयान्वितास्वमर्यादयःस्त्री
विजितास्तथान्ये तेलोकमध्येवयमेवचाज्ञाःस्त्रीसेवनंलज्जयानैवकुर्मः एतच्छ्रुत्वांनिशम्यादमहे·

शः प्रहसन्निव उवाच न्यायसंयुक्तं सर्वेषामपि शृण्वतां भयं लोकाय वाच्यं च सर्वेषामपि नान्यथा अशि
ते कालकूटं च सर्वेषामपि दुर्जरं लोकातीतं च मे वृत्तं तथाप्युपहसन्त्यसौ ततश्चित्ररथं देवी गिरिजा वाक्यम
ब्रवीत् उमोवाच रे दुरात्मन् कथं त्वया शंकरश्चोपहासितः मया सहैव मंदात्मन्नीदृग्यसे कर्मणः फलं साधुना
श्रमकामानामुपहासं करोति यः देवो वाप्यथवा मर्त्यः स विज्ञेयोधमाधमः एते च नीचाश्च महानुभावास्तथाप
मीयेवल वेदगर्भाः तथैव सर्वे सनकादयोपि मीतस्तास्ते सर्वे शिवमर्चयंति रे मूढ सर्वे भुजनेक्षितिशस्त्व
मेक एवायनचापरे जनाः तस्मादभिमंत्रिकरोमि दैत्यं दैवैर्द्विजैश्चापि बहिष्कृतं त्वां एवं शप्तस्तया देव्या भवान्या
राजसत्तमः राजा चित्ररथः सद्यः पपात सहसा दिवः आसुरीयोनिमासाद्य वृत्रो नामाभवत्तदा तपसा परमेण व
त्वष्ट्रा संयोजितः क्रमात् तपसा तेन महता ब्रजेयो वृत्र उच्यते तस्मात्त्वं भुसमभ्यर्च्य प्रदोषे विधिनामुना गुरो
स्तद्वचनं श्रुत्वा उवाचाथ शतक्रतुः कोयापनं विधिं ब्रूहि प्रदोषस्य च मे धुना कार्तिकमासि संप्राप्ते मंदवारे त्रयो
दशी संपूर्णा या भवेत्ता हि संपूर्णव्रतसिद्धये वृषभो राजतः कार्यः पृष्ठे तस्य तु पीठकं तस्योपरि न्यसेद्देवं
मुमाकांतं त्रिलोचनं पंचवक्त्रं दशभुजं वामांगे गिरिजा सती सौवर्णी प्रतिमां कृत्वा ताम्रकुंभेन लाञ्छिते पंचर
त्नफलोपेते पंचपल्लवचर्चिते चंदनेन सुगंधेन मिश्रिते शोभिते तथा पूर्णपात्रं ततः कृत्वा कुंभस्योपरि वि
न्यसेत् अशक्तौ मृण्मये कुंभे वंशपात्रमथापि वा पर्णाशरावं वा स्थाप्य सौवर्णी प्रतिमां तथा शक्त्या कृतां परि
स्थाप्य वस्त्रमाल्यविभूषितां पूजयित्वा विधानेन रात्रौ जागरणं चरेत् पुष्पमंडपिकामादौ कृत्वा श्रद्धासमन्वि
तः एहि त्वमुमाकांत स्वावस्थे सुनिर्मले उपविश्य मंडपे दानीं सर्वशांतिप्रदो भव आसनं पाद्यं च ते मया द
त्तं पुष्पगंधसमन्वितं गृहाण देवदेवेश प्रसीद वरदो भव पाद्यं ताम्रपात्रस्थितं तोयं फलगंधादिसंयुतं
अर्घ्यं गृहाण देवेश मया दत्तं हि भक्तितः अर्घ्यं शीतलं निर्मलं तोयं कर्पूरेण सुवासितं आचम्यतां महादेव
गिरिजासहित प्रभो आचमनं पंचामृतेन स्नपनं कार्यमादौ प्रयत्नतः गोक्षीरेण च देवेश गृहाण परमेश्व
र दध्ना चैव महादेव स्नपनं क्रियते तव गृहाण स्व मया दत्तं सुप्रसन्नो भवाव्यय सर्पिषा च मया देव स्नपनं क्रि
यते धुना गृहाण त्वं सुरश्रेष्ठ मम वायुःप्रदो भव इदं मधु मया दत्तं तव प्रीत्यर्थमेव च गृहाण त्वं महादेव म
म शांतिप्रदो भव सितया देवदेवेश स्नपनं क्रियते धुना गृहाण श्रद्धया दत्तं सुप्रसन्नो भव प्रभो एवं पंचा
मृतेनैव स्नापनीयो वृषध्वजः कावेरी नर्मदा वेणी तुंगभद्रा सरस्वती गंगा च यमुना चैव ताभ्यः स्नानार्थमाहृ
तं गृहाण त्वमुमाकांत स्नानाय श्रद्धया जलं स्नानं एतद्वासो मया दत्तं सोमरीयं सुशोभनं पूजार्हं श्रद्धया द
त्तं तव प्रीत्यर्थमेव च यज्ञोपवीतं सौवर्णं मुक्तामणिसमन्वितं तव प्रीत्या मया दत्तं ब्रह्मकर्मप्रसादनं यज्ञोप
वीतं सुगंधि चंदनं दिव्यं कुंकुमादिसमन्वितं गंधं गृहाण देवेश सुगंधिपुष्टिवर्द्धनं गंधं अक्षताश्च सदादि
व्याः कुंकुमाद्यैर्विरंजिताः मया दत्ता महादेव तव प्रीत्यै सुभक्तितः अक्षताः मालतीचंपकादीनि कुमुदान्यु
त्पलानि च बिल्वपत्राणि पूजार्थं स्वीकुरुत्व उमापते पुष्पाणि धूपं विशिष्टं परमं सर्वौषधिविजृंभितं गृ
हाण परमेशान मम शांत्यर्थमेव च धूपं दीपावलिं मया दत्तां गृहाण परमेश्वर आरार्तिकप्रदानेन मम ते
जो विवर्द्धय आरार्तिः शाल्योदनं घृतं सूपं पायसादिसमन्वितं नैवेद्यं विधिवद्दत्तं भक्त्या मे प्रतिगृह्यतां नै
वेद्यं कर्पूरैलालवंगादि पूगीफलसमन्वितं तांबूलं कल्पितं भक्त्या गृहाण गिरिजाप्रिय तांबूलं इदं फल
मिति फलं हिरण्यगर्भेति दक्षिणा निपत्य दंडवद्भूमौ प्रणम्य च पुनः पुनः पश्चाज्जागरणं कार्यं गृहे वा देव
तालये वितानं मंडपं कृत्वा नानावर्णैः समन्वितं गीतवादित्रनृत्येन अर्चनीयः सदाशिवः प्रभाते यांत
शर्वर्यामुदिते रविमंडले स्नात्वा पुनः समभ्यर्च्य जुहुयात्पायसेन च अथाचार्यं सपत्नीकं वस्त्रालंकारचं
दनैः तोषयित्वा सुविद्वांसं गां प्रदद्यात्पयस्विनीं ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिः प्रतोषयेत् दीनांना
थांश्च संतर्प्य आशिर्वादं वाचयेत्ततः लब्ध्वानुज्ञां ब्राह्मणेभ्यो बंधुभिः सहितः शुचिः हृदि स्मरन् शिवं भक्त्या भुं

जीतनियतोव्रती अनेनैवविधानेनप्रदोषोद्यापनाविधिः कार्योविधिवताशक्त्या सर्वकार्यार्थसिद्धये गुरुणा
कथितंसर्वंसचकारशतक्रतुः तेनैवचसहायेनमहेन्द्रोयुद्धतत्परः वृत्रेणतिसुरैःसार्द्धंसुयुयेमशतक्रतुः
तेनैवचसहायेनमहेन्द्रोयुद्धतत्पर

इतिकेदारखण्डोक्तंशनिप्रदोषव्रतम् ॥

अथनिर्णयामृतेस्कन्दपुराणोक्तंशुक्रादिवारयुक्तंप्रदोषव्रतं देव्युवाच देवकेनविधानेनप्रदोषव्रतमुत्तमं
विधातव्यंनरैःस्त्रीभिःसंतानफलसिद्धये ईश्वरउवाच यदात्रयोदशीशुक्लामंदवारेत्रयोदशी आरब्धव्यंव्र
तंतत्रसंतानफलसिद्धये ऋणनिर्मोचनार्थंतुभौमवारेणसंयुता आयुरारोग्यसिद्ध्यर्थंभानुवारेणसंयुते
ति अथास्यप्रातः स्नात्वापुत्रादिकामदंप्रदोषव्रतंकरिष्ये इतिसंकल्प्य गुरूपदिष्टविधिनागममन्त्रैर्वे
दमन्त्रैर्वाषोडशोपचारैर्यथाविभवंपूजांकुर्यात् ततश्च भवायभवनाशायमहादेवायधीमते रुद्रायनी
लकंठायशर्वायशशिमौलये उग्रायोग्रौघनाशायभीमायभयहारिणे ईशानायनमस्तुभ्यंपशूनांपत
येनम इतिमन्त्रेणसंपूज्य प्रार्थयेत् यथाभवान्समस्तानांपशूनांपाशमोचकः तथाव्रतेनसंतुष्टःपुत्रं
देहिसुलक्षणं सपायसंचनैवेद्यंसाज्यंसफलशर्करं दत्वाथोशुद्धवासंचताम्बूलंकुंकुमादिकं समर्प्य
इष्टदिक्ष्वष्टदीपानाज्यपरिप्लुतान् भवाद्यैर्नामभिर्दद्यात्तैरेवाष्टप्रदक्षिणाः नमस्काराष्टकंकृत्वाजपंपू
जांसमर्प्यच वृषराजंसमभ्यर्च्यवृषमन्त्रेणमन्त्रवित् मन्त्रश्च धर्मस्त्वंवृषरूपेणजगदानंदकारक अष्ट
मूर्तेरधिष्ठानमतःपाहिसनातनेति वृषायदूर्वाचणकंपानीयंचनिवेदयेत् वृषस्यवृषणौस्पृष्ट्वाशृंगयोर्मध्य
तःशिवं विलोक्यसहितंदेव्याःपूजितंप्रार्थयेच्छिवं प्रार्थनामन्त्रश्च ऋणरोगादिदारिद्र्यपापापादिक्षयमृ
त्यवः भयशोकमनस्तापानश्यंतुममसर्वदेति पृथिव्यांयानितीर्थानिसागरान्तानियानिच अंडमाश्रि
त्यपिहंतिप्रदोषेवृषभस्यतु स्पृष्ट्वातुवृषणौतस्यशृंगमध्येविलोक्यच पुच्छंचककुदंचैवसर्वपापैःप्रमु
च्यतइति निवेद्यव्रतराजंतद्यथाविभवानुसारतः दक्षिणांब्राह्मणेभ्यश्चततोमौनेनविसर्जयेत् एवंसंवत्सरं
कुर्यात्त्रयोदश्यामिदंव्रतं अथवामंदवारेणयुक्तामेवत्रयोदशी चतुर्विंशतिकुर्वीतसोऽभीष्टफलमाप्नुयादिति

स्कन्दपुराणोक्तंशनिप्रदोषव्रतम् ब्रह्मोत्तरखंडे तु

सोमवारेणयुक्तायामथियस्यांकस्यांचित्त्रयोदश्यांप्रदोषादौशिवपूजोक्ता सोमवारेविशेषेणप्रदोषादिगुणोर्ध्व
ते केवलंवापियेकुर्युःसोमवारेशिवार्चनमिति अथनृसिंहपुराणोक्तंनृसिंहत्रयोदशीव्रतं हेमाद्रौ गुरुवा
रेत्रयोदश्यामुपवासीजलाप्लुतः तर्पयित्वादेवपितॄनृषीश्चतिलतंडुलैः नरसिंहंसमभ्यर्च्ययःकरोत्युपवा
सकं सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते ॥ इतिनृसिंहपुराणोक्तंनृसिंहत्रयोदशीव्रतम्

अथकूर्मपुराणोक्तंत्रिलोचनत्रयोदशीव्रतम् हेमाद्रौ

त्रयोदश्यांतथारात्रौसोपवासस्त्रिलोचनं दृष्ट्वात्तश्वमेधमेयामेमुच्यतेसर्वपातकैरिति ॥ अथकामत्रयोद
शीव्रतं हेमाद्रौ ब्रह्मोवाच कामंपूज्यत्रयोदश्यांस्वरूपोजायतेनरः इष्टांरूपवतींभार्यांलभेत्कामंप्रपूज्यकला
न् मूलमन्त्राःस्वसंज्ञाभिरंगमन्त्राश्चकीर्तिताः पूर्ववत्पद्मपत्रस्थःकर्तव्यश्चातिथीश्वरः गंधपुष्पोपहारैश्च
यथाशक्तिविधीयते पूजात्रविप्रशाठ्येनकृतापिनफलप्रदा आज्यधारासमिद्भिश्चदधिक्षीरान्नमाक्षिकैः प्र

वीक्तफलदोहोमःकृतःशांतेनचेतसा

इतिभविष्योत्तरेकामत्रयोदशीव्रतं अथवाराहपुराणोक्तंमहाद्रुमसंज्ञंत्रयोदशीव्रतं

सनत्कुमारउवाच अथस्वस्त्ययनंपुंसांशृणुष्वतामघनाशनं व्रतमेतत्त्रयोदश्यांप्रदोषेस्यान्महाद्रुमे नवनीतं
पंचगव्यरजतांशसमप्रभं कपित्थफलमात्रंतत्समादाय ताम्रादिपात्रेप्राङ्मुखोनिक्षिप्य अष्टदलपद्मकर्णि
कायांलक्ष्मीनारायणंदलेष्वष्टशक्तीःदिक्ष्विंद्रादीन्संपूज्यदेवाग्रेतन्नवनीतंद्विधाविभज्य प्रत्येकमभिमन्त्रयेत्

तत्रमंत्रः पुरुषः पूर्णकामस्त्वद्धरिर्भद्रंकरोतुनः योषिद्वाराममदालक्ष्मीर्मंगलेदिशतुस्वयमितिवारद्वयं पत्न्येश
श्पतीमभिमंत्रयेत् यस्त्वंतरात्माभूतानामनादिनियनोच्युतः सपरः परयाशक्त्याकुर्विरंत्ततमेसदा सर्वपुष्टि
प्रजननीसर्वार्तिशमनीतव लक्ष्मीःक्रुक्षिगतेगर्भेरक्षतादच्युतप्रिया सर्वार्तिघ्नयदस्त्रादिदिव्यशक्तियुतान्य
पि त्वांरक्षंतुसदाविष्णोः सर्वप्रहरणान्यपि तथादिक्पतयःसर्वेरक्षंतुग्रहदेवताः योऽनसंसारसंयुक्ताः सर्वेरक्षं
तुसर्वदेति पत्नीमभिमंत्र्य ब्राह्मणान्भोजयित्वा वधासहतांरात्रिमतिवाह्य चतुर्दश्यांपुनर्द्विजान् भोजयित्वा
स्वयंभुंजीतेतितत्फलं मंगल्यपरमश्रायैदीर्घमायुष्यंविंदतीत्येतेनतत्रैवोक्तम् ॥ इतिवाराहपुराणोक्तंपु
त्रप्राप्तित्रयोदशीव्रतं अथसौरपुराणोक्तंशिवत्रयोदशीव्रतं व्यासउवाच मंदवारयुतापुण्याशुक्लापक्षेत्रयोद
शी तस्यामुपोष्यविधिनासंपूज्यगिरिजापतिम् ब्रह्महत्यादिभिःपापैर्मुक्तोभवतिमानवइति ॥ इतिशुक्ल
त्रयोदश्यांशनित्रयोदशीव्रतम् ॥ अथमार्गशीर्षादिमासत्रयोदश्यांवर्षसाध्यं यमादर्शनव्रतं यमउवाच पू
र्वाह्णेमार्गशीर्षादौवर्षमेकंनिरंतरं त्रयोदश्यांसौम्य दिनेऽप्यार्कांगारवर्जिते ममनाम्नाद्विजानष्टौपंचचैवस
माह्वयेत् पुराणवेदतत्त्वज्ञान्स्वाचारांस्तत्त्वदर्शिनः सूर्येकशरणान्साधून्सर्वभूतहितेरतान् शुचौदेशेशुभेप
द्वेप्राङ्मुखानुपवेशयेत् अंतर्वासोयतान्भक्त्यायत्नेनाभ्यंजयेद्व्रतान् अंतर्वासोयुतान्सर्वान्नयोवस्त्रमात्रयु
तान् आरभ्यउत्तमांगंतुतिलतैलेनमर्दयेत् स्नापयेद्गंधकाषायैः सुखोष्णेनचवारिणा पृथक्पृथक्स्नापयि
त्वासर्वानेवद्विजोत्तमान् सुखस्नातांस्तथाचैतान्व्रतीभक्तिपरायणः सपुत्रभृत्यःशुश्रूषांतेषांकुर्यात्समा
हितः प्राङ्मुखानुपविष्टांश्चत्रयोदशपृथक्पृथक् संस्थापयेद्वाभिमुखानगुडापूपाँस्तथाचितान् सव्यंज
नंसपक्वान्नंभूयोभूयोनिवेदयेत् यथासुखंयथातृप्तियथाकाममयार्चितं देवंभावसमालब्ध्वइच्छद्भिःश्रेय
आत्मनः शुचिर्भूत्वातथाचैतानर्चयेत्तिलतंडुलैः प्रस्थमात्रैरथैकैकंताम्रपात्रसमन्वितं सदक्षिणैःसच्छ
त्रैश्चजलकुंभैःपवित्रकैः चर्मप्रावरणैःश्रेष्ठैर्वस्त्रयुग्मैश्चहृतकाः मंत्रेणानेनविप्रेंद्रानर्चयेत्तान्पृथक्पृ
थक् ब्राह्मणान्सम्भूष्यस्तान्यंक्तिभेदंनकारयेत् यमःशनैश्चरोमृत्युर्दंडहस्तोयनायकः अभावःप्रल
विणा इत्युक्तासंप्रयच्छेत्तदेयंदत्वाव्रतीपुनः द्विजांश्चानुव्रजेत्तामान्स्वगृहंविधिनार्चितान् एवंयःपुरुषः
कश्चित्सकृद्व्रतमिदंचरेत् समृतोनेत्ततेहृतान्नयातियममंदिरं अदृष्टोसौसमायातिविमानेनार्कमंडलम्
तस्मायातिपुरींविष्णोस्ततःशिवपुरंव्रजेत्
इतिभविष्योत्तरोक्तंयमादर्शनत्रयोदशीव्रतम् ॥
अथमार्गशीर्षशुक्लचतुर्दश्यामारभ्य मत्स्यपुराणोक्तंशिवचतुर्दशीव्रतं नंदिकेश्वरउवाच शृणुधाव
द्वितोब्रह्मन्वक्ष्येमाहेश्वरंव्रतम् त्रिषुलोकेषुविख्यातंनाम्नाशिवचतुर्दशी मार्गशीर्षत्रयोदश्यांसितायाम
मेकभोजनम् प्रार्थयेद्देवदेवेशंत्वामहंशरणंगतः मार्गशीर्षस्यात्रप्रतिपदादिरमावास्यांतस्त्वादौमासः
चतुर्दश्यांनिराहारः समभ्यर्च्यतुशंकरम् सुवर्णवृषभंदत्वाभोक्ष्येहंचापरेहनि एवंनियमकृत्सुप्त्वाप्रा
तरुत्थायमानवः कृतस्नानजपःपश्चादुमयासहशंकरम् पूजयेत्कमलैःशुक्लैर्गंधधूपानुलेपनैः पादौ
नमःशिवायेतिशिवःसर्वात्मनेनमः ललाटंतुत्रिनेत्रायनेत्राणिहरयेनमः मुखमिंदुमुखायेतिश्रीकंठा
येतिकंधराम् सद्योजातायकर्णौतुवामदेवायवैभुजौ अघोरहृदयायेतिहृदयंचापिपूजयेत् स्तनौतत्पुरुषा
येतिईशानायतथोदरम् पार्श्वेचानंतधर्मायज्ञानभूतायवैकटिम् ऊरूचाप्युग्रवैराग्यसिंहायेतिप्रपूजयेत् अ
नंतैश्वर्यनाथायजानुनीचार्चयेद्बुधः प्रधानायनमोजंघेगुल्फौव्योमात्मनेनमः व्युप्तकेशात्मरूपायपृष्ठमभ्य
र्चयेन्नरः नमःपुष्टेनमस्तुष्ट्यैपार्वतीचापिपूजयेत् ततस्तुवृषभंहैमसुदकुंभसमन्वितं शुक्लमाल्यांबरयुतं
पंचरत्नसमन्वितं भक्ष्यैर्नानाविधैर्युक्तंब्राह्मणायनिवेदयेत् प्रीयतांदेवदेवोत्रसद्योजातःपिनाकधृक् ततस्त्व

विप्रान्नेन तर्पयेच्छक्तितः शुभान् एवं दाजन्तसंप्राश्य स्वपेद्भूमावुदङ्मुखः पंचदश्यां ततः पूज्य विप्रान्भुंजीत वाग्यतः तद्वत्कृष्णचतुर्दश्यामेतत्सर्वं समाचरेत् चतुर्दशीषु सर्वासु कुर्यात्पूर्ववदर्चनं येतु मासविशेषाः स्युस्तान्निबोध क्रमादिह मार्गशीर्षादिमासेषु क्रमादेतदुदीरयेत् शंकराय नमस्तुभ्यं नमस्ते करवीरक त्र्यंबकाय नमस्तेस्तु महेश्वर ततः परं नमस्तेस्तु महादेव स्थाणवे च ततः परं नमः पशुपते नाथ नमस्ते शंभवे पुनः नमस्ते परमानंद नमः सोमार्धधारिणे नमो भीमाय इत्येवं त्वामहं शरणं गतः गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकं पंचगव्यं विल्वपत्रं यवागोशृंगवारि च तिलाश्च कृष्णा विधिवत्प्राशनं क्रमशः स्मृतं प्रतिमासं चतुर्दश्योरेकैकं प्राशनं स्मृतं मन्दारैर्मालतीभिश्च तथा धत्तूरकैरपि सिंदुवारैरशोकैश्च मल्लिकाभिः सपाटलैः अर्कपुष्पैः कदंबैश्च शतपत्रैस्तथोत्पलैः एकैकेन चतुर्दश्योरर्चयेत्पार्वतीपतिं मार्गशीर्षादिमासेष्वित्यनन्तगुणसंविज्ञानो बहुव्रीहिः तेन मार्गशीर्षे सद्योजातः प्रीयतामिति सद्योजातस्योदीरणं पौषादिष्वेकादशसु शंकरादीनुदीरयेत् एवं दाजन्तस्य मार्गशीर्षे प्राशनात् गोमूत्रादयः पौषादिषु प्राशनीयाः मार्गशीर्षे श्वेतकमलैः पूजाविधानान्मंदाराद्यैः पौषादिषु पूजा कार्येत्यर्थः पुनश्च कार्तिके मासि संप्राप्ते तर्पयेद्द्विजान् अन्नैर्नानाविधैर्भक्ष्यैर्वस्त्रमाल्यविभूषणैः कृत्वा नीलवृषोत्सर्गं श्रुत्युक्तविधिना नरः उमामहेश्वरं हैमं वृषभं च गवा सह मुक्ताफलाष्टकयुतं सितनेत्रपटान्वितं नेत्रपटः तेन इति प्रसिद्धः ताम्रपात्रोपरिष्टिनः शालितंडुलसंयुतं स्थाप्य विप्राय शांताय देवव्रतपराय वै ज्येष्ठसामविदे देयं न चक्रव्रतिने क्वचित् गुणाढ्ये श्रोत्रिये दद्यादाचार्ये तत्त्ववेदिनि अव्यंगांगाय सौम्याय सदा कल्याणकारिणे सपत्नीकाय संपूज्य माल्यवस्त्रविभूषणैः गृहस्थाय प्रदेयं तदभावे द्विजातये न वित्तशाठ्यं कुर्वीत कुर्वन्दोषान्पतत्परः सर्वोपस्करसंयुक्तां शय्यां दद्यात्सकंभिकां अनेन विधिना यस्तु कुर्याच्छिवचतुर्दशीं सोश्वमेधसहस्रस्य फलमाप्नोति मानवः ब्रह्महत्यादिकं किंचिदत्र वामुत्र वा कृतं पितृभिर्भ्रातृभिर्वापि तत्सर्वं नाशमाप्नुयात् दीर्घायुरारोग्यकुलान्नवृद्धिरत्रास्य यामुत्र चतुर्भुजत्वं गणाधिपत्यं दिवि कल्पकोटिशतं वसित्वा पदमेति शंभोः न बृहस्पतिरप्यनंतमस्याः फलमिन्द्रो न पितामहोपि वक्तुं न च सिद्धगणोप्यलं न चाहं यदि जिह्वायुतकोटयोपि वक्त्रे भवत्यमरखलभः पठति यः स्मरेद्वा यदा शृणोत्यपि विमत्सरः सकलपापनिर्मोचनीं इमां शिवचतुर्दशीममरकामिनीकोटयः स्तुवंति तममनिंदितं किमु समाचरेद्यः सदा यावायनारी कुरुते च भक्त्या भर्तारमापृच्छ्य गुरूंस्ततं वा सापि प्रसादात्परमेश्वरस्य परं पदं याति पिनाकपाणेः ॥ इति शिवचतुर्दशीव्रतं नारदीये मार्गशुक्लचतुर्दश्यामेकभक्तं प्रोदितं निराहारो वृषं स्वर्णं शाठ्यं दद्याद्द्विजातये परेद्युः प्रातरुत्थाय स्नात्वा सोमं महेश्वरं पूजयेत्कमलैः शुक्लैर्गंधमाल्यानुलेपनैः द्विजान्संभोज्य मिष्टान्नैस्तोषयेद्दक्षिणादिभिः एतच्छिवव्रतं विप्र भुक्तिमुक्तिप्रदायकं कर्तृणामुपदेष्टृणां सार्थानामनुमोदिनां अस्यां मार्गशुक्लचतुर्दश्यां पिशाचमोचनतीर्थश्राद्धमुक्तं त्रिस्थलीसेतौ सा च पराह्णव्यापिनी ग्राह्या अज्ञातानामपि पिशाचानुद्देशनादेकोद्दिष्टत्वाच्च मध्याह्नव्यापिनीति यथाकुलधर्मं व्रतादावुत्तरैवेति काशीखंडेपि मार्गशुक्लचतुर्दश्यां कपर्दीश्वरसन्निधौ स्नात्वान्यत्रापि मरणात्पैशाच्यमवाप्नुयुः इमां सांवत्सरीं यात्रां ये करिष्यंति मानवाः तीर्थप्रतिग्रहात्पापान्निस्तरिष्यंति ते नरा इति ॥ अथ मार्गपौर्णमास्यां लवणाढकदानमुक्तं नारदीये मार्गशीर्ष्यां पौर्णमास्यां स्वर्णाढ्यं लवणाढकं देयं विप्राय शांताय सर्वकामसमृद्धये इति अस्यां चंद्रपूजोक्ता निर्णयामृते ब्रह्मपुराणे मार्गशीर्षे तिथिप्रक्रमे वामनेन हृिय द्विलोल्लदेवभुवनत्रये अनसूयायतश्चंद्रममरतेनाभ्यषेचयत् पौर्णमास्यां च तस्मात्तं पूजयेत्तत्र सर्वदा शुक्लैः पुष्पैश्च पयसा स्नापयेत्परया मुदा रत्नदीपैश्च वलिभिर्हैमैर्ब्राह्मणतर्पणैः गोभ्यश्च लवणं देयं तस्मिन्नहनि सर्वदा यतश्च लवणं चंद्रादुत्पन्नं प्रागिति स्मृतं माता स्वसा वा दुहिता पूज्या अस्य कुलांगनाः कांतिलक्ष्मीश्च कल्याणं पूर्णेन्दोः पूजनाद्भवेदिति अस्यामेव मृगशिरोनक्षत्रयुक्तायां सवर्णं लवणं देयं तदुक्तं विष्णुना मार्गशीर्षशुक्लपंचदश्यां मृगशिरोयुक्तायां लवणस्य सुवर्णनाभं प्रस्थमेकं चंद्रोदये ब्राह्मणाय प्रतिपादयेत् अनेन कर्मणा सौभाग्यप्रभाग्यभिजायते अस्यां दत्तात्रेयोत्पत्तिः स्कांदे सह्यखंडे मार्गशीर्षे तथा मासि दशमेह्नि सुनिर्मले मृगशीर्षयुते पौर्णमास्यां ह्रस्वचवासरे ह्रस्ववासरे बुधवासरे जनयामास देदीप्यमानं पुत्रं सती शुभं तं विष्णुमागतं ताला

अग्निर्नामाकरोत्स्वयं दत्तवान्स्वस्य पुत्रत्वात् दत्तात्रेयमितीश्वरमिति दशमे मासीत्यन्वयः इयं पूर्वविद्धा ग्राह्येति रुद्रदेति
प्रदोषव्यापिनीति निर्णयसिंधौ अस्यामेव चंद्रव्रतारंभः कार्यः तदुक्तं हेमाद्रौ विष्णुधर्मोत्तरे मार्गशीर्षादथारभ्य चंद्रमंडल
केनरः सोपवासः पौर्णमास्यां प्रपूज्य यत्फलं लभेत् नक्ताशनस्तु संपूज्य चाग्निष्टोमफलं लभेत् कृत्वा व्रतं वत्सरमेत
दिष्टं प्राप्नोति लोकांश्च निशाकरस्य ततो धरालोके सुचिरं सकाले सायुज्यमायाति ततस्तु सोमेनेति अस्यां प्रत्यवरोहणं
कार्यं तदुक्तमाश्वलायनेन मार्गशीर्ष्यां प्रत्यवरोहणं चतुर्दश्यां पौर्णमास्यां वेति अत्र श्राद्धमुक्तमिति यत्तु विष्णुः
मार्गशीर्षे च पौषे च माघे प्रोष्ठे च फाल्गुने कृष्णपक्षेषु सर्वेषु रन्वष्टक्यस्तथाष्टकेति पौषमासादिपुष्विति तच्च
तुर्थी अनावश्यकत्वार्थे चाप्यन्याच तर्थी स्यान्नो च कुर्यात्स्वयन्नत इति वायुब्रह्माण्डपुराणात् श्राद्धमेतेषु कर्माणीन
रकं प्रतिपद्यते इति प्रत्यवायश्रवणात् अथास्यां मार्गपौर्णिमास्यामाग्नेयपुराणदानमुक्तं नारदीये एतदाग्नेय
कं नाम पुराणं परिकीर्तितं तल्लिखित्वा च यो दद्यात्सुवर्णकमलान्वितं तिलधेनुयुतं वापि मार्गशीर्ष्यां विधान
तः पुराणार्थविदे सोऽपि स्वर्गलोके महीयते इति तिलधेनुसहिताग्नेयपुराणदानविधिः अथ व्रतिपौर्णि
मोच्यते सा च मार्गशीर्षसितेपक्षे पौर्णिमस्यां शुचिव्रता प्रातः शुक्लतिलैः स्नात्वा परिधाय वरं सती पूजासंभारमासाद्य
पिष्टदीपं विधाय च पुत्रसौभाग्यप्राप्त्यर्थं मध्याह्ने पूजयेच्छिवं सा च मार्गशीर्षपौर्णिमा मध्याह्नव्यापिनी ग्राह्या तिथ्यादि
संकीर्त्य मम इह जन्मनि जन्मांतरे च अखंडसौभाग्यपुत्रपौत्रप्राप्त्यर्थं व्रतिपौर्णिमाव्रतं करिष्ये तत्र निर्विघ्नतासिद्ध्यर्थं
गणपतिपूजनं कलशार्चनं च करिष्ये पंचवक्त्रं त्रिनेत्रं च जटाखंडेंदुमंडितं व्यालयज्ञोपवीतं च भक्तानां वरदं शिवं
आगच्छ भगवन् शंभो सर्वालंकारभूषित यावद्व्रतं समाप्येत तावत्त्वं सन्निधो भव आवाहनं सिंहासनं स्वर्णपीठं नानार
त्नोपशोभितं अनेकशक्तिसंयुक्तमासनं प्रतिगृह्यतां आसनं त्रिपुरांतक देवेश सृष्टिसंहारकारक पाद्यं गृहाण देवे
श मया दत्तं हि भक्तितः पाद्यं चंदनाक्षतसंयुक्तं नानापुष्पसमन्वितं गृहाणार्घ्यं मया दत्तमीश्वर प्रतिगृह्यतां अर्घ्यं
तोयमेतत्सुखस्पर्शं कर्पूरेण समन्वितं शंभो शंकर सर्वेश गृहाणाचमनीयकं आचमनं पयोदधिघृतं चैव मधुशर्क
रयायुतं पंचामृतेन स्नपनं करिष्ये भक्तवत्सल पंचामृतस्नानं मयानीतानि तोयानि गंगादीनां च हेमजैः स्नानं तैः
कुरु देवेश मम शांतिर्विधीयतां स्नानं सेनावरयुगं देव सर्वकामार्थसिद्धये अंबिकाकांत देवेश मया दत्तं प्रगृह्यतां
वस्त्रं कुंकुमाक्तं सरश्रेष्ठं सूत्रविनिर्मितं उपवीतं मया देव भक्त्या दत्तं प्रगृह्यतां उपवीतं काश्मीरजेन संयुक्तं
कर्पूरागुरुमिश्रितं कस्तूरिकासमायुक्तं चंदनं प्रतिगृह्यतां चंदनं प्रक्षालिताश्च धौताश्च तंदुलाश्च शिवप्रियाः
मया निवेदिता भक्त्या गृहाण जगदीश्वर अक्षताः कमलैर्मालतीपुष्पैश्चंपकैर्जातिसंभवैः बिल्वपत्रैर्महादेव कारि
ष्येत्व पूजनं पुष्पाणि दशांगो गुग्गुलूद्भूतः सुगंधिश्च मनोहरः आघ्रेयतामयं धूपो देवदेव दयानिधे धूपं का
र्पासवर्तिभिर्युक्तं घृताक्तं तिमिरापहं भक्त्या समाहृतं दीपं मया दत्तं प्रगृह्यतां दीपं नैवेद्यं गृह्यतां देव भक्तिं मे ह्य
चलां कुरु ईप्सितं च वरं देहि परत्र च परां गतिं नैवेद्यं नैवेद्यमध्ये पानीयं पंचवक्त्रध्यानानि तानि पठनीयानि उत्तरा
पोशानं हस्तप्रक्षालनं पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतं कर्पूरैलासमायुक्तं तांबूलं प्रतिगृह्यतां तांबूलं इदं
फलं मया देव· फलं· वक्ष्यमाणषोडशनामभिः पूजयेत् शंकराय त्रिनेत्राय कालरूपाय शंभवे महादेवाय रुद्राय प
वीय च मृडाय च ईश्वराय शिवायेति भूतेशाय कपर्दिने मृत्युंजयाय चोग्राय शितिकंठाय शूलिने दूर्वा· तेजोमयं सम
स्तीकं देवानामपि दुर्लभं हिरण्यं पार्वतीनाथ मया दत्तं प्रगृह्यतां दक्षिणा· प्रसीद देवदेवेश चराचर जगद्गुरो वृष
ध्वज महादेव त्रिनेत्राय नमो नमः नीराजनं यानि कानि च पापानि प्रदक्षिणा· इमानि बिल्वपत्राणि पुष्पाणि वि
विधानि च मया दत्तानि विश्वेश गृहाण वरदो भव पुष्पांजलिः नमोऽस्त्वनंताय सहस्रमूर्तये इति नमस्कारः भवाय भ
वनाशाय महादेवाय धीमते रुद्राय नीलकंठाय शर्वाय च नमो नमः ईशानाय नमस्तुभ्यं पशूनां पतये नमः गुणत्रया
त्मने तुभ्यं गुणातीताय ते नमः नमः प्रसीद देवेश सर्वकामांश्च देहि मे त्वमेव शरणं नाथ त्वमस्व मयि शंकर प्रार्थना·
वायनं· उपायनमिदं तुभ्यं व्रतसंपूर्तिहेतवे ब्राह्मणं द्विजवर्याय सहिरण्यं ददाम्यहं वायनं अस्य व्रतस्य सिध्यर्थं द्वि
रण्यं पापनाशनं ददामि तुभ्यं विप्रेंद्र प्रणतोऽस्मि प्रगृह्यतां दक्षिणा महात्मना त्वं केलासे हृष्टा महोग्रगौर्ये ते आ

कृतस्तन्मम सर्वं प्रसादस्त्सुमुखोभव विसर्जनं इति पूजाविधिः अथकथा यशोदोवाच कृष्णत्वंसर्वदेवानांस्थितिसं
हारकारकः अवैधव्यकरंस्त्रीणां यथार्थंवदतद्व्रतं श्रीकृष्णउवाच यशोदेसापृष्टोहंसौभाग्यप्राप्तयेस्त्रियः व्रतिश्री
नामविख्यातंपौर्णमास्यांव्रतंभवेत् तद्व्रतस्यप्रभावेनस्त्रीणांसौभाग्यदंभवेत् अवैधव्यकरंनामशिवप्रीतिकरंमहत्
यशोदोवाच केनचीर्णंव्रतमिदंमर्त्यलोकेकदावद विधानंकीदृशंदेवयेनशंभुःप्रसीदति श्रीकृष्णउवाच कांतिका-
नामनगरीप्रसिद्धाभुविमंडले अनेकरत्नसंपूर्णाचंद्रहासेनपालिता तत्रैवासीद्द्विजःकश्चिद्धनेश्वरेतिनामतः तस्य
भार्याशुभाचारानाम्नारूपवतीसती अनपत्यौमहाभागावुभौतौदुःखितौसदा तन्नगर्यांद्विजःकश्चिद्योगारूढोद्विजो
जटी भिक्षांचकारसर्वेषांस्वगृहंचाप्यवर्जयत् तद्गृहेनैवभिक्षांसरूपवत्यासमर्पितां ययौतदाकदाचित्सभिक्षांप्रक्षा
लयत्पुनः धनेश्वरेणतद्दृष्टंयोगिनायत्कृतंशुभे भिक्षांगृह्णासिसर्वेषांगृहस्थानांद्विजोत्तम कदापिमद्गृहेविप्रना
यासिवदकारणं योगयुवाच अपुत्रस्यगृहस्थस्ययदन्नमुपभुज्यते पतितान्नसमंतत्तुनभोक्तव्यंकदाचन धनेश्वरेण
कृतैतदात्मानंगर्हयन्बहु धनधान्यसमृद्धिश्चपुत्रहीनस्त्वहंप्रभो इत्युक्तोसौजटीशंभुराराधयचंडिकां तस्यास्तद्वच
नंश्रुत्वागेहेभार्यांनिवेद्यच तपसेनिर्जगामासौचंड्याराधनमाचरत् उपवासैःषोडशभिःस्वप्नेचैवाहचंडिका भोधनेश्व
रगच्छत्वंतवपुत्रोभविष्यति स्वसामर्थ्यवशाद्देयादीपावेपिहिसंभवाः एकैकवृद्ध्यादातव्याःषोडशद्वयपूर्णिमाः इदंव्रतंस्व·
पत्न्यैत्वकथयस्वयथास्थितं आम्ररोहाशुचाम्रत्वंफलमादायसत्वरं स्वगृहंगच्छभार्यायैदेहिगर्भोभविष्यति ततःप्रभात
समयेसहकारमपश्यत आरोढुंनैवशक्तःसचिंताव्याकुलमानसः स्तुतिंचक्रेगणेशस्यकृपांकुरुदयानिधे मनोर
थोममैवास्तुत्वत्प्रसादाद्दयानिधे इत्युक्त्वाचततःशीघ्रंफलमादायवेगतः त्रिवारमाहतिंकृत्वाफलमेकंददर्शसः वरा
लब्धंतदेवासौज्ञात्वातस्मादर्थनिश्चयः आगत्यकथितंतच्चभार्यायैदत्तवान्फलं यदातदारूपवत्याभक्षितंगर्भमादधे त
दादेव्याःप्रसादेनरूपौदार्यगुणान्वितः तस्यास्तदाभवत्पुत्रोदेविदासेतिनामतः व्रतबंधंततश्चक्रेविवाहंनकरोतिसः
मातापित्रोर्हृतःपुत्रस्नेहःसर्वचेष्टितं ततस्तदैवयोगेनकाश्यांनेयोमयाशिशुः इतिबुद्धिस्तदाजातापितुस्तस्यमहा
त्मनः तंप्रेषयत्सहायेनमातुलेनसहैवच कियंतिसमतीतानिदिनानिपथिगच्छतोः गच्छन्काशीपुरींप्राप्तोभागि
नेयेनसंयुतः कस्यचित्तत्रविप्रस्यमंडलेशमवाप्निशि तस्मिन्दिनेगृहस्वामीकन्यामुद्वाहयन्कृती तैलादिरोपणंचक्रे·
कृत्वावरनिवेशनं लग्नस्यसमयेप्राप्तेधनुर्वातग्रस्तोनरः धनुर्वातात्प्रवातव्याधिमानित्यर्थः वरपित्रादिभिस्तैर्विवा
र्यवपुनःपुनः असौकार्पटिकोबालःसुंदरोयंसरोयथा सार्द्धंतेनैवलग्नंवैकरिष्यामःक्रमेणतु इतिनिर्धार्यमनसाप्रार्थ
यामासमातुलं घटिकाद्वयपर्यंतंदेहित्वंभगिनीसुतं मातुलउवाच मधुपर्कंतथाकन्यादानेयत्संप्रदीयते तदस्माकं
यदिभवेन्मह्यंसौभवतांवरः तथाभवत्तनेनोक्तेविधिर्वैवाहिकोभवत् पाणिंचग्राहयामासवरेणचयथाविधि वधा
सार्द्धंतथाभोक्तुंसचनोत्सहतेशिशुः उत्तिष्ठामीतिसंचिंत्यकस्यभार्याभवेदियं ततस्त्वेकांतसमयेनिःश्वासान्मुमुचेबहू
न् साब्रवीत्कथमेतस्माद्यावत्त्वमस्तिता त्वमेवपतिरस्माकंदैवाग्निद्विजसन्निधौ सोब्रवीन्माकुरुखेदंममायुःस्वल्पमे
वच तथातेपिगतिर्भूयात्सेयंमत्यंभवेदिति उत्तिष्ठभोनमोनाथत्वयितोसिनसंशयः प्रीत्याप्रीतिंतयासार्द्धंभुक्तवा
न्सद्विजस्तथा अंगुलीयंददौतस्याःस्पष्टरत्नगतंनवं अंशुकंचददौतस्याःस्थानत्रयविभूषितं नवरत्नमयींमुद्रांगृही
त्वाप्यंशुकंचसा इतिसंकेतकंकृत्वामद्वचःकुरुमेप्रिये ममसंजीवनार्थायकुरुजात्यादिवाटिकां मनोरमाःपुष्पजा
तिसुगंधिनवमल्लिकाः सिंचसिंचप्रतिदिनंक्रीडांकुरुयथासुखं यस्मिन्दिनेतुमत्प्राणवियोगःसमजायते तदास
पुष्पवल्लीनांप्राणत्यागोभविष्यति पुनःसंजीविताश्चेत्तदाहंजीवितोदृढं ततोब्राह्ममुहूर्तेतुनिर्जगामवरःपथि
अथप्रभातसमयेवाद्यनादोबभूवह आकारिताचसाकन्याकृतेनायंपतिर्मम यद्विवाहेपतिस्तातत्वयादेवमयार्पितं
मधुपर्कंतथाकन्यादानेयद्भूषणादिकं कथयिष्यतिचेद्वृत्तंसमेनान्यविभाषिते इतिकन्यावचःश्रुत्वाउवाचसवरः।
स्तदा नैवजानामितद्वृत्तंक्रीडितोनिर्जगामह कृष्णउवाच ततस्तुबालकःकाशींप्राप्तोध्ययनेरतः दिनानिकतिचि
ज्जग्मुःकालस्यवशमागतः ततःकृष्णोमहानागोरात्रौभक्षितुमागतः पतितःशयनात्तस्यदीपज्वालाभिराहतः नैव।
शक्तस्तमंसंवैवतत्रराजप्रभावतः तन्मातावतिशीनामपूर्णिमायांव्रतंकृते ततोमध्याह्नसमयेकालएवागमत्स्वयम्

ततस्तु कालसंविद्धस्तयोदकनियोजितः शंकरोप्यगमत्तत्र भवान्या सह एव च भवानी प्रार्थयामास दृष्ट्वावस्थां तत
स्पतो अस्य मात्रा कृतं पूर्वं वतिशीव्रतमुत्तमं तस्य प्रभावतः सोयं बालोयं जीवितः प्रभो तथैव कृतवांस्तत्र भवानीप्रेम
वत्सलः तद्व्रतस्य प्रभावेन मृत्युनापि निराकृतः तां पुष्पवाटिकां पश्यत् पत्रपुष्पविवर्जितां अतिदुःखान्विता शोचत्य
तिस्नेहेन कातरा पुनः संजीवितं दृष्ट्वा पितरं कन्यकाब्रवीत् अन्नसत्रं कुरुष्व त्वं जामातस्तु गवेषणे यत्यर्थं कुरु भोः ता
दत्काशीतो निरगात्तसः पुनस्तत्रैव संप्राप्तो यत्रोद्वाहोभवत्पुरा ज्ञात्वा च परमं प्रीत्या देवदत्तो नयद्गृहं ततो जनपदाः सर्वे
इति ब्रुवुः परस्परं प्रीत्याहृष्टास्ततः सर्वे साधुसाधुसमन्विते उत्साहो यामवत्तत्र निर्जगामाथ तत्पुरात् स्वपुरेण तथा
वधामातुलेन समन्वितं सपितुः प्रेषयामास भवत्पुत्रः समागतः तावूचतुः कुतोस्माकं दुर्भगानां तु पुत्रकः कथि
तोन्यैरपि जनैस्ततः संहृष्टमानसः सुहृद्भिर्बान्धवैः सर्वैरानयामास बालकं ततो महोत्सवं कृत्वा दत्वा च वस्त्रदक्षिणां
एवं स पुत्रवान् जातो वतिशीव्रतसेवया याः कुर्वंति व्रतमिदं विधवा न भवंति ताः जन्मजन्मनि सौभाग्यं प्राप्स्यंति च व
चो मम एतत्ते कथितं सर्वं पुत्रपौत्रविवर्द्धनं यं यं चिंतयते कामं तं तं प्राप्नोति निश्चितं यशोदोवाच उद्यापनविधिं ब्रूहि
पूर्णिमायाः सुरेश्वर भक्तितः श्रोतुमिच्छामि व्रतसंपूर्णहेतवे कृष्ण उवाच पौर्णिमा मार्गशीर्षस्य माघवैशाखयो
स्तथा व्रतं प्रारंभयेत्तस्यां पौषभाद्रं तु वर्जयेत् उमया सहितो देवः पूजनीयो वृषध्वजः उपचारैः षोडशभी राजभोगवि
विधानतः एकैकं दीपकं कृत्वा मासि मासि च दापयेत् एवं सार्द्धद्वयं वर्षं द्विमासावधि वाचरेत् ज्येष्ठस्य पूर्णिमायां
च कुर्यादुद्यापनं ततः अथवाश्वमासस्य पूर्णिमायां समाचरेत् चतुर्दश्यामुपवसेद्रात्रौ पूजनमाचरेत् अष्टद
लपद्ममाणेन मंडपं कारयेत्ततः तन्मध्ये स्थापयेत्कुंभं सव्रणं मृन्मयं नवं तस्योपरि न्यसेत्पात्रं वैणवं वस्त्रवेष्टितं
माषमात्रसुवर्णेन प्रतिमां कारयेत्सुधीः तदर्धार्धेन वा कुर्याद्वित्तशाठ्यविवर्जितः कृत्वा तूपं प्रयत्नेन पार्वत्याश्च
हरस्य च तत्पात्रे प्रतिमे स्थाप्य वृषभेण समन्विते पूर्वोक्तेन विधानेन सुपुष्पैश्चैव पूजयेत् धूपैर्दीपैश्च नैवेद्यैः फ
लैश्च विविधैः शुभैः एवं पूजां प्रकर्तव्या रात्रौ जागरणं चरेत् गीतनृत्यादिसंयुक्तं कथापुस्तकसंयुतं ततः प्रभातस
मये कृत्वा दानादिकाः क्रियाः एवं वर्द्धयेद्देवं पश्चाद्धोमं प्रकल्पयेत् स्वगृह्योक्तविधानेन कृत्वाग्निस्थापनं बुधः प्रा
रभेच्च ततो होमं पंचाक्षरमनुस्मरन् तिलैर्यवैस्तथाज्येन पृथगष्टोत्तरं शतं नमः शिवाय मंत्रेण उमयाः इति नामतः
एवं समाप्य होमं तु आचार्यादीन्प्रपूजयेत् द्वात्रिंशद्द्वैर्गन्धैर्युक्तं वंशपात्रं मनोरमं द्वात्रिंशच्च महादीपैर्द्वात्रिंशच्च महा
फलैः मातुलिंगं नारिकेलं जंबीरं खर्जूरीफलं अक्षोटं दाडिमं निंबं नारंगादिशुभानि च कर्कट्यादिशुभैः सर्वैर्ऋतु
कालोद्भवैः शुभैः द्वात्रिंशद्भिः फलैर्युक्तं सदीपं वस्त्रवेष्टितं व्रीहीणामुपरि स्थाप्य आचार्याय निवेदयेत् वायनकं तव
तुष्ट्यर्थं ददामि गिरिजापते तत्र मंत्रः महेशः प्रतिगृह्णाति महेशो वै ददाति च महेशस्तारको भाभ्यां महेशाय नमो
नमः द्वात्रिंशद्ब्राह्मणांश्चैव द्वात्रिंशद्योषितस्तथा अन्येभ्यो ब्राह्मणेभ्यश्च भोजनं षड्रसैः सह प्रमाणवत्सयुतां धेनुमा
चार्याय निवेदयेत् पश्चात्पूर्णाहुतिं कृत्वा होमशेषं समापयेत् पश्चाद्भुंजीत येच्छेषं यद्देवब्राह्मणार्पितात् इत्येवं पू
र्णिमायास्तु उद्यापनविधिः स्मृतः इत्येतत्कथितं सर्वं व्रतस्योद्यापनं मया याः कुर्वंति व्रतमिदं विधवा न भवंति ताः इह
भुक्त्वा तु विपुलान् कामान्सर्वान्मनोगतान् स्वर्गमंते गमिष्यंति कुलकोटिशतैरपि ॥

इति भविष्यपुराणोक्तं स यशोदासंवादे वतिशीपूर्णिमाव्रतकथा संपूर्णा ॥ स्वस्ति श्रीरणवीर
सिंहधरणीपालो वदान्याग्रणीर्नानाशास्त्रविचारसाररसवित्सद्वृन्दसंरक्षकः धर्माधर्मविभागकृद्रघुपतेः पादांबु
जार्चारतो जीयात्पुत्रकलत्रमित्रसहितः संपालयन् क्ष्मां चिरं १ रणवीरसिंहभूपेन कारिते कृत्यसागरे अभूत्तु मार्ग
कृत्यानां रम्यो वरत्नसंग्रहः १ ॥

इति श्रीमत्सूर्यवंशावतंसरघुकुलतिलकश्रीरणवीरसिंहमहाराजकारिते कृत्यरत्नाकरे मार्गमासकृत्यरत्नसमुच्चयः ॥

ॐस्वस्तिश्रीगणेशायनमः ॥ अथपौषमासकृत्यनिर्णयः धनुःसंक्रमेपराः
षोडशघटिकाः पुण्यकालः अत्रान्योविचारः संक्रान्तिनिर्णयेद्रष्टव्यः अथपौषव्रतानि अत्रैकभक्त
मुक्तं महाभारते पौषमासेतुकौन्तेयएकभक्तेनसमाचरेत् सुभगोदर्शनीयश्चयशोभागीचजायते आ
सादभूषणादीनिगृहप्रावरणानिच नारायणस्यतत्सर्वंपौषेदेयानियत्नतइति वामनपुराणे वि
ष्णुधर्मोत्तरे पुष्यमासेतदालभ्यएकभक्तेनयःक्षिपेत् सुभूषणपरःशूरोनरोगीजायतेनरः अथ
रूपशीलावाप्तिव्रतम् विष्णुधर्मोत्तरे वज्रउवाच भगवन्कर्मणाकेनशीलवान्रूपवान्भवेत् मार्कण्डेय
उवाच आग्रहायण्यतीतायांसंप्राप्तेप्रथमेदिने पूर्ववत्पूजयेद्देवंघृतेनजुहुयाद्विभुः घृतंद्विजेभ्यो
दद्याच्चघृतमेवनिवेदयेत् त्रिरात्रोपोषितःपौष्यांघृतमात्रेणवैद्विजः पूजयच्चसुवर्णेन यथाशक्ति
नराधिप कृत्वाव्रतंमासमिदंपौषोक्तमासाद्यनाकंसुचिरंमनुष्यः मनुष्यमासाद्यचरूपशीलवान्स्यान्
प्राप्नोतिपुष्टिंचिरजीवितत्वम् इतिविष्णुधर्मोत्तरोक्तं पौषकृष्णप्रतिपदमारभ्यपौषपूर्णिमान्तंरूपशीलावा
प्तिव्रतम् अत्रदानविशेषोविष्णुधर्मोत्तरे पौषेकनकदानेनपरांपुष्टिंतथैवच पुष्पाणांवासितेदाने
लक्ष्मीप्राप्तिकरंस्मृतं फलानांचतथादानंकृष्णपक्षेमहाफलम्इति देवीपुराणोक्तं नक्तव्रतम् पौ
षमासेतुसंप्राप्तेयःकुर्यान्नक्तभोजनं जितेन्द्रियःसत्यवादीकामक्रोधविवर्जितइति पौषपक्षे
न्यतीर्थविशेषो देवीपुराणे पौषेतुनर्मदापुण्यास्नानदानादिकर्मणीति पौषकृष्णद्वितीयायां
बृहस्पतिवारयोगेद्वितीयासामान्योक्तं विधिपूजनमुक्तं ब्रह्मपुराणे बृहस्पतौद्वितीयायांविधिवद्विधिपूज
नं कृत्वानक्तंसमश्नीयाल्लभतेभूमिमुत्तमां विधिर्ब्रह्मातस्यपूजनेगायत्र्यापौराणमन्त्रेणवेति तृती
यायांतिथिसामान्योक्तंगौरीपूजाव्रतम् देवीपुराणे तृतीयायांयजेद्देवींशंकरेणसमन्वितां कुंकुमागुरु
कर्पूरमणिवस्त्रसुगन्धकैः स्रग्गन्धधूपदीपैश्चेत्यादि सौवर्णीतुउमाकार्याराजन्शंकरस्तथा चतुर्भु
जस्तुदेवेशोद्विभुजातुउमासतीति चतुर्थ्यांसंकष्टनाशनव्रतत्वेनमासचतुर्थीव्रतम् स्कान्दे चतुर्थ्यां
देवदेवोसौपूजनीयःप्रयत्नतः कृष्णपक्षेविशेषेणनक्तंकुर्याच्चनित्यमिति चतुर्थीगणपस्यवेति
तिथिसामान्योक्तेष्वपंचम्यांतिथिपत्वेननागपूजोक्ता नागानांस्वरूपंमात्स्ये नागाश्चैवतुकर्तव्याःख
ड्गखेटकधारिणः अथःसर्वाकृतिर्येषांनाभेरूर्ध्वंतुमानुषी फणाश्चमूर्ध्निकर्तव्याद्विजिह्वाबाहवो
समाः असमाविषमाः अत्रषष्ठ्यांस्कन्दपूजाव्रतम् षष्ठ्यांपूजागरणंवेति तिथिसामान्योक्तेः सप्तम्यां
भास्करंचेत्तुभयसप्तमीव्रतम् पौषकृष्णाष्टम्यामष्टकाश्राद्धं नारदीये अथपौषासिताष्टम्यामष्ट
काश्राद्धमिष्यते पितृणांतृप्तिदंवर्षंकुलसंततिवर्द्धनमिति ब्रह्मपुराणेविशेषः पौषकृष्णाष्टकायां
तुपाकैःश्राद्धंसुशोभनं वायुपुराणेपि पित्र्यानंदायमूलेस्तुरष्टकास्तिस्रएवहि कृष्णपक्षेवरिष्ठ
रिपूर्वावैन्द्रीविभावरी प्राजापत्याद्वितीयास्यात्तृतीयावैश्वदेविकी आद्यापूपैःसदाकार्यामांसैरन्यायथा
तथाशाकैःकार्यातृतीयातुदेयद्रव्यश्रुतोविधिः अन्वष्टकापितृणांतुनित्यमेवविधीयते पद्मपुराणेच
तस्मामेवशाकविधानात् तदनयोर्विरोधेव्यवस्थाशाखाभेदेन हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणाम
न्वष्टकाइत्याश्वलायनात् तत्रपूर्वेद्युरष्टकाश्राद्धं उत्तरदिनेन्वष्टकं पूर्वेद्युःपितृभ्योदद्यादपरेद्यु
रन्वष्टकमित्याश्वलायनात् कौर्मेपि अमावास्याष्टकास्तिस्रःपौषमासादिषुत्रिष्विति अत्राष्टमी अपरा
ह्णव्यापिनीग्राह्यापूर्वेद्युःश्राद्धस्यान्वष्टकस्यदाष्टम्यन्तरोधेननिर्णयः पूर्वेद्युःपितृभ्योदद्यादपरेद्युरन्वष्ट
कमितिसूत्रात् अत्रश्राद्धाशक्तौनत्वेवं अकरणेप्रायश्चित्तं शुक्रकम्पविधाने पभिर्द्धुभिर्जपेन्मन्त्रंपात
वारेतुतद्दिने अन्वष्टक्यंयदाष्टम्यंशेषाणांतीयानिसर्वथेति अशक्तौत्वाश्वलायनः अथाप्यौभूतेऽष्टका प

श्नाख्याता पाके नवा अनुटुदेशपवसमाहरेदग्निनावाकस्तु पौषदेषामेष्टकेति भक्तो नष्टकः स्मादि
ति मार्गशीर्षादि शुक्लमासे तत्राष्टकान कार्य्या चतुर्णामिति यथाह्णादिसूक्तो नारायणाष्टुतौ तथाका
ठकस्तु सेपि महालयाष्टकाश्राद्धे पाकमीयपिण्डवेत् स्पष्टमासविशेषाख्ये विहितं वर्जयेन्मलेऽपि
विष्णुपुराणे अन्नेन वा यथाशक्तिकालेऽस्मिन्भक्तिनम्रधीः भोजयिष्यति विप्राग्र्यानित्यादि अत्र शाकेनै
नैव असमर्थोन्नदानस्य धान्यमानाय शक्तितः प्रदास्यति द्विजाग्रेभ्यः स्वल्पामपि च दक्षिणां अत्राप्य
सामर्थ्ययुतः करायावष्टिमितांस्तिलान् भक्तिनम्रः सद्विप्रेभ्यस्तु व्यसनाकं प्रदास्यति यतः कृतास्थितस्राप्य
गोग्रासं वापि गवाह्निकं अभावे सर्वथा यत्तस्माद्भक्तियुक्तः प्रदास्यतीति एतास्वश्राद्धाकरणे दोषाभिहि
तो वायुपुराणे यस्मिन्नेव न गच्छेयुरष्टकाभिरपूजिताः मोघं तस्य भवेल्लोकोऽलक्ष्मी चास्य विनश्यति दे
वाल्पदायिनो यान्ति तिर्यग्गच्छन्त्यदायिन इति अत्र श्राद्धकरणं विहितं वर्जयेन्मले अत्रैव रुक्मिण्यष्टमी
व्रतम् तत्र कृष्णं रुक्मिणीं प्रद्युम्नं च पूजयेदिति क्रमम् इति रुक्मिण्यष्टमीव्रतम् इति पौषकृष्णाष्ट
मीकृत्यम् अथ पौषस्योभयपक्षनवमीकृत्यम् देवीपुराणे पौषमासे तु संप्राप्ते यः कुर्य्यान्नक्तभो
जनं जितेन्द्रियः सत्यवादी कामक्रोधविवर्जितः पक्षयोर्नवमी यत्नाद्गव्यैः स्नाप्य घृतादिभिः कृत्वा ध्यानं
महापूजां चण्डिकायै प्रकल्पयेत् नैवेद्यं तण्डुलप्रस्थं दीयमानं नराधिप कुमारीर्भोजयेच्चाष्टौ विप्रान्भा
गवतांस्तथा कृत्वाथ मण्डले देवीं नाम्ना चार्य्येति पूजयेत् चतुर्भुजां स्थूलतरां कुन्दपुष्पैः सुपुष्कलैः
स्नानं कृत्वा तिलैर्विप्र सितानां प्राशनं तथा एवं संपूजयेदार्य्यां तस्य पुण्यफलं शृणु सूर्य्यकोटिप्रती
काशे विमानवरमास्थितः दोधूयमानश्चामरैः स्तूयमानः सुरासुरैः गच्छेद्दुर्गापुरं रम्यं यत्रास्ते चण्डिका
स्वयम् क्रीडते देवगन्धर्वैर्यावदाभूतसंप्लवम् त्रिःसप्तकुलजैः सार्द्धं भोगान्भुक्त्वा यथेप्सितान् पुन
रत्र भुवं वीरो राजा भवति भूतले यः पूजयेत्सदा पूज्यं भानुं सर्वार्थसिद्धिदं घृताभिषेकं यः कुर्य्यादहो
रात्रे च भास्करे कुम्भैर्नानाविधैर्दिव्यैः पौषमासे समाहितः नृत्यगीतोपहारेण शंखवादित्रनिःस्वनैः कु
र्य्याज्जागरणं दिव्यप्रदीपाद्यैः सुशोभनैः वसेत्सूर्य्यपुरे श्रीमान्सूर्य्यतुल्यपराक्रमः ग्रहणे विषुवे चैव
अयनेषु दिवसेषु च घृताभिषेकं यः कुर्य्यादहो रात्रे शिवस्य तु सूक्ष्मधारेण भाण्डेन पौषमासे द्विजोत्तम
गीतनृत्योपहारेण शंखवादित्रनिःस्वनैः कुर्य्याज्जागरणं वापि प्रदीपाद्युपशोभितम् समस्तपाप
निर्मुक्तः समहाकुलवर्द्धनः युक्तः शिवपुरे श्रीमान्मोदते शिववत्सुखी इति पौषमासस्योभयनवम्या
विशेषविधिः अथ दशम्यां दशम्यामन्तकस्येति सामान्यनिर्णये धर्मराजपूजनं कार्य्यम् अथ पौष
कृष्णैकादशी सफलाव्रतम् नारदीये पौषस्य कृष्णैकादश्यां सफलां समुपोष्य वै द्वादश्यामच्युतं
प्रार्च्य वरैरेवोपचारकैः संभोज्य विप्रान्मधुरैर्विसृजेल्लब्धदक्षिणान् एवं कृत्वा व्रतं विप्र सकलाया वि
धानतः भुक्त्वेह भोगानखिलानन्ते विष्णुपदं व्रजेत् अथास्याः कथोच्यते युधिष्ठिर उवाच पौषस्य कृ
ष्णपक्षस्यैकादशी का भवेत्प्रभो किंनामको विधिस्तस्याः को देवस्तत्र पूज्यते एतदाचक्ष्व मे स्वामिन्विस्तरेण
जनार्दन श्रीकृष्ण उवाच कथयिष्यामि राजेन्द्र भवतः स्नेहकारणात् न तथा तुष्टिर्वै मे राजन्क्रतुभिर्भूरि
दक्षिणैः यथा मां तुष्टिरायाति एकादश्या व्रतेन वै तस्मात्सर्वप्रयत्नेन कर्त्तव्यं हरिवासरं पौषस्य कृष्णैका
मसेन्नद्वादशी या भवेन्नृप तस्याश्चैवाति माहात्म्यं शृणुष्वैकाग्रमानसः आह्निकाश्चैव भो राजन्नेका
दश्यां भवन्ति हि तासामेव तु सर्वासां विकल्पं नैव कारयेत् एकादश्यास्तथाप्यस्याः शृणु राजन्कथान
के अतः परं प्रवक्ष्यामि पौषे या कृष्णद्वादशी लोकानां तु हितार्थाय कथयामि विधिं तथा पौषस्य कृ
ष्णपक्षे वै सफला नाम नामतः नारायणोऽस्या देवो वै पूजनीयः प्रयत्नतः पूर्वेण विधिना राजन्कर्तव्यैका
दशी जनैः नागानां च यथा शेषः पक्षिणां गरुडो यथा देवानां च यथा विष्णुर्द्विपदां ब्राह्मणो यथा यथाश्व

मेधो यज्ञानां तीर्थानां जाह्नवी यथा व्रतानां च तथा राजन्नेकादशी विशिष्यते तेन नाम्ना भरतश्रेष्ठ सम्यक्पूज्याश्च सर्वशः हरिवासरं संसक्ता वर्तन्ते ये जना भूप सफला नाम नामेति तस्याः शृणुष्व गदतः फलैर्मां पूजयेत्तत्र कालदेशोद्भवैः शुभैः नारिकेलफलैः शुद्धैस्तथा वै बीजपूरकैः जंबीरैर्दाडिमैश्चैव तथा पूगफलैरपि लवंगैर्विविधैश्चान्यैस्तथैवाम्रादिभिः फलैः पूजयेद्देवदेवेशं धूपदीपैर्यथाक्रमं फलैश्च दीपदानं च विशेषेण प्रकल्पयेत् रात्रौ जागरणं तत्र प्रकर्तव्यं प्रयत्नतः यावदुन्मीलयेन्नेत्रे तावज्जागर्ति यो निशि एकाग्रमानसो भूत्वा तस्य पुण्यफलं शृणु न तत्समो नास्ति वै यज्ञस्तीर्थं न तत्सदृशं न हि न तत्समं व्रतं किंचिदिह लोके नराधिप पंचवर्षसहस्राणि तपस्तप्त्वा यत्फलं तत्फलं समवाप्नोति सफलाया व्रतेन हि शृणु त्वं राजशार्दूल सफलायाः कथानकं चंपावतीति विख्याता पुरी माहिष्मतीति च माहिष्मतस्य राजर्षेश्चत्वारश्चाभवन्सुताः तेषां मध्ये तु यो ज्येष्ठः समहापातकैर्युतः परदाराभिगामी च वेश्यासंगरतः सदा पितृद्रव्यस्य पापिष्ठो नाशयंश्च दुरात्मवान् असद्वृत्तरतो नित्यं देवताद्विजनिंदकः वैष्णवानां च देवानां नित्यं निंदारतोऽभवत् ईदृग्विधं तदा दृष्ट्वा पुत्रं माहिष्मतो नृपः लुंपको नाम नाम्नेति कृतवानप्यमर्षितः राज्यान्निष्कासितस्तेन पित्रा चैवापि बंधुभिः तस्यैवं परिवारैस्त्यक्तो राज्ञो भयाद्भीतः लुंपकोऽपि तदा त्यक्तश्चिंतयामास व्याकुलः किं करोमि क्व गच्छामि त्यक्तः पित्रा च बंधुभिः इति चिंतापरो भूत्वा मतिं पापे चकार ह त्यक्तोऽहं बांधवैः पित्रा राज्यान्निष्कासितस्तथा मया गंतव्यमेवाद्य पुरोपगहने वने तस्माच्चेदं पुरं सर्वं लुंठयिष्याम्यहं पितुः इत्येवं स मतिं कृत्वा लुंपको दैवयोगतः निर्जगाम पुरात्तस्माद्गतोऽसौ गहने वने जीवघातकरो नित्यं स्तेयकर्मकलानिधिः सर्वं च नगरं तेन मुषितं पापकर्मणा स्तेयकृन्नगरे तत्र गृहीतः पुरपालकैः तानुवाच सुतोऽहं वै राज्ञो माहिष्मतस्य गृहीतोऽपि स तैर्मुक्तो राज्ञो माहिष्मतो भयात् आमिषाहारकृन्नित्यं फलाहाररतस्तथा आश्रमस्तस्य दुष्टस्य वामदेवस्य सन्निधौ अश्वत्थो विद्यते तत्र जीर्णः स बहुवार्षिकः स चासीत्सर्ववृक्षाणां राजा नारायणालयः तस्य मूले वसत्यत्र लुंपकः पापकृत्परः गते बहुतिथे काले पूर्वपुण्यप्रभावतः पौषस्य कृष्णपक्षे तु दशम्या दिवसे तथा फलानि भुक्त्वा हत्वाणां रात्रौ शीतेन पीडितः लुंपको नाम पापिष्ठो वस्त्रहीनश्च दुःखितः पीड्यमानस्तु शीतेन हरिवृक्षसमीपतः न निद्रां न सुखं तस्य मृतप्राय इवाभवत् ताडितो दंशकैः शीतैरेवं नीता निशाऽखिला प्रातः सूर्योदये जाते न लेभे चेतनां तदा लुंपको गतसत्त्वस्तु सफलायां दिने तिथौ रवौ मध्यगते चैव संज्ञां लेभे स लुंपकः इतस्ततो विलोक्याथ चोत्थितः कष्टतः स गतः स्खलत्पादः प्रचचालितः स यावत्संचरन्क्षुद्भिः वनमध्ये गतस्तत्र क्षुत्तृषार्दितोऽभवत् न शक्तिर्जीवघाते तस्य लुंपकस्य दुरात्मनः फलादि भूमिपतितान्याजहार स लुंपकः यावत्स आगतस्तत्र तावदस्तमगाद्रविः किं भविष्यति वा चेति विललापातिदुःखितः फलानि तानि सर्वाणि वृक्षमूले न्यवेदयत् प्रत्युवाच फलैरेभिः प्रीयतां भगवान्हरिः उपविष्टो लुंपकश्च न निद्रां लभते निशि रात्रौ जागरणं मेने भगवान्मधुसूदनः फलानां पूजनं मेने सफलायां तिथौ व्रतं इति कृतं लुंपकस्तु तदकस्मात्कृतोत्तमं तेन व्रतप्रभावेन प्राप्तं राज्यमकंटकं पुण्येन सफलायास्तु यथा प्राप्तं तथा शृणु रवेरुदयवेलायां दिव्यो वाजी समागमत् दिव्यवस्त्रपरीवारो लुंपकस्य समीपतः तस्थौ स तुरगो राजन्वागुवाचाशरीरिणी प्राप्तं हित्वा नृपसुत राज्यं निहतकंटकं वासुदेवप्रसादेन सफलायाः प्रसादतः पितुः समीपं गच्छ त्वं कुरु राज्यमकंटकं तथेत्युक्त्वा स तत्र दिव्यरूपधरोऽभवत् कृष्णे मतिश्च तस्यासीत्परमा वैष्णवी तथा दिव्याभरणभूषोऽसौ तातं नत्वा स्थितो गृहे वैष्णवाय तदादत्तं पित्रा राज्यमकंटकं कृत्वा राज्यं तु तत्रैव वर्षाणि सुबहून्यपि हरिवासरसंलीनो विष्णुभक्तिरतः सदा मनोज्ञाः कृष्णपुत्राश्च दाराः कृष्णप्रसादतः पश्चाद्राज्यमसौ त्यक्त्वा पुत्रे राज्यं समर्प

यत् वनं गतः संयतात्मा विष्णुभक्तिपरायणः साययित्वा तथात्मानं विष्णुलोकं जगाम ह। गतः कृष्णस्य सान्नि-
ध्ये यत्र गत्वा न शोचते एवं वै ये प्रकुर्वन्ति सफलैकादशीव्रतं इह लोके यशः प्राप्य अन्ते मोक्षमवाप्नुयुः य-
त्पाठ्येमानवा लोके सफलायाउ पौषकाः तेषां च जन्म सफलमेवमेव न संशयः पठनाच्छ्रवणाद्वापि क-
रणाच्च विशांपते राजसूयफलं यस्मात्सदा प्राप्नोति मानवः इति पद्मपुराणे पौषकृष्णसफलैकादशी
व्रतम्॥ अथ पौषकृष्णद्वादश्यां संप्राप्तिद्वादशीव्रतम्। श्रीकृष्ण उवाच कृष्णपक्षे तु पौषस्य संप्रा-
प्ता द्वादशी नृप यामुपोष्य समाप्नोति सर्वानेव मनोरथान्। पाषंडादिभिरालापमकुर्वन्विष्णुतत्परः
पूजयेत्प्रयतो देवमेकाग्रमतिरच्युतं पौषादिपारणामासैः षड्भिर्ज्येष्ठांतकं मुने तं प्रथमे पुंडरीकाक्षं तन्
मकृष्णस्यगीयते द्वितीये माधवाख्यं तु विश्वरूपं तु फाल्गुने पुरुषोत्तमाख्यं च ततः पंचमे अच्युतेति च
षष्ठे जयेति देवस्य पूजनाम प्रकीर्तितं एवं पुष्पट्सु मासेषु स्नानप्राशनयोस्तिलाः आषाढादिषु मा-
सेषु पंचगव्यं प्रकीर्तितं स्नाने च प्राशने चैव पंचगव्यं तदिष्यते पूजयेत्पुंडरीकाक्षं प्रनक्तैरेव नामभिः
प्रतिमासं च देवस्य कृत्वा पूजां यथाविधि विप्राय दक्षिणां दत्वा श्रद्दधानः स्वशक्तितः पारणे चैव दे-
वस्य प्रणम्य भक्तिपूर्वकं एवं संवत्सरं स्नातेयदभिप्रेतमात्मनः धेनुं वस्त्रं हिरण्यं च धान्यं भाजनमास-
नं पात्रं वा ब्राह्मणाय दद्यात्केशवः प्रीयतामिति एतामुपोष्य विधिवद्विष्णुप्रीणनतत्परः सर्वा-
न्कामानवाप्नोति सर्वपापैः प्रमुच्यते यतः सर्वमवाप्नोति यद्यदिच्छति चेतसा ततो लोके तु संप्राप्ति
द्वादशीकीर्तितेति च कृताभिलषिता दृष्टा प्रारब्धा यमतत्परैः इत्यखिलान्कामान्संस्मृतापि दि-
नेदिने संप्राप्तिकामाः प्रवसंति विचार्य सम्यक् ये मानवा मनुजपुंगव विष्णुभक्ताः तेषां समीहितफला-
नि भवंति सम्यक् वासः सुरेशभवने भगवत्प्रसादात् इति भविष्योत्तरे पौषकृष्णसंप्राप्तिद्वादशीव्र-
तं॥ अस्यामेव पौषद्वादश्यां रूपद्वादशीव्रतम्। नारदीये पौषस्य कृष्णद्वादश्यां स्वरूपव्रतमुत्तमम्
दशम्यां विधिवत्स्नात्वा नागरस्त्री यादृङ्मयं व्रती श्वेताया एकवर्णायाश्च तदित्यागतं द्विजे अष्टोत्तरश-
तेनैव पिंडिकाः कल्पनारद शोधयेद्दानपेटत्वा पात्रे तात्पर्यममये एकादश्यां सोपवासः सम-
भ्यर्च्य विधानतः सौवर्णीं प्रतिमां विष्णोर्निशायां जागरं चरेत् सुमंगलैर्गीतवाद्यैस्तोत्रपाठैर्जपादिभिः
ततः प्रभाते द्वादश्यां तिलपात्रोपरि स्थितां अभ्यर्च्य देवदेवस्य पूजयेदुपचारकैः ततोऽग्निं च स्था-
प्य काष्ठसमिधाग्न्यादिभिः होमयेत्तु तिलाज्यं च द्वादशाक्षरविद्यया वैष्णवाय वैष्णवाच शतमष्टोत्त-
रं तथा भोजयेत्पायसैर्विप्रान्दत्वा नत्वा विसर्जयेत् नरो वाथ दिवा नारी व्रतं कृत्वैवमादरात् लभते रू-
पसौभाग्यं नात्र कार्या विचारणा इति अथ धर्मराजाचारप्राप्तेस्वरूपद्वादशीव्रतम्। श्रीईश्वर उवाच पौषे-
मासेतु संप्राप्ते शुक्लपक्षे तु यदा भवेत् तस्यां रात्रौ संयतात्मा ध्यात्वा विष्णुं सनातनं स्वेतागोरेकवर्णा-
यान् गृह्यासनगोमयं अंतरिक्षात्तु पतितं शुचिर्भैनेष्यवस्थितः तस्य कृत्वाकृतीनां तु शतमष्टोत्त-
रं तिलैः प्रतीक्ष्य द्वादशीं कृष्णामुपवासपरायणः स्नात्वा नद्यां तडागे वा विष्णुमेवाभिचिंतयेत् सौवर्णं
तु हरिं कृत्वा रौप्यं वा भक्तिशक्तितः तिलपात्रोपरिस्थाप्य ततो विष्णुं प्रपूजयेत् इति संपूज्य विहितैः पुष्पै-
र्धूपैस्तु दीपकैः नैवेद्यैस्तिलमिश्रैस्तु फलानि विविधानि च नमः परमशान्ताय विश्वरूपाय नमोऽस्तु ते सर्व-
कष्टविनाशाय रहस्यार्घ्य नमोऽस्तु ते इत्यर्घ्यमंत्रः एवं संपूज्य देवेशं होमं कुर्यात्समाहितः आवाह्य देवं
लक्ष्मीशं होमयेद्धोमयाहुतीः शतमष्टाधिकं चैव तिलान्व्याहृतिसंयुतान् सहस्रशीर्षा मंत्रेण ह दि-
ध्यात्वा जनार्दनं लक्ष्मीयुतं चमेघाभं शंखचक्रगदाधरं होमांते कारयेच्छ्राद्धं वैष्णवं द्विजसत्तम द-
त्वा च भोजनं तेभ्यो दद्यात्तन्क्षमं च दक्षिणां धर्मश्रवणसंयुक्तं जागरं यामयुक्ततो निशां कृत्वा तु वैष्णवीं
नि दिनाद्यप्रतिपादयेत् मंत्रहीनं क्रियाहीनं विधिहीनं च यत्कृतं तत्सर्वं देवदेवेश सर्वमेव समापय

श्रीकृष्णेनाद्य दयया स्वप्रसादं मे विधीयताम् देवक्युवाच शृणु सुदेते मम गोप्यमपि वचनं कुरु सुखं मा वदी-
तं सुभ्रु सुरूपाद्वादशीव्रतं मे प्रयच्छसि चेत्तस्यै दर्शनं ते भविष्यति रुक्मिण्युवाच कोऽयं नियमस्तथैवं व्रतं
चापि सुदुष्करं कथं तस्यै प्रयच्छामि फलं देवैः सुदुर्लभं देवक्युवाच यदि प्रदीयतां मह्यं तदहं सम्यग्वाच-
नः पञ्चमांशमथो षष्ठं षोडशांशमथापि वा रुक्मिण्युवाच सुरूपाद्वादशीपुण्यं तिलार्द्धं मयि नो सुदे-
किं पुनः षोडशांशं तु सपत्न्या उद्दिशेत सा एवमुक्ता जगाम माधवमन्दिरं स्वं सुभे तदा पुनः पप्रच्छ कृष्णं सा प्र-
णयात्तेन वै रुषा देवं पृच्छामि चैवोक्तं न त्वं सोऽयमिमं प्रभो कथं पश्यामि तां सां तनं बोधं कृष्णवल्लभाम्
श्रीकृष्ण उवाच अनेनात्र या पश्यसि सुभ्रु विरूपां तां सुमध्यमां विरूपवर्णां लीनां कुरूपां विकृताननां अहदृ-
ष्टेवि विकृतं तद्रूपमस्मान्न संशयः ततः सा देवकी तां तु सत्यभामां ब्रवीद्वचः सपत्नीं गच्छ सुश्रोणि संदर्शं पद-
र्शय त्वं च यथा ते स्यात्प्रसन्ना स्यात्तथा कुरु मम भाषे एवं त्वेवं सत्यभामा समागता रुक्मिणीमन्दिरं प्राणप्र-
सुकुमारी रोगी महत्तोषी तत्प्रणयेन सा नादर्शयन्मुखं तस्मिन् गृहे छादयित्वा विकृताननं तदा प्रार्थयामास सतां सुभ्रू सुरू-
पाद्वादशीव्रतं तिलाद्दीपाद्यं षष्ठांशं देहि मे सेवकास्म्यहं इत्युक्ता वचः प्रीः सा विस्मयान्न ददौ फलं न
दापलायिता गच्छ हृदं दत्वा कपाटकं रुदती रोदनाद्देहे निगूढा च स्थिता भवत् समागता रुक्मिणी सात-
न्त्वालोकनेच्छया नोद्घाटयति सा द्वारं तिरस्कारेणाशोचति उवाच रुक्मिणी सा तु सत्यभामा शुचिस्मिते
एकाम मया कृतं देवि देहि भीष्मकनन्दिनि अद्यैव तिलमेकं देहि त्वं दास्यं दर्शयाम्यहं सपत्नीत्वं न जानामि ता-
वाहं सेविकास्म्यहं व्रतानि लफलं देहि यद्यस्ति मयि सौहृदं रुक्मिण्युवाच कोऽयं मनिश्रमस्तेऽद्य सुरूपा-
द्वादशीप्रति तिलाङ्कं निश्चयं कामि उद्घाटय कपाटकं इत्युक्ता वारितेस्तात्ताद्दत्ता हे कान्तिलाङ्कं तस्या
मेव पदत्वा यां रूपेणास्याधिका भवत् तां दृष्ट्वा विस्मयपराय पप्रच्छ दयिता हरेः रुक्मिण्युवाच कथ्यतां मम
कारिणं किमर्थमिह त्वागता सत्यभामोवाच न वाहं भगिनी मे दृक्षे नो छादयामि के सत्यभामेति मे
नाम न मामिच्छसि त्वं इति श्रुत्वा तद्वचनं विस्मयोत्फुल्ललोचना नोवाच किञ्चिद्वचनं चिन्तामाप महद्
ने मा अपश्यत् स्वमानं च सुरूपा हि स्मिता भवत् एतस्मिन्नेव काले तु वायुर्वाच शरीरिणी व्रतदानप्रभा-
वेन सत्यव्रतपरायणा सुरूपाद्वादशीपुण्या देवानामपि दुर्लभा पार्वत्युवाच कर्मणा केन कर्तव्या किमा-
चारं वद स्व मे नियमं होमदानं च प्रसादं मे विधीयताम् श्रीईश्वर उवाच पौषमासे तु संप्राप्ते पुष्यऋक्षं य-
दा भवेत् तस्यां रात्रौ संयतात्मा ध्यात्वा विष्णुं सनातनं स्वेता गोमेक्ष पर्णाया तस्या ग्राह्यं तु गोमयं अन्तरि-
क्षात्पतितं शुचि भूमौ न मवस्थितं तस्य कृत्वा कृती नात्र शतमष्टोत्तरं तिलैः प्रातर्द्वादशीं कृत्वा मु-
पवासपरायणः स्नात्वा नद्यां तु गङ्गायां वा विष्णुमेवाथ चिन्तयेत् इति संपूज्य विधिवत् पुष्पधूपैः सदीप-
कैः नैवेद्यैस्तिलमिश्रैस्तु फलानि विविधानि च नमः परमशान्ताय विरूपाय तु नमोऽस्तु ते सर्वसंकष्टनाशाय
महानिर्धीनमोऽस्तु ते एवं संपूज्य देवेशं कुर्याद्धोमं समाहितः आवाह्य देवं लक्ष्मीशं होमयेद्धोमयाहुतीः
शतमष्टाधिकं चैव तिलानां हि तिसंयुतान् सहस्रशीर्षा मन्त्रेण हृदि ध्यात्वा जनार्दनं लक्ष्मीयुक्तं सुगन्ध
चक्रं नरकाङ्गं गदाधरं होमान्ते कारयेच्छ्राद्धं देवस्तं वं द्विजसत्तमैः दत्वा च भोजनं तेभ्यो नत्वा दत्वा च दक्षि-
णां धर्मश्रवणसंयुक्तं जागरयित्वा तु तां निशां तत्सर्वं वै सुवर्णां मूर्तिं विप्राय प्रतिपादयेत् मन्त्रहीनं भक्तिहीनं
सर्वं तत्क्षमापयेत् श्रीईश्वर उवाच एवं यः कुरुते देवि सुरूपाद्वादशीव्रतं नरो वा यदि वा नारी तस्य पु-
ण्यं शृणुष्व मे दौर्भाग्यं नश्यते तस्य अपि जन्मान्तरार्जितं अपि पापसंसर्गो जायते कारणान्तरात्
तस्यापि नश्यते दुःखं वैरूप्यं तस्य जन्मनि धनधान्यैश्च वै लोके नेष्टैः सह वियोगिता जायते गोत्रवृद्धिश्च
कीर्तिमान् जायते भुवि जातिस्मरणमाप्नोति पदं निर्वाणमाप्नुयात् यः शृणोति इदं महाव्रतं श्रद्धया
समाहितः पुण्यं प्राप्नोति सततं स्वर्गलोके महीयते इति श्रीव्रतार्के पौषे द्वादश्यां कृष्णसुरूपद्वादशीव्रतम्

इदं च पौषमासे शुक्लपक्षे तत्रादारभ्यैकादशी द्वादशीपर्य्यंतं विधेयम् पौषकृष्णत्रयोदश्यां पक्षत्रयोदशीव्रतं
कार्य्यम् पौषकृष्णचतुर्दश्यां मासशिवरात्रिव्रतम् नान्यदत्रविशेषकृत्यम् पौषमाघामर्द्धोदययोगसंभ
वः सच महाभारते एवमुक्तः अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः अर्द्धोदयः स विज्ञेयः कोटिसू
र्यग्रहैः समः इति सचार्द्धोदयः प्रायशो माघामावास्यायामेव भवति पौषमाघयोः पौर्णमास्योर्मध्यवर्तिन्याम
मायां संभवति नतु पौषामावास्यामित्यर्थः इति यत्कैश्चिदाधुनिकैरुक्तं तदसत् उपपन्नमित्तत्वान्मुख्य
तो सर्वत्र पुराणवाक्याभ्यामेव विरोधात् श्रवणस्यापि संभवो भवति यथा नाक्षत्रस्पष्टया पंचांगेन पात
संभवो न भवति एवं पत्रिकास्वदृष्टत्वात् तदप्यसत् तिथिनक्षत्रयोगानां क्षयवृद्धिमंतत्संभवविचा
रः कर्त्तुं शक्यते श्रुतावधिपत्रिकाणां स्थित्या स्वदृष्टावधिपत्रिकास्तु कश्चिज्जातेन ज्ञातत्वरूपस्या
भावात्संभवो गौणकार्य्य एव पुराणवाक्यप्रामाण्यात् अन्यथा नास्तिकत्वापत्तेश्चेति संभवसामंजस्य
मिति नारदीये पुत्रामाकृत्यमुक्तम् पौषमाघे च विप्रेंद्र पितृश्राद्धफलाधिकं अमायां करणीयान्ता
कं शुक्लापात्र गयाधिकमिति अथ पौषशुक्लप्रतिपदाकृत्यम् नारदीये पौषशुक्लप्रतिपदि भानुम
भ्यर्च्य भक्तितः एकभक्तव्रतो मर्त्यो भानुलोकमवाप्नुयात् पौषशुक्लद्वितीयायां तत्रैवोक्ता पौषशु
क्लद्वितीयायां गोशृंगोदकमार्जनं सर्वकामप्रदं नृणामस्ते बालेंदुदर्शनम् योऽर्घ्यदानेन बालेंदुं हवि
ष्याशी जितेंद्रियः पूजयेत्सोप्यमुदितं धर्मकामार्थसिद्धिदं अत्रारोग्यव्रतं विष्णुधर्मोत्तरे पौषशुक्लद्वि
तीयायां गवां शृंगोदकेन तु स्नात्वा शुक्लांबरो भूत्वा सूर्येऽस्तमुपागते बालेंदोः पूजनं कार्यं गंधमाल्या
नुलेपनैः आहारं गोरसप्रायमधः शायी निशां नयेत् एवं प्रतिमासशुक्लद्वितीयासु बालेंदुपूजनम्
वर्षांते मार्गशीर्षे बालेंदुपूजनं कृत्वा तोयपेत् वासांसि रसकुंभं च कांचनं च द्विजातये दत्वा तु एवं वस्तु
क्ता व्रतपारंगतो भवेत् व्रतेनानेन धर्मज्ञ आरोग्यमेव त्वाप्नुयात् इति सौभाग्यमाप्नोति तथा तुष्टिं च मनुजो
त्तम कामं सचाप्नोत्यर्थवैक निःशेषशास्त्रयात्रे प्रचुरं च धर्मं अभ्यासतस्तस्य समस्तकामान्नरस्तथा
प्नोत्यथवा च नारी इति विष्णुधर्मोत्तरोक्तं पौषशुक्लद्वितीयायामारोग्यव्रतम् पौषशुक्लतृतीया
यां ब्रह्मगौरीव्रतम् नारदीये पौषशुक्लतृतीयायां ब्रह्मगौरीव्रतं चरेत् एवमुक्तेन विधानेन पूजयि
त्वा द्विजोत्तमं ब्रह्मगौरीप्रसादेन मोदते ब्रह्मसंगतेति गौरीपूजने ब्रह्मपूजासहितमित्यत्र विशेषकृ
त्यं पौषशुक्लचतुर्थ्यां विघ्नेशपूजोक्ता तत्रैव पौषमासस्य चतुर्थ्यां तु विघ्नेशं प्राच्य भक्तितः विप्रैकं भो
जयेत् समोदकैर्दक्षिणां दद्यात् एवं कृते शुभे भूयाद्व्रती संपत्तिभाजनः पौषशुक्लपंचम्यां मधुसूदन
पूजोक्ता नारदीये पौषेपि शुक्लपंचम्यां संपूज्य मधुसूदनं लभते वांछितान्कामान्नात्र कार्या विचार
णा पंचम्यां प्रतिमासं तु शुक्ले कृष्णे च नारद पितॄणां पूजनं शस्तं नागानामपि सर्वथा पौषषष्ठ्याम
पि दिनेशपूजोक्ता तत्रैव पौषमासे शुक्लषष्ठ्यां दिवा दिनपतिर्द्विजः विष्णुरूपी जगद्धाता प्रादुर्भूतः
सनातनः तस्मात्संपूजनीयोयं षष्ठ्यां गंधपुष्पाक्षतैः नैवेद्यैर्वस्त्रभूषाद्यैः सर्वसौख्यमभीप्सुभिरिति
पौषशुक्लसप्तम्यादितो वर्षमा उभयसप्तमीव्रतम् जयसिंहकल्पद्रुमे सप्तम्यां तु पौषाणाम् त्रिसं
ध्यं सूर्यपूजां रात्रावधः शायी एवं च कल्ये पौषमासि सप्तम्यां चूतादिभिर्भानुं संपूज्य मोदकप्रस्थं निवेद्य
द्विजान्भोजयित्वा कपिलां दद्यात् एवं कृते सर्वकामाप्तिर्भवतीत्युभयसप्तमीव्रतम् अत्रैव मार्तंड
सप्तमीव्रतं प्रतिमासं मार्तंडं पूजयित्वा गवाह्निकं दद्यादिति मार्तंडसप्तमीव्रतम् पौषशुक्लाष्टम्यां
शिवपूजा नारदीये शुक्लाष्टम्यां तु पौषस्य शिवं संपूज्य भक्तितः भुक्तिं मुक्तिमवाप्नोति भक्तमेकं समा
चरेत् भक्तं भोजनमित्यर्थः अत्र विशेषो भविष्योत्तरे कस्तनरो श्रीमहादेव उवाच पौषमासि महा
देवि शुक्लाष्टम्यां तु यो भवेत् तदा सा तु महापुण्या महाभद्रेति कथ्यते तस्यां स्नानं महादानं जपो होमस्तु

तरलानर्तकाइव शोभना ततो हलहलापदं चक्रुर्दानवोत्तमाः अस्फालयंतः पणवान्भेरीकलशगोमुखान् वाद
यंतानकानन्ये शंखान्डमरुडिंडिमान् एवं विधे समाजे तां भवानीं दैत्यनायकाः समाजग्मुः शरैः शूलैः परि
घैः शक्तितोमरैः असिभिर्मुद्गरैः कुंतैः शतघ्नीकूटमुद्गरैः साद्यमाना रोषेण जज्वाल सपरंबिका सिंहारू
ढा द्रुतं देवी रणमध्ये प्रधाविता आकृष्य विक्रान्नितदा ध्वजान्नानाविधांस्तथा बलात्कारेण दैत्यानां शुंभ
स्य समरे रुषा चिक्षिका निदद्दौ तुष्टा देवेभ्यः शीघ्रचारिणी स्वैरं रथिगृहीतानि जयदेवीति वादिभिः अंबिका
अंशं हृष्टा तेषां चक्रे तत्क्षणाल्लयं कालरात्री दानवानां मारीव निपपात समा जीवितानि च जग्राह दैत्यानां देवनं
दनाः अथ रक्ताक्ष रंकं हे गृहीत्वा पपात भूतले देवी जयानती त्तो नत्रिशूलेन भृशं हृदि सभिन्नहृदयो माया
श्चक्रे दैत्यं सुदारुणः तथापि देव्यासहतः पपात समरे सुरः देवीतान सुरान्जित्वा तत्र वज्रधरेद्रुतम्
ददृशुस्तोरणं प्रीते लंबमानान्महाध्वजान् यात्रां चक्रुः सुराहृष्टा नवम्यां ध्वजचिह्निता अतो ध्यायीह
भूपालैर्जयतल्येः क्रियान्वितैः उत्सवेन नरैर्भक्त्या नारीभिरधियांद्रव युधिष्ठिर उवाच कीदृग्विधानं
तस्यास्मिन्नवम्यां दुर्दिने प्रभो सरहस्यं समंत्रं च तद्यते येन चंडिका श्रीकृष्ण उवाच पौषस्य शुक्लपक्षे वा न
वमी परिसंस्कृता तस्यां स्नाता शुभैः पुष्पैरर्चनीया हरेः स्वसा साकुमारी भगवती सिंहस्थानंददायिनी ध्व
जान्वा विधान्कुलाचरन्तस्तां प्रपूजयेत् मालतीकुसुमैर्दीपैर्गंधधूपविलेपनैः बलिभिः पशुभिर्मध्यैः
सुरामांससुगंधैः दधिचंदनचूर्णैश्च भक्ष्यान्नियाचितैः मंत्रेणानेन कौंतेय ब्राह्मणश्चैव पार्थिवः इंद्रो
भगवती कृष्णा विश्वस्य जगतो हिता सर्वदुःखक्षयमंत्री ग्रहनक्षत्रमालिनी प्रपन्नोहं शिवां रात्रिं भद्रे पारमय
सीमहि सर्वभूतपिशाचेभ्यः सर्वसत्वसरीसृपेः देवेभ्यो मानवेभ्यश्च भयेभ्यो रक्ष मां तमः ततश्चारोपये
द्राजन्देवीनां भवने ध्वजान् भोजयीत कुमारीश्च प्रणिपत्य क्षमापयेत् उपवासेन ऊ वीत एकभक्तेन वा पुनः
भक्त्या भूपालस्येवास्य भक्तिस्तेषां गरीयसी एवं ये पूजयिष्यन्ति ध्वजैर्भगवतीं नराः तेषां दुर्गाणि दुर्गमार्गे चौर
व्यालाग्निसंकटे रणे राजकुले गेहे बुद्धमध्ये स्थले जले रक्षां करोति सततं भवानी सर्वमंगला अश्वावभूव
विजयो नवम्यां पाण्डुनंदन भावन्यास्तु तैनेषा नवमी सततं प्रिया धन्या शुभा पापहरा सर्वोपद्रवनाशि
नी अनुदियाप्रयत्नेन सर्वान्कामानभीप्सितान् देयश्चैवाहितमतिर्मनुजो नवम्यां दुर्गागृहे ध्वजवरान्नव
रोपयेद्यः कामानवाप्य मनसोऽभिमतान्स कामं देहं विहाय स सुधैति च वीरलोकम् इति भविष्योत्तरे पौ
षशुक्लाध्वजारोपदुर्गानवमीव्रतम् ॥ पौषशुक्लदशम्यां विश्वेदेवपूजाव्रतम् नारदीये
पौषे दशम्यां शुक्लायां विश्वेदेवान्समर्चयेत् क्रतुर्दक्षो वसुः सत्यः कालकामधुनी तथा स्थापयित्वा दर्भमया
नासनेषु संस्थितान् गंधैर्धूपैस्तथा दीपैर्नैवेद्यैश्चापि नारद प्रत्येकं दक्षिणां दत्वा प्रणिपत्य विसर्जयेत्
दक्षिणां तां द्विजाग्र्येभ्यो गुरवे वा समर्पयेत् एवं कृत्वा विधिमेकभक्तभोजी व्रती भवेत् लोकत्रयस्य विप्रर्षे नात्र
कार्य्या विचारणा इयं पौषशुक्लदशमी ईशानकल्पादि अस्यां श्राद्धदानादि सर्वमक्षयफलं भवतीति कल्स
दिनिर्णयेऽभिधानात् पौषशुक्लैकादशी पुत्रदैकादशी नारदीये पौषस्य शुक्लैकादशी पुत्रदा समुपोष्य वै
द्वादश्यां चक्रिणं प्रार्च्य गंधाद्यैरुपचारकैः ततः संभोज्य विप्राग्र्यान्दत्वा तेभ्यश्च दक्षिणां विसृज्य स्वयमश्नीया
न्मृष्टान्नं बान्धवैः सह एवं कृतव्रतो विप्र भुक्त्वा भोगानिहेप्सितान् विमानवरमारुह्य यात्यंते हरिमंदिरम्
अथ कथा पद्मपुराणे युधिष्ठिर उवाच कथ्यतां चैव भो कृष्ण कृपां कृत्वा ममोपरि पौषस्य शुक्लपक्षे यानि
पिरेकादशी भवेत् किंनामको विधिस्तस्याः को देवस्तत्र पूज्यते कथयस्व हृषीकेश त्वं देवोत्तम श्री
कृष्ण उवाच शृणु राजन्प्रवक्ष्यामि शुक्लायां पौषस्य या भवेत् कथयामि महाराज लोकानां हितकाम्यया एवं
कविधिना राजन्कर्तव्या च प्रयत्नतः पुत्रदा नाम विख्याता सर्वपापक्षयंकरी नारायणो हि देवोऽस्याः सर्वका
मफलप्रदः नातः परतरा काचित्त्रैलोक्ये सचराचरे विद्यावंतं यशस्वंतं करोति मनुजं हरिः शृणु राजन्प्रवक्ष्या

मित्रवदायाः कथां शुभां पुरी भद्रावती नाम राजा तत्र सुकेतुमान् राज्ञस्तस्य तु पत्न्यो वै पंचैवासन्सुलोचनाः पुत्रहीनेन राज्ञा वै कालो नीतो मनोरथैः पुत्रं न लेभे राजा वै शोभनं वंशवर्द्धनं नराइन पुरे सौख्यं राजा लेभे सुकेतुमान् सौराज्यं शोभनं राजा न मेने पुत्रवर्जितः राजा राज्ञी तथा जाता वंध्या न्यमति दुःखितौ पितरौ तस्य चान्दीयकं तोयमुपभुंजते राज्ञः पुत्रेण वै जातो योऽस्मान्संतर्पयिष्यति इत्थं संचिंतयानास्तु न लेभे सुः सुखं तदा नकरणान्मन्यते पुत्रो देवत्रणांत्तथा पितुः तस्मात्सर्वप्रयत्नेन पुत्र उत्पाद्यते नरैः इह लोके यशस्तेषां परलोके शुभा गतिः येषां नराणां मानां हि पुत्रजन्मा भवेद्ध्रुवं आयुरारोग्यसंपत्तिस्तेषां लोके प्रवर्त्तते पुत्रहीनं तथा राज्यं चेद्दृष्टी नाय यथा निशा इत्थं संचिंत्य मनसा शर्म लेभे न पार्थिवः एकदेहस्वरामेंद्रप्राणानंदं हृदिकेतुमान् दृष्ट्वा पतितमात्मानं पुत्रहीनेन सुदुःखितं अश्वारूढस्तदा राजा जगाम गहनं वनं जानंति स्म प्रजा नैव सेवका मंत्रिणस्तथा संशाखो घोरविपिने विचरंश्च नरत्तितः अपश्यच्च वटाश्वत्थहिंतालान्हकविधान्वने चंपकान्सप्तपर्णांश्च तिंदुकांस्तिलकांस्तथा शालांश्च वनमालांश्च खदिरांश्च विशेषतः कदलीं शिंशपांश्चापि बदरीश्च मनोरमाः व्याघ्रांश्चैव वराहांश्च वानरान्चित्रकांस्तथा गवयांश्च मृगांश्चैव वनशृगालान्शशकानपि वनमार्जारकांश्चैव भल्लूकांश्च सरीसृपान् दृष्ट्वा तान् चिंतयामास स्वात्मनः प्राणनाशनम् वने विचरतस्तस्य रविर्मध्यगतो भवेत् क्षुत्तृषापीडितो राजा वने बभ्राम सर्वतः सुखेन पश्यता त्वर्थं चिंतयामास पार्थिवः पातकं किं कृतं देवाद्यस्माद्दुःखमीदृशं मया तु तोषिता देवा यज्ञपूजाभिरादरात् भक्त्या भूमिसुराश्चैव पोषिताः अन्नभोजनैः प्रजाश्च पालिताः सर्वाः पुत्रवत्सर्वदा मया कस्माद्दुःखं मया प्राप्तमीदृशं दारुणं महत् इति चिंतापरो राजा जगाम पुरतो वने स्वच्छजलं च सरः शुभं पश्यन्महीभुजा मानसस्पर्द्धितेयद्धै पद्मिनीखंडमंडितं हंसकारंडवाकीर्णं चक्रवाकोपशोभितं मकरैर्मत्स्यसंघैश्च यादोभिश्च समन्वितं समीपे तस्य सरसो मुनीनामाश्रमान्शुभान् ददर्श राजा बाल्लीकि शिभघाणां मनयल्लिनो भास्करद्दक्षिणं नेत्रं भास्करद्दक्षिणो भुजः स्पन्दस्तस्य महीपस्य शशंस शुभफलानि तस्य तीरे तु मुनयस्तस्थुः कुर्वन्तः सुदारुणं हर्षादुत्फुल्लनयनो मुनीन्दृष्ट्वा बभूव सः अवतीर्य हयात्तस्मान्मुनीनामग्रतः स्थितः पृथक्पृथग्ववंदे सौ मुनीनां आश्रमसंस्थितान् प्रत्यूचुस्ते च मुनयः प्रसन्नाः स्मो वयं नृप राजोवाच कुतस्त्या भवंतो वै के भूशांततपनेतपः किमर्थमागताश्चेह कथयंतु ममाग्रतः मुनय ऊचुः विश्वेदेवा वयं राजन्स्नानार्थमिहागताः अद्य चैकादशी राजन्शुक्ला पौषे हि पुत्रदा पुत्रं ददाति वै कर्तुस्तस्मात्त्वं व्रतं चरेन् तस्मादेकादशीमेतां पुत्रदेति प्रचक्षते इत्थं मुनिवचः श्रुत्वा हर्षाविष्टोऽब्रवीन्नृपः राजोवाच यदि तुष्टा भवंतो मम दीयतां सुतः इति राज्ञो वचः श्रुत्वा मुनयो वाक्यमब्रुवन् अद्यास्मिन्दिवसे राजन्पुत्रदा नाम वर्त्तते एकादशी महापुण्या क्रियतां व्रतमुत्तमं अस्मत्प्रसादतश्चैव कल्याणानुभद्रा नया व्रतस्यास्य प्रभावाच्चावश्यं लभ पिता सुतः स राजा वचनात्तेषां चकारैकादशीव्रतं तत्रैव विपिने स्थित्वा मुनिभिः सहितस्तदा राजेजागरणं कृत्वा नत्वा गीतैस्तवैर्द्दूरैः द्वादश्यां पारणं चक्रे मुनिभिः सहितस्तदा आजगाम गृहं राजा हर्षोत्फुल्लमुखांबुजः पुत्रदायाः प्रभावेन राज्ञी गर्भं ततो दधे पुत्रो जातस्ततस्तस्य तेजस्वी रूपवान्गुणी ततस्तेन सह येन राज्ञा संपालिताः प्रजाः एतस्मात्कारणाद्राजन्कर्त्तव्यं पुत्रकांक्षिभिः मोक्षार्थिभिश्च भक्त्या वै पुत्रदैकादशीव्रतं एकचित्तेन यो राजन्कुरुते ह्येकादशीव्रतं प्राणिनो लभते पुत्रानिहामुत्र च सद्गतिं अस्या माहात्म्यश्रवणाद्दीर्घायुर्धनधान्यवान् पुण्यवांश्च भवेन्मर्त्यो नात्र कार्या विचारणा इति ब्रह्मपुराणे ब्रह्मांडोक्तं पुत्रदैकादशीव्रतकथा ॥

पौषशुक्लैकादशी मन्वादिरिति मन्वादिनिर्णयोक्तान्येव ऊर्ध्वात् अस्यामेव माघस्नानप्रारंभं केचिदाहुः तदुक्तं ब्रह्मपुराणे एकादश्यां शुक्लपक्षे पौषे मासि समारभेत् द्वादश्यां पौर्णमास्यां वा शुक्लपक्षे समापयेत् माघस्नानमिति शेषः एतन्नारमाद्यविषयः दर्शी

पुज्यतान्मनुवर्षनेव स्वमनुक्रमेण एकैकपदोक्तमेकैकदानमेकैकस्मिन्मासे क्रमेण देयं गोमूत्रंमभोज्यन्न मासशाकं हवींदधि ब्रीहियवास्तिलाश्च सूर्य्यांशु नभं जलमंबुदांभःदीस्वमासक्रमशः प्रदिष्टं श्रामशाकंश्रयकाशाकं सूर्य्यांशुतन्नमिति जलविशेषणं दार्भमंबु ऊले यथा नैयनथान्यत्पूर्णे विवेकवत्सकलसमस्तदुःखं प्राप्नोति जन्माविकलेंद्रियश्च भवत्यरोगो मतिमान्सुखी च इति विष्णुधर्मोत्तरोक्तं सुजन्मद्वादशीव्रतम् ॥ अथास्यामेव भविष्योत्तरोक्तं गोविंदद्वादशीव्रतम् श्रीकृष्ण उवाच अथान्यदपि ते वच्मि गोविंदद्वादशीं शृणु यस्याः सम्यगनुष्ठानात्प्राप्नोत्यभिमतं फलं पौषमासे सिते पक्षे द्वादश्यां समुपोषितः सम्यक्संपूज्य गोविंदं देवदेवमधोक्षजं धूपदीपोपहारैश्च नैवेद्यैश्च समाहितः गोविंदेति जपन्नाम भक्तिप्रह्वमानसः विप्राय दक्षिणां दद्याद्यथाशक्त्या समाहितः स्वपन्विबुध्यन्स्खलितो गोविंदेति च कीर्तयेत् पाखंडिभिर्विकर्मस्थैरालापं च विवर्जयेत् गोमूत्रं गोमयं चापि दधि क्षीरं तथापि वा गोदेहतः समुद्भूतं समश्नीयाद्विशुद्धये द्वितीयेह्नि ततः स्नात्वा तथैवाभ्यर्च्य केशवं तेनैव नाम्ना संपूज्य दद्याद्विप्राय दक्षिणां ततो भुंजीत गोदेहसंभूतेन समन्वितः एवमेवाखिलान्मासाननुपोष्य यतः शुचिः दद्याद्भवाखिलान्मासाननुपोष्य यतः शुचिः दद्याद्गवाह्निकं विद्वान्प्रतिमासं स्वशक्तितः पारिते च पुनर्वर्षे गोविंदं यमघासह कारयित्वा सुवर्णमयं पुष्पैर्धूपैः स्रग्गंधैः गोविंदो गोपतिर्गोग्रासी ह्यतः श्रीधरो हरिः सर्वकामफलावाप्तिं करोतु मम केशवः इत्युच्चार्य ततो दद्यात्तस्मिन्नह्नि गवाह्निकं भक्त्या परमया राजन्स्वर्णे यत्फलमाप्नुयात् स्वर्णशृंगीं रौप्यखुरां सघंटां सदुघां नरः प्रतिमासं द्विजातिभ्यो दत्वा यत्फलमश्नुते तदाप्नोत्यखिलं सम्यग्व्रतमेतदुपोषितः तं च लोकमवाप्नोति गोविंदो यत्र तिष्ठति गोविंदद्वादशीमेतामुपोष्य दिवि तारकाः विद्योतमाना दृश्यंते लोके यामिशशांकवत् गोविंदमर्चयति गोरसभोजनश्च गावो विनोदयति दत्तगवाह्निकश्च गोद्वादशीषु कृतोपवासः प्राप्नोत्यसौ सुरभिलोकमपेतशोकः इति भविष्योत्तरोक्तं गोविंदद्वादशीव्रतम् ॥ पौषशुक्लत्रयोदश्यामच्युतपूजाव्रतं पौषशुक्लत्रयोदश्यां समभ्यर्च्याच्युतं हरिं घृतपात्रं द्विजेंद्राय दद्यात्सर्वार्थसिद्धये इति नारदीयोक्तमच्युतत्रयोदशीव्रतम् ॥ कृत्यतत्वार्णवे त्वेवमेव पौषे मासि त्रयोदश्यामच्युतं विप्राय पार्थिव समभ्यर्च्य सर्पिर्दद्यात्सर्वान्कामानवाप्नुयात् इति पौषशुक्लत्रयोदशीकृत्यम् ॥ पौषशुक्लचतुर्दश्यां विरूपाक्षव्रतम् नारदीये पौषशुक्लचतुर्दश्यां विरूपाक्षव्रतं स्मृतं कपर्दीश्वरसान्निध्यं प्राप्य विप्र विचिंत्य च स्नात्वा तत्र जले तत्र विरूपाक्षं शिवं यजेत् गंधमाल्यनमस्कारधूपदीपान्नसंपदा भोज्यं द्विजातये दद्यान्मोदते दिवि देववत् हेमाद्रौ विष्णुधर्मोत्तरे त्वेतदुक्तम् मार्कंडेय उवाच पौषशुक्लचतुर्दश्यां विरूपाक्षं तु पूजयेत् पौषमासाद्यथारभ्य यावत्संवत्सरं भवेत् गंधमाल्यनमस्कारधूपदीपान्नसंपदा ततश्च द्विजातये दद्याद्भुक्तां तेन परंतप तत्स्यैतदुपकरणं महोदादिपजादानादि कृत्वा व्रते वत्सरमेत दिष्टं भयं न चाप्नोति स राजसेभ्यः कामानवाप्नोति भवत्यरोगो भयं च राजन्न च तस्य किंचित् इति विष्णुधर्मोत्तरोक्तं विरूपाक्षव्रतम् ॥ पौषपौर्णमास्यां लक्ष्मीपूजाव्रतम् नारदीये इंद्रं जगाम शरणं लक्ष्म्या त्यक्तो मासीततो हरिः इंद्रं रक्ष्यसोमश्च तथातिष्य बृहस्पती पंचैते पुष्ययुक्तायां पौर्णमास्यां जगद्दलात् अर्चंते पुनश्चक्रुः सर्वसौभाग्यवृद्धये गौरसर्षपकल्केन समालभ्य स्वकां तनुं स्नायात्सर्वौषधिजलैर्धार्यं च नवांशुकं दृष्ट्वा च मंगलद्रव्यं स्पृष्ट्वा नत्वा ततोऽर्चयेत् हरिद्राकुंदपुष्पैश्च गंधाद्यैरुपचारकैः विधाय होमं विप्रांश्च भोजयेत्पायसाशनैः एवं कृत्वा व्रतं विप्रस्य प्रीतिविवर्द्धनं अलक्ष्मीनाशनं चैव मोदते च परत्र च कृत्यतत्वार्णवे ब्रह्मलोके तपस्तप्त्वा पितरो लेभिरे वरं पौषे तु पुष्यनक्षत्रे पिष्टकैर्विविधैः पितॄन् अर्चयंति यतिर्देवाद्विज मात्मानमेव च गौरसर्षपक-

ल्केन समालभ्य सुकांतं तं हानं स्नानैस्तथा कार्य्यं मलघ्नीनाशनं परं उद्वर्त्य देवं च तथा सर्वौषधियुतैर्जलैः स्नापयित्वा
नवं वस्त्रं सुहीलाकांचनं तथा इष्टं चं मंगलं शांतं धूपस्रग्माल्यशोभितं ततो नारायणं शुक्लचंद्रशकं हृदि स्मृतीन्
संपूज्य पुष्पैर्धूपैश्च नैवेद्यैश्च पृथक्पृथक् प्रशस्तैर्वैदिकैर्मंत्रैः हुत्वाग्निं हविषा शुभं दानैर्विप्रांश्च संतर्प्य नैवेद्यै
सैश्च शोभितान् ततः पुष्टिकरं हृद्यं भोक्तव्यं घृतपायसं पुष्ययोगे तु कर्तव्यं राज्ञा स्नानं तु सर्वदा विप्रैरपि
पौषी चेत्पुष्ययुक्ता स्यात्तस्यां गौरसर्षपकल्केनोत्सादितशरीरोगः गव्यघृतपूर्णकुंभेनाभिषिक्तः सर्वगंधैः
सर्वबीजैश्च स्नातो घृतेन भगवंतं वासुदेवं स्नापयित्वा पुष्पधूपदीपगंधनैवेद्यादिभिश्चाभ्यर्च्य वैष्णवैः सूक्तै
र्बार्हस्पत्यैर्मंत्रैश्चानलं हुत्वा सुवर्णेन घृतेन ब्राह्मणं स्वस्ति वाचयेत् ततो वासोयुगं च कर्त्रे दत्वा अनेन
कर्मणा मुच्यते सर्वौषध्य उक्ताश्छांदोगपरिशिष्टे कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचंदनं वचाचंपकमुस्ताश्च
सर्वौषधिगणः स्मृतः ॥ अस्यामेव पौष्यां ईशानव्रतमुक्तं हेमाद्रौ कालिकापुराणे पिप्पलाद उवाच अथो
पौषचतुर्दश्यां पौर्णमास्यां गुरोर्दिने पूजयेद्विधिनाऽनेन शार्वं लिंगं निबोध तत् ब्रह्मणः पश्चिमे भागे वामे
लिंगस्य वेदिकां खखोल्कं दक्षिणे रुद्रमीशं पश्चाद्दिशि स्थितं खखोल्कं सूर्यमं गुग्गुलं चाज्यसंयुक्तमगुरुं
वासितं शुभं दध्यन्नं राजनं कुर्यात् दत्वा गोधूममयं चक्रं नैवेद्यार्घबलिं चैव पूर्ववद्दत्वा पदं व्रजेत् पंचगव्यं
ततः प्राप्य आचार्यं ब्राह्मणांस्तथा व्रतिनो मिथुनान्येव भोजयेच्च स्वशक्तितः हेमवस्त्रादिकं चैव यत्नात्स
म्यक्पूजयेत् इष्टदेवाः प्रपूज्या वै नैवेद्याद्यं च पूजयेत् नत्वाग्निं पूजयित्वा तु पंचवक्त्रं शिवं स्मरेत् प्राग्गेहे
पंच वै गावः पंच पंच नियोजयेत् तेषामृद्धिप्रपत्तेषु वं न्यूनं वा पितृतोऽधिकं पंच पंचेति वचनात् द्वितीये
द्वे तृतीये तिस्रः चतुर्थे चतस्रः वृषभस्तु प्रथमाह्ने वै देयः एव तेषां ब्रह्मादीनां पंचानां चक्रे देवानां पंच वर्गा
नुद्दिश्य व्रते यत्नस्तनाधिकं तत्तेष्वेव नियोजयेत् निखिलं प्रविशेषं च कर्तव्यं तत्पदेष्वभिः स्वं स्वकीर्तिश्रि
योर्थं च दद्यैव विभवाय च रहस्यमेतन्न दितं न देयं यस्य कस्यचित् इति निर्णयामृते ब्रह्मपुराणोक्तं पौष्यामी
शानव्रतम् ॥ अथास्यां भविष्योत्तरपुराणे दानमुक्तम् नारदीये चतुर्दशसहस्रं तु पुराणं परिकीर्ति
तं भविष्यं सर्वदेवानां साम्यं यत्र प्रकीर्तितं गुणानां तारतम्येन समं ब्रह्मेति हि स्फुटिः तल्लिखित्वा तु यो द
द्यात्पौष्यां विद्वान्विमत्सरः गुडधेनुयुतं हेमवस्त्रमाल्यविभूषणैः वाचकं शुल्कं चापि पूजयित्वा विधा
नतः गंधाद्यैर्भक्ष्यभोज्यैश्च कृत्वा नीराजनादिकं यो वै जितेंद्रियो भूत्वा सोपवासः समाहितः अथवैकहविष्या
शी कीर्तयेच्छृणुयादपि स मुक्तः पातकैर्घोरैः प्रयाति ब्रह्मणः पदम् ॥ अथ पौष्यां पुष्यनक्षत्रस्थे चंद्रे इतरस्यां
यां वा पुष्यस्नानविधानमुक्तं कालिकापुराणे और्व उवाच शृणु राजन्प्रवक्ष्यामि पुष्यस्नानविधिक्रमम्
येन विज्ञानमात्रेण विघ्नान्नश्यंति संततं पौषे पुष्ये तु योगे चंद्रे पुष्यस्नानं नृपश्चरेत् सौभाग्यकल्याणकरं डिंभ
तमरकापहं विष्ट्यादि दुष्टकरणे व्यतीपाते च वैधृते वज्रे शूले हर्षणादौ योगे तु यदि लभ्यते तृतीया पुष्ययु
क्तार्द्रा रविशौरिकुजाहनि तदा समस्तदोषाणां स्नानं हरणं परं ग्रहदोषाश्च जायंते यदि राज्ञश्चेतसः तदा
पुष्ये वै मासे तु कुर्यात् मासांतरेऽपि च रथं तु ब्रह्मणः शांतिरुद्दिष्टा गुरवे पुरा शक्रार्थं सर्वदेवानां शांत्यर्थं च जग
त्पते तप केशास्थिवल्मीककीटदोषादिवर्जिते सुस्थाने चंपकाशोकबकुलादिविभूषिते हंसकारंडवा
कीर्णे सरसीरेथवाश्रवो पुष्यस्नानाय नृपतिर्गच्छेद्यात्स्थानमुत्तमं ततः पुरोहितो राजा नानावादित्रनिः
स्वनैः प्रदोषसमये गच्छेत्तत्स्थानं पूर्ववासरे तस्य स्थानस्य कौबेर्यां दिशि स्थित्वा पुरोहितः स्वगंधचंदनैः
पात्रैः कर्पूराद्यधिवासितैः गोरोचनादिसिद्धार्थैः रत्नैश्च फलादिभिः गत्वा वेदादिभिर्मंत्रैः सर्वसाध्याधिवा
सितैः अधिवास्य तु तत्स्थानं पूजयेत्तत्र देवताः गणेशं केशवं शक्रं ब्रह्माणं चापि शंकरं उमयासहितं देवं स
र्वाश्च गणदेवताः मातृश्च पूजयेत्तत्र नृपतिः सपुरोहितः मंगलात्कलशान्हात्वा नानानैवेद्यसंचयं प्रदद्या
त्पायसं लाडुफलं मोदकयावकौ अधिवास्य तु तत्स्थाने हर्वासिद्धार्थका ततः तस्मात्स्थानात्तु भूतानि सार्यं

मंत्रमीरयन् अपसर्पंतु ते भूता ये भूताः स्थानपालकाः । भूतानामविरोधेन पूजाकर्म करोम्यहं ॥ ततः करोद्वर्तिक-
न्यमंत्रेणानेन पार्थिवः । आवाहयदिमान्देवान्पूज्याञ्छुद्धांजलीकरः ॥ आगच्छंतु सुराः सर्वे येत्र पूजाभिलाषिणः ।
दिशो दिव्याननाः सर्वे ये चान्ये यज्ञभागिनः ॥ ततः पुष्पांजलिं कृत्वा पुनर्मंत्रं पठेदिदं । अद्यतिष्ठंतु विबुधाः
स्थानमाश्रित्य मामकं । स्वपूजां प्राप्य यातारो दत्वा शांतिं महीभुजे ॥ ततस्तां नृपती रात्रिं नयेत्तु सपुरोहितः ।
कृत्वा पूजां तु देवानां रात्रौ तत्र नृपः स्वपेत् । शुभाशुभं फलं दिग्भ्रैश्चैर्यं दैवज्ञसंमतैः ॥ दुःस्वप्नदर्शने चेत्स्यात्त-
दा दुग्धाभिषेचने होमं च तत्र शांत्यर्थं कुर्याद्दद्याद्धापि गवां शतं । गोवाजिकुंजराणां तु प्रासादस्य गिरेस्तरोः ।
आरोहणं शुभकरं राज्यश्रीवृद्धिदायकं । दधिदेवसुवर्णानां भुजंगस्य च दर्शने ॥ वीणादूर्वाक्षतफलपुष्प-
छत्रविलेपनं । स्त्रीणां शुक्लवस्त्राणां पद्मस्य सह दंतिना । लाभः क्षयकरः शत्रोरलंकारस्य भूषणः । दर्शने चो-
परागस्य निगडेन च वेष्टनं । मांसस्य भोजने चैव पर्वतस्य विवर्जने । नाभिमध्येन तृणनिर्गतं प्रलपितरोदनम् ।
अगम्यागमने कूपपंकगर्तावतीर्यता । पर्वतस्य तथा नद्याः प्रोत्तारः शत्रुकर्तनं । स्वगुरुभारणं चैव पानं रु-
धिरमद्ययोः । भोजनं पायसस्यापि मेध्यारोहणं तथा । कल्याणस्य च भोग्यस्य राज्ञः शत्रुक्षयस्तथा । एते
स्वप्नाश्च कुर्वंति नृपस्य नृपसत्तम । खरोष्ट्रमहिषाणां तु आरोहो राज्यनाशकः । नृत्यं गीतं तथा हास्यं गाढं
श्चाप्यशुभप्रदः । रक्तवस्त्रपरीधानं रक्तमाल्यानुलेपनं । रक्तांबरस्त्रियं चैव कामयन्मृत्युमाप्नुयात् । कृष्णां-
तरे प्रदेशः स्याद्दक्षिणाशागमिन्सया । पंके निमज्जनं स्नानं भार्यापुत्रविनाशनं । नाभौ यस्य तृणं जातं निर्मलं तत्स्वमेन स्व-
प्नेन आदाय गर्भनाडीं च पाकृतो याति विह्वलं । सत्तु राज्यांतरं प्राप्य महाकल्याणमाप्नुयात् । दीर्घं विप्रानिद्र-
लितदूलयोः दशसम्मिते । कुर्यात्तु लक्षणोपेतं यत्तमंडपमुत्तमं । ततोपरेह्नि स्नात्वा ब्राह्मणपूजनं चरेत् । कु-
ड्डलशांवसौधारोहद्विशाहं नैवेद्यं च चंदनागुरुकस्तूरीधूपकर्पूरहरणैः । संमृज्य मंडलस्थानं तस्मिन्होमं
समाचरेत् । अस्त्रायफडित्येवं लिखेन्मंत्रहृदयं बुधः । मंत्रविन्मंडलं यत्तु सूत्रैः कंबलसंभवैः । कोशे ये वीक्ष्य लि-
खाद्यं प्रथमं मंडलं लिखेत् । चतुर्हस्तप्रमाणं तु मंडलं विलिखेत्ततः । हस्तप्रमाणं पद्मं तु मंडलस्य प्रकीर्तितं । द्वा-
राणि स्यार्द्धहस्तानि कर्णिकाकेसरोज्वलं । सितं रक्तं च पीतं च कृष्णं हरितमेव च । शालिचूर्णैश्च कोष्ठभेदो-
रिद्रैर्हरिद्राद्वैः । कुर्यात्तथाजने चूर्णैर्जो मंडलहृदये । पश्चात्तत्समारभ्य तात्प्रपश्चिमगामिनी । पश्चिमद्वा-
रमारभ्य पातहस्तं विनिर्दिशेत् । प्रत्येकं वारमध्ये तु पद्मं चैवाष्टपत्रकं । कुर्यान्मंडलभागस्तु चूर्णैरेव पृथक्
पृथक् चूर्णैर्मंडलं कृत्वा सूत्राणुत्सारयेत्ततः । उत्सार्य सूत्रं प्रथमं मंडलं पूरयेत्ततः । भवनायनमः इति ततो द्व-
लं वियोजयेत् । सव्यावलेवहस्तं तु रजःपातं समाचरेत् । मध्यमानामिकांगुष्ठैरुपरिष्टाद्यथेच्छया । अधोमु-
खांगुलिं कृत्वा पातयेच्च विचक्षणः । समरेखास्तु कर्तव्या अविच्छिन्नाः पुंजवर्जिताः । संसक्तं विषमं स्थूलं विष-
पिर्विनिपीडाविमिश्रिते । विंडभिर्भयमाप्नोति धातुपतान्न संशयः । हस्वांगे वार्थहानिः स्याच्छिन्ने याम्यमरणं भ-
वेत् । वियोगो वा भवेत्स्यात्स्वदुःखस्तनस्तथा । अविदितालिखेद्यस्तु मंडलं तु यथेच्छया । सर्वदोषानवाप्नोति
यदोषाः सर्वभाषिताः । सितसर्षपहर्वीया गेहाकार्यं प्रमाणतः । विमलं विजयं भद्रं विशालं शुभदं शिवं वर्द्ध-
मानं च देवं च रानातं कामदायकं । रुचकं सलिकाख्यं च द्वादशैते तु मंडलाः । यथास्थानं यथायत्तं योजनी-
यानि च तानि । सर्वत्र मध्यमानेन पीठपार्श्वं स्वरात्मरैः । पीठपथारागर्णाय निर्मिता विश्वकर्मणा । कलाक-
लाम्नेवानामर्पितास्तेषु पृथक्पृथक् । यतः कमात्तेकलशा लग्नस्ते परिकीर्तिताः । नवैव कलशाः प्रोक्ता नाम-
लान्निबोधत । गायोपगाह्णो महनः शुद्धवध्यस्तथापरः । मनोहरो बलभद्रश्च विजयस्तत्तु मोषकः । इंद्रियघ्नो
गुणविजयो नवमः परिकीर्तितः । तेषामेदकमात्रूप नवनामानियानि तु । त्राणतान्यघरागपेवशांति दानि सदैव हि ।
सितीद्रः प्रथमः प्रोक्तो द्वितीयो मलकंभवः । पावनामीतनो वैश्वयजमान स्ततः परे कोषमंभवनामात घष्ठः स-

पमकृत्य ततोपनीय गात्रमात्रकेवलं वस्त्रमेव च कलशैः स्नापयेद्भूपं पुष्पस्नानाम्बुपूरितैः एभिर्मन्त्रैर्नरश्रेष्ठ
तत्वमन्त्रार्थसाधकैः सुरास्त्वामभिषिंचन्तु ये च सिद्धाः पुरातनाः ब्रह्मा विष्णुश्च रुद्रश्च साध्याश्च मरुतां गणाः
आदित्या वसवो रुद्रा अश्विनौ च भिषग्वरौ अदितिर्देवमाता च स्वाहा लक्ष्मीः सरस्वती कीर्तिर्लक्ष्मीर्धृतिः
श्रीश्च सिनीवाली कुहूस्तथा दितिश्च सुरसा चैव विनता कद्रुरेव च उत्ताणि च बृहती निपत्नी द्वोगात्र
संथयः देवपत्न्यश्च याः प्रोक्ता देवमातर एव च सर्वास्त्वामभिषिंचन्तु भाश्चाप्सरसां गणाः संवत्सराणि
मेघाश्च कालस्यावयवास्तथा वैमानिकाः सुरगणा मनवः सागरैः सह सरितश्च महानागाः नागाः किंपु
रुषास्तथा वैखानसा महाभागा द्विजा वैहायनाश्च ये सप्तर्षयः सदाराश्च ध्रुवस्थानानि वै सदा मरीचि
रत्रिः पुलहः पुलस्त्यः क्रतुरंगिराः भृगुः सनत्कुमारश्च सनकोऽथ सनंदनः सनातनश्च दक्षश्च जैगीषव्यो
भिनंदनः एकतश्च द्वितश्चैव त्रितो जाबालिकाश्यपौ दुर्वासा दुर्विनीतश्च कण्वः कात्यायनस्तथा मार्कंडे
योदीर्घतपाः शुनःशेपो विदूरथः और्वः संवर्तकश्चैव च्यवनोऽत्रिः पराशरः द्वैपायनो यवक्रीतो देवरात
सहानुजः एते चान्ये च बहवो वेदव्रतपरायणाः सशिष्यास्त्वाभिषिंचन्तु सदाराश्च तपोधनाः पर्वतास्तरवो
वल्यः पुण्यान्यायतनानि च प्रजापतिर्दितिश्चैव गावो विश्वस्य मातरः वाहनानि च दिव्यानि सर्वे लोका
श्चराचराः अग्नयः पितरस्तारा जीमूता खं दिशो दिशः तोये त्वामभिषिंचन्तु सर्वोत्पातनिवर्हणैः इत्येवंपु
भैरेतैर्मन्त्रैर्दिवं तथापरैः आपो हिष्ठा हिरण्यपतिः शाभवेति सुरेति च मानस्तोकेतिमन्त्रेण त्वायुद्धारेत्यनेन
च सर्वमंगलमंगल्येश्रीश्चतेश्रह्योगिभिः इत्येवं स्नानमावर्त्य गात्रमावर्त्य कंबलैः सर्वमंगलमन्त्रेण वस्त्रं
कार्पासिकं धियात् आचम्य च ततो देवान् गुरून् विप्रांश्च पूजयेत् ध्वजं छत्रं चामरं च घंटांश्चशस्त्राणि वाजांस्त
था मन्त्रजप्तान् धारयेद्व्रती ततो गच्छेद्धुताशने तत्र गत्वा वह्निमध्ये वह्निं तं वीक्ष्य पार्थिवः स्वनिमित्तानि वह्नेः
श्चलक्षयेत्तत्र वेदिभिः देवज्ञकंचुकामात्यवंदिपौरजनैर्वृतः वादित्रघोषैस्तत्पुण्यैस्तथा तौर्यत्रिकैः शु
भैः कृत्वा शेषं पुनः शांतिमाशीर्वाद्यं च वै द्विजान् प्रणिपत्य विधिवद्दक्षिणां कनकैर्युतः यान्यानि वो
पवासोऽस्मिन् हुत्वा कृत्वा विसर्जनं ततः प्रोक्षजलैः सर्वानमात्यादीन् पुरोहितः सेचयेच्च हस्त्यश्वं चापि
सराष्ट्रकं एवं कृत्वा नृपः पश्चात् त्रिरात्रं संयतो भवेत् मांसमैथुनहीनश्च कुर्यान्मंगलसेवनं पुष्यनक्ष
त्रयुक्तात् तृतीया यदि लभ्यते तस्यां सप्त्या सदा देवीं चंडिकां शंकरेण हि यां चालिका विवाहार्थैः
शिखूर्नां कौतुकैस्तथा वैवाहिकेन विधिना मोदयेच्चंडिकां शिवां चतुष्पथेषु सर्वेषु देवदेवगृहेषु च
पताकाभिरलंकारं कुर्याद्देवीगृहे तथा एवं कृत्वा महाशांतिं यागं पुष्याभिषेचने चतुर्वर्गैः समं राजा भा
र्याभिर्लनयैः सह राज्यमंडलसंयुक्तः परत्रेह न सीदति नातः परतरा शांतिर्नातः परतरः स्तवः नातः परतरो
यत्नो नातः परतरं शिवं अनेनैव विधानेन नृपतेरभिषेचने युवराज्याभिषेकं च कुर्याद्राजपुरोहितः
नृपाभिषेककरणमादौ यदि समाचरेत् अनेनैव विधानेन स्थिरं स्यात्तन्नृपस्पदा सर्वयज्ञः सपुष्टिदः शक्रा
र्थं ब्रह्मणा पुरा एवं यत्तन्नृपो यष्टा परत्रेह न सीदति इति कालिकापुराणे और्वसगरसंवादे पुष्यस्नान
विधिः ॥ मकरसंक्रांतौ कूर्मपुराणादानं नारदीये यो दद्यादयने कौर्म्यं हेमकूर्मसमन्वितं गो
प्रदानसहस्रस्य स फलं प्राप्नुयान्नरः इति कूर्मपुराणादानम् ॥ स्वस्तिश्रीरणवीरसिंहनृपमणिः पा
लोवदान्यायशालीनानाशास्त्रविचारसारसविलसद्धृदंतरालकः धर्माधर्मविभागकृद्यदुपतेः पादांबु
जार्चारतो जीयात्सकलत्रमित्रसहितः संपालयन्क्ष्मां चिरं । रणवीरसिंहभूपेन कारिते कृत्यसागरे श्री
भूतरसपक्षत्यांतरस्फोरत्नसमुच्चयः २ ॥ संपूर्णसमाप्तम् ॥
शुभंभूयात् ॥ ॐ ॥ तत्सद्ब्रह्म ॥

तत्र शैवाचेत्स्नानमात्रपरं अथ प्रयागमहिमा मत्स्यपुराणे षष्टितीर्थसहस्राणि षष्टितीर्थशतानि च
माघेमासि गमिष्यन्ति गंगायमुनसंगमे गवांशतसहस्रस्य सम्यग्दत्तस्य यत्फलं तत्फलं माघमासे
तत्र्यहं स्नानस्य तद्भवेत् सितासिते तु यत्स्नानं माघेमासि युधिष्ठिर नतेषां पुनरावृत्तिः कल्पकोटिश
तैरपि माघमासमुषित्वा नेकृत्वा दांपत्यमर्चयेत् भोजयित्वा यथाशक्ति वस्त्रमाल्यविभूषणैः
सर्वलोकेवसेत्कालं स्वर्गेतत्र वपुष्मान् अथ व्रतानि माघेमासि तु संप्राप्ते यः कुर्यान्नक्तभोजनं पि
ण्याकं सघृतं मिष्टं भुंजानः संयतेंद्रियः उपवासं च सप्तम्यां पक्षयोरुभयोरपि कृताभिषेकं सप्तम्यां कु
र्याच्छ्राद्धं नराधिप गां च दत्वा दिने श्यामवर्णां नीलसन्निभां गत्वादित्यपुरं रम्यं भोगान्भुंक्ते यथेप्सि
तान् अत्र नक्तभोजने मासव्यापि पिण्याकं तिलकल्कः नीलसन्निभामिंद्रनीलवर्णाम् तथा च माघे
मासे च संप्राप्ते यः कुर्यान्नक्तभोजनम् कृशरं घृतसंयुक्तं भुंजानः संयतेंद्रियः उपवासपरो द्वादश्यां पक्ष
योरुभयोरपि पूजयेत्त्र्यंबकं भक्त्या हुत्वाग्नौ शृंगचूर्णतः इंगुमधुजंबीरं त्र्यंबकमिति नामतः गंधपु
ष्पोपहारैस्तु सर्वैः केरतु पूजयेत् धूपं कृष्णागुरुं दद्यान्नैवेद्यं दद्याच्च माहिषं धान्यसिद्धार्थकाः स्नाने प्राश
ने च यवाः स्मृताः एवं माघमासे तु पूजयेत्त्र्यंबकं नृप दिव्यं विमानमारूढः स्वर्गलोके महीयते मा
घकृष्णप्रतिपदायां तिथित्वेन वह्निपूजनं प्रतिपद्यग्निपूजा स्यादिति सामान्यनिर्णयोक्तेः माघ
कृष्णानामारंभोपि विधेय इति माघकृष्णद्वितीयायां तु विशेषकृत्याभावात्तिथिपत्वेन विधिपूजन
मुक्तं बृहस्पतौ द्वितीयायां विधिवद्विधिपूजनं कृत्वा नक्तं समश्नीयाल्लभते भूतिमुत्तमामिति ब्रह्मपू
जनं चात्र गायत्र्या पौराणमंत्रैर्वा कार्यं माघकृष्णतृतीयायां सौभाग्यसुंदरीव्रतांगत्वेन श्रीनाम्ना गौ
रीपूजनव्रतं लवंगप्राशनं मौक्तिकोदकप्राशनमिति माघकृष्णचतुर्थ्यां संकष्टनाशनव्रतं नारदी
ये माघकृष्णचतुर्थ्यां तु संकष्टव्रतमुच्यते तत्रोपवासं संकल्प्य प्रातर्नियमपूर्वकं चंद्रोदयमभिव्या
प्य तिष्ठेत्प्रयतमानसः ततश्चंद्रोदये प्राप्ते मृण्मयं गणनायकं विधाय स्थापयेत्पीठे सायुधं च सवाहनं
उपचारैः षोडशभिः समभ्यर्च्य विधानतः मोदकं चापि नैवेद्यं सगुडं तिलकेदकं ततोर्घ्यं ताम्रजे पात्रे
रक्तचंदनमिश्रितं सकुशं च सदूर्वं च पुष्पाक्षतसमन्वितं सतंडुलं च सदधि कृत्वा चंद्राय दापयेत् ग
गनार्णवमाणिक्य चंद्र दाक्षायणीपते गृहाणार्घ्यं मया दत्तं गणेशप्रतिरूपक एवं दत्वा गणेशाय
दिव्यार्घ्यं पापनाशनं शक्त्या संभोज्य विप्रांश्च स्वयं भुंजीत वाग्यतः एवं कृत्वा व्रतं सम्यक् संकष्टाख्यं शु
भावहं समृद्धो धनधान्यैः स्यान्न च संकष्टमाप्नुयात् अथ कथा शिवं शांतं नमस्कृत्य उमादेवीं सरस्वतीं
गणाधिपं नमस्कृत्य सर्वदेवजगद्गुरुं वैशंपायन उवाच उद्यते भारते युद्धे कृतशोको युधिष्ठिरः उवाच
वाक्यं धर्मात्मा कृष्णं देवकिनंदनं युधिष्ठिर उवाच किं करोमि महाहं युद्धे युद्धं भवति माधव भीष्मकर्णौ
महायोधौ कथं मम जयो भवेत् श्रीकृष्ण उवाच विनायको महानीशो गणेशः शिवनंदनः तस्य पूजा
विधिं कृत्वा जयो भवति निश्चितं युधिष्ठिर उवाच शिवः शंभुर्महायोगी उमादेवी पतिव्रता कथं तयोः
पुत्रजन्म संशयो मे जनार्दन श्रीकृष्ण उवाच साधु पार्थ महाबाहो यत्त्वया परिशंकितं तत्कथां कथ
यिष्यामि लोकानां हितकारिणीं प्रातःस्नानादिकं कुर्याद्गंगातीरे दिने दिने सदा गच्छति गौरीशः
स्नातुं गौर्यापि चैकदा उत्थाय देहमलं तेन चक्रे स्वतनोर्मलपुद्गलं शरीरमलपिंडं तु साग्रहीत्वा करा
भुजे नराकारमसौ चक्रे दिव्यरूपमनुत्तमं स उत्थाय ब्रवीद्देवीं बद्धांजलिपुटस्तदा किंकरो
मि करवाणि मातराज्ञां प्रदेहि मे तदाकर्ण्य वचस्तस्य सहर्षमवदद्विभ तस्य वाचं तदा देवी प्रतिहारं
प्रकल्प्य च पार्वत्युवाच शृणु वाक्यं पुत्र मम यथाज्ञां प्रकरोमि ते नैवाभ्यंगमलोद्भूतपुत्रोसि
मम देहजः पुरुषो नैव मे कश्चिदागच्छेत्सदनं मम अथ स्नात्वा जगाम यः महादेवो गृहं निजं

सप्तमी व्रतं तेन लभेद्यावत्सुवर्णकमलान्वितं शय्यां सोपस्करां तद्वत्कपिलां च यशस्विनी अनेनावि
धिना यस्तु वित्तशाठ्यविवर्जितः विशोकषष्ठीं कुरुते स याति परमां गतिं यावज्जन्मसहस्राणि साग्र
कोटिशतं भवेत् तावन्न शोकमभ्येति रोगदौर्गत्यवर्जितः यं यं प्रार्थयते कामं तं तं प्राप्नोति पुष्कलं
निष्कामं कुरुते यस्तु स परं ब्रह्म गच्छति यः पठेच्छृणुयाद्वापि विशोकषष्ठीं शोकविनाशिनीं सोपीन्द्रलोक
माप्नोति न दुःखी जायते क्वचित् ये भास्करं दिनकरं करवीरपुष्पैः संपूजयंत्यभिनमंति कृतोपवासाः
ते दुःखशोकरहिताः सहितास्सुहृद्भिर्भूमौ विहृत्य रविलोकमवाप्नुवंति इति भविष्योत्तरे माघशुक्लवि
शोकषष्ठीव्रतं माघशुक्लसप्तम्यां सर्वाप्तिसप्तमीव्रतं हेमाद्रौ भविष्ये कृष्णपक्षे तु माघस्य सर्वाप्तिस
प्तमीं शृणु यामुपोष्य समाप्नोति सर्वान्कामान्सुमानिह षष्ठ्यामुपवासः कर्तव्यः सूर्यपूजा यथाविधि व्र
तान्ते अर्कसमिदाज्यादिभिः सूर्यमंत्रेण होमं कृत्वा भास्करप्रतिमां सहितां पीठशय्यादिधेनुसहितं आ
चार्याय संपूज्य प्रतिपादयेत् ब्राह्मणान्यथाशक्ति सदक्षिणं मदनेन भोजयित्वाशिषो गृह्णीयादि
ति सर्वाप्तिसप्तमीव्रतम् माघकृष्णाष्टम्यां मांसेन श्राद्धमुक्तं ब्रह्मपुराणे कृष्णाष्टम्यां तु माघस्य
मांसैः श्राद्धं महाफलं पितृभिः प्रार्थितं एवं तस्मात्तन्न कारयेत् अत्र वह्निपुराणोक्तं कृष्णाष्टमीव्रतं
तत्र गौरीशयोः पूजा प्रतिमासं च ते पूजां ये करिष्यंति मानवाः मम चैवाखिलान्कामानाप्नुवंति न संश
य इति माघकृष्णनवम्यामन्वष्टकाश्राद्धं तच्च माघस्य सप्तम्यष्टमीनवमीषु पूर्वेद्युः कार्यमिति घृतेनदति
श्राद्धगणाभिधानात् माघकृष्णदशमी उद्योतकल्पादि तत्र श्राद्धादि कल्पादितिथिगणोक्तमक्षय
फलदं भवति माघकृष्णैकादशी षट्तिला तदुक्तं नारदीये माघस्य कृष्णैकादश्यां षट्तिलां समुपो
ष्यैव स्नात्वा दत्वा तर्पयित्वा हुत्वा भुक्त्वा समर्च्य च तिलैरेव द्विजश्रेष्ठ द्वादश्यां प्रातरेव हि वैकुंठं सम्य
गभ्यर्च्य सर्वदेवोपचारकैः विप्रान्संभोज्य विसृजेद्दत्वा तेभ्यश्च दक्षिणां एवं कृत्वा व्रतं विप्र विधिनात्र
समाहितः भुक्त्वेह वांछितान्भोगानंते विष्णुपुरं व्रजेत् अस्याः कथा भविष्योत्तरे युधिष्ठिर उवाच सा
धु कृष्ण जगन्नाथ आदिदेव जगत्पते स्वेदजाश्चांडजाश्चैव उद्भिज्जाश्च जरायुजाः तेषां कर्ता त्वमेवैकः
पालकः संहर्ता तथा माघस्य कृष्णपक्षे तु का वा ह्येकादशी भवेत् किंनामास्या विधिः को वा चैतद्वि
स्तरतो वद श्रीकृष्ण उवाच शृणुष्व राजशार्दूल कृष्णमाघस्य या भवेत् षट्तिला नाम सा ख्याता स
र्वपापप्रणाशिनी षट्तिलायाः कथां पुण्यां शृणु पापहरां परां यां पुलस्त्यो मुनिश्रेष्ठो दाल्भ्याय
उवाच ह दाल्भ्य उवाच मर्त्यलोकमिमं प्राप्य पापं कुर्वंति जंतवः ब्रह्महत्यादिकं स्तेयं यथा जीववधा
दिकं परद्रव्यापहारं वा ज्ञानेन महता वृताः अल्पायासेन भगवन्दानेन च व्रतेन च नरकं पापानि
न यांति येन तद्वक्तुमर्हसि पुलस्त्य उवाच साधु पृष्टं त्वया ब्रह्मन् जनानां हितकाम्यया यन्न कस्यचि
दाख्यातं ब्रह्मरुद्रादिदेवतैः तदहं संप्रवक्ष्यामि सावधानमनाः शृणु देवदेवं च संस्मृत्य पादौ प्रक्षा
ल्य वारिणा भूमावपतितं गृह्य गोमयं तत्र सुव्रत तिलान्प्रक्षाल्य तस्मात्तु पिंडिकां चैव कारयेत् सया
ति वेलं लोकं नात्र कार्या विचारणा तपोमासे च संप्राप्ते आषाढर्क्षं भवेद्यदि मूलं वा कृष्णपक्षस्य
चैकादश्यां तथा न च नियमं च प्रगृह्णीयाच्चैकादश्यां विधिं शृणु देवदेवं समभ्यर्च्य स्नातः प्रय
तः शुचिः कृष्णनामानि संकीर्त्य भक्तियुक्तो भवेन्नरः रात्रौ जागरणं कुर्याद्रात्रौ होमं च कारयेत् अर्च
येद्देवदेवेशं शंखचक्रगदाधरं चंदनागुरुकर्पूरनैवेद्यैः शर्करादिभिः कूष्मांडैर्नारिकेलैश्च ह्यथ
वा बीजपूरकैः एतेषामप्यलाभे तु क्रमुकैः फलादिभिः अर्घ्यं दद्याद्विधानेन पूजयित्वा जनार्द
नं कृष्ण कृष्ण कृपालो त्वमगतीनां गतिर्भव संसारार्णवमग्नानां प्रसीद पुरुषोत्तम जितं ते पुंडरी
काक्ष नमस्ते विश्वभावन सुब्रह्मण्य नमस्तेस्तु महापुरुष पूर्वज गृहाणार्घ्यं मया दत्तं लक्ष्म्या सह

गम्यते ततस्तु पूजयेद्विप्रानुदकुंभांश्च दापयेत् छत्रोपानत्समायुक्तान् कृष्णो मे प्रीयतामिति कृष्णा
धेनुः प्रदातव्या यथाशक्ति द्विजन्मने तिलपात्रं द्विजश्रेष्ठ दद्यात्कुर्यात्प्रदक्षिणां स्नानप्राशनयोस्तात
तथा कृष्णतिलानि च तिलाः प्ररोहा जायंते यावत्संख्यास्तिला द्विज तावद्वर्षसहस्राणि स्वर्गलोके म
हीयते तिलस्नायी तिलोद्वर्ती तिलहोमी तिलोदकी तिलदाता च भोक्ता च षट्तिलाः पापनाशनाः
दाल्भ्य उवाच एतद्व्रतस्य भगवन्कीदृशं फलमीरितं सोपाख्यानं मम ब्रूहि यदि तुष्टोसि मे नच पुल
स्त्य उवाच शृणु ब्रह्मन्यथा वृत्तमाख्यानं कथयामि ते मर्त्यलोके पुरा त्वासीन्नारदी नाम ब्राह्मणी ब्र
ह्मचर्यरता नित्यं देवपूजारता सदा मासोपवासनिरता कृष्णभक्तिपरायणा तया संशोषितो देहउ
पवासैर्द्विजोत्तम देवानां ब्राह्मणानां च कुमारीणां विशेषतः गृहाणि संप्रयच्छंती सर्वकालं महा
सती अतिकृच्छ्ररता सा हि सर्वकालं तु वै द्विज न दत्ता भिक्षवे भिक्षा ब्राह्मणा न च तर्पिताः ततः
कालेन महता मया वै चिंतितं द्विज शुद्धमस्याः शरीरं हि व्रतकृच्छ्रेण संशयः अर्जितो वै स वै लोकः
कामशोषेन चानया न दत्तमन्नदानं हि येन तृप्तिः परा भवेत् एवं ज्ञात्वा तदा कृष्णो मर्त्यलोकमुपागतः
कापिलं रूपमास्थाय तस्या भिक्षामयाचत अवोचद्ब्राह्मणी सा तु सादरं मधुरं वचः कस्मात्त्वमागतो ब्र
ह्मन्वक्तुमर्हसि शोभन पुनरेव च तेनोक्तं देहि भिक्षां महासति ततः कोपेन महता मृत्पिंडस्ताम्रभाजने
क्षिप्तो वाडवया ब्रह्मन्पुनः स्वर्गं गतो हरिः ततः कालेन महता तापसी सा महाव्रता स्वदेहात्स्वर्गमायाता
ब्रह्मचर्यप्रभावतः मृत्पिंडिकाप्रदानेन गृहं प्राप्तं मनोरमं संजातं चैव विप्रर्षे धान्यराशिविवर्जितं गृ
हे यावन्निरीक्षेत नापश्यत्तत्र किंचन तावद्गृहाद्विनिःक्रांता कश्चित्तत्रागतो द्विजः क्रोधेन महतावि
ष्टा वचनं चेदमब्रवीत् मया व्रतैश्च कृच्छ्रैश्च उपवासैरनेकधा पूजयाराधितो देवः सर्वलोकस्य भा
वनः नैवात्र दृश्यते किंचिद्गृहे मम जनार्दन ततस्त्वोक्तं रमेशेन गृहं गच्छ पतिव्रते आगमिष्यंति
सुतरां कौतूहलसमन्विताः देवपत्न्यस्त्वां द्रष्टुं विस्मयाभिसमन्विताः द्वारं नोद्घाटनीयं हि तासां
भद्रे तपस्विनि षट्तिलाव्रतजं पुण्यं याचनीयं त्वया न चेत् एवमुक्त्वा च हरिणा गता सा मानुषी तदा
अथांतरे समायाता देवपत्न्यस्तपोनिधे ताभिश्च कथितं तत्र त्वां द्रष्टुं हि समागताः द्वारमुद्घाटनीयं
त्वां नैव पश्याम शोभने मानुष्युवाच यदि द्रष्टुं मया कार्यं सत्यं वक्ति विशेषतः षट्तिलाव्रतजं पु
ण्यं द्वारमुद्घाटकारणं एकापि तत्र व्यर्थं न ददाति महाव्रतं अन्यया कथितं तत्र द्रष्टव्या मानुषी
मया दत्तं पुण्यमर्थे तस्यै षट्तिलाव्रतसंभवं ततो द्वारं समुद्घाट्य दृष्टा ताभिश्च मानुषी न देवी न
च गंधर्वी नासुरी न च पन्नगी दृष्टपूर्वा हि सा नारी यादृशी सा द्विजोत्तम रूपकांतिसमायुक्ता तत्क्षणा
न्प्रत्यपद्यत धनं धान्यं च वस्त्रादि रूपं लावण्यमेव च सर्वं गृहं तु संपूर्णं षट्तिलायाः प्रसादतः अ
तितृष्णा न कर्तव्या वित्तशाठ्यं विवर्जयेत् आत्मवित्तानुसारेण तिलान्वस्त्राणि दापयेत् लभते चै
वमारोग्यं नरो जन्मनि जन्मनि दारिद्र्यं न च संक्लेशं न च दौर्भाग्यमेव च न भवेद्वै द्विजश्रेष्ठ षट्तिला
या उपोषणात् अनेन विधिना विप्र तिलदानान्न संशयः मुच्यते सर्वपापेभ्यो ह्यनायासेन मानवः दा
नेन च विधिना दत्तं सर्वपातकनाशनं नार्थव्ययो न चायासः शरीरे मुनिसत्तम ईदृशं तु व्रतं राजन्ये
कुर्वंति नराः सदा न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि माहात्म्यश्रवणादस्याः सर्वपापक्षयो भ
वेत् इति भविष्योत्तरे माघकृष्णैकादशी षट्तिलाव्रतकथा माघकृष्णद्वादश्यां तिलद्वादशीव्र
तं नारदीये माघे तु कृष्णद्वादश्यां यमो हि भगवान्पुरा तिलानुत्पादयामास तपः कृत्वा सुदारुणं
तस्मामुपोषितः स्नानं तिलैस्तु स्नापयेद्धरिं भविष्योत्तरे तिलतैलेन दीपांश्च दद्याद्देवगृहेष्वपि निवेद
येत्तिलानेव होतव्याश्च तिलास्तथा तिलान्दत्वा च विप्रेभ्यो भक्षयेच्च तिलानपि तत्रैव युधिष्ठिर उवा

च अल्पायासेन भगवन्दानेनानेन माधव पापं प्रशममायाति येन तद्वक्तुमर्हसि श्रीकृष्ण उवाच शृणु पार्थ परं पुण्यं पाहा द्वादशी पापनाशिनी यामुपोष्य परं पुण्यमाप्नुयाच्छ्रद्धयान्वितः माघमासे तु संप्राप्ते आषाढं ते भवेद्यदि मूलं वा कृष्णपक्षस्य द्वादश्यां नियमं ततः गृह्णीयात्पुण्यफलदं विधानं तस्य मे शृणु देवदेवं समभ्यर्च्य स्नातः संप्रयतः शुचिः कृष्णनाम्नानुसंस्तूय एकादश्यां महामते उपोषितो द्वितीयेह्नि पुनः संपूज्य केशवं संस्तूय नाम्ना तेनैव कृष्णाख्येन समाहितः दद्यात्तिलांश्च विप्राय कृष्णो मे प्रीयतामिति स्नानप्राशनयोः शस्तास्तथा कृष्णतिलान्नृप विष्णुप्रीणनमन्त्रोक्तं समाप्तिव्रतपारणं कृष्णकुंभाँस्तिलैः सार्द्धं पक्वान्नेन च संयुतान् छत्रोपानद्युगैर्वस्त्रैः संवीतै रत्नगर्भिणीः ब्राह्मणानां प्रदेयास्तोय यावन्मात्रं संख्यया तिलशस्तो जायंते यावतस्तिलान्नृप तावद्वर्षसहस्राणि दाता स्वर्गे महीयते आरोग्यं जयनेनित्यं राजञ्जन्मनि जन्मनि नांधो न बधिरश्चैव न कुष्ठी न वकुत्सितः भवत्येतामुपोषित्वा तिलाख्या द्वादशीं नरः अनेन विधिना राजंस्तिलदानान्न संशयः मुच्यते पातकैः सर्वैः स्वल्पायासेन भारत दानं विधिस्तथा श्रद्धा सर्वपातकनाशनम् नार्यः प्रभूता नायासः शारीरं नृपसत्तम सर्वोपभोगनिरतो ह्यपरे दश्याः स्नानः परे तिलनिवेदनकृत्यशीलः दत्वा तिलान्द्विजवराय विराजके तु संपूज्य पूज्यपदवीमुपैति मर्त्यः

इति भविष्योत्तरे माघकृष्णतिलद्वादशीव्रतं माघकृष्णत्रयोदश्यां पत्त्रत्रयोदशीव्रतं ॥

तत्र नक्तभोजनव्रतं प्रदोषे शिवपूजनं प्रागुक्तमिति माघकृष्णचतुर्दश्यामपि यमतर्पणं यमोद्देशेन तिलदानं तदुक्तं हेमाद्रौ अनर्काभ्युदिते काले माघकृष्णचतुर्दशी स्नातः संतर्प्य च यमं सर्वपापैः प्रमुच्यते यमाय धर्मराजाय मृत्यवे चांतकाय च वैवस्वताय कालाय सर्वभूतक्षयाय च इति मन्त्रनामभिर्यमपूजां होमादि सहितं पितृभ्यो ब्राह्मणेभ्यश्च दत्वा कृशरान्नमपि दत्त्वा स्वयमपि कृशरान्नं भुंजीत तदुक्तं ब्रह्मपुराणे माघकृष्णचतुर्दश्यां विष्णोर्देहान्मरीचयः कृशरा इति संजाताः सर्वपापक्षयावहा इति ततो विसृज्य देवं पुष्पैः कृशरं भोजयेत्स्वयमित्यंते अत्र तारारात्रिव्रतमिति केश्चिदुक्तं तच्च शिवरात्रिव्रतवदिति मूलं संगतोऽस्त्येवं माघ्याममावास्यायां महोदययोगविशेषो मदनरत्ने भारते उक्तः अमार्कपातश्रवणैर्युक्ता चेत्पुष्यमाघयोः अर्द्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समइति निर्णयामृते तु दिवैव योगः शस्तोयं न तु रात्रौ कदाचनेत्यर्द्धश्लोकमधिकं पठंति अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः अर्द्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः निष्पर्द्धोदयसंज्ञस्तु महानर्द्धोदयो दिवा पुष्यमाघयोरिति वीरमित्रोदये पाठः पुष्यमाघयोरिति पुष्यमघानक्षत्राभ्यां युक्तयोः पौर्णमास्योर्मध्यवर्तिन्याममावास्यायामर्द्धोदययोग इति पोडशनिर्णीतत्वान्नसिद्धांतः किंचिन्न्यूनो महोदयस्त्वपि केचित्पठंति क्वचित् सोमवारे सति महोदयो नान्यवारे इति पठंति अथात्र कृत्यमुक्तं स्कंदपुराणे अर्द्धोदये तु संप्राप्ते सर्वं गंगासमं जलं शुद्धात्मानो द्विजाः सर्वे भवेयुर्ब्रह्मसन्निभाः यत्किंचित्क्रियते दानं सर्वं मेरुसमं भवेदिति अत्र पायसपूरितसुवर्णकांस्यादिपात्रदानमुक्तं तत्रैव चतुःषष्टिपलं सुवर्णममत्रं तत्र कारयेत् चत्वारिंशत्पलं वापि पंचविंशतिरेव वा अमत्रं पात्रं अमत्रं च भाजनमित्यभिधानात् तच्च सुवर्णादिधातुघटितं यथाविभवं बोध्यमिति वीरमित्रोदये निर्णयसिंधौ कृत्यरत्नावल्यां तु कांस्यमयमित्युक्तं तया एवं सुघटितं कार्यं कांस्यभाजनमुत्तममिति पाद्मोत्तरसंवादात् पंचविंशतिरिति पंचविंशतिपले निधाय पायसं तत्र पद्ममष्टदलं लिखेत् तत्पार्श्वे पद्मस्य कर्णिकायां तु कर्षमात्रं सुवर्णकं तदभावे तदर्द्धं तदर्द्धं वा तत्कारयेत् भूमौ तंडुलैः शुभ्रैः पद्ममष्टदलं शुभं अमत्रं स्थापयेत्तत्र ब्रह्मविष्णुशिवात्मकं तत्पार्श्वे तेषां पूजां तु कर्तव्या स्वनामभिः सुशोभनैः वस्त्रादिभिरलंकृत्य ब्राह्मणाय निवेदयेत् तत्र मंत्रः सुवर्णपायसामत्रं यस्मादेतत्त्रयीमयं आवयोस्तारकं यस्मात्तद्गृहाण द्विजोत्तम

समुद्रमेखलां पृथ्वीं सम्यग्दत्वा तु यत्फलं तत्फलं लभते मर्त्यः कृत्वा दानमसंत्रकं अमंत्रके पात्रदाने
श्रावयोत्त्वारकामिति प्रतिग्रहदोषाभावउक्तः महोदयं चाह ब्रह्माण्डपुराणे पानस्थानः एवं भाग
स्वमायाः श्रवणमध्यं भास्करस्योदये च भानोर्वारे पुण्यमहोदयः स्यात्सां देवारेतन्महा एवं माकृः
महा एवं महोदयं प्राकृः अमदपिस्कंदपुराणे महोदयव्रतं अगस्त्य उवाच भगवंस्त्वत्प्रसादेन श्रुतोयं
व्रतविस्तरः महोदयं त्वमेव ब्रूहि दुर्लभं सचराचरे जीवितं प्राणिनां पुण्यं यदि चेहदसि प्रभो कथं
कार्यं कृते किं स्यात्फलं कथय षण्मुख स्कंद उवाच श्रूयतां पुण्ययोगोयं दुर्लभो महोदयाह्वयः दे
वतीर्थसुरर्षीणां दुःप्रापः सर्वकामदः माघमायां व्यतीपाते आदित्ये विष्णुदैवते महोदयं तमि
त्याहुः सहस्रार्कग्रहैः समं पुराकृतं वसिष्ठेन जामदग्न्येन सुव्रत सनकाद्यैर्मनुष्यैश्च दृष्टं भवति कुंभ
ज दानानां यज्ञतीर्थानां फलं येन कृतं भवेत् ससागराधरा तेन सप्तद्वीपसमन्विता दत्ता स्यात्सर्व
भावेन येन वा महोदयः कृतः गंगागयाप्रयागेषु पुष्करे वितयेतथा मानसादिषु तीर्थेषु यत्पुण्यं स्नानदानतः
तत्समं वा नवा विप्र व्रतेनानेन कुंभज अश्वमेधायुतं चेष्टमिष्टापूर्तं च तैः कृतं महोदयं कृतं येन विधिदृ
ष्टेन कर्मणा वाचि सत्यं गृहे लक्ष्मीः संततिश्चानपायिनी आयुर्यशो हि विपुलं व्रतकर्ता फलं लभेत् इंद्रा
ग्नियमलोकेषु निर्ऋतेरप्पापतेः वायोः कुबेरस्येशस्य लोकेषु सुकृती प्रभो वसेत्संदार्कलोकेषु
लोकपालैश्च सेवितः गोकोटिदानाद्यत्पुण्यं देवतीर्थनिवासिनां महोदयस्य पुण्यस्य कलां नार्ह
ति षोडशीं भूलोकाधिपतिश्चैव भुवर्लोकाधिपस्तथा स्वर्लोके पूजनानां च तपोलोकस्य चेश्वरः
महर्लोके वसेन्नित्यं यावदिंद्राश्चतुर्दश ततो हिरण्यगर्भस्य पुरुषो व्रतकारकः महोदयप्रभावेन ब्र
ह्मलोके वसेन्नरः तथा मानेन तस्याथ रुद्रमूर्तिधरो भवेत् शिवलोके गणैः पूज्यो देवराजसमन्वितः
वसेद्वैकुण्ठे मानेन व्रतस्यास्य प्रभावतः ततो विष्णुस्वरूपेण त्रैलोक्याधिपतिर्भवेत् शंखचक्रग
दाधारी वनमाली हरिः स्वयं व्रतप्रभावाल्लक्ष्मीशो देवो नारायणो भवेत् अगस्त्य उवाच स्कंद केन वि
धानेन कर्तव्यं व्रतमुत्तमं महोदये मनुष्याणां जीवितं दुर्लभं भुवि स्कंद उवाच कृते कृतं वसिष्ठेन त्रेता
यां रघुणा कृतं द्वापरे धर्मराजेन कलौ प्रोक्तं दिवेशेन अन्यैर्देवमनुष्यैश्च देवैश्च द्विजसत्तम कृतं महोद
यं सम्यक् सर्वकामफलप्रदं माघमासे कृष्णपक्षे पंचदश्यां रवेर्दिने वैष्णवेन तु नक्षत्रेण व्यतीपातेन यु
लभं एवं कृते संगमे स्नात्वा शुचिर्भूत्वा समाहितः सर्वपापविशुद्ध्यर्थं नियमस्थो भवेन्नरः तन्मंत्रः त्रि
दैवत्यं व्रतं देवाः करिष्ये भुक्तिमुक्तिदं भवंतु सन्निधौ मे च यो देवास्त्रयोग्रयः ब्रह्मविष्णुमहेशानां सौ
वर्णी पलसंख्यया कर्तव्याश्चास्तदर्द्धेन तदर्द्धार्द्धेन वा द्विज अर्चाः प्रतिमासार्हं शतत्रयं शुभोद्दीणानां ति
लपर्वतः कर्तव्यौ विष्णुरुद्राभ्यां गिरी एवोक्तसंख्यया शंभुरत्र ब्रह्मा प्राप्यात्र यं ततः कुर्याद्धपस्क
रसमन्वितं देवानां त्रयमुद्दिश्य कर्तव्यं भक्तितस्तदा ब्रह्मविष्णुशिवप्रीत्यै कर्तव्यं हगवां त्रयं हिर
ण्यभूमिधान्यादिदानं विभवसारतः दातव्यं श्रद्धयोपेतं ब्राह्मणेभ्यः प्रयत्नतः मध्याह्ने तु नरः स्नात्वा
शुचिर्भूत्वा समाहितः तिलपर्वतमध्यस्थं पूजयेद्देवतात्रयं तत्रादौ पूजामंत्राः नमो विश्वसृजे तुभ्यं
सत्याय परमेष्ठिने देवाय देवपतये ज्ञानानां पतये नमः इति ब्रह्मपूजा अथाङ्गपूजा ॐ ब्रह्म
णे नमः पादयोः परमेष्ठिने नमो जंघयोः धात्रे नमो जान्वोः हिरण्यगर्भाय नमः ऊर्वोः वेदसे नमो गुह्ये
पद्मोद्भवाय नमो हस्तयोः हंसवाहनाय नमः कटिदेशे शतानंदाय नमो वक्षसि सावित्रीपतये नमो बा
को ऋग्वेदाय नमः पूर्वमुखे यजुर्वेदाय नमो दक्षिणमुखे सामवेदाय नमः पश्चिमास्ये अथर्ववे
दाय नम उत्तरास्ये चतुर्वक्त्राय नमः शिरसि लोकपालाय नमः सर्वांगेषु ततः इंद्राय नम इत्यादिलो
कपालपूजा एकादिदिक्षु विदिक्षु च अथ प्रार्थनामंत्रः हिरण्यगर्भपुरुषप्रधानाव्यक्तरूपवान् प्रमा

दक्षसुरवो भक्त्या पूजां गृहाण नमोऽस्तु ते इति ब्रह्मपूजा नारायण जगन्नाथ नमस्ते गरुडध्वज पीतांबर
नमस्तुभ्यं जनार्दन नमोऽस्तु ते अथांगपूजा अनंताय नमः पादौ पूजयामि गोविंदाय नमो जंघयोः
मुकुंदाय नमो जान्वोः विश्वरूपाय नम ऊर्वोः प्रद्युम्नाय नमो गुह्ये पद्मनाभाय नमो नाभौ भुवनोदरा
य नम उदरे कौस्तुभवक्षसे नमो वक्षसि चतुर्भुजाय नमो बाहुषु विश्वतोमुखाय नमो वदने सहस्रशिर
से नमः शिरसि ततः प्रार्थना आदित्यचंद्रनयन दिवाहो दैत्यसूदन पूजां दत्तां मया भक्त्या गृहाण क
रुणाकर इति विष्णुपूजा महेश्वर महेशान नमस्ते त्रिपुरांतक नमो जीमूतकेशाय नमस्ते वृषभध्व
ज अथांगपूजा ईशानाय नमः पादयोः चंद्रशेखराय नमो जंघयोः पशुपतये नम ऊर्वोः उमाकांता
य नमो गुह्ये नीललोहिताय नमो नाभौ कृत्तिवाससे नम उदरे नागोपवीतिने नमो वक्षसि योगिरू
पाय नमो बाह्वोः नीलकंठाय नमः कंठे पंचवक्त्राय नमो मुखेषु कपर्दिने नमो मौलौ ततः प्रार्थना
अंधकारे प्रमेयात्मन् नमो लोकांतकाय च पूजां दत्तां मया भक्त्या गृहाण वृषभध्वज इति शिवपूजाक्रमः
प्रोक्तो मंत्रैरेतैः प्रयत्नतः आचार्यं पूजयेद्भक्त्या वस्त्रालंकारभूषणैः हस्तमात्रा कर्णमात्रा पीठं छत्रं
कमंडलुं श्वेतवस्त्रयुगं देयं ब्रह्मणे सर्वमूर्तये पीतवस्त्रयुगं विष्णोर्लोहितं शंकरस्य च पंचामृतेन स्न
पनं पूजनं कुसुमैः शुभैः कमलैस्तुलसीपत्रैर्विष्णुपत्रैरखंडितैः तत्कालसंभवैर्दिव्यैः पूजा देवाय
थाक्रमं यथाशक्तिः प्रकर्तव्यं व्रतमेतत्सुदुर्लभं जीवितं प्राणिनामेतदनित्यं निश्चितं यतः अथ व्र
तांगहोमस्य विधानं तूच्यतेऽधुना देवतात्रयमुद्दिश्य पायसेन हविष्येण कर्मणा प्रजापतये विश्वरूपाय रु
द्राय नमः इत्येतेनैव मंत्रेण वा शक्तिसंख्याप्रभक्तितः ततो होमं प्रकुर्वीत यथाविभवसंभवं अग्नये प्र
जापतये स्वाहा अग्नये विष्णवे स्वाहा अग्नये रुद्राय स्वाहा एवंविधश्चरुहोमः प्रजापतये न त्वदेता
न्यन्यो विश्वा रूपाणि जातानि परिता बभूव यत्कामास्ते जुहुमस्तन्नो अस्तु द्विपदे चतुष्पदे वयं स्याम पत
यो रयीणां स्वाहा ॰ ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पांसुरे स्वाहा २ त्र्यंबकं य
जामहे सुगंधिं पुष्टिवर्द्धनं उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतात् ३ प्रजापतये स्वाहा १ विष्ण
वे स्वाहा २ रुद्राय स्वाहा ३ ब्रह्मणे विष्णवे महादेवाय स्वाहा ४ इति पूर्णाहुत्या सर्वान्कामानवाप्नोति
निवृत्तो होमः अथ होमावसाने गां च दद्यात्पयस्विनीं स्वर्णशृंगीं रौप्यखुरां घंटाभरणभूषितां ता
म्रपृष्ठां कांस्यदोहां सर्वोपस्करसंयुतां सदक्षिणां सुशीलां तामाचार्याय निवेदयेत् तेन दत्तं कृतं जप्त
मिष्टं यज्ञैः सह तथा कृतकृत्यो भवेद्धि स व्रतस्यास्य प्रभावतः एतत्सर्वं समाख्यातं दुर्लभं व्रतमुत्तमं महो
दयं यथा दृष्टं किमन्यच्छ्रोतुमिच्छसि इति स्कंदपुराणोक्तमहोदयव्रतं अथास्य संक्षिप्तप्रयोगः व्र
तोद्यापनकौमुद्यां तिथ्यादि संकीर्त्य आत्मनः अखिलपापक्षयपूर्वकधर्मार्थकाममोक्षचतुर्विध
पुरुषार्थसिद्धिद्वारा ब्रह्मविष्णुशिवप्रीत्यर्थं महोदयव्रतोद्यापनं करिष्ये आचार्यादीन्वृत्वा भूमौ र
त्निमात्रां सार्द्ध शतत्रयद्रोणप्रमितैः तिलानां पर्वतं ब्रह्मणे तावत्प्रमाणमेव तिलपर्वतं विष्णवे त
थाविधमेव तिलपर्वतं रुद्राय अशक्तो पर्वतमेकमेव कुर्यात् तत्र ब्रह्मविष्णुरुद्राणां सुवर्णप्रतिमात्र
यं यथासंभवं विधाय ब्रह्मयज्ञानमिति ब्रह्माणं इदं विष्णुरिति विष्णुं त्र्यंबकमिति शिवं संपूज्य परित
इंद्रादीन्लोकपालान्नाममंत्रैर्वेदमंत्रैश्च संपूज्य ततो ब्रह्मविष्णुशिवानां मूर्तिषु अंगपूजां कुर्यात् ब्रह्म
णे नमः पादौ पूजयामि हिरण्यगर्भाय ऊरू परमेष्ठिने जंघे वेधसे गुह्ये हंसवाहनाय कटिं शांतानंदा
य वक्षसि सावित्रीपतये बाहून् पूर्वादिचतुर्मुखेषु ऋग्वेदाय नमः यजुर्वेदाय नमः सामवेदाय न
मः अथर्ववेदाय नमः चतुर्वक्त्राय नमो नेत्रेषु कपिलाय ललाटे हंसाय शिरः पूजयामि १ अथ विष्णोः
अनंताय नमः पादौ विश्वरूपाय नम ऊरू मुकुंदाय नमो जानुनी गोविंदाय नमो जंघे प्रद्युम्नाय नमः

गुह्ये पद्मनाभायनमः नाभिम् कौस्तुभवक्षसेनमःवक्षसि चतुर्भुजायनमःबाहून् विश्वतोमुखायनमो
मुखं सहस्रशिरसेनमइतिशिरःपूजयामि २ अथशिवस्य ईशानायनमः पादौपूज० चंद्रशेखरायनमः
जंघे पशुपतयेनमोजानुनीपू० शंकरायनमःऊरूपू० उमाकांतायनमःगुह्यं नीललोहितायनमःनाभिं
पू० कृत्तिवाससेनमःउदरंपू० नागोपवीतिनेनमःबाहून् नीलकंठायनमःकंठं पंचवक्त्रायनमःमुखंपू० क
पर्दिनेनमःशिरःपू० ततःक्रमेणप्रार्थयेत् नमोविश्वसृजेतुभ्यंसत्यायपरमात्मने देवायदेवपतयेयज्ञानांप
तयेनमः १ नारायणजगन्नाथनमस्तेगरुडध्वज पीतांबरनमस्तेस्तुजनार्दननमोस्तुते महेश्वरमहेशानन
मस्तेत्रिपुरांतक नमोजीमूतकेशायनमस्तेवृषभध्वज ३ ब्रह्मविष्णुमहेशानाःकर्मणांफलहेतवः भक्त्या
मयाकृतांपूजांगृह्णीध्वंजगदीश्वराः ४ इतिसंप्रार्थ्य ततःसपत्नीकंब्राह्मणंवेदशास्त्रविदमेकंब्राह्मण
त्रयंवाकृत्वावस्त्रालंकारादिभिःसंपूज्य पुनरपिब्रह्मविष्णुमहेशान्पंचामृतपूर्वः सवस्त्रतुलसीविल्वादिकैः
पूजयेत् ततआचार्यब्रह्मादिवरणंवेदिकायां अग्निंप्रतिष्ठाप्य सर्वतोभद्रादिसमस्तमंडलदेवतापू
जांते अग्निपूजनंकृत्वा अन्वादध्यात् ब्रह्मविष्णुमहेशानुद्दिश्याज्यतिलद्रव्येणप्रतिदैवतंसहस्रसंख्याका
हुतिभिर्लोकपालान्मंडलदेवताश्चैकैकयाहुत्यायजेत्एवंहोमंसमाप्य ततस्तिलपर्वतसहितंप्रतिमा
त्रयसंयुतंदद्यात् ॐतत्सदित्यादिदेशकालौसंकीर्त्य कोटिसूर्यग्रहसमअर्द्धोदयपर्वणिसशैलवनसम
मुद्रादिसंयुतधरादानपुण्यजन्यसमग्रफलप्राप्तिद्वारासूर्यचंद्रोपेंद्रादिसमस्तलोकप्राप्त्युत्तरपरमे
श्वरपदप्राप्तये ॥ अर्द्धोदयपर्वोक्तसमस्तफलप्राप्त्यर्थंतिलपर्वतमध्यस्थदेवतात्रयसहितःसोपस्क
रःअलंकृतस्तावेदविदेब्राह्मणायदातुमहमुत्सृजे ततःप्रार्थनातिलपर्वतमध्यस्थाब्रह्मविष्णुमहेश्व
राः दहंतुपातकंसर्वंयच्छंतुममसंततिमित्युक्त्वादद्यात् ततोदानस्यसांगतार्थं रक्तकृष्णश्वेतवर्ण
सुरभित्रयं शय्यादिकं आचार्यायदद्यात् अत्रहोमद्रव्याणिपलाशसमित्चरुतिलाज्यानिब्रह्म
णः अश्वत्थसमित्तिलपायसानिविष्णोः दूर्वाज्यव्रीहयः शंकरस्य ततोभूमौ श्वेततंदुलैःकल्पि
ताष्टदलोपरिपात्रसहितंकांस्यपात्रंसहस्रवर्णं ब्राह्मणायसंपूज्यदद्यात् तत्रमंत्रः सुवर्णपात्र
स्थमंत्रंयस्मादेतद्ब्रह्ममयं आवयोस्तारकंह्येतत्गृहाणद्विजसत्तम एवंपात्रदानंविधाय भूशय्यादिदा
नंकृत्वा ब्राह्मणाशिषोगृहीत्वा भूयसींदक्षिणांदद्यात् इतिभविष्योत्तरोक्तमर्द्धोदयदानव्रतं अ
स्यामेवमाघमास्यां सावित्रीसहितंब्रह्माणंपूजयित्वानवनीतधेनुंदद्यात् तदुक्तंहेमाद्रौभविष्योत्तरे
अमायांमाघमासस्यपूजयित्वापितामहं गायत्र्यासहितंदेवंवेदवेदांगभूषितं नवनीतमयींधेनुं
फलैर्नानाविधैर्युतां सहिरण्यांसवस्त्रांचब्राह्मणायनिवेदयेत् कीर्तयेत्प्रीयतामत्रपद्मयोनिःस
नातनः स्थानेस्मिन्यथाकालेयन्मयाकिंचिदर्जितं तदवाप्नोत्यसंदिग्धंपद्मयोनेःप्रसादतः यानिचान्या
निदानानिदीयंतेसुबहून्यपि युगादिषुमहाराजअक्षयाणिभवंतिहि वित्तहीनःस्वशक्त्यायोददा
तिस्वल्पकंबक तदप्यक्षयतांयातिनात्रकार्याविचारणा वित्तानुसारंस्वंदद्याद्धनीवानिर्धनोपिवं
भूमिहिरण्यंगृहंवासःशयनान्यासनानिच छत्रोपानहयानानिदेयानिशुभमिच्छता एवंदत्वायथाश
क्त्याभोजयित्वाद्विजोत्तमान् पश्चाद्भुंजीतमौनेनवाग्यतोबंधुभिःसह यत्किंचिद्वाचिकंपापंमानसं
कायिकंतथा तत्सर्वंनाशमायातियुगादितिथिपूजनात् गीयमानोथगंधर्वैःस्तूयमानःसुरासुरैः
रुद्रस्यानुचरोभूत्वारुद्रलोकेवसेन्नरः यद्दीयतेकिमपिकोटिगुणंतदाहुः स्नानंतपोनियममप्यय
मेवचात्र स्नातदत्तयंस्तयुगपूर्वतिथौश्रुराजन्व्यासादयोमुनिवराइतिनान्यथैव इतिभविष्योत्तरोक्तमा
घामावास्यांयुगादितिथिकृत्यम् ॥ अथमाघशुक्लप्रतिपदाकृत्यं नारदीये माघशुक्लप्रतिपदि
वह्निंसाक्षान्महेश्वरं सम्यगभ्यर्च्यविधानेनयस्तद्वोजायतेभुवि द्वितीयाकृत्यमपितत्रैव माघशुक्ले

द्वितीयायां भानुरूपं प्रजापतिं समभ्यर्च्य यथाम्नायं प्रजयेद्धूपपुष्पाद्यैः रक्तैर्गन्धैस्तथा स्वर्णमूर्तिं विश यथाशक्तितः ततः स्वर्णं ताम्रपात्रं गोधूमैर्वापि तण्डुलैः समर्प्य देवं भक्त्या दक्षिणां प्रदद्याद्द्विजे एवं कृते व्रतेऽधि प्रसन्नात्मा सूर्यश्चोदितः दुरासदो दुराधर्षो जायते भुवि मानवः इह कामान्वरान्भुक्त्वा याति ते ब्रह्मणः पदं सर्वदेवस्तुतो भीत्वा विमानवरमास्थितः माघशुक्लतृतीयायां ललितासौभाग्यसुंदरीव्रतं नारदीये माघशुक्लतृतीयायां पूज्या सौभाग्यसुंदरी पूर्वोक्तेन विधानेन नारिकेलार्घ्यदानतः प्रसन्ना दिशति स्त्रीयै लोकं तु समुपोषिता अस्याविधानकथा भविष्योत्तरे युधिष्ठिर उवाच अथ इच्छामि भगवन्व्रतं द्वादशमासिकं ललितारायणं नाम मासमासक्रमेण च श्रीकृष्ण उवाच शृणु पाण्डव यत्नेन यथावृत्तं पुरातनं कैलासशिखरे रम्ये वृक्षपुष्पलतावृते शंकरस्य महादेव्याः संवादं कुरुसत्तम सुचूतपल्लवयुते चंपकाशोकभूषिते कदंबवकुलामोदवशीकृतमधुव्रते मयूररवसंघुष्टे राजहंसोपशोभिते मत्तेभगजसिंहैश्च शुभशाखामृगगणावृते गंधर्वयक्षदेवर्षिसिद्धकिन्नरपन्नगैः तपस्विभिर्महाभागैः सेव्यमाने समंततः सुखासीनं महादेवं भक्तसंघैः समावृतं अप्सरोभिः परिवृतमुमा नत्वेदमब्रवीत् उमोवाच भगवन्देवदेवेश शूलपाणे वृषध्वज कथयस्व महेशान तृतीयाव्रतमुत्तमं सौभाग्यं लभते येन यन्न ज्ञान्यसूक्तादं नारी रूपं शुभं स्वर्गमारोग्यं श्रियमुत्तमां एवमुक्तो दयितया भार्यया प्रीतिपूर्वकं विहस्य शंकरः प्राह किं व्रतेन तव प्रिये ये कामास्त्रिषु लोकेषु दिव्या भौमान्तरिक्षजाः सर्वेऽपि ते तवायत्ता यस्मात्तेऽहं पतिर्यतः उमोवाच सत्यमेतत्त्वयेशान तथापि तु हे न दुर्लभं किंचित्त्रिभुवनाभोगभूषणो पाशिभूषण भक्त्या स्त्रियो हि मां देव प्रयुंजंति शुभा भुवि सद्रूपाः सुभगाः काश्चिद्दरिद्रा बहुपुत्रिकाः सुशीलास्त्वपराः काश्चिच्छ्वश्रूभिः पीडिता भृशं शौचाचारसमायुक्ता न रोचन्ते च कस्यचित् एवं बहुविधैर्दुःखैः पीड्यमाना स्वदारुणैः शरणं मां प्रपन्नास्ताः कृपाविष्टा ततोऽप्यहं येन ताः स्युर्वरसंभोगरूपलावण्यसंपदा पुत्रैः सौभाग्यवित्तैश्चैव युक्ताः स्युः सुरसत्तम तन्मे कथय यत्नेन व्रतानामुत्तमं व्रतं ईश्वर उवाच माघे मासे सितेपक्षे तृतीयायां च तत्त्वतः मुखं प्रक्षाल्य हस्तौ च पादौ चैव समाहितः उपवासस्य नियमं दन्तधावनपूर्वकं मध्याह्ने तु ततः स्नानं तिलैरामलकैस्तथा स्नात्वा तीर्थजले लब्ध्वा द्वे वाससी परिधाय च सुगंधैः सुमनोभिश्च प्रभृतैः कुंकुमादिभिः अर्चयेत्तु सदा देवीं भक्त्या तां भक्तवत्सलां करवीरैस्तथा धूपैर्नैवेद्यैः प्राक्नादिभिः यदृच्छालाभसंपन्नैः पदीपार्चनादिभिः ततः सायं गृहीत्वा तु प्रतीच्छेद्दधिकां तथा पात्रे ताम्रमये शुभे जलाक्षतादिभिश्चित्ते सहिरण्यं हि तं कृत्वा मंत्रमेवं समाधिना शिरसि प्रक्षिपेत्तोयं ध्यायं गा हरिहरसंगमा गंगाजलपवित्रिता ब्रह्मावर्तः समाख्यातो ब्रह्मयोनिविनिर्गतः भद्रे च रात ततो देवी ललिता शंकरप्रिया गौ क्षस्त नमो नमः सौभाग्यारोग्यपुत्रार्थमर्चयेद्धरवल्लभे आयातासि हिता भद्रे प्रती दत्त्वा हिरण्यं तत्तस्मै ब्राह्मणायान्नकुटीरकं प्राचस्य प्रयता भक्त्वा भूमिस्थाहाय येन्नतां यमाना मुदा देवी हरिते भवविस्तरे द्वितीयेऽह्नि पुनः स्नात्वा तथैवाभ्यर्च्य पार्वतीं यथाशक्त्या द्विजान्संपूज्य ततो भुंजीत वाग्यता एवं तु प्रथमे मासि पूजनीया तु कालिका द्वितीये पार्वती नाम तृतीये शंकरप्रिया चतुर्थे गिरिजा देवी पंचमे हरवल्लभा दक्षदुहिता षष्ठे मेनाकी सप्तमे स्मृता मृडानी चाष्टमे मासि गौरी तु नवमे स्मृता दशमे मासि विख्याता देवी सौभाग्यदायिनी उमा त्वेकादशे मासि गौरी तु द्वादशे प्रिया कुशोदकं पयः सर्पिर्गोमूत्रं गोमयं फलं निंबपत्रं कंटकारीं इक्षुं गोरोचनं दधि पंचगव्यं तथा शाकं प्राशनानि क्रमादमी मासि मासि स्थिता होत्वमुपवासपरायणा दद्यान्निष्ठहस्तैमानि याचके ब्राह्मणाय मे हरिद्रा कुंकुमं लवणं जीरकं गुडमेव च इत्येतैर्भिः श्रद्दयान्तं हृदयेऽस्मिन्स्युष्यासि प्रिये मासि मासि भवेन्मंत्रः सोंकारो द्वादशाक्षरः ओंकारपूर्वकैर्देवि नमस्कारांतदीपितैः एभिस्त्वं पूजिता मंत्रैः सुप्रसन्नासि हरप्रिये

तुष्टात्वमीप्सितान्कामान्ददासिप्रीतिपूर्वकं समाप्तेतुव्रतेतस्मिन्ब्राह्मणंवेदपारगं सहितंभार्ययाभ्यर्च्य
गंधपुष्पादिभिःशुभैः द्विजंमहेश्वरंकृत्वाउमांभार्यांतथैवच अन्नंसदक्षिणंदद्यात्तथाशुभ्रेचवाससी र
क्तवाससीयुगंदद्यात्ताभ्यांतुहिपुष्पहरप्रिये ब्राह्मणोप्यद्ददायुक्तानस्याःफलमिदंशृणु दशवर्षसहस्राणि
लोकान्प्राप्यपरात्परान् मोदतेभर्तृसहितायथेंद्रेणशचीतथा मानुषत्वंपुनःप्राप्यनवैधव्यमवाप्नु
यात् पुत्रान्भोगांस्तथारूपंसौभाग्यंपश्रियमेवच एकपत्नीतथाभर्तुःप्राणेभ्योप्यधिकाभवेत् शृणु
याहात्म्यमानंतुभक्त्यायाललिताव्रतं महास्नेहेनकथितंसापितत्फलभागिनी संपूज्यपूज्यांललितां
गंधपुष्टीगंधोदकैर्मृतघटीशिरसिक्षिपेद्या सास्वर्गमर्त्यललनासुलभामभूताभूत्वाधियंपतिमवाप्यभु
वंभुनक्ति इतिश्रीभविष्योत्तरेमाघशुक्लाललितातृतीयाव्रतं ॥ अथैवरसकल्याणिनीव्रतम् भ
विष्योत्तरे श्रीकृष्णउवाच अथान्यामपिवक्ष्यामितृतीयांपापनाशिनी रसकल्याणिनीमेतांपुराकल्प
विदोविदुः माघमासेतुसंप्राप्यतृतीयांशुक्लपक्षतः प्रातर्गव्येनपयसातिलैःस्नानंसमाचरेत् स्नाप
येन्मधुनादेवींतथैवेक्षुरसेनच पुनःपूजाप्रकर्तव्याजातीपुष्पैःकुंकुमेनच दक्षिणांगानिसंपूज्यवामा
गानिचपूजयेत् ललितायैनमःपादौगुल्फौतद्वदर्चयेत् जंघेजानुतथापूर्णांतथैवाङ्गश्रियैनमः
मदनालसायैकटिंमदनायैतथोदरं स्तनंमदनवासिन्यैकुमुदायैचकंधरं भुजंभुजाग्रंमाधव्यैकमला
यैमुखस्मितं भ्रुवौललाटंरुद्राण्यैशंकरायैतथालकान् मुकुटंविश्ववासिन्यैपुनःकान्त्यैतथालका
न् मदनायैललाटंतुमोहनायैपुनर्भ्रुवं नेत्रेतथाविदारिण्यैपुष्ट्यैचवदनंपुनः उत्कंठिन्यैतथाकंठ
ममृतायैचकंधरां रंभायैवामबाहुंचविशोकायैचदक्षिणं हृदयंमन्मथारिण्यैवामदेव्यैजगत्स्थि
ये आनंदनायैनंदायैसुभद्रायैनमोनमः एवंसंपूज्यविधिवद्द्विजदांपत्यमर्चयेत् भोजयित्वान्नपा
नेनमधुरेणविमत्सरः सलड्डुकंवारिकुंभंशुक्लांबरयुगान्वितं दत्वासुवर्णकमलंगंधमाल्यैरथार्च
येत् प्रीयतामत्रकुमुदागृह्णीयाल्लवणव्रतं अनेनविधिनादेवींमासिमासिसमर्चयेत् लवणं
वर्जयेन्माघेफाल्गुनेचगुडंपुनः तुवराजंतथाचैत्रेवर्ज्यंचमधुमाधवे यावकंज्येष्ठमासेतुआषाढेजी
रकंतथा श्रावणेवर्जयेत्क्षीरंदधिभाद्रपदेतथा घृतमाश्वयुजेतद्वदूर्जेवर्ज्यंचमार्जिका धान्यकंमा
र्गशीर्षेतुपौषेवर्ज्याचशर्करा व्रतीतुकरकान्पूर्णान्देव्यैवैमासिमासिच दद्याद्विकालवेलायांभक्ष्यपात्रे
णसंयुतान् लड्डुकान्वटकांश्चैवसंयावमथपूरिकान् घारिकाघृतपूरांश्चगुडपूर्णांश्चमंडकान् क्षीरं
शाकंचदध्यन्नमिड्डरीशाकवर्तिकाः माघादौक्रमशोदद्यादेतानिकरकोपरि कुमुदामाधवीगौरीरंभाभ
द्राजयाशिवा उमासतीशचीतद्वन्मंगलारतिलालसा क्रमान्माघादिसर्वत्रप्रीयतामितिकीर्तयेत् स
र्वत्रपंचगव्यंचप्राशनेसमुदाहृतं उपवासीभवेन्नित्यमशक्तौनक्तमिष्यते पुनर्माघेचसंप्राप्तेमासान्तस्त्व
कमंडलुं तद्वद्धेममिथुनंशुक्लंसुवर्णांशुकसितांबरं सवस्त्रभाजनंदद्याद्भवानीप्रीयतामिति अनेनवि
धिनायस्तुरसकल्याणिनीव्रतं कुर्यात्सर्वपापेभ्योमुक्तस्तत्क्षणादेवमुच्यते भवार्बुदसहस्रेषुनदुःखी
जायतेक्वचित् अग्निष्टोमसहस्रेणयत्फलंतदवाप्नुयात् नारीचकुरुतेयातुकुमारीवायुधिष्ठिर विधवावा
वराकीवासापितत्फलभागिनी सौभाग्यारोग्यसंपन्नागौरीलोकेमहीयते इतिपठतिशृणोतियःप्र
संगात्सकलकलुषमुक्तःपार्वतीलोकमेति मणिमयमिवनघ्राणंयोददातिप्रियार्थं विपुलमभिजनेनाना
यकःस्यादमेयः इतिभविष्योत्तरेरसकल्याणिनीमाघशुक्लातृतीयाव्रतम् ॥ अथास्यामेवगौरीतृती
याव्रतमाचरंतिशिष्टामाघशुक्लतृतीयायांकन्यासम्यग्वरार्थिनी प्रातःस्नात्वार्चयेद्गौरींपुष्पनैवेद्यच
दत्तैः मत्स्यपुराणे माघेमासेतृतीयेवागुडधेनुप्रदोभवेत् गुडव्रतंतृतीयायांगौरीलोकेमहीयते गुडव्र
तोगुडमासदानप्रभविष्यपुराणे माघेमासितृतीयायांगुडस्यलवणस्यच दानंश्रेयस्करंराजन्स्त्रीणांच

ग्रहणस्य च गुडेन तु घृतेन देवी लवणेन महेश्वरः इत्युमामहेश्वरप्रीतिकरं गुडलवणदानव्रतं अ
थ माघशुक्लचतुर्थीकृत्यानि माघशुक्लचतुर्थी वरदाख्या कुंदचतुर्थीति च हेमाद्रौ निर्णयामृते चो
क्तं कुंभार्के तिथिः प्रशस्ता सा प्रदोषव्यापिनी ग्राह्या अत्र कुंदपुष्पैः शिवमभ्यर्च्य नरो नक्तभोजी श्रियमा
प्नोति तदुक्तं कूर्मपुराणे कुंभे शुक्लचतुर्थ्यां तु कुंदपुष्पैः सदाशिवं संपूज्य योऽह्नि नक्ताशी स प्राप्नोति
न संश्रियमिति अस्यामेव ब्रह्मपुराणोक्तं गौरीचतुर्थीव्रतं उमाचतुर्थ्यां माघे तु शुक्लायां योगि
नीगणैः प्राहुत्तयित्वास्तद्वाच भूयः स्वांगात्त्वकैर्गुणैः संसृजुः सहिता यस्मात्तस्मात्सोक्ता सती
पुरा तस्मात्सा तत्र संपूज्या नरैः स्त्रीभिर्विशेषतः कुंदपुष्पैः प्रयत्नेन सम्यग्भक्त्या समाहितैः कुंकुमाल
क्तकाभ्यां च रक्तसूत्रैः सकंकुकैः धूपैः पुष्पैस्तथा धूपैर्दीपैर्बलिभिरेव च गुडार्द्रकाभ्यां पयसा लव
णेनाथ पालकैः पूज्या स्त्रियश्चाविधवास्तथा विप्राः सुलोचनाः सौभाग्यवृद्धये पश्चाद्भोक्तव्यं बंधुभिः स
हेति कुंडकैः मंडकविशेषैरित्यर्थः अविधवा इत्यनेन सधवाः कुमार्यश्च संगृहीता इति गौरीचतुर्थीव्र
तं देवीपुराणे त्वियं कुंदचतुर्थी उक्तं माघमासे तु संप्राप्ते चतुर्थी कुंदसंज्ञिता उपोष्या सा सश्रेष्ठत
ते राज्यं भविष्यति सर्वोपहारसंयुक्तं सर्वोपस्करमाहरेत् पुष्पपत्रफलं नालं कंदमूलानि यानि च व
न्यानि चैव धान्यानि देशानि विशेषतः त्वक्दारुत्वग्बीजानि वानि पल्लवानि च वल्कवंडलं भं शाकं
लवणं गुडशाकेन खंडजीरककं कुल्माषधान्यानि विविधानि च दातव्यानि हरस्वेष्टकन्यकानां तु भक्ति
तः अर्घ्यपात्रं तथा भांडं मृण्मयानि विशेषतः उद्दिश्य पदाय येह देवी प्रीयतां मे सदा इति अनेन विधि
ना शाक सौभाग्यपुत्रसंततिः वर्द्धते नात्र संदेहो नान्यथा मम भाषितं इति देवीपुराणोक्तं कुंदचतुर्थीव्र
तं माघशुक्लचतुर्थ्यां ढुंढिपूजोक्ता काशीखंडे इयमेव तिलचतुर्थी उच्यते माघशुक्लचतुर्थ्यां तु
नक्तं व्रतपरायणाः ये त्वां ढुंढिमर्चयंति तेर्च्याः सुरासुरैरहो विधाय वार्षिकीं यात्रां चतुर्थी प्राप्य ताप
सी तपोमासस्यैयं तापसी चतुर्थी तस्यैः शुक्लां शुक्लतिलैर्दद्यात्प्राश्नीयाल्लड्डुकान्व्रती तां यात्रां
ना यः कुर्यान्नैवेद्यं तिललड्डुकैः उपसर्गसहस्रैस्तु सहं तत्क्षाममाज्ञया होमं ते लाज्यद्रव्येण यः क
रिष्यति भक्तितः तस्यां चतुर्थ्यां मंत्रज्ञस्तस्य मंत्रः प्रसेत्स्यतीति तथा च माघे मासे चतुर्थ्यां तु तस्मिन्का
ले उपोषितः अर्चयित्वा तु यो देवीं जागरं तत्र कारयेदिति त्रिस्थलीसेतौ लैंगेपि तिथितत्त्वे भविष्ये
माघशुक्लमधिकृत्योक्तं चतुर्थी वरदा नाम तस्यां गौरी सुपूजिता सौभाग्यमतुलं कुर्यात् चतुर्थ्यां श्रीर
पि श्रियमिति माघशुक्लचतुर्थ्यां शांतिचतुर्थीव्रतं भविष्योत्तरे सुमंतुरुवाच माघे मासि तथा शुक्ला
या चतुर्थी महीपते सा सर्वशांतिदा नित्यं शांतिं कुर्यात्सदैव हि स्नानं दानं बलिं कर्म सर्वमस्यां कृतं वि
भो भवेत्सहस्रगुणितं प्रसादाद्दंतिनः सदा दंतिनो गणेशस्य कृत्वोपवासं यस्तस्यां पूजयेद्विघ्ननाय
कं तस्य होमादिकं कर्म भवेत्साहस्रिकं नृप लवणं गुडपण्यं च हुताकांक्षय भारत दत्वा भक्त्यैव विप्रे
षोफलं साहस्रिकं लभेत् विप्राश्च तस्यां राजेन्द्र जयेत्त्वगुरुं नृप गुडलवणघृतैर्वीरसदा संपूज्य क
वेदन इति भविष्योत्तरोक्तं शांतिचतुर्थीव्रतं नारदीयेपि इदं गौरीव्रतं विप्र सौभाग्यपादं शुभवर्द्धनं
प्रतिवर्षं कृतं चैव नारीभिश्च नरैस्तथा ढुंढिव्रतं पदैः प्रोक्तं काशीखंडव्रतं स्मृतं ललिताव्रतमित्यै
वं गौरीव्रतमथापरैः स्नानं दानं जपो होमः सर्वमस्यां कृतं नरैः भवेत्सहस्रगुणितं प्रसादाद्दंतिनः सदेति
माघशुक्ला पंचमी श्रीपंचमी माधवमते इयं पूर्वा ग्राह्या हेमाद्रिमते परा तत्र मदनं संपूज्य वसंतोत्सवारंभः
कार्य इति निर्णयामृते अत एवेयं वसंतपंचमीति भट्टोजिदीक्षिता अत्रादौ रतिकामपूजनं श्रीपूजाय
वैकृत्यात्ततो वसंतोत्सवारंभः कार्यः पुराणसमुच्चये माघे मासि सितश्रेष्ठशुक्लायां पंचमीतिथौ रति
कामौ तु संपूज्य कर्तव्यः सुमहोत्सवः दानानि च प्रदेयानि कर्तव्यः सुमहोत्सवः तथा श्रीपूजनं कार्यमिति

नतेष्यति माघवशति तिथितत्त्वे भविष्योत्तरे माघशुक्लमथिहृत्य चतुर्थी वरदा नाम तस्यां गौरी सुपूजि
ता सौभाग्यमतुलं कुर्यात्तस्यां च श्रीरपि प्रियं हेमाद्रौ भविष्ये माघे शुक्लचतुर्थ्यां तु वरमाराध्य चश्रि
यः पंचम्यां कुंदकुसुमैः पूजां कुर्यात्स हृद्ये अथ रतिकामयोर्ध्यानं हेमाद्रौ शुभा रतिः प्रकर्तव्या वसंतो
ज्वलभूषणा नृत्यमाना शुभा देवी समस्ताभरणैर्युता वीणावादनशीला च मदकर्पूरचर्चिता कामदे
वस्तु कर्तव्यो रूपेणाप्रतिमो भुवि अष्टबाहुः स कर्तव्यः शंखपद्मविभूषणः चापबाणकरश्चैव मदादं
चितलोचनः रतिः प्रीतिस्तथा शक्तिर्मदशक्तिस्तथोज्ज्वला चतस्रस्तस्य कर्तव्याः पत्न्यो रूपमनो
हराः चत्वारस्तु करास्तस्य कार्या भार्यास्तनोपगाः केतुश्च मकरः कार्यः पंचबाणमुखो महानि
ति अत्र श्रीपूजनं माघशुक्लपंचम्यां क्रमतुसंधेयं ॥ इति माघशुक्ला श्रीपंचमी वसंतपंचमी कृ
त्यं माघशुक्लषष्ठी अरुणाख्योक्ता नारदीये माघे मासे सिता षष्ठी सारुणाख्या स्मृता शुभा त
स्यामरुणमभ्यर्च्य विश्वरूपं सनातनं रक्तैर्गंधाक्षतैः पुष्पैर्नैवेद्यैः धूपदीपकैः सम्यगभ्यर्च्य वि
धिवद्यद्वविलिखिन्नरः ततश्चायतनो भूयात्मोदते तत्प्रसादतः इयं मंदारषष्ठी भविष्योत्तरे
श्रीकृष्ण उवाच शृणु पार्थ प्रवक्ष्यामि सर्वपापप्रणाशिनीं सर्वकामप्रदां षष्ठीं नाम्ना मंदारसंज्ञि
तां माघस्यामलपक्षे तु पंचम्यां लघुभुङ्नरः दंतकाष्ठं ततः कृत्वा स्वपेद्भूमौ जितेंद्रियः सर्वभोगविही
नस्तु षष्ठीमुपवसेन्नरः प्राप्यानुज्ञां द्विजश्रेष्ठान्मंदारं प्राशयेन्निशि मंदारो राजार्कः ततः प्रातः समु
त्थाय कृतस्नानः पुनर्द्विजान् संपूज्य संहतं कृत्वा मंदारकुसुमाष्टकं सौवर्णं पुरुषं तद्वत्पद्महस्तं
सुशोभनं पद्मं कृष्णतिलैः कृत्वा ताम्रपात्रे दलाष्टकं पूजयेन्मंदारकुसुमैर्भास्करायेति पूर्वतः नम
स्कारेणाथ तद्वच्च सूर्यायेत्यनले दले दक्षिणे तद्वदर्काय यज्ञेशाय च नैर्ऋते पश्चिमे वसुधाम्ने
ति वायव्ये चंडभानवे हंसायोत्तरतः पूज्य आनंदायेशानके दले कर्णिकायां च पुरुषं पूज्य सर्वा
त्मने हरिं शुक्लवस्त्रैः समावेष्ट्य भक्ष्यमाल्यफलादिभिः एवमभ्यर्च्य तत्सर्वमुपाध्यायेनिवेदयेत् भुं
जीत तैललवणं वाग्यतः प्राङ्मुखो निशि अनेन विधिना सर्वं सप्तम्यां मासि मासि च कुर्यात्संवत्सरं
यावद्वित्तशाठ्यविवर्जितः एतदेव व्रतांते तु विधाय कलशोपरि रवियुक्तं द्विजेंद्राय दातव्यं भूतिमिच्छ
ता रवियुक्तं सौवर्णं रवियुक्तमित्यर्थः नमो मंदारनाथाय मंदारभवनाय च त्वं रवे तारयस्वास्मानस्मा
त्संसारसागरात् विधिनानेन यः षष्ठीं मंदारभवसंज्ञितां विपाप्मा सुखी मर्त्यस्ततः स्वर्गे मही
यते इमामघौघपटलध्वांतोद्भासनदीपिकां प्रगृह्य गच्छन्संसारगर्तायां न स्खलेन्नरः मंदारषष्ठी विख्या
ता वांछितार्थफलप्रदा यः पठेच्छृणुयाद्वापि सोऽपि पापैः प्रमुच्यते षष्ठीमुपोष्य तिलपंकजकर्णिका
यां संपूज्य भास्करमहाश्वरवृत्तपुष्पैः यत्प्राप्नुवंति पुरुषा न हि तत्कदाचिद्गोभूहिरण्यतिलदाः फलमा
प्नुवंति इति भविष्योत्तरे माघशुक्ला मंदारषष्ठीव्रतं ॥ अथ माघशुक्लसप्तमीकृत्यानि नारदीये
माघस्य शुक्लसप्तम्यामचलाख्यं व्रतं स्मृतं त्रिलोचनजयंतीयं सर्वपापहरा स्मृता रथाख्या सप्तमी चे
यं चक्रवर्तित्वदायिनी अस्यां समभ्यर्च्य सवितुः प्रतिमां तु हैमीं हेमाश्वरथगां तु ददेत्स हेमां यो भा
स्वद्भक्तिसहितः स गतो हि लोकं शंभोः प्रसादतरसापि च भुक्तभोगः भास्करी सप्तमी चेयं कोटिभास्करग्र
हणोपमा अरुणोदयवेलायामस्यां स्नानं विधीयते अर्कस्य च बदर्याश्च सप्त सप्त दलानि च विधाय शि
रसि स्नायात्सप्तजन्माघनाशनं पुत्रप्रदं व्रतं चात्र प्राहादित्यः स्वयं प्रभुः यो माघसितसप्तम्यां पूजयेन्मां
विधानतः तस्याहं पुत्रतां यास्ये स्वांशेन भूप तोषितः तस्यां जितेंद्रियो भूत्वा समुपोष्य दिवानिशं पूज
येत्परे चाग्निहोमं कृत्वा द्विजांस्तथा दध्योदनेन पयसा पायसेन च भोजयेत् अनेन विधिना यस्तु कुरु
ते सप्तसप्तमीं लभते स तु सत्पुत्रं चिरायुषमनामयं इयमचला सप्तमी त्रिलोचनजयंत्युक्तं भविष्योत्तरे मा

ष्टस्य शुक्लपक्षे तु सप्तमी सा विलोचना जयंती नाम सा प्रोक्ता सर्वपापहरा तिथिरिति मत्स्यपुराणे य
स्यां मन्वंतरस्यादौ रथमाप दिवाकरः जयंती नाम सा प्रोक्ता शुक्ला माघस्य सप्तमीति सा स्नानादाव
रुणोदयव्यापिनी ग्राह्या सूर्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी अरुणोदयवेलायां तस्यां स्नानं
महाफलमिति विष्णूक्तेः दिनद्वयेऽरुणोदये चेत्सत्त्वे पूर्वैव ग्राह्येति युग्मवाक्यादिति भट्टोजिदी
तः अयं च स्नानकालोऽरुणोदये ये माघे स्नानं कुर्वंति तान्प्रत्येव अन्यान्प्रति तु सूर्योदय एव माघ
मासस्य सप्तम्यामुदयत्येव भास्करे विधिवत्तत्र च स्नानं महापातकनाशनमित्यपरार्के विष्णूक्तेरि
त्युक्तं तन्न अयं मदनरत्नादि सर्वप्राचीननवीनग्रंथेष्वेतद्वचनस्यानुपलंभात् तद्ग्रंथविरोधाच्च मा
घे स्नानकालस्तु सूर्योदय एव एवमुक्तं हि भास्करे इति माघमासे तु रटंत्यापः किंचिदभ्युदिते र
वाविति यो माघमास्युषसि सूर्यकराभितप्ते स्नानं समाचरति इत्यादिना रद्दीयभविष्योत्तरप्रभृतिवचन
डिंडिमस्य जागरूकत्वात् तस्मान्माघस्नाने सूर्योदये कर्तव्ये अचलासप्तमीस्नानं त्वरुणोदय ए
वेति सिद्धांतः यत्तु दिवोदासीये अचलासप्तमी दुर्गा शिवरात्रिर्महान्नरः द्वादशी वत्सपूजायां सुव
दा प्राग्युता सदेति षष्ठीयुतत्वमुक्तं तद्यदि पूर्वेद्युः षष्ठी घटिकाद्वयं सप्तमी च परेद्युः त्वयव प्रादरु
णोदयात्पूर्वं समाप्यते तत्परं ज्ञेयं तत्र षष्ठ्यां सप्तमी त्वयं प्रवेश्यारुणोदये स्नाने कर्तव्ये इयं च प्रयागे
प्रशस्ता अरुणोदयवेलायां शुक्ला माघस्य सप्तमी प्रयागे यदि लभ्येत कोटिसूर्यग्रहैः समेति वच
नात् तथा माघे मासि सिते पक्षे सप्तमी कोटिभास्करा कुर्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसंपदइ
ति इदं च स्नानं तिथ्यादि संकीर्त्य सप्तार्कपत्राणि सप्तबदरीपत्राणि च सुवर्णादिपात्रस्थतिलतैलकु
संभवर्तिप्रज्वालितं दीपं च शिरसि कृत्वा इक्षुदंडेन जलं चालयित्वा भास्करं हृदये ध्यात्वा नमस्ते
रुद्ररूपाय रसानां पतये नमः वरुणाय नमस्तेऽस्तु हरिवासन नमोऽस्तु ते इति श्लोकं पठित्वा दीपं प्रवा
हे विसृज्य शुक्लतिलैरंगोद्वर्तनं कृत्वा स्नानं कर्तव्यं दिवोदासीये मदनरत्ने तु इक्षुदंडेन जलं चा
लयित्वा सप्तार्कपत्राणि सप्तबदरीपत्राणि च शिरसि कृत्वा वक्ष्यमाणमंत्रैः स्नात्वा तिलपिष्ट
मयापूपैर्हेमसहितैः संपूज्य विप्राय दद्यादित्युक्तं स्नानमंत्राश्च काशीखंडे यद्यज्जन्मकृतं पापं मया स
प्तसु जन्मसु तन्मे रोगं च शोकं च माकरी हंतु सप्तमी एतज्जन्मकृतं पापं यच्च जन्मांतरार्जितं मनोवा
क्कायजं यच्च ज्ञाताज्ञाते च ये पुनः इति सप्तविधं पापं स्नानान्मे सप्तसप्तिके सप्तव्याधिसमाकीर्णं ह
र माकरि सप्तमीति एतन्मंत्रत्रयं जप्त्वा स्नात्वा पादोदके नरः केशवादित्यमालोक्य नरो निष्कलुषो
भवेत् ततोऽर्घ्यं दद्यात् स च सौरागमे प्रोक्तः अर्कपत्रैः सबदरैर्दूर्वाक्षतसचंदनैः अष्टांगविधि
नार्घ्यं दद्यादादित्यतुष्टये अर्घ्यदानमंत्रो मदनरत्ने सप्तसप्तिवहप्रीत सप्तलोकप्रदीपन सप्त
म्यासहितो देव गृहाणार्घ्यं दिवाकरेति ततः सप्तमीप्रार्थना जननी सप्तलोकानां सप्तमी सप्तसप्तिके सप्त
व्याहृतिके देवि नमस्ते सूर्यमंडले इति अत्र सप्तमीध्यानं ताम्रवर्णां जपापात्रासाह्य यस्याः सप्तमी मतेति
नीलकुंतलकं कांसा जटाखंडेंदुभूषिता इभस्या सप्तमी गौरी द्विभुजा वज्रपाणिनीति अभयसप्तमीध्यानं
ततो निष्प्रतिथिं निर्वर्त्य चंदनेनाष्टपत्रकमलं विलिख्य तत्कर्णिकायां प्रणवसहितं सपत्नीकं शिवं संपू
ज्य पूर्वादिदलेषु रविं भानुं विवस्वंतं भास्करं सवितारं अर्कं सहस्रकिरणं सर्वात्मानं क्रमेण प्रणवादि
नमोंतनामभिर्गंधादिभिः संपूज्य स्वस्थानं गम्यतामिति विसृजेत् ततस्ताम्रादिपात्रे कांचनं कर्णाभर
णं हुतगुडतिलपिष्टसहितं अशक्तश्चेत्तिलपिष्टजं संस्थाप्य रक्तवस्त्रेणाच्छाद्य पुष्पादिभिः संपूज्य ब्रा
ह्मणैः स्वस्तिवाचनं कारयित्वा ब्राह्मणाय दद्यात् तत्र मंत्रः आदित्यस्य प्रसादेन प्रातःस्नानफलेन च दुष्ट
दौर्भाग्यदुःखघ्नं मया दत्तं तु तालकमिति ततो गुरुं संपूज्य सूर्यं ध्यायन् विप्रान्संभोज्य स्वयं भुंजीत इति ता

लकदानं ततः सप्ताश्वरथिरथं वर्णकैर्विलिख्य तथाच यथाशक्तिस्वर्णादिघटितंभानुंसंपूज्य दद्यात्
इति रथदानविधिः अत्रान्योऽपि विशेषः कथायां द्रष्टव्यः इयं मन्वादिः शुक्लपक्षस्यत्वात् पौर्वाह्णिकी
ग्राह्या माघस्य मलमासत्वे मन्वादिकश्राद्धमुभयत्रापि कार्यं मन्वादिकमिति पृथ्वीचन्द्रवचनात् अ
स्यां काश्मीरदेशे विशेष उक्तः लोलार्करथसप्तम्यां स्नात्वा गंगादिसंगमे सप्तजन्मकृतैः पापैर्मुक्तो
भवति तत्क्षणात् इति पद्मयोगोऽप्यत्र सति संभवे ज्ञेयः सच निर्णयामृते प्रोक्तः षष्ठीच सप्तमी
चैव वारश्चेदंशुमालिनः योगोऽयं पद्मको नाम सूर्यकोटिग्रहैः समः इति अथ भविष्योत्तरोक्ताः अ
चलासप्तमीव्रतकथा युधिष्ठिर उवाच अध्रुवेण शरीरेण सुदृष्टेनापि किं फलं माघस्नानं
विना देव त्वया प्रोक्तं यदुनंदन प्रातःस्नानासमर्थं तु शरीरं यस्य देहिनः किं तेन वद कर्तव्यं माघे संसारभी
रुणा सौकुमार्याच्छरीरस्य अबलानां विशेषतः कथं स्त्रियः सुरूपास्युः सुभगाः सुप्रजास्तथा पुण्यस्य महत
श्चैव सर्वमेतत्फलं यतः अल्पायासेन सुमहद्येन पुण्यमवाप्यते स्त्रीभिर्माघे मम ब्रूहि स्नानमेकं जगद्गुरो
श्रीकृष्ण उवाच श्रूयतां भरतश्रेष्ठ रहस्यं मुनिभाषितं यन्मया कस्यचिन्नोक्तमचलासप्तमीव्रतं वेश्यावे
इन्दुमती नाम रूपौदार्यगुणान्विता आसीत्कुरुकुलश्रेष्ठ सागरस्य विलासिनी सा वसिष्ठाश्रमं पुण्यं जगा
म गजगामिनी वसिष्ठं मुनिमासीनं प्रणम्यानतकंधरा कृतांजलिपुटा भूत्वा प्राहेदं जगतो हितं मया न द
त्तं न कृतं नोपवासव्रतं कृतं भक्त्या संपूजितः शंभुः स्वामिन्नाराधितो न च सांप्रतं तप्यमानाया व्रतं किंचि
द्दिश त्वं मे येन दुःखांबुपंकौघादुत्तरामि भवार्णवं एतत्तस्याश्च वचनं श्रुत्वातिकरुणं वचः कारुण्या
त्कथयामास वसिष्ठो मुनिसत्तमः वसिष्ठ उवाच माघस्य सितसप्तम्यां सर्वकामफलप्रदं रूपसौभा
ग्यजननं स्नानं कुरु वरानने कृत्वा षष्ठ्यामेकभक्तं सप्तम्यां विमले जलं राद्यंते चालयेथास्त्वं दत्वा शिरसि
दीपकं माघस्य सितसप्तम्यामचलाचालितं च यत् जलं मलानां सर्वेषां स्मृतं प्रक्षालनं ततः वसिष्ठव
चनं श्रुत्वा तस्मिन्नहनि भारत चकारेंदुमती स्नानं दानं सम्यग्यथाविधि स्नानस्यास्य प्रभावेन भुक्त्वा भो
गान्यथेप्सितान् इंद्रलोके पुरोमध्ये नायकात्वमुपागता अचलासप्तमीस्नानं कथितं ते विशांपते स
र्वपापप्रशमनं सुखसौभाग्यवर्द्धनं युधिष्ठिर उवाच सप्तमीस्नानमाहात्म्यं श्रुतं कृष्ण विशेषतः सांप्र
तं स्नानं मे ब्रूहि विधिं मंत्रसमन्वितं श्रीकृष्ण उवाच एकभक्तेन संतिष्ठेत् षष्ठ्यां संपूज्य भास्करं
सप्तम्यां तु प्रगे प्रातः सुगंभीरं जलाशयं सरित्सरस्तडागं वा देवखातमथापि वा स्नानावगाहमन्वे
षेद्दुष्टसत्वैरदूषितं आलाबुपत्रिभिश्चैव जलगैर्मत्स्यकच्छपैः न केन चाल्यते यावत्तावत्स्नानं समा
चरेत् सौवर्णे राजते पात्रे भक्त्यालाबुमयेऽथवा तैलवर्तिसुदात्तं वा महारंजनरंजितं महारंजनकौसुंभ
समाहितमना भूत्वा दत्वा शिरसि दीपकं भास्करं हृदये ध्यात्वा इमं मंत्रमुदीरयेत् नमस्ते रुद्ररूपाय र
सानां पतये नमः वरुणाय नमस्तेस्तु हरिवास नमोऽस्तु ते जलोपरि ततो दीपं स्नात्वा संतर्प्य देवताः
चंदनेन लिखेत्पद्ममष्टपत्रं सकर्णिकं मध्ये शिवं सपत्नीकं प्रणवेन समन्वितं प्राक्दले रविः पूज्यो
भानुश्चैवानले तथा याम्ये विवस्वान्नैर्ऋत्ये भास्करं पूजयेद्बुधः पश्चिमे सविता पूज्यस्तथार्कमानि
लेदले सौम्ये सहस्रकिरणः शैवे सर्वात्मने नमः पूज्याः प्रणवपूर्वास्तु नमस्कारयुतास्ततः पुष्पैःस
गंधधूपैश्च भक्त्यैव युधिष्ठिर विसृज्य वस्त्रसंवीतस्तस्मान्नगम्यतामिति विसर्जयेत् सरस्तस्मात्समा
गम्य स्वमालयं ताम्रपात्रे यथाशक्त्या मृण्मये वाथ भक्तिमान् स्थापयेत्तिलपिष्टं च सघृतं सगुडं तथा
कांचनं तालकं कृत्वा अशक्तस्तिलपिष्टजं संछाद्य रक्तवस्त्रेण पुष्पधूपैर्यथार्चयेत् ततस्तच्चालये
द्विप्रे दद्यान्मंत्रेण तालकं आदित्यस्य प्रसादेन प्रातःस्नानफलेन च दुष्टदोषभयहरं मया दत्तं त
तालकं पूजयित्वोपदेष्टारं विधानमाश्च पूजयेत् ततो द्विजैः समग्रं च भास्करध्यानतत्परः तावच्च

कथास्त्वेव नम्ना वा धर्मसंहिताः पाखण्डादिभिरालापे दर्शनस्पर्शनादिकं वर्जयेत्तत्परः स्यात्ततस्ततो
वै भुजनैः सह यत्तते कथितं पार्थ नृप सौभाग्यकारकं अचलासप्तमीस्नानं सर्वकामफलप्रदं इति प
ठति यश्चैव यः शृणोति प्रसंगात्कलिकलुषविनाशं सप्तमीस्नानमेतत् इह मपि च जनानां यो ददा
ति प्रयत्नात्सुरसदनगतो सौ मोदते चाप्सरोभिः इति भविष्योत्तरोक्तमचलासप्तमीव्रतम् ॥
अथाध्यायनकौमुदीप्रोक्तं संक्षेपेणाचलासप्तमीविधानं तत्र माघशुक्लषष्ठ्यां प्रातः स्नात्वा देश
कालौ संकीर्त्य मम अखिलपापक्षयपूर्वक रूपसौभाग्यसर्वकामफलप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं
अचलासप्तमीव्रतं करिष्ये इति संकल्प्य भास्करं संपूज्य स्वयमेकभक्तं कुर्यात् ततः सप्तम्यां स्वगंभीरं
जलाशयं तडागं देवखातं नदीं वा गत्वा न केनापि चलितं जलमित्युद्देशेन चालयित्वा सौव
र्णे राजते ताम्रमये पात्रे अशक्तावलाबुमये कौसुंभरंजितवर्तितिलतैलप्रज्वालितं दीपं संस्थाप्य स
प्तार्कपत्राणि सप्त बदरीपत्राणि च शिरसि निक्षिप्त्वा भास्करं ध्यायन् इमं मंत्रमुदीरयेत् नमस्ते रुद्ररूपाय
रसानां पतये नमः वरुणाय नमस्तुभ्यं हरिवास नमोस्तु ते इत्युक्त्वा जले दीपं प्रक्षिपेत् ततः स्नात्वा
देवताः संतर्प्य तत्तीरे चंदनेनाष्टदले विलिख्य तत्र पूर्वादिक्रमेण रविं १ भानुं २ विवस्वंतं ३ भास्करं ४
सवितारं ५ अर्कं ६ प्रभाकरं ७ सहस्रकिरणं मध्ये च मासहितं शिवं सप्रणवनाममंत्रैः संपूज्य विसृज्य च स्वगृ
हमागत्य तत्र ताम्रपात्रे यद्वा मृण्मये घृतगुडयुततिलपिष्टयुतं सौवर्णं ताम्रपत्रं कर्णाभरणमिति
भविष्योत्तरोक्तवस्त्रेण आच्छाद्य संपूज्य ब्राह्मणान्संचालयेत् ततो ब्राह्मणं संपूज्य तत्सर्वं निवेदयेत् त
त्र मंत्रः आदित्यस्य प्रसादेन प्रातःस्नानफलेन च दुष्टदौर्भाग्यदुःखघ्नं मया दत्तं हितालकं इति पठित्वा
निवेदयेत् ततः सप्तम्यादिनं ब्रह्मादिभास्करं ध्यायन् तर्पयित्वा बंधुजनैः सह भुंजीत इत्यचलासप्तमीव्रत
विधिः अस्यामेव रथसप्तमीव्रतं भविष्योत्तरे कथं सा क्रियते कृष्ण मनुष्यै रथसप्तमी चक्रवर्तित्व
फलदाया विख्याता त्वया मम श्रीकृष्ण उवाच आसीत्कांबोजविषये यशोवर्ती नराधिपः वृद्धेव
यसि तस्यासीत्सर्वव्याधियुतः सुतः तत्कर्मपाके सोपृच्छद्विनीतो द्विजपुंगवं स चाह राजन्नेवैष पापं यद्व
पुण्यः सर्वजन्मनि ददर्श रथसप्तम्यां क्रियमाणं व्रतं नरैः व्रतदर्शनमाहात्म्यादुत्पन्नो जठरे तव अदा
ता विभवे तस्मात्तेनायं व्याधितो भवत् ततः स राजा मपृच्छत्किमेतस्य विधीयतां द्विज उवाच यस्य
संदर्शनाज्जातः पुत्रोयं तव सप्तमि तदेव क्रियतां राजन् रथसप्तमिसंज्ञितं व्रतं पापहरं येन चक्रव
र्तित्वमाप्यते राजोवाच ब्रूहि विप्र व्रतं कृत्स्नं सविधानं समंत्रकं ईश्वराणां दरिद्राणां सर्वसंपत्प्रदाय
कं द्विज उवाच शुक्लपक्षे तु माघस्य षष्ठ्यां मामंत्रयेद्गृही स्नानं शुक्लतिलैः कार्यं नद्यभावे तु कुत्रचि
त् विमले सलिले राजन्विधिवद्धर्मतः देवादीन्पूजयित्वा तु गत्वा सूर्यालयं ततः सूर्यं संपू
ज्य मनसा पुष्पधूपगन्धैः शुभैः आगत्य भवने पश्चात्पंचयज्ञांस्तु निर्वपेत् संतोष्यातिथिभृत्यांश्च
बालवृद्धाश्रितांस्तथा विद्यमाने दिने भुंजीयाहारमतः तैलवर्जितं रात्रौ विप्रान्समाहूय विधिवत्तं वेदपा
रगं संपूज्य नियमं कुर्यात्तस्यैवमाधाय चेतसि सप्तम्यां तु निराहारो भूत्वा भोगविवर्जितः भोक्ष्येहं
मा जगन्नेत्र निर्विघ्नं तत्र मे कुरु इत्युच्चार्य नृपश्रेष्ठ तोयं तोयेषु निक्षिपेत् ततो विसृज्य तं विप्रं स्वपे
द्भूमौ जितेंद्रियः ततः प्रातः समुत्थाय कृतावश्यः शुचिर्नरः कारयित्वा रथं दिव्यं किंकिणीजाल
मालिनं सर्वोपस्करसंयुक्तं रत्नैः सर्वांगचित्रितं कांचनं राजतं वापि हयसारथिसंयुतं ततो मध्या
ह्नसमये कृतस्नानादिको व्रती अतिथीन्वीक्षमाणस्तु पाखण्डालापवर्जितः सोपस्करं जपं कृत्वा
समागत्य गृहमालयं निवृत्तान्यकार्यस्तु कृत्वा ब्राह्मणवाचनं वस्त्रमंडपिकामध्ये स्थापयित्वा रथं
ततः कुंकुमेन सुगंधेन चर्चयित्वा समंततः मालाभिः पुष्पदीपानां समंतात्परिवेष्टयेत् धूपेनागुरुणा

णमुपरि स्थित्वा तथोपरि रथं संस्थापयेद्भानुं सर्वलक्षणलक्षितं वितानं तु रथे हैमं च विन्यसेद्ध्वजविवर्जितः
कृत्वा तु जातिवैकल्यं वैकल्याद्विकलं फलं ततो देवं समभ्यर्च्य सरथं सहसारथिं पुष्पैर्धूपैस्तथा गंधैर्व
स्त्रालंकारभूषणैः फलैर्नानाविधैर्भक्ष्यैर्नैवेद्यैर्घृतपायसैः पूजयेद्भास्करं भक्त्या मंत्रैरेभिस्त्रिभिः क्रमात्
भानो दिवाकरादित्य मार्तंड जगतां पते अपांनिधे जगद्दत्तभूतभावन भास्कर प्रणतार्तिहराचिंत्य विश्व
चिंतामणे प्रभो विश्वोऽहंसादिदेवेश आदिमध्यांतकारक भक्तिहीनं क्रियाहीनं मंत्रहीनं जगत्पते प्र
सादात्तव संपूर्णमर्चनं तदिहास्तु मे एवं संपूज्य देवेशं प्रार्थयेत्स्वमनोगतं ददाति प्रार्थितो भानुर्भक्त्या
संतोषितो नरैः विघ्नहीनोऽपि विधिना सर्वमेतत्प्रकल्पयेत् इत्थं समारथं साश्वं वर्णकैर्भित्तिलेखि
तं सौवर्णं च तथा भानुं यथाशक्त्या प्रकल्पितं प्रागुक्तेन विधानेन संपूजयित्वा तु विस्तरं जागरं कारये
द्गीतवादित्रनिःस्वनैः श्रोत्रणीयैर्विचित्रैश्च पुण्याख्यानकथादिभिः रथयात्रां प्रपूज्य तु भानो
रायतनं श्रितः अनिमीलितनेत्रस्तु नयेत्तां रजनीं बुधः प्रभाते विमले स्नातः कृतकृत्यस्ततो द्विजा
न् अर्चयेद्विविधैः कामैर्दानैर्वस्त्रविभूषणैः अश्वमेधेन तुल्यं स्यादिदं ब्रह्मविदो विदुः अतो दद्यान्निदा
नानि यथाशक्त्या विवस्वतः इत्थं चतुरं वै दद्यात्सर्वोपस्करसंयुतं रक्तं च वस्त्रयुगलं रक्तपुष्पसमन्वितं
एवं चीर्णे व्रते राजन्किं नाप्नोति जगत्त्रये तस्मात्सर्वप्रयत्नेन कर्तव्या रथसप्तमी येनारोगो भवेत्सुत
स्त्वदीयो नृपसत्तम व्रतस्यास्य प्रभावेन प्रसादाद्भास्करस्य च भविष्यति महातेजा महाबलपराक्रमः
भुक्त्वा भोगांश्च विपुलान्कृत्वा राज्यमकंटकं दत्वासौ रथसप्तम्यां मृते त्वयि महाभुजः उत्पाद्य पुत्रान्सो
ऽन्ते सूर्यलोकं प्रयास्यति तत्र स्थित्वा कल्पमेकं चक्रवर्ती भविष्यति श्रीकृष्ण उवाच इति सर्वं समाख्या
यातीति पार्थ द्विजोत्तमः यथागतं जगामासौ नृपः सर्वं चकार ह यदादिष्टं द्विजेंद्रेण तत्सर्वं संबभूव ह
एवं स चक्रवर्तित्वं प्राप्तवान्नृपनंदन श्रूयते यस्तु मांधाता पुराणेषु परंतप यद्दृष्ट्वा याङ्क्याय
स्वाधिपविकीर्तयेत् तस्मिंस्तुष्टे भानुर्यद्व्रते वाभयं सदा एवंविधं रथवरं रथवाजियुक्तं हैमं च
हैमप्रभातदीधितिनाशनं तं तथा च माघसितसप्तमिवासरे यः सोऽभग्नचक्रगतिरेव महीं भुनक्ति इति
भविष्योत्तरे रथसप्तमीव्रतकथा यदा सप्तमी हस्तसंयुता स्यात्तदा महापद्मा रथसप्तमी भवति ॥
तदुक्तं हेमाद्रौ मत्स्यपुराणे इत्येषा कथिता वीर रथाख्या सप्तमी परा महती च समाख्याता महा
पातकनाशिनी तथा च शुक्लपक्षे तु सप्तम्यां यदा हस्तकरो भवेत् तस्मात्सा तु महापुण्या सप्त
मी पापनाशिनी तस्यां संपूज्य देवेशं चित्रभानुं दिवाकरं सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः
सप्तम्युपवासं कुरुते तस्यां नियतमानसः सर्वपापविशुद्धात्मा सूर्यलोके महीयते इति माघशुक्ला
यां सप्तम्यां रथसप्तमीव्रतं अथास्यानुष्ठानविधिरुद्यापनकौमुद्यां तत्र षष्ठ्यां प्रातः शुक्लतिलै
र्नद्यादौ स्नात्वा देवादीन्पूजयित्वा सूर्यालयं गत्वा सूर्यं नत्वा पुष्पधूपान्नैः संपूज्य गृहमागत्य
अतिथिपूजादिकं विधाय विद्यमाने दिने अतैलभोजनं स्वयमश्नीयात् रात्रौ विप्रं समाहूय नि
यमं कुर्यात् सप्तम्यां च निराहारो भूत्वा भोगविवर्जितः भोक्ष्येऽष्टम्यां जगन्नाथ निर्विघ्नं कुरु मे व्रतं
इत्युच्चार्य संकल्प्य जलं जले क्षिपेत् विप्रं संपूज्य भूमौ स्वपेत् ततः सप्तम्यां प्रातः अरुणोदयवे
लायां हरिद्रामलकचूर्णमृत्तिकाभिः सह स्नात्वा कृतावश्यकः सौरसूक्तं च जप्त्वा गोमयोप
लिप्तायां भूमौ नदीतीरे गृहांगणे सुस्थले वा तुलसीवने वा वस्त्रादिभिर्मंडपं कृत्वा तन्मध्ये वे
दिकां तदुपरि धान्यानां रजोभिः कुंकुमेन वा अष्टदलं विधाय तदुपरि अरुणवस्त्रं प्रसार्य पीठकं चक्र
तुरंगान्वितं सौवर्णं सोपस्करं रथं अशक्तौ राजतं संस्थाप्य तदुपरि सूर्यमावाह्य तत्र ध्यानं द्विभुजं पद्मधरं च
काश्यपं पद्मासनसमन्वितं मुहूर्तं समये सम्यग्ध्येयं नारायणं शुभं रक्तगंधाक्षतपुष्पधूपगुग्गुलादिधूपैः

पायसान्नं नैवेद्यं एवं षोडशोपचारैः संपूज्य तदग्रे धातुकां रजनीचूर्णेन वा अष्टदलं पद्मं विरच्य पूर्वादिक्र
मेण रविं आदित्यं सवितारं मित्रं खगपतिं सूर्यं भास्करं मिहिरं मध्ये नारायणं पूजयित्वा भ
क्तिहीनं क्रियाहीनं मन्त्रहीनं जगत्पते प्रसादात्तव संपूर्णं यत्कृतं तदिहास्तु मे इति संप्रार्थ्य स्वगाऽ
मूले रवौ प्रणामे सति शेषप्रयोजनं रविं संप्रार्थ्य दक्षिणशिरस्कं धौतवस्त्रेण आच्छाद्य स्वपेत् या
वदुत्थं भास्करो गच्छेत्तावत्स्वप्ने यत्स्वं मनोभिलषितं कथयेत् तत उत्थाय बालमुक्ताफलांकिता
र्घ्यं धातुरत्नसौ दुकूलवेष्टितं सदक्षिणं सताम्बूलं कूष्माण्डं दद्यात् तदभावे मातुलिंगकदलं वा अकिं
चनेन ससामर्थ्ये स्वर्णपंचवर्णकेन निर्मितां सौवर्णप्रतिमां पूर्ववदर्चयेत् ततो ब्राह्मणभोजनं कृत्वा आत
स्तं सर्वं गुरवे दत्वा गां च दद्यात् ततः इष्टजनैः सह भुंजीत एवं व्रतकर्ता इह पुत्रपौत्रान् भुक्त्वा अन्ते सूर्य
लोकं याप्नोतीति कथायां अत्रापि स्नानविधिरचलासप्तमीविधिना ज्ञेयः इति रथसप्तमीव्रतविधानं
अस्यामेव भविष्योत्तरोक्तं रथाकसप्तमीव्रतं हेमाद्रौ माघे मासि सितादिसप्तम्यामुपोष्य भानुं पूज
यित्वा वर्षान्ते स्वर्णरथं सूर्यं संपूज्य ब्राह्मणाय दद्यादिति रथाकसप्तमीव्रतं इयमेव महासप्तमी ॥
अस्यां सूर्याभिधान सूर्यपूजाव्रतं शुक्लायां माघसप्तम्यां पूषा नाम महारविः आदित्यः कश्यपाज्जा
तो सहस्रकिरणो महान् तस्मात्तं पूजयेत्तत्र सोपवासो जितेन्द्रियः अर्घ्यैः पुष्पैस्तथा धूपैर्दीपैर्भक्ष्यै
र्मनोरमैः गीतैर्नृत्यैस्तथा वाद्यैर्होमैर्ब्राह्मणतर्पणैः अष्टम्यां च पुनर्भक्ष्यैः पूर्णयामथ घृतादिभिः
भक्ष्याणि तानि देयानि भक्षणीयानि यानि वै इति माघशुक्लसप्तम्यां सूर्यपूजाव्रतम् ॥
अस्यामेव वाराहोक्तमारोग्यसप्तमीव्रतं वराह उवाच कथयामि महापुण्यं सर्वपापप्रणाशनं
तथैव माघसप्तम्यां सितायां समुपोषितः पूजयेद्भास्करं देवं विश्वरूपं सनातनं आदित्य भास्कर रवे
भानो सूर्य दिवाकर प्रभाकरेति संपूज्यो देवः सर्वेश्वरो रविः षष्ठ्यां चैव कृताहारः सप्तम्यामुपवासकृत् अ
ष्टम्यां चैव भुंजीत एष एव विधिः स्मृतः अनेन वत्सरं पूर्णं पूजयेद्विधिना रविं तस्यारोग्यं धनं धान्यमिह ज
न्मनि जायते अथास्यामेव रथसप्तमीव्रतं मदनरत्ने आदित्यपुराणे आदित्य उवाच माघमासे तु स
प्तम्यां शुक्लायां समुपोषितः यः पूजयेत्तु मां भक्त्या तस्याहं पुत्रतां व्रजे एवं चोभयसप्तम्यां मासि मासि
सुरोत्तम यस्तु मां पूजयेद्रुक्ममेकमेकमाददात् स मे कं वर्षमेकं प्रयच्छामि सुतं तस्य महात्मनोंशसमुद्भ
वे वित्तं यशस्तथा पुत्रमारोग्यं परमं पदं माघे मासे तु यो ब्रह्मन् शुक्लपक्षे जितेन्द्रियः पाखण्डान्पतिता
न्यान्न जल्पन्विजितेन्द्रियः उपोष्य विधिवत्सप्तम्यां श्वेतमाल्यविलेपनैः पूजयित्वा तु मां ब्रह्मन्वीरहोमं स
माचरेत् प्रीणयित्वा हरिं भक्त्या हविर्भिः पद्मलोचनं वीरहोमस्त्वग्निहोत्रं हरिरादित्यः दध्योदनेन पयसा
पायसेन हविष्येण तथा अनेन विशेषः तस्यैव कृष्णपक्षस्य षष्ठ्यां सप्तम्यामुपोषितः तस्यैवेति माघमासस्य
रक्तोत्पलैः सुगंधाढ्यै रक्तपुष्पैश्च पूजयेत् एवं यः पूजयेद्भक्त्या नरो मां विधिवत्सदा उभयोरपि देवे
श पुत्रं लभते वरमिति पुत्रसप्तमीव्रतं इयं माघशुक्लसप्तमी मन्वादिः तत्र मन्वादिगुणकं श्राद्धादि
विधेयम् अथ माघशुक्लसप्तमीमारभ्य संवत्सरसाध्यं विशोकसप्तमीव्रतं हेमाद्रौ तत्र सूर्यं संपू
ज्य तैललवणं भुंजीत अस्यामेवारोग्यसप्तमीव्रतं तत्र सप्तम्यामुपवासादिकं कृत्वा अष्टम्यां पार
णं कुर्यादिति अथ भविष्योत्तरोक्तं द्वादशसप्तमीव्रतं भविष्ये श्रीकृष्ण उवाच अथान्यत्ते प्रवक्ष्या
मि सप्तमीकल्पमुत्तमं माघमासात्समारभ्य शुक्लपक्षे युधिष्ठिर सप्तम्यां कृतसंकल्पो वर्षमेकं समीभ
वेत् वरुणं माघमासे तु भानुं संपूज्य कारयेत् ब्रह्मकूर्चविधानं च यथाशास्त्रं नृपोत्तम अष्टम्यां भो
जयेद्विप्रान् तिलपिष्टगुडोदनैः अग्निष्टोमस्य यज्ञस्य फलं कृत्स्नमवाप्नुते १ तद्वच्च फाल्गुने मासि
सूर्यायेति प्रपूजयेत् वाजपेयस्य यज्ञस्य यथोक्तं लभते फलं सप्तम्यां चैत्रमासे तु वेदांशुरिति पूजयेत्

ताहारो रविं भक्त्या पूजयेद्दिपिनाल्प एवोक्तेन जपेज्जप्यं देवस्य पुरतः स्थितः वायो वलिषु भद्रं ते स्तुभद्रं ते
स्तु वै सदा ममापि कुरु भद्रं वै प्राशनाद्धर्मदो भव अनेन मंत्रेण पीतपवनो रात्रिमतिवाहयेदिति येऽपि
पारणं कुर्यात् इति विजयासप्तमीव्रतं अथ नानासप्तमीव्रतानि हेमाद्रौ सुमंतुरुवाच यः क्षिपेदे
कभक्तेन शुक्लाद्वादशसप्तमीः राजेंद्र याचकाहारः शीर्णपर्णाशनोऽपि वा क्षीराशी चैकभक्तो वाभि
ताहारोऽथवा पुनः जलाहारो यवाभक्त्वा पूजयित्वा दिवाकरं एवं भक्त्या विवस्वंतं प्रतिमासे सप्तमीहि
तः पूजयेद्दिविवस्वतो नामानि परिकीर्तयेत् तत्र नामानि चैत्रादिक्रमेण मधौ विष्णुर्माधवे अर्य
मा शुक्रे विवस्वान् शुचौ दिवाकरः श्रावणे पर्जन्यः नभस्ये वरुणः अश्वयुजे मित्रः कार्तिके मार्तंडः मार्ग
शीर्षे अंडजः पौषे पूषा माघे भगः फाल्गुने त्वष्टेति इति भविष्योत्तरोक्तं नामयादिसप्तमीव्रतं अथोदक
सप्तमीव्रतं उदकप्रसृतिं पीत्वा क्रियते या च सप्तमी सैवोदकसप्तमी स्यात्सर्वदा सर्वकामदेति उदकस
प्तमी वराटकासप्तमी हेमाद्रौ वराट त्रयमुत्क्षिप्य न यावदन्नादि लभ्यते तदेव भक्ष्यं कल्पयित्वा उपा
षणं कुर्यादिति भविष्योत्तरे वराटकासप्तमीव्रतं अथ सप्तमी माघे आदित्यमंडकव्रतं तत्र रक्तचंदनेन
मंडले सूर्यं संपूज्य सहिरण्यमव्रणं मंडकं दद्यात् तत्र मंत्रः आदित्यतेजसोत्पन्नं राज्ञीकरविनिर्मितं
श्रेयसे मम विप्र त्वं प्रतीच्छापूपमुत्तमं प्रतिग्रहमंत्रः कामदं धनदं धर्म्यं पुत्रदं सुखदं तथा आदित्यप्री
तये दत्तं प्रतिगृह्णामि मंडकं एवं प्रतिसंवत्सरं कर्तव्यमिति इत्यादित्यमंडकव्रतं माघशुक्लाष्टम्यां भी
ष्माष्टमीव्रतं नारदीये माघे मासि सिताष्टम्यां भीष्मं संतर्पयेद्द्विज संततिं चाप्यविच्छिन्नामिच्छंश्च
वापराजयं पाद्मेपि माघे मासि सिताष्टम्यां सतिलं भीष्मतर्पणम् श्राद्धं चैव तु ये कुर्युस्ते स्युः संतति
भागिन इति अत्र श्राद्धं काम्यं तर्पणं तु काम्यं नित्यमपि ब्राह्मणाद्याश्च ये वर्णा दद्युर्भीष्माय नो जलं
संवत्सरकृतं तेषां पुण्यं नश्यति सत्तमेति इति मदनरत्नवचनात् इदं च जीवत्पितृकेणापि का
र्यं जीवत्पितापि कुर्वीत तर्पणं यमभीष्मयोरिति पद्मवचनात् यत्तु सपितुः पितृकार्येष्वना
धिकारः कर्मचनेति निषेधः स त्वेतद्व्यतिरिक्तपितृकार्यपरः एतच्चापसव्येन तेनापि कार्य
मिति निर्णयसिंधौ दिवोदासीये मंत्रश्च महाभारते भीष्मः शांतनवो वीरः सत्यवादी जितेंद्रियः आ
भिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियां वैयाघ्रपदगोत्राय सांकृतिप्रवराय च अपुत्राय ददाम्येतत्सलिलं
भीष्मवर्मणे वसूनामवताराय शंतनोरात्मजाय च अर्घ्यं ददामि भीष्माय आबालब्रह्मचारिणे माघशु
क्लानवमी महानंदा प्रोक्ता नारदीये माघे मासेऽथ शुक्ला नवमी लोकपूजिता महानंदेति सा ख्या
ता महानंदकरी नृणां तस्यां स्नानं तथा दानं जपो होम उपोषणं सर्वमक्षयतां याति नात्र कार्या विचार
णेति माघशुक्लदशम्यामंगिरसदेवानां पूजोक्ता नारदीये माघशुक्लदशम्यां तु सोपवासो जितेंद्रि
यः देवानांगिरसो नाम दश सम्यक् प्रपूजयेत् कृत्वा स्वर्णमयान् विप्र गंधाद्यैरुपचारकैः आत्मा ह्या
युर्मनुर्दक्षो मदः प्राणस्तथैव च हविष्मांश्च गविष्ठश्च दत्तः सत्यश्च ते दश दशविप्रान् भोजयित्वा मधु
रान्नेन नारद मूर्तीरेभ्यः प्रदद्यात्ताः स्वर्गलोकमयेक्रमात् इत्यांगिरसदशमीव्रतं अथारोग्यदश
मीव्रतं सनत्कुमार उवाच अथ त्वं शृणु देवर्षे दशमीव्रतमुत्तमं सर्वरोगार्तिशमनं सर्वपुष्टिप्रदं शु
भं व्रतमेतन्महाबुद्धे कार्यमारोग्यमिच्छता सर्वदा कार्यमेतद्धि लिप्सता चिरजीवितं उपवासश्च
कर्तव्यो नवम्यामपि मानद दशम्यां च कृतस्नानो मंगलायतनं हरिं देवर्षे दिव्यमाल्यं ध्यात्वा चक्र
गतां पतिं वैनतेयभुजासक्तं वनमालाविभूषितं शंखचक्रगदापद्मशार्ङ्गासिधरमच्युतं फलैश्च
मधुरैः पुष्पैः पायसेन समर्चयेत् अग्रतः स्थापयेत्कुंभं तीर्थतोयेन पूरितं तस्मिन्नावाहयेत्संच चक्रा
दीन्यायुधानि च चक्रगदासुपालयतुःशार्ङ्गिणी ति हेमाद्रिः पूजयेद्रक्तकुसुमैर्गुडान्नेन समाहितः

द्रोणमात्रतिलैर्ब्रह्म कारयेदजिनोपरि तस्मिन्नष्टदलं पद्मं सौवर्णं विनिधाय च मनःषष्ठानीन्द्रियाणि प्रा
णबुद्धिदलेष्वथ कर्णिकायां तथा कालं क्रमेणैवं समर्चयेत् मनःश्रोत्रंचत्वक्चक्षुर्जिह्वाघ्राणप्राणो बु
द्धिरिति क्रमात् पूर्वादिदलेषु अनामयानि तिष्ठन्तु प्राणाश्चिरसंस्थिताः अनाकुलाच मे बुद्धिः सर्वे स्यु
र्निरुपद्रवाः मनसा कर्मणा वाचा मया जन्मनि जन्मनि संचितं तत्क्षपयत्वेनः कालात्मा भगवान्हरिः
इति संप्रार्थ्य गुरवे सदक्षिणमुपस्करं दत्वा ब्राह्मणान्पायसादिसदन्नेन भोजयित्वा आचार्याणामंत्र
पारायणपुरःसरं स्थापितो अवशिष्टेनान्नेन गुर्वनुज्ञापुरःसरं बांधवैः सह भुक्त्वा नियमांस्त्यजेत् एवं
कृते क्षिप्रमारोग्यं भवतीति इति गरुडपुराणोक्तमारोग्यदशमीव्रतम् अत्र शुक्लदशमीध्यानं वी
रमित्रोदये हेमाद्रौ सिंहासनस्थिताशुभ्रा दशमी पीतकुंडला ज्ञानमुद्राभयाचैवं पीतवस्त्राब्जमा
लिनी १ कृष्णवर्णा तुलायस्या दशमी दंडपात्रिणी अथ विष्णुधर्मोत्तरोक्तं धर्मव्रतत्रयं शुक्लपक्षे
दशम्यां कार्य्यं मार्कंडेय उवाच शुक्लपक्षे दशम्यां च सोपवासस्तु मानवः धर्मं संपूजयेद्देवं सर्वलो
कसुखावहं मार्गशीर्षादथारभ्य नित्यमेतदरिंदम ततो गंधनमस्कारधूपदीपान्नसंपदा संपूज्य स
र्पिषा वह्नौ हुत्वा विप्रांश्च पूजयेत् व्रतान्ते पयस्विनीं गां दत्वाश्वमेधफलं प्राप्नोति कृष्णपक्षे तथा
प्येतत्कृत्वा संवत्सरं व्रतं राजसूयमवाप्नोति कुलमुद्धरते स्वयं कृत्वा पक्षद्वयेप्येतद्व्रतं मनुजसत्त
म राजसूयाश्वमेधाभ्यां फलं प्राप्नोत्यसंशयं इदं व्रतं शुक्लायां कृष्णायां द्वयोर्वेति त्रीणि व्रतानि च
स्वर्गलोकमवाप्नोति कुलमुद्धरते स्वकं धर्ममतिर्भवेत्तस्य धर्मं प्राप्नोति मानवः यत्र यत्राभिजाये
त तत्र धर्मपरो भवेत् आरोग्यमायुष्यकरं यशस्यं ज्ञानप्रदं पापविनाशकारि कर्तव्यमेतत्पुरुषै
र्यथावत्पूज्यो हि विष्णुर्भगवान्स धर्मः इति विष्णुधर्मोत्तरोक्तं धर्मव्रतत्रयं अथ भविष्योत्तरे यमव्रतं
दशम्यां यम उद्दिष्टः सर्वव्याधिहरो ध्रुवं मूलमंत्राः स्वसंज्ञाभिरंगमंत्राश्च कीर्तिताः मूलमंत्राः प्र
धानमंत्राः अंगमंत्राः परिवारदेवतामंत्राः पद्मपत्रेषु परिवारसहितं कर्णिकास्थं तिथीशं हु
त्वा गंधादिभिः संपूज्य समिन्नीवारदधिमाक्षिकादिकैर्होमं कुर्यात् अत्रादौ पूजा ततो हुतान्ते
धान्यहोमस्तत आज्यधारादिहोमः इति भविष्योत्तरोक्तं यमव्रतं अथ विष्वव्रतम् पुलस्त्य उवाच द
शम्यामेकभक्ताशी समान्ते दशधेनवः दिवाश्वकांचनी दद्यान्नारीरूपा महीपते तिलद्रोणोपरि ग
ताः सार्वभौमो भवेन्नृपः एतद्धि विष्वव्रतं नाम महापातकनाशनं इति पद्मपुराणोक्तं विष्वव्रतम्
अथ दशादित्यव्रतम् कश्यप उवाच भानुवारे सिते पक्षे दशम्यां चैव नारद प्रातःकालेथ मध्याह्ने
स्नानं कुर्याद्यथाविधि स्नात्वा नद्यां देवखाते तीर्थप्रस्रवणे तथा विधाय नित्यकर्माणि तर्पयेत्
पितृदेवताः ततः आगत्य स्वगेहे स्थंडिलं कारयेच्छुभम् तस्योपरि न्यसेत्पद्मं द्वादशारं प्रकीर्तितम्
ततः पूजा प्रकर्तव्या गभस्त्यस्य क्रमेण च सूर्यपूजनं सौरमंत्रैरावाहनादिषोडशोपचारैः कार्य्यं
तद्यथा नमः सवित्रे आवाहनम् आसनं पाद्यं अर्घ्यं आचमनं स्नानं वस्त्रं यज्ञोपवीतं गंधा
क्षतपुष्पधूपदीपनैवेद्यफलतांबूलदक्षिणाश्च विसर्जनम् ततो दुर्मुखादिपूजनम् कृष्णवर्णादि
शपुत्रिकाः कुर्यात् दुर्मुखायै नमः दीनवदनायै नमः मलिन्यै नमः सद्बुद्धिनाशिन्यै नमः हिंसा
यै नमः दुष्टायै नमः मित्रविरोधिन्यै नमः उच्चाटकारिण्यै नमः बहुचिंताप्रदायै नमः प्रभिन्ना
ममंत्रैः प्रतिष्ठाप्य पूजां च कृत्वा गोमयेन लेपयेत् ततः प्रार्थना नित्यं पापकरे पापे देवद्विजविरोधि
नि गच्छ त्वं दुर्दशे देवि नित्यं शास्त्रविरोधिनि इति विसर्जनम् दशग्रंथिसमायुक्तं दशसूत्रोपशो
भितं डोरकं तत्र प्रतिष्ठाप्य करे वध्वा प्रपूजयेत् सौरमंत्रेण षोडशोपचारैर्डोरकपूजनम् ततः समाप
येद्देवं भास्करं च दिवाकरं दुर्दशानाशनं देवं चिंतयेद्विश्वरूपिणम् अनेन नमस्कारः अथ वायन

मंत्रः फलानां दशकं दद्याच्छ्रोत्रियाय कुटुंबिने दक्षिणासहितेनैव प्रीतो भव दिवाकर भास्वरीबुद्धिदा तावद्दद्यस्यो भास्करः स्वयं भास्करस्त्वं कोभाभ्यां भास्कराय नमोस्तु ते अनेन वायनदानम् अथ दशापूजनम् कुडास्थाने चंदनेन कारयेद्दशपुत्तिकाः सबुद्धिदायिन्यै नमः सुखकारिण्यै नमः सर्वसंपत्तिदायै नमः इष्टभोगप्रदायै नमः लक्ष्म्यै नमः कांतिदायै नमः दुःखनाशिन्यै नमः पुत्रदायै नमः विजयायै नमः धर्मदायिन्यै नमः एभिर्नाममंत्रैः षोडशोपचारपूजां कृत्वा अथ प्रार्थना विशुद्धवसनां देवीं सर्वाभरणभूषितां ध्यायेद्दशादिशं देवीं वरदामभयप्रदाम् इति ध्यानम् इत्येवं पूजनं कुर्यात् अथ कथा सूत उवाच मेरुपार्श्वे भद्रपीठे सुखासीनं जगद्गुरुं कश्यपं सृष्टिकर्तारं नाप संशुद्धमानसं नारदो वै सर्वश्रेष्ठस्त्रैलोक्यभ्रमणप्रियः कदाचिद्दुर्दशां प्राप्तः कश्यपं शरणं गतः नारद उवाच देवदानवगंधर्वा ऋषिपन्नगमानवाः स्रष्टासि सर्वभूतानां धर्मो धर्मवतां वर दुष्टग्रहाभिभूतानां दुर्दशा हन्त चैन मां स्तुत्वा विज्ञापयामीह कश्यपं धर्मवत्सलम् कश्यप उवाच देवानां दुर्दशा चैव जायते ब्रह्मवादिनां प्रसन्नोहं मुनिश्रेष्ठ लोकानां हितकाम्यया नारद उवाच देवदानवगंधर्वा मानवाश्च विशेषतः प्राप्तास्तु दुर्दशां केन केन मुक्ता भवेत्तु न कश्यप उवाच साधु पृष्टं महाभाग जगदानंदकारकं वक्ष्ये सौरव्रतं पुण्यं दुर्दशानाशनं परं दशाकरं हि भूतानां मनोरथफलप्रदं भानुवारे सिते पक्षे दशम्यां चैव नारद प्रातःकालेथ मध्याह्ने स्नानं कुर्याद्यथाविधि भानुं ध्यायेत्त्रिमूर्तिं च सर्वदैन्यविनाशनं सूर्यपूजां प्रकर्तव्या नयागंधानुलेपनैः उपचारैः षोडशभिर्नैवेद्यैस्तथैव हि वह्निर्देशे लिखेत्कुड्ये दुर्दशा दशपुत्तिकाः पूजयेत्ताः प्रयत्नेन गंधपुष्पादिभिर्बुधः पूजयेद्दुर्दशास्तत्र लिखित्वा दशपुत्तिकाः दुर्मुखा दीनवदना मलिनी सत्वनाशिनी सबुद्धिनाशिनी हिंसा दुष्टा मित्रविरोधिनी उच्चाटनकरी नाम बहुचिंताप्रवर्धिनी एताः पूज्याः कृष्णवर्णा भक्तियुक्तेन चेतसा आदौ पूज्याः प्रयत्नेन गोमयेनानुलेपयेत् नित्यं पापकरे पापे देवद्विजविरोधिनि गच्छ त्वं दुर्दशे देवि निर्लोपशास्त्रविरोधिनि अनेन प्रार्थ्यमानाश्च विसर्ज्याश्च प्रयत्नतः ततः पूजा प्रकर्तव्या डोरकस्य परस्य च दशग्रंथिसमायुक्तं दशसूत्रोपशोभितं डोरकं तु प्रतिष्ठाप्य करे बध्वा प्रपूजयेत् आवाहनादिदानांतं पूजनं कारयेत्ततः भक्तिभावेन चंदनेन लेखयेद्दशपुत्तिकाः सबुद्धिदा सुखकरी सर्वसंपत्प्रदायिनी इष्टभोगप्रदा लक्ष्मीः कीर्तिदा दुःखनाशिनी पुत्रप्रदा च विजया दशमी धर्मदायिनी एताभिर्नाममंत्रैश्च पूजयेच्च पृथक्पृथक् प्रतिष्ठापूजने कुर्यान्नैवेद्यं च यथाविधि ततः प्रार्थ्य तमाप्येवं भक्तानुग्रहकारिणीं विशुद्धवसनां देवीं सर्वाभरणभूषितां ध्यायेद्दशदशां देवीं वरदां चाभयप्रदां इति ध्यानं प्रकुर्वीत दशायास्तु प्रयत्नतः फलकैर्दशसंख्याकैर्भुंजीत तैले पचैः एवं व्रतं प्रकर्तव्यं दशाकारकमुत्तमम् नारद उवाच कथयस्व प्रसादेन व्रतमेतत्तपोधिकः दशाव्रतं कृतं केन कस्मै तुष्टो हि भास्करः कश्यप उवाच पुराभून्नलभूपालश्चक्रवर्ती सधार्मिकः राज्यभ्रष्टो दशाहीनो ह्यनेनैव हि नारद तेनापि पूजितः सूर्यो व्रतं कृत्वा प्रयत्नतः दुर्द्यूतेनाशयित्वा तु धामं राज्यं श्रिया सह ततश्च द्वापरे विप्र पांडवो दुर्दशान्वितः भ्रममाणो वने घोरे प्राप्तं सत्यवतीसुतं अभिवाद्य मुनिश्रेष्ठं सर्वज्ञं करुणान्वितं धर्मराज उवाच राज्यभ्रष्टो दशाहीनो जातोहं केन कर्मणा तत्तु पायं हितं ब्रूहि राज्यप्राप्तिकरं मुने ज्ञात्वा ध्यात्वा मुनिश्रेष्ठो दृष्ट्वा सूर्यं दशाकरं दशाव्रतं प्रकर्तव्यं प्रयत्नेन नराधिप एतद्व्रतस्य सामर्थ्यात्प्रा[illegible]वस्यथामि मामृ व्यासस्य वचनं श्रुत्वा धर्मराजो युधिष्ठिरः व्रतं कृत्वा प्रयत्नेन चतुर्भिर्भ्रातृभिः सह व्रतस्य तस्य सामर्थ्यात्प्राप्तराज्यो बभूव ह श्रुत्वेदं नारदो वाक्यं पुनः पप्रच्छ सारवित् नारद उवाच केन कर्म वि

यं नैव समाचरेत् इति चिंतापरीतत्र संजातौ दुःखकर्षितौ दैवयोगात्तयोः प्राप्ता माघस्यैकादशी सित
जयानामेति विख्याता तिथीनामुत्तमा तिथिः तस्मिन्दिने तु तौ पार्थ सर्वाहारविवर्जितौ चिंतयानौ
च नृपते जलपानविवर्जितौ न कृतो जीवघातो हि न पत्रफलभक्षणं अश्वत्थस्य समीपे तु पतितौ
दुःखसंयुतौ रविरस्तं गतो राजंस्तथैव स्थितयोस्तयोः संप्राप्ता च निशा घोरा दारुणा शीतकारि
णी वेपमानौ तु राजंतौ स्वस्वार्थं मिथुनीकृतौ परस्परेण संलग्नगात्रयोर्भुजयोरपि न निद्रा न र
तिस्तत्र न तौ सौख्यमविंदतां एवं तौ राजशार्दूल शापेनेंद्रस्य पीडितौ एवं तयोर्दुःखितयोर्निज
गाम तदा निशा मार्त्तंडस्योदयो जातो द्वादशीदिवसागमे मया तु राजशार्दूल तयोर्भक्त्या धृता
हृदि जयायास्तद्व्रते चीर्णे रात्रौ जागरणे कृते तस्माद्व्रतप्रभावाच्च यथा ह्यासीत्तथा शृणु द्वा
दशीदिवसे प्रातः प्राक्कीर्णे तु प्रजायते विष्णोः प्रभावान्नृपते पिशाचत्वं तयोर्गतं पुष्पवती मा
ल्यवांश्च पूर्ववद्रूपौ बभूवतुः पुनस्ततः स्नेहयुतौ पूर्वालंकारधारिणौ विमानमधिरूढौ ताव
प्सरोगणसेवितौ स्तूयमानौ तु गंधर्वैस्तुंबुरुप्रमुखैस्तथा हावभावसमायुक्तौ गतौ नाके म
नोरमे देवेंद्रस्याग्रतो राजन्प्रणामं चक्रतुर्मुदा तथाविधौ तु तौ दृष्ट्वा मघवा विस्मितो ब्रवीत्
वदतां केन पुण्येन पिशाचत्वं विनिर्गतं मम शापवशं प्राप्तौ केन देवेन मोचितौ माल्यवानु
वाच वासुदेवप्रसादेन जयायास्तु व्रतेन च पिशाचत्वं गतं स्वामिंस्तव भक्तिप्रभावतः प्रतिश्रु
त्य वचस्तस्य प्रत्युवाच सुरेश्वरः पवित्रपावनौ जातौ वंदनीयौ ममापि च हरिवासरकर्त्तारौ वि
ष्णुभक्तिपरायणौ हरिवासरकर्त्तारो विष्णुभक्तिपराश्च ये अस्माकमपि ते मर्त्याः पूज्या वंद्या न
संशयः विचचार यथा सौख्यं पुष्पवत्या सुरालये एतस्मात्कारणाद्राजन्कर्त्तव्यो हरिवासर
जयाव्रतं तु राजेंद्र ब्रह्महत्यापहारकं सर्वदानानि दत्तानि यज्ञास्तेन कृता नृप सर्वतीर्थेषु स
स्नातः कृतं येन जयाव्रतं यः करोति नरो भक्त्या श्रद्धायुक्तो जयाव्रतं कल्पकोटिशतं यावद्वै
कुंठे मोदते ध्रुवम् पठनाच्छ्रवणाद्राजन्नग्निष्टोमफलं लभेत् इति भविष्योत्तरपुरा
णे च माघशुक्लाजयैकादशीव्रतकथा इयं कल्पांतरे भीमसेनोपोषिता भीमसेनेति च लोके
विख्यातास्याः कथा पुराणांतरे ज्ञेया अथात्रैव वाराहद्वादशीव्रतं वाराहपुराणे दुर्वासा उ
वाच एवं माघे सिते पक्षे द्वादशी धरणीभृतः वाराहस्य स्मृता ह्यस्यां पुण्यं परमपावनं प्रागुक्ते
न विधानेन संकल्पं स्नानमेव च कृत्वा देवं समभ्यर्च्य एकादश्यां विचक्षणः पुष्पैर्नैवेद्यगंधैस्त
मर्चयित्वाच्युतं नरः पश्चात्तस्याग्रतः कुंभं जलपूर्णं तु विन्यसेत् वाराहायेति पादौ च माधवाये
ति वै कटिं क्षेत्रज्ञायेति जठरं विश्वरूपेत्युरो हरेः सर्वज्ञायेति वै कंठं प्रजानां पतये शिरः प्रद्यु
म्नायेति च भुजौ दिव्यास्त्राय सुदर्शनं अमृतोद्भवाय शंखं च एष एवार्चने विधिः एवमभ्यर्च्य
मेधावी तस्मिन्कुंभे तु विन्यसेत् सौवर्णं रौप्यताम्रं वा शक्त्या पात्रं च भक्तितः सर्वबीजैस्तु सं
पूर्णं स्थापयित्वा विचक्षणः तत्र शक्त्या तु सौवर्णं वाराहं स्थापयेद्बुधः दंष्ट्राग्रेणोद्धृता पृथ्वी
सपर्वतवनद्रुमा माधवं मधुहंतारं वाराहं रूपशालिनं सितवस्त्रयुगच्छन्नं ताम्राभावे तु वैण
वे स्थाप्यार्चयेद्गंधपुष्पैर्नैवेद्यैर्विविधैः फलैः पुष्पमंडपिकां कृत्वा जागरं तत्र कारयेत् प्रादु
र्भावान्हरेस्तत्र कारयेज्ज्ञापयेद्बुधः एवं संस्तूयमानस्य प्रभातेऽभ्युदिते रवौ शुचिः स्नात्वा हरिं पूज्य
ब्राह्मणाय निवेदयेत् एवं विधानतो दत्वा हरिं वाराहरूपिणं वेदवेदांगविदुषे साधुवृत्ताय
धीमते विष्णुभक्ताय विप्रर्षे विशेषेण तदापयेत् ब्राह्मणाय भवेच्च फलं तस्य निशामय
इह जन्मनि सौभाग्यं श्रीकांतिस्तुष्टिरेव च ज्ञानवान्पुत्रवान्भोगी चापुत्रः पुत्रवान्भवेत् इति वा

रादपुराणेयरणीव्रतेषु वाराहद्वादशीव्रतम् माघशुक्लद्वादश्यां तिलद्वादशीव्रतम् तस्यां तिलैः स्ना-
त्वा तिलैर्विष्णुमभ्यर्च्य तिलतैलेन दीपं दत्त्वा तिलनैवेद्यम् तिलैर्होमं तिलदानं च कृत्वा तिलान्भुं-
जीत तदुक्तं ब्रह्मपुराणे माघे तु शुक्लद्वादश्यां यमो हि भगवान्पुरा तिलानुत्पादयामास ततः कृत्वा
सदारुणं राजा दशरथो भूमौ तस्यां तानवतारयत् तिलानामाधिपत्ये तु विष्णुस्तत्र कृतः सुरैः त-
स्यामुपोषितः स्नातस्तिलैस्तान्संयजेद्धरिं तिलतैलेन दीपाश्च देया देवगृहेषु च निवेदयेत्तिलाने-
वद्दातव्याश्च तथा तिलाः तिलान्दत्त्वा च विप्रेभ्यो भक्षयेच्च तिलानिह इति ब्रह्मपुराणोक्तं तिलद्वाद-
शीव्रतं इयं च पद्मपुराणे भीमद्वादश्युक्ता यथोक्तं त्वया कृतमिदं वीर त्वन्नाम्ना च भविष्यति सा
भीमद्वादशी नाम सर्वपापहरा शुभेति हेमाद्रौ इयं पूर्वं पुनाम्नाख्या एकादश्यां निराहारः समभ्य-
र्च्य च केशवमिति संकल्पे मंत्रलिंगात् भीमद्वादशीकथा भविष्योत्तरे श्रीकृष्ण उवाच विदर्भाधिप-
तिः श्रीमानासीन्नृपः स धार्मिकः धर्मविद्धर्मकर्त्ता च शास्त्रदृष्टेन वर्त्मना दमयंत्याः पिता पूर्वं नला-
स्य श्वशुरो भुवि सत्यवाग्दानशीलश्च प्रजापालनतत्परः आजगाम महाभागः पुलस्त्यो ब्रह्मणः सु-
तः सर्वज्ञानविधिः श्रीमांस्तीर्थयात्राप्रसंगतः तमागतमथो दृष्ट्वा ब्रह्मयोनिमकल्मषं उत्थाय प्रद-
दौ राजा स्वमासनमभीप्सितं अर्घ्यपाद्यं च यत्किंचित्तस्मै तत्प्रददौ प्रभुः राज्यं चैवात्मना सार्धं निवे-
द्य स कृतांजलिः तेन चैवाभ्यनुज्ञातो निषसाद वरासने पप्रच्छ कुशलप्रश्नं तपस्यध्ययने तथा
तथेति चोक्तः स मुनिस्तं राजानमभाषत पुलस्त्य उवाच कच्चित्ते कुशलं राजन्देशे जनपदे तथा
धर्मे मतिस्ते रमते कच्चित्पार्थिव वर्त्तते राजोवाच सर्वत्र कुशलं ब्रह्मन्येषां कुशलमिच्छसि त्वदा-
गमनेनाद्य स्नातो विनामृतवारिणा एवं तौ संविदं कृत्वा संभाष्याथ परस्परं रेमाते सर्ववृत्ताभिः क-
थाभिरितरेतरं ततः कथांतरे राजा पुलस्त्यं जातविस्मयः पप्रच्छ सर्वलोकस्य हिताय जगतः प-
तिः राजोवाच भगवन्प्राणिनः सर्वे संसारार्णवमध्यगाः दृश्यंते विविधैर्दुःखैः पीड्यमाना दिवानिशं
नरके गर्भवासे च व्याधिभिर्जरया तथा तथैवेष्टवियोगादिदुःखदौर्गत्यसंभवैः लालप्यमाना ब-
ह्वः परपिंडोपजीविनः एवंविधान्यनेकानि दुःखानि मुनिपुंगव दृष्ट्वा हीनानि तान्येव भृशं मे व्यथि-
तं मनः तेषां दुःखाभिभूतानां प्राणिनां भुवि मानद उपकारकरं ब्रूहि ममानुग्रहकाम्यया उपवा-
सं व्रतं चापि दानं वा मुनिसत्तम स्वल्पायासेन येनेह जायते च महत्फलम् पुलस्त्य उवाच श्रृणु
राजन्प्रवक्ष्यामि व्रतानामुत्तमं व्रतं यामुपोष्य न दुःखानां भाजनं जायते क्वचित् माघमासे सिते
पक्षे द्वादशी या च सा स्मृता तस्यां जलार्द्रवसन उपोष्य सुखभाग्भवेत् श्रृणु राजन्नवहितो व्रतपा-
पप्रणाशनं तव शुश्रूषणाद्वाच्यं मयाप्येतन्न संशयः अदीक्षिताय नो देयं नाशिष्याय कदाचन
विष्णुभक्ताय दांताय धर्मनिष्ठाय चैव हि वाच्यमेतन्महाराज भुवि नान्यस्य कस्यचित् ब्रह्महा गु-
रुघाती च गोघ्नः स्त्रीघातकस्तथा कृतघ्नो मित्रध्रुक्क्रूरो नग्नो भग्नव्रतस्तथा मुच्यते पातकैः सर्वै-
र्व्रतेनानेन भूपते शुद्धे तिथौ मुहूर्ते च मंडपं कारयेद्बुधः दशहस्तप्रमाणेन देशे पूर्वोत्तरे तथा तन्-
मध्ये ह्येकहस्तां तु वेदिकां परिकल्पयेत् स्नात्वा सकृदिमां भूमिं वेद्यां कृत्वा प्रयत्नतः विलिखेन्मं-
डलं तत्र पंचवर्णैर्विधानतः ब्राह्मणो वेदसंपन्नो विष्णुभक्तो जितेंद्रियः पंचविंशतितत्त्वज्ञः स्वदा-
रनिरतस्तथा कुंडानि कल्पयेत्तत्र अष्टौ चत्वारि वा पुनः ब्राह्मणांस्तेषु युंजीत चानुस्वारीणका-
न्शुभान् मध्ये च मंडलस्याथ कर्णिकायां जनार्दनं प्रत्यङ्मुखं न्यसेद्देवं चतुर्बाहुमरिंदम पूज-
यित्वा विधानेन शास्त्रोक्तेन विचक्षणः गंधैः पुष्पैस्तथा धूपैर्नैवेद्यैर्विविधैरपि एवं संपूज्य देवेशं
ब्राह्मणैः सह देवेशैः न्यसेत्तं भद्दयं पश्चात्तिर्यक्काष्ठसमन्वितं देवस्याभिमुखं तत्र आपीठं परि-

कल्पयेत् षट्त्रिंशदंगुलेष्वग्रे चतुरस्रं समंततः तत्रशिक्यं समालंब्य सुदृढं सुदृढं नवं आरोपये-
द्दृढं तत्र यादृशं तच्छृणुष्व मे कलशौ तेन तथा रौप्यं ताम्रं वाप्यथ मृण्मयं सर्वलक्षणसंपन्नं दृढं व्यं-
गविवर्जितं तं सहस्रस्रवं कुर्यात्सलिलं वस्त्रगालितं होमार्थं कल्पयित्वापि पालाशीः समिधास्त-
था तिलान्घृतं तथा क्षीरं शमीपत्राणि चैव हि वेद्याः पूर्वोत्तरे भागे ग्रहपीठं प्रकल्पयेत् तत्र पूज्याः
ग्रहाः सर्वे ग्रहयज्ञविधानतः पूर्वस्यां दिशि शक्रस्य पूजां कुर्वीत यत्नतः दक्षिणस्यां यमस्याथ
प्रतीच्यां वरुणस्य च कुबेरस्य तथोदीच्यां बलिपुष्पफलाक्षतैः एवं संभृतसंभारं शुक्लांबरधरं त-
दा समालब्धं शुभैर्गंधैर्दर्भपाणिमतंद्रितं पीठमारोपयेद्युक्तं यजमानं द्विजोत्तमः यजमानोपि दे-
वस्य सन्मुखः प्रयतः शुचिः उपविश्य पठेन्मंत्रं पुरुषोत्तममिदं स्मरन् नमस्ते देवदेवेश नमस्ते भुवने-
श्वर व्रतेनानेन मां त्राहि परमात्मन्नमोस्तु ते तेनोदकस्य धारास्ताः प्रपतंत्यः समीपतः शिरसा
धारयेत्तूष्णीं तद्गतेनांतरात्मना होमं कुर्युस्ततो विप्रा दिक्षु सर्वास्तत्पराः पठेयुः शांतिकान्पाठा-
न्विष्णुसूक्तानि यानि च वादित्रैस्ताड्यमानैस्तु शंखभेरीस्वनैस्तथा पुण्याहजयशब्दैश्च वेदध्वनिवि-
मिश्रितैः मंगल्यैस्तु तिसंयुक्तैः कारयीत महोत्सवं प्रणम्य देवदेवस्य वैकुंठस्य महात्मनः हरिवं-
शादिकं सर्वं श्रावयेद्ब्राह्मणोपरः सौपर्णिकमथाख्यानं महाभारतमेव च व्याख्यानकुशलाः
केचिच्छ्रावयेयुरतंद्रिताः अनेन विधिना सर्वा नीता रात्रिः पुण्यवर्द्धिनी यजमानेन धीमान्यावत्
सूर्योदयो भवेत् ब्राह्मणश्चापि तां रात्रिं जुह्वतो जातवेदसं मंत्रैस्तु वैष्णवैर्दिव्यैः क्षिपयेयुर्मही-
पते वासुदेवस्य शिरसि वसोर्धारां प्रपातयेत् क्षीरेण पयसा राजन्सर्वसिद्धिप्रदायिनीं ततः प्र-
भातसमये यजमानो द्विजैः सह स्नानं कुर्यात्कुरुश्रेष्ठ नद्यां सरसि वा पुनः गृहे वा शक्तिहीन-
स्तु यजमानोस्त वारिणा ततः शुक्लानि वस्त्राणि परिधाय यतव्रतः अर्घ्यं दद्याद्भास्करस्य सविधा-
नं प्रसन्नधीः पुष्पैर्धूपैः सनैवेद्यैः पूजयेत्पुरुषोत्तमं हुत्वा हुताशने भक्त्या दत्वा पूर्णाहुतिं ततः
पूजयेद्ब्राह्मणान्सर्वान्होतारो येत्र कल्पिताः शय्याभोजनगोदानैर्वस्त्राभरणैस्तथा आचार्यः पू-
जनीयोत्र सर्वस्वेनापि भारत येन वा तुष्टिमायाति देवतुल्यो गुरुर्यतः वित्तशाठ्यविहीनस्तु भक्तिश-
क्तिसमन्वितः दीनानाथविशिष्टांश्च वंदिनश्च समागताः तेषां गावो हिरण्यं च दद्याच्छुद्धेन चेतसा
एवं संपूज्य विप्रादीन्भोजयित्वा यथोचितान् यथाविभवसारेण पश्चाद्भुंजीत वाग्यतः हविष्यमन्नं
यत्नेन सभृत्यः सातिथिस्तथा मयैवं कथितं राजन्वेश्म वास्ते प्रकीर्तिताः यत्कृत्वा सर्वपापेभ्यो
मुच्यते नात्र संशयः वाजपेयातिरात्राभ्यां ये यजंति शतं समाः सर्वे ते विष्णुयोगेभ्यः कलां नार्हंति
षोडशीं सप्तजन्मनि सौभाग्यमायुरारोग्यमेव च प्राप्नोति द्वादशीमेतामुपोष्य विधिवन्नरः
मृतो विष्णुपुरं याति विष्णुना सह मोदते चतुर्युगानि द्वात्रिंशद्विष्णुरूपधरः सदा रुद्रलोकं तथा राज-
न्युगानि द्वादशैव तु ब्रह्मलोके तथा त्रीणि मर्त्यलोके युगे तथा पुण्यक्षयादिहागत्य राजा भवति धा-
र्मिकः पृथिव्यधिपतिः श्रीमान्विजितारिः प्रतापवान् व्रतमेतत्पुराचीर्णं सगरेण महात्मना न-
लेन धुंधुमारेण दिलीपेन ययातिना एतैश्चापि पृथिवीपालैः पालिताशेषभूतलैः स्त्रीभिर्वैश्यैस्त-
था शूद्रैः धार्मिकैस्तु सदा नृप भृग्वाद्यैर्मुनिसंघातैर्ब्राह्मणैर्वेदपारगैः त्वयाप्येतेन च मया कथितं
यन्नराधिप अद्यप्रभृति चैवेयं ख्यातिं यास्यति भूतले भीमाख्या द्वादशी चेति कृता भीमेन वै यतः
प्रापुलस्त्यमुनिना कथिता कुरुनंदन यश्चैनां नामश्रुणुयात्कुर्याद्वा यत्नाद्भक्तिस्वभावतः सर्वपाप-
विनिर्मुक्तो विष्णुलोके महीयते सद्भावेनापि वा पार्थ वित्तशाठ्यविवर्जितः विष्णुभक्तेन कर्तव्यं सं-
सारभयभीरुणा भीमेन यत्किल पुरा समुपोषिता न भद्रा त्रैगलत्क्षितिपिरशीतलवारिधारा तां द्वाद-

वमहामाघीतिसास्मृता महामाघीप्रयागेस्यान्नैमिषे फाल्गुणे तथा शालिग्रामे महाचैत्री कृत्वा पुण्यं
महाफलमिति गार्ग्यवचनात् अत्र विशेषमाह विष्णुः माघी मघायुक्ता चेत्तस्यां तिलैः श्राद्धं कृत्वा पू
तो भवतीति ब्रह्मपुराणे पौर्णमास्यां मघायोगे वायसाः पंचजातिरे इंद्राग्निवरुणाह्वायो यमादय
च नैर्ऋतेः श्राद्धं पितृभ्यः कर्तव्यं तिलैः शुक्लास्तथा किलेति ऐंद्रवारुणवायव्या याम्या नैर्ऋतिकाश्च
ये वायसाः प्रतिगृह्णंतु भूमौ दत्तं मयान्नकं दद्यादनेन मंत्रेण तेभ्यो भोज्यं मधुप्लुतं ब्राह्मणान्भोज
यित्वा तु भुंजीत वाग्यतैः सहेति माघ्यां कृत्वा तिलैः स्नानं सर्वपापैः प्रमुच्यते अन्यत्रच माघ्यां पूजा तक
त्वया देवी वै मंगलां यजेत् देवीपुराणे धेनुं गुडमयीं कृत्वा माघ्यां यश्चोत्तरायणे सर्वकाममवाप्नो
ति ज्येष्ठ्यां जलमयीं तथा इयमन्वष्टका तत्कृत्यं श्राद्धादि अथ माघस्नानविधिरुच्यते तत्र काल
माह विष्णुः तुलामकरमेषेषु प्रातःस्नायी सदा भवेत् हविष्यं ब्रह्मचर्यं च माघस्नाने महाफल
मिति अत्र तुलामकरमेषेष्वित्यनेन सौरमास उक्तः ब्राह्मे एकादश्यां शुक्लपक्षे पौषमासे समारभे
त् द्वादश्यां पौर्णमास्यां वा शुक्लपक्षे समापनं इति पाद्मेपि पौषस्यैकादशीं शुक्लामारभ्य स्यादि
तेन्द्रियः मासमात्रं निराहारस्त्रिकालं स्नानमाचरेत् त्रिकालमर्चयेद्विष्णुं त्यक्तभोगो जितेंद्रियः
माघस्यैकादशीं शुक्लां यावद्विद्याप्यरोत्तमेति अत्र त्रिकालस्नाने मासोपवासविषयं निराहार इत्यु
क्तेः षष्ठीचंद्रोदये पक्षांतरमाह विष्णुः दर्शं वा पौर्णमासीं वा प्रारभ्य स्नानमाचरेत् पुण्यान्यहानि
त्रिंशत्तु मकरस्थे दिवाकरे इति अत्र दर्शमिति शुक्लादिमुख्यचांद्रायणाभिप्रायेणेति बालवृद्धयुवा
नरनारीनपुंसकाः स्नात्वा माघे शुभे तीर्थे प्राप्नुवंतीप्सितं फलमिति पाद्मे सर्वेपि कारिणोत्र
त्र विष्णुभक्तो यथा नृप ब्राह्मे उष्णोदकेन वा स्नानमशक्तः सन्निकुर्वते दृष्टेषु सर्वगात्रेषु नोष्णोदक
विशेषता वैष्णवामृते गौडनिबंधे स्कांदे पौष्यां तु समतीतायां यावद्भवति पूर्णिमा माघमासस्य
तावद्धि विष्णुपूजा विधीयते पितृणां देवतानां च मूलकं नैव दापयेत् ब्राह्मणो मूलकं भुक्त्वा चरे
च्चांद्रायणव्रतं अन्यथा याति नरकं चांद्रविट्शूद्रएव च वर्जनीयं प्रयत्नेन मूलकं मदिरोपमम्
यदा माघे मलमासो भवति तदा काम्यानां तत्र समाप्तिनिषेधान्मासद्वयं प्रातःस्नानं तन्नियमाश्चक
र्तव्याः मासोपवासचांद्रायणादि मलमासएव समापयेत् तदुक्तं दीपिकायाम् नियतत्रिंशादि
नत्वाच्छुभे माघावाप्यारभ्य समापयेत् मलिने मासोपवासव्रतमिति स्नानारंभे च मंत्रो विष्णुनोक्तः
तत्रचोत्थाय नियमं गृह्णीयाद्विधिपूर्वकं माघमासमिमं पुण्यं स्नास्येहं देव माधव तीर्थस्यास्य
जले नित्यमिति संकल्प्य चेतसीति ततः स्नात्वा शुभे तीर्थे दत्वा शिरसि वै मृदं वेदोक्तविधिना राजन्
सूर्यायार्घ्यं निवेदयेत् पितृणां तर्पयित्वा तु अवतीर्य ततो जलात् मन्त्रद्वयं स्नानमंत्रश्च पाद्मे दुः
खदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च प्रातःस्नानं करोम्यद्य माघे पापविनाशनं मकरस्थे र
वौ माघे गोविंदाच्युत माधव स्नानेनानेन मे देव यथोक्तफलदो भव इमं मंत्रं समुच्चार्य स्नायान्
मौनसमन्वित इति सेतौ ब्रह्मक्षत्रविशां चैव मंत्रवत्स्नानमिष्यते तूष्णीमेव तु शूद्राणां तथैव कुरु
नंदन नमस्कारोथवा कार्यः सर्वपापौघहानिद इति मन्त्रद्वयं सूर्यायार्घ्यदानमंत्रश्च षष्ठीचंद्रो
दयपाद्मे सवित्रे प्रसवित्रे च परं धाम जले मम त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधेति स्नानका
लश्च सूर्योदय उक्तः विष्णलीसेतौ संप्राप्ते माघमासे तु तपस्विजनवल्लभे कोशांति सर्ववारीणि
समकृच्छ्रतिभास्करे हनामः सर्वपापानि त्रिविधानि न संशय इति नारदोक्तेः मकरस्थे रवौ यो हि न
स्नात्यभ्युदिते रवौ इति माघमासे रटंत्यापः किंचिदभ्युदिते रवौ इति पाद्मवचनात् यो माघमासु
षसि सूर्यकराभितप्ते स्नानं समाचरति बाहुनदीप्रवाहे उद्दाममसपुरुषान्पितृमातृवंशजान्स्वर्गं

प्रयात्यमरदेहत्वं योनरोसौ इतिभविष्योत्तरवचनाच्च ब्राह्मे तु अरुणोदय उक्तः अरुणोदये तु संप्राप्ते स्नानकाले विचक्षणः माधवाङ्घ्रियुगं ध्यायन्यः स्नाति स पूजित इति तथा अरुणोदयमारभ्य प्रातःकालविधिप्रभो माघस्नानमवं पुण्यं क्रमात्तत्रावधारणा उत्तमं तु सनक्षत्रं मध्यमं लुप्ततारकं सवितर्युदिते भूप ततो हीनं प्रकीर्तितमिति तेनात्र शक्ताशक्तापेक्षया व्यवस्थेति इदं च स्नानं प्रयागेऽतिप्रशस्तं काश्यां शतगुणं प्रोक्तं गंगायमुनसंगमे सहस्रगुणितं ना सापि भवेत्पश्चिमवाहिनी पश्चिमाभिमुखी गंगा कालिंद्या संगता यदा हंति कल्पकृतं पापं सा माघे नृप दुर्लभेत्यादिपाद्मादिवचनेभ्यः प्रयागासंभवे काश्यां दशाश्वमेधे तत्रस्य प्रयागतीर्थस्नानमुक्तं काशीखंडे काश्युत्तरे प्रयागे ये तपसि स्नांति मानवाः दशाश्वमेधजनितं फलं तेषां भवेद्ध्रुवमिति ब्राह्मे तडागेषु तु वा स्नायात्कूपभांडाश्रितेन तथा माघे मासे वरारोहे शक्तैव निम्नगाजलं भांडाश्रितेन त्वयं विशेषः सरित्तोयं महावेगं नवकुंभस्थितं तथा वायुनाताडितं रात्रौ गंगास्नानसमं मतं यत्र कुत्रापि वा माघे प्रयागस्मरणान्वितः करोति मज्जनं तीर्थे स लभेद्गंगामज्जनं इदं च स्नानं नैरंतर्येण कार्यं तदुक्तं पृथ्वीचंद्रोदये प्रभासखंडे माघे मासि च यः स्नायान्नैरंतर्येण भावतः पौंडरीकफलं तस्य दिवसे दिवसे भवेत् माघस्नानं काम्यमेवेति केचित् विष्ण्वादिवाक्येन सदावश्यपदश्रवणान्नित्यतावगतेर्नित्यं काम्यमिति युक्तं मासपर्यंत संभवे तु त्र्यहमेकाहं वा स्नायात् महामाघीं पुरस्कृत्य स्नायात्तत्र दिनत्रयमिति लिंगात् प्रयागे माघमासे तु त्र्यहं स्नानस्य यत्फलं नाश्वमेधसहस्रेण तत्फलं लभते भुवीत्यादि प्रयागे त्वशक्तोपि स्नायादपि च दिनत्रयं माघादिवचनात् अत्र मकरसंक्रमस्य सप्तमीमाघीति त्र्यहमित्येके माघशुक्लदशम्यादीत्यन्ये मकरादित्र्यहमित्यन्ये माघस्याद्यत्र्यहमिति केचित् त्रयोदश्यादिपक्षत्रयज्यायान् अस्येत्वचनादीनि बहवः यत्किंचिद्दिनत्रयमिति भट्टाः अत्र त्रयोदश्यादिपक्षः वह्निं सेवयेत्स्नानोत्थः स्नानोपि वसनेन होमार्थं भावान्निर्मूलाः माघस्नाननियमास्तु नारदीये नवह्निं सेवयेत्स्नातो ह्यस्नातोपि वरानने होमार्थं सेवयेद्वह्निं न प्रीत्यर्थं कदाचन अहन्यहनि दातव्यास्तिलाः शर्करयान्विताः त्रिभागस्तु तिलानां च चतुर्थः शर्करान्वितः अनभ्यंगी वरारोहे सर्वमासं नयेद्व्रती असंहतशरीरस्तु यः कथं स्नानमाचरेत् पदे पदेऽश्वमेधस्य फलं प्राप्नोति मानवः तथा शंखचक्रधरं देवं माधवं नाम पूजयेत् वह्निं हुत्वा विधानेन नक्तं चैकाशनो भवेत् भूशय्या ब्रह्मचर्येण शक्तः स्नानं समाचरेत् अशक्तो ब्रह्मचर्यादौ स्वेच्छा सर्वत्र कथ्यते अशक्तस्त्वेधनाच्छादनमिति पाठः कृत्यरत्नावल्यां बहुधनदानं कुर्वन्निति तिलस्नायी तिलोद्वर्ती तिलहोमी तिलोदकी तिलभुक्तिलदाता च षट्तिलाः पापनाशना इति स्नानोत्तरकृत्यमाह मदनपारिजाते विष्णुः काष्ठमौनं पुरस्कृत्य पूजयेत्पुरुषोत्तमं अवश्यमेव कर्तव्यं माघस्नानमिति श्रुतिः भविष्ये तैलमामलकाश्चैव तीर्थे देयास्तु नित्यशः ततः प्रज्वालयेद्वह्निं सेवनार्थं द्विजन्मनां एवं स्नानावसाने तु भोज्यं देयमवारितम् भोजयेद्द्विजदांपत्यं भूषयेद्वस्त्रभूषणैः कंबलाजिनरत्नानि वासांसि विविधानि च चोलकानि च देयानि प्रच्छादनपटास्तथा उपानहौ तथा गुह्यमोचकौ पापमोचकौ अनेन विधिना दद्यान्माधवः प्रीयतामिति भूमौ प्राचीनहोतव्यमाज्यं तिलसमन्वितं तथा अत्रैव च यथाशक्त्या देयं माघेन राधिप सर्वारिक्तिकामात्रं दद्याद्देवदिदे तथा माघांते विशेषो नारदीये माघावसाने सुभगे षड्रसं भोजनं स्मृतं स्त्रीयो मे प्रीयतां नित्यं विष्णुमूर्तिर्निरंजनः दंपत्योर्वाससी सूक्ष्मे सप्तधान्यसमान्विते त्रिंशन्मोदकादेयाः शर्करातिलसंयुताः इति अत्रोद्यापनं एकादशीविधानेन व्रत

तस्योद्यापने तथेतिवचनात् पूर्वेद्युरुपवासपूजनादि परेद्युस्तिलाज्यैरष्टोत्तरशतेन होमं कृत्वा स
वित्रे प्रसवित्रेति पूर्वोक्तमंत्रमुक्त्वा दिवाकरजगन्नाथप्रभाकरनमोस्तुते परिपूर्णं कुरुष्वेदं
माघस्नानमुपस्थिते इति क्षमापयेदिति संक्षेपः इति निर्णयसिंधावुक्तं कार्त्तिकेवाथतपसि
विधिरेवं विधोत्तम इति कार्त्तिकोद्यापने विशेषवचनात् कार्तिकोद्यापनविधिरेवात्रविधि
रिति अथात्रैव घृतकंबलविधिः कार्य्यः तदुक्तं हेमाद्रौ भविष्यपुराणे माघशुक्लचतुर्दश्या
मुपोष्य नियमस्थितः शिवाय पौर्णमास्यां तु कर्त्तव्यं घृतकंबलं कृष्णगोमिथुनं पश्चात्स्वरू
पं विनिवेदयेत् दिव्यं वर्षशतं साग्रं शिवलोके महीयते आलिंगवेदिपर्य्यंतं यो दद्याद्घृतकंब
लं तस्यानंतं भवेत्पुण्यं माघपौर्णिमपर्वणि जागरं गीतनृत्याद्यैः सह कृत्वा तु पर्वणि म
न्वंतरशतं साग्रं रुद्रलोके महीयते इति माघ्यां घृतकंबलविधिः माघ्यां ब्रह्मवैवर्त्तपुराण
दानमुक्तं मत्स्यपुराणे रथंतरस्य कल्पस्य वृत्तांतमधिकृत्य च सावर्णिना नारदाय कृष्णमा
हात्म्यसंयुतं यत्र ब्रह्मवराहस्य चरितं वर्ण्यते पुनः तदष्टादशसाहस्रं ब्रह्मवैवर्त्तमुच्यते पु
राणं ब्रह्मवैवर्त्तं यो दद्यान्माघमासि च पौर्णमास्यां धेनुयुतं ब्रह्मलोके महीयते इति ब्रह्मवैवर्त्त
पुराणदानम् अत्रैव स्कंदपुराणमपि देयम् स्कांदे सर्वोत्तमकथे शिवमाहात्म्यवर्णनम् लिखि
त्वैतत्तु यो दद्याद्धेमशूलसमन्वितं माघ्यां सत्कृत्य विप्राय स शैवे मोदते पदे इति स्कंदपुराणदा
नम् स्वस्ति श्रीरणवीरसिंहधरणीपालो वदान्याग्रणीः॰ १ रणवीरसिंहभूपेशकारिते कृत्य
सागरे अभवन्माघकृत्यानां रम्यो रत्नसमुच्चयः इति श्रीमत्सूर्यवंशावतंस
रघुकुलतिलकरणवीरसिंहमहाराजकारिते कृत्यरत्नाकरे
माघमासकृत्यरत्नसमुच्चयः समाप्तिमगमत्
॥

ॐ

ॐश्रीरघुनाथोजयति

ॐश्रीगणेशायनमः ॥

ॐअथफाल्गुनमासकृत्यनिर्णयः तत्रादौ कुंभार्केपूर्वाः षोडश नारदीये ॥
याम्यायनेस्थिरेत्वाद्याःपराःसौम्येद्विमूर्त्तिभे मध्याविष्णुवतिःशाक्ताःपुण्याःषोडशनाडिकाः॥ इतिशेषसंक्रां
तिनिर्णयेज्ञेयं अत्रकृत्यं भविष्यपुराणे देवार्चाफाल्गुनेमासिकृत्वापिष्टमयींतुवै गंधमाल्यैरलंकृ-
त्यस्थापयेद्भास्करालये विमानैःसूर्यसंकाशैर्गीतवाद्यसमाकुलैः समैकादशसाहस्रंसूर्यलोकेमहीय
ते समागत्यइमंलोकंयथेच्छंविंदतेसुखमिति व्रतमथिकृत्य स्कंधपुराणे एकभक्तंतुकुर्वाणःफा
ल्गुनेमासिनित्यशः स्त्रीषुसौभाग्यमाप्नोतिस्त्रियश्चपरमप्रियः ॥ विष्णुधर्मोत्तरे प्रियंगुफाल्गुने
दत्वाप्रियोभवतिभूतले प्रियंगुःकंगुइतिप्रसिद्धः फाल्गुनेमासिराजेंद्र यःकुर्यान्नक्तभोजनं श्या-
माकक्षीरनीवारैर्जितक्रोधोजितेंद्रियः षष्ठ्यांवाचाथसप्तम्यामुपवासपरोभवेत् अष्टम्यांतुमहास्ना
नंपंचगव्यघृतादिभिः त्वभिश्चक्षीरदधाणस्नापयित्वाप्रपूजयेत् सौरभेयींततोदद्याद्रक्तांगांर
क्तमालिने गत्वादित्यपुरंरम्यंमोदतेशाश्वतीःसमा इति वामनपुराणे भगदेवंतुयोमासमेक
भक्तेनसंस्थितेत् ऐश्वर्यमतुलंश्रेष्ठंपुमान्स्त्रीवाप्रपद्यते स्त्रीषुवल्लभतांयातितस्याश्चैवभवतितेवि
ल्गुधर्मे त्तपयेदेकभक्तेनपुंसःपुष्पैश्चैवफाल्गुने सौभाग्यंस्वजनानांचसर्वेषांचेतसोन्वति विष्णु
भुःप्रभुः वामनपुराणे फाल्गुनेव्रीहयोगावोवस्त्रंकृष्णाजिनान्वितं गोविंदप्रीणनार्थायदातव्यंपु
रुषर्षभ ॥ तथा प्रातःस्नायीभवेन्नित्यंद्वौमासौमाघफाल्गुनाविति वाराहे फाल्गुनस्यतुमासस्य
पुष्पाणिसुरभीनिच कर्माण्यतिशुभानीहगृहीत्वाभक्तिमान्नरः जानुभ्यांधरणींगत्वाकराभ्यांमंगु
लैःपुटं ॐनमोनारायणाय नमस्तेदेवदेवेशचक्रनिर्मथनप्रभो नमस्तेलोकनाथायस्तुप्रवीरनमो
स्तुते आदिमध्यामध्यावसानंतुनजानातीहकश्चन वसंमागमपुष्पाणिगृहाणपुरुषोत्तम यएते
नविधानेनकुर्य्यान्मासेतुफाल्गुने नचागच्छतिसंसारंपरलोकंसगच्छति ॥

इतिफाल्गुनविधिः ॥ ॥ फाल्गुनकृष्णप्रतिपदायां तिथिपत्वेनवह्निपूजा
द्वितीयायांब्राह्मणःपूजा तृतीयायांगौरीव्रतम् फाल्गुनकृष्णचतुर्थ्यांविघ्नविनायकग-
णेशव्रतमभविष्योत्तरे ॥ ॥ श्रीकृष्णउवाच अथाविघ्नंविघ्नविघ्नराजंकथयामिव्रतंत
व येनसम्यक्कृतेनेह नविघ्नमुपजायते चतुर्थ्यांफाल्गुनेमासिगृह्णीयाद्व्रतंशुभं नक्ता
हारेणराजेंद्रतिलपारणकंस्मृतं तदेववह्नौहोतव्यंब्राह्मणायचदापयेत् तत्रमंत्रः ॥
शूरायवीरायगजाननायलंबोदरायैकरदान्विताय एवंचसंपूज्यपुनश्चहोमंकुर्याद्व्रती-
विघ्नविनाशहेतोः चातुर्मास्यंव्रतंचैवकृत्वाथपंचमेतथा सौवर्णंगजवक्त्रंतुकृत्वाविप्राय-
दापयेत् हेरंबराजतंतद्विधानेनप्रदापयेत् रुद्रस्यचपुरंयातिवराहवचनंयथा विघ्ना
नितस्यनभवंतिगृहेकदाचिद्धर्मार्थकाममुखसिद्धिकराणिचैव यस्तंविनायकव्रतंकुरुते
मनुष्योविघ्नेशमर्चयतिकृष्णतिलैश्चतुर्थ्यां इतिभविष्योत्तरे अविघ्नविनायकव्रतं ॥

फाल्गुनकृष्णपंचम्यांतिथौपावनेननागानांपूजाव्रतं फाल्गुनकृष्णषष्ठ्यांतिथिपत्वेनस्कंदपूजेतितिथि
सामान्यनिर्णयात् फाल्गुनकृष्णसप्तम्याष्टम्योरष्टकान्वष्टकाकार्या फाल्गुनकृष्णाष्टम्यांसो
मादेवीपूजा नारदीये फाल्गुनेत्वसिताष्टम्यांसोमादेवींप्रपूजयेत् नक्तव्रतधरोविप्रःसर्वकाम-
समृद्धये ब्रह्मपुराणे कृष्णाष्टम्यांफाल्गुनेतुद्वादश्यांश्रवणेनतु चकारभगवान्विष्णुःपिंडनिर्व
पणंमहत् पितापितामहेभ्योपितिलैश्चकृतवान्पुरा सोपवासोहरिंतस्मात्तत्रसंपूजयेत्तिलैः ति
लैरभ्यर्चयेद्देवांस्तिलांश्चजुहुयात्तथा तिलतैलेनदीपांश्चदातव्यादेवसद्मनि तिलान्दद्यात्तुदेवेभ्य
पितृभ्यश्चतिलोदकं तिलांश्चभक्षयेत्तत्रधर्मवृध्यर्थमात्मनः फाल्गुनकृष्णनवम्यां तिथिदेवत
त्वाद्दुर्गापूजाव्रतं फाल्गुनकृष्णदशम्यां दशम्यामंतकस्यचेति धर्मराजपूजाव्रतमितिदश-
मीतिथिसामान्यनिर्णये ॥ फाल्गुनकृष्णैकादशीविजया नारदीये तपस्यकृष्णैकादशींवैवि
जयांसमुपोष्यच द्वादश्यांप्रातरभ्यर्च्ययोगीशंगंधपुष्पकैः ततःसंपूज्यभूदेवान्दक्षिणाभिःप्र
तोष्यतान् विसृज्यबांधवैःसार्द्धंस्वयंभुंजीतवाग्यतः देहांतेवैष्णवंलोकंयातिदेवैःसुसंस्कृतः
अस्याःकथास्कंदपुराणे ॥ सूतउवाच पप्रच्छदेवदेवेशंब्रह्माणंजगतांपतिं नारदःसर्वत
त्वज्ञःसर्वर्षिगणसंवृतः॥ नारदउवाच कथंव्रतमिदंब्रह्मन्पुरारामेणवैकृतं ब्रूहिमेविस्त
रतःकथांरामस्यपावनीं॥ ब्रह्मोवाच शृणुवत्सप्रवक्ष्यामिराघवेणयथाकृतं रामोवसद्वनेतत्रव
र्षाणिनवपंचच न्यवसत्पंचवट्यांचससीतःसहलक्ष्मणः तत्रैववसतस्तस्यराघवस्यमहात्मनः
रावणेनहृताभार्यासीतानामतपस्विनी तेनदुःखेनरामोपिमोहमभ्याजगाममह भ्रमन्जटायुष
मथाददर्शविगतायुषं कबंधोनिहतःपश्चाद्भ्रमतारण्यमध्यगः रक्षसामरणंचैववालिनोवैव-
धस्तथा सुग्रीवेणसहैवासीन्मित्रत्वंसमजायत वानराणामधिष्ठातावानरैःसहसंगतः
ततोहनुमताद्दृष्टालंकोद्यानेतुजानकी रामसंज्ञापनंतस्यैदत्तंकर्ममहत्कृतं समेत्यतत्रा
मेणसर्वमस्मैनिवेदितं अथश्रुत्वारामचंद्रोवाक्यंचैवहनूमतः सुग्रीवानुमतेचैवप्रापयत्तद्धि
सत्वरं सगत्वावानरैःसार्द्धंयत्रैवास्तिह्यपांनिधिः दृष्ट्वाब्धिंदुस्तरंरामोविस्मितोभूत्कलिप्रिय
आरक्तलोचनोभूत्वालक्ष्मणंचेदमब्रवीत् सौमित्रेकेनचीर्णेनतीर्थ्यतेवरुणालयः अगाधस-
लिलैःपूर्णोनक्रैर्मत्स्यैःसमाकुलः उपायंनेवपश्यामियेनायंसुतरोभवेत् ॥ लक्ष्मणउवाच
आदिदेवस्त्वमेवासिपुराणपुरुषोत्तम। वकदाल्भ्योमुनिश्चात्रवर्ततेद्वीपमध्यगः अस्मा-
त्स्थानाद्योजनार्द्धमाश्रमस्तस्यराघव अनेनदृष्टावहवोब्राह्मणारघुनंदन तंपृच्छगत्वारा-
जेंद्रपुराणमृषिपुंगवं इतितस्यवचःश्रुत्वालक्ष्मणस्यातिशोभनं जगामराघवोद्रष्टुंकुतो
रामतवागमः ॥ रामउवाच त्वत्प्रसादादहंविप्रवरुणालयसमीपतः आगतोस्मिससैन्योत्र
लंकांजेतुंसराक्षसां भवतश्चानुकूलत्वात्तीर्यतेब्धिर्यथामया तदुपायंवदमुनेःप्रसादंकुरुसत्तम
यतस्मात्कारणादेवप्रष्टुंत्वामहमागतः ॥ मुनिरुवाच कथयिष्याम्यहंरामव्रतानामुत्तमंव्रतं
कृतेनयेनसहसाविजयस्तेभविष्यति लंकांनिर्वारिपुंहत्वाव्रतंतत्तुनिशामय फाल्गुनस्यासिते
पक्षेविजयैकादशीभवेत् तस्याव्रतेकृतेरामविजयस्तेभविष्यति निःसंशयंसमुद्रंत्वंतरिष्यसि
सवानरः विधिस्तुश्रूयतांरामव्रतस्यास्यफलप्रदः दशम्यांदिवसेप्राप्तेकुंभमेकंतुकारयेत् हैमंवा
राजतंवापितांम्रंवाप्यथमृण्मयं स्थापयेच्छोभितंकुंभंजलपूर्णंसपल्लवं तस्योपरिन्यसेद्देवं
मनारायणंविभुं एकादशीदिनेप्राप्तेप्रातःस्नानंसमाचरेत् निश्चलंस्थापयेत्कुंभंकंठमाल्यानु
शोभितं दाडिमैर्नारिकेलैश्चपूजयेच्चविशेषतः सप्तधान्यमधस्तस्ययवानुपरिविन्यसेत्

मध्येऽपि स्वचारी येनैवैषेह्नि विधेरपि कुंभाद्येतद्दिने रामनीयते भक्तिभावतः राज्ञो नगरद्वारे चैवतु स्थापये कारयेद्बुधः द्वादश्यादिवसे प्राप्ते मार्तंडस्योदये तु तं नीत्वा कुंभं जलेषु श्रेष्ठं नद्याः प्रस्रवणो तथा तडागे स्थापयित्वा वा पूजयित्वा यथाविधि दद्यात्स देवतं कुंभं ब्राह्मणो वेदपारगे कुंभेन सह राजेंद्र मह्यं दानानि दापयेत् अनेन विधिना रामो यूथपैः सह संगतः कृत्वा व्रतं प्रयत्नेन विजयस्तेऽभविष्यति इ-तिश्रुत्वा ततो रामो यथोक्तमकरोत्ततः कृते व्रते स विजयी बभूव रघुनंदनः प्राप्तासीतानुलंकायां पौ-लस्त्यो निहतो रणे अनेन विधिना ये तु ये कुर्वंति नरा व्रतं इह लोके जयस्तेषां परलोकस्तथाऽव्ययः ए-तस्मात्कारणात्पुत्र कर्तव्यं विजयाव्रतं पठनाच्छ्रवणाच्चैव वाजपेयफलं लभेत् ॥ ॥

इति स्कंदपुराणोक्तं फाल्गुनकृष्णविजयैकादशीव्रतमाहात्म्यं ॥

फाल्गुनकृष्णद्वादश्याविशेषकृत्याभावात्तिथिदेवतात्वेन द्वादश्यां हरिपूजनमित्युक्तं त्वाद्वहरिपूजै-व कार्या फाल्गुनकृष्णत्रयोदश्यां पक्षप्रदोषं कार्यं तच्च सविस्तरं मार्गमासकृत्ये प्रपंचितम् ॥

फाल्गुनचतुर्दश्यां शिवरात्रिव्रतम् ॥ ॥ ॐ नमो भगवते रुद्राय ॥ अथामांतमासे-नमाघकृष्णचतुर्दश्यां शिवरात्रिव्रतमुक्तं ॥ अस्याः स्वरूपं शिवरहस्ये मदनरत्ने ॥ ॥ तत्र भृग्वग्रे देवर्षे माघकृष्णचतुर्दशी शिवरात्रिः समाख्याता साप्रियात्रिपुरद्विषः इति स्कांदेपि माघफाल्गुनयोर्मध्ये असितायाचतुर्दशी शिवरात्रिस्तु साख्याता सर्वयज्ञोत्तमोत्तमेति ॥ तथाहि ॥ तत्र शिवरात्रिरिति तत्पुरुषसमासेन योगेन प्रवर्तमानः शब्दो रूढ्या माघकृष्णचतुर्दशी रूपे काली विशेषे नियम्यते शिवरात्रिर्यस्मिन्व्रते इति बहुव्रीहिसमासेन योगप्रवृत्तः शब्दो रूढ्या व्रतविशे-षे नियम्यते इति कालतत्वविवेचने तु रात्रिशब्दस्य तिथिपरत्वाद्योगेन शिवव्रते योग्यतिथि-लाभाद्रूढ्या च तद्विशेषलाभात् अत्र योगरूपो यं रात्रिशब्दः यस्तु क्वचिद्व्रते केवलशिवरात्रिश-ब्दप्रयोगः स लक्षणया नवरात्रादिशब्दवत् न च मुख्ये संभवति लक्षणाश्रयणमन्याय्यं अत एव प्राचुर्येण शिवरा-त्रिमिति वाच्यं लक्षणाया अभावे व्रतविषयत्वप्रसंगाभावात् तिथिविशेषसंज्ञाकरणप्रयोजनं च तेन शब्देन तानि दिश्यन्ते व्रतशब्द एव व्रते प्रयुज्यते एकादशीजयंतीव्रतवत्संयोगपृथक्त्वा त्रोपवासपूजादिविधानमिति तत्र शिवरात्रिव्रतमेकादशीजयंतीव्रतवत्संयोगपृथक्त्वा येन नित्यं काम्यं चेत्युभयविधं तत्राकरणे प्रत्यवायः स्कंदपुराणे पठ्यते परात्परतरं नास्ति-शिवरात्रिः परात्परं न पूजयंति भक्त्या ये रुद्रं त्रिभुवनेश्वरं जंतुर्जन्मसहस्रेषु भ्रमते नात्र सं-शयः इति वीक्षापि तत्रैव पठिता वर्षे वर्षे महादेवि नरो नारी पतिव्रता शिवरात्रौ महादेवं का-मं भक्त्या प्रपूजयेदिति नित्यनिमित्तशब्दोच तत्रैव माघकृष्णचतुर्दश्यां यः शिवं संश्रितव्रतः सागरो यदि वा शुष्येत्क्षीयते हिमवानपि मेरुमंदर-मुख्यस्तु पूजयेन्नित्यं स लभेदीप्सितं पदमिति शैलाश्च श्रीशैलो विंध्य एव च चलंत्येते कदाचिद्वै निश्चलं हि शिवव्रतमिति काम्यत्वं च फलश्रव-णाद्वगंतव्यं तथा हि स्कंदपुराणे शिवं च पूजयित्वा यो जागर्ति च चतुर्दशीं मातुः पयोधररसं न पिबेत्स कदाचन यदीच्छेत्कांक्षितान्भोगान्दिविदेवमनोरमान् आगमोक्तविधिं कृत्वा प्रा-शानि परमं पदं मम भक्त्या तु यो देवि शिवरात्रिमुपोषयेच्च गणपत्वमवाप्नोति दिव्यमक्षयं शिवशासनमि-ति सर्वान्भोगान्स भुक्त्वा तु मत्तो भूयो न जायते इति काम्यव्रतस्येशानसंहितायां वर्षसंख्या-यमन्ते एवमेतद्व्रतं कुर्यात्प्रतिसंवत्सरं व्रती द्वादशाद्विकमेतत्स्याच्चतुर्दशाद्विकं तथा स-र्वान्कामानवाप्नोति प्रेत्य चेह च मानव इति अत्रोपवासशिवपूजाजागरणानि त्रीण्यपि सम्-दितानि प्रधानकर्माणि आधिकारवोधके षु नागरखंडादिवाक्येषु त्रयाणामपि फलसंबंध-

श्रवणात् तथास्कन्दनागरखंडे उपवासप्रभावेन बलादपि च जागरात् शिवरात्रेस्तथा मर्त्यो सतस्य प्रपूजया अक्षयाल्लभते भोगान् शिवसायुज्यमाप्नुयादिति संग्रहेपि स्वयं च लिंगमभ्यर्च्य सोपवासः सजागरः अजानन्नपि निष्पापो निषादो गणतां गत इति तस्मादुपवासादित्रयाणां समुदायस्यैव व्रतरूपत्वं अस्यैवोद्दलकलिंगमभिधीयते लुब्धकस्य भद्राश्वजन्मप्राप्तवतोऽर्वीमस्य सह संवादे पठ्यते कृष्णपक्षे चतुर्दश्यां नक्तं चन्मृगमाप्तवान् अत्रापि प्राध्वरस्तार्थ्यस्तथा संयीडितो वसतिदिति उपक्रस्यथतुः कोटा विल्वपत्राणि मानव पतितानि महाराजशंभोः शिरसि भूतले तत्रैव तस्थौ राजेंद्र सर्वरात्रमतंद्रितः रात्रिशेषे ततो व्याधस्तव्यद्दष्टिरनामिषः प्रभाते विमले जाते कंदमूलेष्वपारित इति ननु क्वचिदुपवासादित्रयं विधाय पुनः पक्षांतरह- येणोपवासव्यतिरेकेहयं पठ्यते अथवा शिवरात्रिं च प्रजागरैर्नयेदिति नायं दोषः अथवेमनुकल्पोयं क्रमेणाशक्तविषयत्वोपपत्तेः यान्यपि स्कंदितप्रभावोहि शिवरात्रिमुपोषयेत् सर्वान्कामानवाप्नोति शिवेन सह मोदते तथा कश्चिन्मुणविशेषेण व्रतहीनोपि मानवः जागरं कुरुते तत्र स रुद्रसमतामियात् तथा यः पूजयति भक्त्येशमनेकफलतां व्रजेदित्यादीनि केवलोपवासजागरणपूजाविधायकानि तान्युपकल्पत्वादशक्तविषयाणि हेमाद्रिमाधवीयमदनरत्नादावप्येवं ॥ नित्यकाम्यरूपस्याप्यस्य व्रतस्य सर्वाधिकारत्वमीशानसंहितायामुक्तं शिवरात्रिव्रतं नाम सर्वपापप्रणाशनं आचांडालमनुष्याणां भुक्तिमुक्तिप्रदायकमिति नृसिंहपरिचर्यायां वैष्णवैरप्येतद्व्रतं कार्यमित्युक्तं सौरो वा वैष्णवो वान्यो देवतांतरपूजकः न पूजाफलमाप्नोति शिवरात्रिबहिर्मुखः इति यमवचनात् नैतद्गमिष्यंति ये द्विषंति महेश्वरमिति शिवविद्वेषिणां केवलपदप्राप्तिनिषेधाच्च ॥ अधिकारिनियमः ॥ स्कंदपुराणे दर्शितः ॥ माघमासे तु कृष्णायां फाल्गुनादौ चतुर्दशी सा च पुण्यातिथिर्ज्ञेया सर्वपातकनाशिनीति अहिंसा सत्यमक्रोधो ब्रह्मचर्यं दया क्षमा शांतात्मा क्रोधहीनश्च तपस्वी यनसूयकः तस्मै देयमिदं देवि गुरुपादानुगो यदि अन्यथा यो ददातीदं स तदा नरकं व्रजेदिति ॥ इति व्रतस्वरूपतदुपयोगिनिर्णयः॥

अथ तिथिर्निर्णीयते साच द्विधा शुद्धा विद्धा च तत्र सूर्योदयमारभ्य पुनः सूर्योदयपर्यंतं शुद्धा तदन्या विद्धा तत्र शुद्धायां नास्ति संदेहः विद्धा तु प्रदोषनिशीथोभयव्यापिनी ग्राह्या प्रदोषवेधो वा पुराणे दर्शितः ॥ त्रयोदश्यस्तगे सूर्ये चतसृष्ववरात्रिषु भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेदिति स्मृत्यंतरेपि ॥ प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेदिति ॥ त्रयोदशीदिनास्तंगते प्रदोषे च चतुर्दशी त्रिवर्गसाधये कार्या गृहस्थैः शिवतोषणी माघे चतुर्दशी कृष्णायामभवेद्रजनीमुखे तद्दिने ह्युपवासः स्यात्तिथ्यंते पारणं भवेत् त्रयोदशीयुता कार्या शिवरात्रिचतुर्दशी पारणादि चतुर्दश्यां यस्तं यातिनो रविः शिवरात्रिः परा कार्या यदि रात्रौ त्रयोदशी अन्यथा तु भवेत्सैवा परे माघे द्विजोत्तमा इति निशीथवेदस्तु ॥ ॥ ईशानसंहितायां माघकृष्णचतुर्दश्यामादिदेवो महेश्वरः शिवलिंगतयोद्भूतः कोटिसूर्यसमप्रभः तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः अर्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्दशी तत्तिथावेव कुर्वीत शिवरात्रिव्रतं व्रती अर्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्दशी नैव तत्र व्रतं कुर्यादायुरैश्वर्यहानिद इति व्याप्यार्धरात्रं यस्यां तु जायते या चतुर्दशी तस्यामेव व्रतं कार्यं मत्प्रसादार्थिभिर्नरैः

एवंद्युरयरेद्युर्वामहतीस्याच्चतुर्दशी व्याप्तासाहश्यतेयस्यांतस्यांकुर्य्यादिदंतेनरः लिंगाविर्भावकाले-
तुव्याप्ताग्राह्याचतुर्दशी तद्दैयोन्विताभूतासाकार्याव्रतिभिःसदा ममप्रियकरीह्येषामाघकृष्ण-
चतुर्दशी महानिशान्वितायातुतत्रकुर्यादिमंव्रतमिति ॥ अतएतस्यव्रतस्यरात्रिप्राधान्यमुक्तंस्कंद
पुराणे निशिभ्रमंतिभूतानिशक्तयःशूलभृद्यतः अतस्तस्यांचतुर्दश्यांसत्यांतत्पूजनंभवेत् एतस्या
र्यैःनिशिभ्रमंतिचरंतिभूतानिपिशाचादयः शक्तयोदेव्यःशूलभृत्शंकरः यतोतस्तस्यांचतुर्द-
श्यांतेषांभूतशक्तिशिवानांपूजनंकार्य्यं नागरखंडे माघमासस्यकृष्णायांचतुर्दश्यांसुरेश्वर अ-
हंयास्यामिभूपृष्ठेरात्रौनास्तेदिवाकरे लिंगेषुचसमस्तेषुस्थावरेषुचरेषुच संक्रमिष्यामिसंदग्ध
वर्षपापविशुद्धये तस्माद्रात्रौदिमेपूजांयःकरिष्यतिमानवः मंत्रैरेतैःसुरश्रेष्ठविपाप्मासभवि-
ष्यति एवंसतीतिएवंद्युरेवपरेद्युरेववायत्रप्रदोषनिशीथोभयव्याप्तिस्तत्रव्रतमाचरणीयं
एवंद्युरेवोभयव्याप्तौस्कंदपुराणेपठ्यते त्रयोदशीयदादेविदिनभुक्तिप्रमाणतः जागरे-
शिवरात्रिःस्यान्निशिपूर्णाचतुर्दशी दिनभुक्तिरस्तसमयः परेद्युरेवोभयव्याप्तौकामिकेपि
पठ्यते निशाद्वयेचतुर्दश्यांपूर्वात्याज्यापराशुभेति तथातत्रैव आदित्यास्तमयेकालेअस्ति
चेद्याचतुर्दशी तद्रात्रिःशिवरात्रिःस्यात्साभवेदुत्तमोत्तमेति दिनद्वयेप्युभयव्याप्तिरनुभय-
व्याप्तिश्चनसंभाव्यते यामद्वयद्वैध· यामद्वयस्तयस्यचाभावात् यदापूर्वेद्युर्निशीथव्याप्तिः
परेद्युःप्रदोषव्याप्तिस्तदापूर्वेद्युरेवोपवासःकार्यः कृष्णाष्टमीस्कंदषष्टीशिवरात्रिश्चतुर्दशी प-
ताःपूर्वयुताःकार्यास्तिथ्यंतेपारणंभवेत् जन्माष्टमीरोहिणीचशिवरात्रिस्तथैवच पूर्वविद्धै-
वकर्तव्यातिथ्यंतेपारणेशुभा श्रावणीदुर्गानवमीतथादूर्वाष्टमीचया पूर्वविद्धैवकर्त-
व्यातिथ्यंतेपारणेत्वना नमीशिवरात्रिश्चकार्येभद्राजयान्वितेइत्यादि स्कंदपुराणादिवचने-
भ्यः योगस्याहतत्वेनतस्यप्राशस्त्यावगतेः माघफाल्गुनयोर्मध्येयास्याच्छिवचतुर्दशी
अनंगेनसमायुक्ताकर्तव्यासातिथिःसदेतिनागरखंडवचनाच्च महतामपिपापानांदृष्टावै
निष्कृतिःपुरा नदृष्टाकुर्वतांपुंसांकुहूयुक्तांतथाशिवामिति तत्रैवदर्शयुक्तायानिंदाश्रवणात्
यदातुपूर्वेद्युर्निशीथाद्दूर्ध्वप्रवृत्ताचतुर्दशीपरेद्युः त्रयवशान्निशीथादर्वागेव समाप्तापरेद्युरेवो
पवासः प्रदोषव्याप्तेरेकस्याःसद्भावात् एतदभिप्रेत्यमाधवीयेस्मर्यते माघासितेभूतदिनंक
दाचिदुपैतियोगंयदिपंचदश्या। जयाप्रयुक्तांनतुजातुकुर्याच्छिवस्यरात्रिःप्रियकृच्छिवस्येति ॥
अत्रत्रयोदश्याप्रकर्षेणयुतामितिसूक्तत्वात् पूर्वेद्युस्त्रयोदश्यांवकुरात्रिव्याप्तिप्रतीतिः एतन्माधव
मतानुसारेणोक्तं हेमाद्रिमदनरत्नादौतुनिशीथव्याप्त्यानिर्णयःकार्यइत्युक्तं निर्णयामृतेतु-
प्रदोषव्यापिनोग्राह्येत्युक्तं मयूखे यदाचतुर्दशीपूर्वेद्युर्निशीथेपरेद्युश्चप्रदोषे तदापूर्वेद्यु-
रेव अर्द्धरात्रात्परस्तात्तुजयायोगोयदाभवेत् पूर्वविद्धैवकर्तव्याशिवरात्रिःशिवप्रियेतिम-
धुरेभिहितं यत्तुएतस्माद्देववचनाद्दिनद्वयेपिनिशीथव्याप्तौपूर्वेतिहेमाद्रिमदनौ ॥
इत्यत्र एतस्यवचसउत्तरदिनेनिशीथव्याप्त्यभावेप्युपपत्तेः उत्तरदिनेगतप्रदोषनिशीथव्या
प्त्यादिवारात्रिव्रतमितिएवोक्तवचसः संकल्पकालस्यचवाधोयोगादितितच्चिंत्यं तत्रैतादृ
शग्रंथानुपलंभात् उत्तरदिनेप्रदोषनिशीथोभयव्याप्तिसत्वोपग्राह्यतिथिनिर्णायकजयायोगसं
याहकामपीडानिषेधसत्वेनपूर्वविद्धाया एवगृहीतुमुक्तत्वाच्चदिवारात्रिव्रतमित्यस्यव्रतांत
रेचरितार्थत्वेनविशेषवचनप्रकृतव्रतनिर्णायकत्वाच्चसंकल्पस्यचारात्रेननतःकालव्याप्त
कृत्रावनार्हत्वाच्च वैलवानांत्रयोदशीनिषिद्धा ॥ पाद्मेहरिभक्तिविलासे शिवरात्रिव्रतेभूतंका